तथा च तैत्तिरीया आमनन्ति–' यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढम् ' ( तै. सं. ६. ५. १०. ३ ) इति। तथा च सर्ववेदगतानि ब्राह्मणानि स्वाभिहितेऽर्थे विश्वासदार्ढ्याय ' तदेतदृचाभ्युक्तम् ' इति ऋचमेवोदाहरन्ति ॥ मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्राध्वर्युणा प्रयोज्या ऋचो बहव आम्नाताः। साम्नां तु सर्वेषामृगाश्रितत्वं प्रसिद्धम्। आथर्वणिकैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते[1]। अतोऽन्यैः सर्वैर्वेदैरादृतत्वादभ्यर्हितत्वं प्रसिद्धम्[3]। छन्दोगाश्च[4] प्राथम्ये[5] सनत्कुमारं प्रति नारदवाक्यमेवमामनन्ति–' ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् ( छां. उ. ७. १. २ ) इति। मुण्डकोपनिषद्यप्येवमाम्नायते–' ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः ' (मुं. उ. १. १. ५) इति। तापनीयोपनिषद्यपि मन्त्रराजपादेषु क्रमेणाध्ययनमेवमामनन्ति–' ऋग्यजुः सामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति ' ( नृ. ता. उ. १. २ ) इति। एवं सर्वत्रोदाहरणीयम्। तस्मात् ऋग्वेदस्याभ्यर्हितस्यादौ[6] व्याख्यानमुचितमिति तान् प्रत्येतदुच्यते[7]—

अस्त्वेवं[8] सर्ववेदाध्ययनतत्पारायणब्रह्मयज्ञजपादौ[9] ऋग्वेदस्यैव प्राथम्यम्। अर्थज्ञानस्य तु[10] यज्ञानुष्ठानार्थत्वात् तत्र[11] तु[12] यजुर्वेदस्यैव प्रधानत्वात् तद्व्याख्यानमेवादौ युक्तम्। तत्प्राधान्यं[13] च काचिदृगेवाह–' ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ' ( ऋ. सं. १०. ७१. ११ ) इति। एतस्या ऋचस्तात्पर्यं निरुक्तकारो यास्कः संक्षिप्य दर्शयति–' इत्यृत्विक्कर्मणां विनियोगमाचष्टे ' इति। पुनरपि स एव प्रथमं पादं विवृणोति–' ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' (निरु. १. ८) इति। अस्यायमर्थः। त्वशब्द एकशब्दपर्यायो होतृविशेषणम्। होतृनामक एक ऋत्विक् यज्ञकाले स्वकीयवेदगतानामृचां पुष्टिं कुर्वन्नास्ते। भिन्नप्रदेशेष्वाम्नातानामृचां संघमेकत्र[14] संपाद्यैतावदिदं शस्त्रमिति क्लृप्तिं करोति। सेयं पुष्टिः। अर्चनीत्यमुमर्थमृक्शब्द आचष्टे। अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वा इति ऋक्शब्दव्युत्पत्तिरिति[15]। अथ द्वितीयं पादं विवृणोति–' गायत्रमेको गायति शक्वरीषूद्गाता। गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते ' इति। अस्यायमर्थः। उद्गातृनामक एकः ऋत्विक् गायत्रशब्दाभिधेयं स्तोत्रं[16] शक्वरीशब्दाभिधेयासु ऋक्षु गायति। धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनो गायतिधातोरुत्पन्नोऽयं[17] गायत्रशब्दः। शक्वरीशब्दस्तु शक्नोतिधातोरुत्पन्नः। वृत्रं शत्रुं[18] हन्तुं शक्नोत्याभिः ऋग्भिरित्येषा व्युत्पत्तिः कस्मिंश्चित् ब्राह्मणे विज्ञायते इति। अथ तृतीयं पादं विवृणोति–' ब्रह्मैको जाते जाते विद्यां वदति। ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ' इति। अस्यायमर्थः। ब्रह्मनामक एकः ऋत्विक् जाते जाते[19] तदा तदोत्पन्ने यज्ञे[20] प्रस्तुते प्रणयनादिकर्मणि विद्याम् अनुज्ञां वदति, ' ब्रह्मन्नपः प्रणेष्यामि ' इत्येवं संबोधितः सन् ' ॐ प्रणय ' इत्यनुजानाति। स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः। तस्मात् योग्यतां दृष्ट्वा तत्तदनुज्ञातुं[21] सति प्रमादे समाधातुं च समर्थः इति। तच्च सामर्थ्यं छन्दोगा आमनन्ति–' एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतराम् ' ( छां. उ. ४. १६. १-२ ) इति। कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसंधेयो वाचा च वेदत्रयोक्तमन्त्राः पठनीयाः। तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं[22] यज्ञमार्गं संस्कुर्वन्ति। ब्रह्मा तु एक एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति। तस्मादस्यास्ति सामर्थ्यमिति। अथ चतुर्थं पादं

१. च-छ-ट-ण-य-°नाभिधीयन्ते। २. ट-ठ–' वेदैरादृतत्वात् ' नास्ति। ३. च-छ-झ-फ-श–' प्रसिद्धम् ' नास्ति। ४. ट-ठ–वर्जमितरेषु– छन्दोगास्तु। ५. ट–वर्जमितरेषु–प्राथम्येन। ६. ट-ठ-°र्हितत्वात् तस्य आदौ। ७. ट-°त्येवमुच्यते; ठ-°प्रत्युच्यते। ८. ट-ठ-अस्त्येव। ९. ट-°ब्रह्मवादादौ; ठ-°ब्रह्मजपादौ। १०. ठ-' तु ' नास्ति। ११. ठ-तस्य। १२. ट-ठ- च। १३. ट-प्राधान्यम्। १४. घ-च-छ-ण-त-थ-प-फ-श-संघात°। १५. ग-घ-च-ट-फ-श-व्युत्पत्तीरिति। १६. ठ-साम। १७. च-त-प-' अयम् ' नास्ति। १८. ट-ठ- ' शत्रुम् ' नास्ति। १९. ट-ठ-' जाते जाते ' नास्ति। २०. ट-ठ- ' यज्ञे ' नास्ति। २१. ट-तदनुष्ठातुः... संधातुम्। २२. घ-छ-ण-त-थ-न-य–वाङ्मयम्।

विवृणोति—'यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेता' इति। अस्यायमर्थः। अध्वर्युनामकः एकः[1] ऋत्विक् यज्ञस्य मात्रां स्वरूपं विमिमीते विशेषेण निष्पादयति। मीयते निर्मीयते इति मात्रा स्वरूपम्[2]। तन्निष्पादकत्वं च अध्वर्योर्नामनिर्वचनादवगम्यते। 'अध्वर्युः' इत्यत्र छान्दस्या प्रक्रियया लुप्तम् अकारं पुनः प्रक्षिप्य 'अध्वरयुः' इति नाम संपादनीयम्। अध्वरं युनक्तीत्यवयवार्थः। अध्वरस्य नेतेति तात्पर्यार्थ इति। एतदेवाभिप्रेत्य अध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं[3] निर्वचनं यास्को दर्शयति—'मन्त्रा मननाच्छन्दांसि छादनात् स्तोमः स्तवनाद्यजुर्यजतेः' (निरु. ७. १२) इति। एवं सति अध्वर्युसंबन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपावयवौ इतरेण वेदद्वयेन पूर्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्। तत ऊर्ध्वं साम्नामृगाश्रितत्वादुभयोर्मध्ये प्रथमत ऋग्व्याख्यानं युक्तमिति ऋग्वेद इदानीं व्याख्यायते॥

ननु वेद एव तावन्नास्ति कुतस्तदवान्तरविशेष ऋग्वेदः। तथा हि। कोऽयं वेदो नाम। न हि तत्र लक्षणं प्रमाणं वास्ति। न च तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति[4]। 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः' इति न्यायविदां मतम्॥

प्रत्यक्षानुमानागमेषु प्रमाणविशेषेषु[5] अन्तिमो वेद इति तल्लक्षणमिति चेत्। न। मन्वादिस्मृतिष्वतिव्याप्तेः। समयबलेन 'सम्यक्परोक्षानुभवसाधनम्' इत्येतस्यागमलक्षणस्य तास्वपि सद्भावात्। 'अपौरुषेयत्वे सति' इति विशेषणात् अदोषः इति चेत्। न। वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्। शरीरधारिपुरुषनिर्मितत्वाभावादपौरुषेयत्वमिति[6] चेत्। न। 'सहस्रशीर्षा पुरुषः' (ऋ. सं. १०. ९०. १.) इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्[7]। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेण[8] अपौरुषेयत्वं विवक्षितमिति चेत्। न। जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' (ऐ. ब्रा. ५. ३२) इति। श्रुतेः ईश्वरस्य अग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्। मन्त्रब्राह्मणात्मकः शब्दराशिर्वेद इति चेत्। न। ईदृशो मन्त्रः ईदृशं ब्राह्मणम् इत्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्नास्ति किंचित् वेदस्य लक्षणम्॥

नापि तत्सद्भावे प्रमाणं पश्यामः। 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' (छां. उ. ७. १. २) इत्यादिवाक्यं प्रमाणमिति चेत्। न। तस्यापि वाक्यस्य वेदान्तःपातित्वेन आत्माश्रयत्वप्रसङ्गात्[9]। न खलु निपुणोऽपि[10] स्वस्कन्धमारोढुं प्रभवति॥ 'वेद एव द्विजातीनां निःश्रेयसकरः परः' (याज्ञ. १. ४०) इत्यादिस्मृतिवाक्यं प्रमाणमिति चेत्। न। तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात्। प्रत्यक्षादिकं तु[11] शङ्कितुमप्ययोग्यम्। वेदविषया तु लोकप्रसिद्धिः सार्वजनीनापि 'नीलं नभः' इत्यादिवत् भ्रान्ता। तस्मात् लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यते[12] इति पूर्वः पक्षः॥

अत्रोच्यते—मन्त्रब्राह्मणात्मकत्वं तावददुष्टं लक्षणम्। अत एव आपस्तम्बो यज्ञपरिभाषायामेवमाह—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप. परि. १. ३३) इति। तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते। अपौरुषेयवाक्यत्वमितीदमपि[13] यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति। प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि। यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि[14] सूर्यचन्द्रादीनां

१. ट—'एकः' नास्ति। २. ट-ठ—'स्वरूपम्' नास्ति। ३. य—°दकद्योतनम्; त—°दकद्योतकम्। ४. ठ-सिध्यति। ५. ट—'प्रमाणविशेषेषु' नास्ति। ६. च-फ-°धारिजीवपुरुषनिर्मितत्वाभावा°; क-ख-ग-ण-न-प—शरीरधारिजीवनिर्मित°। ७. ट—शरीरधारित्वश्रवणात्। ८. च-प-फ—कर्मफलशरीररूपधारि°; ट-ठ—'कर्मफलरूप......विवक्षितमिति चेत् न' इत्यस्य स्थाने 'शरीरधारित्वं न विवक्षितमिति चेत् न' इति पाठः। ९. ट-ठ—'तस्यापि वाक्यस्य......प्रसङ्गात्' इत्यस्य स्थाने 'स्ववाक्ये स्वस्य प्रामाण्यादर्शनात्'। १०. ट-निपुणोऽपि वटुः; ठ—निपुणोऽपि नटवटुः। ११. च-छ-त-प-फ—'तु' नास्ति। १२. ट-ठ—नाङ्गीक्रियते। १३. च-छ-प-फ—°त्वमिदमपि। १४. ट-त—वर्जमितरेषु—स्वप्रकाशत्वाभावे।

स्वप्रकाशकत्वमविरुद्धं, तथा मनुष्यादीनां स्वस्कन्धारोहासंभवेऽपि अकुण्ठितशक्तेर्वेदस्य इतरवस्तुप्रतिपादकत्ववत् स्वप्रतिपादकत्वमप्यस्तु । अत एव संप्रदायविदः अकुण्ठितां शक्तिं वेदस्य दर्शयन्ति–'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्' (शाब. भा. १. १. २) इति । तथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम् । तस्मात् लक्षणप्रमाणसिद्धो[2] वेदो न केनापि चार्वाकादिना अपोढुं शक्यते इति स्थितम् ॥

नन्वस्तु नाम वेदाख्यः कश्चित् पदार्थः। तथापि नासौ व्याख्यानमर्हति। अप्रमाणत्वेनानुपयुक्तत्वात्। न हि वेदः प्रमाणम् । तल्लक्षणस्य तत्र दुःसंपादत्वात् । तथा हि 'सम्यगनुभवसाधनं प्रमाणम्' इति केचिल्लक्षणमाहुः । अपरे तु 'अनधिगतार्थगन्तृ प्रमाणम्' इत्याचक्षते । न चैतदुभयं वेदे संभवति । मन्त्रब्राह्मणात्मको हि वेदः । तत्र मन्त्राः केचिदबोधकाः । 'अम्यक्सा त इन्द्र ऋष्टिः' (ऋ. सं. १. १६९. ३) इत्येको मन्त्रः । 'यादृश्मिन्धायि तमपस्यया विदत्' (ऋ. सं. ५. ४४. ८) इत्यन्यः । 'सृण्येव जर्भरी तुर्फरीतू' (ऋ. सं. १०. १०६. ६) इत्यपरः । एवम् 'आपान्तमन्युस्तृपलप्रभर्मा' (ऋ. सं. १०. ८९. ५) इत्यादय उदाहार्याः । न ह्येतैर्मन्त्रैः कश्चिदप्यर्थोऽवबुध्यते । एतेष्वनुभव एव यदा नास्ति तदा तत्सम्यक्त्वं तदीयसाधनत्वं च दूरापेतम् । 'अधः स्विदासी३दुपरि स्विदासी३त्' (ऋ. सं. १०. १२९. ५) इति मन्त्रस्य बोधकत्वेऽपि स्थाणुर्वा पुरुषो वा इत्यादिवाक्यवत् संदिग्धार्थबोधकत्वान्नास्ति प्रामाण्यम् । 'ओषधे त्रायस्वैनम्' (तै. सं. १. २. १. १) इति मन्त्रो दर्भविषयः (आश्व. गृ. १. १७. ८)। 'स्वधिते मैनं हिंसीः' (तै. सं. १. २. १. १) इति क्षुरविषयः (आश्व. गृ. १. १७. ९)। 'शृणोत ग्रावाणः' (तै. सं. १. ३. १३. १) इति पाषाणविषयः । एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत् संबोधनं श्रूयते। ततो 'द्वौ चन्द्रमसौ' इति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यम् । 'एक एव रुद्रो न द्वितीयाय तस्थे' (तै. सं. १. ८. ६. १), 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' (तै. सं. ४. ५. ११. १) इत्यनयोस्तु मन्त्रयोः 'यावज्जीवमहं मौनी' इति वाक्यवत् व्याघातबोधकत्वादप्रामाण्यम् । 'आप उन्दन्तु' (तै. सं. १. २. १. १) इति मन्त्रो यजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते । 'शुभिके शिर आरोह शोभयन्ती मुखं मम' इति मन्त्रो विवाहकाले मङ्गलाचरणार्थं पुष्पनिर्मितायाः शुभिकाया वरवध्वोः शिरस्यवस्थानं ब्रूते । तयोश्च मन्त्रयोर्लोकप्रसिद्धार्थानुवादित्वात् अनधिगतार्थगन्तृत्वं नास्ति । तस्मात् मन्त्रभागो न प्रमाणम् ॥

अत्रोच्यते—अम्यगादिमन्त्राणामर्थो यास्केन निरुक्तग्रन्थेऽवबोधितः । तत्परिचयरहितानामनवबोधो[6] न मन्त्राणां दोषमावहति । अत एवात्र लौकिकन्यायमुदाहरन्ति–'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति' (निरु. १. १६) इति । 'अधः स्विदासीत्' इति मन्त्रश्च न सन्देहप्रबोधनाय[7] प्रवृत्तः । किं तर्हि जगत्कारणस्य परवस्तुनोऽतिगम्भीरत्वं निश्चेतुमेव प्रवृत्तः । तदर्थमेव हि गुरुशास्त्रसंप्रदायरहितैर्दुर्बोधत्वम्[8] 'अधः स्वित्' इत्यनया वचोभङ्ग्योपन्यस्यति । स एवाभिप्राय उपरितनेषु 'को अद्धा वेद' (ऋ. सं. १०. १२९. ६) इत्यादिमन्त्रेषु स्पष्टीकृतः । ओषध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवताः तेन तेन नाम्ना संबोध्यन्ते । ताश्च देवता भगवता बादरायणेन 'अभिमानिव्यपदेशस्तु' (ब्र. सू. २. १. ५) इति सूत्रे सूत्रिताः । एकस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकारान्नास्ति परस्परव्याघातः । जलादिद्रव्येण[9] शिरःक्लेदनादेर्लोकप्रसिद्धत्वेऽपि[10] तदभिमानिदेवतानुग्रहस्याप्रसिद्धत्वात् तद्विषयत्वेनाज्ञातार्थज्ञापकत्वम् । ततो लक्षणसद्भावादस्ति मन्त्रभागस्य प्रामाण्यम् ॥

---

१. ट-त-वर्जमितरेषु—स्वप्रकाशत्वम् । २. ट-ठ-लक्षणसिद्धौ । ३. ग-घ-च-छ-ण-त-थ-प-य—शक्यः । ४. त-थ—इत्येतयोस्तु; ठ—इति वाक्ययोः । ५. ट—'शिरसः' नास्ति । ठ—'जलेन शिरसः' नास्ति । ६. च-ट-ठ-फ— °नामबोधो । ७. ट-त-थ—संदेहबोधनाय । ८. क-झ-श—°दुर्बोध्यत्वम् । ९. ट-जलद्रव्येण । १०. त-°लोकासिद्धत्वेपि; ट-'अपि' नास्ति ।

एतदेवाभिप्रेत्य भगवान् जैमिनिः मन्त्राधिकरणे मन्त्राणां विवक्षितार्थत्वमसूत्रयत्[1] ( जै. सू. १. २. ३१-४५ )। तानि च सूत्राणि क्रमेणोदाहृत्य व्याख्यास्यामः। तत्र पूर्वपक्षं सूत्रयति—

'तदर्थशास्त्रात्°' इति। यस्यार्थस्याभिधाने समर्थो मन्त्रः स एवाभिधेयो यस्य शास्त्रस्य[2] ब्राह्मणवाक्यस्य तदिदं वाक्यं तदर्थशास्त्रम्। तस्मात् शास्त्रादविवक्षितार्थो मन्त्रः इत्यवगम्यते। तथा हि 'उरु प्रथस्व' ( तै. सं. १. १. ८; वा. सं. १·२२ ) इति मन्त्रेण पुरोडाशप्रथनमभिधीयते। 'पुरोडाशं प्रथयति' ( तै. ब्रा. ३. २. ८. ४; श. ब्रा. १. २. २. ८ ) इति ब्राह्मणेनापि तदेवाभिधीयते। तथा[3] सति मन्त्रेणैव प्रतीतत्वात् तदर्थबोधनाय प्रवृत्तं ब्राह्मणमनर्थकं[4] स्यात्। मन्त्रस्याविवक्षितार्थत्वे तु विनियोगबोधनाय ब्राह्मणमुपयुक्तम्। तस्मात् मन्त्रा उच्चारणेनैवानुष्ठाने उपकुर्वन्ति॥ ननु उच्चारणार्थत्वे सति अदृष्टं प्रयोजनं परिकल्प्येत। अर्थाभिधायकत्वे तु दृष्टं लभ्यते[5]। तस्मात् ब्राह्मणस्यानुवादकत्वमभ्युपेत्यापि[6] मन्त्रस्याभिधानार्थत्वमेव इत्याशङ्क्य उत्तरं सूत्रयति—

'° वाक्यनियमात् °' इति। 'अग्निर्मूर्धा दिवः ककुत्' ( ऋ. सं. ८. ४४. १६ ) इत्येवमेव वाक्यं पठितव्यमिति मन्त्रे नियम उपलभ्यते। अर्थप्रत्यायनं तु मूर्धाग्निरित्येवं व्युत्क्रमपाठेऽपि भवत्येव। तस्मात् नियतपाठक्रमस्साफल्याय उच्चारणमेव मन्त्रप्रयोजनम्॥ ननु पाठक्रमनियममात्रस्य अदृष्टार्थत्वेऽपि मन्त्रपाठोऽर्थबोधार्थ[7] एव इत्याशङ्क्य तत्र दोषान्तरं सूत्रयति—

'° बुद्धशास्त्रात्°' इति। 'अग्नीदग्नीन्विहर' ( तै. सं. ६. ३. १. २ ) इति प्रैषमन्त्रः प्रयोगकाले पठ्यते। तच्च अग्निविहरणादिकम् आग्नीध्रेण अध्ययनकाले एव स्वकर्तव्यत्वेन बुद्धम्। तस्य च बुद्धस्यार्थस्य[8] पुनर्मन्त्रोच्चारणेन शासनमनर्थकम्। न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति[9]॥ ननु बुद्धस्याप्यर्थस्य[10] प्रमादिकविस्मरणपरिहाराय मन्त्रेण स्मारणमस्तु इत्याशङ्क्य दोषान्तरं[11] सूत्रयति—

'°अविद्यमानवचनात्°' इति। 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य' ( ऋ. सं. ४. ५८. ३ ) इति मन्त्र आम्नायते। न खलु चतुःशृङ्गत्वाद्युपेतं किंचित् यज्ञसाधनं विद्यते यन्मन्त्रपाठेनानुस्मर्येत[12]॥ ननु ईदृशी काचिद्देवता स्यात् इत्याशङ्क्य अन्यं दोषं सूत्रयति—

'° अचेतनेऽर्थबन्धनात् °' इति। 'ओषधे त्रायस्वैनम्', 'शृणोत ग्रावाणः' इत्यादौ अचेतने द्रव्ये चेतनोचितैरक्षणश्रवणाद्यर्थं[13] बध्नाति। स चायुक्तः[14]॥ ननु 'अभिमानिव्यपदेश°' इति वैयासिकशास्त्रे सूत्रितत्वात् ओषध्याद्यभिमानिचेतनदेवतात्र विवक्ष्यतामित्याशङ्क्य[15] दोषान्तरं सूत्रयति—

'°अर्थविप्रतिषेधात्°' इति। 'अदितिर्द्यौरदितिरन्तरिक्षम्' ( ऋ. सं. १. ८९.१० ) इति मन्त्रः आम्नायते। यदेव द्यौस्तदेवान्तरिक्षमित्ययमर्थो विप्रतिषिद्धः। एवम्[16] 'एक एव रुद्रः' ( तै. सं. १. ८. ६. १ ), 'सहस्राणि सहस्रशो ये रुद्राः' ( तै. सं. ४. ५. ११. १ ) इत्यादिकमप्युदाहर्तव्यम्॥ ननु 'त्वमेव माता च पिता त्वमेव' इत्यादिवत् अन्तरिक्षादिरूपत्वेन अदितिः स्तूयते। एवमेकस्यापि रुद्रस्य योगसामर्थ्यात् बहुमूर्तिस्वीकारोऽस्तु। ततो नार्थविप्रतिषेधः[17] इत्याशङ्क्य दोषान्तरं सूत्रयति—

'°स्वाध्यायवदवचनात्°' इति। पूर्णिका नाम काचित् योषित् अवघातं करोति। तत्समीपे माणवकः स्वाध्यायग्रहणार्थं कदाचित् अवघातमन्त्रमधीते। न च तस्यार्थप्रकाशनविवक्षाऽस्ति, प्रतिमुसलप्रहारं तस्य मन्त्रस्यापठ्यमानत्वात्। अक्षरग्रहणायैव तं मन्त्रम् अन्यांश्च मन्त्रानभ्यस्यति। तत्र स्वाध्यायकाले पठितोप्यवघातमन्त्रो यथा पूर्णिकां प्रति स्वार्थं न ब्रूते तथा कर्मकालेऽपि स्वार्थं न वक्ष्यति॥ ननु तत्र माणव-

---

१. ट-ठ-°मसूचयत्। २. ट-ठ-'शास्त्रस्य' नास्ति। ३. ट-ठ-तथापि। ४. च-ट-ब्राह्मणवाक्यमनर्थकम्। ५. ट-ठ-दृष्टं प्रयोजनं लभ्यते। ६. त-°वादत्व°। ७. च-छ-प-फ-°पाठार्थ°। ८. झ-ण-न-श-बुद्धार्थस्य। ९. ट-ठ-इच्छन्ति; ग-घ-फ-प्रतिमुञ्चन्ति। १०. च-छ-ट-प-फ-°स्यार्थस्य। ११. त-अन्यं दोषम्। १२. ग-घ-च-छ-त-ण-प-फ-य-°नुस्मर्यते। १३. त-°चितं रक्षण°। १४. थ-'तच्चायुक्तम्'। १५. ठ-प्रतिपाद्यता°। १६. च-छ-त-थ-प-फ-'एवम्' नास्ति। १७. ट-ठ-नास्ति विरोधः।

कस्य अर्थे विवक्षा नास्ति । पूर्णिकाप्यवबोद्धुमक्षमा । कर्मणि तु अध्वर्योरर्थविवक्षा विद्यते, बोधश्च संभवति इत्याशङ्क्य दोषान्तरं सूत्रयति—

'°अविज्ञेयात्°' इति । केषांचिन्मन्त्राणामर्थो विज्ञातुं न शक्यते । तद्यथा—'अम्यक्सा त इन्द्र ऋष्टिरस्मे' इत्येको मन्त्रः । 'सृण्येव जर्भरी तुर्फरीतू' इत्यपरो मन्त्रः ॥ ननु ईदृशमन्त्रार्थबोधायैव निगमनिरुक्त-व्याकरणानि प्रवृत्तानीत्याशङ्क्य दोषान्तरं सूत्रयति—

'°अनित्यसंयोगान्मन्त्रानर्थक्यम्' इति । 'किं ते कृण्वन्ति कीकटेषु' (ऋ. सं. ३. ५३. १४) इति मन्त्रे कीकटो नाम जनपद आम्नातः । तथा नैचाशाखं नाम नगरं प्रमगन्दो नाम राजा इत्येतेऽर्था अनित्या आम्नाताः । तथा च सति प्राक् प्रमगन्दात् नायं मन्त्रो भूतपूर्व इति गम्यते । तदेवमेतैः तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वं नास्ति । किंतु उच्चारणाददृष्टार्था एवेति पूर्वपक्षः ॥

तत्र सिद्धान्तं सूत्रयति—'अविशिष्टस्तु वाक्यार्थः' इति । तु शब्देन मन्त्राणामदृष्टार्थमुच्चारणमात्रं वारयति । क्रियाकारकसंबन्धेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टः । तथा सति यथा लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्यते[४] तथा वैदिकेयागप्रयोगेऽपि द्रष्टव्यम् । मन्त्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते न त्वप्रकाशितः । तस्मात् मन्त्रोच्चारणस्यार्थप्रकाशनरूपं दृष्टमेव प्रयोजनम् ॥ ननु 'अभ्रिरसि नारिरसि' इत्यारभ्य 'त्रैष्टुभेन त्वा छन्दसा ददे' (तै. सं. ४. १. १. ३-४) इति मन्त्र आम्नातः । तेनैव मन्त्रेण प्रतीतेऽपि अभ्र्यादाने पुनर्ब्राह्मणे 'तां चतुर्भिरभ्रिमादत्ते' (तै. सं. ५. १. १. ४) इति विधीयते । तदेतद्विधानं त्वत्पक्षे व्यर्थं स्यादित्याशङ्क्योत्तरं सूत्रयति—

'गुणार्थेन पुनःश्रुतिः' इति । मन्त्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनःश्रवणं तदेतच्चतुःसंख्यालक्षणगुणविधानार्थत्वेनोपयुज्यते । एतस्य विधानस्याभावे चतुर्णां मन्त्राणां मध्ये येन केनाप्येकेन अभ्रिरादीयेत ॥ ननु 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते (तै. सं. ५. १. २. १) इत्यत्र मन्त्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते । तदेतत् त्वन्मते व्यर्थमित्याशङ्क्योत्तरं सूत्रयति—

'परिसंख्या' इति । 'गर्दभाभिधानीं नादत्ते' इति निषेधः परिसंख्या । तदर्थमिदं ब्राह्मणवाक्यम् ॥ ननु परिसंख्यायां त्रयो दोषाः प्राप्नुयुः । 'आदत्ते' इति शब्दो रशनादानलक्षणं स्वार्थं जह्यात् । निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत । रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येत इति त्रयो दोषाः । मैवम् । गर्दभरशनाया अप्राप्तत्वात् । तथाहि । त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या मन्त्रेणानेन आदानं कुर्यात् इति वाक्यं परिकल्प्यते । तेन च वाक्येन मन्त्रादानयोः संबन्धे सिद्धे[११] सति पश्चात् किं विषयकमादानमिति वीक्षायां लिङ्गात् रशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या । सा च विलम्ब्यते । 'इत्यश्वाभिधानीम्' इति प्रत्यक्षेण वाक्येन मन्त्रादानयोः संबन्धे सति लिङ्गात् रशनामात्रे प्राप्तमादानम् 'अश्वाभिधानीम्' इति श्रुत्या विशेषे व्यवस्थाप्यते । ततो मन्त्रस्य निराकाङ्क्षत्वात् गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः । अत एव निषेधार्थो न कल्प्यते । विध्यर्थश्च न त्यज्यते । तत्र कुतो दोषत्रयम् । ईदृशमप्राप्तिरूपमेव गर्दभरशनाया निवारणमभिप्रेत्य 'परिसंख्या' इति सूत्रितम् ॥ ननु 'उरु प्रथस्वेति प्रथयति' इति ब्राह्मणस्य वैयर्थ्यं तदवस्थमेव इत्याशङ्क्य उत्तरं सूत्रयति—

'अर्थवादो वा' इति । वाशब्दो वैयर्थ्यं वारयति । अस्त्यत्रार्थवादः 'यज्ञपतिमेव तत्प्रथयति' इति । तेनार्थवादेन संबन्धाय ब्राह्मणे विधिः पठ्यते ॥ ननु प्रथयतीत्यनेनैव[१५] विधिशब्देन प्रथनमनूद्य 'यज्ञपतिमेव' इत्यादिनार्थवादेन स्तोतव्यम् । तदेव तु प्रथनं कुतः प्राप्तमित्याशङ्क्य उत्तरं सूत्रयति—

---

१. त—अर्थविवक्षा । २. च-प-फ—निघण्टुनि° । ३. ट-ठ—'च' नास्ति । ४. ट-ठ—°मात्रत्वम् । ५. ठ-वाक्यं प्रयुज्यते । ६. त-वैदिके याग° । ७. च-त-थ-फ—°ब्राह्मणेन । ८. क-ङ्ग-ण-न-श—'शब्दो' नास्ति । ९. ट-ठ-आदान° । १०. ट-ठ-त-थ-तस्मि० । ११. क-ङ्ग-न-श—'सिद्धे' नास्ति । १२. ट—विषयमा° । १३. ट—ठ—सिद्धे सति । १४. ट—अवस्थाप्यते । १५. ठ—°त्यनेन ।

'मन्त्राभिधानात्' इति । अध्वर्युः पुरोडाशमुद्दिश्य मन्त्रे 'प्रथस्व' इत्येवमभिधत्ते । तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तम् । यथा लोके यः कुरु इति ब्रूते स कारयत्येव, तथात्रापि यः प्रथस्व इति ब्रूते स प्रथयत्येव ॥ यदुक्तम् 'अग्निर्मूर्धादिवः' (ऋ. सं. ८. ४४. १६) इति पाठक्रमनियमात् अदृष्टार्थो मन्त्र इति तत्रोत्तरं सूत्रयति—

'अविरुद्धं परम्' इति । परं द्वितीयसूत्रोक्तम् अस्मत्पक्षेऽप्यविरुद्धम् । न हि वयं पाठक्रमनियमाददृष्टं निवारयामः । किं तर्हि । मन्त्रोच्चारणेन जायमानमर्थप्रत्यायनं दृष्टप्रयोजनत्वान्नोपेक्षितव्यम् इत्येतावदेव ब्रूमः ॥ ननु 'प्रोक्षणीरासादय' (वा. सं. १. २८) इति मन्त्रो वृद्धमेवार्थं शास्ति तद्युक्तम् । सोपानत्कस्य उपानदन्तरासंभवात् इत्युक्तमिति चेत् तस्य परिहारं सूत्रयति—

'संप्रैषकर्मणो गर्हानुपलम्भः संस्कारत्वात्' इति । संप्रैषकर्मणो गर्हा त्वदुक्तदोषो नोपलभ्यते । बुद्धस्याप्यर्थस्य मन्त्रेणैवानुस्मरणे सति नियमादृष्टलक्षणस्य संस्कारस्य सद्भावात् ॥ यच्चोक्तं 'चत्वारि शृङ्गाः' (ऋ. सं. ४. ५८. ३) इति मन्त्रोऽसन्तमेवार्थमभिधत्ते इति तस्योत्तरं सूत्रयति—

'अभिधानेऽर्थवादः' इति । असतोऽर्थस्याभिधायके[3] वाक्ये गौणस्यार्थस्योक्तिर्द्रष्टव्या । तद्यथा । चत्वारो होत्रध्वर्यूद्गातृब्रह्माणोऽस्य कर्मणः शृङ्गाणि । प्रातःसवनादयस्त्रयः पादाः । पत्नीयजमानौ द्वे शीर्षे । गायत्र्यादीनि सप्त छन्दांसि हस्ताः । ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधा बन्धनम् । कामान् वर्षतीति वृषभः । रोरवीति स्तोत्रशस्त्रा[4]दिशब्दान् पुनः पुनः करोति । महो देवः सोऽयं प्रौढो यज्ञरूपो देवो मर्त्यानाविवेश इति मनुष्या एवात्राधिकारिणः । लोकेऽप्येवं गौणप्रयोगा दृश्यन्ते । 'चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवलकेशिनी' इत्येवं नद्याः स्तूयमानत्वात् । एवं 'ओषधे त्रायस्व', 'शृणोत ग्रावाणः' इत्याद्यचेतनसंबोधनानि स्तुतिपरत्वेन योजनीयानि । यस्मिन् वपने ओषधिरपि त्रायते तत्र वपनकर्ता त्रायते इति किमु वक्तव्यम् । तथा ग्रावाणोऽपि प्रातरनुवाकं शृण्वन्ति किमुत विद्वांसो ब्राह्मणा इत्यामन्त्रणाभिप्रायः॥ योऽपि 'अदितिर्द्यौरदितिरन्तरिक्षम्' (ऋ. सं. १. ८९. १०) इति विप्रतिषेध उक्तः तस्योत्तरं सूत्रयति—

'गुणादविप्रतिषेधः स्यात्' इति । यथा 'त्वमेव पिता त्वमेव माता' इत्यत्र गौणप्रयोगादविरोधः तद्वत् । एवम् एकरुद्रदेवत्ये कर्मण्येको रुद्रः शतरुद्रदेवत्ये शतं रुद्रा इत्यविरोधः ॥ यदप्युक्तं स्वाध्यायमधीयानो माणवकः पूर्णिकाया अवहतिं न प्रकाशयितुमिच्छतीति तत्रोत्तरं सूत्रयति—

'विद्यावचनमसंयोगात्' इति । वेदविद्याग्रहणकालेऽर्थस्य यदवचनं तदयज्ञसंयोगादुपपद्यते । न हि पूर्णिकाया अवघातो यज्ञसंयुक्तः । नापि माणवको यज्ञमनुतिष्ठति । अतो यज्ञानुपकारात् न तत्रार्थविवक्षा । यदप्युक्तम् 'अम्यक्सा त इन्द्र,' 'सृण्येव जर्भरी तुर्फरीतू' इत्यादावर्थस्य ज्ञातुमशक्यत्वात् नास्त्येवाऽर्थः इति तत्रोत्तरं सूत्रयति—

'सतः परमविज्ञानम्' इति । विद्यमान एवार्थः[9] प्रमादालस्यादिभिर्न विज्ञायते[8] । तेषां निगमनिरुक्त-व्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः । तद्यथा 'जर्भरी तुर्फरीतू' इत्येवमादीनि अश्विनोरभिधानानि । तेषु हि द्विवचनान्तत्वं लक्ष्यते । आश्विनं चेदं सूक्तम् 'अश्विनोः काममप्राः' (ऋ. सं. १०. १०६. ११) इति दर्शनात् । एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे—'जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यर्थः' (निरु. १३. ५) इति । एवम् 'अम्यक्सा ते' इत्यादावप्युन्नेयम् । यदप्युक्तं प्रमगन्दाद्यनित्यार्थसंयोगात् मन्त्रस्य[10] अनादित्वं न स्यात् इति तत्रोत्तरं[11] सूत्रयति—

'उक्तश्चानित्यसंयोगः' इति । प्रथमपादस्यान्तिमाधिकरणे सोऽयमनित्यसंयोगदोष उक्तः परिहृतः । तथा हि तत्र पूर्वपक्षे वेदानां पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादिपुरुषसंबन्धाभिधानं हेतूकृत्य

१. थ-°स्य पादस्य । २. च-य-संभवात् । ३. च-य-वर्जमितरेषु-°भिधाने । ४. ठ-°शस्त्रादीन् । ५. ग-घ-च-त-थ-य-इत्यादिमन्त्राणामभि° । ६. ठ-तत्रोत्तरम् । ७. ठ-अप्यर्थः । ८. त-थ-ज्ञायते । ९. य-एवमेव । १०. ठ-मन्त्राणाम् । ११. ठ-'तत्र' नास्ति ।

'अनित्यदर्शनाच्च' ( जै. सू. १. १. २८ ) इति हेत्वन्तरं सूत्रितम्। तस्यायमर्थः। 'बबरः प्रावाहणिरकामयत' ( तै. सं. ७. १. १०. २ ) इत्यनित्यानां बबरादीनामर्थानां दर्शनात् ततः पूर्वमसत्त्वात् पौरुषेयो वेद इति तस्योत्तरमेवं सूत्रितं—'परं तु श्रुतिसामान्यमात्रम्' ( जै. सू. १. १. ३१ ) इति। तस्यायमर्थः। यत्काठकादिसमाख्यानं तत्प्रवचननिमित्तम्। यत्तु परं बबराद्यनित्यदर्शनं तच्छब्दसामान्यमात्रम्। न तु तत्र अनित्यो बबराख्यः कश्चित्पुरुषो विवक्षितः। किंतु बबरः इति शब्दानुकृतिः। तथा सति बंबरेति शब्दं कुर्वन् वायुरभिधीयते। स च प्रावाहणिः प्रकर्षेण वहनशीलः। एवमन्यत्राप्यूहनीयम्। तदेवं कस्यचिदपि दोषस्यासंभवात् विवक्षितार्था मन्त्राः स्वार्थप्रकाशनायैव प्रयोक्तव्याः॥ ननु अर्थप्रकाशनार्थत्वे सति दृष्टं प्रयोजनं लभ्यते इति युक्तिमात्रमिदमुच्यते। न त्वेतदुपोद्बलकं किंचित् श्रौतं लिङ्गं पश्यामः इत्याशङ्क्य उत्तरं सूत्रयति—

'लिङ्गोपदेशश्च तदर्थवत्' इति। 'आग्नेय्याग्नीध्रमुपतिष्ठेतै' इति श्रूयते। तस्यायमर्थः। अग्निर्देवता यस्या ऋचः सेयमाग्नेयी। तया आग्नीध्रस्थानमुपतिष्ठेत इति। अत्र ह्युपस्थानमुपदिशद्ब्राह्मणम् 'अग्ने नय' ( ऋ. सं. १. १८९. १ ) इत्यनया 'उपतिष्ठेत' इति मन्त्रप्रतीकं पठित्वा नोपदिशति; किंतु आग्नेयीत्वलिङ्गेन उपदिशति। यदा तस्यामृचि अग्निः प्राधान्येन प्रतिपाद्यते तदा तस्या ऋचः अग्निर्देवता भवति। तथा सति आग्नेय्या इति देवतावाचितद्धितान्तनिर्देश उपपद्यते। तस्मात् अयमुपदेशः तन्मन्त्रवाक्यमर्थवत् इति बोधयति। अतो विवक्षितार्थत्वात् अर्थप्रत्यायनार्थं प्रयोगकाले मन्त्रोच्चारणम्। तस्मिन्नेव विवक्षितार्थत्वे लिङ्गान्तरं सूत्रयति—

'ऊहः' इति। प्रकृतावाम्नातस्य मन्त्रस्य विकृतौ समवेतार्थत्वाय तदुचितपदान्तरस्य प्रक्षेपेण पाठः ऊहः। तद्यथा 'अन्वेनं माता मन्यताम् अनु पिता अनु भ्राता' ( तै. ब्रा. ३. ६. ६. १ ) इति प्राकृतः पशुविषयो मन्त्रपाठः। तस्य च मन्त्रस्य विकृतौ पशुद्वये सति 'अन्वेनौ माता मन्यताम्' इत्यूहः। पशुबहुत्वे सति 'अन्वेनान् माता मन्यताम्' इत्यूहः कर्तव्यः। एतन्मन्त्रव्याख्यानरूपं ब्राह्मणमेवमाम्नायते–'न माता वर्धते न पिता' इति। तत्रेदं चिन्तनीयम्। किमत्र शरीरवृद्धिर्निषिध्यते आहोस्वित् शब्दवृद्धिरिति। एकवचनान्तस्य मातृशब्दस्य मातरौ इति द्विवचनान्तत्वेन वा मातरः इति बहुवचनान्तत्वेन वा प्रयोगः शब्दवृद्धिः। तत्र न तावत् शरीरवृद्धिर्निषेद्धुं शक्यते, बाल्यकौमारयौवनादिवयोऽनुसारेण तद्वृद्धेः प्रत्यक्षत्वात्। अतः शब्दवृद्धिनिषेध एव परिशिष्यते। मातृशब्दपितृशब्दयोर्विशेषाकारेण वृद्धिनिषेधात् इतरस्य एनम् इति शब्दस्य अर्थानुसारिणी वृद्धिः सूचिता भवति। तत्र यद्यर्थो न विवक्ष्येत तदा पशुद्वित्वे द्विवचनं पशुबहुत्वे बहुवचनं च कथमूह्येत। तस्मात् विवक्षितार्था मन्त्राः। तस्मिन्नेवार्थे लिङ्गान्तरं सूत्रयति—

'विधिशब्दाच्च' इति। मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्दः इत्युच्यते। स चैवमाम्नायते–'शतं हिमाः शतं वर्षाणि जीव्यास्मेत्येवैतदाह' ( श. ब्रा. २. ३. ४. २१ ) इति। तत्र 'शतं हिमाः' इत्येतत् व्याख्येयमन्त्रस्य प्रतीकम्। अवशिष्टं तु तस्य तात्पर्यव्याख्यानम्। मन्त्रस्याविवक्षितार्थत्वे तु किं नाम तात्पर्यं मन्त्रे व्याख्यायेत। तस्मात् विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकानायवोच्चारयितव्याः। तत्र संग्रहश्लोकौ—

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेऽपूत पुरोडाशप्रथनादेश्च भासकाः॥

---

१. त-बबर इति। २. च-छ-प-फ-न्त्वेतदु॰। ३. ठ-॰तिष्ठते। ४. च-प-फ–प्रकृतिप॰; त-थ–प्रकृतप॰; ठ–'प्राकृत......पशुद्वये सति' इत्यस्य स्थाने 'प्राकृतपशुविषयमन्त्रस्य विकृतौ पशुद्वये सति' इति। ५. ट-मन्त्रः। ६. ट–अत्रेदम्। ७. ग-घ-च-छ-ण-न-प-फ-य–'वा' नास्ति। ८. ग-छ-ण-न-प-फ-य–व्याख्यायते।

ब्राह्मणेनापि तद्व्यानान्मन्त्राः पुण्यैकहेतवः ।
न तद्धानस्य दृष्टत्वादृष्टं वरमदृष्टतः ॥ ( जै. न्या. १. २. ४ ) इति ॥

नन्वस्तु मन्त्रभागस्य प्रामाण्यम् । ब्राह्मणभागस्य तु न तद्युज्यते । तथा हि । द्विविधं ब्राह्मणं विधिरर्थवादश्चेति । तथा च आपस्तम्बः–' कर्मचोदना ब्राह्मणानि । ब्राह्मणशेषोऽर्थवादः ' ( आप. परि. ३४-३५ ) इति । विधिरपि द्विविधः अप्रवृत्तप्रवर्तनम् अज्ञातार्थज्ञापनं चेति । ' आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयम् ' ( ऐ. ब्रा. १. १ ) इत्याद्याः कर्मकाण्डगतविधयोऽप्रवृत्तप्रवर्तकाः । ' आत्मा वा इदमेक एवाग्र आसीत् ' ( ऐ. आ. २. ४. १ ) इत्यादयो ब्रह्मकाण्डगता अज्ञातज्ञापकाः । तत्र कर्मकाण्डगतानां ' जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा ' ( तै. सं. ५. ४. ३. २ ) इत्यादिविधीनां नास्ति प्रामाण्यम् , प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावात् । अयोग्यत्वं च वाक्यशेषे समाम्नातम्–' अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च ' ( तै. सं. ५. ४. ३. २ ) इति । तत्र हि आरण्यतिलानाम् आरण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धम् । तस्मात् बाधितो जर्तिलादिविधिरप्रमाणम् । एवम् ऐतरेयतैत्तिरीयादिब्राह्मणेषु ' तत्तन्नादृत्यम् ' ( ऐ. ब्रा. २. २३ ), ' तत्तथा न कार्यम् ' ( तै. ब्रा. १. १. ८. ६ ) इति वाक्याभ्यां बहवो विधयो निषिद्धाः । अपि च ऐतरेयब्राह्मणे अनुदितहोमं बहुधा निन्दित्वा ' तस्मादुदिते होतव्यम् ' ( ऐ. ब्रा. ५. ३१ ) इत्यसकृन्निगमितम् । तैत्तिरीयाश्च तथैवामनन्ति– ' यदनुदिते सूर्ये प्रातर्जुहुयात् । उभयमेवाऽऽग्नेयं स्यात् । उदिते सूर्ये प्रातर्जुहोति' ( तै. ब्रा. २. १. २. ७) इति । पुनरपि त एव उदितहोमे दोषमामनन्ति– ' यदुदिते सूर्ये प्रातर्जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायाऽऽवसथायाऽऽहार्यं हरन्ति । तादृगेव तत् ' ( तै. ब्रा. २. १. २. १२ ) इति । तथैव ' अतिरात्रे षोडशिनं गृह्णाति ' इति विधिः ' नातिरात्रे षोडशिनं गृह्णाति ' इति निषेधेन बाध्यते । ज्योतिष्टोमादिष्वपि अनुष्ठानानन्तरमेव स्वर्गादिफलं नोपलभ्यते । न हि भोजनानन्तरं तृप्तेरनुपलम्भोऽस्ति । तस्मात् कर्मविधिषु प्रामाण्यं दुःसंपादम् ॥

अज्ञातज्ञापकेषु ब्रह्मविधिष्वपि परस्परविरोधान्नास्ति प्रामाण्यम् । ' आत्मा वा इदमेक एवाग्र आसीत् ' इति ऐतरेयिण आमनन्ति । ' असद्वा इदमग्र आसीत् ' ( तै. आ. ८. ७ ) इति तैत्तिरीयाः । सोऽयं विरोधः । तस्मात् वेदे विधिभागः सर्वोऽप्यप्रमाणमिति प्राप्ते ब्रूमः–

अस्त्वेव जर्तिलादिविधेरप्रामाण्यं तदर्थस्याननुष्ठेयत्वात् । अनुष्ठेयस्त्वर्थः उपरितने ' अजाक्षीरेण जुहोति ' ( तै. सं. ५. ४. ३. २ ) इति वाक्ये विधीयते । तत्प्रशंसार्थमत्र जर्तिलादिकमनूद्य निन्द्यते । यथा गवामश्वानां च प्रशंसार्थम् ' अपशवो वा अन्ये गोअश्वेभ्यः ' ( तै. सं. ५. २. ९. ४ ) इति वाक्येनार्थवादरूपेण अजादीनां पशुत्वं निन्द्यते तद्वत् । एवं तर्हि अजादेर्यथा वस्तुतः पशुत्वमस्ति तथा जर्तिलादिविधिरत्र निन्द्यमानोऽपि क्वचित् शाखान्तरे भवेदिति चेत्, भवतु नाम । प्रामाण्यमपि तच्छाखाध्यायिनं प्रति भविष्यति । यथा गृहस्थाश्रमे निषिद्धमपि परान्नभोजनमाश्रमान्तरेषु प्रामाणिकं तद्वत् । अनेन न्यायेन सर्वत्र परस्परविरुद्धौ विधिनिषेधौ पुरुषभेदेन व्यवस्थापनीयौ । यथा मन्त्रेषु पाठभेदः शाखाभेदेन व्यवस्थितः तद्वत् । तैत्तिरीयाः ' वायवः स्थोपायवः स्थ ' ( तै. सं. १. १. १ ) इति मन्त्रमामनन्ति । वाजसनेयिनस्तु ' उपायवः स्थ ' इत्येतं भागं नामनन्ति ( वा. सं. १. १ )। प्रत्युत शतपथब्राह्मणे स भागोऽनूद्य निराकृतः ( श. ब्रा. १. ७. १. ३ ) । तथा सूक्तवाकमन्त्रे

---

१. च-छ-त-थ-फ–' तु ' नास्ति । २. ग-घ-च-छ-ण-त-थ-प-फ-य–°काण्डगता विध°; ट– °काण्डविध° । ३. च-थ-प-फ–°गता विधयः । ४. ट-ठ–इत्यादीनाम् । ५. ट-ठ-चाहुतिप्रत्यत्वम् । ६. च-प-फ–°न्निगदितम् । ७. त-थ–एवमेव । ८. च-त-थ-फ–दुःसंपादनीयम् । ९. न-ज्ञ-र-ल–तैत्तिरीयकाः । १०. ट–अस्त्वेवम् । ११. न–°र्थमात्रम्; ण–°मात्रजर्ति° । १२. छ-त-थ-फ–' तद्वत् ' नास्ति । १३. ग-य–इत्येनम्; ण-न–इत्येवम्; घ–इत्यन्तम् । १४. च-प-फ–न समामनन्ति ।

शाखान्तरपाठं निराकृत्य पाठान्तरं तैत्तिरीयाः आमनन्ति–‘ यद्भूयास्सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात् ’ ( तै. सं. २. ६. ९. ६ ) इति निराकरणम् । ‘ सूपचरणा च स्वधिचरणा चेत्येव ब्रूयात् ’ इति पाठान्तरोपदेशः । तत्रानुष्ठातृपुरुषभेदेन व्यवस्था । तद्वत् विधिषु द्रष्टव्यम् । षोडशिग्रहणादिदूषणं तु अश्रुतमीमांसावृत्तान्तस्य तवैव शोभते । पूर्वमीमांसायां दशमाध्यायस्याष्टमपादे षोडशिनो ग्रहणाग्रहणविकल्पो निर्णीतः ( जै. सू. १०. ८. ६ )। द्वितीयस्याध्यायस्य प्रथमपादे कालान्तरभाविफलसिध्यर्थमपूर्वं निर्णीतम् ( जै. सू. २. १. ५ )। तद्वदुत्तरमीमांसायां प्रथमाध्यायस्य चतुर्थपादे ‘ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ’ ( ब्र. सू. १. ४. १४ ) इत्यस्मिन् सूत्रे जगत्कारणे परमात्मनि श्रुतिविप्रतिपत्तिर्निराकृता । द्वितीयस्याध्यायस्य प्रथमपादे आरम्भणाधिकरणे तु ‘ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ’ ( ब्र. सू. २. १. १७ ) इति सूत्रे तैत्तिरीयवाक्यगतस्य असच्छब्दस्य न शून्यपरत्वं किंतु अव्यक्तावस्थापरत्वम् इति निर्णीतम् । तथा जैमिनिः चोदनासूत्रे विधिवाक्यं धर्मे प्रमाणमिति प्रतिज्ञाय औत्पत्तिकसूत्रे तत्प्रामाण्यं समर्थयामास ( जै. सू. १. १. २; ५ )। व्यासोऽपि ‘शास्त्रयोनित्वात्’ ( ब्र. सू. १. १. ३ ) इति सूत्रे वेदान्तानां ब्रह्मणि प्रामाण्यं प्रतिज्ञाय ‘तत्तु समन्वयात्’ ( ब्र. सू. १. १. ४ ) इत्यादिसूत्रैः समर्थयामास । तस्मात् अमीमांसकस्य तव पूर्वोक्तस्थाण्वन्धन्यायो दुष्परिहरः । अतो विधिभागस्य प्रामाण्यं सुस्थितम् ॥

अर्थवादभागस्य प्रामाण्यं महता प्रयत्नेन जैमिनिः समर्थयामास । तत्सूत्राणि व्याख्यास्यन्ते ( जै. सू. १. २. १-१८ )। तत्र पूर्वपक्षं सूत्रयति––

‘आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते’ इति। आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां नास्ति कश्चित् विवक्षितः स्वार्थः । ते चार्थवादा एवमाम्नायन्ते–‘सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्’ (तै. सं. १. ५. १. १ ), ‘ स आत्मनो वपामुदखिदत् ’ (तै. सं. २. १. १. ४ ), ‘देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्’ ( तै. सं. ६. १. ५. १ ) इति। यस्मादीदृशस्य वाक्यस्य विवक्षितोऽर्थः कश्चिदपि नास्ति तस्मादिदं वाक्यमनित्यमुच्यते। यद्यप्यनादित्वात् स्वरूपेणानित्यत्वं नास्ति तथापि धर्मावबोधनलक्षणस्य नित्यकार्यस्याभावात् अनित्यैः काव्यालापैः समानत्वात् अप्रमाणमित्यर्थः॥ ननु उदाहृतानामर्थवादानामनुष्ठेये धर्मे प्रामाण्याभावेऽपि स्वार्थे प्रामाण्यमस्तु। तत्प्रत्यायकत्वेन स्वतः प्रामाण्यस्य अपवदितुमशक्यत्वात् इत्याशङ्क्य अन्येषु केषुचिदर्थवादेषु मानान्तरविरोधदर्शनादप्रामाण्ये सति तद्दृष्टान्तेन सर्वेषामप्यर्थवादानामप्रामाण्यमित्यभिप्रेत्य सूत्रयति––

‘शास्त्रदृष्टविरोधाच्च’ इति । शास्त्रविरोधो दृष्टविरोधः शास्त्रदृष्टविरोधः इति त्रिविधो विरोधोऽर्थवादेषूपलभ्यते। तथा हि ‘स्तेनं मनोऽनृतवादिनी वाक्’ इत्यत्र श्रूयमाणं मानसं चौर्यं वाचिकमनृतवदनं च प्रतिषेधशास्त्रेण विरुद्धम् । ‘तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः’ इत्यत्र दृष्टविरोधः। तथा ‘न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा’ इत्यत्रापि प्रत्यक्षविरोधः । ‘को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा’ ( तै. सं. ६. १. १. १ )

---

१. ठ–निरस्य । २. ठ–पाठोपदेशः । ३. च-फ–तद्विधिषु; प–तत् विधिवत् । ४. ट-ठ–तवैव परम् । ५. ट-ठ–‘तद्वत्’ नास्ति; त-थ–वर्जमितरेषु–तदुत्तर । ६. ग-च-छ-ण-फ-य–श्रुतेर्वि॰ । ७. ट–द्वितीयाध्यायस्य । ८. ट–वर्जमितरेषु–‘ आरम्भाधि॰ ’। ९. क-ख- ट-ठ-न–॰योनित्वसूत्रे । १०. ट-ठ–॰न्वयादिभिः सूत्रैः । ११. क-ख-च-छ-ण-न–दुष्परिहारः । १२. ट-ठ–सिद्धम् । १३. ट-ठ–प्रयासेन । १४. ट-ठ–व्याख्यायन्ते । १५. च-फ–प्रवृत्तित्वा॰ । १६. ट–‘अर्थवादानाम्’ नास्ति । १७. ट–॰त्वर्थः; ठ–अर्थः । १८. ट-ठ–विवक्षितोऽर्थः । १९. ठ–‘ अपि ’ नास्ति। २०. ठ-॰विरोधादप्रामाण्यदर्शने । २१. च-छ-प-फ–‘ इति ’ नास्ति। २२. ट-ठ –॰नृतवचनम् ।

इत्यत्र शास्त्रदृष्टविरोधः । ' स्वर्गकामो यजेत ' इत्यादिशास्त्रे ह्यामुष्मिकं फलं दृश्यते । तस्मात् विरोधादर्थवादानामप्रामाण्यम् ॥ ननु ' सोऽरोदीत् ' इत्यादीनां निष्प्रयोजनत्वात् ' स्तेनं मनः ' इत्यादीनां च विरोधादप्रामाण्येऽपि फलप्रतिपादकानामर्थवादानां तदुभयवैलक्षण्यात् अस्तु प्रामाण्यमित्याशङ्क्य उत्तरं सूत्रयति—

' तथा फलाभावात् ' इति । यथा मानान्तरविरुद्धमर्थवादैरुक्तं तथा फलमप्यविद्यमानमेव तैरुच्यते। तथा हि गर्गत्रिरात्रं प्रकृत्य श्रूयते–' शोभतेऽस्य मुखं य एवं वेद ' ( ताण्ड्य. ब्रा. २०. १६. ६ ) इति। दर्शपूर्णमासयोर्वेदाभिमर्शनं प्रकृत्य श्रूयते–' आस्य प्रजायां वाजी जायते य एवं वेद ' ( तै. सं. १. ७. ४. ६ ) इति । न च वयं वेदितॄणां तत्फलमुपलभामहे ॥ ननु ऐहिकफलवाक्यानां विसंवादात् अप्रामाण्येऽपि आमुष्मिकफलवाक्यानामस्तु प्रामाण्यमित्याशङ्क्य उत्तरं सूत्रयति—

' अन्यानर्थक्यात् ' इति । एवं हि श्रूयते–' पूर्णाहुत्या सर्वान्कामानवाप्नोति ', ' पशुबन्धयाजी सर्वाँल्लोकानभिजयति ', ' तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इति । तत्र अग्न्याधेयगतया पूर्णाहुत्या सर्वकामप्राप्तेरन्यानि अग्निहोत्रादीन्युत्तरकालीनान्यनर्थकानि स्युः । तथा निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयात् ज्योतिष्टोमादीनामानर्थक्यम् । अध्ययनकालीनेनैव अश्वमेधवेदनेन ब्रह्महत्यादितरणात् तदनुष्ठानं च व्यर्थं स्यात् । तस्मात् आमुष्मिकफलवाक्यानामप्यप्रामाण्यम्॥ ननु मा भूत् फलवाक्यानां प्रामाण्यम् । तथापि निषेधवाक्येषु विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्य उत्तरं सूत्रयति—

' अभागिप्रतिषेधात् ' इति । 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' ( तै.सं. ५. २.७. १) इत्यत्र अन्तरिक्षस्य च दिवश्च प्रतिषेधभागित्वं नास्ति तत्र चयनप्रसंगस्यैवाभावात् ॥ मा भूत्तर्हि निषेधानां प्रामाण्यम् । ' बबरः प्रावाहणिरकामयत ' ( तै. सं. ७. १. १०. २ ) इत्यादीनां पूर्वपुरुषवृत्तान्ताभिधायिनां विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्य उत्तरं सूत्रयति—

' अनित्यसंयोगात् ' इति । बबरादिरूपेण अनित्येनार्थेन संयोगे सति अस्य वाक्यस्य ततः पूर्वमभावात् कालिदासादिवाक्यवत् पौरुषेयत्वं प्रसज्येत । किं बहुना । सर्वथापि नास्त्येवार्थवादानां प्रामाण्यमिति पूर्वः पक्षः ॥

सिद्धान्तं सूत्रयति—' विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ' इति । तुशब्दोऽर्थवादानामप्रामाण्यं वारयति । ' वायुर्वै क्षेपिष्ठा ' इत्येवमादीनामर्थवादानां ' वायव्यं श्वेतमा लभेत ' ( तै. सं. २. १. १. १ ) इत्यादिना विधिना सहैकवाक्यत्वादस्ति धर्मे प्रामाण्यम् । न च विधिवाक्यस्य अर्थवादनैरपेक्ष्येण पदान्वयसंपूर्तेस्तत्रार्थवादानां नास्त्युपयोगः इति शङ्कनीयम् । ते ह्यर्थवादाः पुरुषप्रवृत्तिमाकाङ्क्षतां विधीनां स्तुत्यर्थत्वेनोपयुक्ताः स्युः । स्तुत्या च प्रलोभितः पुरुषः तत्र प्रवर्तते ॥ ननु अर्थवादानां प्रमादपठितत्वेन उपेक्षणीयत्वात् किमनेन एकवाक्यताप्रयासेन इत्याशङ्क्याह—

' तुल्यं च सांप्रदायिकम् ' इति । अनध्यायवर्जनादिनियमपुरःसरं गुरुसंप्रदायादध्ययनं यत्तत् सांप्रदायिकम् । तच्च विधीनामर्थवादानां समानम् । तस्मात् विधिवदेतेषामपि प्रमादपाठो न भवति ॥ ननु ' शास्त्रदृष्टविरोधाच्च ' इत्येवमर्थवादेष्वनुपपत्तिरुक्तेत्याशङ्क्याह—

' अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ' [*]इति। ' स्तेनं मनः' इत्यादौ शास्त्रविरोधाद्यनुपपत्तिरप्राप्ता प्रयोगस्यानुक्तत्वात् । प्रयोगे हि स्तेयादीनामुच्यमाने शास्त्रविरोधः स्यात् । न चात्र स्तेयं कर्तव्यमिति प्रयोग उच्यते । किंतु स्तेयशब्दार्थः एवोच्यते ।

---

१. ग-घ-च-छ-ण-त-थ-य—शास्त्रदृष्टेन विरोधः । २. ठ—पूर्ववृत्ता° । ३. त-थ—बबरादिस्वरूपेण । *. छ-फ—'इति' इत्यस्यानन्तरं 'तन्त्रवार्तिके तु एतत्सूत्रमभ्याहृत्य त्रिधा व्याख्यातम् । अप्राप्तां चानुपपत्तिम् अप्राप्ता चानुपपत्तिः अप्राप्तं चानुपपत्तिम् इति ' इत्यधिकः पाठो दृश्यते । ४. ण- न—स्तैन्यादी° ।

न च शब्दार्थः प्रयोगभूतः । तस्मात् शब्दार्थवचनमात्रेण शास्त्रविरोधाभावादयमर्थवादः उपपन्नः एव ॥ ननु "स्तुत्यर्थेन विधीनां स्युः' इति यदुक्तं तत् असत् वैयधिकरण्यात् । 'वेतसशाखया चावकाभिश्च वि कर्षत्यापो वै शान्ताः' (तै. सं. ५. ४. ४. ३) इत्यत्र वेतसावके विधीयेते आपश्च स्तूयन्ते इति वैय-धिकरण्यमित्याशङ्क्याह—

'गुणवादस्तु' इति । तु शब्दो वैयधिकरण्यदोषं वारयति । गुणवादो ह्यत्र विवक्षितः । यथा लोके कश्मीराभिजनो देवदत्तः कश्मीरदेशेषु स्तूयमानेषु स्तुतमात्मानं मन्यते एवमत्रापि अभ्द्यो जाते वेतसावके अप्सु स्तुतासु स्तुते एव भवतः । शान्ताभ्योऽद्भ्यो जातत्वात् वेतसावके स्वयमपि शान्ते सत्यौ यजमानस्यानिष्टं शमयतः इत्येतादृशस्य गुणस्य वादोऽत्राभिप्रेतः । 'सोऽरोदीत्' इत्यत्रापि रजतस्य पतिताश्रुरूपत्वात् रजतदाने गृहेऽपि रोदनप्रसंगात् 'बर्हिषि रजतं न देयम्' इति तन्निषेधेन विधेयेनार्थवादस्यैकवाक्यत्वम् । तत्र रजतदानाभावे रोदनाभावरूपो गुणोऽत्र विवक्षितः । तेन च गुणेन रजतदाननिवारणरूपो विधिः स्तूयते । यद्यपि रजतस्य अश्रुप्रभवत्वमत्यन्तमसत् तथापि यथोक्त[4]रीत्या विधेः स्तुतिः संपद्यते । 'यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमजं तूपर-मा लभेत' (तै. सं. २. १. १. ४-५) इत्ययं विधिः प्रजापतिवपोत्खेदेन स्तूयते । यस्मात् प्रजापतिः स्ववपामपि उत्खिद्य अग्नौ प्रहृत्य ततो जातं तूपरम् अजम् आत्मार्थमालभ्य प्रजाः पशूंश्च लब्धवान्, तस्मात् प्रजादिसंपादकोऽयं तूपरः इति तूपरगुणस्य वादोऽत्र विवक्षितः । 'आदित्यः प्रायणीयश्चरुः' इत्येष विधिः 'दिशो न प्राजानन्' इत्यनेन दिङ्मोहेन स्तूयते । यदियमदितिर्देवता दिङ्मो-हमप्यपनीय दिग्विशेषं ज्ञापयति तदा बहुविधकर्मसमुदायरूपे सोमयागेऽनुष्ठानविषयं भ्रममपनेष्यतीति किमु वक्तव्यमित्येवम् अदितिदेवतागतस्य गुणस्य वादोऽत्र विवक्षितः । स्वकीयवपोत्खेदो देवयजनाध्यवसानमात्रेण दिङ्मोहश्चेत्युभयमस्तु वा मा वा । सर्वथापि स्तुतिपरत्वमभ्युपगच्छ-तामस्माकं न किंचिद्धीयते । 'शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब' इत्यादावविद्यमानेनाप्यर्थेन लोके स्तुतिदर्शनात् ॥ अथ पूर्वपक्षिणा शास्त्रविरोधं दर्शयितुं यदुदाहृतं 'स्तेनं मनोऽनृतवादिनी वाक्' इति तत्रोत्तरं सूत्रयति—

'रूपात्प्रायात्' इति । 'हिरण्यं हस्ते भवत्यथ गृह्णाति' इत्येतं विधिं स्तोतुमयमर्थवाद उच्यते । यथा लोके[9] किमृषिणा देवदत्त एव पूजयितव्य इत्यत्र देवदत्तपूजां स्तोतुमेव औदासीन्यमृषावुपन्यस्यते, न तु पूज्यत्वमृषेर्वारयितुम्; एवमत्रापि हस्ते हिरण्यग्रहणं प्रशंसितुं मनसः स्तेनरूपत्वं वाचोऽनृतवादित्वं चोपन्यस्यते । तत्र गुणवादेन शब्दार्थो योजनीयः । यथा स्तेनाः प्रच्छन्न-रूपा एवं मनोऽपीति प्रच्छन्नरूपत्वमत्रगुणः । प्रायेण वागनृतं वक्तीति प्रायिकत्वं तत्र गुणः । हस्तस्तु न प्रच्छन्नो नाप्यनृतबहुलः । अतो हस्ते हिरण्यधारणं प्रशस्तमिति स्तूयते । यदपि दृष्टविरोधाय 'धूम एवाग्नेर्दिवा ददृशे' इत्यादिकमुदाहृतं तत्रोत्तरं सूत्रयति—

'दूरभूयस्त्वात्' इति । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति', 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इत्येतौ विधी स्तोतुं सोऽर्थवादः । यस्मात् अर्चिर्दिवा न दृश्यते तस्मात् सूर्यमन्त्र एव प्रातः प्रयोक्तव्यः । यस्मात् रात्रावर्चिरेव दृश्यते तस्मात् अग्निमन्त्रो रात्रौ प्रयोक्तव्यं इत्येवं तयोर्मन्त्रयोः स्तुतिः । धूमार्चिषोरदर्शनोपन्यासस्तु दूरभूयस्त्वगुणनिमित्तः । भूयसि हि दूरे पर्वताग्रे वृक्षादयोऽपि न विस्पष्टं दृश्यन्ते, किंतु तृणसादृश्येन तेषां दर्शनाभास एव ।

---

१. च-छ-त-थ-प-फ—स्तेयशब्दार्थः; ग-घ-ण-य—स्तेनशब्दार्थः । २. ग-घ-च-छ-ण-त-थ-प-फ—काश्मीराभि° । ३. त—'एव' नास्ति; थ—'स्तुते एव' इत्यस्य स्थाने 'ते एव स्तुते' । ४. झ-न-श—°नीत्या । ५. च-ण-प-फ—'अपि' नास्ति । ६. ग-घ—यथेय°; ट-ठ—यदेय° । ७. च-त-थ-प-फ—तथा । ८. ट-ठ-झ-श—गृभ्णाति । ९. घ-च-छ-ण-म-प-फ—लोकेऽपि । १०. च-छ-त-प-फ—प्रयोक्तव्यः सूर्यमन्त्रश्च दिवा इत्येवम् ।

तद्वदत्रापि ॥ यदप्यन्यदृष्टविरोधायैवोदाहृतं 'न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा' इति तत्रोत्तरं सूत्रयति—

'स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात्' इति। 'प्रवरे प्रव्रियमाणे ब्रूयाद्देवाः पितरः' इत्यस्य विधेः स्तावकोऽयमर्थवादः। यदि यजमानो 'देवाः पितरः' (तै. ब्रा. ३. ७. ५. ४) इत्यादिमन्त्रेण प्रवरमनुमन्त्रयेत् तदानीम् अब्राह्मणोऽपि ब्राह्मणो भवेत् इत्यनुमन्त्रणस्य स्तुतिः। 'न चैतद्विद्मः' इत्येतदज्ञानवचनं दुर्ज्ञानत्वगुणेन तत्र प्रयुज्यते। यत्र स्त्रिया अपराधो भवति तत्र कर्तुरुत्पादयितुर्जारस्यापि पुत्रो दृश्यते। अतः पत्युपपत्योरुभयोः पुत्रदर्शनात् स्वकीयजन्म कीदृशमिति दुर्ज्ञानम्। अनेनाभिप्रायेण प्रयुक्तत्वात् नास्ति तत्र दृष्टविरोधः। न हि तत्र दृश्यमानं स्वब्राह्मण्यमपवदितुं 'न चैतद्विद्मः' इत्युपन्यस्तम् ॥ यदपि शास्त्रीयदर्शनविरोधायोदाहृतं 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा' इति तत्रोत्तरं सूत्रयति—

'आकालिकेप्सा' इति। 'दिक्ष्वतीकाशान्करोति' इति प्राचीनवंशस्य द्वारविधिः। तस्य शेषोऽयं 'को हि तद्वेद' इति। धूमाद्युपद्रवपरिहारेण प्रत्यक्षेण फलेन द्वारविधिः स्तूयते। स्वर्गप्राप्तिरूपं तु फलमाकालिकम्। अकाले भवमाकालिकं विप्रकृष्टकालीनं न त्विदानींतनमित्यर्थः। तस्येप्सा प्राप्तुमिच्छा। सा च 'को हि तद्वेद' इत्यनिश्चयोपन्यासे कारणम्। यथा भाविकालीनः पौत्र[3]प्रपौत्रादिवृत्तान्तो निश्चेतुं न शक्यते, तद्वत् स्वर्गप्राप्तिर्भाविकालीनेति गुणयोगादनिश्चयोपन्यासः। धूमादिपरिहारस्तु प्रत्यक्षत्वात् निश्चितं[4] इत्यभिप्रायः ॥ यदप्यन्यदृष्टविरोधायोदाहृतं 'शोभतेऽस्य मुखं य एवं वेद' इति तत्रोत्तरं सूत्रयति—

'विद्याप्रशंसा' इति। सोऽयं गर्गत्रिरात्रविधेः शेषः। तद्विषयं वेदनमपि मुख[5]शोभाहेतुः किमुतानुष्ठानमिति स्तूयते। यथा कर्णाभरणादिना मुखं शोभितं भवति एवं वेदितुरुत्साहेनैव[6] विकसितं वदनं शोभितमिव शिष्यैरुद्वीक्ष्यते। अतः शोभासादृश्यगुणयोगात् शोभते इत्युच्यते। यदप्यन्यद्विरोधायोदाहृतम् 'आस्य प्रजायां वाजी जायते य एवं वेद' इति सोऽपि वेदानुमन्त्रणविधेः शेषः। अत्रापि कैमुतिकन्यायेन स्तुतिः पूर्ववद्योजनीया। वेदितुः पुत्रः पितृशिक्षया स्वयमपि विद्वान् भवति। ततः प्रतिग्रहेणान्नं प्राप्नोति। तस्मात् ईदृशं गुणमभिप्रेत्य 'वाजी जायते' इत्युक्तम् ॥ यदप्यन्यानर्थक्यायोदाहृतं 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इति तत्रोत्तरं सूत्रयति—

'सर्वत्वमाधिकारिकम्' इति। 'पूर्णाहुतिं जुहुयात्' इत्यस्य विधेः शेषोऽयम्। सर्वकामावाप्तिहेतुत्वात् प्रशस्तेयमाहुतिरिति स्तूयते। यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयम्, एवं पूर्णाहुत्या कर्मसाङ्गत्वे यत्फलं[7] तस्मिन्नधिकारे प्रस्तावे संभावितं तद्विषयमेव सर्वत्वं द्रष्टव्यम्। पूर्णाहुतेरभावे सति आधानरूपं कर्म अङ्गविकलं[8] भवति। तच्च वैकल्यं पूर्णाहुत्या समाधीयते इत्येकः कामः। तस्मिन् समाहिते सति आहवनीयाद्यग्नयोऽग्निहोत्रादिकर्मसु योग्या भवन्तीत्ययमन्यः कामः। तैश्च कर्मभिः तत्फलं प्राप्यते इति कामान्तरम्। ईदृशी सर्वकामावाप्तिः[9] आहुत्यन्तरेष्वपि[10] विद्यते इति चेत्, विद्यतां नाम। किं नश्छिन्नम्। न खल्वेतावता पूर्णाहुतिस्तुतेः

---

१ च-ण-न-प-फ-'अपि' नास्ति। २. च-छ-त-थ-प-फ-तस्य प्राप्तु॰। ३. ठ-पुत्रपौत्रवृत्तान्तो; च-छ-प-फ-पुत्रपौत्रादिवृत्तान्तो; थ-पौत्रादिवृत्तान्तो। ४. ट-ठ-निश्चीयते। ५. ट-ठ-तस्य मुख॰। ६. ग-ट-ठ-थ-य-'एव' नास्ति। ७. ग-घ-च-छ-ण-त-थ-फ-य-कर्मसाङ्गत्वं यत्फलम्; ठ-कर्मसाङ्गत्वादिकं यत्कृतम्। ८. ग-घ-प-फ-य-अङ्गविफलम्; छ-ण-अङ्गं विफलम्। ९. च-छ-प-फ- सर्वकामप्राप्तिः। १०. ट-ठ-आहुत्यन्तरे।

काचित् हानिरस्ति ॥ ननु पूर्णाहुतेरङ्गत्वात्[1] तदीयफलश्रुतेरर्थवादत्वेन स्तावकत्वं भवतु, 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः' (जै. सू. ४. ३. १) इति सूत्रेण[2] निर्णीतत्वात्। पशुबन्धवाक्यस्य तु कर्मविधायकत्वात् सर्वलोकाभिजयस्य मुख्यफलत्वादन्यानर्थक्यं दुर्वारमित्याशङ्क्य उत्तरं सूत्रयति—

'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः सारतो वा फलविशेषः स्यात्' इति। पृथिव्यन्तरिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपं फलं पशुबन्धकर्मणा निष्पाद्यते[3]। तेषां च पृथिव्यादीनां फलानां कर्मान्तरेण परिमाणाधिक्यं सारत्वं वा संपद्यते। ततः फलविशेषः स्यादिति नास्त्यानर्थक्यम्। लोकवत् इति उक्तार्थे दृष्टान्तः। यथा लोके निष्केण खारीपरिमितान् व्रीहीन् विक्रीय[4] निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति। यथा वा निष्केण वस्त्रमात्रं लभ्यते निष्कद्वयेन तु सारभूतं दुकूलम्[5]। तथा भोगाधिक्यं भोगसारत्वं वा कर्मान्तरेण द्रष्टव्यम्। ब्रह्महत्याया अपि मानस्याः स्वल्पाया वेदनमात्रेण तरणं, कायिक्यास्तु महत्या अश्वमेधेनेति नास्त्यन्यानर्थक्यम्[6]॥ योऽपि 'नान्तरिक्षे न दिवि' इत्यप्रसक्तप्रतिषेध उदाहृतः तथा 'बबरः प्रावाहणिः' इत्यनित्यसंयोग उदाहृतस्तत्रोभयत्रोत्तरं सूत्रयति—

'अन्त्ययोर्यथोक्तम्' इति। अन्त्ययोरुदाहरणयोरुत्तरं[7] पूर्वोक्तमेव द्रष्टव्यम्। अन्तरिक्षादौ चयननिन्दारूपोऽर्थवादो 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधेः शेषः। अतोऽत्र 'स्तुत्यर्थेन विधीनां स्युः' इत्युक्तमेवोत्तरम्। अन्तरिक्षे चयनप्रसक्त्यभावात् तन्निन्दा नित्यानुवादोऽस्तु। तेनापि विधिः स्तोतुं शक्यते। नित्यसिद्धार्थानुवादिना वायोः क्षेपिष्ठत्वेन पशुविधेः स्तुतत्वात्। 'बबरः प्रावाहणिरकामयत' इत्यत्रापि बबरनामकः कश्चिदनित्यः पुरुषो मनुष्यो न विवक्षितः, किंतु बबरध्वनियुक्तः प्रकर्षेण वहनशीलो वायुर्व्यवहारदशायां नित्य एवार्थो विवक्षितः इत्येतदुत्तरं प्रथमपादस्यान्तिमाधिकरणे प्रोक्तम्। तस्मात् संभावितदोषाणां परिहृतत्वादर्थवादानामस्ति प्रामाण्यम्।

तत्र संग्रहश्लोकाः—

> वायुर्वा इत्येवमादेरर्थवादस्य मानता।
> न विधेयेऽस्ति धर्मे किं किं वाऽसौ तत्र विद्यते॥
> विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात्।
> नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः॥
> विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः।
> तेनैकवाक्यता तस्माद्वादानां धर्ममानता॥ (जै. न्या. १. २. १) इति॥

तदेवं वेदे विद्यमानानां त्रयाणां मन्त्रविध्यर्थवादभागानामप्रामाण्यकारणाभावात् बोधकानां तेषां प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धम्॥

ननु एवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात्। पौरुषेयत्वं च प्रथमपादे पूर्वपक्षत्वेन जैमिनिः सूत्रयामास—(जै. सू. १. १. २७-३२)

'वेदांश्चैके संनिकर्षं पुरुषाख्याः' इति। एके वादिनो वेदान् प्रति संनिकर्षं मन्यन्ते। कालिदासादिभिर्निर्मितानां रघुवंशादिग्रन्थानां समुच्चयार्थश्चकारः। ते ह्यत्र दृष्टान्ततया समुच्चीयन्ते। यथा रघुवंशादय इदानींतनास्तथा वेदा अपि। न तु वेदा अनादयः। अत एव वेदकर्तृत्वेन पुरुषा आख्यायन्ते। वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते, तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वात् वेदाः

---

१. ट-ठ—वर्जमितरेषु—°रङ्गभावत्वात्। २. ट-ठ—सूत्रे। ३. च-छ-ट-ठ-त-थ-फ—निष्पद्यते। ४. त-थ—विक्रीणाति। ५. ट-ठ—'दुकूलम्' नास्ति। ६. ग-घ-च-छ-ण—त-थ-न-प-फ-य—नास्त्यानर्थक्यम्। ७. च-छ-त-प-फ—अनयोरुदाहरणयोः।

पौरुषेयाः ॥ ननु नित्यानामेव सतां वेदानामुपाध्यायवत् संप्रदायप्रवर्तकत्वेन काठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति—

'अनित्यदर्शनाच्च' इति । अनित्या जननमरणवन्तो बबरादयो वेदे श्रूयन्ते–'बबरः प्रावाहणिरकामयत', 'कुसुरुबिन्द औद्दालकिरकामयत' (तै. सं. ७. २. २. १) इति । तथा सति बबरादिभ्यः पूर्वमभावादनित्या वेदाः । विमतं वेदवाक्यं पौरुषेयं, वाक्यत्वात्, कालिदासादिवाक्यवत् इत्याद्यनुमानसमुच्चयार्थश्चकारः ॥

सिद्धान्तं सूत्रयति–'उक्तं तु शब्दपूर्वत्वम्' इति । तु शब्दो वेदानामनित्यत्वं वारयति । शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वं प्राचीनैरेव सूत्रैरुक्तम् । 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' (जै. सू. १. १. ५) इत्यस्मिन् सूत्रे औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसंबन्धानां च नित्यत्वं प्रतिज्ञायोत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात् । का तर्हि काठकाद्याख्याया गतिरित्याशङ्क्य संप्रदायप्रवर्तनात् सेयमुपपद्यते इत्युत्तरं सूत्रयति—

'आख्या प्रवचनात्' इति । अस्त्वियमाख्याया गतिः । ततः परं बबराद्यनित्यदर्शनं यदुक्तं तस्य किमुत्तरमित्याशङ्क्य उत्तरं सूत्रयति—

'परं तु श्रुतिसामान्यमात्रम्' इति । यत् परं बबरादिकं तत् शब्दसामान्यमेव न तु मनुष्यो बबरनामकोऽत्र विवक्षितः । बबरध्वनियुक्तस्य प्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् ॥ ननु वेदे क्वचिदेवं श्रूयते–'वनस्पतयः सत्रमासत', 'सर्पाः सत्रमासत' इति । तत्र वनस्पतीनामचेतनत्वात् सर्पाणां चेतनत्वेऽपि विद्यारहितत्वात् न तदनुष्ठानं संभवति । अतो 'जरद्गवो गायति मद्रकाणि' इत्याद्युन्मत्तबालवाक्यसदृशत्वात् केनचित् कृतो वेद इत्याशङ्क्य उत्तरं सूत्रयति—

'कृते चाविनियोगः स्यात्कर्मणः समत्वात्' इति । यदि ज्योतिष्टोमादि वाक्यं केनचित् पुरुषेण क्रियेत तदानीं कृते तस्मिन् वाक्ये स्वर्गसाधनत्वे ज्योतिष्टोमस्य विनियोगो न स्यात्, साध्यसाधनभावस्य पुरुषेण ज्ञातुमशक्यत्वात् । श्रूयते तु विनियोगः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । न चैतदुन्मत्तवाक्यसदृशं लौकिकविधिवाक्यवत् भाव्यकरणेतिकर्तव्यतारूपैस्त्रिभिरंशैरुपेताया भावनाया अवगमात् । लोके हि ब्राह्मणान् भोजयेदिति विधौ किं केन कथमित्याकाङ्क्षायां तृप्तिमुद्दिश्यौदनेन द्रव्येण शाकसूपादिपरिवेषणप्रकारेणेति यथोच्यते तथा ज्योतिष्टोमविधावपि स्वर्गमुद्दिश्य सोमेन द्रव्येण दीक्षणीयाद्यङ्गोपकारप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशं भवेत् । वनस्पत्यादिसत्रवाक्यमपि न तत्सदृशं, तस्य सत्रकर्मणो ज्योतिष्टोमादिना समत्वात् । 'यत्परो हि शब्दः स शब्दार्थः' इति न्यायविद आहुः । ज्योतिष्टोमादिवाक्यस्य विधायकत्वादनुष्ठाने तात्पर्यम् । वनस्पत्यादिसत्रवाक्यस्यार्थवादत्वात् प्रशंसायां तात्पर्यम् । सा चाविद्यमानेनापि कर्तुं शक्यते । अचेतना अविद्वांसोऽपि सत्रमनुष्ठितवन्तः, किं पुनश्चेतना विद्वांसो ब्राह्मणा इति सत्रस्तुतिः । चकारः पूर्वपक्षोक्तस्य वाक्यत्वहेतोः कर्त्रनुपलम्भेन पराहतिं समुच्चिनोति । तस्मात् नास्ति वेदस्य पौरुषेयत्वम् ॥

अत्रैतौ संग्रहश्लोकौ—

> पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता।
> काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥

---

१ ट-ठ-वर्जमितरेषु–'पौरुषेयं वाक्यत्वात्' इत्यस्य स्थाने 'पौरुषेयवाक्यत्वात्'। २. ट-ठ–'वेदानाम्' नास्ति। ३. ट–बबरादिनामको॰। ४. ट-ठ–सत्रानुष्ठानम्। ५. त-थ–'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः' इत्याद्य॰। ६. ट-ठ–स्वर्गसाधनत्वेन। ७. ट-ठ–ज्योतिष्टोमेन।

समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ ( जै. न्या. १. १. ८ ) इति ॥

ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितं—'शास्त्रयोनित्वात्' इति । ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञमिति सूत्रार्थः । बाढम् । नैतावता पौरुषेयत्वं भवति मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवत् नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम्–'अत एव च नित्यत्वम्' ( ब्र. सू. १. ३. २९ ) इति । श्रुतिस्मृती चात्र भवतः । 'वाचा विरूप नित्यया' ( ऋ. सं. ८. ७५. ६ ) इति श्रुतिः । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' ( म. शां. २३२. २४ ) इति स्मृतिः । तस्मात् कर्तृदोषशङ्काया अनुदयात् मन्त्रब्राह्मणात्मकस्य वेदस्य निर्विघ्नं प्रामाण्यं सिद्धम् ॥

ननु मन्त्रब्राह्मणात्मकत्वं वेदस्य न युक्तं, तयोः स्वरूपस्य निर्णेतुमशक्यत्वात् । मैवम् । द्वितीयाध्यायस्य प्रथमपादे सप्तमाष्टमयोरधिकरणयोर्निर्णीतत्वात् । सप्तमाधिकरणमारचयति—

अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ ( जै. न्या. २. १. ७ ) ॥

आधाने इदमाम्नायते–'अहे बुध्निय मन्त्रं मे गोपाय' ( तै. ब्रा. १. २. १. २६ ) इति । तत्र मन्त्रस्य लक्षणं नास्ति । अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । विहितार्थाभिधायको मन्त्रः इत्युक्ते 'वसन्ताय कपिञ्जलानालभते' ( वा. सं. २४. २० ) इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । मननहेतुर्मन्त्रः इत्युक्ते ब्राह्मणेऽतिव्याप्तिः । एवम् असिपदान्तो मन्त्रः, उत्तमपुरुषान्तो मन्त्रः, इत्यादिलक्षणानां परस्परमव्याप्तिरिति[1] चेत्, मैवम् । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च[2] समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । 'उरु प्रथस्व' ( तै. सं. १. १. ८. १ ) इत्यादयोऽनुष्ठानस्मारकाः । 'अग्निमीळे पुरोहितम्' ( ऋ. सं. १. १. १ ) इत्यादयः स्तुतिरूपाः । 'इषे त्वा' ( तै. सं. १. १. १. १ ) इत्यादयस्त्वान्ताः । 'अग्न आ याहि वीतये' ( तै. ब्रा. ३. ५. २. १ ) इत्यादय आमन्त्रणोपेताः । 'अग्नीदग्नीन्वि हर' ( तै. सं. ६. ३. १. २ ) इत्यादयः प्रैषरूपाः । 'अधः स्विदासी३दुपरि स्विदासी३त्' ( ऋ. सं. १०. १२९. ५ ) इत्यादयो विचाररूपाः । 'अम्बे अम्बाल्यम्बिके न मा नयति कश्चन' ( तै. सं. ७. ४. १९. १ ) इत्यादयः परिदेवनरूपाः । 'पृच्छामि त्वा परमन्तं पृथिव्याः' ( तै. सं. ७. ४. १८. २ ) इत्यादयः प्रश्नरूपाः । 'वेदिमाहुः परमन्तं पृथिव्याः' ( तै. सं. ७. ४. १८. २ ) इत्यादय उत्तररूपाः । एवमन्यदप्युदाहार्यम् । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत । लक्षणस्य चोपयोगः पूर्वाचार्यैर्दर्शितः—

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥

इति । तस्मात् अभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम् ॥

अष्टमाधिकरणमारचयति—

नास्त्येतद्ब्राह्मणेष्वत्र लक्षणं विद्यतेऽथ वा ।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥ ( जै. न्या. २. १. ८ ) ॥

---

१. ठ-ष्मतिव्याप्तिरिति । २. च-छ-प-फ–तत्र ।

चातुर्मास्येष्विदमाम्नायते–' एतद्ब्राह्मणान्येव पञ्च हवींषि ' ( तै. ब्रा.१. ७. १. १) इति । तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः । वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्वोक्तो मन्त्रभाग एकः । भागान्तराणि च कानिचित् पूर्वैरुदाहर्तुं संगृहीतानि —

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥

इति । ' तेन ह्यन्नं क्रियते ' इति हेतुः । ' तद्दध्नो दधित्वम् ' ( तै. सं. २. ५. ३. ४ ) इति निर्वचनम् । ' अमेध्या वै माषाः ' ( तै. सं. ५. १. ८. १ ) इति निन्दा । ' वायुर्वै क्षेपिष्ठा देवता ' ( तै. सं. २. १. १. १ ) इति प्रशंसा । ' तं व्यचिकित्सञ्जुहवानी ३ मा हौषा ३ म् ' ( तै. सं. ६. ५. ९. १ ) इति संशयः । ' यजमानेन संमितौदुम्बरी भवति ' ( तै. सं. ६. २. १०. ३ ) इति विधिः । ' माषानेव मह्यं पचन्ति ' इति परकृतिः । ' पुरा ब्राह्मणा अभैषुः ' ( तै. सं. १. ५. ७. ५ ) इति पुराकल्पः । ' यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेत् ' ( तै. सं. २. ३. १२. १ ) इति विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यम् । न च हेत्वादीनामन्यतमं ब्राह्मणमिति लक्षणं, मन्त्रेष्वपि हेत्वादिसद्भावात् । ' इन्दवो वामुशन्ति हि ' ( ऋ. सं. १. २. ४ ) इति हेतुः । ' उदानिषुर्महीरिति तस्मादुदकमुच्यते ' ( तै. सं. ५. ६. १. ३; अथर्व. ३.१३.४ ) इति निर्वचनम् । ' मोघमन्नं विन्दते अप्रचेताः ' ( ऋ. सं. १०. ११७. ६ ) इति निन्दा । ' अग्निर्मूर्धा दिवः ककुत् ' ( ऋ. सं. ८. ४४. १६ ) इति प्रशंसा । ' अधः स्विदासी३दुपरि स्विदासी३त् ' इति संशयः । 'वसन्ताय कपिञ्जलानालभते' इति विधिः । ' सहस्रमयुता ददत् ' ( ऋ. सं. ८.२१. १८ ) इति परकृतिः । ' यज्ञेन यज्ञमयजन्त देवाः ' ( ऋ. सं. १. १६४. ५० ) इति पुराकल्पः । इतिकरणबहुलं ब्राह्मणमिति चेत्, न । ' इत्यददा इत्ययजथा इत्यपच[1] इति ब्राह्मणो गायेत् ' ( तै. ब्रा. ३. ९. १४. ३ ) इत्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः । ' इत्याह ' इत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत् , न । ' राजा चित्रं भगं भक्षीत्याह ' ( ऋ. सं. ७. ४१. २ ), ' यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ' ( ऋ. सं. ७. १०४. १६ ) इत्यनयोर्मन्त्रयोरतिव्याप्तेः । आख्यायिकारूपं ब्राह्मणमिति चेत्, न । यमयमीसंवादसूक्तादावतिव्याप्तेः । तस्मात् नास्ति ब्राह्मणस्य लक्षणमिति प्राप्ते[2] ब्रूमः । मन्त्रब्राह्मणरूपौ द्वावेव वेदभागौ इत्यङ्गीकारात् मन्त्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति । तदेतल्लक्षणद्वयं जैमिनिः सूत्रयामास–'तच्चोदकेषु मन्त्राख्या ', ' शेषे ब्राह्मणशब्दः ' ( जै. सू २. १. ३२-३३ ) इति । तच्चोदकेषु[3] तदभिधायकेषु वाक्येषु मन्त्र इति समाख्या संप्रदायविद्भिर्व्यवह्रियते–' मन्त्रानधीमहे ' इति । मन्त्रव्यतिरिक्तभागे तु ब्राह्मणशब्दस्तैर्व्यवहृत इत्यर्थः ॥

ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते–' यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान् गाथा नाराशंसीः ' ( तै. आ. २. ९ ) इति । मैवम् । विप्रपरिव्राजकन्यायेन ब्राह्मणावान्तरभेदानामेवेतिहासादीनां पृथगभिधानात् । ' देवासुराः संयत्ता आसन् ' ( तै. सं. ५. ३. ११. १ ) इत्यादय इतिहासाः । ' इदं वा अग्रे नैव किंचनासीत् ' ( तै. ब्रा. २. २. ९. १ ) इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम् । कल्पस्तु आरुणकेतुकचयनप्रकरणे समाम्नायते—' इति मन्त्राः । कल्पोऽत ऊर्ध्वम् । यदि बलिं हरेत् ' ( तै. आ. १. ३१. २ ) इति । अग्निचयने ' यमगाथाभिः परि गायति ' ( तै. सं. ५. १. ८. २ ) इति विहिता मन्त्रविशेषा

---

१. ट–पचति । २. ठ–एवं प्राप्ते । ३. ग-घ-च-छ-ट-ठ-ण-थ-प-फ-य–तस्मिन् वेदे केषुचिदभिधायकेषु ।

गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः। तस्मात् मन्त्रब्राह्मणव्यतिरिक्तभागाभावात् मन्त्रब्राह्मणस्वरूपस्य लक्षितत्वात् तदुभयात्मकत्वं वेदस्य सुस्थितम् ॥

मन्त्रावान्तरविशेषश्च तस्मिन्नेव पादे इत्थं विचारितः—

नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते ।

पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः (जै. न्या. २. १. १० ) ॥

इदमाम्नायते—'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूंषि' (तै. ब्रा. १.२. १. २६) इति। त्रीन् वेदान् विदन्तीति त्रिविदः। त्रिविदां संबन्धिनोऽध्येतारस्त्रैविदाः। ते च यं मन्त्रभागम् ऋगादिरूपेण त्रिविधमाहुस्तं गोपाय इति योजना। तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः। सांकर्यस्य दुष्परिहरत्वात्। अध्यापकप्रसिद्धेर्ऋग्वेदादिषु पठितो मन्त्र इति लक्षणं वक्तव्यम्। तच्च संकीर्णम्। 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' (तै. सं. १. १. ५. १) इत्ययं मन्त्रो यजुर्वेदे संप्रतिपन्नयजुषां मध्ये पठितः। न च तस्य यजुष्ट्वमस्ति तद्ब्राह्मणे 'सावित्र्यर्चा' (तै. ब्रा. ३. २. ५. ३) इति ऋक्त्वेन व्यवहृतत्वात्। 'एतत्साम गायन्नास्ते' (तै. आ. ९.१०.५) इति प्रतिज्ञाय किंचित् साम यजुर्वेदे गीतम्। 'अक्षितमस्यच्युतमसि प्राणसंशितमसि' (छां. उ.३. १७. ६) इति त्रीणि यजूंषि सामवेदे समाम्नातानि। तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते। तस्मात् नास्ति लक्षणमिति चेन्, न, पादादीनामसंकीर्णलक्षणत्वात्। पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः, गीतिरूपा मन्त्राः सामानि, वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि इत्युक्ते न क्वापि संकरः। तदेतत् त्रैविध्यं जैमिनिना सूत्रत्रयेण लक्षितं—'तेषामृग्यत्रार्थवशेन पादव्यवस्था', 'गीतिषु सामाख्या', 'शेषे यजुःशब्दः' (जै.सू. २. १. ३५–३७) इति। एतमेव मन्त्रावान्तरविशेषमुपजीव्य वेदानाम् ऋग्वेदो यजुर्वेदः सामवेद इति त्रैविध्यं संपन्नम् ॥

तेषां च वेदानां सर्वेषामन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम्। तथा च याज्ञवल्क्यः स्मरति–'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्' इति। एकवेदपक्षे पितृपितामहादिपरंपराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य 'स्वाध्यायोऽध्येतव्यः' (तै. आ. २. १५) इति स्वशब्द आम्नातः। तच्चाध्ययनं न काम्यं किंतु नित्यम्। अत एव पुरुषार्थानुशासने सूत्रितम्—

'वेदस्याध्ययनं नित्यमनध्ययने पातात्' इति। पातित्यं चैवमाम्नायते–'अपहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाभ्युक्ता यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थामिति। तस्मात्स्वाध्यायोऽध्येतव्यः' (तै. आ. २. १५) इति। अध्येतारं पुरुषं तदीयप्रयासाभिज्ञानेन सखिवत् पालयतीति सखिविद्वेदः। बहुद्रव्यप्रयाससाध्यक्रतुफलस्याध्ययनमात्रेण संपादनं तत्पालनम्। तदप्याम्नायते–'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' (तै. आ. २. १५) इति। यद्यप्येतत् ब्रह्मयज्ञस्वाध्यायफलं तथापि ग्रहणार्थाध्ययनमन्तरेण ब्रह्मयज्ञासंभवात् तदीयफलमपि संपद्यते। ईदृशं सखिविदं वेदरूपं सखायं यः पुमानध्ययनमकृत्वा परित्यजति तस्य वाच्यपि भाग्यं नास्ति। फले भाग्यं नास्तीति किमुवक्तव्यम्। सकलदेवतानां धर्मस्य परब्रह्मतत्त्वस्य च प्रतिपादकं वेदमनुच्चार्य परनिन्दानृतकलहहेतुं लौकिकीं वार्तां सर्वत्रोच्चारयतः स्पष्ट एव वाचि भाग्याभावः। अत एवाम्नायते–'नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्' (बृ. उ. ४. ४. २१)

---

१. ट–°पादकाः। २. ट–ऋभुभ्य इत्यादयो नारा°। ३. ट–पठिता मन्त्राः। ४. ट-ठ–वर्जमितरेषु–संप्रतिपन्नो यजुषाम्। ५. घ-च-छ-ण-प-फ–गीयते। ६. च-छ-त-थ-प-फ–समाम्नाताः। ७. च-छ-थ-प-फ–°नार्धर्चेन; ट-ठ–°नार्थेन। ८. ठ–°मपनुद। ९. ट-ठ सर्वदोच्चा°।

इति । यद्यप्यसौ काव्यनाटकादिकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावादित्यर्थः । स्मृतिरपि 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ' ( मनु. २. १६८ ) इति । एवमन्यान्यपि बहूनि वचनान्यत्रोदाहर्तव्यानि ॥

ननु अधीते वेदे पश्चादध्ययनविध्यर्थ ज्ञानं, ज्ञाने सति पश्चादध्ययनप्रवृत्तिः, इत्यन्योन्याश्रय इति चेत्, बाढम् । अत एव गुरुमतानुसारिणः आचार्यकर्तृकाध्यापनेन प्रवृत्तिं माणवकाध्ययनस्य महता प्रयासेन संपादयन्ति । मतान्तरानुसारिणस्तु प्रकाशात्मादयोऽध्ययनात् प्रागेव संध्यावन्दनादिविधिज्ञानवत् पित्रादिभ्योऽध्ययनविधिज्ञानं वर्णयन्ति । यद्यध्यापनविधिप्रयुक्तिर्यदि वा स्वविधिप्रयुक्तिः सर्वथाप्युपनीतैरध्येतव्य एव वेदः । तस्य च अध्ययनस्य दृष्टार्थत्वमक्षरग्रहणान्तत्वं च पुरुषार्थानुशासने सूत्रितम् । तानि सूत्राणि तद्वृत्तिं चोदाहरामः । अध्ययनस्य दृष्टार्थत्वं साधयितुं पूर्वपक्षयति—

'अदृष्टार्था स्वधीतिर्विहितत्वात् ' इति । दृष्टफलसाधने भोजनादौ विध्यदर्शनात् विहितमध्ययनमदृष्टार्थमवगन्तव्यम् ॥ अदृष्टविशेषो न श्रुत इति चेत्, तत्राह—

'घृतकुल्याद्यतिदेशः स्वर्गकल्पनं वा ' इति । ब्रह्मयज्ञजपाध्ययनार्थवादं नित्याध्ययनेऽतिदिश्य तत्रस्थं घृतकुल्यादिकं रात्रिसत्रन्यायेन फलत्वेन कल्पनीयम् । ये त्वर्थवादातिदेशं नेच्छन्ति तैर्विश्वजिन्न्यायेन स्वर्गः कल्पनीयः ॥ दृष्टफलयोः संस्कारप्राप्त्योः संभवे कथमदृष्टकल्पनेत्यत आह—

'अयुक्ते संस्कारप्राप्ती ' इति ॥ संस्कृतस्वाध्यायस्य क्वचित् क्रतौ विनियोगादर्शनात् प्राप्तेः स्वयमपुरुषार्थत्वाच्चेत्यर्थः । स्वाध्यायप्राप्तिरर्थप्रमितिहेतुतया पुरुषार्थ इत्याशङ्क्य विषनिर्हरणादिकार्यविनियुक्तमन्त्रवदध्ययनाङ्गतया विनियुक्तानां ज्योतिष्टोमादिवाक्यानां न स्वार्थे प्रामाण्यमित्याह —

'अन्याङ्गं नार्थप्रमापकम् ' इति । अध्ययनविधायकं तु वाक्यं स्वविहिताध्ययनस्यैवाङ्गमिति कृत्वा स्वार्थे प्रमाणमित्याह—

'अध्ययनवाक्यमनन्याङ्गम् ' इति ॥ ननु एवमदृष्टार्थत्वे कर्मकारकभूतस्वाध्यायगतफलाभावादध्येतव्य इति कर्मवाची तव्यप्रत्ययो विरुध्येत इत्यत आह—

'सक्तुवत्करणपरिणामः' इति । 'सक्तूञ्जुहोति ' इत्यत्र कर्मत्वेन प्रधानभूतान् सक्तूनुद्दिश्य होमसंस्कारविधाने प्रतीयमानेऽपि होमसंस्कृतानां भस्मीभूतानां सक्तूनामन्यत्र विनियोगाभावात् कर्मप्राधान्यं हित्वा सक्तुभिर्जुहोतीति करणपरिणामः कृतः । एवमत्रापि कर्मगतयोः संस्कारप्राप्त्योरसंभवात् स्वाध्यायेनाधीयीत इति वाक्यपरिणामः कर्तव्यः ॥ इदानीं दृष्टफले सति अदृष्टफलं न कल्प्यमिति सिद्धान्तयति—

'दृष्टे तु नादृष्टम् ' इति ॥ किं तत् दृष्टफलमिति तदाह—

'दृष्टौ प्राप्तिसंस्कारौ ' इति ॥ अक्षरप्राप्तेः परंपरया पुरुषार्थत्वमाह—

'प्राप्त्यार्थबोधः ' इति । जायते इति शेषः ॥ न च भोजनादिवदन्वयव्यतिरेकसिद्धत्वात् विधिवैयर्थ्यमिति शङ्कनीयम् । अवघातादिवन्नियमादृष्टाय विध्युपपत्तेरित्याह—

'विधिर्नियमार्थः' इति ॥ यत्तूक्तं संस्कृतस्य स्वाध्यायस्य विनियोगादर्शनात् न संस्कार इति तत्राह—

'संस्कारसिद्धिः क्रत्वध्ययनविधिद्वयोपादानात् ' इति । क्रतुविधयो हि विषयावबोधमपेक्षमाणास्तदवबोधे स्वाध्यायं विनियुञ्जते । अध्ययनविधिश्च लिखितपाठादिव्यावृत्त्याध्ययनसंस्कृतत्वं स्वाध्यायस्य गमयति । अत उभयोपादानात् तत्सिद्धिः ॥ ननु संस्कारो नाम अदृष्टातिशयः । स च न

---

१. ट-ठ-° विध्यर्थज्ञानम् । २. ट-ठ-°यनविधिप्रवृत्तिः । ३. घ-च-फ-प्रवृत्तियुक्तिम्; त-थ-प्रयुक्तिम् । ४. ठ-तत्र । ५. ट-ठ-°ग्रहणार्थत्वम् । ६. ते-अर्थे । ७. ट-ठ-दृष्टं फल° । ८. ट-ठ-तत्राह । ९. ट-ठ-' इति ' नास्ति । १०. च-छ-प-फ-°र्विषपरया । ११. ग-घ-च-छ-ण-त-थ-प-फ-य-' स्वाध्यायस्य 'नास्ति । १२. च-छ-त-थ-प-फ-' हि ' नास्ति । १३. च-प-फ-°व्यावृत्ताध्ययन° ।

स्वाध्यायगतः। तव्यप्रत्ययेन स्वपदोपात्तप्रकृत्यर्थभूताध्ययनोपरक्तापूर्वाभिधानात्। ततः कथं स्वाध्यायस्य संस्कृतत्वमिति तत्राह—

'तव्यः कर्मगादृष्टवाची' इति। अत्र तव्यप्रत्ययस्य कर्माभिधायितया कर्मकारकस्य तव्यप्रत्ययं प्रति प्रकृत्यर्थादध्ययनादपि प्रत्यासन्नत्वात् स्वाध्यायगतमेवापूर्वं तव्यप्रत्ययो वक्ति। अपूर्वस्य धात्वर्थजन्यत्व-नियमेऽपि तदुपरक्तत्वानियमादिति भावः। यच्चोक्तम् 'अन्याङ्गं नार्थप्रमापकम्' इति तदसत्; यतो मन्त्राणां स्वतन्त्रादृष्टशेषाणां तथात्वं युज्यते। इह तु स्वाध्यायाश्रितमदृष्टम्। तस्य च स्वाध्यायगताक्षर-सामर्थ्यसिद्धार्थावबोधे फले सति फलान्तरकल्पनायोगात् प्रामाण्यस्योपबृंहकमेवादृष्टम्, न तु प्रतिबन्धक-मित्याह—

'स्वतन्त्रादृष्टाशेषत्वान्न स्वार्थप्रमा प्रतिबध्यते' इति। सक्तुन्यायेन कर्मकारकप्राधान्ये परित्यक्ते स्वतन्त्रादृष्टमेवात्रापि स्यादित्यत आह—

'यथाश्रुतोपपत्तेर्न सक्तुन्यायः' इति। सक्तुषु गत्यभावात् श्रुतं परित्यज्य अश्रुतं कल्पनं नाम। नेह तत् युक्तं प्रदर्शितत्वादित्यर्थः।

इत्थमध्ययनविधेर्दृष्टार्थत्वं प्रसाध्य अर्थावबोधपर्यन्ततां निराकर्तुं पूर्वपक्षयति—

'वैधमर्थनिर्णयं भट्टगुरू विधेः पुमर्थवसानात्' इति। सर्वत्र विधेः पुरुषार्थपर्यवसायित्व-नियमादत्रापि पुरुषार्थभूतं फलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरू मन्येते॥ ननु सकृदध्ययनादावृत्ति-सहितात् वा अर्थनिश्चयो नोपलभ्यते इत्याशङ्क्य, तथा सति तत्सिद्धये सोऽध्ययनविधिरर्थनिश्चयहेतुं विचारं कल्पयिष्यतीत्याह—

'स विचारमाक्षिपेत्' इति॥ ननु स्वविधेयतदुपकारिणोरेव विधिः प्रयोजक इति सर्वत्र नियमः। तथा सति अतोदृशं कथमत्राध्ययनविधिराक्षेप्स्यतीत्यत आह—

'अविधेयानुपकार्याक्षेपोऽवघातावृत्तिवत्' इति। 'व्रीहीनवहन्ति' इत्यत्र अवघातमात्रं विधेयं न तु तदावृत्तिः। तस्या अवाच्यत्वात्। नापि सा विधेयोपकारिणी। अन्तरेणावृत्तिं सकृन्मुसल-घातमात्रादवघातसिद्धेः। तथापि तण्डुलनिष्पत्तिफलसिद्धये स विधिरावृत्तिं यद्वदाचिक्षेप तद्वत् प्रकृतेऽप्य-वगन्तव्यम्॥ ननु वेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपि व्याकरणाद्यङ्गसहितवेदाध्यायिनस्तदुदयसद्भावात् तं प्रति व्यर्थं विचारं विधिर्न कल्पयेदित्याशङ्क्य अर्थगतविरोधपरिहारायापेक्षित एव विचार इत्याह—

'साङ्गाध्ययनात्तद्भावे विचारो विरोधापनुत्' इति॥ सिद्धान्तयति—

'प्राप्तेस्तु गवादिवत् पुमर्थत्वाद्विधिस्तदन्तः' इति॥ यथा फलभूतस्य क्षीरादेर्हेतवो गवादयोऽपि पुरुषैरर्थ्यन्ते, तथा फलवदर्थावबोधहेतोरक्षरप्राप्तेरपि पुरुषार्थत्वात् अध्ययनविधिरक्षरप्राप्त्यवसानोऽव-गन्तव्यः॥ ननु अक्षरप्राप्तेः पुरुषार्थत्वं फलवदर्थावबोधप्रयुक्तं चेत्, तर्हि तद्बोधस्य मुख्यपुरुषार्थत्वात् बोधान्त एव विधिः किं न स्यात् इत्यत आह—

'फलवद्बोधान्तत्वेऽध्ययनाकारस्त्र्यैम्' इति। बोधस्य हि फलं कर्मानुष्ठानम्। तथा सति यस्य ब्राह्मणादेर्यस्मिन् बृहस्पतिसवादावधिकारस्तस्य तद्वाक्यमात्राध्ययनं स्यात्। न तु राजसूयादिवाक्या-ध्ययनम्। तत्र प्रवृत्त्यादिफलाभावात्। स्वपक्षे तु नायं दोष इत्याह—

'कृत्स्नप्राप्तिर्जपार्था' इति। न च अबोधकत्वेऽर्थावबोध एव न सिध्येदिति शङ्कनीयम्। प्रमाणस्य प्रमेयबोधकत्वस्वाभाव्यात्। लौकिकाप्तवाक्यानामन्तरेणैव विधिं बोधकत्वदर्शनादित्याह—

---

१. ठ—कर्मवाचितया। २. ट-ठ—स्वाध्यायस्य तव्यप्रत्ययम्। ३. ठ—प्रकृत्यर्थत्वाद°। ४. ग-घ-च-छ-ण-प-फ—अदृष्टान्तरं तदसत्। ५. ग-घ-च-छ-ण-प-फ-य—एतादृशम्। ६. ग-घ-च-छ-ण-त-प-फ-य—अर्थविरोधापनुत्। ७. च-छ-प-फ—तद्बोधकस्य। ८. घ-च-छ-ण-थ-प-फ—राजसूयादिप्रकरणवाक्या° ९. ट-ठ— विधेर्बोधान्तत्वाभावेऽर्थावबोधः।

'लोकवन्नैजो बोधः' इति ॥ ननु बोधस्य विधिफलत्वे बोधकाममुद्दिश्य विधातुं शक्यत्वात् सुलभोऽधिकारी स्यादित्याशङ्क्य प्राप्तिपक्षेऽपि प्राप्तिकाम उपनीताष्टवर्षब्राह्मणोऽत्राधिकारी सुलभ एव इति परिहारं स्पष्टत्वादुपेक्ष्य बोधस्य काम्यत्वं दूषयति—

'सोऽकाम्यः प्राग्बोध्यभानाभानयोः' इति । बोध्यस्याग्निहोत्रादिलक्षणवेदार्थस्य अध्ययनात् प्राक् संध्योपासनादिवत् पित्राद्युपदेशत एव भाने सिद्धत्वादेव सोऽर्थबोधो न काम्यः । अभाने कामयितुमशक्यः । ज्ञाते एव विषये कामनानियमात् ॥ ननु सामान्यतो ज्ञाते विशेषतो बुभुत्सा संभवति । यद्वा विशेषतोऽपि पित्राद्युपदेशादवगते सति औपदेशिकज्ञानस्य प्रामाण्यनिर्णयाय पुनर्बोधकामना युक्तैव इत्याशङ्क्य एवमप्यर्थावबोधमुद्दिश्याध्ययनविधानं न संभवतीत्याह—

'उद्देशायोगात्' इति । अग्निहोत्रादिविशेषज्ञानानां न तावदेकबुद्ध्या विशेषाकारेणोद्देशः संभवति, अनन्तत्वात् । सामान्याकारेणोद्देशे सामान्यमेव विधिफलं स्यात्, न तु ज्ञानविशेषः । ततो नोद्देशो युक्तः ॥ ननु अर्थावबोधमुद्दिश्योच्चारणाभावे वेदस्य स्वार्थे तात्पर्यं न स्यात्, इत्याशङ्क्य उपक्रमादिलिङ्गगम्यं तात्पर्यं शब्दबलादेव सिध्यतीत्याह—

'तात्पर्यं शब्दात्' इति ॥ तर्ह्यर्थज्ञानमुद्दिश्य शब्दोच्चारणं लोके व्यर्थं स्यादिति चेत्, न । पुरुषसंबन्धकृतदोषाख्यप्रतिबन्धपरिहारार्थत्वादित्याह—

'उद्दिश्योच्चारणं दोषघ्नं लोके' इति ॥ ननु अध्ययनविधेर्बोधान्तत्वाभावे विचारशास्त्रं न प्रवर्तेत प्रयोजकाभावादित्याशङ्क्याह—

'विचार उत्तरविधिप्रयुक्त उपपद्यते' इति । क्रतुबोधविधयः साङ्गवेदाध्ययनादापातप्रतिपन्नाविरोधपरिहारेण प्रतिष्ठितं निर्णयज्ञानमन्तरेण अनुष्ठापयितुमशक्नुवन्तस्तन्निर्णयाय क्रतुविचारं प्रयोजयन्ति। श्रवणविधिस्तु साक्षादेव ब्रह्मविचारं विधत्ते । एवं च सति श्रवणविधेः स्वविधेयप्रयोजकत्वं क्रतुविधीनां च विवेषोपकारिप्रयोजकत्वमित्युपपद्यतेतराम् । अध्ययनविधिप्रयुक्तिपक्षे तु तद्विधेः क्रतुद्वारा स्वर्गसिद्धिपर्यन्तत्वात् क्रत्वनुष्ठानस्यापि तत्प्रयुक्तौ क्रतुविधिवैयर्थ्यमापद्येत ॥ ननु अध्ययनविधेस्त्रैवर्णिकमात्रं प्रति नित्यत्वात् तत्प्रयुक्तौ विचारस्यापि तल्लभ्येत नान्यथेति चेत्, क्रतुविचारस्य त्रैवर्णिकमात्रेऽपि नित्यत्वसिद्धिः किं वा ब्रह्मविचारस्य । तत्राद्योऽस्मन्मतेऽपि सम इत्याह—

'अतो नित्यः क्रतुविचारस्त्रैवर्णिकमात्रस्य' इति । यतोऽकरणे प्रत्यवायश्रवणात् क्रतवः त्रैवर्णिकानां नित्या अत इत्यर्थः ॥ द्वितीयोऽनिष्ट इत्याह—

'ब्रह्मविचारः पुनः परमहंसस्यैव' इति । नित्य इत्यनुषङ्ग इति ॥

ननु उक्तनीत्या अध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितं स्यात् । मैवम् । वाक्यान्तरेण तद्विधानात् । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति तद्विधिः । तत्र निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्वं निवार्यते । अर्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारो यास्क एवमुदाजहार—'अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' ( निरु. १. १८ ) इति ॥

अस्मिन् मन्त्रद्वये 'योऽर्थज्ञः' इत्यनेनैवार्धेन वेदार्थज्ञानं प्रशस्यते । इतरेणार्धत्रयेण ज्ञानराहित्यं निन्द्यते। यो वेदार्थं जानाति सोऽयमिह लोके सकलं श्रेयः प्राप्नोति । तथा तेन ज्ञानेन पापक्षये सति मृतः

१. च-फ- तद्विधेरर्थज्ञानस्य । २. ट-यदधीत° । ३. ट-ठ- इत्यनेनार्धेन । ४. ट-अर्थज्ञानराहित्यम् । ५. फ-अनेन ।

स्वर्गं प्राप्नोति। तदेतत् ऐहिकामुष्मिकं च ज्ञानफलं तैत्तिरीया मन्त्रोदाहरणेन तदीयतात्पर्याभिधायिब्राह्मणेन च स्पष्टीचक्रुः—‘तदेषाभ्युक्ता ये अर्वाङुत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति। सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति। यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति’ (तै. आ. २. १५) इति। वेदं विद्वान् अर्थाभिज्ञः पुरुषः। स च द्विविधः। अर्वाचीनकाले समुत्पन्नः चतुर्दशविद्यास्थानकुशलः कश्चिदुपाध्यायः पुरातनकाले समुत्पन्नो व्यासादिश्च। तमेतमुभयविधं विद्वांसं विद्यामदधनमदकुलमदोपेताः पण्डितंमन्या ये पुरुषा अभितो विद्यादिषु दूषयन्ति ते सर्वेऽपि आदित्यमेव प्रथमं सर्वतो[1] दूषयन्ति। आदित्यापेक्षया द्वितीयमग्निं दूषयन्ति। तदुभयापेक्षया तृतीयं हंसं दूषयन्ति। हन्ति सदा गच्छतीति हंसो वायुः। अग्न्यादिरूपत्वं च वेदविद आम्नातम्—‘अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति’ (तै. आ. २. १५) इति। न केवलमेतद्देवतात्रयं किंतु सर्वा अपि देवता वेदविदि वसन्ति। तस्मात् ब्राह्मणान् वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्यात्, न तु तस्मिन् विद्यमानमपि दोषं कीर्तयेत्। एवं सति तत्तन्मन्त्रार्थभूताः[2] सर्वा अपि देवता वेदार्थविदा स्मर्यमाणतया तदीयहृदयेऽवस्थिता अयं नमस्कर्ता तोषयति। न चैतदध्ययनस्यैव फलमिति शङ्कनीयं ‘विद्वांसम्’ (तै. आ. २. १५) इत्याम्नातत्वात्। अन्यथा वेदमधीयानमित्याम्नायेत। तस्मात् सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य वेदार्थविदो लोकद्वयेऽपि श्रेयःप्राप्तिरुपपद्यते। यस्तु वेदमधीत्यापि अर्थं न विजानाति सोऽयं पुमान् भारमेव हरति धारयति। स्थाणुरिति दृष्टान्तः। छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते। स च यथेन्धनार्थमेवोपयुज्यते न तु पुष्पफलार्थं, तथा केवलपाठकस्य ब्राह्मणत्वं न भवतीत्येतावदेव न त्वनुष्ठानं[3] स्वर्गादिफलसिद्धिर्वास्ति। किल इत्यनेन लोकप्रसिद्धिर्द्योत्यते। लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽप्यधिका विदुषि दृश्यते। किंच यद्वेदवाक्यमाचार्यात् गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनःपुनरुच्चार्यते, तत् कदाचिदपि न ज्वलति स्वार्थं न प्रकाशयति। यथाग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत्। तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात्। अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनम्। तथा चोक्तम्—‘प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता’ इति। अतो मुख्यवेदत्वसिद्धये ज्ञातव्य एव तदर्थः। किंचात्र यास्केन (निरु. १.१९) काचिदन्याप्यृगुदाहृता—

‘उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः (ऋ. सं. १०.७१.४) इति॥

तत्र पूर्वार्धस्य तात्पर्यं स एव दर्शयति—‘अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धम्[4]’ इति। अस्यायमर्थः। यः पुमानर्थं न वेत्ति तं प्रति पूर्वार्धेन मन्त्रो ब्रूते। एकः पुरुषः पाठमात्रपर्यवसितो वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति। एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात्। ‘वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति’ (तै. सं. २. १. १. १), ‘आदित्यानेव स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयन्ति’ इत्यादौ अव्युत्पन्नः कथं पाठं निश्चिनुयात्। अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसारहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति। ‘यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेत्’ (तै. सं. २. ३. १२. १) इत्यत्र व्याकरणमात्रेण प्रतिग्रहीतुरिष्टिः प्रतीयते। मीमांसायां तु न्यायेन दातुरिति निर्णीतम् (जै. सू. ३.४.३०)। तस्मात् उभयविधमप्यविद्वांसं प्रति एवमाहेति। तृतीयपादतात्पर्यं दर्शयति—‘अप्येकस्मै तन्वं विसस्रे इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचा’ इति। अस्यायमर्थः। अपिशब्दपर्याय उतोशब्दः। स च पूर्वोक्तानभिज्ञवैलक्षण्यायात्र प्रयुक्तो निपातानां-

१. च-छ-थ-फ—‘सर्वतो’ नास्ति। २. च-छ-थ—तत्र मन्त्रार्थ°। ३. ग-घ-य—त्वनुष्ठानम्। ४. ठ—तात्पर्यार्थम्।

मनेकार्थत्वात्। यः पुमान् व्याकरणाद्यङ्गैः स्वशब्दार्थं मीमांसया तात्पर्यं च शोधयितुं प्रवृत्तः, तस्मै एकस्मै वेदः स्वकीयां तनुं विसस्त्रे। स्वमित्यादिकं पदव्याख्यानम्। ज्ञानमित्यादिकं तात्पर्यव्याख्यानम्। वेदार्थ-प्रकाशनक्षमं सम्यग्ज्ञानमनया तृतीयपादरूपया वाचा मन्त्र आहेति। चतुर्थपादतात्पर्यं दर्शयति– 'उपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा' इति। अस्यायमर्थः। उत्तमया चतुर्थपादरूपया वाचा तृतीयपादार्थस्योपमा उच्यते। उशतीत्येतस्य व्याख्यानं कामयमानेति। यद्यपि अह्नि गृहकृत्यवेलायां मलिनवासास्तथापि संभोगकालेषु कल्याणवासा भवति। तत्र हेतुः। कामयमाना ऋतुकालेष्विति। यथा स पतिरेनां जायां साकल्येनादरयुक्तः पश्यति, किंच तयोक्तमर्थं हितबुद्ध्या शृणोति, तथायं चतुर्दश-विद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक् पश्यति, वेदोक्तं च धर्मब्रह्मरूपमर्थं हितबुद्ध्या स्वीकरोति। सेयमुक्ता वेदार्थाभिज्ञस्य प्रशंसेति॥पुनरप्यृगन्तरं यास्कः ( निरु० १.२० ) उदाजहार– 'तस्योत्तरा भूयसे निर्वचनाय

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् (ऋ. सं. १०.७१.५) इति॥

अयमर्थः। पूर्वोदाहृतायाः 'उत त्वः पश्यन्' इत्यादिकाया ऋचोऽनन्तरमेवाम्नाता काचित् ऋक् तस्य पूर्वोक्तमन्त्रार्थस्य भूयसे निर्वचनाय संपद्यते। तमर्थमतिशयेन प्रतिपादयितुं प्रभवति। कथमिति चेत्, तदुच्यते। अपि चैकं चतुर्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्येण[1] वेदोक्तार्थामृतपानयुक्तमाहुः, अभिज्ञाः कथयन्ति। 'सखिविदं सखायम्' ( तै. आ. २. १५ ) इति मन्त्रे वेदस्य सखित्वमुदाहृतम्। यद्वा स्वर्गलोके देवानां सख्ये स्थित्वातिशयेन पीतामृतमाहुः। वाचाम् इना ईश्वराः सभासु प्रगल्भा वा[3] वाजिनाः। तेषु मध्येऽप्येनं वेदार्थकुशलं चोदयितुं[4] न हिन्वन्ति। न केऽपि प्राप्नुवन्ति। तेनं सह विवदितुमसमर्थत्वात्। यस्तु अन्यः पाठमात्रपरः पुष्पफलरहितां वाचं शुश्रुवान् भवति। पूर्वकाण्डोक्तस्य धर्मस्य ज्ञानं पुष्पम्। उत्तरकाण्डोक्तस्य ब्रह्मणो ज्ञानं फलम्। यथा लोके पुष्पं फलस्योत्पादकं तथा वेदानुवचनादिधर्मज्ञानमनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छां जनयति। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' ( बृ. उ. ४. ४. २२ ) इति श्रुतेः। यथा च फलं तृप्तिहेतुस्तथा ब्रह्मज्ञानं कृतकृत्यत्वहेतुः 'यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति' इति श्रुतेः। तादृशपुष्पफलरहितवेदपाठकः स एष पुमान् अधेन्वा मायया सह चरति। नवप्रसूतिका क्षीरदोग्ध्री गौः प्रीतिहेतुत्वात् धिनोतीति व्युत्पत्त्या धेनुरित्युच्यते। पाठमात्रपरं प्रति वेदरूपा वाग्धर्मज्ञानरूपं क्षीरं न दोग्धीत्यधेनुः। अत एवासौ माया कपटरूपा ऐन्द्रजालिकनिर्मितगोसदृशरूपत्वात्। तया मायया सह चरन्नयं परमपुरुषार्थं न लभते इत्यर्थः। इत्थं यास्केन ज्ञानस्तुत्यज्ञाननिन्दोदाहरणस्य प्रपञ्चितत्वात् यच्चं स्तूयते तद्विधीयते इति न्यायेन अध्ययनवदर्थस्यापि विधिरभ्युपगन्तव्यः॥

किंच नक्षत्रेष्टिकाण्डे प्रतीष्टि फलवाक्यं यागतद्वेदनयोः समानमेवाम्नायते–'यथा ह वा अग्निर्देवा-नामन्नाद् एवं ह वा एष मनुष्याणां भवति य एतेन हविषा यजते य उ चैनदेवं वेद' ( तै. ब्रा. ३. १. ८. १ ) इति। अतो यागवत् फलाय स्ववेदनमपि विधीयते। अनेन न्यायेन सर्वेष्वपि ब्राह्मणेषु वेदन-विधयो द्रष्टव्याः॥ ननु 'विद्याप्रशंसा' ( जै. सू. १. २. १५ ) इति सूत्रे वेदनफलानां प्रशंसारूपत्वं जैमिनिना सूत्रितमिति चेत्, अस्तु नाम। विद्यमानेनापि फलेन प्रशंसितुं शक्यत्वात्। दर्शयागस्य पूर्णमास-यागस्य वा अनिपाते सति प्रायश्चित्तरूपां वैश्वानरेष्टिं विधातुं विद्यमानेनैव स्वर्गफलेन स्तुतिः क्रियते

१. ट–शब्दार्थम्। २. ठ–अतिशयेन पीतामृतमाहुः। ३. ट-ठ– 'वा' नास्ति। ४. ठ–वेदयितुम्। ५. ठ–अनेन। ६. ठ–ऐन्द्रजालिकगो। ७. ट–यत्।

'सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते' (तै. सं. २. २. ५. ४) इति। एतच्चाचार्यैर्ब्रह्मज्ञानफलवाक्यस्य स्वार्थेऽपि तात्पर्यं दर्शयितुमुदाहृतम्—

इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः।
यथावस्त्वभिधायित्वान्न स्वभूतार्थवादता॥
इज्येते स्वर्गलोकाय दर्शादर्शौ यथा तथा।
न स्वभूतार्थवादत्वं पापश्लोका श्रुतिर्यथा (बृ. उ. वा. १२७-१२८)॥

इति। न च वेदनमात्रेण फलसिद्धावनुष्ठानवैयर्थ्यमिति शङ्कनीयम्; फलभूयस्त्वेन परिहृतत्वात्। उदाहृतं चात्र जैमिनिसूत्रं—'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः सारतो वा फलविशेषः स्यात्' (जै. सू. १. २. १७) इति। एतच्चास्माभिः 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' (तै. सं. ५. ३. १२. २) इत्युदाहरणेन व्याख्यातम्। छन्दोगाश्च केवलादनुष्ठानात् विद्यासहितेऽनुष्ठाने फलातिशयमामनन्ति—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छां. उ. १. १. १०) इति। यद्यप्यङ्गावबद्धोपास्तिरत्र विद्याशब्देन विवक्षिता तथापि न्यायः सर्वास्वपि विद्यासु समानः॥

कुतस्तवैतावती वेदने भक्तिरिति चेत्। कुतो वा तवैतावान् प्रद्वेषः। प्रशंसा त्वस्माभिर्भूयसी दर्शिता। निन्दां तु न क्वाप्युपलभामहे। किंतु कर्मजन्यमपूर्वं यथा मरणादूर्ध्वं जीवेन सह गच्छति तथा विद्याजन्यमप्यपूर्वं गच्छति। तथा च वाजसनेयिन आमनन्ति—'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' (बृ. उ. ४. ४. २) इति। तस्मात् अध्ययनवदर्थज्ञानस्यापि विहितत्वादर्थज्ञानाय वेदो व्याख्यातव्यः॥

विषयप्रयोजनसंबन्धाधिकारिज्ञानमन्तरेण श्रोतृप्रवृत्यभावात् विषयादयो निरूप्यन्ते। व्याख्यानस्य व्याख्येयो वेदो विषयः। तदर्थज्ञानं प्रयोजनम्। व्याख्यानव्याख्येयभावः संबन्धः। ज्ञानार्थी चाधिकारी। यद्यप्येतावत् प्रसिद्धं तथापि वेदस्य विषयाद्यभावे व्याख्यानस्यापि परमविषयादिकं न स्यात्। अतो वेदस्य तच्चतुष्टयमुच्यते। वेदे पूर्वोत्तरकाण्डयोः क्रमेण धर्मब्रह्मणी विषयः, तयोरनन्यलभ्यत्वात्। तथा च पुरुषार्थानुशासने सूत्रितं—'धर्मब्रह्मणी वेदैकवेद्ये' इति। जैमिनिनापि च द्वितीयसूत्रे 'चोदनैव धर्मे प्रमाणम्', 'चोदना प्रमाणमेव' इति नियमद्वयं संप्रदायविद्भिरभिहितम्। चोदनैवेत्यमुमर्थमुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्मस्य निराकृतम्—'प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (जै. सू. १. १. ४) इति। अनुष्ठानादूर्ध्वमुत्पत्स्यमानस्य धर्मस्य पूर्वमविद्यमानत्वात् न प्रत्यक्षयोग्यतास्ति। उत्तरकालेऽपि रूपादिराहित्यात् नेन्द्रियैरवगम्यते। अत एव अदृष्टमिति सर्वैरभिधीयते। लिङ्गराहित्यात् नानुमानविषयत्वमप्यस्ति। सुखदुःखे धर्माधर्मयोर्लिङ्गमिति चेत्, बाढम्। अयमपि लिङ्गलिङ्गिभावो वेदेनैव गम्यते। ततश्चोदनैव धर्मे प्रमाणम्॥ वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके ब्रह्मणः सिद्धवस्तुनोऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातं—'शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः' (ब्र. सू. शां. भा. १. १. ३) इति। श्रुतिश्च भवति—'नावेदविन्मनुते तं बृहन्तम्' (तै. ब्रा. ३. १२. ९. ७) इति। तत्रोपपत्तिः पूर्वाचार्यैरेवमुदीरिता 'रूपलिङ्गादिराहित्यान्न मान्तरयोग्यता' (नै. न्या. १. १. ३. १८) इति। तस्मात् अनन्यलभ्यत्वादस्ति धर्मब्रह्मणोर्वेदविषयत्वम्। तदुभयज्ञानं वेदस्य साक्षात् प्रयोजनम्। न च तस्य ज्ञानस्य 'सप्तद्वीपा वसुमती', 'राजासौ गच्छति' इत्यादिज्ञानवत् अपुरुषार्थपर्यवसायित्वं शङ्कनीयम्। धर्मप्रयुक्तस्य पुरुषार्थस्य स्तूयमानत्वात् 'धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति' (तै. आ. १०. ६३) इति। उद्दण्डस्य राज्ञो नियामकत्वात्

---

१. ट—इत्याद्युदाहरणेन। २. च-छ-थ-फ—तवैषोत्र। ३. ट—किंच। ४. च-छ-ट-फ—अवगम्यते; ठ—अवगन्तुं शक्यते। ५. ट-ठ—सिद्धात्मनोऽपि। ६. ट—श्रूयमाणत्वात्।

विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राजसाहाय्यवत् जयहेतुत्वाच्च धर्मः पुरुषार्थः। तथा च वाजसनेयिनः सृष्टिप्रकरणे समामनन्ति–'तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयांसमाशंसते धर्मेण यथा राज्ञैवम्' (बृ. उ. १. ४. १४) इति। 'ब्रह्मविदाप्नोति परम्' (तै. आ. ८. २), 'ब्रह्म वेद ब्रह्मैव भवति' (मुं. उ. ३. २. ९), 'तरति शोकमात्मवित्' (छां. उ. ७. १. ३) इत्यादिश्रुतिषु ब्रह्मज्ञानप्रयुक्तः पुरुषार्थः प्रसिद्धः। तदुभयज्ञानार्थी वेदेऽधिकारी। स च त्रैवर्णिकः पुरुषः। स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षायामुपनयनाभावेन अध्ययनराहित्यात् वेदेऽधिकारः प्रतिबद्धः। धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पद्यते। तस्मात् त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः॥ संबन्धस्तु वेदस्य धर्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः। तदीयज्ञानेन सह जन्यजनकभावः। त्रैवर्णिकपुरुषैः सहोपकार्योपकारकभावः। तदेवं विषयाद्यनुबन्धचतुष्टयमवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्तन्ताम्॥

अतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि। अत एव तेषामपरविद्यारूपत्वं मुण्डकोपनिषद्याथर्वणिका आमनन्ति–'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते' (मुं. उ. १. १. ४-५) इति। साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां कर्मकाण्डानामपरविद्यात्वम्। परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वात् उपनिषदां परविद्यात्वम्॥

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीया उपनिषदारम्भे समामनन्ति–'शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम संतानः। इत्युक्तः शीक्षाध्यायः' (तै. उ. १. १) इति॥ वर्णोऽकारादिः। स चाङ्गभूतशिक्षाग्रन्थे स्पष्टमुदीरितः–'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा' (पा. शि. ३) इत्यादिना॥ स्वर उदात्तादिः। सोऽपि तत्रोक्तः–'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः' (पा. शि. ११) इति॥ मात्रा ह्रस्वादिः। सापि तत्रोक्ता–'ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि' (पा. शि. ११) इति॥ बलं स्थानप्रयत्नौ। तत्र 'अष्टौ स्थानानि वर्णानाम्' (पा. शि. १३) इत्यादिना स्थानमुक्तम्। 'अचोऽस्पृष्टा यणस्त्वीषत्' (पा. शि. ३८) इत्यादिना प्रयत्न उक्तः॥ सामशब्देन साम्यमुक्तम्। अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेनोच्चारणं साम्यम्। 'गीती शीघ्री शिरःकम्पी' (पा. शि. ३२) इत्यादिना 'उपांशुदष्टं त्वरितम्' (पा. शि. ३५) इत्यादिना च दोषा उक्ताः। 'माधुर्यमक्षरव्यक्तिः' (पा. शि. ३३) इत्यादिना गुणा उक्ताः॥ संतानः संहिता। 'वायवा याहि' (ऋ. सं. १. २. १) इत्यत्र अवादेशः। 'इन्द्राग्नी आ गतम्' (ऋ. सं. ३. १२. १) इत्यत्र प्रकृतिभावः। एतच्च व्याकरणेऽभिहितत्वान्न शिक्षायामुपेक्षितम्। शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्रोदाहृतः–'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' (पा. शि. ५२) इति। 'इन्द्रशत्रुर्वर्धस्व' (तै. सं. २. ४. १२. १) इत्यस्मिन्मन्त्रे इन्द्रस्य शत्रुर्घातकः इत्यस्मिन् विवक्षितेऽर्थे तत्पुरुषसमासे 'समासस्य' (पा. सू. ६. १. २२३) इति सूत्रेण तत्पुरुषत्वात् अन्तोदात्तेन भवितव्यम्। आद्युदात्तस्तु प्रयुक्तः। तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वात् इन्द्रो घातको यस्य इत्यर्थः संपन्नः। तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः॥

कल्पस्तु आश्वलायनापस्तम्बबोधायनादिसूत्रम्। कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः॥ ननु आश्वलायनः किं मन्त्रकाण्डमनुसृत्य प्रवृत्तः किं वा ब्राह्मणमनुसृत्य। नाद्यः। 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः' (आश्व. श्रौ. १. १.) इत्येवं तेनोपक्रान्तत्वात्। न हि 'अग्निमीळे' (ऋ. सं.

---

१. ग-घ-च-छ-ण-त-न-फ-य-प्रतिषिद्धः। २. ट-'' विद्यात्वम्। ३. ट-ठ-तत्रैवोक्तः। ४. ट-युक्तत्वेन चोच्चारणम्। ५. ट-ठ-त्वाहेन्द्रशत्रु'। ६. छ-ट-ठ-'तु' नास्ति।

१. १. १ ) इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः 'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयमेकादशकपालम्' ( ऐ. ब्रा. १. १ ) इत्येवं दीक्षणीयेष्टेः ब्राह्मणे प्रक्रान्तत्वात्। अत्रोच्यते–मन्त्रकाण्डो ब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण। ब्रह्मयज्ञश्चैवं विहितः। 'यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः' ( तै. आ. २. १० ) इति। सोऽयं ब्रह्मयज्ञजपः 'अग्निमीळे' इत्याम्नायक्रमेणैवानुष्ठेयः। तथा 'सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचः स्तोमे पारिप्लवं शंसति' इति विधीयते। तथाश्विने शस्यमाने 'सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात्' इति विधीयते। तथा 'रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत' ( तै. आ. २. १६ ) इति प्रायश्चित्तरूपं वेदपारायणं विहितम्। इत्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु संप्रदायपारंपर्यागत एव क्रम आदरणीयः। विशेषविनियोगांस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्य आश्वलायनो दर्शयति। अतो मन्त्रकाण्डक्रमाभावेऽपि न कश्चिद्विरोधः। 'इषे त्वा' इत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिः उपक्रान्ता, तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वात् आश्वलायनस्य आदौ तद्व्याख्यानं युक्तम्। अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्य उपकरोति। तर्हि 'प्र वो वाजा' ( ऋ. सं. ३. २७. १ ) इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनो ब्रवीतु। 'नमः प्रवक्त्रे' ( आश्व. श्रौ. १. २ ) इत्यादयस्त्वनाम्नाताः कुतो विनियुज्यन्ते इति चेत्, नायं दोषः। शाखान्तरसमाम्नातानां ब्राह्मणान्तरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात्। 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायविदः। तस्मात् शिक्षेव कल्पोऽप्यपेक्षितः॥

व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते। तथा च ऐन्द्रवायवग्रहब्राह्मणे समाम्नायते–'वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते' ( तै. सं. ६. ४. ७. ३ ) इति। 'अग्निमीळे पुरोहितम्' ( ऋ. सं. १. १. १ ) इत्यादिवाक् पूर्वस्मिन् काले पराची समुद्रादिध्वनिवदेकात्मिका सती अव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रन्थरहिता[१] आसीत्। तदानीं देवैः प्रार्थितः इन्द्रः एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टः तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत्। तस्मात् इयं वाक् इदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यते इत्यर्थः। तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः–'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति। एतानि रक्षादिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि*। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यक् वेदान् परिपालयिष्यति वेदार्थं चाध्यवस्यति। ऊहः खल्वपि न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन[२] यथायथं विपरिणमयितव्याः। तान् नावैयाकरणः शक्नोति विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्। आगमः खल्वपि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति। लघ्वर्थं चाध्येयं व्याकरणम्। बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च वक्ता। इन्द्रश्च अध्येता। दिव्यं वर्षसहस्रमध्ययनकालः। अन्तं च न जगाम। अद्य तु पुनर्यदि परमायुर्भवति स वर्षशतं जीवति। तत्र कुतः प्रतिपद-

१. ग-घ-च-छ-ण-फ-य–ग्रन्थसंघरहिता। * महाभाष्ये पस्पशाह्निके द्रष्टव्यम्। २. च-छ-थ-फ–यज्ञाङ्गत्वेन।

पाठेन सकलपदावगमः। कुतस्तरां प्रयोगेण। अपदेशार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—'स्थूल-पृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूल-पृषती किंवा स्थूला चासौ पृषती च स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति। यदि समा-सान्तोदात्तत्वं तदा कर्मधारयः। अथ पूर्वपदप्रकृतिस्वरत्वं, ततो बहुव्रीहिरिति। इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि। तेऽसुराः। दुष्टः शब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः। विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवो असि वरुण इति। तेऽसुराः। तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः। तस्मात् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः। म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्॥ दुष्टः शब्दः। 'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वर-तोऽपराधात्' इति। दुष्टाञ्छब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्॥ यदधीतम्। यदधीतमविज्ञातं निगदे-नैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्। अविज्ञातमनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्॥ यस्तु प्रयुङ्क्ते। 'यस्तु प्रयुङ्क्ते[1] कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले। सोऽनन्तमा-प्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः'॥ कः। वाग्योगविदेव। यो हि शब्दान् जानाति अप-शब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः प्राप्नोति। अथवा भूयानधर्मः प्राप्नोति। भूयांसोऽपशब्दा अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः। यथा गौरित्ये-तस्य शब्दस्य गावी गोणी गोता गोपोतलिका इत्येवमादयः। अथ योऽवाग्योगविदज्ञानं तस्य शरणम्। विषम उपन्यासः। नात्यन्तायाज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात्। एवं तर्हि कः। अवाग्योगविदेव। अथ यो वाग्योगवित् ज्ञानं तस्य शरणम्॥ अवि-द्वांसः। 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः। कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्' इति। स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्॥ विभक्तिं कुर्वन्ति। याज्ञिकाः पठन्ति—'प्रयाजाः सविभक्तिकाः कर्तव्याः' इति। न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। तस्मात् अध्येयं व्याकरणम्॥ यो वा इमाम्। यो वा इमां पदशः स्वरशोऽक्षरशो वर्णशो वाचं विदधाति स आर्त्विजीनो भवति। आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम्॥ चत्वारि। 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश' (ऋ. सं. ४. ५८. ३) इति। चत्वारि शृङ्गा चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः। त्रयः काला भूतभविष्यद्वर्तमानाः। द्वे शीर्षे सुपस्तिङश्च। सप्त हस्तासो अस्य सप्त विभक्तयः। त्रिधा बद्धः त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसि च। वृषभो वर्षणात् कामानाम्। रोरवीति। रौतिः शब्दकर्मा। महो देवो मर्त्याँ आ विवेश। महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणम्॥ अथवा चत्वारि। 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' (ऋ. सं. १. १६४, ४५)। ये मनीषिणः मनस ईषिणो मनीषिणः। गुहायां त्रीणि निहितानि नेङ्गयन्ति। न चेष्टन्ते न निमिषन्ति। तुरीयं वाचो मनुष्या वदन्ति। 'तुरीयं ह वा एतद्वाचो यन्मनुष्येषु वर्तते'॥ उत त्वः। 'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः' (ऋ. सं. १०. ७१.४)॥ अपि खल्वेकः पश्यन्नपि न पश्यति। अपि खल्वेकः[2] शृण्वन्नपि न शृणोत्येनाम्। अविद्वांसमाहार्धम्। त्वस्मै अन्यस्मै तन्वं विसस्रे तनुं विवृणुते। जायेव पत्य उशती सुवासाः। यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाक् वाग्विदे स्वमात्मानं विवृणुते। वाङ्नो विवृणुयात् इत्यध्येयं व्याकरणम्॥ सक्तुमिव। 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः

---

१. च-छ-फ—प्रयुङ्क्ते कुशलः। २. ग-घ-छ-ण—'अपि खलु' नास्ति; थ—'एकः' नास्ति।

सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि' ( ऋ. सं. १०. ७१. २ ) ॥ सक्तुः सचतेर्दुर्धावो भवति। कसतेर्वा स्याद्विपरीतस्य विकसितो भवति। तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा। धीरा ध्यानवन्तो मनसा प्रज्ञानेन वाचमक्रत वाचमकृषत। अत्रा सखायः सख्यानि जानते। अत्र सखायः सख्यानि संजानते सायुज्यानि जानते। क एष दुर्गो मार्ग एकगम्यो वाग्विषयः। के पुनस्ते। वैयाकरणाः। कुत एतत्। भद्रैषां लक्ष्मीर्निहिताधि वाचि। एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्षणाद्भासनात् परिवृढा भवति॥ सारस्वतीम्। याज्ञिकाः पठन्ति–'आहिताग्निरपशब्दं प्रयुञ्जानः प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्' इति। प्रायश्चित्तीया मा भूम इत्यध्येयं व्याकरणम्॥ दशम्यां पुत्रस्य। 'दशम्यां पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा कृतं नाम कुर्यान्न तद्धितम्' इति। न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्। तस्मादध्येयं व्याकरणम्॥ सुदेवो असि। 'सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव' ( ऋ. सं. ८. ६९. १२ )॥ सप्त सिन्धवः सप्त विभक्तयः। काकुज्जिह्वा। सास्मिन् विद्यत इति काकुदं तालु। सूर्मिः स्थूरा लोहप्रतिमेति॥ एवं 'सिद्धे शब्दार्थसंबन्धे' इत्यादिवार्तिकोक्तान्यत्रापि प्रयोजनान्यनुसंधेयानि॥

अथ निरुक्तप्रयोजनमुच्यते। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। 'गौः ग्मा ज्मा क्ष्मा क्षा क्षमा' इत्यारभ्य 'वसवः वाजिनः देवपत्न्यो देवपत्न्यः' इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते। एतावन्ति पृथिवीनामानि एतावन्ति हिरण्यनामानि इत्येवं तत्र तत्र विस्पष्टमभिहितत्वात्। तदेतन्निरुक्तं त्रिकाण्डम्। तच्चानुक्रमणिकाभाष्ये दर्शितम्—

> आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा।
> तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्थितः[1]॥
> गौराद्यपारपर्यन्तमाद्यं नैघण्टुकं मतम्।
> जहाद्युल्बमृबीसान्तं नैगमं संप्रचक्षते॥
> अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते।
> अग्न्यादिदेवीऊर्जाहुत्यन्तः क्षितिगतो गणः॥
> वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः।
> सूर्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति॥
> गवादिदेवपत्न्यन्तं समाम्नायमधीयते॥ इति॥

एकार्थवाचिनां[2] पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः। तादृशेषु अमरसिंहवैजयन्तीहलायुधादिषु दश[3] निघण्टव इति व्यवहारात्। एवमत्रापि पर्यायशब्दसंघोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम्। तस्मिन् काण्डे त्रयोऽध्यायाः। तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि। द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि। तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि॥ निगमशब्दो वेदवाची। यास्केन तत्र तत्र 'अपि निगमो भवति' इत्येवं वेदवाक्यानामवतारितत्वात्, तस्मिन्निगमे एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम्॥ पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवतत्वं[4] विस्पष्टम्। पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपेक्षतया[5] पदार्थस्योक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम्। तद्व्याख्यानं च 'समाम्नायः समाम्नातः' इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति' इत्यन्तैः

---

१. च-फ–°स्त्रिधा मतः; छ-ण-य–त्रिधान्वितः। २. च-छ-फ–एकार्थवादिनाम्। ३. त-थ–'दश' नास्ति। ४. ग-ब-च-छ-प-फ-य–दैवत्वम्। ५. ट–निरपे°।

द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निःशेषेणोच्यन्ते इति व्युत्पत्तेः तत्र हि 'चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इति प्रतिज्ञाय 'उच्चावचेष्वर्थेषु निपतन्ति' इति निपातस्वरूपं निरूप्य एवमुदाहृतं—'नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः' इति; 'दुर्मदासो न सुरायामित्युपमार्थीयः' (निरु.१.१; ४) इति च। तत्र लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन् ग्रन्थेऽवगम्यते । एवं ग्रन्थकारेणोक्ताः तत्तत्पदनिर्वचनविशेषाः तत्तन्मन्त्रव्याख्यानावसरे एवास्माभिरुदाहरिष्यन्ते । न च निर्वचनानां निर्मूलत्वं शङ्कनीयम् । एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषांचिदुक्तत्वात् । 'तदाहुतीनामाहुतित्वम्' इति । 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते' (ऐ. आ. २. ४. ३) इति । 'यदप्रथयत्तत्पृथिव्यै पृथिवित्वम्' (तै. ब्रा. १. १. ३.६-७) इति च। ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति । केषांचिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति । अत एव ग्रन्थकार आह—'तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च' (निरु. १. १५) इति । तस्मात् वेदार्थावबोधायोपयुक्तं निरुक्तम् ॥

तथा छन्दोग्रन्थोऽप्युपयुज्यते । छन्दोविशेषाणां तत्र तत्र विहितत्वात् । तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते' इति ह्याम्नातम् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि । चतुर्विंशत्यक्षरा गायत्री । ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक् । एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः । तथान्यत्रापि श्रूयते—'गायत्रीभिर्ब्राह्मणस्यादध्यात् । त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्य' (तै. ब्रा. १. १. ९.६-७) इति । तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः । किंच 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' (आर्ष. ब्रा. १. १) इति श्रूयते । तस्मात् तद्वेदनाय छन्दोग्रन्थ उपयुज्यते ॥

ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थेऽभिहितं—'यज्ञकालार्थसिद्धये' (वेदाङ्गज्यो. ३) इति । कालविशेषविधयश्च श्रूयन्ते । 'संवत्सरमेतद्व्रतं चरेत्' (तै. आ. १. ३२. १), 'संवत्सरमुख्यं भृत्वा' (तै. सं. ५. ६. ५. १) इत्येवमादयः संवत्सरविधयः । 'वसन्ते ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत' (तै. ब्रा. १. १. २. ६-७) इत्याद्या ऋतुविधयः । 'मासि मासि पृष्ठान्युपयन्ति । मासि मास्यतिग्राह्या गृह्यन्ते' इत्याद्या मासविधयः । 'यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेत्' इत्याद्याः पक्षविधयः । 'एकाष्टकायां दीक्षेरन्', 'फल्गुनीपूर्णमासे दीक्षेरन्' (तै. सं. ७. ४. ८. १) इत्याद्यास्तिथिविधयः । 'प्रातर्जुहोति सायं जुहोति' इत्याद्याः प्रातःकालादिविधयः । 'कृत्तिकास्वग्निमादधीत' (तै. ब्रा. १. १. २. १) इत्याद्या नक्षत्रविधयः । अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते ॥

एतेषां च वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वं शिक्षायामेवमुदीरितम्—

> छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
> ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
> शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
> तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते (पा. शि. ४१–४२) इति ॥

षडङ्गवत् पुराणादीनामपि वेदार्थज्ञानोपयोगो[1] याज्ञवल्क्येन स्मर्यते—'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' (याज्ञ. १. ३) इति ॥

---

१. ट–°योगं दृष्ट्वा विद्यास्थानत्वं याज्ञ° ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥

इत्यन्यत्रापि स्मर्यते । ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि हरिश्चन्द्रनाचिकेताद्युपाख्यानानि धर्मब्रह्मावबोधोपयुक्तानि तेषु तेष्वितिहासग्रन्थेषु स्पष्टीकृतानि । उपनिषदुक्ताः सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः ।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

इति सृष्टयादेः पुराणप्रतिपाद्यत्वावगमात्[1]। न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनां षोडशपदार्थानां निरूपणात् तदनुसारेणेदं वाक्यमस्मिन्नर्थे प्रमाणं भवति, नेतरदिति निर्णयः कर्तुं शक्यते । पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्ट एव । मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसंध्यावन्दनादिविषयः प्रपञ्चिताः । 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति (तै. आ. २. २) इत्यादिकः संध्यावन्दनविधिः । 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते' (तै. आ. २. १०) इत्यादिको महायज्ञविधिः । एवं विष्यन्तराणि द्रष्टव्यानि । उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगात् विद्यास्थानत्वं युक्तम् । एतैः पुराणादिभिः चतुर्दशभिर्विद्यास्थानैरुपबृंहिताया विद्याया ग्रहणेऽधिकारिविशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः । तांश्च मन्त्रान् यास्क उदाजहार (निरु. २. ४) ॥ तत्रायं प्रथमो मन्त्रः—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥ इति ॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्यमाजगाम । आगत्य चैवं[4] प्रार्थयामास । हे ब्राह्मण मामनधिकारिणेऽनुपदिश्य पालय । तवाहं निधिवत् पुरुषार्थहेतुरस्मि । तादृश्यां मयि तदुपदेष्टरि त्वयि च योऽसूयां करोति । यश्चार्जवेन विद्यां नाभ्यस्यति । योऽपि स्नानाचमनाद्याचारनियतो न भवति । तादृशेभ्यः शिष्याभासेभ्यो मां न ब्रूयाः । तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयम् ॥ अथ द्वितीयो मन्त्रः—

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाह ॥ इति ॥

पूर्वस्मिन् मन्त्रे आचार्यस्य नियममभिधाय अस्मिन् मन्त्रे शिष्यस्य नियमोऽभिधीयते । वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यम् । तद्विपरीतं सत्यं वेदवाक्यमवितथम् । तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णौ आतृणत्ति सर्वतस्तर्दनं पूरणं करोति । उपसर्गवशाद्धातोरर्थान्तरे वृत्तिः । सर्वदा वेदं यः श्रावयति इत्यर्थः । किं कुर्वन् । अदुःखं कुर्वन् । मन्दप्रज्ञस्य माणवकस्य आदौ[5] अर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति, तथा पादं पादैकदेशं वा ग्राहयन् । किंच अमृतं संप्रयच्छन् । अमृतत्वस्य[6] देवजन्मनो मोक्षस्य वा प्रापकत्वादमृतं वेदार्थः । तस्य प्रदानं कुर्वन् । तं तादृशमाचार्यं सच्छिष्यो मुख्यमातापितृरूपं मन्येत । पूर्वसिद्धौ तु मातापितरौ अधमस्य मनुष्यस्य शरीरस्य[7] प्रदानादमुख्यौ । तस्मै मुख्यमातापितृरूपायाचार्यायैकमपि द्रोहं न कुर्यात् ॥ अथ तृतीयो मन्त्रः—

---

१. ग-घ-छ-ण-य—°त्वावगमनात् । २. ट—वेदवाक्य° । ३. ट—°गो विस्पष्ट एव । ४. च-छ-ध-फ—एवम् । ५. ट—आदावेव । ६. छ—अमृतस्य । ७. ट-ठ-त-थ—मनुष्यशरी° ।

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥ इति ॥

ये तु अधमा विप्रा गुरुणाध्यापिताः सन्तो विनयोक्त्या तदीयहितचिन्तनेन शुश्रूषया वा गुरुं नाद्रियन्ते । आदररहितास्ते शिष्याभासा गुरोर्न भोजनीयाः, अनुभवयोग्या न भवन्ति । न हि तेषु गुरुः कृपां करोति । यथैव गुरुणा ते न पालनीयास्तथैव तान् अधमान् शिष्यान् तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पालयति, फलप्रदं न भवतीत्यर्थः ॥ अथ चतुर्थो मन्त्रः—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ इति ॥

हे आचार्य यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः । किंच यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत् । तस्मै तु मुख्यशिष्याय स्वदीयनिधिपालकाय ब्रह्मन् वेदरूपां मां विद्यां ब्रूयाः । इत्थं विद्यादेवतया प्रार्थितत्वादाचार्येण मुख्यशिष्याय वेदविद्योपदेष्टव्या ॥

तदर्थमृग्वेदोऽस्माभिः षडङ्गानुसारेण व्याख्यायते । मन्त्रब्राह्मणात्मके वेदे ब्राह्मणस्य मन्त्रव्याख्यानोपयोगित्वादादौ ब्राह्मणमारण्यकाण्डसहितं व्याख्यातम् । अथ तत्र तत्र ब्राह्मणोदाहरणेन मन्त्रात्मकः संहिताग्रन्थो व्याख्यातव्यः ॥

स च 'अग्निमीळे' इत्यारभ्य 'यथा वः सुसहासति' इत्यन्तोऽष्टकाण्डैर्दशमण्डलैश्चतुःषष्ट्यध्यायैः पञ्चाशीत्यनुवाकैः ईषदधिकसहस्रसूक्तैः ईषदधिकद्विसहस्रवर्गैः ईषदधिकाभिर्दशसहस्रसंख्याभिर्ऋग्भिश्चोपेतः । तस्य च ग्रन्थस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः । विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः । स च त्रिविधः सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोगश्चेति ॥

तत्र 'अग्निमीळे' इति सूक्तं प्रातरनुवाके आग्नेये क्रतौ विनियुक्तम् । स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खण्डे सूत्रितः—'अवा नो अग्न इति षळग्निमीळेऽग्निं दूतम्' इति । तत्र हीनपादग्रहणात् सूक्तनिश्चयः । 'सूक्तं सूक्तादौ हीने पादे'.( आश्व. श्रौ. १. १ ) इति परिभाषितत्वात्। तस्मिन्सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः । स च द्वितीयाध्यायस्य प्रथमखण्डे सूत्रितः—'साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये' इति । तत्र कृत्स्नपादग्रहणात् ऋगित्यवगम्यते । 'ऋचं पादग्रहणे' ( आश्व. श्रौ १. १ ) इति परिभाषितत्वात् । तथा 'संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' (आश्व. श्रौ. २. १) इति परिभाषितत्वात् स्विष्टकृत्संबन्धनिश्चयः। तत्रापि द्वितीयमन्त्रत्वेनोदाहृतत्वात् याज्यात्वम् । यद्यपि साह्वानित्यनया पुरोनुवाक्ययैव देवताया अनुस्मरणरूपसंस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः—

पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात् ॥

पुरोनुवाक्यासमाख्यानाद्वचनाच्च समुच्चयः । देवताप्रकाशनकार्यस्यैकत्वात् । युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति चेत्, मैवम् । पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः । किंच 'पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति प्रत्यक्षवचनेन देवतोपलक्षणहविष्प्रदानकार्ये भेदोक्तिपुरःसरं साहित्यं विधीयते । तस्मात् समुच्चय इति ॥

---

१. क—यजति ।

एतच्चाग्निमित्यादिसूक्तं नवर्चम् ' अग्निं नव मधुच्छन्दा वैश्वामित्रः ' इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात् तदीय ऋषिः। ' ऋष गतौ ' इति धातुः। ' सर्वधातुभ्य इन् ' ( उ. सू. ४. ५५७ ) ' इगुपधात्कित् ' ( उ. सू. ४. ५५९ )। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते–' अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्तदृषयोऽभवन् ' ( तै. आ. २. ९ ) इति। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनात् ऋषित्वमित्यभिप्रेत्य स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥

इति॥ ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥
ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥

इति॥ वेदनविधिश्च स्मर्यते—

स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥

इति॥ अग्निमित्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्। ' आदौ गायत्रं प्राग्घिरण्यस्तूपात् ' ( अनु. १२. १४ ) इति। हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसंबन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते–' छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः ' ( ऐ. आ. २.५ ) इति। अथवा चीयमानाग्निसंतापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति–' प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वाऽतिष्ठत्तं देवा बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपायन्तच्छन्दसां छन्दस्त्वम् ' ( तै. सं. ५. ६. ६. १ ) इति। यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दः। तदपि छान्दोग्योपनिषद्याम्नातं–' देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम् ' ( छां. उ. १. ४. २ ) इति। तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते–' दिवा वै नोऽभूदिति तद्देवानां देवत्वम् ' इति। अतो दीव्यतीति देवः। मन्त्रेण द्योतते इत्यर्थः। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानुक्रमणिकायामुक्तं–' मण्डलादिष्वाग्नेयमैन्द्रान् ' ( अनु. १२. १२ ) इति। तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

---

१. ग-घ-च-छ-ण-त-थ-फ-य–' सर्वधातुभ्य इन् ', ' इगुपधात्कित् ' इत्येतन्नास्ति। २. च-छ-ण-थ-फ-य–मनुज्ञातान्। ३. ग-घ-च-छ-ण-फ-य–स्वरवर्णाक्षरम् ४. ग-च-छ-ण-फ–वा। ५. च-छ-ण-थ-फ–प्राग्घैरण्यस्तूपात्। ६. ग–च–फ–हिरण्यस्तूपाख्यः; थ–हिरण्यस्तूपानाम। ७. च-छ-थ-फ–' इति ' नास्ति। ८. ग–अग्निं नव मधुच्छन्दा वैश्वामित्र इत्यासीत्।

ॐ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् ॥ १ ॥

ॐ अ॒ग्निम् । ई॒ळे । पु॒रःऽहि॑तम् । य॒ज्ञस्य॑ । दे॒वम् । ऋ॒त्विज॑म् । होता॑रम् । र॒त्न॒ऽधात॑मम् ॥ १ ॥

अग्निनामकं देवम् ᵛईळे स्तौमि । 'ईड स्तुतौ' इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः। तथा च पठ्यते–' अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम् ' इति ॥ मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते । कीदृशमग्निम्। ᵛयज्ञस्य ᵛपुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा। यज्ञस्य संबन्धिनि पूर्वभागे आवहनीयरूपेणावस्थितम्*। पुनः कीदृशम् । ᵛदेवं दानादिगुणयुक्तम् । पुनः कीदृशम् । ᵛहोतारम् ᵛऋत्विजम् । देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते–'+अग्निर्वै देवानां होता ' ( ऐ. ब्रा. ३. १४ ) इति । पुनरपि कीदृशम् । ᵛरत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा । अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति–'अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळे ' ( निरु. ७. १४ ) इति । अस्यायमर्थः । सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितम् अतोऽनुक्रमेण[1] वक्ष्यामः । तत्र पृथिवीलोके स्थितोऽग्निः[2] प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्य ' अग्रणीः ' इत्यादिकमुत्तरम् । देवसेनामग्रे स्वयं नयतीत्यग्रणीः । एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम् । तथा च ब्राह्मणान्तरम्–' अग्निर्देवानां सेनानीः ' इति । एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति–' अग्निर्मुखं प्रथमो देवतानाम् ' ( ऐ. ब्रा. १. ४ ) इति मन्त्रः । ' अग्निर्वै देवानामवमः ' ( ऐ. ब्रा. १. १ ) इति ब्राह्मणम् । तथा तैत्तिरीयाश्चामनन्ति–' अग्निरग्रे प्रथमो देवतानाम् ' ( तै. ब्रा. २. ४. ३. ३ ) इति । ' अग्निरवमो देवतानाम् ' इति च । वाजसनेयिनस्त्वेवमामनन्ति–' स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम ' इति । यज्ञेषु अग्निहोत्रेष्टिपशुसोमरूपेषु अग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयते इति द्वितीयं प्रवृत्तिनिमित्तम् । संनममानः सम्यक् स्वयमेव प्रह्वीभवन् अङ्गं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम् । स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चित् ' अक्नोपनः ' इति अग्निशब्दं निर्वक्ति । तत्र न क्नोपयतीत्युक्ते न स्नेहयति, किंतु काष्ठादिकं रूक्षयतीत्युक्तं भवति । शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते । इतः ' इण् गतौ ' इति धातुः । अक्तः ' अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ' इति धातुः । दग्धः ' दह भस्मीकरणे ' इति धातुः । नीतः ' णीञ् प्रापणे ' इति धातुः । अग्निशब्दो हि अकारगकारनिशब्दानपेक्षमाणः एतिधातोरुत्पन्नात् अयनशब्दात् अकारमादत्ते । अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते । यद्वा । दहतिधातुजन्यात् दग्धशब्दात् गकारमादत्ते । नीः इति नयति धातुः । स च ह्रस्वो भूत्वा परो भवति । ततो

---

* ठ– ' अथवा यज्ञस्य देवमिति संबन्धः । यज्ञस्य प्रकाशकमित्यर्थः । पुरोहितमिति पृथग्विशेषणम् ' इत्यधिकं ' अवस्थितम् ' इत्यस्यानन्तरम् । + ठ–' अग्निर्वै देवानां ...... धारयितारं पोषयितारं वा' इत्यस्य स्थाने–' अग्निर्वै देवानां होतासीत् इति । अथवा ऋत्विजं ऋत्विग्वत् यज्ञनिर्वाहकम् । होतारं देवानामाह्वातारम् । तथा रत्नधातमं यागफलरूपाणां रत्नानां रमणीयानां धनानां वा अतिशयेन दातारं धारयितारं वा ' इत्यधिकम् । १. ग-घ-ट-ठ-य–ततोऽनुक्रमेण । २. ट-ठ–पृथ्वीलोकावस्थितोऽग्निः ।

त्रयं मिलित्वा अग्निशब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविष्पाके च प्रेर-
ति समुदायार्थः । तस्य अग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनार्थैषा 'अग्निमीळे'
ऋक् भवतीति । तामेतां ऋचं यास्क एवं व्याख्यातवान्—'अग्निमीळेऽग्निं याचामीळिरध्येषणा-
पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा
देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमम्'
(रु. ७. १५) इति । अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम् । धातूनामनेकार्थत्वमिति न्यायमा-
श्रित्य याञ्चाध्येषणापूजाः अप्यत्रोचितत्वात् तदर्थतया व्याख्याताः । पुरोहितशब्दो द्वितीयेऽध्याये
'देवापिः शंतनवे पुरोहितः' इत्येतां ऋचमुदाहृत्य 'पुर एनं दधति' ( निरु. २. १२ ) इति
व्याख्यातः । तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधते' ( तै.
२. १. २. ९ ) इत्यामनन्ति । देवशब्दो दानदीपनद्योतनानामन्यतमसर्थमाचष्टे । यज्ञस्य दाता
पयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः । यद्यप्यग्निः
पृथ्वीस्थानस्तथापि देवान् प्रति हविर्वहनात् द्युस्थानो भवति । देवशब्ददेवताशब्दयोः पर्यायत्वा-
त्प्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामा-
तारमिति । और्णवाभनामकस्तु मुनिः जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च होतृत्वं होमा-
करणत्वेन द्रष्टव्यम् । रत्नशब्दो द्वितीयाध्याये 'मघम्' इत्यादिष्वष्टाविंशतौ धननामसु (नि.२. १०.७.)
तः । रमणीयत्वात् रत्नत्वम् । दधातिधातुरत्र दानार्थवाचीति । तदिदं निरुक्तकारस्य यास्कस्य मन्त्र-
व्यानम् ॥ अथ व्याकरणप्रक्रियोच्यते । अगिधातोर्गत्यर्थात् 'अङ्गेर्नलोपश्च' ( उ. सू. ४. ४९० )
 औणादिकसूत्रेण निप्रत्ययः । इदित्त्वान्नुमागमे प्राप्तस्य नकारस्य ( पा. सू. ७. १. ५८ ) लोपश्च
ति । अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' ( पा. सू. ६. १. १६२ ) इति
र उदात्तः । 'आद्युदात्तश्च' ( पा. सू. ३. १. ३ ) इति प्रत्ययगत इकारोऽप्युदात्तः । 'अनुदात्तं
मेकवर्जम्' ( पा. सू. ६. १. १५८ ) इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम् ।
धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते । 'सति शिष्टस्वरो
यान्' (पा. सू. ६. १. १५८. ९) इति हि न्यायः । ततोऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ
प्तौ' ( पा. सू. ३. १. ४ ) इति अम् इत्येतत् द्वितीयैकवचनमनुदात्तम् । तस्य 'अमि पूर्वः'
(पा. सू. ६. १. १०७ ) इति यत् पूर्वरूपं तदुदात्तम् 'एकादेश उदात्तेनोदात्तः' ( पा. सू. ८. २.
) इति सूत्रितत्वात् । अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या । मतद्वयं यास्केन
र्शितं— 'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके'
निरु. १. १२ ) इति । गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषोऽन्त उदात्तः' ( फि.
१ ) इत्यन्तोदात्तत्वम् । पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं
नीया । एतदेवाभिप्रेत्य यास्क आह—'अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन
नान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्ति-
मान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्त्वेव न निर्ब्रूयात्' ( निरु. २. १ ) इति ।
ायमर्थः—तत्तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याक-
सिद्धौ स्याताम् । स्वर उदात्तादिः । संस्कारो निप्रत्ययादिः । किंच तौ स्वरसंस्कारौ प्रादेशिकेन गुणेना-
तौ स्याताम् । शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः । तत्र भवो गुणो गतिरूपोऽर्थः । तेनान्वितौ ।
अग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात् । तच्च निर्वचनमस्माभिः प्रदर्शितम् । अथ पूर्वोक्त-

१. ग-य-हविर्वहन् । २. त- उणादिसूत्रेण । ३. ठ-तयोरन्यतरदुदात्तमवशिष्टतरदनुदात्तम् । ४.
धातुजन्य इति । ५. ग-घ-छ-ण-य-"ष्वग्रणीत्यादीनि" । ६. च-छ-ठ-त-थ-फ-तत्र ।

वैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थो नान्वितः तस्मिन् शब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानम् 'अप्रादेशिके विकारे' इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयते इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्। ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा स निर्बन्धः। तदानीं स पुमान् केनचित् वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत, तस्मिन् शब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्च अग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्य अग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविः अक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थम् अकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादौ अकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते—दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति। ईळे इत्येतत्पदं कृत्स्नमप्यनुदात्तम्। 'तिङ्ङतिङः' (पा. सू. ८. १. २८) इति अतिङन्तादग्निशब्दात् परस्य ईळे इत्यस्य तिङन्तस्य निघातविधानात्। पदद्वयसंहिताकाले तु ईकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' (पा. सू. ८. ४. ६६) इति स्वरितत्वम्। तस्मात् ऊर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात्संहितायामनुदात्तानाम्' (पा. सू. १. २. ३९) इति एकश्रुत्यं प्रचयनामकं भवति। पुरःशब्दोऽन्तोदात्तः। 'अयं पुरो भुवः' (तै. सं. ४. ३. २. १) इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा. सू. ५. ३. ३९) इति पूर्वशब्दात् असिप्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः (पा. सू. ३. १. ३)। धाञो निष्ठायां 'दधातेर्हिः' (पा. सू. ७. ४. ४२) इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे (पा. सू. ६. १. २२३) प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ°' (पा. सू. ६. २. २) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा। 'पुरोऽव्ययम्' (पा. सू. १. ४. ६७) इति गतिसंज्ञायां 'गतिरनन्तरः' (पा. सू. ६. २. ४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तत ओकार उदात्तः। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववत् द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयप्राप्तौ (पा. सू. १. २. ३९) 'उदात्तस्वरितपरस्य सन्नतरः' (पा. सू. १. २. ४०) इत्यतिनीचोऽनुदात्तः। 'यजयाच°' (पा. सू. ३. ३. ९०) इत्यादिना यजतेः नङ्प्रत्यये सति अन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति (पा. सू. ३. १. ४) पश्चात् स्वरितत्वम्। देवशब्दः पचाद्यजन्तः (पा. सू. ३. १. १३४)। स च फिट्स्वरेण (फि. सू. १) प्रत्ययस्वरेण (पा. सू. ३. १. ३) चित्स्वरेण (पा. सू. ६. १. १६३) वा अन्तोदात्तः। ऋत्विक्शब्दः 'ऋतौ यजति' इति विग्रहे सति 'ऋत्विग्दधृक्°' (पा. सू. ३. २. ५९) इति निपातितः। 'गतिकारकोपपदात्कृत्' (पा. सू. ६. २. १३९) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययान्तः (पा. सू. ३. २. १३५)। नित्स्वरेणाद्युदात्तः (पा. सू. ६. १. १९७)। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो 'नब्विषयस्यानिसन्तस्य' (फि. सू. २६) इत्याद्युदात्तः। तथा चाम्नायते—'रत्नं धाता' इति। रत्नानि दधातीति विग्रहः। समासत्वादन्तोदात्तो रत्नधाशब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्प्रत्ययस्य (पा. सू. ५. ३. ५५) पित्स्वरेणानुदात्ते सति (पा. सू. ३. १. ४) स्वरितप्रचयौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वम्। 'वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः। विज्ञातं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते'॥

**अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त। स दे॒वाँ एह व॑क्षति ॥ २ ॥**

अ॒ग्निः। पूर्वे॑भिः। ऋषि॑ऽभिः। ईड्यः॑। नूत॑नैः। उ॒त। सः। दे॒वान्। आ। इ॒ह। व॒क्ष॒ति॒॥२॥

१. ठ–निर्णयः। २. ग-ध-य–वृत्तिसाम्येन। ३. च-ठ-थ-फ–क्रियात्वसाम्यमुपजीव्य। ४. ठ–अक्नोपन इति तस्यादौ। ५. ठ–'अपि' नास्ति। ६. ठ–सति प्रत्ययस्वरेण अन्तोदात्तः। ७. त-थ–णानुदात्तत्वे। ८. क-ख-ङ-ण-न-श–स्वरितप्रचितौ।

अयम् vअग्निः vपूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिः vऋषिभिः vईड्यः स्तुत्यः, vनूतनैः vउत इदानींतनैरस्माभिरपि स्तुत्यः। vसः अग्निः स्तुतः सन् vइह यज्ञे vदेवान् हविर्भुजः vआ vवक्षति। 'वह प्रापणे' इति धातुः। आवहतु इत्यर्थः॥ पूर्वेभिरित्यत्र 'बहुलं छन्दसि' (पा. सू. ७. १. १०) इति भिस ऐसादेशाभावः। 'पूर्व पर्व अर्व पूरणे' इति धातुः। पूर्वतिधातोः अन्प्रत्यय औणादिकः। इन्प्रत्ययान्त ऋषिशब्दः 'ऋष्यन्धक॰' (पा. सू. ४. १. ११४) इति निपातनात् लघूपधगुणाभावः (पा. सू. ७. ३. ८६)। कित्प्रत्ययो वात्र ज्ञेयः (उ.सू.४. ५५९)। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् (पा. सू. ३. १. १२४) 'तित्स्वरितम्' (पा. सू. ६. १. १८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द॰' (पा. सू. ६. १. २१४) इत्यादिनाद्युदात्तत्वम्। 'नवस्य नू त्नप्तनखाश्च' (पा. सू. ५. ४. ३०. ६) इति वार्तिकेन नवशब्दस्य नू इत्यादेशः तनप्प्रत्ययश्च महावार्तिके विहितः। ततो नित्स्वरेणाद्युदात्तः। अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः। उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। 'उच्चावचेष्वर्थेषु निपतन्ति' इति निपातत्वम्। तर्हि 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्युकारस्योदात्तः प्राप्त इति चेत्, न। प्रातःशब्दवदन्तोदात्तत्वात्। यथा प्रातःशब्दोऽन्तोदात्तत्वेनैव स्वरादिषु (पा. सू. १. १. ३७) पठितः, एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात्। यद्वा[1] 'एवादीनामन्तः' (फि. सू. ८२) इत्यन्तोदात्तः। स इत्यत्र फिट्स्वरः। देवशब्दः पूर्ववत्। देवान् इत्यस्य नकारस्य संहितायां 'दीर्घादटि' (पा. सू. ८. ३. ९) इति रुत्वम्। 'अत्रानुनासिकः॰' (पा. सू. ८. ३. २) इत्यनुवृत्तौ 'आतोऽटि नित्यम्' (पा. सू. ८. ३. ३) इत्याकारः सानुनासिकः। 'भोभगो॰' (पा. सू. ८. ३. १७) इति रोर्यकारः। स च 'लोपः शाकल्यस्य' (पा. सू. ८. ३. १९) इति लुप्यते। तस्यासिद्धत्वात् (पा. सू. ८. २. १) न पुनः संधिकार्यम्[2]। आङो निपातत्वादाद्युदात्तत्वम्। इदमो ह्प्रत्यये[3] सति निष्पन्नत्वात (पा. सू. ५. ३. ११) इहशब्दे प्रत्ययस्वरः। वहति धातोर्लोडर्थे छान्दसो लट्। तस्य[4] स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः। यद्वा। लेटि 'सिब्बहुलम्॰' (पा. सू. ३. १. ३४) इति सिप्प्रत्ययः। 'लेटोऽडाटौ' (पा. सू. ३. ४. ९४) इत्यडागमश्च। ततो वक्षतीति संपद्यते। तस्य[5] तिङन्तत्वान्निघातः। संहितास्वराः पूर्ववत्॥

आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या (आश्व. श्रौ. २. १)। सूक्तगता तृतीया॥

## अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे। य॒शसं॑ वी॒रव॑त्तमम्॥ ३॥

अ॒ग्निना॑। र॒यिम्। अ॒श्न॒व॒त्। पोष॑म्। ए॒व। दि॒वेऽदि॑वे। य॒शस॑म्। वी॒रव॑त्ऽतमम्॥ ३॥

योऽयं होत्रा स्तुत्योऽग्निस्तेन vअग्निना निमित्तभूतेन यजमानः vरयिं धनम् vअश्नवत् प्राप्नोति। कीदृशं रयिम्। vदिवेदिवे vपोषम् vएव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। vयशसं दानादिना यशोयुक्तं vवीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः संपद्यन्ते[6]। रयिशब्दो 'मघम्' इत्यादिधननामसु (नि. २.१०.८) पठितः। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोपः॰' (पा. सू. ३. ४. ९७) इति इकारलोपः। 'लेटोऽडाटौ' (पा. सू. ३. ४. ९४) इत्यडागमः। ततः 'अश्नवत्' इति भवति। तस्य निघातः। घञन्त-

---

१. ग-घ-छ-ण-य-'यद्वा...... इत्यन्तोदात्तः' नास्ति; त-थ-'अन्तोदात्तः' इत्यस्य स्थाने 'अन्तोदात्वम्'। २. ठ-संधिः। ३. त-थ- ह इति ह्प्रत्यये। ४. ठ-त-थ-'तस्य' नास्ति। ५, त-थ-तस्य तिङ्ङातिङः इति तिङन्तत्वान्निघातः। ६. ग-य-संपाद्यन्ते।

त्वात् ( पा. सू. ६. १. १९७ ) पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' ( फि. सू. ८२ ) इत्यन्तोदात्तत्वम्। वकारान्तात् दिवशब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्°' ( पा. सू. ७. १. ३९ ) इत्यादिना लोपाभावे सति 'सावेकाचः°' ( पा. सू. ६. १. १६८ ) इत्यादिना 'ऊडिदंपदाद्°' ( पा. सू. ६. १. १७१ ) इत्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' ( पा. सू. ८. १. ४ ) इति द्विर्भावे सति उत्तरभागस्य 'अनुदात्तं च' ( पा. सू. ८. १. ३ ) इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' ( पा. सू. ५. २. १२७ ) इति अच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्तात् वीरशब्दात् उत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम्। 'ह्रस्वनुड्भ्याम्°' ( पा. सू. ६. १. १७६ ) इति तु न सावर्णान्तत्वात्। 'न गोश्वन्°' ( पा. सू. ६. १. १८२ ) इति प्रतिषेधः॥

अभिप्लवषडहस्य मध्यवर्तिषूक्थेषु तृतीयसवने मैत्रावरुणस्य 'अग्ने यं यज्ञम्' इत्यादिको वैकल्पिकोऽनुरूपस्तृचः। एतच्च सप्तमाध्याये 'एह्यूषु' इत्यादिखण्डे सूत्रितम्—'अग्निं वो वृधन्तमग्ने यं यज्ञमध्वरम्' ( आश्व. श्रौ. ७. ८ ) इति॥

## अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि। स इद्देवेषु गच्छति॥ ४॥

अग्ने। यम्। यज्ञम्। अध्वरम्। विश्वतः। परिऽभूः। असि। सः। इत्। देवेषु। गच्छति॥४॥

हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि सः इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति। प्राच्यादिचतुर्दिगन्तेषु आहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेषु अग्निरस्ति। परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्। अध्वरं हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति॥ अग्निशब्दस्य पाष्ठिकम् ( पा. सू. ६. १. १९८ ) आमन्त्रिताद्युदात्तत्वम्। न विद्यते ध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' ( पा. सू. ६. २. १७२ ) इत्यन्तोदात्तत्वम्। विश्वतः इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' ( पा. सू. ६. १. १९३ ) इत्युदात्तत्वम्। परिभूरित्यत्र अव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते ( पा. सू. ६. २. २ ) तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा. सू. ६. २. १३९ )। असि इति तिङन्तस्य 'यद्वृत्तान्नित्यम्' ( पा. सू. ८. १. ६६ ) इति निघाताभावः॥

## अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः। देवो देवेभिरा गमत्॥ ५॥

अग्निः। होता। कविऽक्रतुः। सत्यः। चित्रश्रवःऽतमः। देवः। देवेभिः। आ। गमत्॥ ५॥

अयम् अग्निः देवः अन्यैर्देवैर्हविर्भोजिभिः सह आ गमत् अस्मिन् यज्ञे समागच्छतु। कीदृशोऽग्निः। होता होमनिष्पादकः कविक्रतुः। कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः। श्रूयते इति श्रवः कीर्तिः। अतिशयेन विविधकीर्तियुक्तः॥ कविक्रतुः चित्रश्रवस्तमः इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा. सू. ६. २. १ )। सत्सु साधुः सत्यः 'सत्यादशपथे' ( पा. सू. ५. ४. ६६ ) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः।

---

१. ग-घ-च-छ-ठ-ण-त-थ-फ-य-'ह्रस्वनुड्भ्यां......प्रतिषेधः' नास्ति। २. ठ-'तस्मिन् तृचे या प्रथमा सा सूक्ते चतुर्थी' इत्यधिकं इतीत्यस्यानन्तरम्। ३. च-छ-ठ-ण-त-थ-फ-जनयितुम्। ४. ठ-प्रागादिचतुर्षु देशेषु। ५. ठ-प्रत्ययस्वरम्। ६. च-छ-त-थ-फ-चित्रकीर्ति°। ७. ग-घ-च-छ-ण-त-थ-फ-य-'सत्सु साधुः...... निपातितः' नास्ति।

लोडन्तस्य गच्छतु इति शब्दस्य छत्वाभावः। उकारलोपश्छान्दसः। ततो रूपं गमन् इति भवति। स्पष्टमन्यत्॥ ॥ ५ ॥

## यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि। तवेत्तत्सत्यमङ्गिरः॥ ६ ॥

यत्। अङ्ग। दाशुषे। त्वम्। अग्ने। भद्रम्। करिष्यसि। तव। इत्। तत्। सत्यम्। अङ्गिरः ॥६॥

अङ्ग इत्यभिमुखीकरणार्थो निपातः। ᵛअङ्ग ᵛअग्ने हे अग्ने त्वं ᵛदाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं ᵛयत् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं ᵛकरिष्यसि ᵛतत् भद्रं ᵛतव ᵛइत् तवैव। सुखहेतुरिति शेषः। हे ᵛअङ्गिरः अग्ने एतच्च ᵛसत्यं न त्वत्र विसंवादोऽस्ति¹। यजमानस्य वित्तादिसंपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति। भद्रशब्दार्थं शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति॥ अङ्गशब्दस्य निपातत्वेऽपि अभ्यादित्वात् (फि. सू. ८१) अन्तोदात्तत्वम्। 'दाश्वान्साह्वान्°' (पा. सू. ६. १. १२) इति सूत्रेण 'दाशृ दाने' इति धातोः क्वसुप्रत्ययो निपातितः²। तत्र³ प्रत्ययस्वरः (पा. सू. ३. १. ३)। आमन्त्रितस्य अग्निशब्दस्य पदात्परत्वेन आष्टमिकानुदात्तत्वं (पा. सू. ८. १. १९) न शङ्कनीयम्, 'अपादादौ' (पा. सू. ८. १. १८) इति पर्युदस्तत्वात्। ततः षाष्ठिकम् (पा. सू. ६. १. १९८) आद्युदात्तत्वमेव। भद्रशब्दस्य नब्विषयत्वेन (फि. सू. २६) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम्। अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त°' (पा. सू. ८. १. ३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः। तवेत्यत्र 'युष्मदस्मदोर्ङसि' (पा. सू. ६. १. २११) इत्याद्युदात्तत्वम्। 'अङ्गिरा अङ्गाराः' (निरु० ३. १७) इति यास्कः। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति—'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ. ब्रा. ३. ३४) इति। तस्मात् अङ्गिरोनामकमुनिकारणत्वात् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम्। अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम्॥

अग्नीषोमप्रणयने 'उप त्वाग्ने' इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे समाम्नातम्—'उप त्वाग्ने दिवेदिव उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह' (ऐ. ब्रा. १. ३०) इति॥

## उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि॥ ७ ॥

उप। त्वा। अग्ने। दिवेऽदिवे। दोषाऽवस्तः। धिया। वयम्। नमः। भरन्तः। आ। इमसि ॥७॥

हे ᵛअग्ने वयम् अनुष्ठातारः ᵛदिवेदिवे प्रतिदिनं ᵛदोषावस्तः रात्रावहनि च ᵛधिया बुद्ध्या ᵛनमः ᵛभरन्तः नमस्कारं संपादयन्तः ᵛउप समीपे ᵛत्वा ᵛएमसि त्वामागच्छामः॥ उपशब्दस्य निपातस्वरः (फि. सू. ८०)। 'त्वामौ द्वितीयायाः' (पा. सू. ८. १. २३) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्तर् इति अहर्वाची। द्वन्द्वसमासे कार्तकौजपादित्वात् (पा. सू. ६. २. ३७) आद्युदात्तः। 'सावेकाचः°' (पा. सू. ६. १. १६८) इति धियो विभक्तिरुदात्ता। नम इति निपातः। भरन्त इत्यत्र शपः (पा. सू. ३. १. ६८) पित्त्वात् शतुर्लसार्वधातुकत्वाच्च अनुदात्तत्वे सति (पा. सू. ६. १. १८६) धातुस्वरः शिष्यते। इमसि इत्यत्र 'इदन्तो मसिः' (पा. सू. ७. १. ४६) इत्यादेशो निघातश्च।

---

१. ठ–विवादोऽस्ति। २. ठ–दाशुष इति शब्दो दाश्वान्साह्वान्; फ–दाशुषे। दाश्वान्साह्वान। ३. ठ–ततः।

राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानं स्वे दमे ॥ ८ ॥

राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य। दीदिविम्। वर्धमानम्। स्वे। दमे ॥ ८ ॥

पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्। राजन्तं दीप्यमानम् अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम् ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम्॥ राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववत् धातुस्वरः शिष्यते। दीदिविशब्दस्य 'अभ्यस्तानामादिः' (पा. सू. ६. १. १८९) इत्याद्युदात्तत्वम्। दमशब्दो वृषादित्वात् (पा. सू. ६. १. २०३) आद्युदात्तः॥

स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥ ९ ॥

सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः। भव। सचस्व। नः। स्वस्तये ॥ ९ ॥

हे अग्ने सः त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तः भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत्॥ अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्°' (पा. सू. ८. १. १८) इत्यनुदात्तत्वम्। 'चादयोऽनुदात्ताः' (फि. सू. ८४) इति इवशब्देऽनुदात्तः। 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पा. सू. २. १. ४. २) इति समस्तः पितेवेति शब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा. सू. ६. २. १७२) इत्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः। लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः॥ ॥ २ ॥

'अग्निमीळे' इत्यादिसूक्तमग्निष्टोमस्य प्रातरनुवाके यथा विनियुक्तं तथा 'वायवा याहि' इत्यादयस्तृचाः प्रउगशस्त्रे विनियुक्ताः। तत्रेदं चिन्त्यते, शस्त्रं किं देवतास्मरणरूपसंस्कारकर्म किं वा अदृष्टफलं[1] प्रधानकर्मेति। तत्र पूर्वपक्षं जैमिनिः (जै. सू. २. १. १३–२९) सूत्रयामास—

'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्' इति॥ 'आज्यैः स्तुवते पृष्ठैः स्तुवते प्रउगं शंसति निष्केवल्यं शंसति' इति श्रूयते। तत्र स्तुतिः शंसनं च गुणिनिष्ठगुणाभिधानम् 'इन्द्रस्य नु वीर्याणि प्र वोचम् (ऋ. सं. १. ३२. १) इत्यत्र दृष्टत्वात्। एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयम्। याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे (जै. सू. १०. ४. ३९–४१) दृष्टार्थलाभेन निर्णीतम्। तद्वदत्रापि। तुशब्दः प्रधानकर्मत्वं व्यावर्तयति॥ सिद्धान्ती तं पक्षं दूषयति—

'अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्' इति। तुशब्देन संस्कारत्वं वारयति संस्कारपक्षे प्रयोजनवशेन मन्त्रः स्वस्थानादपकृष्येत। कुतः। मन्त्रगतं देवतावाचकं यदिन्द्रादिनामास्ति तच्चोदनया मन्त्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतम्। तस्मात् यत्र प्रधानभूतदेवतास्ति तत्र गुणभूतो मन्त्रो नेतव्यः। तद्यथा माहेन्द्रग्रहसंनिधौ 'अभि त्वा शूर' (ऋ. सं. ७. ३२. २२) इत्ययं प्रगाथ आम्नातः। स चेन्द्रं प्रकाशयति न तु महेन्द्रम्। ततो यत्रैन्द्रं कर्म तत्रायं प्रगाथोऽपकर्षणीयः। तथा सति क्रमसंनिधी बाध्येयाताम्॥ तदेतत् सिद्धान्तिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते—

'वशावद्वा गुणार्थं स्यात्' इति। वाशब्दः प्रगाथस्यान्यत्रनयनं वारयति। मन्त्रे यदेतदिन्द्रशब्दाभिधानं तदेतन्महत्वगुणोपलक्षणार्थं स्यात्। यथा 'सा वा एषा सर्वदेवत्या यदजा वशा

---

1. क-ग-घ-ङ-ण-त-थ-फ—'अदृष्टफलम्' नास्ति।

वायव्यामा लभेत ' ( तै. सं. ३. ४. ३. २ ) इत्यत्र अजावशाशब्देन चोदिते कर्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयन्ति तद्वत् । तस्मात् महत्त्वगुणयुक्ते चोदिते कर्मणि निर्गुणेनेन्द्रशब्देधाननाभिमविरुद्धम् । लोकेऽपि महाराजे केवलराजशब्दप्रयोगमपि पश्यामः । तदेतत् समाधानं सिद्धान्ती दूषयति—

' न श्रुतिसमवायित्वात् ' इति । यदुक्तं वशान्यायेन राजन्यायेन वास्य ग्रहस्येन्द्रो देवता युज्यते इति तन्न । देवतात्वस्य तद्धितश्रुतिसमवायित्वात् । माहेन्द्रग्रह इत्यत्र सास्य देवतेत्यस्मिन्नर्थे ' महेन्द्राद्घाणौ च ' ( पा. सू. ४. २. २९ ) इति महेन्द्रशब्दात् अण्प्रत्ययो विहितः । तस्मात् महेन्द्र एव देवता न त्विन्द्रः ॥ विपक्षे बाधमाह—

' गुणश्चानर्थकः ' इति । यदीन्द्रो देवता स्यात् तदानीम् ऐन्द्रग्रह इत्येतावतैव अर्थावगतौ माहेन्द्र इति महत्त्वगुणोऽनर्थकः स्यात् । चकारः पूर्वहेतुना समुच्चयार्थः[1] ॥ हेत्वन्तरमाह—

' तथा याज्यापुरोरुचोः ' इति । इन्द्रमहेन्द्रयोर्देवतयोर्भेदे यथा महत्त्वगुणः सार्थकस्तथा याज्यापुरोनुवाक्ययोर्भेदोऽप्यस्मिन्नेव पक्षे उपपद्यते । ' एन्द्र सानसिम् ' ( ऋ. सं. १. ८. १ ) इत्यादिके इन्द्रस्य याज्यापुरोनुवाक्ये । ' महाँ इन्द्रो य ओजसा ' ( ऋ. सं. ८. ६. १ ) इत्यादिके महेन्द्रस्य ॥ पूर्वपक्षिणोक्ते वशादृष्टान्ते वैषम्यमाह—

' वशायामर्थसमवायात् ' इति । या वशा विधिवाक्ये श्रुता तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः । छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात् । तच्च प्रत्यक्षेणोपलभ्यते । इन्द्रमहेन्द्रयोस्तु भेद उपपादितः । तस्मात् विषमो दृष्टान्तः । एवं संस्कारपक्षे प्रगाथस्यैन्द्रकर्मण्यपकर्षप्रसङ्गात् तद्वारयितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति सिद्धान्तिनो मतम् ॥ पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे—

' यत्रेति वार्थवत्त्वात्स्यात् ' इति । वाशब्दः सिद्धान्तिमतव्यावृत्त्यर्थम्[2] । यत्रैन्द्रं कर्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात् । कुतः, अर्थवत्त्वात् । ऐन्द्रो मन्त्र इन्द्रं प्रकाशयितुं समर्थ इत्यर्थवान् स्यात् । महेन्द्रं तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत । तस्मात् देवताप्रकाशनरूपसंस्कारकर्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः ॥ अथ सिद्धान्तमाह—

' अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ' इति । ' अपि वा ' इत्यनेन संस्कारकर्मत्वं व्यावर्त्यते । स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरणे एव कस्याश्चित् प्रधानक्रियाया उत्पत्तिं विदध्याताम् । कुतः, श्रुतिसंयोगात् । तयोर्धात्वोर्वाच्योऽर्थः श्रुतिरित्युच्यते । तत्संयोगः प्रधानकर्मत्वे सिध्यति । तथा हि गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः । यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति । गुणस्योपसर्जनत्वे तु न स्तुतिः प्रतीयते[3] । ' यश्चतुर्वेदाभिज्ञस्तमाकारय ' इत्युक्ते स्तुतिं न मन्यन्ते किंत्वाह्वानप्राधान्यमेव बुध्यन्ते । एवं मन्त्रेष्वपि[4] या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यविवक्षायां मुख्यः स्तौतिधात्वर्थो विधीयते[5] । त्वत्पक्षे तु येयमीदृग्गुणयुक्ता सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुतिर्न स्यात् । ततः श्रुतिवशादेते प्रधानकर्मणी । तथा सति देवताप्रकाशने तात्पर्याभावात् ऐन्द्रोऽपि प्रगाथः स्वप्रकरणगते माहेन्द्रकर्मण्येवावतिष्ठते[6] । यदि देवतास्मरणरूपं[7] दृष्टं प्रयोजनं न लभ्येत तर्ह्यदृष्टमस्तु ॥ प्रधानकर्मत्वे हेत्वन्तरमाह—

---

१. त-थ—पूर्वहेतुसमुच्चयार्थः । २. ग-घ-च-छ-ण-त-थ-फ-य— व्यावृत्त्यर्थः । ३. ग-घ-च-छ-ण-य—प्रतीयेत । ४. ठ—मन्त्रेऽपि । ५. ग-घ-छ-ण-य—विधीयेत । ६. ठ—महेन्द्रकर्मण्येषा । ७. ग-घ-च-छ-ठ-ण-फ-य—देवतानुस्मरण° ।

'शब्दपृथक्त्वाच्च' इति। 'द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणि' इत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते। देवताप्रकाशनपक्षे सर्वैरपि मन्त्रसंघैः कृतस्य प्रकाशनस्यैकत्वेन द्वादशसंख्या न स्यात्। प्रधानकर्मणां तु आज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वात् द्वादशत्वसंख्योपपद्यते। एवं शस्त्रवाक्येऽपि योज्यम्॥ विपक्षे बाधमाह—

'अनर्थकं च तद्वचनम्' इति। अग्निष्टुति श्रूयते–'आग्नेया ग्रहा भवन्ति' इति। तत्रैव पुनरप्यन्यदुच्यते–'आग्नेयीषु स्तुवते। आग्नेयीः शंसन्ति' इति। त्वत्पक्षे तद्वचनमनर्थकं स्यात्। चोदकप्राप्तेषु स्तोत्रशस्त्रमन्त्रेष्वाग्नेयग्रहानुसारेण देवतापदस्य ऊहे सति आग्नेयत्वसिद्धेः। प्रधानकर्मपक्षे तु देवताप्रकाशनरूपत्वाभावेन ऊहाभावात् आग्नेयमन्त्रान्तरविधिवचनमर्थवद्भवति॥ पुनरपि हेत्वन्तरमाह—

'अन्यश्चार्थः प्रतीयते' इति। 'संबद्धे वै स्तोत्रशस्त्रे' इति ह्याम्नातम्। संबन्धश्च द्वयोर्भवति न त्वेकस्य। तस्मात् स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते। स च संस्कारपक्षे न संभवति। देवताप्रकाशनरूपस्यार्थस्यैकत्वात्। प्रधानकर्मपक्षे तु स्तोत्रकर्म शस्त्रकर्म चेत्यर्थभेद उपपद्यते। यद्यपि 'ष्टुञ् स्तुतौ', 'शंसु स्तुतौ' इत्येकार्थौ, तथापि 'प्रगीतमन्त्रसाध्यं स्तोत्रम्', 'अप्रगीतमन्त्रसाध्यं शस्त्रम्' इति तयोर्विवेकः॥ हेत्वन्तरमाह—

'अभिधानं च कर्मवत्' इति। यथा प्रधानकर्म 'अग्निहोत्रं जुहोति' इति द्वितीयासंयोगेनाभिहितं, तथा 'प्रउगं शंसति' इत्यभिधीयते। अतस्तत्सादृश्यात् प्रधानकर्मत्वम्॥ हेत्वन्तरमाह—

'फलनिर्वृत्तिश्च' इति। 'स्तुतस्य स्तुतमसि' (तै. सं. ३. २. ७. १) इति स्तोत्रानुमन्त्रणमाम्नाय वाक्यशेषे स्तोत्रफलमेवाम्नातम्–'इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम्' (तै. सं. ३. २. ७. २) इति। न तु देवताप्रयुक्तं फलमाम्नातम्। अतो न देवतासंस्कारः किंतु प्रधानकर्मेति स्थितम्। अनेन तु निर्णयेन प्रयोजनं विकृतिषु ऊहाभावः। संस्कारपक्षे तु यस्यां विकृतौ देवतान्तरं तत्र तद्वाचकं पदमूहनीयं स्यात्। तन्मा भूदिति प्रधानकर्मत्वमुक्तम्। एतच्च दशमाध्याये सूत्रितं–'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्' (जै. सू. १०. ४. ४९) इति। अत्र संग्रहश्लोकौ—

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् (जै. न्या. २. १. ५) इति॥

अग्निष्टोमे सुत्यादिने सूर्योदयात् पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात्। एतच्चैतरेयब्राह्मणे प्रपञ्चितं–'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः' (ऐ. ब्रा. २. १५) इत्यादि ब्राह्मणम्। तस्मिंश्च प्रातरनुवाके 'अग्निमीळे' इत्यादिसूक्तमन्तर्भूतम्। तच्च व्याख्यातम्। प्रातःसवने वैश्वदेवग्रहणादूर्ध्वं प्रउगशस्त्रं होत्रा शंसनीयम्। तच्च शस्त्रं 'वायवा याहि' इत्यादिसप्ततृचात्मकम्। एतच्च ब्राह्मणे 'ग्रहोक्थम्' (ऐ. ब्रा. ३. १) इत्यादिखण्डे प्रपञ्चितम्। तथा पञ्चमाध्याये 'स्तोत्रमग्रे शस्त्रात्' (आश्व. श्रौ. ५. १०) इत्यादिखण्डे सूत्रितं च। अत्रेयमनुक्रमणिका–'वायो वायव्यैन्द्रवायवमैत्रावरुणास्तृचा अश्विना द्वादशाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः सप्तैताः प्रउगदेवताः'

१. ठ–द्वादशसंख्यो॰। २. च-छ-फ–अग्निस्तुतिः। ३. ठ–शंसति। ४. ठ–॰नपरत्वाभावेन। ५. ठ–स्तोत्रशस्त्रशब्दयो॰। ६. घ-छ–स्तोत्रात् फलमेवाम्नातम्; ग-ठ-भ–स्तोत्रात् फलमेवमाम्नातम्। ७. क-ग-घ-ण-त-न-य–स्तुत्यादिने। ८. च-फ–एतच्च।

इति। अस्यायमर्थः। 'वायवा याहि' इत्यादिकं नवर्चं सूक्तम्। 'अग्नि नव' इत्यतो नवशब्दस्यानुवृत्तेः। तत्राद्यस्तृचो वायुदेवताकः। द्वितीय इन्द्रवायुदेवताकः। तृतीयो मित्रावरुणदेवताकः। 'अश्विना' इत्यादिकं द्वादशर्चं सूक्तम्। तत्राद्यस्तृच आश्विनः। द्वितीय ऐन्द्रः। तृतीयो वैश्वदेवः। चतुर्थः सारस्वतः। तेषु तृचेषु प्रतिपाद्या वाय्वादयः सरस्वत्यन्ताः सप्तसंख्याकाः प्रउगशस्त्रस्य देवता इति। मधुच्छन्दसोऽनुवर्तनात् स एवर्षिः। तथैवानुवृत्त्या गायत्रं छन्दः। वायव्ये तृचे प्रथमा ग्रहस्य ऐन्द्रवायवस्यैका पुरोनुवाक्या। एतच्च ब्राह्मणे समाम्नातं–'वायव्या पूर्वा पुरोनुवाक्यैन्द्रवायव्युत्तरा' ( ऐ. ब्रा. २. २६ ) इति। तथा सूत्रितं च–'वायवा याहि दर्शतेन्द्रवायू इमे सुता इत्यनुवाक्ये' ( आश्व. श्रौ. ५. ५ ) इति॥

वायवा याहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम्॥ १॥

वायो इति। आ। याहि। दर्शत। इमे। सोमाः। अरंऽकृताः। तेषाम्। पाहि। श्रुधि। हवम्॥१॥

हे दर्शत हे दर्शनीय वायो कर्मण्येतस्मिन् आ याहि आगच्छ। त्वदर्थम् इमे सोमा अरंकृताः अलंकृताः। अभिषवादिसंस्कारोऽलंकारः। तेषां तान् सोमान्। यद्वा। तेषामेकदेशमित्यध्याहारः। पाहि स्वकीयं भागं पिबेत्यर्थः। तत्पानार्थं हवम् अस्मदीयमाह्वानं श्रुधि शृणु। अत्र यास्कः—'वायवा याहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानम्' ( निरु. १०. २ ) इति॥ दर्शतेत्यत्र 'भृमृदृशि॰' ( उ. सू. ३. ३९० ) इत्यादिसूत्रेण अतच्प्रत्यय औणादिकः। चित्त्वादन्तोदात्तस्य आमन्त्रितत्वादनुदात्तत्वम्। 'अर्तिस्तुसु॰' ( उ. सू. १. १३७ ) इत्यादिना मन्प्रत्ययान्तस्य सोमशब्दस्य नित्स्वरः। अलमित्यत्र छान्दसो रेफादेशः। अरंकृतशब्दे समासान्तोदात्तत्वम् (पा. सू. ६. १. २२३) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरप्राप्तौ (पा. सू. ६. २. २) 'भूषणेऽलम्' (पा. सू. १. ४. ६४) इत्यलंशब्दस्य गतिसंज्ञायां 'गतिकारक॰' ( पा. सू. ६. २. १३९ ) इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन 'गतिरनन्तरः' ( पा. सू. ६. २. ४९ ) इति पूर्वपदप्रकृतिस्वरत्वम्। निपातत्वादलंशब्द आद्युदात्तः। पाहीत्यत्र पिबादेशाभावश्छान्दसः। श्रुधीत्यत्र 'श्रुशृणु॰' ( पा. सू. ६. ४. १०२ ) इत्यादिना हेर्धिभावः। तिङन्तादुत्तरस्य निघातो नास्ति। 'सेर्ह्यपिच्च' ( पा. सू. ३. ४. ८७ ) इति पित्त्वनिषेधादनुदात्ते निवारिते प्रत्ययस्वरः। हवमित्यत्र ह्वयतिधातोः 'बहुलं छन्दसि' ( पा. सू. ६. १. ३४ ) इति संप्रसारणे सति उकारान्तत्वात् 'ऋदोरप्' ( पा. सू. ३. ३. ५७ ) इति अप्प्रत्ययः। तस्य पित्त्वादनुदात्ते सति धातुस्वरः शिष्यते। संहितायां श्रुधीत्यस्य 'अन्येषामपि दृश्यते' ( पा. सू. ६. ३. १३७ ) इति दीर्घः।

वायं उक्थेभिर्जरन्ते त्वामच्छा जरितारः। सुतसोमा अहर्विदः॥ २॥

वायो इति। उक्थेभिः। जरन्ते। त्वाम्। अच्छ। जरितारः। सुतऽसोमाः। अहःऽविदः॥ २॥

हे वायो जरितारः स्तोतार ऋत्विग्यजमानाः त्वामच्छ त्वामभिलक्ष्य उक्थेभिः आज्यप्रउगादिशस्त्रैः जरन्ते स्तुवन्ति। कीदृशाः। सुतसोमाः अभिषुतेन सोमेनोपेताः। अहर्विदः। अहःशब्द एकेनाह्ना

१. ठ–इत्यत्र। २. ग-घ-च-छ-ण-फ-भ–ऐन्द्रवायुदेवताकः। ३. ग-घ-च-छ-ण-फ-भ–मैत्रावरुण॰ ४. ग-घ-च-छ-ण-फ-भ–'अलंकृताः' नास्ति। ५. च-फ–सोमानाम्।

निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः। ऋत्वभिज्ञा इत्यर्थः। ' अर्चति गायति ' इत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु ' जरते ह्वयति ' ( नि. ३. १४. ८ ) इति पठितम्। स्तुतेरपि अर्चनाविशेषत्वात् औचित्येनात्र स्तुत्यर्थो जरतिधातुः। अच्छशब्दस्य संहितायां ' निपातस्य च ' ( पा. सू. ६. ३. १३६ ) इति दीर्घः। सुतसोमा इत्यत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः ( पा. सू. ६. २. १ )। अहर्विद इत्यत्र समासस्वरं ( पा. सू ६. १. २२३ ) बाधित्वा ' तत्पुरुषे तुल्यार्थ०' ( पा. सू. ६. २. २ ) इत्यादिना द्वितीयापूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादत्वेन ' गतिकारकोपपदात्कृत् ' ( पा. सू. ६. २. १३९ ) इति कृदुत्तरपदप्रकृतिस्वरः॥

## वायो तव॑ प्रपृञ्चती धेना॑ जिगाति दाशुषे॑। उरूची सोम॑पीतये ॥ ३ ॥

वायो इति॑। तव॑। प्रऽपृञ्चती। धेना॑। जिगाति। दाशुषे॑। उरूची। सोम॑ऽपीतये ॥ ३ ॥

हे वायो तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति गच्छति। हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूते इत्यर्थः। कीदृशी धेना। प्रपृञ्चती प्रकर्षेण सोमसंपर्कं कुर्वती सोमगुणं वर्णयन्तीत्यर्थः। उरूची उरून् बहून् यजमानान् गच्छन्ती। ये ये सोमयाजिनस्तान् सर्वान् वर्णयन्तीत्यर्थः॥ प्रपृञ्चतीत्यत्र ' शतुरनुमः०' ( पा. सू. ६. १. १७३ ) इति ङीप् उदात्तः। ' श्लोकः धारा ' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु ' गणः धेना ग्नाः ' ( नि. १. ११. ३९ ) इति पठितम्। ' वर्तते अयते ' इत्यादिषु द्वाविंशाधिकशतसंख्येषु गतिकर्मसु ' गाति जिगाति ' ( नि. २. १४. ११३ ) इति पठितम्। दाशुषे इत्यत्र ' गत्यर्थकर्मणि०' ( पा. सू. २. ३. १२ ) इति चतुर्थी। उरूचीत्यत्र गौरादित्वेन ( पा. सू. ४. १. ४१ ) ङीषि कृते प्रत्ययस्वरः। सोमपीतये इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः॥

## इन्द्र॑वायू इमे सुता उप प्रयो॑भिरा ग॑तम्। इन्द॑वो वामुशन्ति हि ॥ ४ ॥

इन्द्र॑वायू इति॑। इमे। सुताः। उप॑। प्रय॑ःऽभिः। आ। गतम्। इन्द॑वः। वाम्। उशन्ति। हि ॥४॥

एतस्या ऋच ऐन्द्रवायवग्रहे द्वितीयपुरोनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः। हे इन्द्रवायू भवदर्थम् इमे सोमाः सुताः अभिषुताः। तस्मात् युवां प्रयोभिः अन्नैरस्मभ्यं दातव्यैः सह उप आ गतम्, अस्मत्समीपं प्रति आगच्छतम्। हि यस्मात् इन्दवः सोमाः वां युवाम् उशन्ति कामयन्ते तस्मात् आगमनमुचितम्॥ इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वम्। प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि। प्रीञ्धातोरन्तर्भावितण्यर्थात् ( पा. सू. ३. १. २६ ) असुन्प्रत्यये सति नित्स्वरः। गमिधातोर्लोण्मध्यमपुरुषद्विवचने ' बहुलं छन्दसि ' ( पा. सू. २. ४. ७३ ) इति शपो लुकि सति ' अनुदात्तोपदेश०' ( पा. सू. ६. ४. ३७ ) इत्यादिना मकारलोपः। ततो गतमिति भवति। ' उन्दी क्लेदने ' इति धातोः ' उन्देरिच्चादेः ' (उ. सू. १. १२) इति उन्प्रत्ययः। आद्यक्षरस्य इकारादेशः। तत इन्दुशब्दस्य नित्स्वरः। सोमरसस्य द्रवत्वात् क्लेदनं संभवति। युष्मच्छब्दादेशस्य वामित्येतस्य 'अनुदात्तं सर्वमपादादौ' (पा. सू. ८. १. १८ ) इत्यनुदात्तः। उशन्तीत्यस्य निघाते ' हि च ' ( पा. सू. ८. १. ३४ ) इति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः। हिशब्दस्य निपातस्वरः॥

वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू। तावा यातमुप द्रवत् ॥ ५ ॥

वायो इति। इन्द्रः। च। चेतथः। सुतानाम्। वाजिनीवसू इति वाजिनीऽवसू।
तौ। आ। यातम्। उप। द्रवत् ॥ ५ ॥

अत्र चकारेणान्यः समुच्चीयते। संनिहितत्वाद्वायुरेव। हे वायो त्वम् इन्द्रश्च युवामुभौ सुतानाम् अभिषुतान् सोमान् चेतथः जानीथः। यद्वा। अभिषुतानां सोमानां विशेषमित्यध्याहारः। कीदृशौ युवाम्। वाजिनीवसू। वाजिनीशब्दो यद्यप्युषोनामसु पठितस्तथाप्यत्रासंभवान्न गृह्यते। वाजोऽन्नम्। तद्यस्यां हविः संततावस्ति सा वाजिनी। तस्यां वसत इति तौ वाजिनीवसू। आमन्त्रितत्वादनुदात्तः। तौ तथाविधौ युवां द्रवत् क्षिप्रम् उप समीपे आ यातम् आगच्छतम्। षड्विंशतिसंख्याकेषु क्षिप्रनामसु 'नु क्षिप्रं मक्षु द्रवत्' (नि. २. १५. ३) इति पठितम्। तत्र फिट्स्वरः ॥ ॥ ३ ॥

वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम्। मक्ष्वित्था धिया नरा ॥ ६ ॥

वायो इति। इन्द्रः। च। सुन्वतः। आ। यातम्। उप। निःऽकृतम्।
मक्षु। इत्था। धिया। नरा ॥ ६ ॥

हे वायो त्वम् इन्द्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतं संस्कृतं संस्कर्तारं वा सोमम् उप आ यातम् आगच्छतम्। नरा हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ युवयोरागतयोश्च सतोः धिया अमुना कर्मणा मक्षु त्वरया संस्कारः संपत्स्यते। इत्था सत्यम्॥ वायो इत्यस्य 'आमन्त्रितस्य' (पा. सू. ६. १. १९८) इति षाष्ठिकमाद्युदात्तत्वम्। इन्द्रशब्दः 'ऋज्रेन्द्र' (उ. सू. २. १८६) इत्यादिना रन्प्रत्ययान्तत्वेन निपातितो 'ञ्नित्यादिर्नित्यम्' (पा. सू. ६. १. १९७) इत्याद्युदात्तः। चशब्दः 'चादयोऽनुदात्ताः' (फि. सू. ८४) इत्यनुदात्तः। सुन्वत इत्यत्र 'शतुरनुमो नद्यजादी' (पा. सू. ६. १. १७३) इति विभक्तेरुदात्तत्वम्। 'निरित्येष समित्येतस्य स्थाने' (निरु. १२. ७) इति यास्कः। कृतशब्द आदिकर्मणि कर्तरि क्तः (पा. सू. ३. ४. ७१)। संस्कर्तुं प्रवृत्त इत्यर्थः। 'कुगतिप्रादयः' (पा. सू. २. २. १८) इति समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'थाथघञ्क्ताजबित्रकाणाम्' (पा. सू. ६. २. १४४) इत्यन्तोदात्तः। 'गतिरनन्तरः' (पा. सू. ६. २. ४९)। इति तु नित्यः उदात्तत्वं न भवति। तद्धि कर्मणि क्ते विहितम् (पा. सू. ६. २. ४८)। निष्करोतीति निष्कृदिति क्विबन्तव्याख्याने तु 'गतिकारकोपपदात्कृत्' (पा. सू. ६. २. १३९) इति ऋकार उदात्तः स्यात्। धिया। 'सावेकाचस्तृतीयादिः' (पा. सू. ६. १. १६८) इति विभक्तिरुदात्ता। नरा। 'सुपां सुलुक्' (पा. सू. ७. १. ३९) इत्यादिना संबोधनद्विवचनस्य डादेशः। पदात्परत्वात् 'आमन्त्रितस्य' (पा. सू. ८. १. १९) इत्याष्टमिको निघातः ॥

---

१. ठ–त्वं च इन्द्रश्च। २. च-छ-ण-फ-भ–'तौ' नास्ति। ३. ग-च-फ-भ–निष्कृतं संस्कर्तारम्; छ-ण–निष्कृतं संस्कृतम्। ४. ठ–मक्षु मङ्क्षु त्वरया। ५. च-छ-फ–'स्यात्' इत्यस्यानन्तरं 'धीरिति अप इत्यादि षड्विंशतौ कर्मसु पठितः' इत्यधिकम्।

'मित्रं हुवे' इति मैत्रावरुणस्तृचो गवामयने आरम्भणीये चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणस्य स्तोत्रियः। तत्रैव अभिप्लवषडहेऽपि विनियुक्तः। तथा चाश्वलायनेन 'चतुर्विंशे होताऽजनिष्ट' इत्यादिखण्डे 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आश्व. श्रौ. ७. २) इत्यादि सूत्रितम्। तथाह 'अभिप्लवषडहस्याहानि' इति खण्डे परिशिष्टानावापानुद्धृत्य 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आश्व. श्रौ. ७. ५) इति च॥

## मि॒त्रं हु॑वे पू॒तद॑क्षं॒ वरु॑णं च रि॒शाद॑सम्। धियं॑ घृ॒ताचीं॒ साध॑न्ता॥ ७॥

मि॒त्रम्। हु॒वे॒। पू॒तऽद॑क्षम्। वरु॑णम्। च॒। रि॒शाद॑सम्। धिय॑म्। घृ॒ताची॑म्। साध॑न्ता॥७॥

अहमस्मिन् कर्मणि हविष्प्रदानाय पूतदक्षं पवित्रबलं मित्रं हुवे। तथा रिशादसं रिशानां हिंसकानाम् अदसम् अत्तारं वरुणं च हुवे आह्वयामि। कीदृशौ मित्रावरुणौ। घृतमुदकमञ्चति भूमिं प्रापयति या धीर्विर्पणकर्म तां घृताचीं धियं साधन्ता साधयन्तौ कुर्वन्तौ॥ मित्रशब्दः पुँल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्तः। हुवे इति ह्वयतेः 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति शपो लुकि सति 'ह्वः संप्रसारणम्' (पा. सू. ६. १. ३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा. सू. ६. १. ३४) इति संप्रसारणे उवङादेशः। 'तिङ्ङतिङः' (पा. सू. ८. १. २८) इति निघातः। पूतशब्दः प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वरुणशब्दः 'कृवृदारिभ्य उनन्' (उ. सू. ३. ३३३) इति उननप्रत्ययान्तो नित्वादाद्युदात्तः। रिशन्ति हिंसन्तीति रिशाः शत्रवः। 'इगुपधज्ञाप्रीकिरः कः' (पा. सू. ३. १. १३५) इति कः। प्रत्ययस्वरेणोदात्तः। तानत्तीति रिशादाः, तम्। 'सर्वधातुभ्योऽसुन्' (उ. सू. ४. ६२८) इत्यसुन्प्रत्यये नित्स्वरेणोत्तरपदमाद्युदात्तम्। कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते। शेषनिघाते सति 'एकादेश उदात्तेनोदात्तः' (पा. सू. ८. २. ५) इति सवर्णदीर्घोऽप्युदात्त एव। 'धीः' इति 'अपः' इत्यादिषड्विंशतौ कर्मनामसु (नि. २. १. २१) पठितः। प्रातिपदिकस्वरेणान्तोदात्तः। घृतमञ्चतीति घृताची। 'ऋत्विग्दधृक्' (पा. सू. ३. २. ५९) इत्यादिना क्विनि 'अनिदिताम्' (पा. सू. ६. ४. २४) इति नकारलोपः। 'अञ्चतेश्चोपसंख्यानम्' (पा. सू. ४. १. ६. २) इति ङीप्। 'अचः' (पा. सू. ६. ४. १३८) इत्यकारलोपे 'चौ' (पा. सू. ६. ३. १३८) इति दीर्घत्वम्। घृतशब्दः 'नब्विषयस्यानिसन्तस्य' (फि. सू. २६) इत्याद्युदात्तं बाधित्वा 'घृतादीनां च' (फि. सू. २१) इत्यन्तोदात्तः। 'समासस्य' (पा. सू. ६. १. २२३) इत्यन्तोदात्तस्यापवादकं 'तत्पुरुषे तुल्यार्थ' (पा. सू. ६. २. २) इतिपूर्वपदप्रकृतिस्वरं बाधित्वा 'गतिकारकोपपदात्' (पा. सू. ६. २. १३९) इति उत्तरपदप्रकृतिस्वरेणोदात्तस्य धात्वकारस्य लोपे सति 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा. सू. ६. १. १६१) इति ङीप उदात्तत्वे प्राप्ते 'चौ' (पा. सू. ६. १. २२२) इति पूर्वपदान्तोदात्तत्वम्। साधन्ता। 'राध साध संसिद्धौ' इत्यस्मादन्तर्भावितण्यर्थात् लटः शत्रादेशे (पा. सू. ३. २. १२४) श्नुं बाधित्वा व्यत्ययेन शप्। अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम् (पा. सू. ६. १. १८६)। द्वितीयाद्विवचनस्य शपश्च 'अनुदात्तौ सुप्पितौ' (पा. सू. ३. १. ४) इत्यनुदात्तत्वे 'धातोः' (पा. सू. ६. १. १६२) इति धातुस्वर एव शिष्यते। 'सुपां सुलुक्' (पा. सू. ७. १. ३९) इत्यादिना विभक्तेराकारादेशः॥

---

१. ठ-तथा　२. ग-घ–षड्विंशति।　३. ग-घ-छ-ण-भ–इत्यनुदात्तत्वम्।

**ऋतेन॑ मि॒त्राव॑रुणावृतावृधावृतस्पृशा । क्रतुं॑ बृ॒हन्त॑माशाथे ॥ ८ ॥**

ऋ॒तेन॑ । मि॒त्रा॒व॒रु॒णौ॒ । ऋ॒त॒ऽवृ॒धौ॒ । ऋ॒त॒ऽस्पृ॒शा॒ । क्रतु॑म् । बृ॒हन्त॑म् । आ॒शा॒थे॒ इति॑ ॥ ८ ॥

हे मित्रावरुणौ युवां क्रतुं प्रवर्तमानमिमं सोमयागम् आशाथे आनशाथे व्याप्तवन्तौ । केन निमित्तेन । ऋतेन अवश्यंभावितया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । ऋतावृधौ । ‘ ऋतमित्युदकनाम ’ (निरु. २. २५), ‘ सत्यं वा यज्ञं वा ’ ( निरु. ४. १९ ) इति यास्कः । उदकादीनामन्यतमस्य वर्धयितारौ । अत एव ऋतस्पृशा उदकादीन् स्पृशन्तौ । कीदृशं क्रतुम् । बृहन्तम् अङ्गैरुपाङ्गैश्च अतिप्रौढम्[1] ॥ ऋतशब्दो घृतादित्वादन्तोदात्तः । मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ । ‘ देवताद्वन्द्वे च ’ ( पा. सू. ६. ३. २६ ) इति पूर्वपदस्य आनङा-देशः । ऋतस्य वर्धयितारौ इत्यर्थेऽन्तर्भावितण्यर्थात् वृधेः क्विप् । ‘ अन्येषामपि दृश्यते ’ ( पा. सू. ६. ३. १३७ ) इति पूर्वपदस्य दीर्घः । ऋतस्पृशा । ‘ सुपां सुलुक्० ’ ( पा. सू. ७. १. ३९ ) इति डादेशः । मित्रावरुणावित्याद्यामन्त्रितत्रयस्य स्वस्वपूर्वपदात् परत्वात् ‘ आमन्त्रितस्य ’ ( पा. सू. ८. १. १९ ) इति आष्टमिको निघातः । ननु ऋतेन इत्येतस्य ‘ सुबामन्त्रिते पराङ्गवत्स्वरे ’ ( पा. सू. २. १. २ ) इति पराङ्गवद्भावेन आमन्त्रितानुप्रवेशात् पादादित्वेन पदात्परत्वेन वा आष्ट-मिकनिघाताभावात् ‘ आमन्त्रितस्य च ’ ( पा. सू. ६. १. १९८ ) इत्याद्युदात्तेन भवितव्यमिति चेत्, न । पराङ्गवद्भावस्य सुबामन्त्रिताश्रयत्वेन पदविधित्वात् ‘ समर्थः पदविधिः ’ ( पा. सू. २. १. १ ) इति नियमात् । इह च ऋतेन मित्रावरुणौ इत्यनयोः आशाथे इति आख्यातेनैवान्वयेन परस्परमसामर्थ्यात् । यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र पराङ्गवद्भावात् पादादेः[4] आद्यु-दात्तत्वं भवत्येव । यथा ‘ मरुतां पितस्तदहं गृणामि ’ इति । ‘ मृग्रोरुतिः ’ ( उ. सू. १. ९४ ) इति उतिप्रत्ययान्तत्वेन ‘ पृश्नियै वै पयसो मरुतो जाताः ’ ( तै. सं. २. २. ११. ४ ) इत्यादौ अन्तोदात्तोऽपि हि मरुच्छब्दो ‘ मरुतां पितः’ इत्यत्र सामर्थ्यात् पराङ्गवद्भावादेव आद्युदात्तो जातः । प्रकृते तु ऋतेन इत्यस्यासामर्थ्यादेव न पराङ्गवद्भाव इति । ऋतावृधावित्यत्र द्वितीयामन्त्रितस्य निघाते कर्तव्ये ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ ( पा. सू. ८. १. ७२ ) इति प्रथमामन्त्रितेन अविद्यमानवद्भवितव्यमिति चेत्, भवतु । अत एव तस्याव्यवधायकत्वात् ऋतेन इति प्रथमपदात् परत्वेनैव द्वितीयामन्त्रितं निहनिष्यते । यथा ‘ इमं मे गङ्गे यमुने ’ ( ऋ. सं. १०. ७५. ५ ) इत्यादौ गङ्गे-शब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव मे इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य निघातः । किं च प्रकृते मित्रावरुणौ इत्यामन्त्रितं सामान्यवचनम् । तस्य विशेषणतया विशेषवचनम् ऋता-वृधाविति[5] । अतः ‘ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ’ ( पा. सू. ८. १. ७३ ) इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि निरन्तरायो द्वितीयस्य निघातः ॥ ननु एवमपि ‘ अपादादौ ’ ( पा. सू. ८. १. १८ ) इत्यनुवृत्तेर्ऋतावृधेत्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन । अत एव हि ‘ इमं मे गङ्गे ’ इत्यत्र शुतुद्रिपदस्य पदात् परस्य आमन्त्रितस्यापि[6] पादादित्वादेव अनिघाताद्यु-दात्तत्वं जातम् । तद्वदत्रापि भवितव्यं वक्तव्यो वा[7] विशेष इति ॥ उच्यते—मित्रावरुणपदस्य ‘ सुबा-मन्त्रिते० ’ ( पा. सू. २. १. २ ) इति पराङ्गवद्भावेन परानुप्रवेशादेव ऋतावृधेत्यस्य न पादादित्वम् । शुतुद्रिपदमपि तर्ह्येवमेव पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेन न पादादिरिति निहन्येत इति चेत, न ।

१. ठ–उपेतम् । २. छ-ण-भ–०नुवेशात् । ३. च-छ-फ–च । ४. च-छ-ण-फ-भ–पदादेः । ५. ग-घ-च-छ-ण-त-फ-भ–ऋतावृधेति । ६. च-ण-भ–‘ आमन्त्रितस्य ’ नास्ति । ७. छ-ण–‘ वा ’ नास्ति ।

पराङ्गवद्भावस्तावत् सुबन्तमामन्त्रितं चमश्रित्य प्रवृत्तः[1] पदविधिः । अतस्तयोः सत्येव परस्परान्वये पराङ्गवद्भावेन भवितव्यं ' समर्थः पदविधिः ' ( पा. सू. २. १. १ ) इति नियमात् । श्रुतुद्भिसरस्वतिपदयोश्च न परस्परेणान्वयः किंतु सचत इत्यनेन इत्यसामर्थ्यात् न पराङ्गवद्भावः । प्रकृते तु मित्रावरुणौ ऋतावृधौ इति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्तिसामर्थ्यमिति भवितव्यं पराङ्गवद्भावेन । यथा ' मरुतां पितः' इत्यत्रेति विशेषः ॥ ननु अत एव तर्हि मित्रावरुणपदस्य पराङ्गवद्भावेन पादादित्वात् ' अपादादौ ' इति पर्युदासादामन्त्रितनिघातो न स्यादिति चेत्, न । पूर्वं सुबन्तं परं चामन्त्रितमाश्रित्य यः स्वरः प्रवर्तते तत्र ' सुबामन्त्रिते ' इति पराङ्गवद्भावः । भवति चैवंविध ऋतावृधपदनिघात इति । तत्र पूर्वस्य पराङ्गवद्भावेनापादादित्वात् स प्रवर्तते । मित्रावरुणपदनिघातस्तु पूर्वमेव पदमुपजीवति न परमामन्त्रितमिति न पराङ्गवद्भावः ॥ ननु पराङ्गवद्भाववन्निघातोऽपि पदविधिरिति ऋतेन इत्यनेनासामर्थ्यात् ततः पदात्परस्य मित्रावरुणपदस्य न स्यात् इति चेत्, न। 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' ( पा. सू. २. १. १. ११) इति निघाते पदविधावपि समानवाक्यस्वमेव पर्याप्तं, न पराङ्गवद्भाववत् परस्परान्वयोऽपीत्यलम् । क्रतुम् । ' कृञः कतुः ' ( उ. सू. १. ७७ )। प्रत्ययस्वरेणादिरुदात्तः । आशाथे आनशाथे । ' छन्दसि लुङ्लङ्लिटः ' ( पा. सू. ३. ४. ६ ) इति वर्तमाने लिट् । नुडभावश्छान्दसः ॥

कुवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ९ ॥

कुवी इति । नः । मित्रावरुणा । तुविऽजाता । उरुऽक्षया । दक्षम् । दधाते इति । अपसम् ॥९॥

मित्रावरुणावेतौ देवौ ^नः अस्माकं ^दक्षं बलम् ^अपसं कर्म च ^दधाते पोषयतः । कीदृशौ । ^कवी मेधाविनौ । ^तुविजातौ बहूनामुपकारकतया समुत्पन्नौ । ^उरुक्षया बहुनिवासौ । 'विप्रः धीरः' इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु ' कविः मनीषी ' ( नि. ३. १५. १० ) इति पठितम् । ' उरु तुवि ' (नि. ३. १. १, २) इत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ । ' ओजः पाजः ' इत्यादिषु अष्टाविंशतिसंख्याकेषु बलनामसु ' दक्षः वीळु ' ( नि. २. ९. १३ ) इति पठितम् । अपःशब्दः षड्विंशतिसंख्याकेषु कर्मनामसु पठितः ( नि. २. १. १ ) ॥ मित्रावरुणा । मित्रशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। वरुणशब्दो निस्स्वरेणाद्युदात्तः । द्वन्द्वे ' देवताद्वन्द्वे च ' ( पा. सू. ६. २. १४१ ) इत्युभौ अवशिष्येते । तुविजातौ । बहूनामुपकारकतया तत्संबन्धित्वेन जाताविति षष्ठीसमासे समासान्तोदात्तत्वम् । चतुर्थी समासे हि ' क्ते च ' ( पा. सू. ६. २. ४५ ) इति पूर्वपदप्रकृतिस्वरः स्यात् । उरूणां बहूनां क्षयौ उरुक्षयौ । ' क्षि निवासगत्योः' इति धातोः क्षियन्त्यस्मिन्निति क्षयः । अधिकरणे ' एरच् ' ( पा. सू. ३. ३. ५६ ) इत्यच्प्रत्ययान्तस्य ' चितः ' ( पा. सू. ६. १. १६३ ) इत्यन्तोदात्तत्वे प्राप्ते ' क्षयो निवासे ' ( पा. सू. ६. १. २०१ ) इत्याद्युदात्तत्वं विहितम् । समासे तु ' समासस्य ' ( पा. सू. ६. १. २२३ ) इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाथादिस्वरेणान्तोदात्तेन बाध्यते, तथापि ' परादिश्छन्दसि बहुलम् ' ( पा. सू. ६. २. १९९ ) इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम् । दक्षो दक्षतेरुत्साहकर्मणो घञ् । ञित्वादाद्युदात्तः । आप्यते फलमनेन इति अपः कर्म । ' आपः कर्माख्यायां ह्रस्वो नुट् च वा ' ( उ. सू. ४. ६४७ ) इत्यसुनन्तस्य ' अपसस्पारे ' ( ऋ. सं. ६. ६९. १ ) इत्यादौ निस्वादाद्युदात्तस्यापि अपःशब्दस्य अत्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् ॥　　॥ ४ ॥

१. च-त-थ-फ-प्रवृत्तः । २. ठ-अन्तोदात्तत्वेन ।

'अश्विना' इति द्वादशर्चं तृतीयं सूक्तम् । तत्र आश्विनस्तृचः प्रातरनुवाकस्य आश्विने क्रतौ विनियुक्तः । तथा च सूत्रितम्–'अथाश्विन एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिषः' ( आश्व. श्रौ. ४. १५ ) इति ।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ॥ १ ॥

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ॥ १ ॥

हे अश्विनौ युवाम् इषः हविर्लक्षणान्यन्नानि चनस्यतम् इच्छतं भुञ्जाथामित्यर्थः । यद्यपि चनःशब्दोऽन्नवाची तथापि इषः इत्यनेन सह नास्ति पुनरुक्तिदोषः, इच्छामुपलक्षयितुं प्रयुक्तत्वात् । 'वक्तव्यमुवाच', 'समूलकाषं कषति' इत्यादौ यथा पुनरुक्त्यभावस्तद्वत् । कीदृशीरिषः । यज्वरीः यागनिष्पादिकाः । कीदृशावश्विनौ । द्रवत्पाणी हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ । शुभस्पती शोभनस्य कर्मणः पालकौ । पुरुभुजा विस्तीर्णभुजौ[1] बहुभोजिनौ वा ॥ अश्विना । 'आमन्त्रितस्य' ( पा. सू. ६. १. १९८ ) इति षाष्ठिकमाद्युदात्तत्वम् । यज्वरीः । यागकरणानामप्यन्नानाम् 'असिश्छिनत्ति' इतिवत् स्वव्यापारे कर्तृत्वविवक्षया 'सुयजोर्ङ्वनिप्' ( पा. सू. ३. २. १०३ ) इति ङ्वनिप्प्रत्ययः । 'वनो र च' ( पा. सू. ४. १. ७ ) इति ङीप् । तत्संनियोगेन रेफादेशः । प्रत्ययद्वयस्य[2] 'अनुदात्तौ सुप्पितौ' ( पा. सू. ३. १. ४ ) इत्यनुदात्तत्वात् धातुस्वर एवावशिष्यते । इषःशब्दे शसोऽनुदात्तत्वात् प्रातिपदिकस्वर एव शिष्यते । द्रवन्तौ धावन्तौ पाणी ययोस्तयोः संबोधनं द्रवत्पाणी इति । तस्यामन्त्रिताद्युदात्तत्वं न पुनराष्टमिको निघातः 'अपादादौ' इति प्रतिषेधात् । इषः इति पूर्वपदस्य 'सुबामन्त्रिते' ( पा. सू. २. १. २ ) इति पराङ्गवद्भावेन 'मित्रावरुणावृतावृधौ' इतिवत् अपादादित्वमिति चेत्, न । तत्र सामानाधिकरण्येन परस्परान्वयात् । इह तु इषः द्रवत्पाणी इत्यनयोः सरस्वतिशुतुद्रिपदवत् असामर्थ्येन प्रयुक्तत्वात् । शुभः इति 'शुभ शुम्भ दीप्तौ' इत्यस्य संपदादित्वात् भावे क्विबन्तस्य षष्ठ्येकवचनम् । 'षष्ठ्याः पतिपुत्र०' ( पा. सू ८. ३. ५३ ) इति विसर्जनीयस्य सत्वम् । तस्य पती इत्यामन्त्रिते परतः पराङ्गवद्भावात् आमन्त्रिताद्युदात्तत्वम् । न पुनराष्टमिको निघातः । तस्मिन् कर्तव्ये द्रवत्पाणी इति पूर्वस्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' ( पा. सू. ८. १. ७२ ) इत्यविद्यमानवद्भावेन पादादित्वात् 'अपादादौ' इति प्रतिषेधात् ॥ ननु 'मित्रावरुणावृतावृधौ' इतिवत् 'नामन्त्रिते समानाधिकरणे' ( पा. सू. ८. १. ७३ ) इत्यविद्यमानवद्भावप्रतिषेधेन भवितव्यमिति चेत्, न । मित्रावरुणपदं हि सामान्यवचनमिति युक्तः तस्याविद्यमानवत्त्वप्रतिषेधः । द्रवत्पाणी पदं तु न तथेति वैषम्यात् । पुरुभुजा पुरू विस्तीर्णौ भुजौ ययोस्तौ । आमन्त्रिताद्युदात्तत्वम् । 'सुपां सुलुक्' ( पा. सू. ७. १. ३९ ) इति डादेशः । पुरु बहु भुञ्जाते इति वा । चनस्यतम् इत्यत्र 'चायतेरन्ने ह्रस्वश्च' ( उ. सू. ४. ६३९ ) इति 'चायृ पूजानिशामनयोः' इत्यस्य असुन्प्रत्यये आकारस्य ह्रस्वे चानुकृष्टे नुडागमे च ( उ. सू. ४. ६३६ ) 'लोपो व्योर्वलि' ( पा. सू. ६. १. ६६ ) इति यकारलोपे चनःशब्दोऽन्ननामसु पठितः ( निरु० ६. १६ ) । तत् आत्मनः इच्छतीति 'सुप आत्मनः क्यच्' ( पा. सू. ३. १. ८ ) । 'सनाद्यन्ताः' ( पा. सू. ३. १. ३२ )

१. ग-य–बहुभोजिनौ । २. ग-घ-छ-ण-य–प्रत्ययत्रयस्य ।

इति धातुत्वात् लोण्मध्यमद्विवचनम्। क्यचः प्रत्ययस्वरेणोदात्तत्वम्। शपा एकादेशे कृते ‘ एकादेश उदात्तेनोदात्तः ’ ( पा. सू. ८. २. ५ ) इत्युदात्तः। उपर्याख्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वम्। न च ‘ तिङ्ङतिङः ’ ( पा. सू. ८. १. २८ ) इति निघातः। पूर्वस्यामन्त्रितस्याविद्यमानवद्भावेन पदादपरत्वात् पादादित्वाद्वा तदप्राप्तेः ॥

अश्वि॑ना॒ पुरु॑दंससा॒ नरा॒ शवी॑रया धि॒या। धिष्ण्या॒ वन॑तं॒ गिरः॑ ॥ २ ॥

अश्वि॑ना। पुरु॑ऽदंससा। नरा॑। शवी॑रया। धि॒या। धिष्ण्या॑। वन॑तम्। गिरः॑ ॥ २ ॥

ᵛअश्विना हे अश्विनौ युवां ᵛगिरः अस्मदीयाः स्तुतीः ᵛधिया आदरयुक्तया बुद्ध्या ᵛवनतं संभजतं स्वीकुरुतम्। कीदृशावश्विनौ। ᵛपुरुदंससा बहुकर्माणौ। षड्विंशतिसंख्याकेषु कर्मनामसु ‘ दंसः ’ ( नि. २. १. ३ ) इति पठितम्। ᵛनरा नेतारौ। ᵛधिष्ण्या धाष्ट्र्ययुक्तौ बुद्धिमन्तौ वा। कीदृश्या धिया। ᵛशवीरया गतियुक्तया अप्रतिहतप्रसरयेत्यर्थः ॥ अश्विना इत्याद्यामन्त्रितचतुष्टयस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। पादादित्वात् न आष्टमिको निघातः। पुरुदंससा इत्यपि हि पादादिरेव ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ ( पा. सू. ८. १. ७२ ) इति पूर्वस्याविद्यमानवत्त्वात्। ‘ नामन्त्रिते समानाधिकरणे ’ ( पा. सू. ८. १. ७३ ) इति पूर्वस्य सामान्यवचनत्वेन अस्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेत्, न। अश्विशब्दवत् पुरुदंसःशब्दस्यापि अश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात्। सामान्यवचनं नाविद्यमानवदित्युक्तेऽर्थात् परस्य विशेषवचनत्वावगमात्। उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात् सहाप्रयोग इति चेत्, न। गुणविशेषसंकीर्तनवत् प्रसिद्धानेकनामविशेषसंबन्धसंकीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वात्; निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात्। अश्विपुरुदंसःशब्दयोरेकार्थवृत्तित्वेऽपि पर्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेन असामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः। भिन्नप्रवृत्तिनिमित्तानामेव ह्येकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। अश्विशब्दस्याश्वसंबन्धो निमित्तं पुरुदंसःशब्दस्य तु बहुकर्मसंबन्ध इति प्रवृत्तिनिमित्तभेद इति चेत्, न। तद्धि द्वयं व्युत्पत्तिमात्रनिमित्तं न प्रवृत्तिनिमित्तम्। व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने वृक्षमहीरुहशब्दयोरपि तथात्वप्रसङ्गः। अत एव हि ‘ इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि ’ ( तै. सं. ७. १. ६. ८ ) इत्यत्र सहस्रतमीप्रशंसोपयोगित्वेन इडादिशब्दानाम् ‘ एतानि ते अघ्निये नामानि ’ इति वचनेन पर्यायाणामपि अनेकविशिष्टनामसंबन्धनिबन्धनस्तुत्यर्थत्वेनैव सहप्रयोगः। स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेदविवक्षायामपि पर्यायत्वेनासामानाधिकरण्यादेव ‘ नामन्त्रिते ’ इति निषेधाभावात् ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ इति पूर्वपूर्वस्याविद्यमानवत्त्वात् सर्वेषां षाष्ठिकमाद्युदात्तत्वम्। तद्वत् प्रकृतेऽपि। ‘ कॄशॄपॄकटिपटिशौटिभ्य ईरन् ’ ( उ. सू. ४. ४७० ) इत्यतः ‘ ईरन् ’ इत्यनुवृत्तौ ‘ बहुलवचनादन्यत्रापि ’ इत्यनेन ‘ शु गतौ ’ इति धातोरीरन्प्रत्यये कृते सति नित्त्वात् शवीरयाशब्द आद्युदात्तः। धियेत्यत्र ‘ सावेकाचः ’ ( पा. सू. ६. १. १६८ ) इति विभक्तिरुदात्ता। वनतमित्यत्र शपः पित्त्वात् लोण्मध्यमद्विवचनस्य लसार्वधातुकत्वाच्च ‘ वन षण संभक्तौ ’ इति धातूदात्तत्वमेव शिष्यते। न च ‘ तिङ्ङतिङः ’ ( पा. सू. ८. १. २८ ) इति निघातः, पूर्वामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वात्। गिरः। सुपोऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ॥

---

१. च-छ-फ–पूर्वस्या॰।

दस्रा॑ युवाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः । आ या॑तं रुद्रवर्तनी ॥ ३ ॥

दस्रा॑ । यु॒वाक॑वः । सु॒ताः । नास॑त्या । वृ॒क्तऽब॑र्हिषः । आ । या॒त॒म् । रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी ॥ ३ ॥

अत्र अश्विना इत्यनुवर्तते। हे अश्विनौ ᵛआ ᵛयातम् अस्मिन् कर्मण्यागच्छतम्। किमर्थमिति तदुच्यते। ᵛसुताः युष्मदर्थं सोमा अभिषुताः तान् स्वीकर्तुमिति शेषः। कीदृशावश्विनौ। ᵛदस्रा दस्रौ शत्रूणामुपक्षपयितारौ[1]। यद्वा। देववैद्यत्वेन रोगाणामुपक्षपयितारौ[2]। 'अश्विनौ वै देवानां भिषजौ' (ऐ.ब्रा. १. १८) इति श्रुतेः। ᵛनासत्या असत्यमनृतभाषणं तद्रहितौ। अत्र यास्कः—'सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः' (निरु. ६. १३) इति। ᵛरुद्रवर्तनी। रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तं 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' (तै. सं. १. ५. १. १) इति तैत्तिरीयाः। 'तद्यद्रोदयन्ति तस्माद्रुद्राः' इति वाजसनेयिनः। रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गौ धाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूरा धाटीमुखेन शत्रून् रोदयन्ति तद्वद्देतावित्यर्थः। ᵛयुवाकवः इत्यभिषुतसोमानां विशेषणम्। वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः। ᵛवृक्तबर्हिषः। वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः। यद्वा। 'भरताः' इत्यादिष्वष्टसु ऋत्विङ्नामसु 'वृक्तबर्हिषः' (नि. ३. १८. ४) इति। तदानीं तृतीयार्थे प्रथमा। ऋत्विग्भिरभिषुता इत्यन्वयः॥ दस्रा। 'आमन्त्रितस्य॰' (पा. सू. ६. १. १९८) इत्याद्युदात्तः। युवाकवः। 'यु मिश्रणे'। युवन्ति मिश्रीभवन्ति वसतीवरीप्रभृतिभिः श्रयणद्रव्यैरिति युवाकवः। कटिकुट्यादिषु (उ. सू. ३. ३५७) अगणितस्यापि यौतेः बहुलग्रहणात् काकुप्रत्ययः। तस्य क्त्विेन गुणाभावादुवङादेशः। प्रत्ययस्वरेण आकार उदात्तः। न विद्यतेऽसत्यमनयोरिति नासत्यौ। 'नभ्राण्नपान्नवेदानासत्या' (पा. सू. ६. ३. ७५) इत्यादिना प्रकृतिवद्भावात् नञो नलोपाभावः। पादादित्वेनानिघातादामन्त्रिताद्युदात्तत्वम्। वृक्तबर्हिषः। वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां सोमानां ते वृक्तबर्हिषः। बहुव्रीहौ[3] पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते। आ इत्यत्र 'उपसर्गाश्चाभिवर्जम्' (फि. सू. ८१) इत्युदात्तः। रुद्रवर्तनी। 'आमन्त्रितस्य च' (पा. सू. ८.१.१९) इत्यामन्त्रितनिघातः॥

इन्द्रा या॑हि चित्रभानो सु॒ता इ॒मे त्वा॒यवः॑ । अण्वी॑भि॒स्तना॑ पू॒तासः॑ ॥ ४ ॥

इन्द्र॑ । आ । या॒हि॒ । चि॒त्र॒भा॒नो॒ इति॑ चित्रऽभानो । सु॒ताः । इ॒मे । त्वा॒ऽयवः॑ । अण्वी॑भिः । तना॑ । पू॒तासः॑ ॥ ४ ॥

ᵛचित्रभानो चित्रदीप्ते[4] हे ᵛइन्द्र अस्मिन् कर्मणि ᵛआ ᵛयाहि आगच्छ। ᵛसुताः अभिषुताः ᵛइमे सोमाः ᵛत्वायवः त्वां कामयमाना वर्तन्ते। ᵛअण्वीभिः। 'अग्रुवः' इत्यादिषु द्वाविंशतिसंख्याकेष्वङ्गुलिनामसु 'अण्व्यः' (नि. २. ५. २) इति पठितम्। ऋत्विजामङ्गुलिभिः सुता इत्यन्वयः। किंच एते सोमाः ᵛतना नित्यं ᵛपूतासः पूताः शुद्धा दशापवित्रेण बहुधा शोधितत्वात्। इन्द्रशब्दं यास्को बहुधा[5] निर्वक्ति—'इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे

१. च-छ-त-थ-॰मुपक्षयितारौ। २. च-छ-त-फ-॰मुपक्षयितारौ। ३. च-छ-त-फ-'बहुव्रीहौ' नास्ति। ४. ठ-विचित्रदीप्ते। ५. ठ-प-'बहुधा' नास्ति।

द्रवतीति वेन्द्रौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इन्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनाम्' ( निरु. १०. ८ ) इति। अस्यायमर्थः। 'दृ विदारणे' इति धातुः। इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतीन्द्रः। 'डुदाञ् दाने' इति धातुः। इरामन्नं वृष्टिनिष्पादनेन ददातीतीन्द्रः। 'धाञ् पोषणार्थः'। इरामन्नं[1] तृप्तिकारणं[1] सस्यं दधाति जलप्रदानेन पुष्णातीतीन्द्रः। इरामुत्पादयितुं कर्षकमुखेन भूमिं विदारयतीतीन्द्रः। पूर्वोक्तपोषणमुखेनेरां धारयति विनाशराहित्येन स्थापयतीतीन्द्रः। इन्दुः सोमो[2] वल्लीरसः[2]। तदर्थं यागभूमौ द्रवति धावतीतीन्द्रः। इन्दौ यथोक्ते सोमे रमते क्रीडतीतीन्द्रः। 'ञिइन्धी दीप्तौ' इति धातुः। भूतानि प्राणिदेहान् इन्धे जीवचैतन्यरूपेणान्तः प्रविश्य दीपयतीतीन्द्रः। एतदेवाभिप्रेत्य वाजसनेयिन आमनन्ति—'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः। तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते। परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' ( बृ. उ. ४. २. २ ) इति। 'तद्यत्' इत्यादिकं ब्राह्मणान्तरवाक्यम्। तत्तत्रे इन्द्रविषये निर्वचनमुच्यते इति शेषः। यद्यस्मात् कारणादेनं परमात्मस्वरूपमिन्द्रं देवं प्राणैः वाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धन् उपासका ध्यानेन सम्यक् प्रकाशितवन्तः, तत् तस्मात् कारणात् इन्द्रनाम संपन्नम्। अस्मिन् पक्षे इध्यते दीप्यते इति कर्मणि व्युत्पत्तिः। आग्रायणनामको मुनिः 'इदंकरणादिन्द्रः' इति निर्वचनं मन्यते। इन्द्रो हि परमात्मरूपेणेदं जगत्करोति। औपमन्यवनामको मुनिरिदंदर्शनादिन्द्र इति निर्वचनमाह। इदम् इत्यापरोक्ष्यमुच्यते विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति। एतदेवाभिप्रेत्य आरण्यकाण्डे समाम्नायते–'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३ँ। तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः' ( ऐ. आ. २. ४. ३ ) इति। 'इदि परमैश्वर्ये' इति धातुः। स्वमायया जगद्रूपत्वं परमैश्वर्यम्। तद्योगादिन्द्रः। अनेनाभिप्रायेण श्रूयते—'इन्द्रो मायाभिः पुरुरूप ईयते' ( ऋ. सं. ६. ४७. १८ ) इति। इनशब्दस्येश्वरवाचकस्य अकारलोपे सति नकारान्तम् इन् इति पदं भवति। 'दृ भये' इति धातुः। स च परमेश्वरः शत्रूणां दारयिता भीषयितेतीन्द्रः। 'द्रु गतौ' इति धातुः। शत्रूणां द्रावयिता पलायनं प्रापयितेतीन्द्रः। यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता। एवमेतानि निर्वचनानि द्रष्टव्यानीति॥ इन्द्र इत्यत्र आमन्त्रिताद्युदात्तत्वम्। आ इत्यत्र निपातत्वेनाद्युदात्तः[4]। चित्रभानो। पदात् परत्वादामन्त्रितनिघातः। त्वामिच्छन्तीत्यर्थे युष्मच्छब्दात् 'सुप आत्मनः क्यच्' (पा. सू. ३. १. ८)। 'प्रत्ययोत्तरपदयोश्च' ( पा. सू. ७. २. ९८ ) इति मपर्यन्तस्यत्वादेशः। 'क्याच्छन्दसि' ( पा. सू. ३. २. १७० ) इति क्यजन्तात् उप्रत्ययः। त्वद्यवे इति प्राप्तौ 'युष्मदस्मदोरनादेशे' ( पा. सू. ७. २. ८६ ) इत्यविभक्तावपि हलादौ व्यत्ययेन आत्वम्। उकारः प्रत्ययस्वरेणाद्युदात्तः। अणुशब्दः सौक्ष्म्यवाचकः तद्योगात् प्रकृतेऽङ्गुलीषु वर्तते। 'वोतो गुणवचनात्' ( पा. सू. ४. १. ४४ ) इति ङीषि प्राप्ते व्यत्ययेन ङीन्। नित्त्वादाद्युदात्तः। तना इत्ययं निपातो नित्यमित्यर्थे निपातत्वादाद्युदात्तः। पूतासः। 'आज्जसेरसुक्' ( पा. सू. ७. १. ५० ) इत्यसुक्॥

---

१. ठ–इरामन्नकारणम्। २. त–सोमवल्लीरसः। ३. ठ–तच्च। ४. च-छ-त-थ-फ–°द्युदात्तत्वम्। ५. घ-च-झ-त-थ–त्वत्वत; छ-ण-य–त्वयत।

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥ ५ ॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः ।

उप । ब्रह्माणि । वाघतः ॥ ५ ॥

हे vइन्द्र त्वम् vआ vयाहि अस्मिन् कर्मण्यागच्छ । किमर्थम् । vवाघतः ऋत्विजः vब्रह्माणि वेदरूपाणि[1] स्तोत्राण्युपैतुम् । कीदृशस्त्वम् । vधिया अस्मदीयया प्रज्ञया vइषितः प्राप्तः अस्मद्भक्त्या प्रेरित इत्यर्थः । vविप्रजूतः । यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि[2] विप्रैर्मेधाविभिर्ऋत्विग्भिः प्रेरितः । कीदृशस्य वाघतः । vसुतावतः अभिषुतसोमयुक्तस्य ॥ 'केतः' इत्यादिष्वेकादशसु प्रज्ञानामसु 'धीः' ( नि. ३. ९. ७ ) इति पठितम् । चतुर्विंशतिसंख्याकेषु मेधाविनामसु 'विप्रः धीरः' ( नि. ३. १५. १ ) इति पठितम् । 'भरताः' इत्यादिष्वष्टसु ऋत्विङ्नामसु 'वाघतः' ( नि. ३. १८. ३ ) इति पठितम् । इषित इत्यत्र 'इष गतौ' इत्यस्मान्निष्ठायामिडागमः[3] । 'आगमा अनुदात्ताः' ( पा. म. ३. १.३. ७ ) इति इटः अनुदात्तत्वात् क्तस्वरः शिष्यते । विप्रजूतः । 'डुवप् बीजसंताने' इति धातोः 'ऋज्रेन्द्राग्रवज्रविप्र°' ( उ. सू. २.१८६ ) इत्यादिना रन्प्रत्ययान्तो विप्रशब्दो निपातितः । निपातनादुपधाया इकारो लघूपधगुणाभावश्च । नित्त्वादाद्युदात्तः । तैर्जूतः प्राप्तः । 'जू'(?) इति सौत्रो धातुर्गत्यर्थः ( पा. सू. ३. २. १५० ) । 'श्र्युकः किति' (पा. सू. ७. २. ११) इति इट्प्रतिषेधः । 'तृतीया कर्मणि' ( पा. सू. ६. २. ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । सुतावतः । छान्दसं दीर्घत्वम् । मतुपोऽनुदात्तत्वात् क्तप्रत्ययस्वर एव शिष्यते । ब्रह्माणि । 'नब्विषयस्यानिसन्तस्य' ( फि. सू. २६ ) इत्याद्युदात्तः । वाघच्छब्द ऋत्विङ्नामसु पठितः । प्रातिपदिकस्वरः ॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ६ ॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥६॥

हरिशब्दः इन्द्रसंबन्धिनोरश्वयोर्नामधेयं 'हरी इन्द्रस्य रोहितोऽग्नेः' ( नि. १. १५. १ ) इति तदीयाश्वनामत्वेन पठितत्वात् । हे vहरिवः अश्वयुक्त vइन्द्र त्वं vब्रह्माणि उपैतुम् vआ vयाहि । कीदृशस्त्वम् । vतूतुजानः त्वरमाणः । आगत्य च अस्मिन् vसुते सोमाभिषवयुक्ते कर्मणि vनः अस्मदीयं vचनः अन्नं हविर्लक्षणं vदधिष्व धारय स्वीकुर्वित्यर्थः ॥ तूतुजानः । तुजेर्लिटि 'लिटः कानज्वा' (पा.सू. ३. २. १०६ ) इति कानजादेशः । 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा. सू. ६. १. ७ ) इत्यभ्यासस्य दीर्घत्वम् । 'अभ्यस्तानामादिः' ( पा. सू ६. १. १८९ ) इत्याद्युदात्तत्वम् । हरिव इत्यत्र हरयोऽस्य सन्तीति मतुपि 'छन्दसीरः' ( पा. सू. ८. २. १५ ) इति मकारस्य वत्वम् । संबुद्धौ 'उगिदचाम्°' ( पा. सू. ७. १. ७० ) इति नुम् । संयोगान्तलोपे ( पा. सू. ८. २. २३ ) नकारस्य 'मतुवसो रु संबुद्धौ छन्दसि' ( पा. सू. ८. ३. १ ) इति रुत्वम् । आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात् 'समर्थः पदविधिः' ( पा. सू. २. १. १ ) इति नियमात् सुबामन्त्रितपराङ्गवद्भावाभावेन[4] आमन्त्रितनिघाताभावात् आद्युदात्तत्वे सति उप इति अकारस्य स्वरितः ।

---

१. ठ–'वेदरूपाणि' नास्ति । २. च–°स्तथा तैरपि । ३. ठ–'निष्ठाया इडा' । ४. ग-घ-च-ण-फ- य–°मन्त्रिते पराङ्गवद्भा°; य–°मन्त्रित इति पराङ्गवद्भा° ।

दधिष्व इत्यत्र दधातेर्लोटि थास्। 'थासः से' (पा. सू. ३. ४. ८०)। 'सवाभ्यां वामौ' (पा. सू. ३. ४. ९१) इत्येकारस्य वादेशः। 'छन्दस्युभयथा' (पा. सू. ३. ४. ११७) इति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि (पा. सू. ३. १.६८) तस्य श्लौ च द्विर्भावः (पा. सू. ६. १. १०), आर्धधातुकत्वेन इडागमश्च (पा. सू. ७. २. ३५)। 'आतो लोप इटि च' (पा. सू. ६. ४. ६४) इत्याकारलोपः। चनः। 'चायतेरन्ने ह्रस्वश्च' (उ. सू. ४. ६३९) इत्यसुनन्तः। चकारात् नुडागमे यलोपः॥　　॥ ५॥

ओमा॑सश्चर्षणीधृतो॒ विश्वे॑ देवास॒ आ ग॑त। दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम्॥ ७॥

ओमा॑सः। च॒र्ष॒णि॒ऽधृ॒तः। विश्वे॑। दे॒वा॒सः॒। आ। ग॒त। दा॒श्वांसः॑। दा॒शुषः॑। सु॒तम्॥७॥

हे ᵛविश्वे ᵛदेवासः एतन्नामका देवविशेषाः ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛसुतम् अभिषुतं सोमं प्रति ᵛआ ᵛगत आगच्छत। ते च देवाः ᵛओमासः रक्षकाः ᵛचर्षणीधृतः मनुष्याणां धारकाः ᵛदाश्वांसः फलस्य दातारः। 'मनुष्याः' इत्यादिषु पञ्चविंशतिसंख्याकेषु मनुष्यनामसु चर्षणिशब्दः (नि. २. ३. ८) पठितः। 'अश्विनौ' इत्यादिष्वेकत्रिंशत्संख्याकेषु देवविशेषनामसु 'विश्वेदेवाः, साध्याः' (नि. ५. ६. २७) इति पठितम्। एतामृचं यास्क एवं व्याख्यातवान्–'अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति तदेतदेकमेव[2] वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः' (निरु. १२. ४०) इति। अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतम्। देवविशेषस्यैवासाधारणं लिङ्गमिति शाकपूणेर्मतम्। अवन्ति इति ओमासः देवाः। 'मन्' इत्यनुवृत्तौ 'अविसिविसिशुषिभ्यः कित्' (उ. सू. १. १४१) इति मन्प्रत्ययः। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा. सू. ६. ४. २०) इति ऊठ्। मनः कित्वेऽपि बाहुलकत्वाद्गुणः। 'आज्जसेरसुक्' (पा. सू. ७. १. ५०) इति जसेः असुगागमः। आमन्त्रिताद्युदात्तत्वम्। चर्षणयो मनुष्याः। तान् वृष्टिदानादिना धारयन्तीति चर्षणीधृतः देवाः। पूर्वस्यामन्त्रितस्य सामान्यवचनस्य 'विभाषितं विशेषवचने बहुवचनम्' (पा. सू. ८. १. ७४) इति अविद्यमानवत्वप्रतिषेधात् अपादादित्वेन निघातः। ननु, अत एव विद्यमानवत्त्वात् 'सुबामन्त्रिते°' (पा. सू. २. १. २) इति पराङ्गवत्वेनैकपदीभावात् पदादपरत्वेन कथं निघात इति चेत्, न। 'वत्करणं स्वाश्रयमपि यथा स्यात्' (पा. म. ८. १. ७२) इति वचनात् पदभेदप्रयुक्तस्य निघातस्याप्युपपत्तेः। ऐकपद्येऽप्याद्युदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' (पा. सू. ६. १. १५८) इति सुतरामेव निघातो भविष्यति। इत्थमेव तर्हि 'द्रवत्पाणी शुभस्पती' इत्यत्रापि पराङ्गवत्त्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसङ्ग इति चेत्, न। तत्र पराङ्गवद्भावस्य परेण 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा. सू. ८. १. ७२) इत्यविद्यमानवद्भावेन बाधितत्वात्। इह पुनः 'विभाषितं विशेषवचने बहुवचनम्' इत्यविद्यमानवत्त्वस्य निषेधात्। पूर्वस्याप्यामन्त्रितस्य विद्यमानवत्त्वात् पराङ्गवत्त्वं स्वीकृतमिति वैषम्यम्। विश्वे। पादादित्वादाद्युदात्तः। गणदेवतावचनश्चात्र विश्वशब्दो न सर्वशब्दपर्याय इति विशेष्यपरतया सामान्यवचनत्वात् ओमासः इत्यनेन न सामानाधिकरण्यम्। सामानाधिकरण्ये हि पूर्वस्य पादस्य पराङ्गवद्भावे सति 'मित्रावरुणावृतावृधौ' इत्यादाविव अत्राप्यामन्त्रिताद्युदात्तता न स्यात्। विश्वे इत्यस्य विशेषणं देवासः इति। दीव्यन्तीति देवाः प्रकाशवन्तः। ननु 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' (परिभा° ९८) इति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः।

---

१. ठ–'च' नास्ति। २. छ-त-थ–°देकमिव।

यौगिकत्वे ह्यवयवार्थानुसंधानव्यवधानेन प्रतिपत्तिर्विलम्बिता स्यात् । समुदायप्रसिद्धौ तु न विक्षेप इति चेत्, न । समुदायप्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावात् 'विभाषितं विशेषवचने बहुवचनम्' इत्यनेनानिषिद्धत्वात् विश्वे इत्यस्याविद्यमानवत्त्वेन शुभस्पती इति पदवत् देवासः इत्यस्यापि आद्युदात्तत्वं स्यात् । स्वरानुसारेण च रूढित्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव । आ गत आगच्छत । 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति शपो लुकि सति 'अनुदात्तोपदेश' (पा. सू. ६. ४. ३७) इत्यादिना मकारलोपः । आङः पदात्परत्वात् निघातः । दाश्वांसः । 'दाशृ दाने' इत्यस्य क्वसौ 'दाश्वान् साह्वान् मीढ्वांश्च' (पा. सू. ६. १. १२) इति निपातनात् क्रादिनियमप्राप्तः इडागमो (पा. सू. ७. २. १३) द्विर्वचनं च न भवति । प्रत्ययस्वरेण क्वसोरुदात्तत्वम् । दाशुष इत्यत्र 'वसोः संप्रसारणम्' (पा. सू. ६. ४. १३१) इति संप्रसारणम् । 'संप्रसारणाच्च' (पा. सू. ६ १. १०८) इति पूर्वरूपत्वम् । 'आदेशप्रत्ययोः' (पा. सू. ८. ३. ५९) इति षत्वम् ॥

विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमा ग॑न्त॒ तूर्ण॑यः । उ॒स्रा इ॑व॒ स्वस॑राणि ॥ ८ ॥

विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः । उ॒स्राःऽइ॑व । स्वस॑राणि ॥ ८ ॥

विश्वे देवासः एतन्नामकगणरूपा देवविशेषाः सुतं सोमम् आ गन्त आगच्छन्तु । कीदृशाः । अप्तुरः तत्तत्काले वृष्टिप्रदा इत्यर्थः । तूर्णयः त्वरायुक्ताः यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः । विश्वेषां देवानां सोमं प्रति आगमने उस्रा इत्यादिर्दृष्टान्तः । उस्राः सूर्यरश्मयः स्वसराणि अहानि प्रति आलस्यरहिता यथा समागच्छन्ति तद्वत् । 'खेदयः' इत्यादिषु पञ्चदशसु रश्मिनामसु 'उस्रा वसवः' (नि. १. ५. ९) इति पठितम् । 'वस्तोः' इत्यादिषु द्वादशस्वहर्नामसु 'स्वसराणि घ्रंसः घर्मः' (नि. १. ९. ५) इति पठितम् । तच्च पदं यास्केन व्याख्यातं—'स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति । उस्रा इव स्वसराणीत्यपि निगमो भवति' (निरु. ५. ४) इति ॥ देवासः । पचाद्यजन्तः (पा. सू. ३. १. १३४) चित्वादन्तोदात्तः । अप्तुरः 'तुर त्वरणे' श्लुविकरणी । तुतुरति त्वरयन्तीत्यर्थे 'क्विप् च' (पा. सू. ३. २. ७६) इति क्विप् । 'गतिकारकोपपदात्कृत्' (पा. सू. ६. २. १३९) इत्युत्तरपदप्रकृतिस्वरत्वम् । आ गन्त । आगच्छन्तु इत्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनम् । 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति शपो लुक् । तस्य 'तप्तनप्तनथनाश्च' (पा. सू. ७. १. ४५) इति तबादेशे 'अपित्' (पा. सू. १. २. ४) इति प्रतिषेधात् अङित्वात् अनुनासिकलोपाभावः । 'तिङ्ङतिङः' इति निघातः । 'ञित्वरा संभ्रमे' इति धातोः त्वरन्ते इति तूर्णयः । 'निः' इत्यनुवृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ.सू.४.४९१) इति निप्रत्ययः । नित्वादाद्युदात्तः । उस्रा इव इत्यत्र 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' (पा. सू. २. १. ४. २) इति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यम् । सरतीति सरः सूर्यः । पचाद्यच् । स्वः सरो येषां तानि स्वसराणि अहानि । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. सू. ६. २. १) इति स्वशब्द आद्युदात्तः ॥

---

१. ठ-°नुसंधानेन । २. त-स-एतन्नामग° । ३. छ-फ-आगच्छन्त आगच्छन्तु ४. ठ-अप्तुरः अपां त्वरयितारः ५. च-छ-त-फ—इवेन नित्यसमासः ।

विश्वे॑ दे॒वासो॑ अ॒स्रिध॒ एहि॑मायासो अ॒द्रुहः॑ । मेधं॑ जुषन्त॒ वह्न॑यः ॥ ९ ॥

विश्वे॑ । दे॒वासः॑ । अ॒स्रिधः॑ । एहि॑ऽमायासः । अ॒द्रुहः॑ । मेध॑म् । जु॒षन्त॑ । वह्न॑यः ॥ ९ ॥

विश्वे देवासः एतन्नामका देवविशेषाः मेधं हविर्यज्ञसंबद्धं जुषन्त सेवन्ताम् । कीदृशाः । अस्रिधः क्षयरहिताः शोषरहिता वा । एहिमायासः सर्वतो व्याप्तप्रज्ञाः । यद्वा । सौचीकमग्निमप्सु प्रविष्टम् 'एहि मा यासीः' इति यदवोचन् तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति । अद्रुहः द्रोहरहिताः वह्नयः वोढारो धनानां प्रापयितारः ॥ अस्रिधः । स्रिधेः क्षयार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि (पा. सू. ३. ३. १०८. ९) नञा बहुव्रीहिः पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' (पा. सू. ६. २. १७२) इत्युत्तरपदान्तोदात्तत्वम् । एहिमायासः । 'ईह चेष्टायाम्' । आ समन्तात् ईहते इति एहिः । 'इन्' (उ. सू. ४. ५५७) इति सर्वधातुसाधारण इन्प्रत्ययो नित्वादाद्युदात्तः । एहिः माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अथवा । आङ उदात्तादुत्तरस्य इहीति लोण्मध्यमैकवचनस्य 'तिङ्ङतिङः' इति निघातः । 'एकादेश उदात्तेनोदात्तः' (पा. सू. ८. २. ५) इत्येकार उदात्तः । एहीत्येतत् पदयुक्तं 'मा यासीः' इत्यत्र 'माया' इत्यक्षरद्वयं येषां ते एहिमायासः । पूर्वपदप्रकृतिस्वरः । अद्रुहः । 'द्रुह जिघांसायाम्' । संपदादित्वाद्भावे क्विपि बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मेधम् । 'मेधृ संगमे च' । मेध्यते देवैः संगम्यते इति मेधं हविः । कर्मणि घञ् । ञित्वादाद्युदात्तः । जुषन्त । सेवन्तामित्यर्थे 'छन्दसि लुङ्लङ्लिटः' (पा. सू. ३. ४. ६) इति धातुसंबन्धे लङ् । यत उक्तरूपा विश्वे देवा अतो जुषन्त इति द्रुहादिधात्वर्थैः संबन्धात् 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा. सू. ६. ४. ७५) इत्यडागमाभावः । वह्नयः । 'निः' इत्यनुवृत्तौ 'वहिश्रि॰' इत्यादिना विहितस्य निप्रत्ययस्य नित्वादाद्युदात्तत्वम् ॥

सारस्वते तृचे या प्रथमा सा अन्वारम्भणीयेष्टौ सरस्वत्याः पुरोनुवाक्या । तथा 'दर्शपूर्णमासावारप्स्यमानः' इत्यस्मिन् खण्डे 'पावका नः सरस्वती पावीरवी कन्या चित्रायुः' (आश्व. श्रौ. २. ८) इति सूत्रितम् ॥

पा॒व॒का नः॒ सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती । य॒ज्ञं व॑ष्टु धि॒याव॑सुः ॥ १० ॥

पा॒व॒का । नः॒ । सर॑स्वती । वाजे॑भिः । वा॒जिनी॑ऽवती । य॒ज्ञम् । व॒ष्टु॒ । धि॒याऽव॑सुः ॥ १० ॥

सरस्वती देवी वाजेभिः हविर्लक्षणैरन्नैर्निमित्तभूतैः । यद्वा । यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैः । नः अस्मदीयं यज्ञं वष्टु कामयताम् । कामयित्वा च निर्वहत्वित्यर्थः । तथा चारण्यककाण्डे श्रुत्यैव व्याख्यातं—'यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह' (ऐ. आ. १. १. ४) इति । कीदृशी सरस्वती । पावका शोधयित्री वाजिनीवती अन्नवत्क्रियावती धियावसुः कर्मप्राप्यधननिमित्तभूता । वाग्देवतायास्तथाविधं धननिमित्तत्वमारण्यककाण्डे श्रुत्या व्याख्यातं—'यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुः' (ऐ. आ. १. १. ४) इति । 'श्येनः सोमः' इत्यादिषु पञ्चत्रिंशत्संख्याकेषु देवताविशेषवाचिषु पदेषु 'सरमा सरस्वती' (नि. ५. ५. १८) इति पठितम् । एतामृचं यास्क एवं व्याचष्टे—'पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः' (निरु. ११. २६) इति ॥ पवनं पावः शुद्धिः । पावं कायतीति पावका । 'कै गै रै शब्दे' । 'आतोऽनुपसर्गे कः' (पा. सू. ३. २. ३) इति कप्रत्ययः ।

१. च-छ-फ-' इति कप्रत्ययः ' नास्ति ।

कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम् । यद्वा । पुनातीत्यर्थे ण्वुलि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' (पा. सू. ७. ३. ४४) इति इत्वस्याभावोऽन्तोदात्तत्वं च छान्दसं द्रष्टव्यम् । सरःशब्दः सर्तेः असुनन्तत्वादाद्युदात्तः । मतुप्ङीपोः पित्त्वादनुदात्तत्वम् । वाजेभिः । वाजशब्दो वृषादित्वात् (पा. सू. ६. १. २०३) आद्युदात्तः । स हि अवृत्कृतत्वात् आकृतिगणः । वाजोऽन्नमास्त्विति वाजिन्यः क्रियाः । 'अत इनिठनौ' (पा. सू. ५. २. ११५) इति इनिप्रत्ययः । ताः क्रिया यस्याः सन्ति सा सरस्वती वाजिनीवती । 'छन्दसीरः' (पा. सू. ८. २. १५) इति मतुपो वत्वम् । मतुप्ङीपोः पित्त्वेनानुदात्तत्वात् इनेः प्रत्ययाद्युदात्तत्वमेव शिष्यते । यज्ञम् । 'यजयाच' (पा. सू. ३. ३. ९०) इत्यादिना नङ्प्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । वष्टु । 'वश कान्तौ' । कान्तिरभिलाषः । 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुक् । निघातः । धियावसुः । धिया कर्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः । 'सावेकाचः०' (पा. सू. ६. १. १६८) इति विभक्तिरुदात्ता । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. सू. ६. २. १) इति विभक्तिस्वर एव शिष्यते । छान्दसस्तृतीयाया अलुक् ॥

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ११ ॥**

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ॥ ११ ॥

या सरस्वती सेयमिमं यज्ञं दधे धारितवती । कीदृशी । सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री । सुमतीनां शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती ॥ चोदयित्री । 'चुद प्रेरणे' । ण्यन्तात् तृच् । चित्त्वादन्तोदात्तः । 'ऋन्नेभ्यो ङीप्' (पा. सू. ४. १. ५) इति ङीप् । तस्य 'उदात्तयणो हल्पूर्वात्' (पा. सू. ६. १. १७४) इत्युदात्तत्वम् । सूनृतानाम् । 'ऊन परिहाणे' इत्यतः 'क्विप् च' (पा. सू. ३. २. ७६) इति क्विपि सुतराम् ऊनयति अप्रियम् इति सून् इति प्रियमुच्यते । तच्च तदृतं सत्यं चेति सूनृतम् । 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इत्युत्तरपदाद्युदात्तत्वम् । चेतन्ती । 'चिती संज्ञाने' । अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वम् । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेणानुदात्तत्वम् । धात्वन्तस्वर एव शिष्यते । सुमतिशब्दस्य मतुपि ह्रस्वत्वात् 'नामन्यतरस्याम्' (पा. सू. ६. १. १७७) इति विभक्तेरुदात्तत्वम् ॥

**महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ १२ ॥**

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना । धियः । विश्वाः । वि । राजति ॥ १२ ॥

द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च । तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता । अनया तु नदीरूपा प्रतिपाद्यते । तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्र चेतयति प्रकर्षेण ज्ञापयति । किं च स्वकीयेन देवतारूपेण विश्वाः धियः सर्वाण्यनुष्ठातृप्रज्ञानानि वि राजति विशेषेण दीपयति । अनुष्ठानविषया बुद्धीः सर्वदोत्पादयतीत्यर्थः । सरस्वत्या द्विरूपत्वं यास्को दर्शयति– 'तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति' (निरु. २. २३) इति । एकशतसंख्याकेषूदकनामसु 'अर्णः क्षोदः' (नि. १. १२. १) इति पठितम् । एतामृचं यास्को व्याचष्ट– 'महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिवि-

राजति ' ( निरु. ११. २७ ) इति॥ महो अर्णः। महदिति तकारस्य व्यत्ययेन सकारः। तस्य रुत्वोत्व-गुणाः। प्रातिपदिकस्वरेणान्तोदात्तः। ' एङः पदान्तादति ' ( पा. सू. ६. १. १०९ ) इति पूर्वरूपे प्राप्ते ' प्रकृत्यान्तःपादमव्यपरे ' ( पा. सू. ६. १. ११५ ) इति प्रकृतिभावः। अर्ति इत्यर्णः। ' उदके नुट् च ' ( उ. सू. ४. ६३६ ) इत्यसुन्प्रत्ययो नुडागमश्च। केतुना। प्रातिपदिकस्वरेणान्तोदात्तः। विश्वाः। विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः॥ ॥ ६ ॥ ॥ १ ॥

प्रथमे मण्डले द्वितीयानुवाके चत्वारि सूक्तानि। तत्र ' सुरूप ' इत्यादिकं दशर्चं प्रथमं सूक्तं, ' सुरूपकृत्नुं दश ' इत्यनुक्रान्तत्वात्। पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेः ते एव ऋषिच्छन्दसी। ' इन्द्रं पृच्छा ' इति चतुर्थ्यामृचि लिङ्गदर्शनादिन्द्रो देवता। अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धौ आवापार्थानि ' सुरूपकृत्नुमूतये ' इत्यादीनि षट् सूक्तानि। सूत्रितं च 'अभिप्लवपृष्ठ्याहानि' इति खण्डे—' ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि ' ( आश्व. श्रौ. ७. ५ ) इति। आद्यानि त्रीणि सूक्तानि महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ[1] शस्तव्यानि। उक्तं च शौनकेन—' सुरूप-कृत्नुमूतय इति त्रीण्यैन्द्र सानसिं रयिमिति सूक्ते ' ( ऐ. आ. ५. २. ५ ) इति। चतुर्विंशेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिनः ' सुरूपकृत्नुमूतये ' इति वैकल्पिकः स्तोत्रियस्तृचः। ' होत्रकाणाम् ' इति खण्डे ' मदे मदे हि नो ददिः सुरूपकृत्नुमूतये ' (आश्व. श्रौ. ७. ४ ) इति सूत्रितत्वात्। अग्निष्टोमे वैश्वदेवशस्त्रे ' सुरूपकृत्नुमूतये ' इति धाय्या, ' सुरूपकृत्नुमूतये तक्षन्रथम् ' ( आश्व. श्रौ. ५. १८ ) इति सूत्रितत्वात्॥

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे। जुहूमसि द्यविद्यवि ॥ १ ॥

सुरूपऽकृत्नुम्। ऊतये। सुदुघाम्ऽइव। गोऽदुहे। जुहूमसि। द्यविऽद्यवि ॥ १ ॥

सुरूपकृत्नुं शोभनरूपोपेतस्य कर्मणः कर्तारमिन्द्रम् ऊतये अस्मद्रक्षार्थं द्यविद्यवि प्रतिदिनं जुहूमसि आह्वयामः। आह्वाने दृष्टान्तः। गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव। यथा लोके गोः यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत्। ' वस्तोः ' इत्यादिषु द्वादशसु अहर्नामसु ' द्यविद्यवि ' ( नि. १. ९. १२ ) इति पठितम्॥ सुरूपकृत्नुम्। करोतीति कृत्नुः। ' कृहनिभ्यां क्त्नुः ' (उ. सू. ३. ३१०)। कित्वाद्गुणाभावः। तकारोपजनश्छान्दसः। समासान्तोदात्तः। ऊतये। अवतेर्धातोः ' उदात्तः ' इत्यनुवृत्तौ ' ऊतियूतिजूतिसातिहेतिकीर्तयश्च ' ( पा. सू. ३. ३. ९७ ) इति क्तिन् उदात्तो निपातितः। सुदुघाम्। सुष्ठु दुग्धे इति सुदुघा। ' दुहः कब्घश्च ' ( पा. सू. ३. २. ७० ) इति कप्प्रत्ययो हकारस्य च घकारः। कित्वाद्गुणाभावः। कपः पित्वादनुदात्तत्वे धातुस्वरेण उकार उदात्तः। सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः। ' इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वं च ' इति इवसमासे स एव स्वरः। गां दोग्धीति गोधुक्। ' सत्सूद्विष॰ ' ( पा. सू. ३. २. ६१ ) इत्यादिना क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। जुहूमसि। ह्वयतेर्लँडुत्तमपुरुषबहुवचने ' बहुलं छन्दसि ' ( पा. सू. २. ४. ७६ ) इति शपः श्लुः। ' अभ्यस्तस्य च ' ( पा. सू. ६. १. ३३ ) इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् संप्रसारणम्। ' संप्रसारणाच्च ' ( पा. सू. ६. १. १०८ ) इति परपूर्वत्वम्। ' हलः ' ( पा. सू. ६. ४. २ ) इति दीर्घः। ततः ' श्लौ ' ( पा. सू. ६. १. १० ) इति द्विर्वचनम्। अभ्यासस्य ह्रस्वः ( पा. सू. ७. ४. ५९ ), चुत्वजश्त्वे ( पा. सू. ७. ४. ६२; ८. ४. ५३ )। ' इदन्तो मसिः ' ( पा. सू. ७. १. ४६ ) इति इकारागमः। प्रत्ययस्वरेण मकार-

१. ग-च-ण-य—उष्णिहतृचाशीतौ।

स्योदात्तत्वम् । द्यविद्यवि । द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'नित्यवीप्सयोः' ( पा. सू. ८. १. ४ ) इति द्विर्भावः । 'तस्य परमाम्रेडितम्' ( पा. सू. ८. १. २ ) 'अनुदात्तं च' ( पा. सू. ८. १. ३ ) इति द्वितीयस्यानुदात्तत्वम् ॥

उप॑ नः॒ सव॒ना ग॑हि॒ सोम॑स्य सोमपाः पिब । गो॒दा इद्रे॒वतो॒ मदः॑ ॥ २ ॥

उप॑ । नः॒ । सव॑ना । आ । ग॒हि॒ । सोम॑स्य । सो॒म॒ऽपाः॒ । पि॒ब॒ ।

गो॒ऽदाः । इत् । रे॒वतः॑ । मदः॑ ॥ २ ॥

हे सोमपाः सोमस्य पातरिन्द्र सोमं पातुं नः अस्मदीयानि सवना त्रीणि सवनानि प्रति उप समीपे आ गहि आगच्छ । आगत्य च सोमस्य सोमं पिब । रेवतः धनवतस्तव मदः हर्षः गोदा इत् गोप्रद एव । त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्ते इत्यर्थः ॥ उप । निपातत्वादाद्युदात्तः । सवना । सूयते सोम एष्विति सवनानि । अधिकरणे ल्युट् ( पा. सू. ३. ३. ११७ ) । सुपो डादेशः टिलोपश्च । 'लिति' ( पा. सू. ६. १. १९३ ) इति प्रत्ययात् पूर्वस्य अकारस्योदात्तत्वम् । गहि । गमेः 'बहुलं छन्दसि' ( पा. सू. २. ४. ७३ ) इति शपो लुक् । हेर्ङित्त्वात् 'अनुदात्तोपदेश॰' ( पा. सू. ६. ४. ३७ ) इत्यादिना मकारलोपः । 'अतो हेः' ( पा. सू. ६. ४. १०५ ) इति आभाच्छास्त्रीये लुकि कर्तव्ये 'असिद्धवदत्रा भात्' ( पा. सू. ६. ४. २२ ) इति आभाच्छास्त्रीयो मकारलोपोऽसिद्धवद्भवति । सोमपाः । 'आमन्त्रितस्य च' ( पा. सू. ८. १. १९ ) इति निघातः । तस्याविद्यमानवत्त्वेऽपि पूर्वापेक्षया 'तिङ्ङतिङः' इति पिबेत्यस्य निघातः । न च पूर्वस्यापि पराङ्गवद्भावेनाविद्यमानवत्त्वम्, असामर्थ्येन तदभावात् । गां ददातीति गोदाः । 'क्विप् च' ( पा. सू. ३. २. ७६ ) इति क्विपं परमपि सेरूपं बाधित्वा प्रतिपदविधित्वात् 'आतो मनिन्क्वनिब्वनिपश्च' ( पा. सू. ३. २. ७४ ) इति विच् । क्विपि हि 'घुमास्था॰' ( पा. सू. ६. ४. ६६ ) इत्यादिना धातोः आकारस्य ईत्वं स्यात् । रेवान् । रयिर्धनमस्यास्तीति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' ( पा. सू. ६. १. १७६ ) इति मतुप् उदात्तः । 'छन्दसीरः' ( पा. सू. ८. २. १५ ) इति वत्वम् । 'रयेर्मतौ बहुलं छन्दसि' ( पा. सू. ६. १. ३७. ६ ) इति संप्रसारणपरपूर्वत्वे गुणश्च । मदः । 'मदोऽनुपसर्गे' ( पा. सू. ३. ३. ६७ ) इति अप् । पित्त्वादनुदात्तः ॥

अथा॑ ते॒ अन्त॑मानां वि॒द्याम॑ सुमती॒नाम् । मा नो॒ अति॑ ख्य॒ आ ग॑हि ॥ ३ ॥

अथ॑ । ते॒ । अन्त॑मानाम् । वि॒द्याम॑ । सु॒ऽम॒ती॒नाम् । मा । नः॒ । अति॑ । ख्यः॒ । आ । ग॒हि॒ ॥३॥

अथ सोमपानानन्तरं हे इन्द्र ते तव अन्तमानाम् अन्तिकतमानामतिशयेन समीपवर्तिनां सुमतीनां शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्याम वयं त्वां जानीयाम । यद्वा । सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थमित्यध्याहारः । बुद्धिलाभाय त्वां स्मरेमेत्यर्थः । त्वमपि नः अति मा ख्यः अस्मानतिक्रम्य अन्येषां स्वस्वरूपं मा प्रकथय । किंतु आ गहि अस्मानेवागच्छ ॥ अथ इति निपात आद्युदात्तः । 'निपातस्य च' ( पा. सू. ६. ३. १३६ )

१. ठ–'सरूपम्' नास्ति । २. ठ–रेवतः । ३. ठ–'शोभनप्रज्ञानाम्' नास्ति ।

इति दीर्घत्वम् । अन्तमानाम् । अतिशयेनान्तिका इति अतिशायने तमप् ( पा. सू. ५. ३. ५५ )। 'तमे तादेश्च ' ( पा. सू. ६. ४. १४९. ९ ) इति तादिलोपः । अन्तोऽस्यास्तीति अन्तिकः समीपः । 'अत इनिठनौ ' ( पा. सू. ५. २. ११५ ) इति ठन् । नित्त्वादाद्युदात्तः । दूरोत्कर्षस्य ह्यवसानं नास्ति । सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः स एव तस्यान्त इत्यन्तवत्त्वात् समीपमन्तिकमुच्यते । विद्याम । वेत्तेर्लिङि 'यासुट् परस्मैपदेषूदात्तो ङिच्च ' ( पा. सू. ३. ४. १०३ ) इति यासुट् उदात्तः । पादादित्वात् ' तिङ्ङतिङः ' इति न निघातः । सुमतीनाम् । मतिशब्दे क्तिन्नन्तेऽपि ' मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ' ( पा. सू. ३. ३. ९६ ) इति इकार उदात्तः । शोभना मतिर्येषां ते सुमतय इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादेन ' नञ्सुभ्याम् ' ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तः । शोभना मतयः सुमतय इति कर्मधारयेऽप्यव्ययपूर्वपदप्रकृतिस्वरापवादः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तैव । अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमतिशब्दात् परस्य नामो ' नामन्यतरस्याम् ' ( पा. सू. ६. १. १७७ ) इत्युदात्तत्वम् । ख्यः । ' ख्या प्रकथने ' इत्यस्य लुङि सिपि ' अस्यतिवक्तिख्यातिभ्योऽङ् ' ( पा. सू. ३. १. ५२ ) इति च्लेरङादेशः । ' आतो लोप इटि च ' ( पा. सू. ६. ४. ६४ ) इत्याकारलोपः । ' इतश्च ' ( पा. सू. ३. ४. १०० ) इति इकारलोपो रुत्वविसर्गौ । ' न माङ्योगे ' ( पा. सू. ६. ४. ७४ ) इत्यडभावः । गहि । गमेः ' बहुलं छन्दसि ' ( पा. सू. २. ४. ७३ ) इति शपो लुकि हेर्ङित्त्वात् ' अनुदात्तोपदेश° ' ( पा. सू. ६. ४. ३७ ) इति मकारलोपस्य ' असिद्धवदत्रा भात् ' ( पा. सू. ६. ४. २२ ) इति असिद्धत्वात् ' अतो हेः ' ( पा. सू. ६. ४. १०५ ) इति लुक् न भवति ॥

परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ॥ ४ ॥

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ।

यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥

अत्र यजमानं प्रति होता ब्रूते । हे यजमान त्वम् ᵛइन्द्रं ᵛपरेहि इन्द्रस्य समीपे गच्छ । गत्वा च ᵛविपश्चितं मेधाविनं होतारं मां ᵛपृच्छ । असौ होता सम्यक् स्तुतवान् न वा इत्येवं प्रश्नं कुरु । ᵛयः इन्द्रः ᵛते तव यजमानस्य ᵛसखिभ्यः ऋत्विग्भ्यः ᵛवरं श्रेष्ठं धनपुत्रादिकम् ᵛआ समन्तात् प्रयच्छतीति शेषः । तादृशमिन्द्रमिति पूर्वत्रान्वयः । पुनरपि कीदृशम् । ᵛविग्रं मेधाविनम् ᵛअस्तृतम् अहिंसितम् । ' विप्रः ' इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु विग्रविपश्चिच्छब्दौ पठितौ ( नि. ३. १५. २, १६ ) ॥ विग्रम् । वृषादित्वादाद्युदात्तः । अस्तृतम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । इन्द्रशब्दे ' ऋज्रेन्द्राग्र° ' ( उ. सू. २. १८६ ) इत्यादिना रन् । नित्त्वादाद्युदात्तः । सखिभ्यः । ' समाने ख्यश्चोदात्तः ' ( उ. सू. ४. ५७६ ) इति समाने उपपदे ख्यातेरिण् । ' डित् ' इत्यनुवृत्तेस्तस्य डित्वात् टिलोपश्च ( पा. सू. ६. ४. १४३ )। तत्संनियोगेन यलोपः । उपपदस्योदात्तत्वम् । ' समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ' ( पा. सू. ६. ३. ८४ ) इति सभावः । अतः सखिशब्द आद्युदात्तः । व्रियते इति वरः । ' ग्रहवृदृनिश्चिगमश्च ' ( पा. सू. ३. ३. ५८ ) इति अप् । तस्य पित्वात् धातुस्वर एव ॥

१. ठ—क्तिनन्ते नित्त्वे । २. ठ—°स्वरापवादकृदुत्तरपद° ।

उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः ॥ ५ ॥

उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत । दधानाः । इन्द्रे । इत् । दुवः ॥ ५ ॥

नः अस्माकं संबन्धिन ऋत्विज इति शेषः । ते ब्रुवन्तु इन्द्रं स्तुवन्तु । उत अपि च हे निदः निन्दितारः पुरुषाः निः आरत इतो देशान्निर्गच्छत । अन्यतश्चित् अन्यस्मादपि देशान्निर्गच्छत । कीदृशा ऋत्विजः । इन्द्रे दुवः परिचर्यां दधानाः कुर्वाणाः । इच्छब्दोऽवधारणे । सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थः ॥ निन्दन्तीति निदः । ' णिदि कुत्सायाम् ' । क्विपि नुमभावश्छान्दसः । सुपोऽनुदात्तत्वात् धातुस्वरः । आमन्त्रितत्वेऽपि वाक्यान्तरत्वेन स्ववाक्यगतपदादपरत्वात् न निघात इत्याद्युदात्तत्वमेव । अन्यतः । ' लिति ' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । चित इति अपिशब्दार्थे । तेन न केवलमितः, इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते । स एष धात्वर्थयोः संबन्धः आरत इति लुङा द्योत्यते । स हि धातुसंबन्धाधिकारे विधीयते । आरत । अर्तेः ' छन्दसि लुङ्लङ्लिटः ' ( पा. सू. ३. ४. ६ ) इति लोडर्थे लुङ् । मध्यमबहुवचनस्य तादेशः । ' सर्तिशास्त्यर्तिभ्यश्च ' ( पा. सू. ३. १. ५६ ) इति च्लेरङादेशः । ' ऋदृशोऽङि गुणः ' ( पा. सू. ७. ४. १६ ) इति गुणः । आडागमः । दधानाः । शानचश्चित्त्वात् प्राप्तमन्तोदात्तं बाधित्वा परत्वात ' अभ्यस्तानामादिः ' ( पा. सू. ६. १. १८९ ) इत्याद्युदात्तत्वम् । दुवः । ' नब्विषयस्यानिसन्तस्य ' ( फि. सू. २६ ) इत्याद्युदात्तः ॥ ॥ ७ ॥

उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ॥ ६ ॥

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥ ६ ॥

हे दस्म शत्रूणामुपक्षपयितरिन्द्र त्वदनुग्रहात् अरिः उत शत्रवोऽपि नः अस्मान् सुभगान् शोभनधनोपेतान् वोचेयुः उच्यासुः । कृष्टयः मनुष्या अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः । ततो धनसंपन्ना वयम् इन्द्रस्य शर्मणि इन्द्रप्रसादलब्धे सुखे स्याम इत् भवेमैव । ' मघम् ' इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु ' रयिः क्षत्रं भगः ' ( नि. २. १०. १० ) इति पठितम् । ' मनुष्याः ' इत्यादिषु पञ्चविंशतिसंख्याकेषु मनुष्यनामसु ' कृष्टयः ' ( नि. २. ३. ७ ) इति पठितम् ॥ उत । ' एवमादीनामन्तः ' ( फि. सू. ८२ ) इत्यन्तोदात्तः । सुभगान् । भगशब्दस्य क्रत्वादिषु पाठात् ' नञ्सुभ्याम् ' (पा. सू. ६.२. १७२ ) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा ' क्रत्वादयश्च ' ( पा. सू. ६. २. ११८ ) इत्युत्तरपदाद्युदात्तत्वम् । संहितायां ' दीर्घादटि समानपादे ' ( पा. सू. ८. ३. ९ ) इति नकारस्य रुत्वम् । ' भोभगो ' ( पा. सू. ८. ३. १७ ) इति यत्वम् । ' लोपः शाकल्यस्य ' ( पा. सू. ८. ३. १९ ) इति यलोपः । तस्यासिद्धत्वात् न पुनः संधिकार्यम् । ' आतोऽटि नित्यम् ' ( पा. सू. ८. ३. ३ ) इत्याकारस्य सानुनासिकता । अरिः । वचनव्यत्ययः । ' अच इः ' ( उ. सू. ४. ५७८ ) इति इप्रत्ययान्तः । प्रत्ययस्वरेणान्तोदात्तः । वोचेयुः उच्यासुः । ' वच परिभाषणे ' इत्यस्मात् आशीर्लिङि झेर्जुसादेशे ( पा. सू. ३. ४. १०८ ) ' लिङ्याशिष्यङ् ' ( पा. सू. ३. १. ८६ ) इति अङ्प्रत्यये ' वच उम् '

---

१. ठ–°दात्तत्वम् ।

( पा. सू. ७. ४. २० ) इत्युमागमः । गुणः । ' किदाशिषि ' ( पा. सू. ३. ४. १०४ ) इति यासुट् । ' छन्दस्युभयथा ' ( पा. सू. ३. ४. ११७ ) इति लिङादेशस्य सार्वधातुकत्वात् ' लिङः सलोपोऽनन्त्यस्य ' ( पा. सू. ७. २. ७९ ) इति सकारलोपः । ' अतो येयः ' ( पा. सू. ७. २. ८० ) । ' आद्गुणः ' ( पा. सू. ६. १. ८७ ) । अङ्गोऽदुपदेशाल्लसार्वधातुकस्वरेण लिङोऽनुदात्तत्वम् । अङ्प्रत्ययस्वर एव शिष्यते । तेन सह इकारस्य गुणः ' एकादेश उदात्तेनोदात्तः ' ( पा. ८. २. ५ ) इत्युदात्तः । दस्म । ' दसु उपक्षये ' इत्यस्मात् अन्तर्भावितण्यर्थात् ' इषियुधीन्धिदसिश्याधूसूभ्यो मक् ' ( उ. सू. १. १४२ ) । पदात्परत्वादामन्त्रितनिघातः । कृष्टयः । ' क्तिच्क्तौ च संज्ञायाम् ' ( पा. सू. ३. ३. १७४ ) इति क्तिचि मनुष्यनामत्वात् ' चितः ' ( पा. सू. ६. १. १६३ ) इत्यन्तोदात्तः । स्याम । ' अस भुवि ' । ' श्नसोरल्लोपः ' ( पा. सू. ६. ४. १११ ) । यासुट उदात्तत्वम् । पादादित्वादनिघातः । शर्मणि । ' शॄ हिंसायाम् ' । हिनस्ति दुःखमिति शर्म । ' अन्येभ्योऽपि दृश्यन्ते ' ( पा. सू. ३. २. ७५ ) इति मनिन् । ' नेड्वशि कृति ' ( पा. सू. ७. २. ८ ) इति इट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वम् ।

## एमाशुमाशवे भर यज्ञश्रियं नृमादनम् । पतयन्मन्दयत्सखम् ॥ ७ ॥

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥७॥

ईम् इति निपात इदंशब्दार्थे वर्तते । हे यजमान $^{v}$आशवे कृत्स्नसोमयागव्याप्तायेन्द्राय $^{v}$ईम् $^{v}$आ $^{v}$भर इमं सोममाहर । कीदृशं सोमम् । $^{v}$आशुं सवनत्रयव्याप्तं $^{v}$यज्ञश्रियं यज्ञस्य संपद्रूपं $^{v}$नृमादनं नृणामृत्विग्यजमानानां हर्षहेतुं $^{v}$पतयत् पतयन्तं कर्माणि[1] प्राप्नुवन्तं $^{v}$मन्दयत्सखम् । य इन्द्रो मन्दयति यजमानान् हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः । तत्प्रीतिहेतुत्वात् तृप्तिहेतुत्वाद्वा ॥ आशुम् । ' कृवापाजिमिस्वदिसाध्यशूभ्य उण् ( उ. सू. १. १ ) इति उण् । प्रत्ययस्वरः । आशवे । पूर्ववत् । यज्ञश्रियम् । ' समासस्य ' ( पा. सू. ६. १. २२३ ) इत्यन्तोदात्तः । माद्यन्तेऽनेनेति मादनः । ' करणाधिकरणयोश्च ' ( पा. सू. ३. ३. ११७ ) इति ल्युट् । तस्य लित्वात् पूर्व आकार उदात्तः । ' गतिकारकोपपदात्कृत् ' ( पा. सू. ६. २. १३९ ) इति स एव शिष्यते । पतयत् । पतेरदन्तस्य चौरादिको णिच् ( पा. सू. ३. १. २५ ) । अतो लोपः ( पा. सू. ६. ४. ४८. ) । तस्य स्थानिवत्त्वात् ( पा. सू. १. १. ५६ ) उपधाया वृद्ध्यभावः ( पा. सू. ७. २. ११६ ) । लटः शत्रादेशः । तस्य ' छन्दस्युभयथा ' ( पा. सू. ३. ४. ११७ ) इत्यार्धधातुकत्वेन शबभावात् ' °अदुपदेशात्° ' ( पा. सू. ६. १. १८६ ) इति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति । आर्धधातुकत्वेऽपि ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' ( परिभा. ३५ ) इति ' णेरनिटि ' ( पा. सू. ६. ४. ५१ ) इति णिलोपाभावः । ' सुपां सुलुक्° ' ( पा. सू. ७. १. ३९ ) इत्यमो लुक् । ' न लुमता° ' ( पा. सू. १. १. ६३ ) इति प्रत्ययलक्षणनिषेधात् ' उगिदचाम्° ' ( पा. सू. ७. १. ७० ) इति न नुम् । एवं मन्दयच्छब्दोऽन्तोदात्तः । मन्दयतीन्द्रे सखा । ' सप्तमी° ' ( पा. सू. २. १. ४० ) इति योगविभागात् समासः । ' तत्पुरुषे तुल्यार्थ° ' ( पा. सू. ६. २. २ ) इति सप्तमीपूर्वपदप्रकृतिस्वरत्वम् ॥

---

१. ठ–कर्मणि ।

अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ॥ ८ ॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः ।
प्र । आवः । वाजेषु । वाजिनम् ॥ ८ ॥

हे शतक्रतो बहुकर्मयुक्तेन्द्र त्वम् अस्य सोमस्य संबन्धिनमंशं पीत्वा वृत्राणां वृत्रनामकासुरप्रमुखाणां शत्रूणां घनः अभवः हन्ताऽभूः । ततो वाजेषु संग्रामेषु वाजिनं संग्रामवन्तं स्वभक्तं प्रावः प्रकर्षेण रक्षितवानसि ॥ अस्य इति इदंशब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्दिश्यते न तु पूर्वप्रकृतः सोमः परामृश्यते । अतोऽनन्वादेशत्वात् नात्र 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' ( पा. सू. २. ४. ३२) इत्यशादेशः । अतो न सर्वानुदात्तत्वं, किंतु त्यदाद्यत्वे ( पा. सू. ७. २. १०२ ) हलि लोपे ( पा. सू. ७. २. ११३ ) अकारः प्रातिपदिकस्वरेणोदात्त इति 'अन्तोदात्तात्' इत्यनुवृत्तौ 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा. सू. ६. १. १७१) इति विभक्तिरुदात्ता । पीत्वा । पिबतेः क्त्वाप्रत्यये घुमास्थादिना ( पा. सू. ६.४.६६ ) ईत्वम् । प्रत्ययस्वरेणान्तोदात्तः । असामर्थ्यान्न परामन्त्रिताङ्गवद्भावः । घनः । 'मूर्तौ घनः' ( पा. सू. ३. ३. ७७ ) इति हन्तेर्धातोः काठिन्ये अप्प्रत्ययः । तदस्यास्तीति अर्शआदित्वात् ( पा. सू. ५. २. १२७ ) अजन्तः । चित्त्वादन्तोदात्तः । वाजेषु । वृषादित्वादाद्युदात्तः । वाजिनम् । इनिप्रत्ययस्वरः ॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो । धनानामिन्द्र सातये ॥ ९ ॥

तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति शतऽक्रतो ।
धनानाम् । इन्द्र । सातये ॥ ९ ॥

हे शतक्रतो बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्त इन्द्र धनानां सातये संभजनार्थं वाजेषु युद्धेषु वाजिनं बलवन्तं त्वा पूर्वमन्त्रोक्तगुणयुक्तं त्वां वाजयामः अन्नवन्तं कुर्मः । 'रणः' इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु 'पौंस्ये महाधने वाजे अज्मन्' ( नि. २. १७. ४२ ) इति पठितम् । अष्टाविंशतिसंख्याकेष्वन्ननामसु 'अन्धः वाजः पाजः' ( नि. २. ७. २ ) इति पठितम् । 'उरु तुवि' इत्यादिषु द्वादशसु बहुनामसु 'शतं सहस्रम्' ( नि. ३. १. ९ ) इति पठितम् । 'अपः अप्नः' इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु 'शक्म क्रतुः' ( नि. २. १. ११ ) इति पठितम् । 'केतः केतुः' इत्यादिष्वेकादशसु प्रज्ञानामसु 'क्रतुः असुः' (नि. ३. ९. ५) इति पठितम् ॥ त्वा । 'अनुदात्तं सर्वम्°' ( पा. सू. ८. १. १८ ) इत्यनुवृत्तौ 'त्वामौ द्वितीयायाः' ( पा. सू. ८. १. २३ ) इति त्वादेशः । वाजेषु । 'वज व्रज गतौ' । वाजयति गमयति शरीरनिर्वाहम् अनेनेति वाजो बलमन्नं वा । ण्यन्तात् करणे घञ् । तत्र ञित्स्वरस्यापवादे 'कर्षात्वतः°' ( पा. सू. ६. १. १५९ ) इत्यन्तोदात्तत्वे प्राप्ते तस्याप्यपवादत्वेन 'वृषादीनां च' ( पा. सू. ६. १. २०३ ) इत्याद्युदात्तत्वम् । वाजयामः । वाजोऽस्यास्तीति वाजवान् । तं कुर्म इत्यर्थे 'तत्करोति तदाचष्टे' ( पा. सू. ३. १. २६. ५-६ ) इति णिच् । 'इष्ठवण्णौ प्रातिपदिकस्य' ( पा. सू. ६. ४. १५५. १ ) इति तस्मिन् परत इष्ठवद्भावात् 'विन्मतोर्लुक्' ( पा. सू. ५. ३. ६५ ) इति मतुपो लुक् । 'टेः' ( पा. सू. ६. ४. १५५ ) इत्यकारलोपः । णिचश्चित्त्वादन्तोदात्तत्वम् । शपः पित्त्वेनानुदात्तत्वम् । लसार्वधातुकस्वरेणा-

ष्यातस्याप्यनुदात्तत्वम्। पादादित्वात् 'तिङ्ङतिङः' इति न निघातः। शतक्रतो। आमन्त्रितनिघातः। धनानाम्। 'नब्विषयस्यानिसन्तस्य' (फि. सू. २६) इत्याद्युदात्तः। सातये। 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा. सू. ३. ३. ९७) इति क्तिन् उदात्तः॥

**यो रायो॒३॑ऽवनि॑र्म॒हान्त्सु॑पा॒रः सु॑न्व॒तः सखा॑। तस्मा॒ इन्द्रा॑य गायत॥ १०॥**

यः। रा॒यः। अ॒वनिः॑। म॒हान्। सु॒ऽपा॒रः। सु॒न्व॒तः। सखा॑। तस्मै॑। इन्द्रा॑य। गा॒य॒त॥ १०॥

✓यः इन्द्रः ✓रायः धनस्य ✓अवनिः रक्षकः स्वामी वा ✓तस्मा ✓इन्द्राय ✓गायत हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत। कीदृश इन्द्रः। ✓महान् गुणैरधिकः ✓सुपारः सुष्ठु कर्मणः पूरयिता ✓सुन्वतः यजमानस्य ✓सखा सखिवत् प्रियः॥ रायः। 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा. सू. ६. १. १७१) इति विभक्तेरुदात्तत्वम्। अवनिः। 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभाववृद्धिषु च' इत्यस्मात् 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' (उ. सू. २. २५९) इत्यनिः। प्रत्ययाद्युदात्तत्वम्। सुपारः। 'पॄ पालनपूरणयोः' इत्यस्मात् णिजन्तात् 'कर्तरि' इत्यनुवृत्तौ पचाद्यच् (पा. सू. ३. १. १३४)। 'चितः' (पा. सू. ६. १. १६३) इत्यन्तोदात्तः। सुन्वतः। 'शतुरनुमो नद्यजादी' (पा. सू. ६. १. १७३) इति विभक्तिरुदात्ता। सखा। 'समाने ख्यश्चोदात्तः' (उ. सू. ४. ५७६) इति इण्प्रत्ययान्तः। तत्संनियोगेन यलोपः; सशब्दस्य चोदात्तः। डित्वात् टिलोपः। तस्मै। 'अदिः' इत्यनुवृत्तौ 'त्यजितनियजिभ्यो डित्' (उ. सू. १. १२९) इति तनोतेः अदिप्रत्ययः। डित्वात् टिलोपे प्रत्ययस्वरेण तच्छब्द उदात्तः। त्यदाद्यत्वम्। 'एकादेश उदात्तेनोदात्तः' (पा. सू. ८. २. ५) इत्युदात्तः। 'सावेकाचस्तृतीयादिर्विभक्तिः' (पा.सू. ६. १. १६८) इति विभक्तेरुदात्तत्वे प्राप्ते प्रथमैकवचनेऽवर्णान्तत्वात् 'न गोश्वन्साववर्ण॰' (पा. सू. ६. १. १८२) इति निषेधः। इन्द्राय। इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः। नित्वादाद्युदात्तः। 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा. सू. १. ४. ३२) इत्यत्र 'क्रियाग्रहणं कर्तव्यम्' (पा. म. १. ४. ३२) इति वचनात् गानक्रियया प्राप्यत्वात् संप्रदानत्वेन चतुर्थी॥　　॥ ८॥

'आ तु' इति द्वितीयं सूक्तं दशर्चम्। 'सुरूपकृत्नुं दश' इत्यनुवृत्तौ 'आ तु युञ्जन्ति' इत्येवमनुक्रान्तत्वात्। ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्। विशेषविनियोगस्तु—अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः। 'अतिरात्रे पर्यायाणाम्' इति खण्डे 'आ त्वेता नि षीदत' (आश्व. श्रौ. ६. ४) इत्युक्तत्वात्॥

**आ त्वेता॒ नि षी॑द॒तेन्द्र॑म॒भि प्र गा॑यत। सखा॑यः॒ स्तोम॑वाहसः॥ १॥**

आ। तु। आ। इ॒त॒। नि। सी॒द॒त॒। इन्द्र॑म्। अ॒भि। प्र। गा॒य॒त॒। सखा॑यः। स्तोम॑ऽवाहसः॥ १॥

तुशब्दः क्षिप्रार्थो निपातः। द्वाभ्यामाङ्भ्यामन्वेतुम् इतशब्दोऽभ्यसनीयः। हे ✓सखायः ऋत्विजः क्षिप्रमस्मिन् कर्मणि आगच्छतागच्छत। आदरार्थोऽभ्यासः। आगत्य च ✓नि ✓षीदत उपविशत। उपविश्य च ✓इन्द्रमभि ✓प्र ✓गायत। सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः। ✓स्तोमवाहसः।

---

१. छ-ङ्ग-ण-थ-श—॰हिंसादहनभाव॰।

त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ॥ आ तु आ । निपातत्वादाद्युदात्ताः । इत । 'इण् गतौ' । 'द्व्यचोऽतस्तिङः' (पा. सू. ६. ३. १३५) इति संहितायां दीर्घत्वम् । नि । निपातत्वादाद्युदात्तः । सीदत । 'पाघ्राध्मास्थाम्नादाण्दृशि°' (पा. सू. ७. ३. ७८) इत्यादिना सदेः सीदादेशः । 'सदिरप्रतेः' (पा. सू. ८. ३. ६६) इति संहितायां षत्वम् । अभि । 'उपसर्गाश्चाभिवर्जम्' (फि. सू. ८१) इति वचनात् प्रातिपदिकान्तोदात्तत्वम् । स्तोमवाहसः । 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' (उ. सू. १. १३७) इति स्तौतेर्मन्प्रत्ययान्तः स्तोमशब्दो नित्त्वादाद्युदात्तः। स्तोमं वहन्तीति स्तोमवाहसः । 'वहिहाधाञ्भ्यश्छन्दसि' (उ. सू. ४. ६६० ) इत्यसुन् प्रत्ययः । तत्र 'णित्' इत्यनुवृत्तेः 'अत उपधायाः' (पा. सू. ७. २. ११६) इत्युपधाया वृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (उ. सू. ४. ६६६) इत्यौणादिकसूत्रात् समास आद्युदात्तः ॥

## पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ॥ २ ॥

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥ २ ॥

'सखायोऽभिप्रगायत' इति पदद्वयमत्रानुवर्तते । हे सखायः ऋत्विजः [1]सचा यूयं सर्वैः सह । यद्वा। सचा परस्परसमवायेन सुते अभिषुते सोमे प्रवृत्ते सति इन्द्रम् अभिप्रगायत। कीदृशमिन्द्रम्। पुरूतमम् । पुरून् बहून् शत्रून्[3] तमयति[4] ग्लापयतीति पुरूतमः । पुरूणां बहूनां वार्याणां वरणीयानां धनानाम् ईशानं स्वामिनम् ॥ पुरूतमम् । 'तमु ग्लाने' इति धातोरन्तर्भावितण्यर्थात् पचाद्यचि चित्त्वादन्तोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इत्युत्तरपदाद्युदात्तत्वम् । पुरूणाम्। 'पॄ पालनपूरणयोः' इत्यस्मात् 'कुः' इत्यनुवृत्तौ 'पॄभिदिव्यधिगृधिधृषिभ्यः' (उ.सू.१.२३) इति कुप्रत्ययः । कित्त्वाद्गुणनिषेधे (पा. सू. १. १. ५) 'उदोष्ठ्यपूर्वस्य' (पा. सू. ७. १. १०२) इत्युकारः 'उरण् रपरः' (पा. सू. १. १.५१)। प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः । अतो मतुपि ह्रस्वादन्तोदात्तात् पुरुशब्दात् परस्य नामो 'नामन्यतरस्याम्' (पा. सू. ६. १. १७७) इत्यन्तोदात्तत्वम् । ईशानम् । 'ईश ऐश्वर्ये' इति धातोरनुदात्तेत्त्वात् परस्य शानचो लसार्वधातुकानुदात्तत्वम् । वार्याणाम् । 'वृङ् संभक्तौ' इत्यस्मात् 'ऋहलोर्ण्यत्' (पा. सू. ३. १. १२४)। क्यब्विधौ हि वृञः एव ग्रहणं न वृङः (पा. सू. ३. १. १०९. १) । 'तित्स्वरितम्' (पा. सू. ६. १. १८५) इति प्रत्ययस्वरितं बाधित्वा 'ईडवन्दवृशंसदुहां ण्यतः' (पा. सू. ६. १. २१४) इति ण्यदन्तस्याद्युदात्तत्वम् । 'यतोऽनावः' (पा. सू. ६. १. २१३) इत्यत्र तु ण्यतो ग्रहणं न भवति तस्य द्व्यनुबन्धकत्वात् । एकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति नियमात् । सचा । 'षच समवाये' । 'धात्वादेः षः सः' (पा. सू. ६. १. ६४) । संपदादित्वाद्भावे क्विप् (पा. सू. ३. ३. १०८. ९) इति क्विप् । तृतीयैकवचनम् । धातुस्वरेणाद्युदात्तः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा. ३५) इति न्यायेन 'सावेकाचः°' इति सूत्रं न प्रवर्तते । सचा इत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वम् ॥

---

१. च-फ-'पञ्चदशैकविंशादिस्तोमा°' । २. च-छ-थ-फ-प्रापयन्ति । ३. ठ-'शत्रून्' नास्ति । ४. च-ठ-फ-तामयति ।

**स घा नो योग आ भुवत्स राये स पुरंध्याम् । गमद्वाजेभिरा स नः ॥ ३ ॥**

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ।
गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

घशब्दोऽवधारणार्थो निपातः । सर्वैस्तच्छब्दैः संबध्यते । स घ स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः नः अस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य संबन्धे आ भुवत् आभवतु । पुरुषार्थं साधयत्वित्यर्थः । सः एव राये धनार्थम् आ भुवत् आभवतु । सः एव पुरंध्यां योषिति आ भुवत् । यद्वा । बहुविधायां बुद्धौ आ भुवत् । ‘ पुरंधिर्बहुधीः ’ ( निरु. ६. १३ ) इति यास्कः । सः एव वाजेभिः देयैरन्नैः सह नः अस्मान् आ गमत् आगच्छतु ॥ घ । ‘ चादयोऽनुदात्ताः ’ ( फि. सू. ८४ ) इत्यनुदात्तः । संहितायाम् ‘ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ’ ( पा. सू. ६. ३. १३३ ) इति दीर्घः । योगे । घञो ञित्त्वादाद्युदात्तत्वम् । भुवत् भूयात् । भवतेः आशीर्लिङि परतः ‘ लिङ्याशिष्यङ् ’ ( पा. सू. ३. १. ८६ ) इति अङ्प्रत्ययः । तस्य ङित्त्वेन गुणाभावादुवङादेशः । ‘ किदाशिषि ’ ( पा. सू. ३. ४. १०४ ) इति यासुट् न भवति ‘ अनित्यमागमशासनम् ’( परिभा. ९३. २ ) इति वचनात् । ‘ तिङ्ङतिङः ’ इति निघातः । ‘ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ’ ( पा. सू. ६. १. १७१ ) इति राये इत्येतस्य विभक्तेरुदात्तत्वम् । पुरंध्याम् । पुरंधिः पुरुधीः । पृषोदरादित्वात् ( पा. सू. ६. ३. १०९ ) उकारस्य अमादेशः ईकारस्य ह्रस्वश्च । ‘ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ’ ( पा. सू. ६. २. ९१. १ ) इत्याद्युदात्तत्वम् । अथवा पुरं शरीरं धीयतेऽस्यामिति ‘ कर्मण्यधिकरणे च ’ ( पा. सू. ३. ३. ९३ ) इति किप्रत्ययः । अलुक् छान्दसः । ‘ नब्विषयस्यानिसन्तस्य ’ ( फि. सू. २६ ) इति पुरशब्द आद्युदात्तः । दासीभारादित्वात् ( पा. सू. ६. २. ४२ ) पूर्वपदप्रकृतिस्वरत्वम् । गमत् । गमेर्लेटः तिप् । ‘ इतश्च लोपः परस्मैपदेषु ’ ( पा. सू. ३. ४. ९७ ) इति इकारलोपः । ‘ बहुलं छन्दसि ’ ( पा. सू. २. ४. ७३ ) इति शपो लुक् । ‘ लेटोऽडाटौ ’ ( पा. सू. ३. ४. ९४ ) इत्यडागमः । ‘ आगमा अनुदात्ताः ’ ( पा. म./३. १. ३. ७ ) इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते । वाजेभिः । वृषादित्वादाद्युदात्तः ॥

**यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः । तस्मा इन्द्राय गायत ॥ ४ ॥**

यस्य । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः । तस्मै । इन्द्राय । गायत ॥४॥

समत्सु युद्धेषु यस्य इन्द्रस्य संस्थे रथे युक्तौ हरी द्वावश्वौ शत्रवः न वृण्वते न संभजन्ते रथमश्वौ च दृष्ट्वा पलायन्ते इत्यर्थः । तस्मा इन्द्राय तत्संतोषार्थं हे ऋत्विजः गायत स्तुतिं कुरुत । ‘ रणः ’ इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु ‘ समत्सु समरणे ’ ( नि. २. १७. २२ ) इति पठितम् ॥ संस्थे । सम्यक् तिष्ठतीति संस्थो रथः । ‘ आतश्चोपसर्गे ’ ( पा. सू. ३. १. १३६ ) इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । वृण्वते । प्रत्ययस्वरेण अकार उदात्तः । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ( पा. सू. ६. १. १५८. ९-११ ) । ‘ तिङ्ङतिङः ’ इति निघातो न भवति, ‘ यद्वृत्तान्नित्यम् ’ ( पा. सू. ८. १. ६६ ) इति प्रतिषेधात् । पञ्चमीनिर्देशेऽपि ( पा. सू. १. १. ६७ ) अत्र व्यवहितेऽपि कार्यमिष्यते । हरतो रथमिति हरी अश्वौ । ‘ इन् ’ इत्यनुवृत्तौ ( उ. सू. ४. ५५७ ) ‘ हपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च ’ ( उ. सू. ४. ५५८ ) इति इन्-

प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । समत्सु[1] । संपूर्वात् अत्तेः क्विप् । शत्रवः । शातिः सौत्रो धातुर्हिंसार्थः । ‘ रुशातिभ्यां क्रुन् ’ ( उ. सू. ४. ५४३ ) । नित्त्वादाद्युदात्तत्वम्[2] । तस्मै । ‘ सावेकाचः ’ ( पा. सू. ६. १. १६८ ) इति विभक्त्युदात्तस्य ‘ न गोश्वन्साववर्ण॰’ ( पा. सू. ६. १. १८२ ) इति प्रतिषेधात् प्रातिपदिकस्वर एव ॥

सुतपाव्ने सुता इमे शुचयो यन्ति वीतये । सोमासो दध्याशिरः ॥ ५ ॥

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये । सोमासः । दधिऽआशिरः ॥ ५ ॥

ᵛइमे ᵛसोमासः अस्मिन् कर्मणि संपादिताः सोमाः ᵛसुतपाव्ने अभिषुतस्य सोमस्य पानकर्त्रे । षष्ठ्यर्थे चतुर्थी । तस्य पातुः ᵛवीतये भक्षणार्थं ᵛयन्ति तमेव प्राप्नुवन्ति । कीदृशाः सोमाः । ᵛसुताः अभिषुताः । ᵛशुचयः दशापवित्रेण शोधितत्वात् शुद्धाः । ᵛदध्याशिरः अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः ॥ सुतपाव्ने । सुतं पिबतीति सुतपावा । वनिपः पित्त्वात् धातुस्वर एव शिष्यते । समासे द्वितीयापूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम् । शुचयः । ‘ शुच दीप्तौ ’। ‘इन् ’ इत्यनुवृत्तौ ‘ इगुपधात्कित् ’ (उ. सू. ४. ५५९) इति इन् । कित्त्वाल्लघूपधगुणाभावः। नित्त्वादाद्युदात्तत्वम् । वीतये । ‘ वि गतिप्रजनकान्त्यशनखादनेषु ’ इत्यस्मात् ‘ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ’ ( पा. सू. ३. ३. ९६ ) इति क्तिन् उदात्तः । सोमासः । ‘ षुञ् अभिषवे ’। ‘ अर्तिस्तुसुहुसृधृक्षि॰ ’ ( उ. सू. १. १३७ ) इत्यादिना मन् । नित्त्वादाद्युदात्तः । ‘ आज्जसेरसुक् ’ ( पा. सू. ७. १. ५० ) इत्यसुगागमः । दध्याशिरः । दधाति पुष्णातीति दधि । ‘ डुधाञ् धारणपोषणयोः ’। ‘ आदृगमहनजनः किकिनौ लिट् च ’ ( पा. सू. ३. २. १७१ ) इति किन् । लिड्वद्भावात् द्विर्भावः । कित्त्वादाकारलोपः । नित्त्वादाद्युदात्तत्वम् । ‘ शॄ हिंसायाम् ’। शृणाति हिनस्ति सोमेऽवनीयमानं सत् सोमस्य स्वाभाविकं रसम् ऋजीषत्वप्रयुक्तं नीरसं दोषं वा इत्याशीः । क्विपि ‘ ऋत इद्धातोः ’ ( पा. सू. ७. १. १०० ) इति इत्वं रपरत्वं च । दध्येव आशीर्येषां सोमानां ते दध्याशिरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ९ ॥

त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ॥ ६ ॥

त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सुऽक्रतो ॥६॥

ᵛसुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे ᵛइन्द्र ᵛत्वं ᵛसुतस्य अभिषुतस्य सोमस्य ᵛपीतये पानार्थं ᵛज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च ᵛसद्यः तस्मिन्नेव क्षणे ᵛवृद्धो ᵛअजायथाः अभिवृद्धोत्साहेन युक्तोऽभूः[3] ॥ पीतये । ‘ पा पाने ’ इत्यस्मात् ‘ स्थागापापचो भावे ’ ( पा. सू. ३. ३. ९५ ) इति क्तिन् । ‘ घुमास्था॰ ’ (पा. सू. ६. ४. ६६) इत्यादिना ईत्वम् । तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वम् । उत्तरसूत्रगतमुदात्तपदमत्रापि वा योजनीयम् । सद्यः । ‘ सद्यः परुत्परारि॰ ’ ( पा. सू. ५. ३. २२ ) इति सूत्रेण समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते । प्रत्ययस्वरेणोदात्तः । वृद्धः ।

---

१. ग-घ-च-छ-ण-त-फ-य-‘ समत्सु । संपूर्वात् अत्तेः क्विप् ’ नास्ति । २. ठ-॰द्युदात्तः । ३. ठ-अभिवृद्ध उत्साहयुक्तोऽभूः ।

'वृधु वृद्धौ'। 'उदितो वा' (पा. सू. ७. २. ५६) इति क्त्वाप्रत्यये इटो विकल्पितत्वात् 'यस्य विभाषा' (पा. सू. ७. २. १५) इति निष्ठायामिट्प्रतिषेधः। प्रत्ययस्वरेणोदात्तः। ज्यैष्ठ्याय। ज्येष्ठस्य भावो ज्यैष्ठ्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा. सू. ५. १. १२४) इति ष्यञ्। ञित्वादाद्युदात्तः ॥

आ त्वा॑ विशन्त्वा॒शव॒ः सोमा॑स इन्द्र गिर्वणः। शं ते॑ सन्तु॒ प्रचे॑तसे ॥ ७ ॥

आ। त्वा॒। वि॒श॒न्तु॒। आ॒शव॑ः। सोमा॑सः। इ॒न्द्र॒। गि॒र्व॒णः॒। शम्। ते॒। स॒न्तु॒। प्रऽचे॑तसे ॥७॥

हे इन्द्र त्वां सोमासः सोमाः आ विशन्तु आभिमुख्येन प्रविशन्तु। कीदृशाः सोमाः। आशवः सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः[1]। कीदृशेन्द्र। गिर्वणः गीर्भिः स्तुतिभिः संभजनीय देवविशेष। 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (निरु. ६. १४) इति यास्कः। तथाविध हे इन्द्र ते तव प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु॥ गिर्वणः। गृणन्तीति गिरः स्तुतयः। 'गॄ शब्दे'। क्विपि 'ॠत इद्धातोः' (पा. सू. ७. १. १००) इति इत्वं रपरत्वं च। गीर्भिर्वन्यते सेव्यते इति गिर्वणाः। 'वन षण संभक्तौ'। संभक्तिः सेवा। 'सर्वधातुभ्योऽसुन्' (उ. सू. ४. ६२८) इत्यसुन्प्रत्ययः। प्रचेतसे। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

त्वां स्तोमा॑ अवीवृधन्त्वामु॒क्था श॑तक्रतो। त्वां व॑र्धन्तु नो॒ गिर॑ः ॥ ८ ॥

त्वाम्। स्तोमा॑ः। अ॒वी॒वृ॒ध॒न्। त्वाम्। उ॒क्था। श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो।
त्वाम्। व॒र्ध॒न्तु॒। नः॒। गिर॑ः ॥ ८ ॥

हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वा इन्द्र त्वां स्तोमाः सामगानां स्तोत्राणि अवीवृधन् वर्धितवन्ति[2]। तथा बह्वृचानाम् उक्था शस्त्राणि त्वाम् अवीवृधन्। यस्मात् पूर्वमेवमासीत् तस्मादिदानीमपि नः अस्माकं गिरः स्तुतयः त्वां वर्धन्तु वर्धयन्तु अतिवृद्धं[3] कुर्वन्तु ॥ स्तोमाः। मनो[4] नित्वादाद्युदात्तः[5]। अवीवृधन्। 'वृधु वृद्धौ'। ण्यन्तात् लुङि चङि (पा. सू. ३. १. ४८) 'उर्ॠत्' (पा. सू. ७. ४. ७) इति वृधेरुपधाया ऋकारस्य ऋकारविधानादन्तरङ्गोऽपि गुणो बाध्यते। द्विर्भाव-(पा. सू. ६. १. ११) हलादिशेष-(पा. सू. ७. ४. ६०) सन्वद्भाव-(पा. सू. ७. ४. ९३) इत्व-(पा. सू. ७. ४. ७९) दीर्घत्व-(पा. सू. ७. ४. ९४) अडागमाः (पा. सू. ६. ४. ७१)। उक्था उक्थानि। 'पातॄतुदिवचिरिचिसिचिभ्यस्थक्' (उ. सू. २. १६४) इति वचेः थक्प्रत्ययः। तस्य कित्वात् संप्रसारणम्। 'शेश्छन्दसि बहुलम्' (पा. सू. ६. १. ७०) इति शिलोपो नलोपश्च। प्रत्ययस्वरेणान्तोदात्तः। असामर्थ्यादामन्त्रितपरस्यापि न पराङ्गवद्भाव इति नानुदात्तत्वम्। वर्धन्तु। अन्तर्भावितण्यर्थात् वृधेः व्यत्ययेन परस्मैपदम् ॥

---

१. ठ—व्याप्तिं गताः। २. ठ—वर्धयन्ति। ३. ठ—वृद्धम्। ४. ठ—स्तोमन्। ५. ठ—नाद्युदात्तत्वम्।

अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् । यस्मिन्विश्वानि पौंस्या ॥ ९ ॥

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ॥९॥

इन्द्रः इमं वाजं सोमरूपमन्नं सनेत् संभजेत् । कीदृश इन्द्रः । अक्षितोतिः अहिंसितरक्षणः । कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः[1] । कीदृशं वाजम् । सहस्रिणं प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन[2] सहस्रसंख्यायुक्तम् । यस्मिन् वाजे विश्वानि सर्वाणि पौंस्या[3] पौंस्यानि पुंस्त्वानि बलानि वर्तन्ते तादृशं वाजमिति पूर्वत्रान्वयः ॥ अक्षितोतिः । ननु 'क्षि क्षये' इत्ययं धातुरकर्मकः । तस्य च कर्माभावात् अधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यम् । तदिह यदि कर्तर्यधिकरणे वा स्यात् तदा तयोरर्थयोः ण्यत्प्रत्ययस्याविधानात् 'क्षियः' इत्यनुवृत्तौ ( पा. सू. ६. ४. ५९ ) 'निष्ठायामण्यदर्थे' ( पा. सू. ६. ४. ६० ) इति दीर्घेण भवितव्यम् । तथा च 'क्षियो दीर्घात' ( पा. सू. ८. २. ४६ ) इति निष्ठानत्वे अक्षीण इति स्यात् न तु अक्षित इति । अथ 'नपुंसके भावे क्तः' ( पा. सू. ३. ३. ११४ ) इति भावपरः क्षितशब्दो गृह्यते । तदा तस्य ण्यदर्थत्वेन 'अण्यदर्थे' इति निषेधात् दीर्घनत्वयोरभावात् क्षितमिति सिध्यति । तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति न विद्यते क्षितमत्रेति बहुव्रीहिणैव भवितव्यम् । तथा च 'नञ्सुभ्याम्' ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तत्वं स्यात् । पुनः ऊतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरस्तिष्ठेदिति अभिमतमाद्युदात्तत्वं न सिध्येदिति । सत्यम् । अत एवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते । तेन सकर्मकत्वात् कर्मण्येषा निष्ठा । ततश्च 'अण्यदर्थे' इति निषेधात् दीर्घो निष्ठानत्वं च न भविष्यति । तथा च नञ्तत्पुरुषे न क्षिता अक्षिता अक्षयिता इत्यर्थः । तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम् । पुनः ऊतिपदेन बहुव्रीहौ स एव स्वरः स्थास्यतीति[4] न कोऽपि दोषः । 'रि क्षि चिरि जिरि दाश दृ जिघांसायाम्' इति क्षिणोतेर्हिंसार्थस्य वा कर्मणि निष्ठा । तथा चाहिंसितोतिरित्यर्थे उक्तक्रमेण स्वरः सिध्यतीति न दोषः । सनेत् । 'वन षण संभक्तौ' । भौवादिकः । वाजम् । वृषादित्वादाद्युदात्तः । इन्द्रः । रनो नित्वादाद्युदात्तः । सहस्रिणम् । सहस्रमस्यास्ति । 'अत इनिठनौ' ( पा. सू. ५. २. ११५ ) । प्रत्ययस्वरः । विश्वानि । विशेः क्वन् ( उ. सू. १. १४९ ) नित्वादाद्युदात्तः । पुंसः कर्माणि पौंस्यानि । ब्राह्मणादेराकृतिगणत्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' ( पा. सू. ५. १. १२४ ) इति ष्यञ् । ञित्वादाद्युदात्तः । प्रथमाबहुवचनस्य 'सुपां सुलुक्०' ( पा. सू. ७. १. ३९ ) इत्यादिना डादेशः । ननु 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' ( पा. सू. ४. १. ८७ ) इत्यनेन 'धान्यानां भवने क्षेत्रे खञ्' ( पा. सू. ५. २. १ ) इत्येतत्पर्यन्तेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानात्, यथा पुंसोऽपत्यं पौंस्नः पुंस आगतः पौंस्नः इत्यादि, तद्वत् पुंसो भावः कर्म वेत्यस्मिन्नप्यर्थे ष्यञं बाधित्वा पौंस्नानि इत्येव भवितव्यम् । कथमुच्यते पौंस्यानीति । उच्यते–'आ च त्वात्' ( पा. सू. ५. १. १२० ) इति सूत्रे त्वात् इत्यवधिनिर्देशात् 'ब्रह्मणस्त्वः' ( पा. सू. ५. १. १३६ ) इत्येतत्पर्यन्तैः इमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः । एवं तत्रैव चशब्दात् नञ्स्नञोरपि ष्यञादिभिः समावेश एव, न बाध्यबाधकभावः ॥

---

१. ठ–मुञ्चतीति । २. च-छ-फ–वर्तमानत्वेन । ३. ग-घ-छ-ण-त-य–पौंस्या पुंस्त्वानि । ४. ठ–सेत्स्यतीति ।

मा नो॒ मर्ता॑ अ॒भि द्रु॑ह॒न्तनू॑नामिन्द्र गिर्वणः । ईशा॑नो यवया व॒धम् ॥ १० ॥

मा । नः॒ । मर्ताः॑ । अ॒भि । द्रु॒ह॒न् । त॒नूना॑म् । इ॒न्द्र॒ । गि॒र्व॒णः॒ । ईशा॑नः । य॒व॒य॒ । व॒धम् ॥ १० ॥

हे ᵛगिर्वणः ᵛइन्द्र ᵛमर्ताः विरोधिनो मनुष्याः ᵛनः अस्मदीयानां ᵛतनूनां शरीराणां ᵛमा ᵛअभि ᵛद्रुहन् अभितो द्रोहं मा कुर्युः । ᵛईशानः समर्थस्त्वं ᵛवधं वैरिभिः संपाद्यमानं ᵛयवय अस्मत्तः पृथक्कुरु । 'मनुष्याः' इत्यादिषु पञ्चविंशतिसंख्याकेषु मनुष्यनामसु 'मर्ताः व्राताः' ( नि. २. ३. १३ ) इति पठितम् ॥ मर्ताः । 'असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' ( उ. सू. ३. ३६६ ) इति तन् । नित्त्वादाद्युदात्तः । अभि । 'एवमादीनामन्तः' ( फि. सू. ८२ ) । द्रुहन् । 'द्रुह जिघांसायाम्' । 'लिङर्थे लेट्' ( पा. सू. ३. ४. ७ ) इति प्रार्थनायां लेट् । तस्य झि । 'झोऽन्तः' ( पा. सू. ७. १. ३ ) । 'इतश्च लोपः परस्मैपदेषु' ( पा. सू. ३. ४. ९७ ) इति इकारलोपः । शपो लुक् । 'सार्वधातुकमपित्' ( पा. सू. १. २. ४ ) इति तिङो ङित्त्वाल्लघूपधगुणाभावः ( पा. सू. १. १. ५ ) । तनूनाम् । असामर्थ्याच्च पराङ्गवद्भावः । इन्द्र गिर्वणः । गतम् । ईशानः । धातोरनुदात्तत्वात् शपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यवय । यौतेर्णिचि 'संज्ञापूर्वको विधिरनित्यः' (परिभा. ९३. १) इति वृद्धिर्न क्रियते । अथवा यौतीति यवः । पचाद्यच् ( पा. सू. ३. १. १३४ ) । यवं करोतीत्यर्थे 'तत्करोति तदाचष्टे' ( पा. सू. ३. १. २६. ५-६ ) इति णिच् । इष्ठवद्भावात् टिलोपः ( पा. सू. ६. ४. १५५. १ ) । तस्य स्थानिवद्भावात् ( पा. सू. १. १. ५६ ) वृद्ध्यभावः । वधम् । 'हनश्च वधः' ( पा. सू. ३. ३. ७६ ) इति भावे अप् । तत्संनियोगशिष्टः[1] स्थानिवद्भावेनान्तोदात्तो[1] वधादेशः । उदात्तनिवृत्तिस्वरेण अपः उदात्तत्वम् ॥　　॥ १० ॥

'सुरूप' इत्यादिषु षट्सूक्तेषु तृतीयस्य 'युञ्जन्ति' इति सूक्तस्य मन्त्रसंख्या ऋषिच्छन्दोदैवतानि विनियोगश्चेत्येते पूर्ववदवगन्तव्याः । दशर्चे तस्मिन् सूक्ते आद्यास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः । 'आदह' इत्येतां चतुर्थीमारभ्य षड्चो मारुत्यः । तासु मध्ये 'वीळु चित्', 'इन्द्रेण' इत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः । तदेतत् सर्वमनुक्रमणिकायामुक्तं—'सुरूपकृत्नुं दशैन्द्रमा तु युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळु चिदिन्द्रेणेत्यैन्द्र्यौ च' इति । एतस्मिन् सूक्ते 'युञ्जन्ति' इत्यसौ तृचस्तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः । तथा च 'अतिरात्रे पर्यायाणाम्' इति खण्डे 'योगेयोगे तवस्तरं युञ्जन्ति ब्रध्नमरुषम्' ( आश्व. श्रौ. ६. ४ ) इति सूत्रितम् ॥

यु॒ञ्जन्ति॑ ब्र॒ध्नम॑रु॒षं चर॑न्तं॒ परि॑ त॒स्थुषः॑ । रोच॑न्ते रोच॒ना दि॒वि ॥ १ ॥

यु॒ञ्जन्ति॑ । ब्र॒ध्नम् । अ॒रु॒षम् । चर॑न्तम् । परि॑ । त॒स्थुषः॑ । रोच॑न्ते । रो॒च॒ना । दि॒वि ॥ १ ॥

इन्द्रो हि परमैश्वर्ययुक्तः । परमैश्वर्यं च अग्निवाय्वादित्यनक्षत्र[2]रूपेणावस्थानादुपपद्यते । ᵛब्रध्नम् आदित्यरूपेणावस्थितम् ᵛअरुषं हिंसकरहितं[3]ाग्निरूपेणावस्थितं ᵛचरन्तं वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं ᵛपरि ᵛतस्थुषः परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिनः ᵛयुञ्जन्ति स्वकीये कर्मणि देवतात्वेन संबद्धं कुर्वन्ति । तस्यैवेन्द्रस्य मूर्तिविशेषभूतानि ᵛरोचना रोचनानि नक्षत्राणि ᵛदिवि द्युलोके ᵛरोचन्ते प्रकाशन्ते । अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातं— 'युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो

---

१. ठ–तत्संनियोगेनान्तोदात्तः; च-फ–तत्संनियोगशिष्टः स्थानिवद्भावेन संनियोगेनान्तोदात्तः; त–तत्संनियोगशिष्टः तत्संनियोगेनान्तोदात्तः ।　२. ठ–'नक्षत्र' नास्ति ।　३. ठ–अहिंसकाग्नि° ।

ब्रध्नः। आदित्यमेवास्मै युनक्ति। अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरन्तमित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परि तस्थुष इत्याह । इमे वै लोकाः परि तस्थुषः । इमानेवास्मै लोकान्युनक्ति। रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवास्मै रोचयति ' ( तै. ब्रा. ३. ९. ४. १-२ ) इति । पञ्चविंशतिसंख्याकेषु महन्नामसु ' महः ब्रध्नः ' ( नि. ३. ३. २ ) इति पठितम् । आदित्यस्यापि महत्त्वादेव ब्रध्नत्वम् ॥ युञ्जन्ति । अन्तेः प्रत्ययस्वरेणाद्युदात्तत्वम् । ब्रध्नम् । प्रातिपदिकान्तोदात्तः । अरुषम् । 'उष रुष रिष हिंसार्थाः' । रोषन्तीति रुषा हिंसकाः । 'इगुपधज्ञाप्रीकिरः कः ' ( पा. सू. ३. १. १३५ ) इति कः । प्रत्ययस्वरेणोदात्तः । न सन्ति रुषा यस्य असौ अरुषः । ' नञ्सुभ्याम् ' ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । ' अमि पूर्वः ' ( पा. सू. ६. १. १०७ ) इति पूर्वरूपे ' एकादेश उदात्तेनोदात्तः ' ( पा. सू. ८. २. ५ ) इत्युदात्तत्वम् । चरन्तम् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । तस्थुषः । तिष्ठतेर्लिटः क्वसुरादेशः ( पा. सू. ३. २. १०७ ) । ' वस्वेकाजाद्घसाम् ' ( पा. सू. ७. २. ६७ ) इति इटमन्तरङ्गमपि बाधित्वा ' संप्रसारणं संप्रसारणाश्रयं च बलीयः ' ( पा. म. ६. १. १७. २ ) इति शसि परतो भत्वात् ( पा. सू. १. ४. १८ ) ' वसोः संप्रसारणम् ' ( पा. सू. ६. ४. १३१ ) । परपूर्वत्वम् । ' आदेशप्रत्यययोः ' ( पा. सू. ८. ३. ५९ ) इति षत्वम् । वसोः प्रत्ययस्वरेणोदात्तत्वम् । रोचन्ते । तिङो लसार्वधातुकानुदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव । रोचना । ' अनुदात्तेतश्च हलादेः ' ( पा. सू. ३. २. १४९ ) इति युच् । ' युवोरनाकौ ' ( पा. सू. ७. १. १ ) इत्यनादेशः । ' चितः ' ( पा. सू. ६. १. १६३ ) इत्यन्तोदात्तत्वम् । दिवि । ' ऊडिदम् ' ( पा. सू. ६. १. १७१ ) इत्यादिना विभक्तेरुदात्तत्वम् ॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ २ ॥

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥२॥

अस्य ब्रध्नादिशब्दप्रतिपाद्यस्य आदित्यादिमूर्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य रथे हरी एतन्नामानौ द्वावश्वौ सारथयः युञ्जन्ति । इन्द्रसंबन्धिनोरश्वयोर्हरिनामत्वं ' हरी इन्द्रस्य रोहितोऽग्नेः ' ( नि. १. १५. १ ) इति पठितत्वात् । कीदृशौ हरी । काम्या कामयितव्यौ । विपक्षसा विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ । रथस्य द्वयोः पार्श्वयोर्योजितावित्यर्थः । शोणा रक्तवर्णौ धृष्णू प्रगल्भौ नृवाहसा नृणां पुरुषाणाम् इन्द्रतत्सारथिप्रमुखाणां वोढारौ ॥ अस्य । ब्रध्नम् इत्युक्तस्य परामर्शात् ' इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ' ( पा. सू. २. ४. ३२ ) इति अश् । शित्वात् ( पा. सू. १. १. ५५ ) सर्वादेशोऽनुदात्तः । विभक्तिरनुदात्तैव इति सर्वानुदात्तत्वम् । काम्या । ' कमु कान्तौ ' । ' कमेर्णिङ् ' ( पा. सू. ३. १. ३० ) । कामयतेः ' अचो यत् ' ( पा. सू. ३. १. ९७ ) । तित्स्वरितापवादत्वेन ' यतोऽनावः ' ( पा. सू. ६. १. २१३ ) इत्याद्युदात्तत्वम् । ' सुपां सुलुक् ' ( पा. सू. ७. १. ३९ ) इति द्विवचनस्य डादेशः । हरतो रथमिति हरी । ' हृपिषि ' ( उ. सू. ४. ५५८ ) इत्यादिना इन् । नित्त्वादाद्युदात्तः । विपक्षसा । ' पचिवचिभ्यां सुट् च ' ( उ. सू. ४. ६५९ ) इति पचेः असुन् सुडागमश्च । विभिन्ने पक्षसी पार्श्वौ ययोस्तौ । विशब्दो निपातत्वादुदात्तः । पूर्वपदप्रकृतिस्वरेण स एव शिष्यते । द्विवचनस्य डादेशः । रथे । रमन्तेऽस्मिन्निति रथः । ' रमु क्रीडायाम् ' । ' हनिकुषिनीरमिकाशिभ्यः क्थन् ' ( उ. सू. २. १५९ ) इति क्थन् । कित्त्वात् ' अनुदात्तोपदेश '

---

१. च-छ-ण-त-फ—प्रत्ययस्वरेणान्तोदात्तः । २. क-क्ष-ठ-ण-न-य—शासिवसिघसीनां च ।

( पा. सू. ६. ४. ३७ ) इत्यादिना मकारलोपः। नित्स्वरेणाद्युदात्तः। शोणा। ‘ शोणृ वर्णगत्योः ’ गमनकरणत्वात् करणे घञ्। ञित्वादाद्युदात्तः। ‘ सुपां सुलुक्° ’ इति डादेशः। धृष्णू। ‘ ञिधृषा प्रागल्भ्ये ’। ‘ त्रसिगृधिधृषिक्षिपेः क्नुः ’ ( पा. सू. ३. २. १४० )। किःत्वाद्गुणाभावः। प्रत्ययस्वरः। नृवाहसा। नॄन् वहतः इति वहेः ‘ वहिहाधाञ्भ्यश्छन्दसि ’ ( उ. सू. ४. ६६० ) इत्यसुन्। ‘ णित् ’ ( उ. सू. ४. ६५७ ) इत्यनुवृत्तेर्वृद्धिः। नित्वादाद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः ॥ ३ ॥

केतुम्। कृण्वन्। अकेतवे। पेशः। मर्याः। अपेशसे। सम्। उषत्ऽभिः। अजायथाः ॥३॥

हे ᵛमर्याः मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्यमिति तदुच्यते। आदित्यरूपोऽयमिन्द्रः ᵛउषद्भिः दाहकैः रश्मिभिः प्रतिदिनमुषःकालैर्वा संभूय ᵛअजायथाः उदपद्यत। अथवा सूर्यस्यैवास्तमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा संबोधनं क्रियते। हे मर्य प्रतिदिनं त्वम् अजायथाः इति योज्यम्। किं कुर्वन्। ᵛअकेतवे रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय ᵛप्राणिने ᵛकेतुं ᵛकृण्वन् प्रातः प्रज्ञानं कुर्वन्। ᵛअपेशसे रात्रौ अन्धकारावृतत्वेन अनभिव्यक्तत्वात् रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन ᵛपेशः रूपमभिव्यज्यमानं कुर्वन्। ‘ पेश इति रूपनाम पिंशतेः ’ ( निरु. ८. ११ ) इति यास्कः। ‘ अकेतवे ’, ‘ अपेशसे ’ इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ ॥ केतुम्। प्रातिपदिकस्वरः। कृण्वन्। ‘ कृवि हिंसाकरणयोश्च ’। लटः शत्रादेशः। ‘ इदितो नुम् धातोः ’ ( पा. सू. ७. १. ५८) इति नुमागमः। कर्तरि शपि प्राप्ते ‘ धिन्विकृण्व्योर च ’ ( पा. सू. ३. १. ८० ) इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः। ‘ अतो लोपः ’ ( पा. सू. ६. ४. ४८ ) इति अकारलोपः। तस्य स्थानिवद्भावात् पूर्वस्य लघूपधगुणो ( पा. सू. ७. ३. ८६ ) न भवति। अकारस्य प्रत्ययस्वरेणोदात्तत्वम्। अकेतवे। बहुव्रीहौ ‘ नञ्सुभ्याम् ’ ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तत्वम्। पेशः। ‘ नब्विषयस्यानिसन्तस्य ’ ( फि. सू. २६ ) इत्याद्युदात्तः। मर्याः। ‘ छन्दसि निष्टर्क्य° ’ ( पा. सू. ३. १. १२३ ) इत्यादौ म्रियतेर्निपातः[1]। आमन्त्रितनिघातः ( पा. सू. ८. १. १९ )। असामर्थ्यात् पूर्वस्य न पराङ्गवद्भावः। अपेशसे। ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम्। सम्। निपात आद्युदात्तः। उषद्भिः। ‘ उष प्लुष दाहे ’। ज्वलद्भिः रश्मिभिः। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः। ‘ सार्वधातुकमपित् ’ ( पा. सू. १. २. ४ ) इति तस्य ङित्वात् लघूपधगुणो न भवति। शस्य प्रत्ययस्वरेणोदात्तत्वम्। उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वम्। ‘ एकादेश उदात्तेनोदात्तः ’ ( पा. सू. ८. २. ५ )। अजायथाः। अजायत इत्यर्थे पुरुषव्यत्यये[2] निघातः ॥

आदह स्वधामनु पुनर्गर्भत्वमेरिरे। दधाना नाम यज्ञियम् ॥ ४ ॥

आत्। अह। स्वधाम्। अनु। पुनः। गर्भऽत्वम्। आऽईरिरे। दधानाः। नाम। यज्ञियम् ॥ ४ ॥

अत्रास्ति विशेषविनियोगः। चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे ‘ आदह स्वधामनु ’ इति द्वे ऋचौ। ‘ इन्द्रेण सं हि दृक्षसे ’ इत्येका। अयं तृचः षळहस्तोत्रियसंज्ञकः। तथा च सूत्रितं

१. प–°र्निपातितः। 　२. त–पुरुषव्यत्ययः।

'चतुर्विंशे होताजनिष्ट' इति खण्डे—'इन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे च' (आश्व. श्रौ. ७.२) इति। यद्यप्येतदैन्द्रं सूक्तं तथापि 'आदह' इत्यादिषु षट्सु मरुतो वर्ण्यन्ते। 'प्रायेणैन्द्रे मरुतः' इति अनुक्रमणिकायामुक्तत्वात् (अनु. २. २२)। आत् इत्ययम् आनन्तर्यार्थो निपातः। अह इत्यवधारणार्थः। ᵛआदह वर्षर्तोरनन्तरमेव। ᵛस्वधामनु। इतः परं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य मरुतो देवाः ᵛगर्भत्वम् ᵛएरिरे मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः। जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः। प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशा मरुतः। ᵛयज्ञियं यज्ञार्हं ᵛनाम ᵛदधानाः धारयन्तः। सप्तसु गणेषु मरुताम् 'ईदृङ्चान्यादृङ्च' इत्यादीनि यज्ञयोग्यानि नामानि अन्यत्राम्नातानि। 'अन्धः' इत्यादिष्वष्टाविंशतिसंख्याकेष्वन्ननामसु 'ऊर्क् रसः स्वधा' (नि. २. ७. १७) इति पठितम्। 'अर्णः' इत्यादिष्वेकशतसंख्याकेषूदकनामसु 'तेजः स्वधा अक्षरम्' (नि. १. १२. ९७) इति पठितम्॥ आदह निपातावाद्युदात्तौ। स्वधाम्। स्वं लोकं दधाति पुष्णातीति स्वधा। 'आतोऽनुपसर्गे कः' (पा. सू. ३. २. ३)। कृदुत्तरपदप्रकृतिस्वरत्वम्। अनुपुनःशब्दौ निपातावाद्युदात्तौ। गर्भस्य भावो गर्भत्वम्। प्रत्ययस्वरः। एरिरे। अन्तर्भावितण्यर्थात् 'ईर गतौ' इत्यस्मात् अनुदात्तेतः परस्य लिटो झस्य इरेच् (पा. सू. ३. ४. ८१)। चित्वादन्तोदात्तः। 'सह सुपा' (पा. सू. २. १. ४) इत्यत्र सुपेति योगविभागात् आङा सह तिङः समासेऽपि 'समासस्य' (पा. सू. ६. १. २२३) इत्यन्तोदात्तत्वम्। 'इजादेश्च गुरुमतोऽनृच्छः' (पा. सू. ३. १. ३६) इति आम् न भवति मन्त्रत्वात्। अहशब्दयोगात् निघाताभावः, 'तुपश्यपश्यताहैः पूजायाम्' (पा. सू. ८.१.३९) इति निषेधात्। दधानाः। शानचश्चित्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' (पा. सू. ६.१.१८९) इत्याद्युदात्तत्वम्। यज्ञमर्हति यज्ञियम्। 'यज्ञर्त्विग्भ्यां घखञौ' (पा. सू. ५. १. ७१) इति घप्रत्ययः। 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (पा. सू. ७. १. २) इति इयादेशः। प्रत्ययस्वरेण इकार उदात्तः॥

वी॒ळु चि॑दारुज॒त्नुभि॒र्गुहा॑ चिदिन्द्र॒ वह्नि॑भिः। अवि॑न्द उ॒स्रिया॒ अनु॑॥ ५॥

वी॒ळु। चि॒त्। आ॒रु॒ज॒त्नुऽभिः॑। गुहा॑। चि॒त्। इ॒न्द्र॒। वह्नि॑ऽभिः। अवि॑न्दः।

उ॒स्रियाः॑। अनु॑॥ ५॥

अस्ति किंचिदुपाख्यानम्। पणिभिर्देवलोकात् गावोऽपहृता अन्धकारे प्रक्षिप्ताः। ताश्चेन्द्रो मरुद्भिः सहाजयदिति। एतच्चानुक्रमणिकायां सूचितं—'पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः' (अनु.ऋ.सं.१०.१०८) इति। मन्त्रान्तरे च दृष्टान्ततया सूचितं—'निरुद्धा आपः पणिनेव गावः' (ऋ. सं. १. ३२. ११) इति। तदेतदुपाख्यानमभिप्रत्योच्यते। हे ᵛइन्द्र ᵛवीळु ᵛचित् दृढमपि दुर्गमस्थानम् ᵛआरुजत्नुभिः भञ्जद्भिः ᵛवह्निभिः वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं ᵛगुहा ᵛचित् गुहायामपि स्थापिता ᵛउस्रियाः गाः ᵛअनु ᵛअविन्दः अन्विष्य लब्धवानसि। 'ओजः पाजः' इत्यादिष्वष्टाविंशतिसंख्याकेषु बलनामसु 'दक्षः वीळु च्यौत्नम्' (नि. २. ९. १४) इति पठितम्। नवसंख्याकेषु गोनामसु 'अघ्न्या उस्रा उस्रिया' (नि. २. ११. ३) इति पठितम्॥ वीळु। प्रातिपदिकस्वरः। चित्। चादिरनुदात्तः। आरुजत्नुभिः। 'रुजो भङ्गे' इति औणादिकः कत्नुच्प्रत्ययः। कित्वाद्गुणाभावः। चित्वादन्तोदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्।

---

१. त—आनन्तर्यार्थे। २. च-श—सूत्रितम्।

गुहा। सप्तम्या डादेशः। 'ग्रामादीनां च' (फि. सू. ३८) इत्याद्युदात्तः। वह्निभिः। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ. सू. ४. ४९१) इति वहेः निप्रत्ययः। नित्वादाद्युदात्तः। अविन्दः। 'शे मुचादीनाम्' (पा. सू. ७. १. ५९) इति नुमागमः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (पा. सू. ६. ४. ७१)। वसन्तीति उस्रियाः। वसेः कर्तरि रियक्प्रत्ययः षत्वाभावश्च बाहुलकादूहनीयः। उक्तं हि–'यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' (पा. सू. ३. ३. १. २) इति। इकारः प्रत्ययस्वरेणोदात्तः॥ ॥ ११ ॥

दे॒व॒यन्तो॑ य॒था॑ म॒तिमच्छा॑ वि॒दद्व॑सुं॒ गिरः॑। म॒हाम॑नूषत श्रु॒तम्॥ ६॥

दे॒व॒ऽयन्तः॑। य॒था॑। म॒तिम्। अच्छ॑। वि॒दत्ऽव॑सुम्। गिरः॑। म॒हाम्। अ॒नू॒ष॒त। श्रु॒तम्॥६॥

ᵛदेवयन्तः मरुत्संज्ञकान् देवानिच्छन्तः ᵛगिरः स्तोतारः ऋत्विजः ᵛमहां प्रौढं मरुद्गणम् ᵛअच्छ प्राप्तुम् ᵛअनूषत स्तुतवन्तः। कीदृशं मरुद्गणम्। ᵛविदद्वसुं वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तं ᵛश्रुतं विख्यातम्। मरुद्गणस्य दृष्टान्तः। ᵛयथा ᵛमतिम्। मन्तारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः॥ देवयन्तः देवानात्मन इच्छन्तः[1]। 'सुप आत्मनः क्यच्' (पा. सू. ३. १. ८)। 'क्यचि च' (पा. सू. ७. ४. ३३) इति ईत्वम्, 'अकृत्सार्वधातुकयोर्दीर्घः' (पा. सू. ७. ४. २५) इति दीर्घत्वं च न भवति; 'न च्छन्दस्यपुत्रस्य' (पा. सू. ७. ४. ३५) इत्यनेन क्यचि यत् प्राप्तम् ईत्वं दीर्घत्वं वा तस्य सर्वस्य प्रतिषेधात्। यद्यपि ईत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते; 'अश्वायन्तः' इत्यादौ 'अश्वाघस्यात्' (पा. सू. ७. ४. ३७) इति आत्वविधानात् इति ह्युक्तम्। क्यजन्तात् शतृप्रत्ययः। क्यचश्चित्वात् 'चितः' (पा. सू. ६. १. १६३) इत्यन्तोदात्तत्वम्। शपः पित्त्वेन शतुश्च लसार्वधातुकस्वरेणानुदात्तत्वे 'एकादेश उदात्तेनोदात्तः' (पा. सू. ८. २. ५) इत्युदात्तः[2]। यथा। 'प्रकारवचने थाल्' (पा. सू. ५. ३. २३)। 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात् पूर्वमुदात्तत्वम्। मतिम्। 'मन्त्रे वृषेषपचमन°' (पा. सू. ३. ३. ९६) इत्यादिना क्तिन् उदात्तः। मतिशब्दो ज्ञानपरोऽप्युपचारात् ज्ञातरि इन्द्रे वर्तते। अथवा पदान्तरे विशेष्यानुपादानात् इन्द्रस्यैषा[3] संज्ञा। ततश्च 'क्तिच्क्तौ च संज्ञायाम्' (पा. सू. ३. ३. १७४) इति मन्यतेः कर्तरि क्तिच्। तस्य उपदेशेऽनुदात्तत्वात् इट्प्रतिषेधः (पा. सू. ७.२.१०)। चित्वादन्तोदात्तत्वम्। अच्छ। अध्याहृतगच्छत्यर्थयोगात् 'अच्छ गत्यर्थवदेषु' (पा. सू. १. ४. ६९) इति गतिसंज्ञया सह निपातसंज्ञाया अपि समावेशात् (पा. सू. १. ४. ६०) 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्याद्युदात्तत्वम्। विदद्वसुम्। 'विद ज्ञाने' इत्यस्मादन्तर्भावितण्यर्थात् शतृप्रत्यये विदन्ति औदार्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः। विदेः शतृप्रत्यये 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। गृणन्ति स्तुवन्तीति गिरः। गृणातेः क्विपि 'ऋत इद्धातोः' (पा. सू. ७. १. १००) इति इत्वं रपरत्वम्। धातुस्वरेणोदात्तत्वम्। महां महान्तम्। नकारतकारयोर्लोपः छान्दसः। प्रातिपदिकस्वरेणोदात्तत्वम्। अनूषत। 'णु स्तुतौ'। व्यत्ययेनात्मनेपदम्। लुङि झस्य अदादेशः (पा. सू. ७. १. ५)। सिचि कुटादित्वेन ङित्वात् (पा. सू. १. २. १) गुणाभावः। इडभाव उकारदीर्घत्वं च छान्दसम्। निघातः। श्रुतम्। प्रत्ययस्वरः॥

---

१. ठ–देवानात्मन इच्छन्तः। २. ग-फ-य–°मुदात्तम्। ३. च-छ-त-फ-श–इन्द्रस्यैवैषा।

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ॥ ७ ॥

इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा । मन्दू इति । समानऽवर्चसा ॥ ७ ॥

हे मरुद्गण त्वम् इन्द्रेण संजग्मानः संगच्छमानः सं दृक्षसे हि सम्यग्दृश्येथाः खलु । अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः । कीदृशेनेन्द्रेण । अबिभ्युषा भीतिरहितेन । कीदृशाविन्द्रमरुद्गणौ । मन्दू नित्यप्रमुदितौ । समानवर्चसा तुल्यदीप्ती । पुरा कदाचित् वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेन अपसारिताः । तदानीमिन्द्रस्य वृत्रसंबन्धिसकलसेनाजयार्थं मरुद्भिः संगमोऽभूत् । सोऽयमर्थो 'वृत्रस्य त्वा श्वसथात्' ( ऋ. सं. ८. ९६. ७ ) इति मन्त्रे संगृहीतः, 'इन्द्रो वै वृत्रं हनिष्यन्' ( ऐ. ब्रा. ३. २० ) इति ब्राह्मणे प्रपञ्चितश्च । इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणं वाऽभिधत्ते । तदानीमिन्द्रस्य संबोधनं बहिरेवाध्याहर्तव्यम् । तथा चेयमृक् यास्केन व्याख्याता—'इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्' ( निरु. ४. १२ ) इति ॥ सं दृक्षसे संपश्येथाः । 'दृशेश्चेति वक्तव्यम्' ( का. १. ३. २९. ) इत्यात्मनेपदम् । दृशेः 'लिङर्थे लेट्' ( पा. सू. ३. ४. ७ ) इति प्रार्थनायां लेट् । 'थासः से' ( पा. सू. ३. ४. ८० ) । 'लेटोऽडाटौ' ( पा. सू. ३. ४. ९४ ) इत्यडागमः । 'सिब्बहुलं लेटि' (पा. सू. ३. १. ३४) इति सिप् । 'संज्ञापूर्वको विधिरनित्यः' (परिभा० ९३.१) इति गुणाभावः । व्रश्चादिना (पा. सू. ८. २. ३६) षत्वम् । 'षढोः कः सि' (पा. सू. ८.२.४१) इति कत्वम् । 'आदेशप्रत्यययोः' ( पा. सू. ८. ३. ५९ ) इति सिपः षत्वम् । बहुलग्रहणात् सिपः परस्तात् शबपि भवति ( पा. सू. २. ४. ७३ ) । सिपा व्यवधानात् पश्यादेशो न भवति ( पा. सू. ७. ३. ७८ ) । शपः पित्त्वादनुदात्तत्वम् । उत्तरस्य लसार्वधातुकानुदात्तत्वम् । धातुस्वर एव शिष्यते । हिशब्दयोगात् 'तिङ्ङतिङः' इति निघातो न भवति 'हि च' ( पा. सू. ८. १. ३४ ) इति प्रतिषेधात् । संजग्मानः । गमेः संपूर्वात् 'छन्दसि लुङ्लङ्लिटः' ( पा. सू. ३. ४. ६ ) इति वर्तमाने लिट् । 'समोगम्यृच्छिभ्याम्' ( पा. सू. १. ३. २९ ) इत्यात्मनेपदविधानात् लिटः कानजादेशः ( पा. सू. ३. २. १०६ ) । द्विर्भावः ( पा. सू. ६. १. ८ ) । हलादिशेषः ( पा. सू. ७. ४. ६० ) । अभ्यासस्य चुत्वम् ( पा. सू. ७. ४. ६२ ) । 'गमहन' ( पा. सू. ६. ४. ९८ ) इत्युपधालोपः । कानचश्चित्त्वादन्तोदात्तत्वम् । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । अबिभ्युषा । 'ञिभी भये' । पूर्ववल्लिट् । 'शेषात्कर्तरि परस्मैपदम्' (पा. सू. १.३.७८) इति परस्मैपदम् । 'क्वसुश्च' ( पा. सू. ३. २. १०७ ) इति लिटः क्वसुरादेशः । तस्य कित्त्वाद्गुणाभावः । द्विर्भावः । अभ्यासस्य ह्रस्वजश्त्वे ( पा. सू. ७. ४.५९, ८. ४. ५४ ) । क्रादिनियमात् (पा. सू. ७. २. १३) प्राप्त इट् 'वस्वेकाजाद्घसाम्' ( पा. सू. ७. २. ६७ ) इति नियमान्निवर्तते । नञ्समासे तृतीयैकवचने भत्वात् 'वसोः संप्रसारणम्' ( पा. सू. ६. ४. १३१ ) इति वकारस्य उकारः । 'संप्रसारणाच्च' ( पा. सू. ६. १. १०८ ) इति पूर्वरूपत्वम् । 'शासिवसिघसीनां च' ( पा. सू. ८. ३. ६० ) इति षत्वम् । इयङादेशं बाधित्वा 'एरनेकाचोऽसंयोगपूर्वस्य' ( पा. सू. ६. ४. ८२ ) इति यणादेशः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पूर्वेण सह संहितायामोकारस्य 'एङः पदान्तादति' ( पा. सू. ६. १. १०९ ) इति परपूर्वत्वे[1] प्राप्ते 'प्रकृत्यान्तःपादमव्यपरे' ( पा. सू. ६. १. ११५ ) इति प्रकृतिभावः । मन्दू । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'इदितो नुम् धातोः' ( पा. सू. ७. १. ५८ ) इति नुमागमः । 'कुः' इत्यनुवृत्तौ 'खरु शङ्कु पीयु नीलङ्गु लिगु'

---

१. च-फ-श—परपूर्वरूपत्वे ।

( उ. सू. १. ३६ ) इत्यत्र अविभक्तिकनिर्देशात् हन्तेः हिगुरितिवत् धात्वन्तरादपि कुः इत्युक्तम्। प्रत्ययस्वरेणान्तोदात्तः। द्विवचनम् औ ( पा. सू. ४. १. २ )। 'प्रथमयोः पूर्वसवर्णः' ( पा. सू. ६. १. १०२ )। तृतीयैकवचने चेत् ' सुपां सुलुक्°' (पा. सू. ७. १. ३९) इत्यादिना पूर्वसवर्णदीर्घत्वम्। समानवर्चसा। समानं वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः। द्विवचने ' सुपां सुलुक्° ' इत्यादिना आकारादेशः। समानपदस्य प्रातिपदिकान्तोदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेवावशिष्यते॥

## अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति। गणैरिन्द्रस्य काम्यैः॥ ८॥

अनवद्यैः। अभिद्युऽभिः। मखः। सहस्वत्। अर्चति। गणैः। इन्द्रस्य। काम्यैः॥ ८॥

मखः प्रवर्तमानोऽयं यज्ञः अनवद्यैः दोषरहितैः अभिद्युभिः द्युलोकमभिगतैः काम्यैः फलप्रदत्वेन कामयितव्यैः गणैः मरुत्समूहैः सहितम् इन्द्रस्य इन्द्रं सहस्वत् बलोपेतं यथा भवति तथा अर्चति पूजयति। अयं यज्ञो मरुत इन्द्रं चातिशयेन प्रीणयतीत्यर्थः। ' यज्ञः ' इत्यादिषु पञ्चदशसु यज्ञनामसु ' मखः विष्णुः ' ( नि. ३. १७. ११ ) इति पठितम्। चतुश्चत्वारिंशत्सु अर्चतिकर्मसु ' अर्चति गायति ' ( नि. ३. १४. १ ) इति पठितम्॥ न विद्यतेऽवद्यं येषां तेऽनवद्याः। ' नञ्सुभ्याम् ' ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तत्वम्। अभिगता द्यौर्यैस्तेऽभिद्यवः। तैरभिद्युभिः। अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। मखः। प्रातिपदिकस्वरः। सहो बलमस्मिन्नर्चनकर्मण्यस्तीति सहस्वत्। ' तसौ मत्वर्थे ' ( पा. सू. १. ४. १९ ) इति भसंज्ञया पदसंज्ञाया बाधितत्वात् सकारस्य रुत्वाभावः। ' मादुपधायाश्च मतोर्वोऽयवादिभ्यः ' ( पा. सू. ८. २. ९ ) इति मतुपो मस्य वत्वम्। सहस्शब्दो ' नब्विषयस्यानिसन्तस्य ' ( फि. सू. २६) इत्याद्युदात्तः। मतुपः पित्वात् स एव शिष्यते। काम्यैः। ' कमेर्णिङ् ' ( पा. सू. ३. १. ३० )। ' अत उपधायाः ' ( पा. सू. ७. २. ११६ ) इति वृद्धिः। ' जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ' (भ्वा. ग. सू.) इति अमन्तत्वेन प्राप्तस्य मित्वस्य ' न कम्यमिचमाम् ' (भ्वा. ग. सू.) इति प्रतिषेधात् ' मितां ह्रस्वः ' ( पा. सू. ६. ४. ९२ ) इति उपधाह्रस्वत्वं न भवति। ण्यन्तात् ' अचो यत् ' ( पा. सू. ३. १. ९७ )। णिलोपः ( पा. सू. ६. ४.५१ )। ' तित्स्वरितम् '(पा. सू. ६. १. १८५ ) इति प्राप्ते ' यतोऽनावः ' ( पा. सू. ६. १. २१३ ) इत्याद्युदात्तत्वम्॥

## अतः परिज्मन्ना गहि दिवो वा रोचनादधि। समस्मिन्नृञ्जते गिरः॥ ९॥

अतः। परिऽज्मन्। आ। गहि। दिवः। वा। रोचनात्। अधि। सम्। अस्मिन्। ऋञ्जते। गिरः॥ ९॥

हे परिज्मन् परितो व्यापिन् मरुद्गण अतः अस्मात् मरुद्गणस्थानादन्तरिक्षात् आ गहि अस्मिन् कर्मण्यागच्छ। दिवो वा द्युलोकाद्वा समागच्छ। रोचनादधि दीप्यमानादादित्यमण्डलाद्वा समागच्छ। अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छ इत्यर्थः। किमर्थमागमनमिति तदुच्यते। अस्मिन् कर्मणि वर्तमान ऋत्विक् गिरः स्तुतीः सम् ऋञ्जते सम्यक् प्रसाधयति। ' ऋञ्जतिः प्रसाधनकर्मा ' ( निरु० ६. २१ ) इति यास्कः। एताः स्तुतीः श्रोतुमागच्छ इत्यर्थः।

यद्यपि ऋत्विजा मन्त्रस्य प्रयुज्यमानत्वात् ऋञ्जतिधातोः उत्तमपुरुषेण भवितव्यं तथापि परोक्षकृतत्वेन निर्देशात् प्रथमपुरुषप्रयोगः । परोक्षकृतलक्षणं च यास्क आह—'तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य' (निरु. ७. १ ) इति । अतः । 'पञ्चम्यास्तसिल्' (पा. सू. ५. ३. ७)। '*एतदोऽश्' (पा. सू. ५. ३. ५)। शित्वात् सर्वादेशः (पा. सू. १. १. ५५)। 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम् । परिज्मन् । 'अज गतिक्षेपणयोः'। 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५) इति मनिन् । अकारलोपः छान्दसः । आमन्त्रितनिघातः । गहि । गमेः 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति शपो लुक् । हेर्ङित्वात् (पा. सू. ३. ४. ८७) 'अनुदात्तोपदेश०' (पा. सू. ६. ४. ३७) इत्यादिना मलोपः । 'अतो हेः' (पा. सू. ६. ४. १०५) इति हिलोपो न भवति, तस्मिन् कर्तव्ये 'असिद्धवदत्राभात्' (पा. सू. ६. ४. २२) इति मलोपस्य असिद्धत्वेन अनकारान्तत्वात् । दिवः। 'ऊडिदम्०' (पा. सू. ६. १. १७१) इत्यादिना विभक्तेरुदात्तत्वम् । वा । 'चादयोऽनुदात्ताः' (फि. सू. ८४) इत्यनुदात्तः । रोचनात् । 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' (पा. सू. ३. २. १४९) इति युच् । 'युवोरनाकौ' (पा. सू. ७. १. १) इति अनादेशः । चित्त्वादित्यन्तोदात्तः । अधि । 'अधिपरी अनर्थकौ' (पा. सू. १. ४. ९३) इति कर्मप्रवचनीयत्वेन सह निपातसंज्ञायाः समावेशात् 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्याद्युदात्तः । अस्मिन् । परिज्मन् इति आदिष्टस्यैव अन्वादेशात् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा. सू. २. ४. ३२) इति अश् अनुदात्तः । शित्वात् सर्वादेशः । विभक्तिः 'अनुदात्तौ सुप्पितौ' (पा. सू. ३. १. ४) इत्यनुदात्ता इति सर्वानुदात्तत्वम् । ऋञ्जते । 'ऋजि भृजी भर्जने'। सम् इत्युपसर्गयोगात् प्रसाधने वर्तते । निघातः । गिरः । प्रातिपदिकस्वरः ॥

इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥ १० ॥

इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इन्द्रम् । महः । वा । रजसः ॥ १० ॥

Vइन्द्रं देवं प्रति Vसातिं धनदानम् Vअधि Vईमहे आधिक्येन याचामहे । कस्माल्लोकादिति तदुच्यते। Vइतः अस्माद्भिदृश्यमानात् Vपार्थिवात् पृथिवीलोकाद्वा Vदिवो Vवा द्युलोकाद्वा Vमहः महतः प्रौढात् Vरजसः Vवा पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद्वा । अयमिन्द्रो यतः कुतश्चिदानीय अस्मभ्यं धनं प्रयच्छत्वित्यर्थः । सप्तदशसु याच्ञाकर्मसु 'ईमहे यामि' (नि. ३. १९. १) इति पठितम् ॥ इतः । इदंशब्दात् पञ्चम्याः तसिल् । 'इदम इश्' (पा. सू. ५. ३. ३) इति इश् । शित्वात् सर्वादेशः। अत्र 'ऊडिदम्०' (पा. सू. ६. १. १७१) इत्यस्यावकाशः आभ्याम् एभिः । 'लिति' (पा. सू. ६. १. १९३) इत्यस्यावकाशः पचनं पाचकः। उभावपि नित्यौ। तत्र परत्वात् 'विप्रतिषेधे परं कार्यम्' (पा. सू. १. ४. २) इति 'लिति' इति इकारस्य उदात्तत्वम् । पश्चात् तसेः 'प्राग्दिशो विभक्तिः' (पा. सू. ५. ३. १) इति विभक्तिसंज्ञकत्वात् 'ऊडिदम्०' इत्यादिना असर्वनामस्थानविभक्तेरुच्यमानम् उदात्तत्वं भवति। 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (परिभा. ४०) इति 'ऊडिदम्०' इत्यस्य पुनरप्रवृत्तिरेव इति चेत्, न। लक्ष्यानुरोधेन पुनः प्रसङ्गविज्ञानं चेति स्वीकारात् (परिभा. ३९)। ननु एवं यतस्तत इत्यादावपि परेण लित्स्वरेण बाधितमपि 'सावेकाचः'[1] (पा. सू. ६. १. १६८) इति तसिलः उदात्तत्वं स्यादिति चेत्, न। यत्तच्छब्दयोः सावयवान्तत्वे

काशिकानुसारेणायं पाठः । १. ठ—सावयवान्तत्वेन ।

'न गोश्वन्साववर्ण०' (पा. सू. ६. १. १८२) इति निषेधात्। न च पुनः प्रसङ्गविज्ञानं चेत्येतत् सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति। सातिम्। 'षणु दाने'। 'धात्वादेः षः सः' (पा. सू. ६. १. ६४)। भावे क्तिन्। 'जनसनखनां सञ्झलोः' (पा. सू. ६. ४. ४२) इति नकारस्य आत्वम्। 'तितुत्रतथसिसुसरकसेषु च' (पा. सू. ७. २. ९) इति निषेधात् इण् न भवति। नित्स्वरे प्राप्ते 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा. सू. ३. ३. ९७) इति निपातनादन्तोदात्तत्वम्। ईमहे। 'ईङ् गतौ'। श्यनोऽपि 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति लुक्। अस्य धातोर्ङित्वात् 'तास्यनुदात्तेन्ङिदुपदेशात्०' (पा. सू. ६. १. १८६) इति लसार्वधातुकस्य अनुदात्तत्वे धातुस्वर एव शिष्यते। न च 'तिङ्ङतिङः' इति निघातः, 'चवायोगे प्रथमा' (पा. सू. ८. १. ५९) इति निषेधात्। उत्तरवाक्ययोरपि हि वाशब्दयोगात् अन्यथा वाक्यापरिपूर्तेः तिङ्विभक्तेः अवश्यमध्याहारात् तदपेक्षया एषा प्रथमा तिङ्विभक्तिरिति। दिवः। 'ऊडिदम्०' इत्यादिना विभक्तेरुदात्तत्वम्। पार्थिवात्। 'प्रथ प्रख्याने'। प्रथते इति पृथिवी। 'प्रथेः षिवन् संप्रसारणं च' (उ. सू. १. १४८) इति षिवन्प्रत्ययः। 'षिद्गौरादिभ्यश्च' (पा. सू. ४. १. ४१) इति ङीष्। प्रत्ययस्वरेणोदात्तः। शेषनिघातेन अनुदात्तादिः पृथिवीशब्दः। पृथिव्या विकार इत्यर्थे 'ओरञ्' (पा. सू. ४. ३. १३९) इत्यनुवृत्तौ 'अनुदात्तादेश्च' (पा. सू. ४. ३. १४०) इति अञ्। 'यस्येति च' (पा. सू. ६. ४. १४८) इति ईकारलोपः। 'तद्धितेष्वचामादेः' (पा. सू. ७. २. ११७) इति आदिवृद्धिः। रपरत्वम् (पा. सू. १. १. ५१)। 'ञ्नित्यादिर्नित्यम्' (पा. सू. ६. १. १९७) इत्याद्युदात्तः। अधि। निपातत्वादाद्युदात्तः। इन्द्रम्। रन्प्रत्ययान्त आद्युदात्तः। महः। महतः इत्यस्य अकारतकारयोर्लोपश्छान्दसः। 'सावेकाचः०' इति विभक्तेरुदात्तत्वम्। रजसः। 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वम्॥ ॥ १२ ॥

'इन्द्रम्' इत्यादिकं दशर्चं यत् सूक्तं तत् 'सुरूपकृत्नुम्' इत्यादिषु चतुर्थम्। ऋषिच्छन्दोदेवता विनियोगश्च पूर्ववत्। विशेषविनियोगस्तूच्यते[1]। महाव्रते निष्केवल्यशस्त्रे 'इन्द्रमिद्गाथिनः' इति सूक्तम्। तथा च पञ्चमारण्यके सूत्रितं—'शिरो गायत्रमिन्द्रमिद्गाथिनः' (ऐ. आ. ५. २. १) इति। तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे 'इन्द्रमिद्गाथिनः' इति षळहस्तोत्रियस्तृचः। 'चतुर्विंशे होताजनिष्ट' इत्युपक्रम्य 'आ याहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहत्' (आश्व. श्रौ. ७. २) इति सूत्रितत्वात्। अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः[2]। सूत्रितं च—'इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत्' (आश्व. श्रौ. ६. ४) इति॥

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥ १ ॥

इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्किणः। इन्द्रम्। वाणीः। अनूषत ॥१॥

गाथिनः गीयमानसामयुक्ता उद्गातारः इन्द्रमित् इन्द्रमेव बृहत् 'त्वामिद्धि हवामहे' (ऋ. सं. ६. ४६. १) इत्यस्यामृचि उत्पन्नेन बृहन्नामकेन साम्ना अनूषत स्तुतवन्तः। अर्किणः अर्चनहेतुमन्त्रोपेता होतारः अर्केभिः ऋग्रूपैर्मन्त्रैः इन्द्रम् एव अनूषत। ये त्ववशिष्टा अध्वर्यवस्ते वाणीः वाग्भिर्यजूरूपाभिः इन्द्रम्[3] एव अनूषत। अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्—'अर्को मन्त्रो भवति

१. ग-य—विशेषस्तूच्यते। २. च-छ-फ-य—तृचोऽनुरूपितः; ण—तृचो निरूपितः। ३. ग-घ-च-छ-ण-य-श—इन्द्रम्।

यदेनेनार्चन्ति ' ( निरु. ५. ४ ) इति । ' श्लोकः ' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'वाशी वाणी' ( नि. १. ११. १२ ) इति पठितम् ॥ गाथिनः । ' उषिकुषिगार्तिभ्यस्थन् ' ( उ. सू. २. १६१ ) इति गायतेः थन्प्रत्ययः । नित्वादाद्युदात्तः । गाथा एषां सन्तीति गाथिनः । ' व्रीह्यादिभ्यश्च ' (पा. सू. ५. २. ११६) इति इनिः । प्रत्ययस्वरेण इकार उदात्तः । स च सति शिष्टः । बृहत् बृहता । तृतीयैकवचनस्य ' सुपां सुलुक्° ' इति लुक् । ' °पृषद्बृहन्महज्जगच्छतृवच्च ' ( उ. सू. २. २४१ ) इत्यन्तोदात्तो निपातितः । अर्केभिः । ' अर्च पूजायाम् ' । अर्च्यते एभिः इति अर्का मन्त्राः । ' पुंसि संज्ञायां घः प्रायेण ' ( पा. सू. ३. ३. ११८ ) इति घः । ' चजोः कु घिण्यतोः ' ( पा. सू. ७. ३. ५२ ) इति कुत्वम् । प्रत्ययस्वरेणान्तोदात्तः । ' बहुलं छन्दसि ' ( पा. सू. ७. १. १० ) इति भिस ऐसादेशो न भवति । अर्काः स्तुतिसाधनभूता मन्त्रा एषां सन्तीति अर्किणः । वाणीः । 'वृषादीनां च ' ( पा. सू. ६. १. २०३ ) इत्याद्युदात्तः । ' दीर्घाज्जसि च ' ( पा. सू. ६. १. १०५ ) इति पूर्वसवर्णदीर्घनिषेधस्य ' वा छन्दसि ' ( पा. सू. ६. १. १०६ ) इति विकल्पितत्वात् दीर्घत्वम् । तृतीयार्थे प्रथमा । अनूषत । ' णु स्तुतौ ' । ' णो नः ' ( पा. सू. ६. १. ६५ ) इति नत्वम् । लुङि व्यत्ययेनात्मनेपदम् । झस्य अदादेशः (पा. सू. ७. १. ५) । सिचः इडभावः उकारस्य दीर्घत्वं च छान्दसम् । धातोः कुटादित्वात् सिचो ङित्वेन (पा. सू. १.२.१) गुणाभावः (पा. सू. १. १. ५) ॥

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥ २ ॥

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥२॥

Vइन्द्र Vइत् इन्द्र एव Vहर्योः हरिनामकयोरश्वयोः Vसचा सह युगपत् Vआ Vसंमिश्लः सर्वतः सम्यग्मिश्रयिता । कीदृशोर्हर्योः । Vवचोयुजा । इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् Vइन्द्रः Vवज्री वज्रयुक्तः Vहिरण्ययः हिरण्मयः सर्वाभरणभूषित इत्यर्थः ॥ हर्योः । हरतः इति हरी । इन् । नित्वादाद्युदात्तः । ' सचा सह ' ( निरु. ५. ५ ) इत्युक्तम् । संमिश्लः । मिश्रणं मिश्रः । मिश्रयतेर्घञ् ( पा. सू. ३. ३. १८ ) । सम्यक् मिश्रो यस्यासौ संमिश्रः । लत्वं छान्दसम् । सम्यक् मिश्रयितेत्यर्थः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वचोयुजा । । वचसा युज्येते इति वचोयुजौ । तयोः षष्ठीद्विवचनस्य ' सुपां सुलुक्° ' इति आकारादेशः । युज्शब्दो धातुस्वरेणान्तोदात्तः । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते । वज्री । वज्रमस्यास्ति । ' अत इनिठनौ ' ( पा. सू. ५. २. ११५ ) प्रत्ययस्वरः । हिरण्ययः । ' ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ' ( पा. सू. ६. ४. १७५ ) इति हिरण्यमयशब्दस्य मकारलोपो निपात्यते । अकारः प्रत्ययस्वरेण उदात्तः । पूर्वेण अनुदात्तेन सह ' एकादेश उदात्तेनोदात्तः ' इत्युदात्तः ॥

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ॥ ३ ॥

इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि । गोभिः । अद्रिम् । ऐरयत् ॥३॥

---

१. च-छ–अर्चन्ते; त-फ-श–अर्च्यन्ते । २. ग-घ-ण-थ-य-श-हिरण्यमयः । ३. च–हिरण्मयशब्दस्य; छ-फ–हिरण्मयशब्दे ।

अयम् ᵛइन्द्रः ᵛदीर्घाय प्रौढाय निरन्तराय ᵛचक्षसे दर्शनाय ᵛदिवि द्युलोके ᵛसूर्यम् ᵛआ ᵛरोहयत्। पुरा वृत्रासुरेण जगति यत् आपातितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यः ᵛगोभिः स्वकीयरश्मिभिः ᵛअद्रिं पर्वतप्रमुखं सर्वं जगत् ᵛवि ᵛऐरयत् विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः। अथवा इन्द्रः एव गोभिः जलैर्निमित्तभूतैः अद्रिं मेघं व्यैरयत् विशेषेण प्रेरितवान्। पञ्चदशसंख्याकेषु रश्मिनामसु 'खेदयः किरणाः गावः' (नि. १. ५. ३) इति पठितम्। त्रिंशत्संख्याकेषु मेघनामसु 'अद्रिः ग्रावा' (नि. १. १०. १) इति पठितम्॥ दीर्घाय। प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे। चक्षेः 'सर्वधातुभ्योऽसुन्' (उ. सू. ४. ६२८) इति असुन्। बहुलग्रहणात् ख्याञादेशाभावः। नित्त्वादाद्युदात्तः। सूर्यम्। सुवति प्रेरयतीति सूर्यः। 'षू प्रेरणे'। 'धात्वादेः षः सः'। 'राजसूयसूर्य°' (पा. सू. ३. १. ११४) इत्यादिना क्यप्प्रत्ययः, तस्य रुडागमश्च निपात्यते। क्यपः कित्त्वाद्गुणाभावः। पित्त्वादनुदात्तत्वम्। धातुस्वर एव शिष्यते। रोहयत्। रुहेः ण्यन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा. सू. ६. ४. ७५) इत्यडभावो निघातश्च। दिवि। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्। अद्रिम्। 'अदिशदिभूशुभिभ्यः क्रिन्' (उ. सू. ४. ५०५) इति क्रिन्प्रत्ययः। अदन्ति पशवस्तृणादिकमत्र इति अद्रिः। नित्त्वादाद्युदात्तत्वम्। ऐरयत्। 'ईर गतौ'। ण्यन्तात् लङ्। निघातः॥

## इन्द्र॒ वाजे॑षु नोऽव स॒हस्र॑प्रधनेषु च। उग्र उ॒ग्राभि॑रू॒तिभि॑ः॥ ४॥

इन्द्र॑। वाजे॑षु। नः॒। अ॒व॒। स॒हस्र॑ऽप्रधनेषु। च॒। उ॒ग्रः। उ॒ग्राभि॑ः। ऊ॒तिऽभि॑ः॥ ४॥

हे ᵛइन्द्र ᵛउग्रः शत्रुभिरप्रधृष्यस्त्वम् ᵛउग्राभिः अप्रधृष्याभिः ᵛऊतिभिः अस्मद्विषयरक्षाभिः ᵛवाजेषु युद्धेषु ᵛनः अस्मान् ᵛअव रक्ष। तथा ᵛसहस्रप्रधनेषु ᵛच। सहस्रसंख्याकगजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष॥ वाजेषु। 'वृषादीनां च' (पा. सू. ६. १. २०३) इत्याद्युदात्तत्वम्। नोऽव। नसः सकारस्य रुत्वोत्वगुणेषु 'प्रकृत्यान्तःपादम्°' (पा. सू. ६. १. ११५) इति प्रकृतिभावो न भवति '°अव्यपरे' इति निषेधात्। अव। 'अव रक्षणे'। 'तिङ्ङतिङः' इति निघातः। यद्यपि सहस्रप्रधनेषु च अव इति अध्याहृतां क्रियामपेक्ष्य प्रथमायाः श्रूयमाणाया अव इति क्रियायाः 'चवायोगे प्रथमा' (पा. सू. ८. १. ५९) इति निघातनिषेधः प्राप्तः, तथापि वाजेषु इत्यत्र चकारस्य लुप्तत्वात् 'चादिलोपे विभाषा' (पा. सू. ८. १. ६३) इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्तते। सहस्रशब्दः 'कर्दमादीनां च' (फि. सू. ५९) इति मध्योदात्तः। सहस्रप्रधनेषु वाजेषु। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। उग्रः। 'उच समवाये'। चस्य गः। 'ऋज्रेन्द्रा°' (उ. सू. २. १८६) इति रन्। व्यत्ययेनान्तोदात्तः। ऊतिभिः। 'ऊतियूति°' इत्यादिना क्तिन् उदात्तः॥

## इन्द्रं॑ व॒यं म॑हाध॒न इन्द्र॒मर्भे॑ हवामहे। युजं॑ वृ॒त्रेषु॑ व॒ज्रिण॑म्॥ ५॥

इन्द्र॑म्। व॒यम्। म॒हा॒ऽध॒ने। इन्द्र॑म्। अर्भे॑। ह॒वा॒म॒हे॒। यु॒ज॑म्। वृ॒त्रेषु॑। व॒ज्रिण॑म्॥ ५॥

ᵛवयम् अनुष्ठातारः ᵛमहाधने प्रभूतधननिमित्तम् ᵛइन्द्रं ᵛहवामहे आह्वयामः। ᵛअर्भे अर्भके स्वल्पेऽपि धने निमित्तभूते सति ᵛइन्द्रं हवामहे। कीदृशमिन्द्रम्। ᵛयुजं सहकारिणं समाहितं वा ᵛवृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय ᵛवज्रिणं वज्रोपेतम्॥ महाधनशब्दो यद्यपि

संग्रामनामसु पठितस्तथापि महत् धनम् अत्र संग्रामे इति बहुव्रीहित्वे सति अन्तोदात्तत्वासिद्धेः नात्र तत् गृहीतम्। महाधने। महच्च तद्धनं चेति 'समासस्य' (पा. सू. ६. १. २२३) इत्यन्तोदात्तः। अर्भे। 'अर्तिगृभ्यां भन्' (उ. सू. ३. ४३२)। नित्त्वादाद्युदात्तः। हवामहे। 'ह्वेञ् स्पर्धायां शब्दे च'। ञित्वात् कर्त्रभिप्राये (पा. सू. १. ३. ७२) आत्मनेपदम्। लटः स्थाने महिङ् (पा. सू. ३. ४. ७८)। 'टित आत्मनेपदानाम्°' (पा. सू. ३. ४. ७९) इति टेः एत्वम्। कर्तरि शप् (पा. सू. ३. १. ६८)। 'ह्वः संप्रसारणम्' (पा. सू. ६. १. ३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा. सू. ६. १. ३४) इति संप्रसारणं वकारस्य उकारः। परपूर्वत्वम्। गुणावादेशौ। 'अतो दीर्घो यञि' (पा. सू. ७. ३. १०१) इति दीर्घत्वम्। 'तिङ्ङतिङः' इति निघातः। युजम्। 'युज समाधौ' इत्यस्य क्विप्। 'युजेरसमासे' (पा. सू. ७. १. ७१) इति नुम् न भवति। स हि युजेः इति निर्देशात् इकाररहितस्य न भवति। 'अनित्यमागमशासनम्' (परिभा. ९३. २) इति वा 'युजिर् योगे' इत्यस्यापि नुम् न भवति। वृत्रेषु। 'वृतु वर्तने'। प्रतिकूलतया वर्तन्ते इति वृत्राणि शत्रुकुलानि। 'स्फायितञ्चि°' (उ. सू. २. १७०) इत्यादिना रक्प्रत्ययः। किस्वाद्गुणाभावः। प्रत्ययस्वरः। वज्रिणम्। 'अत इनिठनौ' (पा. सू. ५. २. ११५) इति इनिः। प्रत्ययस्वरः॥ ॥ १३॥

स नो॑ वृषन्न॒मुं च॒रुं सत्रा॑दाव॒न्नपा॑ वृधि। अ॒स्मभ्य॒मप्र॑तिष्कुतः॥ ६॥

सः। नः॒। वृ॒ष॒न्। अ॒मुम्। च॒रुम्। सत्रा॑ऽदावन्। अप॑। वृ॒धि॒। अ॒स्मभ्य॑म्। अप्र॑तिऽस्कुतः॥ ६॥

हे सत्रादावन् अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः अतो व्रीह्यादिनिष्पत्त्यर्थं हे वृषन् वृष्टिप्रदेन्द्र नः अस्मदर्थम् अमुं दृश्यमानं चरुं मेघम् अप वृधि उद्घाटय। तथैव अस्मभ्यम् अस्मदर्थम् अप्रतिष्कुतः प्रतिशब्दरहितः। यद्यत् अस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति। अतोऽस्मद्विषये कदाचिदपि अप्रतिस्खलितः। एतदेवाभिप्रेत्य यास्क आह—'अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा' (निरु. ६. १६) इति॥ वृषन्। आमन्त्रितनिघातः। अमुम्। प्रातिपदिकस्वरेणान्तोदात्तः। चरुम्। चरतीति चरुः। 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ. सू. १. ७) इति उप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः। सत्रादावन्। सत्राशब्दः सहार्थे। अभिमतफलजातं सकलं सह ददातीति सत्रादावा। 'आतो मनिन्क्वनिब्वनिपश्च' (पा. सू. ३. २. ७४) इति वनिप्। 'आमन्त्रितस्य च' (पा. सू. ६. १. १९८) इत्याद्युदात्तत्वम्। पादादित्वान्न निघातः। अप। 'निपातस्य च' (पा. सू. ६. ३. १३६) इति दीर्घः। निपात आद्युदात्तः। वृधि। 'वृञ् वरणे'। लोटः सिप्। तस्य 'सेर्ह्यपिच्च' (पा. सू. ३. ४. ८७) इति हिः। 'स्वादिभ्यः श्नुः' (पा. सू. ३. १. ७३)। तस्य 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति लुक्। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा. सू. ६. ४. १०२) इति हेर्धिरादेशः। तस्य ङित्वात् पूर्वस्य गुणाभावः। निघातः। अस्मभ्यम्। अस्मच्छब्दात् 'भ्यसो भ्यम्' (पा. सू. ७. १. ३०) इति भ्यमादेशः। 'शेषे लोपः' (पा. सू. ७. २.९०) इति दकारलोपः। 'बहुवचने झल्येत्' (पा. सू. ७. ३. १०३) इति एत्वं न भवति। 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (पा. म. ७.१. ३०) इत्युक्तम्। प्रातिपदिकस्वरेण स्म इत्यकार उदात्तः। 'भ्यसोऽभ्यम्' इति अभ्यमादेशपक्षे 'शेषे लोपः' इति मपर्यन्तशेषस्य अद्शब्दस्य लोपः। तदा उदात्तनिवृत्तिस्वरेण अभ्यमः आदेः अकारस्योदात्तत्वम् (पा. सू. ६. १. १६१)। अप्रतिष्कुतः केनचिदप्रतिशब्दितः। 'कुङ् शब्दे'। 'निष्ठा' (पा. सू. ३. २. १०२) इति कर्मणि क्तप्रत्ययः। प्रतेः प्राक्प्रयोगः। पारस्करादेराकृतिगणत्वात् सुडागमः (पा. सू. ६. १. १५७)। सुषामादेराकृतिगणत्वात् षत्वम् (पा. सू. ८. ३. ९८)। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्॥

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम् ॥७॥

तुञ्जेऽतुञ्जे। ये। उत्ऽतरे। स्तोमाः। इन्द्रस्य। वज्रिणः। न। विन्धे। अस्य। सुऽस्तुतिम् ॥७॥

$^{v}$तुञ्जेतुञ्जे तस्मिंस्तस्मिन् फलदातरि देवान्तरे $^{v}$ये $^{v}$स्तोमाः स्तोत्रविशेषाः $^{v}$उत्तरे उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि $^{v}$वज्रिणः वज्रयुक्तस्य $^{v}$अस्य $^{v}$इन्द्रस्य $^{v}$सुष्टुतिं योग्यां शोभनस्तुतिं $^{v}$न $^{v}$विन्धे न विन्दामि। इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः। एतामृचं यास्क एवं व्याचष्टे—'तुञ्जस्तुञ्जतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः' (निरु. ६. १७-१८) इति॥ तुञ्जेतुञ्जे। तुञ्जतिर्दानकर्मा इत्युक्तम्। ततः कर्तरि पचाद्यच् (पा. सू. ३. १. १३४)। 'चितः' (पा. सू. ६. १.१६३) इत्यन्तोदात्तत्वम्। 'नित्यवीप्सयोः' (पा. सू. ८. १. ४) इति द्विर्भावः। 'तस्य परमाम्रेडितम्' (पा. सू. ८. १. २) इति द्वितीयस्याम्रेडितसंज्ञा। 'अनुदात्तं च' (पा. सू. ८. १. ३) इत्यनुदात्तत्वम्। दातरि दातरीत्यर्थः। निरुक्ते तु 'दाने दाने' इत्यर्थतो व्याख्यानम्[1]। उत्तरे। 'तॄ प्लवनतरणयोः'। भावे 'ऋदोरप्' (पा. सू. ३. ३. ५७)। उच्छब्द उत्कृष्टवचनः। उत्कृष्टः तरो यस्येति बहुव्रीहिः। उच्छब्दो 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्याद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्[2]। स्तोमाः। 'अर्तिस्तुसु°' (उ. सू. १. १३७) इत्यादिना स्तोमशब्दो मनन्तो नित्त्वादाद्युदात्तः। विन्धे। 'विदॢ लाभे'। लट्। स्वरितेत्त्वादात्मनेपदम्। उत्तमैकवचनमिट् (पा. सू. ३. ४. ७८)। 'तुदादिभ्यः शः' (पा. सू. ३. १. ७७)। 'शे मुचादीनाम्' (पा. सू. ७. १. ५९) इति नुम्। दकारस्य व्यत्ययेन धकारः। अस्य। प्रकृतस्येन्द्रस्य परामर्शादन्वादेशे इदमोऽश् (पा. सू. २. ४. ३२)। शित्त्वात् सर्वादेशोऽनुदात्तः। सुष्टुतिम्। 'ष्टुञ् स्तुतौ'। 'धात्वादेः षः सः' इति सत्वम्। 'स्त्रियां क्तिन्' (पा. सू. ३. ३. ९४) इति भावे क्तिन्। सु इति उदात्तेनोपसर्गेण प्रादिसमासः (पा. सू. २. २. १८)। 'उपसर्गात्सुनोति°' (पा. सू. ८. ३. ६५) इत्यादिना षत्वम्। अत्र अव्ययपूर्वपदप्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते तदपवादत्वेन[3] 'तादौ च निति कृत्यतौ' (पा. सू. ६. २. ५०) इत्यनन्तरस्य गतिसंज्ञकस्य सोः एव उदात्तत्वेन भवितव्यम्। तत्तु 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' (पा. सू. ६. २. १५१) इत्युत्तरपदान्तोदात्तत्वेन[4] बाध्यते। तथा च[5] 'सुहवां सुष्टुती हुवे' (ऋ. सं. २. ३२. ४), 'वृष्णे चोदस्व सुष्टुतिम्' (ऋ. सं. ८. ७५. ६), 'यास्ते राके सुमतयः' (ऋ. सं. २. ३२. ५) इत्यादौ अन्तोदात्तत्वमित्याहुः। यथा तु 'मन्क्तिन्°' इत्यादौ वृत्तौ उक्तं तथैव तत्र घटते इति लक्ष्यते। तत्र हि 'कारकाद्दत्तश्रुतयोरेवाशिषि' (पा. सू. ६. २. १४८) इत्यतः 'कारकात्' इत्यनुवृत्तेः 'पाणिनिकृतिः' इत्यादावेव 'मन्क्तिन्°' इत्यादिसूत्रमित्युक्तम्। 'कारकादित्येव। प्रकृतिः प्रहृतिः' (का. ६. २. १५१) इति च प्रत्युदाहृतम्। स्यादेतत्। स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूता ऋक् अभिधीयते। सुशब्देन च करणमेव विशेष्यते न धात्वर्थः। तथा च सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति। प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थे विशेषणमेवेति[6] तत्प्रत्युदाहरणोपपत्तिरिति। न। एवं सति सुशब्दस्य क्रियायोगाभावात् 'उपसर्गाः क्रियायोगे' (पा. सू. १. ४. ५९) इत्युक्ता उपसर्गसंज्ञा

१. च-छ-थ-फ-श—व्याख्यातम्। २. त—°प्रकृतिस्वरत्वेन। ३. ग-घ-च-छ-ण-य-श—तदपवादेन। ४. ग-घ-च-छ-ण-त-फ-य—°दात्तेन। ५. छ-ण-य—'तथा च' नास्ति। ६. त—धात्वर्थविशेषण°।

न स्यात् । तथा च ' उपसर्गात्सुनोति सुवति० ' इत्यादिना षत्वं न स्यात् । ननु क्तिना करणमभिधीयते । क्रियासाधनं च करणम् । तथा च करणविशेषणस्यापि सुशब्दस्य करणान्तर्गत-क्रियायोगादुपसर्गता भविष्यतीति । न । तथा सति[1] यत्क्रियायुक्ताः तं प्रति उपसर्गसंज्ञकाः ( पा. सू. १. ४. ६०. ३ ) इति करोत्यर्थमेव प्रति सोरुपसर्गता, न तु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव । ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति । या हि शोभना स्तुतिस्तत्करण-मपि शोभनमेवेति । एवं च स्तुधात्वर्थसंबन्धात् तं प्रति उपसर्गत्वेन षत्वमपि भविष्यति । तद्द्वारा करण-विशेषणत्वात् कारकवचनोऽपि सुशब्दो भविष्यतीति वृत्त्यविरोधेनैव मन्क्तिनादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति । प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन् प्रत्युदाहृतेति । न । तत्र प्रशब्दस्य करणपरत्वम् । करणे क्तिन्नुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्द्वारा प्रत्ययार्थविशेषणतापि इति तत्प्रत्युदाहर-णोपपत्तिरिति । सुष्टुतिरित्यत्र पुनः क्तिनभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्यु-दाहरणतेति । न । किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः, उत श्रुत्या एकं विशिनष्टि अर्थादितरद्दिति[3] । यदाप्युभयपरत्वं तदापि किं यौगपद्येन उत क्रमेणेति । आद्ये प्रतिविशेष्यं विशेषण-पदावृत्तिरिति[4] प्रसङ्गः । द्वितीये विरम्यव्यापारापातः । न च शब्दबुद्धिकर्मणां विरम्यव्यापारः कस्यचित् दृष्टः इष्टो वा । अतो न श्रुत्या उभयपरत्वम् । अथैकत्र श्रुत्या तात्पर्यम्, अपरत्र तु अर्थादिति । तत्र धात्वर्थसंबन्धस्य आर्थिकत्वे षत्वासिद्धिः । प्रत्ययार्थसंबन्धस्य आर्थिकत्वे 'मन्क्तिन्' इत्यादिस्वरासिद्धिः । आर्थिकेनापि कारकसंबन्धेनोदाहरणत्वाभिधाने प्रकृतिः प्रहृतिरित्यादिप्रत्युदाहरणं न स्यात् । श्रुत्या धात्वर्थमात्रसंबन्धस्यापि प्रशब्दस्यार्थात् तत्करणसंबन्धः केन वारयितुं शक्यते इत्येषा दिक् । अत इह प्रत्ययार्थमात्रसंबन्धपरत्वाङ्गीकारेण स्वरः सिध्यतु षत्वं तु छान्दसमस्तु । शोभना स्तुतिर्यस्यामिति बहुव्री-हिर्वा भवतु । एवं च ' नञ्सुभ्याम् ' इत्यन्तोदात्तं भविष्यति । अथवा सुष्टु स्तुवन्तीति सुष्टुतय इति करणभूता ऋचः स्तुतिशब्देनोच्यन्ते । ' क्तिच्क्तौ च संज्ञायाम् ' ( पा. सू. ३. ३. १७४ ) इति क्तिच्प्रत्यये सति चित्वादन्तोदात्तता भविष्यति । न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभि-धानमिति वाच्यम् । काष्ठानि पचन्तीतिवत् तासामपि स्वव्यापारप्राधान्यविवक्षया करणत्वोपपत्तेरिति ॥

**वृषा॑ यू॒थेव॒ वंस॑गः कृ॒ष्टीरि॑य॒र्त्योज॑सा । ईशा॑नो॒ अप्र॑तिष्कुतः ॥ ८ ॥**

वृषा॑ । यू॒थाऽइ॑व । वंस॑गः । कृ॒ष्टीः । इ॒य॒र्ति॒ । ओज॑सा । ईशा॑नः । अप्र॑तिऽस्कुतः ॥ ८ ॥

ᵛवृषा कामानां वर्षितेन्द्रः ᵛओजसा स्वकीयबलेनानुग्रहीतुं ᵛकृष्टीः मनुष्यान् ᵛइयर्ति प्राप्नोति । कीदृश इन्द्रः । ᵛईशानः समर्थः ᵛअप्रतिष्कुतः प्रतिशब्दरहितः । याच्यमानं[7] न परिहरतीत्यर्थः । इन्द्रस्य दृष्टान्तः । ᵛवंसगः वननीयगतिर्वृषभः ᵛयूथेव गोयूथानि यथा प्राप्नोति तद्वत् ॥ वृषा । ' कनिन्युवृषि-तक्षिराजिधन्विद्युप्रतिदिवः ' ( उ. सू. १. १५४ ) इति वर्षतेः कनिन्प्रत्ययः । कित्वाद्गुणाभावः । नित्वादाद्युदात्तः । यूथा इव । युवन्ति मिश्रीभवन्तीति यूथानि । ' यु मिश्रणामिश्रणयोः '। ' तिथपृष्ठगूथयूथप्रोथाः ' ( उ. सू. २. १६९ ) इति थक्प्रत्ययान्तो निपातितः । निपातनाद्दीर्घत्वम् । प्रत्ययस्वरेण आकार उदात्तः । ' शेश्छन्दसि बहुलम् ' ( पा. सू. ६. १. ७० ) इति लुक् । ' इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ' ( पा. सू. २. १. ४. २ ) इति समासेऽपि स एव

१. श-तथा च सति । २. छ-ण-य-धात्वर्थसंबन्धात् । ३. च-फ-अपरमर्थादिति । ४. च-छ-थ-फ-श-°वृत्तिप्रसङ्गः । ५. च-छ-ण-थ-फ-श-कथंचित् । ६. च-छ-ण-फ-करणसंबन्धः । ७. च-फ-याचमानम्

स्वरः । वंसगः । पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः ( पा. सू. ६. ३. १०९ ) । कर्षन्तीति कृष्टयः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । चित्वादन्तोदात्तः । इयर्ति । 'ऋ सृ गतौ'। तिप् । शपः श्लुः । 'श्लौ' (पा. सू. ६. १. १०) इति द्विर्भावः । अभ्यासस्य उरदत्वहलादिशेषौ (पा. सू. ७. ४. ६६; ६०) । 'अर्तिपिपर्त्योश्च' (पा. सू. ७. ४. ७७) इति अकारस्य इकारः । 'अभ्यासस्यासवर्णे' (पा. सू. ६. ४. ७८) इति इयङादेशः । अङ्गस्य गुणो रपरत्वम् । ओजसा । 'उब्जेर्बलोपश्च' (उ. सू. ४. ६३१) इत्यसुन् तत्संनियोगेन बकारलोपः । लघूपधगुणः (पा. सू. ७. ३. ८६) । नित्वादाद्युदात्तः । ईशानः । 'ईश ऐश्वर्ये' । लटः शानच् । 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुक् । 'चितः' इत्यन्तोदात्तं बाधित्वा अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते । अप्रतिष्कुतः अप्रतिशब्दितः । 'कु शब्दे' । कर्मणि क्तः । पारस्करादित्वात् सुडागमः ( पा. सू. ६. १. १५७ ) । सुषामादित्वात् षत्वम् ( पा. सू. ८. ३. ९८ ) । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

## य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ॥ ९ ॥

यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति । इन्द्रः । पञ्च । क्षितीनाम् ॥९॥

ᵛयः इन्द्रः स्वयम् ᵛएकः एव ᵛचर्षणीनां मनुष्याणाम् ᵛइरज्यति ईष्टे; तथा ᵛवसूनां धनानाम् इरज्यति स ᵛइन्द्रः ᵛपञ्च निषादपञ्चमानां ᵛक्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः ॥ एकः । 'इण् गतौ' । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ. सू. ३. ३२३) इति कन् । बाहुलकात् कलोपाभावः । नित्वादाद्युदात्तत्वम् । चर्षणीनाम् । प्रातिपदिकस्वरेणान्तोदात्तः । 'अन्तोदात्तात्' इत्यनुवृत्तौ 'नामन्यतरस्याम्' (पा. सू. ६. १. १७७) इति विभक्तेरुदात्तत्वम् । वसूनाम् । 'नित्' इत्यनुवृत्तौ 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ. सू. १. १०) इति उप्रत्ययः । नित्वादाद्युदात्तः । इरज्यति । कण्ड्वादिषु 'इरज् ईर्ष्यायाम्'। अत्र ऐश्वर्यार्थः । 'कण्ड्वादिभ्यो यक्' (पा. सू. ३. १. २७) । प्रत्ययस्वरेणोदात्तः । पञ्च । 'पचि व्यक्तीकरणे' । 'पचेश्च' इति कनिन्[1] । नित्वादाद्युदात्तः । क्षितीनाम् । प्रातिपदिकस्वरेणान्तोदात्तः । 'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम् ॥

आश्विनं शंसिष्यन् 'इन्द्रं वो विश्वतस्परि' इति जुहुयात् । 'संस्थितेष्वाश्विनाय स्तुवते' इति खण्डे 'बण्महाँ असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परि' (आश्व. श्रौ. ६. ५) इति सूत्रितम् । चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिन 'इन्द्रं वो विश्वतस्परि' इत्यारम्भणीया । 'चतुर्विंशे' इत्युपक्रम्य 'ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि' (आश्व. श्रौ. ७. २) इति सूत्रितम् ॥

## इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ १० ॥

इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः । अस्माकम् । अस्तु । केवलः ॥ १० ॥

हे ऋत्विग्यजमानाः ᵛविश्वतः सर्वेभ्यो ᵛजनेभ्यः ᵛपरि उपरि अवस्थितम् ᵛइन्द्रं ᵛवः युष्मदर्थं ᵛहवामहे आह्वयामः । अतः स इन्द्रः ᵛअस्माकं ᵛकेवलः असाधारणः ᵛअस्तु । इतरेभ्योऽप्यधिकमनु-

---

१. छ-ठ-ण-त-थ-पञ्चेश्च ।

ग्रहमस्मासु करोत्वित्यर्थः ॥ इन्द्रम् । रन्प्रत्ययान्तो नित्वादाद्युदात्तः । वः । 'अनुदात्तं सर्वम्॰' इत्यनुवृत्तौ 'बहुवचनस्य वस्नसौ' (पा. सू. ८. १. २१) इति वस्। विश्वतः । 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात् पूर्वमुदात्तम् । परि । निपातत्वादाद्युदात्तः। संहितायां 'पञ्चम्याः परावध्यर्थे' (पा. सू. ८. ३. ५१) इति विसर्जनीयस्य सत्वम्। हवामहे । ह्वेञः शपि 'बहुलं छन्दसि' (पा. सू. ६. १. ३४) इति संप्रसारणपरपूर्वत्वे । गुणावादेशौ । जनेभ्यः । जन्यन्ते इति जनाः । जनयतेः कर्मणि वञ् । 'जनिवध्योश्च' (पा. सू. ७. ३. ३५) इति उपधाया वृद्ध्यभावः । ञित्वादाद्युदात्तत्वम्। अस्माकम् । अस्मच्छब्दोऽन्तोदात्तः । 'शेषे लोपः' (पा. सू. ७. २. ९०) इत्यन्तलोपपक्षे 'साम आकम्' (पा. सू. ७. १. ३३) इति आकारेण एकादश उदात्तः । टिलोपपक्षे उदात्तनिवृत्तिस्वरेण आकार उदात्तः । केवलः । वृषादेराकृतिगणत्वादाद्युदात्तः ॥ ॥ १४ ॥ ॥ २ ॥

तृतीयेऽनुवाके चत्वारि सूक्तानि । तत्र 'एन्द्र सानसिम्' इत्यादिकं प्रथमं दशर्चं सूक्तं 'सुरूपकृत्नुम्' इत्यादिषु षट्सु पञ्चमम् । ऋष्यादयस्तु पूर्ववत् । विशेषविनियोगस्तु – महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ 'एन्द्र सानसिं रयिम्' इत्यादिके द्वे सूक्ते । पञ्चमारण्यके 'औष्णिही तृचाशीतिः' इति खण्डे शौनकेन सूत्रितं—'सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति सूक्ते' (ऐ. आ. ५. २. ५) इति । अतिरात्रे प्रथमपर्यायेऽच्छावाकशस्त्रे 'एन्द्र सानसिम्' इति सूक्तम्। सूत्रितं च— 'इन्द्रमिद्गाथिनो बृहदेन्द्र सानसिम्' (आश्व. श्रौ. ६. ४) इति । दर्शयागे इन्द्रयाजिनः सांनाय्यस्य अनुवाक्या 'एन्द्र सानसिं रयिम्' इति । 'उक्ता देवताः' इत्यस्मिन् खण्डे 'एन्द्र सानसिं रयिं प्र ससाहिषे पुरुहूत शत्रून्' (आश्व. श्रौ. १. ६) इति सूत्रितम् ॥

## एन्द्र॑ सान॒सिं र॒यिं स॒जित्वा॑नं सदा॒सह॑म् । वर्षि॑ष्ठमू॒तये॑ भर ॥ १ ॥

आ । इ॒न्द्र॒ । सा॒न॒सिम् । र॒यिम् । स॒ऽजित्वा॑नम् । स॒दा॒ऽसह॑म् । वर्षि॑ष्ठम् । ऊ॒तये॑ । भ॒र॒ ॥ १ ॥

हे ᵛइन्द्र ᵛऊतये अस्मद्रक्षार्थं ᵛरयिं धनम् ᵛआ ᵛभर आहर । कीदृशं रयिम् । ᵛसानसिं संभजनीयम् । ᵛसजित्वानं समानशत्रुजयशीलम् । धनेन हि शूरान् भृत्यान् संपाद्य शत्रवो जीयन्ते । ᵛसदासहं सर्वदा शत्रूणामभिभवहेतुम् । ᵛवर्षिष्ठम् अतिशयेन वृद्धं प्रभूतमित्यर्थः ॥ सानसिम् । 'वन षण संभक्तौ' इत्यस्मात् असिप्रत्ययो वृद्धिः अन्तोदात्तत्वं च 'सानसिधर्णसि' (उ. सू. ४.५४७) इत्यादिना निपात्यते । रयिम् । प्रातिपदिकस्वरेणान्तोदात्तः । सजित्वानम् । समानान् अरीन् जेतुं शीलमस्य । 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५) इति क्वनिप् । उपपदसमासः । 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' (पा. सू. ६. ३. ८४) इति समानस्य सभावः । कृदुत्तरपदप्रकृतिस्वरेण धातुस्वर एव शिष्यते । वर्षिष्ठम् । वृद्धशब्दात् 'अतिशायने तमबिष्ठनौ' (पा. सू. ५. ३. ५५) इति इष्ठन् । 'प्रियस्थिर॰' (पा. सू. ६. ४. १५७) इत्यादिना वृद्धशब्दस्य वर्षादेशः । इष्ठनो नित्वादाद्युदात्तत्वम् । ऊतये । 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसाति' इत्यादिना क्तिन् उदात्तो निपातितः । भर । 'हृग्रहोर्भश्छन्दसि॰' (पा. सू. ८. २. ३२. १) इति हकारस्य भकारः । 'ते प्राग्धातोः' (पा. सू. १. ४. ८०) इति धातोः प्राक् प्रयोक्तव्यस्य आङः 'व्यवहिताश्च' (पा. सू. १. ४. ८२) इति छन्दसि व्यवहितप्रयोगः ॥

**नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै । त्वोता॑सो॒ न्यर्व॑ता ॥ २ ॥**

नि । येन॑ । मु॒ष्टि॒ऽह॒त्यया॑ । नि । वृ॒त्रा । रु॒णधा॑महै । त्वाऽऊ॑तासः । नि । अर्व॑ता ॥ २ ॥

येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून् नि रुणधामहै निरुद्धान् करवाम तादृशं धनमाहरेत्यर्थः । त्वोतासः त्वया रक्षिता वयम् अर्वता अस्मदीयेनाश्वेन नि रुणधामहै इत्यनुषङ्गः । पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयाम इत्यर्थः ॥ मुष्टिहत्यया । 'हनस्त च' (पा. सू. ३. १. १०८) इति सुबन्ते उपपदे क्यप्; तत्संनियोगेन नकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इति बहुलग्रहणेन त्रिचक्रादीनां छन्दस्यन्तोदात्तत्वाभिधानात् (पा. सू. ६. २. १९९.१) अन्तोदात्तत्वम् । नि । आख्यातसंबन्धस्यापि नेरुपसर्गस्य 'व्यवहिताश्च' (पा. सू. १. ४. ८२) इति व्यवहितप्रयोगः । वृत्रा । 'शेश्छन्दसि बहुलम्' (पा. सू. ६. १. ७०) इति शेर्लोपः । नलोपः । रुणधामहै । आटूसंयोगेन पित्त्वात् (पा. सू. ३. ४. ९२) 'श्नसोरल्लोपः' (पा. सू. ६. ४. १११) इति अकारलोपो न भवति । पित्त्वादेव च आख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एव उदात्तत्वं शिष्यते । ननु 'तिङ्ङतिङः' इति निघातेन भवितव्यम् । न । द्वे ह्यत्र तिङ्विभक्ती । निबिडया मुष्ट्या निरुणधामहै इत्यत्र श्रुतैका[1] । अर्वता निरुणधामहै इत्यत्रानुषक्ता द्वितीया । तयोः समुच्चयार्थश्चकारो लुप्यते । तेन 'चादिलोपे विभाषा' (पा. सू. ८. १. ६३) इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते । यथा 'नात्मना तृप्यति नान्यस्मै ददाति' (तै. सं. २. ५. ४. ३) इत्यत्र हि समुच्चयार्थस्य चशब्दस्य लोपात् तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते, ददातीति द्वितीया तु निहन्यते एव । ननु तत्र द्वे तिङ्विभक्ती श्रूयेते । इह पुनरेकैव श्रुता । सैवोत्तरत्रानुषज्यते नान्या श्रूयते इति द्वितीयाभावात् कथमियं प्रथमा । न । अनुषङ्गलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात् । 'पुरोडाशं चाधिश्रयत्याज्यं च' (तै. सं. १. ६. ९. ३-४), 'प्रोक्षणीश्चासादयत्याज्यं च' (तै. सं. १. ६. ९. ४) इत्यत्र हि अधिश्रयति आसादयति इति आख्यातयोः प्रथमवाक्यद्वयश्रुतयोः उत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्वीकारेण 'चवायोगे प्रथमा' (पा. सू. ८. १. ५९) इति निघातनिषेधो दृष्ट इति । त्वया ऊता रक्षिताः त्वोतासः । 'प्रत्ययोत्तरपदयोश्च' (पा. सू. ७. २. ९८) इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः, अवतेः निष्ठायामिडभावश्च । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा. सू. ६. ४. २०) इति ऊठ् । 'एत्येधत्यूठ्सु' (पा. सू. ६. १. ८९) इति वृद्ध्यभावश्छान्दसः । 'तृतीया कर्मणि' (पा. सू. ६. २. ४८) इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः । 'एकादेश उदात्तेनोदात्तः' इत्युदात्त ओकारः । अर्वता । अर्वति गच्छति इति अर्वा । 'अर्व गतौ' । 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५) इति वनिप्प्रत्ययः । 'नेड्वशि कृति' (पा. सू. ७. २. ८) इति इट्प्रतिषेधः । 'लोपो व्योर्वलि' (पा. सू. ६. १. ६६) इति वकारलोपः । 'अर्वणस्त्रसावनञः' (पा. सू. ६. ४. १२७) इति तकारः । वनिपः पित्त्वात् धातुस्वर एव ॥

**इन्द्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि । जये॑म॒ सं यु॒धि स्पृधः॑ ॥ ३ ॥**

इन्द्र॑ । त्वाऽऊ॑तासः । आ । व॒यम् । वज्र॑म् । घ॒ना । द॒दी॒म॒हि॒ । जये॑म । सम् । यु॒धि । स्पृधः॑ ॥ ३ ॥

---

१. च-फ-मुख्या श्रुतैका ।

हे ᵛइन्द्र ᵛत्वोतासः त्वया पालिताः ᵛवयं ᵛघना घनं शत्रुप्रहरणायात्यन्तदृढं ᵛवज्रम् आयुधम् ᵛआ ᵛददीमहि स्वीकुर्मः । तेन च वज्रेण ᵛयुधि युद्धे ᵛस्पृधः स्पर्धमानान् शत्रून् ᵛसं ᵛजयेम सम्यक् जयेम ॥ त्वोतासः । उक्तम् । वज्रम् । ' वज व्रज गतौ ' । ' ऋज्रेन्द्राग्र° ' ( उ. सू. २. १८६ ) इत्यादिना रन्प्रत्ययान्तो निपातः । घना । घनः काठिन्यम् । तदस्यास्तीति अर्शआदित्वात् अच् ( पा. सू. ५. २. १२७ ) । चित्वादन्तोदात्तः । ' सुपां सुलुक्° ' इति डादेशः । ददीमहि । ' डुदाञ् दाने ' । प्रार्थनायां लिङ् । क्रियाफलस्य कर्तृगामित्वात् ' स्वरितञितः° ' ( पा. सू. १. ३. ७२ ) इत्यात्मनेपदोत्तमपुरुषबहुवचनं महिङ् । जुहोत्यादित्वात् शपः श्लुः ( पा. सू. २. ४. ७५ ) । ' श्लौ ' ( पा. सू. ६. १. १० ) इति द्विर्भावः । ' लिङः सलोपोऽनन्त्यस्य ' ( पा. सू. ७. २. ७९ ) इति सलोपः । ' श्नाभ्यस्तयोरातः ' ( पा. सू. ६. ४. ११२ ) इति आकारलोपः । जयेम । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरात् धातुस्वर एव शिष्यते । ' छन्दसि परेऽपि ' ( पा. सू १. ४. ८१ ) इति समः परः प्रयोगः । युधि । ' युध संप्रहारे ' । संपदादित्वात् भावे क्विप् ( पा. सू. ३. ३. १०८. ९ ) । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । स्पर्धन्ते इति स्पृधः । ' स्पर्ध संघर्षे ' । ' क्विप्च ' ( पा. सू. ३. २. ७६ ) इति क्विप् । ' बहुलं छन्दसि ' इति रेफस्य संप्रसारणम् ऋकारः । अकारलोपश्च ॥

## व॒यं शूरे॑भि॒रस्तृ॑भि॒रिन्द्र॒ त्वया॑ यु॒जा व॒यम् । सा॒स॒ह्याम॑ पृतन्य॒तः ॥ ४ ॥

व॒यम् । शूरे॑भिः । अस्तृ॑ऽभिः । इन्द्र॑ । त्वया॑ । यु॒जा । व॒यम् । स॒स॒ह्याम॑ । पृ॒त॒न्य॒तः ॥ ४ ॥

ᵛवयं कर्मानुष्ठातारः ᵛशूरेभिः शौर्ययुक्तैः ᵛअस्तृभिः आयुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः । हे ᵛइन्द्र तादृशाँ भटसहितौ वयं ᵛयुजा सहायभूतेन ᵛत्वया ᵛपृतन्यतः सेनामिच्छतः ᵛशत्रून् ᵛसासह्याम अतिशयेनाभिभवेम ॥ शूरेभिः । ' शु श्रु गतौ ' । ' क्रन् ' ( उ. सू. २. १८२ ) इत्यनुवृत्तौ ' शुसिचिमीनां दीर्घश्च ' ( उ. सू. २. १८३ ) इति क्रन् । कित्वाद्गुणाभावः । नित्वादाद्युदात्तत्वम् । ' बहुलं छन्दसि ' (पा. सू. ७. १. १० ) इति ऐसो निषिद्धत्वात् ' बहुवचने झल्येत् ' ( पा. सू. ७. ३. १०३ ) इति एत्वम् । सहयोगे तृतीयाबलात् ( पा. सू. २. ३. १९ ) वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यम् । विनापि सहशब्देन 'वृद्धो यूना° ' (पा. सू. १. २. ६५) इति निपातनादिति ह्युक्तम् । अस्तृभिः शस्त्रास्त्रप्रक्षेपणशीलैः तद्धर्मभिः तत्साधुकारिभिर्वा । ' असु क्षेपणे ' । ' तृन् ' ( पा. सू. ३. २. १३५ ) इति ताच्छील्यादिषु तृन् । नित्वादाद्युदात्तः । ' रधादिभ्यश्च ( पा. सू. ७. २. ४५ ) इति विकल्पविधानात् अयं पक्षे इडभावः । त्वया । ' युष्यसिभ्यां मदिक् ' ( उ. सू. १. १३६ ) । कित्वाद्गुणाभावः । युष्मदः प्रत्ययस्वरेण अकार उदात्तः । तृतीयैकवचनं टा ( पा. सू. ४. १. २ ) । ' त्वमावेकवचने ' (पा. सू. ७. २. ९७) इति मपर्यन्तस्य त्वादेशः । 'अतो गुणे' (पा. सू. ६. १. ९७) इति पररूपत्वम् । ' एकादेश उदात्तेनोदात्तः ' इत्युदात्तः। युजा । ' °अञ्चुयुजिक्रुञ्चां च ' (पा. सू. ३. २. ५९ ) इति क्विन् । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । सासह्याम भृशं पुनः पुनः सहेमहि । ' षह मर्षणे ' । ' धात्वादेः षः सः ' । ' धातोरेकाचो हलादेः

---

१. ठ–निपातितः । २. त–' महिङ् ' नास्ति । ३. त–जयेम । जि जये । ४. ठ–तादृशभटसहिताः । ५. च-छ-ठ-ण-थ-फ-श शुषिचिमीनाम् । ६. ठ–°त्यस्मदा समभि° । ७. च-त-फ–' इडभावः ' इत्यस्यानन्तरं 'वस्तुतस्तु रु(र)धादावभावात् तृन्तृचौ शंसिक्षदादिभ्य इत्यनेन अनिट् तृन् ।'

क्रियासमभिहारे यङ्' (पा. सू. ३. १. २२)। 'यङोऽचि च' (पा. सू. २. ४. ७४) इति लुक्। 'सन्यङोः' (पा. सू. ६. १. ९) इति द्विर्भावः। हलादिशेषः (पा. सू. ७. ४. ६०)। 'दीर्घोऽकितः' (पा. सू. ७. ४. ८३) इति दीर्घः। प्रार्थनायां लिङ्। चर्करीतं परस्मैपदम् अदादिवच्च द्रष्टव्यमिति परस्मैपदोत्तमपुरुषबहुवचनं मस्। कर्तरि शप्। अदादिवद्भावात् लुक्। 'नित्यं ङितः' (पा. सू. ३. ४. ९९) इति अन्त्यसकारलोपः। 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा. सू. ३. ४. १०३) इति यासुट्। 'लिङः सलोपोऽनन्त्यस्य' (पा. सू. ७. २. ७९) इति सकारलोपः। सति शिष्टत्वात् यासुट एव उदात्तत्वं शिष्यते। पादादित्वात् न निघातः। पृतन्यतः। योद्धुं पृतनामात्मन इच्छतः। 'सुप आत्मनः क्यच्' इति क्यच्। 'सनाद्यन्ता धातवः' (पा. सू. ३.१.३२) इति धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' (पा. सू. २. ४. ७१) इति सुपो लुक्। 'क्यचि च' (पा. सू. ७. ४. ३३) इत्यनुवृत्तौ 'कव्यध्वरपृतनस्यर्चि लोपः' (पा. सू. ७. ४. ३९) इति आकारलोपः। पृतन्यधातुः चित्त्वादन्तोदात्तः। उपरि लटः शत्रादेशः। कर्तरि शप्। पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण उदात्तेन सह 'एकादेश उदात्तेनोदात्तः' इति पृतन्यच्छब्दोऽन्तोदात्तः। शसः सुप्स्वरेणानुदात्तस्य 'अन्तोदात्तात्' (पा. सू. ६. १. १६९) इत्यनुवृत्तौ 'शतुरनुमो नद्यजादी' (पा. सू. ६. १. १७३) इत्युदात्तत्वम्॥

## म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑। द्यौर्न प्र॑थि॒ना शवः॑॥ ५॥

म॒हान्। इन्द्रः॑। प॒रः। च॒। नु। म॒हि॒ऽत्वम्। अ॒स्तु॒। व॒ज्रिणे॑। द्यौः। न। प्र॒थि॒ना। शवः॑॥५॥

अयम् ᵛइन्द्रः ᵛमहान् शरीरेण प्रौढः ᵛपरश्च गुणैरुत्कृष्टोऽपि। ᵛनु किंच ᵛवज्रिणे वज्रयुक्तायेन्द्राय ᵛमहित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदा ᵛअस्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किंच। ᵛद्यौर्न द्युलोक इव ᵛशवः बलमिन्द्रस्य सेनारूपं ᵛप्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति[1] शेषः। यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु 'नु मक्षु' (नि. २. १५. १) इति पठितस्तथाप्यत्र तस्यान्वयाभावात् निपातत्वेन अनेकार्थत्वसंभवाच्च समुच्चयार्थोऽत्र गृहीतः। नशब्दो लोके प्रतिषेधार्थ एव। स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात् पूर्वं प्रयुज्यमानः प्रतिषेधार्थ उपरिष्टात् प्रयुज्यमान उपमार्थः[2]। तथा च यास्क उदाहरति— 'उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते' (निरु. १. ४) इति। अत्रोपमेयवाचिनो[3] द्युशब्दस्यापि प्रयुक्तत्वात् उपमार्थः[4] स्वीकृतः। अष्टाविंशतिसंख्याकेषु बलनामसु 'ओजः पाजः शवः' (नि. २. ९. ३) इति पठितम्॥ महान् इति नकारस्य संहितायां 'दीर्घादटि समानपादे' (पा. सू. ८. ३. ९) इति रुत्वम्। 'आतोऽटि नित्यम्' (पा. सू. ८. ३. ३) इति पूर्वस्य आकारस्य अनुनासिकः। 'भोभगोअघोअपूर्वस्य योऽशि' (पा. सू. ८. ३. १७) इति यकारः। तस्य लोपः (पा. सू. ८. ३. १९)। तस्यासिद्धत्वात् (पा. सू. ८. २. १) स्वरसंधिर्न भवति। महेः 'इन्' (उ. सू. ४. ५५७) इति औणादिक इन्। महेर्भावो महित्वम्। त्व इति प्रत्ययस्वरेणोदात्तः। स एव शिष्यते। वज्रिणे। इकारः प्रत्ययस्वरेणोदात्तः। द्यौः। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'गोतो णित्' (पा. सू. ७. १. ९०) इति विभक्तेर्णित्त्वात् 'अचो ञ्णिति' (पा. सू. ७. २. ११५)

---

१. च-फ—संयुज्यतामिति; छ—सुयुज्यतामिति। २. च-त-फ-श—उपमानार्थः। ३. ट—अतः अत्रोप°। ४. च-फ—उपमानार्थः।

इति वृद्धिः आन्तरतम्यात् उदात्तैव भवति । प्रथिना प्रथिम्ना । पृथोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा. सू. ५. १. १२२) इति इमनिच् । 'र ऋतो हलादेर्लघोः' (पा. सू. ६. ४ १६१) इति ऋकारस्य रभावः । 'तुरिष्ठेमेयःसु' (पा. सू. ६. ४. १५४) इत्यनुवृत्तौ 'टेः' (पा. सू. ६. ४. १५५) इति टिलोपः । प्रथिमन्शब्दः चित्त्वादन्तोदात्तः । तृतीयैकवचने भत्वात् 'अल्लोपोऽनः' (पा. सू. ६. ४. १३४) इति अकारलोपः । छान्दसो मकारलोपः । 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा. सू. ६. १. १६१) इति विभक्तेरुदात्तत्वम् । शवः । 'नब्विषयस्यानिसन्तस्य' (फि. सू. २६) इत्याद्युदात्तत्वम् ॥ ॥ १५ ॥

## स॒मो॒हे वा॒ य आश॑त॒ नर॑स्तो॒कस्य॒ सनि॑तौ । विप्रा॑सो वा धिया॒यवः॑ ॥ ६ ॥

स॒म्ऽओ॒हे । वा॒ । ये । आश॑त । नरः॑ । तो॒कस्य॑ । सनि॑तौ । विप्रा॑सः । वा॒ । धि॒या॒ऽयवः॑ ॥६॥

ᵛये ᵛनरः पुरुषाः ᵛसमोहे संग्रामे ᵛतोकस्य अपत्यस्य ᵛसनितौ ᵛवा लाभे वा ᵛआशत व्याप्तवन्तः । इन्द्रं स्तुत्येति शेषः । ᵛवा अथवा ᵛविप्रासः मेधाविनः ᵛधियायवः प्रज्ञाकामाः सन्तः आशत ते सर्वे लभन्ते इत्यध्याहारः । 'रणः' इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु 'समोहे समिथे' (नि. २. १७. २५) इति पठितम् । पञ्चदशस्वपत्यनामसु 'तुक् तोकम्' (नि. २. २. २) इति पठितम् ॥ समोहे । प्रातिपदिकान्तोदात्तत्वम् । वा । 'चादयोऽनुदात्ताः' (फि. सू. ८४) इत्यनुदात्तः । आशत । 'अशू व्याप्तौ' । छान्दसः च्लेर्लोपः । आडागम उदात्तः (पा. सू. ६. ४. ७२) । सति शिष्टत्वेन स एव शिष्यते । नरः । प्रातिपदिकस्वरः । सनितौ । स्त्रियां क्तिन् । 'तितुत्रेष्वग्रहादीनाम्' (पा. सू. ७.२. ९. १) । निगृहीतिः निपठितिः[1] इतिवत् इडागमः । विप्रासः । 'ऋज्रेन्द्र॰' (उ. सू. २. १८६) इत्यादिना विप्रशब्दो रन्प्रत्ययान्तो निपातितः । धियायवः । 'धि धारणे' । धीयते धार्यतेऽवबुध्यते श्रुतमर्थजातम् अनया इति धिया प्रज्ञा । तामात्मन इच्छन्तीति क्यच् । 'क्याच्छन्दसि' (पा. सू. ३. २. १७०) इति उप्रत्ययः । अतो लोपः । प्रत्ययस्वरेणान्तोदात्तः[2] ॥

## यः कु॒क्षिः सो॑म॒पात॑मः समु॒द्रइ॑व॒ पिन्व॑ते । उ॒र्वीरापो॒ न का॒कुदः॑ ॥ ७ ॥

यः । कु॒क्षिः । सो॒म॒ऽपात॑मः । स॒मु॒द्रःऽइ॑व । पिन्व॑ते । उ॒र्वीः । आपः॑ । न । का॒कुदः॑ ॥ ७ ॥

ᵛयः ᵛकुक्षिः अस्येन्द्रस्योदरप्रदेशः ᵛसोमपातमः अतिशयेन सोमस्य पाता स कुक्षिः ᵛसमुद्रइव ᵛपिन्वते वर्धते । सेचनार्थो धातुः औचित्येन वृद्धिं लक्षयति । ᵛकाकुदः मुखसंबन्धिन्यः ᵛउर्वीः बह्व्यः ᵛआपो ᵛन जलानीव । जिह्वासंबन्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः । यद्यपि 'श्लोकः' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'काकुत् जिह्वा' (नि. १. ११. २८) इति पठितं तथाप्युदकसंबन्धसिद्ध्यर्थमत्र काकुच्छब्देन मुखमुपलक्ष्यते । संबन्धवाचिनस्तद्धितस्यात्र छान्दसो लोपो द्रष्टव्यः[3] ॥ सोमपातमः । सोमं पिबतीति सोमपाः । आकारो धातुस्वरेणोदात्तः । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते । तमपः पित्त्वादनुदात्तत्वम् । समुद्रशब्दः प्रातिपदिकस्वादन्तोदात्तः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च'

---

१. ग-छ-ण-फ—निपर्चितिः । २. ठ-त—प्रत्ययस्वरेणोदात्तः । ३. त—जिह्वासंबद्धम्

इति प्रकृतिस्वरः। पिन्वते। 'पिवि सेचने'। 'इदितो नुम् धातोः' (पा. सू. ७. १. ५८) इति नुमागमः। शपः पित्त्वेनानुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। उर्वीः। उरुशब्दोऽन्तोदात्तः। 'वोतो गुणवचनात्' (पा. सू. ४. १. ४४) इति ङीप्। यणादेशः। 'उदात्तयणो हल्पूर्वात्' (पा. सू. ६. १. १७४) इति ईकार उदात्तः। जसा सह 'एकादेश उदात्तेनोदात्तः' इति एकादेश उदात्तः। आपः। प्रातिपदिकस्वरः। काकुदः। प्रातिपदिकस्वरेणान्तोदात्तः॥

अभिप्लवषडहगतेषु उक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः 'एवा ह्यस्य सूनृता' इति अनुरूपस्तृचः। 'एह्यू षु ब्रवाणि ते' इति खण्डे 'अथ ब्राह्मणाच्छंसिनः' इत्युपक्रम्य 'एवा ह्यसि वीरयुरेवा ह्यस्य सूनृता' (आश्व. श्रौ. ७. ८) इति सूत्रितम्॥

## एवा ह्यस्य सूनृता विरप्शी गोमती मही। पक्वा शाखा न दाशुषे॥ ८॥

एव। हि। अस्य। सूनृता। विऽरप्शी। गोऽमती। मही। पक्वा। शाखा। न। दाशुषे॥८॥

अस्य इन्द्रस्य सूनृता प्रियसत्यरूपा वाक् दाशुषे हविर्दत्तवते यजमानाय तदर्थम् एवा हि एवं खलु अनन्तरपदवक्ष्यमाणगुणोपेता भवतीत्यर्थः। कीदृशी। विरप्शी विविधरपणोपेतवाक्ययुक्ता बहुविधोपचारवादिनीत्यर्थः। गोमती बह्वीभिर्गोभिरुपेता गोप्रदेत्यर्थः। अत एव मही महती पूज्या। यथोक्तवाचो दृष्टान्तः। पक्वा शाखा न। यथा बहुभिः पक्वैः फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत्। यद्यपि महन्नामसु 'ब्राधन् विरप्शी' (नि. ३. ३. २२) इति पठितं, तथाप्यत्र मही इत्यनेन पुनरुक्तिप्रसङ्गात् अवयवार्थो गृहीतः॥ एव। 'एवमादीनामन्तः' (फि. सू. ८२) इत्यन्तोदात्तः। संहितायां 'निपातस्य च' (पा. सू. ६. ३. १३६) इति दीर्घः। हि। निपात आद्युदात्तः। अस्य। प्रकृतस्येन्द्रस्य परामर्शात् 'इदमोऽन्वादेशे°' (पा. सू. २. ४. ३२) इत्यादिना अशादेशोऽनुदात्त इति सर्वानुदात्तः। सूनृता। 'ऊन परिहाणे'। सुतराम् ऊनयति अप्रियमिति सूनृ। सा चासौ ऋता सत्या चेति सूनृता प्रियसत्या वाक्। 'परादिश्छन्दसि बहुलम्' (पा. सू. ६.२.१९९) इति ऋकार उदात्तः। विरप्शी। विचित्रं रपणं विरप्। 'रप लप व्यक्तायां वाचि'। संपदादित्वात् भावे क्विप्। तदेषामस्तीति विरप्शानि वाक्यानि। तानि यस्यां वाचि सन्ति सा वाक् विरप्शिनी। 'अत इनिठनौ' (पा.सू. ५. २. ११५) इति इनिः। 'यस्येति च' (पा. सू. ६. ४. १४८) इति अकारलोपः। 'ऋन्नेभ्यो ङीप्' (पा. सू. ४. १. ५) इति ङीप्। इकारः प्रत्ययस्वरेणोदात्तः। नकारलोपश्छान्दसः। सवर्णदीर्घः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः। गावोऽस्यां सन्तीति गोमती। मतुब्ङीपौ पित्त्वादनुदात्तौ। प्रातिपदिकस्वर एव शिष्यते। मही महती। 'उगितश्च' (पा. सू. ४. १. ६) इति ङीप्। तस्य पित्त्वादनुदात्तत्वे प्राप्ते 'शतुरनुमो नद्यजादी' इत्यत्र 'बृहन्महतोरुपसंख्यानम्' (पा. सू. ६. १. १७३. १) इत्युदात्तत्वम्। अच्छब्दलोपश्छान्दसः। पक्वा। 'डुपचष् पाके'। 'निष्ठा' (पा. सू. ३. २. १०२) इति क्तप्रत्ययः। 'पचो वः' (पा. सू. ८. २. ५२) इति वत्वम्। 'चोः कुः' (पा. सू. ८. २. ३०) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। टापा सह[^2] सवर्णदीर्घः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः। शाखा। 'शाखृ श्लाखृ व्याप्तौ'। पचाद्यच्। चित्त्वादन्तोदात्ते प्राप्ते वृषादेः आकृतिगणत्वात् वृषादित्वादाद्युदात्तत्वम्। दाशुषे। 'दाशृ दाने'। 'दाश्वान्साह्वान्मीढ्वांश्च' (पा. सू. ६. १. १२) इति निपातनात् क्वसौ इडभावो द्विर्वचनाभावश्च। चतुर्थ्येकवचने 'यचि

---

१. च-छ-त-फ-श–'प्रकृतिस्वरः' नास्ति। २. ग-घ-च-छ-ण-त-फ-य-श–'सह' नास्ति।

भम्' (पा. सू. १. ४. १८) इति भसंज्ञायां 'वसोः संप्रसारणम्' (पा. सू. ६. ४. १३१) इति संप्रसारणं वकारस्य उकारः। परपूर्वत्वम्। 'शासिवसिघसीनां च' (पा. सू. ८. ३. ६०) इति षत्वम्। प्रत्ययस्वरेण उकार उदात्तः॥

एवा हि ते विभूतय ऊतय इन्द्र मावते। सद्यश्चित्सन्ति दाशुषे॥ ९॥

एव। हि। ते। विऽभूतयः। ऊतयः। इन्द्र। माऽवते। सद्यः। चित्। सन्ति। दाशुषे॥९॥

हे इन्द्र ते तव विभूतयः ऐश्वर्यविशेषाः एवा हि एवंविधाः खलु। किंविधा इति तदुच्यते। मावते मत्सदृशाय दाशुषे हविर्दत्तवते यजमानाय ऊतयः त्वदीयरक्षारूपाः सद्यश्चित् सन्ति। यदा कर्म अनुष्ठितं तदैव भवन्ति॥ मावते मत्सदृशाय। 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' (पा. सू. ५. २. ३९. १) इति अस्मच्छब्दात् वतुप्। मपर्यन्तस्य 'प्रत्ययोत्तरपदयोश्च' (पा. सू. ७. २. ९८) इति मादेशः। अद्शब्देन सह 'अतो गुणे' (पा. सू. ६. १. ९७) इति पररूपत्वम्। 'दृग्दृशवतुषु' (पा. सू. ६. ३. ८९) इत्यनुवृत्तौ 'आ सर्वनाम्नः' (पा. सू. ६. ३. ९१) इति दकारस्य आकारः। सवर्णदीर्घत्वम्। वतुपः पित्वात् प्रातिपदिकस्वर एव शिष्यते। सद्यः। समाने द्यवि इत्यर्थे 'सद्यः परुत्परार्यैषमः°' (पा. सू. ५. ३. २२) इत्यादिना निपातितम्। प्रत्ययस्वरेणान्तोदात्तत्वम्। चित्। 'चादयोऽनुदात्ताः' (फि. सू. ८४) इत्यनुदात्तः। सन्ति। 'अस भुवि'। लटः स्थाने झि। 'झोऽन्तः' (पा. सू. ७. १. ३)। 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुक्। तिङः प्रत्ययाद्युदात्तत्वम्। 'प्रत्ययलोपे प्रत्ययलक्षणम्' (पा. सू. १. १. ६२) इति शबकारमाश्रित्य लसार्वधातुकानुदात्तत्वं न भवति। 'वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति' (परिभा. २१) इति निषेधात्। दाशुषे। गतमन्त्रे गतम्॥

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या। इन्द्राय सोमपीतये॥ १०॥

एव। हि। अस्य। काम्या। स्तोमः। उक्थम्। च। शंस्या। इन्द्राय। सोमऽपीतये॥१०॥

अस्य इन्द्रस्य स्तोमः सामसाध्यं स्तोत्रम् उक्थं च ऋक्साध्यं शस्त्रमपि एवा हि एते उभे एवंविधे खलु। किंविधे इति तदुच्यते। काम्या कामयितव्ये शंस्या ऋत्विग्भिः शंसनीये। किमर्थं शंसनमिति तदुच्यते। इन्द्राय सोमपीतये इन्द्रस्य सोमपानार्थम्॥ एवा ह्यस्य। व्यवहितमन्त्रे गतम्। काम्या। कमेर्णिङन्तात् 'अचो यत्' (पा. सू. ३. १. ९७)। 'णेरनिटि' (पा. सू. ६. ४. ५१) इति णिलोपः। 'तित्स्वरितम्' (पा. सू ६. १. १८५) इति स्वरिते प्राप्ते 'यतोऽनावः' (पा. सू. ६. १. २१३) इत्याद्युदात्तत्वम्। सुपो डादेशः। स्तोमः। 'अर्तिस्तुसु°' (उ. सू. १. १३७) इत्यादिना मन्प्रत्ययः। उक्थम्। 'वच परिभाषणे'। 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ. सू. २. १६४) इति थक्। कित्वात् संप्रसारणम्। परपूर्वत्वगुणाभावौ। शंस्या। 'शंसु स्तुतौ'। ण्यन्तात् 'अचो यत्'। 'यतोऽनावः' इत्याद्युदात्तत्वम्। सुपो डादेशः। सोमस्य पीतिः सोमपीतिः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। अथवा सोमस्य पीतिर्यस्येन्द्रस्य इति सोमपीतिरिन्द्रः। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. सू. ६. २. १) इति पूर्वपदप्रकृतिस्वरत्वम्॥ ॥ १६॥

'इन्द्रेहि' इत्यादिकं दशर्चं सूक्तं 'सुरूपकृत्नुम्' इत्यादिषु पठम्। ऋष्यादयस्तस्य पूर्ववत्। विशेषस्तु अतिरात्रे द्वितीयपर्यायेऽच्छावाकशस्त्रे 'इन्द्रेहि' इत्यनुरूपस्तृचः। 'अतिरात्रे पर्यायाणाम्' इति खण्डे 'इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः' (आश्व. श्रौ. ६. ४) इति सूत्रितम्॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा॥ १॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्वऽभिः।

महान्। अभिष्टिः। ओजसा॥ १॥

हे ^v^इन्द्र ^v^एहि अस्मिन् कर्मण्यागच्छ। आगत्य च ^v^विश्वेभिः सर्वैः ^v^सोमपर्वभिः सोमरसरूपैः ^v^अन्धसः अन्धोभिः अन्नैः ^v^मत्सि माद्य हृष्टो भव। तत ऊर्ध्वम् ^v^ओजसा बलेन ^v^महान् भूत्वा ^v^अभिष्टिः शत्रूणामभिभविता भव इति शेषः। अष्टाविंशतिसंख्याकेषु बलनामसु 'ओजः पाजः' (नि. २. ९. १) इति पठितम्॥ आ इहि। 'आद्गुणः' (पा. सू. ६. १. ८७)। इन्द्र एहि। यो ह्युभयोः स्थाने लभतेऽसावन्यतरव्यपदेशमिति आङ्माङोः एकादेशस्य आङ्व्यपदेशात् 'ओमाङोश्च' (पा.सू. ६. १. ९५) इति पररूपम्। मत्सि माद्य। 'मदी हर्षग्लेपनयोः'। लोटः सिप्। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा. ३५) इति सेर्हिरादेशः (पा. सू. ३. ४. ८७) न भवति। 'दिवादिभ्यः श्यन्' (पा. सू. ३. १. ६९) इति श्यन्। 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति श्यनो लुक्। 'न लुमताङ्गस्य' (पा. सू. १. १. ६३) इति प्रत्ययलक्षणप्रतिषेधात् 'शमामष्टानां दीर्घः श्यनि' (पा. सू. ७. ३. ७४) इति उपधादीर्घो न भवति। सिपः पित्त्वात् धातुस्वर एव। अन्धसः। 'अदेर्नुम् धश्च' (उ. सू. ४. ६४५) इति असुन्। व्यत्ययेन तृतीयाबहुवचनं कर्तव्यम्। नित्त्वादाद्युदात्तः। विश्वेभिः। 'अशिप्रुषि°' (उ. सू. १. १४९) इत्यादिना क्वन्। नित्त्वादाद्युदात्तत्वम्। ऐसादेशः 'बहुलं छन्दसि' (पा. सू. ७. १. १०) इति न भवति। सोमपर्वभिः। लतारूपं सोमं पृणन्ति पूरयन्तीति सोमपर्वाणः सोमरसाः। 'पॄ पालनपूरणयोः'। 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५) इति वनिप्। गुणो रपरत्वम्। वनिपः पित्त्वात् धातुस्वर एव। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेण पुनः स एव भवति। अभिष्टिः अभिगन्ता। 'इष गतौ'। 'मन्त्रे वृष°' (पा. सू. ३. ३. ९६) इत्यादिना क्तिन् उदात्तः। स हि भावपरोऽपि भवितारं लक्षयति। कित्त्वात् लघूपधगुणाभावः। 'तितुत्रतथसिसुसरकसेषु च' (पा. सू. ७. २. ९) इति इडागमो न भवति। अभिशब्दस्य इकारे 'एमनादिषु पररूपं वक्तव्यम्' (पा. सू. ६. १. ९४. ६) इति पररूपत्वम्। प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। ओजसा। 'उब्जेर्बलोपश्च' (उ. सू. ४. ६३१) इति असुन्। नित्त्वादाद्युदात्तः॥

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये॥ २॥

आ। ईम्। एनम्। सृजत। सुते। मन्दिम्। इन्द्राय। मन्दिने। चक्रिम्। विश्वानि। चक्रये॥२॥

^v^ईम् इत्यनर्थकः पादपूरणाय प्रयुक्तः। हे अध्वर्यवः ^v^सुते अभिषुते चमसस्थे सोमे ^v^एनं सोमम् ^v^इन्द्राय इन्द्रार्थम् ^v^आ ^v^सृजत पुनरभ्युन्नयत। शुक्रामन्थिचमसगणे पुनरभ्युन्नयनम् आपस्तम्बेनोक्तं—

'होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति' (आप. श्रौ. १२. २३.४) इति। कीदृशम् एनम्। ᵛमन्दिं हर्षहेतुं ᵛचक्रिं साधुकरणशीलम्। कीदृशाय इन्द्राय। ᵛमन्दिने हर्षयुक्ताय ᵛविश्वानि सर्वाणि कर्माणि ᵛचक्रये कृतवते। सर्वकर्मनिष्पादनशीलायेत्यर्थः। ईम् इत्यस्य पादपूरणार्थत्वं यास्क आह—'अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' (निरु. १. ९) इति। अस्यायमर्थः। अन्यैरेव पदैर्विवक्षितेऽर्थे समाप्ते सति ये शब्दा ईमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छन्दोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः। मिताक्षरेषु छन्दोयुक्तेषु ग्रन्थेषु पादपूरणार्थाः। ते च कमीमित्यादय इति। ईमित्यस्य शब्दस्यानर्थक्याय एतामृचमुदाजहार—'एमेनं सृजता सुते। आसृजतैनं सुते' (निरु. १. १०) इति॥ एनम्। इदमो द्वितीयायां 'द्वितीयाटौःस्वेनः' (पा. सू. २. ४. ३४) इति एनादेशः '°अनुदात्तः°' (पा. सू. २. ४. ३२) इत्यनुवृत्तेः सर्वानुदात्तः। सृजत। संहितायाम् 'अन्येषामपि दृश्यते' (पा. सू. ६. ३. १३७) इति दीर्घः। मन्दिं प्रमोदहेतुम्। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। 'इदितो नुम् धातोः' (पा. सू. ७. १. ५८) इति नुम्। मन्दमानं प्रयुङ्क्ते इत्यर्थे 'हेतुमति च' (पा. सू. ३. १. २६) इति णिच्। ण्यन्तस्य अजन्तत्वात् 'अच इः' (उ. सू. ४. ५७८) इति इकारप्रत्ययः। 'णेरनिटि' (पा. सू. ६. ४. ५१) इति णिलोपः। प्रत्ययस्वरेणान्तोदात्तत्वम्। मन्दिने। मन्देः पूर्ववत्। चतुर्थ्येकवचनेऽनपुंसकस्यापि व्यत्ययेन नुमागमः (पा. सू. ७. १. ७३)। चक्रिम्। 'डुकृञ् करणे'। 'आदृगमहनजनः किकिनौ लिट् च' (पा. सू. ३. २. १७१) इति तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु किन्प्रत्ययः। तस्य कित्त्वात् गुणाभावः। यणादेशः। लिड्वद्भावात् द्विर्वचनम्। 'द्विर्वचनेऽचि' (पा. सू. १. १. ५९) इति यणादेशस्य स्थानिवद्भावात् कृशब्दो द्विरुच्यते। अभ्यासस्य उरत्व-रपरत्व-चुत्व-हलादिशेषाः। किनो नित्त्वादाद्युदात्तः। विश्वानि। विशेः क्वन्। नित्त्वादाद्युदात्तः। अस्य चक्रये इति कृदन्तेन योगेऽपि 'कर्तृकर्मणोः कृति' (पा. सू. २. ३. ६५) इति षष्ठी न भवति। '°किकिनौ लिट् च' इति किनो लिड्वद्भावेन 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा. सू. २. ३. ६९) इति निषेधात्॥

**मत्स्वा॑ सुशिप्र म॒न्दिभि॒ः स्तोमे॑भिर्विश्वचर्षणे। सचै॒षु सव॑ने॒ष्वा॥ ३॥**

मत्स्व॑। सु॒ऽशि॒प्र॒। म॒न्दिऽभि॑ः। स्तोमे॑भिः। वि॒श्व॒ऽच॒र्ष॒णे॒। सचा॑। ए॒षु॒। सव॑ने॒षु॒। आ॥३॥

हे ᵛसुशिप्र हे शोभनहनो शोभननासिक वा। 'शिप्रे हनू नासिके वा' (निरु. ६. १७) इति यास्केनोक्तत्वात्। तादृश हे इन्द्र ᵛमन्दिभिः हर्षहेतुभिः ᵛस्तोमेभिः स्तोत्रैः ᵛमत्स्व हृष्टो भव। हे ᵛविश्वचर्षणे सर्वमनुष्ययुक्त सर्वैर्यजमानैः पूज्य इत्यर्थः। तादृशेन्द्र त्वम् ᵛएषु यागगतेषु त्रिषु ᵛसवनेषु ᵛसचा देवैरन्यैः सह ᵛआ गच्छेति शेषः॥ 'मदि स्तुति°' इत्यस्य लोटि 'अनित्यमागमशासनम्' (परिभा. ९३. २) इति कृत्वा 'इदितो नुम् धातोः' (पा. सू. ७. १. ५८) इति नुम् न भवति। अनुदात्तेत्त्वात् 'तास्यनुदात्तेन्ङिद्दुपदेशात्°' (पा. सू. ६. १. १८६) इति लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव। संहितायां 'द्व्यचोऽतस्तिङः' (पा. सू. ६. ३. १३५) इति दीर्घत्वम्। सुशिप्रेत्यामन्त्रितनिघातः। मन्दिभिः। गतमन्त्रे व्याख्यातम्। स्तोमेभिः। मन्प्रत्ययस्य नित्त्वादाद्युदात्तत्वम्। 'बहुलं छन्दसि' (पा. सू. ७. १. १०) इति भिस ऐसादेशो न भवति। विश्वचर्षणे। निघातः। सचा। उक्तम्। एषु। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्॥

---

१. ठ-त–स्तोमैः।

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। अजोषा वृषभं पतिम् ॥ ४ ॥

असृग्रम्। इन्द्र। ते। गिरः। प्रति। त्वाम्। उत्। अहासत। अजोषाः। वृषभम्। पतिम् ॥४॥

हे इन्द्र ते गिरः त्वदीयाः स्तुतीः असृग्रं सृष्टवानस्मि। ताश्च गिरः स्वर्गेऽवस्थितं त्वां प्रति उदहासत उद्गत्य प्राप्नुवन्। तादृशीर्गिरः त्वम् अजोषाः सेवितवानसि। कीदृशं त्वाम्। वृषभं कामानां वर्षितारं पतिं सोमस्य पातारं यजमानानां पालयितारं वा। 'पाता वा पालयिता वा' (निरु. ४. २६) इति यास्केनोक्तत्वात्॥ असृग्रम् असृजम्। 'सृज विसर्गे'। लङो मिप्। 'तुदादिभ्यः शः' (पा. सू. ३. १. ७७)। 'बहुलं छन्दसि' (पा. सू. ७. १. ८) इत्यत्र विकरणस्य रुडागमः। जकारस्य गकारः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (पा. सू. ६. ४. ७१) इति अडागम उदात्तः। सति शिष्टत्वात् स एव शिष्यते। गिरः। प्रातिपदिकस्वरः। अहासत। 'ओहाङ् गतौ'। लुङ्। झस्य अदादेशः (पा. सू. ७. १. ५)। 'च्लेः सिच्' (पा. सू. ३. १. ४४)। अडागमो निघातश्च। अजोषाः। 'जुषी प्रीतिसेवनयोः'। लङस्थास्। तुदादिभ्यः शः। तस्य 'छन्दस्युभयथा' (पा. सू. ३. ४. ११७) इत्यार्धधातुकत्वेन ङित्वाभावात् लघूपधगुणः। थासः थकारलोपश्छान्दसः। सवर्णदीर्घः। अडागमः। सति शिष्टत्वात् उदात्तः शिष्यते। वृषभम्। 'पृषु वृषु मृषु सेचने'। '°अभच्' (उ. सू. ३. ४०२) इत्यनुवृत्तौ 'ऋषिवृषिभ्यां कित्' (उ. सू. ३. ४०३) इति अभच्प्रत्ययः। कित्वाद्गुणाभावः। चित्वादन्तोदात्तः। पतिम्। 'पा रक्षणे'। 'पातेर्डतिः' (उ. सू. ४. ४९७)। डित्वात् टिलोपः। प्रत्ययाद्युदात्तत्वम्॥

सं चोदय चित्रमर्वाग्राध इन्द्र वरेण्यम्। असदित्ते विभु प्रभु ॥ ५ ॥

सम्। चोदय। चित्रम्। अर्वाक्। राधः। इन्द्र। वरेण्यम्। असत्। इत्। ते। विऽभु। प्रऽभु ॥५॥

हे इन्द्र वरेण्यं श्रेष्ठं राधः धनं चित्रं मणिमुक्तादिरूपेण बहुविधम् अर्वाक् अस्मदभिमुखं यथा भवति तथा सं चोदय सम्यक् प्रेरय। भोगाय यावत् पर्याप्तं तावत् विभुशब्देनोच्यते। ततोऽप्यधिकं प्रभुशब्देन। तादृशं धनं ते तवैव असदित् अस्त्येव। तस्मादस्मभ्यं प्रयच्छेत्यर्थः। 'मघम्' इत्यादिषु अष्टाविंशतिधननामसु 'रायः राधः' (नि. २. १०. १७) इति पठितम्॥ चोदय। 'चुद प्रेरणे'। ण्यन्तात् लोट्। 'तिङ्ङतिङः' इति निघातः। राधः। राध्नुवन्ति अनेनेति राधो धनम्। 'सर्वधातुभ्योऽसुन्' (उ. सू. ४. ६२८)। नित्वादाद्युदात्तः। वरेण्यम्। वृञ एण्यः। वृषादित्वादाद्युदात्तः। असत्। 'अस भुवि'। लेट्। तिप्। 'इतश्च लोपः°' (पा. सू. ३. ४. ९७) इति इकारलोपः। 'लेटोऽडाटौ' (पा. सू. ३. ४. ९४) इति अडागमः। 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुक्। 'आगमा अनुदात्ताः' (पा. म. ३.१.३.७.) इति अटोऽनुदात्तत्वात् धातुस्वर एव। विभु। विभवतीति विभु। 'भुवः°' (पा. सू. ३. २. १७९) इत्यनुवृत्तौ 'विप्रसंभ्यो ड्वसंज्ञायाम्' (पा. सू. ३. २. १८०) इति डुप्रत्ययः। डित्वात् टिलोपः। प्रत्ययस्वरेण उकार उदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। एवं प्रभु॥　॥ १७ ॥

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ॥ ६ ॥

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥ ६ ॥

हे तुविद्युम्न प्रभूतधन इन्द्र राये धनसिद्ध्यर्थम् अस्मान् अनुष्ठातॄन् तत्र कर्मणि सु चोदय सुष्ठु प्रेरय। कीदृशानस्मान्। रभस्वतः उद्योगवतः यशस्वतः कीर्तिमतः ॥ तत्र । तच्छब्दात् 'सप्तम्यास्त्रल्' (पा. सू. ५. ३. १०)। 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम्। इन्द्र। आमन्त्रिताद्युदात्तत्वम्। पादादित्वान्न निघातः। राये। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्। रभस्वतः। 'रभ राभस्ये'। राभस्यं कार्योपक्रमः। 'सर्वधातुभ्योऽसुन्' (उ. सू. ४. ६२८)। नित्त्वादाद्युदात्तः। मतुपः पित्त्वादनुदात्तत्वम्। 'स्वादिष्वसर्वनामस्थाने' (पा. सू. १. ४. १७) इति न पदत्वं 'तसौ मत्वर्थे' (पा. सू. १. ४. १९) इति भसंज्ञया बाधितत्वात्; 'आ कडारादेका संज्ञा' (पा. सू. १. ४. १) इति नियमात्। तुविद्युम्न। तुवि बहु द्युम्नं धनं यस्य। षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम्। यशस्वतः। यशोऽस्यास्तीति मतुप्। 'अस्मायामेधास्रजो विनिः' (पा. सू. ५. २. १२१) इति विनिना न बाध्यते, मतुपः सर्वत्र समुच्चयात्। यशस्शब्दो 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः। मतुपः पित्त्वात् स एव शिष्यते ॥

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मे इति । पृथु । श्रवः । बृहत् ।
विश्वऽआयुः । धेहि । अक्षितम् ॥ ७ ॥

हे इन्द्र श्रवः धनम् अस्मे सं धेहि अस्मभ्यं सम्यक् प्रयच्छ। कीदृशं श्रवः। गोमत् बह्वीभिर्गोभिरुपेतं वाजवत् प्रभूतेनान्नेनोपेतं[1] पृथु परिमाणेनाधिकं बृहत् गुणैरधिकं विश्वायुः कृत्स्नायुष्यकारणम् अक्षितं विनाशरहितम् ॥ गोमत्। वाजवत्। उभयत्र मतुपोऽनुदात्तत्वात् प्रातिपदिकस्वर एव। वाजशब्दो वृषादिः आद्युदात्तः। अस्मे। अस्मच्छब्दात् चतुर्थीबहुवचनस्य 'सुपां सुलुक्°' इत्यादिना शे आदेशः। शित्वात् सर्वादेशः। प्रातिपदिकस्वरेण[2] अन्तोदात्तत्वम्। 'शेषे लोपः' (पा. सू. ७. २. ९०) टिलोप इति पक्षे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। अन्त्यलोपपक्षे 'अतो गुणे' इति पररूपे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम्। पृथु। 'प्रथ प्रख्याने'। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' (उ. सू. १. २८) इति कुप्रत्ययः। रेफस्य संप्रसारणम् ऋकारः। परपूर्वत्वम्। कोः कित्त्वात् न लघूपधगुणः। श्रूयते इति श्रवो धनम्। असुन्प्रत्ययः। नित्त्वादाद्युदात्तः। बृहत्। प्रातिपदिकस्वरः। विश्वायुः। विश्वमायुर्यस्मिन् धने। विश्वशब्दः क्वन्प्रत्ययान्तः। तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इति पूर्वपदान्तोदात्तत्वम्। 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः। अक्षितम्। 'क्षि क्षये' इत्यस्मात् अन्तर्णीतण्यर्थात् कर्मणि निष्ठा। तेन ण्यदर्थत्वात् 'निष्ठायामण्यदर्थे' (पा. सू. ६.४.६०) इति न दीर्घत्वम्। अत एव 'क्षियो दीर्घात्' (पा. सू. ८. २. ४६) इति न निष्ठानत्वम्। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

---

१. च-छ-फ—प्रभूतेन धान्येनोपेतम्। २. फ—प्रातिपदिकस्य च।

अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमम्। इन्द्र ता रथिनीरिषः ॥ ८ ॥

अस्मे इति। धेहि। श्रवः। बृहत्। द्युम्नम्। सहस्रऽसातमम्। इन्द्र। ताः। रथिनीः। इषः॥८॥

हे ᵛइन्द्र ᵛबृहत् ᵛश्रवः महतीं कीर्तिम् ᵛअस्मे ᵛधेहि अस्मभ्यं प्रयच्छ। तथा ᵛसहस्रसातमम् अतिशयेन सहस्रसंख्यादानोपेतं ᵛद्युम्नं धनम् अस्मे धेहि। तथा ᵛताः व्रीहियवादिरूपेण प्रसिद्धाः ᵛरथिनीः बहुरथोपेताः ᵛइषः अन्नानि अस्मे धेहि॥ अस्मे। 'सुपां सुलुक्°' इत्यादिना शे आदेशः। धेहि[1]। 'घ्वसोरेद्धावभ्यासलोपश्च' (पा. सू. ६. ४. ११९) इति एत्वाभ्यासलोपौ। श्रूयते इति श्रवः। असुनो नित्वादाद्युदात्तत्वम्। सहस्रं सनुते ददातीति सहस्रसाः। 'षणु दाने'। 'जनसनखनक्रमगमो विट्' (पा. सू. ३. २. ६७)। 'विड्वनोरनुनासिकस्यात्' (पा. सू. ६. ४. ४१) इति आकारादेशः। धातुस्वरेणान्तोदात्तः। पुनः कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। रथा आसां सन्तीति रथिन्य इति प्रत्ययस्याद्युदात्तत्वम्। 'ऋन्नेभ्यो ङीप्' (पा. सू. ४. १. ५)। स च पित्त्वादनुदात्तः। इषः। यौगिकत्वे धातुस्वरः; रूढत्वे प्रातिपदिकस्वरः[2]॥

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम्। होम गन्तारमूतये ॥ ९ ॥

वसोः। इन्द्रम्। वसुऽपतिम्। गीःऽभिः। गृणन्तः। ऋग्मियम्। होम। गन्तारम्। ऊतये॥९॥

ᵛवसोः वसुनोऽस्मदीयस्य धनस्य ᵛऊतये रक्षार्थम् ᵛइन्द्रं ᵛहोम वयमाह्वयामः। किं कुर्वन्तः। ᵛगीर्भिः स्तुतिभिः ᵛगृणन्तः स्तुवन्तः। कीदृशमिन्द्रम्। ᵛवसुपतिं धनपालकं ᵛऋग्मियं ऋचां मातारं[3] ᵛगन्तारं यागदेशे गमनशीलम्॥ वसोः। 'वस निवासे'। 'शृस्वृस्निहि' (उ. सू. १. १०) इत्यादिना उप्रत्ययः। 'नित्' इत्यनुवृत्तेः नित्वादाद्युदात्तः। वसुपतिम्। समासान्तोदात्तत्वे प्राप्ते 'पत्यावैश्वर्ये' (पा. सू. ६. २. १८) इति पूर्वपदप्रकृतिस्वरत्वम्। गीर्भिः। 'सावेकाचः°' (पा. सू. ६. १. १६८) इति विभक्तेरुदात्तत्वम्। गृणन्तः। 'गॄ शब्दे'। लटः शतृ। 'क्र्यादिभ्यः श्ना' (पा. सू. ३. १. ८१)। शतुः 'सार्वधातुकमपित्' (पा. सू. १. २. ४) इति ङित्वात् 'श्नाभ्यस्तयोरातः' (पा. सू. ६. ४. ११२) इति आकारलोपः। शतुः अकारस्य प्रत्ययस्वरेणोदात्तत्वम्। ऋग्मियम्। ऋचो मिमीते इति ऋग्मीः, तमृग्मियम्। 'माङ् माने शब्दे च'। 'क्विप् च' (पा. सू. ३. २. ७६) इति क्विप्। 'घुमास्था°' (पा. सू. ६. ४. ६६) इत्यादिना ईत्वम्। चकारस्य 'चोः कुः'। 'झलां जशोऽन्ते' (पा. सू. ८. २. ३९) इति जश्त्वं गकारः। द्वितीयैकवचने 'अचिश्नुधातु°' (पा. सू. ६. ४. ७७) इत्यादिना इयङादेशः। 'एरनेकाचः°' (पा. सू. ६. ४. ८२) इति यणादेशः 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा. ३५) इति न भवति। कृदुत्तरपदप्रकृतिस्वरेण इकार उदात्तः। होम आह्वयामः। 'ह्वेञ् स्पर्धायां शब्दे च'। लट्। तस्य अस्मदो बहुत्वेऽपि व्यत्ययेन मिप्। इकारस्य व्यत्ययेन अकारः। शपः 'बहुलं छन्दसि' इति लुक्। 'बहुलं छन्दसि' (पा. सू. ६. १. ३४) इति ह्वः संप्रसारणं परपूर्वत्वं गुणः। 'धातोः' (पा. सू. ६. १. १६२) इति ओकार उदात्तः। मिपः पित्स्वरेणानुदात्तत्वम्। गन्तारम्। 'गम्लृ सृप्लृ गतौ'। ताच्छील्ये तृन्। नित्वादाद्युदात्तः। ऊतये। 'ऊतियूति°' (पा. सू. ३. ३. ९७) इत्यादिना क्तिन् उदात्तो निपातितः॥

---

१. ठ–धेहि। धाञो लोट्। २. ठ–प्रकृतिस्वरः। ३. ठ–ऋग्मिः स्तुतम्।

सुतेसु॑ते॒ न्यो॑कसे बृ॒हद्बृ॑ह॒त एद॒रिः । इन्द्रा॑य शू॒षम॑र्चति ॥ १० ॥

सु॒तेऽसु॑ते । निऽओ॑कसे । बृ॒हत् । बृ॒ह॒ते । आ । इत् । अ॒रिः । इन्द्रा॑य । शू॒षम् । अ॒र्च॒ति ॥ १० ॥

आकार इच्छब्दश्च पादपूरणौ । यद्वा । व्याप्तिवचन आकारः । ' आङीषदर्थेऽभिव्याप्तौ ' ( अमर. ३. २३८ ) इत्यभिधानात् । इच्छब्दोऽपिशब्दार्थः । इयर्ति गच्छति अनुष्ठेयं कर्म प्राप्नोति इति अरिर्यजमानः । ᵛएदरिः सर्वोऽपि यजमानः ᵛइन्द्राय ᵛसुतेसुते इन्द्रार्थमभिषुते तत्तत्सोमे ᵛशूषं बलम् ᵛअर्चति स्तौति । इन्द्रस्य पराक्रमं प्रशंसतीत्यर्थः । कीदृशं शूषम् । ᵛबृहत् प्रौढम् । कीदृशायेन्द्राय¹ । ᵛन्योकसे नियतस्थानाय ᵛबृहते प्रौढाय ॥ सुतेसुते । ' षुञ् अभिषवे ' । क्तप्रत्ययः प्रत्ययस्वरेणोदात्तः । ' नित्यवीप्सयोः ' ( पा. सू. ८. १. ४ ) इति वीप्सायां द्विर्भावः । ' तस्य परमाम्रेडितम् ' ( पा. सू. ८. १. २ ) इति द्वितीयस्य आम्रेडितत्वेन ' अनुदात्तं च ' ( पा. सू. ८. १. ३ ) इत्यनुदात्तत्वम् । न्योकसे । नियतमोको यस्य² तस्मै । निशब्दो ' निपाता आद्युदात्ताः ' ( फि. सू. ८० ) इत्युदात्तः । तस्य यणादेशे ' उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ' ( पा. सू. ८. २. ४ ) इति ओकारः स्वरितः । बृहते । ' बृहन्महतोरुपसंख्यानम् ' ( पा. सू. ६. १. १७३. १ ) इति अजादिविभक्तेरुदात्तत्वम् । अरिः । ' ऋ गतौ ' । ' अच इः ' ( उ. सू. ४. ५७८ ) इति इकारप्रत्ययः । गुणो रपरत्वम् । प्रत्ययस्वरेण इकार उदात्तः । इन्द्राय । ' ऋज्रेन्द्र° ' ( उ. सू. २. १८६ ) इत्यादिना रन्प्रत्यय इकार उदात्तः । शूषम् । प्रातिपदिकस्वरः³ । अर्चति । निघातस्वरः ॥ ॥ १८ ॥

' गायन्ति ' इति सूक्तस्य मन्त्रसंख्या छन्दोविशेषश्चैवमनुक्रम्यते–' गायन्ति द्वादशानुष्टुभं तु ' इति । ' तुहिह्वै° ' ( अनु. १२. ३ ) इत्यादिपरिभाषायां तुशब्दस्य सूक्तद्वये परिभाषितत्वात् अस्य सूक्तस्य वक्ष्यमाणस्य च आनुष्टुभत्वं द्रष्टव्यम् । ऋषिदेवते पूर्ववत् । अभिप्लवषडहस्य उक्थ्येषु तृतीयसवनेऽच्छावाकस्य ' गायन्ति ' इति स्तोत्रियस्तृचः । ' एह्यू षु ' इति खण्डे ' गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिव ' ( आश्व. श्रौ. ७. ८ ) इति सूत्रितम् ।

गाय॑न्ति त्वा गाय॒त्रिणोऽर्च॑न्त्य॒र्कम॒र्किणः॑ । ब्र॒ह्माण॑स्त्वा शतक्रत॒ उद्वं॒शमि॑व येमिरे ॥ १ ॥

गाय॑न्ति । त्वा॒ । गा॒य॒त्रिणः॑ । अर्च॑न्ति । अ॒र्कम् । अ॒र्किणः॑ ।

ब्र॒ह्माणः॑ । त्वा॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । उत् । वं॒शम्ऽइ॑व । ये॒मि॒रे ॥ १ ॥

हे ᵛशतक्रतो बहुकर्मन् बहुप्रज्ञ वा इन्द्र त्वां⁴ ᵛगायत्रिणः उद्गातारः ᵛगायन्ति स्तुवन्ति । ᵛअर्किणः अर्चनहेतुमन्त्रयुक्ता होतारः ᵛअर्कम् अर्चनीयमिन्द्रम् ᵛअर्चन्ति शस्त्रगतैर्मन्त्रैः प्रशंसन्ति । ᵛब्रह्माणः ब्रह्मप्रभृतय इतरे ब्राह्मणाः त्वाम् ᵛउत् ᵛयेमिरे उन्नतिं प्रापयन्ति । तत्र दृष्टान्तः । ᵛवंशमिव । यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति । यथा वा सन्मार्गवर्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति तद्वत् । एतामृचं यास्क एवं व्याचष्ट–' गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव । वंशो वनशयो भवति वननाच्छ्रूयत इति वा ' ( निरु. ५. ५ ) इति ।

---

१. ठ–कीदृशाय । २. ग-घ-छ-ण-य–यस्मै । ३. च-छ-फ–' प्रातिपदिकस्वरः ' इत्यस्यानन्तरम् ' अष्टाविंशतिसंख्याकेषु बलनामसु शुषं सह (हो) यह इति पठितम् ' इत्यधिकम् । ४. ठ–त्वा त्वाम् ।

अर्कशब्दं च बहुधा व्याचष्टे—'अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदेनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना' ( निरु. ५. ४ ) इति ॥ गायन्ति। शप्तिङौ[1] पित्वात् लसार्वधातुकत्वाच्च[2] अनुदात्तौ। धातुरुदात्तः। गायत्रिणः। गायत्रं साम येषामुद्गातॄणामस्ति ते। 'अत इनिठनौ'। प्रत्ययस्वरेण इकार उदात्तः। अर्चन्ति। 'अर्च पूजायाम्'। भौवादिकः। शप्तिङौ अनुदात्तौ। धातुस्वर एव। पादादित्वात् न निघातः। अर्कम्। अर्चन्त्येभिरिति अर्का मन्त्राः। तैरर्चनीयतया तदात्मक इन्द्रोऽपि लक्षणया अर्कः। 'पुंसि संज्ञायां घः प्रायेण' ( पा. सू. ३. ३. ११८ ) इति करणे घः। 'चजोः कु घिण्यतोः' ( पा. सू. ७. ३. ५२ ) इति चकारस्य कुत्वं ककारः। प्रत्ययस्वरेणान्तोदात्तः। अर्का मन्त्रा एषां सन्तीत्यर्किणो होतारः। 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' ( पा. म. ५. २. ११५. १ ) इति कृदन्तात् इनिठनौ यद्यपि प्रतिषिद्धौ तथाप्यत्र व्यत्ययात् इनिः। प्रत्ययस्वरेण इकार उदात्तः। ब्रह्माणः। प्रातिपदिकस्वरेणान्तोदात्तः। शतक्रतो। निघातः। संहितायाम् अवादेशे 'लोपः शाकल्यस्य' ( पा. सू. ८. ३. १९ ) इति वकारलोपः। वंशशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति स एव शिष्यते। येमिरे। 'यम उपरमे'। 'तिङ्ङतिङः' इति निघातः॥

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम्। तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥२॥**

यत्। सानोः। सानुम्। आ। अरुहत्। भूरि। अस्पष्ट। कर्त्वम्।

तत्। इन्द्रः। अर्थम्। चेतति। यूथेन। वृष्णिः। एजति ॥ २ ॥

vयत् यदा vसानोः vसानुम् vआरुहत् यजमानः सोमवल्लीसमिदाद्याहरणाय एकस्मात् पर्वतभागात्[3] अपरं पर्वतभागम्[3] आरूढवान् तथा vभूरि प्रभूतं vकर्त्वं कर्म सोमयागरूपम् vअस्पष्ट स्पृष्टवान्। उपक्रान्तवानित्यर्थः। vतत् तदानीम् vइन्द्रः vअर्थं यजमानस्य प्रयोजनं vचेतति जानाति। ज्ञात्वा च vवृष्णिः कामानां वर्षिता सन् vयूथेन मरुद्गणेन सह vएजति कम्पते। स्वस्थानात् यज्ञभूमिमागन्तुमुद्युङ्क्ते इत्यर्थः॥ सानोः। 'षणु दाने'। सनोति ददाति निवसतामवकाशमिति सानुः। 'दृसनिजनिचरिचटिरहिभ्यो ञुण्' ( उ. सू. १. ३ )। णित्वात् उपधाया वृद्धिः; ञित्वादाद्युदात्तत्वं च। अरुहत्। रुहेर्लङि तिपि शपि 'संज्ञापूर्वको विधिरनित्यः' (परिभा. ९३.१) इति लघूपधगुणो न भवति। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः'। सति शिष्टत्वात् स एव शिष्यते। 'निपातैर्यद्यदिहन्त°' ( पा. सू. ८. १. ३० ) इति निषेधात् निघातो न भवति। भूरि। 'अदिशदिभूशुभिभ्यः क्रिन्' ( उ. सू. ४. ५०५ )। कित्वाद्गुणाभावः। नित्वादाद्युदात्तः। अस्पष्ट। 'स्पश बाधनस्पर्शनयोः'। 'स्वरितञितः°' ( पा. सू. १. ३. ७२ ) इत्यात्मनेपदम्। लङः प्रथमपुरुषैकवचनं त। 'बहुलं छन्दसि' इति शपो लुक्। व्रश्चादिषत्वष्टुत्वे ( पा. सू. ८. २. ३६; ८. ४. ४१ )। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अडागम उदात्तः। स एव शिष्यते। अनुषङ्गेण यच्छब्दयोगात् निघाताभावः। कर्त्वम्। 'डुकृञ् करणे'। 'अन्येभ्योऽपि दृश्यन्ते' ( पा. सू. ३. २. ७५ ) इति विच्। गुणो रपरत्वम्। विचः सर्वापहारी लोपः। करो भावः कर्त्वम्। अर्थम्। अर्तेः 'उषिकुषिगार्तिभ्यस्थन्' ( उ. सू. २. १६१ )। नित्वादाद्युदात्तः। यूथेन। 'तिथपृष्ठगूथयूथप्रोथाः' ( उ. सू. २. १६९ ) इति थक्प्रत्ययान्तो निपातितः। वृष्णिः। 'निः' इत्यनुवृत्तौ

---

१. ग-घ-च-छ-ण-त-फ-य-श–शप्तिपौ। २. ग-घ-च-छ-ण-त-फ-य-श–'सार्वधातुकत्वाच्च' नास्ति।
३. ठ-त–पर्वतादपरं पर्वतम्।

'सृवृभूशुषिमुषिभ्यः कित्' ( उ. सू. ४. ४८९ ) इति निप्रत्ययान्तः। कित्वाद्गुणाभावः। प्रत्ययस्वरेणान्तोदात्तः। एजति। 'एजृ कम्पने'। 'तिङ्ङतिङः' इति निघातः॥

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर॥३॥

युक्ष्व। हि। केशिना। हरी इति। वृषणा। कक्ष्यऽप्रा।

अथ। नः। इन्द्र। सोमऽपाः। गिराम्। उपऽश्रुतिम्। चर॥३॥

हे सोमपाः सोमपानयुक्त इन्द्र हरी त्वदीयावश्वौ युक्ष्व हि सर्वथा संयोजय। अथ अनन्तरं नः अस्मदीयानां गिरां स्तुतीनाम् उपश्रुतिं समीपे श्रवणमुद्दिश्य चर तत्प्रदेशं गच्छ। कीदृशौ हरी। केशिना स्कन्धप्रदेशे लम्बमानकेशयुक्तौ वृषणा सेचनसमर्थौ युवानौ। कक्ष्यप्रा। अश्वस्योदरबन्धनरज्जुः कक्ष्या तस्याः पूरकौ पुष्टाङ्गावित्यर्थः॥ युक्ष्व। श्नमो लोपश्छान्दसः। सति शिष्टत्वेन प्रत्ययस्वरः शिष्यते। 'द्व्यचोऽतस्तिङः' ( पा. सू. ६. ३. १३५ ) इति संहितायां दीर्घत्वम्। केशिना। प्रशस्ताः केशा अनयोः सन्तीति मत्वर्थीय इनिः[3]। प्रत्ययस्वरः। 'सुपां सुलुक्॰' ( पा. सू. ७. १. ३९ ) इत्यादिना द्विवचनस्य आकारादेशः। वृषणा। 'वृषु वृषु मृषु सेचने'। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' ( उ. सू. १. १५४ ) इति कनिन्। 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः। 'वा षपूर्वस्य निगमे' ( पा. सू. ६. ४. ९ ) इति उपधायाः पक्षे दीर्घाभावः। पूर्ववदाकारः। कक्ष्यप्रा। कक्षयोर्भवं कक्ष्यं सूत्रम्। तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ। 'प्रा पूरणे'। 'आतोऽनुपसर्गे कः' ( पा. सू. ३. २. ३ ) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। आकारः पूर्ववत्। अथ। 'निपातस्य॰' ( पा. सू. ६. ३. १३६ ) इति संहितायां दीर्घः। नः। 'अनुदात्तं सर्वमपादादौ' ( पा. सू. ८. १. १८ ) इत्यनुवृत्तौ 'बहुवचनस्य वस्नसौ' ( पा. सू. ८. १. २१ ) इति नसादेशोऽनुदात्तः। इन्द्र सोमपाः। उभौ 'आमन्त्रितस्य च' ( पा. सू. ८. १. १९ ) इति सर्वानुदात्तौ। गिराम्। 'सावेकाचस्तृतीयादिर्विभक्तिः' ( पा. सू. ६. १. १६८ ) इति विभक्तिरुदात्ता। उपशब्दो निपातत्वादाद्युदात्तः। श्रुतिशब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'तादौ च निति कृत्यतौ' ( पा. सू. ६. २. ५० ) इति तुवर्जिततादिपरत्वात् गतेः प्रकृतिस्वरः। चर। निघातः॥

विशेषविनियोगस्तु यत्र श्रौतो न सूत्रितः। स्मार्तं तत्र विजानीयादृग्विधानादिसूत्रतः॥ 'एहि स्तोमान्' इति ऋगेषा सूत्रे विशेषाकारेण न विनियुक्ता। साधारणविनियोगस्तु ब्रह्मयज्ञादौ सर्वत्रानुसंधेयः॥

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव। ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय॥४॥

आ। इहि। स्तोमान्। अभि। स्वर। अभि। गृणीहि। आ। रुव।

ब्रह्म। च। नः। वसो इति। सचा। इन्द्र। यज्ञम्। च। वर्धय॥४॥

---

१. ठ—समीपश्रवणमुद्दिश्य। २. ठ—स्कन्धप्रदेशलम्बमान॰। ३. ठ—प्रशंसायां केशशब्दस्य इनिप्रत्ययः।

हे ᵛवसो निवासकारणभूत ᵛइन्द्र ᵛएहि अस्मिन् कर्मण्यागच्छ । आगत्य च ᵛस्तोमान् उद्गातृप्रयुक्तानि स्तोत्राणि ᵛअभि ᵛस्वर अभिलक्ष्य प्रशंसारूपं शब्दं कुरु । तथा आध्वर्यवमभिलक्ष्य ᵛगृणीहि शब्दं कुरु । तथा होतृप्रयुक्तानि शस्त्राण्यालक्ष्य ᵛरुव शब्दं कुरु । परितोषेण सर्वानृत्विजः प्रशंसेत्यर्थः । तत ऊर्ध्वं ᵛनः अस्माकं ᵛब्रह्म ᵛच अन्नं च ᵛयज्ञं ᵛच अनुष्ठीयमानं कर्म च ᵛसचा सह ᵛवर्धय । साङ्गत्वसंपादनेन यज्ञं वर्धयित्वा तत्फलमन्नं च प्रवृद्धं कुरु । 'अन्धः' इत्यादिष्वष्टाविंशत्यन्ननामसु 'ब्रह्म वर्चः' (नि. २. ७. २५) इति पठितम् ॥ इहि । 'इण् गतौ' । सेर्हिः । हेरपित्वेन ङित्वात् गुणाभावः । निघातः । आङा सह गुणः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । स्तोमान् । 'अर्तिस्तुसु°' (उ. सू. १. १३७) इत्यादिना मन् । नित्वादाद्युदात्तः । उत्तरपदेन संहितायां नकारस्य 'दीर्घादटि समानपादे' (पा. सू. ८. ३. ९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा. सू. ८. ३. ३) इति आकारस्यानुनासिकः । 'भोभगोअघोअपूर्वस्य योऽशि' (पा. सू. ८. ३. १७) इति यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा. सू. ८. ३. १९) इति लोपः । तस्यासिद्धत्वात् स्वरसंधिर्न भवति । अभि । 'एवमादीनामन्तः' (फि. सू. ८२) इत्यन्तोदात्तः । स्वर । 'स्वृ शब्दोपतापयोः' । निघातः । अभि । गतम् । गृणीहि । 'गॄ शब्दे' । 'सेर्ह्यपिच्च' (पा. सू. ३. ४. ८७) इति हिः । 'क्र्यादिभ्यः श्ना' । 'ई हल्यघोः' (पा. सू. ६. ४. ११३) इति ईत्वम् । 'प्वादीनां ह्रस्वः' (पा. सू. ७. ३. ८०) इति ॠकारस्य ऋकारः । 'ऋवर्णाच्चेति वक्तव्यम्' (का. ८. ४. १. १) इति णत्वम् । 'तिङ्ङतिङः' इति निघातः । रुव । 'रु शब्दे' । सेर्ह्यपिच्च । शपि प्राप्ते व्यत्ययेन शः । तस्य ङित्वेन गुणाभावात् उवङादेशः । 'अतो हेः' (पा. सू. ६. ४. १०५) इति हेर्लुक् । 'तिङ्ङतिङः' इति निघातः । ब्रह्म । 'बृहि बृहि वृद्धौ' । 'मनिन्' इत्यनुवृत्तौ 'बृहेरम् नलोपश्च'? (उ. सू. ४. ५८५) इति मनिन्; तत्संनियोगेन नलोपः अमागमश्च । 'मिदचोऽन्त्यात्परः' (पा. सू. १. १. ४७) इति ऋकारात्परः । यणादेशः । मनिनो नित्वादाद्युदात्तत्वम् । वसो । आमन्त्रितनिघातः । यज्ञम् । 'यजयाच°' (पा. सू. ३. ३. ९०) इत्यादिना नङ् । प्रत्ययस्वरः । वर्धय । निघातः । अत्र चकारद्वयश्रवणात् इयमेव तिङ्विभक्तिः पूर्ववाक्येष्वनुषज्यते । अतोऽनुषक्तैव प्रथमा न श्रुता इति अश्रुतायाः 'चवायोगे प्रथमा' (पा. सू. ८. १. ५९) इति निघातनिषेधो न भवति ॥

अभिप्लवषडहगतोक्थ्येषु अच्छावाकस्य तृतीयसवने 'उक्थमिन्द्राय शंस्यम्' इत्यनुरूपस्तृचः । 'एह्यू षु' इति खण्डे 'इन्द्रं विश्वा अवीवृधन्नुक्थमिन्द्राय शंस्यम्' (आश्व. श्रौ. ७. ८) इति सूत्रितम् ॥

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे । शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ५ ॥

उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे । शक्रः । यथा । सुतेषु । नः ।
ररणत् । सख्येषु । च ॥ ५ ॥

ᵛइन्द्राय इन्द्रार्थं ᵛवर्धनं वृद्धिसाधनम् ᵛउक्थं शस्त्रं ᵛशंस्यम् अस्माभिः शंसनीयम् । कीदृशायेन्द्राय । ᵛपुरुनिष्षिधे बहूनां शत्रूणां निषेधकारिणे । ᵛशक्रः इन्द्रः ᵛनः अस्मदीयेषु ᵛसुतेषु पुत्रेषु ᵛसख्येषु ᵛच सखित्वेष्वपि ᵛयथा येन प्रकारेण ᵛरारणत् अतिशयेन शब्दं कुर्यात् तथा शंस्यमिति पूर्वत्रान्वयः । अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ॥ उक्थम् । वचेस्थक्प्रत्यय उक्तः (उ. सू. २. १६४) । प्रत्ययस्वरः । शंस्यम् । 'शंसु स्तुतौ' । ण्यन्तात् 'अचो यत्' । 'णेरनिटि' (पा. सू. ६. ४. ५१) इति णिलोपः । तित्स्वरिते प्राप्ते 'यतोऽनावः' इत्याद्यु-

दात्तत्वम् । वर्धनम् । ‘ करणाधिकरणयोश्च ’ ( पा. सू. ३. ३. ११७ ) इति करणे ल्युट् । ‘ लिति ’ इति प्रत्ययपूर्वस्य उदात्तत्वम् । पुरुनिष्षिधे बहूनां शत्रूणां निषेधकाय । ‘ षिध गत्याम् ’ । ‘ धात्वादेः षः सः ’ । अत्र निरित्युपसर्गस्य निशब्दसमानार्थस्य प्रयोगः । ‘क्विप् च ’ इति क्विप् । क्विपः सर्वापहारी लोपः । ‘ कुगतिप्रादयः ’ ( पा. सू. २. २. १८ ) इति समासः । निसः सकारेण इणो व्यवधाने छान्दसत्वादनादस्य ‘ उपसर्गात्सुनोति° ’ ( पा. सू. ८. ३. ६५ ) इत्यादिना धातुसकारस्य षत्वम् । निसः सकारस्य ‘ ष्टुना ष्टुः ’ ( पा. सू. ८. ४. ४१ ) इति षत्वम् । पुरुशब्देन कर्मणि षष्ठ्यन्तेन समासः । षिधो धातुस्वरेणोदात्तत्वम् । निष्षिधे इति प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् पुनः कारकसमासेऽपि स एव स्वरः । शक्नोतीति शक्रः । ‘ स्फायितञ्चिवञ्चिशकि° ’ ( उ. सू. २. १७० ) इत्यादिना रक् । प्रत्ययस्वरः । यथा । ‘ प्रकारवचने थाल् ’ ( पा. सू. ५. ३. २३ ) । लित्स्वरेण प्रत्ययात् पूर्वोऽकार उदात्तः । सुतेषु । क्तः प्रत्ययस्वरेणोदात्तः । नसो नकारस्य ‘ नश्च धातुस्थोरुषुभ्यः ’ ( पा. सू. ८. ४. २७ ) इति संहितायां णत्वम् । रारणत् । ‘ रण शब्दार्थः ’ । ‘ धातोरेकाचः ’ ( पा. सू. ३. १. २२ ) इति यङ् । ‘ यङोऽचि च ’ ( पा. सू. २. ४. ७४ ) इति लुक् । प्रत्ययलक्षणेन द्विर्भावः (पा. सू. ६. १. ९) । हलादिशेषः । ‘ दीर्घोऽकितः ’ (पा. सू. ७.४.८३) इति दीर्घः । प्रत्ययलक्षणेन ‘सनाद्यन्ता धातवः’ ( पा. सू. ३. १. ३२ ) इति धातुसंज्ञायां ‘ लिङर्थे लेट् ’ ( पा. सू. ३. ४. ७ ) इति हेतुहेतुमद्भावलक्षणे लिङर्थे ( पा. सू. ३. ३. १५६ ) लेट् । अत्र हि इन्द्रकर्तृकं रारणनम् उक्थशंसनस्य कर्तव्यत्वे हेतुः । लेटस्तिप् । ‘ इतश्चलोपः परस्मैपदेषु ’ ( पा. सू. ३. ४. ९७ ) इति इकारलोपः । ‘ लेटोऽडाटौ ’ ( पा. सू. ३. ४. ९४ ) इति अडागमः । कर्तरि शप् । तस्य चर्करीतं परस्मैपदम् अदादिवच्च द्रष्टव्यम् इति अदादिवद्भावात् ‘ अदिप्रभृतिभ्यः शपः ’ इति प्राप्तो लुक् ‘ बहुलं छन्दसि ’ इति निषिध्यते । शपोऽनुदात्तत्वात् धातोः अन्तोदात्त एव शिष्यते । शपा लसार्वधातुकस्य व्यवधानात् तत्र परतो विधीयमानम् ‘ अभ्यस्तानामादिः ’ ( पा. सू. ६. १. १८९ ) इत्याद्युदात्तत्वं न भवति । न च ‘ तिङ्ङतिङः ’ इति निघातः । अत्र यथाशब्दयोगेन ‘ यावद्यथाभ्याम् ’ (पा. सू. ८. १. ३६) इति निषेधात् । ‘ चवायोगे प्रथमा ’ इति वात्र निघातो न भविष्यति । अत्र ह्युत्तरवाक्ये सख्येषु च इति चानुकृष्टविभक्त्यपेक्षया इयं प्रथमा तिङ्विभक्तिः । सख्येषु । सख्युः कर्माणि सख्यानि तेषु । ‘कर्मणि च ’ ( पा. सू. ५. १. १२४ ) इत्यनुवृत्तौ ‘ सख्युर्यः ’ ( पा. सू. ५. १. १२६ ) इति सखिशब्दात् यप्रत्ययः । तत्र भसंज्ञायां ‘ यस्येति च ’ ( पा. सू. ६. ४. १४८ ) इति इकारलोपः । प्रत्ययस्वरः ॥

तमित्स॑खित्व ई॑महे॒ तं रा॒ये तं सु॒वीर्ये॑ । स श॒क्र उ॒त नः॑ शक॒दिन्द्रो॒ वसु॒ दय॑मानः ॥ ६ ॥

तम् । इत् । स॒खि॒ऽत्वे । ई॒म॒हे॒ । तम् । रा॒ये । तम् । सु॒ऽवीर्ये॑ ।

सः । श॒क्रः । उ॒त । नः॒ । श॒क॒त् । इन्द्रः॑ । वसु॑ । दय॑मानः ॥ ६ ॥

ᵛसखित्वे निमित्तभूते सति ᵛतमित् तमेवेन्द्रम् ᵛईमहे प्राप्नुमः । तथा ᵛराये धनार्थं ᵛतम् ईमहे । तथा ᵛसुवीर्ये शोभनसामर्थ्यनिमित्तं ᵛतम् ईमहे । ᵛउत अपि च ᵛशक्रः शक्तिमान् ᵛसः ᵛइन्द्रः ᵛनः अस्मभ्यं ᵛवसु धनं ᵛदयमानः प्रयच्छन् ᵛशकत् अस्मदीयरक्षणे शक्तोऽभूत् । सप्तदश-

याच्ञाकर्मसु 'ईमहे यामि' (नि.३.१९.१) इति पठितम्। तदनुसारेण इन्द्रं याचामहे इति[1] व्याख्येयम् ॥ सख्युर्भावः सखित्वम् । 'तस्य भावस्त्वतलौ' (पा. सू. ५. १. ११९) इति त्वः। प्रत्ययस्वरेणोदात्तः। ईमहे । 'ईङ् गतौ' । ङित्वात् आत्मनेपदम् (पा. सू. १. ३. १२)। 'दिवादिभ्यः श्यन्'। 'बहुलं छन्दसि' इति श्यनो लुक् । 'तिङ्ङतिङः' इति निघातः । राये । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । सुवीर्ये । शोभनं वीर्यं यस्यासौ सुवीर्यः। भवितृवाचिनानेन भावो लक्ष्यते। सुवीर्यत्वे इत्यर्थः । 'बहुव्रीहौ°' (पा. सू. ६. २. १०६) इत्यनुवृत्तौ 'वीरवीर्यौ च' (पा. सू. ६. २. १२०) इत्युत्तरपदाद्युदात्त्वम् । शक्नोतीति शक्रः । 'स्फायितञ्चिवञ्चिशकि°' (उ. सू. २. १७०) इत्यादिना रक्। प्रत्ययस्वरः। शकत्। 'शक्लृ शक्तौ'। धातुसंबन्धाधिकारे 'छन्दसि लुङ्लङ्लिटः' (पा. सू. ३. ४. ६) इति लुङ्। यतः शक्नोति अतस्तमीमहे इति धातुसंबन्धः। लुङ्स्तिप्। 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (पा. सू. ३. १. ५५) इति च्लेरङादेशः। 'बहुलं छन्दसि°' (पा. सू. ६. ४. ७५) इत्यडागमाभावः। 'तिङ्ङतिङः' इति निघातः। वसु। 'नित्' इत्यनुवृत्तौ (उ. सू. १. ९) वसेः उप्रत्ययः (उ. सू. १. १०)। नित्वादाद्युदात्तत्वम् । दयमानः। 'दय दानगतिरक्षणहिंसादानेषु'। अनुदात्तेत्वात् आत्मनेपदम्। लटः शानजादेशः (पा.सू.३.२.१२४)। शपः पित्वादनुदात्तत्वम् । शानचः 'चितः' इत्यन्तोदात्तत्वं बाधित्वा अदुपदेशात् शप उत्तरत्वेन परत्वात् लसार्वधातुकत्वानुदात्तत्वम्। धातुस्वर एव शिष्यते ॥　　॥ १९ ॥

सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः । गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥७॥

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः ।

गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>यशः अन्नं कर्मफलभूतं <sup>v</sup>सुविवृतं सुष्ठु सर्वत्र प्रसृतं <sup>v</sup>सुनिरजं सुखेन निःशेषं प्राप्तुं शक्यं <sup>v</sup>त्वादातमित् त्वया शोधितं च संपन्नमिति शेषः । इतः परं क्षीरादिरसलाभार्थं <sup>v</sup>गवां <sup>v</sup>व्रजं निवासस्थानम् <sup>v</sup>अप <sup>v</sup>वृधि अपवृतमुद्घाटितद्वारं[2] कुरु। हे <sup>v</sup>अद्रिवः पर्वतोपलक्षितवज्रयुक्तेन्द्र <sup>v</sup>राधः धनं <sup>v</sup>कृणुष्व संपादय॥ सुविवृतम्। 'वृञ् वरणे'। कर्मणि क्तप्रत्ययः। विशब्देन प्रादिसमासः[3]। विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरं बाधित्वा कर्मवाचिनि क्तान्ते परतः 'गतिरनन्तरः' (पा. सू. ६. २. ४९) इति पूर्वपदप्रकृतिस्वरे[4] प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इति[5] ऋकार उदात्तः। पुनः सुशब्देन समासे कृदुत्तरपदप्रकृतिस्वरेण स एव ऋकार उदात्तः। ननु वृतमित्येव कृदन्तं न तु विवृतमिति, 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' (परिभा. २३) इति वचनात्। सुविवृतमित्यत्र च समासे वृतमित्येतावन्मात्रं नोत्तरपदं किंतु विवृतमिति। तत् कथं कृदुत्तरपदप्रकृतिस्वरत्वमिति चेत् उच्यते—प्रत्ययग्रहणपरिभाषापवादेन 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा. २८) इत्यनेन विवृतमित्यस्यापि कृदन्तव्यपदेशोपपत्तेः । ननु विवृतमित्यस्य यथा कृदन्तव्यपदेशः एवं क्तान्तव्यपदेशोऽप्यस्ति तथैव परिभाषया । तथा च कर्मणि क्तान्ते उत्तरपदे परतः 'गतिरनन्तरः' इति सुशब्दस्य प्रकृतिस्वरः प्राप्नोति । न चात्रापि[6]

---

१. छ-त-इति वा। २. ठ-अपावृतमु°! ३. त-'प्रादिसमासः' इत्यस्यानन्तरम् 'विवृतशब्दस्य पुनः सुशब्देन प्रादिसमासः' इत्याधिकम्। ४. श-गतिस्वरे। ५. ठ-इत्युत्तरपदादिरुदात्तः। ६. ठ-चात्र।

'परादिश्छन्दसि बहुलम्' इत्येवं नास्ति विस्तारः। तथा हि सति सुविवृतमित्यत्र विवृतमित्येवोत्तरपदमिति तदादिः इकार एव उदात्तः स्यात्। विवृतमिति समासे यद्यपि ऋकारः पदादिर्भवति तथापि सुविवृतमिति समासस्य सति शिष्टत्वेन बलीयस्त्वात् तत्रत्ये एव उत्तरपदादौ इकारे एव उदात्तस्वरेण भवितव्यमिति। उच्यते 'गतिरनन्तरः' इत्यत्र क्तानुवृत्तेः क्तग्रहणे कृद्ग्रहणपरिभाषा नाश्रीयते। तदाश्रयणे व्यवहितगतावपि प्रकृतिस्वरे सति अनन्तरग्रहणमनर्थकं स्यात्। अनेनैव चाभिप्रायेण अनन्तरग्रहणस्य प्रयोजनम् 'अभ्युद्धृतम्' इत्यत्र व्यवहितस्य अभिशब्दस्य मा भूदिति प्रत्युदाहृतम्। तस्मात् सुविवृतमिति ऋकार एव उदात्त इति स्थितम्। सुनिरजम्। अनायासेन निरवशेषं प्राप्यम्। 'अज गतिक्षेपणयोः'। सुनिसोरुपसर्गयोः प्राक्प्रयोगः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (पा. सू. ३. ३. १२६)। न चात्र सुशब्दस्य निसा व्यवधानं शङ्कनीयम्। सुशब्दस्य उपपदमात्रं खलो निमित्तं नानन्तर्यम्। अत एव सुपरिहरं दुष्परिहमित्यादयः प्रयोगा इति। पूर्ववत् गतिसमासे 'लिति' इति प्रत्ययात् पूर्वमुदात्तमिति धात्वकार उदात्तः। निसा समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। पुनः सुशब्देन समासे 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा. २८) इति परिभाषया कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। त्वादातम्। त्वया शोधनेन विशदीकृतम्। 'दैप् शोधने'। 'आदेच उपदेशेऽशिति' (पा. सू. ६. १. ४५) इति आत्वम्। सत्यपि हि पकारे 'नानुबन्धकृतमनेजन्तत्वम्' (परिभा. ७) इति एजन्त एवायम्। 'निष्ठा' (पा. सू. ३.२.१०२) इति कर्मणि क्तः। 'दाधा घ्वदाप्' (पा. सू. १. १. २०) इत्यत्र अदाप् इति प्रतिषेधेन घुसंज्ञाया अभावात् 'दो दद्घोः' (पा. सू. ७. ४. ४६) इति ददादेशो न भवति। ननु 'दाप् लवने' इति प्रतिपदोक्तस्यैव दापः तत्र 'अदाप्' इति निषेधः, न पुनर्लाक्षणिकस्य दैपः। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य (परिभा. १०५) इति नियमात् इति चेत्, न। 'गामादाग्रहणेष्वविशेषः' (परिभा. १०६) इति प्रतिप्रसवात्। युष्मच्छब्दात् तृतीयैकवचनस्य 'सुपां सुलुक्°' (पा. सू. ७. १. ३९) इति डादेशः। 'त्वमावेकवचने' (पा. सू. ७. २. ९७) इति मपर्यन्तस्य त्वादेशः। 'अतो गुणे' (पा. सू. ६. १. ९७) इति पररूपत्वम्। भसंज्ञायां 'टेः' (पा. सू. ६. ४. १४३) इति अद्शब्दस्य लोपः। उदात्तनिवृत्तिस्वरेण आकार उदात्तः। 'कर्तृकरणे कृता बहुलम्' (पा. सू. २. १. ३२) इति तृतीयासमासः। 'तत्पुरुषे कृति बहुलम्' (पा. सू. ६. ३. १४) इति तृतीयाया अपि अलुक्। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते 'तृतीया कर्मणि' (पा. सू. ६. २. ४८) इति पूर्वपदप्रकृतिस्वरत्वम्। यशः। 'अशू व्याप्तौ'। 'अशेर्युट् च' (उ. सू. ४. ६. ३०) इति असुन्। तत्संनियोगेन धातोर्युडागमः। नित्वादाद्युदात्तत्वम्। गवाम्। प्रातिपदिकस्वरः। 'सावेकाचः°' इति विभक्तेरुदात्तत्वं प्राप्तं 'न गोश्वन्साववर्ण°' (पा. सू. ६. १. १८२) इति निषिध्यते। वृधि। 'वृञ् वरणे'। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा. सू. ६. ४. १०२) इति हेर्धिरादेशः। 'बहुलं छन्दसि' इति श्नोरपि लुक्। निघातः। कृणुष्व। 'कृवि हिंसाकरणयोश्च'। इदितो नुम्। व्यत्ययेनात्मनेपदम्। लोटस्थास् (पा. सू. ३. ४. ७८)। 'थासः से' (पा. सू. ३. ४. ८०)। 'सवाभ्यां वामौ' (पा. सू. ३. ४. ९१)। कर्तरि शपि (पा. सू. ३. १. ६८) प्राप्ते 'धिन्विकृण्व्योर च' (पा. सू. ३. १. ८०) इति उप्रत्ययः। तत्संनियोगेन वकारस्य च अकारः। तस्य 'अतो लोपः' (पा. सू. ६. ४. ४८) इति लोपः। 'अचः परस्मिन्पूर्वविधौ' (पा. सू. १. १. ५७) इति अकारलोपस्य स्थानिवद्भावात् लघूपधगुणो न भवति। अत्र 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति सति शिष्टमपि विकरणस्वरं बाधित्वा तिङ एव प्रत्ययाद्युदात्तत्वम्।

१. ठ–इत्येव विस्तारः। २. ग-घ-ण-त-न-य–इत्यत्रानुवृत्तेः। ३. ठ-त-श–एव हि। ४. श–पररूपम्। ५. श–इदितो नुम् धातोरिति नुम्।

राधः । असुनन्तो नित्त्वादाद्युदात्तः । अद्रिवः । अद्रिर्वज्रम् । तदस्यास्तीति मतुप् । 'छन्दसीरः' (पा. सू. ८. २. १५) इति वत्वम् । संबुद्धौ 'उगिदचां°' (पा. सू. ७. १. ७०) इति नुम् । हल्ङ्याब्भ्यो दीर्घात् इति संयोगान्तलोपौ (पा. सू. ६. १. ६८; ८. २. २३)। 'मतुवसो रु संबुद्धौ छन्दसि' (पा. सू. ८. ३. १) इति रुत्वम् । विसर्जनीयः। आमन्त्रितस्य च निघातः ॥

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः। जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥८॥

नहि । त्वा । रोदसी इति । उभे इति । ऋघायमाणम् । इन्वतः ।

जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥

हे इन्द्र ऋघायमाणं शत्रुवधं कुर्वाणं त्वां रोदसी उभे[1] द्यावापृथिव्यावपि त्वदीयं महिमानं नहि इन्वतः व्याप्तुं न समर्थे इत्यर्थः । तादृशस्त्वं स्वर्वतीः स्वर्लोकयुक्ता अपः वृष्टिरूपाः जेषः जयेः प्रेरय इत्यर्थः । अपां स्वर्गसंबन्धश्चान्यत्र 'दिवो वृष्टिं च्यावयति' (तै. सं. ३. ३. ४. १) इति श्रुतम् । किं च वृष्टिप्रदानात् अन्नसंपत्तेरूर्ध्वम् अस्मभ्यं क्षीरादिरसप्रदाः गाः सं धूनुहि सम्यक् प्रेरय ॥ नहि । नञो हिशब्देन 'सह सुपा' (पा. सू. २. १. ४) इति समासः[2] । समासत्वादन्तोदात्तत्वम् । त्वा । 'अनुदात्तं सर्वम्°[3]' इत्यनुवृत्तौ 'त्वामौ द्वितीयायाः' (पा. सू. ८. १. २३) इति त्वादेशः । रोदसी । रुदेः असुन् । नित्त्वादाद्युदात्तः । 'उगितश्च' (पा. सू. ४. १. ६) इति ङीप् । उभे । प्रातिपदिकस्वरेणान्तोदात्तः । इया सहैकादेश उदात्तः । ऋघायमाणम् । नॄन् हन्तीति ऋघा । 'अन्येभ्योऽपि दृश्यन्ते' (पा. सू. ३. २. ७५) इति विच् । दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वात् नकारलोपो हकारस्य च घकारः । अनृघा ऋघा भवतीत्यभूततद्भावे 'लोहितादिडाज्भ्यः क्यष्' (पा. सू. ३. १. १३) इति क्यष्प्रत्ययो भवति । स ह्याकृतिगणः । '°लोपश्च हलः' (पा. ३. १. १२) इत्यनुवृत्तेर्नकारलोपश्च । 'वा क्यषः' (पा. सू. १. ३. ९०) इत्यात्मनेपदम् । लटः शानच् । शपोऽदुपदेशात् परात् शानचो लसार्वधातुकानुदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । क्यषः प्रत्ययस्वरः । एकादेशस्योदात्तत्वम् । इन्वतः । 'इवि व्याप्तौ' । 'इदितो नुम् धातोः' इति नुम् । शपः पित्त्वादनुदात्तत्वम् । लडादेशस्य तसश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । 'हि च' (पा. सू. ८. १. ३४) इति निषेधात् 'तिङ्ङतिङः' इति निघातो न भवति । जेषः[4] । जेः प्रार्थनायां लिङर्थे लेट् । तस्य मध्यमपुरुषैकवचने सिप् । 'इतश्च लोपः परस्मैपदेषु' (पा. सू. ३. ४. ९७) इति इकारलोपः । कर्तरि शपि प्राप्ते तदपवादः 'सिब्बहुलं लेटि' (पा. सू. ३. १. ३४) इति सिप् । अडागमस्य[5] अनुदात्तत्वात् धातुस्वर एव शिष्यते । स्वरासामस्तीति स्वर्वत्यः । 'न्यङ्स्वरौ स्वरितौ' (फि. सू. ७४) इति स्वर्शब्दः स्वरितः । मतुब्ङीपौ पित्त्वादनुदात्तौ । संहितायां 'स्वरितात्संहितायामनुदात्तानाम्' (पा. सू. १. २. ३९) इत्येकश्रुतिः। स्वरित एव शिष्यते। अपः । 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् । धूनुहि । 'धूञ् कम्पने' । लोट् । 'सेर्ह्यपिच्च' । 'स्वादिभ्यः श्नुः' । 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा. सू. ६. ४. १०६) इति प्राप्तस्य लुकः छान्दसत्वादभावः ॥

---

१. त-श-'उभे' नास्ति । २. ग-घ-च-छ-ण-त-फ-श-य-सह सुप्सुपेति समासः । ३. ठ-सर्वमपादादौ इत्यनुवृत्तौ । ४. ठ-जेषः । जि जये । ५. ठ-लेटोऽडाटौ इत्यडागमस्य ।

अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य षट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन् युगले 'आश्रुत्कर्ण' इति तृचोऽनुरूपः । 'एह्यू षु' इति खण्डे 'श्रुधी हवं तिरश्च्या आश्रुत्कर्ण श्रुधी हवम्' (आश्व. श्रौ. ७. ८) इति सूत्रितम् ॥

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः । इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥ ९

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः ।

इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥ ९ ॥

हे ᵛआश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृक् ᵛइन्द्र ᵛहवम् अस्मदीयमाह्वानं ᵛनु क्षिप्रं ᵛश्रुधि शृणु । ᵛमे मम होतुः ᵛगिरः ᵛचित् स्तुतीरपि ᵛदधिष्व चित्ते धारय । किंच ᵛमम मदीयं ᵛइमं ᵛस्तोमं स्तोत्ररूपं वाक्समूहं ᵛयुजश्चित् स्वकीयसख्युरपि ᵛअन्तरं ᵛकृष्व आसन्नं कुरु । यथा वचनं तस्य प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुरु इत्यर्थः ॥ आश्रुत्कर्ण । आ समन्तात् शृणुत इति आश्रुत् । क्विप् । ह्रस्वस्य तुक् (पा. सू. ६. १. ७१) । तादृशौ कर्णौ यस्य । 'आमन्त्रितस्य च' (पा. सू. ६. १. १९८) इत्याद्युदात्तत्वम् । श्रुधी । 'श्रु श्रवणे' । लोटो हिः । 'श्रुवः शृ च' (पा. सू. ३. १. ७४) इति विहितश्नोः 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति लुक् । तत्संनियोगशिष्टत्वात् शृभावोऽपि निवर्तते । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा. सू. ६. ४. १०२) इति हेर्धिरादेशः । सति शिष्टत्वात् प्रत्ययस्वरः । 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा. सू. ८. १. ७२) इत्यविद्यमानवत्त्वेन पदादपरत्वात् 'तिङ्ङतिङः' इति निघातो न भवति । संहितायाम् 'अन्येषामपि दृश्यते' (पा. सू. ६. ३. १३७) इति दीर्घः । हवम् । 'ह्वेञ् स्पर्धायां शब्दे च' । 'बहुलं छन्दसि' । (पा. सू. ६. १. ३४) इति अनैमित्तिके संप्रसारणे कृते पश्चात् उकारान्तत्वेन 'ऋदोरप्' (पा. सू. ३. ३. ५७) इति अप्प्रत्ययः । अपः पित्त्वात् धातुस्वरः । नु । संहितायाम् 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा. सू. ६. ३. १३३) इति दीर्घः । चित् । चादिः अनुदात्तः । दधिष्व । दधातेर्लोट् । 'थासः से' । 'सवाभ्यां वामौ' (पा. सू. ३. ४. ९१) । शपः श्लुः । अभ्यासस्य ह्रस्वत्वादि । 'छन्दस्युभयथा' (पा. सू. ३. ४. ११७) इति आर्धधातुकस्यापि स्वीकारात् इडागमः । आकारलोपः । निघातः । मम । 'तवममौ ङसि' (पा. सू. ७. २. ९६) इत्यनेन मपर्यन्तस्य ममादेशः । प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'युष्मदस्मदोर्ङसि' (पा. सू. ६. १. २११) इत्याद्युदात्तत्वम् । कृष्व । 'डुकृञ् करणे' । लोट् । 'थासः से' । 'सवाभ्यां वामौ' । शपो 'बहुलं छन्दसि' इति लुक् । सति शिष्टत्वात् प्रत्ययस्वरः । पादादित्वात् न निघातः । युजः । 'सावेकाचः०' (पा. सू. ६. १. १६८) इति विभक्तेरुदात्तत्वम् । अन्तरम् । वृषादित्वादाद्युदात्तः ॥

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् । वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥ १० ॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ।

वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥ १० ॥

---

१. ठ—सख्युरिव । २. ठ—यथा सख्युर्मरुद्गणस्य वचनं स्वस्य प्रियं मन्यते (से) ।

हे इन्द्र त्वां ᵛविद्म जानीमः। कीदृशं त्वाम्। ᵛवृषन्तमं कामानामतिशयेन वर्षितारं ᵛवाजेषु संग्रामेषु ᵛहवनश्रुतम् अस्मदीयस्याह्वानस्य श्रोतारम्। ᵛवृषन्तमस्य अतिशयेन कामादीनां वर्षितुस्तव ᵛऊतिं रक्षामस्मद्विषयामुद्दिश्य ᵛहूमहे त्वामाह्वयामः। कीदृशीमूतिम्। ᵛसहस्रसातमाम् अतिशयेन धनसहस्राणां दात्रीम्॥ विद्म। 'विदो लटो वा' (पा. सू. ३. ४. ८३) इति मसो मादेशः। प्रत्ययस्वरेणान्तोदात्तः। 'द्व्यचोऽतस्तिङः' (पा. सू. ६. ३. १३५) इति संहितायां दीर्घः। वृषन्तमम्। 'वृषु वृषु मृषु सेचने'। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ. सू. १. १५४) इति कनिन्। नित्त्वादाद्युदात्तः। तमपः पित्वात् स एव शिष्यते। 'अयस्मयादीनि छन्दसि' (पा. सू. १. ४. २०) इति भत्वेन पदत्वाभावात् नलोपाभावः (पा. सू. ८. २. ७)। वाजेषु। वाजशब्दो वृषादिः आद्युदात्तः। हवनश्रुतम्। 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा. सू. ६. १. ३४) इति ल्युटि संप्रसारणम्। हवनं श्रृणोतीति क्विप्। तुगागमः। वृषन्तमस्य। उक्तम्। हूमहे। 'बहुलं छन्दसि' इति संप्रसारणम्। 'शपः' इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा. सू. २. ४. ७३) इति शपो लुक्। ऊतिम्। 'ऊतियूति॰' (पा. सू. ३. ३. ९७) इत्यादिना अन्तोदात्तो निपातितः। सहस्रसातमाम्। सहस्रं सनोतीति सहस्रसाः। 'षणु दाने'। 'जनसनखनक्रमगमो विट्' (पा. सू. ३. २. ६७)। 'विड्वनोरनुनासिकस्यात्' (पा. सू. ६. ४. ४१) इति आकारादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं तमपः पित्त्वादेव शिष्यते॥

आ तू न॑ इन्द्र कौशिक मन्दसा॒नः सु॒तं पि॑ब।
नव्य॒मायुः॒ प्र सू ति॑र कृ॒धी स॑हस्र॒सामृषि॑म्॥ ११॥

आ। तु। नः॒। इन्द्र॒। कौशि॑क। म॒न्द॒सा॒नः। सु॒तम्। पि॒ब।
नव्य॑म्। आयुः॑। प्र। सु। ति॒र। कृ॒धि। स॒ह॒स्र॒ऽसाम्। ऋषि॑म्॥ ११॥

हे ᵛइन्द्र ᵛतु क्षिप्रं ᵛनः अस्मान् प्रति ᵛआ गच्छेतिशेषः। हे ᵛकौशिक कुशिकस्य पुत्र इन्द्र ᵛमन्दसानः हृष्टो भूत्वा ᵛसुतम् अभिषुतं सोमं ᵛपिब। यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथापि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकपुत्रत्वमविरुद्धम्। अयं वृत्तान्तोऽनुक्रमणिकायामुक्तः–'कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार। तस्येन्द्र एव गाथी पुत्रो जज्ञे' (अनु. ऋ. सं. ३. १) इति। हे इन्द्र ᵛनव्यं सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरम् ᵛआयुः जीवितं ᵛप्र ᵛसु ᵛतिर प्रकर्षेण सुष्ठु वर्धय। ततो मां ᵛसहस्रसां सहस्रसंख्याकलाभोपेतम् ᵛऋषिम् अतीन्द्रियद्रष्टारं ᵛकृधि कुरु॥ तु। संहितायाम् 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा. सू. ६. ३. १३३) इति दीर्घः। नः। संहितायाम् 'उदात्तादनुदात्तस्य स्वरितः'। इन्द्र। आमन्त्रितनिघातः। कौशिक। निघातः। मन्दसानः हृष्यन्। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। 'असानच्' (उ. सू. २. २४३) इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ. सू. २. २४४) इति असानच् प्रत्ययः। चित्त्वादन्तोदात्तः। सुतम्। प्रत्ययस्वरः। नव्यम्। 'णु स्तुतौ'। 'अचो यत्' (पा. सू. ३. १. ९७)। गुणः। 'वान्तो यि प्रत्यये' (पा.सू. ६. १. ७९) इति अवादेशः। 'यतोऽनावः' इत्याद्युदात्तत्वम्। आयुः। 'उसि, नित्' इत्यनुवृत्तौ 'एतेर्णिच्च' (उ. सू. २. २७५) इति उसिप्रत्ययः। णित्त्वात् वृद्ध्यायादेशौ। नित्त्वादाद्युदात्तत्वम्। सु। 'निपातस्य च' इति संहितायां दीर्घत्वम्। तिर। तरतेर्व्यत्ययेन शः। 'ऋत इद्धातोः' (पा. सू.

---

१. ठ–विजानीमः　२. त–पित्त्वात् तदेव शिष्यते; ठ–पित्त्वात् स एव शिष्यते।

७. १. १००) इति इत्वम्। ‘अतो हेः’ (पा. सू. ६. ४. १०५) इति हेर्लुक्। कृधि। ‘डुकृञ् करणे’। ‘बहुलं छन्दसि’ इति शपो लुक्। ‘श्रुशृणुपृकृवृभ्यश्छन्दसि’ इति हेर्धिरादेशः। सहस्रसाम्। उक्तम्। ऋषिम्। ‘ऋषी गतौ’। ‘इन्’ इत्यनुवृत्तौ ‘इगुपधात्किच्च’ (उ. सू. ४. ५५९)। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वम्॥

प्रवर्ग्ये ‘परि त्वा’ इत्यभिष्टुयात्। ‘स्तुष्टेोदकम्’ इति खण्डे ‘परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थ्यं वचः’ (आश्व. श्रौ. ४. ६) इति सूत्रितम्। तथा हविर्धानप्रवर्तने सेयं परिधानीया। ‘हविर्धाने प्रवर्तयन्ति’ इति खण्डे ‘परि त्वा गिर्वणो गिर इति परिदध्यात्’ (आश्व. श्रौ. ४. ९) इति सूत्रितम्। तथा ब्राह्मणं च—‘परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति’ (ऐ. ब्रा. १. २९) इति॥

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वत॑ः।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः॥ १२॥

परि॑। त्वा॒। गि॒र्व॒णः॒। गिर॑ः। इ॒माः। भ॒व॒न्तु॒। वि॒श्वत॑ः।
वृ॒द्धऽआ॑युम्। अनु॑। वृद्ध॑यः। जुष्टा॑ः। भ॒व॒न्तु॒। जुष्ट॑यः॥ १२॥

हे गिर्वणः अस्मदीयस्तुतिभागिन्द्र विश्वतः सर्वेषु कर्मसु प्रयुज्यमानाः इमाः गिरः अस्मदीयाः स्तुतयः त्वा त्वां परि भवन्तु सर्वतः प्राप्नुवन्तु। कीदृश्यो गिरः। वृद्धायुमनु प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य वृद्धयः वर्धमानाः। किं च एता गिरः जुष्टाः त्वया सेविताः सत्यः जुष्टयः अस्माकं प्रीतिहेतवः भवन्तु॥ गिर्वणः। गीर्भिर्वन्यत इति गिर्वणाः। ‘वन षण संभक्तौ’। ‘सर्वधातुभ्योऽसुन्’। गिरः। उपधाया दीर्घाभावश्छान्दसः। आमन्त्रितनिघातः। विश्वतः। ‘ल्लिति’ (पा. सू. ६. १. १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। वृद्धायुम्। ‘वृधु वृद्धौ’। क्तप्रत्ययः। ‘उदितो वा’ (पा. सू. ७. २. ५६) इति इटः क्त्वाप्रत्यये विकल्पितत्वात् ‘यस्य विभाषा’ (पा. सू. ७. २. १५) इति निष्ठायाम् इडभावः। प्रत्ययस्वरः। ‘इण् गतौ’। ‘छन्दसीणः’ (उ. सू. १. २) इति उण्। णित्वात् वृद्धिः आयादेशश्च। वृद्धमायुर्यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वृद्धयः। वृधेः क्तिनि ‘तितुत्रतथसिसुसरकसेषु च’ (पा. सू. ७. २. ९) इति इडभावः। नित्त्वादाद्युदात्तत्वम्। जुष्टाः। ‘श्वीदितो निष्ठायाम्’ (पा. सू. ७. २. १४) इति इडभावः। ‘जुष्टार्पिते’ इत्यनुवृत्तौ ‘नित्यं मन्त्रे’ (पा. सू. ६. १. २१०) इत्याद्युदात्तत्वम्। जुष्टयः। ‘जुषी प्रीतिसेवनयोः’। क्तिन्। ‘तितुत्र०’ इति इडभावः। नित्त्वादाद्युदात्तः॥ ॥ २०॥

‘इन्द्रं विश्वा’ इत्यष्टर्चस्य सूक्तस्य मधुच्छन्दसः पुत्रो जेतृनामक ऋषिः। तथा चानुक्रान्तम्—‘इन्द्रमष्टौ जेता माधुच्छन्दसः’ इति। छन्दस्त्वानुष्टुभमिति पूर्वसूक्तोक्तम्। इन्द्रो देवतानुवर्तते। विनियोगस्तु—महाव्रते निष्केवल्ये कृत्स्नसूक्तं शंसनीयम्। ‘ऊरू’ इति खण्डे शौनकेन सूत्रितम्—‘इन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः’ (ऐ. आ. ५. ३. १) इति। ब्राह्मणं च प्रथमारण्यके पठ्यते ‘प्र वो महे’ इति खण्डे—‘इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गाः’ (ऐ. आ. १. ५. २) इति। तथा पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्ये शस्त्रे ‘इन्द्रं विश्वा अवीवृधन्’ इत्यनुरूपस्तृचः। ‘स्तोमे वर्धमाने’ इति खण्डे सूत्रितम्—‘उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्’ (आश्व. श्रौ. ७. १२) इति॥

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥१॥

इन्द्रम्। विश्वाः। अवीवृधन्। समुद्रऽव्यचसम्। गिरः।

रथिऽतमम्। रथिनाम्। वाजानाम्। सत्ऽपतिम्। पतिम् ॥ १ ॥

^v^विश्वाः सर्वाः ^v^गिरः अस्मदीयाः स्तुतयः ^v^इन्द्रम् ^v^अवीवृधन् वर्धितवत्यः। कीदृशमिन्द्रम्। ^v^समुद्रव्यचसं समुद्रवत् व्याप्तवन्तं ^v^रथीनां रथयुक्तानां योद्धृणां मध्ये ^v^रथीतमम् अतिशयेन रथयुक्तं ^v^वाजानाम् अन्नानां ^v^पतिं स्वामिनं ^v^सत्पतिं सतां सन्मार्गवर्तिनां पालकम्॥ विश्वाः। विशेः क्वन्। निस्स्वरः। अवीवृधन्। वृधेर्णिचि चङि 'उर्ऋत्' (पा. सू. ७. ४. ७) इत्यनुवृत्तौ 'नित्यं छन्दसि' (पा. सू. ७. ४. ८) इति ऋकारस्य ऋकारविधानात् लघूपधगुणाभावः। निघातस्वरः। समुद्रव्यचसम्। व्यचेः असुन्। 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (पा. सू. १. २. १) इति ङित्वस्य प्राप्तस्य 'व्यचेः कुटादित्वमनसि' (का. १. २. १. १) इति असिनिषेधात्[1] 'ग्रहिज्या°' (पा. सू. ६. १. १६) इत्यादिना ङिति विधीयमानं संप्रसारणं न भवति। समुद्रव्यच इव व्यचो यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। रथीतमं रथीनाम्। रथशब्दादुत्पन्नस्य इनः छान्दसं दीर्घत्वम्। प्रत्ययस्वरेणोदात्तत्वं च। वाजानाम्। वृषादित्वादाद्युदात्तत्वम्। सत्पतिम्। 'पत्यावैश्वर्ये' (पा. सू. ६. २. १८) इति पूर्वपदप्रकृतिस्वरत्वम्॥

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते। त्वामभि प्र णोनुमो जेतारमपराजितम्॥२॥

सख्ये। ते। इन्द्र। वाजिनः। मा। भेम। शवसः। पते।

त्वाम्। अभि। प्र। नोनुमः। जेतारम्। अपराऽजितम् ॥ २ ॥

हे ^v^शवसस्पते बलस्य पालक ^v^इन्द्र ^v^ते तव ^v^सख्ये अनुग्रहप्रयुक्ते सखित्वे वर्तमाना वयं ^v^वाजिनः अन्नवन्तो[2] भूत्वा ^v^मा ^v^भेम शत्रुभ्यो भीतिं प्राप्ता मा भूम। अतः ^v^त्वाम् अभयहेतुम् ^v^अभि ^v^प्र ^v^णोनुमः सर्वतः प्रकर्षेण स्तुमः। कीदृशं त्वाम्। ^v^जेतारं युद्धेषु जयशीलम् ^v^अपराजितं क्वापि पराजयरहितम्॥ सख्ये। सख्युः कर्म सख्यम्। 'सख्युर्यः' (पा. सू. ५. १. १२६)। प्रत्ययस्वरः। वाजिनः। वाजोऽन्नमेषामस्तीति वाजिनः। प्रत्ययस्वरः। भेम। 'ञिभी भये'। लुङुत्तमबहुवचनं मस्। 'नित्यं ङितः' (पा. सू. ३. ४. ९९) इति सलोपः। 'बहुलं छन्दसि' इति च्लेर्लुक्। 'छन्दस्युभयथा' (पा. सू. ३. ४. ११७) इति तिङः आर्धधातुकत्वेन ङित्वाभावाद्गुणः। 'न माङ्योगे' (पा. सू. ६. ४. ७४) इति अडागमप्रतिषेधः। शवसस्पते। शवसः 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' (पा. सू. ८. ३. ५३) इति विसर्जनीयस्य संहितायां सत्वम्। सुबामन्त्रिते[3] पराङ्गवद्भावेन (पा. सू. २. १. २) पदद्वयनिघातः। नोनुमः। 'णु स्तुतौ'। 'णो नः' (पा. सू. ६. १. ६५) इति नत्वम्। यङो लुक्। प्रत्ययलक्षणेन 'सन्यङोः' (पा. सू. ६. १. ९) इति द्विर्भावः। 'गुणो यङ्लुकोः' (पा. सू. ७. ४. ८२) इत्यभ्यासस्य गुणः। प्रत्ययलक्षणेन धातुसंज्ञायां

---

१. छ-ण-फ-य-अनसिनिषेधात्; ग-च-निषेधात्। २. ठ-बलवन्तः। ३. य-श-सुबामन्त्रिते इति पराङ्गवद्भावेन; च-छ-ण-फ-सुबामन्त्रिते पराङ्गवद्भावेन।

लटो मस् । अदादिवद्भावात् शपो लुक् । 'उपसर्गादसमासेऽपि णोपदेशस्य' (पा. सू. ८. ४. १४) इति संहितायां णत्वम् । जेतारम् । 'जि जये' । ताच्छील्यादिषु तृन् । 'ञ्नित्यादिर्नित्यम्' (पा. सू. ६. १. १९७) इत्याद्युदात्तत्वम् । अपराजितम् । अव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम् ॥

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३ ॥

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ।
यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥ ३ ॥

ᐯइन्द्रस्य संबन्धिन्यः ᐯरातयः धनदानानि ᐯपूर्वीः अनादिकालसिद्धाः प्रभूता वा । अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः । एवं सति इदानींतनोऽपि यजमानः ᐯस्तोतृभ्यः ऋत्विग्भ्यः ᐯगोमतः गोसहितस्य ᐯवाजस्य अन्नस्य पर्याप्तं ᐯमघं धनं ᐯयदि ᐯमंहते दक्षिणारूपेण ददाति तदानीम् ᐯऊतयः बहुधनदानपूर्वकाणि इन्द्रस्य अस्मद्विषयाणि रक्षणानि ᐯन ᐯवि ᐯदस्यन्ति विशेषेण नोपक्षीयन्ते । 'मघं रेक्णः' इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु मघशब्दः (नि. २.१०.१) पठितः। 'दाति दाशति' इत्यादिषु दशसु दानकर्मसु 'मंहते' (नि. ३. २०. १०) इति पठितम् ॥ पूर्वीः । पुरुशब्दस्य 'वोतो गुणवचनात्' (पा. सू. ४. १. ४४) इति ङीष् । आद्यस्य उकारस्य दीर्घश्छान्दसः । जसि 'दीर्घाज्जसि च' (पा. सू. ६. १. १०५) इति निषेधं बाधित्वा 'वा छन्दसि' (पा. सू. ६. १. १०६) इति पूर्वसवर्णदीर्घत्वम् । ङीषः प्रत्ययस्वरेणोदात्तत्वम् । रातयः । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति क्तिन उदात्तत्वम् । दस्यन्ति । 'दसु उपक्षये' । 'दिवादिभ्यः श्यन्' । निघातः । ऊतयः । 'ऊतियूति°' (पा. सू. ३. ३. ९७) इत्यादिना क्तिन् उदात्तः । यदि । निपातत्वादाद्युदात्तः । संहितायां 'निपातस्य च' (पा. सू. ६. ३. १३६) इति दीर्घत्वम् । स्तोतृभ्यः । 'ष्टुञ् स्तुतौ' । 'धात्वादेः षः सः' (पा. सू. ६. १. ६४) । तृचश्चित्वादन्तोदात्तत्वम् । मंहते । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण 'तिङ्ङतिङः' इति निघातो न भवति, 'निपातैर्यद्यदिहन्त°' (पा. सू. ८. १. ३०) इति निषेधात् ॥

अभिप्लवषडहस्य उक्थ्येषु तृतीयसवनेऽच्छावाकस्य 'पुरां भिन्दुर्युवा कविः' इति स्तोत्रियस्तृचः। तथा च सूत्रितम्—'एह्यू षु' इत्युपक्रम्य 'पुरां भिन्दुर्युवा कविर्वृषा ह्यसि राधसे' (आश्व. श्रौ. ७. ८) इति ॥

पुरां भिन्दुर्युवा कविरमितौजा अजायत । इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ४ ॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ।
इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥

अयम् ᐯइन्द्रः उच्यमानगुणयुक्तः ᐯअजायत संपन्नः । कीदृग्गुणक इति तदुच्यते । ᐯपुराम् असुरपुराणां ᐯभिन्दुः भेत्ता ᐯयुवा कदाचिदपि वलीपलितादिवार्धकरहितः ᐯकविः मेधावी ᐯअमितौजाः प्रभूतबलः ᐯविश्वस्य ᐯकर्मणः कृत्स्नस्य ज्योतिष्टोमादेः ᐯधर्ता पोषकः ᐯवज्री यजमानरक्षणार्थं सर्वदा

वज्रयुक्तः ᵛपुरुष्टुतः बहुविधे तत्तत्कर्मणि[1] स्तुतः ॥ भिन्दुः । ‘ भिदिर् विदारणे ’ । ‘ कुः ’ इत्यनुवृत्तौ ‘ पृभिदिव्यधिगृधिधृषिदृशिभ्यः ’ ( उ. सू. १. २३ ) इति कुप्रत्ययः । तस्य ‘ छन्दस्युभयथा ’ ( पा. सू. ३. ४. ११७ ) इति सार्वधातुकसंज्ञायां ‘ रुधादिभ्यः श्नम् ’ ( पा. सू. ३. १. ७८ )। मित्त्वात् अन्त्यात् अचः परो भवति ( पा. सू. १. १. ४७ )। ‘ श्नसोरल्लोपः ’। अनुस्वारपरसवर्णौ ( पा. सू. ८. ३. २४; ८. ४. ५८ )। ‘ अचः परस्मिन्पूर्वविधौ ’ ( पा. सू. १. १. ५७ ) इति प्राप्तस्य स्थानिवद्भावस्य ‘ न पदान्त° ’ ( पा. सू. १. १. ५८ ) इत्यादिना निषेधः । युवा । ‘ यु मिश्रणामिश्रणयोः ’ । ‘ कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ’ ( उ. सू. १. १५४ ) इति कनिन् । नित्त्वादाद्युदात्तः । कविः । ‘ कु शब्दे ’ । ‘ अच इः ’ ( उ. सू. ४. ५७८ ) इति इः । प्रत्ययस्वरः । अमितौजाः । अमितशब्दस्य अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वेन[2] तदेव शिष्यते । विश्वस्य । ‘ अशिप्रुषि° ’ ( उ. सू. १. १४९ ) इत्यादिना क्वन् । क्वित्त्वादाद्युदात्तः । कर्मणः । ‘ अन्येभ्योऽपि दृश्यन्ते ’ ( पा. सू. ३. २. ७५ ) इति मनिन् । नित्स्वरः[3] । धर्ता । तृच् । चित्त्वादन्तोदात्तः । वज्री । मत्वर्थीय इनिः । प्रत्ययस्वरः । पुरुष्टुतः । ‘ स्तुतस्तोमयोश्छन्दसि ’ ( पा. सू. ८. ३. १०५ ) इति षत्वम् । बहुषु प्रदेशेषु स्तुतः । ‘ थाथ-घञ्क्ताजबित्रकाणाम् ’ ( पा. सू. ६. २. १४४ ) इत्यन्तोदात्तत्वम् । तृतीयासमासे हि थाथा-दिस्वरापवादः ‘ तृतीया कर्मणि ’ ( पा. सू. ६. २. ४८ ) इति पूर्वपदप्रकृतिस्वरः स्यात् ॥

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् । त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥५॥

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ।

त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ ५ ॥

वलनामकः कश्चिदसुरो देवसंबन्धिनीर्गा अपहृत्य कस्मिंश्चिद्बिले गोपितवान् । तदानीमिन्द्रः तद्बिलं स्वसैन्येन समावृत्य तस्माद्बिलात् गा निःसारयामास । तदिदमुपाख्यानम् ‘ इन्द्रो वलस्य बिलमपौर्णोत् ’ ( तै. सं. २. १. ५. १ ) इत्यादिब्राह्मणेषु मन्त्रान्तरेषु[4] च प्रसिद्धम् । तदेतत् हृदि निधाय अयं मन्त्रः प्रवर्तते । हे ᵛअद्रिवः वज्रयुक्तेन्द्र ᵛत्वं ᵛगोमतः ᵛवलस्य गोभिर्युक्तस्य वलनाम-कस्यासुरस्य संबन्धि ᵛबिलम् ᵛअपावः स्वसैन्यमुखेन अपावृतवानसि । तदानीं ᵛतुज्यमानासः वलेन हिंस्यमानाः ᵛदेवाः ᵛअबिभ्युषः त्वदीयरक्षया[5] वलादभीताः सन्तः ᵛत्वाम् ᵛआविषुः प्राप्तवन्तः ॥ अप । निपातत्वादाद्युदात्तः । अवः । ‘ वृञ् वरणे ’ । लङ् । सिप् । ‘इतश्च लोपः° ’ (पा. सू. ३. ४. ९७) । ‘ स्वादिभ्यः श्नुः ’ ( पा. सू. ३. १. ७३ ) । तस्य ‘ बहुलं छन्दसि ’ ( पा. सू. २. ४. ७३ ) इति लुक् । गुणो रपरत्वं हल्ङ्यादिलोपः । विसर्जनीयः । अडागमः । अद्रिवः । अद्रिरस्यास्तीति मतुप् । ‘ छन्दसीरः ’ ( पा. सू. ८. २. १५ ) इति वत्वम् । संबोधने ‘ उगिदचां° ’ ( पा. सू. ७. १. ७० ) इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । ‘ मतुवसो रु संबुद्धौ छन्दसि ’ (पा. सू. ८. ३. १) इति रुत्वम् । बिलम् । ‘ नब्विषयस्यानिसन्तस्य ’ ( फि. सू. २६ ) इत्याद्युदात्तत्वम् । अबिभ्युषः । ‘ ञिभी भये ’ । लिट् । द्विर्भावः । अभ्यासस्य ह्रस्वजश्त्वे । ‘ क्वसुश्च ’ ( पा. सू. ३. २. १०७ ) इति लिटः क्वसुरादेशः । कादिनियमात् प्राप्त इट् ‘ वस्वेकाजाद्घसाम् ’ ( पा. सू. ७. २. ६७ ) इति

१. ठ—बहुविधस्तोत्रैः कर्मणि । २. ठ— °प्रकृतिस्वरेण । ३. ठ—नित्त्वादाद्युदात्तः ४. ठ—‘ मन्त्रान्तरेषु च ’ नास्ति । ५. ठ—°रक्षाबला° ।

नियमात् निवर्तते । जसि सर्वनामस्थानेऽपि व्यत्ययेन भत्वात् वसोः संप्रसारणम् । परपूर्वत्वम् । ‘ शासिवसिघसीनां च ’ ( पा. सू. ८. ३. ६० ) इति षत्वम् । ‘ अचि श्नुधातु° ’ ( पा. सू. ६. ४. ७७ ) इत्यादिना प्राप्तम् इयङादेशं बाधित्वा ‘ एरनेकाचः ° ’ ( पा. सू. ६. ४. ८२ ) इति यणादेशः । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तुज्यमानासः । तुजेर्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच् । ‘सार्वधातुके यक्’ (पा. सू. ३. १. ६७) इति यक् । तस्मात् अदुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् । यक एव प्रत्ययस्वरः शिष्यते । आविषुः । अव रक्षणादिषु । अस्मा-द्गत्यर्थात् लुङो झिः । तस्य ‘ सिजभ्यस्तविदिभ्यश्च ’ ( पा. सू. ३. ४. १०९ ) इति जुस् । सिच इडागमः । ‘ आडजादीनाम् ’ ( पा. सू. ६. ४. ७२ ) इति आडागमः । ‘ आदेशप्रत्यययोः ’ ( पा. सू. ८. ३. ५९ ) इति षत्वम् ॥

**तवा॒हं शू॑र रा॒तिभि॒ः प्रत्या॑यं॒ सिन्धु॑मा॒वद॑न् । उपा॑तिष्ठन्त गिर्वणो वि॒दुष्टे॒ तस्य॑ का॒रव॑ः ॥६॥**

तव॑ । अ॒हम् । शू॒र॒ । रा॒तिऽभि॑ः । प्रति॑ । आ॒य॒म् । सिन्धु॑म् । आ॒ऽवद॑न् ।

उप॑ । अ॒ति॒ष्ठ॒न्त॒ । गि॒र्व॒ण॒ः । वि॒दुः । ते॒ । तस्य॑ । का॒रव॑ः ॥६॥

हे ᵛशूर संग्रामे शौर्ययुक्तेन्द्र ᵛतव ᵛरातिभिः कर्मसु[1] त्वदीयैर्धनदानैर्निमित्तभूतैः ᵛअहं होता ᵛप्रत्यायं त्वां पुनरागतोऽस्मि । पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन् कर्मणि प्रत्यागमनमित्यु-च्यते । किं कुर्वन् । ᵛसिंधुं स्यन्दमानं सोमम् ᵛआवदन् सर्वतः कथयन् । अस्मिन् सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः । हे ᵛगिर्वणः गीर्भिर्वननीयेन्द्र ᵛकारवः कर्तार ऋत्विग्यजमानाः ᵛउपा-तिष्ठन्त पुरा धनलाभार्थं त्वामुपस्थितवन्तः । उपस्थाय च ᵛतस्य तादृशस्यौदार्योपेतस्य ᵛते तव धनदानं ᵛविदुः जानन्ति । गिर्वणस्शब्दं यास्क इत्थं निर्ब्रूते—‘ गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति’ ( नि. ६. १४ ) इति । ‘ रेभो जरिता ’ इत्यादिषु त्रयोदशसु स्तोतृनामसु कारुशब्दः ( नि. ३. १६. ३ ) पठितः । तव । ‘ युष्मदस्मदोर्ङसि ’ (पा. सू. ६. १. २११) इत्याद्युदात्तत्वम् । रातिभिः । ‘ मन्त्रे वृष° ’ इत्यादिना क्तिन् उदात्तः । आयम् । इणो लङ् । ‘ तस्थस्थमिपां तांतंतामः ’ ( पा. सू. ३. ४. १०१ ) इति अमादेशः । ‘ अदिप्रभृतिभ्यः शपः ’ ( पा. सू. २. ४. ७२ ) इति शपो लुक् । आडागमः । वृद्ध्यायादेशौ । ‘ तिङ्ङतिङः ’ इति निघातः । सिन्धुम् । ‘ स्यन्दू प्रस्रवणे ’ । ‘ °नित् ’ ( उ. सू. १. ९ ) इत्यनुवृत्तौ ‘ स्यन्देः संप्रसारणं धश्च ’ ( उ. सू. १. ११ ) इति उप्रत्ययो धकारश्च अन्तादेशः । नित्वादाद्युदात्तः । आवदन् । ‘ वद व्यक्तायां वाचि ’ । लटः शतृ । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । आङा सह ‘ कुगतिप्रादयः ’ ( पा. सू. २. २. १८ ) इति समासः । कृदुत्तरपदप्रकृति-स्वरत्वम् । अतिष्ठन्त । ‘ उपान्मन्त्रकरणे ’ ( पा. सू. १. ३. २५ ) इत्यात्मनेपदम् । गिर्वणः । ‘ वन षण संभक्तौ ’ । असुन् । ‘ आमन्त्रितस्य च ’ इति निघातः । विदुः । ‘ विद ज्ञाने ’ । लट् । ‘ अदिप्रभृतिभ्यः शपः ’ इति शपो लुक् । ‘ विदो लटो वा ’ ( पा. सू. ३. ४. ८३ ) इति झेः उस् । पादादित्वात् न निघातः । संहितायां ‘ युष्मत्तत्ततक्षुःष्वन्तःपादम् ’ ( पा. सू. ८. ३. १०३ ) इति षत्वम् । ‘ ष्टुना ष्टुः ’ ( पा. सू. ८. ४. ४१ ) इत्युत्तरस्य तकारस्य ष्टुत्वम् । तस्य । ‘ सावेकाचः° ’ ( पा. सू. ६. १. १६८ ) इति विभक्तेरुदात्तत्वं प्राप्तं ‘ न गोश्वन्साववर्ण° ’

---

१. च–‘ कर्मसु ’ नास्ति । २. ठ–पुनरप्यागः° ।

( पा. सू. ६. १. १८२ ) इति निषिध्यते । कारवः । ' कृवापाजि° ' ( उ. सू. १. १ ) इत्यादिना उण् । प्रत्ययस्वरः ॥

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः । विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥७॥

मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।

विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥ ७ ॥

हे इन्द्र त्वं मायिनं नानाविधकपटोपेतं शुष्णं भूतानां शोषणहेतुम् एतन्नामकमसुरं मायाभिः तत्प्रतिकूलैः कपटविशेषैः । यद्वा । तद्वधोपायगोचरप्रज्ञाभिः अवातिरः हिंसितवानसि । एतच्च यास्केनोक्तम्– ' इन्द्रः शुष्णं जघान ' ( निरु. ३. ११ ) इति । ' शुष्णं पिप्रुम् ' ( ऋ. सं. १. १०३. ८ ) इत्यादिमन्त्रे चायमर्थो विस्पष्टः । मेधिराः मेधावन्तोऽनुष्ठातारः तस्य तादृशस्य ते तव महिमानं विदुः जानन्ति । तेषां जानतामनुष्ठातॄणां श्रवांसि अन्नानि उत्तिर वर्धय । ' केतः केतुः ' इत्यादिष्वेकादशसु प्रज्ञानामसु ' माया वयुनम् ' (नि. ३. ९.९) इति पठितम् । श्रवःशब्दं यास्को निर्वक्ति– ' श्रव इत्यन्ननाम श्रूयत इति सतः ' ( निरु. १०. ३ ) इति ॥ मायाभिः । ' माङ् माने ' । ' माच्छासिसिसूभ्यो यः ' ( उ. सू. ४. ५४९ ) इति यप्रत्ययः । प्रत्ययस्वरः । मायिनम् । मायास्यास्तीति मायी । व्रीह्यादित्वात् इनिप्रत्ययः ( पा. सू. ५. २. ११६ ) । प्रत्ययस्वरः । शुष्णम् । ' शुष शोषणे ' । अस्मादन्तर्भावितण्यर्थात् ' नित् ' इत्यनुवृत्तौ ' तृषिशुषिरसिभ्यः किच्च ' ( उ. सू. ३. २९२ ) इति नप्रत्ययः । नित्त्वादाद्युदात्तः । अतिरः । तरतेर्लङि व्यत्ययेन शः । तस्य ङित्त्वेन गुणाभावात् ' ऋत इद्धातोः ' इति इत्वम् । रपरत्वम् । विदुष्टे तस्य । गतमन्त्रे गतम् । मेधिराः । ' मिधृ मेधृ मेधाहिंसनयोः ' । औणादिक इरन् । नित्त्वादाद्युदात्तः । श्रवांसि । नब्विषयत्वादाद्युदात्तः ॥

इन्द्रमीशानमोजसाभि स्तोमा अनूषत । सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥८॥

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत ।

सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥ ८ ॥

स्तोमाः स्तोतार ऋत्विजः ओजसा बलेन ईशानं जगतो नियामकं इन्द्रं अभि अनूषत सर्वत्र स्तुतवन्तः । यस्य इन्द्रस्य रातयः धनदानानि सहस्रं सहस्रसंख्योपेतानि सन्ति । उत वा अथवा भूयसीः सहस्रसंख्याया अप्यधिकाः सन्ति । तमिन्द्रमिति पूर्वत्रान्वयः ॥ इन्द्रम् । ' ऋज्रेन्द्र°' ( उ. सू. २. १८६ ) इत्यादिना रन् । नित्त्वादाद्युदात्तः । ईशानम् । लटः शानच् । ' अदिप्रभृतिभ्यः शपः ' इति शपो लुक् । धातोरनुदात्तेत्त्वात् ' तास्यनुदात्त° ' ( पा. सू. ६. १. १८६ ) इत्यादिना शानचोऽनुदात्तत्वम् । ओजसा । नब्विषयत्वादाद्युदात्तः । स्तोमाः । ' अर्तिस्तुसु° ' ( उ. सू. १. १३७ ) इत्यादिना मन्प्रत्ययः । नित्त्वादाद्युदात्तः । अनूषत । ' णु स्तुतौ ' । ' णो नः ' । लुङ् ।

व्यत्ययेन झः । तस्य अदादेशः ( पा. सू. ७. १. ५ ) । च्लेः सिच् । अस्य धातोः कुटादित्वेन सिचो ङित्वाद्गुणाभावः । इडभावश्छान्दसः दीर्घत्वं च । अडागमः । सहस्रम् । ‘ कर्दमादीनां च ’ (फि. सू. ५९ ) इति द्वितीयाक्षरमुदात्तम् । रातयः । ‘ मन्त्रे वृष° ’ इत्यादिना क्तिन् उदात्तः । उत । प्रातिपदिकस्वरः । वा । चादिरनुदात्तः । सन्ति । प्रत्ययाद्युदात्तत्वम् । ‘ तिङ्ङतिङः ’ इति निघातो न भवति ‘ यद्वृत्तान्नित्यम् ’ ( पा. सू. ८. १. ६६ ) इति प्रतिषेधात् । स हि व्यवहितेऽपि भवतीत्युक्तम् । भूयसीः । सहस्राद[1]तिशयेन बह्व्यो भूयस्यः । अत्र विभक्तव्यस्य सहस्रस्य संनिधिबलादुपपदत्वप्रतीतेः ‘ द्विवचनविभज्योपपदे तरबीयसुनौ ’ ( पा. सू. ५. ३. ५७ ) इति बहुशब्दात् ईयसुन् । ‘ बहोर्लोपो भू च बहोः ’ (पा. सू. ६. ४. १५८ ) इति ईकारलोपः प्रकृतेः भू इति आदेशश्च । ईयसुनो नित्वादाद्युदात्तत्वम् । ‘ उगितश्च ’ ( पा. सू. ४. १. ६ ) इति ङीप् ॥ २१ ॥ ॥ ३ ॥

चतुर्थानुवाके षट्सूक्तानि । तत्र ‘ अग्निं दूतम् ’ इत्यादिकस्य द्वादशर्चस्य प्रथमस्य सूक्तस्य कण्वपुत्रो मेधातिथिर्ऋषिः । अपवादाभावादनुवर्तमानं ‘ प्राग्घिरण्यस्तूपात् ’ ( अनु. १२. १४ ) इत्युक्तं गायत्रमेव छन्दः । अग्निदेवताकत्वं विस्पष्टम् । अत एवानुक्रम्यते–‘ अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादो ह्यग्निदेवतो निर्मथ्य आहवनीयश्च ’ इति । विनियोगस्तु प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि ‘ अग्निं दूतम् ’ इति सूक्तम् । ‘ अथैतस्या रात्रेर्विवासकाले ’ इति खण्डे ‘ अग्निमीळेऽग्निं दूतम् ’ ( आश्व. श्रौ. ४. १३ ) इति सूत्रितम् । तथा पृष्ठ्यषडहस्य द्वितीयेऽहनि इदमेव सूक्तमाज्यशस्त्रम् । ‘ पृष्ठ्यस्याभिप्लवेनोक्ते अहनी ’ इति खण्डे सूत्रितम्–‘ अग्निं दूतमिति द्वितीये ’ (आश्व. श्रौ. ७. १० ) इति । दर्शपूर्णमासयोः सामिधेनीषु ‘ अग्निं दूतम् ’ इत्येका । ‘ नमः प्रवक्त्रे ’ इति खण्डे सूत्रितम्–‘ ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे ’ ( आश्व. श्रौ. १. २ ) इति ॥

अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥ १ ॥

अ॒ग्निम् । दू॒तम् । वृ॒णी॒म॒हे॒ । होता॑रम् । वि॒श्वऽवे॑दसम् । अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतु॑म् ॥ १ ॥

अग्नेर्दूतत्वम् एतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे[2] समाम्नायते–‘ अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणाम् ’ ( तै. सं. २. ५. ८. ५ ) इति । तादृशं देवदूतम् अग्निम् अस्मिन् कर्मणि वृणीमहे संभजामः । कीदृशम् । होतारं देवानामाह्वातारं विश्ववेदसं सर्वधनोपेतम् अस्य प्रवर्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुं शोभनकर्माणं शोभनप्रज्ञं वा । ‘ मघम् ’ इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु वेदस्शब्दः ( नि. २. १०. ४ ) पठितः । होतारम् । ‘ ह्वेञ् स्पर्धायां शब्दे च ’ । ताच्छील्यादिषु तृन् । ‘ बहुलं छन्दसि ’ ( पा. सू. ६. १. ३४ ) इति संप्रसारणे परपूर्वत्वे गुणः । नित्वादाद्युदात्तः । विश्ववेदसम् । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ ( पा. सू. ६. २. १०६ ) इति पूर्वपदान्तोदात्तत्वम् । अस्य । ‘ ऊडिदम् ’ ( पा. सू. ६. १. १७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । सुक्रतुम् । ‘ क्रत्वादयश्च ’ ( पा. सू. ६. २. ११८ ) इत्याद्युदात्तत्वम् ॥

अ॒ग्निम॑ग्निं॒ हवी॑मभिः॒ सदा॑ हवन्त वि॒श्पति॑म् । ह॒व्य॒वाहं॑ पुरुप्रि॒यम् ॥ २ ॥

अ॒ग्निम्ऽअ॑ग्निम् । हवी॑मऽभिः । सदा॑ । ह॒व॒न्त॒ । वि॒श्पति॑म् । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽप्रि॒यम् ॥ २ ॥

१. ठ–सहस्रादप्यतिशयेन । २. ठ–मन्त्रब्राह्मणे तैत्तिरीये ।

यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदात् आहवनीयादिस्थानभेदात् पावकादिविशेषण-भेदाद्वा बहुविधत्वमभिप्रेत्य ' अग्निमग्निम् ' इति वीप्सा । तं ^हवीमभिः आह्वानकरणैर्मन्त्रैः ^सदा ^हवन्त निरन्तरमनुष्ठातार आह्वयन्ति। कीदृशम्। ^विश्पतिं विशां प्रजानां होत्रादीनां पालकं ^हव्य-वाहं यजमानसमर्पितस्य हविषो देवान् प्रति वोढारम् । अत एव ^पुरुप्रियं बहूनां प्रीत्यास्पदम् ॥ अग्नि-मग्निम् । ' नित्यवीप्सयोः ' ( पा. सू. ८. १. ४ ) इति वीप्सायां द्विर्भावः । ' तस्य परमाम्रेडितम् ' ( पा. सू. ८. १. २ ) इत्युत्तरस्य आम्रेडितसंज्ञायाम् ' अनुदात्तं च ' ( पा. सू. ८. १. ३ ) इत्य-नुदात्तत्वम् । हवीमभिः । 'ह्वेञ् स्पर्धायां शब्दे च ' । आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्तृत्वविवक्षया ' अन्येभ्योऽपि दृश्यन्ते ' ( पा. सू. ३. २. ७५ ) इति कर्तरि मनिन् । तस्य छान्दस ईडागमः । ' बहुलं छन्दसि ' ( पा. सू. ६. १. ३४ ) इति धातोः संप्रसारणं परपूर्वत्वं गुणावादेशौ। नित्वादाद्युदात्तत्वम् । सदा । 'सर्वैकान्य०' (पा. सू. ५. ३. १५ ) इत्यादिना सर्वशब्दात् दाप्रत्ययः । 'सर्वस्य सोऽन्यतरस्यां दि ' ( पा. सू. ५. ३. ६ ) इति सभावः । व्यत्ययेनाद्युदात्तत्वम् । हवन्त । ह्वेञो लट् । झस्य अन्तादेशः । टेः एत्वाभावश्छान्दसः । शपि ' बहुलं छन्दसि ' इति संप्रसारणम् । ' तिङ्ङतिङः ' इति निघातः । विश्पतिम् । ' पत्यावैश्वर्ये ' ( पा. सू. ६. २. १८ ) इति पूर्व-पदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । हव्यवाहम् । ' वह प्रापणे ' । ' वहश्च ' ( पा. सू. ३. २. ६४ ) इति ण्विप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । पुरुप्रियम् । पुरूणां प्रियम् । समासान्तोदात्तत्वम् ॥

**अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे । असि॒ होता॑ न॒ ईड्यः॑ ॥ ३ ॥**

अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । ज॒ज्ञा॒नः । वृ॒क्तऽब॑र्हिषे । असि॑ । होता॑ । नः॒ । ईड्यः॑ ॥३॥

हे ^अग्ने ^जज्ञानः अरण्योरुत्पन्नस्त्वं ^वृक्तबर्हिषे आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय तं यजमान-मनुग्रहीतुम् ^इह कर्मणि हविर्भुजः ^देवान् ^आ ^वह । ^नः अस्मदर्थं ^होता देवानामाह्वाता त्वम् ^ईड्यः स्तुत्यः ^असि॥ देवान् इत्यत्र संहितायां ' दीर्घादटि समानपादे' (पा. सू. ८. ३. ९) इति रुत्वम् । ' आतोऽटि नित्यम् ' ( पा. सू. ८. ३. ३ ) इत्यनुनासिकभावः । जज्ञानः । ' जनी प्रादुर्भावे ' । लिटः कानच् । ' गमहन० ' ( पा. सू. ६. ४.९८ ) इत्युपधालोपः । ' द्विर्वचनेऽचि ' ( पा. सू. १. १. ५९ ) इति तस्य स्थानिवद्भावात् द्विर्वचनम् । चित्वादन्तोदात्तः । वृक्तबर्हिषे । ' ओव्रश्चू छेदने ' । ' निष्ठा ' ( पा. सू. ३. २. १०२ ) इति क्तप्रत्ययः । ' यस्य विभाषा ' ( पा. सू. ७. २. १५ ) इति इट्प्रतिषेधः । वृक्तं बर्हिर्यस्मै[1] यजमानाय येन वा ऋत्विजा । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरः । असि । अस्तेः सिप् । ' अदिप्रभृतिभ्यः शपः ' इति शपो लुक् । ' तासस्त्योर्लोपः ' ( पा. सू. ७. ४. ५० ) इति सकारस्य लोपः । पादादित्वात् न निघातः । होता । ह्वयतेस्ताच्छी-ल्यादिषु तृन् । ' बहुलं छन्दसि ' ( पा. सू. ६. १. ३४ ) इति संप्रसारणम् । नित्वादाद्युदात्तः । ईड्यः । ' ईड स्तुतौ ' । ' ऋहलोर्ण्यत् ' ( पा. सू. ३. १. १२४ ) । तित्स्वरिते प्राप्ते ' ईडवन्द-वृशंसदुहां ण्यतः ' ( पा. सू. ६. १. २१४ ) इत्याद्युदात्तत्वम् ॥

**ताँ उ॑श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्य॑म् । दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥ ४ ॥**

तान् । उ॒श॒तः । वि । बो॒ध॒य॒ । यत् । अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् । दे॒वैः । आ । स॒त्सि॒ । ब॒र्हिषि॑ ॥४॥

---

१. च-त-प-फ-' यस्मै ' नास्ति ।

हे अग्ने यत् यस्मात् कारणात् दूत्यं यासि देवानां दूतकर्म प्राप्नोषि तस्मात् कारणात् उशतः हविः कामयमानान् तान् देवान् हविःस्वीकारार्थं वि बोधय। विबोध्य च बर्हिषि अस्मिन् कर्मणि तैः देवैः सह आ सत्सि आसीद आगत्योपविश ॥ तान्। 'दीर्घादटि समानपादे' इति संहितायां रुत्वम्। 'आतोऽटि नित्यम्' इत्यनुनासिकभावः। उशतः। 'वश कान्तौ'। लटः शतृ। 'अदिप्रभृतिभ्यः शपः' इति शपो लुक्। 'ग्रहिज्या°' (पा. सू. ६. १. १६) इत्यादिना संप्रसारणम्। 'शतुरनुमो नद्यजादी' (पा. सू. ६. १. १७३) इति विभक्तेरुदात्तत्वम्। यासि। 'यद्वृत्तान्नित्यम्' (पा. सू. ८. १. ६६) इति निघातप्रतिषेधः। दूतस्य भागः कर्म वा दूत्यम्। 'दूतस्य भागकर्मणी' (पा. सू. ४. ४. १२०) इति यत्। तस्य तित्स्वरितापवादत्वेन 'यतोऽनावः' इति प्राप्तमाद्युदात्तत्वं 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति निवर्तते। अतः 'तित्स्वरितम्' (पा. सू. ६. १. १८५) इत्येव भवति। शेषनिघातः। सत्सि सीदसि। 'षद्लृ विशरणगत्यवसादनेषु'। लटः सिपि शपो 'बहुलं छन्दसि' इति लुक्। 'न लुमताङ्गस्य' (पा. सू. १. १. ६३) इति प्रत्ययलक्षणप्रतिषेधात् 'पाघ्रा°' (पा. सू. ७. ३. ७८) इत्यादिना सीदादेशो न भवति। बर्हिषि। 'बृह बृहि वृद्धौ'। 'बृंहेर्नलोपश्च' (उ. सू. २. २६६) इति इसिप्रत्ययः। प्रत्ययस्वरेण इकार उदात्तः ॥

घृताहवन दीदिवः प्रति ष्म रिषतो दह। अग्ने त्वं रक्षस्विनः ॥ ५ ॥

घृतऽआहवन। दीदिऽवः। प्रति। स्म। रिषतः। दह। अग्ने। त्वम्। रक्षस्विनः ॥ ५ ॥

हे घृताहवन घृतेनाहूयमान दीदिवः दीप्यमान अग्ने त्वं रक्षस्विनः रक्षोयुक्तान् रिषतः हिंसकान् शत्रून् प्रति अस्माकं प्रतिकूलान् दह स्म सर्वथा भस्मीकुरु ॥ घृतेनाहूयतेऽस्मिन्निति 'करणाधिकरणयोश्च' (पा. सू. ३. ३. ११७) इत्यधिकरणे ल्युट्। अत्र जुहोतेः अविवक्षितकर्मत्वेन अकर्मकत्वात् घृतस्य करणत्वमेव न तु कर्मत्वम्। अतो नैषा 'तृतीया च होश्छन्दसि' (पा. सू. २. ३. ३) इति कर्मणि तृतीया। किंतु 'कर्तृकरणयोस्तृतीया' (पा. सू. २. ३. १८) इति करणवाचिन्येव। अतः 'कर्तृकरणे कृता बहुलम्' (पा. सू. २. १. ३२) इति समासः। तत्र पूर्वपदप्रकृतिस्वरापवादे कृदुत्तरपदप्रकृतिस्वरे प्रातिपदिकावस्थायामेव कृते सति पश्चात् विभक्त्यावुत्पन्नायाम् 'आमन्त्रितस्य च' (पा. सू. ६. १. १९८) इत्याद्युदात्तत्वम्। दीदिवः। दीव्यतेर्लिटः क्वसुः। तस्य 'वस्वेकाजाद्घसाम्' (पा. सू. ७. २. ६७) इति नियमात् इडभावः। द्विर्वचनम्। हलादिशेषः। उत्तरवकारस्य 'लोपो व्योर्वलि' (पा. सू. ६. १. ६६) इति लोपः। क्वसुः। कित्त्वात् गुणाभावः। 'तुजादीनां दीर्घोऽभ्यासस्य' (पा. सू. ६. १. ७) इति दीर्घत्वमभ्यासस्य। संबुद्धौ 'उगिदचाम्°' (पा. सू. ७. १. ७०) इति नुम्। 'संयोगान्तस्य लोपः' (पा. सू. ८. २. २३) इति सकारलोपे नकारस्य 'मतुवसो रु संबुद्धौ छन्दसि' (पा. सू. ८. ३. १) इति रुत्वम्। विसर्गः। पदात् परत्वात् आमन्त्रितनिघातः। ननु पूर्वामन्त्रितस्य अविद्यमानवत्त्वात् पादादित्वेन न निघातोपपत्तिः। न च 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा. सू. ८. १. ७३) इत्यविद्यमानवत्त्वप्रतिषेधः; उभयोरग्निपदविशेषणत्वेन विशेषवचनत्वात्। अत एव परस्परमनन्वयेन असामर्थ्यात् 'समर्थः पदविधिः' (पा. सू. २. १. १) इति च नियमात् पूर्वस्य न पराङ्गवद्भावो येन ऐकपद्येन निघातः स्यात्। अत एव हि 'इडे रन्तेऽदिते सरस्वति' (तै. सं. ७. १. ६. ८) इत्यादौ पृथक् पृथक् आद्युदात्तत्वमिति। उच्यते—अत्र 'दीदिवः' इति नाग्निपदस्य विशेषणं किंतु

घृताहवनपदस्यैव द्योतनार्थम्; घृताहवन इति विशेष्यत्वेन विवक्षितत्वात्। विशिष्टस्य तु पश्चादग्निविशेषणता। तत्र दीदिवःपदं प्रति घृताहवनपदस्य विशेष्यत्वात् 'नामन्त्रिते समानाधिकरणे०' (पा. सू. ८. १. ७३) इत्यविद्यमानवत्त्वप्रतिषेधात् निघातोपपत्तिः। अत एव परस्परविशेषणविशेष्यभावेन सामर्थ्यात् 'सुबामन्त्रिते०' (पा. सू. २. १. २) इति पराङ्गवद्भावे शेषनिघातेनापि स्वरोपपत्तिरिति। 'इडे रन्ते' इत्यादौ तु नैवं परस्परान्वय इति वैषम्यम्। रिषतः। 'रुष रिष हिंसार्थाः' इति। भौवादिकस्य लटः शत्रादेशे शपि छान्दसो गुणाभावः। तौदादिकस्य वा 'रुश रिश हिंसायाम्' इत्यस्य छान्दसं षत्वम्। विकरणस्य शस्य ङित्त्वाद्गुणाभावः। रक्षस्शब्दात् 'अस्मायामेधास्रजो विनिः' (पा. सू. ५. २. १२१) इति मत्वर्थीयो विनिः। तस्य प्रत्ययाद्युदात्तत्वम्॥

अग्निमन्थने 'अग्निनाग्निः समिध्यते' इत्येषानुवचनीया। 'प्रातर्वैश्वदेव्यां प्रेषितः' इति खण्डे सूत्रितम्—'अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना' (आश्व. श्रौ. २. १६) इति। एषैव अग्निमत इत्यस्य अनुवाक्या। 'अथाग्नेय्यः' इति खण्डे 'अग्नावग्निप्रणयने' इत्युपक्रम्य सूत्रितं—'यद्वो वयं प्रमिनाम व्रतान्यग्निनाग्निः समिध्यते' (आश्व. श्रौ. ३. १३) इति॥

## अ॒ग्निना॒ग्निः समि॑ध्यते क॒विर्गृ॒हप॑ति॒र्युवा॑। ह॒व्य॒वाड् जु॒ह्वा॑स्यः॥ ६॥

अ॒ग्निना॑। अ॒ग्निः। सम्। इ॒ध्य॒ते॒। क॒विः। गृ॒हऽप॑तिः। युवा॑। ह॒व्य॒ऽवाट्। जु॒हुऽआ॑स्यः॥६॥

ᵛअग्निः आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन ᵛअग्निना निर्मथ्येन प्रणीतेन वा सह ᵛसमिध्यते सम्यक् दीप्यते। कीदृशोऽग्निः। ᵛकविः मेधावी ᵛगृहपतिः यजमानगृहस्य पालकः ᵛयुवा नित्यतरुणः ᵛहव्यवाट् हविषो वोढा ᵛजुह्वास्यः जुहूरूपेण मुखेन युक्तः॥ गृहपतिः। 'पत्यावैश्वर्ये' (पा. सू. ६. २. १८) इति पूर्वपदप्रकृतिस्वरत्वम्। युवा। 'यु मिश्रणे'। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ. सू. १. १५४) इति कनिन्। नित्त्वादाद्युदात्तः। हव्यं वहतीति हव्यवाट्। 'वहश्च' (पा. सू. ३. २. ६४) इति ण्विप्रत्ययः। णित्त्वादुपधावृद्धिः। गतिकारकोपपदात् कृदुत्तरपदप्रकृतिस्वरत्वम्। जुह्वास्यः। हूयतेऽनयेति जुहूः। 'हुवः श्लुवच्च' (उ. सू. २. २१८) इति क्विप्। तत्संनियोगात् दीर्घः। श्लुवद्भावात् द्विर्भावः। चुत्वजश्त्वे। प्रातिपदिकस्वरेणान्तोदात्तः। जुहूः आस्यं यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एवं शिष्यते। शेषनिघातः। यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा. सू. ८. २. ४) इति आकारः स्वरितः॥ ॥ २२॥

## क॒विम॒ग्निमुप॑ स्तुहि स॒त्यध॑र्माणमध्व॒रे। दे॒वम॑मीव॒चात॑नम्॥ ७॥

क॒विम्। अ॒ग्निम्। उप॑। स्तु॒हि॒। स॒त्यऽध॑र्माणम्। अ॒ध्व॒रे। दे॒वम्। अ॒मी॒व॒ऽचात॑नम्॥७॥

हे स्तोतृसंघ ᵛअध्वरे क्रतौ ᵛअग्निम् ᵛउप ᵛस्तुहि उपेत्य स्तुतिं कुरु। कीदृशम्। ᵛकविं मेधाविनं ᵛसत्यधर्माणं सत्यवदनरूपेण धर्मेणोपेतं ᵛदेवं द्योतमानम् ᵛअमीवचातनम् अमीवानां हिंसकानां शत्रूणां रोगाणां वा घातकम्॥ सत्यं धर्मो यस्येति सत्यधर्मा। 'धर्मादनिच् केवलात्' (पा. सू. ५. ४. १२४) इति अनिच् समासान्तः। अन्तःपदेन तस्य समासत्वाभिधानात् बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वम्। अमीवशब्दः 'अम रोगे' इत्यस्मात् 'शेवयह्वजिह्वाग्रीवाप्वामीवाः' (उ. सू. १. १५२) इति वन्प्रत्यये ईडागमे च निपातितः। नित्त्वादाद्युदात्तः। 'चते चदे याचने च'

इत्यस्मात् हिंसार्थात् णिजन्तात् नन्द्यादित्वात् ल्युः ( पा. सू. ३. १. १३४ )। योरनादेशः (पा. सू. ७. १. १ )। 'णेरनिटि' (पा. ६. ४. ५१ ) इति णिलोपः। 'लिति' (पा. सू. ६. १. १९३ ) इति धातोः अकारस्योदात्तत्वम्। न च स्वरे कर्तव्ये णिलोपस्य स्थानिवद्भावः; 'न पदान्तद्विर्वचन ' (पा. सू. १. १. ५८ ) इत्यादिना प्रतिषेधात्। अमीवानां चातनः इति समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते॥

## यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व सप॒र्यति॑। तस्य॑ स्म प्रावि॒ता भ॑व ॥ ८ ॥

यः। त्वाम्। अ॒ग्ने॒। ह॒विःऽप॑तिः। दू॒तम्। दे॒व॒। स॒प॒र्यति॑। तस्य॑। स्म॒। प्र॒ऽअ॒वि॒ता। भ॒व॒ ॥८॥

हे अग्ने देव यः हविष्पतिः यजमानः देवदूतं त्वां सपर्यति परिचरति तस्य यजमानस्य प्राविता भव स्म अवश्यं रक्षको भव॥ हूयते इति हविः। 'अर्चिशुचि ' (उ. सू. २. २६५) इत्यादिना इसिः। प्रत्ययस्वरेण इकार उदात्तः। हविषः पतिर्हविष्पतिः। 'नित्यं समासेऽनुत्तरपदस्थस्य ' (पा. सू. ८. ३. ४५ ) इति षत्वम्। 'पत्यावैश्वर्ये ' (पा. सू. ६. २. १८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। सपरशब्दात् 'कण्ड्वादिभ्यो यक् ' ( पा. सू. ३. १. २७ ) इति यक्। धातुप्रकरणात् गुणप्रतिषेधाद्यर्थात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात् ततो विहितस्य यकः आर्धधातुकत्वे सति 'अतो लोपः ' (पा. सू. ६. ४. ४८ ) इति लोपः। 'सनाद्यन्ता धातवः ' (पा. सू. ३. १. ३२ ) इति धातुसंज्ञायां तिप्। कर्तरि शप्। तस्मिन् पूर्वस्य 'अतो गुणे ' (पा. सू. ६. १. ९७ ) इति परपूर्वत्वम्। यकः प्रत्ययस्वरेणोदात्तत्वम्। शपा सह एकादेशस्य 'एकादेश उदात्तेनोदात्तः ' (पा. सू. ८. २. ५ ) इत्युदात्तत्वम्। 'तिङ्ङतिङः ' इति निघातो न भवति 'यद्वृत्तान्नित्यम् ' (पा. सू. ८. १. ६६ ) इति प्रतिषेधात्॥

गार्हपत्याहवनीययोः परस्परसंसर्गे विहितस्य हविषो याज्या 'यो अग्निं देववीतये ' इत्येषा। 'अथाग्नेय्य इष्टयः ' इति खण्डे सूत्रितं–'यो अग्निं देववीतये कुविस्सु नो गविष्टये ' ( आश्व. श्रौ. ३. १३ ) इति॥

## यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति। तस्मै॑ पावक मृळय ॥ ९ ॥

यः। अ॒ग्निम्। दे॒वऽवी॑तये। ह॒विष्मा॑न्। आ॒ऽविवा॑सति। तस्मै॑। पा॒व॒क॒। मृ॒ळ॒य॒ ॥ ९ ॥

हविष्मान् हविर्युक्तः यः यजमानः देववीतये देवानां हविर्भक्षणहेतुयागार्थम् अग्निम् आविवासति अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति। हे पावक अग्ने तस्मै मृळय तं यजमानं सुखय॥ देववीतये। 'वी गतिप्रजनकान्त्यशनखादनेषु ' इत्यस्मात् अशनार्थात् क्तिन्। देवानां वीतिर्यस्मिन् यागे स देववीतिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। हविष्मान्। 'नब्विषयस्यानिसन्तस्य ' (फि. सू. २६ ) इति पर्युदासात् हविःशब्दोऽन्तोदात्तः। मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति। 'वा गतिगन्धनयोः '। अस्मात् अन्तर्भावितण्यर्थात् आगमयितुमिच्छतीत्यर्थे सन्। आह्वानेच्छा परिचर्यायां पर्यवस्यतीति विवासतिशब्दः परिचर्यार्थे निघण्टौ (नि. ३. ५. १०)

---

१. ठ–दूतम्। २. श–सपर पूजायाम्। सपरशब्दात्। ३. च-फ–पुरोनुवाक्या।

पठितः। द्विर्भावः। अभ्यासस्य ह्रस्वः। 'सन्यतः '(पा. सू. ७. ४. ७९) इति इत्वम्। 'ञ्नित्यादिर्नित्यम्' (पा. सू. ६. १. १९७) इत्याद्युदात्तत्वम्। 'तिङ्ङतिङः' इति निघातो न भवति 'यद्वृत्तान्नित्यम्' (पा. सू. ८. १. ६६) इति प्रतिषेधात्। 'तिङि चोदात्तवति' (पा. सू. ८. १. ७१) इति आङो निघातः। 'सह सुपा' (पा. सू. २. १. ४) इत्यत्र सहेति योगविभागात् आङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा. सू. ६. २. १९९) इत्युत्तरपदाद्युदात्तत्वम्। तस्मै। 'क्रियाग्रहणं कर्तव्यम्' (पा. म. १. ४. ३२. १) इति संप्रदाने चतुर्थी॥

पवमानेष्टौ अग्नेः पावकस्यानुवाक्या 'स नः पावक दीदिवः' इति। 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः' इति खण्डे सूत्रितं–'स नः पावक दीदिवोऽग्ने पावक रोचिषा' (आश्व. श्रौ. २. १) इति॥

## स नः पावक दीदिवोऽग्ने देवाँ इहा वह। उप यज्ञं हविश्च नः॥ १०॥

सः। नः। पावक। दीदिऽवः। अग्ने। देवान्। इह। आ। वह। उप। यज्ञम्। हविः। च। नः॥१०॥

हे दीदिवः दीप्यमान पावक शोधक अग्ने सः त्वं नः अस्मदर्थम् इह देवयजनदेशे देवान् आ वह। ततः नः अस्मदीयं यज्ञं तत्रत्यं हविश्च उप देवसमीपे प्रापयेति शेषः॥ दीदिवः। 'दिवु क्रीडादौ'। 'छन्दसि लुङ्लङ्लिटः' (पा. सू. ३. ४. ६) इति वर्तमाने लिट्। क्वसुः। द्विर्भावो हलादिशेषः। 'तुजादीनां दीर्घोऽभ्यासस्य' (पा. सू. ६. १. ७) इत्यभ्यासस्य दीर्घत्वम्। 'वस्वेकाजाद्घसाम्' (पा. सू. ७. २. ६७) इति नियमात् वसोः इट्प्रतिषेधः। 'लोपो व्योर्वलि' (पा. सू. ६. १. ६६) इति वकारलोपः। संबुद्धौ 'उगिदचां°' (पा. सू. ७. १. ७०) इत्यादिना नुम्। हल्ङ्यादिलोपः संयोगान्तलोपः। 'मतुवसोः°' इति रुत्वम्। विसर्गः। अग्ने। पादादित्वात् न निघातः। देवाँ इहेत्यत्र 'दीर्घादटि समानपादे' (पा. सू. ८. ३. ९) इति रुत्वम्। 'आतोऽटि नित्यम्' इति आकारस्यानुनासिकः। 'भोभगोअघोअपूर्वस्य योऽशि' (पा. सू. ८. ३. १७) इति रोर्यकारः। 'लोपः शाकल्यस्य' (पा. सू. ८. ३. १९) इति यकारलोपः। तस्यासिद्धत्वात् आद्गुणो न भवति। इह। 'इदमो हः' (पा. सू. ५. ३. ११) इति सप्तम्यन्तात् हप्रत्ययः। 'इदम इश्' (पा. सू. ५. ३. ३)। तद्धितान्तत्वात् प्रातिपदिकत्वे 'सुपो धातुप्रातिपदिकयोः' (पा. सू. २. ४. ७१) इति सप्तम्या लुक्। 'तद्धितश्चासर्वविभक्तिः' (पा. सू. १. १. ३८) इत्यव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' (पा. सू. २. ४. ८२) इत्युत्तरस्याः सप्तम्या लुक्। अकारः प्रत्ययस्वरेणोदात्तः॥

## स नः स्तवान आ भर गायत्रेण नवीयसा। रयिं वीरवतीमिषम्॥ ११॥

सः। नः। स्तवानः। आ। भर। गायत्रेण। नवीयसा। रयिम्। वीरऽवतीम्। इषम्॥११॥

हे अग्ने नवीयसा नवतरेण पूर्वकैरप्यसंपादितेन गायत्रेण गायत्रीच्छन्दस्केनानेन सूक्तेन स्तवानः स्तूयमानः सः त्वं नः अस्मदर्थं रयिं धनं वीरवतीं शूरपुत्रप्रभृत्यपत्ययुक्ताम्[3] इषम् अन्नं च आ भर संपादय॥ स्तवानः। 'ष्टुञ् स्तुतौ'। 'धात्वादेः षः सः'। 'स्वरितञितः°' (पा. सू. १. ३.

१. ठ–संप्रदानत्वात्। २. च-त-फ-श–इति। ३. ठ–वीरपुत्रभृत्ययुक्ताम्।

७२ ) इत्यात्मनेपदम् । लटः शानच् । कर्तरि शप् । ‘ बहुलं छन्दसि ’ ( पा. सू. २. ४. ७३ ) इति लुगभावः । गुणावादेशौ । ‘ आने मुक् ’ ( पा. सू. ७. २. ८२ ) इति मुक् न भवति. ‘ अनित्यमागमशासनम् ’ ( परिभा. ९६ ) इत्यागमानुशासनस्य अनित्यत्वात् । शपः पित्त्वादनुदात्तत्वम् । शानचश्चित्त्वादन्तोदात्तस्य अदुपदेशात् शपः परत्वात् लसार्वधातुकानुदात्तत्वम् । धातुस्वर एव शिष्यते । भर । ‘ हृग्रहोर्भश्छन्दसि ’ ( पा. सू. ८. २. ३२. १ ) इति भत्वम् । गायत्रेण । गायत्र्याः संबन्धि गायत्रम् । ‘ तस्येदम् ’ ( पा. सू. ४. ३. १२० ) इति अण्प्रत्ययः । प्रत्ययस्वरः । नवीयसा । नवशब्दात् आतिशायनिकः ईयसुन्प्रत्ययः । नित्त्वादाद्युदात्तः । वीरवतीम् । मतुब्ङीपोः पित्त्वादनुदात्तत्वम् । अकारः प्रातिपदिकस्वरेणोदात्तः ॥

अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः । इ॒मं स्तोमं॑ जुषस्व नः ॥ १२ ॥

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः । दे॒वहू॑तिऽभिः । इ॒मम् । स्तोम॑म् । जु॒षस्व॒ । न॒ः ॥१२॥

हे अग्ने शुक्रेण शोचिषा त्वदीयश्वेतवर्णदीप्त्या विश्वाभिर्देवहूतिभिः त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं नः अस्मदीयम् इमं स्तोमं स्तोत्रविशेषं जुषस्व सेवस्व ॥ विश्वशब्दो विशेः क्वन्नन्तो नित्त्वादाद्युदात्तः । देवहूतिभिः । देवशब्दः पचाद्यजन्तः । चित्त्वादन्तोदात्तः । देवानां हूतय आह्वानान्यासु स्तुतिष्विति देवहूतयः स्तुतयः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । स्तूयतेऽनेनेति स्तोमः । ‘ अर्तिस्तुसु° ’ ( उ. सू. १. १३७ ) इत्यादिना मन् । नित्त्वादाद्युदात्तः ॥ ॥ २३ ॥

‘ सुसमिद्धः ’ इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तम् । तस्य काण्वो मेधातिथिर्ऋषिः । गायत्रं छन्दः । प्रत्यृचं प्रतीयमानाः समिद्धतनूनपादादिका द्वादश देवताः । तथा च अनुक्रमणिकायाम् ऋक्संख्यामृषिं छन्दश्च अनुवृत्तिबलात् सिद्धवत्कृत्य देवता उदाहृताः–‘ सुसमिद्ध इतीध्मः समिद्धो वाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तम् ’ इति । विनियोगस्तु–पशौ ‘ सुसमिद्धो न आ वह ’ इति काण्वमाप्रीसूक्तम् । ‘ एकादश प्रयाजाः ’ इति खण्डे सूत्रितं–‘ समिद्धो अद्येति सर्वेषां यथर्षि वा ’ ( आश्व. श्रौ. ३. २ ) इति ॥

सुस॑मिद्धो न॒ आ व॑ह दे॒वाँ अ॑ग्ने ह॒विष्म॑ते । होत॑ः पावक॒ यक्षि॑ च ॥ १ ॥

सुऽस॑मिद्धः । न॒ः । आ । व॒ह॒ । दे॒वान् । अ॒ग्ने॒ । ह॒विष्म॑ते । हो॒त॒रिति॑ । पा॒व॒क॒ । यक्षि॑ । च॒ ॥१॥

हे अग्ने सुसमिद्धनामकस्त्वं नः अस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थं देवान् आ वह । हे पावक शोधक होतः होमनिष्पादकाग्ने यक्षि च यज च ॥ सुसमिद्धः । समः क्रियाविशेषणत्वेन गतिसंज्ञकत्वात् प्रादिसमासः । शोभनवाचिनः सुशब्दस्य तु ‘ विशेषणं विशेष्येण बहुलम् ’ ( पा. सू. २. १. ५७ ) इति समिद्धपदेन कर्मधारयसमासः । सुशब्दः प्रातिपदिकस्वरेणोदात्तः । ‘ कर्मधारयेऽनिष्ठा ’ ( पा. सू. ६. २. ४६ ) इति पूर्वपदप्रकृतिस्वरत्वम् । क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात् प्रादिसमासे ‘ गतिरनन्तरः ’ ( पा. सू. ६. २. ४९ ) इति समो यदु-

१. च-छ-त-फ-श–अण् । २. च-छ-फ-श–सुसमिद्ध । ३. ठ–सुसमिद्धः सुसमिद्ध ।

दात्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्थास्यतीति सुशब्दोऽनुदात्तः स्यात्। देवाँ अग्ने। पूर्ववत् रुत्वानुनासिके। हविष्मते। हविरस्यास्तीति मतुप्। 'तसौ मत्वर्थे' (पा. सू. १. ४. १९) इति भत्वेन पदत्वस्य बाधितत्वात् न रुत्वम्। होतःपावकशब्दयोः आमन्त्रितयोः पृथक्पृथगेव क्रियान्वये परस्परमसामर्थ्यात् पराङ्गवद्भावाभावात् न तन्निबन्धनम् ऐकस्वर्यम्। न च द्वितीयस्य आमन्त्रितस्य आष्टमिकनिघातेन ऐकस्वर्यम्; 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा. सू. ८. १. ७२) इति पूर्वस्य अविद्यमानवत्त्वेन पदात् परत्वाभावात् पादादित्वाच्च। परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वे समानमेव अविद्यमानवत्त्वम्। अत एव अविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भावः इति नैकस्वर्यसिद्धिः। अतो होतरिति विशेष्यम्। अतः पुनातीति पावक इत्यवयवप्रसिद्धिस्वीकारेण विशेषणत्वात् होतरिति विशेष्यम्। तच्च सामान्यवचनमिति 'नामन्त्रिते समानाधिकरणे[३]' (पा. सू. ८. १. ७३) इत्यविद्यमानवत्त्वप्रतिषेधात् पदात्परत्वात् अपादादित्वाच्च द्वितीयामन्त्रितस्य आष्टमिकनिघातेन वा पराङ्गवद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः। यक्षि। यजेर्लोटः सिपि 'बहुलं छन्दसि' इति शपो लुक्। व्रश्चादिना षत्वम्। 'षढोः कः सि' (पा. सू. ८. २. ४१) इति कत्वम्। सेर्हिरादेशः छान्दसत्वात् न भवति। सिपः पित्त्वेन अनुदात्तत्वात् धातुस्वर एव शिष्यते। न च 'तिङ्ङतिङः' इति निघातः, पूर्वस्य पावक इति आमन्त्रितस्य अविद्यमानवत्त्वेन पदादपरत्वात्। अत एव तस्य अव्यवधायकत्वेन होतरित्यपेक्ष्य निघातः स्यात् इति चेत्, न। यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेन अविद्यमानवत्त्वात्। ननु 'नामन्त्रिते समानाधिकरणे' इति तस्य निषिद्धम् अविद्यमानवत्त्वम्। न च पावकपदस्य अविद्यमानवत्त्वेन समानाधिकरणपरत्वाभावः। यक्षिपदस्यैव हि कार्यं प्रति पावकपदं पूर्वत्वात् अविद्यमानवत् स्यात्। होतःपदकार्यम् अविद्यमानवत्त्वप्रतिषेधं प्रति तु परत्वात् विद्यमानवदेव इति भवत्येव होतरित्यस्य अविद्यमानवत्त्वप्रतिषेधः। अतस्तस्य विद्यमानवत्त्वात् तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव। सत्यम्। अत्र यक्षीत्यस्य चशब्दपरत्वात् 'चादिषु च' (पा. सू. ८. १. ५८) इति निघातप्रतिषेधो भविष्यतीत्यदोषः॥

**मधु॑मन्तं तनूनपाद्य॒ज्ञं दे॒वेषु॑ नः कवे। अ॒द्या कृ॑णुहि वी॒तये॑॥ २॥**

मधु॑ऽमन्तम्। त॒नू॒ऽन॒पा॒त्। य॒ज्ञम्। दे॒वेषु॑। न॒ः। क॒वे॒। अ॒द्य। कृ॒णु॒हि॒। वी॒तये॑॥ २॥

हे कवे मेधाविन् अग्ने तनूनपात् एतन्नामकस्त्वम् अद्य अस्मिन् दिने नः अस्मदीयं मधुमन्तं रसवन्तं यज्ञं हविः वीतये भक्षणार्थं देवेषु कृणुहि कुरु प्रापय इत्यर्थः॥ मधुमन्तम्। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ. सू. १. १८) इति मन्यतेः उंप्रत्ययो धकारश्चान्तादेशः। 'नित्' इत्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः। तनूनपात्। आमन्त्रितनिघातः। अद्य। 'सद्यः परुत्°' (पा. सू. ५. ३. २२) इत्यादिना अस्मिन् काले इत्यर्थे द्यप्रत्ययान्तो निपातितः। प्रत्ययस्वरेणान्तोदात्तः। 'तद्धितश्चासर्वविभक्तिः' (पा. सू. १. १. ३८) इति अव्ययत्वात् 'अव्ययादाप्सुपः' (पा. सू. २. ४. ८२) इत्युपरि सप्तम्या लुक्। संहितायाम् 'अन्येषामपि दृश्यते' (पा. सू. ६. ३. १३७) इति दीर्घत्वम्। कृणुहि। 'कृवि हिंसाकरणयोश्च'। 'इदितो नुम् धातोः' (पा. सू. ७. १. ५८) इति नुम्। लोटः सेर्हिरादेशः। 'धिन्विकृण्व्योर च' (पा.

---

१. च-छ-°नासिकौ। २. ठ-वह्निनान्वये। ३. ठ-समानाधिकरणे सामान्यवचनम्।

सू. ३. १. ८०) इति शपोऽपवादो विकरण उप्रत्ययः; तत्संनियोगेन[1] वकारस्य अकारः। तस्य 'अतो लोपः' (पा. सू. ६. ४. ४८) इति लोपः। तस्य स्थानिवद्भावात् लघूपधगुणो न भवति। 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा. सू. ६. ४. १०६) इति हेर्लुक् न भवति, 'उतश्च प्रत्ययाच्छन्दो वावचनम्' (पा. सू. ६. ४. १०६. १) इति वचनात्। 'तिङ्ङतिङः' इति निघातः। वीतये। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा. सू. ३. ३. ९६) इति क्तिन् उदात्तः॥

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये। मधुजिह्वं हविष्कृतम्॥ ३॥

नराशंसम्। इह। प्रियम्। अस्मिन्। यज्ञे। उप। ह्वये। मधुऽजिह्वम्। हविःऽकृतम्॥ ३॥

इह देवयजनदेशे अस्मिन् प्रवर्तमाने यज्ञे नराशंसम् एतन्नामकमग्निम् उप ह्वये आह्वयामि। कीदृशम्। प्रियं देवानां प्रीतिहेतुं मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादकजिह्वोपेतं वा। हविष्कृतं हविषो निष्पादकम्॥ नरशब्दो 'नॄ नये' इत्यस्मात् अचन्तः। प्रत्ययस्य चित्त्वात् धातुस्वर एव शिष्यते। शंसन्त्यस्मिन्निति शंसः। 'हलश्च' (पा. सू. ३. ३. १२१) इत्यधिकरणे घञ्। नराणां शंसः इति समासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' (पा. सू. ६. २. १४०) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। अत एव वनस्पत्यादिषु पाठात् नरशब्दस्य दीर्घत्वम्। इह। 'इदमो हः' (पा. सू. ५. ३. ११) इति हप्रत्ययः। 'इदम इश्' (पा. सू. ५. ३. ३) इति इशादेशः। प्रत्ययस्वरः। प्रियम्। प्रीणातीति प्रियः। 'इगुपधज्ञाप्रीकिरः कः' (पा. सू. ३. १. १३५) इति कः। प्रत्ययस्वरः। अस्मिन्। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्। ह्वये। निघातः। मधुजिह्वम्। मधुशब्दस्याद्युदात्तत्वमुक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। हविष्कृतम्। हविष्करोतीति हविष्कृत्। क्विपि ह्रस्वस्य तुक्। 'नित्यं समासेऽनुत्तरपदस्थस्य' (पा. सू. ८. ३. ४५) इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

अग्ने सुखतमे रथे देवाँ ईळित आ वह। असि होता मनुर्हितः॥ ४॥

अग्ने। सुखऽतमे। रथे। देवान्। ईळितः। आ। वह। असि। होता। मनुःऽहितः॥ ४॥

इट्शब्दाभिधेय हे अग्ने ईळितः अस्माभिः स्तुतः सन् सुखतमे अतिशयेन सुखहेतौ कस्मिंश्चित् रथे देवान् स्थापयित्वा कर्मभूमौ आ वह। इट्शब्दाभिधेयत्वमत्र सूचयितुम् ईळित इति विशेषणम्। मनुर्हितः मनुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं होता देवानामाह्वाता असि॥ सुखतमे। सुखमस्मिन्नस्तीति मतुप्। तस्य 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' (पा. सू. ५. २. ९४. ३) इति लुक्। अतिशयेन सुखः सुखतमः। तमपोऽनुदात्तत्वात् प्रातिपदिकस्वरः। रथे। 'रमु क्रीडायाम्'। रमन्तेऽस्मिन्निति रथः। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ. सू. २. १५९) इति क्थन्। 'एकाच उपदेशेऽनुदात्तात्' (पा. सू. ७. २. १०) इति इट्प्रतिषेधः। 'अनुदात्तोपदेश' (पा. सू. ६. ४. ३७) इत्यादिना मकारलोपः। नित्त्वादाद्युदात्तत्वम्। ईळितः। 'ईड स्तुतौ'। 'निष्ठा' (पा. सू. ३. २. १०२) इति क्तः। इडागमः। तस्य 'आगमा अनुदात्ताः'

---

१. ग-च-ठ-त-फ-रम्श—तत्संनियोगेन च।

(पा. म.३.१.३.७) इत्यनुदात्तः । प्रत्ययस्वरः । देवान् इति नकारस्य संहितायां 'दीर्घादटि समानपादे' (पा. सू. ८. ३. ९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा. सू. ८. ३. ३) इति आकारस्य अनुनासिकभावः । 'भोभगो°' (पा. सू. ८. ३. १७) इत्यादिना रोर्यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा. सू. ८. ३. १९) इति लोपः । तस्यासिद्धत्वात् 'आद्गुणः' न भवति । आ । निपातत्वादाद्युदात्तः । असि । 'अस भुवि' । लटः सिप् । 'अदिप्रभृतिभ्यः शपः' (पा. सू. २. ४. ७२) इति शपो लुक् । 'तासस्त्योर्लोपः' (पा. सू. ७. ४. ५०) इति सकारस्य लोपः। होता । ताच्छील्ये तृन् । सौ 'ऋदुशन°' (पा. सू. ७. १. ९४) इत्यादिना अनङ् । ङित्त्वादन्तादेशः । 'अप्तृन्°' (पा. सू. ६. ४. ११) इत्यादिना उपधादीर्घः । हल्ङ्यादिलोपनलोपौ । नित्त्वादाद्युदात्तः । मनुर्हितः । मन्यते इति मनुः । 'मन ज्ञाने' । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ. सू. १. १०) इति उप्रत्ययः । तत्र 'नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः । हितः । दधातेः 'निष्ठा' इति कर्मणि क्तः । 'दधातेर्हिः' (पा. सू. ७. ४. ४२) इति हिरादेशः । मनुना हितः इति समासे तृतीयायाः स्थाने 'सुपां सुलुक्°' (पा. सू. ७. १. ३९) इत्यादिना सु इति आदेशः । तस्य रुत्वम् । लुगभावश्छान्दसः । 'तृतीया कर्मणि' (पा. सू. ६. २. ४८) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥ ५ ॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः । यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

हे मनीषिणः बुद्धिमन्त ऋत्विजः बर्हिः दर्भं स्तृणीत वेदेरुपरि आच्छादयत । अत्रापि बर्हिर्नामकोऽग्निः सूच्यते । कीदृशं बर्हिरास्तरणीयम् । आनुषक् अनुक्रमेण सक्तं परस्परं संबद्धं घृतपृष्ठं घृतपूर्णानां स्रुचां बर्हिषि आसादितत्वात् घृतं पृष्ठे उपरिभागे यस्य बर्हिषः तत् घृतपृष्ठम् । यत्र यस्मिन् बर्हिषि अमृतस्य अमृतसमानस्य घृतस्य चक्षणं दर्शनं भवति । यद्वा । मरणरहितस्य देवस्य बर्हिर्नामकस्य अग्नेर्दर्शनं भवति तद्बर्हिः स्तृणीत इति पूर्वत्रान्वयः ॥ स्तृणीत । 'स्तृञ् आच्छादने'। लोण्मध्यमपुरुषस्य बहुवचनम् । 'लोटो लङ्वत्' (पा. सू. ३. ४. ८५) । 'तस्थस्थमिपाम्°' (पा. सू. ३. ४. १०१) इति थस्य तादेशः । 'क्र्यादिभ्यः श्ना' । 'ई हल्यघोः' (पा. सू. ६. ४. ११३) इति ईत्वम् । 'ऋवर्णाच्चेति वक्तव्यम्' (पा. सू. ८.४.१.१) इति णत्वम् । 'प्वादीनां ह्रस्वः' (पा. सू. ७. ३. ८०) इति धातोर्ह्रस्वत्वम् । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः । अतः तिङ एव प्रत्ययस्वरेणोदात्तत्वम् । बर्हिः । 'बृंहेर्नलोपश्च' (उ. सू. २. २६६) इति इस्प्रत्ययनलोपौ । प्रत्ययस्वरः । आनुषक् । आ समन्तात् अनुषजति इति आनुषक् । 'षञ्ज सङ्गे' । 'धात्वादेः षः सः' । 'क्विप् च' (पा. सू. ३. २. ७६) इति क्विप् । 'अनिदिताम्°' (पा. सू. ६. ४. २४) इति लोपः । आङन्वोरुपसर्गयोः प्राक्प्रयोगः । गतिसमासः । 'उपसर्गात्सुनोति°' इत्यादिना षत्वम् । घृतपृष्ठम् । 'घृ क्षरणदीप्त्योः' । 'निष्ठा' (पा. सू. ३. २. १०२) इति क्तः । प्रत्ययस्वरेणोदात्तः । घृतयुक्तं पृष्ठम् अस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनीषिणः । आमन्त्रितनिघातः । अमृतस्य । न विद्यते मृतं मरणम् अस्मिन्निति अमृतम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा 'नञ्सुभ्याम्' (पा. सू. ६. २. १७२) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' (पा. सू. ६. २. ११६) इत्युत्तरपदाद्युदात्तत्वम् । चक्षणम् । 'चक्षिङ् व्यक्तायां

१. च-छ-फ-श-नलोपः; त-नो लोपः ।

वाचि ’। वागभिव्यक्तिवाची धातुः इह अभिव्यक्तिमात्रं लक्षयति। ‘ ल्युट् च ’ ( पा. सू. ३. ३. ११५ ) इति भावे ल्युट्। योरनादेशः। तस्य आर्धधातुकत्वात् ‘ चक्षिङः ख्याञ् ’ ( पा. सू. २. ४. ५४ ) इति ख्याञादेशे प्राप्ते ‘ असनयोश्च ’ ( पा. सू. २. ४. ५४. १० ) इति प्रतिषेधः॥

वि श्र॑यन्तामृता॒वृधो॒ द्वारो॑ दे॒वीर॑स॒श्चतः॑। अ॒द्या नू॒नं च॒ यष्ट॑वे॥ ६॥

वि। श्र॒यन्ता॑म्। ऋ॒त॒ऽवृधः॑। द्वारः॑। दे॒वीः। अ॒स॒श्चतः॑। अ॒द्य। नू॒नम्। च॒। यष्ट॑वे॥६॥

ᐯद्वारः यज्ञशालाद्वाराणि ᐯवि ᐯश्रयन्तां कपाटोद्घाटनेन विश्रियन्ताम्। कीदृश्यः। ᐯऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यः ᐯदेवीः द्योतमानाः ᐯअसश्चतः असश्चन्त्यः उद्घाटनेन प्रवेष्टृपुरुषसङ्ग-रहिताः। यद्वा। असश्चतः प्रवेष्टृपुरुषरहितान् यज्ञगृहान् तत्पुरुषप्रवेशाय द्वाराभिमानिन्य एतत्संज्ञिका अग्निविशेषमूर्तयः वि श्रयन्तां विशेषेण सेवन्ताम्। द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजन-मिति तदुच्यते। ᐯअद्य अस्मिन् दिने ᐯनूनम् अवश्यं ᐯयष्टवे यष्टुम्। चकारात् दिनान्तरेष्वपि इति द्रष्टव्यम्॥ ऋतावृधः। ऋतं वर्धयन्तीत्यर्थे वृधेः अन्तर्भावितण्यर्थात् ‘ क्विप् च ’ इति क्विप्। उपपद-समासः। ‘ अन्येषामपि दृश्यते ’ ( पा. सू. ६. ३. १३७ ) इति पूर्वपदस्य दीर्घत्वम्। वृधिः धातु-स्वरेणोदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। देवीः। ‘ वा छन्दसि ’ ( पा. सू. ३. ४. ८८ ) इति पूर्वसवर्णदीर्घत्वम्। देवशब्दात् पचाद्यजन्तात् ‘ पुंयोगादाख्यायाम् ’ ( पा. सू. ४. १. ४८ ) इति ङीप्। प्रत्ययस्वरेणोदात्तः। विभक्त्या सह ‘ एकादेश उदात्तेनोदात्तः ’ ( पा. सू. ८. २. ५ ) इत्युदात्तः। असश्चतः। ‘ ग्लुञ्चु षस्ज गतौ ’। जकारस्य व्यत्ययेन चकारः। लटः शत्रादेशः। द्वाराभावे न विद्यन्ते सश्चन्तो गच्छन्तो येषु प्राग्वंशादिषु तान् असश्चतः। अद्य। ‘ सद्यः-परुत्° ’ ( पा. सू. ५. ३. २२ ) इत्यादिना द्यप्रत्ययान्तो निपातितः। ‘ तद्धितश्चासर्वविभक्तिः ’ ( पा. सू. १. १. ३८ ) इति अव्ययसंज्ञकत्वात् परस्या विभक्तेर्लुक्। प्रत्ययस्वरेणान्तोदात्तः। संहितायाम् ‘ अन्येषामपि दृश्यते ’ इति दीर्घत्वम्। नूनम्। ‘ एवमादीनामन्तः ’ ( फि. सू. ८२ ) इत्यन्तोदात्त-त्वम्। यष्टवे। यजेः ‘ तुमर्थे सेसेन्° ’ ( पा. सू. ३. ४. ९ ) इत्यादिना तवेन्प्रत्ययः। व्रश्चादिना षत्वम्। नित्त्वादाद्युदात्तः॥ ॥ २४॥

नक्तो॒षासा॑ सु॒पेश॑सा॒स्मिन्य॒ज्ञ उप॑ ह्वये। इ॒दं नो॑ ब॒र्हिरा॒सदे॑॥ ७॥

नक्तो॒षसा॑। सु॒ऽपेश॑सा। अ॒स्मिन्। य॒ज्ञे। उप॑। ह्व॒ये॒। इ॒दम्। नः॒। ब॒र्हिः। आ॒ऽसदे॑॥७॥

नक्तशब्द उषःशब्दश्च लोके कालविशेषवाचिनौ। इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते। ᐯनक्तोषासा नक्तोषोनामिके वह्निमूर्ती ᐯअस्मिन् प्रवर्तमाने यज्ञकर्मणि ᐯउप ᐯह्वये आह्वयामि। किमर्थम्। ᐯनः अस्मदीयम् ᐯइदं वेद्यामास्तीर्णं ᐯबर्हिः दर्भम् ᐯआसदे आसत्तुं प्राप्तुम्। कीदृश्यौ। ᐯसुपेशसा शोभनरूपयुक्ते॥ नक्तं च उषाश्च नक्तोषसा। द्वितीयाद्विवचनस्य ‘ सुपां सुलुक्° ’ ( पा. सू. ७. १. ३९ ) इति आकारः। मलोप उपधादीर्घश्छान्दसौ। ‘ देवताद्वन्द्वे च ’ ( पा. सू. ६. २. १४१ ) इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम्। सुपेशसा। शोभनं पेशो रूपं ययोस्ते। पूर्ववत् आकारः। पेशः-शब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ ‘ नञ्सुभ्याम् ’ ( पा. सू. ६. २. १७२ ) इत्युत्तरपदा-

१. त-र-श-प्रविष्टपुरुष°।

न्तोदात्तत्वस्य अपवादत्वेन 'आद्युदात्तं द्व्यच्छन्दसि' (पा. सू. ६. २. ११९) इत्युत्तरपदाद्युदात्तत्वम्। अस्मिन्। 'ऊडिदम्°' (पा. सू. ६. १. १७१) इत्यादिना विभक्तिरुदात्ता। आसदे। 'षद्लृ विशरणगत्यवसादनेषु'। 'धात्वादेः षः सः'। आङ्पूर्वात् अस्मात् संपदादिभ्यो भावे क्विप् (पा. सू. ३. ३. १०८. ९)। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी। यज्ञं नो यक्षतामिमम्॥ ८॥

ता। सुऽजिह्वौ। उप। ह्वये। होतारा। दैव्या। कवी इति। यज्ञम्। नः। यक्षताम्। इमम्॥८॥

तच्छब्दोऽत्र सर्वनामत्वात् प्रसिद्धार्थवाची। ᵛता तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी ᵛउप ᵛह्वये आह्वयामि। ᵛनः अस्मदीयम् ᵛइमं ᵛयज्ञं ᵛयक्षतां तौ उभौ यजताम् अनुतिष्ठताम्। कीदृशौ। ᵛसुजिह्वौ शोभनजिह्वोपेतौ प्रियवचनौ शोभनज्वालौ वा इत्यर्थः। ᵛहोतारा होमनिष्पादकौ ᵛदैव्या दैव्यौ देवसंबन्धिनौ। अत एव इमौ अग्नी दैव्यहोतृनामकौ ᵛकवी मेधाविनौ॥ ता तौ। द्वितीयाद्विवचनस्य 'सुपां सुलुक्°' इति आकारः। 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः। सुजिह्वौ। शोभना जिह्वा ययोस्तौ। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। पूर्ववत् एकादेशस्वरः। संहितायाम् आवादेशः। वस्य 'लोपः शाकल्यस्य' (पा. सू ८. ३. १९) इति लोपः। होतारा। जुहोतेस्तृन्। द्विवचने 'ऋतो ङि°' (पा. सू. ७. ३. ११०) इति गुणः। अप्तृन् इति उपधादीर्घः। पूर्ववत् आकारः। नित्स्वादाद्युदात्तः। दैव्या। देवानामिमौ। 'देवाद्यञञौ' (पा. सू. ४. १. ८५. ३) इति यञ्। 'यस्येति च' (पा. सू. ६. ४. १४८) इति अकारलोपः। 'ञ्नित्यादिर्नित्यम्' (पा. सू. ६. १. १९७) इत्याद्युदात्तः। पूर्ववत् आकारः। यक्षतां यजताम्। लोटि शपि परतः 'सिब्बहुलं लेटि' (पा. सू. ३. १. ३४) इति बहुलग्रहणात् सिप्। कुत्वचर्त्वषत्वानि।

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः। बर्हिः सीदन्त्वस्रिधः॥ ९॥

इळा। सरस्वती। मही। तिस्रः। देवीः। मयःऽभुवः। बर्हिः। सीदन्तु। अस्रिधः॥९॥

अत्र महीशब्दो महत्त्वगुणयुक्तां भारतीमाचष्टे; अन्येषु आप्रीसूक्तेषु सदृशेषु इळा सरस्वती भारती इति आम्नातत्वात्। इळादिशब्दाभिधेया वह्निमूर्तयः ᵛतिस्रः ᵛदेवीः दीप्यमानाः ᵛबर्हिः वेद्यामास्तीर्णं ᵛसीदन्तु प्राप्नुवन्तु। कीदृश्यः। ᵛमयोभुवः सुखोत्पादिकाः ᵛअस्रिधः शोषेण क्षयेण वा रहिताः॥ इळा। 'ईड स्तुतौ'। छान्दसं ह्रस्वत्वम्। क्विप्। धातुस्वरः। 'टापं चापि हलन्तानां यथा वाचा दिशा निशा' (कौ. २. ४. ८२) इति टाप्। सरस्वती। सरः असुनन्तो नित्स्वादाद्युदात्तः। तदस्यास्तीति मतुप्। अदुपधत्वात् वत्वम्। 'तसौ मत्वर्थे' (पा. सू. १. ४. १९) इति भत्वेन पदत्वस्य बाधितत्वात् रुत्वाद्यभावः। 'उगितश्च' (पा. सू. ६. ३. ४५) इति ङीप्। मतुब्ङीपौ पित्त्वादनुदात्तौ। मही। महतीशब्दे तकारलोपः छान्दसः। 'यस्येति च' (पा. सू. ६. ४. १४८) इति अकारलोपः। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। तिस्रः। त्रिशब्दात् जसि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (पा. सू. ७. २. ९९) इति तिस्रादेशः। 'अचि र ऋतः' (पा. सू. ७. २. १००) इति रेफादेशः। 'तिसृभ्यो जसः' (पा. सू. ६. १. १६६) इति जस उदात्तत्वम्। देवीः। देवानां पत्न्यो देव्यः। 'पुंयोगादाख्यायाम्' (पा. सू. ४. १. ४८) इति ङीष्। 'यस्येति च' इति अकारलोपः। प्रत्ययस्वरेण ङीष उदात्तत्वम्। जसि 'दीर्घाज्जसि च' (पा. सू. ६. १. १०५) इति

निषिद्धं दीर्घत्वं ' वा छन्दसि ' ( पा. सू. ६. १. १०६ ) इति पक्षेऽभ्यनुज्ञायते । मयोभुवः । ' मीञ् हिंसायाम् ' । हिनस्ति दुःखमिति सुखं मयः । तद्भावयन्तीति मयोभुवः । अन्तर्भावितण्यर्थात् भुवः क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । बर्हिः । ' बृंहेर्नलोपश्च ' ( उ. सू. २. २६६ ) इति इसिप्रत्ययः । प्रत्ययस्वरः । सीदन्तु । ' षद्ऌ विशरणादौ ' । ' पाघ्रा० ' ( पा. सू. ७. ३. ७८ ) इत्यादिना सीदादेशः । अस्रिधः । स्रिधेः हिंसार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः । पूर्वपदप्रकृतिस्वरं बाधित्वा ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् ॥

पत्नीसंयाजे त्वष्टुः पुरोनुवाक्या ' इह त्वष्टारमग्रियम् ' इति । ' संशुवाकाय संप्रेषितः ' इति खण्डे सूत्रितं—' सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियम् ' ( आश्व. श्रौ. १. १० ) इति ॥

इह त्वष्टा॑रमग्रि॒यं वि॒श्वरू॑प॒मुप॑ ह्वये । अ॒स्माक॑मस्तु॒ केव॑लः ॥ १० ॥

इ॒ह । त्वष्टा॑रम् । अ॒ग्रि॒यम् । वि॒श्वऽरू॑पम् । उप॑ । ह्व॒ये॒ । अ॒स्माक॑म् । अ॒स्तु॒ । केव॑लः ॥१०॥

त्वष्टारं त्वष्टृनामकमग्निम् इह कर्मणि उप ह्वये । कीदृशम् । अग्रियं श्रेष्ठं विश्वरूपं बहुविधरूपोपेतम् । सः अस्माकं केवलः असाधारणः अस्तु । इतरयजमानेभ्योऽप्यधिकमनुग्रहं करोत्वित्यर्थः ॥ त्वष्टारम् । ' तक्षू त्वक्षू तनूकरणे ' । तृन् । ' स्वरतिसूतिसूयतिधूञूदितो वा ' (पा. सू. ७. २. ४४ ) इति इडभावपक्षे ' स्कोः संयोगाद्योरन्ते च ' ( पा. सू. ८. २. २९ ) इति ककारलोपः । ष्टुत्वम् । द्वितीयैकवचने ' ऋतो ङिसर्वनामस्थानयोः ' ( पा. सू. ७. ३. ११० ) इति गुणे ' अप्तृन्० ' ( पा. सू. ६. ४. ११ ) इत्यादिना उपधाया दीर्घः । तृनो नित्वादाद्युदात्तत्वम् । अग्रियम् । ' अग्रात् ' ( पा. सू. ४. ४. ११६ ) इत्यनुवृत्तौ ' घच्छौ च ' ( पा. सू. ४. ४. ११७ ) इति घच् । ' आयनेयी० ' ( पा. सू. ७. १. २ ) इत्यादिना घकारस्य इयादेशः । ' यस्य० ' ( पा. सू. ६. ४. १४८ ) इति लोपः । ' आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ' ( पा. सू. ७. १. २. १ ) इति उपदेशिवद्भावात् प्रत्ययाद्युदात्तत्वात् प्रचश्चित्वादन्तोदात्तत्वम् । विश्वरूपम् । विश्वानि रूपाणि त्वष्टुत्पन्नत्वेन यस्य । ' त्वष्टा वै पशूनां मिथुनानां रूपकृत ' ( तै. सं. ६. १. ८. ५ ) इति श्रुतेः । विश्वशब्दस्याद्युदात्तत्वात् पूर्वपदप्रकृतिस्वरत्वे प्राप्ते ' बहुव्रीहौ विश्वं संज्ञायाम् ' ( पा. सू. ६. २. १०६ ) इति पूर्वपदान्तोदात्तत्वम् । अस्माकम् । ' असु क्षेपणे ' । ' युष्यसिभ्यां मदिक् ' ( उ. सू. १. १३६ ) । प्रत्ययस्वरेणान्तोदात्तः । षष्ठीबहुवचनम् आम् । अत्र परमपि ' योऽचि ' ( पा. सू. ७. २. ८९ ) इति यत्वं बाधित्वा नित्यत्वात् प्रतिपदविधित्वाच्च आम आकमादेशे (पा. सू. ७. १. ३३ ) कृते ' °अनादेशे ' ( पा. सू. ७. २. ८६ ) इति निषेधेन यत्वाभावात् ' शेषे लोपः ' ( पा. सू. ७. २. ९० ) इति दकारलोपे अकारान्तत्वेन पश्चात् प्राप्तस्यापि सुटः ( पा. सू. ७. १. ५२ ) साम इति निर्देशे स्थानिन्यन्तर्भावेन निवृत्तिः । एवमर्थे एव हि साम इति ससुट्निर्देशः । केवलः । वृषादेराकृतिगणत्वादाद्युदात्तः ॥

अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः । प्र दा॒तुर॑स्तु॒ चेत॑नम् ॥ ११ ॥

अव॑ । सृ॒ज॒ । व॒न॒स्प॒ते॒ । देव॑ । दे॒वेभ्यः॑ । ह॒विः । प्र । दा॒तुः । अ॒स्तु॒ । चेत॑नम् ॥ ११ ॥

---

१. त-श-यस्येति च । इति अलोपः । २. त-फ-श-साम आकमादेशे ।

हे ᵛवनस्पते एतन्नामकाग्ने ᵛदेव हविर्भुग्भ्यः ᵛदेवेभ्यः अस्मदीयं ᵛहविः ᵛअव ᵛसृज समर्पय इत्यर्थः । ᵛप्र ᵛदातुः यजमानस्य ᵛचेतनं परलोकविषयं विज्ञानं त्वत्प्रसादात् ᵛअस्तु ॥ वनस्पते । आमन्त्रितनिघातः । देव । पादादित्वात् न निघातः । पाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । हविः । इसः प्रत्ययस्वरः । दातुः । ददातेः तृच् । 'चितः' इत्यन्तोदात्तः । ङसि 'ऋत उत्' (पा. सू. ६. १. १११) इति उत्वम् एकादेशो रपरत्वं च । 'रात्सस्य' (पा. सू. ८. २. २४) इति सलोपः । एकादेशस्वरेण उकार उदात्तः । चेतनम् । 'चिती संज्ञाने' । करणे ल्युट् । योरनादेशः लघूपधगुणः । 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे । तत्र॑ दे॒वाँ उप॑ ह्वये ॥ १२ ॥

स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न । इन्द्रा॑य । यज्व॑नः । गृ॒हे । तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये ॥ १२ ॥

स्वाहाशब्दो हविष्प्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति । तदग्निसंपादितं ᵛयज्ञम् ᵛइन्द्राय इन्द्रतुष्ट्यर्थं ᵛयज्वनः यजमानस्य ᵛगृहे ऋत्विजः ᵛकृणोतन कुरुत । ᵛतत्र यज्ञे ᵛदेवान् ᵛउप ᵛह्वये ॥ कृणोतन । 'कृवि हिंसाकरणयोश्च' । इदित्वात् नुम् । लोण्मध्यमबहुवचनस्य 'तस्थस्थमिपाम्°' (पा. सू. ३. ४. १०१) इति तादेशः । 'तप्तनप्तनथनाश्च' (पा. सू. ७. १. ४५) इति तनबादेशः । शपि प्राप्ते. 'धिन्विकृण्व्योर च' (पा. सू. ३. १. ८०) इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः । तस्य 'अतो लोपः' (पा. सू. ६. ४. ४८) इति लोपः । तस्य 'अचः परस्मिन्°' (पा. सू. १. १. ५७) इति स्थानिवद्भावात् ऋकारस्य लघूपधगुणो न भवति । तनपः पित्त्वेन अङित्वात् उकारस्य गुणः । इन्द्राय । 'ऋज्रेन्द्र°' (उ. सू. २. १८६) इत्यादिना रन् । नित्त्वादाद्युदात्तः । यज्वनः । 'यज देवपूजासंगतिकरणदानेषु' । 'सुयजोर्ङ्वनिप्' (पा. सू. ३. २. १०३) । ङसि भसंज्ञायाम् अल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' (पा. सू. ६. ४. १३७) इति निषेधः । वनिपः पित्त्वेन धातुस्वर एव शिष्यते । गृहे । 'ग्रह उपादाने' । 'गेहे कः' (पा. सू. ३. १. १४४) इति कप्रत्ययः । 'ग्रहिज्या°' (पा. सू. ६. १. १६) इत्यादिना संप्रसारणम् । परपूर्वत्वम् । प्रत्ययस्वरः । तत्र । त्रल् । 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । 'देवाँ उप' इत्यत्र संहितायां 'दीर्घादटि°' (पा. सू. ८. ३. ९) इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' (पा. सू. ८. ३. ३) इति आकारस्य अनुनासिकादेशः । 'भोभगो°' (पा. सू. ८. ३. १७) इति यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा. सू. ८. ३. १९) इति लोपः ॥ ॥ २५ ॥

'ऐभिरग्ने' इत्यादिकस्य द्वादशर्चस्य तृतीयसूक्तस्य ऋषिच्छन्दसी पूर्ववत् । तच्च सूक्तं बहुदेवताकम् । अत एवानुक्रम्यते–'ऐभिर्वैश्वदेवम्' इति । विनियोगस्तु–व्यूढद्वादशाहस्य प्रथमे छन्दोमे तृतीयसवने वैश्वदेवशस्त्रे 'ऐभिरग्ने दुवो गिरः' इति सूक्तम् । तथा च सूत्रितम्–'अथ छन्दोमाः समुद्रादूर्मिः' इत्युपक्रम्य 'ऐभिरग्ने दुवो गिर इति वैश्वदेवम्' (आश्व. श्रौ. ८. ९) इति ॥

ऐभि॑रग्ने॒ दुवो॒ गिरो॒ विश्वे॑भि॒ः सोम॑पीतये । दे॒वेभि॑र्याहि॒ यक्षि॑ च ॥ १ ॥

आ । ए॒भिः॒ । अ॒ग्ने॒ । दुवः॑ । गिरः॑ । विश्वे॑भिः । सोम॑ऽपीतये । दे॒वेभिः॑ । या॒हि॒ । यक्षि॑ । च॒ ॥ १ ॥

हे ᵛअग्ने ᵛएभिः अस्मिन् यज्ञे संभावितैः ᵛविश्वेभिः ᵛदेवेभिः सर्वैर्देवैः सह ᵛसोमपीतये सोमपानोपेतयागार्थं ᵛदुवः अस्मदीयां परिचर्यां ᵛगिरः अस्मदीयाः स्तुतीश्च प्रति ᵛआ ᵛयाहि आगच्छ । ᵛयक्षि

ᵛच आगत्य यज च ॥ एभिः । पूर्वनिर्दिष्टानां देवानाम् इदमा परामर्शात् ‘इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ’ इति अश् अनुदात्तः । शित्वात् सर्वादेशः । ‘नेदमदसोरकोः’ (पा. सू. ७. १. ११) इति भिस ऐसादेशाभावः । विभक्तिरनुदात्तैव । न च ‘ऊडिदम्°’ इत्यादिना विभक्तेरुदात्तत्वं तत्र ‘अन्तोदात्तात्’ (पा. सू. ६. १. १६९) इत्यधिकारात् । दुवः । ‘नब्विषयस्यानिसन्तस्य’ (फि. सू. २६) इत्याद्युदात्तत्वम् । विश्वेभिः । विश्वशब्दो विशेः क्वन्नन्तः नित्वादाद्युदात्तः । ‘बहुलं छन्दसि’ (पा. सू. ७. १. १०) इति भिस ऐस् न भवति । ‘बहुवचने झल्येत्’ (पा. सू. ७. ३. १०३) इति एत्वम् । सोमपीतये । सोमशब्दः ‘अर्तिस्तुसु°’ (उ. सू. १. १३७) इत्यादिना मनन्तो नित्वादाद्युदात्तः । सोमस्य पीतिर्यस्मिन् यागे स सोमपीतिः । तस्मै । तादर्थ्ये चतुर्थी । देवेभिः । ‘बहुलं छन्दसि’ इति भिस ऐसादेशाभावः । ‘बहुवचने झल्येत्’ इति एत्वम् । यक्षि । यजेर्लोटः सिप् । ‘बहुलं छन्दसि’ (पा. सू. २. ४. ७३) इति शपो लुक् । व्रश्चादिना षत्वम् । ‘षढोः कः सि’ (पा. सू. ८. २. ४१) इति कत्वम् । सेर्हिरादेशश्छान्दसत्वात् न भवति । सिपः पित्त्वेनानुदात्तत्वात् धातुस्वर एव ॥

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आ गहि ॥ २ ॥

आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः । देवेभिः । अग्ने । आ । गहि ॥२॥

हे ᵛविप्र मेधाविन् अग्ने ᵛकण्वाः मेधाविन ऋत्विजः ᵛत्वा यज्ञनिष्पादकं त्वाम् ᵛआ ᵛअहूषत आह्वयन्ति । तथा ᵛते ᵛधियः त्वदीयानि कर्माणि ᵛगृणन्ति कथयन्ति । ततो हे ᵛअग्ने ᵛदेवेभिः देवैः सह ᵛआ ᵛगहि आगच्छ । ‘विप्रः’ इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु ‘कण्वः ऋभुः’ (नि. ३. १५. ७) इति पठितम् ॥ त्वा । ‘त्वामौ द्वितीयायाः’ (पा. सू. ८. १. २३) इति त्वादेशः सर्वानुदात्तः । कण्वाः । कण शब्दार्थः । ‘अशिप्रुषिलटिकणिश्वटि’ (उ. सू. १. १४९) इत्यादिना क्वन् । नित्वादाद्युदात्तः । अहूषत । ‘ह्वेञ् स्पर्धायां शब्दे च’ । ‘छन्दसि लुङ्लङ्लिटः’ इति वर्तमाने लुङ् । ञित्वादात्मनेपदं झः । ‘आत्मनेपदेष्वनतः’ (पा. सू. ७. १. ५) इति अदादेशः । च्लेः सिच् । ‘एकाचः°’ (पा. सू. ७. २. १०) इति इट्प्रतिषेधः । ‘बहुलं छन्दसि’ इति संप्रसारणं परपूर्वत्वम् । ‘हलः’ (पा. सू. ६. ४. २) इति दीर्घत्वम् । ‘आदेशप्रत्यययोः’ (पा. सू. ८. ३. ५९) इति षत्वम् । छान्दसत्वात् ऊकारस्य न गुणः । अडागमः । गृणन्ति । ‘गॄ शब्दे’ । लट् । झि । ‘झोऽन्तः’ । ‘क्र्यादिभ्यः श्ना’ । ‘प्वादीनां ह्रस्वः’ (पा. सू. ७. ३. ८०) इति धातोर्ह्रस्वत्वम् । ‘श्नाभ्यस्तयोरातः’ (पा. सू. ६. ४. ११२) इति आकारलोपः । ‘ऋवर्णाच्चेति वक्तव्यम्’ (का. ८. ४. १. १) इति णत्वम् । तिङः स्वर एव शिष्यते । विप्र । आमन्त्रितनिघातः । ते । ‘अनुदात्तम्’ इत्यनुवृत्तौ ‘तेमयावेकवचनस्य’ (पा. सू. ८. १. २२) इति षष्ठ्याः ते इति आदेशः । देवेभिः । छान्दस ऐसभावः । गहि । ‘गम्लृ सृप्लृ गतौ’ । लोटः सिप् । ‘सेर्ह्यपिच्च’ । ‘कर्तरि शप्’ । तस्य ‘बहुलं छन्दसि’ इति लुक् । ‘अनुदात्तोपदेश°’ (पा. सू. ६. ४. ३७) इत्यादिना मकारलोपः । तस्य ‘असिद्धवदत्राभात्’ (पा. सू. ६. ४. २२) इति असिद्धत्वात् ‘अतो हेः’ (पा. सू. ६. ४. १०५) इति हेर्लुक् न भवति ॥

---

१. त.श–ह्रस्य.

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान्मारुतं गणम् ॥ ३ ॥

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ।

आदित्यान् । मारुतम् । गणम् ॥ ३ ॥

इन्द्रादिदेवान् मारुतं मरुतां वायूनां संबन्धिनं गणं च हे अग्ने यक्षि इति पदद्वयमनुवर्तते ॥ इन्द्रश्च वायुश्च इन्द्रवायू । ‘ देवताद्वन्द्वे च ’ ( पा. सू. ६. ३. २६ ) इति प्राप्तस्य आनङः ‘ उभयत्र वायोः प्रतिषेधो वक्तव्यः ’ ( पा. सू. ६. ३. २६. १ ) इति प्रतिषेधः । ‘ देवताद्वन्द्वे च ’ ( पा. सू. ६. २. १४१ ) इति प्राप्तस्योभयपदप्रकृतिस्वरस्य ‘ नोत्तरपदेऽनुदात्तादौ° ’ ( पा. सू. ६. २. १४२ ) इति निषेधः । समासान्तोदात्तत्वमेव । बृहस्पतिम् । ‘ तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट् तलोपो वक्तव्यः ’ ( पा. म. ६. १. १५७ ) इति तलोपः सुडागमश्च । बृहच्छब्दमाद्युदात्तं केचित् वर्णयन्तीति वामनः । ‘ पा रक्षणे ’ । पातीति पतिः । ‘ पातेर्डतिः ’ ( उ. सू. ४. ४९७ ) । प्रत्ययस्वरेणाद्युदात्तः । समासे ‘ उभे वनस्पत्यादिषु युगपत् ’ ( पा. सू. ६. २. १४० ) इति उभयपदप्रकृतिस्वरत्वम् । मित्रा । द्वितीयायाः ‘ सुपां सुलुक्° ’ ( पा. सू. ७. १. ३९ ) इत्यादिना विभक्तेः आजादेशः । आदित्यान् । अदितेरपत्यानि आदित्याः । ‘दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः’ ( पा. सू. ४. १. ८५ ) । प्रत्ययस्वरः । मारुतम् । मरुतां विकारः । ‘अनुदात्तादेश्च’ ( पा. सू. ४. ३. १४० ) इति अञ् । ञित्त्वादाद्युदात्तः ॥

प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः । द्रप्सा मध्वश्चमूषदः ॥ ४ ॥

प्र । वः । भ्रियन्ते । इन्दवः । मत्सराः । मादयिष्णवः । द्रप्साः । मध्वः । चमूऽसदः ॥ ४ ॥

हे इन्द्रादिदेवाः वः युष्मदर्थम् इन्दवः सोमाः प्र भ्रियन्ते प्रकर्षेण संपाद्यन्ते । कीदृशाः । मत्सराः तृप्तिकराः । ‘ मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ’ ( निरु. २. ५ ) इति यास्कः । मादयिष्णवः हर्षहेतवः द्रप्साः बिन्दुरूपाः मध्वः मधुराः चमूषदः चमूषु चमसादिपात्रेष्ववस्थिताः ॥ प्र । ‘ व्यवहिताश्च ’ ( पा. सू. १. ४. ८२ ) इति व्यवहितप्रयोगः । भ्रियन्ते । भृञो यकि ‘ रिङ् शयग्लिङ्क्षु ’ ( पा. सू. ७. ४. २८ ) इति रिङादेशः । हृञो वा । ‘ हृग्रहोर्भश्छन्दसि ’ ( पा. सू. ८. २. ३२. १ ) इति हकारस्य भकारः । इन्दवः । ‘ उन्दी क्लेदने ’। उन्दन्ति पात्राणीति । ‘ नित् ’ इत्यनुवृत्तौ ‘ उन्देरिच्चादेः ’ ( उ. सू. १. १२ ) इति उप्रत्ययः आदेः इकारश्च । नित्त्वादाद्युदात्तः। मत्सराः । ‘ मद तृप्तियोगे ’ । ‘ चित् ’ इत्यनुवृत्तौ ‘ कृधूमदिभ्यः कित् ’ ( उ. सू. ३. ३५३ ) इति सरप्रत्ययः । ‘ तितुत्रतथसिसुसरकसेषु च ’ ( पा. सू. ७. २. ९ ) इति इट्प्रतिषेधः । चित्त्वादन्तोदात्तः । मादयिष्णवः । ‘ मदी हर्षग्लेपनयोः ’ । मदेर्ण्यन्तात् ‘ णेश्छन्दसि ’ ( पा. सू. ३. २. १३७ ) इति इष्णुच् । ‘ णेरनिटि ’ ( पा. सू. ६. ४. ५१ ) इति णिलोपे प्राप्ते ‘ अयामन्ताल्वाय्येत्न्विष्णुषु ’ ( पा. सू. ६. ४. ५५ ) इति अयादेशः । चित्त्वादन्तोदात्तः । मध्वः । मधुशब्द आद्युदात्त उक्तः । मधुशब्दस्य व्यत्ययेन पुंलिङ्गत्वम् । ‘संज्ञापूर्वको विधिरनित्यः’ इति ‘ जसि च ’ (पा. सू. ७. ३.१०९) इति गुणो न भवति । चमूषदः । ‘ चमु छमु जमु झमु अदने ’। चम्यते भक्ष्यते येषु चमसेषु ते चम्वः । ‘ कृपिचमि° ’ ( उ. सू. १. ८१ ) इत्यादिना ऊः । तत्र सीदन्तीति चमूषदः । ‘ सत्सूद्विष° ’ (पा. सू. ३. २. ६१) इत्यादिना क्विप् । सुषामादेः आकृतिगणत्वात् षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ॥ ५ ॥

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः ॥ ५ ॥

हे अग्ने त्वाम् ईळते ऋत्विजः स्तुवन्ति । कीदृशाः । अवस्यवः । अवनं रक्षणं कर्तुम् देवानिच्छन्तः । कण्वासः मेधाविनः वृक्तबर्हिषः आस्तरणार्थं छिन्नदर्भाः हविष्मन्तः हविर्युक्ताः अरंकृतः अलंकर्तारः ॥ ईळते । 'ईड स्तुतौ' । अनुदात्तेत्त्वात् लटो तः । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । झस्य अदादेशः । टेः एत्वम् । 'तास्यनुदात्तेत्०' (पा. सू. ६. १. १८६) इत्यादिना लसार्वधातुकस्यानुदात्तत्वात् धातुस्वर एव शिष्यते । अवस्यवः । अवन्तीत्यवा देवाः । तानात्मन इच्छन्ति । 'सुप आत्मनः क्यच्' । 'क्यचि च' (पा. सू. ७. ४. ३३) इति ईत्वं न भवति । 'न च्छन्दस्यपुत्रस्य' (पा. सू. ७. ४. ३५) इति निषेधात् । 'सर्वप्रातिपदिकेभ्यो लालसायां सुगस्-क्तव्यः' (पा. म. ७. १. ५१. २) इति सुक् । 'क्याच्छन्दसि' (पा. सू. ३. २. १७०) इति उप्रत्ययः । अतो लोपः । प्रत्ययस्वरेणान्तोदात्तत्वम् । कण्वासः । कण शब्दार्थः । कणन्ति ध्वनन्ति स्तोत्रादिपाठेनेति कण्वा ऋत्विजः । 'अशिप्रुषि०' (उ. सू. १. १४९) इत्यादिना क्वन् । नित्त्वा-दाद्युदात्तः । 'आज्जसेरसुक्' (पा. सू. ७. १. ५०) इति असुक् । वृक्तबर्हिषः । वृक्तम् उक्तम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हविष्मन्तः । हविरेषामस्तीति हविष्मन्तः । 'तसौ मत्वर्थे' (पा. सू. १. ४. १९) इति भत्वेन अपदत्वात् न रुत्वम् । अरंकृतः । अलंकुर्वन्तीत्यरंकृतः । 'क्विप् च' इति क्विप् । ह्रस्वस्य तुक् । 'कपिलकादीनां संज्ञाच्छन्दसोर्वा लो रत्वमापद्यते' (पा. म. ८. २. १८) इति लकारस्य रेफादेशः ॥

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये ॥ ६ ॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः । आ । देवान् । सोमऽपीतये ॥६॥

हे अग्ने त्वा त्वां ये अश्वाः रथेन वहन्ति । कीदृशाः । घृतपृष्ठाः पुष्टाङ्गत्वेन दीप्तपृष्ठाः मनो-युजः मनःसंकल्पमात्रेण रथे युज्यमानाः वह्नयः वोढारः तैरश्वैः[1] सोमपीतये सोमपानहेतुयागार्थं देवान् आ वह[2] इति शेषः ॥ घृतपृष्ठाः । 'घृ क्षरणदीप्त्योः' । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । घृतशब्दः प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनसा युज्यन्ते इति मनो-युजः । 'ऋत्विग्दधृक्०' (पा. सू. ३. २. ५९) इत्यादिना क्विन् । कृदुत्तरपदप्रकृतिस्वरत्वम् । त्वा । 'त्वामौ द्वितीयायाः' इत्यनुदात्तः त्वादेशः । वहन्ति । शपतिङोरनुदात्तत्वात् धातुस्वरः । यद्वृत्तयोगात् निघाताभावः । वह्नयः । 'निः' (उ. सू. ४. ४८८) इत्यनुवृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ. सू. ४. ४९१) इति निप्रत्ययः । तस्य नित्त्वादाद्युदात्तत्वम् । सोमपीतये । उक्तम् । सकारे परतो नकारस्य संहितायां 'नश्च' (पा. सू. ८. ३. ३०) इति धुडागमः । 'खरि च' (पा. सू. ८. ४. ५५) इति चर्त्वम् । 'चयो द्वितीयाः शरि पौष्करसादेः' (पा. सू. ८. ४. ४८. ३) इति द्वितीयस्थकारः ॥ ॥ २६ ॥

१. श–ते अश्वाः । २. श–आवहन्तु

तान्यजंत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ॥ ७ ॥

तान् । यजंत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥७॥

हे ᵛअग्ने ᵛतान् इन्द्रादीन् देवान् ᵛयजत्रान् यजनीयान् ᵛऋतावृधः सत्यस्य यज्ञस्य वा वर्धकान् ᵛपत्नीवतः पत्नीयुक्तान् ᵛकृधि कुरु । हे ᵛसुजिह्व शोभनजिह्वोपेत ᵛमध्वः मधुरस्य सोमस्य भागं देवान् ᵛपायय ॥ यजत्रान् । ' अमिनक्षियजिबन्धिपतिभ्योऽत्रन् ' ( उ. सू. ३. ३८५ ) इति यजेः अत्रन् प्रत्ययः । ऋतावृधः । ' वृधु वृद्धौ ' । अन्तर्भावितण्यर्थात् ' क्विप् च ' ( पा. सू. ३. २. ७६ ) इति क्विप् । ' अन्येषामपि दृश्यते ' ( पा. सू. ६. ३. १३७ ) इति पूर्वपदस्य दीर्घत्वम् । वृधेर्धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । अग्ने । पादादित्वात् नामन्त्रितनिघातः । षाष्ठिकमाद्युदात्तत्वम् । पत्नीवतः । ' पत्युर्नो यज्ञसंयोगे ' ( पा. सू. ४. १. ३३ ) इति ङीप्; इकारस्य च नकारः । ता एषां सन्तीति मतुप् । ' छन्दसीरः ' ( पा. सू. ८. २. १५ ) इति वत्वम् । पतिशब्दो डतिप्रत्यया-न्तत्वादाद्युदात्तः । ङीम्मतुपोरनुदात्तत्वात् स एव शिष्यते । कृधि । कृञो लोटः सिः । ' सेर्ह्यपिच्च ' ( पा. सू. ३. ४. ८७ ) इति हिः । ' बहुलं छन्दसि ' इति विकरणलुक् । ' श्रुशृणुपृकृवृभ्यश्छन्दसि ' ( पा. सू. ६. ४. १०२ ) इति हेर्धिरादेशः । ङित्त्वाद्गुणाभावः । मध्वः । उक्तम् । सुजिह्व । आम-न्त्रितनिघातः । पायय । ' पा पाने ' । पिबन्तं प्रयुङ्क्ते इति ' हेतुमति च ' ( पा. सू. ३. १. २६ ) इति णिच् । ' शाच्छासाह्वाव्यावेपां युक् ' ( पा. सू. ७. ३. ३७ ) इति युक् । पूर्वस्यामन्त्रितस्य अविद्यमानवत्त्वम् । अत एव अव्यवधायकत्वात् मध्व इत्यपेक्ष्य ' तिङ्ङतिङः ' इति निघातः ॥

ये यजंत्रा य ईड्यास्ते तें पिबन्तु जिह्वयां । मधोरग्ने वर्षट्कृति ॥ ८ ॥

ये । यजंत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया । मधोः । अग्ने । वषट्ऽकृति ॥८॥

ᵛये देवाः ᵛयजत्राः यष्टव्याः तथा ᵛये देवाः ᵛईड्याः स्तुत्याः ᵛते सर्वेऽपि ᵛवषट्कृति वषट्कार-काले वषट्कारयुक्ते यागे वा हे ᵛअग्ने ᵛते त्वदीयया ᵛजिह्वया ᵛमधोः मधुरस्य सोमस्य भागं ᵛपिबन्तु ॥ यजत्राः । गतम् । ईड्याः । ' ईड स्तुतौ ' । ' ऋहलोर्ण्यत् ' । तित्स्वरिते प्राप्ते ' ईडवन्दवृशंसदुहां ण्यतः ' ( पा. सू. ६. १. २१४ ) इत्याद्युदात्तत्वम् । द्वितीयस्य तेशब्दस्य युष्मदादेशत्वात् सर्वानुदात्तत्वम् । मधोः । उप्रत्ययस्य नित्वादाद्युदात्तत्वमुक्तम् । अग्ने । आमन्त्रितनिघातः । वषट्कृति । करोतेः संपदा-दिभ्यो भावे क्विप् । वषट् इत्यस्य करणं यस्मिन् यागे इति बहुव्रीहिः । वषट् इत्यस्य निपातत्वादाद्युदात्त-त्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उंषर्बुधः । विप्रो होतेह वक्षति ॥ ९ ॥

आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः । विप्रः । होता । इह । वक्षति ॥९॥

ᵛविप्रः मेधावी ᵛहोता होमनिष्पादकोऽग्निः ᵛउषर्बुधः उषःकाले यागगमनाय प्रबुध्यमानान् ᵛविश्वान् ᵛदेवान् ᵛसूर्यस्य संबन्धिनः ᵛरोचनात् स्वर्गलोकात् ᵛइह कर्मणि ᵛआकीं ᵛवक्षति आवहतु ॥ आकीम् । निपात आद्युदात्तः । सूर्यस्य । सूर्यशब्दो ' राजसूयसूर्य° ' ( पा. सू. ३. १. ११४ ) इत्या-दिना क्यप्प्रत्ययान्तो निपातितः । क्यपः पित्त्वात् धातुस्वरेणाद्युदात्तः । रोचनात् रोचमानात् । ' रुच

दीप्तौ ’। ‘ अनुदात्तेतश्च हलादेः ’ ( पा. सू. ३. २. १४९ ) इति कर्तरि युच्। ‘ चितः ’ इत्यन्तोदात्तत्वम्। विश्वान्। विशेः क्वन्तो नित्वादाद्युदात्तः। उषर्बुधः। उषसि बुध्यन्ते इत्युषर्बुधः।[1] ‘ क्विप् च ’ ( पा. सू. ३. २. ७६ ) इति क्विप्। धातुस्वरेण उकार उदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। विप्रः। ‘ ऋज्रेन्द्र° ’ ( उ. सू. २. १८६ ) इत्यादिना रन्। नित्वादाद्युदात्तः। होता। ह्वयतेस्ताच्छील्ये तृन्। ‘ बहुलं छन्दसि ’ इति संप्रसारणम्। परपूर्वत्वम्। गुणः। नित्वादाद्युदात्तः। इह। ‘ इदमो हः ’ ( पा. सू. ५. ३. ११ ) इति हप्रत्ययः। ‘ इदम इश् ’ ( पा. सू. ५. ३. ३ ) इति इश्। शित्वात् सर्वादेशः। प्रत्ययस्वरः। वक्षति। वहेः प्रार्थनायां लिङर्थे लेट्। तस्य तिप्। कर्तरि शप्। शपि परतः ‘ सिब्बहुलं लेटि ’ ( पा. सू. ३. १. ३४ ) इति सिप्। ढत्वकत्वषत्वानि। ‘ तिङ्ङतिङः ’ इति निघातः॥

अग्निष्टोमे प्रउगशस्त्रस्य याज्या ‘ विश्वेभिः सोम्यं मधु ’ इति। ‘ स्तोत्रमग्रे शस्त्रात् ’ इति खण्डे सूत्रितं–‘ विश्वेभिः सोम्यं मध्विति याज्या ’ ( आश्व. श्रौ. ५. १० ) इति॥

विश्वे॑भिः सो॒म्यं मध्वग्न॒ इन्द्रे॑ण वा॒युना॑। पिबा॑ मि॒त्रस्य॒ धाम॑भिः॥ १०॥

विश्वे॑भिः। सो॒म्यम्। मधु॑। अग्ने॑। इन्द्रे॑ण। वा॒युना॑। पिब॑। मि॒त्रस्य॑। धाम॑ऽभिः॥१०॥

हे अग्ने त्वं विश्वेभिः सर्वैः पूषभगादिभिर्देवैः इन्द्रेण वायुना मित्रस्य संबन्धिभिः धामभिः तेजोभिर्मूर्तिविशेषरूपैश्च सह सोम्यं सोमसंबन्धि मधु मधुरं भागं पिब॥ विश्वेभिः। ‘ बहुलं छन्दसि ’ ( पा. सू. ७. १. १० ) इति भिस ऐसादेशाभावः। सोम्यम्। ‘ सोममर्हति यः ’ ( पा. सू. ४. ४. १३७ ) इत्यनुवृत्तौ ‘ मये च ’ ( पा. सू. ४. ४. १३८ ) इति यप्रत्ययः सोमस्य विकार इत्यर्थे। ‘ यस्येति च ’ ( पा. सू. ६. ४. १४८ ) इति अकारलोपः। प्रत्ययस्वरः। मधु। ‘ फलिपाटिनमिमनि° ’ ( उ. सू. १. १८ ) इत्यादिना उप्रत्ययः। ‘ नित् ’ इत्यनुवृत्तेः नित्वादाद्युदात्तः। वायुना। ‘ कृवापाजि° ’ ( उ. सू. १. १ ) इत्यादिना उण्। ‘ आतो युक् चिण्कृतोः ’ (पा. सू. ७. ३. ३३ ) इति युक्। प्रत्ययस्वरः। पिब। ‘ पा पाने ’। लोटः सेर्हिरादेशः। शपि ‘ पाघ्रा ’ ( पा. सू. ७. ३. ७८ ) इत्यादिना पिबादेशः। ‘ अतो हेः ’ ( पा. सू. ६. ४. १०५ ) इति हेर्लुक्। शपः पित्वात् धातुस्वरः। पादादित्वात् न निघातः। ‘ द्व्यचोऽतस्तिङः ’ ( पा. सू. ६. ३. १३५) इति संहितायां दीर्घः। धामभिः। धाञ्। ‘ आतो मनिन् ’ (पा. सू. ३. २. ७४) इति मनिन्। नित्स्वरः॥

त्वं होता॒ मनु॑र्हितो॒ऽग्ने य॒ज्ञेषु॑ सीदसि। से॒मं नो॑ अध्व॒रं य॑ज॥ ११॥

त्वम्। होता॑। मनुः॑ऽहितः। अग्ने॑। य॒ज्ञेषु॑। सी॒द॒सि॒। सः। इ॒मम्। नः॒। अ॒ध्व॒रम्। य॒ज॥११॥

हे अग्ने मनुर्हितः मनुषा होत्रादिरूपेण मनुष्येण हितः संपादितः होता होमनिष्पादको यः त्वं यज्ञेषु सीदसि तिष्ठसि सः त्वं नः अस्मदीयम् इमम् अध्वरं यज्ञं यज निष्पादय॥ मनुर्हितः। मन्यते इति मनुः। ‘ निब्ब ’ ( उ. सू. २. २७४ ) इत्यनुवृत्तौ ‘ बहुलमन्यत्रापि ’ ( उ. सू. २. २७८ ) उस्। नित्वादाद्युदात्तः। हितः। धाञो धातोः ‘ निष्ठा ’ इति क्तप्रत्ययः। ‘ दधातेर्हिः ’

1. र–उषसि बुध्यन्ते।

( पा. सू. ७. ४. ४२ ) इति हिरादेशः । मनुषा हितो मनुर्हितः । 'कर्तृकरणे कृता बहुलम्' ( पा. सू. २. १. ३२ ) इति समासः । कृत्स्वरापवादेन 'तृतीया कर्मणि' ( पा. सू. ६. २. ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । सीदसि । 'षद्लृ विशरणगत्यवसादनेषु' । लटः सिप् । शपि 'पाघ्राध्मा°' ( पा. सू. ७. ३. ७८ ) इत्यादिना सीदादेशः । निघातः । सेममित्यत्र संहितायां 'सोऽचि लोपे चेत्पादपूरणम्' ( पा. सू. ६. १. १३४ ) इति सोर्लोपे गुणः । अध्वरम् । न विद्यते ध्वरो हिंसा यस्मिन् सोऽध्वरः । 'नञ्सुभ्याम्' ( पा. सू. ६. २. १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । 'नो अध्वरम्' इत्यत्र संहितायाम् 'एङः पदान्तादति' ( पा. सू. ६. १. १०९ ) इति पूर्वरूपं प्राप्तं 'प्रकृत्यान्तःपादमव्यपरे' ( पा. सू. ६. १. ११५ ) इति प्रकृतिभावात् निवर्तते ।

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह ॥ १२ ॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥१२॥

हे ^v^देव अग्ने ^v^रोहितः रोहिच्छब्दाभिधेयास्त्वदीया वडवाः ^v^रथे ^v^युक्ष्व योजय । हिशब्दः पादपूरणार्थः । कीदृशीः । ^v^अरुषीः गतिमतीः ^v^हरितः हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः । ^v^ताभिः वडवाभिः ^v^इह अस्मिन् कर्मणि ^v^देवान् ^v^आ ^v^वह ॥ युक्ष्व । 'युजिर् योगे' । लोट् । स्वरितेत्त्वादात्मनेपदम् । 'थासः से' । 'सवाभ्यां वामौ' । 'रुधादिभ्यः श्नम्' । तस्य बाहुलकात् लुक् । कुत्वषत्वे । प्रत्ययस्वरेणान्तोदात्तः । संहितायां 'द्व्यचोऽतस्तिङः' ( पा. सू. ६. ३. १३५ ) इति दीर्घः । अरुषीः । 'ऋ गतौ' । रन्ति (?) गच्छन्तीत्यरुष्यो वडवाः । 'ऋहनिभ्यामुषन्' (उ. सू. ४. ५१३)। धातोर्गुणो रपरत्वम् । नित्त्वादाद्युदात्तोऽरुषशब्दः । तस्मात् स्त्रियां छान्दसो ङीप् । शसि 'प्रथमयोः पूर्वसवर्णः' ( पा. सू. ६. १. १०२ ) इति दीर्घः । रथे । रमेः औणादिकः क्थन्प्रत्ययः । नित्त्वादाद्युदात्तः । हरितः । 'हसृरुहियुषिभ्य इतिः' ( उ. सू. १. ९७ ) इति हरतेः इतिप्रत्ययः । इकारः प्रत्ययस्वरेणोदात्तः । रोहितः । रुहेरपि तेनैव सूत्रेण इतिः । इकारः प्रत्ययस्वरेणोदात्तः । ताभिः । 'सावेकाचः°' ( पा. सू. ६. १. १६८ ) इति विभक्तेः प्राप्तमुदात्तत्वं '°सावर्ण°' ( पा. सू. ६. १. १८२ ) इति निषिध्यते । देवान् इत्यत्र पूर्ववत् रुत्वानुनासिकौ ॥ ॥ २७ ॥

'इन्द्र सोमम्' इत्यादिकस्य द्वादशर्चस्य चतुर्थस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत् । यद्यप्येतत्सूक्तं कृत्स्नम् ऋतुदेवताकं तथापि प्रत्यृचम् इन्द्रादिदेवतान्तराणि मिलितानि । तथा च अनुक्रम्यते—'इन्द्र सोममृतव्यं तत्रैन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्र' इति । विनियोगस्तु स्मार्तो द्रष्टव्यः ॥

इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ॥ १ ॥

इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इन्दवः । मत्सरासः । तत्ऽओकसः ॥१॥

हे ^v^इन्द्र ^v^ऋतुना सह ^v^सोमं ^v^पिब । ^v^इन्दवः पीयमानाः सोमाः ^v^त्वा त्वाम् ^v^आ ^v^विशन्तु । कीदृशाः । ^v^मत्सरासः तृप्तिकराः ^v^तदोकसः तन्निवासाः । सर्वदा त्वदुदरस्थायिन इत्यर्थः ॥ इन्द्र । षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । सोमम् । 'अर्तिस्तुसु°' ( उ. सू. १. १३७ ) इत्यादिना मन् । नित्त्वादाद्युदात्तः । पिब 'पिबा मित्रस्य' (ऋ. सं. १. १४. १०) इत्यत्रोक्तम् । अस्य आ त्वा विशन्तु

इत्युत्तरवाक्यगताख्यातार्थेन सह समुच्चयार्थश्चशब्दो लुप्तः । अतः ' चादिलोपे विभाषा ' ( पा. सू. ८. १. ६३ ) इतीयं प्रथमा तिङ्विभक्तिर्न निहन्यते । विशन्त्विति चलोपसाम्येऽपि द्वितीयत्वात् निहन्यते एव । संहितायाम् ' आद्गुणः ' इति प्राप्तस्य गुणस्य ' ऋत्यकः ' ( पा. सू. ६. १. १२८ ) इति शाकल्यमते प्रकृतिभावादभावः । इन्दवः । ' प्र वो भ्रियन्ते ' ( ऋ. सं. १. १४. ४ ) इत्यत्रोक्तम् । मत्सरासः । तत्रैवोक्तम् । ' आज्जसेरसुक् ' ( पा. सू. ७. १. ५० ) इति असुक् । तदोकसः । तदेव ओकः स्थानं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥ २ ॥

मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानवः ॥ २ ॥

हे ^v^मरुतः ^v^ऋतुना सह ^v^पोत्रात् पोतृनामकस्य ऋत्विजः पात्रात् सोमं ^v^पिबत । ततोऽस्मदीयं ^v^यज्ञं ^v^पुनीतन शोधयत । हे^v^सुदानवः शोभनदातारो मरुतः ^v^हि यस्मात् ^v^यूयं ^v^स्थ युष्माकं शोधयितृत्वं प्रसिद्धं तस्मात् शोधयतेत्यर्थः ॥ पिबत । अत्र तिङोऽदुपदेशात् शपः परत्वात् लसार्वधातुकानुदात्तत्वम् । धातुस्वरः । पूर्वामन्त्रितस्य अविद्यमानवत्त्वेन पदादपरत्वात् निघाताभावः । पूर्ववत् प्रकृतिभावः । पोत्रात् । पोतुः संबन्धि पात्रं पोत्रम् । ' तस्येदम् ' ( पा. सू. ४. ३. १२० ) इति अण् । ' तद्धितेष्वचामादेः ' ( पा. सू. ७. २. ११७ ) इति प्राप्ता वृद्धिः ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' (परिभा. ३५) इति न भवति । ननु एवमन्त्यस्य ऋकारस्य ' अचो ञ्णिति ' ( पा. सू. ७. २. ११५) इति वृद्धिः प्राप्नोति । त्वाष्ट्रो जागत इत्यत्र हि ' विप्रतिषेधे परं कार्यम् ' ( पा. सू. १. ४. २ ) इति परया आदिवृद्ध्यान्त्योपधालक्षणा वृद्धिर्बाध्यते इत्युक्तम् । इह तु परस्या आदिवृद्धेश्छान्दसत्वेन निवृत्तत्वात् अन्त्यवृद्धिः प्राप्नोत्येवेति । एवं तर्हि अत्रापि आदिवृद्धिः औकारः क्रियताम् । तस्य तु छान्दसः ओकारो भविष्यति । पुनीतन । ' पूञ् पवने ' । लोट् । ' लोटो लङ्वत् ' ( पा. सू. ३. ४. ८५ ) इति लङ्वद्भावात् तस्य ' तस्थस्थमिपाम्° ' ( पा. सू. ३. ४. १०१ ) इति तादेशः । ' क्र्यादिभ्यः श्ना ' । ' ई हल्यघोः ' ( पा. सू. ६. ४. ११३ ) इति ईकारः । ' तप्तनप्तनथनाश्च ' ( पा. सू. ७. १. ४५ ) इति तनादेशः । ' प्वादीनां ह्रस्वः ' ( पा. सू. ७. ३. ८० ) इति ह्रस्वः । प्रत्ययद्वयस्यापि ' सार्वधातुकमपित् ' ( पा. सू. १. २. ४ ) इति ङित्वात् स्वस्वपूर्वयोः इकोर्गुणाभावः । यूयम् । युष्मदः परस्य जसः ' ङेप्रथमयोरम् ' ( पा. सू. ७. १. २८ ) इति अमादेशः । ' न विभक्तौ तुस्माः ' ( पा. सू. १. ३. ४ ) इति मकारस्य इत्संज्ञाप्रतिषेधः । ' यूयवयौ जसि ' ( पा. सू. ७. २. ९३ ) इति मपर्यन्तस्य यूयादेशः । ' शेषे लोपः ' । अत्र यूयादेशात् प्रागेव अन्तरङ्गत्वात् प्रातिपदिकस्यान्तोदात्तत्वम् । शेषनिघातः । ततो यूयादेशः ' स्थानेऽन्तरतमः ' ( पा. सू. १. १. ५० ) इति सर्वानुदात्तः । तत्र ' शेषे लोपः ' ( पा. सू. ७. २. ९० ) अन्त्यलोप इति पक्षे पूर्वसवर्णदीर्घत्वं बाधित्वा योऽयम् ' अमि पूर्वः ' ( पा. सू. ६. १. १०७ ) इति प्रातिपदिकान्तेनोदात्तेन सह अनुदात्तस्य सुप एकादेशः सः ' एकादेश उदात्तेनोदात्तः ' इत्युदात्तः । टिलोपपक्षे तु उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । स्थ । ' अस भुवि ' । लटो मध्यमबहुवचनं थ । ' अदिप्रभृतिभ्यः शपः ' इति शपो लुक् । ' श्नसोरल्लोपः ' इति अकारलोपः । व्यत्ययेन परत्वम् । ' हि च ' इति निषेधात् ' तिङ्ङतिङः ' इति निघातो न भवति । संहितायाम् ' अन्येषामपि दृश्यते ' इति दीर्घत्वम् । अत्र हे सुदानवो यूयं हि स्थ इति विवक्षितम् । सुदानवः । ' दाभाभ्यां नुः ' ( उ. सू. ३. ३१२ ) । सोः प्रादिसमासः । आमन्त्रितनिघातः । अत्र यूयमित्युद्दिश्य सुदानवः स्थ इति न विधीयते येन अनामन्त्रितत्वात् निघातो न स्यात् । किंतु सुदानव इति सिद्धवद्दातृत्वेन संबोध्य तेषु तेषु मारुतसूक्तेषु

मरुतां प्रसिद्धात् प्रभावातिशयात् यूयं स्थ इति युष्मच्छब्देन प्रतिनिर्दिश्य पुनीतन इति प्रार्थने पवने तेषां हेतुत्वं हिशब्देनोच्यते ॥

**अ॒भि य॒ज्ञं गृ॑णीहि नो॒ ग्नावो॒ नेष्टः॒ पिब॑ ऋ॒तुना॑ । त्वं हि र॑त्न॒धा असि॑ ॥ ३ ॥**

अ॒भि । य॒ज्ञम् । गृ॒णी॒हि॒ । न॒: । ग्नाव॑: । नेष्ट॒रिति॑ । पिब॑ । ऋ॒तुना॑ । त्वम् । हि । र॒त्न॒ऽधाः । असि॑ ॥३॥

ग्नाशब्दः स्त्रीवाची । तथा च यास्क आह–' मेना ग्ना इति स्त्रीणां मेना मानयन्त्येना ग्ना गच्छन्त्येनाः ' ( निरु. ३. २१ ) इति । ग्ना अस्य सन्तीति ग्नावान् । नेष्टृशब्दोऽत्र त्वष्टारं देवमाह; कस्मिंश्चित् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृत्तत्वात् । हे ᵛग्नावः पत्नीयुक्त ᵛनेष्टः त्वष्टः ᵛनः अस्मदीयं ᵛयज्ञम् ᵛअभि ᵛगृणीहि अभितो देवानां समीपे स्तुहि । ᵛऋतुना सह त्वं सोमं ᵛपिब । ᵛहि यस्मात् ᵛत्वं ᵛरत्नधाः ᵛअसि रत्नानां दातासि दाता भवसि तस्मात् सोमं पातुमर्हसीत्यर्थः ॥ अभि । ' उपसर्गाश्चाभिवर्जम् ' ( फि. सू. ८१ ) इति पर्युदासात् अभेः अन्तोदात्तत्वम् । गृणीहि । ' गॄ शब्दे ' । लोटि सिपो हिः । ' क्र्यादिभ्यः श्ना ' । हेर्ङित्त्वात् ' ई हल्यघोः ' इति ईत्वम् । श्नाप्रत्ययस्य ङित्त्वाद्गुणाभावः । 'प्वादीनां ह्रस्वः' । ' तिङ्ङतिङः ' इति निघातः । ग्ना अस्य सन्तीति मतुप् । व्यत्ययेन वत्वम् । संबुद्धौ ' मतुवसो रुः ' इति रुत्वम् । विसर्गः । पादादित्वेन आमन्त्रितनिघाताभावात् षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । ग्नाव इत्यस्य विशेषणतया विशेषवचनत्वात् ' नामन्त्रिते समानाधिकरणे॰ ' इति निषेधाभावात् अविद्यमानवत्त्वेन उत्तरस्य नेष्टृशब्दस्य षाष्ठिकमाद्युदात्तत्वम् । पिब । शपः पित्त्वात् धातुस्वरः । पूर्वयोरामन्त्रितयोरविद्यमानवत्त्वेन निघाताभावः । रत्नानि दधातीति रत्नधाः । ' क्विप् च ' इति क्विप् । धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असि । सिपः पित्त्वात् धातुस्वरः । ' तिङ्ङतिङः ' इति निघातो न भवति ' हि च ' इति प्रतिषेधात् ॥

**अग्ने॑ दे॒वाँ इ॒हा व॑ह सा॒दया॒ योनि॑षु त्रि॒षु । परि॑ भूष॒ पिब॑ ऋ॒तुना॑ ॥ ४ ॥**

अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । सा॒दय॑ । योनि॑षु । त्रि॒षु । परि॑ । भू॒ष॒ । पिब॑ । ऋ॒तुना॑ ॥४॥

हे ᵛअग्ने ᵛदेवान् ᵛइह अस्मिन् कर्मणि ᵛआ ᵛवह । ततः ᵛयोनिषु स्थानेषु ᵛत्रिषु सवनेषु ᵛसादय देवानुपवेशय । ततस्तान् ᵛपरि ᵛभूष अलंकुरु । ᵛऋतुना सह त्वं सोमं ᵛपिब ॥ ' अग्ने देवान् ' इत्ययं पादो गतः । योनिषु । ' यु मिश्रणे ' । ' वहिश्रि॰ ' ( उ. सू. ४. ४९१ ) इत्यादिना निप्रत्ययः । नित्त्वादाद्युदात्तः । त्रिषु । ' षट्त्रिचतुर्भ्यो हलादिः ' ( पा. सू. ६. १. १७९ ) इति विभक्तेरुदात्तत्वम् । ' भूष अलंकारे ' । ' तिङ्ङतिङः ' इति निघातः । पिब ऋतुना । गतौ ॥

**ब्रा॒ह्म॒णादि॑न्द्र॒ राध॑सः॒ पिबा॒ सोम॑मृ॒तूँरनु॑ । तवेद्धि स॒ख्यमस्तृ॑तम् ॥ ५ ॥**

ब्रा॒ह्म॒णात् । इ॒न्द्र॒ । राध॑सः । पिब॑ । सोम॑म् । ऋ॒तून् । अनु॑ ।

तव॑ । इत् । हि । स॒ख्यम् । अस्तृ॑तम् ॥ ५ ॥

हे ᵛइन्द्र ᵛब्राह्मणात् ब्राह्मणाच्छंसिसंबद्धात् ᵛराधसः धनभूतात् पात्रात् ᵛसोमं ᵛपिब । किं कृत्वा । ᵛऋतूननु ऋतुदेवाननुसृत्य । ऋतवोऽपि पिबन्त्वित्यर्थः । ᵛहि यस्मात् ᵛतवेत् तव

ᐯसख्यम् ᐯअस्तृतम् ऋतूनामविच्छिन्नं तस्मात् ऋतुभिः सह पानं युक्तम् ॥ ब्राह्मणात् । ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते । स च पुंलिङ्गे शेषनिघातेन अनुदात्तादिः । तस्य संबन्ध्युत्तरश्चमसः । स च तस्यैव अवयववत् नियत इत्यवयवविवक्षायाम् ' अनुदात्तादेरञ् ' ( पा. सू. ४. २. ४४ ) । तेन ञित्वादाद्युदात्तः चमसपरोऽत्र ब्राह्मणशब्दः । राधसः । ' सर्वधातुभ्योऽसुन् ' । नित्वादाद्युदात्तः । पिब । पादादित्वादाद्युदात्तत्वम् । ' द्व्यचोऽतस्तिङः ' इति दीर्घत्वम् । ऋतूँरनु इत्यत्र ' दीर्घादटि समानपादे ' इति नकारस्य रुत्वम् । ' अत्रानुनासिकः पूर्वस्य तु वा ' ( पा. सू. ८. ३. २ ) इति ऊकारस्य अनुनासिकत्वम् । तव । ' युष्मदस्मद्भ्यां ङसोऽश् ' (पा. सू. ७. १. २७) । शित्वात् सर्वादेशः । ' तवममौ ङसि ' इति तवादेशः । ' युष्मदस्मदोर्ङसि ' इत्याद्युदात्तत्वम् । सख्यम् । सख्युः कर्म सख्यम् । ' सख्युर्यः ' । ' यस्य° ' इति लोपः । प्रत्ययस्वरः । अस्तृतम् । स्तृणातेः हिंसार्थस्य क्तः । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥ ६ ॥

युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ।
ऋतुना । यज्ञम् । आशाथे इति ॥ ६ ॥

हे ᐯधृतव्रता स्वीकृतकर्माणौ ᐯमित्रावरुणा हे मित्रनामकवरुणनामकौ देवौ ᐯयुवम् उभौ युवाम् ᐯऋतुना सहास्मदीयं ᐯयज्ञम् ᐯआशाथे व्याप्नुथः। कीदृशं यज्ञम् । ᐯदक्षं प्रवृद्धं ᐯदूळभं दुर्दहं शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः ॥ युवम् । प्रथमाद्विवचनस्य ' ङेप्रथमयोरम् ' (पा. सू. ७. १. २८) इति अमादेशः । ' युवावौ द्विवचने ' (पा. सू. ७. २. ९२) इति मपर्यन्तस्य युवादेशः । ' शेषे लोपः ' इति टिलोपः अन्त्यलोपो वा । अमि पूर्वत्वम् । आपाथामेव हि आत्वम् । टिलोपपक्षे उदात्तनिवृत्तिस्वरेण अम उदात्तत्वम्। अन्त्यलोपपक्षे एकादेश उदात्तः। दक्षम् । 'दक्ष वृद्धौ' । दक्षन्त्यनेनेति करणे घञ् । एवं हि पुंलिङ्गत्वनियमः अन्यस्यानियम इति नपुंसकत्वम् । धृतव्रता मित्रावरुणा । धृतानि व्रतानि याभ्यां तौ धृतव्रतौ । मित्रश्च वरुणश्च मित्रावरुणौ । उभयत्र 'सुपां सुलुक्°' इत्यादिना विभक्तेः आकारः। मित्रशब्दस्य ' देवताद्वन्द्वे च ' इति आनङादेशः । प्रथमस्य आमन्त्रितनिघातः । द्वितीयस्य पादादित्वादाद्युदात्तत्वम् । संहितायां छान्दसं ह्रस्वत्वम् । दूळभम् । ' दह भस्मीकरणे ' । दुःखेन दह्यते इति दुर्दहम् । ' ईषद्दुः- सुषु° ' ( पा. सू. ३. ३. १२६ ) इत्यादिना दुर्युपपदे दग्धेः खल् । 'व्यत्ययो बहुलम्' इति उकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकारः । ' लिति ' इति प्रत्ययात्पूर्वमुदात्तत्वम् । कृदुत्तरपदत्वेन स एव शिष्यते । आशाथे । ' अशू व्याप्तौ ' । ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लिट् । मध्यमद्विवचनम् आथाम् । टेः एत्वम् । ' अत आदेः ' ( पा. सू. ७. ४. ७० ) इत्यभ्यासस्य दीर्घः । ' अश्नोतेश्च ' ( पा. सू. ७. ४. ७२ ) इति प्राप्तो नुडागमः ' अनित्यमागमशासनम् ' इति निवर्तते ॥ ॥ २८ ॥

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥ ७ ॥

द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवम् । ईळते ॥ ७ ॥

---

१. श–इकारलोपः । २. त-फ–स्तृणोतेः । ३. श–उदात्त इत्युदात्तत्वम् ।

^v^अध्वरे अग्निष्टोमे प्रकृतिरूपे ^v^यज्ञेषु विकृतिरूपेषु उक्थ्यादिषु च ^v^देवम् अग्निम् ^v^ईळते ऋत्विजः स्तुवन्ति । कीदृशा ऋत्विजः । ^v^द्रविणसः धनार्थिनः ^v^ग्रावहस्तासः अभिषवसाधनपाषाणधारिणः । कीदृशं देवम् । ^v^द्रविणोदाः धनप्रदम् । यद्वा । धनप्रदोऽग्निः सोमं पिबत्विति शेषः । तमेतं मन्त्रं यास्क एवं निर्वक्ति—'द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदेनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति । द्रविणोदा द्रविणसः' ( निरु. ८. १२ ) इत्यादि । सोऽयं यास्कोक्तो निर्वचनप्रपञ्चः तस्मिन्नेव ग्रन्थेऽवगन्तव्यः ॥ द्रविणोदाः । 'द्रुदक्षिभ्यामिनन्' (उ. सू. २. २०८) । नित्वादाद्युदात्तो द्रविणशब्दः । तद्ददातीति द्रविणोदाः । 'क्विप् च' इति क्विप् । पूर्वपदस्य सकारोपजनश्छान्दसः । रुत्वोत्वे । कृदुत्तरपदप्रकृतिस्वरत्वम् । देवविशेषणत्वेन एकवाक्यतापक्षे द्वितीयायाः स्वादेशः । अथवा द्रविणमात्मन इच्छन्ति द्रविणस्यन्ति । 'सुप आत्मनः क्यच्' । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' ( पा. म. ७. १. ५१. २ ) इति क्यचि परतः सुगागमः । द्रविणस्यतेः संपदादित्वात् भावे क्विप् । 'अतो लोपः' । 'क्वौ लुप्तं न स्थानिवद्भवति' (पा. म. १. १. ५८. २) इति तस्य स्थानिवत्त्वप्रतिषेधात् यलोपः । एवं द्रविणस्शब्दो धनेच्छावचनः । द्रविणेच्छां दस्यति यथेष्टधनप्रदानेन उपक्षपयतीत्यर्थे 'दसु उपक्षये' इत्यस्मात् अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । एवं द्रविणोदःशब्दः सकारान्तो भवति । तथा 'द्रविणोदसः प्रवादा भवन्ति' (निरु. ८. २) इति नैरुक्तो व्यवहार उपपद्यते । अतो द्रविणोदस्शब्दो भिन्नवाक्यत्वे स्वार्थे प्रथमा; एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्थो भवति । द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः सोमस्य इत्यर्थे सकारोपजनश्छान्दसः । आद्युदात्तत्वं तु नियमेन स्थितम् । ऋत्विग्विशेषणत्वेन एकवाक्यत्वपक्षे तु क्यजन्तात् क्विप् । अतो लोपादि पूर्ववत् । अत्र तु पक्षे क्यचः चित्त्वेन अन्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । ग्रावयुक्ता हस्ता येषां ते ग्रावहस्तासः । 'आज्जसेरसुक्' । ग्रावशब्दो वृषादित्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अध्वरे । न विद्यते ध्वरो हिंसा यस्मिन् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ईळते । अनुदात्तेत्वात् आत्मनेपदम् । 'अदिप्रभृतिभ्यः०' इति शपो लुक् । झस्य अदादेशः ॥

## द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥ ८ ॥

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे । देवेषु । ता । वनामहे ॥ ८ ॥

^v^द्रविणोदाः देवः ^v^नः अस्मभ्यं ^v^वसूनि धनानि ^v^ददातु ^v^यानि धनानि ^v^शृण्विरे हविरुपयुक्तत्वेन श्रूयन्ते । ^v^ता तानि च सर्वाणि धनानि ^v^देवेषु निमित्तभूतेषु ^v^वनामहे संभजामः । धनैर्देवान् यष्टुं तानि स्वीकुर्म इत्यर्थः ॥ द्रविणोदाः । गतम् । वसूनि । 'शृस्वृस्निहि०' ( उ. सू. १. १० ) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेः आद्युदात्तः । शृण्विरे । 'श्रु श्रवणे' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । झ इरेच् ( पा. सू. ३. ४. ८१ ) । 'छन्दस्युभयथा' इति सार्वधातुकत्वे व्यत्ययेन श्नुः; तत्संनियोगेन शृभावश्च । उवङि प्राप्ते 'हुश्नुवोः सार्वधातुके' ( पा. सू. ६. ४. ८७ ) इति यणादेशः । 'चितः' इत्यन्तोदात्तत्वम् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । ता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । 'नलोपः प्रातिपदिकान्तस्य' ( पा. सू. ८. २. ७ ) इति नलोपः । वनामहे । 'वन षण संभक्तौ' । व्यत्ययेनात्मनेपदम् ॥

## द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत । नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥९॥

ᵛद्रविणोदाः देवः ᵛऋतुभिः सह ᵛनेष्ट्रात् नेष्टृसंबन्धिपात्रात् ᵛपिपीषति सोमं पातुमिच्छति । ततो हे ऋत्विजः ᵛइष्यत होमस्थाने गच्छत। गत्वा च ᵛजुहोत होमं कुरुत। हुत्वा ᵛप्र ᵛतिष्ठत ᵛच होमस्थानात् स्थानान्तरं प्रति प्रस्थानमपि कुरुत ॥ द्रविणोदाः । गतम् । पिपीषति । 'पा पाने' । पातुमिच्छतीति सन् । छान्दस ईकारः । 'तिङ्ङतिङः' इति निघातः । जुहोत । लोण्मध्यमबहुवचनम् । तस्य लङ्वद्भावात् तादेशः । तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । तस्य पित्त्वाद्गुणः । 'अभ्यस्तानामादिः' इत्यनुवृत्तौ 'अनुदात्ते च' (पा. सू. ६. १. १९०) इत्याद्युदात्तत्वे प्राप्ते 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति' (पा. सू. ६. १. १९२) इति ओकार उदात्तः । तिष्ठत । 'ष्ठा गतिनिवृत्तौ'। लोण्मध्यमबहुवचनस्य थस्य लङ्वद्भावात् तादेशः । शपि 'पाघ्राध्मा॰' इत्यादिना तिष्ठादेशः । 'समवप्रविभ्यः स्थः' (पा. सू. १. ३. २२) इत्यात्मनेपदं न भवति; तत्रानुवृत्तस्य निर्दिष्टग्रहणस्य आनन्तर्यार्थत्वात् अत्र चशब्देन व्यवधानात् । 'ते प्राग्धातोः' (पा. सू. १. ४. ८०) इत्युपसर्गत्वेन प्राक्प्रयोक्तव्यस्यापि प्रशब्दस्य 'व्यवहिताश्च' (पा. सू. १. ४. ८२.) इति छन्दसि व्यवहितप्रयोगः । अत्र चशब्दो जुहोत इति पूर्वेण सह समुच्चयार्थः, न पुनः इष्यत इत्युत्तरेण । तेन अप्रथमत्वात् 'चवायोगे प्रथमा' (पा. सू. ८. १. ५९) इति निषेधाभावात् 'तिङ्ङतिङः' इति निघातः । नेष्ट्रात् । 'पोत्राद्यज्ञं पुनीतन' (ऋ. सं. १. १५. २) इत्यत्र पोत्रशब्दे यदुक्तं तदत्र द्रष्टव्यम् । इष्यत । 'इष गतौ' । लोण्मध्यमबहुवचनम् ॥

यत्त्वा॑ तु॒रीय॑मृ॒तुभि॒र्द्रवि॑णोदो॒ यजा॑महे । अध॑ स्मा नो द॒दिर्भ॑व ॥ १० ॥

यत् । त्वा॒ । तु॒रीय॑म् । ऋ॒तुऽभिः॑ । द्रवि॑णःऽदः । यजा॑महे । अध॑ । स्म॒ । नः॒ । द॒दिः । भ॒व ॥ १० ॥

हे ᵛद्रविणोदः देव ᵛयत् यस्मात् कारणात् ᵛऋतुभिः सह ᵛत्वां ᵛयजामहे । अध इत्ययं निपातस्तच्छब्दार्थः । तस्मात् कारणात् ᵛनः अस्मभ्यं ᵛददिः धनस्य दाता ᵛभव ᵛस्म अवश्यं भव । ᵛतुरीयं चतुर्णां पूरणम् ॥ तुरीयम् । 'चतुरश्छयतावाद्यक्षरलोपश्च' (पा. सू. ५. २. ५१. १) इति छप्रत्ययः । तस्य प्रत्ययस्वरेणोदात्तात् प्रागेव 'आयनेयी॰' (पा. सू. ७. १. २) इत्यादिना ईयादेशः । 'आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' (पा. सू. ७. १. २. १) इति वचनात् कृते आदेशे प्रत्ययस्वरेण इकार उदात्तः । द्रविणोदः । उक्तम् । पादादित्वात् आमन्त्रिताद्युदात्तत्वम् । यजामहे । अत्र शपः पित्त्वेन तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव । पूर्वस्य आमन्त्रितस्य अविद्यमानवत्त्वात् यद्वृत्तयोगाद्वा न निघातः । व्यवहितयोगेऽपि स निषेध इत्युक्तम् । अध । छान्दसो धकारः । स्म । चादिरनुदात्तः । संहितायां 'निपातस्य च' (पा. सू. ६. ३. १३६) इति दीर्घः । ददिः । 'डुदाञ् दाने'। 'आद्दगमहनजनः किकिनौ लिट् च' (पा. सू. ३. २. १७१) इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनादि । 'आतो लोप इटि च' (पा. सू. ६. ४. ६४) इति आकारलोपः । प्रत्ययस्वरः ॥

अश्वि॑ना॒ पिब॑तं॒ मधु॒ दीद्य॑ग्नी शुचिव्रता । ऋ॒तुना॑ यज्ञवाहसा ॥ ११ ॥

अश्वि॑ना । पिब॑तम् । मधु॑ । दीद्य॑ग्नी॒ इति॒ दीदि॑ऽअग्नी । शु॒चि॒ऽव्र॒ता॒ ।

ऋ॒तुना॑ । य॒ज्ञ॒ऽवा॒ह॒सा॒ ॥ ११ ॥

हे अश्विनौ ᵛमधु माधुर्योपेतं सोमं ᵛपिबतम्। कीदृशौ। ᵛदीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ ᵛशुचिव्रता शुद्धकर्माणौ ᵛऋतुना ऋतुदेवतया सह ᵛयज्ञवाहसा यज्ञस्य निर्वाहकौ॥ अश्विना। संबोधनद्विवचनस्य ' सुपां सुलुक्° ' इति आकारः। आमन्त्रिताद्युदात्तः। पिबतम्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। मधु। ' फलिपाटि° ' ( उ. सू. १. १८ ) इत्यादिना उप्रत्ययः। ' नित् ' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः। दीद्यग्नी। ' दिवु क्रीडादौ '। ' अन्येभ्योऽपि दृश्यन्ते ' ( पा. सू. ३. २. ७५ ) इति विच्। वेरपृक्तलोपात् वलि लोपो बलीयानिति प्रथमवकारस्य लोपः ( पा. सू. ६. १. ६६-६७ )। प्रथमं प्रत्ययलोपे हि ' वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति ' ( परिभा. २१ ) इति निषेधात् वलि लोपो न स्यात्। छान्दसं द्विर्वचनम्। तुजादित्वात् अभ्यासस्य दीर्घत्वम्। यङ्लुगन्ताद्वा ' संज्ञापूर्वको विधिरनित्यः ' (परिभा. ९३. १.) इत्यभ्यासस्य गुणाभावः। दीदिरग्निर्ययोस्तौ दीद्यग्नी। आमन्त्रिताद्युदात्तत्वम्। पादादित्वात् न निघातः। शुचिव्रता। शुचि व्रतं ययोस्तौ। ' सुपां सुलुक्° ' इति आकारः। दीद्यग्निशब्दस्य सामान्यवचनत्वेन ' नामन्त्रिते° ' इति अविद्यमानवत्त्वप्रतिषेधात् आष्टमिकनिघातत्वम्। पूर्वस्य पराङ्गवद्भावाद्वा ऐकस्वर्यम्। यज्ञवाहसा। ' वह प्रापणे '। यज्ञं वहतः इति यज्ञवाहसौ। ' वहिहाधाञ्भ्यश्छन्दसि ' ( उ. सू. ४. ६६० ) इति असुन्। तत्र हि ' गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' ( उ. सू. ४. ६६६ ) इति वचनात् सोपपदानामपि भवति इत्युक्तम्। ' णित् ' इत्यनुवृत्तेः उपधावृद्धिः। ' सुपां सुलुक्° ' इत्यादिना विभक्तेः आकारः। आमन्त्रितनिघातः। असामर्थ्यात् पूर्वस्य न पराङ्गवद्भावः॥

## गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि। देवान्देवयते यज॥ १२॥

गार्हऽपत्येन। सन्त्य। ऋतुना। यज्ञऽनीः। असि। देवान्। देवऽयते। यज॥ १२॥

हे ᵛसन्त्य फलप्रदाग्निदेव ᵛगार्हपत्येन गृहपतिसंबन्धिना रूपेण युक्तः सन् ᵛऋतुना ऋतुदेवेन सह ᵛयज्ञनीः यज्ञस्य निर्वाहकः ᵛअसि। तस्मात् त्वं ᵛदेवयते देवविषयकामनायुक्ताय यजमानाय ᵛदेवान् ᵛयज॥ गार्हपत्येन। ' गृहपतिना संयुक्ते ञ्यः' (पा. सू. ४. ४. ९०)। ' यस्य° ' इति लोपः। ञित्वात् आदिवृद्धिः आद्युदात्तत्वं च। गृहपतित्वमित्यर्थे ' पत्यन्तपुरोहितादिभ्यः° ' ( पा. सू. ५. १. १२८ ) इति यकि तु अन्तोदात्तत्वं स्यात्। सन्त्य सजने भव। ' षणु दाने '। ' क्तिच्क्तौ च° ' इति क्तिच्। ' न क्तिचि दीर्घश्च ' ( पा. सू. ६. ४. ३९ ) इति दीर्घनलोपाभावः। ' भवे छन्दसि ' ( पा. सू. ४ ४. ११० ) इति यत्; ' तत्र साधुः ' ( पा. सू. ४. ४. ९८ ) इति वा। निघातः। यज्ञं नयतीति यज्ञनीः। ' सत्सूद्विष° ' इत्यादिना क्विप्। कृदुत्तरपदप्रकृतिस्वरः। देवयते। देवानात्मन इच्छतीति देवयन्। तस्मै। ' क्यचि च ' इति ईत्वं न भवति ' न च्छन्दस्यपुत्रस्य ' इति निषेधात्। ' अश्वाघस्य°' ( पा. सू. ७. ४. ३७ ) इति आत्वविधानात् ईत्वनिषेधे प्राप्तस्य दीर्घस्याप्येष निषेध इत्युक्तम्। ' शतुरनुमो नद्यजादी ' इति विभक्तेरुदात्तत्वम्। अत्र क्यचश्चित्त्वादन्तोदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण उभयोः क्यचा सह एकादेशे ' एकादेश उदात्तेनोदात्तः ' इत्युदात्तः। तस्मादन्तोदात्तत्वात् परस्या विभक्तेः ' शतुरनुमो नद्यजादी ' इत्युदात्तत्वम्॥ ॥ २९॥

' आ त्वा वहन्तु ' इति पञ्चमं नवर्चं सूक्तम्। ऋषिच्छन्दसी पूर्ववदनुवर्तेते। विशेषादेशाभावात् इन्द्रो देवता। विनियोगस्तु–प्रातःसवने मैत्रावरुणस्योन्नीयमाने सूक्तम् ' आ त्वा वहन्तु हरयः ' इति।

---

१. र–' देवता ' इत्यस्यानन्तरं ' तथा च अनुक्रान्तं आ त्वा नवेति ' इत्यधिकम्।

तथा च ‘ द्विदेवत्यैश्चरन्ति ’ इति खण्डे सूत्रितम्–‘ उन्नीयमानेभ्योऽन्वाहा त्वा वहन्तु ’ ( आश्व. श्रौ. ५. ५ ) इति । तथा षोडशिशस्त्रे ‘ आ त्वा वहन्तु, हरयः ’ इति तिस्रः । तथा सूत्रितम् ‘ अथ षोडशी ’ इति खण्डे–‘ आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः ’ ( आश्व. श्रौ. ६. २ ) इति ॥

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥ १ ॥

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षसः ॥ १ ॥

हे Vइन्द्र Vवृषणं कामानां वर्षितारं त्वां Vसोमपीतये सोमपानार्थं Vहरयः त्वदीया अश्वाः Vआ Vवहन्तु अस्मिन् कर्मण्यानयन्तु । तथा Vसूरचक्षसः सूर्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्विति शेषः ॥ हरन्तीति हरयः । ‘ इन् सर्वधातुभ्यः ’ ( उ. सू. ४. ५५७ ) इति इन् । नित्त्वादाद्युदात्तः । वृषणम् । ‘ कनिन्युवृषितक्षि° ’ ( उ. सू. १. १५४ ) इत्यादिना कनिन् । कित्त्वात् लघूपधगुणाभावः । ‘ वा षपूर्वस्य निगमे ’ ( पा. सू. ६. ४. ९ ) इति विकल्पितमुपधादीर्घत्वम् । सोमपीतये । ‘ ऐभिरग्ने ’ ( ऋ. सं. १. १४. १ ) इत्यत्रोक्तम् । सूरचक्षसः । ‘ चक्षिङ् व्यक्तायां वाचि ’ । ‘सर्वधातुभ्योऽसुन्’ । ‘ चक्षिङः ख्याञ् ’ ( पा. सू. २. ४. ५४ ) इति न भवति ‘ असनोः प्रतिषेधो वक्तव्यः ’ ( पा. सू. २. ४. ५४. १० ) इति निषेधात् । ‘ षू प्रेरणे ’ । सुवतीति सूरः । ‘ सुसूधागृधिभ्यः क्रन् ’ ( उ. सू. २. १८२ ) इति क्रन् । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तः । सूरवत् ख्यानं प्रकाशो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥ २ ॥

इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः । इन्द्रम् । सुखऽतमे । रथे ॥२॥

हरिशब्द इन्द्ररथस्य वोढारौ अश्वौ आचष्टे । तथा च श्रुत्यन्तरं–‘हर्योः स्थाता’ इति, ‘ हरिभ्यां त्वेन्द्रो देवतां गमयतु ’ ( तै. सं. १. ४. २८. १; १. ६. ४. ३. ) इति च । एतदेवाभिप्रेत्य निघण्टुकार आह–‘ हरी इन्द्रस्य ’ (नि. १. १५.१) इति । तादृशौ Vहरी Vइमाः यागार्थं वेद्याम् आसादितत्वेन पुरोवर्तिनीः Vधानाः भ्रष्टयवतण्डुलानुद्दिश्य Vसुखतमे Vरथे Vइन्द्रम् अवस्थाप्य Vइह अस्मिन् कर्मणि Vउप Vवक्षतः वेदिसमीपे वहताम् । कीदृशीर्धानाः Vघृतस्नुवः अलंकरणोपस्तरणाभिघारणेन घृतस्राविणीः ॥ धीयन्ते इति धानाः । ‘ धापॄवस्यजतिभ्यो नः ’ ( उ. सू. ३. २८६ ) इति नः । प्रत्ययस्वरः । घृतस्नुवः । घृतं स्नुवन्तीति घृतस्नुवः । क्विपि तुगभावश्छान्दसः । धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । स्नोः संयोगपूर्वत्वेन यणभावात् उवङादेशः । हरी । ‘ हृञ् हरणे ’ । ‘ सर्वधातुभ्य इन् ’ । नित्त्वादाद्युदात्तः । प्रगृह्यत्वात् संहितायां प्रकृतिभावः । वक्षतः । प्रार्थनाख्ये[2] लिङर्थे लेट् । तस्य प्रथमपुरुषद्विवचनं तस् । ‘ लेटोऽडाटौ ’ ( पा. सू. ३. ४.९४ ) इति अडागमः । शपि प्राप्ते ‘ सिब्बहुलं लेटि ’ ( पा. सू. ३. १. ३४ ) इति सिप् । ढत्वकत्वषत्वानि । ‘ तिङ्ङतिङः ’ इति निघातः । सुखतमे । गतम् ॥

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥ ३ ॥

इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे । इन्द्रम् । सोमस्य । पीतये ॥३॥

---

१. ग-ण-र– भ्रष्ट° । २. च-छ-फ–प्रार्थनायाम् ।

$^{v}$प्रातः कर्मारम्भे प्रातःसवने $^{v}$इन्द्रं $^{v}$हवामहे आह्वयामः । तथैव $^{v}$अध्वरे सोमयागे $^{v}$प्रयति प्रगच्छति प्रारभ्ये वर्तमाने सति माध्यंदिने सवने तम् $^{v}$इन्द्रं हवामहे । तथा यज्ञसमाप्त्यवसरे तृतीयसवने $^{v}$सोमस्य $^{v}$पीतये सोमपानार्थं हवामहे ॥ प्रातः । स्वरादिषु अन्तोदात्तो निपातितः । हवामहे । ह्वेञो लटि शपि परतो ‘ ह्वः संप्रसारणम् ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति संप्रसारणं परपूर्वत्वं गुणावादेशौ । प्रयति । ‘ इण् गतौ ’ । लटः शतृ । ‘ अदिप्रभृतिभ्यः शपः ’ इति शपो लुक् । शतुर्ङित्त्वाद्गुणाभावः । प्रादिसमासः । ‘ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ’ ( परिभा. २८ ) इति वचनात् ‘ प्रत्ययग्रहणे॰ ’ इति नियमाभावात् ‘ शतुरनुमो नद्यजादी ’ ( पा. सू. ६. १. १७३ ) इति विभक्तेरुदात्तत्वम् । अध्वरे । उक्तम् । संहितायाम् ‘ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ’ ( पा. सू. ८. २. ४ ) इति अकारस्य स्वरितत्वम् । पीतये । ‘ पा पाने ’ । क्तिनि छान्दसमन्तोदात्तत्वम् ॥

उप॑ नः सु॒तमा ग॑हि॒ हरि॑भिरिन्द्र के॒शिभिः॑ । सु॒ते हि त्वा॒ हवा॑महे ॥ ४ ॥

उप॑ । नः॒ । सु॒तम् । आ । ग॒हि॒ । हरि॑ऽभिः । इ॒न्द्र॒ । के॒शिऽभिः॑ । सु॒ते । हि । त्वा॒ । हवा॑महे ॥४॥

हे $^{v}$इन्द्र $^{v}$केशिभिः केसरयुक्तैः $^{v}$हरिभिः अश्वैस्त्वं $^{v}$नः अस्मदीयं $^{v}$सुतम् अभिषुतं सोमं प्रति $^{v}$उप समीपे $^{v}$आ $^{v}$गहि आगच्छ । $^{v}$सुते अभिषुते सोमे निमित्तभूते सति यस्मात् कारणात् $^{v}$त्वा $^{v}$हवामहे त्वामाह्वयामः तस्मादागच्छेति पूर्वत्रान्वयः ॥ गहि । गमेर्लोटः सेर्हिः । ‘ शपः ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ इषुगमियमां छः ’ ( पा. सू. ७. ३. ७७ ) इति छत्वं न भवति ; ‘ न लुमताङ्गस्य ’ इति प्रतिषेधात् । ‘ अनुदात्तोपदेश॰ ’ ( पा. सू. ६. ४. ३७ ) इत्यादिना अनुनासिकलोपः । तस्य ‘ असिद्धवदत्रा भात् ’ ( पा. सू. ६. ४. २२ ) इत्यसिद्धत्वात् ‘ अतो हेः ’ इति हेर्लुक् न भवति । केशिभिः । ‘ क्लिशेरन् लो लोपश्च ’ ( उ. सू. ५. ७११ ) इति अन् । मत्वर्थीय इनिः । प्रत्ययस्वरः । हवामहे । ‘ ह्वः ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति संप्रसारणम् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव । ‘ तिङ्ङतिङः ’ इति न निघातः; ‘ हि च ’ इति प्रतिषेधात् ॥

सेमं नः॒ स्तोम॒मा ग॒ह्युपे॒दं सव॑नं सु॒तम् । गौ॒रो न तृ॑षि॒तः पि॑ब ॥ ५ ॥

सः । इ॒मम् । नः॒ । स्तोम॑म् । आ । ग॒हि॒ । उप॑ । इ॒दम् । सव॑नम् । सु॒तम् ।

गौ॒रः । न । तृ॒षि॒तः । पि॒ब ॥ ५ ॥

हे इन्द्र $^{v}$स त्वं $^{v}$नः अस्मदीयम् $^{v}$इमं $^{v}$स्तोमं स्तुतिं प्रति $^{v}$आ $^{v}$गहि आगच्छ । आगमने हेतुरुच्यते । $^{v}$उप देवयजनसमीपे $^{v}$सुतम् अभिषुतसोमयुक्तम् $^{v}$इदम् इदानीमनुष्ठीयमानं $^{v}$सवनं प्रातःसवनादिरूपं कर्म वर्तते । तस्मात् $^{v}$गौरो $^{v}$न गौरमृग इव $^{v}$तृषितः सन् इमं सोमं $^{v}$पिब ॥ सः इमम् इत्यत्र संहितायां ‘ सोऽचि लोपे चेत्पादपूरणम् ’ ( पा. सू. ६. १. १३४ ) इति सुलोपः । गहि । गतम् । सवनम् । सूयतेऽस्मिन् सोम इत्यधिकरणे ल्युट् । ‘ लिति ’ इति प्रत्ययात्पूर्वस्योदात्तत्वम् । ल्युडन्तात् सप्तम्याः ‘ सुपां सुपो भवन्तीति वक्तव्यम् ’ ( पा. म. ७. १. ३९ ) इति वचनात्

---

१. र–प्रातरारभ्य । २. ग-च-छ-ण-र–‘ क्लिशेरन् लो लोपश्च इति अन् ’ इति नास्ति ।

द्वितीया । अभिषुतसोमयुक्तमिदं सवनमिति कर्मण्येव वा द्वितीया । तदा सुतशब्दात् अर्शआदिभ्यो ऽच् ( पा. सू. ५. २. १२७ ) । तृषितः । 'ञितृष पिपासायाम्' । 'निष्ठा' इति क्तः । प्रत्ययस्वरेणोदात्तः । पश्चात् इटः 'आगमा अनुदात्ताः' इत्यनुदात्तत्वम् ॥ ॥ ३० ॥

इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ॥ ६ ॥

इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि । तान् । इन्द्र । सहसे । पिब ॥६॥

इन्दुशब्दः 'उन्दी क्लेदने' इति धातोरुत्पन्नः । ᵛइन्दवः क्लेदनयुक्ताः ᵛइमे वेद्यामवस्थिताः ᵛसोमासः तत्तत्पात्रगताः सोमाः ᵛबर्हिषि यज्ञे ᵛअधि आधिक्येन ᵛसुतासः अभिषुताः । हे ᵛइन्द्र ᵛसहसे बलार्थं ᵛतान् सोमान् ᵛपिब ॥ सोमासः । 'आज्जसेरसुक्' ( पा. सू. ७. १. ५० ) इति जसोऽसुगागमः । इन्दवः । उक्तम् । सुतासः । पूर्ववत् असुक् । संहितायां 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावात् परपूर्वत्वं न भवति । बर्हिषि । 'बृंहेर्नलोपश्च' ( उ. सू. २. २६६ ) इति इस् । प्रत्ययस्वरः । 'ताँ इन्द्र' इत्यत्र 'दीर्घादटि समानपादे' इति रुत्वम् । यत्वयलोपौ । अनुनासिकः । सहसे । 'षह मर्षणे' । असुनन्तो नित्त्वादाद्युदात्तः ॥

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ॥ ७ ॥

अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः ।

अथ । सोमम् । सुतम् । पिब ॥ ७ ॥

हे इन्द्र ᵛअयम् अस्माभिः क्रियमाणः ᵛस्तोमः स्तोत्रविशेषः ᵛअग्रियः श्रेष्ठः सन् ᵛते तव ᵛहृदिस्पृक् मनस्यङ्गीकृतः ᵛशंतमः सुखतमः ᵛअस्तु । ᵛअथ स्तुतेरनन्तरं ᵛसुतम् अभिषुतं ᵛसोमं ᵛपिब ॥ अग्रियः । 'अग्रात्' इत्यनुवृत्तौ 'घच्छौ च' (पा. सू. ४. ४. ११७) इति घच् । चित्त्वादन्तोदात्तः । हृदि स्पृशतीति हृदिस्पृक् । 'स्पृशोऽनुदके क्विन्' (पा. सू. ३. २. ५८) । 'तत्पुरुषे कृति बहुलम्' ( पा. सू. ६. ३. १४ ) इति अलुक् । 'क्विन्प्रत्ययस्य कुः' ( पा. सू. ८. २. ६२ ) इति शकारस्य कुत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । शंतमः । सुखकरद्रव्यवचनोऽत्र शंशब्दः । ततस्तमप् । अत्र सुखप्रकर्षस्य गुणद्वारा गुणनिष्ठद्रव्ये संक्रान्तत्वात् 'अद्रव्यप्रकर्षे' इति निषेधात् 'किमेत्तिङव्यय°' ( पा. सू. ५. ४. ११ ) इत्यादिना आम् न भवति, द्रव्यस्य स्वतः प्रकर्षाभावात् । ईदृगर्थ एव हि स निषेधः । अथा सोमम् । संहितायां 'निपातस्य°' इति दीर्घः ॥

विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥ ८ ॥

विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति । वृत्रऽहा । सोमऽपीतये ॥८॥

ᵛवृत्रहा शत्रुघातकः ᵛइन्द्रः ᵛसोमपीतये सोमपानाय ᵛमदाय तत्पानजन्यहर्षाय च ᵛविश्वमित् सर्वमपि ᵛसुतम् अभिषुतसोमयुक्तं ᵛसवनं प्रातःसवनादिरूपं कर्म ᵛगच्छति ॥ विश्वम् । 'अशिप्रुषि°' इत्यादिना कन् । नित्त्वादाद्युदात्तः । सवनं सुतम् । पूर्ववत् । मदाय । 'मदोऽनुपसर्गे' ( पा. सू. ३. ३. ६७ ) इति अप्प्रत्ययः । पित्त्वात् धातुस्वरः । गच्छति । 'इषुगमियमां छः' ( पा. सू. ७. ३. ७७ ) ।

वृत्रहा। वृत्रं हतवान्। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा. सू. ३. २. ८७)। 'इन्हन्॰' इत्यादिना निवृत्तं दीर्घत्वं 'सौ च' (पा. सू. ६. ४. १२-१३) इति प्रतिप्रसवात् भवति। कृदुत्तरपदप्रकृतिस्वरत्वम्। सोमपीतये। व्यधिकरणबहुव्रीहिः इत्युक्तम्। तत्पुरुषे वा दासीभारादित्वात् (पा. सू. ६. २. ४२) पूर्वपदप्रकृतिस्वरत्वम्॥

## सेमं नः काममा पृण गोभिरश्वैः शतक्रतो। स्तवाम त्वा स्वाध्यः॥ ९॥

सः। इमम्। नः। कामम्। आ। पृण। गोभिः। अश्वैः।
शतक्रतो इति शतऽक्रतो। स्तवाम। त्वा। सुऽआध्यः॥ ९॥

हे ᵛशतक्रतो ᵛसः त्वं ᵛनः अस्मदीयम् ᵛइमं ᵛकामं काम्यमानं फलं ᵛगोभिरश्वैः च सह ᵛआ ᵛपृण सर्वतः पूरय। वयमपि ᵛस्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः सन्तः ᵛत्वा त्वां ᵛस्तवाम॥ सेमम्। संहितायां 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोपः। कामम्। कमेर्घञि 'कर्षात्वतो घञोऽन्त उदात्तः' (पा. सू. ६. १. १५९) इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम्। पृण। 'पृण प्रीणने'। लोटः सेर्हिः। 'तुदादिभ्यः शः'। तस्य ङित्त्वाद्गुणाभावः। 'अतो हेः' इति हेर्लुक्। गोभिः। 'सावेकाचः॰' इति प्राप्तं विभक्तेरुदात्तत्वं 'न गोश्वन्साववर्ण॰' इति प्रतिषिध्यते। अश्वैः। क्वनन्त इत्युक्तम्। असामर्थ्यात् न पराङ्गवद्भावः। स्तवाम। 'ष्टुञ् स्तुतौ'। 'धात्वादेः षः सः'। लोडुत्तमबहुवचनस्य 'लोटो लङ्वत्' इति लङ्वद्भावात् 'नित्यं ङितः' (पा. सू. ३. ४. ९९) इति सकारस्य लोपः। 'आडुत्तमस्य पिच्च' (पा. सू. ३. ४. ९२) इति आडागमः। प्रत्ययस्य पित्वादनुदात्तत्वम्। धातुस्वर एव। स्वाध्यः। 'ध्यै चिन्तायाम्'। स्वाङोरुपसर्गयोः प्राक्प्रयोगः। 'अन्येभ्योऽपि दृश्यते' (पा. सू. ३. २. १७८) इति क्विप्। दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वात् अत्र संप्रसारणे सति परपूर्वत्वम्। 'हलः' (पा. सू. ६. ४. २) इति दीर्घः। जसि 'एरनेकाचः॰' (पा. सू. ६. ४. ८२) इति यणादेशः। 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरत्वम्। 'उदात्तयणो हल्पूर्वात्' (पा. सू. ६. १. १७४) इति जस उदात्तत्वं न भवति, तत्र 'असर्वनामस्थानम्' इत्यनुवृत्तेः। अतः 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा. सू. ८. २. ४) इति स्वरितत्वमेव भवति॥　　॥ ३१॥

'इन्द्रावरुणयोः' इत्यादिकं नवर्चं षष्ठं सूक्तम्। अत एव नवशब्दानुवृत्तावनुक्रम्यते—'इन्द्रावरुणयोरैन्द्रावरुणं युवाकु पादनिचृतौ' इति। अत्र देवता विस्पष्टा। ऋषिच्छन्दसी तु पूर्ववदनुवर्तेते। अयं तु विशेषः। 'युवाकु हि' इत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते। विनियोगस्तु स्मार्तो लैङ्गिको वा कश्चिदवगन्तव्यः॥

## इन्द्रावरुणयोरहं सम्राजोरव आ वृणे। ता नो मृळात ईदृशे॥ १॥

इन्द्रावरुणयोः। अहम्। सम्ऽराजोः। अवः। आ। वृणे। ता। नः। मृळातः। ईदृशे॥१॥

ᵛअहम् अनुष्ठाता ᵛसम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा ᵛइन्द्रावरुणयोः देवयोः संबन्धि ᵛअवः रक्षणम् ᵛआ ᵛवृणे सर्वतः प्रार्थये। ᵛता तौ देवौ ᵛईदृशे एवंविधे अस्मदीयवरणे निमित्त-

---

१. च-फ-तत्पुरुषो वा। २. च-ण-फ-र-अस्मदीयरक्षणे।

भूते सति ^v^मृळातः अस्मान् सुखयतः ॥ इन्द्रशब्दो रन्प्रत्ययान्तः । वरुणशब्द उनन्प्रत्ययान्तः । उभौ नित्त्वादाद्युदात्तौ । समासे ' देवताद्वन्द्वे च ' इति पूर्वपदस्य आनङादेशः । ' उभे युगपत् ' इत्यनुवृत्तौ ' देवताद्वन्द्वे च ' इति युगपत् उभयपदप्रकृतिस्वरत्वम् । सम्राजोः । ' राजृ दीप्तौ ' । ' सत्सूद्विष॰ ' ( पा. सू. ३. २. ६१ ) इत्यादिना क्विप् । समो ' मोऽनुस्वारः ' ( पा. सू. ८. ३. २३ ) इत्यनुस्वारे प्राप्ते ' मो राजि समः क्वौ ' ( पा. सू. ८. ३. २५ ) इति मकारादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ' कर्तृकर्मणोः कृति ' ( पा. सू. २. ३. ६५ ) इति कर्तरि षष्ठी । अवः । अव रक्षणादिषु । भावेऽसुन् । नित्त्वादाद्युदात्तः । ता । ' सुपां सुलुक्॰ ' इत्यादिना द्विवचनस्य डादेशः । टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः । मृळातः । ' मृड सुखने ' । प्रार्थनायां लिङर्थे लेट् । द्विवचनं तस् । ' लेटोऽडाटौ ' (पा. सू. ३. ४. ९४) इति आडागमः । 'तुदादिभ्यः शः' । ङित्त्वात् लघूपधगुणाभावः । ईदृशे । ' त्यदादिषु दृशोऽनालोचने कञ् च ' ( पा. सू. ३. २. ६० ) इति इदंशब्दे उपपदे दृशेः कञ् । उपपदसमासे ' इदंकिमोरीश्की ' ( पा. सू. ६. ३. ९० ) इति इदम ईश् । शित्त्वात् सर्वादेशः । कञः कित्त्वाद्गुणाभावः । ञित्त्वादुत्तरपदस्याद्युदात्तत्वम् । उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते ॥

**गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् ॥ २ ॥**

गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः । धर्तारा । चर्षणीनाम् ॥२॥

हे इन्द्रावरुणौ ^v^अवसे अवितुमनुष्ठातारं रक्षितुं ^v^मावतः मद्विधस्य ^v^विप्रस्य ब्राह्मणर्त्विजः ^v^हवम् आह्वानं गन्तारौ ^v^स्थः ^v^हि प्राप्तिशीलौ भवथः खलु । कीदृशौ । ^v^चर्षणीनां मनुष्याणां ^v^धर्तारौ योगक्षेमसंपादनेन धारयितारौ ॥ गन्तारा । गमेस्ताच्छील्ये तृन् । द्विवचनस्य ' सुपां सुलुक्॰ ' ( पा. सू. ७. १. ३९ ) इत्यादिना आकारादेशः । ' ऋदृशोऽङि गुणः ' ( पा. सू. ७. ४. १६ ) । ' अप्तृन्॰ ' ( पा. सू. ६. ४. ११ ) इत्यादिना उपधादीर्घत्वम् । तृनो नित्त्वादाद्युदात्तत्वम् । स्थः । 'अस भुवि ' । लङ्मध्यमपुरुषद्विवचनं थस् । ' अदिप्रभृतिभ्यः शपः ' इति शपो लुक् । ' हि च ' इति निघातप्रतिषेधः । अवसे । ' अव रक्षणे ' । ' तुमर्थे सेसेन्॰ ' ( पा. सू. ३. ४. ९ ) इति असेन् । नित्त्वादाद्युदात्तः । हवम् । ह्वेञो ' बहुलं छन्दसि ' इत्यनैमित्तिके संप्रसारणे परपूर्वत्वे च ' ऋदोरप् ' इति अप् । गुणावादेशौ । अपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव । विप्रस्य । डुवप् बीजसंताने ' । अस्य ' ऋज्रेन्द्र॰ ' इत्यादिना रन् निपातितः। नित्त्वादाद्युदात्तः । मावतः । ' वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ' ( पा. सू. ५. २. ३९. १ ) वतुप् । प्रत्ययोत्तरपदयोः अस्मदो मपर्यन्तस्य मादेशः ( पा. सू. ७. २. ९८ ) । ' आ सर्वनाम्नः ' ( पा. सू. ६. ३. ९१ ) इति दकारस्य आकारः । सवर्णदीर्घः । मतुपः पित्त्वादनुदात्तत्वम् । प्रातिपदिकान्तोदात्तत्वे स एव शिष्यते । धर्तारा । ' धृञ् धारणे ' । ' ण्वुल्तृचौ ' ( पा. सू. ३. १. १३३ ) इति तृच् । ' एकाच उपदेशे॰ ' इति इट्प्रतिषेधः । गुणो रपरत्वम् । ' अप्तृन्॰ ' इत्यादिना उपधादीर्घः । ' सुपां सुलुक्॰ ' इति आकारः । तृचश्चित्त्वादन्तोदात्तत्वम् । चर्षणीनाम् । ' कृषेरादेश्च चः ' ( उ. सू. २. २६१ ) इति अनिप्रत्ययः; तत्संनियोगेन ककारस्य चकारः । प्रत्ययाद्युदात्तत्वं बाधित्वा छान्दसमन्तोदात्तत्वम् । अत एव ' नामन्यतरस्याम् ' इति विभक्तेरुदात्तत्वम् । तत्र हि मतुपि यो ह्रस्वान्तः तत उत्तरस्य नाम उदात्तत्वमिति व्याख्यातम् ॥

---

१. च-छ-फ-श—उभे वनस्पत्यादिषु युगपत् । २. च-छ-त-फ-श—ह्रस्वान्तः अन्तोदात्तः ।

अनुकामं तर्पयेथामिन्द्रावरुण राय आ। ता वां नेदिष्ठमीमहे ॥ ३ ॥

अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ । ता । वाम् । नेदिष्ठम् । ईमहे ॥३॥

vइन्द्रावरुणा हे इन्द्रावरुणौ vअनुकामम् अस्मदीयाभिलाषमनु vरायः धनस्य प्रदानेन vआ vतर्पयेथां सर्वतोऽस्मांस्तृप्तान् कुरुतम् । वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः । vता vवां तादृशौ युवां vनेदिष्ठम् अतिशयेन सामीप्यं यथा भवति तथा vईमहे याचामहे । कालविलम्बमन्तरेण धनं दातव्यमित्यर्थः । सप्तदशसु याच्ञाकर्मसु ' ईमहे ' ( नि. ३. १९. १ ) इति पठितम् ॥ अनुकामम् । कामस्य पश्चादनुकामम् । अथवा कामे कामेऽनुकामम् । अनुः इह पश्चादर्थे अथवा वीप्सालक्षणे यथार्थे । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति चत्वारो हि यथार्था गृहीताः । ' अव्ययं विभक्ति° ' ( पा. सू. २. १. ६ ) इत्यादिना अव्ययीभावसमासः । ' अव्ययीभावश्च ' ( पा. सू. १. १. ४१ ) इति अव्ययसंज्ञायाम् ' अव्ययादाप्सुपः ' ( पा. सू. २. ४. ८२ ) इति प्राप्तस्य लुकोऽपवादो ' नाव्ययीभावादतोऽम् त्वपञ्चम्याः ' ( पा. सू. २. ४. ८३ ) इति विभक्तेः अमादेशः । ' समासस्य ' इत्यन्तोदात्तत्वम् । तर्पयेथाम् । तृपेर्ण्यन्तात् लोटो ' णिचश्च ' ( पा. सू. १. ३. ७४ ) इत्यात्मनेपदम् । मध्यमद्विवचनम् आथाम् । टेः एत्वे ' आमेतः ' ( पा. सू. ३. ४. ९० ) इति आमादेशः । शपि सति ' अतो येयः ' ( पा. सू. ७. २. ८० ) इति आकारस्य इयादेशः* । आद्गुणो यलोपश्च । इन्द्रावरुणा । ' सुपां सुलुक्° ' इति द्विवचनस्य आकारः । आमन्त्रिताद्युदात्तत्वम् । संहितायाम् आकारस्य ह्रस्वत्वम् । रायः । ' ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम् । ता । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । पदात्परत्वात् युवामित्यस्य वामादेशोऽनुदात्तः । नेदिष्ठम् । अतिशयेन अन्तिकम् । अतिशायने इष्ठन् । ' अन्तिकबाढयोर्नेदसाधौ ' ( पा. सू. ५. ३. ६३ ) इति नेदादेशः । ' यस्य° ' इति लोपः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । ईमहे । ' ईङ् गतौ' । ङित्त्वादात्मनेपदम् । ' बहुलं छन्दसि ' इति श्यनो लुक् । निघातः ॥

युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ॥ ४ ॥

युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम । वाजऽदाव्नाम् ॥ ४ ॥

vहि यस्मात् कारणात् vशचीनाम् अस्मदीयकर्मणां संबन्धि सोमरूपं हविः vयुवाकु वसतीवर्यैकधनात्मकैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितम् । तथा vसुमतीनां शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि vयुवाकु नानाविधैः स्तुत्यगुणैर्मिश्रितम् । तस्मात् कारणात् हे इन्द्रावरुणौ तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादाद्वयं vवाजदाव्नाम् अन्नप्रदानां पुरुषाणां मध्ये मुख्या vभूयाम भवेम । ' अपः अप्नः ' इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु ' शची शमी ' ( नि. २. १. २२ ) इति पठितम् ॥ युवाकु । ' यु मिश्रणे ' । ' कटिकुषिभ्यां काकुः ' ( उ. सू. ३. ३५७ ) इत्यत्र बाहुलकात् यौतेरपि काकुः प्रत्ययः । कित्त्वेन गुणाभावात् उकारस्य उवङादेशः । प्रत्ययस्वरेण मध्योदात्तत्वम् । शचीशब्दः केषांचिन्मते शार्ङ्गरवादिः । ङीनन्तो ( पा. सू. ४. १. ७३ ) नित्त्वादाद्युदात्तः इति ' उभे वनस्पत्यादिषु युगपत् ' इत्यत्र वृत्तिकृतोक्तम् ( का. ६. २. १४० ) । सुमतीनाम् । ' विद्याम सुमतीनाम् ' ( ऋ. सं. १. ४. ३ ) इत्यत्रोक्तम् । भूयाम । प्रार्थनायां लिङ् । उत्तमबहुवचने ' नित्यं

---

* वस्तुतस्तु ' आतो ङितः ' ( पा. सू. ७. २. ८१ ) इत्यनेनैव इयादेशो भवति ।

ङ्कितः ' इति सकारलोपः । ' यासुट् परस्मैपदेषूदात्तो ङिच्च ' ( पा. सू. ३. ४. १०३ ) इति उदात्तो यासुडागमः । ' लिङः सलोपोऽनन्त्यस्य ' ( पा. सू. ७. २. ७९ ) इति सकारलोपः । ' बहुलं छन्दसि ' इति शपो लुक् । सति शिष्टत्वात् यासुडुदात्त एव शिष्यते । वाजदाव्नाम् । वाजं ददतीति वाजदावानः । ' आतो मनिन्° ' ( पा. सू. ३. २. ७४ ) इत्यादिना वनिप् । तस्य पित्त्वात् धातुस्वर एव शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । आमि ' अल्लोपोऽनः ' ( पा. सू. ६. ४. १३४ ) इति अकारलोपः । तस्य ' अचः परस्मिन्° ' (पा. सू. १. १. ५७) इति स्थानिवद्भावात् ' लोपो व्योर्वलि ' ( पा. सू. ६. १. ६६ ) इति वकारलोपो न भवति ॥

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥

इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् । क्रतुः । भवति । उक्थ्यः ॥ ५ ॥

अयम् ᵛइन्द्रः ᵛसहस्रदाव्नां सहस्रसंख्याकधनप्रदानां मध्ये ᵛक्रतुः धनदानस्य कर्ता भवति प्रभूतं ददातीत्यर्थः । तथा ᵛवरुणः ᵛशंस्यानां स्तुत्यानां मध्ये ᵛउक्थ्यः स्तुत्यो ᵛभवति अतिशयेन स्तुत्य इत्यर्थः ॥ वरुणः । उनन्प्रत्ययो नित्त्वादाद्युदात्तः । शंस्यानाम् । ' शंसु स्तुतौ ' । ' ऋहलोर्ण्यत् ' । ' तित्स्वरितम् ' इति प्राप्ते ' ईडवन्दवृशंसदुहां ण्यतः ' ( पा. सू. ६. १. २१४ ) इत्याद्युदात्तः । क्रतुः । ' कृञः कतुः ' ( उ. सू. १. ७७ ) इति कतुः । कित्त्वाद्गुणाभावे यणादेशः । प्रत्ययस्वरेणाद्युदात्तः । उक्थ्यः । उक्थं शस्त्रम् । तेन स्तुत्यत्वेन तत्र भव उक्थ्यः । ' भवे छन्दसि ' (पा. सू. ४. ४. ११० ) इति यत् । ' यस्य° ' इति लोपः । अत्र ' तित्स्वरितम् ' इत्येतद्बाधित्वा ' तीर्थ्याय कूप्याय ' इत्यादिवत् द्व्यच्त्वात् ' यतोऽनावः ' इति प्राप्तमाद्युदात्तत्वं ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' ( परिभा. ३५ ) इति न क्रियते । ननु ' यस्य° ' इति लोपात् प्रागेव तित्स्वरितत्वमस्तु । न हि तदा ' यतोऽनावः ' इत्येतदस्ति, द्व्यच्त्वाभावात् । अत एव हि ' ऊर्म्याय च सूर्म्याय च ' इत्यादौ स्वरितत्वं दृश्यते । न च परत्वान्नित्यत्वाच्च ' यस्य° ' इति लोपेन प्रथमतो भाव्यमिति वाच्यम् । प्रकृतिप्रत्ययाश्रयात् बहिरङ्गात् ' यस्य° ' इति लोपात् प्रत्ययमात्राश्रयतया अन्तरङ्गत्वेन ' तित्स्वरितम् ' इत्येतस्य प्राबल्यात् । अतः ' ऊर्म्याय ' इत्यादिवत् ' उक्थ्यः ' इत्यत्रापि लक्षणत एव स्वरितत्वं भविष्यतीति किं छान्दस्येन । यत्र हि लोपमन्तरेणैव द्व्यच्त्वं तत्र ' यतोऽनावः ' इत्येतद्भवति । यथा चेयं येयमिति । लोपनिबन्धनद्व्यच्त्वप्रदेशेषु तु स्वरितेनैव भवितव्यमिति । एवं तर्हि ' तीर्थ्याय कूप्याय ' इत्यादौ यत् आद्युदात्तत्वं तदेव च्छान्दसमस्तु । अथात्र तु ' वार्णादाङ्गं बलीयः ' ( परिभा. ५५ ) इत्यन्तरङ्गत्वेऽपि स्वरितत्वं बाधित्वा लोप एव भविष्यति । तर्हि ' उक्थ्यः, ऊर्म्याय सूर्म्याय ' इत्यादौ च च्छान्दस्यमस्तु । सर्वथैकत्र च्छान्दस्यान्न मुच्यते ॥ ॥ ३२ ॥

तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ॥ ६ ॥

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि । स्यात् । उत । प्रऽरेचनम् ॥६॥

ᵛतयोरित् पूर्वोक्तयोरिन्द्रावरुणयोरेव ᵛअवसा रक्षणेन ᵛवयम् अनुष्ठातारः ᵛसनेम संभजेम धनमिति शेषः । ᵛनि ᵛधीमहि ᵛच । प्राप्ते धने यावदपेक्षितं तावद्भुक्त्वा ततोऽवशिष्टं धनं

१. च-छ-ण-र-तथा ।

कचिन्निधिरूपेण स्थापयामश्च । vउत अपि च vप्ररेचनं भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं vस्यात् संपद्यताम् ॥ अवसा । असुन् । नित्वादाद्युदात्तः । वयम् । 'यूयं हि ष्ठा' ( ऋ. सं. १. १५. २ ) इत्यत्र यदुक्तं तदत्र द्रष्टव्यम् । सनेम । आशिषि लिङ् । तस्य मस् । 'नित्यं ङितः' इति सकारलोपः । 'किदाशिषि' ( पा. सू. ३. ४. १०४ ) इति यासुट् । 'छन्दस्युभयथा' इति सार्वधातुकत्वमप्यस्तीति 'लिङः सलोपोऽनन्त्यस्य' ( पा. सू. ७. २. ७९ ) इति सकारलोपः । 'अतो येयः' (पा. सू. ७. २. ८०) इति इयादेशः । 'लोपो व्योर्वलि' (पा. सू. ६. १.६६) इति यलोपः । 'लिङ्याशिष्यङ्' (पा. सू. ३ १. ८६) इति अङ् । 'आद्गुणः' । पादादित्वात् न निघातः । धीमहि । 'डुधाञ् धारणपोषणयोः' । आशिषि लिङो महिङ् । तस्य 'छन्दस्युभयथा' इति सार्वधातुकार्धधातुकसंज्ञे । तत्र सार्वधातुकत्वेन 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः । 'सार्वधातुकमपित्' इति ङित्वं शप् च । 'बहुलं छन्दसि' इति जुहोत्यादेरपि शपो लुक् । आर्धधातुकत्वात् 'आतो लोप इटि च' ( पा. सू. ६. ४. ६४ ) इति आकारलोपः । निघातः । सनेम इत्यपेक्षया द्वितीयत्वादत्र 'चवायोगे प्रथमा' इति न निषेधः । स्यात् । अस्तेः प्रार्थनायां लिङ् । तिप् । 'इतश्च' ( पा. सू. ३. ४. १०० ) इति इकारलोपः । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' ( पा. सू. ३. ४. १०३ ) इति यासुड्ङित्वे । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'श्नसोरल्लोपः' इति अकारलोपः । पादादित्वात् अनिघातः । उत । 'एवमादीनामन्तः' इत्यन्तोदात्तः । प्ररेचनम् । 'रिचिर् विरेचने' । भावे ल्युट् । योरनादेशः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

इन्द्रावरुण वामहं हुवे चित्राय राधसे । अस्मान्त्सु जिग्युषस्कृतम् ॥ ७ ॥

इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे । अस्मान् । सु । जिग्युषः । कृतम् ॥७॥

vइन्द्रावरुणा हे इन्द्रावरुणौ vवां युवामुभौ vअहं vहुवे आह्वयामि । किमर्थम् । vचित्राय मणिमुक्तादिरूपेण विविधाय vराधसे धनाय । तत आहूतौ युवाम् vअस्मान् अनुष्ठातॄन् vसु vजिग्युषः शत्रुविषये सुष्ठु जययुक्तान् vकृतं कुरुतम् ॥ इन्द्रावरुणा । 'सुपां सुलुक्°' इत्यादिना संबोधनस्य आकारः । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङ् । आमन्त्रिताद्युदात्तत्वम् । संहितायां छान्दसं ह्रस्वत्वम् । हुवे । ह्वयतेः लडुत्तमैकवचनम् इट् । 'शपः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति लुक् । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति संप्रसारणं परपूर्वत्वम् । 'अचि श्नुधातु°' ( पा. सू. ६. ४. ७७ ) इत्यादिना उवङ् । न च 'हुश्नुवोः°' ( पा. सू. ६. ४. ८७ ) इत्यादिना यणादेशः । जुहोतेरेव हि प्रतिपदोक्तस्य तत्, न पुनरस्य लाक्षणिकत्वात् । इटः प्रत्ययस्वरेणोदात्तत्वम् । पादादित्वात् न निघातः । राधसे । असुन् । नित्वादाद्युदात्तत्वम् । अस्मान् । शसि 'द्वितीयायां च' ( पा. सू. ७. २. ८७ ) इति आत्वम् । 'शसो न' ( पा. सू. ७. १. २९ ) इति नत्वम् । जिग्युषः । 'जि जये' । लिटः 'क्वसुश्च' (पा. सू. ३. २. १०७) इति क्वसुः । द्विर्भावः । 'सन्लिटोर्जेः' ( पा. सू. ७. ३. ५७ ) इति द्वितीयस्य कुत्वम् । क्वसोः कित्वाद्गुणाभावः । क्रादिनियमात् प्राप्तस्य इटः 'वस्वेकाजाद्घसाम्' इति नियमेन निवृत्तिः । द्वितीयाबहुवचनं शस् । भसंज्ञायां 'वसोः संप्रसारणम्' इति संप्रसारणम् । परपूर्वत्वम् । 'एरनेकाचः' इति यणादेशः । 'शासिवसिघसीनां च' इति षत्वम् । प्रत्ययस्वरेण उकार उदात्तः । कृतम् । 'डुकृञ् करणे' । लोण्मध्यमद्विवचनस्य लङ्वद्भावात् तमादेशः । शपः 'बहुलं छन्दसि' इति लुक् । 'तिङ्ङतिङः' इति निघातः ॥

इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ॥ ८ ॥

इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ । अस्मभ्यम् । शर्म । यच्छतम् ॥ ८ ॥

ᵛइन्द्रावरुणा हे इन्द्रावरुणौ ᵛधीषु अस्मदीयबुद्धिषु ᵛवां युवां ᵛसिषासन्तीषु सनितुं संभक्तुं सम्यक् सेवितुमिच्छन्तीषु तदानीम् ᵛआ समन्तात् ᵛअस्मभ्यं ᵛशर्म सुखं ᵛनू ᵛनु अतिशयेन क्षिप्रं ᵛयच्छतं दत्तम् । षड्विंशतिसंख्याकेषु क्षिप्रनामसु ' नु मक्षु ' ( नि. २. १५. १ ) इति पठितम् । तस्य द्विरावृत्तिबलादतिशयो लभ्यते ॥ इन्द्रावरुणा । उक्तम् । नू नु । ' ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ' इति पूर्वस्य दीर्घत्वम् । सिषासन्तीषु । ' वन षण संभक्तौ ' । ' धात्वादेः षः सः ' । इच्छायां सन् । द्विर्भावो हलादिशेषः । ' सन्यतः ' इति इत्वम् । ' आदेशप्रत्यययोः ' (पा. सू. ८. ३. ५९) इति षत्वम् । ' सनीवन्त° ' ( पा. सू. ७. २. ४९ ) इत्यादिना विकल्पात् इडभावः । ' जनसनखनां सञ्झलोः ' ( पा. सू. ६. ४. ४२ ) इति नकारस्य आकारः । उपरि लटः शतृ । कर्तरि शप् । ' उगितश्च ' ( पा. सू. ४. १. ६ ) इति ङीप् । ' शप्श्यनोर्नित्यम् ' ( पा. सू. ७. १. ८१ ) इति नुम् । ङीपः शपश्च पित्वात् शतुश्च लसार्वधातुकत्वेनानुदात्तत्वम् । सनो नित्वादाद्युदात्तत्वम् । तदेव शिष्यते । धीषु । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । अस्मभ्यम् । ' अस्मभ्यमप्रतिष्कुतः ' ( ऋ. सं. १. ७. ६ ) इत्यत्रोक्तम् । यच्छतम् । ' दाण् दाने ' । शपि ' पाघ्रा° ' इत्यादिना यच्छादेशः ॥

प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम् ॥ ९ ॥

प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे ।

याम् । ऋधाथे इति । सधऽस्तुतिम् ॥ ९ ॥

ᵛइन्द्रावरुणा हे इन्द्रावरुणौ ᵛयाम् अस्मत्कर्तृकां शोभनस्तुतिं प्रति ᵛहुवे युवामुभौ आह्वयामि । किंच ᵛसधस्तुतिं युवयोरुभयोः साहित्येन क्रियमाणायाः[1] स्तवक्रियायाः ᵛयां सुष्टुतिं प्रतिलभ्य ᵛऋधाथे युवां वर्धाथे तादृशी ᵛसुष्टुतिः शोभनस्तुतिहेतुभूत ऋक्समूहः ᵛवामश्नोतु युवां व्याप्नोतु ॥ अश्नोतु । ' अशू व्याप्तौ ' । लोटो व्यत्ययेन तिप् । ' स्वादिभ्यः श्नुः ' । सुष्टुतिः । ' न विन्धे अस्य सुष्टुतिम् ' ( ऋ. सं. १. ७. ७ ) इत्यत्रोक्तम् । इन्द्रावरुणा हुवे । उक्ते । अत्र तु यद्वृत्तयोगात् निघातः । ऋधाथे । ' ऋधु वृद्धौ ' । लट् । व्यत्ययेनात्मनेपदम् । मध्यमद्विवचने श्नोः ' बहुलं छन्दसि ' इति लुक् । प्रत्यय-स्वरेण आकार उदात्तः । यच्छब्दयोगात् न निघातः । सधस्तुतिम् । सह स्तुतिर्यस्यां सुष्टुतौ सा सध-स्तुतिः । अत्र सुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्य स्तूयतेऽनयेति करणसाधनत्वेन ऋक्परत्वे अयं स्तुति-शब्दो भावसाधनतया स्तवनक्रियापरः । तस्मिन् भावसाधनत्वेन क्रियापरे अयं करणसाधनतया ऋक्पर इति समस्यमानपदार्थादन्यः । सहेत्यत्र हकारस्य व्यत्ययेन धकारः । सहशब्दः एवमादित्वादन्तोदात्तः । बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ३३ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके षट् सूक्तानि । तत्र ' सोमानम् ' इत्यादिकं नवर्चं प्रथमं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वेवमनुक्रम्यते–' सोमानमिति पञ्च ब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्च सोमश्च पञ्चम्यां

---

१. त-फ–क्रियमाणया स्तवक्रियया युक्ताम् ।

दक्षिणा चान्याः सादसस्पत्या नाराशंसी वान्त्या ' इति । सूक्तगता आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः । तासां मध्ये ' स घा वीरः ' इत्येतस्याश्चतुर्थ्या ऋचो ब्रह्मणस्पतिरिन्द्रश्च सोमश्चेति तिस्रो देवताः । ' त्वं तम् ' इत्येतस्याः पञ्चम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः । षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता । ' नाराशंसम् ' इत्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते । विनियोगस्तु पूर्ववत् ॥

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ १ ॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ॥ १ ॥

हे ^V^ब्रह्मणस्पते एतन्नामकदेव ^V^सोमानम् अभिषवस्य कर्तारं ^V^स्वरणं देवेषु प्रकाशनवन्तं ^V^कृणुहि कुरु । अत्र दृष्टान्तः । ^V^कक्षीवन्तम् एतन्नामकमृषिम् । इवशब्दोऽत्राध्याहर्तव्यः । कक्षीवान् यथा देवेषु प्रसिद्धस्तद्वदित्यर्थः । ^V^यः कक्षीवानृषिः ^V^औशिजः उशिजः पुत्रः । तमिवेति पूर्वत्र योजना । कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते–' एतं वै परं आट्णारः कक्षीवाँ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ' ( तै. सं. ५. ६. ५. ३ ) इति । ऋगन्तरेऽपि ऋषित्वकथनेनानुष्ठातृत्वप्रसिद्धिः सूच्यते–' अहं कक्षीवाँ ऋषिरस्मि विप्रः ' ( ऋ. सं. ४. २६. १ ) इति । तस्मात् अस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम् । सोऽयं मन्त्रो यास्केनैवं व्याख्यातः—' सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानं सोतारं मा प्रकाशनवन्तं कुरु ब्रह्मणस्पते ' ( निरु. ६. १० ) इति । अस्मिन् मन्त्रे सोमानमिति पादेन कृणुहि ब्रह्मण इति पादेन सूचितं तात्पर्यं तैत्तिरीया आमनन्ति—' सोमानं स्वरणमित्याह सोमपीथमेवाव रुन्धे । कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे ' ( तै. सं. १. ५. ८. ४ ) इति ॥ सोमानम् । सुनोतीति । ' षुञ् अभिषवे ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वात् नित्त्वेऽपि नाद्युदात्तत्वं किंतु प्रत्ययस्वर एव । उञ्छादिषु ( पा. सू. ६. १. १६० ) वा सोमन्शब्दो द्रष्टव्यः बहुलग्रहणात् औणादिको वा मनिन्निर्देष्टव्यः । स्वरणं प्रख्यातम् । ' स्वृ शब्दोपतापयोः ' । ' कृत्यल्युटो बहुलम् ' (पा. सू. ३. ३. ११३) इति कर्मणि ल्युट् । ' लिति ' इति अकार उदात्तः । कृणुहि । ' कृवि हिंसाकरणयोश्च ' । ' इदितो नुम् धातोः ' (पा. सू. ७. १. ५८ ) इति नुम् । लोटः सिपो हिः । शपि प्राप्ते ' धिन्विकृण्व्योर च ' इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः । तस्य ' अतो लोपः ' इति लोपः । तस्य स्थानिवद्भावात् न पूर्वस्य लघूपधगुणः । हेर्ङित्त्वात् उकारस्य न गुणः । ' उतश्च प्रत्ययाच्छन्दोवावचनम् ' (पा. सू. ६. ४. १०६. १ ) इति हेर्लुक् न । ' सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ' इति वचनात् हेरेव प्रत्ययस्वरेणोदात्तत्वम् । पादादित्वात् न निघातः । ब्रह्मणः । ' षष्ठ्याः पतिपुत्र° ' ( पा. सू. ८. ३. ५३ ) इत्यादिना संहितायां विसर्जनीयस्य सकारः । सुबामन्त्रितपराङ्गवद्भावात् पदद्वयस्य आमन्त्रितनिघातः । कक्षीवन्तम् । कक्षे भवा कक्ष्या अश्वोदरसंबन्धिनी रज्जुः । ' भवे छन्दसि ' (पा. सू. ४. ४. ११० ) इति यप्रत्ययः । सा अस्यास्तीत्यर्थे ' आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्° ' ( पा. सू. ८. २. १२ ) इति ऋषिविशेषनाम कक्षीवच्छब्दो निपातितः । ' छन्दसीरः ' इति वत्वम् । यप्रत्ययस्वरेण तदादेशो निपातित ईकार उदात्तः । मतुप्सुपौ पित्वादनुदात्तौ । औशिजः । ' वश कान्तौ ' । ' इजि ' ( उ. सू. २. २२८ ) इत्यनुवृत्तौ ' वशेः किच्च ' ( उ. सू. २. २२९ ) इति इजिप्रत्ययः । तस्य किस्वात् ' ग्रहिज्या° ' ( पा. सू. ६. १. १६ ) इत्यादिना संप्रसारणं,

परपूर्वत्वे गुणाभावः । 'तस्यापत्यम्' ( पा. सू. ४. १. ९२ ) इति 'प्राग्दीव्यतोऽण्' ( पा. सू. ४. १. ८३ ) । आदिवृद्धिः । प्रत्ययस्वरेणान्तोदात्तत्वम् ॥

**यो रे॒वान्यो अ॑मीव॒हा व॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥ २ ॥**

यः । रे॒वान् । यः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सः । न॒ः । सि॒स॒क्तु॒ । यः । तु॒रः ॥२॥

यः ब्रह्मणस्पतिः रेवान् धनवान् यः च अमीवहा रोगाणां हन्ता वसुवित् धनलब्धा[1] पुष्टिवर्धनः पुष्टेर्वर्धयिता यः च तुरः त्वरोपेतः शीघ्रफलदः सः ब्रह्मणस्पतिः नः अस्मान् सिषक्तु सेवताम् । परिगृह्यानुगृह्णात्वित्यर्थः । अत्र सिषक्तुशब्दस्य सेवार्थत्वं यास्क आह-'सिषक्तु सचत इति सेवमानस्य' ( निरु. ३. २१ ) इति । प्रत्यायकौ शब्दाविति शेषः ॥ रेवान् । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुलम्' ( पा. सू. ६. १. ३७. ६ ) इति यकारस्य संप्रसारणं परपूर्वत्वम् । 'छन्दसीरः' इति वत्वम् । 'आद्गुणः'। ननु वत्वस्य असिद्धत्वात् बहिरङ्गत्वाच्च प्रागेव गुणे कृते इवर्णाभावान्न वत्वम् । न च 'अन्तादिवच्च' ( पा. सू. ६. १. ८५) इति आदिवद्भावेन इवर्णसंपादनं, वर्णाश्रयविधौ तत्प्रतिषेधात् । अन्यथा खट्वाभिः इत्यत्र सवर्णदीर्घस्य अन्तवद्भावेन अकारत्वात् 'अतो भिस ऐस्' ( पा. सू. ७. १. ९ ) इति ऐसादेशः स्यात् । न च निरवकाशत्वेन वत्वस्य अनवकाशत्वम् । 'अग्निवान्वै दर्भस्तम्बः' ( तै. ब्रा. २. २. १. ५ ), 'उप ब्रह्माणि हरिवः' ( ऋ. सं. १०. १०४. ६ ) इत्यादौ अवकाशलाभात् । सत्यम् । अत्र गुणप्रवृत्तेः प्राक् इकारात्परो मतुप् । कदाचित् इवर्णात्परस्य मतुपः पश्चात् एकारादेशेन इवर्णाभावेऽपि भवति वत्वमिति 'छन्दसीरः' इति सूत्रकृता विवक्षितम् । अमुनैवाभिप्रायेण 'हरिवः' इत्यादिकमुदाहृत्यापि अन्ते वृत्तिकृता 'आरेवान्' ( का. ८. २. १५ ) इत्यप्युदाहृतम् । 'ह्रस्वनुड्भ्याम्°' इत्यत्र आरेशब्दात् मतुप इत्युदात्तत्वं वक्तव्यम् ? ( पा. सू. ६. १. १७६. १ ) इत्यत्र आरेशब्दो रेशब्दस्याप्युपलक्षणम् । अत एव हि 'रेवाँ इन्द्र' इत्यादौ मतुप उदात्तत्वं दृष्टम् । अथवा 'ह्रस्वनुड्भ्याम्' इत्यत्रापि कदाचित् ह्रस्वात्परस्य मतुप उदात्तत्वमित्येव व्याख्येयम् । एवं च संप्रसारणपरपूर्वत्वयोः कृतयोर्गुणात् प्राक् ह्रस्वात्परो मतुप् इति रेवान् आरेवान् इत्यादौ सर्वत्रोदात्तत्वं सिध्यति । अयमेव सूत्रकृतोऽभिप्रायो वार्तिककृता व्याख्यात इति । अमीवहा । 'अम रोगे' इत्येतस्मात् वन्प्रत्ययेन अमीवशब्दो निपातितः । तं हन्तीति 'बहुलं छन्दसि' ( पा. सू. ३. २. ८८ ) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । वसुवित् । वसु विन्दतीति वसुवित् । 'क्विप् च' इति क्विप् । उत्तरपदप्रकृतिस्वरत्वम् । पुष्टिवर्धनः । वर्धयतेः नन्द्यादित्वात् ( पा. सू. ३. १. १३४ ) ल्युः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । पुष्टेर्वर्धन इति कर्मणि षष्ठ्या समासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । सिषक्तु । 'षच समवाये'। लोटि 'बहुलं छन्दसि' ( पा. सू. २. ४. ७६ ) इति शपः श्लुः । 'श्लौ' इति द्वित्वे हलादिशेषे 'बहुलं छन्दसि' (पा. सू. ७. ४. ७८) इत्यभ्यासस्य अकारस्य इकारः । तुरः । 'तुर त्वरणे' । 'इगुपधज्ञाप्रीकिरः कः' । प्रत्ययस्वरः ॥

**मा नः॒ शंसो॒ अर॑रुषो धू॒र्तिः प्रण॒ङ्मर्त्य॑स्य । रक्षा॑ णो ब्रह्मणस्पते ॥ ३ ॥**

मा । न॒ः । शंस॑ः । अर॑रुषः । धू॒र्तिः । प्रण॑क् । मर्त्य॑स्य । रक्ष॑ । न॒ः । ब्र॒ह्म॒णः॒ । प॒ते॒ ॥३॥

---

1. ठ-धनस्य लब्धा ।

vअररुषः vमर्त्यस्य उपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य vधूर्तिः हिंसकः vशंसः शंसनम् । अधिक्षेप इत्यर्थः । तादृशो वाग्विशेषः vनः अस्मान् vमा vप्रणक् मा संपृणक्तु । शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान्मा प्राप्नोत्वित्यर्थः । तदर्थं हे vब्रह्मणस्पते vनः अस्मान् vरक्ष पालय ॥ मा । निपातः । शंसनं शंसः । भावे घञ् । ञित्त्वादाद्युदात्तः । अररुषः । ‘ अर्तेररुः ’ ( उ. सू. ४. ५१९ ) इति अन्तर्भावितण्यर्थात् ‘ ऋ गतौ ’ इत्यस्मात् अरुस् । गुणो रपरत्वम् । प्रत्ययस्वरे प्राप्ते वृषादित्वादाद्युदात्तः । धूर्तिः । धुर्वी हिंसार्थः । ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति क्तिच् । ‘ तितुत्रतथसिसुसरकसेषु च ’ ( पा. सू. ७. २. ९ ) इति इट्प्रतिषेधः । ‘ उपधायाश्च ’ ( पा. सू. ७. १. १०१ ) इति उपधादीर्घत्वम् । वलि लोपं बाधित्वा ऊठि प्राप्ते ( पा. सू. ६. ४. १९ ) ‘ राल्लोपः ’ ( पा. सू. ६. ४. २१ ) इति वकारलोपः । प्रणक् । ‘ पृची संपर्के ’ । लङस्तिप् । ‘ इतश्च ’ इति इकारलोपः । हल्ङ्यादिलोपः । कुत्वम् । ‘ रुधादिभ्यः श्नम् ’ । तस्य ‘ व्यत्ययो बहुलम् ’ ( पा. सू. ३. १. ८५ ) इति अडागमः । यणादेशः । अकारस्य आगमानुदात्तत्वं बाधित्वा व्यत्ययेनोदात्तत्वम् । ‘ चादिलोपे विभाषा ’ ( पा. सू. ८. १. ६३ ) इति निघाताभावः । मर्त्यस्य । ‘ मृङ् प्राणत्यागे ’ । ‘ असिहसिमृ° ’ ( उ. सू. ३. ३६६ ) इत्यादिना औणादिकः तन्प्रत्ययः । मर्तेषु भव इत्यर्थे ‘ भवे छन्दसि ’ ( पा. सू. ४. ४. ११० ) इति यत् । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् । रक्ष । ‘ रक्ष पालने ’ । शपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । पादादित्वात् न निघातः । रक्षा णः । ‘ द्व्यचोऽतस्तिङः ’ ( पा. सू. ६. ३. १३५ ) इति दीर्घः । ‘ उपसर्गाद्बहुलम् ’ ( पा. सू. ८. ४. २८) इति बहुलग्रहणात् अनुपसर्गादपि नसो णत्वम् । ब्रह्मणस्पते । ‘ षष्ठ्याः पतिपुत्र° ’ (पा. सू. ८. ३. ५३ ) इति संहितायां विसर्गस्य सकारः । सुबामन्त्रिते पराङ्गवद्भावात् पदद्वयस्य आमन्त्रितनिघातः ॥

## स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥४॥

सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः । सोमः । हिनोति । मर्त्यम् ॥४॥

vइन्द्रः देवः vयं vमर्त्यं यक्ष्यमाणं vहिनोति प्राप्नोति वर्धयति वा । तथा vब्रह्मणस्पतिः देवो हिनोति । तथा vसोमः हिनोति । vसः vघ स एव यजमानः vवीरः वीर्ययुक्तः सन् vन vरिष्यति न विनश्यति ॥ घ । चादिरनुदात्तः । संहितायाम् ‘ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ’ इति दीर्घः । ब्रह्मणस्पतिः । उक्तम् । हिनोति । ‘ हि गतौ वृद्धौ च ’ । ‘ स्वादिभ्यः श्नुः ’ । तिपः पित्त्वात् श्नुप्रत्ययस्वर एव शिष्यते ॥

## त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥ ५ ॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् । दक्षिणा । पातु । अंहसः ॥५॥

हे vब्रह्मणस्पते vत्वं vतं vमर्त्यम् अनुष्ठातारं मनुष्यम् vअंहसः पापात् पाहीति शेषः । तथा vसोमः vपातु vइन्द्रश्च पातु दक्षिणाख्या देवता च पातु ॥ दक्षिणा । ‘ दक्ष वृद्धौ ’ । ‘द्रुदक्षिभ्यामिनन्’ ( उ. सू. २. २०८ ) । नित्त्वादाद्युदात्तः । अंहसः । ‘ नब्विषयस्य° ’ इत्यादिनाद्युदात्तः ॥ ॥ ३४ ॥

---

१. ठ–यजमानम् ।

अनुप्रवचनीयचरोर्होमे 'सदसस्पतिम्' इत्येषा विनियुक्ता। तथा च गृह्ये 'मेखलामाबध्य' इति खण्डे पठ्यते—'आचार्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतम्' (आश्व. गृ. १. २२. ११) इति॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषम्॥ ६॥

सदसः। पतिम्। अद्भुतम्। प्रियम्। इन्द्रस्य। काम्यम्। सनिम्। मेधाम्। अयासिषम्॥६॥

मेधां लब्धुं सदसस्पतिम् एतन्नामकं देवम् अयासिषं प्राप्तवानस्मि। कीदृशम्। अद्भुतम् आश्चर्यकरं इन्द्रस्य प्रियं सोमपाने सहचारित्वात्[1] काम्यं कमनीयं सनिं धनस्य दातारम्॥ सदसः। षद्लृ विशरणादौ। 'सर्वधातुभ्योऽसुन्'। नित्त्वादाद्युदात्तः। पतिम्। पातेर्डतिः (उ. सू. ४. ४९७)। टिलोपः। प्रत्ययस्वरः। प्रियम्। 'इगुपधज्ञाप्रीकिरः कः'। इयङादेशः। प्रत्ययस्वरः। काम्यम्। कामयतेः 'अचो यत्'। 'णेरनिटि' इति णिलोपः। 'यतोऽनावः' इत्याद्युदात्तत्वम्। सनिम्। 'षणु दाने'। 'धात्वादेः षः सः'। 'अच इः' (उ. सू. ४. ५७८) इत्यनुवृत्तौ 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च' (उ. सू. ४. ५७९) इति इप्रत्ययः। प्रत्ययस्वरः। अयासिषम्। 'या प्रापणे'। लुङ्। मिपोऽमादेशः। 'यमरमनमातां सक् च' (पा. सू. ७. २. ७३) इति सिच इडागमः; धातोः सगागमः। निघातः॥

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन। स धीनां योगमिन्वति॥ ७॥

यस्मात्। ऋते। न। सिध्यति। यज्ञः। विपःऽचितः। चन। सः। धीनाम्। योगम्। इन्वति॥७॥

यज्ञः अयमनुष्ठातव्यः विपश्चितश्चन विदुषोऽपि यजमानस्य यस्मात् सदसस्पतिदेवात् ऋते न सिध्यति सः अयं सदसस्पतिर्देवः धीनां मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा योगं संबन्धम् इन्वति व्याप्नोति। यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः॥ यस्मात्। 'अन्यारात्°' (पा. सू. २. ३. २९) इत्यादिना ऋतेयोगात् पञ्चमी। 'सावेकाचः°' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण°' इति प्रतिषेधः। सिध्यति। 'षिधु संराद्धौ'। श्यनो नित्त्वादाद्युदात्तत्वम्। 'यद्वृत्तान्नित्यम्°' इति निघातप्रतिषेधः। धीनाम्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। योगम्। 'युजिर् योगे'। घञो ञित्त्वादाद्युदात्तत्वम्। इन्वति। 'इवि व्याप्तौ'। शप्। 'इदितो नुम् धातोः' इति नुम्। निघातः॥

आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम्। होत्रा देवेषु गच्छति॥ ८॥

आत्। ऋध्नोति। हविःऽकृतिम्। प्राञ्चम्। कृणोति। अध्वरम्। होत्रा। देवेषु। गच्छति॥८॥

आत् अनन्तरमेव हविष्कृतिं हविःसंपादनयुक्तं यजमानम् ऋध्नोति सदसस्पतिर्देवो वर्धयति। हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः। तथाविधफलसिद्धये अध्वरं यजमानेनानुष्ठीयमानं

---

१. ठ–सहकारित्वात्।

यज्ञं ᵛप्राञ्चं प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तं ᵛकृणोति करोति । ᵛहोत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं ᵛदेवेषु ᵛगच्छति । यद्वा । होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति । ' श्लोकः धारा ' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु ' होत्रा गीः ' ( नि. १. ११. ३५ ) इति पठितम् ॥ हविष्कृतिम् । हविषः कृतिः संपादनं यस्य यजमानस्य सोऽयं हविष्कृतिः । ' बहुव्रीहौ प्रकृत्या° ' इति पूर्वपदप्रकृतिस्वरत्वम् । प्राञ्चम् । ' अनिगन्तोऽञ्चतौ वप्रत्यये ' ( पा. सू. ६. २. ५२ ) इति गतेः प्रकृतिस्वरत्वम् । पश्चात् एकादेशस्वरः । अध्वरम् । न विद्यते ध्वरो हिंसा यस्मिन् । ' नञ्सुभ्याम्° ' इत्युत्तरपदान्तोदात्तत्वम् । हूयतेऽस्यामिति होत्रा देवता । ' हुयामाश्रुभसिभ्यस्त्रन् ' ( उ. सू. ४. ६०७ ) इति त्रन् । नित्वादाद्युदात्तः ॥

**न॒रा॒शंसं॑ सु॒धृष्ट॑म॒मप॑श्यं स॒प्रथ॑स्तमम् । दि॒वो न सद्म॑मखसम् ॥ ९ ॥**

न॒रा॒शंस॑म् । सु॒ऽधृष्ट॑मम् । अप॑श्यम् । स॒प्रथः॑ऽतमम् । दि॒वः । न । सद्म॑ऽमखसम् ॥ ९ ॥

ᵛनराशंसम् एतन्नामकं देवविशेषम् । यद्वा । अवयवार्थव्युत्पत्त्या सदसस्पतिदेवतापरोऽयं शब्दः । व्युत्पत्तिं च यास्को दर्शयति–' नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति ' ( निरु. ८. ६ ) इति । अत्र अग्निवत् सदसस्पतेरपि नरैः शस्यमानत्वात् नराशंसत्वम् । एतमेवाभिप्रायं हृदि निधाय ब्राह्मणमेवमाम्नायते–' प्रजा वै नरो वाक् शंसः ' ( ऐ. ब्रा. ६. २७) इति । अतो मनुष्यैः शस्यमानो यः सदसस्पतिर्यो वा नराशंसनामको देवः तम् ᵛअपश्यम् शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशम् । ᵛसुधृष्टमम् अत्याधिक्येन धाष्टर्ययुक्तं ᵛसप्रथस्तमम् अतिशयेन प्रख्यातं ᵛसद्ममखसं प्राप्ततेजस्कम् । तत्र दृष्टान्तः । ᵛदिवो ᵛन द्युलोकानिव । आदित्यचन्द्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनः तद्वदयं नराशंसस्तेजस्वीत्यर्थः ॥ सुधृष्टमम् । शोभनं धृष्णोतीति सुधृक् । ' क्विप् च ' इति क्विप् । आतिशायनिकस्तमप् । पकारस्य जश्त्वाभावश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वेन ऋकार उदात्तः । अपश्यम् । ' पाघ्राध्मा° ' इत्यादिना पश्यादेशः । ' लुङ्लङ्लृङ्क्ष्वडुदात्तः ' इति अट उदात्तत्वम् । पादादित्वात् न निघातः । सप्रथस्तमम् । ' प्रथ प्रख्याने ' । प्रथनं प्रथः । ' सर्वधातुभ्योऽसुन् ' । नित्वादाद्युदात्तत्वम् । सह प्रथसा वर्तते इति ' तेन सहेति तुल्ययोगे ' ( पा. सू. २. २. २८ ) इति बहुव्रीहिसमासः । ' वोपसर्जनस्य ' ( पा. सू. ६. ३. ८२ ) इति सादेशः । पूर्वपदप्रकृतिस्वरत्वे प्राप्ते ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । दिवः । ' ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम् । सद्ममखसम् । सीदतीति सद्म । षद्लृ विशरणादौ । ' अन्येभ्योऽपि दृश्यन्ते ' ( पा. सू. ३. २. ७५ ) इति मनिन् । नित्वादाद्युदात्तः । सद्म महो यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः ॥ ॥ ३५ ॥

' प्रति त्यम् ' इति नवर्चं द्वितीयं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । देवता त्वनुक्रम्यते—' प्रति त्यमाग्निमारुतम् ' इति । कारीरीष्टौ ' प्रति त्यम् ' इत्येषा धाय्या । तथा च सूत्रितं–' वर्षकामेष्टिः कारीरी तस्यां प्रति त्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये ' (आश्व. श्रौ. २. १३ ) इति ॥

**प्रति॒ त्यं चारु॑मध्व॒रं गो॑पी॒थाय॒ प्र हू॑यसे । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ १ ॥**

प्रति॑ । त्यम् । चारु॑म् । अ॒ध्व॒रम् । गो॒ऽपी॒थाय॑ । प्र । हू॒य॒से॒ । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ १ ॥

१. क-ख-य-र-ल–एवमेवा° ।

स्यच्छब्दः सर्वनाम तच्छब्दपर्यायः। हे ᵛअग्ने यो यज्ञः चारुः अङ्गवैकल्यरहितः ᵛत्यं तथाविधं ᵛचारुमध्वरं प्रतिलभ्य ᵛगोपीथाय सोमपानाय ᵛप्र ᵛहूयसे प्रकर्षेण त्वं हूयसे तस्मात् अस्मिन्नध्वरे त्वं ᵛमरुद्भिः देवविशेषैः सह ᵛआ ᵛगहि आगच्छ। सेयमृक् यास्केनैवं व्याख्याता–' तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ ' ( निरु. १०. ३६ ) इति ॥ प्रति । निपात आद्युदात्तः । त्यम् । ' त्यदादीनामः ' ( पा. सू. ७. २. १०२ ) । प्रातिपदिकस्वरः । चारुम् । ' दृसनिजनिचरि° ' ( उ. सू. १. ३ ) इत्यादिना ञुण् । ' अत उपधायाः ' ( पा. सू. ७. २. ११६ ) इति वृद्धिः । ञित्वादाद्युदात्तः । गोपीथाय । ' निशीथगोपीथावगथाः ' ( उ. सू. २. १६६ ) इति थक्प्रत्ययान्तो निपातितः । प्र । निपातस्वरः ॥

## नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥ २ ॥

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥२॥

हे ᵛअग्ने ᵛमहः महतः ᵛतव संबन्धिनं ᵛक्रतुं कर्मविशेषमुल्लङ्घ्य ᵛपरः ᵛनहि उत्कृष्टः ᵛदेवः न भवति खलु । तथा ᵛमर्त्यः मनुष्यश्च परः ᵛन भवति । ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रतौ इज्यन्ते ते एवोत्कृष्टा इत्यर्थः । मरुद्भिरित्यादि पूर्ववत् ॥ नहि । ' एवमादीनामन्तः ' इत्यन्तोदात्तः । देवः । पचाद्यजन्तः चित्वादन्तोदात्तः । महः । महतस्तलोपश्छान्दसः । ' बृहन्महतोरुपसंख्यानम् ' ( पा. सू. ६. १. १७३. १ ) इति विभक्तेरुदात्तत्वम् । तव । ' युष्मदस्मदोर्ङसि ' ( पा. सू. ६. १. २११ ) इत्याद्युदात्तत्वम् । क्रतुम् । । ' कृञः कतुः ' ( उ. सू. १. ७७ ) । प्रत्ययाद्युदात्तत्वम् । गहि । ' गम्लृ सृप्लृ गतौ ' । लोटः सेर्हिः । ' बहुलं छन्दसि ' इति शपो लुक् । ' अनुदात्तोपदेश° ' ( पा. सू. ६. ४. ३७ ) इत्यादिना अनुनासिकलोपः । तस्य ' असिद्धवदत्राभात् ' ( पा. सू. ६. ४. २२ ) इति असिद्धत्वात् ' अतो हेः ' इति लुक् न भवति । निघातः ॥

## ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥ ३ ॥

ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥३॥

हे अग्ने ᵛये मरुतः ᵛमहो ᵛरजसः महत उदकस्य वर्षणप्रकारं ᵛविदुः तैः मरुद्भिः इत्यन्वयः । कीदृशा मरुतः । ᵛविश्वे सर्वे सप्तविधगणोपेताः । ' सप्तगणा वै मरुतः ' ( तै. सं. २. २. ११. १ ) इति श्रुतेः । ᵛदेवासः द्योतमानाः ᵛअद्रुहः द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । तथा च उपरिष्टादाम्नायते–' उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ' (ऋ. सं. ५. ५५.५ ) इति । शाखान्तरेऽपि मन्त्रान्तरस्य ब्राह्मणमेवमाम्नायते–'मरुतां पृषतयः स्थेत्याह मरुतो वै वृष्ट्या ईशते ' (तै. ब्रा.३. ३. ९. ४) इति । रजःशब्दो यास्केन बहुधा व्याख्यातः–' रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते ' (निरु. ४. १९ ) इति॥ रजसः । ' नञ्विषयस्यानिसन्तस्य ' इत्याद्युदात्तः । विदुः । ' विद ज्ञाने ' । ' विदो लटो वा ' ( पा. सू. ३. ४. ८३ ) इति झेः उसादेशः । प्रत्ययस्वरः । यद्वृत्तयोगात् निघाताभावः । विश्वे । विशेः क्वन्नन्तस्य नित्वादा-

१. ग-ण-त-र-श–महत्त्वम् ।

द्युदात्तत्वम् । देवासः । ' आज्जसेरसुक् ' । देवशब्दः पचाद्यजन्तः । चित्त्वादन्तोदात्तः । अद्रुहः । संपदादित्वात् भावे क्विपि बहुव्रीहौ ' नञ्सुभ्याम्° ' इत्यन्तोदात्तत्वम् । कर्तरि वा क्विप् । तत्पुरुषे हि अव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात् । न च कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा. सू. ६. २. १३९ ), यतो नञ् न गतिर्न च कारक इति ॥

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥ ४ ॥

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥

ये मरुतः उग्राः तीव्राः सन्तः अर्कम् उदकम् आनृचुः अर्चितवन्तः वर्षणेन संपादितवन्त इत्यर्थः । तैः मरुद्भिः इत्यन्वयः । कीदृशा मरुतः । ओजसा बलेन अनाधृष्टासः अतिरस्कृताः सर्वेभ्योऽपि प्रबला इत्यर्थः । अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आमनन्ति—' आपो वा अर्कः ' (श. ब्रा. १०. ६. ५. २) इति । तन्निर्वचनं च त एवामनन्ति–' सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् ' ( श. ब्रा. १०. ६. ५. १ ) इति । स जगत् सृष्ट्वा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽर्चन् सत्यसंकल्पमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत् । तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नम् । तदानीमर्चतो मत्तः कमभूदित्यवोचत् । तेनोदकस्य अर्कनाम निष्पन्नमित्यर्थः ॥ आनृचुः । अर्चतेः ' अपस्पृधेथाम्° ' ( पा. सू. ६. १. ३६ ) इत्यादिना निपातितः । प्रत्ययस्वरः । यद्वृत्तयोगात् न निघातः । अनाधृष्टासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ओजसा । । ' उब्जेर्बलोपश्च ' ( उ. सू. ४. ६३१ ) इति असुन् । नित्त्वादाद्युदात्तः ॥

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥ ५ ॥

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥

ये मरुतः शुभ्रत्वादिगुणोपेताः तैः मरुद्भिः इत्यन्वयः । शुभ्राः शोभनाः घोरवर्पसः उग्ररूपधराः सुक्षत्रासः शोभनधनोपेताः रिशादसः हिंसकानां भक्षकाः । 'मघम्' इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु ' क्षत्रं भगः ' ( नि. २. १०. ९ ) इति पठितम् । शुभ्राः । ' स्फायितञ्चि° ' इत्यादिना शुभेः औणादिको रक्प्रत्ययः । प्रत्ययस्वरः । घोरवर्पसः । घोरं वर्पो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुक्षत्रासः । बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । ' आद्युदात्तं द्व्यच्छन्दसि ' ( पा. सू. ६. २. ११९ ) इत्येव तु न भवति, क्षत्रशब्दस्यान्तोदात्तत्वात् । रिशन्ति हिंसन्तीति रिशाः । तान् अदन्तीति रिशादसः । सर्वधातुभ्योऽसुन्प्रत्ययः । नित्स्वरेण उत्तरपदमाद्युदात्तम् । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥ ॥ ३६ ॥

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥ ६ ॥

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि॥६॥

---

१. ग-छ–उदकसत्यसंकल्प° ।

ᵛये मरुतः ᵛनाकस्याधि दुःखरहितस्य सूर्यस्योपरि ᵛदिवि द्युलोके ᵛरोचने दीप्यमाने ᵛये ᵛदेवासः स्वयमपि दीप्यमानाः ᵛआसते तैः मरुद्भिः इत्यन्वयः॥ नाकस्य। कं सुखम्। तत् यस्मिन्नास्ति असौ अकः इति बहुव्रीहिं कृत्वा पश्चात् नञ्। न अको नाक इति नञ्तत्पुरुषः । 'नलोपो नञः' (पा. सू. ६. ३. ७३) इति लोपो न भवति, 'नभ्राण्नपात्°' (पा. सू. ६. ३. ७५) इत्यादिना प्रकृतिभावात्। 'तत्पुरुषे तुल्यार्थ°' (पा. सू. ६. २. २) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वेनो-दात्तत्वम्। प्रथमतस्तत्पुरुषं कृत्वा पश्चात् बहुव्रीहौ उत्तरपदान्तोदात्तत्वं स्यात्। अधिशब्द उपर्यर्थे। उपसर्गप्रतिरूपको निपातः। रोचने। 'रुच दीप्तौ'। 'अनुदात्तेतश्च हलादेः' (पा. सू. ३. २. १४९) इति युच्। 'चितः' इत्यन्तोदात्तत्वम्। दिवि। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्। देवासः। 'आज्जसेरसुक्' इति असुक्। आसते। 'आस उपवेशने'। अनुदात्तेत्वात् आत्मनेपदम्। झस्य अदादेशः। 'अदिप्रभृतिभ्यः शपः' इति शपो लुक्। अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वम्। यद्वृत्तयोगात् न निघातः॥

**य ई॑ङ्ख॒यन्ति॒ पर्व॑तान् ति॒रः स॑मु॒द्रम॑र्ण॒वम्। म॒रुद्भि॑रग्न॒ आ ग॑हि॥ ७॥**

ये। ई॒ङ्ख॒यन्ति॑। पर्व॑तान्। ति॒रः। स॒मु॒द्रम्। अ॒र्ण॒वम्। म॒रुत्ऽभिः॑। अ॒ग्ने॒। आ। ग॒हि॒॥७॥

ᵛये मरुतः ᵛपर्वतान् मेघान् ᵛईङ्खयन्ति चालयन्ति तथा ᵛअर्णवं उदकयुक्तं ᵛसमुद्रं ᵛतिरः कुर्वन्तीति शेषः। निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः। तैः मरुद्भिः इत्यन्वयः॥ ईङ्खयन्ति। 'उख उखि' इत्यादौ ईखिर्गत्यर्थः। 'हेतुमति च' (पा. सू. ३. १. २६) इति णिच्। 'इदितो नुम् धातोः' इति नुम्। णिजन्तधातोः 'चितः' इत्यन्तोदात्तत्वम्। शपः पित्त्वा-दनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। पर्वतान्। 'पूर्व पर्व मर्व पूरणे'। औणादिकोऽतन्। प्रत्ययस्वरः॥

**आ ये त॒न्वन्ति॑ र॒श्मिभि॑स्ति॒रः स॑मु॒द्रमोज॑सा। म॒रुद्भि॑रग्न॒ आ ग॑हि॥ ८॥**

आ। ये। त॒न्वन्ति॑। र॒श्मिऽभिः॑। ति॒रः। स॒मु॒द्रम्। ओज॑सा। म॒रुत्ऽभिः॑। अ॒ग्ने॒। आ। ग॒हि॒॥८॥

ᵛये मरुतः ᵛरश्मिभिः सूर्यकिरणैः सह ᵛआ ᵛतन्वन्ति आप्नुवन्ति आकाशमिति शेषः। किंच ᵛओजसा स्वकीयबलेन ᵛसमुद्रं तिरस्कुर्वन्ति तैः मरुद्भिः इत्यन्वयः॥ तन्वन्ति। 'तनु विस्तारे'। लटो 'झोऽन्तः'। 'तनादिकृञ्भ्य उः' (पा. सू. ३. १. ७९)। 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति तिङ एव आद्युदात्तत्वम्[1]। समुद्रम्। 'उन्दी क्लेदने'। 'स्फायितञ्चि°' इति रक्। समासे कृदुत्तरपद-प्रकृतिस्वरत्वम्॥

**अ॒भि त्वा॑ पू॒र्वपी॑तये सृ॒जामि॑ सो॒म्यं मधु॑। म॒रुद्भि॑रग्न॒ आ ग॑हि॥ ९॥**

अ॒भि। त्वा॒। पू॒र्वऽपी॑तये। सृ॒जामि॑। सो॒म्यम्। मधु॑। म॒रुत्ऽभिः॑। अ॒ग्ने॒। आ। ग॒हि॒॥९॥

---

१. श–'आद्युदात्तत्वम्' इत्यस्यानन्तरं 'रश्मिभिः। नियो मिः इत्यनुवृत्तौ अश्नोतेरश च इति मिः। प्रत्ययस्वरः' इत्यधिकम्।

हे ᵛअग्ने ᵛपूर्वपीतये पूर्वकाले प्रवृत्ताय पानाय त्वां प्रति ᵛसोम्यं ᵛमधु सोमसंबन्धिनं मधुररसम् ᵛअभि ᵛसृजामि सर्वतः संपादयामि। अतस्त्वं ᵛमरुद्भिः सह अत्र आगच्छ॥ अभि। 'एवमादीनामन्तः' इत्यन्तोदात्तत्वम्। 'त्वामौ द्वितीयायाः ' ( पा. सू. ८. १. २३ ) इति त्वादेशः सर्वानुदात्तः। पूर्वपीतये। पूर्वा चासौ पीतिश्च। 'पुंवत्कर्मधारय° ' ( पा. सू. ६. ३. ४२ ) इत्यादिना पुंवद्भावः। सृजामि। 'सृज विसर्गे'। मिपः पित्त्वादनुदात्तत्वम्। विकरणस्वरः। सोम्यम्। 'सोममर्हति यः'। प्रत्ययस्वरेणान्तोदात्तः। मधु। 'फलिपाटिनमि° ' ( उ. सू. १. १८ ) इत्यादिना उप्रत्ययः। 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम्। अन्यद्गतम्॥[1] ॥ ३७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण

सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे

ऋक्संहिताभाष्ये प्रथमाष्टके

प्रथमोऽध्यायः

समाप्तः॥

---

१. च-श–'अन्यद्गतम्' इत्यस्यानन्तरं 'अत्र यास्कः–अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति' इत्यधिकम्।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथ प्रथमाष्टके द्वितीयोऽध्याय आरभ्यते। तत्र 'अयं देवाय' इत्यष्टर्चं सूक्तम्। तस्य ऋषिच्छन्दसी पूर्ववत्। ऋभुदेवताकत्वमनुक्रम्यते–'अयमष्टावार्भवम्' इति। विनियोगस्तु सूक्तस्य लैङ्गिकः स्मार्तो वा द्रष्टव्यः। व्यूढस्य प्रथमे छन्दोमे वैश्वदेवशस्त्रे 'अयं देवाय जन्मने' इति आर्भवस्तृचः। 'अथ च्छन्दोमाः' इति खण्डे सूत्रितम्–'अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवायं देवाय जन्मन इति तृचाः' (आश्व. श्रौ. ८. ९) इति॥

## अयं देवाय जन्मने स्तोमो विप्रेभिरासया। अकारि रत्नधातमः॥ १॥

अयम्। देवाय। जन्मने। स्तोमः। विप्रेभिः। आसया। अकारि। रत्नऽधातमः॥ १॥

ऋभवो हि मनुष्याः सन्तस्तपसा देवत्वं प्राप्ताः। ते चात्र सूक्ते देवताः। तत्संघो जायमानवाचिना जन्मशब्देन एकवचनान्तेन अत्र निर्दिश्यते। ᵛजन्मने जायमानाय ऋभुसंघरूपाय ᵛदेवाय तत्प्रीत्यर्थम् ᵛअयं ᵛस्तोमः स्तोत्रविशेषः ᵛविप्रेभिः मेधाविभिः ऋत्विग्भिः ᵛआसया स्वकीयेनास्येन ᵛअकारि निष्पादितः। कीदृशः स्तोमः। ᵛरत्नधातमः अतिशयेन रमणीयमणिमुक्तादिधनप्रदः। स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छन्तीत्यर्थः॥ आसया। आस्यशब्दात् तृतीयैकवचनस्य 'सुपां सुलुक्॰' इत्यादिना याजादेशः। व्यत्ययेन प्रकृतियकारस्य लोपः। 'चितः' इत्यन्तोदात्तः। रत्नधातमः। रत्नानि दधातीति रत्नधाः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

## य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी। शमीभिर्यज्ञमाशत॥ २॥

ये। इन्द्राय। वचःऽयुजा। ततक्षुः। मनसा। हरी इति। शमीभिः। यज्ञम्। आशत॥२॥

ᵛये ऋभवः ᵛइन्द्राय इन्द्रप्रीत्यर्थं ᵛवचोयुजा ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ ᵛहरी एतन्नामकावश्वौ ᵛमनसा ᵛततक्षुः संपादितवन्तः। ऋभूणां सत्यसंकल्पत्वात् तत्संकल्पमात्रेण इन्द्रस्याश्वौ संपन्नावित्यर्थः। ते ऋभवः ᵛशमीभिः ग्रहचमसादिनिष्पादनरूपैः कर्मभिः ᵛयज्ञम् अस्मदीयम् ᵛआशत व्याप्तवन्तः। 'अपः अप्नः' इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु 'शमी शिमी' (नि. २. १. २३) इति पठितम्॥ वचोयुजा। वचसा युञ्जाते। 'सत्सूद्विष॰' इत्यादिना क्विप्। 'सुपां सुलुक्॰' इत्यादिना विभक्तेः आकारः। कृदुत्तरपदप्रकृतिस्वरः। ततक्षुः। 'तक्षू त्वक्षू तनूकरणे'। लिटि झेः उसादेशः। पादादित्वादनिघातः। शमीभिः। शमयन्ति पापानीति शम्यः कर्माणि। औणादिकः इन्। 'कृदिकारादक्तिनः' (पा. सू. ४. १. ४५ ग.) इति ङीष्। वृषादित्वादाद्युदात्तः। आशत। 'अशू व्याप्तौ'। लुङि झस्य अदादेशः। 'स्वादिभ्यः श्नुः'। तस्य 'बहुलं छन्दसि' इति लुक्। आडागमः। 'तिङ्ङतिङः' इति निघातः॥

---

१. च-छ-फ–इत्यष्टर्चं तृतीयम्। २. ढ–युज्येते।

तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् । तक्षन्धेनुं सबर्दुघाम् ॥ ३ ॥

तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् । तक्षन् । धेनुम् । सबःऽदुघाम् ॥ ३ ॥

ᵛनासत्याभ्याम् अश्विदेवप्रीत्यर्थं ᵛरथं ᵛतक्षन् ऋभवो देवाः कंचिद्रथमतक्षन् तक्षणेन संपादितवन्तः । कीदृशम् । ᵛपरिज्मानं परितो गन्तारं ᵛसुखं उपर्युपवेशने सुखकरम् । किंच ᵛधेनुं कांचिद्गां ᵛतक्षन् । धातूनामनेकार्थत्वात् तक्षतिरत्र संपादनवाची । कीदृशीं धेनुम् । ᵛसबर्दुघां सबरः क्षीरस्य दोग्ध्रीम् ॥ तक्षन् । 'बहुलं छन्दसि°' ( पा. सू. ६. ४. ७५ ) इति अडभावः । नासत्याभ्याम् । न विद्यते सत्यं ययोस्तौ असत्यौ । न असत्यौ नासत्यौ । 'नभ्राण्नपात्°' ( पा. सू. ६. ३. ७५ ) इत्यादिना नलोपाभावः । परिज्मानम् । अजेः परिपूर्वस्य 'श्वन्नुक्षन्°' ( उ. सू. १. १५७ ) इत्यादिना मन्प्रत्यये अकारलोपः आद्युदात्तत्वं च निपातनात् । सबर्दुघाम् । सबः पयः दोग्धीति सबर्दुघा । 'दुहः कब्घश्च' ( पा. सू. ३. २. ७० ) इति कप् । सबर् इति रेफान्तं प्रातिपदिकं क्षीरवाची इति संप्रदायविदः । कपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरः ॥

द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'युवाना पितरा पुनः' इति आर्भवस्तृचः । द्वितीयस्य 'अग्निं वो देवम्' इति खण्डे सूत्रितं—'मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ' ( आश्व. श्रौ. ८. १० ) इति ॥

युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः । ऋभवो विष्ट्यक्रत ॥ ४ ॥

युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः । ऋजुऽयवः । ऋभवः । विष्टी । अक्रत ॥ ४ ॥

ᵛऋभव एतन्नामका देवाः पितरौ स्वकीयौ मातापितरौ पूर्वं वृद्धावपि ᵛपुनः ᵛयुवाना तरुणौ ᵛअक्रत कृतवन्तः । कीदृशाः । ᵛसत्यमन्त्राः अवितथमन्त्रसामर्थ्योपेताः । पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वात् यद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्तत्फलं तथैव संपद्यते । तस्मात् जीर्णयोः पित्रोर्युवत्वं संपादयितुं समर्था इत्यर्थः । ᵛऋजूयवः ऋजुतामात्मन इच्छन्तः छलरहिता इत्यर्थः । अत एव एतेषामनुष्ठिता मन्त्राः सिध्यन्ति । ᵛविष्टी विष्टयो व्याप्तियुक्ताः । सर्वेषु कार्येषु एतदीयस्य मन्त्रसामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते । ऋभुशब्दं यास्क एवं निर्वक्ति—'ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा' ( निरु. ११. १५ ) इति ॥ युवाना । युवन्शब्दो यौतेः कनिनन्तो नित्त्वादाद्युदात्तः । 'सुपां सुलुक्°' इत्यादिना विभक्तेः आकारः । पितरा । पूर्ववदाकारः । सत्यमन्त्राः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । ऋजुशब्दो भावपरः । ऋजुत्वमात्मन इच्छन्ति । क्यच् । 'अकृत्सार्वधातुकयोर्दीर्घः' ( पा. सू. ७. ४. २५ ) इति दीर्घः । 'क्याच्छन्दसि' ( पा. सू. ३. २. १७० ) इति उप्रत्ययः । प्रत्ययस्वरः । विष्टी । 'विष्लृ व्याप्तौ' । 'क्तिच्क्तौ च संज्ञायाम्' ( पा. सू. ३. ३. १७४ ) इति क्तिच् । 'तितुत्र°' इत्यादिना इट्प्रतिबन्धः । तस्मात् जसः 'इयाडियाजीकाराणामुपसंख्यानम्' ( पा. सू. ७. १. ३९. १ ) इति तस्य ईकारादेशः । स च 'अलोऽन्त्यस्य' ( पा. सू. १. १. ५२ ) इति सकारस्य भवति । ततः 'आद्गुणः' इति गुणे कृते 'प्रथमयोः पूर्वसवर्णः' ( पा. सू. ६. १. १०२ ) इति पूर्वसवर्णदीर्घः । तं बाधित्वा परत्वात् 'जसि च' ( पा. सू. ७. ३. १०९ ) इति ह्रस्वस्य गुणेन भवितव्यमिति चेत्, न । संज्ञापूर्वकस्य विधेरनित्यत्वात् । अक्रत । कृञो लुङ् । आत्मनेपदम् । झस्य अदादेशः । 'मन्त्रे घस°' ( पा. सू. २. ४. ८० ) इत्यादिना च्लेर्लुक् । यणादेशः । अडागमः । निघातः ॥

सं वो मदांसो अग्मतेन्द्रेण च मरुत्वता आदित्येभिश्च राजंभिः ॥ ५ ॥

सम् । वः । मदांसः । अग्मत । इन्द्रेण । च । मरुत्वता । आदित्येभिः । च । राजंऽभिः ॥५॥

हे ऋभवः vवः युष्माकं संबन्धिनः vमदासः मदहेतवः सोमाः vइन्द्रेण vच vआदित्येभिः आदित्यैः vच vसम् vअग्मत संगताः । ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति । अत एव आवाहननिगदः आश्वलायनेनैवं पठितः–' इन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावह ' ( आश्व. श्रौ. ५. ३ ) इति । कीदृशेनेन्द्रेण vमरुत्वता मरुद्भिर्युक्तेन । अत एव मन्त्रान्तरमेवमाम्नायते–' मरुद्भिरिन्द्र सख्यं ते अस्तु ' ( ऋ. सं. ८. ९६. ७ ) इति । कीदृशैरादित्येभिः । vराजभिः दीप्यमानैः ॥ मदासः । मा॒द्यति एभिरिति मदाः सोमाः । ' मदोऽनुपसर्गे ' ( पा. सू. ३. ३. ६७ ) इत्यप् । तस्य पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । ' आज्जसेरसुक् ' इति जसः असुगागमः । अग्मत । गमेः संपूर्वात् लुङ् । ' समो गम्यृच्छि° ' ( पा. सू. १. ३. २९ ) इत्यादिना आत्मनेपदम् । झस्य अदादेशः । ' मन्त्रे घस° ' इत्यादिना च्लेर्लुक् । ' गमहन° ' ( पा. सू. ६. ४. ९८ ) इत्यादिना उपधालोपः । ' व्यवहिताश्च ' इति समो व्यवहितप्रयोगः । निघातः । मरुत्वता । मरुतोऽस्य सन्तीति मरुत्वान् । ' तसौ मत्वर्थे ' ( पा. सू. १. ४. १९ ) इति भसंज्ञया पदसंज्ञाया बाधितत्वात् जश्त्वाभावः । ' झयः ' ( पा. सू. ८. २. १० ) इति मतुपो वत्वम् । आदित्येभिः । ' बहुलं छन्दसि ' ( पा. सू. ७. १. १० ) इति भिस ऐसादेशाभावे ' बहुवचने झल्येत् ' इति एत्वम् । राजभिः । राजन्शब्दस्य कनिनन्तत्वेन नित्त्वादाद्युदात्तत्वम् ॥ ॥ १ ॥

उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥ ६ ॥

उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् । अकर्त । चतुरः । पुनरिति ॥६॥

vउत अपि च vत्वष्टुः एतन्नामकस्य vदेवस्य संबन्धी तक्षणव्यापारः vनवं नूतनं vत्यं vचमसं तं सोमधारणक्षमं काष्ठपात्रविशेषं vनिष्कृतं निःशेषेण संपादितमकरोदिति शेषः । तक्षणव्यापारकुशलस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं तमेकं चमसं पुनरपि vचतुरः vअकर्त चतुर्धा विभक्तांश्चमसान् कृतवन्तः । एकस्य चतुर्विधत्वकरणरूपोऽयमर्थो मन्त्रान्तरेऽपि विस्पष्टः–' एकं चमसं चतुरः कृणोतन ' ( ऋ. सं. १. १६१. २ ) इति ॥ नवम् । ' णु स्तुतौ ' । नूयत इति नवम् । कर्मणि अप्प्रत्ययः । स हि घञोऽपवादत्वात् घञर्थे सर्वत्र भवति । घञ्प्रत्ययश्च ' अकर्तरि च कारके संज्ञायाम् ' ( पा. सू. ३. ३. १९ ) इति कर्तृव्यतिरिक्ते सर्वत्र कारके भवति । यद्यपि तत्र संज्ञायां इत्युक्तं तथापि चकारस्य संज्ञाव्यभिचारार्थत्वात् असंज्ञायामपि भवत्येव । संबध्यते इति संबन्धः । कर्मणि घञ् इत्युक्तम् । त्वष्टुः । ' तक्षू त्वक्षू तनूकरणे ' । औणादिकस्तृन् । ऊदित्वात्पक्षे इडभावः ( पा. सू. ७. २. ४४ ) । ' स्कोः संयोगाद्योरन्ते च ' ( पा. सू. ८. २. २९ ) इति ककारलोपः । निष्कृतम् । कृञो निरुपसृष्टात् कर्मणि क्तः । प्रादिसमासे ' नित्यं समासेऽनुत्तरपदस्थस्य ' ( पा. सू. ८. ३. ४५ ) इति षत्वम् । अत्र ' कर्तृकर्मणोः कृति ' ( पा. सू. २. ३. ६५ ) इति प्राप्ता षष्ठी यद्यपि ' न लोकाव्यय° ' ( पा. सू. २. ३. ६९ ) इति निषिद्धा तथापि कर्तुः शेषत्वेन विवक्षितत्वात् 'कर्तृकरणयोस्तृतीया' ( पा. सू. २. ३. १८ ) इत्येतस्याः प्राप्तेः शैषिकी षष्ठी ( पा. सू. २. ३. ५० ) । यथा कर्मणि शेषत्वेन विवक्षिते माषाणामश्नीयात्

१. ढ–माद्यते । २. ढ–सोमाधारणलक्षणम् । ६. ग-छ-झ-ढ-ण-र–तस्य त्वष्टुः ।

इति। 'गतिरनन्तरः' इति निस उदात्तत्वम्। अकर्त अकृषत। कृञो लुङि झस्य व्यत्ययेन तादेशः। 'मन्त्रे घस०' इत्यादिना च्लेर्लुक्। 'छन्दस्युभयथा' इति तिङ आर्धधातुकत्वात् ङित्वाभावेन गुणः। चतुरः। 'चतुरः शसि' (पा. सू. ६. १. १६७) इत्युकार उदात्तः। पुनः। स्वरादिष्वाद्युदात्तः पठितः॥

तृतीये छन्दोमे वैश्वदेवशस्त्रे 'ते नो रत्नानि धत्तन' इति द्वे ऋचावार्भव्यौ। 'तृतीयस्यागन्म मह' इति खण्डे सूत्रितम्—'इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्येका द्वे च' (आश्व. श्रौ. ८. ११) इति॥

## ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते। एकमेकं सुशस्तिभिः॥ ७॥

ते। नः। रत्नानि। धत्तन। त्रिः। आ। साप्तानि। सुन्वते। एकम्ऽएकम्। सुशस्तिऽभिः॥७॥

पूर्वास्वृक्षु ये प्रतिपादिता ऋभवः ᵛते यूयं ᵛसुशस्तिभिः शोभनैरस्मदीयशंसनैर्युक्ताः सन्तः ᵛनः अस्माकं सबन्धिने ᵛसुन्वते सोमाभिषवं कुर्वते यजमानाय ᵛरत्नानि रमणीयानि सुवर्णमणिमुक्तादीनि धनानि ᵛएकमेकं क्रमेण प्रत्येकं ᵛधत्तन प्रयच्छत। सुवर्णादीनां मध्ये प्रतिद्रव्यं यावदपेक्षितं तावदिति विवक्षया एकमेकमित्युक्तम्। कीदृशानि रत्नानि। ᵛत्रिरा त्रिवारम् आवृत्तानि। उत्तमानि मध्यमान्यधमानि च इत्येवं रत्नानां त्रिरावृत्तिः। किंच ᵛसाप्तानि सप्तसंख्यानिष्पन्नवर्गरूपाणि कर्माणि च धत्तन संपादयत। कीदृशानि साप्तानि। त्रिरा त्रिवारम् आवृत्तानि। अग्न्याधेयदर्शपूर्णमासादीनां सप्तानां हविर्यज्ञानामेको वर्गः। औपासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः। अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां सप्तानां सोमसंस्थानां वर्गस्तृतीयः॥ रत्नानि। 'रमु क्रीडायाम्'। 'नित्' इत्यनुवृत्तौ 'रमेस्त च' (उ. सू. ३. २९४) इति नप्रत्ययः; तत्संनियोगेन मकारस्य तकारः। नित्वादाद्युदात्तः। धत्तन धत्त। 'तप्तनप्तनथनाश्च' इति तशब्दस्य तनादेशः। सप्तानां वर्गः साप्तम्। 'सप्तनोऽञ् छन्दसि' (पा. सू. ५. १. ६१) इति वर्गे अञ्प्रत्ययः। 'नस्तद्धिते' (पा. सू. ६. ४. १४४) इति टिलोपः। ञित्वादादिवृद्धिः आद्युदात्तत्वं च। अत्र वर्गवचनेनानेन वर्गिणो लक्ष्यन्ते तेन बहुवचनम्। अन्यथा ह्येक एव वर्गस्त्रिरावृत्त इत्येकवचनमेव स्यात्। सुन्वते। 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम्। एकमेकम्। 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः। एकशब्द इणः कनन्तो नित्वादाद्युदात्तः। द्वितीयस्यैकशब्दस्य 'तस्य परमाम्रेडितम्' इति आम्रेडितसंज्ञायाम् 'अनुदात्तं च' (पा. सू. ८. १. ३) इत्यनुदात्तत्वम्। सुशस्तिभिः। शस्यते आभिरिति शस्तयः ऋचः। 'शंसु स्तुतौ'। करणे क्तिन्। तस्य कित्वात् लोपः। शोभनाः शस्तयः इति प्रादिसमासे यद्यपि च क्तिनो नित्वादाद्युदात्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव प्राप्तं, तत्तु परेण 'मन्क्तिन्व्याख्यान०' (पा. सू. ६. २. १५१) इत्यादिना उत्तरपदान्तोदात्तत्वेन बाध्यते॥

## अधारयन्त वह्नयोऽभजन्त सुकृत्यया। भागं देवेषु यज्ञियम्॥ ८॥

अधारयन्त। वह्नयः। अभजन्त। सुऽकृत्यया। भागम्। देवेषु। यज्ञियम्॥ ८॥

ᵛवह्नयः चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः ऋभवः ᵛअधारयन्त पूर्वं मनुष्यत्वेन मरणयोग्या अपि अमृतत्वलाभेन प्राणान् धारितवन्तः। तथा च मन्त्रान्तरमाम्नायते—'मर्तासः सन्तो

१. च-छ-त-फ-श-ष—वैश्वदेव इत्यादीनाम्।

अमृतत्वमानशुः' ( ऋ. सं. १. ११०. ४ ) इति । किंचैते ᵛसुकृत्यया यज्ञसाधनद्रव्यसंपादनरूपेण शोभनव्यापारेण ᵛदेवेषु मध्ये स्थिताः ᵛयज्ञियं यज्ञार्हं ᵛभागं हविर्लक्षणम् ᵛअभजन्त सेवितवन्तः । अयमर्थः 'सौधन्वना यज्ञियं भागमानश' ( ऋ. सं. ३. ६०. १ ) इत्यादिमन्त्रान्तरे विस्पष्टः । ब्राह्मणेऽपि 'ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्' ( ऐ. ब्रा. ३. ३० ) इत्याद्युपाख्यानं विस्पष्टम् ॥ वह्नयः । नित्' इत्यनुवृत्तौ 'वहिश्रि॰' इत्यादिना निप्रत्ययः । अभजन्त । पादादित्वादनिघातः । सुकृत्यया । 'विभाषा कृवृषोः' ( पा. सू. ३. १. १२० ) इति कृञः कर्मणि क्यप् । शोभनं कृत्यं यस्या भजनक्रियायाः सा सुकृत्या । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ननु कृत्यशब्दे क्यपः पित्त्वेनानुदात्तत्वात् धातुस्वरेणादिरुदात्तः । ततश्च 'आद्युदात्तं द्व्यच्छन्दसि' ( पा. सू. ६. २. ११९ ) इत्यनेनाद्युदात्तत्वेन भवितव्यम् । तेन हि पुरस्तादपवादेन परमपि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं बाध्यते इत्युक्तम् । एवं तर्हि 'कृञः श च' ( पा. सू. ३. ३. १०० ) इति स्त्रियां भावे क्यप्प्रत्ययान्तः कृत्याशब्दः । क्यपः पित्त्वेऽपि व्यत्ययेनोदात्तत्वम् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । भागम् । 'कर्षात्वतः॰' ( पा. सू. ६. १. १५९ ) इत्यन्तोदात्तः । यज्ञियम् । यज्ञमर्हतीत्यर्थे 'यज्ञर्त्विग्भ्यां घखञौ' (पा. सू. ५. १. ७१) इति घः । तस्य इयादेशः । प्रत्ययस्वरः ॥ ॥ २ ॥

'इहेन्द्राग्नी' इत्यादिकं षडृचं चतुर्थं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । देवता त्वनुक्रम्यते–'इह षळैन्द्राग्नम्' इति । विनियोगस्तु–अग्निष्टोमे अच्छावाकशस्त्रे 'इहेन्द्राग्नी उप ह्वये' इति सूक्तम् । 'स्तोत्रमग्रे शस्त्रात्' इति खण्डे 'इहेन्द्राग्नी उपेयं वामस्य मन्मन इति नव' ( आश्व. श्रौ. ५. १० ) इति सूत्रितत्वात् । तथा अभिप्लवषडहे प्रातःसवने अच्छावाकशस्त्रे स्तोमातिशंसनार्थमेतदेव सूक्तम् । तथा च सूत्रितम् 'अभिप्लवपृष्ठ्याहानि' इत्युपक्रम्य–'इहेन्द्राग्नी इन्द्राग्नी आ गतम्' ( आश्व. श्रौ. ७. ५ ) इति ॥

इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा ॥ १ ॥

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि । ता । सोमम् । सोमऽपातमा ॥१॥

ᵛइह अस्मिन्कर्मणि ᵛइन्द्राग्नी देवौ ᵛउप ᵛह्वये आह्वयामि ᵛतयोरित् इन्द्राग्न्योरेव ᵛस्तोमं स्तोत्रं ᵛउश्मसि कामयामहे । ᵛसोमपातमा अतिशयेन सोमं पातुं क्षमौ तौ द्वौ देवौ ᵛसोमं पिबताम् इति शेषः ॥ इन्द्राग्नी । अत्र देवताद्वन्द्वेऽपि पूर्वपदस्य आनङ् न भवति । तत्र हि द्वन्द्वे इत्यनुवृत्तौ पुनर्द्वन्द्वग्रहणात् लोकप्रसिद्धसाहचर्याणामेव द्वन्द्वे आनङ् इत्युक्तम् (का. ६. ३. २६ ) । तस्मात् अत्र अवग्रहे ह्रस्व इन्द्रशब्दः । 'समासस्य' इत्यन्तोदात्तत्वम् । 'देवताद्वन्द्वे च' ( पा. सू. ६. २. १४१ ) इति उभयपदप्रकृतिस्वरत्वं तु न भवति । अग्निशब्दस्यानुदात्तादित्वेन 'नोत्तरपदेऽनुदात्तादौ' ( पा. सू. ६. २. १४२ ) इति प्रतिषेधात् । उश्मसि । 'वश कान्तौ' । लटो मस् । 'इदन्तो मसि' (पा. सू. ७. १. ४६ ) इति इकारोपजनः । अदादित्वात् शपो लुक् । मसेर्ङित्त्वात् 'ग्रहिज्या॰' इत्यादिना संप्रसारणम् । ता सोमपातमा । उभयत्र 'सुपां सुलुक्॰' इति आकारः ॥

ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुम्भत । नरः । ता । गायत्रेषु । गायत ॥२॥

हे ᵛनरः मनुष्याः ऋत्विजः ᵛता पूर्वोक्तौ तौ ᵛइन्द्राग्नी ᵛयज्ञेषु अनुष्ठीयमानकर्मसु ᵛप्र ᵛशंसत शस्त्रैः। तथा ᵛशुम्भत नानाविधैरलंकारैः शोभितौ कुरुत। तथा ᵛता पूर्वोक्तौ ताविन्द्राग्नी ᵛगायत्रेषु गायत्रीच्छन्दस्केषु मन्त्रेषु सामरूपेण ᵛगायत॥ ता। 'सुपां सुलुक्°' इति आकारः। शुम्भत। अस्य संहितायाम् 'अन्येषामपि दृश्यते' (पा. सू. ६. ३. १३७) इति दीर्घः॥

ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे। सोमपा सोमपीतये॥ ३॥

ता। मित्रस्य। प्रऽशस्तये। इन्द्राग्नी इति। ता। हवामहे। सोमऽपा। सोमऽपीतये॥ ३॥

ᵛमित्रस्य स्नेहविषयस्य मम अनुष्ठातुः ᵛप्रशस्तये ᵛता पूर्वोक्तौ देवौ संपद्येताम् इति शेषः। यद्वा। मित्रस्य मम संबन्धिनौ ताविन्द्राग्नी प्रशस्तये प्रशंसितुमिच्छामः इति शेषः। ᵛसोमपा सोमपानक्षमौ ᵛता पूर्वोक्तौ ᵛइन्द्राग्नी ᵛसोमपीतये सोमपानार्थं ᵛहवामहे आह्वयामः॥ प्रशस्तये। 'तुमर्थाच्च भाववचनात्' (पा. सू. २. ३. १५) इति चतुर्थी। कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'तादौ च निति कृत्यतौ' (पा. सू. ६. २. ५०) इति गतेः प्रकृतिस्वरत्वम्। सोमपीतये। सोमस्य पीतिर्यस्मिन्कर्मणि तस्मै। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। सोमस्य पीतिः इति तत्पुरुषे वा दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्॥

उग्रा सन्ता हवामह उपेदं सवनं सुतम्। इन्द्राग्नी एह गच्छताम्॥ ४॥

उग्रा। सन्ता। हवामहे। उप। इदम्। सवनम्। सुतम्। इन्द्राग्नी इति। आ। इह। गच्छताम्॥४॥

ᵛसुतम् अभिषवोपेतम् ᵛइदम् अनुष्ठीयमानं ᵛसवनं प्रातःसवनादिरूपं कर्म ᵛउप सामीप्येन प्राप्तुम् ᵛउग्रा ᵛसन्ता वैरिवधादिषु क्रूरौ सन्तौ देवौ ᵛहवामहे आह्वयामः। ᵛइन्द्राग्नी देवौ ᵛइह कर्मणि ᵛआ ᵛगच्छताम्॥ सन्ता। अस्तेः शतरि 'श्नसोरल्लोपः'। सवनं सुतम् इति द्वयं 'सेमं नः स्तोममा गहि' (ऋ. सं. १. १६. ५) इत्यत्रोक्तम्॥

ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम्। अप्रजाः सन्त्वत्रिणः॥ ५॥

ता। महान्ता। सदस्पती इति। इन्द्राग्नी इति। रक्षः। उब्जतम्। अप्रजाः। सन्तु। अत्रिणः॥५॥

तौ पूर्वोक्तौ ᵛइन्द्राग्नी ᵛरक्षः राक्षसजातिम् ᵛउब्जतम् ऋजु कुरुतं क्रौर्यं परित्याजयतमित्यर्थः। कीदृशौ। ᵛमहान्ता महान्तौ गुणैरधिकौ ᵛसदस्पती सभापालकौ। तयोः प्रसादात् ᵛअत्रिणः भक्षकाः राक्षसाः ᵛअप्रजाः अनुत्पन्नाः ᵛसन्तु॥ महान्ता। 'सान्तमहतः संयोगस्य' (पा. सू. ६. ४. १०) इति दीर्घः। सदस्पती। सदसः पती इति समासे षष्ठ्या लुकि प्रातिपदिकसकारस्य रुत्वाभावश्छान्दसः। 'उभे वनस्पत्यादिषु युगपत्' (पा. सू. ६. २. १४०) इति उभयपदप्रकृतिस्वरत्वम्। इन्द्राग्नी। आमन्त्रिताद्युदात्तत्वम्। अप्रजाः। प्रजायन्ते इति प्रजाः। 'अन्येष्वपि दृश्यते' (पा. सू. ३. २. १०१) इति जनेः डप्रत्ययः। न प्रजाः अप्रजाः। प्रजाशब्दस्य बहुव्रीहौ हि 'नित्यमसिच् प्रजामेधयोः' (पा. सू. ५. ४. १२२) इति असिजादेशः स्यात्। अव्ययपूर्वपदप्रकृतिस्वरः। अत्रिणः। तृजन्तस्य अत्तृशब्दस्य जसश्छान्दसः इनुडागमः। 'चितः' इति ऋकार उदात्तः। तस्य यणादेशे 'उदात्तयणो हल्पूर्वात्' (पा. सू. ६. १. १७४) इति इकार उदात्तः॥

**तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतम् ॥ ६ ॥**

तेन । सत्येन । जागृतम् । अधि । प्रऽचेतुने । पदे । इन्द्राग्नी इति । शर्म । यच्छतम् ॥६॥

हे इन्द्राग्नी सत्येन अवश्यफलप्रदानादवितथेन तेन अस्माभिरनुष्ठितेन कर्मणा प्रचेतुने प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थाने अधि जागृतं आधिक्येन सावधानौ भवतम् । ततः अस्मभ्यं शर्म यच्छतं सुखं गृहं वा दत्तम् । 'गयः कृदरः' इत्यादिषु द्वाविंशतिसंख्याकेषु गृहनामसु 'शर्म वर्म' (नि. ३. ४. २१) इत्युक्तम् ॥ जागृतम् । 'जागृ निद्राक्षये' । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'तिङ्ङतिङः' इति निघातः । प्रचेतुने । 'चिती संज्ञाने' इत्यस्मात् ण्यन्तात् बाहुलकादौणादिक उनप्रत्ययः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । 'इहेन्द्राग्नी' इत्यत्रोक्तम् । आमन्त्रितत्वादाद्युदात्तत्वमत्र विशेषः । शृणाति हिनस्ति दुःखमिति शर्म । 'शॄ हिंसायाम्' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । यच्छतम् । 'इषुगमियमां छः' (पा. सू. ७. ३. ७७) इति छः ॥ ॥ ३ ॥

'प्रातर्युजा' इत्यादिकमेकविंशत्यृचं पञ्चमं सूक्तम् । तस्य ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वनुक्रम्यते[1]–'प्रातर्युजा सैका चतस्र आश्विन्यस्तथा साविन्य आग्नेय्यौ द्वे देवीनामेकैकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्ये पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा' इति । 'सूक्तसंख्यानुवर्तते' इत्यस्मिन् खण्डे 'अनिरुक्ता संख्या विंशतिः' (अनु. १२. ४) इति परिभाषितत्वात् 'प्रातर्युजा' इति सूक्ते संख्याविशेषस्यानिरुक्ता संख्या विंशतिसंख्या द्रष्टव्या । सा च विंशतिः एकयाधिकया सह वर्तते इति सैका । तत्रादौ चतस्र ऋचः अश्विदेवताकाः । पञ्चमीमारभ्य अष्टम्यन्ताः चतस्रः सवितृदेवताकाः । नवमी दशमी चोभे अग्निदेवताके । एकादश्या ऋचो देवसंबन्धिन्यो देव्यो देवताः । द्वादश्या इन्द्रवरुणाग्निपत्न्य इन्द्राणीवरुणान्यग्नाय्यो देवताः । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीदेवताके । पञ्चदशी पार्थिवी । षोडश्याद्याः षट् विष्णुदेवत्याः । षोडशी कृत्स्नदेवत्या[2] वा । अत्र सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके आश्विने क्रतौ 'प्रातर्युजा वि बोधय' इति चतस्र ऋचः । सूत्रितं च–'अथाश्विन एषो उषाः प्रातर्युजेति चतस्रः' (आश्व. श्रौ. ४. १५) इति । आश्विनग्रहस्य 'प्रातर्युजा' इत्येका पुरोनुवाक्या । 'द्विदेवत्यैश्चरन्ति' इति खण्डे सूत्रितम्–'आश्विनस्य प्रातर्युजा वि बोधय' (आश्व. श्रौ. ५. ५) इति ॥

**प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ॥ १ ॥**

प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् । अस्य । सोमस्य । पीतये ॥१॥

अत्र होता अध्वर्युमुद्दिश्य ब्रूते । हे अध्वर्यो प्रातर्युजा प्रातःसवनग्रहेण[3] संयुक्तावश्विनौ देवौ वि बोधय विशेषेण प्रबुद्धौ कुरु । अश्विनौ[4] प्रबुद्धौ चाश्विनौ[4] देवौ अस्य अभिषवसंस्कारयुक्तस्य सोमस्य पीतये पानाय इह कर्मणि आ गच्छताम् ॥ प्रातर्युञ्जाते गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा । 'सत्सूद्विष°' इत्यादिना क्विप् । 'सुपां सुलुक्°' इति आकारः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अस्य । 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् । पीतये । व्यत्ययेन क्तिन उदात्तत्वम् ॥

---

१. ढ–देवताविशेषास्त्वनुक्रम्यन्ते । २. त-ष–कृत्स्नदेवदेवत्या । ३. ढ–प्रातःसवने ग्रहेण ।
४. छ-त-श-ष-ह–प्रबुद्धौ तौ अश्विनौ ।

या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥ २ ॥

या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा । अश्विना । ता । हवामहे ॥२॥

ᵛया ᵛउभा ᵛअश्विना ᵛदेवा यावुभावश्विनौ देवौ ᵛसुरथा शोभनरथयुक्तौ ᵛरथीतमा रथिनां मध्ये अतिशयेन रथिनौ ᵛदिविस्पृशा द्युलोकनिवासिनौ ᵛता ᵛहवामहे तादृशावश्विनावाह्वयामहे ॥ या इत्यादिष्वष्टसु पदेषु 'सुपां सुलुक्°' इति द्विवचनस्य आकारः । सुरथा । शोभनो रथो ययोस्तौ सुरथौ । समासान्तोदात्तत्वापवादं बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । रथीतमा । 'अन्येषामपि दृश्यते' ( पा. सू. ६. ३. १३७ ) इति संहितायाम् इकारस्य दीर्घत्वम् । दिविस्पृशा । दिवि स्पृशतः इति दिविस्पृशौ । 'क्विप् च' इति क्विप् । 'तत्पुरुषे कृति बहुलम्' ( पा. सू. ६. ३. १४ ) इति अलुक् । 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ ३ ॥

या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ॥३॥

ᵛअश्विना हे अश्विनौ देवौ ᵛवां युवयोः संबन्धिनी ᵛया ᵛकशा अश्वताडनी विद्यते ᵛतया सहागत्य ᵛयज्ञम् अस्मदीयं ᵛमिमिक्षतं सोमरसेन सेक्तुमिच्छतम् । कशयाश्वान् दृढं ताडयित्वा सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः । कीदृशी कशा । ᵛमधुमती । 'अर्णः क्षोदः' इत्यादिषु एकशतसंख्याकेषु उदकनामसु 'मधु पुरीषम्' ( नि. १. १२. ११ ) इति पठितम् । तस्मात् उदकवतीत्युक्तं भवति । अश्वस्य शीघ्रगत्या यत् स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः । ᵛसूनृतावती प्रियसत्यवाग्युक्ता । तीव्रेण कशाताडनेन यो ध्वनिर्निष्पद्यते ताडनवेलायाम् अश्वारूढेन च य आक्रोशः क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम् । यद्वा । 'श्लोकः धारा' इत्यादिषु सप्तपञ्चाशद्वाङ्नामसु 'कशा धिषणा' ( नि. १. ११. ४३ ) इति पठितम् । अश्विनोर्या वाक् मधुमती माधुर्योपेता पारुष्यरहिता सूनृतावती प्रियत्वसत्यत्वोपेता फलप्रदानविषयेत्यर्थः । तया वाचा युक्तौ यज्ञं मिमिक्षतमिति योजनीयम् ॥ कशा । 'कश गतिशातनयोः' । पचाद्यच् । वृषादित्वादाद्युदात्तः । सूनृतावती । 'ऊन परिहाणे' । सुष्ठु ऊनयति अप्रियम् इति सून् । तथाविधम् ऋतं सत्यं यस्यां वाचि सा सूनृता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं बाधित्वा 'परादिश्छन्दसि बहुलम्' इति ऋकार उदात्तः । सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः संज्ञा । एवंनामा या कशेत्यर्थः । 'संज्ञायाम्' ( पा. सू. ८. २. ११ ) इति मतुपो वत्वम् । मिमिक्षतम् । मिहेः सन् । 'हलन्ताच्च' ( पा. सू. १. २. १० ) इति कित्त्वाद्गुणाभावः । ढत्वकत्वषत्वानि ॥

नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥ ४ ॥

नहि । वाम् । अस्ति । दूरके । यत्र । रथेन । गच्छथः । अश्विना । सोमिनः । गृहम् ॥ ४ ॥

---

१. ढ- एतन्नामका । २. ढ-मिमिक्षतम् । मिह सेचने ।

ᐯअश्विना हे अश्विनौ देवौ युवां ᐯसोमिनः सोमवतो यजमानस्य ᐯगृहं प्रति ᐯरथेन ᐯगच्छथः स मार्गो ᐯवां[1] युवयोः ᐯदूरके दूरदेशे ᐯनहि ᐯअस्ति न वर्तते खलु। यद्वा। ᐯयत्र गृहे गच्छथः तच्च गृहं दूरे न भवति॥ नहि। 'एवमादीनामन्तः' इत्यन्तोदात्तः। अस्ति। 'चादिलोपे विभाषा' इति निघाताभावः। अत्र हि गृहं दूरे च नास्ति युवां च रथेन गच्छथः इति समुच्चयश्चार्थो गम्यते, चशब्दो न प्रयुज्यते इति चलोपे प्रथमा तिङ्विभक्तिरस्तीति। यत्र। 'निपातस्य च' इति संहितायां दीर्घत्वम्। गच्छथः। इयं यद्यपि न प्रथमा तथापि यत्र इति यद्वृत्तयोगात् न निघातः॥

व्यूढस्य द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'हिरण्यपाणिमूतये' इति सावित्र्यश्चतस्रः। 'द्वितीयस्य' इति खण्डे सूत्रितं–'हिरण्यपाणिमूतय इति चतस्रो मही द्यौः पृथिवी च नः' (आश्व. श्रौ. ८. १०) इति॥

## हिर॑ण्यपाणिमू॒तये॑ सवि॒तार॒मुप॑ ह्वये। स चेत्ता॑ दे॒वता॑ प॒दम्॥ ५॥

हिर॑ण्यऽपाणिम्। ऊ॒तये॑। स॒वि॒तार॑म्। उप॑। ह्व॒ये॒। सः। चेत्ता॑। दे॒वता॑। प॒दम्॥ ५॥

ᐯऊतये अस्मद्रक्षणार्थं ᐯसवितारं देवम् ᐯउप ᐯह्वये आह्वयामि। ᐯसः च सविता देवः एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा ᐯपदं यजमानेन प्राप्यं स्थानं ᐯचेत्ता ज्ञापयिता भवति। कीदृशं सवितारम्। ᐯहिरण्यपाणिं यजमानाय दातुं हस्ते सुवर्णधारिणम्। यद्वा। देवकर्तृके यागे सविता स्वयमृत्विग्भूत्वा ब्रह्मत्वेन अवस्थितः। तदानीं कस्यांचिदिष्टौ अध्वर्यवः तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवन्तः। तच्च प्राशित्रं हस्ते सवित्रा गृहीतं सत् तदीयपाणिं चिच्छेद। ततः प्राशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवन्तः। सोऽयमर्थः कौषीतकिब्राह्मणे समाम्नातः—'सवित्रे प्राशित्रं प्रतिजह्रुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुतः' इति। हिरण्यशब्दं पाणिशब्दं च यास्क एवं निर्वक्ति—'हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात्प्रेप्साकर्मणः' (निरु. २. १०) इति। तथा 'पाणिः पणायतेः पूजाकर्मणः' (नि. २. २६) इति॥ हिरण्यशब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। ऊतये। 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसाति॰' इत्यादिना क्तिनन्तः अन्तोदात्तो निपातितः। सवितारम्। तृचश्चित्त्वादन्तोदात्तत्वम्। चेत्ता। 'चिती संज्ञाने'। अस्मादन्तर्भावितण्यर्थात्ताच्छील्ये तृन्। 'अनित्यमागमशासनम्' इति इडभावः। नित्त्वादाद्युदात्तः। देवता। 'देवात्तल्' (पा. सू. ५. ४.२७) इति स्वार्थे तल्। 'लिति' इति प्रत्ययात्पूर्वमुदात्तत्वम्। पदशब्दः पचाद्यजन्तः। 'चितः' इत्यन्तोदात्तः॥ ॥ ४॥

## अ॒पां नपा॑तमव॑से सवि॒तार॒मुप॑ स्तुहि। तस्य॑ व्र॒तान्यु॑श्मसि॥ ६॥

अ॒पाम्। नपा॑तम्। अव॑से। स॒वि॒तार॑म्। उप॑। स्तु॒हि॒। तस्य॑। व्र॒तानि॑। उ॒श्म॒सि॒॥ ६॥

अत्र होता सामगमृत्विजम् अन्यं वा शस्त्रिणं ब्रूते। ᐯअवसे अस्मान् रक्षितुं ᐯसवितारम् ᐯउप ᐯस्तुहि। ᐯतस्य सवितुः संबन्धीनि ᐯव्रतानि कर्माणि सोमयागादिरूपाणि ᐯउश्मसि कामयामहे।

---

१. ढ–वां युवाम्।

कीदृशं सवितारम्। Vअपां Vनपातं जलस्य न पालकम्। संतापेन शोषकमित्यर्थः॥ अपाम्। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्। नपातम्। 'पा रक्षणे'। अस्य शत्रन्तः पाच्छब्दः। तस्य नञा समासे 'नभ्राण्नपात्°' इत्यादिना नलोपप्रतिषेध इति वृत्तिकारः। अग्निर्ह्यपो न पाति तच्छोषकत्वात्। तर्हि कथम् अपाम् इति षष्ठी 'न लोकाव्ययनिष्ठाखलर्थ°' (पा. सू. २. ३. ६९) इति कर्मणि षष्ठ्याः प्रतिषेधात् इति चेत्, तर्ह्येषा शेषलक्षणास्तु। अग्न्यादित्यौ अपां कारणतया संबन्धिनौ 'अग्नेरापः' (तै. आ. ८. २) इति श्रुतेः। 'आदित्याज्जायते वृष्टिः' (मनु. ३. ७६) इति स्मृतेश्च। अस्मिन्पक्षे 'उगिदचाम्°' इति नुमभावोऽपि निपातनादेवेति मन्तव्यम्। पातेः क्विबन्तस्य तुग्वा निपातनात् द्रष्टव्यः। अथवा न पातयति इति नपात्। 'पत्लृ गतौ' इति धातोर्ण्यन्तात्क्विप्। अग्न्यादित्यौ ह्यपां न प्रापकौ प्रत्युत तच्छोषकौ। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अवसे। 'तुमर्थे सेसेन्°' इत्यादिना असेन्। नित्वादाद्युदात्तः। उश्मसि। 'वश कान्तौ'। 'अदिप्रभृतिभ्यः°' इति शपो लुक्। 'इदन्तो मसि' इति इकारोपजनः॥

विभक्तारं हवामहे वसोश्चित्रस्य राधसः। सवितारं नृचक्षसम्॥ ७॥

विऽभक्तारम्। हवामहे। वसोः। चित्रस्य। राधसः। सवितारम्। नृऽचक्षसम्॥ ७॥

Vवसोः निवासहेतोः Vचित्रस्य सुवर्णरजतादिरूपेण बहुविधस्य Vराधसः धनस्य Vविभक्तारम् अस्य यजमानस्य एतावद्धनदानम् उचितमिति विभागकारिणं Vनृचक्षसं मनुष्याणां प्रकाशकारिणं Vसवितारं Vहवामहे। कौषीतकिन एतस्या ऋचो व्याख्यानरूपे ब्राह्मणे सवितुर्विभागहेतुत्वम् एवं समामनन्ति– 'यदेतद्वसोश्चित्रं राधस्तदेष सविता विभक्तृभ्यः प्रजाभ्यो विभजति' इति॥ विभक्तारम्। तृचश्चित्वादन्तोदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। हवामहे। ह्वयतेः 'बहुलं छन्दसि' इति संप्रसारणम्। वसोः। 'वस निवासे'। 'शृस्वृस्निहि°' (उ. सू. १. १०) इत्यादिना उः। 'नित्' इत्यनुवृत्तेः नित्वादाद्युदात्तः। राधसः। असुन्नन्तः नित्वादाद्युदात्तः। नृचक्षसम्। नॄन् चष्टे इति नृचक्षाः तं नृचक्षसम्। 'चक्षेर्बहुलं शिच्च' (उ. सू. ४. ६७२) इति असुन्। शित्वात् अनार्धधातुकत्वेन ख्याञादेशाभावः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

सखाय आ नि षीदत सविता स्तोम्यो नु नः। दाता राधांसि शुम्भति॥८॥

सखायः। आ। नि। सीदत। सविता। स्तोम्यः। नु। नः। दाता। राधांसि। शुम्भति॥८॥

सखिभूता हे ऋत्विजः Vआ Vनि Vषीदत सर्वत्रोपविशत। Vनः अस्माकम् अयं Vसविता Vनु क्षिप्रं Vस्तोम्यः स्तुतियोग्यः Vराधांसि धनानि Vदाता प्रदातुमुद्युक्तः एष सविता Vशुम्भति शोभते॥ समानाः सन्तः ख्यान्ति प्रकाशन्ते इति सखायः। 'ख्या प्रकथने'। 'समाने ख्यश्चोदात्तः' (उ. सू. ४. ५७६) इति इण्प्रत्ययः; तत्संनियोगेन डित्त्वं यलोपश्च। डित्त्वात् आकारलोपः। 'समानस्य छन्दसि' (पा. सू. ६. ३. ८४) इत्यादिना समानशब्दस्य सादेशः। इण्संनियोगेनोदात्तत्वम्। जसि 'सख्युरसंबुद्धौ' (पा. सू. ७. १. ९२) इति णित्वात् वृद्धिः आयादेशश्च। नि षीदत। 'सदिरप्रतेः' (पा. सू. ८. ३. ६६) इति षत्वम्। स्तोमेषु प्रतिपाद्यत्वेन भवः स्तोम्यः। 'भवे छन्दसि' (पा. सू. ४. ४. ११०) इति यत्। 'यतोऽनावः' (पा. सू. ६. १. २१३) इत्याद्यु-

---

१. ढ-ष–एवमामनन्ति। २. श–विभक्ता। ३. ढ–सार्वधातुकत्वेन।

दात्तत्वम् दाता दानशीलः। ताच्छील्ये तृन्। नित्त्वादाद्युदात्तः। राधांसि। गतम्। ‘कर्तृकर्मणोः कृति’ (पा. सू. २. ३. ६५) इति प्राप्तायाः षष्ठ्याः ‘न लोकाव्यय°’ (पा. सू. २. ३. ६९) इति प्रतिषेधः॥

अग्निष्टोमे प्रातःसवने ‘अग्ने पत्नीरिहा वह’ इति नेष्टुः प्रस्थितयाज्या। ‘प्रशास्ता ब्राह्मणाच्छंसी’ इति खण्डे सूत्रितम्–‘अग्ने पत्नीरिहा वहोक्षान्नाय वशान्नाय’ (आश्व. श्रौ. ५. ५) इति॥

अग्ने पत्नी॑रि॒हा व॑ह दे॒वाना॑मुश॒तीरुप॑। त्वष्टा॑रं॒ सोम॑पीतये॥ ९॥

अग्ने॑। पत्नीः॑। इ॒ह। आ। व॒ह॒। दे॒वाना॑म्। उ॒श॒तीः। उप॑। त्वष्टा॑रम्। सोम॑ऽपीतये॥९॥

हे ^v^अग्ने ^v^उशतीः कामयमानाः ^v^देवानां ^v^पत्नीः इन्द्राण्याद्याः ^v^इह देवयजनदेशे ^v^आ ^v^वह। तथा ^v^त्वष्टारं देवं ^v^सोमपीतये सोमपानार्थम् ^v^उप समीपे आ वह॥ पत्नीः। इत्यन्तः पतिशब्द आद्युदात्तः। ‘पत्युर्नो यज्ञसंयोगे’ (पा. सू. ४. १. ३३) इति ङीप्; तत्संनियोगेन नकारश्च। ङीपः पित्त्वात्'डतिस्वर एव। उशतीः। ‘वश कान्तौ’। लटः शतृ। ‘अदिप्रभृतिभ्यः शपः’ इति शपो लुक्। शतुर्ङित्त्वात् ग्रहिज्यादिना संप्रसारणम्। ‘उगितश्च’ इति ङीप्। ‘शतुरनुमः°’ इति ङीप् उदात्तः॥

आ ग्ना अ॑ग्न इ॒हाव॑से॒ होत्रां॑ यविष्ठ॒ भार॑तीम्। वरू॑त्रीं धि॒षणां॑ वह॥ १०॥

आ। ग्नाः। अ॒ग्ने॒। इ॒ह। अव॑से। होत्रा॑म्। य॒वि॒ष्ठ॒। भार॑तीम्। वरू॑त्रीम्। धि॒षणा॑म्। व॒ह॒॥१०॥

हे ^v^अग्ने ^v^अवसे अस्मानवितुं ^v^ग्नाः देवपत्नीः ^v^इह ^v^आ ^v^वह। तथा हे ^v^यविष्ठ युवतमाग्ने ^v^होत्रां होमनिष्पादकाग्निपत्नीं ^v^भारतीं भरतनामकस्य आदित्यस्य पत्नीं ^v^वरूत्रीं वरणीयां ^v^धिषणां वाग्देवीं च आ वह। ‘वाग्वै धिषणा’ इति वाजसनेयकम्। ‘भरत आदित्यः’ (निरु. ८. १३) इति यास्केन उक्तत्वात् तस्य पत्नी भारती इत्युच्यते॥ गम्यन्त इति ग्नाः। ‘गमॢ सृॢ गतौ’। औणादिको ड्नप्रत्ययः। डित्त्वात् टिलोपः। प्रत्ययस्वरः। होत्राम्। ‘हुयामाश्रुभसिभ्यस्त्रन्’ (उ. सू. ४. ६०७) इति त्रन्नन्तो नित्त्वादाद्युदात्तः। अतिशयेन युवा यविष्ठः। ‘अतिशायने तमबिष्ठनौ’ (पा. सू. ५. ३. ५५)। ‘स्थूलदूर°’ (पा. सू. ६. ४. १५६) इत्यादिना यणादिपरस्य लोपः पूर्वस्य च गुणः। भारतीम्। शार्ङ्गरवादेः अवृत्कृतत्वात् ङीनन्तो नित्त्वादाद्युदात्तः। वरूत्रीम्। ‘ग्रसितस्कभित°’ (पा. सू. ७. २. ३४) इत्यादौ यद्यपि वरूतृशब्दः तृजन्त इत्युक्तं तथापि अन्ते इतिकरणस्य प्रदर्शनार्थत्वात् वरूतृशब्दः तृनन्तोऽपि द्रष्टव्यः। तेन नित्त्वादाद्युदात्तत्वम्। शेषनिघातेन ऋकारस्य अनुदात्तत्वात् ‘उदात्तयणो हल्पूर्वात्’ इत्यपि न ङीप उदात्तत्वम्। धिषणाम्। क्युप्रत्ययानुवृत्तौ ‘धृषेर्धिष च संज्ञायाम्’ (उ. सू. २. २४०) इति क्युः॥ ॥ ५॥

अ॒भि नो॑ दे॒वीरव॑सा म॒हः शर्म॑णा नृ॒पत्नीः॑। अच्छि॑न्नपत्राः सचन्ताम्॥११॥

अ॒भि। नः॒। दे॒वीः। अव॑सा। म॒हः। शर्म॑णा। नृ॒ऽपत्नीः॑। अच्छि॑न्नऽपत्राः। स॒च॒न्ता॒म्॥११॥

ᵛदेवीः देव्यः देवपत्न्यः ᵛअवसा रक्षणेन ᵛमहः महता ᵛशर्मणा च सुखेन च सह ᵛनः अस्मान् ᵛअभि ᵛसचन्ताम् आभिमुख्येन सेवन्ताम् । कीदृश्यो देव्यः । ᵛनृपत्नीः मनुष्याणां पालयित्र्यः ᵛअच्छिन्नपत्राः अच्छिन्नपक्षाः । न हि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचित् छिद्यन्ते ॥ देवीः । 'पुंयोगादाख्यायाम्' (पा. सू. ४. १. ४८) इति ङीपन्तः प्रत्ययस्वरेणान्तोदात्तः । 'दीर्घाज्जसि च' (पा. सू. ६. १. १०५) इति प्रतिषेधस्य 'वा छन्दसि' (पा. सू. ६. १. १०६) इति पाक्षिकस्योक्तेः पूर्वसवर्णदीर्घत्वम् । अवसा । 'अव रक्षणे' । असुन् । नित्त्वादाद्युदात्तः । महः । 'मह पूजायाम्' । क्विप् । 'सुपां सुपो भवन्ति' (पा. म. ७. १. ३९) इति तृतीयैकवचनस्य ङसादेशः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । नृपत्नीः । समासान्तोदात्तत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । अच्छिन्नपत्राः । न च्छिन्नानि अच्छिन्नानि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अच्छिन्नानि पत्राणि यासां ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

इहेन्द्राणीमुप॑ ह्वये वरुणानीं स्वस्तये॑ । अग्नायीं सोम॑पीतये ॥ १२ ॥

इह । इन्द्राणीम् । उप॑ । ह्वये । वरुणानीम् । स्वस्तये॑ । अग्नायीम् । सोम॑ऽपीतये ॥ १२ ॥

ᵛइह अस्मिन्कर्मणि ᵛस्वस्तये अस्माकमविनाशाय ᵛसोमपीतये सोमपानाय च इन्द्रवरुणाग्नीनां पत्नीः आह्वयामि[1] ॥ इन्द्राणीम् । वरुणानीम् । 'इन्द्रवरुण°' (पा. सू. ४. १. ४९) इत्यादिना पुंयोगे ङीष्प्रत्ययः आनुगागमश्च । प्रत्ययस्वरः । अग्नायीम् । 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' (पा. सू. ४. १. ३७) इति ङीप्; तत्संनियोगेन इकारस्य ऐकार उदात्तः । सोमपीतये । असकृत् पूर्वोक्तम् ॥

द्वितीये छन्दोमे वैश्वदेवशस्त्रे 'मही द्यौः पृथिवी च नः' इति द्यावापृथिव्यनिविद्धानीयस्तृचः । 'द्वितीयस्याग्निं वः' इति खण्डे सूत्रितं—'मही द्यौः पृथिवी च नो युवाना पितरा पुनः' (आश्व. श्रौ. ८. १०) इति। आग्रयणेष्टौ 'मही द्यौः' इत्येषा द्यावापृथिव्यैककपालस्य अनुवाक्या । 'आग्रयणं व्रीहिश्यामाक°' इति खण्डे सूत्रितं—'ये के च ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः' (आश्व. श्रौ. २. ९) इति । अग्निमन्थनेऽप्येषा विनियुक्ता । 'प्रातर्वैश्वदेव्याम्' इति खण्डे सूत्रितम्—'अभि त्वा देव सवितर्मही द्यौः पृथिवी च नः' (आश्व. श्रौ. २. १६) इति । विष्यन्दमानं सांनाय्यमनयैव आहवनीयदेशे निनयेत् । 'विध्यपराधे' इति खण्डे तथैव सूत्रितं—'विष्यन्दमानं मही द्यौः पृथिवी च न इत्यन्तःपरिधिदेशे निनयेयुः' (आश्व. श्रौ. ३. १०) इति । आश्विनशस्त्रेऽप्येषा 'संस्थिते त्वाश्विनाय' इति खण्डे सूत्रितं—'मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशंभुवा' (आश्व. श्रौ. ६. ५) इति ॥

मही द्यौः पृ॑थिवी च॑ न इमं यज्ञं मि॑मिक्षताम् । पिपृतां नो भरी॑मभिः ॥ १३ ॥

मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरी॑मऽभिः ॥ १३ ॥

ᵛमही महती ᵛद्यौः द्युलोकदेवता ᵛपृथिवी भूमिदेवता ᵛच ᵛनः अस्मदीयम् ᵛइमं ᵛयज्ञं ᵛमिमिक्षतां स्वकीयसारभूतेन रसेन मिमिक्षतां सेक्तुमिच्छताम् । तथा ᵛभरीमभिः भरणैः पोषणैः ᵛनः अस्मान्

1. ढ—उप ह्वये आह्वयामि ।

ᵛपिपृताम् उभे देव्यौ पूरयताम् ॥ मही । महच्छब्दात् ' उगितश्च ' ( पा. सू. ४. १. ६) इति ङीप् । अच्छब्दलोपश्छान्दसः । ' बृहन्महतोरुपसंख्यानम् ' (पा. सू . ६. १. १७३. १ ) इति ङीप उदात्तत्वम् । द्यौः । दिव्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । ' गोतो णित् ' ( पा. सू. ७. १. ९०) इति ततः परस्य सोः णिद्वद्भावात् भवन्ती वृद्धिरपि स्थानिवद्भावेनोदात्ता । पृथिवी । ' प्रथ प्रख्याने ' । ' प्रथेः षिवन्संप्रसारणं च ' ( उ. सू. १. १४८ ) इति षिवन्प्रत्ययः । ' षिद्गौरादिभ्यश्च ' ( पा. सू. ४. १. ४१ ) इति ङीष् । प्रत्ययस्वरः । मिमिक्षताम् । ' मिह सेचने ' । सनि द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । पिपृताम् । ' पॄ पालनपूरणयोः ' । ह्रस्व इत्येके । शपः श्लुः । ' अर्तिपिपर्त्योश्च ' ( पा. सू. ७. ४. ७७ ) इति अभ्यासस्य अकारस्य इकारः । तिङः प्रत्ययस्वरः । भरीमभिः । 'डुभृञ् धारणपोषणयोः ' । 'हुस्तृभृधस्वृसभ्य ईमन् ' ( दश. पा. ६ ) इति ईमन् । नित्त्वादाद्युदात्तः ॥

## तयो॒रिद्घृ॒तव॒त्पयो॒ विप्रा॒ रिह॑न्ति धी॒तिभिः॑ । ग॒न्ध॒र्वस्य॑ ध्रु॒वे प॒दे ॥ १४ ॥

तयोः॑ । इत् । घृ॒तऽव॑त् । पयः॑ । विप्राः॑ । रि॒ह॒न्ति॒ । धी॒तिऽभिः॑ । ग॒न्ध॒र्वस्य॑ । ध्रु॒वे । प॒दे ॥ १४ ॥

गन्धर्वस्य ध्रुवं पदम् अन्तरिक्षम् । तथा च तापनीयशाखायां समाम्नायते-' यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम् ' ( नृ. ता. १. २ ) इति । तेनान्तरिक्षेण उपलक्षिते आकाशे वर्तमानयोः ᵛतयोरित् द्यावापृथिव्योरेव संबन्धि ᵛपयः जलं ᵛघृतवत् घृतसदृशं ᵛविप्राः मेधाविनः प्राणिनः ᵛधीतिभिः कर्मभिः ᵛरिहन्ति लिहन्ति । यद्वा । घृतवत् घृतं सारं तेनोपेतं रिहन्ति ॥ लिहेर्व्यत्ययेन रेफः । गन्धर्वस्य । ' धृञ् धारणे '। ' गवि गन् धृञो वैः ' इति वप्रत्ययः; तत्संनियोगेन गोशब्दस्य च गन्नादेशः ॥

'स्योना पृथिवि ' इत्येषा महानाम्नीव्रते भूमिस्पर्शने विनियुक्ता । ' एतद्विदं ब्रह्मचारिणम् ' इति खण्डे सूत्रितं-' स्योना पृथिवि भवेति समाप्य ' ( आश्व. श्रौ. ८. १४ ) इति । स्मार्ते हेमन्तप्रत्यवरोहणेऽपि एषा जप्या । ' मार्गशीर्ष्यां प्रत्यवरोहणम् ' इति खण्डे सूत्रितं-' तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा ' ( आश्व. गृ. २. ३. ६ ) इति ॥

## स्यो॒ना पृ॑थिवि भवानृक्ष॒रा नि॒वेश॑नी । यच्छा॑ नः॒ शर्म॑ स॒प्रथः॑ ॥ १५ ॥

स्यो॒ना । पृ॒थि॒वि॒ । भ॒व॒ । अ॒नृ॒क्ष॒रा । नि॒ऽवेश॑नी । यच्छ॑ । नः॒ । शर्म॑ । स॒ऽप्रथः॑ ॥ १५ ॥

हे ᵛपृथिवि स्योनत्वादिगुणयुक्ता ᵛभव । स्योनशब्दो विस्तीर्णवाची । तथा च वाजसनेयब्राह्मणे स्योनशब्दोपेतं कंचिन्मन्त्रमुदाहृत्य व्याख्यातम्-' इन्द्रस्योरुमाविश स्योनः स्योनमिति विस्तीर्णो विस्तीर्णमित्येव तदाह ' इति । यद्वा । स्योनशब्दः सुखवाची (नि. ३. ६. १५) । तथा च यास्कवाक्यमुदाहरिष्यते । ᵛअनृक्षरा कण्टकरहिता ᵛनिवेशनी निवेशस्थानभूता ᵛसप्रथः विस्तारयुक्तं ᵛशर्म शरणं ᵛनः अस्मभ्यं ᵛयच्छ हे पृथिवि देहि । तामेतामृचमुदाहृत्य यास्क एवं व्याचष्टे- ' सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म शरणं सर्वतः पृथु ' ( निरु. ९. ३२ ) इति ॥ स्योना । ' षिवु

---

१. छ-त-श-ष-इत्येके । लोटस्तसस्ताम् । २. ढ-सारः । ३. त-ष-गवि धृञो गम् च । ४. च-छ-त-फ-श-ष-ऋक् जप्या । ५. ढ-स्योना स्योनत्वादिगुणयुक्ता । ६. छ-ढ-र-ह-निवासस्थानभूता ।

तन्तुसन्ताने'। 'सिवेष्टेर्यो च' (उ. सू. ३. २८९) इति नप्रत्ययः। टेश्च यो इत्यादेशः। प्रत्ययस्वरः। स्योना पृथिवि इत्यनयोः भव इत्याख्यातेनैवान्वयो न परस्परम्। अतः असामर्थ्येनैव पराङ्गवद्भावाभावात् ओकारस्य न आमन्त्रितायुदात्तत्वम्। अनृक्षरा। 'ऋषी गतौ'। गच्छति अन्तः इति ऋक्षरः कण्टकः। 'तन्यृषिभ्यां क्सरन्' (उ. सू. ३. ३५५)। 'षढोः कः सि' (पा. सू. ८. २. ४१) इति कत्वम्। 'आदेशप्रत्यययोः' इति षत्वम्। नञा बहुव्रीहिः। 'तस्मान्नुडचि' (पा. सू. ६. ३. ७४) इति नुडागमः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। निविशन्ति अस्याम् इति निवेशनी। 'करणाधिकरणयोश्च' (पा. सू. ३. ३. ११७) इति ल्युट्। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यच्छ। 'दाण् दाने'। 'पाघ्रा°' (पा. सू. ७. ३. ७८) इत्यादिना यच्छादेशः। 'द्व्यचोऽतस्तिङः' इति दीर्घः। सप्रथः। 'प्रथ प्रख्याने'। असुन्। प्रथसा सह वर्तते इति 'तेन सहेति तुल्ययोगे' (पा. सू. २. २. २८) इति समासः। 'वोपसर्जनस्य' (पा. सू. ६. ३. ८२) इति सभावः। कृत्स्वरः॥ ॥ १५॥

प्रातःसवने सोमातिरेके एकं शस्त्रं शंसनीयम्। अत्र 'अतो देवाः' इत्याद्याः षडृचः। 'सोमातिरेके' इति खण्डे सूत्रितं–'महाँ इन्द्रो य ओजसातो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च' (आश्व. श्रौ. ६. ७) इति। अप्तोर्यामे अच्छावाकातिरिक्तोक्थेऽपि एताः षडृचः स्तोत्रियानुरूपार्थाः। तथा च 'यस्य पशवः' इति खण्डे सूत्रितम्– 'अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ९. ११) इति। दर्शपूर्णमासयोः प्रायश्चित्तहोमेऽपि आद्ये विनियुक्ते। तथैव 'वेदं पत्न्यै' इति खण्डे सूत्रितम्–'अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च' (आश्व. श्रौ. १. ११) इति। याज्यानुवाक्ययोर्मध्ये लौकिकभाषणे 'अतो देवाः' इत्येषा जप्या। सूत्रितं हि–'आपद्यातो देवा अवन्तु न इति जपेत्' (आश्व. श्रौ. १. ५) इति॥

**अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्वि॒च॒क्र॒मे। पृ॒थि॒व्याः स॒प्त धाम॑भिः॥१६॥**

अतः॑। दे॒वाः। अ॒व॒न्तु॒। नः॒। यतः॑। विष्णुः॑। वि॒ऽच॒क्र॒मे। पृ॒थि॒व्याः। स॒प्त। धाम॑ऽभिः॥१६॥

ᵛविष्णुः परमेश्वरः ᵛसप्त ᵛधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः ᵛयतः ᵛपृथिव्याः प्राप्तप्रदेशात् ᵛविचक्रमे विविधं पादक्रमणं कृतवान्, ᵛअतः अस्मात् पृथिवीप्रदेशात् ᵛनः अस्मान् ᵛदेवाः ᵛअवन्तु। विष्णोः पृथिव्यादिलोकेषु च्छन्दोभिः साधनैर्जयं तैत्तिरिया आमनन्ति—'विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्' (तै. सं. ५. २. १. १) इति। विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानम्। पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणम्॥ अतः। एतच्छब्दात् 'पञ्चम्यास्तसिल्' (पा. सू. ५. ३. ७) इति तसिल्। 'एतदोऽश्' (पा. सू. ५. ३. ५) इति अशादेशः। लित्स्वरेण अकार उदात्तः। यतः। तसिलः 'प्राग्दिशो विभक्तिः' (पा. सू. ५. ३. १) इति विभक्तिसंज्ञायां त्यदाद्यत्वम्। लित्स्वरः। विष्णुः। 'विषेः किच्च' (उ. सू. ३. ३१९) इति नुप्रत्ययः। कित्त्वात् न गुणः। 'नित्' इत्यनुवृत्तेः आद्युदात्तत्वम्। विचक्रमे। 'सुप्' इति योगविभागात् विशब्दस्य समासः। समासान्तोदात्तत्वम्। यद्वृत्तयोगात् न निघातः। सप्त। 'सुपां सुलुक्°' इति भिसो लुक्। धामभिः। दधातेः 'आतो मनिन्°' (पा. सू. ३. २. ७४) इति मनिन्। नित्स्वरः॥

वैष्णवोपांशुयाजस्य 'इदं विष्णुः' इत्येषा अनुवाक्या। 'उक्ता देवताः' इति खण्डे सूत्रितम्– 'इदं विष्णुर्वि चक्रमे त्रिर्देवः पृथिवीमेष एताम्' (आश्व. श्रौ. १. ६) इति। गार्हपत्याहवनीययोर्मध्ये

श्वातिक्रमणे अनयैव श्वपदेषु भस्म प्रक्षिपेत्। 'विध्यपराधे' इति खण्डे सूत्रितं—'भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्वि चक्रमे' ( आश्व. श्रौ. ३. १० ) इति। आतिथ्यायां प्रधानस्य हविषः एषैवानुवाक्या। 'अथातिथ्येळान्ता' इति खण्डे सूत्रितम्—'इदं विष्णुर्वि चक्रमे तदस्य प्रियमभिपाथो अश्याम्' ( आश्व. श्रौ. ४. ५ ) इति। उपसत्सु वैष्णवस्य एषैवानुवाक्या। 'अथोपसत्' इति खण्डे सूत्रितं—'गयस्फानो अमीवहेदं विष्णुर्वि चक्रमे' ( आश्व. श्रौ. ४. ८ ) इति ॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूळ्हमस्य पांसुरे ॥ १७ ॥

इदम्। विष्णुः। वि। चक्रमे। त्रेधा। नि। दधे। पदम्। सम्ऽऊळ्हम्। अस्य। पांसुरे ॥१७॥

विष्णुः त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य वि चक्रमे विशेषेण क्रमणं कृतवान्। तदा त्रेधा त्रिभिः प्रकारैः पदं नि दधे स्वकीयं पादं प्रक्षिप्तवान्। अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूळ्हम् इदं सर्वं जगत् सम्यगन्तर्भूतम्। सेयमृक् यास्केनैवं व्याख्याता—'विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् पांसुर इव पदं न दृश्यत इति[1] पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा' ( निरु. १२. १८–१९ ) इति॥ त्रेधा। 'एधाच्च' (पा. सू. ५. ३. ४६ ) इति एधाच्प्रत्ययः। चितोऽन्तोदात्तः। समूळ्हम्। 'वह प्रापणे'। 'निष्ठा' इति क्तः। 'वचिस्वपि°' ( पा. सू. ६. १. १५ ) इत्यादिना संप्रसारणम्। ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। अस्य। 'इदमोऽन्वादेशे°' इति अश् अनुदात्तः, प्रत्ययश्च सुप्स्वरेण। पांसुरे। 'नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्' ( का. ५. २. १०७. २ ) इति मत्वर्थीयो रः। प्रत्ययस्वरः।

उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या 'त्रीणि पदा' इत्येषा। सूत्रितं च—'त्रीणि पदा वि चक्रम इति स्विष्टकृदादि लुप्यते' ( आश्व. श्रौ. ४. ८ ) इति ॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन् ॥ १८ ॥

त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः। अतः। धर्माणि। धारयन् ॥१८॥

अदाभ्यः केनापि हिंसितुमशक्यः गोपाः सर्वस्य जगतः रक्षकः विष्णुः पृथिव्यादिस्थानेषु अतः एतेषु त्रीणि पदानि वि चक्रमे। किं कुर्वन्। धर्माणि अग्निहोत्रादीनि धारयन् पोषयन् ॥ पदा। 'सुपां सुलुक्°' इत्यादिना विभक्तेः डादेशः। तस्य स्थानिवद्भावेन अनुदात्तत्वे प्राप्ते उदात्तनिवृत्तिस्वरेणोदात्तत्वम्। गोपाः। 'गोपामृतस्य' ( ऋ. सं. १. १. ८ ) इत्यत्रोक्तम्। अदाभ्यः। दभेः 'ऋहलोर्ण्यत्' ( पा. सू. ३. १. १२४ ) इति ण्यत्। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। धारयन्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण णिच एव स्वरः शिष्यते ॥

---

१. च-छ-फ-श-ह—स्थानेषु।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ १९ ॥

विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः । सखा ॥ १९ ॥

हे ऋत्विगादयः ᵛविष्णोः ᵛकर्माणि पालनादीनि ᵛपश्यत । ᵛयतः यैः कर्मभिः ᵛव्रतानि अग्निहोत्रादीनि ᵛपस्पशे सर्वो यजमानः स्पृष्टवान् विष्णोरनुग्रहात् अनुतिष्ठति इत्यर्थः । तादृशो विष्णुः ᵛइन्द्रस्य ᵛयुज्यः योज्यः अनुकूलः ᵛसखा भवति । विष्णोः इन्द्रानुकूल्यं ' त्वष्टा हतपुत्रः ' इत्यनुवाके ' अथ वै तर्हि विष्णुः ' ( तै. सं. २. ४. १२. २ ) इत्यादिना प्रपञ्चेन तैत्तिरीया आमनन्ति ॥ पस्पशे । ' स्पश बाधनस्पर्शनयोः '। लिट् । द्विर्भावे ' शर्पूर्वाः खयः ' ( पा. सू. ७. ४. ६१ ) इति पकारः शिष्यते सकारो लुप्यते । यद्वृत्तयोगादनिघातः । युज्यः । युजेः बाहुलकात् क्यप् । कित्त्वाद्गुणाभावः । क्यपः पित्त्वादनुदात्तत्वम् । धातुस्वरः ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ २० ॥

तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिविऽइव । चक्षुः । आऽततम् ॥२०॥

ᵛसूरयः विद्वांस ऋत्विगादयः ᵛविष्णोः संबन्धि ᵛपरमम् उत्कृष्टं ᵛतत् शास्त्रप्रसिद्धं ᵛपदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा ᵛपश्यन्ति । तत्र दृष्टान्तः । ᵛदिवीव । आकाशे यथा ᵛआततं सर्वतः प्रसृतं ᵛचक्षुः निरोधाभावेन विशदं पश्यति तद्वत् ॥ सदा । ' सर्वैकान्य° ' ( पा. सू. ५. ३. १५ ) इति दाप्रत्ययः । ' सर्वस्य सोऽन्यतरस्यां दि ' ( पा. सू. ५. ३. ६ ) इति सर्वशब्दस्य सभावः । व्यत्ययेनाद्युदात्तत्वम् । दिवि । ' ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम् । ' इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ' इति तदेव शिष्यते । चक्षुः । ' नब्विषयस्य° ' इत्याद्युदात्तत्वम् । आततम् । तनोतेः कर्मणि क्तः । ' यस्य विभाषा ' इति इट्प्रतिषेधः । ' अनुदात्तोपदेश° ' इत्यादिना नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते ' गतिरनन्तरः ' इति गतेरुदात्तत्वम् ॥

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ २१ ॥

तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सम् । इन्धते । विष्णोः । यत् । परमम् । पदम् ॥२१॥

पूर्वोक्तं ᵛविष्णोः ᵛयत् ᵛपरमं ᵛपदम् अस्ति ᵛतत् पदं ᵛविप्रासः मेधाविनः ᵛसमिन्धते सम्यक् दीपयन्ति । कीदृशाः । ᵛविपन्यवः विशेषेण स्तोतारः ᵛजागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः ॥ विप्रासः । ' आज्जसेरसुक् ' । विपन्यवः । स्तुत्यर्थस्य पनेः बाहुलक औणादिको युप्रत्ययः । तत्र प्रत्ययस्वरः । जागृवांसः । ' जागृ निद्राक्षये ' । लिटः क्वसुः । क्रादिनियमात्प्राप्तस्य इटः ' वस्वेकाजाद्घसाम् ' ( पा. सू. ७. २. ६७ ) इति नियमात् निवृत्तिः ॥　　॥ ७ ॥

' तीव्राः ' इति चतुर्विंशत्यृचं षष्ठं सूक्तम् । अत्रेयमनुक्रमणिका—' तीव्राश्चतुर्विंशतिर्वायव्यैकैन्द्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः शेषा आप्योऽन्त्याध्यर्धाग्नेय्यप्स्वन्तः पुरउष्णिक् परानुष्टु-

१. ग-त-र-श-ष–शिष्टा आप्यो° ।

स्तिस्रश्चान्त्या एकविंशी प्रतिष्ठा' इति । 'ऋषिश्चान्यस्मात्' (अनु. १२. २) इति परिभाषया अनुवर्तनात् मेधातिथिः काण्व ऋषिः । 'अप्स्वन्तः' इत्येषा पुरउष्णिक् । प्रथमपादस्य द्वादशाक्षरेण 'आद्यश्चेत्पुरउष्णिक्' (अनु. ५. २) इति लक्षणसद्भावात् । 'अप्सु मे सोमः' इत्येषा अनुष्टुप् । 'इदमापः' इत्याद्यास्तिस्रः अनुष्टुभः । शिष्टा एकोनविंशतिसंख्याका ऋचो गायत्र्यः। 'आदौ गायत्रम्' (अनु. १२. १४) इति परिभाषितत्वात् आद्या वायुदेवताका । ततो द्वे ऋचौ इन्द्रवायुदेवताके । तत एकस्तृचो मित्रावरुणदेवत्यः । तत उत्तरतृचस्य मरुद्गणविशिष्टेन्द्रो देवता । तत एकस्तृचो वैश्वदेवः । तदनन्तरभावी पौष्णः । शिष्टा ऋचोऽब्देवताकाः । 'पयस्वानग्ने' इत्यर्धर्चयुक्ता 'सं माग्ने' इत्येषा तु अग्निदेवताका । सूक्तविनियोगो लिङ्गादवगन्तव्यः । अभिप्लवषडहस्य द्वितीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्य 'तीव्राः सोमासः' इत्येषा तृतीया । 'द्वितीयस्य चतुर्विंशेन' इति खण्डे सूत्रितं—'तीव्राः सोमास आ गहीत्येका' (आश्व. श्रौ. ७. ६) इति । पृष्ठ्यषडहेऽपि द्वितीयेऽहनि प्रउगे एषा ॥

**तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे । वायो तान्प्रस्थितान्पिब ॥ १ ॥**

तीव्राः । सोमासः । आ । गहि । आशीःऽवन्तः । सुताः । इमे । वायो इति । तान् । प्रऽस्थितान् । पिब ॥ १ ॥

हे वायो इमे सोमासः ऐन्द्रवायवग्रहादिरूपाः सोमाः सुताः अभिषुताः । ते च तीव्राः प्रभूतत्वात् तर्पयितुं समर्थाः आशीर्वन्तः आशीर्युक्ताः अतस्त्वम् आ गहि अस्मिन् कर्मणि आगच्छ । प्रस्थितान् उत्तरवेदिं प्रति आनीतान् तान् सोमान् पिब ॥ सोमासः । 'अर्तिस्तु°' (उ. सू. १. १३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः । 'आज्जसेरसुक्' । गहि । 'मरुद्भिरग्न आ गहि' (ऋ. सं. १. १९. २) इत्यत्रोक्तम् । आशीर्वन्तः । 'श्रीञ् पाके' । 'अपस्पृधेथाम्°' (पा. सू. ६. १. ३६) इत्यादिसूत्रे आङ्पूर्वस्य क्विपि शिरादेशो निपातितः । करणस्यापि श्रयणद्रव्यस्य स्वव्यापारे कर्तृत्वविवक्षया कर्तरि क्विप् न विरुध्यते । आशीः एषाम् अस्तीति आशीर्वन्तः । 'छन्दसीरः' इति वत्वम् । वायो । आमन्त्रिताद्युदात्तत्वम् । प्रस्थितान् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा व्यत्ययेन अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

पूर्वोक्ते एव शस्त्रे 'उभा देवा दिविस्पृशा' इति द्वे ऐन्द्रवायवतृचस्य प्रथमाद्वितीये । तथा च 'द्वितीयस्य' इति खण्डे सूत्रितम्—'उभा देवा दिविस्पृशेति द्वे' (आश्व. श्रौ. ७. ६) इति ॥

**उभा देवा दिविस्पृशेन्द्रवायू हवामहे । अस्य सोमस्य पीतये ॥ २ ॥**

उभा । देवा । दिविऽस्पृशा । इन्द्रवायू इति । हवामहे । अस्य । सोमस्य । पीतये ॥ २ ॥

दिविस्पृशा द्युलोकवर्तिनौ उभा देवा द्वौ देवौ इन्द्रवायू हवामहे आह्वयामः । किमर्थम् । अस्य सोमस्य पीतये । असकृत् व्याख्यातम् ॥ उभा देवा । 'सुपां सुलुक्°' इति आकारः । दिविस्पृशा । 'हृद्द्युभ्यां ङेरुपसंख्यानम्' (पा. सू. ६. ३. ९. १) इति सप्तम्या अलुक् । कृदुत्तरपद-

---

१. र–'गायत्र्यः' इत्यस्यानन्तरं 'आदित आरभ्य अष्टादश ऋचः गायत्र्यः एकविंशी आपः पृणीत इति ऋक् गायत्र्यवान्तरभेदप्रतिष्ठाछन्दस्का । एवं समुदितैकोनविंशतिसंख्याका ऋचः गायत्र्य इति गूढाभिसंधिः' इत्यधिकम् । २. च-छ-व–आशीर्भिर्युक्ताः ।

प्रकृतिस्वरत्वम् । इन्द्रवायू । इन्द्रश्च वायुश्च इति द्वन्द्वः । 'उभयत्र वायोः प्रतिषेधो वक्तव्यः' (पा. सू. ६. ३. २६. १) इति आनङो निषेधः । 'देवताद्वन्द्वे च' इति प्राप्तस्य उभयपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ°' (पा. सू. ६. २. १४२) इति निषेधात् समासान्तोदात्तत्वमेव शिष्यते । हवामहे । 'ह्वेञ् स्पर्धायां शब्दे च' । 'बहुलं छन्दसि' इति संप्रसारणम् । 'संप्रसारणाच्च' इति परपूर्वत्वम् । शप् । गुणावादेशौ । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण पदस्य आद्युदात्तत्वे प्राप्ते 'तिङ्ङतिङः' इति आष्टमिको निघातः । अस्य । 'ऊडिदम्°' इत्यादिना षष्ठ्या उदात्तत्वम् । पीतये । 'पा पाने' । 'स्थागापापचः°' (पा. सू. ३. ३. ९५) इति भावे क्तिन् । 'घुमास्था°' इति ईत्वम् । व्यत्ययेनान्तोदात्तत्वम् ॥

इन्द्र॑वायू म॑नो॒जुवा॒ विप्रा॑ हवन्त ऊ॒तये॑ । स॒ह॒स्रा॒क्षा धि॒यस्पती॑ ॥ ३ ॥

इन्द्र॑वायू॒ इति॑ । म॒नः॒ऽजुवा॑ । विप्राः॑ । ह॒व॒न्ते॒ । ऊ॒तये॑ । स॒ह॒स्र॒ऽअ॒क्षा । धि॒यः । पती॒ इति॑ ॥ ३ ॥

विप्राः मेधाविनः ऋत्विग्यजमानाः ऊतये रक्षणार्थम् इन्द्रवायू हवन्ते आह्वयन्ति । कीदृशौ मनोजुवौ मन इव वेगवत्तरौ[1] सहस्राक्षा सहस्रनयनयुक्तौ । यद्यपि इन्द्र एव सहस्राक्षः तथापि छत्रि-न्यायेन वायुरपि तथोच्यते । धियस्पती कर्मणः बुद्धेर्वा पालकौ ॥ मनोजुवा । जवतिर्गतिकर्मा[2] । मनोवत् जवतः[3] इति मनोजुवा मन इव वेगयुक्तौ[4] । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्°' इति आकारः । विप्राः । औणादिको रन् । रन्प्रत्ययान्तः आद्युदात्तः[5] । ऊतये । 'ऊतियूति°' इत्यादिना क्तिनः उदात्तत्वम् । सहस्राक्षा । सहस्रम् अक्षीणि ययोस्तौ । 'बहुव्रीहौ सक्थ्यक्ष्णोः°' (पा. सू. ५. ४. ११३) इति षच् समासान्तः । बहुव्रीहिस्वरे प्राप्ते समासान्तप्रत्ययस्य सतिशिष्टत्वात् 'चितः' इत्य-न्तोदात्तत्वम् । धियः । 'सावेकाचः°' इति ङस उदात्तत्वम् । 'षष्ठ्याः पतिपुत्र°' इति संहितायां विसर्जनीयस्य सकारः । पती । डत्यन्तः आद्युदात्तः ॥

चतुर्विंशकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे 'मित्रं वयं हवामहे' इति तृचः षडहस्तोत्रियः । 'चतुर्विंशे' इति खण्डे सूत्रितम्—'आ नो मित्रावरुणा मित्रं वयं हवामहे' (आश्व. श्रौ. ७. २) इति । अभिप्लवषडहेऽपि प्रातःसवने मैत्रावरुणस्यायं तृचः आवापार्थः । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे सूत्रितम्—'परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे' (आश्व. श्रौ. ७. ५) इति । मैत्रावरुणस्य 'मित्रं वयं हवामहे' इत्येषा प्रातःसवने प्रस्थितयाज्या । 'प्रशास्ता ब्राह्मणाच्छंसी' इत्युपक्रम्य 'इदं ते सोम्यं मधु मित्रं वयं हवामहे' (आश्व. श्रौ. ५. ५) इति सूत्रितम् ॥

मि॒त्रं व॒यं ह॑वामहे॒ वरु॑णं॒ सोम॑पीतये । ज॒ज्ञा॒ना पू॒तद॑क्षसा ॥ ४ ॥

मि॒त्रम् । व॒यम् । ह॒वा॒म॒हे॒ । वरु॑णम् । सोम॑ऽपीतये । ज॒ज्ञा॒ना । पू॒तऽद॑क्षसा ॥ ४ ॥

वयम् अनुष्ठातारः सोमपीतये सोमपानार्थं मित्रं वरुणं च उभौ आह्वयामः । कीदृशावुभौ । जज्ञाना कर्मप्रदेशे प्रादुर्भवन्तौ पूतदक्षसा शुद्धबलौ ॥ वरुणम् । 'वृञ् वरणे' । 'कृवृतृदारिभ्य उनन्' (उ. सू. ३. ३३३) । नित्त्वादाद्युदात्तः । सोमपीतये । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।

---

१. ढ–वेगयुक्तौ । २. ढ–जुवतिर्गतिकर्मा । ३. ढ–जुवतः । ४. ढ–'मन इव वेगयुक्तौ' इति नास्ति । ५. झ–औणादिको रन्प्रत्ययान्तः आद्युदात्तः; न–औणादिकरन्प्रत्ययान्त आद्युदात्तः ।

जज्ञाना । 'जनी प्रादुर्भावे'। 'छन्दसि लिट्' (पा. सू. ३. २. १०५)। तस्य 'लिटः कानज्वा' (पा. सू. ३. २. १०६) इति कानजादेशः। 'गमहन॰' इत्यादिना उपधालोपः। तस्य 'अचः परस्मिन्॰' इति स्थानिवद्भावात् जनशब्दस्य द्विर्वचनम्। 'स्तोः श्चुना श्चुः' (पा. सू. ८. ४.४०) इति नकारस्य ञकारः। 'चितः' इत्यन्तोदात्तत्वम्। पूर्ववत् आकारः। पूतदक्षसा। 'पूञ् पवने'। 'निष्ठा' इति क्तः। 'श्र्युकः किति' (पा. सू. ७. २. ११) इति इट्प्रतिषेधः। पूतं दक्षो ययोस्तौ। 'बहुव्रीहौ प्रकृत्या॰' इति पूर्वपदप्रकृतिस्वरत्वम्॥

**ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती। ता मित्रावरुणा हुवे॥ ५॥**

ऋतेन। यौ। ऋतऽवृधौ। ऋतस्य। ज्योतिषः। पती इति। ता। मित्रावरुणा। हुवे॥५॥

यौ मित्रावरुणौ ऋतेन सत्यवचनेन यजमानानुग्रहकारिणा[1] ऋतावृधौ ऋतम् अवश्यंभावितया सत्यं कर्मफलं तस्य वर्धकौ ऋतस्य सत्यस्य प्रशस्तस्य ज्योतिषः प्रकाशस्य पती पालकौ। श्रुत्यन्तरे मित्रावरुणयोः अदितिपुत्रत्वेन श्रुतत्वात् द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिष्पालकत्वं युक्तम्। श्रुत्यन्तरे[2] च 'अष्टौ पुत्रासो अदितेः' इत्युपक्रम्य 'मित्रश्च वरुणश्च' (तै. आ. १. १३. २–३) इत्यादिकमाम्नातम्। ता मित्रावरुणा तथाविधौ मित्रावरुणौ हुवे आह्वयामि॥ ऋतावृधौ। 'वृधु वृद्धौ'। 'क्विप् च' इति क्विप्। 'अन्येषामपि दृश्यते' इति दीर्घः। कृदुत्तरपदप्रकृतिस्वरत्वम्। ज्योतिषः। 'द्युत दीप्तौ'। 'द्युतेरिसिन्नादेश्च जः' (उ. सू. २. २६७) इति इसिन्प्रत्ययः। नित्त्वादाद्युदात्तः। 'षष्ठ्याः पतिपुत्र॰' इति संहितायां विसर्जनीयस्य सत्वम्। मित्रावरुणा। 'देवताद्वन्द्वे च' (पा. सू. ६. ३. २६) इति आनङ्। 'देवताद्वन्द्वे च' (पा. सू. ६. २. १४१) इति उभयपदप्रकृतिस्वरत्वम्। 'सुपां सुलुक्॰' इति पूर्वसवर्णदीर्घ आकारः। हुवे। ह्वेञ्। आत्मनेपदोत्तमपुरुषैकवचने संप्रसारणे परपूर्वत्वे च कृते 'बहुलं छन्दसि' इति शपो लुक्। टेः एत्वम्। गुणे प्राप्ते 'क्ङिति च' (पा. सू. १. १. ५) इति प्रतिषेधः। उवङादेशः। 'तिङ्ङतिङः' इति निघातः॥ ॥ ८॥

**वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः॥ ६॥**

वरुणः। प्रऽअविता। भुवत्। मित्रः। विश्वाभिः। ऊतिऽभिः। करताम्। नः। सुऽराधसः॥६॥

अयं वरुणः अस्माकं प्राविता भुवत् प्रकर्षेण रक्षको भवतु। मित्रः च विश्वाभिरूतिभिः सर्वाभिः रक्षाभिः प्राविता भुवत्। तावुभावपि नः अस्मान् सुराधसः प्रभूतधनयुक्तान् करतां कुरुताम्॥ अविता। तृचश्चित्त्वादन्तोदात्तत्वम्। प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। भुवत्। 'भू सत्तायाम्'। लेटस्तिप्। 'लेटोऽडाटौ' इति अडागमः। 'इतश्च लोपः॰' इति इकारलोपः। 'बहुलं छन्दसि' इति शपो लुक्। गुणे प्राप्ते 'भूसुवोस्तिङि' (पा. सू. ७. ३. ८८) इति प्रतिषेधः। उवङादेशः। 'तिङ्ङतिङः' इति निघातः। विश्वाभिः। 'अशिप्रुषि॰' इत्यादिना क्वन्तो विश्वशब्द आद्युदात्तः। टाप्सुपोः अनुदात्तत्वात् तदेव शिष्यते। ऊतिभिः। 'ऊतियूति॰' इत्यादिना क्तिन् उदात्तः। करताम्। 'कृञ् करणे'। भौवादिकः। लोटस्तस्। तसस्ताम्। कर्तरि

---

१. ग-च-छ-ण-फ–अनुग्रहकारिणा। २. ढ–'श्रुत्यन्तरे च......आम्नातम्' इति नास्ति।

शप्। गुणो रपरत्वम्। शपः पित्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। सुराधसः। 'राध साध संसिद्धौ'। राध्नोति अनेन इति राधः धनम्। शोभनं राधः येषां ते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं प्राप्तं 'सोर्मनसी अलोमोषसी' (पा. सू. ६. २. ११७) इत्युत्तरपदाद्युदात्तत्वेन बाध्यते॥

मरुत्वन्तं हवामह इन्द्रमा सोमपीतये। सजूर्गणेन तृम्पतु॥ ७॥

मरुत्वन्तम्। हवामहे। इन्द्रम्। आ। सोमऽपीतये। सऽजूः। गणेन। तृम्पतु॥ ७॥

Vमरुत्वन्तं मरुद्भिर्युक्तम् Vइन्द्रं Vसोमपीतये सोमपानाय Vआ Vहवामहे आह्वयामः। स च इन्द्रः Vगणेन मरुत्समूहेन Vसजूः सह Vतृम्पतु तृप्तो भवतु॥ मरुत्वन्तम्। मरुतः अस्य सन्तीति मरुत्वान्। 'झयः' (पा. सू. ८. २. १०) इति मतुपो वत्वम्। 'तसौ मत्वर्थे' (पा. सू. १. ४. १९) इति भसंज्ञायां[1] पदसंज्ञाया बाधितत्वात् जश्त्वाभावः। मतुप्सुपौ पित्त्वादनुदात्तौ। ननु 'ह्रस्वनुड्भ्यां मतुप्' (पा. सू. ६. १. १७६) इति मतुप उदात्तत्वेन भवितव्यं, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (परिभा० ७९) इति तकारस्य अविद्यमानवत्त्वेन ह्रस्वात् परत्वात्। न। 'ह्रस्वनुड्भ्याम्°' इत्यत्र नुड्ग्रहणसामर्थ्यात् अविद्यमानपरिभाषा नाश्रीयते इति वृत्तावुक्तम् (का. ६. १. १७६)। अतो मरुच्छब्दस्य स्वर एव शिष्यते। सजूः। 'जुषी प्रीतिसेवनयोः'। संपदादिलक्षणः क्विप्। समाना प्रीतिः यस्य इति बहुव्रीहिः। 'समानस्य च्छन्दसि°' इति सभावः। 'ससजुषो रुः' (पा. सू. ८. २. ६६) इति रुत्वम्। 'वोरुपधायाः°' (पा. सू. ८. २. ७६) इत्युपधादीर्घः। बहुव्रीहिस्वरे प्राप्ते 'त्रिचक्रादीनां छन्दसि' (पा. सू. ६. २. १९९. १) इत्युत्तरपदान्तोदात्तत्वम्। तृम्पतु। 'तृपं[2] तृम्प तृप्तौ'। 'तुदादिभ्यः शः'। 'शे तृम्पादीनाम्' (पा. सू. ७. १. ५९. १) इति नुमागमः॥

इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः। विश्वे मम श्रुता हवम्॥ ८॥

इन्द्रऽज्येष्ठाः। मरुत्ऽगणाः। देवासः। पूषऽरातयः। विश्वे। मम। श्रुत। हवम्॥ ८॥

हे Vदेवासः इन्द्रमरुद्रूपाः Vविश्वे सर्वे यूयं Vमम Vहवम् आह्वानं Vश्रुत शृणुत। कीदृशाः। Vइन्द्रज्येष्ठाः। इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः Vमरुद्गणाः मरुत्समूहरूपाः। Vपूषरातयः। पूषाख्यो देवो रातिः दाता[3] येषाम् इन्द्रमरुतां ते पूषरातयः॥ इन्द्रज्येष्ठाः। आमन्त्रिताद्युदात्तत्वम्। पादादित्वादनिघातः। मरुद्गणाः। 'विभाषितं विशेषवचने बहुवचनम्' (पा. सू. ८. १. ७४) इति पूर्वस्याविद्यमानवत्त्वादनिघातः। देवासः पूषरातयः। पूर्ववत्। श्रुत। 'श्रु श्रवणे'। लोण्मध्यमबहुवचनं थ। 'तस्थस्थमिपाम्°' (पा. सू. ३. ४. १०१) इति तादेशः। व्यत्ययेन शप्। 'बहुलं छन्दसि' इति शपो लुक्। 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'क्ङिति च' इति प्रतिषेधः। 'द्व्यचोऽतस्तिङः' इति दीर्घः। हवम्। 'ह्वेञ् स्पर्धायां शब्दे च'। 'भावेऽनुपसर्गस्य' (पा. सू. ३. ३. ७५) इति अप्। संप्रसारणं परपूर्वत्वं गुणावादेशौ। पित्वादनुदात्तत्वम्। धातुस्वरः शिष्यते॥

---

१. ढ–भसंज्ञया। २. ढ– 'तृप' नास्ति। ३. ढ–ज्ञातिः।

हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ॥ ९ ॥

हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा । मा । नः । दुःऽशंसः । ईशत ॥९॥

हे सुदानवः शोभनदानयुक्ताः मरुद्गणाः सहसा बलवता युजा योग्येन इन्द्रेण सह वृत्रं शत्रुं हत नाशयत । दुःशंसः दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रो नः अस्मान् प्रति मा ईशत समर्थो मा भूत् ॥ हत । 'हन हिंसागत्योः' । लोटः थ । तस्य त । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'अनुदात्तोपदेश०' ( पा. सू. ६. ४. ३७ ) इत्यादिना अनुनासिकलोपः । सुदानवः 'डुदाञ् दाने' । 'दाभाभ्यां नुः' ( उ. सू . ३. ३१२ ) इति औणादिको नुप्रत्ययः । प्रादिसमासे आमन्त्रितनिघातः । युजा । 'युजिर् योगे' । 'ऋत्विक्०' इत्यादिना क्विन् । 'सावेकाचः०' इति तृतीयैकवचनस्योदात्तत्वम् । दुःशंसः । 'ईषद्दुःसुषु०' ( पा. सू. ३. ३. १२६ ) इति खल् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । ईशत । 'ईश ऐश्वर्ये' । माङि लुङि प्राप्ते 'छन्दसि लुङ्लङ्लिटः' इति व्यत्ययेन लङ् । तस्य 'बहुलं छन्दसि' इति शपो लुगभावः । 'न माङ्योगे' इति आडागमाभावः । 'तिङ्ङतिङः' इति निघातः ॥

विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥ १० ॥

विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥ १० ॥

मरुतः मरुत्संज्ञकान् विश्वान् सर्वान् देवान् सोमपीतये हवामहे सोमपानार्थम् आह्वयामः । ते च मरुतः उग्राः[1] शत्रुभिरसह्यबलाः पृश्निमातरः पृश्नेः नानावर्णयुक्ताया भूमेः[2] पुत्राः । हिशब्दः प्रसिद्ध्यर्थः । सा च प्रसिद्धिः 'पृश्नेः पुत्राः' ( ऋ. सं. ५. ५८. ५ ) इति मन्त्रान्तरादवगन्तव्या ॥ पृश्निमातरः । पृश्निः माता येषां ते । पृश्निशब्दः 'घृणिपृश्नि०' (उ. सू. ४. ४९२) इति उणादावाद्युदात्तो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ९ ॥

जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥ ११ ॥

जयताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया । यत् । शुभम् । याथन । नरः ॥११॥

मरुतां देवानां तन्यतुः शब्दः धृष्णुया धाष्ट्र्ययुक्तः सन् एति गच्छति । केषामिव । जयतां विजययुक्तानां शूराणां भटानाम् इव । हे नरः नेतारः मरुतः यूयं यत् यदा शुभं शोभनं देवयजनं[3] याथन प्राप्नुथ । तदा त्वदीयः शब्दो गच्छतीति पूर्वत्रान्वयः ॥ तन्यतुः । 'तनु विस्तारे' । 'ऋतन्यञ्जि०' ( उ. सू. ४. ४४२ ) इत्यादिना यतुच्प्रत्ययः । धृष्णुया । 'ञिधृषा प्रागल्भ्ये' । 'त्रसिगृधिधृषिक्षिपेः क्नुः' ( पा. सू. ३. २. १४० ) । 'सुपां सुलुक्०' इति सोः याजादेशः । चित्त्वादन्तोदात्तः । याथन । 'तप्तनप्तनथनाश्च' इति थनादेशः । यच्छब्दयोगात् निघाताभावः ॥

---

१. त-श-ष–उग्राः युद्धादौ घोराः । २. श–गोः । ३. ढ–देवयजनदेशम् । ४. च-छ-त-थ-ष–क्नुः इति क्नुः ।

**हस्कारा॒द्वि॒द्युत॒स्पर्यतो॑ जा॒ता अ॑वन्तु नः । म॒रुतो॑ मृळयन्तु नः ॥ १२ ॥**

ह॒स्का॒रात् । वि॒ऽद्युतः॑ । परि॑ । अतः॑ । जा॒ताः । अ॒व॒न्तु॒ । नः॒ । म॒रुतः॑ । मृ॒ळ॒य॒न्तु॒ । नः॒ ॥ १२ ॥

ᵛहस्कारात् दीप्तिकरात् ᵛविद्युतः विशेषेण दीप्यमानात् ᵛअतः अन्तरिक्षात् ᵛपरि ᵛजाताः सर्वत्र उत्पन्ना मरुतः ᵛनः अस्मान् ᵛअवन्तु रक्षन्तु । तथाविधाः ᵛमरुतः ᵛनः अस्मान् ᵛमृळयन्तु सुखयन्तु ॥ हस्कारात् । 'हसे हसने' । अत्र तु प्रकाशमात्रे वर्तते । अस्मात् संपदादिलक्षणः क्विप् । अस्मिन् उपपदे 'डुकृञ् करणे' इत्यस्मात् 'कर्मण्यण्' (पा. सू. ३. २. १) इति अण्प्रत्ययः । 'तत्पुरुषे तुल्यार्थ°' इत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'गतिकारक°' इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वम् । 'अतः कृकमि°' (पा. सू. ८. ३. ४६) इत्यादिना विसर्जनीयस्य सत्वम् ॥

**आ पू॑षञ्चि॒त्रब॑र्हिष॒माघृ॑णे ध॒रुणं॑ दि॒वः । आजा॑ न॒ष्टं यथा॑ प॒शुम् ॥ १३ ॥**

आ । पू॒ष॒न् । चि॒त्रऽब॑र्हिषम् । आघृ॑णे । ध॒रुण॑म् । दि॒वः । आ । अ॒ज॒ । न॒ष्टम् । यथा॑ । प॒शुम् ॥ १३ ॥

हे ᵛपूषन् ᵛचित्रबर्हिषं विचित्रैर्दर्भैर्युक्तं ᵛधरुणं यागस्य धारकं सोमं ᵛदिवः ᵛआ द्युलोकात् आहर इति शेषः । पूषा विशेष्यते । ᵛआघृणे आगतदीप्तियुक्त । तत्र दृष्टान्तः । हे ᵛअज गमनशील ᵛयथा लोके ᵛनष्टं ᵛपशुं महारण्यादौ अन्वीक्ष्य[1] कश्चिदाहरति तद्वत् ॥ आघृणे । 'घृ क्षरणदीप्त्योः' इत्यस्मात् 'घृणि-पृश्नि°' इति निप्रत्ययो निपातितः । 'ऋवर्णाच्चेति वक्तव्यम्' इति णत्वम् । प्रादिसमासः । आमन्त्रिताद्युदात्तत्वम् । धरुणम् । 'धृञ् धारणे' । अस्मात् ण्यन्ताद्धातोः 'धारेर्णिलुक्च' (दश. पा. ५) इति उनन्प्रत्ययः । व्यत्ययेन नित्स्वराभावे प्रत्ययस्वरः । दिवः । 'ऊडिदम्°' इत्यादिना षष्ठ्या उदात्तत्वम् । अज । 'अज गतिक्षेपणयोः' ॥

**पू॒षा राजा॑न॒माघृ॑णि॒रप॑गूळ्हं॒ गुहा॑ हि॒तम् । अवि॑न्दच्चि॒त्रब॑र्हिषम् ॥ १४ ॥**

पू॒षा । राजा॑नम् । आघृ॑णिः । अप॑ऽगूळ्हम् । गुहा॑ । हि॒तम् । अवि॑न्दत् । चि॒त्रऽब॑र्हिषम् ॥ १४ ॥

ᵛआघृणिः ᵛपूषा ᵛराजानं सोमम् ᵛअविन्दत् अलभत । कीदृशम् । ᵛअपगूळ्हम् अत्यन्तगूढम् । तत्र हेतुः । ᵛगुहा ᵛहितं गुहासदृशे दुर्गमे द्युलोके स्थितं तथा ᵛचित्रबर्हिषम् ॥ अपगूळ्हम् । 'गुहू संवरणे' । 'निष्ठा' इति कर्मणि क्तः । 'हो ढः' (पा. सू. ८. २. ३१) इति ढत्वम् । 'झषस्तथोर्धोऽधः' (पा. सू. ८. २. ४०) इति धकारः । ष्टुत्वढलोपदीर्घाः । समासे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । गुहा । 'सुपां सुलुक्°' इति सप्तम्या लुक् । हितम् । निष्ठायां दधातेर्हिः ॥

**उ॒तो स मह्य॒मिन्दु॑भि॒: षड्यु॒क्ताँ अ॑नु॒सेषि॑धत् । गोभि॒र्यवं॒ न च॑र्कृषत् ॥ १५ ॥**

उ॒तो इति॑ । सः । मह्य॑म् । इन्दु॑ऽभिः । षट् । यु॒क्तान् । अ॒नु॒ऽसेसि॑धत् ।

गोभिः॑ । यव॑म् । न । च॒र्कृ॒ष॒त् ॥ १५ ॥

---

[1] ढ-अन्विष्य; र-अन्वेष्य ।

उतो अपि च सः पूषा मह्यं यजमानाय इन्दुभिः यागहेतुभिः सोमैः युक्तान् पट् वसन्तादीन् ऋतून् अनुसेषिधत् अनुक्रमेण पुनःपुनर्नयन् वर्तते इति शेषः । तत्र दृष्टान्तः । गोभिः बलीवर्दैः यवं न चर्कृषत् । नशब्द उपमार्थः । यथा यवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनः कृषति तद्वत् ॥ मह्यम् । 'ङयि च' ( पा. सू. ६. १. २१२ ) इत्याद्युदात्तत्वम् । इन्दुभिः । 'उन्दी क्लेदने' । 'उन्देरिच्चादेः' ( उ. सू. १. १२ ) इति उप्रत्ययः, उकारस्य इकारादेशश्च । 'नित्' इति अनुवृत्तेराद्युदात्तत्वम् । युक्तान् । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । अनुसेषिधत् । 'षिधु गत्याम्' । 'धातोरेकाचः°' ( पा. सू. ३. १. २२ ) इति यङ् । 'यङोऽचि च' ( पा. सू. २. ४. ७४ ) इति तस्य लुक् । प्रत्ययलक्षणेन 'सन्यङोः' ( पा. सू. ६. १. ९ ) इति द्विर्भावः । हलादिशेषः । 'गुणो यङ्लुकोः' ( पा. सू. ७. ४. ८२ ) इति अभ्यासस्य गुणः । 'इण्कोः' ( पा. सू. ८. ३. ५७ ) इति षत्वम् । सनादित्वात् धातुसंज्ञायां लटः शतृ । कर्तरि शप् । 'अदादिवच्च' इति वचनात् तस्य लुक् । 'नाभ्यस्ताच्छतुः' ( पा. सू. ७. १. ७८ ) इति नुम्प्रतिषेधः । प्रत्ययस्वरे प्राप्ते 'अभ्यस्तानामादिः' ( पा. सू. ६. १. १८९ ) इत्याद्युदात्तत्वम् । गोभिः । 'सावेकाचः°' इति भिस उदात्तत्वे प्राप्ते 'न गोश्वन्°' इति प्रतिषेधः । चर्कृषत् । 'कृष विलेखने' । यङ्लुकि द्विर्भावहलादिशेषचर्त्वानि । 'रुग्रिकौ च लुकि' ( पा. सू. ७. ४. ९१ ) इति अभ्यासस्य रुगागमः । अस्मात् यङ्लुगन्तात् लेटस्तिप् । 'इतश्च लोपः' । 'लेटोऽडाटौ' इति अडागमः । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । लघूपधगुणे प्राप्ते 'नाभ्यस्तस्याचि पिति°' ( पा. सू. ७. ३. ८७ ) इति निषेधः । 'तिङ्ङतिङः' इति निघातः ॥ ॥ १० ॥

अपोनप्त्रीये एकधनासूपानीतासु स्वयमनुगच्छन् 'अम्बयः' इति द्वे अनुब्रूयात् । तृतीयया 'अपो देवीः' इत्यनया एकधनासु हविर्धानं प्रविष्टासु स्वयमनुप्रविशेत् । तथैव सूत्रितम्—'अम्बयो यन्त्यध्वभिरिति तिस्र उत्तमयानुप्रपद्येत' ( आश्व. श्रौ. ५. १ ) इति ॥

## अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥ १६ ॥

अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् । पृञ्चतीः । मधुना । पयः ॥ १६ ॥

अध्वरीयताम् अध्वरमात्मन इच्छताम् अस्माकम् अम्बयः मातृस्थानीया आपः । तथा च कौषीतकिब्राह्मणे समाम्नायते— 'अम्बयो यन्त्यध्वभिरित्यापो वा अम्बयः' इति । ता आपः अध्वभिः देवयजनमार्गैः यन्ति गच्छन्ति । कीदृश्य आपः । जामयः हितकारिण्यो बन्धवः । तथा मधुना माधुर्यरसेन युक्तं पयः पृञ्चतीः गवादिषु योजयन्त्यः ॥ अम्बयः । 'रबि लबि अबि शब्दे' । एतस्मात् 'अच इः' ( उ. सू. ४. ५७८ ) इति प्रकरणे बाहुलकात् इः । प्रत्ययस्वरः । अध्वभिः । 'अदेर्ध च' ( उ. सू. ४. ५५५ ) इति क्वनिप् । पित्वात् प्रत्ययस्यानुदात्तत्वे धातुस्वरः । जामयः । 'जमु अदने' । बाहुलकात् इः । अध्वरीयताम् । अध्वरशब्दात् 'सुप आत्मनः क्यच्' इति क्यच् । 'क्यचि च' इति ईत्वम् । 'अपुत्रादीनामिति वक्तव्यम्' ( पा. म. ७. ४. ३५ ) इति वचनात् 'न च्छन्दस्यपुत्रस्य' इति ईत्वनिषेधाभावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'कव्यध्वरपृतनस्य°' ( पा. सू. ७. ४. ३९ ) इति अकारलोपोऽपि न भवति । क्यच्प्रत्ययान्तधातोः लटः शतृ । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण तयोः क्यचा सहैकादेशः । 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तत्वे सति 'शतुरनुमो नद्यजादी' इति षष्ठ्या उदात्तत्वम् ।

पृञ्चतीः । ‘ पृची संपर्के ’ । लटः शतृ । ‘ रुधादिभ्यः श्नम् ’ । ‘ श्नसोरल्लोपः ’ । अनुस्वारपरसवर्णौ । ‘ उगितश्च ’ इति ङीप् । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घत्वम् । ‘ शतुरनुमः° ’ इति ङीप उदात्तत्वम् ॥

अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥ १७ ॥

अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः । नः । हिन्वन्तु । अध्वरम् ॥१७॥

ᵛयाः ᵛअमूः आपः ᵛसूर्ये ᵛउप समीपे¹ अवस्थिताः । ‘ आपः सूर्ये समाहिताः ’ ( तै. आ. १. ८. १ ) इति श्रुत्यन्तरात् । ᵛवा अथवा ᵛसूर्यः ᵛयाभिः अद्भिः ᵛसह वर्तते । पूर्वत्रापां प्राधान्यम् उत्तरत्र सूर्यस्येति विशेषः । ᵛताः तादृश्य आपो ᵛनः अस्मदीयम् ᵛअध्वरं यागं ᵛहिन्वन्तु प्रीणयन्तु ॥ याभिः । ‘ सावेकाचः° ’ इति विभक्त्युदात्तस्य ‘ न गोश्वन्सावर्ण° ’ इति प्रतिषेधः । शेषा तु प्रक्रिया स्पष्टा ॥

अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥ १८ ॥

अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥१८॥

ᵛनः अस्मदीयाः ᵛगावः ᵛयत्र यास्वप्सु ᵛपिबन्ति पानं कुर्वन्ति ताः ᵛअपो ᵛदेवीः ᵛउप ᵛह्वये आह्वयामि । ᵛसिन्धुभ्यः स्यन्दनशीलाभ्योऽद्भ्यो देवताभ्यो ᵛहविः ᵛकर्त्वं अस्माभिः कर्तव्यम् ॥ अपः । ‘ ऊडिदम्° ’ इत्यादिना शस उदात्तत्वम् । पिबन्ति । ‘ पाघ्रा° ’ इत्यादिना पिबादेशः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वम् । ‘ निपातैर्यद्यदि° ’ इत्यादिना निघाताभावः । कर्त्वम् । ‘ डुकृञ् करणे ’ । ‘ कृत्यार्थे तवैकेन्केन्यत्वनः ’ ( पा. सू. ३. ४. १४ ) इति कर्मणि त्वन्प्रत्ययः । गुणः । नित्स्वरेणाद्युदात्तत्वम् ॥

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः ॥ १९ ॥

अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये । देवाः । भवत । वाजिनः ॥ १९ ॥

ᵛअप्सु जलेषु ᵛअन्तः मध्ये ᵛअमृतं पीयूषं वर्तते । तस्य अब्विकारत्वात् । ‘ अमृतं वा आपः ’ ( तै. सं. ५. ६. २. १–२ ) इति श्रुत्यन्तराच्च । तथैव ᵛअप्सु ᵛभेषजम् औषधं वर्तते । क्षुद्रोगनिवर्तकस्य अन्नस्य अप्कार्यत्वात् । ᵛउत अपि च तादृशीनाम् ᵛअपां देवतानां ᵛप्रशस्तये प्रशंसार्थं हे ᵛदेवाः ऋत्विजादयो ब्राह्मणाः । ‘ एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः ’ ( तै. सं. १. ७. ३. १ ) इति श्रुत्यन्तरात् । ᵛवाजिनः वेगवन्तः ᵛभवत । शीघ्रं स्तुतिं कुरुतेत्यर्थः ॥ अप्सु । ‘ऊडिदम्°’ इत्यादिना सप्तम्या उदात्तत्वम् । संहितायाम् ‘ उदात्तस्वरितयोर्यणः स्वरितः° ’ इति स्वरितत्वम् । अमृतम् । ‘ नञो जरमरमित्रमृताः ’ ( पा. सू. ६. २. ११६ ) इत्युत्तरपदाद्युदात्तत्वम् । प्रशस्तये । ‘ तादौ च निति° ’

---

१. ढ–समीपम् ।

( पा. सू. ६. २. ५० ) इति गतेः प्रकृतिस्वरत्वम् । भवत । ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ इति पूर्वस्यामन्त्रितस्य अविद्यमानवत्त्वेन पादादित्वात् न निघातः ॥

कारीर्याम् उत्तरस्य आज्यभागस्य ‘ अप्सु मे ’ इत्येषा अनुवाक्या । ‘ वर्षकामेष्टिः ’ इति खण्डे ‘ अप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीत् ’ ( आश्व. श्रौ. २. १३ ) इति सूत्रितम् ॥

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ २० ॥

अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा ।
अग्निम् । च । विश्वऽशंभुवम् । आपः । च । विश्वऽभेषजीः ॥ २० ॥

ᵛअप्सु जलेषु ᵛअन्तः मध्ये ᵛविश्वानि ᵛभेषजा सर्वाणि औषधानि सन्तीति ᵛमे मह्यं मन्त्रदर्शिने मुनये ᵛसोमः देवः ᵛअब्रवीत् । तथा ᵛविश्वशंभुवं सर्वस्य जगतः सुखकरम् एतन्नामकं च ᵛअग्निं[1] ᵛच अप्सु वर्तमानं सोमोऽब्रवीत् । तथा च तैत्तिरीयाः ‘ अग्नेस्त्रयो ज्यायांसः ’ इत्यनुवाके ‘ सोऽपः प्राविशत् ’ ( तै. सं. २. ६. ६. १ ) इति अग्नेः अप्सु प्रवेशमामनन्ति । लतागुल्मवृक्षमूलादीनाम् औषधानां[2] वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम् । ᵛविश्वभेषजीः विश्वानि भेषजानि यासु तथाविधाः अपः अपि अब्रवीत् ॥ भेषजा । ‘ सुपां सुलुक्° ’ इति आकारः । विश्वशंभुवम् । भवतेरन्तर्भावितण्यर्थात् क्विप् । व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ ( पा. सू. ६. २. १०६ ) इति पूर्वपदान्तोदात्तत्वम् । आपः । कर्मणि शसि प्राप्ते व्यत्ययेन जस् । ‘ अप्तृन्° ’ ( पा. सू. ६. ४. ११ ) इत्यादिना उपधादीर्घः । विश्वभेषजीः । विश्वशंभुवमितिवत्[3] ॥ ॥ ११ ॥

आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ २१ ॥

आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम । ज्योक् । च । सूर्यम् । दृशे ॥ २१ ॥

हे ᵛआपः ᵛमम ᵛतन्वे शरीरार्थं ᵛवरूथं रोगनिवारकं ᵛभेषजम् औषधं ᵛपृणीत पूरयत । किंच ᵛज्योक् चिरं ᵛसूर्यं ᵛदृशे द्रष्टुं नीरोगा वयं शक्नुवाम इति शेषः ॥ पृणीत । ‘ पॄ पालनपूरणयोः ’ । लोण्मध्यमबहुवचनं थ । तस्य ‘ तस्थस्थमिपाम्° ’ इति तादेशः । ‘ क्र्यादिभ्यः श्ना ’ । ‘ प्वादीनां ह्रस्वः ’ इति ह्रस्वः । ‘ ई हल्यघोः ’ इति ईत्वम् । ‘ ऋवर्णाच्च° ’ इति णत्वम् । ‘ सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ’ इति तिङः स्वरः शिष्यते । आपः इत्यस्य ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ इति अविद्यमानवत्त्वे पादादित्वात् निघाताभावः । वरूथम् । ‘ वृञ् वरणे ’ । ‘ जॄवृञ्भ्यामूथन् ’ ( उ. सू. २. १६३ ) । नित्त्वादाद्युदात्तः । तन्वे । ‘ ङिति ह्रस्वश्च ’ ( पा. सू. १. ४. ६ ) इति नदीसंज्ञा पाक्षिकी इति आडागमाभावः । ‘ उदात्तयणो हल्पूर्वात् ’ इति विभक्त्युदात्तत्वे प्राप्ते

१. ढ-न-वाग्निम् । २. च-फ-श-ष-ओषधीनाम्; ढ-औषधीनाम् । ३. च-छ-ण-त-फ-श-ष-विश्वशंभुरितिवत् ।

व्यत्ययेन ' उदात्तस्वरितयोः° ' इति स्वरितत्वम् । दृशे । ' दृशे विख्ये च ' ( पा. सू. ३. ४. ११ ) इति तुमर्थे निपात्यते ॥

पशौ मार्जने ' इदमापः प्र वहत ' इत्येषा विनियुक्ता । ' हुतायां वपायाम् ' इति खण्डे सूत्रितम्—' इदमापः प्र वहत ' ( आश्व. श्रौ. ३. ५ ) इति । एवैव अवभृथेष्टौ स्नाने विनियुक्ता । ' पत्नीसंयाजैश्चरित्वा ' इति खण्डे ' इदमापः प्र वहत सुमित्र्या न आप ओषधयः सन्तु ' ( आश्व. श्रौ. ६. १३ ) इति सूत्रितम् ॥

इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ २२ ॥

इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि ।
यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतम् ॥ २२ ॥

ᵛमयि यजमाने ᵛयत् ᵛकिं ᵛच ᵛदुरितम् अज्ञानात् निष्पन्नं ᵛवा अथवा ᵛअहं यजमानः ᵛअभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि ᵛवा अथवा ᵛशेपे साधुजनं शप्तवानस्मीति ᵛयत् अस्ति ᵛउत अपि च ᵛअनृतम् उक्तवान् इति ᵛयत् अस्ति तत् ᵛइदं सर्वमपराधजातं[1] ᵛप्र ᵛवहत मत्तोऽपनीय प्रवाहेणान्यतो नयत ॥ मयि । मपर्यन्तस्य ' त्वमावेकवचने ' इति मादेशे कृते ' अतो गुणे ' इति पररूपे च सति ' योऽचि ' इति दकारस्य यकारादेशः । एकादेशस्वरेण मकारात् परस्य अकारस्योदात्तत्वम् । दुद्रोह । ' द्रुह जिघांसायाम् ' । णलि गुणे द्विर्वचनह्रस्वहलादिशेषाः । ' लिति ' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वृत्तयोगात् निघाताभावः । शेपे । ' शप आक्रोशे ' । लिटि व्यत्ययेन तङ् । उत्तमैकवचनम् इट् । टेः एत्वम् । ' अत एकहल्मध्ये° ' ( पा. सू. ६. ४. १२० ) इति एत्वाभ्यासलोपौ । प्रत्ययस्वरेणान्तोदात्तत्वम् । पूर्ववत् निघाताभावः ॥

पशौ आहवनीयोपस्थाने ' आपो अद्यान्वचारिषम् ' इत्येषा । ' मनोतायै संप्रेषित ' इति खण्डे सूत्रितम्—' एत्योपतिष्ठन्त आपो अद्यान्वचारिषम् ' ( आश्व. श्रौ. ३. ६ ) इति ॥

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ २३ ॥

आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि ।
पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज । वर्चसा ॥ २३ ॥

ᵛअद्य अस्मिन् दिने अवभृथार्थम् ᵛआपः ᵛअन्वचारिषं जलान्यनुप्रविष्टोऽस्मि । प्रविश्य च ᵛरसेन जलसारेण ᵛसमगस्महि संगताः स्मः । हे ᵛअग्ने ᵛपयस्वान् जले वर्तमानत्वेन पयोयुक्तः त्वम् ᵛआ

---

१. ढ–सर्वमपराधजातं मम; श–सर्वमपराधजातं हे आपः; ष–सर्वमपराधजातं हि आपः ।

ᵛगहि । अस्मिन् कर्मण्यागच्छ । ᵛतं ᵛमा तादृशं स्नातं मां ᵛवर्चसा तेजसा ᵛसं ᵛसृज संयोजय॥ आपः । कर्मणि शसि प्राप्ते व्यत्ययेन जस् । अचारिषम् । चर गत्यर्थः । लुङि च्लेः सिच् । ' आर्धधातुकस्येड्वलादेः ' (पा. सू. ७. २. ३५) इति इट् । ' नेटि ' (पा. सू. ७. २. ४) इति वृद्धिप्रतिषेधे प्राप्ते तदपवादतया ' अतो ल्रान्तस्य ' (पा. सू. ७. २. २) इति उपधाया वृद्धिः। अगस्महि । ' समो गम्यृच्छि° ' (पा. सू. १. ३. २९) इति आत्मनेपदम् । च्लेः सिच् । 'मन्त्रे घस° ' इत्यादिना च्लेर्लुगभावश्छान्दसः । ' एकाच उपदेशेऽनुदात्तात् ' (पा. सू. ७. २. १०) इति इट्प्रतिषेधः । ' वा गमः ' (पा. सू. १. २. १३) इति सिचः कित्त्वात् ' अनुदात्तोपदेश° ' इत्यादिना अनुनासिकलोपः । गहि । लोटि गमेः सिपो हिः । अपित्त्वेन ङित्त्वात् ' अनुदात्तोपदेश° ' इत्यादिना अनुनासिकलोपः । ' अतो हेः ' इति लुक् न भवति ; ' असिद्धवदत्रा भात् ' इति मलोपस्यासिद्धत्वात् ॥

सं मा॑ग्ने॒ वर्च॑सा सृज॒ सं प्र॒जया॒ समायु॑षा ।
वि॒द्युर्मे॑ अस्य दे॒वा इन्द्रो॑ विद्यात्स॒ह ऋषि॑भिः ॥ २४ ॥

सम् । मा॒ । अ॒ग्ने॒ । वर्च॑सा । सृ॒ज॒ । सम् । प्र॒ऽजया॑ । सम् । आयु॑षा ।
वि॒द्युः । मे॒ । अ॒स्य॒ । दे॒वाः । इन्द्रः॑ । वि॒द्या॒त् । स॒ह॒ । ऋषि॑ऽभिः ॥ २४ ॥

हे ᵛअग्ने वर्चःप्रजायुर्भिः मां संयोजय । ᵛदेवाः सोमपातारः ᵛअस्य ᵛमे यजमानस्य ᵛविद्युः अनुष्ठानं जानीयुः । किंच ᵛइन्द्रः च ऋषिगणैः ᵛसह ममानुष्ठानं ᵛविद्यात् जानीयात् ॥ विद्युः । ' विद ज्ञाने ' । लिङि ' झेर्जुस् ' (पा सू. ३. ४. १०८) । यासुट् । ' लिङः सलोपः° ' इति सकारलोपः । ' उस्यपदान्तात् ' (पा. सू. ६. १. ९६) इति पररूपत्वम् । यासुट उदात्तत्वेन एकादेश उकारोऽपि उदात्तः । अस्य । ' इदमोऽन्वादेशे° ' इति अशनुदात्तः । विभक्तिरपि सुप्त्वेन अनुदात्ता । सह ऋषिभिः इत्यत्र ' ऋत्यकः ' (पा. सू. ६. १. १२८) इति प्रकृतिभावः ॥ ॥१२॥ ॥५॥

प्रथममण्डलस्य षष्ठे अनुवाके सप्त सूक्तानि । तत्र ' कस्य नूनम् ' इति पञ्चदशर्चं प्रथमं सूक्तम्। अजीगर्तपुत्रस्य शुनःशेपस्य आर्षं त्रैष्टुभम् । ' अभि त्वा देव ' इति तृचो गायत्रः । आद्याया अनिरुक्तत्वात् प्रजापतिर्देवता । ' अग्नेर्वयम् ' इत्यस्य अग्निः । ' अभि त्वा देव ' इत्यस्य तृचस्य सविता। ' भगभक्तस्य ' इत्येषा भगदेवताका वा । शेषा वारुण्यः । तथा च अनुक्रान्तं–' कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भागी वा ' इति । राजसूये अभिषेचनीयेऽहनि मरुत्वतीये परिसमाप्ते सति एतदादिकं सूक्तसप्तकम् अभिषिक्तस्य पुत्रादिभिः परिवृतस्य राज्ञः पुरस्तात् होत्राख्यातव्यम् । तथा च सूत्रेऽभिहितम्–' संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत ' (आश्व. श्रौ. ९. ३) इति । ब्राह्मणं च भवति–' तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति ' (ऐ. ब्रा. ७. १८) इति ॥

---

१. ढ–वर्चसा मावसृज संयोजय प्रजया आयुषा मां संसृज; श-ष–' संयोजय ' इत्यस्य स्थाने ' संसृज संयोजय ' ।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ १ ॥

कस्य । नूनम् । कतमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम ।
कः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥१॥

'कस्य' इत्यनयर्चा शुनःशेपो यूपे बद्धः कांदिशीकः कं देवम् उपधावानि इति विचिकित्सति। तथा च आम्नायते–'हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार' (ऐ. ब्रा. ७. १६) इति । वयं शुनःशेपनामकाः vअमृतानां देवतानां मध्ये vकतमस्य किंजातीयस्य vकस्य vदेवस्य vचारु शोभनं vनाम vमनामहे उच्चारयामः । vकः देवो मां मुमूर्षुं vपुनः अपि vमह्यै महत्यै vअदितये पृथिव्यै vदात् दद्यात् । तेन दानेन अहममृतः सन् vपितरं vमातरं vच vदृशेयं पश्येयम् । 'को[1] वै नाम प्रजापतिः' (ऐ. ब्रा. ३.२१) इति श्रुतेः कस्य इति शब्दसामान्यात् अनया प्रजापतिरेव उपसृतः इति गम्यते[1] ॥ कतमस्य । किंशब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा. सू. ५. ३. ९३)। 'चितः' इत्यन्तोदात्तत्वम् । अमृतानाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मनामहे । 'मन ज्ञाने'। व्यत्ययेन शप् । पादादित्वादनिघातः । मह्यै । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । दात् । 'गातिस्था°' (पा. सू. २. ४. ७७) इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमाभावः । दृशेयम् । 'दृशिर् प्रेक्षणे'। आशीर्लिङि मिपः अम् । 'दृशेरग्वक्तव्यः' (पा. म. ३. १. ८६. २) इति अक्प्रत्ययः शपोऽपवादः । कित्त्वात् लघूपधगुणाभावः । 'लिङ्याशिष्यङ्' (पा. सू. ३. १. ८६) इति अङि हि सति 'ऋदृशोऽङि गुणः' (पा. सू. ७. ४. १६) इति गुणः स्यात् । यासुट् । सलोपः । 'अतो येयः'। 'आद्गुणः'। यासुटः स्वरेण एकार उदात्तः । मातरं च इत्यत्र चशब्दात् दृशेयम् इति अनुषज्यते । अतः तदपेक्षयैषा तिङ्विभक्तिः प्रथमा इति 'चवायोगे प्रथमा' इति न निहन्यते ।

अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ २ ॥

अग्नेः । वयम् । प्रथमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम ।
सः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥२॥

इत्थं प्रथमया ऋचा विचिकित्सां कृत्वा प्रजापतेः सकाशात् तं देवम् अग्निं निश्चित्य अनया तुष्टाव । तथा च श्रूयते–'तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा' (ऐ. ब्रा. ७. १६) इति । पूर्ववत् योजना । vदात् ददातु vदृशेयं पश्यानि इत्येवम् आशीःपरत्वेन पदद्वयं योज्यम् ॥

---

१. झ-ढ–'को ह वै...गम्यते' इति नास्ति ।

प्रथमे छन्दोमे वैश्वदेवशस्त्रे ‘ अभि त्वा देव सवितः ’ इति सावित्रस्तृचः सूक्तस्थानीयः । ‘ अथ च्छन्दोमाः ’ इति खण्डे ‘ अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवा ’ ( आश्व. श्रौ. ८. ९ ) इति सूत्रितम् । ‘ अभि त्वा ’ इत्येषा अग्निमन्थनेऽपि विनियुक्ता । ‘ प्रातर्वैश्वदेव्याम् ’ इति खण्डे ‘ अभि त्वा देव सवितर्मही द्यौः पृथिवी च नः ’ ( आश्व. श्रौ. २. १६ ) इति सूत्रितम् । श्रूयते च—‘ अभि त्वा देव सवितरिति सावित्रीमन्वाह ’ ( ऐ. ब्रा. १. १६ ) इति । तथा प्रवर्ग्येऽपि एषैव विनियुक्ता । ‘ अथोत्तरम् ’ इति खण्डे ‘ अभि त्वा देव सवितः समी वत्सं न मातृभिः ’ ( आश्व. श्रौ. ४. ७ ) इति सूत्रितम् । तथा ग्रावस्तोत्रेऽपि । ‘ एतस्मिन् काले ग्रावस्तुत् ’ इति खण्डे ‘ मध्यमस्वरेणेदं सवनमभि त्वा देव सवितः ’ ( आश्व. श्रौ. ५. १२ ) इति सूत्रितम् ॥

अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन्भागमीमहे ॥ ३ ॥

अभि । त्वा । देव । सवितः । ईशानम् । वार्याणाम् । सदा । अवन् । भागम् । ईमहे ॥ ३ ॥

अथ अग्निना प्रेरितः सन् सवितारम् ‘ अभि त्वा ’ इत्यनेन तृचेन प्रार्थयते । तथैव श्रूयते— तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन ’ ( ऐ. ब्रा. ७. १६ ) इति । हे सदावन् सदा सर्वदा रक्षक हे सवितः देव वार्याणां वरणीयानां धनानाम् ईशानं स्वामिनं त्वां प्रति भागं भजनीयं धनम् अभि सर्वतः ईमहे याचामहे ॥ ईशानम् । ‘ ईश ऐश्वर्ये ’ । लटः शानच् । ‘ तास्यनुदात्तेत्° ’ इति लसार्वधातुकानुदात्तत्वे धातुस्वरः । वार्याणाम् । ‘ वृङ् संभक्तौ ’ । ‘ ऋहलोर्ण्यत् ’ । ‘ईडवन्द°’ इत्यादिनाद्युदात्तत्वम् । अवन् । आमन्त्रितनिघातः । भागम् । ‘ कर्षात्वतः° ’ इति घञोऽन्तः उदात्तः ॥

यश्चिद्धि त इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ॥ ४ ॥

यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः । अद्वेषः । हस्तयोः । दधे ॥ ४ ॥

हे सवितः यः भगः भजनीयो धनविशेषः ते तव हस्तयोर्दधे धृतोऽभूत् तं धनविशेषम् ईमहे इति पूर्वत्रान्वयः । चिच्छब्दः पूजार्थे हिशब्दः प्रसिद्धौ । धनस्य पूज्यत्वं सर्वत्र प्रसिद्धम् । तामेव पूज्यत्वप्रसिद्धिं विशदयति । इत्था शशमानः अनेन प्रकारेण शस्यमानः स्तूयमानः । धनस्तुतिप्रकारं च सर्वे जानन्ति । ननु स्वकीये धने वैरिभिः अपहृते सति वैरिगृहीतं धनं सर्वो लोको निन्दति द्वेष्टि च । अतो धनस्तुतिः न नियता इत्याशङ्क्याह । निदः पुरा अद्वेषः निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः । तस्मात् स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः ॥ इत्था । प्रकारवचने ‘ इदमस्थमुः ’ ( पा. सू. ५. ३. २४ ) ।[1] ‘ सुपां सुलुक्° ’ इति व्यत्ययेन विभक्तेः डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण आकार उदात्तः । शशमानः । ‘ शश प्लुतगतौ ’ । इह तु स्तुत्यर्थः । ‘ ताच्छील्यवयोवचन° ’ ( पा. सू. ३. २. १२९ ) इति ताच्छीलिकश्चानश् । कर्तरि शप् । ‘ चितः ’ इत्यन्तोदात्तत्वम् । निदः । ‘ णिदि कुत्सायाम् ’ । संपदादिलक्षणः क्विप् । ‘ सावेकाचः° ’ इति पञ्चम्या उदात्तत्वम् । अद्वेषः । न विद्यते द्वेषोऽस्य इति बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । दधे । कर्मणि लिट् । तस्य आर्धधातुकत्वेन ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तो न भवति । प्रत्ययस्वर एव शिष्यते । यद्वृत्तयोगात् निघाताभावः ॥

---

१. ढ–द्वेषोऽत्र ।

भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥ ५ ॥

भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा । मूर्धानम् । रायः । आऽरभे ॥५॥

हे सवितः ᵛते त्वदीयाः ᵛवयं शुनःशेपनामानः ᵛभगभक्तस्य धनेन संयुक्तस्य ᵛतवावसा रक्षणेन ᵛउदशेम उत्कर्षेण व्याप्नुमः । किं कर्तुम् । ᵛरायः धनस्य ᵛमूर्धानम् उत्कर्षम् ᵛआरभे प्रारब्धुम् । धनिकत्वप्रसिद्ध्या व्याप्ता भूयामेत्यर्थः ¹ ॥ भगशब्दो वृषादित्वादाद्युदात्तः । ‘ तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम् । अशेम । ‘ अशू व्याप्तौ ’ । लिङि व्यत्ययेन परस्मैपदम् । शप् । रायः । ‘ ऊडिदम्° ’ इति षष्ठ्या उदात्तत्वम् । आरभे । ‘ कृत्यार्थे तवैकेन्° ’ इति तुमर्थे केन्प्रत्ययः । नित्स्वरेणाद्युदात्तत्वम् ॥　　॥ १३ ॥

नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६ ॥

नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । चन । अमी इति । पतयन्तः । आपुः ।
न । इमाः । आपः । अनिऽमिषम् । चरन्तीः । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥६॥

अथ सवित्रा प्रेरितः शुनःशेपः एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुणं तुष्टाव । तथा च श्रूयते–‘ तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता ’ ( ऐ. ब्रा. ७. १६ ) इति । हे वरुण ᵛपतयन्तः प्रौढे वियत्युत्पतन्तः ᵛअमी दृश्यमानाः ᵛवयश्चन श्येनादयः पक्षिणोऽपि ᵛते ᵛक्षत्रं त्वदीयं शरीरबलं ᵛनहि ᵛआपुः नैव प्राप्ताः । त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः । तथा ᵛसहः त्वदीयं पराक्रमं तव सामर्थ्यमपि ᵛन प्रापुः । तथा ᵛमन्युं त्वदीयं कोपमपि ᵛन प्रापुः । त्वयि क्रुद्धे सति सोढुमशक्ता² इत्यर्थः । ᵛअनिमिषं सर्वदा ᵛचरन्तीः प्रवाहरूपेण गच्छन्त्यः ᵛआपः त्वदीयं बलं ᵛन प्रापुः । ᵛवातस्य वायोः ᵛये गतिविशेषाः त्वदीयम् ᵛअभ्वं वेगं ᵛन ᵛप्रमिनन्ति न हिंसन्ति । अतिक्रमं कर्तुं न शक्ता इत्यर्थः । तेऽपि न प्रापुरिति पूर्वत्रान्वयः ॥ पतयन्तः । ‘ पत गतौ ’ । चुरादिरदन्तः । लटः शतृ । शप् । गुणायादेशौ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिचः स्वरः । आपुः । ‘ आप्लृ व्याप्तौ ’ । लिट्युसि द्विर्भावहलादिशेषौ । ‘ अत आदेः ’ ( पा. सू. ७. ४. ७० ) इति आत्वम् । अत्र न सहो न मन्युम् इत्यादिभिः आपुः इत्यस्य संबन्धात् तदपेक्षया प्राथम्यात् ‘ चादिलोपे विभाषा ’ इति प्रथमा तिङ्विभक्तिर्न निहन्यते । चरन्तीः । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घः । प्रमिनन्ति । ‘ मीञ् हिंसायाम् ’ । ‘ क्र्यादिभ्यः श्ना ’ । ‘ श्नाभ्यस्तयोरातः ’ इति आकारलोपः । ‘ मीनातेर्निगमे ’ ( पा. सू. ७. ३. ८१ ) इति ह्रस्वत्वम् । प्रत्ययस्वरः । ‘ तिङि चोदात्तवति ’ ( पा. सू. ८. १. ७१ ) इति गतिरनुदात्तः । यद्वृत्तयोगादनिघातः ॥

---

१. ढ–भूयास्मेति ।　२. ढ–योद्धुमशक्ताः ।

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ ॥

अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः । नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मे इति । अन्तः । निऽहिताः । केतवः । स्युरिति स्युः ॥ ७ ॥

पूतदक्षः शुद्धबलः वरुणः राजा अबुध्ने मूलरहिते अन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसः स्तूपं संघम् ऊर्ध्वम् उपरिदेशे ददते धारयति । नीचीनाः स्थुः । ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मय इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । एषां रश्मीनां बुध्नः मूलम् उपरि तिष्ठतीति शेषः । तथा सति केतवः प्रज्ञापकाः प्राणाः अस्मे अस्मासु अन्तर्निहिताः स्थापिताः स्युः मरणं न भविष्यतीत्यर्थः ॥ अबुध्ने । न विद्यते बुध्नः मूलम् अस्य इति बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । स्तूपम् । ‘ स्त्यै शब्दसंघातयोः ’ । ‘ स्त्यः संप्रसारणमूच्च ’ इति पप्रत्ययः ; तत्संनियोगेन यकारस्य संप्रसारणं परपूर्वत्वे ऊकारादेशश्च । ‘ नित् ’ इत्यनुवृत्तेराद्युदात्तत्वम् । ददते । औवादिकः । नीचीनाः । निपूर्वात् अञ्चतेः ‘ ऋत्विक्° ’ इत्यादिना क्विन् । ‘ अनिदिताम् ’ इति नलोपः । न्यच्शब्दात्स्वार्थे ‘ विभाषाञ्चेरदिक्स्त्रियाम् ’ ( पा. सू. ५. ४. ८ ) इति खः । ‘ आयन्° ’ इत्यादिना तस्य ईनादेशः । ‘ आयनादिषूपदेशिवद्वचनं स्वरसिध्यर्थम् ’ ( पा. सू. ७. १. २. १ ) इति वचनात् ईकार उदात्तः । ‘ अचः ’ इति अकारलोपे ‘ चौ ’ इति दीर्घत्वम् । स्थुः । ‘ गातिस्था° ’ ( पा. सू. २. ४. ७७ ) इत्यादिना सिचो लुक् । ‘ आतः ’ ( पा. सू. ३. ४. ११० ) इति झेः जुसादेशः । ‘ उस्यपदान्तात् ’ ( पा. सू. ६. १. ९६ ) इति पररूपत्वम् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडागमाभावः । अस्मे । ‘ सुपां सुलुक् ’ इति सप्तम्याः शेआदेशः । निहिताः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । स्युः । अस्तेर्लिङि ‘ श्नसोरल्लोपः ’ ॥

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥

उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनुऽएतवे । ऊम् इति । अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥

वरुणः राजा सूर्याय सूर्यस्य पन्थां मार्गम् उरुं विस्तीर्णं चकार । हिशब्दः प्रसिद्धौ । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवान् इति तदुच्यते । अन्वेतवा उ अनुक्रमेण उदयास्तमयौ गन्तुमेव । तथा अपदे पादरहिते अन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुम् अकः मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः अत्र पादयोरिति विशेषः । यद्वा । अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुम् उपायं बन्धविमोचनरूपं करोत्वित्यर्थः । उत अपि च हृदयाविधश्चित् अस्मदीयवेधकस्य[1] शत्रोरपि अपवक्ता अपवदिता निराकर्ता भवतु ॥ चकार । लित्स्वरेण आकार

1. ढ–‘ अस्मदीयवेधकस्य ’ नास्ति ।

उदात्तः । ‘ हि च ’ इति निघातप्रतिषेधः । पन्थाम् । ‘ पथिमथ्यृभुक्षामात् ’ (पा. सू. ७. १. ८५) इति द्वितीयायामपि व्यत्ययेन आत्वम् । पथिन्शब्दस्य ‘ पतेस्थ च ’ ( उ. सू. ४. ४५२ ) इति प्रत्ययान्तत्वेन अन्तोदात्तत्वे प्राप्ते ‘ पथिमथोः सर्वनामस्थाने ’ ( पा. सू. ६. १. १९९ ) इत्याद्युदात्तत्वम् । अन्वेतवै । अनुपूर्वात् एतेः ‘ तुमर्थे सेसेन्° ’ इति तवैप्रत्ययः । ‘ तवै चान्तश्च युगपत् ’ (पा. सू. ६. २. ५१ ) इति आद्यन्तयोरुदात्तत्वम् । पादा । ‘ सुपां सुलुक्° ’ इति आकारः । प्रतिधातवे । दधातेः ‘तुमर्थ° ’ इति सूत्रेणैव तवेन्प्रत्ययः । ‘ तादौ च निति° ’ ( पा. सू. ६. २. ५० ) इति गतेः प्रकृतिस्वरत्वम् । अकः । करोतेः ‘ छन्दसि लुङ्लङ्लिटः ’ इति लोडर्थे लुङ् । तस्य तिप् । ‘ मन्त्रे घस° ’ ( पा. सू. २. ४. ८० ) इत्यादिना च्लेर्लुक् । गुणो रपरत्वम् । ‘ हल्ङ्याब्भ्यः ’ (पा. सू. ६. १. ६८) इति तिपो लोपः । अडागमः । हृदयाविधः । ‘ हृञ् हरणे ’ । ‘बृह्होः षुग्दुकौ च ’ ( उ. सू.४.५४० ) इति कयन् । ‘ व्यध ताडने ’ । क्विप् । ‘ नहिवृति° ’ ( पा. सू. ६. ३. ११६ ) इत्यादिना पूर्वपदस्य दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥

शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु ।
बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥९॥

हे राजन् वरुण ते तव शतं भिषजः बन्धनिवारकाणि शतसंख्याकानि[1] औषधानि वैद्या वा सन्ति । ते तव सुमतिः अस्मदनुग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु । निर्ऋतिम् अस्मदनिष्टकारिणीं[2] निर्ऋतिं[2] पापदेवतां पराचैः पराङ्मुखां कृत्वा दूरे अस्मत्तो व्यवहिते देशे स्थापयित्वा तां बाधस्व । कृतं चित् अस्माभिरनुष्ठितमपि एनः पापम् अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु ॥ सुमतिः । ‘ तादौ च° ’ इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते ‘ मन्क्तिन्° ’ इत्यादिनोत्तरपदान्तोदात्तत्वम् । संहितायां विसर्जनीयसकारस्य ‘ युष्मत्तत्ततक्षुःष्वन्तःपादम् ’ ( पा. सू. ८. ३. १०३ ) इति षत्वम् । बाधस्व । ‘ बाधृ विलोडने ’ । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । निर्ऋतिम् । ‘ तादौ च° ’ इति गतेः प्रकृतिस्वरत्वम् । मुमुग्धि । ‘ मुच्लृ मोक्षणे ’ । ‘ बहुलं छन्दसि ’ इति श्लुः । ‘ हुझल्भ्यो हेर्धिः ’ (पा. सू. ६. ४. १०१ ) । तस्य अपित्त्वेन ङित्वाद्गुणाभावः । ‘ चोः कुः ’ (पा. सू. ८. २. ३०) इति कुत्वम् ॥

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १० ॥

अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः ।
अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥ १० ॥

---

१. श–शतं भिषजः सहस्रं गदनिवारकाणि शतसहस्रसंख्यानि; ष–शतं भिषजः सहस्रं बन्धनिवारकाणि शतसहस्रसंख्याकानि । २. ढ–°कारिणी ( णीं ) ।

ᵛअमी रात्रावस्माभिर्दृश्यमानाः ᵛऋक्षाः सप्त ऋषयः । तथा च वाजसनेयिन आमनन्ति— ‘ ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते ’ इति । यद्वा । ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः । ‘ ऋक्षाः स्तृभिरिति नक्षत्राणाम् ’ ( निरु. ३. २० ) इति यास्केन उक्तत्वात् । ᵛउच्चा उच्चैः उपरि द्युप्रदेशे ᵛनिहितासः स्थापिताः ᵛये सन्ति ते ऋक्षाः ᵛनक्तं रात्रौ ᵛददृश्रे सर्वैरपि दृश्यन्ते । ᵛदिवा अहनि ᵛकुह ᵛचित् ᵛईयुः क्वापि गच्छेयुः । न दृश्यन्ते इत्यर्थः । ᵛवरुणस्य राज्ञः ᵛव्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि ᵛअदब्धानि केनापि अहिंसितानि । किंच वरुणस्य आज्ञयैव ᵛचन्द्रमाः ᵛनक्तं रात्रौ ᵛविचाकशत् विशेषेण दीप्यमानः ᵛएति गच्छति ॥ निहितासः । ‘ आज्जसेरसुक् ’ । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वे प्राप्ते ( पा. सू. ६. २. १४४ ) ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । ददृश्रे । दृशेर्लिटि ‘ इरयो रे ’ ( पा. सू. ६. ४. ७६ ) इति रेआदेशः । व्यत्ययेनाद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । कुह । ‘ वा ह च च्छन्दसि ’ ( पा. सू. ५. ३. १३ ) इति किंशब्दादुत्तरस्य त्रलो हादेशः । ‘ कु तिहोः ’ ( पा. सू. ७. २. १०४ ) इति किंशब्दस्य कुआदेशः । स्थानिवद्भावात् लित्स्वरेणाद्युदात्तत्वम् । विचाकशत् । कशेर्दीप्त्यर्थात् यङ्लुगन्तात् शतृप्रत्ययः । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । समासे कृत्स्वरः । यद्वा । काशतेर्वा व्यत्ययेन उपधाह्रस्वत्वम् । चन्द्रमाः । ‘ चन्द्रे माङो डित् ’ ( उ. सू. ४. ६६७ ) इति असिप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ १४ ॥

एकादशिनस्य वारुणस्य पशोर्वपापुरोडाशयोः ‘ तत्त्वा यामि ’ इति द्वे ऋचौ याज्ये । सूत्रितं च— ‘ तत्त्वा यामि ब्रह्मणा वन्दमान इति द्वे अस्तभ्नाद्द्याम् ’ ( आश्व. श्रौ. ३. ७ ) इति । वरुणप्रघासेषु वारुणस्य हविषो याज्या ‘ तत्त्वा यामि ’ इत्येषा ‘ पञ्चम्यां पौर्णमास्याम् ’ इत्यत्र सूत्रितम्—‘ इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमानः ’ ( आश्व. श्रौ. २. १७ ) इति ॥

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ११ ॥**

तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः ।
अहेळमानः । वरुण । इह । बोधि । उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ ११ ॥

हे ᵛवरुण मुमूर्षुरहं त्वां प्रति ᵛतत् आयुः ᵛयामि याचे । कीदृशः । ᵛब्रह्मणा प्रौढेन स्तोत्रेण ᵛवन्दमानः स्तुवन् । सर्वत्र ᵛयजमानः अपि ᵛहविर्भिः ᵛतत् आयुः ᵛआ ᵛशास्ते प्रार्थयते । त्वं च ᵛइह कर्मणि ᵛअहेळमानः अनादरमकुर्वन् ᵛबोधि अस्मदपेक्षितं बुध्यस्व । हे ᵛउरुशंस बहुभिः स्तुत्य ᵛनः अस्मदीयम् ᵛआयुः ᵛमा ᵛप्र ᵛमोषीः प्रमुषितं मा कुरु । सप्तदशसंख्याकेषु याच्ञाकर्मसु ‘ ईमहे यामि ’ ( नि. ३. १९. १ ) इति पठितम् । चाशब्दलोपश्छान्दसः ॥ अहेळमानः । ‘ हेडृ अनादरे ’ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपश्च पित्त्वादनुदात्तत्वे सति धातुस्वरः शिष्यते । ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधि । ‘ बुध अवगमने ’ । लोटः सेर्हिः । ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । ‘ वा छन्दसि ’ ( पा. सू. ३. ४. ८८ ) इति अपित्त्वाभावेन ङित्त्वाभावात् लघूपधगुणः । ‘ हुझल्भ्यो हेर्धिः ’ इति हेर्धिरादेशः । धातोरन्त्यलोपश्छान्दसः । मोषीः । ‘ मुष स्तेये ’ । लोडर्थे छान्दसो लुङ् । ‘ वदव्रज॰ ’ ( पा. सू. ७. २. ३ ) इति प्राप्ताया वृद्धेः ‘ नेटि ’ ( पा. सू. ७. २. ४ ) इति प्रतिषेधे सति लघूपधगुणः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः ॥

तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥ १२ ॥

तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥१२॥

तदित् तदेव वरुणविषयं स्तोत्रं नक्तं रात्रौ मह्यं शुनःशेपाय आहुः कर्तव्यत्वेनाभिज्ञाः कथयन्ति । तथा दिवा अपि तत् एव आहुः । हृदः मदीयमनसो निष्पन्नः अयं केतः प्रज्ञाविशेषोऽपि तत् एव कर्तव्यत्वेन आ वि चष्टे सर्वतो विशेषेण प्रकाशयति । गृभीतः गृहीतः यूपे बद्धः शुनःशेपः एतन्नामको जनः यं वरुणम् अह्वत् आहूतवान् सः वरुणः राजा अस्मान् शुनःशेपान् मुमोक्तु बन्धात् मुक्तं करोतु ॥ मह्यम् । 'ङयि च' इत्याद्युदात्तत्वम् । आहुः । 'ब्रुवः पञ्चानाम्°' ( पा. सू. ३. ४. ८४ ) इति ब्रूञो लटि झेः उसादेशः, धातोः आहादेशश्च । हृदः । 'पद्दन्°' ( पा. सू. ६. १. ६३ ) इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदंपदादि°' इति पञ्चम्या उदात्तत्वम् । शुनःशेपः । शुन इव शेपो यस्य इति समासे 'शुनः शेपपुच्छलाङ्गूलेषु संज्ञायां षष्ठ्या अलुग्वक्तव्यः' ( पा. सू. ६. ३. २१. ४ ) इति अलुक् । पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु°' (पा. सू. ६. २. १४०) इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम् । अह्वत् । ह्वेञो लुङि 'लिपिसिचिह्वश्च' ( पा. सू. ३. १. ५३ ) इति च्लेः अङादेशः । 'आतो लोप इटि च' ( पा. सू. ६. ४. ६४ ) इति आकारलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । गृभीतः । 'हृग्रहोर्भः°' इति भत्वम् । सो अस्मान् । 'प्रकृत्यान्तःपादम्°' इति प्रकृतिभावः । मुमोक्तु । 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥

शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥१३॥

गृभीतः बन्धनाय[1] गृहीतः त्रिसंख्याकेषु[2] द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु बद्धः शुनःशेपः आदित्यम् अदितेः पुत्रं यं[3] वरुणम् अह्वत् आहूतवान् हि यस्मादेवं तस्मात् सः वरुणः राजा एनं शुनःशेपम् अव ससृज्यात् अवसृष्टं बन्धनात् विमुक्तं करोतु । विमोकप्रकार एव स्पष्टीक्रियते । विद्वान् विमोकप्रकाराभिज्ञः अदब्धः केनाप्यहिंसितः[4] वरुणः पाशान् बन्धनरज्जुविशेषान् वि मुमोक्तु विच्छिद्यैनं मुक्तं करोतु ॥ त्रिषु । 'षट्त्रिचतुर्भ्यो हलादिः' ( पा. सू. ६. १. १७९ ) इति विभक्तेरुदात्तत्वं । संहितायाम् 'उदात्तस्वरितयोर्यणः°' इति परः आकारः स्वर्यते । ससृज्यात् । 'सृज विसर्गे' । प्रार्थनायां लिङ् । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । विद्वान् ।

---

१. ढ–बन्धनात् । २. त-श-ष-ह–त्रिषु त्रिसंख्याकेषु । ३. श-ह–'यं' नास्ति । ४. ढ–दम्भरहितः ।

' विद ज्ञाने '। ' विदेः शतुर्वसुः ' ( पा. सू. ७. १. ३६)। ' उगिदचाम्° ' इति नुम्। हल्ङ्यादिसंयोगान्तलोपौ। संहितायां ' दीर्घादटि समानपादे ' इति नकारस्य रुत्वम्। ' आतोऽटि नित्यम् ' इति सानुनासिक आकारः। अदब्धः। ' दम्भु दम्भे '। निष्ठायाम् ' अनिदिताम्° ' इति नलोपे ' झषस्तथोर्धोऽधः ' ( पा. सू. ८. २. ४० ) इति धत्वम्। अव्ययपूर्वपदप्रकृतिस्वरत्वम्॥

अवभृथे ' अव ते हेळः ' इति द्वे ऋचौ वारुणस्य हविषो याज्यानुवाक्ये। ' पत्नीसंयाजैश्चरित्वा ' इति खण्डे सूत्रितम्-' अव ते हेळो वरुण नमोभिरिति द्वे ' ( आश्व. श्रौ. ६. १२ ) इति॥

अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑।
क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒ राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑॥ १४॥

अव॑। ते॒। हेळः॑। व॒रु॒ण॒। नमः॑ऽभिः। अव॑। य॒ज्ञेभिः॑। ई॒म॒हे॒। ह॒विःऽभिः॑। क्षय॑न्।
अ॒स्मभ्य॑म्। अ॒सु॒र॒। प्र॒चे॒त॒ इति॑ प्रऽचेतः। राज॑न्। एनां॑सि। शि॒श्र॒थः॒। कृ॒तानि॑॥१४॥

हे ᵛवरुण ᵛते तव ᵛहेळः क्रोधं ᵛनमोभिः नमस्कारैः ᵛअव ᵛईमहे अवनयामः। तथा यज्ञैः साङ्गानुष्ठानेन पूज्यैः ᵛहविर्भिः ᵛअव ईमहे वरुणं परितोष्य क्रोधमपनयामः। हे ᵛअसुर अनिष्टक्षेपणशील ᵛप्रचेतः प्रकर्षेण प्रज्ञायुक्त[1] ᵛराजन् दीप्यमान वरुण ᵛअस्मभ्यम् अस्मदर्थं ᵛक्षयन् अस्मिन् कर्मणि निवसन् ᵛकृतानि अस्माभिरनुष्ठितानि ᵛएनांसि पापानि ᵛशिश्रथः श्रथितानि शिथिलानि कुरु॥ हेळः। असुनो नित्त्वादाद्युदात्तत्वम्। यज्ञेभिः। ' बहुलं छन्दसि ' इति ऐसभावः। ईमहे। ' ईङ् गतौ '। विकरणस्य लुक्। क्षयन्। ' क्षि निवासगत्योः '। लटः शतृ। व्यत्ययेन शप्। आमन्त्रिताद्युदात्तत्वम्। असुर। ' असेरुरन् ' ( उ. सू. १. ४२ )। आमन्त्रितनिघातः। शिश्रथः। ' श्रथ दौर्बल्ये '। चुरादिः अदन्तः। छान्दसे लुङि ' णिश्रिद्रुस्रुभ्यः° ' ( पा. सू. ३. १. ४८ ) इति च्लेः चङ्। द्विर्भावहलादिशेषौ। अग्लोपित्वात् सन्वद्भावाभावेऽपि ( पा. सू. ७. ४. ९३ ), ' बहुलं छन्दसि ' ( पा. सू. ७. ४. ७८ ) इति अभ्यासस्य इत्वम्। पूर्ववत् अडभावः॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय।
अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम॥ १५॥

उत्। उ॒त्ऽत॒मम्। व॒रु॒ण॒। पाश॑म्। अ॒स्मत्। अव॑। अ॒ध॒मम्। वि। म॒ध्य॒मम्। श्र॒थ॒य[2]।
अथ॑। व॒यम्। आ॒दि॒त्य॒। व्र॒ते। तव॑। अना॑गसः। अदि॑तये। स्या॒म॒॥ १५॥

हे ᵛवरुण ᵛउत्तमम् उत्कृष्टं शिरसि बद्धं ᵛपाशम् ᵛअस्मत् अस्मत्तः ᵛउत् ᵛश्रथाय[3] उत्कृष्य शिथिलं कुरु। ᵛअधमं निकृष्टं पादेऽवस्थितं पाशम् ᵛअव श्रथाय[4] अधस्तादवकृष्य शिथिलीकुरु। ᵛमध्यमं नाभिप्रदेशगतं पाशं ᵛवि श्रथाय वियुज्य शिथिलीकुरु। ᵛअथ अनन्तरं हे ᵛआदित्य अदितेः

---

१. ढ-ज्ञानयुक्त। २. ढ-श्रथय। ३. च-छ-फ-श-ष-श्रथाय अवज्ञाय; ढ-श्रथय अवज्ञाय। ४. ढ-श्रथय।

पुत्र वरुण ᵛवयं शुनःशेपाः ᵛतव ᵛव्रते त्वदीये कर्मणि ᵛअदितये खण्डनराहित्याय ᵛअनागसः अपराधरहिताः ᵛस्याम भवेम ॥ उत्तमम्। तमपः पित्त्वादनुदात्तत्वेन आद्युदात्तत्वे प्राप्ते 'उत्तमशश्वत्तमौ सर्वत्र' (पा. सू. ६. १. १६० ग.) इति उञ्छादिषु पाठादन्तोदात्तत्वम्। अधमम्। 'अवद्यावमाधमार्वरेफाः कुत्सिते' (उ. सू. ५. ७३२) इति अवतेः अमच्; वस्य धः। श्रथाय। 'श्रथ दौर्बल्ये'। संहितायां छान्दसो दीर्घः। तव। 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम्। अनागसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। 'नञ्सुभ्याम्' इति तु व्यत्ययेन प्रवर्तते। यद्वा। आगस्शब्दात् 'अस्मायामेधा°' (पा. सू. ५. २. १२१) इति मत्वर्थीयो विनिः। तस्य 'विन्मतोर्लुक्' (पा. सू. ५. ३. ६५) इति लुक्। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ १५ ॥

'यच्चित्' इति एकविंशत्यृचं द्वितीयं सूक्तम्। तथा चानुक्रान्तम्—'यच्चित्सैका' इति। 'ऋषिश्चान्यस्मात्' इति परिभाषया शुनःशेप एव ऋषिः। 'आदौ गायत्रम्' इति परिभाषितत्वात् गायत्री छन्दः। 'वारुणं तु' इति पूर्वोक्तत्वात् तुह्यादिपरिभाषया (अनु. १२. ३) वरुणो देवता। विनियोग उक्तः शौनःशेपाख्याने। विशेषविनियोगस्तु—अभिप्लवषडहे इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थम्। 'अभिप्लवपृष्ठ्याहानि' इति खण्डे तथैव सूत्रितं–'यच्चिद्धि ते विश इति वारुणमेतस्य तृचमावपेत मैत्रावरुणः' (आश्व. श्रौ. ७. ५) इति ॥

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि ॥ १ ॥

यत्। चित्। हि। ते। विशः। यथा। प्र। देव। वरुण। व्रतम्। मिनीमसि। द्यविऽद्यवि ॥ १ ॥

हे ᵛवरुण ᵛयथा लोके ᵛविशः प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि ᵛते तव संबन्धि ᵛयच्चिद्धि यदेव किंचित् ᵛव्रतं कर्म ᵛद्यविद्यवि प्रतिदिनं ᵛप्र ᵛमिनीमसि प्रमादेन हिंसितवन्तः। तदपि व्रतं प्रमादपरिहारेण साङ्गं कुरु इति शेषः ॥ यथा। लित्स्वरेण आद्युदात्तत्वे प्राप्ते 'यथेति पादान्ते' (फि. सू. ८५) इति सर्वानुदात्तत्वम्। मिनीमसि। 'मीञ् हिंसायाम्'। 'इदन्तो मसि'। 'क्र्यादिभ्यः श्ना'। 'मीनातेर्निगमे' (पा. सू. ७. ३. ८१) इति ह्रस्वत्वम्। 'ई हल्यघोः' (पा. सू. ६. ४. ११३) इति ईकारः। 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् तिङ एव स्वरः शिष्यते। यद्वृत्तयोगात् निघाताभावः ॥

मा नो वधाय हत्नवे जिहीळानस्य रीरधः। मा हृणानस्य मन्यवे ॥ २ ॥

मा। नः। वधाय। हत्नवे। जिहीळानस्य। रीरधः। मा। हृणानस्य। मन्यवे ॥ २ ॥

हे वरुण ᵛजिहीळानस्य अनादरं कृतवतः ᵛहत्नवे हन्तुः पापिहननशीलस्य[1] तव संबन्धिने त्वत्कर्तृकाय ᵛवधाय ᵛनः अस्मान् ᵛमा ᵛरीरधः संसिद्धान् विषयभूतान् मा कुरु। ᵛहृणानस्य हृणीयमानस्य क्रुद्धस्य तव ᵛमन्यवे क्रोधाय ᵛमा अस्मान् रीरधः ॥ वधाय। 'हनश्च वधः' (पा. सू. ३. ३. ७६) इति अबन्तो वधशब्दः। उञ्छादिषु पाठादन्तोदात्तः। हत्नवे। 'हन हिंसागत्योः'। 'कृहनिभ्यां क्त्नुः' (उ. सू. ३. ३१०) इति क्त्नुप्रत्ययः; धातोर्नकारस्य तकारः। जिहीळानस्य। 'हेड्ट

१. ढ–पापहननशीलस्य।

अनादरे'। अस्मात् लिटः कानच्। द्विर्भावहलादिशेषह्रस्वचुत्वजश्त्वानि। एकारस्य ईकारादेशश्छान्दसः। 'चितः' इत्यन्तोदात्तत्वम्। रीरधः। 'राध साध संसिद्धौ'। चङि णिलोपे उपधाह्रस्वत्वम्। द्विर्वचनहलादिशेषह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः। 'न माङ्योगे' इति अडभावः। हृणानस्य। 'हृणीङ् लज्जायाम्'। अस्मात् शानचि पृषोदरादित्वात् अभिमतरूपसिद्धिः॥

**वि मृ॒ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम्। गी॒र्भिर्व॑रुण सीमहि ॥ ३ ॥**

वि। मृ॒ळी॒काय॑। ते॒। मनः॑। र॒थीः। अश्व॑म्। न। सम्ऽदि॑तम्। गीः॒ऽभिः। व॒रु॒ण॒। सी॒म॒हि॒ ॥३॥

हे ᵛवरुण ᵛमृळीकाय अस्मत्सुखाय ᵛते तव ᵛमनः ᵛगीर्भिः स्तुतिभिः ᵛवि ᵛसीमहि विशेषेण बध्नीमः प्रसादयाम इत्यर्थः। तत्र दृष्टान्तः। ᵛरथीः रथस्वामी ᵛसंदितं सम्यक् खण्डितं दूरगमनेन श्रान्तम् ᵛअश्वं ᵛन अश्वमिव। यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत्॥ रथीः। मत्वर्थीय ईकारः। संदितम्। 'दो अवखण्डने'। 'निष्ठा' इति क्तः। 'द्यतिस्यतिमास्थाम्०' (पा. सू. ७. ४. ४०) इति इकारान्तादेशः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। गीर्भिः। 'सावेकाचः०' इति भिस उदात्तत्वम्। सीमहि। 'षिञ् तन्तुसताने'। व्यत्ययेनात्मनेपदम्। 'बहुलं छन्दसि' इति विकरणस्य लुक्। वलि लोपः (पा. सू. ६. १. ६६)। यद्वा। 'षिञ् बन्धने' इत्यस्मात् विकरणस्य लुक्। दीर्घश्छान्दसः॥

**परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये। वयो॒ न व॑स॒तीरुप॑ ॥ ४ ॥**

परा॑। हि। मे॒। विऽम॑न्यवः। पत॑न्ति। वस्यः॑ऽइष्टये। वयः॑। न। व॒स॒तीः। उप॑ ॥ ४ ॥

हे वरुण ᵛमे मम शुनःशेपस्य ᵛविमन्यवः क्रोधरहिता बुद्धयः ᵛवस्यइष्टये वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये ᵛपरा ᵛपतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति। हिशब्दः अस्मिन्नर्थे सर्वजनप्रसिद्धिमाह। परापतने दृष्टान्तः। ᵛवयो ᵛन। पक्षिणो यथा ᵛवसतीः निवासस्थानानि ᵛउप सामीप्येन प्राप्नुवन्ति तद्वत्॥ पतन्ति। पादादित्वात् निघाताभावः। वस्यइष्टये। वसुमच्छब्दात् 'विन्मतोर्लुक्' इति मतुपो लुकि टिलोपे ईयसुनो यकारलोपश्छान्दसः। वसतीः। 'शतुरनुमः०' इति ङीप उदात्तत्वम्॥

**क॒दा क्ष॑त्र॒श्रियं॒ नर॒मा वरु॑णं करामहे। मृ॒ळी॒काया॑रु॒चक्ष॑सम् ॥ ५ ॥**

क॒दा। क्ष॒त्र॒ऽश्रिय॑म्। नर॑म्। आ। वरु॑णम्। क॒रा॒म॒हे॒। मृ॒ळी॒काय॑। उ॒रु॒ऽचक्ष॑सम् ॥ ५ ॥

ᵛमृळीकाय अस्मत्सुखाय ᵛवरुणं ᵛकदा कस्मिन् काले ᵛआ ᵛकरामहे अस्मिन् कर्मणि आगतं करवाम। कीदृशम्। ᵛक्षत्रश्रियं बलसेविनं ᵛनरं नेतारं ᵛउरुचक्षसं बहूनां द्रष्टारम्। क्षत्रश्रियम्। क्षत्राणि श्रयतीति क्षत्रश्रीः। 'क्विब्वचि०' (पा. ३. २. १७८. २) इत्यादिना क्विप् दीर्घश्च। कृदुत्तरपदप्रकृतिस्वरत्वम्। नरम्। 'ऋदोरप्' इति अवन्तः आद्युदात्तः। करामहे। करोतेः व्यत्ययेन शप्। उरुचक्षसम्। 'चक्षेर्बहुलं शिच्च' (उ. सू. ४. ६७२) इत्यसुन्। शिद्भावात् ख्याञादेशाभावः॥ ॥१६॥

---

१. ढ—अनुमतम्। २. ढ—बलसेवितम्।

तदित्स॒मा॒नमा॑शाते॒ वेन॑न्ता॒ न प्र यु॑च्छतः । धृ॒तव्र॑ताय दा॒शुषे॑ ॥ ६ ॥

तत् । इत् । स॒मा॒नम् । आ॒शा॒ते॒ इति॑ । वेन॑न्ता । न । प्र । यु॒च्छ॒तः॒ । धृ॒तऽव्र॑ताय । दा॒शुषे॑ ॥६॥

ᵛधृतव्रताय अनुष्ठितकर्मणे ᵛदाशुषे हविर्दत्तवते यजमानाय वेनन्तौ कामयमानौ मित्रावरुणाविति शेषः । तावुभौ ᵛसमानं साधारणं ᵛतदित् अस्माभिर्दत्तं तदेव हविः ᵛआशाते अश्नुवाते । ᵛन ᵛप्र ᵛयुच्छतः कदाचिदपि प्रमादं न कुरुतः ॥ आशाते । अश्नोतेर्लिटि द्विर्भावहलादिशेषौ । 'अत आदेः' (पा. सू. ७. ४. ७० ) इति आत्वम् । 'अनित्यमागमशासनम्' इति वचनात् 'अश्नोतेश्च' (पा. सू. ७. ४. ७२ ) इति नुडभावः । वेनन्ता । वेनतिः कान्तिकर्मा । 'सुपां सुलुक्°' इति आकारः । प्र युच्छतः । 'युच्छ प्रमादे' । दाशुषे । 'दाशृ दाने' इत्यस्मात् 'दाश्वान् साह्वान्°' इति क्वसुप्रत्ययो निपातितः । 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥

वेदा॒ यो वी॒नां प॒दम॒न्तरि॑क्षेण॒ पत॑ताम् । वेद॑ ना॒वः स॑मु॒द्रियः॑ ॥ ७ ॥

वेद॑ । यः । वी॒नाम् । प॒दम् । अ॒न्तरि॑क्षेण । पत॑ताम् । वेद॑ । ना॒वः । स॒मु॒द्रियः॑ ॥ ७ ॥

ᵛअन्तरिक्षेण ᵛपतताम् आकाशमार्गेण गच्छतां ᵛवीनां पक्षिणां ᵛपदं ᵛयः वरुणः ᵛवेद । तथा ᵛसमुद्रियः समुद्रेऽवस्थितः वरुणः ᵛनावः जले गच्छन्त्याः पदं ᵛवेद जानाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः ॥ वेद । 'विद ज्ञाने' । 'विदो लटो वा' (पा. सू. ३. ४. ८३ ) इति तिपो णल् । लित्स्वरेणाद्युदात्तत्वम् । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । वीनाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । पतताम् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । नावः । 'सावेकाचः°' इति षष्ठ्या उदात्तत्वम् । समुद्रियः । भवार्थे 'समुद्राभ्राद्घः' (पा. सू. ४. ४. ११८ ) इति घप्रत्ययः ॥

वेद॒ मासो॑ धृ॒तव्र॑तो॒ द्वाद॑श प्र॒जाव॑तः । वेदा॒ य उ॑प॒जाय॑ते ॥ ८ ॥

वेद॑ । मासः॑ । धृ॒तऽव्र॑तः । द्वाद॑श । प्र॒जाऽव॑तः । वेद॑ । यः । उ॒प॒ऽजाय॑ते ॥ ८ ॥

ᵛधृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः ᵛप्रजावतः तदा तदोत्पद्यमानप्रजायुक्तान् ᵛद्वादश ᵛमासः चैत्रादीन् फाल्गुनान्तान् ᵛवेद जानाति । ᵛयः त्रयोदशोऽधिकमासः ᵛउपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि ᵛवेद । वाक्यशेषः पूर्ववत् ॥ मासः । 'पद्दन्°' (पा. सू. ६. १. ६३) इत्यादिना मासशब्दस्य मास् इति आदेशः । 'ऊडिदम्°' इत्यादिना शस उदात्तत्वम् । द्वादश । द्वौ च दश च इति द्वन्द्वः । 'द्व्यष्टनः संख्यायाम्°' (पा. सू. ६. ३. ४७) इति आत्वम् । 'संख्या' (पा. सू. ६. २. ३५) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वम् । प्रजावतः । 'जनी प्रादुर्भावे' । प्रपूर्वात् जनसनखनक्रमगमो विट्प्रत्ययः (पा. सू. ३. २. ६७) । 'विड्वनोः°' (पा. सू. ६. ४. ४१ ) इति आत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रजा एषां सन्तीति 'तदस्यास्त्यस्मिन्निति मतुप्' (पा. सू. ५. २. ९४ ) । 'मादुपधायाः°' (पा. सू. ८. २. ९ ) इति मतुपो वत्वम् । उपजायते । जनेः कर्मकर्तरि लट् । कर्मवद्भावात् आत्मनेपदं यक् (पा. सू. ३. १. ८७ ) । 'जनादीनामुपदेश एवात्वं वक्तव्यम्' (पा. सू. ६. १. १९५. ३ ) इति

वचनात् 'अचः कर्तृयकि' (पा. सू. ६. १. १९५) इत्याद्युदात्तत्वम्। 'तिङि चोदात्तवति' (पा. सू. ८. १. ७१) इति उपसर्गस्य निघातः। नच 'तिङ्ङतिङः' इति निघातः, 'यद्वृत्तान्नित्यम्' इति प्रतिषेधात्॥

वेद॒ वात॑स्य वर्त॒निमु॒रोरृ॒ष्वस्य॑ बृह॒तः। वेदा॒ ये अ॒ध्यास॑ते॥ ९॥

वेद॑। वात॑स्य। व॒र्त॒निम्। उ॒रोः। ऋ॒ष्वस्य॑। बृ॒ह॒तः। वेद॑। ये। अ॒धिऽआस॑ते॥ ९॥

उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिं मार्गं वेद वरुणो जानाति। ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति॥ वातस्य। 'असिहसि°' इत्यादिना तन्प्रत्ययान्तो वातशब्दो नित्त्वादाद्युदात्तः। वर्तनिम्। वर्ततेऽनेनेति। 'वर्तनिः स्तोत्रे' (पा. सू. ६.१.१६०.ग.) इति स्तोत्रवाचकस्य वर्तनिशब्दस्य अन्तोदात्तत्वसिद्ध्यर्थम् उञ्छादिषु पाठात् अस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्ते व्यत्ययेनान्तोदात्तत्वम्। बृहतः। 'बृहन्महतोरुपसंख्यानम्' इति ङस उदात्तत्वम्। अध्यासते। लसार्वधातुकानुदात्तत्वे सति धातुस्वरः॥

नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॒३॑स्वा। साम्रा॑ज्याय सु॒क्रतुः॑॥ १०॥

नि। स॒सा॒द॒। धृ॒तऽव्र॑तः। वरु॑णः। प॒स्त्या॑सु। आ। साम्ऽरा॑ज्याय। सु॒ऽक्रतुः॑॥ १०॥

धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान्। किमर्थम्। प्रजानां साम्राज्यसिद्ध्यर्थं सुक्रतुः शोभनकर्मा॥ नि षसाद। 'सदिरप्रतेः' (पा. सू. ८. ३. ६६) इति षत्वम्। साम्राज्याय। सम्राजो भावः साम्राज्यम्। 'गुणवचनब्राह्मणादिभ्यः°' (पा. सू. ५. १. १२४) इति ष्यञ्। 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। सुक्रतुः। 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम्॥ ॥ १७॥

अतो॒ विश्वा॒न्यद्भु॑ता चिकि॒त्वाँ अ॒भि प॑श्यति। कृ॒तानि॒ या च॒ कर्त्वा॑॥ ११॥

अतः॑। विश्वा॑नि। अद्भु॑ता। चि॒कि॒त्वान्। अ॒भि। प॒श्य॒ति॒। कृ॒तानि॑। या। च॒। कर्त्वा॑॥ ११॥

अतः अस्मात् वरुणात् विश्वानि अद्भुता सर्वाण्याश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतोऽवलोकयति या कृतानि यान्याश्चर्याणि पूर्वं वरुणेन संपादितानि। चकारात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः परं कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः॥ अद्भुता। 'शेश्छन्दसि बहुलम्' (पा. सू. ६. १. ७०) इति शेर्लोपः। प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' (पा. सू. ७. १. ७२) इति नुम्। नलोपः। चिकित्वान्। 'कित ज्ञाने'। लिटः क्वसुः। अभ्यासहलादिशेषचुत्वानि। 'वस्वेकाजाद्घसाम्' इति नियमात् इडभावः। रुत्वानुनासिकावुक्तौ संहितायाम्। पश्यति। 'पाघ्रा°' इत्यादिना दृशेः पश्यादेशः। कर्त्वा। 'कृत्यार्थे तवैकेन्केन्यत्वनः' (पा. सू. ३. ४. १४) इति करोतेः त्वन्। नित्त्वादाद्युदात्तत्वम्। पूर्ववत् शेर्लोपः॥

---

१. ढ–वेदाः। २. ढ–साम्राज्याय। प्रजानां साम्राज्यसिद्ध्यर्थम्।

स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ॥ १२ ॥

सः । न॒ः । वि॒श्वाहा॑ । सु॒ऽक्रतुः॑ । आ॒दि॒त्यः । सु॒ऽपथा॑ । क॒र॒त् । प्र । न॒ः । आयूं॑षि । ता॒रि॒ष॒त् ॥ १२ ॥

सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेष्वहःसु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु । किं च नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु ॥ सुपथा । 'स्वती पूजायाम्' (पा. म. २. २. १८. ४) इति समासे 'न पूजनात्' (पा. सू. ५. ४. ६९) इति समासान्तप्रतिषेधः । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्[1] । 'क्त्वादयश्च' (पा.सू.६.२.११८) इत्येतन्न भवति अबहुव्रीहित्वात् । बहुव्रीहौ हि तद्विधीयते । 'आद्युदात्तं द्व्यच्छन्दसि' (पा. सू. ६. २. ११९) इत्येतदपि न भवति, पथिन्शब्दस्य अन्तोदात्तत्वात् । करत् । करोतेर्लेटि व्यत्ययेन शप्[2] । शपो लुकि 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः°' इति इकारलोपः । यद्वा । छान्दसे लुङि 'कृमृदृरुहिभ्यः°' (पा. सू. ३. १. ५९) इति च्लेः अङ् । 'ऋदृशोऽङि गुणः' (पा. सू. ७. ४. १६) इति गुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । प्र णः । 'उपसर्गाद्बहुलम्' (पा. सू. ८. ४. २८) इति नसो णत्वम् । तारिषत् । तारयतेः लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । 'आदेशप्रत्यययोः' इति षत्वम् ॥

बिभ्र॑द्द्रा॒पिं हि॑र॒ण्ययं॒ वरु॑णो वस्त नि॒र्णिज॑म् । परि॒ स्पशो॒ नि षे॑दिरे ॥ १३ ॥

बिभ्र॑त् । द्रा॒पिम् । हि॒र॒ण्यय॑म् । वरु॑णः । व॒स्त॒ । निः॒ऽनिज॑म् । परि॑ । स्पशः॑ । नि । से॒दि॒रे॒ ॥ १३ ॥

हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रत् धारयन् वरुणः निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति । स्पशः हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः ॥ बिभ्रत् । बिभर्तेः शतरि 'नाभ्यस्ताच्छतुः' (पा. सू. ७. १. ७८) इति नुमभावः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । द्रापिम् । 'द्रा कुत्सायां[3] गतौ' । द्रापयति इपून् कुत्सितां गतिं प्रापयतीति द्रापिः कवचम् । 'अर्तिह्री°' (पा. सू. ७. ३. ३६) इत्यादिना पुगागमः । औणादिके इप्रत्यये णिलोपः । हिरण्ययम् । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा. सू. ६. ४. १७५) इति हिरण्यशब्दात् विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः । वस्त । 'वस आच्छादने' । लङि अदादित्वात् शपो लुक् । पूर्ववत् अडभावः । निर्णिजम् । 'णिजिर् शौचपोषणयोः' । स्पशः । 'स्पश बाधनस्पर्शनयोः' । 'क्विप् च' इति क्विप् । नि षेदिरे । 'षद्लृ विशरणगत्यवसादनेषु' । अस्मात् गत्यर्थात् कर्मणि लिटि एत्वाभ्यासलोपौ । 'सदिरप्रतेः' इति षत्वम् ॥

न यं दिप्स॑न्ति दि॒प्सवो॒ न द्रुह्वा॑णो॒ जना॑नाम् । न दे॒वम॒भिमा॑तयः ॥ १४ ॥

न । यम् । दिप्स॑न्ति । दि॒प्सवः॑ । न । द्रु॒ह्वा॑णः । जना॑नाम् । न । दे॒वम् । अ॒भिऽमा॑तयः ॥ १४ ॥

---

१. च-फ-'उत्तरपदाद्युदात्तत्वम्' इत्यस्यानन्तरं 'यद्वा तृतीयाया आलादेशः । अव्ययपूर्वपदप्रकृतिस्वरत्वं लित्स्वरेण बाध्यते' इत्यधिकम्; स-'यद्वा...'प्रकृतिस्वरत्वं निषिध्यते' इत्यधिकम् । २. च-छ-झ-त-न-फ-श-ष-ह-शपो वा । ३. ढ-कुत्सितायाम् ।

ᵛदिप्सवः हिंसितुमिच्छन्तो वैरिणः ᵛयं वरुणं ᵛन ᵛदिप्सन्ति भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति। ᵛजनानां प्राणिनां ᵛद्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति ᵛन द्रुह्यन्ति। ᵛअभिमातयः पाप्मानः। 'पाप्मा वा अभिमातिः' (तै. सं. २. १. ३. ५) इति श्रुत्यन्तरात्। ᵛदेवं तं वरुणं ᵛन स्पृशन्ति॥ दिप्सन्ति। 'दम्भु दम्भे'। अस्मात् सनि 'सनीवन्तर्ध॰' (पा. सू. ७. २. ४९) इत्यादिना इडभावः। 'हलन्ताच्च' (पा. सू. १. २. १०) इत्यत्र हल्ग्रहणस्य जातिवाचित्वात् सनः कित्त्वात् 'दम्भ इच्च' (पा. सू. ७. ४. ५६) इति दकारात् परस्य अकारस्य इकारः। 'अनिदिताम्॰' इति नलोपः। भष्भावाभावश्छान्दसः (पा. सू. ८. २. ३७)। 'अत्र लोपोऽभ्यासस्य' (पा. सू. ७. ४. ५८) इति अभ्यासलोपः। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण सनो नित्त्वात् नित्स्वरेणाद्युदात्तत्वम्। यद्वृत्तयोगात् अनिघातः। दिप्सवः। सनन्तात् दम्भेः 'सनाशंसभिक्ष उः' (पा. सू. ३. २. १६८) इति उप्रत्ययः। प्रत्ययस्वरः। द्रुह्वाणः। 'द्रुह जिघांसायाम्'। 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्॥

**उत यो मानुषेष्वा यशश्चक्रे असाम्या। अस्माकमुदरेष्वा॥ १५॥**

उत। यः। मानुषेषु। आ। यशः। चक्रे। असामि। आ। अस्माकम्। उदरेषु। आ॥१५॥

ᵛउत अपि च ᵛयः वरुणः ᵛमानुषेषु ᵛयशः अन्नम् ᵛआ ᵛचक्रे सर्वतः कृतवान् स वरुणः कुर्वन्नपि ᵛआ सर्वतः ᵛअसामि संपूर्णं चक्रे न तु न्यूनं कृतवान्। विशेषतः ᵛअस्माकम् ᵛउदरेषु ᵛआ सर्वतः चक्रे॥ मानुषेषु। 'मनोर्जातावञ्यतौ षुक् च' (पा. सू. ४. १. १६१) इति अञ्। 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। चक्रे। प्रत्ययस्वरः। असामि। 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (पा. सू. ६. २. २. ३) इति अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यशः। 'अशेर्युट् च' (उ. सू. ४. ६३०) इति असुन्। उदरेषु। 'उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च' (उ. सू. ५. ६९७) इति अल्। लित्स्वरः। 'गतिकारकोपपदात्॰' इत्युत्तरपदप्रकृतिस्वरत्वम्॥ ॥ १८॥

**परा मे यन्ति धीतयो गावो न गव्यूतीरनु। इच्छन्तीरुरुचक्षसम्॥ १६॥**

परा। मे। यन्ति। धीतयः। गावः। न। गव्यूतीः। अनु। इच्छन्तीः। उरुऽचक्षसम्॥१६॥

ᵛउरुचक्षसं बहुभिर्द्रष्टव्यं वरुणम् ᵛइच्छन्तीः ᵛमे ᵛधीतयः शुनःशेपस्य बुद्धयः ᵛपरा ᵛयन्ति पराङ्मुखा निवृत्तिरहिता गच्छन्ति। तत्र दृष्टान्तः। ᵛगावो ᵛन। यथा गावः ᵛगव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत्॥ गव्यूतीः। गावोऽत्र यूयन्ते इति अधिकरणे क्तिन्। 'गोर्यूतौ छन्दसि' (पा. सू. ६. १. ७९. २) इति अवादेशः। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। यद्वा। यूतिः यवनम्। गवां यवनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। इच्छन्तीः। 'इषु इच्छायाम्'। लटः शतृ। 'तुदादिभ्यः शः'। 'इषुगमियमां छः' (पा. सू. ७. ३. ७७) इति छत्वम्। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते॥

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतम्। होतेव क्षदसे प्रियम्॥ १७॥**

सम्। नु। वोचावहै। पुनः। यतः। मे। मधु। आऽभृतम्। होताऽइव। क्षदसे। प्रियम्॥१७॥

ᵛयतः यस्मात् कारणात् ᵛमे मज्जीवनार्थं मधुरं हविः ᵛआभृतं अञ्जःसवाख्ये कर्मणि संपादितं अतः कारणात् ᵛहोतेव होमकर्तेव त्वमपि ᵛप्रियं हविः ᵛक्षदसे अश्नासि । ᵛपुनः हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च ᵛनु अवश्यं ᵛसं ᵛवोचावहै संभूय प्रियवार्तां करवावहै ॥ वोचावहै । लोडर्थे छान्दसे लुङि ब्रुवो वचिः । 'अस्यतिवक्ति°' इति च्लेः अङादेशः । 'वच उम्' इति उमागमे गुणः । व्यत्ययेन टेः ऐत्वम् । यद्वा । लोट एव लुङादेशः । स्थानिवद्भावात् ऐत्वम् । आभृतम् । 'हृग्रहोर्भः°' । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥ १८ ॥

दर्शम् । नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि । एताः । जुषत । मे । गिरः ॥१८॥

ᵛविश्वदर्शतं सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमत्राविर्भूतं वरुणं ᵛदर्शं ᵛनु अहं दृष्टवान् खलु । ᵛक्षमि क्षमायां भूमौ ᵛरथं वरुणसंबन्धिनम् ᵛअधि ᵛदर्शम् आधिक्येन दृष्टवानस्मि । ᵛएताः उच्यमानाः ᵛमे ᵛगिरः मदीयाः स्तुतीः ᵛजुषत वरुणः सेवितवान् ॥ दर्शम् । दृशेः 'इरितो वा' (पा. सू. ३. १. ५७) इति च्लेः अङादेशः । 'ऋदृशोऽङि गुणः' (पा. सू. ७. ४. १६) इति गुणः । विश्वदर्शतम् । दृशेः 'भृमृदृशि°' (उ. सू. ३. ३९०) इत्यादिना अतच्प्रत्ययान्तो दर्शतशब्दः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् (पा. सू. ६. २. १०६. २) । यद्वा । विश्वं दर्शनीयमस्येति बहुव्रीहिः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । क्षमि । 'आतो धातोः' (पा. सू. ६. ४. १४०) इत्यत्र आतः इति योगविभागात् आकारलोपः ॥

वरुणप्रघासेषु 'इमं मे वरुण' इति वारुणस्य हविषः अनुवाक्या । 'पञ्चम्यां पौर्णमास्याम्' इति खण्डे सूत्रितम्—'इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमानः' (आश्व. श्रौ. २. १७) इति ॥

इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥ १९ ॥

इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय । त्वाम् । अवस्युः । आ । चके ॥१९॥

हे ᵛवरुण ᵛमे मदीयम् ᵛइमं ᵛहवम् आह्वानं ᵛश्रुधि शृणु । किं च ᵛअद्य अस्मिन् दिने ᵛमृळय अस्मान् सुखय । ᵛअवस्युः रक्षणेच्छुः अहं ᵛत्वां वरुणम् आभिमुख्येन ᵛचके शब्दयामि स्तौमीत्यर्थः ॥ श्रुधि । 'श्रु श्रवणे' । लोटो हिः । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । अवस्युः । अवस्शब्दात् 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । आ चके । 'कै गै शब्दे' । अस्मात् लिटि 'आदेचः' (पा. सू. ६. १. ४५) इति आत्वम् । द्विर्भावचुत्वे । 'आतो लोप इटि च' (पा. सू. ६. ४. ६४) इति आकारलोपः । 'तिङ्ङतिङः' इति निघातः ॥

त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥ २० ॥

त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥२०॥

---

१. ढ–'अञ्जःसवाख्ये' नास्ति । २. च-छ-फ–हविःस्वाहाकारादूर्ध्वम् ।

हे मेधिर मेधाविन् वरुण त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि दीप्यसे । सः तादृशः त्वं यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामि इति प्रत्युत्तरं देहीत्यर्थः ॥ दिवः । 'ऊडिदम्०' इत्यादिना षष्ठ्या उदात्तत्वम् । ग्मः । 'ग्मा' ( नि. १. १. २ ) इत्येतत् भूनामसु पठितम् । 'आतो धातोः' इत्यत्र आतः इति योगविभागात् 'आतो लोपः' इति प्रतिषेधेऽपि ( ? ) व्यत्ययेन आकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यामनि । 'या प्रापणे' । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । नित्त्वादाद्युदात्तत्वम् । श्रुधि । उक्तम् ॥

## उदु॑त्त॒मं मु॑मुग्धि नो॒ वि पाशं॑ मध्य॒मं चृ॑त । अवा॑ध॒मानि॑ जी॒वसे॑ ॥ २१ ॥

उत् । उ॒त्ऽत॒मम् । मु॒मु॒ग्धि । न॒ः । वि । पाश॑म् । म॒ध्य॒मम् । चृ॒त । अव॑ । अ॒ध॒मानि॑ । जी॒वसे॑ ॥२१॥

नः अस्माकम् उत्तमं शिरोगतं पाशम् उत् मुमुग्धि उत्कृष्य मोचय । मध्यमम् उदरगतं पाशं वि चृत वियुज्य नाशय । जीवसे जीवितुम् अधमानि मदीयान् पादगतान् पाशान् अव चृत अवकृष्य नाशय ॥ उत्तमम् । उञ्छादिषु पाठादन्तोदात्तत्वम् । मुमुग्धि । 'मुच्लृ मोक्षणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्भावः । हलादिशेषः । 'हुझल्भ्यो हेर्धिः' ( पा. सू. ६. ४. १०१ ) इति हेर्धिरादेशः । 'तिङ्ङतिङः' इति निघातः । चृत । 'चृती हिंसाग्रन्थनयोः' । लोटो हिः । 'तुदादिभ्यः शः' । 'अतो हेः' इति हेर्लुक् । जीवसे । 'जीव प्राणधारणे' । 'तुमर्थे सेसेन्०' इति असेप्रत्ययः । प्रत्ययस्वरः ॥ ॥ १९ ॥

'वसिष्व' इति दशर्चं तृतीयं सूक्तम् । अत्रानुक्रम्यते—'वसिष्व दशाग्नेयं तु' इति । शुनःशेपः ऋषिः । गायत्री छन्दः । इदमुत्तरं च सूक्तम् आग्नेयम् । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि एतदादिसूक्तद्वयमनुवक्तव्यम् । तथा च सूत्रितं—'वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्' ( आश्व. श्रौ. ४. १३ ) इति ॥

## वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते । सेमं नो॑ अध्व॒रं य॑ज ॥ १ ॥

वसि॑ष्व । हि । मि॒ये॒ध्य॒ । वस्त्रा॑णि । ऊ॒र्जा॒म् । प॒ते॒ । सः । इ॒मम् । न॒ः । अ॒ध्व॒रम् । य॒ज ॥१॥

वरुणेन अग्निस्तुतौ प्रेरितः शुनःशेपः एतदादिसूक्तद्वयेन अग्निमस्तौत् । तथा च आम्नायते—'तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या' ( ऐ. ब्रा. ७.१६ ) इति । हे मियेध्य मेधस्य यज्ञस्य योग्य ऊर्जां पते अन्नानां पालकाग्ने वस्त्राणि आच्छादकानि तेजांसि वसिष्व आच्छादय । प्रज्वलितस्तेजसा भवेत्यर्थः । हि यस्मात् प्रज्वलितः तस्मात् सः तादृशस्त्वं नः अस्मदीयम् इमम् अध्वरं यज निष्पादय ॥ वसिष्व । 'वस आच्छादने' । लोटि 'थासः से' । 'सवाभ्यां वामौ' । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' ( पा. सू. ७. २. ३५ ) इति इडागमः । लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । मियेध्य । मकारैकारयोर्मध्ये इयागमश्छान्दसः । ऊर्जां पते । 'सुबामन्त्रिते०' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितस्य समुदायस्य आष्टमिको निघातः । सेमम् । 'सोऽचि लोपे चेत्पादपूरणम्' इति सोर्लोपः ॥

नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचः ॥ २ ॥

नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः । अग्ने । दिवित्मता । वचः ॥ २ ॥

ᵛसदा ᵛयविष्ठ सर्वदा युवतम हे ᵛअग्ने ᵛवरेण्यः वरणीयस्त्वं ᵛनः अस्माकं ᵛहोता होमनिष्पादको भूत्वा ᵛदिवित्मता दीप्तिमता ᵛवचः वचसा स्तूयमानः सन् ᵛनि षीद इति शेषः । कीदृशस्त्वम् । ᵛमन्मभिः ज्ञापकैः तेजोभिर्युक्त इति शेषः ॥ यविष्ठ । युवशब्दात् इष्ठनि 'स्थूलदूर°' (पा. सू. ६. ४. १५६) इत्यादिना यणादिपरस्य लोपः; पूर्वस्य उकारस्य गुणश्च । अवादेशः । आमन्त्रितनिघातः । मन्मभिः । 'मन ज्ञाने' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । दिवित्मता । 'दिवु क्रीडादौ' । 'इक्श्तिपौ धातुनिर्देशे' (पा. सू. ३. ३. १०८. २) इति इक्प्रत्ययः । तेन च धातुवाचिना दिविशब्देन धात्वर्थो दीप्तिर्लक्ष्यते । यद्वा । औणादिको भावे किप्रत्ययः । दिविशब्दात् मतुपि तकारोपजनश्छान्दसः । यद्वा । बाहुलकात् दिवेर्भावे इतक् । मतुपि 'तसौ मत्वर्थे' इति भत्वात् जश्त्वाभावः । वचः । 'सुपां सुलुक्°' इति तृतीयैकवचनस्य लुक् ॥

आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यः ॥ ३ ॥

आ । हि । स्म । सूनवे । पिता । आपिः । यजति । आपये । सखा । सख्ये । वरेण्यः ॥ ३ ॥

हे अग्ने ᵛवरेण्यः वरणीयः ᵛपिता पितृस्थानीयः त्वं ᵛसूनवे पुत्रस्थानीयाय मह्यम् अभीष्टं देहीति शेषः । हि ष्म इति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे । अभीष्टदाने दृष्टान्तद्वयमुच्यते । यथा ᵛआपिः बन्धुः ᵛआपये बन्धवे ᵛआ ᵛयजति ᵛहि ᵛस्म । सर्वथा ददातीति शेषः । ᵛसखा प्रियः ᵛसख्ये प्रियाय अभीष्टं सर्वथा ददाति तथा त्वमपि देहि ॥ स्मा सूनवे । 'निपातस्य च' इति दीर्घः । यजतीत्यस्य सखा सख्ये इत्यत्राप्यनुषङ्गात् तदपेक्षयेयं प्रथमा इति 'चादिलोपे विभाषा' इति न निहन्यते । यद्वा । 'हि च' इति निघातप्रतिषेधः । सख्ये । 'समाने ख्यश्चोदात्तः' इति सखिशब्दः इण्प्रत्ययान्त आद्युदात्तः । सुपः पित्त्वादनुदात्तत्वे स एव शिष्यते ॥

आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा । सीदन्तु मनुषो यथा ॥ ४ ॥

आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा । सीदन्तु । मनुषः । यथा ॥ ४ ॥

हे अग्ने वरुणादयो देवाः त्वद्बन्धवः त्वया प्रेरिताः ᵛरिशादसः हिंसकानदन्तः ᵛनः अस्मदीयं ᵛबर्हिः यज्ञम् ᵛआ ᵛसीदन्तु । तत्र दृष्टान्तः । ᵛयथा ᵛमनुषः प्रजापतेर्यज्ञमासीदन्ति तद्वत् ॥ बर्ही रिशादसः । विसर्जनीयस्य रुत्वे कृते 'रो रि' (पा. सू. ८. ३. १४) इति रेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा. सू. ६. ३. १११) इति इकारस्य दीर्घत्वम् । रिशादसः । 'रिश हिंसायाम्' । रिशन्ति हिंसन्तीति रिशाः शत्रवः । 'इगुपधज्ञाप्रीकिरः कः' । तानदन्तीति रिशादसः । 'सर्वधातुभ्योऽसुन्' कृदुत्तरपदप्रकृतिस्वरत्वम् । सीदन्तु । 'षद्लृ विशरणगत्यवसादनेषु' । 'पाघ्रा°' इत्यादिना सीदादेशः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । मनुषः । 'मन ज्ञाने' । मन्यते जानातीति मनुः प्रजापतिः । 'जनेरुसिः, नित्' इत्यनुवृत्तौ 'बहुल-

मन्यत्रापि ' ( उ. सू. २. २७८ ) इति औणादिकः उसिप्रत्ययः । नित्त्वादाद्युदात्तत्वम् । यथा । ' यथेति पादान्ते ' ( फि. सू. ८५ ) इति सर्वानुदात्तत्वम् ॥

पूर्व्य॑ होतर॒स्य नो॒ मन्द॑स्व स॒ख्यस्य॑ च । इ॒मा उ॒ षु श्रु॑धी॒ गिर॑: ॥ ५ ॥

पूर्व्य॑ । हो॒त॒: । अ॒स्य । न॒: । मन्द॑स्व । स॒ख्यस्य॑ । च॒ । इ॒माः । ऊँ इति॑ । सु । श्रु॒धि॒ । गिर॑: ॥५॥

हे ^v^पूर्व्य अस्मदादेः पूर्वमुत्पन्न ^v^होतः होमनिष्पादकाग्ने ^v^नः अस्मदीयस्य ^v^अस्य प्रवर्तमानस्य यज्ञस्य ^v^सख्यस्य ^v^च अस्मदनुग्रहस्य च सिद्ध्यर्थं ^v^मन्दस्व त्वं हृष्टो भव । ^v^इमाः अस्माभिः प्रयुज्यमानाः ^v^गिरः ^v^उ ^v^षु स्तुतिरूपा वाचोऽपि ^v^श्रुधि शृणु ॥ पूर्व्य । आमन्त्रिताद्युदात्तत्वम् । होतः इत्यस्य ' नामन्त्रिते समानाधिकरणे ' इति पूर्वस्य विद्यमानत्वात् आष्टमिको निघातः । अस्य । 'ऊडिदम्° ' इति षष्ठ्या उदात्तत्वम् । मन्दस्व । ' मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ' । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । ' °अपादादौ ' इति पर्युदासात् आष्टमिकनिघाताभावः । सख्यस्य । सख्युः कर्म सख्यम् । ' सख्युर्यः ' (पा. सू. ५. १. १२६) इति यप्रत्ययः । ' यस्य° ' इति लोपे प्रत्ययस्वरः । उ षु । ' सुञः ' ( पा. सू. ८. ३. १०७ ) इति षत्वम् । श्रुधि । ' श्रु श्रवणे ' । ' श्रुशृणुपृकृवृभ्यश्छन्दसि ' इति हेर्धिरादेशः । ' बहुलं छन्दसि ' इति शपो लुक् ॥ ॥ २० ॥

यच्चि॒द्धि शश्व॑ता॒ तना॑ दे॒वंदे॑वं॒ यजा॑महे । त्वे इद्धू॑यते ह॒विः ॥ ६ ॥

यत् । चि॒त् । हि । शश्व॑ता । तना॑ । दे॒वम्ऽदे॑वम् । यजा॑महे । त्वे इति॑ । इत् । हू॒य॒ते॒ । ह॒विः ॥६॥

हे अग्ने ^v^यच्चिद्धि यद्यपि ^v^शश्वता शाश्वतेन नित्येन ^v^तना विस्तृतेन हविषा ^v^देवंदेवम् अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषं ^v^यजामहे तथापि तत् ^v^हविः सर्वं ^v^त्वे ^v^इत् त्वय्येव ^v^हूयते । अतो देवतान्तरविषयो[1] यागोऽपि त्वदीयैव सेवेत्यर्थः ॥ तना । ' तनु विस्तारे ' । ' क्विप् च ' इति क्विप् । यद्वा । पचाद्यच् । ' सुपां सुलुक्° ' इति तृतीयाया आकारः । देवंदेवम् । ' नित्यवीप्सयोः ' इति द्विर्भावः । ' तस्य परमाम्रेडितम् ' इत्युत्तरस्य आम्रेडितसंज्ञायाम् ' अनुदात्तं च ' इति सर्वानुदात्तत्वम् । यजामहे । ' निपातैर्यद्यदिहन्त° ' इति निघातप्रतिषेधः । त्वे । युष्मच्छब्दात् सप्तम्येकवचनस्य ' सुपां सुलुक्° ' इति शेआदेशः । ' त्वमावेकवचने ' इति मपर्यन्तस्य त्वादेशः । शेपलोपे ' अतो गुणे ' इति पररूपत्वम् । ' शे ' ( पा. सू. १. १. १३ ) इति प्रगृह्यसंज्ञायां ' प्लुतप्रगृह्या अचि° ' ( पा. सू. ६. १. १२५ ) इति प्रकृतिभावः । हूयते । ' अकृत्सार्वधातुकयोः° ' ( पा. सू. ७. ४. २५ ) इति दीर्घः ॥

प्रि॒यो नो॑ अस्तु वि॒श्पति॒र्होता॑ म॒न्द्रो वरे॑ण्यः । प्रि॒याः स्व॒ग्नयो॑ व॒यम् ॥ ७ ॥

प्रि॒यः । न॒: । अ॒स्तु॒ । वि॒श्पति॑: । होता॑ । म॒न्द्रः । वरे॑ण्यः । प्रि॒याः । सु॒ऽअ॒ग्नय॑: । व॒यम् ॥७॥

---

१. च-फ-देवान्तरविषयः ।

ᵛविश्पतिः विशां प्रजानां पालकः ᵛहोता होमनिष्पादकः ᵛमन्द्रः हृष्टः ᵛवरेण्यः वरणीयोऽग्निः ᵛनः अस्माकं ᵛप्रियः ᵛअस्तु । ᵛवयम् अपि ᵛस्वग्नयः शोभनाग्नियुक्ताः सन्तः तव ᵛप्रियाः भूयास्मेति शेषः ॥ विश्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । वरेण्यः । 'वृञ एण्यः' (उ. सू. ३. ३७८)। वृषादित्वादाद्युदात्तत्वम् । स्वग्नयः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥,

**स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥ ८ ॥**

सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥ ८ ॥

ᵛस्वग्नयः शोभनाग्नियुक्ताः ᵛदेवासः दीप्यमाना ऋत्विजः ᵛनः अस्मदीयं ᵛवार्यं वरणीयं हविः ᵛहि यस्मात् ᵛदधिरे धृतवन्तः तस्माद्वयं ᵛस्वग्नयः शोभनाग्नियुक्ताः सन्तः ᵛमनामहे त्वां याचामहे ॥ वार्यम् । 'वृञ् वरणे' । 'वृङ् संभक्तौ' । 'ऋहलोर्ण्यत्' । 'ईडवन्द°' इत्यादिनाद्युदात्तत्वम् । दधिरे । इरेचः चित्त्वादन्तोदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः । मनामहे । 'मन ज्ञाने' । व्यत्ययेन शप् ॥

**अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयः ॥ ९ ॥**

अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् । मिथः । सन्तु । प्रऽशस्तयः ॥ ९ ॥

हे अग्ने ᵛअमृत मरणरहिताग्ने ᵛअथ कर्मानुष्ठानानन्तरं ᵛमर्त्यानां मनुष्याणां ᵛनः अस्माकम् अस्मत्स्वामिनस्तव च ᵛउभयेषां ᵛमिथः परस्परं ᵛप्रशस्तयः प्रशंसारूपा वाचः ᵛसन्तु । सम्यगनुष्ठितमिति यजमानविषया प्रशंसा सम्यगनुगृहीतमित्यग्निविषया ॥ अथ । 'निपातस्य च' इति संहितायां दीर्घः । अमृत । '°अपादादौ' इति पर्युदासात् षाष्ठिकमाद्युदात्तत्वम् । मर्त्यानाम् । 'मृङ् प्राणत्यागे' । 'असिहसि°' (उ. सू. ३. ३६६) इत्यादिना तन्प्रत्ययान्तो मर्तशब्दः । तस्मात् 'भवे छन्दसि' (पा. सू. ४. ४. ११०) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । सन्तु । 'श्नसोरल्लोपः' । प्रशस्तयः । 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम् ॥

**विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥ १० ॥**

विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः । चनः । धाः । सहसः । यहो इति ॥ १० ॥

ᵛसहसः बलस्य ᵛयहो पुत्र हे देवतारूप ᵛअग्ने ᵛविश्वेभिः ᵛअग्निभिः सर्वैराहवनीयादिभिर्युक्तस्त्वम् ᵛइमम् अस्मदीयं ᵛयज्ञम् ᵛइदम् अस्मदीयं ᵛवचः स्तोत्रं च सेवमानः ᵛचनः अन्नं ᵛधाः अस्मभ्यं धेहि ॥ विश्वेभिः । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । चनः । 'चायृ पूजानिशामनयोः' । 'चायेरन्ने ह्रस्वश्च' (उ. सू. ४. ६३९) इति असुन्; तत्संनियोगेन नुडागमश्च । नित्त्वादाद्युदात्तत्वम् । धाः । लुङि 'गातिस्था°' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । सहसो यहो इति 'सुबामन्त्रिते°' इति पराङ्गवद्भावात् 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायो निहन्यते ॥ ॥ २१ ॥

'अश्वं न त्वा' इति त्रयोदशर्चं चतुर्थं सूक्तम्। पूर्ववत् ऋष्यादयः। त्रयोदश्याः 'नमो महद्भ्यः' इत्यस्याः त्रिष्टुप् छन्दः। विश्वेदेवा देवता। तथा चानुक्रान्तम्—'अश्वं सप्तोना गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति॥ प्रातरनुवाकाश्विनशस्त्रयोः उत्तमावर्जितस्य सूक्तस्य विनियोग उक्तः॥

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः। सम्राजन्तमध्वराणाम्॥ १॥

अश्वम्। न। त्वा। वारऽवन्तम्। वन्दध्यै। अग्निम्। नमःऽभिः। सम्ऽराजन्तम्। अध्वराणाम्॥१॥

ᵛअध्वराणां यज्ञानां ᵛसम्राजन्तं सम्राट्स्वरूपं स्वामिनम् ᵛअग्निं त्वां ᵛनमोभिः स्तुतिभिः ᵛवन्दध्यै वन्दितुं प्रवृत्ता इति शेषः। अत्र दृष्टान्तः। ᵛवारवन्तं वालयुक्तम् ᵛअश्वं ᵛन अश्वमिव। अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः॥ वारवन्तम्। मतुपः पित्त्वादनुदात्तत्वम्। घञो ञित्त्वात् आद्युदात्तो वारशब्दः। 'कर्षात्वतः°' इति अन्तोदात्तत्वं व्यत्ययेन न प्रवर्तते। वन्दध्यै। 'वदि अभिवादनस्तुत्योः'। 'इदितो नुम् धातोः' इति नुम्। 'तुमर्थे सेसेन्°' इति अध्यैप्रत्ययः। प्रत्ययस्वरः। सम्राजन्तम्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरेण स एव। अध्वराणाम्। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्॥

स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः। मीढ्वाँ अस्माकं बभूयात्॥ २॥

सः। घ। नः। सूनुः। शवसा। पृथुऽप्रगामा। सुऽशेवः। मीढ्वान्। अस्माकम्। बभूयात्॥२॥

ᵛसः ᵛघ स एवाग्निः ᵛनः अस्माकं ᵛसुशेवः सुसुखो भवत्विति शेषः। कीदृशः। ᵛशवसा बलस्य ᵛसूनुः पुत्रः ᵛपृथुप्रगामा पृथुप्रगमनः किंच ᵛअस्माकं ᵛमीढ्वान् कामानां वर्षिता ᵛबभूयात् भवतु॥ घा नः। 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा. सू. ६. ३. १३३) इति दीर्घः। शवसा। 'सुपां सुपो भवन्ति' इति ङसः टादेशः। पृथुप्रगामा। प्रकर्षेण गमनं प्रगामः। 'हलश्च' इति घञ्। पृथुः प्रगामा यस्यासौ पृथुप्रगामा। 'सुपां सुलुक्°' इति पूर्वसवर्ण आकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। सुशेवः। 'इण्शीङ्भ्यां वन्' (उ. सू. १. १५०) इति शेवशब्दो वन्प्रत्ययान्त आद्युदात्तः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। मीढ्वान्। 'मिह सेचने' इत्यस्मात् क्वसुप्रत्ययान्तो 'दाश्वान् साह्वान् मीढ्वांश्च' इति निपातितः। बभूयात्। भवतेश्छान्दसस्य लिटः 'तिङां तिङो भवन्ति' (पा. म. ७. १. ३९) इति लिङादेशः। यासुट्स्थानिवद्भावात् आर्धधातुकत्वात् शबभावः। द्विर्वचने 'भवतेरः' (पा. सू. ७. ४. ७३) इति अत्वम्। 'तिङ्ङतिङः' इति निघातः॥

स नो दूराच्चासाच्च नि मर्त्यादघायोः। पाहि सदमिद्विश्वायुः॥ ३॥

सः। नः। दूरात्। च। आसात्। च। नि। मर्त्यात्।
अघऽयोः। पाहि। सदम्। इत्। विश्वऽआयुः॥ ३॥

---

१. च-फ-स—वारवन्तम्। वारयति दंशकानिति वारः। पचाद्यच्। कापिलकादित्वात् (स—कपिलकादित्वात्) लत्वविकल्पः।

हे अग्ने ᵛविश्वायुः व्याप्तगमनः ᵛसः त्वं ᵛदूराच्च दूरेऽपि ᵛआसाच्च आसन्नदेशेऽपि ᵛअघायोः अघं पापमनिष्टं कर्तुमिच्छतः ᵛमर्त्यात् मनुष्यात् वैरिणः ᵛनः अस्मान् ᵛसदमित् सर्वदैव ᵛनि ᵛपाहि नितरां पालय ॥ अघायोः । 'सुप आत्मनः क्यच्' । 'अश्वाघस्यात्' ( पा. सू. ७. ४. ३७ ) इति आत्वम् । पाहि । पादादित्वादनिघातः । विश्वायुः । 'इण् गतौ' इत्यस्माद्भावे 'एतेर्णिच्च' ( उ. सू. २. २७५ ) इति उसिः । विश्वमयनं गमनं यस्येति बहुव्रीहिः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् ॥

## इ॒मम्ū॒ षु त्वम॒स्माकं॑ स॒निं गा॑य॒त्रं नव्यां॑सम् । अग्ने॑ दे॒वेषु॒ प्र वो॑चः ॥ ४ ॥

इ॒मम् । ऊँ॒ इति॑ । सु । त्वम् । अ॒स्माक॑म् । स॒निम् । गा॒य॒त्रम् । नव्यां॑सम् । अग्ने॑ । दे॒वेषु॑ । प्र । वो॒चः॒ ॥ ४ ॥

हे ᵛअग्ने ᵛत्वम् ᵛअस्माकम् अस्मत्संबन्धिनम् ᵛइमम् ᵛषु पुरोदेशे अनुष्ठीयमानमपि ᵛसनिं हविर्दानं ᵛनव्यांसं नवतरं ᵛगायत्रं स्तुतिरूपं वचोऽपि ᵛदेवेषु देवानामग्रे ᵛप्र ᵛवोचः प्रब्रूहि ॥ ऊ षु । 'निपातस्य च' इति संहितायां दीर्घत्वं । 'सुञः' इति षत्वम् । नव्यांसम् । नवशब्दात् ईयसुनि ईकारलोपश्छान्दसः । ईयसुनो नित्त्वादाद्युदात्तत्वम् । वोचः । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे प्रार्थनायां लुङि 'अस्यतिवक्ति॰' ( पा. सू. ३. १. ५२ ) इति च्लेः अङादेशः । 'वच उम्' ( पा. सू. ७. ४. २० ) ॥

## आ नो॑ भज प॒रमे॒ष्वा वाजे॑षु मध्य॒मेषु॑ । शिक्षा॒ वस्वो॒ अन्त॑मस्य ॥ ५ ॥

आ । नः॒ । भ॒ज॒ । प॒रमेषु॑ । आ । वाजे॑षु । म॒ध्य॒मेषु॑ । शिक्ष॑ । वस्वः॑ । अन्त॑मस्य ॥ ५ ॥

हे अग्ने ᵛपरमेषु उत्कृष्टेषु द्युलोकवर्तिषु ᵛवाजेषु अन्नेषु ᵛनः अस्मान् ᵛआ ᵛभज सर्वतः प्रापय । ᵛमध्यमेषु अन्तरिक्षलोकवर्तिषु ᵛवाजेषु ᵛआ भज । ᵛअन्तमस्य अन्तिकतमस्य भूलोकस्य संबन्धीनि ᵛवस्वः वसूनि ᵛशिक्ष देहि ॥ शिक्ष । 'शिक्ष विद्योपादाने'। शपः पित्त्वात् धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । अन्तमस्य अन्तिकतमस्य । 'तमे तादेश्च' (पा.सू. ६.४.१४९. ९) इति तिकशब्दलोपः ॥　　॥ २२ ॥

## वि॒भ॒क्तासि॒ चित्रभानो॒ सिन्धो॑रू॒र्मा उ॑पा॒क आ । स॒द्यो दा॒शुषे॑ क्षरसि ॥ ६ ॥

वि॒ऽभ॒क्ता । अ॒सि॒ । चि॒त्र॒भा॒नो॒ इति॑ चित्र॒ऽभा॒नो॒ । सिन्धोः॑ । ऊ॒र्मौ । उ॒पा॒के । आ ।
स॒द्यः । दा॒शुषे॑ । क्ष॒र॒सि॒ ॥ ६ ॥

हे ᵛचित्रभानो विचित्ररश्मियुक्ताग्ने ᵛविभक्ता विशिष्टस्य धनस्य प्रापयिता ᵛअसि। तत्र दृष्टान्त उच्यते। आकार उपमार्थः। यथा ᵛसिन्धोः नद्याः ᵛउपाके समीपे ᵛऊर्मौ ऊर्मिं तरङ्गोपलक्षितं कुल्यादिप्रवाहं विभजन्ति तद्वत् । ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛसद्यः तदानीमेव ᵛक्षरसि कर्मफलभूतां

---

१. च-छ-फ-श—कुल्यादिरूपप्रवाहम्; ज्ञ-ष—कुल्यादिरूपं प्रवाहम् ।

वृष्टिं करोषि ॥ सिन्धोः । 'स्यन्दू प्रस्रवणे'। 'स्यन्देः संप्रसारणं धश्च' (उ. सू. १. ११) इति उप्रत्ययः । 'नित्' इत्यनुवृत्तेः आद्युदात्तत्वम् । ऊर्मिः । 'अर्तेरूच' (उ. सू. ४. ४८४) इति मिः । प्रत्ययस्वरः । दाशुषे । 'धृतव्रताय दाशुषे' (ऋ. सं. १. २५. ६) इत्यत्रोक्तम् ॥

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥ ७ ॥

यम् । अग्ने । पृत्ऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः । सः । यन्ता । शश्वतीः । इषः ॥७॥

हे ᵛअग्ने ᵛपृत्सु संग्रामेषु ᵛयं ᵛमर्त्यं यजमानम् ᵛअवाः अवसि रक्षसि । ᵛयं पुरुषं ᵛवाजेषु संग्रामेषु ᵛजुनाः प्रेरयसि । ᵛसः नरो यजमानः ᵛशश्वतीरिषः नित्यान्यन्नानि ᵛयन्ता नियन्तुं समर्थो भवति ॥ पृत्सु । 'पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' (पा. सू. ६. १. ६३. १) इति पृतनाशब्दस्य पृदादेशः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । अवाः आवः । अकाराकारयोर्विपर्ययः । यद्वा । लेटि आडागमः । 'इतश्च°' इति सिप इकारस्य लोपः । जुनाः । जू इति गत्यर्थः सौत्रो धातुः । लङः सिप् । 'क्र्यादिभ्यः श्ना' । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमाभावः । यद्वृत्तयोगादनिघातः । यन्ता । तृनो नित्त्वादाद्युदात्तत्वम् । शश्वतीः । 'उगितश्च' इति ङीप् ॥

नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥ ८ ॥

नकिः । अस्य । सहन्त्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥८॥

हे ᵛसहन्त्य शत्रूणामभिभवनशीलाग्ने ᵛअस्य त्वद्भक्तस्य यजमानस्य ᵛकयस्य ᵛचित् कस्यापि ᵛपर्येता ᵛनकिः आक्रमिता नास्ति । किंच अस्य यजमानस्य ᵛश्रवाय्यः श्रवणीयः ᵛवाजः ᵛअस्ति बलविशेषोऽस्ति ॥ कयस्य । यकारोपजनश्छान्दसः । श्रवाय्यः । 'श्रुदक्षिस्पृहिगृहिभ्य आय्यः' (उ. सू. ३. ३७६) इति आय्यप्रत्ययः ॥

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ ९ ॥

सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥९॥

ᵛविश्वचर्षणिः सर्वैर्मनुष्यैरुपेतः ᵛसः अग्निः ᵛअर्वद्भिः अश्वैः ᵛवाजं संग्रामं ᵛतरुता तारयिता ᵛअस्तु । ᵛविप्रेभिः मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः ᵛसनिता फलस्य दाता ᵛअस्तु ॥ विश्वचर्षणिः । विश्वे चर्षणयो यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । अर्वद्भिः । 'ऋ गतौ' । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । भिसि 'अर्वणस्त्रसावनञः' (पा. सू. ६. ४. १२७) इति नकारस्य तृ इत्ययमादेशः । तरुता । 'तॄ प्लवनतरणयोः' । अस्मात् 'ग्रसितस्कभित°' (पा. सू. ७. २. ३४) इत्यादौ तृनन्तो निपातितः । निपातनादेव इकारस्य उत्वम् ॥

अप्तोर्यामे होतुरतिरिक्तोक्थे 'जराबोध तद्विविड्ढि' इति स्तोत्रियस्तृचः । 'यस्य पशवो नोपधरेरन्' इति खण्डे सूत्रितम्—'अतिरिक्तोक्थानि जराबोध तद्विविड्ढि' (आश्व. श्रौ. ९. ११) इति ॥

जराबोध तद्विविड्ढि विशेविंशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥ १० ॥

जराऽबोध । तत् । विविड्ढि । विशेऽविंशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥१०॥

हे ᵛजराबोध जरया स्तुत्या बोधमानाग्ने ᵛविशेविशे तत्तद्यजमानरूपप्रजानुग्रहार्थं ᵛयज्ञियाय यज्ञसंबन्ध्यनुष्ठानसिद्ध्यर्थं ᵛतत् देवयजन ᵛविविड्ढि[2] प्रविश । यजमानोऽपि ᵛरुद्राय क्रूरायाग्नये तुभ्यं ᵛदृशीकं दर्शनीयं समीचीनं ᵛस्तोमं स्तोत्रं करोतीति शेषः । अत्र यास्क एवं व्याख्यातवान्—' जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम् ' ( निरु. १०. ८ ) इति ॥ जराबोध । ' जॄष् वयोहानौ ' । अत्र तु स्तुत्यर्थः। ' षिद्भिदादिभ्योऽङ् ' ( पा. सू. ३. ३. १०४ ) इति अङ्प्रत्ययः । ततः टाप् । जरया स्तुत्या बोधो यस्यासौ जराबोधः । यद्वा । जरया बोध्यते इति जराबोधः । कर्मणि घञ् । आमन्त्रिताद्युदात्तत्वम् । विविड्ढि । ' विश प्रवेशने ' । लोटो हि । ' बहुलं छन्दसि ' इति शपः श्लुः । अभ्यासहलादिशेषौ । ' हुझल्भ्यो हेर्धिः ' इति हेर्धिरादेशः । षत्वष्टुत्वे । यद्वा । ' विष्लृ व्याप्तौ ' इत्यस्मात् लोण्मध्यमैक-वचने अभ्यासस्य गुणाभावः । विशेविशे। ' सावेकाचः° ' इति चतुर्थ्या उदात्तत्वम् । ' अनुदात्तं च ' इति आम्रेडितानुदात्तत्वम् । यज्ञियाय । ' यज्ञर्त्विग्भ्यां घखञौ ' ( पा. सू. ५. १. ७१ ) इति घः । दृशीकम् । ' अनिदृशिभ्यां च ' ( दश. पा. ३ ) इति कीकन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ ॥ २३ ॥

स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥ ११ ॥

सः । नः । महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचन्द्रः । धिये । वाजाय । हिन्वतु ॥११॥

ᵛसः अग्निः ᵛनः अस्मान् ᵛधिये कर्मणे ᵛवाजाय अन्नाय च ᵛहिन्वतु प्रीणयतु । कीदृशः । ᵛमहान् गुणाधिकः ᵛअनिमानः निमानवर्जितः अपरिच्छिन्न इत्यर्थः । ᵛधूमकेतुः धूमेन ज्ञाप्यमानः ᵛपुरुश्चन्द्रः बहुदीप्तिः ॥ महाँ अनि इत्यत्र संहितायां नकारस्य रुत्वानुनासिकावुक्तौ । अनिमानः । न विद्यते निमानोऽस्येति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । धूमकेतुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पुरुश्चन्द्रः । ' चदि आह्लादने दीप्तौ च ' । अस्मात् ' स्फायितञ्चि° ' इत्यादिना कर्तरि रक् । पुरुश्चासौ चन्द्रश्चेति समासान्तोदात्तत्वम् । ' ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ' ( पा. सू. ६. १. १५१ ) इति सुट् । तस्य श्चुत्वेन शकारः । धिये । ' सावेकाचः° ' इति चतुर्थ्या उदात्तत्वम् । हिन्वतु। हिवि प्रीणनार्थः । ' इदितो नुम् धातोः ' इति नुम् ॥

स रेवाँइव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥

सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः । उक्थैः । अग्निः । बृहत्ऽभानुः ॥१२॥

ᵛसः ᵛअग्निः ᵛउक्थैः स्तोत्रैर्युक्तान् ᵛनः अस्मान् ᵛशृणोतु । तत्र दृष्टान्तः । ᵛरेवानिव । यथा लोके धनवान् राजा वन्दिनां स्तोत्रं शृणोति तद्वत् । कीदृशः । ᵛविश्पतिः प्रजापालकः ᵛदैव्यः देवानां संबन्धी । ' अग्निर्वै देवानां होता ' ( ऐ. ब्रा. ३. १४ ) इति श्रुत्यन्तरात् । ᵛकेतुः दूतवत् ज्ञापकः ।

---

१. झ-ढ-ध-द्द–बोध्यमानाग्ने । २. च-फ–त्वं विविड्ढि ।

' अग्निर्वै देवानां दूत आसीत् ' ( तै. सं. २. ५. ८. ५ ) इति श्रुतेः । ᵛबृहद्भानुः प्रौढरश्मिः ॥ स रेवान् । ' एतत्तदोः° ' ( पा. सू. ६. १. १३२ ) इति सोर्लोपः । ' रयेर्मतौ बहुलम् ' इति संप्रसारणम् । परपूर्वत्वम् । ' आद्गुणः ' । ' छन्दसीरः ' इति मतुपो वत्वम् । ' आरेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् ' ( पा. सू. ६. १. १७६. १ ) इति मतुप उदात्तत्वम् । विश्पतिः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । बृहद्भानुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

दर्शपूर्णमासयोः स्रुगादापनात् पूर्वभाविनि जपे ' नमो महद्भ्यः ' इत्येषा । ' ब्रह्मौदने प्राशिष्यमाणे ' इति खण्डे ' सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यः ' ( आश्व. श्रौ. १. ४ ) इति सूत्रितम् ॥

नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।
यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥ १३ ॥

नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः । नमः॑ । आ॒शि॒नेभ्यः॑ ।
यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा । ज्याय॑सः । शंस॑म् । आ । वृ॒क्षि॒ । दे॒वाः॒ ॥१३॥

अग्निना प्रेरितः शुनःशेपो विश्वान् देवान् अनया तुष्टाव । तथा च आम्नायते–' तमग्निरुवाच विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा ' ( ऐ. ब्रा. ७. १६ ) इति । महान्तो गुणैरधिकाः । अर्भका गुणैर्न्यूनाः । युवानः तरुणाः । आशिनाः वयसा व्याप्ता वृद्धाः । यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमोऽस्तु । ᵛयदि ᵛशक्नवाम कथंचित् धनादिसंपत्त्या शक्ताश्चेत् तदानीं ᵛदेवान् ᵛयजाम । हे ᵛदेवाः ᵛज्यायसः ज्येष्ठस्य देवताविशेषस्य ᵛआ सर्वतः प्रसृतं ᵛशंसं स्तोत्रं ᵛमा ᵛवृक्षि अहं विच्छिन्नं मा कार्षम् ॥ आशिनेभ्यः । 'अशू व्याप्तौ' । ' बहुलमन्यत्रापि ' ( उ. सू. २. २०७ ) इति औणादिकः इनच्प्रत्ययः । ' चितः ' इत्यन्तोदात्तत्वम् । यजाम । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । शक्नवाम । ' शक्लृ शक्तौ ' । ' आडुत्तमस्य पिच्च ' इति तिङः पिद्भावात् अनुदात्तत्वे सति विकरणस्वरः । ' निपातैर्यद्यदिहन्त° ' इति निघातप्रतिषेधः । ज्यायसः । प्रशस्यशब्दात् ईयसुनि ' ज्य च ' ( पा. सू. ५. ३. ६१ ) इति ज्यादेशः । ' ज्यादादीयसः ' ( पा. सू. ६. ४. १६० ) इति ईयसुन ईकारस्य आत्वम् । नित्त्वादाद्युदात्तत्वम् । शंसम् । ' हलश्च ' इति घञ् । वृक्षि । ' ओव्रश्चू छेदने ' । व्यत्ययेन आत्मनेपदोत्तमपुरुषैकवचनम् इट् । च्लेः सिच् । ' स्वरतिसूति° ' इत्यादिना इडभावः । ' स्कोः संयोगाद्योः° ' इति उपधासकारलोपः । व्रश्चादिना षत्वम् । ' षढोः कः सि ' इति कत्वम् । ' आदेशप्रत्यययोः ' इति षत्वम् । ' न माङ्योगे ' इति अडभावः ॥ ॥ २४ ॥

' यत्र ग्रावा ' इति पञ्चमं सूक्तं नवर्चम् । आदितः षडनुष्टुभः । ' आयजी ' इत्याद्यास्तिस्रो गायत्र्यः । आदितश्चतसृणाम् इन्द्रो देवता । ततो द्वे उलूखलदेवत्ये । तदनन्तरभाविन्यौ उलूखलमुसलोभयदेवताके । अन्त्यायाः ' उच्छिष्टम् ' इत्यस्याः हरिश्चन्द्राधिषवणचर्मसोमानामन्यतमो देवता । तथा च बृहद्देवतायामुक्तम्–' चर्माधिषवणीयं वा सोमं वान्त्या प्रशंसति ' ( बृहद्दे. ३. १०१ ) इति । तदुक्तमनुक्रमण्याम्–' यत्र ग्रावा नव षळनुष्टुबादि यच्चिद्धयौलूखल्यौ परे मौसल्यौ च प्रजापतेर्हरिश्चन्द्रस्यान्त्या

१. ढ–रेवान् । रयेर्मतौ ।

चर्मप्रशंसा वा ' इति । आद्याश्चतस्रः अञ्जःसवे होमे विनियुक्ताः । पञ्चम्याद्याश्चतस्रः अभिषवे । अन्त्या द्रोणकलशे सोमावनयने । तथा च ब्राह्मणम्–' अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवांचकार ' ( ऐ. ब्रा. ७. १७ ) इति ॥

यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥१॥

यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे ।

उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ १ ॥

हे इन्द्र यत्र यस्मिन् अञ्जःसवे कर्मणि सोतवे अभिषवार्थं ग्रावा पाषाणः पृथुबुध्नः स्थूलमूलः ऊर्ध्वः उन्नतः भवति तस्मिन् कर्मणि उलूखलसुतानाम् उलूखलेनाभिषुतानां रसम् अवेत् स्वकीयत्वेनावगत्यैव जल्गुलः भक्षय ॥ पृथुबुध्नः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । भवति । ' निपातैर्यद्यदिहन्त° ' इति निघातप्रतिषेधः । सोतवे । ' षुञ् अभिषवे ' । ' तुमर्थे सेसेन्° ' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । उलूखलसुतानाम् उलूखलेन सुतानाम् । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । जल्गुलः । ' गल अदने ' । अस्मात् यङो लुकि लोण्मध्यमैकवचने लेटोऽडाटौ ' इति अडागमः । ' इतश्च लोपः° ' इति इकारलोपः । उपधाया उत्वं च हलादिशेषाभावश्च पृषोदरादित्वात्[3] ॥

यत्र द्वाविव जघनाधिषवण्या कृता । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २ ॥

यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता ।

उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ २ ॥

यत्र यस्मिन् कर्मणि अधिषवण्या उभे अधिषवणफलके द्वाविव जघना द्वौ जघनप्रदेशाविव । ' जघनं जङ्घन्यतेः ' ( निरु. ९. २० ) इति यास्कः । कृता विस्तीर्णे कृते संपादिते । अन्यत् पूर्ववत् ॥ जघना । ' हन्तेः शरीरावयवे द्वे च ' ( उ. सू. ५. ७१० ) इति हन्धातोः अच् । द्वित्वम् । कर्दमादित्वात् मध्योदात्तः ( फि. सू. ५९ ) । ' सुपां सुलुक्° ' इति आकारः । अधिषवण्या । ' षुञ् अभिषवे ' । ल्युट् । ' भवे छन्दसि ' इति यत् । ' उपसर्गात्सुनोति° ' इति षत्वम् । ' तित्स्वरितम् ' इति स्वरितः । न च ' यतोऽनावः ' इत्याद्युदात्तत्वम्; तत्र हि ' निष्ठा च द्व्यजनात् ' ( पा. सू. ६. १. २०५ ) इत्यस्य अनुवृत्तेः द्व्यचूकस्यैव तदिति । कृता । पूर्ववत् आकारः ॥

---

१. ग-छ-ण-फ–यत्र ग्रावा पृथुबुध्न इत्याद्याश्चतस्रः । २. च-ध-फ-ह–सोमानां रसम् । ३. ढ–पृषोदरादित्वात् भवति ।

यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ३ ॥

यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते ।

उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ ३ ॥

Vयत्र यस्मिन् कर्मणि Vनारी पत्नी Vअपच्यवं शालायाः निर्गमनम् Vउपच्यवं Vच शालाप्राप्तिं च Vशिक्षते अभ्यासं करोति । अन्यत्पूर्ववत्[1] ॥ अपच्यवम् । 'च्युङ् गतौ'। 'ऋदोरप्' इति अप् । गुणावादेशौ । थाथादिना ( पा. सू. ६. २. १४४ ) उत्तरपदान्तोदात्तत्वम् । एवम् उपच्यवम् । शिक्षते । 'शिक्ष विद्योपादाने'। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। 'निपातैर्यद्यदिहन्त°' इति निघातप्रतिषेधः ॥

यत्र मन्थां विबध्नते रश्मीन्यमितवाइव

उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ४ ॥

यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव ।

उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ २ ॥

Vयत्र यस्मिन् कर्मणि Vमन्थाम् आशिरमथनहेतुं मन्थानं विबध्नन्ति[2] । तत्र दृष्टान्तः । Vरश्मीन् अश्वबन्धनार्थान् प्रग्रहान् Vयमितवाइव नियन्तुमिव । अन्यत् पूर्ववत् ॥ मन्थाम् । 'पथिमथ्यृभुक्षामात्' ( पा. सू. ७. १. ८५ ) इति द्वितीयायामपि व्यत्ययेन आत्वम् । प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'पथिमथोः सर्वनामस्थाने' ( पा. सू. ६. १. १९९ ) इत्याद्युदात्तत्वम् । यद्वा । मथ्यतेऽनयेति मन्था । 'मिथि विलोडने' इत्यस्मात् 'हलश्च' इति करणे घञ् । ततः टाप् । ञित्त्वादाद्युदात्तत्वम् । विबध्नते । 'बन्ध बन्धने'। 'क्र्यादिभ्यः श्ना'। 'अनिदिताम्°' इति नलोपे 'श्नाभ्यस्तयोरातः' इति आकारलोपः । प्रत्ययस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः। यमितवै । 'यम उपरमे'। 'तुमर्थे सेसेन्°' इति तवैप्रत्ययः । इडागमश्छान्दसः । यद्वा । ण्यन्तात् तवैप्रत्ययस्य इडागमे सति णिलोपश्छान्दसः । 'अन्तश्च तवै युगपत्' ( पा. सू. ६. १. २०० ) इत्याद्यन्तयोरुदात्तत्वम् ॥

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।

इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५ ॥

यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे ।

इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ॥ ५ ॥

---

१. ढ–'अन्यत् पूर्ववत्' नास्ति । २. च-फ-ह–विबध्नते विबध्नन्ति ।

हे ᵛउलूखलक ᵛयच्चिद्धि यद्यपि त्वमवघातार्थं ᵛगृहेगृहे ᵛयुज्यसे तथापि ᵛइह वैदिके कर्मणि तीव्रमुसलप्रहारेण ᵛद्युमत्तमम् अतिशयेन दीप्तं प्रभूतध्वनियुक्तं शब्दं ᵛवद। तत्र दृष्टान्तः। ᵛजयतामिव ᵛदुन्दुभिः। यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिः महान्तं ध्वनिं करोति तद्वत्। उलूखलशब्दं यास्क एवं व्याख्यातवान्–'उलूखलमुरुकरं वोर्ध्वखं वोर्कर वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम्' ( निरु. ९ २० ) इति॥ उलूखलक। '°अपादादौ' इति पर्युदासात् आष्टमिकनिघाताभावे पाष्ठिकमाद्युदात्तत्वम्। युज्यसे। अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक्स्वरः शिष्यते। न च 'तिङ्ङतिङः' इति निघातः। 'निपातैर्यद्यदिहन्त°' इति प्रतिषेधात्। द्युमत्तमम्। दीव्यतेर्दीप्त्यर्थस्य संपदादिलक्षणः क्विप्। 'दिव उत्' ( पा. सू. ६. १. १३१ ) इति उत्वम्। यणादेशे 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्। ननु 'दिव उत्' इत्यत्र प्रातिपदिकं गृह्यते न धातुरित्युक्तत्वात् अक्षद्यूः इत्यादाविव अत्रापि ऊठा भवितव्यम् ( पा. सू. ६. ४. १९ )। एवं तर्हि दीप्तिमत्स्वर्गवाचकेन दिव्प्रातिपदिकेन दीप्तिर्लक्ष्यते इत्युत्वं भविष्यति॥　　॥ २५॥

उत स्म ते वनस्पते वातो वि वात्यग्रमित्।
अथो इन्द्राय पातवे सुनु सोममुलूखल॥ ६॥

उत। स्म। ते। वनस्पते। वातः। वि। वाति। अग्रम्। इत्।
अथो इति। इन्द्राय। पातवे। सुनु। सोमम्। उलूखल॥ ६॥

ᵛउत अपि च हे ᵛवनस्पते उलूखलरूप वृक्ष ᵛते ᵛअग्रमित् तव पुरत एव ᵛवातो ᵛवि ᵛवाति ᵛस्म। त्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्रसरति खलु। ᵛअथो अनन्तरं हे ᵛउलूखल ᵛइन्द्राय इन्द्रोपकारार्थं ᵛपातवे पातुं ᵛसोमं ᵛसुनु सोमाभिषवं कुरु॥ वनस्पते। पारस्करादित्वात् सुट्। कार्ये कारणशब्दः। पातवे। 'पा पाने'। 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। सुनु। 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक्। विकरणस्वरेणान्तोदात्तत्वम्। पादादित्वादनिघातः। उलूखल। उर्ध्वं खम् अस्य इति उलूखलः। पृषोदरादिः॥

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः। हरीइवान्धांसि बप्सता॥ ७॥

आयजी इत्याऽयजी। वाजऽसातमा। ता। हि। उच्चा। विऽजर्भृतः।
हरी इवेति हरीऽइव। अन्धांसि। बप्सता॥ ७॥

ये उलूखलमुसले ᵛआयजी सर्वतो यज्ञसाधने ᵛवाजसातमा अतिशयेन अन्नप्रदे ᵛता ᵛहि ते खलु ᵛउच्चा प्रौढध्वनिर्यथा भवति तथा ᵛविजर्भृतः विशेषेण पुनःपुनर्विहारं कुरुतः। तत्र दृष्टान्तः। ᵛअन्धांसि अन्नानि चणकादीनि खाद्यानि ᵛबप्सता भक्षयन्तौ ᵛहरीइव इन्द्रस्याश्वाविव। अत्र यास्क एवं व्याचख्यौ—'आयजी आयष्टव्ये अन्नानां संभक्ततमे[1] ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने' (निरु. ९. ३६ ) इति॥ आयजी। यजेः औणादिकः करणे इप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। वाजसातमा। वाजं सनोतीति वाजसाः। 'षणु दाने'। 'जनसन°' इत्यादिना विट्प्रत्ययः। 'विड्वनोरनुनासिक-

१. ग-च-छ-झ-ण-त-थ-फ-र-श-ष-ह—संभक्ततमे।

स्यात्' इति आत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। आतिशायनिकस्तमप्। 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः। विजर्भृतः। 'हृञ् हरणे'। अस्मात् यङ्लुकि अभ्यासहलादिशेषोरत्वजश्त्वेषु कृतेषु 'रुग्रिकौ च लुकि' (पा. सू. ७. ४. ९१) इति रुगागमः। ततः प्रत्ययलक्षणेन धातुसंज्ञायां लिटि द्विवचनं तस्। 'अदादिवच्च' इति वचनात् शपो लुक्। गुणे प्राप्ते 'क्ङिति च' इति प्रतिषेधः। 'हृग्रहोर्भश्छन्दसि' इति भत्वम्। प्रत्ययस्वरः। 'हि च' इति निघातप्रतिषेधः। बप्सता। 'भस भक्षणदीप्त्योः'। लटः शतृ। 'जुहोत्यादिभ्यः श्लुः'। 'घसिभसोर्हलि च' (पा. सू. ६. ४. १००) इति उपधालोपः। 'नाभ्यस्ताच्छतुः' (पा. सू. ७. १. ७८) इति नुम्प्रतिषेधः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्।

## ता नो॑ अ॒द्य व॑नस्पती ऋ॒ष्वावृ॒ष्वेभि॑ः सो॒तृभि॑ः। इन्द्रा॑य॒ मधु॑मत्सुतम् ॥ ८ ॥

ता। नः॒। अ॒द्य। व॒न॒स्प॒ती॒ इति॑। ऋ॒ष्वौ। ऋ॒ष्वेभि॑ः। सो॒तृऽभि॑ः। इन्द्रा॑य। मधु॑ऽमत्। सु॒तम् ॥८॥

अद्य अस्मिन् कर्मणि हे वनस्पती उलूखलमुसलरूपौ तौ युवाम् ऋष्वेभिः दर्शनीयैः सोतृभिः अभिषवहेतुभिः सह ऋष्वौ दर्शनीयौ भूत्वा इन्द्राय इन्द्रार्थं मधुमत् माधुर्योपेतं सोमद्रव्यं नः अस्मदीयं सुतं अभिषुणुतम् ॥ ता। 'सुपां सुलुक्°' इति आकारः। नो अद्य। 'प्रकृत्यान्तःपादम्°' इति प्रकृतिभावः। वनस्पती। उभयपदप्रकृतिस्वरे प्राप्ते 'आमन्त्रितस्य°' इति सर्वानुदात्तत्वम्। 'प्लुतप्रगृह्या अचि°' (पा. सू. ६. १. १२५) इति प्रकृतिभावः। सुतम्। 'षुञ् अभिषवे'। 'बहुलं छन्दसि' इति विकरणस्य लुक्। निघातः ॥

## उच्छि॒ष्टं च॒म्वो॑र्भर॒ सोमं॑ प॒वित्र॒ आ सृ॑ज। नि धे॑हि॒ गोरधि॑ त्व॒चि ॥ ९ ॥

उत्। शि॒ष्टम्। च॒म्वो॑ः। भ॒र॒। सोम॑म्। प॒वित्रे॑। आ। सृ॒ज॒। नि। धे॒हि॒। गोः। अधि॑। त्व॒चि ॥९॥

हे ऋत्विग्विशेष हरिश्चन्द्रदेवतापक्षे हे हरिश्चन्द्र इति वा चम्वोः सोमस्य भक्षत्वसंपादकयोः अधिषवणफलकयोः शिष्टम् अभिषवराहित्येन अवशिष्टं सोमम् उत् भर शकटस्योपरि हर। सोमम् अभिषुतं सोमं पवित्रे दशापवित्रे आ सृज आनीय प्रक्षिप। प्रक्षेपे सति अवशिष्टं सोमं गोः त्वचि आनडुहे चर्मणि अधि नि धेहि अध्यारोप्य स्थापय ॥ चम्वोः। 'चमु अदने'। चम्यते भक्ष्यतेऽत्रेति चमूः। 'कृषिचमि°' (उ. सू. १. ८१) इत्यादिना औणादिक ऊप्रत्ययः। प्रत्ययस्वरः। सप्तमीद्विवचनस्य 'उदात्तस्वरितयोर्यणः स्वरितः°' इति स्वरितत्वम्। 'उदात्तयणो हल्पूर्वात्' इति व्यत्ययेन न भवति। भर। 'हृग्रहोर्भः°'। धेहि। 'घ्वसोरेद्धावभ्यासलोपश्च' (पा. सू. ६. ४. ११९) इति एत्वाभ्यासलोपौ। निघातः। त्वचि। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् ॥ ॥ २६ ॥

'यच्चिद्धि सत्य सोमपाः' इति षष्ठं सूक्तं सप्तर्चं शुनःशेपस्यार्षं पाङ्क्तमैन्द्रम्। अनुक्रमणिका च— 'यच्चिद्धि सप्त पाङ्क्तम्' इति ॥ पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यंदिने सवने होत्रकाः 'यच्चिद्धि' इति सप्तर्चं सूक्तं त्रींस्तृचान्कृत्वा स्वस्वशस्त्रे एकैकं तृचमावपेरन्। 'चतुर्थेऽहनि' इति खण्डे 'यच्चिद्धि सत्य सोमपा इत्येकैकमेवमेव' (आश्व. श्रौ. ७. ११) इति सूत्रितम् ॥

यच्चिद्धि स॑त्य सोमपा अनाशस्ताइ॑व स्मसि॑ ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शुभ्रिषु॑ सहस्रे॑षु तुवीमघ ॥ १ ॥

यत् । चित् । हि । स॒त्य । सोम॒ऽपाः । अ॒ना॒श॒स्ताःऽइ॑व । स्मसि॑ ।
आ । तु । नः॒ । इन्द्र॒ । शं॒सय॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ ॥ १ ॥

विश्वैर्देवैः प्रेरितः शुनःशेपः एतदादिकाभिः द्वाविंशतिसंख्याकाभिः ऋग्भिः इन्द्रं तुष्टाव। तथा च ब्राह्मणं–' तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इत्येतेन सूक्तेनोत्तरस्य च पञ्चदशभिः' (ऐ. ब्रा. ७. १६) इति। हे ᵛसोमपाः सोमस्य पातः ᵛसत्य सत्यवादिन् इन्द्र ᵛयच्चिद्धि यद्यपि वयम् ᵛअनाशस्ताइव ᵛस्मसि अप्रशस्ता इव भवामः, तथापि हे ᵛतुवीमघ बहुधन ᵛइन्द्र त्वं ᵛगोषु ᵛअश्वेषु ᵛशुभ्रिषु शोभनेषु ᵛसहस्रेषु सहस्रसंख्याकेषु च निमित्तभूतेषु ᵛनः अस्मान् ᵛआ ᵛशंसय सर्वतः प्रशस्तान् कुरु। अस्मद्दोषमनपेक्ष्य गवादीन् प्रयच्छेत्यर्थः॥ सोमपाः। विजन्तः। आमन्त्रितनिघातः। अनाशस्ताइव। ' शंसु स्तुतौ '। ' निष्ठा ' इति भावे क्तः। ' यस्य विभाषा ' इति इट्प्रतिषेधः। नञा बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम्। स्मसि। ' इदन्तो मसि '। तू नः। ' ऋचि तुनुघ॰' इत्यादिना दीर्घः। गोषु। ' सावेकाचः॰' इति प्राप्तस्य विभक्त्युदात्तत्वस्य ' न गोश्वन्सावर्ण॰' इति प्रतिषेधः। अश्वेषु। अश्नुतेऽध्वानमित्यश्वः।' अशिप्रुषि॰' इत्यादिना क्वन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। शुभ्रिषु। ' शुभ दीप्तौ '। ' अदिशदिभूशुभिभ्यः क्रिन् ' (उ. सू. ४. ५०५) इति क्रिन्प्रत्ययः। व्यत्ययेनान्तोदात्तत्वम्॥

शिप्रि॑न्वाजानां॑ पते॒ शची॑वस्तव॑ दं॒सना॑ ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शुभ्रिषु॑ सहस्रे॑षु तुवीमघ ॥ २ ॥

शिप्रि॑न् । वा॒जा॒नाम् । प॒ते । शची॑ऽवः । तव॑ । दं॒सना॑ ।
आ । तु । नः॒ । इन्द्र॒ । शं॒सय॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ ॥ २ ॥

हे ᵛशाचीवः शक्तिमन् शिप्रिन् शोभनहनूयुक्त ᵛवाजानां ᵛपते अन्नानां पालक ᵛतव दंसना कर्मविशेषोऽनुग्रहरूपः सर्वदा वर्तते। अन्यत् पूर्ववत्॥ शिप्रिन्। ' शिप्रे हनू नासिके वा ' (निरु. ६. १७) इति यास्कः। ' अत इनिठनौ ' इति मत्वर्थीय इनिः। आमन्त्रिताद्युदात्तत्वम्। वाजानां पते। ' सुबामन्त्रिते॰ ' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायनिघातः। न च ' आमन्त्रितं पूर्वमविद्यमानवत् ' इति शिप्रिन् इत्यस्य अविद्यमानवत्त्वेन पदादपरत्वात् पादादित्वाच्च न निघातः; ' नामन्त्रिते समानाधिकरणे सामान्यवचनम् ' इति अविद्यमानवत्त्वप्रतिषेधात्। शचीवः। ' छन्दसीरः ' इति मतुपो वत्वम्। ' मतुवसो रुः॰ ' इति रुत्वे ' खरवसानयोर्विसर्जनीयः ' (पा. सू. ८. ३. १५)। पादादित्वात् आमन्त्रितनिघाताभावः॥

नि ष्वा॑पया मिथू॒दृशा॑ स॒स्तामबु॑ध्यमाने ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ ३ ॥

नि । स्वा॒प॒य॒ । मि॒थु॒ऽदृशा॑ । स॒स्ताम् । अबु॑ध्यमाने॒ इति॑ ।
आ । तु । न॒: । इन्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ ३ ॥

ᵛमिथूदृशा परस्परं संगतत्वेन दृश्यमाने यमदूत्यौ ᵛनि ᵛष्वापय नितरां सुप्ते कुरु । ते च अस्मान् मारयितुम् ᵛअबुध्यमाने सत्यौ ᵛसस्तां निद्रां प्राप्नुताम् । अन्यत् पूर्ववत् ॥ नि ष्वापय । सुषामादित्वात् षत्वम् ( पा. सू. ८. ३. ९८ ) । ' अन्येषामपि दृश्यते ' इति दीर्घः । मिथुनतया युगलरूपेण पश्यतः इति मिथूदृशा । ' क्विप् च ' इति दृशेः कर्तरि क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । पूर्ववत् पूर्वपदस्य दीर्घः । ' सुपां सुलुक्° ' इति विभक्तेः आकारः। सस्ताम् । ' षस स्वप्ने ' । लोटि तसस्ताम्। ' अदिप्रभृतिभ्यः° ' इति शपो लुक् । प्रत्ययस्वरः । पादादित्वात् निघाताभावः । अबुध्यमाने । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

स॒सन्तु॒ त्या अरा॑तयो॒ बोध॑न्तु शूर रा॒तय॑: ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ ४ ॥

स॒सन्तु॑ । त्याः । अरा॑तयः । बोध॑न्तु । शू॒र॒ । रा॒तय॑: ।
आ । तु । न॒: । इन्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ ४ ॥

ᵛत्याः अस्माभिरदृश्यमानाः परोक्षास्ताः ᵛअरातयः अदानशीलाः शत्रवः ᵛससन्तु निद्रां कुर्वन्तु । हे ᵛशूर शौर्ययुक्तेन्द्र ᵛरातयः दानशीलाः बन्धवः ᵛबोधन्तु अस्मान् बुध्यन्ताम् । अन्यत् पूर्ववत् ॥ ससन्तु । प्रत्ययस्वरः । अरातयः । ' रा दाने ' । ' मन्त्रे वृष° ' इत्यादिना भावे क्तिन् । न विद्यते रातिः एष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ' नञ्सुभ्याम् ' इति तु ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' इति न भवति । यद्वा । ' क्तिच्क्तौ च संज्ञायाम् ' इति कर्तरि क्तिच् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधन्तु । पादादित्वात् ' तिङ्ङतिङः ' इति निघाताभावः ॥

समि॑न्द्र गर्द॒भं मृ॑ण नु॒वन्तं॑ पा॒पया॑मु॒या ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ ५ ॥

सम् । इ॒न्द्र॒ । ग॒र्द॒भम् । मृ॒ण॒ । नु॒वन्त॑म् । पा॒पया॑ । अ॒मु॒या ।
आ । तु । न॒: । इन्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ ५ ॥

हे ᵛइन्द्र ᵛअमुया अनया अस्माभिः श्रूयमाणया ᵛपापया निन्दारूपया वाचा ᵛनुवन्तं स्तुवन्तम् अपकीर्तिं प्रकटयन्तमित्यर्थः । तादृशं ᵛगर्दभं गर्दभसमानवैरिणं ᵛसं ᵛमृण सम्यक् मारय । यथा गर्दभः

श्रोतुमशक्यं परुषं शब्दं करोति तथा शत्रुरपि । अन्यत् पूर्ववत् ॥ गर्दभम् । 'गर्द गर्द शब्दे'। 'कॄगॄशॄशलिगर्दिभ्योऽभच्' (उ. सू. ३. ४०२)। 'चितः' इत्यन्तोदात्तत्वम् । मृण । 'मृण हिंसायाम्' । तौदादिकः । शस्य ङित्त्वात् गुणाभावः । नुवन्तम् । 'णु स्तुतौ'। शतरि अदिप्रभृतित्वात् शपो लुक् । शतुर्ङित्त्वात् गुणाभावे उवङादेशः । प्रत्ययाद्युदात्तत्वम् ॥

पताति कुण्डृणाच्या दूरं वातो वनादधि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥

पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ६ ॥

वातः अस्मत्प्रतिकूलो वायुः कुण्डृणाच्या कुटिलगत्या स त्वस्मान्परित्यज्य वनादधि अरण्यादप्यधिकं दूरं देशं पताति पततु । अन्यत् पूर्ववत् ॥ पताति । लेटि आडागमः। कुण्डृणाच्या । 'कुडि दाहे'। अस्मात् ल्युडन्ते कुण्डनशब्दे डकारात् परस्य अकारस्य ऋकारश्छान्दसः । 'ऋवर्णाच्चेति वक्तव्यम्' इति णत्वम् । तत् अञ्चतीति कुण्डृणाची । 'ऋत्विक्°' इत्यादिना क्विन् । 'अनिदिताम्°' इति नलोपे 'अञ्चतेश्चेति वक्तव्यम्' (पा. सू. ४. १. ६. २) इति ङीप् । 'अचः' (पा. सू. ६. ४. १३८) इति अकारलोपः । 'चौ' (पा. सू. ६. ३. १३८) इति पूर्वपदस्य दीर्घत्वम् । 'चौ' (पा. सू. ६. १. २२२) इति आकारस्योदात्तत्वम् ॥

सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥

सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

परिक्रोशम् अस्मद्विषये सर्वतः आक्रोशकर्तारं सर्वं पुरुषं जहि मारय । कृकदाश्वम् अस्मद्विषये हिंसाप्रदं शत्रुं जम्भय मारय । अन्यत् पूर्ववत् ॥ परिक्रोशम् । 'क्रुश आह्वाने' । परितः क्रोशयतीति परिक्रोशः । पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जहि । 'हन हिंसागत्योः'। 'हन्तेर्जः' (पा. सू. ६. ४. ३६) इति जादेशः । तस्य 'असिद्धवदत्रा भात्' इति असिद्धत्वात् 'अतो हेः' इति हेर्लुक् न भवति । जम्भय । 'जभि नाशने'। चुरादित्वात् स्वार्थिको णिच् । शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते । कृकदाश्वम् । 'कृञ् हिंसायाम्'। 'कृदाधारार्चिकलिभ्यः कन्' (उ. सू. ३. ३२०) इति भावे कन्प्रत्ययः । 'कित्' इत्यनुवृत्तेः गुणाभावः । तथा च कृको हिंसा तां दाशति प्रयच्छतीति कृकदाशुः । बहुलग्रहणात् दाशतेरपि कृके उपपदे 'कृके वचः कश्च' (उ. सू. १. ६) इति उण् । प्रत्ययस्वरेणोदात्तः । द्वितीयायाम् अमिपूर्वत्वे प्राप्ते 'वा छन्दसि' इति तस्य बाधितत्वात् यणादेशः । 'उदात्तस्वरितयोर्यणः°' इति विभक्तेः स्वरितत्वम् ॥　॥ २७ ॥

'आ व इन्द्रम्' इति द्वाविंशत्यृचं सप्तमं सूक्तं शुनःशेपस्यार्षं गायत्रम्। 'अस्माकम्' इत्येषा पादनिचृद्गायत्री। 'त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४) इति उक्तत्वात्। 'शश्वदिन्द्रः' इत्येषा त्रिष्टुप्। आदितः षोडशर्च ऐन्द्रः। 'आश्विनावश्वावत्या' इत्याद्यास्तिस्र आश्विन्यः। 'कस्त उषः' इत्याद्यास्तिस्र उषोदेवताकाः। तथा च अनुक्रमणिका—'आ वो व्यधिकास्माकं पादनिचृच्छश्वत्त्रिष्टुप्परौ तृचावाश्विनोषस्यौ' इति ॥

आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम्। मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥

आ। वः। इन्द्रम्। क्रिविम्। यथा। वाजऽयन्तः। शतऽक्रतुम्।

मंहिष्ठम्। सिञ्चे। इन्दुऽभिः ॥ १ ॥

[V]वाजयन्तः अन्नमिच्छन्तो वयं शुनःशेपाः हे ऋत्विग्यजमानाः [V]वः युष्माकं संबन्धिनमिमम् [V]इन्द्रम् [V]इन्दुभिः सोमैः [V]आ [V]सिञ्चे सर्वतः सिञ्चामहे तर्पयामः। कीदृशम्। [V]शतक्रतुं शतसंख्याककर्मोपेतं [V]मंहिष्ठम् अतिशयेन प्रवृद्धम्। सेचने दृष्टान्तः। [V]यथा येन प्रकारेण [V]क्रिविम् अवटं जलेन पूरयन्ति तद्वत्। क्रिविशब्दः 'वव्रिः काटुः' इत्यादिषु चतुर्दशसु कूपनामसु 'क्रिविः कूपः सूदः' (नि. ३. २३. ८) इति पठितम् ॥ क्रिविम्। 'कृती छेदने'। कृत्यते इति क्रिविः। 'क्रिविघृष्विच्छविस्थवि°' (उ. सू. ४. ४९६) इत्यादौ क्विन्प्रत्ययान्तो निपातितः। अत एव तशब्दलोपः। नित्त्वादाद्युदात्तत्वम्। यथा। 'यथेति पादान्ते' इति सर्वानुदात्तत्वम्। वाजयन्तः। वाजमात्मन इच्छन्तः। 'सुप आत्मनः क्यच्'। 'न च्छन्दस्यपुत्रस्य°' इति ईत्वदीर्घत्वयोर्निषेधः, 'अश्वाघस्यात्' इति पुनर्दीर्घविधानात् ज्ञापकात्। मंहिष्ठम्। 'महि वृद्धौ'। अतिशयेन मंहिता मंहिष्ठः। 'तुश्छन्दसि' (पा. सू. ५. ३. ५९) इति तृजन्तात् इष्ठन्प्रत्ययः। 'तुरिष्ठेमेयःसु' (पा. सू. ६. ४. १५४) इति तृलोपः। इष्ठनो नित्त्वादाद्युदात्तत्वम्। सिञ्चे। 'षिचिर् क्षरणे'। व्यत्ययेन एकवचनम्। 'शे मुचादीनाम्' इति नुमागमः ॥

शतं वा यः शुचीनां सहस्रं वा समाशिराम्। एदु निम्नं न रीयते ॥ २ ॥

शतम्। वा। यः। शुचीनाम्। सहस्रम्। वा। सम्ऽआशिराम्।

आ। इत्। ऊँ इति। निम्नम्। न। रीयते ॥ २ ॥

[V]यः इन्द्रः [V]शुचीनां शुद्धानां सोमानां [V]शतं [V]वा शतसंख्याकं समूहं वा [V]समाशिरां समीचीनेन आशिराख्येन श्रपणद्रव्येणोपेतानां सोमानां [V]सहस्रं [V]वा सहस्रसंख्याकं समूहं वा [V]एदु [V]रीयते आगच्छत्येव। सोऽस्माननुगृह्णात्विति शेषः। सोमप्राप्तौ दृष्टान्तः। [V]निम्नं [V]न। यथा निम्नप्रदेशम् आपः आप्नुवन्ति तद्वत् ॥ समाशिराम्। 'श्रीञ् पाके' इत्यस्य समाङ्पूर्वस्य क्विपि 'अपस्पृधेथाम्°' इत्यादौ आशीरादेशो[2] निपातितः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। रीयते। 'रीङ् श्रवणे'। 'दिवादिभ्यः श्यन्'।

---

१. ढ–'वव्रिः खातः काटः' इत्यादिषु। २. झ–आशिरादेशः; ढ–शिरादेशः।

सं यन्मदा॑य शु॒ष्मिण॑ ए॒ना ह्य॑स्यो॒दरे॑ । स॒मु॒द्रो न व्यचो॑ द॒धे ॥ ३ ॥

सम् । यत् । मदा॑य । शु॒ष्मिणे॑ । ए॒ना । हि । अ॒स्य । उ॒दरे॑ । स॒मु॒द्रः । न । व्यचः॑ । द॒धे ॥ ३ ॥

ᵛयत् पूर्वोक्तं शतं सहस्रं वा ᵛशुष्मिणे बलवत इन्द्रस्य ᵛमदाय मदार्थं संगतं भवति । ᵛएना ᵛहि अनेनैव शतेन सहस्रेण च ᵛअस्य इन्द्रस्य ᵛउदरे ᵛव्यचः व्याप्तिः ᵛदधे धृता भवति । तत्र दृष्टान्तः । ᵛसमुद्रो ᵛन समुद्र इव । यथा समुद्रमध्ये जलं व्याप्तं तद्वत् ॥ एना । ‘ सुपां सुलुक्° ’ इति तृतीयायाः डादेशः । व्यचः । ‘ व्यचेः कुटादित्वमनसि ’ ( का. १. २. १. १ ) इति ङिद्भावस्य प्रतिषिद्धत्वात् ‘ ग्रहिज्या° ’ इत्यादिना संप्रसारणं न भवति । असुनो नित्त्वादाद्युदात्तत्वम् । दधे । दधातेः कर्मणि अभ्यासह्रस्वजश्त्वेषु कृतेषु ‘ आतो लोप इटि च ’ इति आकारलोपः । प्रत्ययस्वरेणान्तोदात्तत्वम् । ‘ हि च ’ इति प्रतिषेधात् निघाताभावः ॥

अ॒यमु॑ ते॒ सम॑तसि क॒पोत॑इव गर्भ॒धिम् । वच॒स्तच्चि॑न्न ओहसे ॥ ४ ॥

अ॒यम् । ऊँ इति॑ । ते॒ । सम् । अ॒त॒सि॒ । क॒पोतः॑ऽइव । ग॒र्भ॒ऽधिम् ।

वचः॑ । तत् । चि॒त् । नः॒ । ओ॒ह॒से॒ ॥ ४ ॥

हे इन्द्र ᵛअयमु अयमपि दृश्यमानः सोमः ᵛते त्वदर्थं संपादितः । यं[1] सोमं ᵛसमतसि सम्यक् सातत्येन प्राप्नोषि । तत्र दृष्टान्तः । ᵛकपोतइव । यथा कपोताख्यः पक्षी ᵛगर्भधिं गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् । ᵛतच्चित् तस्मादेव कारणात् ᵛनः अस्मदीयं ᵛवचः ᵛओहसे प्राप्नोषि ॥ अतसि । ‘ अत सातत्यगमने ’[2] । कपोतइव । ‘ कबेरोतच् पश्च ’ ( उ. सू. १. ६२ ) इति ओतच् । व्यत्ययेन मध्योदात्तः । गर्भधिम् । गर्भोऽस्यां धीयते इति गर्भधिः । ‘ कर्मण्यधिकरणे च ’ ( पा. सू. ३. ३. ३९ ) इति किप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ओहसे । ‘ तुहिर् दुहिर् उहिर् अर्दने ’ । व्यत्ययेन आत्मनेपदम् ॥

स्तो॒त्रं रा॑धानां पते॒ गिर्वा॑हो वीर॒ यस्य॑ ते । विभू॑तिरस्तु सू॒नृता॑ ॥ ५ ॥

स्तो॒त्रम् । रा॒धा॒ना॒म् । प॒ते॒ । गिर्वा॑हः । वी॒र॒ । यस्य॑ । ते॒ । विऽभू॑तिः । अ॒स्तु॒ । सू॒नृता॑ ॥ ५ ॥

हे इन्द्र ᵛराधानां ᵛपते धनानां पालक ᵛगिर्वाहः गीर्भिरुह्यमान ᵛवीर शौर्योपेत ᵛयस्य ᵛते तव ᵛस्तोत्रम् ईदृशं भवति तस्य तव ᵛविभूतिः लक्ष्मीः ᵛसूनृता प्रियसत्यरूपा ᵛअस्तु॥ स्तोत्रम् । ‘दाम्नीशस° ’ ( पा. सू. ३. २. १८२ ) इति ष्ट्रन् । पश्चात् अर्शआद्यच् । अथवा स्तोतुरिदमित्यर्थे अण् । ‘ संज्ञापूर्वको विधिरनित्यः ’ इति वृद्धिर्न । राधानां पते । राघ्नुवन्ति एभिरिति राधानि धनानि । ‘ सुबामन्त्रिते° ’ इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य निघातः । गिर्वाहः । ‘ वह प्रापणे ’ । ‘वहिहाधाञ्भ्यश्छन्दसि’ इति कारकपूर्वस्यापि वहतेः असुन्प्रत्ययः, ‘गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं ’ च इति उक्तत्वात् । ‘ णित् ’ इत्यनुवृत्तेः उपधावृद्धिः । पूर्वपदस्य ‘ वोरुपधायाः° ’ ( पा. सू. ८.

---

१. झ-ढ–तम् । २. श-ष–‘ सातत्यगमने ’ इत्यस्यानन्तरं ‘ लटि सिप् । शप् । तिङ्ङतिङः इति निघातः ’ इत्यधिकम् ।

२. ७६ ) इति दीर्घस्याभावश्छान्दसः। पाष्ठिकम् आमन्त्रिताद्युदात्तत्वम्। विभूतिः। 'तादौ च निति०' इति गतेः प्रकृतिस्वरत्वम् ॥ ॥ २८ ॥

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो। समन्येषु ब्रवावहै ॥ ६ ॥

ऊर्ध्वः। तिष्ठ। नः। ऊतये। अस्मिन्। वाजे। शतक्रतो इति शतऽक्रतो।
सम्। अन्येषु। ब्रवावहै ॥ ६ ॥

हे शतक्रतो शतसंख्याककर्मोपेत अस्मिन् प्रसक्ते वाजे संग्रामे नः अस्माकम् ऊतये रक्षणाय ऊर्ध्वः उन्नतः उत्सुकः तिष्ठ भव। त्वं च अहं च मिलित्वा अन्येषु कार्यान्तरेषु सं ब्रवावहै सम्यक् विचारयावः ॥ तिष्ठ। 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः। ऊतये। 'ऊतियूति०' इत्यादिना क्तिन उदात्तत्वम्। अस्मिन्। 'ऊडिदम्०' इत्यादिना सप्तम्या उदात्तत्वम् ॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये ॥ ७ ॥

योगेऽयोगे। तवःऽतरम्। वाजेऽवाजे। हवामहे। सखायः। इन्द्रम्। ऊतये ॥ ७ ॥

योगेयोगे प्रवेशेप्रवेशे तत्तत्कर्मोपक्रमे वाजेवाजे कर्मविघातिनि तस्मिंस्तस्मिन् संग्रामे तवस्तरम् अतिशयेन बलिनम् इन्द्रमूतये रक्षार्थं सखायः सखिवत् प्रिया वयं हवामहे आह्वयामः ॥ योगेयोगे। 'युजिर् योगे'। 'हलश्च' इति घञ्। 'चजोः कु घिण्ण्यतोः' ( पा. सू. ७. ३. ५२ ) इति कुत्वम्। घञो ञित्त्वादाद्युदात्तत्वम्। 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावे सति आम्रेडितानुदात्तत्वम्। तवस्तरम्। तवसः शब्दात् 'अस्मायामेधा०' ( पा. सू. ५. २. १२१ ) इति मत्वर्थीयो विनिः। तस्य च्छान्दसो लोपः ॥

आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः। वाजेभिरुप नो हवम् ॥ ८ ॥

आ। घ। गमत्। यदि। श्रवत्। सहस्रिणीभिः। ऊतिऽभिः। वाजेभिः। उप। नः। हवम् ॥ ८ ॥

यदि श्रवत् यद्ययम् इन्द्रः नः अस्मदीयं हवम् आह्वानं शृणुयात् तदानीं स्वयमेव सहस्रिणीभिरूतिभिः बहुभिः पालनैः वाजेभिः अन्नैश्च सह उप समीपे आ घ अवश्यम् आगमत् आगच्छेत् ॥ घ। 'ऋचि तुनुघ०' इत्यादिना संहितायां दीर्घः। गमत्। 'लिङर्थे लेट्'। 'लेटोऽडाटौ' इति अडागमः। 'इतश्च लोपः०' इति इकारलोपः। यद्वा। छान्दसे लुङि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (पा. सू. ३. १. ५५) इति च्लेः अङादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। श्रवत्। 'श्रु श्रवणे'। पूर्ववत् लेटि अडागमः। वाजेभिः। 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः। हवम्। 'भावेऽनुपसर्गस्य' इति ह्वयतेः अप् संप्रसारणं च। अपः पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ॥

---

१, झ-स-घा।

अनु॑ प्र॒त्नस्यौक॑सो हुवे तुविप्र॒तिं नर॑म् । यं ते॒ पूर्वं॑ पि॒ता हु॒वे ॥ ९ ॥

अनु॑ । प्र॒त्नस्य॑ । ओक॑सः । हु॒वे । तु॒वि॒ऽप्र॒तिम् । नर॑म् । यम् । ते॒ । पूर्व॑म् । पि॒ता । हु॒वे ॥९॥

ᐯप्रत्नस्य पुरातनस्य ᐯओकसः स्थानस्य स्वर्गरूपस्य सकाशात् ᐯतुविप्रतिं बहून् यजमानान् प्रतिगन्तारं[1] ᐯनरं पुरुषम् इन्द्रम् ᐯअनु ᐯहुवे अनुक्रमेण कर्मसु आह्वयामि । ᐯयं ᐯते त्वाम् इन्द्रं ᐯपिता अस्मदीयो जनकः ᐯपूर्वं पुरा स्वकीयानुष्ठानकाले ᐯहुवे आहूतवान् । तम् आह्वयामीति पूर्वत्रान्वयः ॥ ओकसः । 'नब्विषयस्य°' इत्याद्युदात्तत्वम् । हुवे । 'ह्वेञ् स्पर्धायां शब्दे च' । इटि 'बहुलं छन्दसि' इति संप्रसारणं परपूर्वत्वम् । गुणे प्राप्ते 'क्ङिति च' इति प्रतिषेधः । उवङादेशः । प्रत्ययस्वरेणान्तोदात्तत्वम् । पादादित्वादनिघातः । तुविप्रतिम् । तुवीनां बहूनां प्रतिगन्तारम् । अत्र प्रतिशब्दो भीमसेनो भीम इतिवत् प्रतिगन्तृशब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति । अतः 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा. सू. १. ४. ९२) इतिवत् सत्त्ववचनत्वेन अनिपातत्वात् अनव्ययत्वे 'पूरणगुण°' (पा. सू. २. २. ११) इत्यादिना न षष्ठीसमासनिषेधः । हुवे । ह्वेञो लिटि 'बहुलं छन्दसि' इति पूर्ववत् संप्रसारणपरपूर्वत्वे । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (पा. सू. ६. १. ८. २) इति द्विर्वचनाभावः । यद्वृत्तयोगादनिघातः ॥

तं त्वा॑ व॒यं वि॑श्ववा॒रा शा॑स्महे पुरुहूत । सखे॑ वसो जरि॒तृभ्यः॑ ॥ १० ॥

तम् । त्वा॒ । व॒यम् । वि॒श्व॒ऽवा॒र॒ । आ । शा॒स्म॒हे॒ । पु॒रु॒ऽहू॒त॒ । सखे॑ । व॒सो॒ इति॑ । ज॒रि॒तृऽभ्यः॑ ॥१०॥

हे ᐯविश्ववार सर्वैर्वरणीय ᐯपुरुहूत बहुभिः स्वस्वकर्मण्याहूत ᐯसखे सखिवत् प्रिय ᐯवसो निवासहेतो इन्द्र ᐯतं पूर्वोक्तगुणयुक्तं त्वां ᐯजरितृभ्यः स्तोतॄणामनुग्रहार्थम् ᐯआ ᐯशास्महे प्रार्थयामहे ॥ आ शास्महे । 'आङः शासु इच्छायाम्' । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । वसो । 'नामन्त्रिते समानाधिकरणे°' इति पूर्वस्य अविद्यमानवत्त्वनिषेधात् पराङ्गवद्भावे सति शेषनिघातेन वा 'आमन्त्रितस्य च' इति वा सर्वानुदात्तत्वम् । जरितृभ्यः । जरतिः स्तुतिकर्मा । तृचश्चित्त्वादन्तोदात्तत्वम् ॥ ॥ २९ ॥

अ॒स्माकं॑ शि॒प्रिणी॑नां॒ सोम॑पाः सोम॒पाव्ना॑म् । सखे॑ वज्रि॒न्त्सखी॑नाम् ॥ ११ ॥

अ॒स्माक॑म् । शि॒प्रिणी॑नाम् । सोम॑ऽपाः । सो॒म॒ऽपाव्ना॑म् । सखे॑ । व॒ज्रि॒न् । सखी॑नाम् ॥ ११ ॥

हे ᐯसोमपाः सोमस्य पातः ᐯसखे सखिवत् प्रिय ᐯवज्रिन् वज्रयुक्तेन्द्र ᐯसखीनां सखिवत् प्रियाणां ᐯसोमपाव्नां सोमस्य पातॄणाम् ᐯअस्माकं ᐯशिप्रिणीनां दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां गवां समूहः त्वत्प्रसादादस्त्विति शेषः ॥ शिप्रिणीनाम् । 'ऋन्नेभ्यो ङीप्' इति ङीप् । तस्य पित्त्वादनुदात्तत्वे सति प्रत्ययस्वरः शिष्यते । सोमपाः । आमन्त्रितस्य सतिशिष्टत्वात् आमन्त्रिताद्युदात्तत्वम् । सोमपाव्नाम् । 'आतो मनिन्°' इत्यादिना वनिप् । 'अल्लोपोऽनः' (पा. सू. ६. ४. १३४) इति अनः अकारस्य लोपः ॥

---

[1] ग-च-छ-झ-फ-र—प्रतिगच्छन्तम् ।

तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये ॥ १२ ॥

तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते । उश्मसि । इष्टये ॥१२॥

हे ᵛसोमपाः ᵛसखे ᵛवज्रिन् ᵛइष्टये अभिलषितार्थं[1] ᵛते तव अनुग्रहं ᵛयथा येन प्रकारेण ᵛउश्मसि वयं कामयामहे त्वं ᵛतथा कुरु । त्वत्प्रसादात् ᵛतत् अभीष्टं ᵛतथा ᵛअस्तु ॥ कृणु । ‘ कृवि हिंसाकरणयोश्च ’ । इदित्त्वात् नुम् । ‘ धिन्विकृण्व्योर च ’ इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः । ‘ अतो लोपः ’ इति तस्य लोपः। तस्य स्थानिवद्भावात् लघूपधगुणाभावः। ‘ उतश्च प्रत्ययादसंयोगपूर्वात् ’ इति हेर्लुक् । उश्मसि । ‘ वश कान्तौ ’ । ‘ इदन्तो मसि ’ । अदादित्वात् शपो लुक् । ग्रहिज्यादिना संप्रसारणम् । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । इष्टये । ‘ इषु इच्छायाम् ’ । क्तिनि ‘ तितुत्र० ’ इत्यादिना इट्प्रतिषेधः । यद्वा । यजतेः क्तिनि ‘ वचिस्वपि० ’ ( पा. सू. ६. १. १५ ) इत्यादिना संप्रसारणम् । व्रश्चादिना षत्वे ष्टुत्वम् । पूर्वस्मिन् पक्षे ‘ मन्त्रे वृष० ’ इति क्तिन उदात्तत्वम् । द्वितीये तु व्यत्ययेन ॥

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १३ ॥

रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥ १३ ॥

ᵛक्षुमन्तः अन्नवन्तो[2] वयं ᵛयाभिः गोभिः सह ᵛमदेम हृष्येम ᵛइन्द्र ᵛसधमादे अस्माभिः सह हर्षयुक्ते सति ᵛनः अस्माकं ता गावः ᵛरेवतीः क्षीराज्यादिधनवत्यः ᵛतुविवाजाः प्रभूतबलाश्च ᵛसन्तु ॥ रेवतीः । रयिशब्दात् मतुपि ‘ रयेर्मतौ बहुलम् ’ इति संप्रसारणं परपूर्वत्वम् । ‘ छन्दसीरः ’ इति मतुपो वत्वम् । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घः । ‘ आरेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् ’ इति रेशब्दात् उत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे । ‘ मद तृप्तियोगे ’ । चौरादिकः । सह मादयतीति सधमादः । पचाद्यच् । ‘ सध मादस्थयोश्छन्दसि ’ ( पा. सू. ६. ३. ९६ ) इति सहशब्दस्य सधादेशः । थाथादिना उत्तरपदान्तोदात्तत्वे प्राप्ते ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम् । तुविवाजाः । ‘ तु ’ इति सौत्रो धातुर्वृद्ध्यर्थः । ‘ अच इः ’ इति इः । संज्ञापूर्वकत्वात् गुणो न भवति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । क्षुमन्तः । ‘ टुक्षु शब्दे ’ । अस्मात् क्विपि तुगभावश्छान्दसः । ‘ ह्रस्वनुड्भ्यां मतुप् ’ इति मतुप उदात्तत्वम् । मदेम । ‘ मदी हर्षे ’ । व्यत्ययेन शप् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम् । ततो धातुस्वरः शिष्यते ॥

आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ॥१४॥

आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णो इति । इयानः ।

ऋणोः । अक्षम् । न । चक्र्योः ॥ १४ ॥

---

१. ढ–अस्मदभिलषितार्थम् । २. च-फ–अन्नवन्तः शब्दवन्तः; ढ–नुवन्तः ।

हे ᵛधृष्णो धाष्टर्ययुक्त इन्द्र ᵛत्वावान् त्वत्सदृशो देवताविशेषः ᵛत्मनाप्तः त्वदनुग्रहवशात्[1] स्वयमेव आप्तः सन् ᵛइयानः अस्माभिर्याच्यमानः ᵛस्तोतृभ्यः स्तोतृणामनुग्रहाय तदभीष्टमर्थं ᵛघ अवश्यम् ᵛआ ᵛऋणोः आनीय प्रक्षिपतु । तत्र दृष्टान्तः । ᵛचक्र्योः रथस्य चक्रयोः ᵛअक्षं ᵛन । यथा अक्षं प्रक्षिपन्ति तद्वत् ॥ त्वावान् । ' वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ' ( पा. सू. ५. २. ३९. १ ) इति वतुप् । ' प्रत्ययोत्तरपदयोश्च ' इति मपर्यन्तस्य त्वादेशः । ' आ सर्वनाम्नः ' ( पा. सू. ६. ३. ९१ ) इति दकारस्य आत्वम् । वतुपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते। त्मना । ' मन्त्रेष्वाङ्यादेरात्मनः ' ( पा. सू. ६. ४. १४१) इति आकारलोपः । धृष्णो । ' ञिधृषा प्रागल्भ्ये ' । ' त्रसिगृधिधृषिक्षिपेः क्नुः ' (पा. सू. ३. २. १४०) । आमन्त्रितानुदात्तत्वम् । इयानः। ' ईङ् गतौ ' । ' छन्दसि लिट् ' ( पा. सू. ३. २. १०५ ) । तस्य ' लिटः कानज्वा ' ( पा. सू. ३. २. १०६ ) इति कानजादेशः । ' अचि श्नुधातु° ' ( पा. सू. ६. ४. ७७ ) इत्यादिना इयङादेशः । ' द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ' इति वचनात् अभ्यासो न क्रियते । ' चितः ' इत्यन्तोदात्तत्वम् । ऋणोः । ' ऋण गतौ ' । लङि व्यत्ययेन तिपः सिपि ' इतश्च ' ( पा. सू. ३. ४. १०० ) इति इकारलोपः । ' तनादिकृञ्भ्य उः ' ( पा. सू. ३. १. ७९ ) । सार्वधातुकगुणः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडागमाभावः । विकरणस्वरेणान्तोदात्तत्वम् । अक्षम् । ' अक्षस्यादेवनस्य ' ( फि. सू. ३५ ) इत्याद्युदात्तत्वम् । चक्र्योः । अकारस्य इकारश्छान्दसः ॥

आ यद्दुवः शतक्रतवा कामं जरितृणाम् । ऋणोरक्षं न शचीभिः ॥ १५ ॥

आ । यत् । दुवः । शतक्रतो इति शतऽक्रतो । आ । कामम् । जरितृणाम् ।

ऋणोः । अक्षम् । न । शचीभिः ॥ १५ ॥

हे ᵛशतक्रतो इन्द्र ᵛयद्दुवः धनं कामितार्थरूपम् ᵛआ स्तोतृभिराप्तव्यमस्ति तं ᵛकामं ᵛजरितृणां स्तोतृणामनुग्रहाय ᵛआ ᵛऋणोः आनीय प्रक्षिपसि । तत्र दृष्टान्तः । ᵛशचीभिः कर्मभिः शकटोचितव्यापारविशेषैः ᵛअक्षं ᵛन यथा अक्षं प्रक्षिपन्ति तद्वत् ॥ शचीभिः । शचीशब्दः शार्ङ्गरवादिङीनन्तः ( पा. सू. ४. १. ७३ ) आद्युदात्तः ॥　　॥ ३० ॥

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।
स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥ १६ ॥

शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि ।

सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ॥ १६॥

तुष्टेन इन्द्रेण दत्तं हिरण्यरथम् अनया प्रतिजग्राह । तथा च ब्राह्मणं—' तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति ' ( ऐ. ब्रा. ७. १६ ) इति । ᵛइन्द्रः ᵛशश्वत् सर्वदा ᵛधनानि वैरिसंबन्धीनि ᵛजिगाय जितवान् अश्वैरिति शेषः । कीदृशैः । ᵛपोप्रुथद्भिः

---

[1] ढ–अस्मदनुग्रहवशात् ।

घासभक्षणानन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः नानदद्भिः नादम् आस्यगतं हेषाशब्दं कुर्वद्भिः शाश्वसद्भिः पुनःपुनर्भृशं वा श्वसद्भिः । दंसनावान् कर्मवान् सनिता दाता सः इन्द्रः नः अस्माकं सनये संभजनार्थं हिरण्यरथं सुवर्णेन निर्मितं रथम् अदात् दत्तवान् । 'स नः स नः' इति द्विरुक्तिरादरार्थम् ॥ पोप्रुथद्भिः । 'प्रोथृ पर्याप्तौ' । अस्मात् यङ्लुकि अभ्यासहलादिशेषौ । 'ह्रस्वः' (पा. सू. ७. ४. ५९) इति ह्रस्वत्वे कृते 'गुणो यङ्लुकोः' (पा. सू. ७. ४. ८२) इति गुणः । धातोरुपधाया उत्वं छान्दसम् । अस्मात् यङ्लुगन्तात् शतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । जिगाय । 'जि जये' । लिटो णलि वृद्धिः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् जि इत्यस्य द्विर्वचनम् । 'सन्लिटोर्जेः' (पा. सू. ७. ३. ५७) इति अभ्यासादुत्तरस्य कुत्वम् । नानदद्भिः । 'णद अव्यक्ते शब्दे' । पूर्ववत् यङ्लुकि 'दीर्घोऽकितः' इति अभ्यासस्य दीर्घः । पूर्ववदाद्युदात्तत्वम् । शाश्वसद्भिः । 'श्वस प्राणने' । अन्यत् सर्वं पूर्ववत् । हिरण्यरथम् । 'समासस्य' इत्यन्तोदात्तत्वम् । अदात् । 'गातिस्था०' इति सिचो लुक् । दंसनावान् । दंसशब्दः 'अप्नः दंसः वेपः' (नि. २. १. ३) इति कर्मनामसु पठितः । दंस एव दंसना । 'तदस्यास्ति०' इति मतुप् । दस्यते अनेनेति दंसना ॥

प्रातरनुवाके आश्विने क्रतौ गायत्रे छन्दसि 'आश्विनावश्वावत्या' इति तृचः । 'अथाश्विनः' इति खण्डे 'अश्विना यज्वरीरिष आश्विनावश्वावत्या' (आश्व. श्रौ. ४. १५) इति सूत्रितम् ॥

आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥ १७ ॥

आ । अश्विनौ । अश्वऽवत्या । इषा । यातम् । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत् ॥१७॥

इन्द्रेण प्रेरितः[1] शुनःशेपः अश्विनौ तुष्टाव । तथा च ब्राह्मणं–'तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन' (ऐ. ब्रा. ७. १६) इति ॥ हे अश्विनौ अश्वावत्या बहुभिरश्वैर्युक्तया शवीरया प्रेर्यमाणया इषा अन्नेन सह आ यातम् अस्मिन् कर्मणि आगच्छतम् । हे दस्रा अश्विनौ युवयोः प्रसादात् गोमत् बहुभिर्गोभिर्युक्तं हिरण्यवत् बहुना हिरण्येन युक्तम् अस्मदीयं गृहमस्त्विति शेषः ॥ अश्वावत्या । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' (पा. सू. ६. ३. १३१) इति दीर्घत्वम् । इषा । 'सावेकाचः०' इति तृतीयाया उदात्तत्वम् । यातम् । 'या प्रापणे' । लोटि तसः तम् । अदादित्वात् शपो लुक् । शवीरया । 'शु गतौ' । 'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' (उ. सू. ४. ४७०) इति ईरन्प्रत्ययो बहुलवचनात् अस्मादपि भवति । नित्त्वादाद्युदात्तत्वम् ॥

समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ १८ ॥

समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ १८ ॥

हे दस्रौ अश्विनौ वां युवयोः संबन्धी रथः समानयोजनः तुल्ययोजनः युवयोर्द्वयोरेकरथारूढत्वात् उभयार्थं सकृदेव युज्यते । युक्तः स रथः अमर्त्यः विनाशरहितः अप्रतिहतगतिरित्यर्थः । अत एव हे अश्विनौ हि यस्मात् समुद्रे अन्तरिक्षे ईयते गच्छति । अन्तरिक्षनामसु[2] पठितं समुद्रशब्दं यास्क एवं व्याचख्यौ–'समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि

---

1. ग-छ-झ-ण-ध-न-र-श-ष-स-ह–प्रेषितः । २. फ-श–'सगरः समुद्रः' इति अन्तरिक्षनामसु ।

समुद्रको भवति समुनत्तीति वा ’ ( निरु. २. १० ) इति । समानयोजनः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अमर्त्यः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ईयते । ‘ ईङ् गतौ ’ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् । ‘ हि च ’ इति निघातप्रतिषेधः ॥

न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥ १९ ॥

नि । अघ्न्यस्य । मूर्धनि । चक्रम् । रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ॥१९॥

हे अश्विनौ युवाम् अघ्न्यस्य हन्तुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य मूर्धनि उपरि चक्रं भवदीयरथसंबन्ध्येकं चक्रं नि येमथुः नियमितवन्तौ । अन्यत् चक्रं परि[1] द्यां द्युलोकस्य परितः ईयते गच्छति ॥ अघ्न्यस्य । अहननम् अघ्नः । ‘ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ’ ( पा. सू. ३. ३. ५८. ४ ) इति हन्तेः कप्रत्ययः । अघ्नमर्हति अघ्न्यः । ‘ छन्दसि च ’ ( पा. सू. ५. १. ६७ ) इति यप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तत्वम् । येमथुः । ‘ यम उपरमे ’ । किति लिटि ‘ अत एकहल्मध्ये° ’ ( पा. सू. ६. ४. १२० ) इति एत्वाभ्यासलोपौ ॥

प्रातरनुवाके आश्विनशस्त्रे उषस्ये क्रतौ गायत्रे छन्दसि ‘ कस्त उषः ’ इति तृचः । ‘ अथोषस्यः ’ इति खण्डे ‘ कस्त उष इति तिस्रः ’ ( आश्व. श्रौ. ४. १४ ) इति सूत्रितम् ॥

कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥ २० ॥

कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ॥ २० ॥

अश्विभ्यां प्रेरितः शुनःशेपः उषसं तुष्टाव । तथा च ब्राह्मणं—‘ तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस ’ ( ऐ. ब्रा. ७. १६ ) इति । हे कधप्रिये स्तुतिप्रिये अमर्त्ये मरणरहिते उषः एतच्छब्दाभिधेये उषःकालाभिमानिनि देवते भुजे तव भोगाय मर्तः मनुष्यः कः विद्यते । हे विभावरि विशेषप्रभावयुक्ते उषो देवि कं पुरुषं नक्षसे प्राप्नोषि तवोचितं भोगं दातुं न कोऽपि मनुष्यः समर्थः । अत एव त्वं कमपि पुरुषं भोगापेक्षया[2] न प्राप्नोषि । ईदृशस्तव महिमेत्यर्थः ॥ ते । ‘ तेमयावेकवचनस्य ’ ( पा. सू. ८. १. २२ ) इति युष्मच्छब्दस्य तेआदेशः सर्वानुदात्तः । कधप्रिये । ‘ कथ वाक्यप्रबन्धे ’ । चुरादिरदन्तः । णौ अतो लोपस्य स्थानिवद्भावात् उपधावृद्ध्यभावः । ‘ चिन्तिपूजिकथिकुम्बिचर्चश्च ’ ( पा. सू. ३. ३. १०५ ) इति अङ्प्रत्ययः । ‘ णेरनिटि ’ इति णिलोपः । ततः टाप् । षष्ठीसमासे ‘ ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ’ ( पा. सू. ६. ३. ६३ ) इति ह्रस्वत्वम् । थकारस्य धकारश्छान्दसः । आमन्त्रितानुदात्तत्वम् । भुजे । ‘ भुज पालनाभ्यवहारयोः ’ । संपदादिलक्षणः क्विप् । ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम् । मर्तः । ‘ असिहसि° ’ इत्यादिना तन्प्रत्ययान्त आद्युदात्तः । नक्षसे । ‘ णक्ष गतौ ’ । विभावरि । ‘ भा दीप्तौ ’ । विपूर्वात् अस्मात् ‘ आतो मनिन्क्वनिब्वनिपश्च ’ इति वनिप् । ‘ वनो र च ’ ( पा. सू. ४. १. ७ ) इति ङीप्; तत्संनियोगेन नकारस्य रेफादेशः । ‘ अम्बार्थनद्योर्ह्रस्वः ’ ( पा. सू. ७. ३. १०७ ) इति ह्रस्वत्वम् ॥

---

१. ढ–द्यां परि । २. श–भोगकाङ्क्षया ।

वयं हि ते अमन्महान्तादा पराकात् । अश्वे न चित्रे अरुषि ॥ २१ ॥

वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् । अश्वे । न । चित्रे । अरुषि ॥२१॥

ᵛअश्वे व्यापनशीले ᵛचित्रे चायनीये ᵛअरुषि आरोचमाने उषःकालाभिमानिनि देवते तव स्वरूपम् ᵛआन्तात् समीपपर्यन्तम् ᵛआ ᵛपराकात् दूरपर्यन्तं ᵛवयं मनुष्याः ᵛन ᵛअमन्महि न बोद्धुं समर्थाः । हिशब्दः प्रसिद्धौ । देवतामहिम्नः पारावारयोरज्ञानमस्मासु प्रसिद्धमित्यर्थः ॥ अमन्महि । 'मन ज्ञाने'। 'बहुलं छन्दसि' इति बहुलवचनात् श्यनो लुक् । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' । 'हि च' इति निघातप्रतिषेधः । अश्वे । 'अशू व्याप्तौ'। 'अशिप्रुषि°' इत्यादिना क्वन्प्रत्ययः । आमन्त्रिताद्युदात्तत्वम् ॥

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥ २२ ॥

त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः । अस्मे इति । रयिम् । नि । धारय ॥२२॥

हे ᵛदिवः ᵛदुहितः द्युदेवतायाः पुत्रि उषो देवि ᵛत्येभिः ᵛवाजेभिः तैरन्नैः सह ᵛत्वम् ᵛआ ᵛगहि अत्रागच्छ । ᵛअस्मे अस्मासु ᵛरयिं धनं ᵛनि ᵛधारय नितरां स्थापय ॥ त्येभिः । 'बहुलं छन्दसि' इति त्यद्शब्दात् भिस ऐसादेशाभावः । गहि । असकृदुक्तम् । दुहितर्दिवः । परस्यापि दिव इत्यस्य दिवः दुहितः इत्यन्वये सति पूर्वत्वात् 'सुबामन्त्रिते°' इति पराङ्गवद्भावेन षष्ठ्यामन्त्रितसमुदायस्य सर्वानुदात्तत्वम् । यद्वा । 'कार्यकालं हि संज्ञापरिभाषम्' ( परिभा. ३ ) इति न्यायेन 'सुबामन्त्रिते°' इत्यस्य 'आमन्त्रिस्य च' इति आष्टमिकेन योगेनैकवाक्यत्वे सति परत्वात् पराङ्गवद्भावे सति सर्वानुदात्तत्वम्। कृतस्वरयोः षष्ठ्यामन्त्रितयोः पश्चात् 'व्यत्ययो बहुलम्' इति व्यत्यस्तप्रयोगः । अस्मे । 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः ॥ ३१ ॥ ॥ ६ ॥

सप्तमेऽनुवाके पञ्च सूक्तानि । तत्र 'त्वमग्ने प्रथमः' इति प्रथमं सूक्तमष्टादशर्चम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । अष्टमीषोडश्यष्टादश्यः त्रिष्टुभः । शिष्टाः त्रिष्टुबन्तपरिभाषया जगत्यः । अग्निर्देवता । तथा च अनुक्रमणिका—'त्वमग्ने ऊना हिरण्यस्तूप आग्नेयं त्रिष्टुबन्त्याष्टमीषोळश्यौ च' इति । प्रातरनुवाके आग्नेये क्रतौ आश्विनशस्त्रे च 'त्वमग्ने प्रथमः' इति सूक्तम् । 'अथैतस्या रात्रेः' इति खण्डे 'त्वमग्ने प्रथमो अङ्गिरा ऋषिर्नू चित्सहोजा अमृतो नि तुन्दते' ( आश्व. श्रौ. ४. १३ ) इति सूत्रितम्। अभिप्लवषडहस्य तृतीयेऽहनि आग्निमारुते शस्त्रे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । तथा च 'तृतीयस्य त्र्यर्यमा' इति खण्डे सूत्रितं—'त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतम्' ( आश्व. श्रौ. ७. ७ ) इति । वाजपेये आग्निमारुते एतत्सूक्तं जातवेदस्यं निविद्धानीयं, 'तृतीयेनाभिप्लविकेनोक्तं तृतीयसवनम्' ( आश्व. श्रौ. ९. ९ ) इत्यतिदिष्टत्वात् ॥

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १ ॥

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा ।
तव । व्रते । कवयः । विद्मनाऽअपसः । अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥ १ ॥

हे Vअग्ने Vत्वं Vप्रथमः आद्यः आङ्गिरसानामृषीणां सर्वेषां जनकत्वात्। तादृशः अङ्गिरोनामक Vऋषिः Vअभवः। तथा च ब्राह्मणं —‘ येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ’ (ऐ. ब्रा. ३. ३४ ) इति। तथा स्वयं Vदेवः भूत्वा Vदेवानाम् अन्येषां Vशिवः शोभनः Vसखा अभवः। Vतव Vव्रते त्वदीये कर्मणि Vकवयः मेधाविनः Vविद्मनापसः ज्ञानेन व्याप्नुवानाः ज्ञातकर्माणो वा Vभ्राजदृष्टयः दीप्यमानायुधाः Vमरुतः मरुत्संज्ञकाः देवाः Vअजायन्त ॥ विद्मनापसः । ‘ विद ज्ञाने ’। विद्मो वेदनम् । बहुलग्रहणात् औणादिको मक्प्रत्ययः । तदस्यास्तीति पामादिलक्षणो नः ( पा. सू. ५. २. १०० )। प्रत्ययस्वरेणान्तोदात्तत्वम् । विद्मनानि अपांसि येषां ते विद्मनापसः । पूर्वपदस्य ‘ अन्येषामपि दृश्यते ’ इति दृशिग्रहणात् अवग्रहसमयेऽपि दीर्घत्वम् । अजायन्त । ‘ जनी प्रादुर्भावे ’। तस्य श्यनि ‘ ज्ञाजनोर्जा ’ ( पा. सू. ७. ३. ७९ ) इति जादेशः । भ्राजदृष्टयः । ‘ भ्राजृ दीप्तौ ’ । व्यत्ययेन शतृ । तस्य लसार्वधातुकानुदात्तत्वे धातुस्वरः । ‘ ऋषी गतौ ’ इत्यस्मात् ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति क्तिजन्त ऋष्टिशब्दः । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ २ ॥

त्वम् । अग्ने । प्रथमः । अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् ।
विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवे ॥ २ ॥

हे Vअग्ने Vत्वं Vप्रथमः आद्यः Vअङ्गिरस्तमः अतिशयेन अङ्गिराः भूत्वा Vकविः मेधावी सन् Vदेवानाम् अन्येषां Vव्रतं कर्म Vपरि Vभूषसि परितः अलंकरोषि । कीदृशस्त्वम् । Vविश्वस्मै Vभुवनाय समस्तलोकानुग्रहार्थं Vविभुः बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः । Vमेधिरः मेधावान् Vद्विमाता द्वयोः अरण्योः उत्पन्नः । यद्वा । द्वयोर्लोकयोः निर्माता । Vआयवे मनुष्यार्थं Vकतिधा Vचित् कतिभिः प्रकारैः सर्वत्र Vशयुः शयानः । तत्तन्मनुष्यगृहेऽवस्थितस्य तव प्रकारा इयन्त इति न केनापि ज्ञायते इत्यर्थः ॥ भूषसि । ‘ भूष अलंकारे ’। भौवादिकः । विभुः । ‘ विप्रसंभ्यो ड्वसंज्ञायाम् ’ ( पा. सू. ३. २. १८० ) इति विपूर्वात् भवतेः डुप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । भुवनाय । ‘ भूसूधूभ्रस्जिभ्यश्छन्दसि ’ ( उ. सू. २. २३८ ) इति क्युन् । योः अनादेशे नित्स्वरेणाद्युदात्तत्वम् । मेधिरः । ‘ मेधृ संगमे च ’। अस्माद्बाहुलक इरन्प्रत्ययः । नित्स्वरः । द्विमाता । द्वे मातरौ यस्यासौ द्विमाता । ‘ नद्यृतश्च ’ ( पा. सू. ५. ४. १५३ ) इति कप्प्रत्ययो न भवति, मातृमातृकयोः भेदेनोपादानात् ‘ नद्यृतश्च ’ इति कबपि विभाष्यते इति तस्य मातृशब्दविषये पाक्षिकत्वोक्तिः[1] । त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वम् । यद्वा । द्वयोर्माता द्विमाता । ‘ समासस्य ’ इत्यन्तोदात्तत्वम् । शयुः । ‘ शीङ् स्वप्ने ’। ‘ भृमृशी° ’ ( उ. सू. १. ७ ) इत्यादिना उप्रत्ययः । कतिधा । डत्यन्तस्य किंशब्दस्य ‘ बहुगणवतुडति संख्या ’ ( पा. सू. १. १. २३ ) इति संख्यासंज्ञायां ‘ संख्याया विधार्थे धा ’ ( पा. सू. ५. ३. ४२ ) इति धाप्रत्ययः । आयवे । ‘ छन्दसीणः ’ ( उ. सू. १. २ ) इति एतेः उण्प्रत्ययः ॥

---

१. झ—पाक्षिकत्वोक्तेः ।

त्वम॑ग्ने प्रथ॒मो मा॑त॒रिश्व॑न आ॒विर्भ॑व सुक्रतू॒या वि॒वस्व॑ते ।
अरे॑जेतां॒ रोद॑सी होतृ॒वूर्येऽस॑घ्नोर्भा॒रमय॑जो म॒हो व॑सो ॥ ३ ॥

त्वम् । अ॒ग्ने॒ । प्र॒थ॒मः । मा॒त॒रिश्व॑ने । आ॒विः । भ॒व॒ । सु॒क्र॒तु॒ऽया । वि॒वस्व॑ते ।
अरे॑जेताम् । रोद॑सी॒ इति॑ । हो॒तृ॒ऽवूर्यै॑ । अस॑घ्नोः । भा॒रम् । अय॑जः । म॒हः । व॒सो॒ इति॑ ॥३॥

हे अग्ने त्वं मातरिश्वने प्रथमः मुख्यो भूत्वा वर्तसे । 'अग्निर्वायुरादित्यः'[1] (निरु. ७.७) इति वाय्वपेक्षया सर्वत्र मुख्यत्वावगमात् । तादृशस्त्वं सुक्रतूया शोभनकर्मेच्छया विवस्वते परिचरते यजमानाय आविर्भव प्रकटो भव । तव सामर्थ्यं दृष्ट्वा रोदसी द्यावापृथिव्यौ अरेजेताम् अकम्पेताम् । 'भ्यसते रेजत इति भयवेपनयोः' ( निरु. ३. २१ ) इति यास्कः । होतृवूर्ये होतृवरणयुक्ते कर्मणि भारं भरणम् असघ्नोः ऊढवानसि । हे वसो निवासहेतो वह्ने महः पूज्यान् देवान् अयजः इष्टवानसि ॥ मातरिश्वने । निर्माणहेतुत्वात् माता अन्तरिक्षम् । तत्र श्वसिति प्राणितीति मातरिश्वा वायुः । 'श्वन्नुक्षन्°' ( उ. सू. १. १५७ ) इत्यादौ मातरिश्वन्शब्दः कन्प्रत्ययान्तो निपातितः । सुक्रतूया । सुक्रतुमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'अकृत्सार्वधातुकयोः°' ( पा. सू. ७. ४. २५ ) इति दीर्घः । क्यजन्तस्य धातुसंज्ञायाम् 'अ प्रत्ययात्' ( पा. सू. ३. ३. १०२ ) इति भावे अकारप्रत्ययः । ततः टाप् । 'सुपां सुलुक्°' इति तृतीयैकवचनस्य डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण तस्य उदात्तत्वम् । संहितायाम् 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । विवस्वते । विवासतिः परिचरणकर्मा । अस्मात् संपदादिलक्षणः क्विप् । व्यत्ययेन उपधाह्रस्वत्वम् । 'तदस्यास्ति°' इति मतुप् । 'मादुपधायाः°' इति मतोः वत्वम् । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाभावः । मतुपः पित्वादनुदात्तत्वम् । धातुस्वरः शिष्यते । रोदसी । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । होतृवूर्ये । होत्रा व्रियते इति होतृवूर्यो यज्ञः । 'वञ् वरणे' । बहुलग्रहणात् औणादिकः क्यप् । 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । 'हलि च' इति दीर्घः । यद्वा । 'वृञ् वरणे' इत्यस्मात् एतिस्तुशास्वित्यादिना ( पा. सू. ३. १. १०९ ) क्यप् । 'अनित्यमागमशासनम्' इति तुगभावः । 'अकृत्सार्वधातुकयोः°' इति दीर्घत्वे पूर्ववत् उत्वदीर्घौ । प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असघ्नोः । 'षघ हिंसायाम्' । अत्र तु वहनार्थः । 'स्वादिभ्यः श्नुः' । पादादित्वादनिघातः । अयजः । भारम् इत्यस्य पूर्वपदस्य वाक्यान्तरगतत्वात् तदपेक्षया अस्य निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' ( पा. सू. ८. १. १८. ५ ) इति वचनात् । महः । 'मह पूजायाम्' । 'क्विप् च' इति क्विप् । 'सुपां सुपो भवन्ति' इति शसो ङसादेशः । 'सावेकाचः°' इति तस्य उदात्तत्वम् । यद्वा । शसि महच्छब्दस्य अच्छब्दलोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' इति शस उदात्तत्वम् ॥

त्वम॑ग्ने॒ मन॑वे॒ द्याम॑वाशयः पुरू॒रव॑से सु॒कृते॑ सु॒कृत्त॑रः ।
श्वा॒त्रेण॒ यत्पि॒त्रोर्मुच्य॑से॒ पर्या त्वा॒ पूर्व॑मनय॒न्नाप॑रं॒ पुन॑ः ॥ ४ ॥

त्वम् । अ॒ग्ने॒ । मन॑वे । द्याम् । अ॒वा॒श॒यः॒ । पु॒रू॒रव॑से । सु॒ऽकृते॑ । सु॒कृत्ऽत॑रः ।
श्वा॒त्रेण॑ । यत् । पि॒त्रोः । मुच्य॑से । परि॑ । आ । त्वा॒ । पूर्व॑म् । अ॒न॒य॒न् । आ । अप॑रम् । पु॒न॒रिति॑ ॥४॥

१. श—सोऽग्निर्वायुरादित्यः ।

हे Vअग्ने Vत्वं Vमनवे मनोरनुग्रहार्थं Vद्यां द्युलोकम् Vअवाशयः शब्दितवानसि । पुण्यकर्मभिः साध्यो द्युलोक इति प्रकटितवानसि । Vसुकृते तव परिचरणं कुर्वते Vपुरूरवसे एतन्नामकस्य राज्ञोऽनुग्रहार्थं Vसुकृत्तरः अतिशयेन शोभनफलकार्यभूः । Vयत् यदा Vपित्रोः अरण्योः Vश्वात्रेण क्षिप्रमथनेन Vपरि Vमुच्यसे परितो मुक्तो भवसि उत्पद्यसे इत्यर्थः । तदानीं Vत्वा अरण्योरुत्पन्नं त्वां Vपूर्वं वेदेः पूर्वदेशम् Vआ Vअनयन् आहवनीयत्वेन स्थापितवन्तः । Vपुनः पश्चात् Vअपरं पश्चिमदेशम् Vआ अनयन् गार्हपत्यरूपेण प्रापितवन्तः । आहवनीयकर्मानुष्ठानादूर्ध्वं गार्हपत्यरूपेण धारितवन्त इत्यर्थः ॥ अवाशयः । 'वाश्रृ शब्दे' । पुरूरवसे । पुरु रौतीति पुरूरवाः । 'रु शब्दे' । अस्मात् औणादिके असुनि 'पुरसि च पुरूरवाः' (उ. सू. ४. ६७१) इति पूर्वपदस्य दीर्घो निपात्यते । सुकृते । 'सुकर्मपापमन्त्रपुण्येषु कृञः' (पा. सू. ३. २. ८९) इति क्विप् । ततः तुक् । पित्रोः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । मुच्यसे । अदुपदेशात् लसार्वधातुकानुदात्तत्वम् । यद्यपि 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् विकरणस्वरः सतिशिष्टोऽपि लसार्वधातुकस्वरस्य बाधको न भवति तथापि धातुस्वरं बाधते एव, 'धातुस्वरं श्नास्वरः' इत्युक्तत्वात् । अतो यक एव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् ॥

त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।

य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥ ५ ॥

त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः ।

यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्रे । विशः । आऽविवाससि ॥५॥

हे Vअग्ने Vत्वं Vवृषभः कामानां वर्षिता Vपुष्टिवर्धनः यजमानस्य धनादिपोषाभिवृद्धिहेतुः Vउद्यतस्रुचे उद्धृतया स्रुचा युक्ताय यजमानाय तदनुग्रहार्थं Vश्रवाय्यः मन्त्रैः श्रवणीयः Vभवसि । Vयः यजमानः Vवषट्कृतिं वषट्कारयुक्ताम् Vआहुतिं Vपरि Vवेद परितो जानाति समर्पयतीत्यर्थः । Vएकायुः मुख्यान्नः[1] त्वम् Vअग्रे प्रथमं तं यजमानं Vविशः तदनुकूलाः प्रजाः Vआविवाससि सर्वतः प्रकाशयसि ॥ पुष्टिवर्धनः । 'वृधु वृद्धौ' । अस्मात् णिजन्तात् नन्द्यादित्वात् ल्युः । लित्स्वरेणोत्तरपदस्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । उद्यतस्रुचे । 'यम उपरमे' । अस्मात् उत्पूर्वात् 'निष्ठा' इति क्तप्रत्यये 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । उद्यता स्रुक् येनेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वेद । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ॥ ॥ ३२ ॥

त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।

यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥ ६ ॥

त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरम् । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे ।

यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् । सम्ऽऋता । हंसि । भूयसः ॥६॥

1. च-फ-मुख्यायुः ।

हे ᵛविचर्षणे विशिष्टज्ञानयुक्त ᵛअग्ने ᵛत्वं ᵛवृजिनवर्तनिं विप्लुतमार्गं सदाचाररहितं ᵛनरं पुरुषं ᵛसक्मन् सचनीये समवेतुं योग्ये ᵛविदथे कर्मणि ᵛपिपर्षि पालयसि पूरयसि वा । सत्कर्मानुष्ठानयुक्तं करोषी-त्यर्थः । ᵛयः त्वं ᵛपरितक्म्ये परितो गन्तव्ये ᵛधने धनवत् शूराणां प्रियतमे ᵛशूरसाता शूरैः संभजनीये युद्धे ᵛदभ्रेभिश्चित् अल्पैरपि शौर्यरहितैः पुरुषैः । 'दभ्रमर्भकमित्यल्पस्य' (निरु. ३. २०) इति यास्कः । ᵛसमृता सम्यक् योद्धुं प्राप्ते सति तदनुग्रहार्थं ᵛभूयसः प्रौढान् प्रतिपक्षिणः शत्रून् ᵛहंसि मारयसि । ईदृशस्तव महिमेत्यर्थः ॥ वृजिनवर्तनिम् । वृजिना वर्तनिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सक्मन् । 'षच समवाये' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'नेड्वशि कृति' इति इट्प्रतिषेधः । न्यङ्क्वादित्वात् (पा. सू. ७. ३. ५३) कुत्वम् । 'सुपां सुलुक्°' इति सप्तम्या लुक् । पिपर्षि । 'पॄ पालनपूरणयोः' । सिपि श्लौ द्विर्भावह्रस्वोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । शूरसाता । 'शु गतौ' । 'शुषिचिमीनां दीर्घश्च' (उ. सू. २. १८३) इति शूरशब्दो रन्प्रत्ययान्त आद्युदात्तः । 'वन षण संभक्तौ' इत्यस्मात् क्तिनन्तः सातिशब्दः । 'जनसनखनां सञ्झलोः' इति आत्वम् । शूराणां सातिः संभजनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्°' इति सप्तम्या डादेशः । परितक्म्ये । 'तक हसने' । अस्मात् औणादिको भावे मक् । तदर्हतीति 'छन्दसि च' (पा. सू. ५. १. ६७) इति यः । 'प्रादयो गताद्यर्थे प्रथमया' (पा. म. २. २. १८. ४) इति समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दभ्रेभिः । 'दम्भु दम्भे' । 'स्फायितञ्चि°' इत्यादिना रक् । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । समृता । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । पूर्ववत् आकारः । हंसि । हन्तेः सिपि 'नश्चापदान्तस्य झलि' (पा. सू. ८. ३. २४) इति अनुस्वारः । यद्वृत्तयोगादनिघातः । भूयसः । 'बहोर्लोपो भू च बहोः' (पा. सू. ६. ४. १५८) इति बहुशब्दात् उत्तरस्य ईयसुनः ईकारलोपो बहोः भूभावश्च । नित्त्वादाद्युदात्तत्वम् ॥

त्वं तम॑ग्ने अमृत॒त्व उ॑त्त॒मे मर्तं॑ दधासि॒ श्रव॑से दि॒वेदि॑वे ।

यस्ता॑तृषा॒ण उ॒भया॑य॒ जन्म॑ने॒ मयः॑ कृ॒णोषि॒ प्रय॒ आ च॑ सू॒रये॑ ॥ ७ ॥

त्वम् । तम् । अ॒ग्ने॒ । अ॒मृ॒त॒ऽत्वे । उ॒त्ऽत॒मे । मर्त॑म् । द॒धा॒सि॒ । श्रव॑से । दि॒वेऽदि॑वे ।

यः । त॒तृ॒षा॒णः । उ॒भया॑य । जन्म॑ने । मयः॑ । कृ॒णोषि॑ । प्रयः॑ । आ । च॒ । सू॒रये॑ ॥ ७ ॥

हे ᵛअग्ने ᵛत्वं ᵛतं ᵛमर्तं तथाविधं त्वत्सेविनं मनुष्यं ᵛदिवेदिवे प्रतिदिनं ᵛश्रवसे अन्नार्थम् ᵛउत्तमे ᵛअमृतत्वे उत्कृष्टमरणरहिते पदे ᵛदधासि धारयसि । ᵛयः यजमानः ᵛउभयाय ᵛजन्मने द्विविधजन्मार्थं द्विपदां चतुष्पदां च लाभायेत्यर्थः । ᵛततृषाणः अतिशयेन तृष्णायुक्तो भवति तस्मै ᵛसूरये अभिज्ञाय यज-मानाय ᵛमयः सुखं, 'यद्वै सुखं तन्मयः' इति श्रुत्यन्तरात् । ᵛप्रयः ᵛच अन्नमपि ᵛआ ᵛकृणोषि सर्वतः करोषि ॥ ततृषाणः । 'ञितृषा पिपासायाम्' । लिटः कानच् । चित्त्वादन्तोदात्त-त्वम् । संहितायां दीर्घश्छान्दसः । कृणोषि । 'कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'चादिलोपे विभाषा' इति निघातप्रतिषेधः ॥

---

१. च-छ-झ-ण-फ-'च'नास्ति ।

त्वं नो॑ अग्ने सनये धना॑नां यशसं॑ कारुं कृ॑णुहि स्तवा॑नः ।
ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ ८ ॥

त्वम् । नः । अग्ने । सनये॑ । धना॑नाम् । यशस॑म् । कारुम् । कृणुहि । स्तवा॑नः ।
ऋध्याम॑ । कर्म॑ । अपसा॑ । नवे॑न । देवैः । द्यावापृथिवी इति॑ । प्र । अवतम् । नः ॥ ८ ॥

हे ᵛअग्ने ᵛस्तवानः स्तूयमानः ᵛत्वं ᵛनः अस्माकं ᵛधनानां ᵛसनये दानार्थं ᵛयशसं यशोयुक्तं ᵛकारुं कर्मणां कर्तारं पुत्रं ᵛकृणुहि कुरु । ᵛनवेन नूतनेन ᵛअपसा प्राप्तेन त्वद्दत्तेन पुत्रेण ᵛकर्म यागदानादिरूपम् ᵛऋध्याम वर्धयाम । हे ᵛद्यावापृथिवी उभे देवते ᵛदेवैः अन्यैः सह ᵛनः अस्मान् ᵛप्रावतं प्रकर्षेण रक्षतम् ॥ यशसम् । अर्शआदित्वात् अच्प्रत्ययः । व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वा । 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' (पा. म. ३. १. ११. ३) इति यशस्शब्दात् क्विप् । तस्य प्रत्ययान्तस्य सनाद्यन्तत्वात् धातुसंज्ञायां 'क्विप् च' इति क्विप्प्रत्ययान्तधातोः सतिशिष्टत्वात् 'धातोः' इत्यन्तोदात्तत्वम् । कृणुहि । 'उतश्च प्रत्ययाच्छन्दोवावचनम्' (पा. सू. ६. ४. १०६. १) इति हेर्लुगभावः । स्तवानः । 'सम्यानच् स्तुवः' (उ. सू. २. २४६) इति बहुलवचनात् केवलस्यापि स्तौतेः आनच्प्रत्ययः । वृषादित्वादाद्युदात्तत्वम् । ऋध्याम । 'ऋधु वृद्धौ' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । यासुट उदात्तत्वम् । द्यावापृथिवी । 'दिवो द्यावा' (पा. सू. ६. ३. २९) इति द्यावादेशः । आमन्त्रितानुदात्तत्वम् ॥

त्वं नो॑ अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृ॑विः ।
तनूकृद्बोधि प्रमतिश्च कारवे त्वं क॑ल्याण वसु विश्वमोपिषे ॥ ९ ॥

त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे॑ । आ । देवः । देवेषु॑ । अनवद्य । जागृ॑विः ।
तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे॑ । त्वम् । कल्याण । वसु॑ । विश्व॑म् । आ । ऊपिषे ॥ ९ ॥

हे ᵛअनवद्य दोषरहित ᵛअग्ने ᵛदेवेषु सर्वेषु मध्ये ᵛजागृविः जागरूकः ᵛत्वं ᵛपित्रोः मातृपितृरूपयोः(?) [1] द्यावापृथिव्योः ᵛउपस्थे समीपस्थाने वर्तमानः सन् ᵛनः अस्माकं ᵛतनूकृत् पुत्ररूपशरीरकारी भूत्वा ᵛबोधि बुध्यस्व । अनुगृहाणेत्यर्थः । तथा ᵛकारवे कर्मकर्त्रे यजमानाय ᵛप्रमतिश्च अनुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः । हे ᵛकल्याण मङ्गलरूप अग्ने ᵛत्वं ᵛविश्वं ᵛवसु सर्वमपि धनम् ᵛओपिषे यजमानार्थमावपसि ॥ उपस्थे । 'सुपि स्थः' (पा. सू. ३. २. ४) इति तिष्ठतेः कः प्रत्ययः [2] । 'आतो लोप इटि च' इति आकारलोपः । 'मरुद्वृधादीनां छन्दस्युपसंख्यानम्' (पा. सू. ६. २. १०६. २) इति पूर्वपदान्तोदात्तत्वम् । जागृविः । 'जागृ निद्राक्षये' । 'जॄशॄस्तजागृभ्यः क्विन्' (उ. सू. ४. ४९४) इति क्विन् । नित्त्वादाद्युदात्तत्वम् । बोधि । 'बुध अवगमने' । 'बहुलं छन्दसि' इति शपो लुक् । 'वा छन्दसि' इति हेः अपित्त्वस्य विकल्पितत्वेन पित्त्वात् अङित्त्वे सति 'अङितश्च' (पा. सू. ६. ४. १०३) इति हेर्धिरादेशः । लघूपधगुणः । धातोरन्त्यलोप-

---

१. न–पितृरूपयोः । २. ढ–कप्रत्ययः ।

श्छान्दसः । प्रमतिः । 'मन ज्ञाने'। क्तिनि 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । प्रकृष्टा मतिः यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ऊपिषे । 'डुवप् बीजसन्ताने'। छान्दसे लिटि 'थासः से'। 'वचिस्वपि°' इत्यादिना संप्रसारणपरपूर्वत्वे । द्विर्भावहलादिशेषौ । क्रादिनियमात् इट् ॥

त्वम॑ग्ने प्रम॑तिस्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् ।
सं त्वा॒ राय॑: श॒तिन॒: सं स॑ह॒स्रिण॑: सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥ १० ॥

त्वम् । अ॒ग्ने॒ । प्रऽम॑तिः । त्वम् । पि॒ता । अ॒सि॒ । न॒: । त्वम् । व॒य॒:ऽकृत् । तव॑ । जा॒मय॑: । व॒यम् ।
सम् । त्वा॒ । राय॑: । श॒तिन॑: । सम् । स॒ह॒स्रिण॑: । सु॒ऽवीर॑म् । य॒न्ति॒ । व्र॒त॒ऽपाम् । अ॒दा॒भ्य॒ ॥ १० ॥

हे ᵛअग्ने ᵛत्वं ᵛप्रमतिः अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोऽसि । तथा ᵛत्वं ᵛनः अस्माकं ᵛपिता पालकः ᵛअसि । तथा ᵛत्वं ᵛवयस्कृत् आयुष्यप्रदोऽसि । ᵛवयम् अनुष्ठातारः ᵛतव ᵛजामयः बन्धवः । हे ᵛअदाभ्य केनापि अहिंसनीय अग्ने ᵛसुवीरं शोभनपुरुषयुक्तं ᵛव्रतपां कर्मणः पालकं त्वां ᵛशतिनः शतसंख्यायुक्ताः ᵛरायः धनानि ᵛसं ᵛयन्ति सम्यक् प्राप्नुवन्ति । तथा ᵛसहस्रिणः सहस्रसंख्याकाः रायः ᵛसं यन्ति ॥ सुवीरम् । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'वीरवीर्यौ च' (पा. सू. ६. २. १२०) इत्युत्तरपदाद्युदात्तत्वम् । अदाभ्य । दभिः प्रकृत्यन्तरमस्तीति केचिदाहुः । 'दभेश्चेति वक्तव्यम्' (पा. सू. ३. १. १२४. ३) इति ण्यत् ॥ ॥ ३३ ॥

त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् ।
इळा॑मकृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ॥ ११ ॥

त्वाम् । अ॒ग्ने॒ । प्र॒थ॒मम् । आ॒युम् । आ॒यवे॑ । दे॒वाः । अ॒कृ॒ण्व॒न् । नहु॑षस्य । वि॒श्पति॑म् ।
इळा॑म् । अ॒कृ॒ण्व॒न् । मनु॑षस्य । शास॑नीम् । पि॒तुः । यत् । पु॒त्रः । मम॑कस्य । जाय॑ते ॥ ११ ॥

हे ᵛअग्ने ᵛत्वां ᵛप्रथमं पुरा ᵛदेवाः ᵛआयवे आयोः मनुष्यरूपस्य ᵛनहुषस्य एतन्नामकराजविशेषस्य ᵛआयुं मनुष्यरूपं ᵛविश्पतिं सेनापतिम् ᵛअकृण्वन् कृतवन्तः । तथा ᵛमनुषस्य मनोः ᵛइळाम् एतन्नामधेयां पुत्रीं ᵛशासनीं धर्मोपदेशकर्त्रीम् ᵛअकृण्वन् कृतवन्तः । तथा च तैत्तिरीयैराम्नायते–'इडा वै मानवी यज्ञानूकाशिन्यासीत्' (तै. ब्रा. १. १. ४. ४) इति । वाजसनेयिनोऽप्येवमामनन्ति–'प्रयाजानुयाजानां मध्ये मामवकल्पय मया सर्वानवाप्स्यसि कामानिति सा मनुमन्वशादिति यत्[3] शात्' इति[1] । ᵛयत् यदा ᵛममकस्य मदीयस्य हिरण्यस्तूपसंबन्धिनः यः पिता अङ्गिराः तस्य ᵛपितुः ᵛपुत्रः ᵛजायते । तदानीं हे अग्ने त्वमेव पुत्ररूप आसीरिति शेषः ॥ आयवे । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (पा. सू. २. ३. ६२. १) इति चतुर्थी । नहुषस्य । 'णह बन्धने[2]'। 'नहिकलिहन्यर्तिलसिभ्य उषच्' (उ. सू. ४. ५१५) । वृषादित्वादाद्युदात्तत्वम् । विश्पतिम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । मनुषस्य । 'मनेर्नित्' इति उषच् । नित्त्वादाद्युदात्तत्वम्[3] । शासनीम् ।

---

१. क्ष-स–'यत् शात् इति' नास्ति । २. ढ–बन्धने । तस्मात् । ३. च-छ-क्ष-न-फ-श-ष-स-ह–बाहुलकाद्वृद्ध्यभावः । पूर्वपदाद्युदात्तत्वम् ।

शिष्यतेऽनयेति शासनी । ' करणाधिकरणयोश्च ' इति ल्युट् । ' टिड्ढाणञ्° ' ( पा. सू. ४. १. १५ ) इत्यादिना ङीप् । लित्स्वरेणाद्युदात्तत्वम् । ममकस्य । ममेदमित्यर्थे ' तस्येदम् ' ( पा. सू. ४. ३. १२० ) इति अणि ' तवकममकावेकवचने ' ( पा. सू. ४. ३. ३ ) इति अस्मच्छब्दस्य ममकादेशः । ' संज्ञापूर्वको विधिरनित्यः ' इति वृद्ध्यभावः । व्यत्ययेनाद्युदात्तत्वम् ॥

त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।

त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते ॥ १२ ॥

त्वम् । नः॒ । अ॒ग्ने॒ । तव॑ । दे॒व॒ । पा॒युऽभिः॑ । म॒घोनः॑ । र॒क्ष॒ । त॒न्वः॑ । च॒ । व॒न्द्य॒ ।

त्रा॒ता । तो॒कस्य॑ । तन॑ये । गवा॑म् । अ॒सि॒ । अनि॑ऽमेषम् । रक्ष॑माणः । तव॑ । व्र॒ते ॥ १२ ॥

हे ᵛवन्द्य वन्दनीय ᵛअग्ने ᵛदेव ᵛत्वं ᵛतव ᵛपायुभिः त्वदीयैः पालनैः ᵛमघोनः धनयुक्तान् ᵛनः अस्मान् ᵛरक्ष । तथा ᵛतन्वश्च तनूः पुत्रदेहानपि रक्ष । ᵛतोकस्य अस्मदीयस्य पुत्रस्य यः तनयोऽस्मत्पौत्रादिः ᵛतव ᵛव्रते त्वदीये कर्मणि ᵛअनिमेषं निरन्तरं ᵛरक्षमाणः सावधानो वर्तते तस्मिन्[1] या गावः सन्ति तासां ᵛगवां ᵛत्राता रक्षकः ᵛअसि । ईदृशस्य तव अस्मद्रक्षणे किमु वक्तव्यमित्यर्थः ॥ मघोनः । शसि ' श्वयुवमघोनामतद्धिते ' ( पा. सू. ६. ४. १३३ ) इति संप्रसारणम् । तन्वः । ' सुपां सुपो भवन्ति ' इति शसो जसादेशः । पूर्वसवर्णदीर्घस्य ' दीर्घाज्जसि च ' इति प्रतिषेधः । ' उदात्तस्वरितयोर्यणः° ' इति स्वरितत्वम् । शसि हि ' उदात्तयणो हल्पूर्वात् ' इति विभक्त्युदात्तत्वं स्यात् ॥

त्वम॑ग्ने॒ यज्य॑वे पा॒युरन्त॑रोऽनिष॒ङ्गाय॑ चतुरक्ष इ॒ध्यसे ।

यो रा॒तह॑व्योऽवृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तम् ॥ १३ ॥

त्वम् । अ॒ग्ने॒ । यज्य॑वे । पा॒युः । अन्त॑रः । अ॒नि॒ष॒ङ्गाय॑ । च॒तुः॒ऽअ॒क्षः॒ । इ॒ध्यसे॒ ।

यः । रा॒तऽह॑व्यः । अ॒वृ॒काय॑ । धाय॑से । की॒रेः । चि॒त् । मन्त्र॑म् । मन॑सा । व॒नोषि॑ । तम् ॥ १३ ॥

हे ᵛअग्ने ᵛत्वं ᵛयज्यवे यज्योः[2] यजमानस्य ᵛपायुः पालकः ᵛअन्तरः समीपवर्ती सन् ᵛअनिषङ्गाय रक्षोभिरसंबद्धाय यज्ञाय ᵛचतुरक्षः दिक्चतुष्टयेऽपि इन्द्रियस्थानीयज्वालायुक्तः ᵛइध्यसे दीप्यसे । ᵛअवृकाय अहिंसकाय ᵛधायसे पोषकाय तुभ्यं ᵛरातहव्यः दत्तहविष्कः ᵛयः यजमानोऽस्ति ᵛकीरेश्चित् स्तोतुरेव सतः तस्य संबन्धिनं ᵛमन्त्रं त्वदीयस्तोत्ररूपं ᵛमनसा त्वदीयेन चित्तेन ᵛवनोषि याचसि ॥ यज्यवे । ' यजिमनिशुन्धि° ' ( उ. सू. ३. ३०० ) इत्यादिना यजतेः युप्रत्ययः[3] । पायुः । ' कृवापाजि° ' इत्यादिना उण् । ' आतो युक् चिण्कृतोः ' ( पा. सू. ७. ३. ३३ ) इति युगागमः । अनिषङ्गाय । ' षञ्ज संगे ' । न विद्यते निषङ्गोऽस्येति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । चतुरक्षः । चत्वार्यक्षीणि ज्वालारूपाणि यस्यासौ चतुरक्षः । ' बहुव्रीहौ सक्थ्यक्ष्णोः° ' ( पा. सू. ५. ४. ११३ ) इति समासान्तः षच्प्रत्ययः । ' चितः ' इत्यन्तोदात्तत्वम् । धायसे । ' वहि-

---

१. च-फ-तस्मिन् तनये । २. ढ-यज्वनः । ३. त-श-ष-युप्रत्ययः । वृषादित्वादाद्युदात्तः ।

हाधाञ्भ्यश्छन्दसि ’ इति असुन् । ‘ णित् ’ इत्यनुवृत्तेः ‘ आतो युक् चिण्कृतोः ’ इति युगागमः । कीरिः । ‘ कृत संशब्दने ’ । अस्मात् ण्यन्तात् ‘ अच इः ’ इति इप्रत्यये णिलोपे धातोरन्त्यलोपश्छान्दसः । मन्त्रम् । ‘ मन्त्रि गुप्तभाषणे ’ । पचाद्यचि वृषादिषु पाठादाद्युदात्तत्वम् । वनोषि । ‘ वनु याचने ’ । ‘ तनादिकृञ्भ्य उः ’ । प्रत्ययस्वरः ॥

त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद्रेक्ण॑: पर॒मं व॒नोषि॒ तत् ।
आ॒ध्रस्य॑ चि॒त्प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्र दिशो॑ वि॒दुष्ट॑रः ॥१४॥

त्वम् । अ॒ग्ने॒ । उ॒रु॒ऽशंसा॑य । वा॒घते॑ । स्पा॒र्हम् । यत् । रेक्ण॑: । प॒र॒मम् । व॒नोषि॑ । तत् ।
आ॒ध्रस्य॑ । चि॒त् । प्रऽम॑तिः । उ॒च्य॒से॒ । पि॒ता । प्र । पाक॑म् । शास्सि॑ । प्र । दिश॑: । वि॒दुःऽत॑रः ॥१४॥

हे ᵛअग्ने ᵛत्वम् ᵛऊरुशंसाय बहुभिः स्तोतव्याय ᵛवाघते ऋत्विजे तदुपकारार्थं ᵛस्पार्हं स्पृहणीयं ᵛपरमम् उत्तमं ᵛयद्रेक्णः धनमस्ति[1] ᵛतत् धनं ᵛवनोषि अनुष्ठाता लभताम् इति कामयसे । तथा त्वम् ᵛआध्रस्य ᵛचित् सर्वतो धारणीयस्य पोषणीयस्य दुर्बलस्य यजमानस्यापि ᵛप्रमतिः प्रकृष्टबुद्धियुक्तः ᵛपिता पालकः इत्यभिज्ञैः ᵛउच्यसे । तथा ᵛविदुष्टरः अतिशयेनाभिज्ञस्त्वं ᵛपाकं शिशुम् । ‘ पोतः पाकोऽर्भको डिम्भः ’ (अम. २. ५. ३८) इत्यभिधानात् । यास्कोऽप्येवमाह—‘ पाकः पक्तव्यो भवति ’ (निरु. ३. १२) । तथाविधं यजमानं ᵛप्र ᵛशास्सि प्रकर्षेण अनुशिष्टं करोषि । तथा ᵛदिशः प्राच्यादिकाः ᵛप्रशास्सि । त्वदीयशासनाभावे अनुष्ठातॄणां विभ्रमः[2] स्यात् । तथा च श्रूयते—‘ देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् ’ इति । स भ्रमो दक्षिणादिग्गत[3] अग्निना निवर्तते[4] । तदपि तत्रैवाम्नातं—‘ पथ्यां स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा ’ ( तै. सं. ६. १. ५. १–२ ) इति । ऐतरेयिणापि तथैवाम्नातम्—‘ अथो एतं वरमवृणीत मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणाम् ’ ( ऐ. ब्रा. १. ७ ) इति ॥ उरुशंसाय । ‘ शंसु स्तुतौ ’ । शस्यते इति शंसः । कर्मणि घञ् । ञित्स्वरेणाद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । स्पार्हम् । स्पृहासंबन्धि । ‘ तस्येदम् ’ इति अण् । रेक्णः । ‘ रिचिर् विरेचने ’ । ‘ रिचेर्धने घिच्च ’ ( उ. सू. ४. ६३८ ) इति असुन् । चकारात् नुडागमः । ‘ चजोः कु घिण्ण्यतोः ’ ( पा. सू. ७. ३. ५२ ) इति कुत्वम् । आध्रस्य । ‘ ध्रै तृप्तौ ’ । ‘ आदेच उपदेशेऽशिति ’ (पा. सू. ६. १.४५) इति आत्वम् । ‘ आतश्चोपसर्गे ’ ( पा. सू. ३.१. १३६) इति कप्रत्ययः । शास्सि । ‘ शासु अनुशिष्टौ ’। अदादित्वात् शपो लुक् । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः । पाकं च प्रशास्सि दिशश्च प्रशास्सि इत्यत्र चार्थो गम्यते । अतः ‘ चादिलोपे विभाषा ’ इति प्रथमा तिङ्विभक्तिर्न निहन्यते । विदुष्टरः । विद्वच्छब्दात् तरपि ‘ अयस्मयादीनि च्छन्दसि ’ (पा. सू. १. ४. २०) इति भसंज्ञायां ‘ वसोः संप्रसारणम् ’ इति संप्रसारणं परपूर्वत्वम् । ‘ शासिवसि° ’ इति षत्वम् । तरपः पित्त्वादनुदात्तत्वे वसोः स्वरेण उकार उदात्तः ॥

---

१. च-फ—गोधनमस्ति । २. ढ—दिग्भ्रमः; न—भ्रमः । ३. ज्ञ-ढ—दाक्षिणदिशातः । ४. ढ-न—निवर्त्यते

त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः ।
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥ १५ ॥

त्वम् । अग्ने । प्रयतऽदक्षिणम् । नरम् । वर्मऽइव । स्यूतम् । परि । पासि । विश्वतः ।
स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् । जीवऽयाजम् । यजते । सः । उपऽमा । दिवः ॥१५॥

हे ᵛअग्ने ᵛत्वं ᵛप्रयतदक्षिणं येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशं ᵛनरं पुरुषं यजमानं ᵛविश्वतः सर्वतः ᵛपरि ᵛपासि सम्यक् पालयसि । तत्र दृष्टान्तः । ᵛस्यूतं निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितं ᵛवर्मेव यथा कवचं युद्धे पालयति तद्वत् । ᵛस्वादुक्षद्मा स्वाद्वन्नः ᵛवसतौ निवासभूते स्वगृहे ᵛस्योनकृत् अतिथीनां सुखकारी ᵛयः यजमानः ᵛजीवयाजं जीवयजनसहितं यज्ञं यद्वा जीवनिष्पाद्यं ᵛयजते अनुतिष्ठति ᵛसः यजमानः ᵛदिवः स्वर्गस्य ᵛउपमा दृष्टान्तो भवति । यथा स्वर्गोऽनुष्ठातॄन् सुखयति तथा त्वमपि ऋत्विगादीनित्यर्थः ॥ स्यूतम् । ‘ षिवु तन्तुसंताने ’ । ‘ निष्ठा ’ इति क्तः । ‘ यस्य विभाषा ’ इति इट्प्रतिषेधः । ‘ छ्वोः शूडनुनासिके च ’ ( पा. सू. ६. ४. १९ ) इति वकारस्य ऊडादेशः । स्वादून् क्षदतीति स्वादुक्षद्मा । क्षदतिः अत्तिकर्मा । ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति मनिन् । नित्त्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । बहुव्रीहौ तु व्यत्ययेन । जीवयाजम् । जीवाः ऋत्विजः इज्यन्ते दक्षिणाभिः पूज्यन्ते अत्रेति अधिकरणे घञ् । कुत्वाभावश्छान्दसः । यद्वा । जीवैः पशुभिः याजनं जीवयाजः । याजयतेर्घञ् । ‘ णेरनिटि ’ इति णिलोपस्य ‘ अचः परस्मिन्° ’ इति स्थानिवद्भावात् ‘ चजोः कु घिण्ण्यतोः ’ इति कुत्वाभावः । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । सोपमा । ‘ सोऽचि लोपे चेत्पादपूरणम् ’ इति संहितायां सोर्लोपः । दिवः । ‘ ऊडिदम्° ’ इति विभक्तेरुदात्तत्वम् ॥ ॥ ३४ ॥

‘ इमामग्ने ’ इत्यनया अनाहिताग्निः आर्त्विज्यं कृत्वा स्वाग्नावाहुतिं जुहुयात् । ‘ ऋत्विजो वृणीते ’ इति खण्डे ‘ एवमनाहिताग्निर्गृह्य इमामग्ने शरणिं मीमृषो नः ’ ( आश्व. गृ. १. २३. २३ ) इति सूत्रितम् ॥

इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥ १६ ॥

इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । अगाम । दूरात् ।
आपिः । पिता । प्रऽमतिः । सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ॥१६॥

हे ᵛअग्ने त्वं ᵛनः अस्मत्संबन्धिनीम् ᵛइमाम् इदानीम् संपादितां ᵛशरणिं हिंसां व्रतलोपरूपां ᵛमीमृषः क्षमस्व । तथा त्वदीयसेवाम् अग्निहोत्रादिरूपां परित्यज्य ᵛदूरात् दूरदेशं[1] ᵛयम् ᵛइममध्वानम् ᵛअगाम वयं गतवन्तः तमपि क्षमस्वेति शेषः । ᵛसोम्यानां सोमार्हाणामनुष्ठातॄणां ᵛमर्त्यानां त्वम्

१. ढ–दूरदेशनिमित्तम् ।

आप्यादिगुणयुक्तः असि । आपिः प्रापणीयः पिता पालकः प्रमतिः प्रकृष्टमननयुक्तः भृमिः भ्रामकः कर्मनिर्वाहक इत्यर्थः । ऋषिकृत् दर्शनकारी । अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः ॥ शरणिम् । ‘ शॄ हिंसायाम् ’ इत्यस्मात् औणादिकः अनिप्रत्ययः । मीमृपः । ‘ मृष तितिक्षायाम् ’ । अस्मात् णौ चङि गुणे प्राप्ते ‘ नित्यं छन्दसि ’ ( पा. सू. ७. ४. ८ ) इति उपधर्कारस्य ऋकारादेशः । णिलोपद्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि । ‘ तिङ्ङतिङः ’ इति निघातः । अगाम । ‘ इण् गतौ ’ । ‘ इणो गा लुङि ’ ( पा. सू. २. ४. ४५ ) इति गादेशः । ‘ गातिस्था° ’ इति सिचो लुक् । अडागम उदात्तः । भृमिः । ‘ भ्रमु अनवस्थाने ’ । ‘ भ्रमेः संप्रसारणं च ’ (उ. सू. ४. ५६०) इति इन्प्रत्ययः । संप्रसारणे परपूर्वत्वम् । ‘ इगुपधात्कित् ’ इत्यनुवृत्तेः कित्त्वाद्गुणप्रतिषेधः । नित्त्वादाद्युदात्तत्वम् ॥

मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।

अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम् ॥ १७ ॥

मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे ।

अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥१७॥

हे शुचे शुद्धियुक्त अङ्गिरः अङ्गनशील हविरादानाय तत्र तत्र गमनशील अग्ने अच्छ आभिमुख्येन सदने देवयजनदेशे याहि गच्छ । तत्र चत्वारो दृष्टान्ताः । मनुष्वत् यथा मनुः अनुष्ठानदेशे गच्छति, अङ्गिरस्वत् यथा च अङ्गिराः गच्छति, ययातिवत् यथा ययातिर्नाम राजा गच्छति, पूर्ववत् अन्ये च पूर्वपुरुषाः यथा गच्छन्ति । यथा मन्वादयो यज्ञे गच्छन्ति तद्वत् । अथवा मन्वादीनां यज्ञे यथा त्वं गच्छसि तद्वत् । गत्वा च दैव्यं देवतासमूहरूपं जनम् आ वह अस्मिन् कर्मणि आनय । आनीय च बर्हिषि आस्तीर्णे[1] दर्भे[1] आ सादय तान् देवान् उपवेशय । उपवेश्य च प्रियम् अभीष्टं हविः यक्षि च देहि ॥ मनुष्वत् । ‘ तेन तुल्यम्° ’ इति प्रथमार्थे वा ‘ तत्र तस्येव ’ इति षष्ठ्यर्थे वा वतिः ( पा. सू. ५. १. ११५–११६ ) । अयस्मयादित्वेन भत्वात् रुत्वाद्यभावः । प्रत्ययस्वरः । एवम् अङ्गिरस्वत् इत्यादिषु । वह । ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घः । यक्षि । लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ सेर्ह्यपिच्च ’ इति हेः अभावश्छान्दसः । षत्वकत्वे ॥

साग्निचयने क्रतौ उखासंभरणीयायाम् इष्टौ अग्नेर्ब्रह्मण्वतः पुरोनुवाक्या ‘ एतेनाग्ने ’ इत्येषा । ‘ दर्शपूर्णमासाभ्यामिष्ट्वा ’ इति खण्डे ‘ एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्च ’ ( आश्व. श्रौ. ४. १ ) इति सूत्रितम् ॥

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।

उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ १८ ॥

एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा ।

उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ॥१८॥

---

१. ढ–अस्मिन् कर्मणि ।

हे ᵛअग्ने ᵛएतेन अस्मत्प्रयुक्तेन ᵛब्रह्मणा मन्त्रेण ᵛवर्वृधस्व अभिवृद्धो भव । ᵛशक्ती ᵛवा ᵛविदा ᵛवा अस्मदीयशक्त्या च अस्मदीयज्ञानेन च ᵛते तव ᵛयत् स्तोत्रं ᵛचकृम वयं कृतवन्तः। एतेन ब्रह्मणा इति पूर्वत्रान्वयः । ᵛउत अपि च ᵛअस्मान् अनुष्ठातॄन् ᵛवस्यः वसुमत्तरस्वलक्षणं श्रेयः ᵛप्र ᵛणेषि प्रकर्षेण प्रापय । ᵛनः अस्मान् ᵛवाजवत्या प्रभूतान्नयुक्तया ᵛसुमत्या अनुष्ठानविषयया शोभनबुद्ध्या ᵛसं ᵛसृज संयोजय ॥ वर्वृधस्व । ' वृधु वृद्धौ ' । लेटि अडागमः । ' बहुलं छन्दसि ' इति शपः श्लुः । द्विर्भावहलादिशेषोरदत्वानि । अभ्यासस्य संहितायां दीर्घश्छान्दसः । शक्ती । ' सुपां सुलुक्° ' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । क्तिनो नित्त्वादाद्युदात्तत्वम् । विदा । ' सावेकाचः° ' इति तृतीयाया उदात्तत्वम् । नेषि । ' णीञ् प्रापणे ' । ' बहुलं छन्दसि ' इति शपो लुक् । ' उपसर्गादसमासे° ' इति णत्वम् । सुमत्या । ' मन्क्तिन्° ' इत्यादिनोत्तरपदान्तोदात्तत्वं प्रथमाध्याये प्रपञ्चितम् ( ऋ. सं. १. ७. ७ ) । ' उदात्तयणो हल्पूर्वात् ' इति विभक्तेरुदात्तत्वम् ॥　॥ ३५ ॥

' इन्द्रस्य नु वीर्याणि ' इति पञ्चदशर्चं द्वितीयं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । ' इन्द्रस्य पञ्चोना ' इत्यनुक्रमणिका । अग्निष्टोमे माध्यंदिने सवने निष्केवल्य-शस्त्रे ' इन्द्रस्य नु वीर्याणि ' इति निविद्धानीयं सूक्तम् । ' निष्केवल्यस्य ' इति खण्डे ' इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात् ' ( आश्व. श्रौ. ५. १५ ) इति । विषुवत्यपि तस्मिन् शस्त्रे एतत् विनियुक्तम् । ' विषुवान्दिवा कीर्त्यः ' इति खण्डे सूत्रितम्—' इन्द्रस्य नु वीर्याणीति एतस्मिन्नैन्द्रीं निविदं शस्त्वा ' ( आश्व. श्रौ. ८. ६ ) इति । महाव्रते निष्केवल्येऽप्येतदेव विनियुक्तम् । ' राथन्तरो दक्षिणः पक्षः ' इति खण्डे ' चतस्रः सतीः षड् बृहतीः करोतीन्द्रस्य नु वीर्याणि प्र वोचम् ' ( ऐ. आ. ५. २. २ ) इति ॥

**इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चं॒ यानि॑ च॒कार॑ प्र॒थ॒मानि॑ व॒ज्री ।**

**अह॒न्नहि॒मन्व॒पस्त॑तर्द॒ प्र व॒क्षणा॑ अभि॒न॒त्पर्व॑तानाम् ॥ १ ॥**

इन्द्र॑स्य । नु । वी॒र्या॑णि । प्र । वो॒च॒म् । यानि॑ । च॒कार॑ । प्र॒थ॒मानि॑ । व॒ज्री ।

अह॑न् । अहि॑म् । अनु॑ । अ॒पः । त॒त॒र्द॒ । प्र । व॒क्षणाः॑ । अ॒भि॒न॒त् । पर्व॑तानाम् ॥ १ ॥

ᵛवज्री वज्रयुक्तः इन्द्रः ᵛप्रथमानि पूर्वसिद्धानि मुख्यानि वा ᵛयानि ᵛवीर्याणि पराक्रमयुक्तानि कर्माणि ᵛचकार तस्य ᵛइन्द्रस्य तानि ᵛवीर्याणि ᵛनु क्षिप्रं[2] प्रब्रवीमि । कानि[3] वीर्याणीति[3] तदुच्यते। ᵛअहिं मेघम् ᵛअहन् हतवान् । तदेतदेकं वीर्यम् । ᵛअनु पश्चात् ᵛअपः जलानि ᵛततर्द हिंसितवान् भूमौ पातितवानित्यर्थः । इदं द्वितीयं वीर्यम् । ᵛपर्वतानां संबन्धिनीः ᵛवक्षणाः प्रवहणशीलाः नदीः ᵛप्र ᵛअभिनत् भिन्नवान् कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः । इदं तृतीयं वीर्यम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥ वीर्याणि । ' शूर वीर विक्रान्तौ ' । ण्यन्तात् ' अचो यत् ' इति यत् । ' णेरनिटि ' इति णिलोपः । ' तित्स्वरितम् ' इति स्वरितत्वम् । ' यतोऽनावः ' इत्याद्युदात्तत्वं न भवति । आद्युदात्तत्वे हि सुशब्देन बहुव्रीहौ ' आद्युदात्तं द्व्यच्छन्दसि ' इत्यनेनैवोत्तरपदाद्युदात्तत्वस्य सिद्धत्वात् ' वीरवीर्यौ च ' इति पुनस्तद्विधानमनर्थकं स्यात् । अतोऽवगम्यते ' यतोऽनावः ' इत्याद्युदात्तत्वं वीरशब्दे न प्रवर्तते

---

१. श—वसुमत्तरो बललक्षणम् । २. ढ—क्षिप्रं प्रवोचं । ३. न—कानि वीर्याणि; च-फ—कानि तानि वीर्याणीति ।

इति । अतः परिशेषात् 'तित्स्वरितम्' इति प्रत्ययस्य स्वरितत्वमेव । वोचम् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेः अङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । चकार । णलि लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः । अहन् । लङि 'इतश्च' इति इकारलोपे 'हल्ङ्याब्भ्यः°' इति तकारलोपः । अहिम् । आङ्पूर्वात् हन्तेः 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ. सू. ४. ५७७) इति इप्रत्ययः; आङो ह्रस्वत्वं च । चशब्देन 'वेञो डित्, समाने ख्यश्चोदात्तः' इति डित्त्वं पूर्वपदोदात्तत्वं चानुकृष्यते । ततः टिलोपे पूर्वपदस्योदात्तत्वम् । ततर्द । 'उतृदिर् हिंसानादरयोः' । 'तिङ्ङतिङः' इति निघातः । वक्षणाः । 'वक्ष रोषे' । 'क्रुधमण्डार्थेभ्यश्च' (पा. सू. ३. २. १५१) इति युच् । चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः ॥

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्राइव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥ २ ॥

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष ।
वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥

पर्वते शिश्रियाणम् आश्रितम् अहिं मेघम् अहन् हतवान् । अस्मै इन्द्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ताः आपः समुद्रम् अञ्जः सम्यक् अव जग्मुः प्राप्ताः । तत्र दृष्टान्तः । वाश्राः वत्सान्प्रति हम्भारवोपेताः धेनवः इव । यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत् ॥ शिश्रियाणम् । 'श्रिञ् सेवायाम्' । लिटः कानच् । द्विर्भावहलादिशेषेयङादेशाः । 'चितः' इत्यन्तोदात्तत्वम् । स्वर्यम् । 'ऋ गतौ' । अस्मात् सुपूर्वात् 'ऋहलोर्ण्यत्' इति ण्यत् । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । यद्वा । 'स्वृ शब्दोपतापयोः' इत्यस्मात् ण्यति पूर्ववत् वृद्ध्यभावः । 'तित्स्वरितम्' इति स्वरितत्वम् । वाश्यन्ते इति वाश्राः । 'वाशृ शब्दे' । 'स्फायितञ्चि°' इत्यादिना रक् । जग्मुः । उसि 'गमहन°' इति उपधालोपः ॥

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥

वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ।
आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

वृषायमाणः वृष इवाचरन् इन्द्रः सोमम् अवृणीत वृतवान् । त्रिकद्रुकेषु ज्योतिः गौः आयुः इत्येतन्नामकाः त्रयो यागाः त्रिकद्रुकाः उच्यन्ते । तेषु सुतस्य अभिषुतस्य सोमस्यांशम् अपिबत् पीतवान् । मघवा धनवान् इन्द्रः सायकं बन्धकं वज्रम् आ अदत्त स्वीकृतवान् । तेन च वज्रेण अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवान् ॥ वृषायमाणः । वृष इवाचरन् ।

'कर्तुः क्यङ् सलोपश्च' (पा. सू. ३. १. ११) इति क्यङ्। 'अकृत्सार्वधातुकयोः' इति दीर्घः। अदुपदेशात् धातोः अन्तोदात्तत्वे क्यङन्तात् धातोः अन्तोदात्तत्वम् (?)। सायकम्। 'षिञ् बन्धने'। सिनोतीति सायकः। ण्वुल्। लित्स्वरेणाद्युदात्तत्वम्। प्रथमजाम्। प्रथमं जायते इति प्रथमजाः। 'जनसनखनक्रमगमो विट्'। 'विड्वनोः॰' इति आत्वम्॥

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से॥ ४॥

यत्। इन्द्र। अहन्। प्रथमऽजाम्। अहीनाम्। आत्। मायिनाम्। अमिनाः। प्र। उत। मायाः।
आत्। सूर्यम्। जनयन्। द्याम्। उषसम्। तादीत्ना। शत्रुम्। न। किल। विवित्से॥४॥

$^{v}$उत अपि च हे $^{v}$इन्द्र $^{v}$यत् यदा $^{v}$अहीनां मेघानां मध्ये $^{v}$प्रथमजां प्रथमोत्पन्नं मेघम् $^{v}$अहन् हतवानसि $^{v}$आत् तदनन्तरं $^{v}$मायिनां मायोपेतानामसुराणां संबन्धिनीः $^{v}$मायाः $^{v}$प्र $^{v}$अमिनाः प्रकर्षेण नाशितवानसि। अनन्तरं $^{v}$सूर्यम् $^{v}$उषसम् उषःकालं $^{v}$द्याम् आकाशं च $^{v}$जनयन् उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तसे। $^{v}$तादीत्ना तदानीम् आवरकान्धकाराभावात् $^{v}$शत्रुं घातकं वैरिणं $^{v}$न $^{v}$विवित्से $^{v}$किल त्वं न लब्धवान् खलु॥ अहन्। हन्तेः लङि 'हल्ङ्याब्भ्यः॰' इति सिलोपः। अडागम उदात्तः। यद्वृत्तयोगादनिघातः। मायिनाम्। मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' (पा. सू. ५. २. ११६) इति मत्वर्थीय इनिः। अमिनाः। 'मीञ् हिंसायाम्'। क्रैयादिकः। 'मीनातेर्निगमे' (पा. सू. ७. ३. ८१) इति ह्रस्वत्वम्। तादीत्ना। तदानीम् इत्यस्य पृषोदरादित्वात् वर्णविपर्ययः। किल। 'निपातस्य॰' इति दीर्घत्वम्। विवित्से। 'विदॢ लाभे'। क्रादिनियमात् प्राप्तः इट् व्यत्ययेन न भवति॥

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः॥ ५॥

अहन्। वृत्रम्। वृत्रऽतरम्। विऽअंसम्। इन्द्रः। वज्रेण। महता। वधेन।
स्कन्धांसिऽइव। कुलिशेन। विऽवृक्णा। अहिः। शयते। उपऽपृक्। पृथिव्याः॥ ५॥

अयम् $^{v}$इन्द्रः $^{v}$वज्रेण संपादितो यो महान् वधः तेन वज्रेण $^{v}$वृत्रतरम् अतिशयेन लोकानाम् आवरकम् अन्धकाररूपम्। यद्वा। वृत्रैः आवरणैः सर्वान् शत्रून् तरति तं $^{v}$वृत्रम् एतन्नामकमसुरं $^{v}$व्यंसं विगतांसं छिन्नबाहुः यथा भवति तथा $^{v}$अहन् हतवान्। अंसच्छेदे दृष्टान्तः। $^{v}$कुलिशेन कुठारेण $^{v}$विवृक्णा विशेषतश्छिन्नानि $^{v}$स्कन्धांसीव। यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत्। तथा सति $^{v}$अहिः वृत्रः $^{v}$पृथिव्याः उपरि $^{v}$उपपृक् सामीप्येन संपृक्तः $^{v}$शयते शयनं करोति छिन्नकाष्ठवत् भूमौ पततीत्यर्थः॥ वृत्रतरम्। 'वृतु वर्तने'। 'स्फायितञ्चि॰' इत्यादिना भावे रक्प्रत्ययान्तो वृत्रशब्दः। वृत्रेण आवरणेन सर्वं तरतीति

---

१. झ–अदुपदेशात् धातोरन्तोदात्तत्वम्। २. ढ–आत् तदनन्तरम्। ३. ढ–वधेन। ४. ढ–आवारकम्।

वृत्रतरः । तरतेः पचाद्यच् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तरपि तु व्यत्ययेन व्यंसम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे 'उदात्तस्वरितयोर्यणः॰' इति स्वरितत्वम् । वधेन । 'हनश्च वधः' इति भावे अप्; तत्संनियोगेन धातोः वधादेशः । स च अन्तोदात्तः । अन्त्यस्य अकारस्य 'अतो लोपः' इति लोपः । उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । विवृक्णा । 'ओव्रश्चू छेदने' । कर्मणि निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'ओदितश्च' (पा. सू. ८. २. ४५) इति परत्वात् निष्ठानत्वम् । ततो 'व्रश्चभ्रस्ज॰' इति षत्वे प्राप्ते 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः' (पा. सू. ८. २. ६. ७) इति नत्वस्य सिद्धत्वेन झलपरत्वाभावात् षत्वं न भवति । कुत्वे तु कर्तव्ये तदसिद्धमेव (पा. सू. ८. २. १) इति 'चोः कुः' इति कुत्वम् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । शयते । 'बहुलं छन्दसि' इति शपो लुगभावः । पृथिव्याः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥ ॥ ३६ ॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् ।
न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥६॥

दुर्मदः दुष्टमदोपेतो दर्पयुक्तो वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रम् आ जुह्वे हि आहूतवान् खलु । कीदृशमिन्द्रम् । महावीरं गुणैः महान् भूत्वा शौर्योपेतं तुविबाधं बहूनां बाधकं ऋजीषं शत्रूणामपार्जकम् । अस्य ईदृशस्य[1] इन्द्रस्य संबन्धिनो ये शत्रुवधाः सन्ति तेषां वधानां समृतिं संगमं नातारीत् पूर्वोक्तो दुर्मदः तरीतुं नाशक्नोत् । इन्द्रशत्रुः इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः[2] सन् रुजानाः नदीः सं पिपिषे सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः ॥ अयोद्धा इव । न विद्यते योद्धास्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । समासान्तविधेरनित्यत्वात् (परिभा. ८४) 'नद्यृतश्च' (पा. सू. ५. ४. १५३) इति कबभावः । जुह्वे । 'ह्वेञ् स्पर्धायां शब्दे च' । 'अभ्यस्तस्य च' (पा. सू. ६. १. ३३) इति संप्रसारणम् । उवङादेशाभावश्छान्दसः । यद्वा । 'छन्दस्युभयथा' इति सार्वधातुकसंज्ञायां 'हुश्नुवोः सार्वधातुके' (पा. सू. ६. ४. ८७) इति यणादेशः । अत्र लक्षणप्रतिपदोक्तपरिभाषा (परिभा. १०५) लक्ष्यानुरोधान्नाश्रीयते । इतरथा हि आजुह्वानः इत्यादिषु यणादेशो न स्यात् । न चैवं सति 'सातये हुवे वाम्' (ऋ. सं. ६. ६०. १३) इत्यादावपि तथा[3] स्यादिति वाच्यं अनेकाच्त्वाभावात् । अनेकाच इति हि तत्रानुवर्तते । प्रत्ययस्वरेणान्तोदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः । महावीरम् । महांश्चासौ वीरश्च महावीरः । 'आन्महतः॰' (पा. सू. ६. ३. ४६) इति आत्वम् । तुविबाधम् । 'बाधृ विलोडने' । तुवीन् प्रभूतान् बाधते इति तुविबाधः । पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वम् । समृतिम् । 'तादौ च॰' इति गतेः प्रकृतिस्वरत्वम् । रुजानाः । 'रुजो भङ्गे' । रुजन्ति कूलानीति रुजाना नद्यः । 'रुजाना नद्यो भवन्ति रुजन्ति

---

१. च-फ-स-ष-'ईदृशस्य' नास्ति । २. च-ढ-फ-पातितः । ३. च-फ-यणादेशः ।

कूलानि ’ ( निरु. ६. ४ ) इति यास्कः । व्यत्ययेन शानच् । ‘ तुदादिभ्यः शः ’ । नुमभावश्छान्दसः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । पिपिषे । ‘ पिषॢ संचूर्णने ’ । व्यत्ययेन लिट् । इन्द्रशत्रुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान ।
वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

ᵛअपात् वज्रेण चिछन्नत्वात् पादरहितः ᵛअहस्तः हस्तरहितः वृत्रः ᵛइन्द्रम् उद्दिश्य ᵛअपृतन्यत् पृतनां युद्धम् ऐच्छत् । द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः । ᵛअस्य हस्तपादहीनस्य वृत्रस्य ᵛसानौ पर्वतसानुसदृशे प्रौढस्कन्धे ᵛअधि उपरि ᵛवज्रम् ᵛआ ᵛजघान इन्द्रः आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टान्तः । ᵛवध्रिः छिन्नमुष्कः पुरुषः ᵛवृष्णः रेतःसेचनसमर्थस्य पुरुषान्तरस्य ᵛप्रतिमानं सादृश्यं ᵛबुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः । सः ᵛवृत्रः ᵛपुरुत्रा बहुष्ववयवेषु ᵛव्यस्तः विविधं क्षिप्तः ताडितः सन् ᵛअशयत् भूमौ पतितवान् ॥ अपात् । बहुव्रीहौ पादशब्दस्य अन्त्यलोपश्छान्दसः । अहस्तः । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । अपृतन्यत् । ‘ सुप आत्मनः क्यच् ’ । ‘ कव्यध्वरपृतनस्य° ’ इति अन्त्यलोपः । बुभूषन् । ‘ सनि ग्रहगुहोश्च ’ ( पा. सू. ७. २. १२ ) इति इट्प्रतिषेधः । पुरुत्रा । ‘ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ’ ( पा. सू. ५. ४. ५६ ) इति सप्तम्यर्थे त्राप्रत्ययः । अशयत् । व्यत्ययेन परस्मैपदम् । ‘ बहुलं छन्दसि ’ इति शपो लुगभावः । व्यस्तः । ‘ असु क्षेपणे ’ इत्यस्मात् कर्मणि क्तः । ‘ यस्य विभाषा ’ इति इट्प्रतिषेधः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । संहितायाम् ‘ उदात्तस्वरितयोर्यणः° ’ इति परस्यानुदात्तस्य स्वरितत्वम् ॥

नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः ।
याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥८॥

ᵛअमुया अमुष्यां पृथिव्यां ᵛशयानं पतितं मृतं वृत्रम् ᵛआपः जलानि ᵛअति ᵛयन्ति अतिक्रम्य गच्छन्ति । तत्र दृष्टान्तः । ᵛभिन्नं बहुधाभिन्नकूलं ᵛनदं ᵛन सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वा अतिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । ᵛमनो ᵛरुहाणाः नृणां चित्तमारोहन्त्यः ।

१. ढ–च्छिन्नाङ्गत्वात्; ङ-स–छित्त्वा । २. ढ–हस्तपादरहितस्य ।

पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपो भूमौ वृष्टा न भवन्ति तदानीं नृणां मनः खिद्यते। मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति। तदा वृष्टिलाभेन मनुष्यास्तुष्यन्तीत्यर्थः। तदेतदुत्तरार्धेन स्पष्टीक्रियते। ᵛवृत्रः जीवनदशायां ᵛमहिना स्वकीयेन महिम्ना ᵛयाश्चित् या एव मेघगताः अपः ᵛपर्यतिष्ठत् परिवृत्य स्थितवान्, ᵛअहिः वृत्रो मेघः ᵛतासाम् अपां ᵛपत्सुतःशीः पादस्याधःशयानः ᵛबभूव। यद्यप्यपां पादो नास्ति तथाप्यद्भिर्वृत्रस्य अभिलङ्घितत्वात् पादस्याधःशयनमुपपद्यते॥ भिन्नम्। 'रदाभ्यां निष्ठातो नः०' (पा. सू. ८. २. ४२) इति नत्वम्। अमुया। 'सुपां सुलुक्०' इति सप्तम्या याजादेशः। शयानम्। 'शीङः सार्वधातुके गुणः' (पा. सू. ७. ४. २१)। धातोर्ङित्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। रुहाणाः। 'रुह बीजजन्मनि प्रादुर्भावे'। व्यत्ययेन शानच्। कर्तरि शपि प्राप्ते व्यत्ययेन शः। 'अनित्यमागमशासनम्' इति वचनात् मुगभावः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरे प्राप्ते व्यत्ययेन धातुस्वरः। महिना। 'मह पूजायाम्'। 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः। व्यत्ययेन विभक्तेरुदात्तत्वम्। यद्वा। महिना महिम्ना। महच्छब्दस्य पृथ्वादिषु पाठात् 'तस्य भावः०' इत्येतस्मिन्नर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा. सू. ५. १.१२२) इति इमनिच्प्रत्ययः। 'टेः' इति टिलोपः। 'चितः' इत्यन्तोदात्तत्वम्। तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम्। मकारलोपश्छान्दसः। पत्सुतःशीः। पादस्याधः शेते इति पत्सुतःशीः। 'क्विप् च' इति क्विप्। तसि 'पद्दन्०' इत्यादिना पादशब्दस्य पदादेशः। 'शस्प्रभृतिषु' इति प्रभृतिशब्दः प्रकारवचनः इति शलादोषणी इत्यत्रापि दोषन्नादेशो भवति इत्युक्तत्वात् (का. ६. १. ६३)। मध्ये सु इति शब्दोपजनश्छान्दसः। यद्वा। पादशब्दस्य सप्तमीबहुवचने पदादेशे कृते 'इतराभ्योऽपि दृश्यन्ते' (पा. सू. ५. ३. १४) इति सप्तम्यर्थे तसिल्। लुगभावश्छान्दसः॥

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः॥ ९॥

नीचाऽवयाः। अभवत्। वृत्रऽपुत्रा। इन्द्रः। अस्याः। अव। वधः। जभार।
उत्ऽतरा। सूः। अधरः। पुत्रः। आसीत्। दानुः। शये। सहऽवत्सा। न। धेनुः॥ ९॥

ᵛवृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा ᵛनीचावयाः न्यग्भावं प्राप्ता हता ᵛअभवत् पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः। तदानीम् अयम् ᵛइन्द्रः ᵛअस्याः मातुः ᵛअव अधोभागे वृत्रस्योपरि ᵛवधः हननसाधनमायुधं ᵛजभार प्रहृतवान्। तदानीं ᵛसूः माता ᵛउत्तरा उपरिस्थिता आसीत्। ᵛपुत्रः तु अधोभागस्थितः ᵛआसीत्। सा च ᵛदानुः दानवी वृत्रमाता ᵛशये मृता शयनं कृतवती। तत्र दृष्टान्तः। ᵛधेनुः लोकप्रसिद्धा गौः ᵛसहवत्सा ᵛन यथा वत्ससहिता शयनं करोति तद्वत्॥ नीचावयाः। वेति खादतीति वयो बाहुः। औणादिकः असिप्रत्ययः। न्यञ्चौ वयसौ यस्याः सा नीचावयाः। न्यच्शब्दादुत्तरस्या विभक्तेः 'सुपां सुपो भवन्ति' इति तृतीयैकवचनादेशः। 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम्। 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' (पा. सू. ६. १. १७०)

१. झ-स-वृष्टिलाभेन तु। २. च-छ-झ-फ-उल्लङ्घितत्वात्; प-अतिलङ्घितत्वात्। ३. च-छ-फ-व-'महिम्ना' नास्ति। ४. झ-सहसा; ढ-'हता' नास्ति। ५. ग-ण-र-ह्-अधरः अधोभागस्थितः

इति तस्योदात्तत्वम्। समासे लुगभावश्छान्दसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। यद्वा। नीचौ निकृष्टौ वयसौ यस्याः सा। पूर्वपदस्य दीर्घश्छान्दसः। वधः। हन्यतेऽनेनेति वधः। असुनि हन्तेर्वधादेशः। नित्त्वादाद्युदात्तत्वम्। जभार। ‘ हृग्रहोर्भः॰ ’ इति भत्वम्। सूः। ‘ षूङ् प्राणिगर्भविमोचने ’। सूते गर्भं विमुञ्चतीति सूः माता। ‘ क्विप् च ’ इति क्विप्। दानुः। ‘ दो अवखण्डने ’। ‘ दाभाभ्यां नुः ’ (उ. सू. ३. ३१२)। शये। लटि ‘ लोपस्त आत्मनेपदेषु ’ (पा. सू. ७. १. ४१) इति तलोपः। ‘ शीङः सार्वधातुके॰ ’ इति गुणे अयादेशः॥

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः॥ १०॥

अतिष्ठन्तीनाम्। अनिऽवेशनानाम्। काष्ठानाम्। मध्ये। निऽहितम्। शरीरम्।
वृत्रस्य। निण्यम्। वि। चरन्ति। आपः। दीर्घम्। तमः। आ। अशयत्। इन्द्रऽशत्रुः॥१०॥

वृत्रस्य शरीरम् आपः वि चरन्ति विशेषेण उपरि आक्रम्य प्रवहन्ति। कीदृशं शरीरम्। निण्यं निर्नामधेयम्। अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते। एतदेव स्पष्टीक्रियते। काष्ठानाम् अपां मध्ये निहितं निक्षिप्तम्। कीदृशानां काष्ठानाम्। अतिष्ठन्तीनां स्थितिरहितानां अनिवेशनानाम् उपवेशनरहितानां प्रवहणस्वभावत्वात् एतासां मनुष्यवन्न क्वापि स्थितिः संभवति। इन्द्रशत्रुः वृत्रः जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घं तमः दीर्घं[1] निद्रात्मकं[1] मरणं यथा भवति तथा आशयत् सर्वतः पतितवान्॥ अतिष्ठन्तीनाम्। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अनिवेशनानाम्। निविशन्तेऽस्मिन्निति निवेशनं स्थानम्। ‘ करणाधिकरणयोश्च ’ इति अधिकरणे ल्युट्। तद्रहितानाम्। बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम्। क्रान्त्वा स्थिताः काष्ठाः। पृषोदरादि। निहितम्। ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम्। अत्र यास्कः—‘ अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः। शरीरं शृणातेः शम्नातेर्वा। वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः। तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ’ (निरु. २. १६) इति॥　　॥ ३७॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥ ११॥

दासऽपत्नीः। अहिऽगोपाः। अतिष्ठन्। निऽरुद्धाः। आपः। पणिनाऽइव। गावः।
अपाम्। बिलम्। अपिऽहितम्। यत्। आसीत्। वृत्रम्। जघन्वान्। अप। तत्। ववार॥११॥

---

१. ढ-न–दीर्घनिद्रात्मकम्; झ–‘ दीर्घं तमः......पतितवान् ’ इत्यस्य स्थाने ‘ दीर्घं तमः मरणं आशयत् प्रापेत्यर्थः ’ इति। २. ढ–काष्ठानाम्। क्रान्त्वा।

ᐯदासपत्नीः दासः विश्वोपक्षपणहेतुः[1] वृत्रः पतिः स्वामी यासाम् अपां ताः दासपत्नीः । अत एव ᐯअहिगोपाः । अहिर्वृत्रो गोपा रक्षको यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते । ᐯआपः ᐯनिरुद्धाः ᐯअतिष्ठन् इति । तत्र दृष्टान्तः । ᐯपणिनेव ᐯगावः । पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । ᐯअपां ᐯयत् ᐯबिलं प्रवहणद्वारम् ᐯअपिहितं वृत्रेण निरुद्धम् ᐯआसीत् ᐯतत् बिलं प्रवहणद्वारं ᐯवृत्रं ᐯजघन्वान् हतवान् इन्द्रः ᐯअप ᐯववार अपवृतमकरोत् वृत्रकृतमपां निरोधं परिहृतवान् । अत्र यास्कः– ‘ दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः । अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति पणिः पणनाद्वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेः वृत्रं जघ्निवानपववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा । यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ’ (निरु. २. १७ ) इति ॥ दासपत्नीः । ‘ दसु उपक्षये ’ । दासयतीति दासो वृत्रः । पचाद्यच् । ‘ चितः ’ इत्यन्तोदात्तत्वम् । दासः पतिर्यासाम् । ‘ विभाषा सपूर्वस्य ’ ( पा. सू. ४. १. ३४ ) इति ङीप् ; तत्संनियोगेन इकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । दासस्य पालयित्र्यः । ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरत्वम् । अहिगोपाः । ‘ गुपू रक्षणे ’ । गोपायतीति गोपाः । ‘ आयादय आर्धधातुके वा ’ (पा. सू. ३. १. ३१) इति आयप्रत्ययः । ततः क्विप् । ‘ अतो लोपः ’ । ‘ वेरपृक्तलोपाद्वलि लोपो बलीयान् ’ इति पूर्वं यकारलोपः (पा.सू. ६. १. ६६-६७) । न च ‘ अचः परस्मिन्° ’ इति अतो लोपस्य स्थानिवत्त्वं ‘ न पदान्तद्विर्वचन° ’ इति प्रतिषेधात् । अहिर्गोपा यासाम् । पूर्ववत् स्वरः । निरुद्धाः । ‘ रुधिर् आवरणे ’ । ‘ झषस्तथोर्धोऽधः ’ ( पा. सू. ८. २. ४० ) इति निष्ठातकारस्य धकारः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । जघन्वान् । हन्तेर्लिटः क्वसुः । ‘ अभ्यासाच्च ’ ( पा. सू. ७. ३. ५५ ) इति अभ्यासादुत्तरस्य हकारस्य कुत्वम् । क्रादिनियमप्राप्तस्य इटः ‘ विभाषा गमहन° ’ ( पा. सू. ७. २. ६८ ) इत्यादिना विकल्पविधानादभावः । संहितायां नकारस्य रुत्वानुनासिकावुक्तौ ॥

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥ १२ ॥

अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ।
अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥ १२ ॥

ᐯसृके वज्रे । ‘ सृकः वृकः ’ ( नि. २. २०. ६ ) इति वज्रनामसु पठितत्वात् । ᐯदेवः दीप्यमानः सर्वायुधकुशलः ᐯएकः अद्वितीयः वृत्रः ᐯयत् यदा ᐯत्वा त्वां ᐯप्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् ᐯतत् तदानीं त्वम् ᐯअश्व्यो ᐯवारः अश्वसंबन्धी वालः ᐯअभवः । यथाश्वस्य वालोऽनायासेन मक्षिकादीन्निवारयति तद्वत् वृत्रमगणयित्वा निराकृतवानित्यर्थः । किं च ᐯगाः पणिनापहृताः त्वम् ᐯअजयः जितवान् । हे ᐯशूर शौर्ययुक्त ᐯइन्द्र ᐯसोमम् ᐯअजयः जितवान् । तथा च तैत्तिरीयाः—‘त्वष्टा हतपुत्रः’

1. क्ष–विश्वोपक्षयणहेतुः ; न–विश्वापक्षेपणहेतुः; ढ– विश्वोपद्रवहेतुः ।

इत्यस्मिन्नुपाख्याने समामनन्ति—‘ स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् ’ ( तै. सं. २. ४. १२. १ ) इति । ᵛसप्त ᵛसिन्धून् ‘ इमं मे गङ्गे ’ ( ऋ. सं. १०. ७५. ५ ) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसंख्याका नदीः ᵛसर्तवे सर्तुं प्रवाहरूपेण गन्तुम् ᵛअवासृजः त्यक्तवान्। वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः ॥ अश्व्यः । अश्वे भवः। ‘ भवे छन्दसि ’ इति यत् । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम्। वारयति दंशमशकानिति वारः । पचाद्यच् । कपिलकादित्वात् लत्वविकल्पः ( पा. म. ८. २. १८ ) । वृषादित्वादाद्युदात्तत्वम् । प्रत्यहन् । ‘यद्वृत्तान्नित्यम्’ इति निघातप्रतिषेधः । ‘तिङि चोदात्तवति’ इति गतेरनुदात्तत्वम् । अजयः । गाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य ‘ तिङ्ङतिङः इति निघातो न भवति, ‘ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ’ (पा. सू. ८. १. १८. ५) इति वचनात् । सर्तवे । ‘ तुमर्थे सेसेन्° ’ इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒ न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च ।
इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑श्चो॒ताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ॥ १३ ॥

न । अ॒स्मै॒ । वि॒ऽद्युत् । न । त॒न्य॒तुः । सि॒से॒ध॒ । न । याम् । मिह॑म् । अकि॑रत् । ह्रा॒दुनि॑म् । च॒ ।
इन्द्रः॑ । च॒ । यत् । यु॒यु॒धाते॒ इति॑ । अहिः॑ । च॒ । उ॒त । अ॒परी॑भ्यः । म॒घऽवा॑ । वि । जि॒ग्ये॒ ॥१३॥

इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः । सोऽयमर्थोऽनेन मन्त्रेणोच्यते । ᵛअस्मै इन्द्रार्थं निर्मिता ᵛविद्युत् ᵛन ᵛसिषेध इन्द्रं न प्राप्नोत् । तथा ᵛतन्यतुः गर्जनं ᵛयां ᵛमिहं सेचनं[1] यां[1] वृष्टिम् ᵛअकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टिः ᵛन सिषेध । ᵛह्रादुनिं ᵛच अशनिमपि यां वृत्रः प्रयुक्तवान् सापि न सिषेध । ᵛइन्द्रश्च ᵛअहिश्च इन्द्रवृत्रावुभावपि ᵛयत् यदा ᵛयुयुधाते युद्धं कृतवन्तौ । तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः । ᵛउत अपि च ᵛमघवा धनवानिन्द्रः ᵛअपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् ᵛवि ᵛजिग्ये विशेषेण जितवान् ॥ सिषेध । ‘ षिधु गत्याम् ’ । मिहम् । ‘ मिह सेचने ’ । मेहति सिञ्चतीति मिट् वृष्टिः । ‘ क्विप् च ’ इति क्विप् । अकिरत् । ‘ कॄ विक्षेपे ’ । ‘ तुदादिभ्यः शः ’ । ‘ ऋत इद्धातोः ’ इति इत्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । युयुधाते । ‘ युध संप्रहारे ’ । लिटि प्रत्ययस्वरः । जिग्ये । ‘ सन्लिटोर्जेः ’ ( पा. सू. ७. ३. ५७ ) इति अभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥

अहे॑र्या॒तारं॒ कम॑पश्य इन्द्र हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत् ।
नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि ॥ १४ ॥

अहेः॑ । या॒तार॑म् । कम् । अ॒प॒श्यः॒ । इ॒न्द्र॒ । हृ॒दि । यत् । ते॒ । ज॒घ्नुषः॑ । भीः । अग॑च्छत् ।
नव॑ । च॒ । यत् । न॒व॒तिम् । च॒ । स्रव॑न्तीः । श्ये॒नः । न । भी॒तः । अत॑रः । रजां॑सि ॥१४॥

हे ᵛइन्द्र ᵛजघ्नुषः वृत्रं हतवतः तव ᵛहृदि चित्ते ᵛयत् यदि ᵛभीरगच्छत् न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि ᵛअहेः वृत्रस्य ᵛयातारं हन्तारं ᵛकमपश्यः त्वत्तोऽन्यंᵛ कं पुरुषं दृष्टवानसि ।

---

१. ढ–सेचनकाम् ।

तादृशस्य पुरुषान्तरस्याभावात् मा भूत् तव भयमित्यर्थः । ᵛयत् यस्मात् कारणात् त्वं ᵛनव ᵛच ᵛनवतिं ᵛच ᵛस्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य ᵛरजांसि तत्रत्यान्युदकानि ᵛअतरः तीर्णवानसि । तत्र दृष्टान्तः । ᵛश्येनो ᵛन । श्येननामको बलवान् पक्षीव दूरगमनात्तव भयमासीदिति गम्यते। तद्वयं मा भूदित्यभिप्रायः । तच्च दूरगमनं ब्राह्मणे समाम्नातम्–' इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत् ' ( ऐ. ब्रा. ३. १५ ) इति । तैत्तिरीयाश्चामनन्ति—' इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः ' (तै. सं. २. ५. ३. ६ ) इति ॥ हृदि । ' पद्दन्° ' इत्यादिना हृदयशब्दस्य हृदादेशः । ' ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम् । जघ्नुषः । हन्तेर्लिटः क्वसुः । षष्ठ्येकवचने ' वसोः संप्रसारणम् ' इति संप्रसारणपरपूर्वत्वे । ' शासिवसिघसीनां च ' इति षत्वम् । न च ' षत्वतुकोरसिद्धः ' ( पा. सू. ६. १. ८६ ) इत्येकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यं, ' संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः ' ( का. ६. १. ८६. १ ) इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् । ' गमहन° ' इत्यादिना उपधालोपः । न च ' असिद्धवदत्रा भात् ' इति संप्रसारणस्यासिद्धवद्भावः, भिन्नाश्रयत्वात् । संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्तीः । ' स्रु गतौ ' । ' शप्श्यनोर्नित्यम् ' ( पा. सू. ७. १. ८१ ) इति नुमागमः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेणाद्युदात्तत्वम् । अतरः । यद्वृत्तयोगादनिघातः ॥

**इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।**
**सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५ ॥**

इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः ।

सः । इत् । ऊँ इति॑ । राजा॑ । क्ष॒यति॑ । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व॒ ॥ १५ ॥

ᵛवज्रबाहुः ᵛइन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा ᵛयातः गच्छतो जङ्गमस्य ᵛअवसितस्य एकत्रैव स्थितस्य स्थावरस्य ᵛशमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः ᵛशृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च ᵛराजा अभूत् । ᵛसेदु स एवेन्द्रः ᵛचर्षणीनां मनुष्याणां ᵛराजा भूत्वा ᵛक्षयति निवसति। ᵛता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि ᵛपरि ᵛबभूव व्याप्तवान् । तत्र दृष्टान्तः । ᵛअरान् ᵛन ᵛनेमिः । यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत् ॥ यातः । ' या प्रापणे ' । याति गच्छतीति यात् । लटः शतृ । ' सावेकाचः°' इति विभक्तेरुदात्तत्वम् । सः । ' सोऽचि लोपे चेत्° ' इति संहितायां सोर्लोपः । ता । ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । बभूव । भवतेर्लिटो णलि ' भवतेरः ' (पा. सू. ७. ४. ७३ ) इति अभ्यासस्य अत्वम् । कृताकृतप्रसङ्गितया वुगागमस्य नित्यत्वात् वृद्धेः पूर्वं वुगागमः । यद्वा । ' इन्धिभवतिभ्यां च ' (पा. सू. १. २. ६ ) इति लिटः कित्त्वात् वृद्ध्यभावः । न च ' असिद्धवदत्रा भात् ' इति तस्यासिद्धत्वात् उवङादेशः शङ्कनीयः, ' वुग्युटावुवङ्यणोः सिद्धौ भवतः ' (पा. सू. ६. ४. २२. १४ ) इति तस्य सिद्धत्वात् । ' तिङ्ङतिङः ' इति निघातः ॥ ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके द्वितीयोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ तृतीयाध्याय आरभ्यते । 'त्वमग्ने प्रथमः' इति सप्तमानुवाके पञ्च सूक्तानि । तत्र 'एतायाम' इति तृतीयं सूक्तं पञ्चदशर्चम् । 'ऋषिश्चान्यस्मात्' इति परिभाषया आङ्गिरसो हिरण्यस्तूप ऋषिः । अनुक्तत्वात् इन्द्रो देवता । त्रिष्टुप् छन्दः । 'एत' इत्यनुक्रमणिका । गोसववीवधयोर्निष्केवल्ये 'एतायाम' इति सूक्तं विनियुक्तम् । तथा च सूत्रितम् 'अतिमूर्तिना यक्ष्यमाणः' इति खण्डे— 'गोसववीवधौ पशुकाम इन्द्र सोममेतायामेति मध्यंदिनः' (आश्व. श्रौ. ९. ८) इति ॥

**एतायामोप॑ ग॒व्यन्त॒ इन्द्र॑म॒स्माकं॒ सु प्रम॑तिं वावृधाति ।**

**अ॒ना॒मृ॒णः कु॒विदा॒दस्य॑ रा॒यो गवां॒ केतं॒ पर॑मा॒वर्ज॑ते नः ॥ १ ॥**

आ । इ॒त॒ । अया॑म । उप॑ । ग॒व्यन्तः॑ । इन्द्र॑म् । अ॒स्माक॑म् । सु । प्रऽम॑तिम् । व॒वृ॒धा॒ति॒ ।

अ॒ना॒मृ॒णः । कु॒वित् । आत् । अ॒स्य । रा॒यः । गवा॑म् । केत॑म् । पर॑म् । आ॒ऽवर्ज॑ते । नः॒ ॥ १ ॥

देवाः परस्परमेवं कथयन्ति । हे देवाः ᐯगव्यन्तः पणिनामकेनासुरेणापहृता अस्मदीया गाः प्राप्तुमिच्छन्तो यूयं ᐯएत आगच्छत । युष्माभिः सहिता वयम् ᐯइन्द्रं गवानयनक्षमम् ᐯउप ᐯअयाम प्राप्नवाम । स चेन्द्रः ᐯअनामृणः हिंसकरहितः सन् ᐯअस्माकं देवानां ᐯप्रमतिं गोलाभेन हर्षयित्वा प्रकृष्टां बुद्धिं ᐯसु ᐯववृधाति सुष्ठु वर्धयति । ᐯआत् अनन्तरं स इन्द्रः ᐯअस्य ᐯरायः धनस्य ᐯगवां गोरूपस्य संबन्धि ᐯपरं ᐯकेतं उत्कृष्टं ज्ञानं ᐯनः अस्माकं ᐯकुवित् ᐯआवर्जते अधिकं प्रापयति ॥ इत । 'इण् गतौ'। अदादित्वात् शपो लुक्। अयाम । एतेर्लोडुत्तमबहुवचने 'आडुत्तमस्य पिच्च' इति आडागमः । पिद्वद्भावात् सार्वधातुकलक्षणे गुणे अयादेशः । न च 'इणो यण्' (पा. सू. ६. ४. ८१) इति यणादेशः । 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' (परिभा. ६०) इति वचनात् तस्य इयङादेशापवादत्वात् । अतः परत्वात् गुणेन यणादेशो बाध्यते । पिद्वद्भावात् प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । गव्यन्तः । गा आत्मनः इच्छन्तः । 'सुप आत्मनः क्यच्' इति गोशब्दात् कर्मणः क्यच् । 'वान्तो यि प्रत्यये' (पा. सू. ६. १. ७९) इति अवादेशः । प्रत्ययान्तात् धातोर्लटः शतृ । तस्य अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । प्रमतिम् । मन्यतेः क्तिनि 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । 'तादौ च°' (पा. सू. ६. २. ५०) इति गतेः प्रकृतिस्वरत्वम् । ववृधाति । 'वृधु वृद्धौ' । लेटि आडागमः। 'बहुलं छन्दसि' इति शपः श्लुः । संहितायामभ्यासस्य दीर्घश्छान्दसः । अनामृणः । 'मृण हिंसायाम्' । मृणन्ति हिंसन्तीति मृणाः । इगुपधलक्षणः कः । न सन्ति अमृणाः अस्य इति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अस्य रायः । 'ऊडिदम्°' इत्युभयत्र विभक्तेरुदात्तत्वम् । गवाम् । 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः । केतम् । 'कित ज्ञाने' । घञन्त आद्युदात्तः । आवर्जते । 'वृजी वर्जने' । अदादित्वात् शपो लुकि प्राप्ते 'बहुलं छन्दसि' इति तदभावः । शपः पित्त्वादनु-

दात्तत्वम् । तिङश्च लसार्वधातुकत्वेन धातुस्वरः । ' तिङि चोदात्तवति ' ( पा. सू. ८. १. ७१ ) इति गतेरनुदात्तत्वम् । कुविद्योगात् ' निपातैर्यद्यदिहन्त° ' ( पा. सू. ८. १. ३० ) इत्यादिना निघातप्रतिषेधः ॥

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।

इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥

उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येनः । वसतिम् । पतामि ।

इन्द्रम् । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृऽभ्यः । हव्यः । अस्ति । यामन् ॥ २ ॥

यः इन्द्रः स्तोतृभ्यः स्तोतॄणामनुष्ठातॄणामनुग्रहार्थं यामन् तदीयशत्रुभिः सह प्रवृत्ते युद्धे हव्यः अस्ति तैराह्वातव्यो भवति तम् इन्द्रम् अहम् अनुष्ठाता उपेत् पतामि उपाप्नोम्येव । किं कुर्वन् । उपमेभिः उपमानस्थानीयैरुत्तमैः अर्कैः स्तोत्रैः सह नमस्यन् पूजयन् । कीदृशमिन्द्रम् । धनदां धनप्रदम् अप्रतीतम् अप्रतिगतं बलिभिरतिरस्कृतमित्यर्थः । इन्द्रप्राप्तौ दृष्टान्तः । जुष्टां पूर्वैः सेवितां वसतिं स्वकीयनीडरूपां निवासभूमिं श्येनः न । यथा श्येननामको वेगवान् पक्षी स्वकीयस्थानं प्रति आदरेण धावति तद्वत् अहम् इन्द्रं त्वरया प्राप्नोमि ॥ धनदाम् । धनं ददातीति धनदाः । ' आतो मनिन्° ' इत्यादिना विच् । अप्रतीतम् शत्रुभिर्न प्रतिगतम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । जुष्टाम् । ' जुषी प्रीतिसेवनयोः ' । ' श्वीदितो निष्ठायाम् ' ( पा. सू. ७. २. १४ ) इति इट्प्रतिषेधः । ' नित्यं मन्त्रे ' ( पा. सू. ६. १. २१० ) इत्याद्युदात्तत्वम् । पतामि । लेटि आडागमः । नमस्यन् । नमस्शब्दात् पूजार्थे ' नमोवरिवः° ' ( पा. सू. ३. १. १९ ) इति क्यच् । प्रत्ययस्वरः । अदुपदेशात् लसार्वधातुकानुदात्तस्य एकादेशस्वरेणोदात्तत्वम् । उपमीयन्ते एभिरित्युपमाः । ' माङ् माने ' । ' घञर्थे कविधानम्° ' ( पा. सू. ३. ३. ५८. ४ ) इति कः । ' बहुलं छन्दसि ' इति भिस ऐसादेशाभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । हव्यः । ह्वेञो ' बहुलं छन्दसि ' इति संप्रसारणम् । ' अचो यत् ' इति यत् । गुणः । ' धातोस्तन्निमित्तस्यैव ' ( पा. सू. ६. १. ८० ) इति अवादेशः । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । यामन् । ' या प्रापणे ' । मनिनो नित्त्वादाद्युदात्तत्वम् । ' सुपां सुलुक्° ' इति सप्तम्या लुक् ॥

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।

चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥

नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि ।

चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

सर्वसेनः कृत्स्नसेनायुक्तः इषुधीन् बाणानामाधारभूतान् निषङ्गान् नि असक्त नितरां पृष्ठभागे संयोजितवान् । अर्यः स्वामिरूप इन्द्रः यस्य देवस्य वष्टि असुरेणापहृता गाः प्रदातुं कामयते तस्य देवस्य गृहे ताः गाः सम् अजति सम्यक् प्रापयति । हे प्रवृद्ध प्रकृष्टवृद्धियुक्त इन्द्र

Vभूरि Vवामं प्रभूतं गोरूपं धनं Vचोष्कूयमाणः अस्मभ्यं प्रयच्छन् Vअस्मदधि अस्मासु Vपणिः Vमा Vभूः व्यवहारी मा भूयाः । गवां मूल्यं मा याचस्वेत्यर्थः ॥ सर्वसेनः । इनेन सह वर्तते इति सेना । 'वोपसर्जनस्य' (पा. सू. ६. ३. ८२) इति सभावः । सर्वा सरणशीला सेना यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'प्रत्ययलक्षणेनाप्ययं स्वर इष्यते' (का. ६. १. १९१) इति वचनात् प्रत्ययलक्षणेन 'सर्वस्य सुपि' (पा. सू. ६. १. १९१) इति सर्वशब्द आद्युदात्तः । इषुधीन् । इषव एषु धीयन्ते इति इषुधयः । 'कर्मण्यधिकरणे च' (पा. सू. ३. ३. ९३) इति किप्रत्ययः । संहितायां 'दीर्घादटि°' इत्यादिना नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' (पा. सू. ८. ३. २) इति पूर्वस्वरोऽनुनासिकः । असक्त । 'षच समवाये' । 'बहुलं छन्दसि' इति शपो लुक् । अर्यः । 'अर्यः स्वामिवैश्ययोः' (पा. सू. ३. १. १०३) इति यत्प्रत्ययान्तो निपातितः । 'अर्यस्य स्वाम्याख्या चेत्' (फि. सू. १७) इत्यन्तोदात्तत्वम् । अजति । 'अज गतिक्षेपणयोः' । वष्टि । 'वश कान्तौ' । अदादित्वात् शपो लुक् । व्रश्चादिषत्वे ष्टुत्वम् । चोष्कूयमाणः । 'स्कुञ् आप्रवणे' । 'धातोरेकाचः°' इति यङ् । अकृत्सार्वधातुकयोर्दीर्घः । द्विर्वचने 'शर्पूर्वाः खयः' (पा. सू. ७. ४. ६१) इति ककारः शिष्यते सकारो लुप्यते । 'कुहोश्चुः' (पा. सू. ७. ४. ६२) इति चुत्वे 'गुणो यङ्लुकोः' (पा. सू. ७. ४. ८२) इति गुणः । सुषामादित्वात् षत्वम् । यङन्तात् लटः शानच् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । भूः । 'गातिस्था°' इति सिचो लुक् ॥

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥

वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् । उपऽशाकेभिः । इन्द्र ।
धनोः । अधि । विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः । प्रऽईतिम् । ईयुः ॥४॥

हे Vइन्द्र Vधनिनं बहुधनोपेतं Vदस्युं चोरं वृत्रं Vघनेन कठिनेन वज्रेण Vवधीर्हि त्वं हतवान् खलु । धनित्वं वाजसनेयिनोऽपि स्पष्टमामनन्ति– 'वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन्' इति । Vउपशाकेभिः समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितो भूत्वा Vएकश्चरन् । प्रहर्तुं स्वयमेक एव गच्छन् । यद्यपि मरुतः समीपे वर्तन्ते तथापि ते प्रोत्साहयन्त्येव न तु वृत्रं प्रहरन्ति । प्रहर्ता तु स्वयमेक एव । तथा च ब्राह्मणे समाम्नातं–'मरुतो हैनं नाजहुः प्रहर भगवो वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त' (ऐ. ब्रा. ३. २०) इति । Vधनोरधि इन्द्रसंबन्धिनो धनुष उपरि Vविषुणक् विविधं नाशमुद्दिश्य यद्वा विष्वक् सर्वतः[1] Vते वृत्रानुचराः Vव्यायन् विविधमागच्छन् । आगत्य च Vअयज्वानः यज्वविरोधिनः सन्तः Vसनकाः एतन्नामका वृत्रानुचराः Vप्रेतिमीयुः मरणं प्राप्ताः ॥ वधीः । 'हन हिंसागत्योः' । 'लुङि च' (पा. सू. २. ४. ४३) इति वधादेशः । स च अदन्तः । तस्य 'आतो लोपः°' इति लोपे सति स्थानिवद्भावात् 'अतो हलादेः°' (पा. सू. ७. २. ७) इति वृद्ध्यभावः । 'इट ईटि' (पा. सू. ८. २. २८) इति सिचो लोपः । आगमानुदात्तत्वे धात्वकारस्योदात्तत्वम् । घनेनँ एकः । 'ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्' (पा. सू. ६. १. १२७. २) इति संहितायां प्रकृतिभावः । अनुनासिकश्छान्दसः ।

१. च-छ-झ-ण-न-फ–समन्ततः ।

उपशाकेभिः। उपशक्तं कुर्वन्तीति उपशाकाः। 'शक्लृ शक्तौ'। अस्मात् हेतुमण्ण्यन्तात् पचाद्यच्। थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम्। विपुणक्। विपुपूर्वात् नशेः संपदादिलक्षणः क्विप्। 'नशेर्वा' (पा. सू. ८. २. ६३) इति कुत्वम्। यद्वा। विपुपूर्वस्य अञ्चतेर्नुडागमः। सनका इत्यसुराणां नाम। 'षणु दाने'। सन्वन्ति ददतीति सना दातारः। पचाद्यच्। सनान् कायन्ति शब्दयन्तीति सनकाः। 'आतोऽनुपसर्गे कः'। 'आतो लोप इटि च' इति आकारलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम्। प्रेतिम्। 'तादौ च निति०' इति गतेः प्रकृतिस्वरत्वम्। ईयुः। एतेः उसिपरत्वात् 'इणो यण्' इति यणादेशे 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् इकारस्य द्विर्वचनम्। 'दीर्घ इणः किति' (पा. सू. ७. ४. ६९) इत्यभ्यासस्य दीर्घत्वम्॥

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः॥ ५॥

परा। चित्। शीर्षा। ववृजुः। ते। इन्द्र। अयज्वानः। यज्वऽभिः। स्पर्धमानाः।
प्र। यत्। दिवः। हरिऽवः। स्थातः। उग्र। निः। अव्रतान्। अधमः। रोदस्योः॥ ५॥

हे ᵛइन्द्र ᵛते वृत्रानुचराः ᵛशीर्षा स्वकीयानि शिरांसि ᵛपरा ᵛचित् पराङ्मुखान्येव कृत्वा ᵛववृजुः गतवन्तः। कीदृशास्ते। ᵛअयज्वानः स्वयं यागरहिताः प्रत्युत ᵛयज्वभिः यागानुष्ठातृभिः सह ᵛस्पर्धमानाः। हे ᵛहरिवः हरिनामकाश्वयुक्त ᵛस्थातः स्थितियुक्त युद्धे पलायनरहित ᵛउग्र शौर्ययुक्तेन्द्र ᵛयत् यदा ᵛदिवः अन्तरिक्षात् ᵛरोदस्योः द्यावापृथिव्योः सकाशाच्च ᵛअव्रतान् व्रतरहितान् वृत्रानुचरान् ᵛनिः ᵛप्र ᵛअधमः निःशेषेण धमनं कृतवानसि तदानीं त्वदीयमुखवायुना नुन्नाः सन्तो ववृजुरिति पूर्वत्रान्वयः॥ शीर्षा। 'शेश्छन्दसि बहुलम्' (पा. सू. ६. १. ७०) इति शेर्लोपः। ववृजुः। 'वृजी वर्जने'। 'असंयोगाल्लिट् कित्' (पा. सू. १. २. ५) इति कित्त्वाद्गुणाभावः। अयज्वानः। यजतेः 'सुयजोर्ङ्वनिप्' (पा. सू. ३. २. १०३) इति भूते ङ्वनिप्प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। दिवः। 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम्। हरिवः। हरी अस्य स्त इति हरिवान्। 'छन्दसीरः' इति मतुपो वत्वम्। संबुद्धौ 'मतुवसोः०' इति रुत्वम्। अव्रतान्। बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। 'दीर्घादटि०' इति संहितायां नकारस्य रुत्वम्। 'आतोऽटि नित्यम्' इति सानुनासिक आकारः। अधमः। 'ध्मा शब्दाग्निसंयोगयोः'। लङि सिपि शपि 'पाघ्रा०' इत्यादिना धमादेशः॥ ॥ १॥

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन्॥ ६॥

अयुयुत्सन्। अनवद्यस्य। सेनाम्। अयातयन्त। क्षितयः। नवऽग्वाः।
वृषऽयुधः। न। वध्रयः। निःऽअष्टाः। प्रवत्ऽभिः। इन्द्रात्। चितयन्तः। आयन्॥ ६॥

ᵛअनवद्यस्य गर्हणीयदोषरहितस्येन्द्रस्य ᵛसेनां प्रति ᵛअयुयुत्सन् वृत्रस्यानुचरा योद्धुमैच्छन्। तदानीं ᵛनवग्वाः नवनीयगतयः[1] स्तोतव्यचरित्राः। यद्वा। अङ्गिरसां सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा। 'नवग्वासः सुतसोमास इन्द्रम्' (ऋ.सं. ५. २९. १२) इत्यादिषु तथाभिहितत्वात्। ᵛक्षितयः मनुष्या अङ्गिरःप्रभृतयः। 'क्षितयः कृष्टयः' (नि. २. ३. ६) इति तन्नामसु पाठात्। ᵛअयातयन्त। युद्धार्थमिन्द्रं नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः। इन्द्रे योद्धुं गते सति ᵛनिरष्टाः तेनेन्द्रेण निराकृता वृत्रानुचराः ᵛचितयन्तः स्वकीयामशक्तिं ज्ञापयन्तः ᵛइन्द्रात् इन्द्रस्य सकाशात् ᵛप्रवद्भिः प्रवणैः पलायितुं[2] सुशकैर्मार्गैः ᵛआयन् दूरे गतवन्तः। तत्र दृष्टान्तः। ᵛवृषायुधः वृषेण सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः ᵛवध्रयः ᵛन नपुंसका इव। 'निसर्गपण्डो वध्रिश्च' इत्यादिस्मृतिषु[3] प्रयोगात्[3]। ते यथा प्रबलेन दूरे निराकृता भवन्ति तद्वत्॥ अयुयुत्सन्। 'युध संप्रहारे'। सनि 'हलन्ताच्च' (पा. सू. १. २. १०) इति सनः कित्त्वाद्गुणाभावः। 'एकाच उपदेशेऽनुदात्तात्' (पा. सू. ७. २. १०) इति इट्प्रतिषेधः। व्यत्ययेन परस्मैपदम्। सेनाम्। इनेन सह वर्तते इति सेना। 'वोपसर्जनस्य' इति सहशब्दस्य सभावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अयातयन्त। 'यती प्रयत्ने'। 'हेतुमति च' इति णिच्। क्षितयः। 'क्षि निवासगत्योः'। क्षियन्ति गच्छन्तीति क्षितयो मनुष्याः। 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्। नवग्वाः। नवभिर्मासैर्गच्छन्तीति नवग्वाः। गमेः औणादिको ड्वप्रत्ययः। यद्वा। क्विपि 'गमः क्वौ' (पा. सू. ६. ४. ४०) इत्यनुनासिकलोपे 'ऊ च गमादीनामिति वक्तव्यम्' (पा. सू. ६.४.४०.२) इति अकारस्य ऊकारः। जसि 'ओः सुपि' (पा. सू. ६. ४. ८३) इति यणादेशः। दीर्घश्छान्दसः। वृषायुधः। 'क्विप् च' इति क्विप्। 'क्विप् च' इत्यत्र 'सोपपदेभ्यो निरुपपदेभ्यः' (का. ३. २. ७६) इत्युक्तत्वादत्र सोपपदेभ्यः क्विप्। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य संहितायां दीर्घः। निरष्टाः। 'अशू व्याप्तौ'। भावे निष्ठा। 'यस्य विभाषा' (पा. सू. ७. २. १५) इति इट्प्रतिषेधः। व्रश्चादिना षत्वे ष्टुत्वम्। निसा च बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। यद्वा। निरस्ता इत्यत्र सकारस्य षत्वं छान्दसम्। तदानीम् अस्ता इत्येतत् कर्मणि निष्ठेति 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। प्रवद्भिः। 'वन षण संभक्तौ'। अस्मात् प्रपूर्वात् क्विप्। 'गमादीनामिति वक्तव्यम्' (पा. सू. ६. ४. ४०. १) इत्यनुनासिकलोपः। ततः तुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। चितयन्तः। 'चिती संज्ञाने'। अस्मात् ण्यन्तात् लटः शतृ। शप्। 'अनित्यमागमशासनम्' इति वचनात् लघूपधगुणाभावः॥

त्वमे॒ताम्रु॑द॒तो जक्ष॑त॒श्चायो॑धयो॒ रज॑स इन्द्र पा॒रे।
अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑मावः॥ ७॥

त्वम्। ए॒तान्। रु॒द॒तः। जक्ष॑तः। च॒। अयो॑धयः। रज॑सः। इ॒न्द्र॒। पा॒रे।
अव॑। अ॒द॒हः॒। दि॒वः। आ। दस्यु॑म्। उ॒च्चा। प्र। सु॒न्व॒तः। स्तु॒व॒तः। शंस॑म्। आ॒वः॥७॥

हे ᵛइन्द्र ᵛत्वं ᵛरुदतः रोदनं कुर्वतः ᵛजक्षतः भक्षणं हसनं वा कुर्वतः ᵛच ᵛएतान् द्विविधानपि वृत्रानुचरान् ᵛरजसः ᵛपारे अन्तरिक्षस्य परभागे। रजःशब्दोऽन्तरिक्षवाची, 'लोका रजांस्युच्यन्ते'

---

१. च-छ-ण-त-ध-न-फ-श-स—नवनीतगतयः। २. छ-ण-त-ध-न—पालयितुम्। ३. ढ—इति स्मरणात्।

(निरु. ४. १९) इत्युक्तत्वात्। ᵛअयोधयः युद्धमकरोः युद्धेन मारितवानित्यर्थः। ᵛदस्युम् उपक्षयितारं[1] वृत्रं ᵛदिवः ᵛआ द्युलोकादानीय ᵛउच्चा उत्कर्षेण ᵛअवादहः दग्धवानसि। वृत्रं सपरिवारं विनाश्य तत ऊर्ध्वं ᵛसुन्वतः सोमाभिषवं कुर्वतः ᵛस्तुवतः स्तोत्रं कुर्वतो यजमानस्य ᵛशंसं स्तुतिं ᵛप्र ᵛआवः प्रकर्षेण रक्षितवानसि ॥ रुदतः। 'रुदिर् अश्रुविमोचने'। लटः शतृ। अदादित्वात् शपो लुक्। प्रत्ययस्वरेणान्तोदात्तत्वम्। 'शतुरनुमः°' इति शस उदात्तत्वम्। जक्षतः। 'जक्ष भक्षहसनयोः'। पूर्ववत् शपो लुक्। 'जक्षित्यादयः षट्' (पा. सू. ६. १. ६) इति अभ्यस्तसंज्ञा। अतः 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। सुन्वतः। सुनोतेः शतरि 'स्वादिभ्यः श्नुः'। 'हुश्नुवोः°' इत्यादिना यणादेशः। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्। स्तुवतः। 'ष्टुञ् स्तुतौ'। अदादित्वात् शपो लुक्। उवङादेशः। पूर्ववत्स्वरः ॥

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ॥ ८ ॥

चक्राणासः। परिऽनहम्। पृथिव्याः। हिरण्येन। मणिना। शुम्भमानाः।
न। हिन्वानासः। तितिरुः। ते। इन्द्रम्। परि। स्पशः। अदधात्। सूर्येण ॥ ८ ॥

ये वृत्रानुचराः ᵛपृथिव्याः भूमेः ᵛपरीणहम् आच्छादनं सर्वतो व्याप्तिं ᵛचक्राणासः कुर्वाणाः ᵛहिरण्येन हिरण्ययुक्तेन ᵛमणिना कण्ठबाह्वादिगतेन मण्याद्याभरणेन ᵛशुम्भमानाः शोभमानाः ᵛहिन्वानासः वर्धमानाः सन्तो वर्तन्ते ᵛते तथाविधा वृत्रानुचराः ᵛइन्द्रं युद्धायोद्यन्तं[2] ᵛन ᵛतितिरुः जेतुं न समर्था आसन्। तदानीं स इन्द्रः ᵛस्पशः बाधकान् वृत्रानुचरान् ᵛसूर्येण आदित्येन ᵛपरि ᵛअदधात् परिहितान् व्यवहितानकरोत्। तथा च ब्राह्मणम्—'आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तै. सं. २. ६. ६. ३) इति ॥ चक्राणासः। करोतेः 'छन्दसि लिट्' इति वर्तमाने लिटः कानच्। ततोऽसुक्। 'चितः' इत्यन्तोदात्तत्वम्। परीणहम्। परिणहनं परीणत्। परिपूर्वात् नह्यतेर्भावे क्विपि 'नहिवृति°' (पा. सू. ६. ३. ११६) इत्यादिना पूर्वपदस्य दीर्घः। पृथिव्याः। 'उदात्तयणः°' इति विभक्तेरुदात्तत्वम्। हिन्वानासः। 'हि गतौ वृद्धौ च'। ताच्छीलिकः चानश्। तितिरुः। तिरतिर्गत्यर्थः ॥

परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।
अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥ ९ ॥

परि। यत्। इन्द्र। रोदसी इति। उभे इति। अबुभोजीः। महिना। विश्वतः। सीम्।
अमन्यमानान्। अभि। मन्यमानैः। निः। ब्रह्मऽभिः। अधमः। दस्युम्। इन्द्र ॥ ९ ॥

हे ᵛइन्द्र ᵛयत् यदा ᵛरोदसी ᵛउभे द्युलोकभूलोकावुभौ ᵛमहिना त्वदीयेन महिम्ना ᵛविश्वतः ᵛसीं सर्वतः परिगृह्य ᵛपरि ᵛअबुभोजीः परितो भुक्तवानसि तदानीं त्वम् ᵛअमन्यमानान् मन्त्रार्थमनुध्यातुमशक्तानपि[3] केवलपाठकान् यजमानान् ᵛअभि ᵛमन्यमानैः अस्मदीया एते यजमाना रक्षणीया

---

१. ढ-स—उपक्षपयितारम्। २. ढ—युद्धायोद्यतम्। ३. ढ—मन्त्रार्थं मन्तुं ध्यातुमशक्तानपि।

इत्यभिमानं[1] कुर्वद्भिः[1] ᵛब्रह्मभिः मन्त्रैः ᵛदस्युं चोरं वृत्रादिरूपमसुरं ᵛनिः ᵛअधमः निःसारितवानसि। 'धमतिर्गतिकर्मा' ( निरु. ६. २ ) इति यास्कः ॥ अबुभोजीः । 'भुज पालनाभ्यवहारयोः'। लङि सिपि 'बहुलं छन्दसि' ( पा. सू. २. ४. ७६ ) इति विकरणस्य श्लुः । 'बहुलं छन्दसि' ( पा. सू. ७. ३. ९७ ) इति ईडागमः । अडुदात्तः । यद्वृत्तयोगादनिघातः । महिना महिम्ना । महच्छब्दात् पृथ्वादिलक्षणो भावे इमनिच् । 'टेः' इति टिलोपः । तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेणोदात्तत्वम् । मलोपश्छान्दसः । अमन्यमानान् । मन्यन्ते जानन्तीति मन्यमानाः । 'मन ज्ञाने'। 'दिवादिभ्यः श्यन्'। श्यनो नित्त्वादाद्युदात्तत्वम् । समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । संहितायां रुत्वानुनासिकावुक्तौ ॥

न ये दि॒वः पृ॑थि॒व्या अन्त॑मा॒पुर्न मा॒याभि॑र्धन॒दां प॒र्यभू॑वन् ।
यु॒जं वज्रं॑ वृष॒भश्च॑क्र॒ इन्द्रो॒ निर्ज्योति॑षा॒ तम॑सो॒ गा अ॑दुक्षत् ॥ १० ॥

न । ये । दि॒वः । पृ॒थि॒व्याः । अन्त॑म् । आ॒पुः । न । मा॒याभिः॑ । ध॒न॒ऽदाम् । प॒रि॒ऽअभू॑वन् ।
यु॒जम् । वज्र॑म् । वृ॒ष॒भः । च॒क्रे॒ । इन्द्रः॑ । निः । ज्योति॑षा । तम॑सः । गाः । अ॒धु॒क्ष॒त् ॥ १० ॥

ᵛये जलविशेषाः ᵛदिवः द्युलोकात् ᵛपृथिव्याः ᵛअन्तं भूमेः स्थानं ᵛन ᵛआपुः न प्राप्ताः । मेघरूपमापन्नेन वृत्रेण निरुद्धत्वात् । अत एव भूमिप्राप्त्यभावात् ᵛधनदां धनप्रदां भूमिं ᵛमायाभिः सस्योपकारादिभिः कर्मभिः ᵛन ᵛपर्यभूवन् परितो न व्याप्ताः । जलपानसस्याभिवृद्ध्याद्युपकारं न चक्रुरित्यर्थः । तदानीमयम् ᵛइन्द्रः मेघभेदनाय ᵛवज्रं ᵛयुजं स्वहस्तयुक्तं ᵛचक्रे । ततः ᵛज्योतिषा द्योतमानेन वज्रेण ᵛतमसः अन्धकाररूपान्मेघात् ᵛगाः गमनशीलान्युदकानि ᵛनिः ᵛअधुक्षत् निःशेषेण दुग्धवान् । मेघं भित्त्वा जलं वृष्टवानित्यर्थः ॥ दिवः । 'ऊडिदम्॰' इति षष्ठ्या उदात्तत्वम् । आपुः । 'आप्लृ व्याप्तौ'। लिटि उसि रूपम् । यद्वृत्तयोगादनिघातः । पर्यभूवन् । अत्रापि यच्छब्दस्यानुषङ्गात् निघाताभावः । युजम् । 'युजिर् योगे'। 'ऋत्विक्॰' इत्यादिना क्विन् । 'अनित्यमागमशासनम्' इति वचनात् नुमभावः । अधुक्षत् । 'दुह प्रपूरणे'। लुङि 'शल इगुपधादनिटः क्सः' ( पा. सू. ३. १. ४५ ) इति च्लेः क्सादेशः । 'दादेर्धातोर्घः' ( पा. सू. ८. २. ३२ ) इति घत्वम् । 'एकाचो बशः॰' ( पा. सू. ८. २. ३७ ) इत्यादिना भष्भावः । संहितायां भष्भावाभावश्छान्दसः ॥ ॥ २ ॥

अनु॑ स्व॒धाम॑क्षर॒न्नापो॑ अ॒स्याव॑र्धत॒ मध्य॒ आ ना॒व्या॑नाम् ।
स॒ध्री॒चीने॑न॒ मन॑सा॒ तमिन्द्र॒ ओजि॑ष्ठेन॒ हन्म॑नाह॒न्नभि द्यून् ॥ ११ ॥

अनु॑ । स्व॒धाम् । अ॒क्ष॒र॒न् । आपः॑ । अ॒स्य॒ । अव॑र्धत । मध्ये॑ । आ । ना॒व्या॑नाम् ।
स॒ध्री॒चीने॑न । मन॑सा । तम् । इन्द्रः॑ । ओजि॑ष्ठेन । हन्म॑ना । अ॒ह॒न् । अ॒भि । द्यून् ॥ ११ ॥

ᵛआपः जलानि ᵛअस्य इन्द्रस्य ᵛस्वधाम् अन्नं व्रीह्यादिरूपमनुलक्ष्य ᵛअक्षरन् मेघाद्वृष्टा अभवन् । तदानीमयं वृत्रः ᵛनाव्यानां नावा तरणयोग्यानां बह्वीनामपां ᵛमध्ये ᵛआ समन्तात् ᵛअवर्धत वृद्धिं

1. च-छ-ण-न-फ–इत्यभिमानवाद्भिः ।

प्रासः । प्रभूतजले वर्तमानोऽपि न ममार किंतु अभिवृद्ध एव । तदानीम् ᵛइन्द्रः ᵛसध्रीचीनेन सह-गच्छता ᵛमनसा युक्तं ᵛतं वृत्रम् ᵛओजिष्ठेन अतिबलयुक्तेन ᵛहन्मना हननसाधनेन वज्रेण ᵛअभि ᵛद्यून् कतिचिद्दिवसानभिलक्ष्य ᵛअहन् तेषु दिवसेषु हतवान् । जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेन्द्र-स्तिष्ठति तत्रैव सह गच्छति तादृशमभिज्ञाय स[1] हतवानित्यर्थः ॥ अक्षरन् । 'क्षर संचलने'। नाव्यानाम् नावा तार्याणाम्। 'नौवयोधर्म°' (पा. सू. ४. ४. ९१) इत्यादिना यत्। 'वान्तो यि प्रत्यये' (पा. सू. ६. १. ७९) इति आवादेशः। '°अनावः' (पा. सू. ६. १. २१३) इति पर्युदासात् 'तित्स्वरितम्' इति प्रत्ययस्वरितत्वम्। सध्रीचीनेन। सहाञ्चतीति सध्र्यङ्। 'सहस्य सध्रिः' (पा. सू. ६. ३. ९५) इति सध्र्यादेशः। 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा. सू. ५. ४. ८) इति स्वार्थे खप्रत्ययः। तस्य 'आयन्°' इत्यादिना ईनादेशः। 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम्। खादेशस्य उपदेशिवद्वचनात् ईकार उदात्तः। ओजिष्ठेन। ओजोऽस्यास्तीति ओजस्वी। 'अस्मायामेधा°' (पा. सू. ५. २. १२१) इति विनिः। तत आतिशायनिकः इष्ठन्। 'विन्मतोर्लुक्' (पा. सू. ५. ३. ६५) इति विनो लुक्। 'टेः' इति टिलोपः। नित्त्वादाद्युदात्तत्वम्। हन्मना। हन्यतेऽनेनेति हन्म। 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणात् करणेऽपि मनिन्। नित्त्वादाद्युदात्तत्वम्। तृतीयैकवचने अल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' (पा. सू. ६. ४. १३७) इति प्रतिषेधः॥

न्या॑विध्यदिली॒बिश॑स्य दृ॒ळ्हा वि शृ॒ङ्गिण॑मभिन॒च्छुष्ण॒मिन्द्रः॑ ।
याव॒त्तरो॑ मघव॒न्याव॒दोजो॒ वज्रे॑ण॒ शत्रु॑मवधीः पृत॒न्युम् ॥ १२ ॥

नि । अ॒वि॒ध्य॒त् । इ॒ली॒बिश॑स्य । दृ॒ळ्हा । वि । शृ॒ङ्गिण॑म् । अ॒भि॒न॒त् । शुष्ण॑म् । इन्द्रः॑ ।
याव॑त् । तरः॑ । म॒घ॒ऽव॒न् । याव॑त् । ओजः॑ । वज्रे॑ण । शत्रु॑म् । अ॒व॒धीः॒ । पृ॒त॒न्युम् ॥ १२ ॥

ᵛइलीबिशस्य इलाया भूमेर्बिले शयानस्य वृत्रस्य संबन्धीनि। 'इलाबिलशयस्य' (निरु. ६.१९) इति यास्कः। ᵛदृळ्हा दृंहितानि असुरेण निरुद्धानि प्रभूतान्युदकानि ᵛइन्द्रः ᵛन्यविध्यत् नितरां विद्धवान्। यद्वा। दृळ्हानि प्रबलानि सैन्यानि नितरां विद्धवान्। तत ऊर्ध्वं ᵛशृङ्गिणं गोमहिषादि-शृङ्गसमानैरायुधैरुपेतं ᵛशुष्णं जगतः शोषकं वृत्रं ᵛवि ᵛअभिनत् विविधं ताडितवान्। हे ᵛमघवन् धन-युक्तेन्द्र तव ᵛयावत्तरः यावान्[2] वेगोऽस्ति[2] ᵛयावदोजः यावद्बलमस्ति तेन सर्वेण युक्तस्त्वं ᵛपृतन्युं पृतनां युद्धमिच्छन्तं ᵛशत्रुं वृत्रं ᵛवज्रेण ᵛअवधीः हतवानसि॥ अविध्यत्। 'व्यध ताडने'। श्यनि 'ग्रहिज्या°' इत्यादिना संप्रसारणम्। 'तिङ्ङतिङः' इति निघाते 'उदात्तस्वरितयोर्यणः°' इति संहितायाम् अडागमस्य स्वरितत्वम्। इलीबिशस्य। पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः। दृळ्हा। दृंहेर्निष्ठायां 'दृढः स्थूलबलयोः' (पा. सू. ७. २. २०) इति निपात्यते। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। अभिनत्। 'भिदिर् विदारणे'। लङि 'रुधादिभ्यः श्नम्'। 'इतश्च' (पा. सू. ३. ४. १००) इति इकारलोपे 'हल्ङ्याब्भ्यः°' इति तिलोपः। शुष्णम्। 'शुष शोषणे'। शोषयतीति शुष्णः। 'तृषिशुषिरसिभ्यः किच्च' (उ. सू. ३. ३९२) इति नप्रत्ययः। 'नित्' इत्यनुवृत्ते-राद्युदात्तत्वम्। अवधीः। 'लुङि च' (पा. सू. २. ४. ४३) इति हन्तेर्वधादेशः। पृतन्युम्। पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्य°' इति अन्त्यलोपः। 'क्याच्छन्दसि' इति उप्रत्ययः॥

१. च-छ-त-ध-न-फ--'सः' नास्ति। २. च-छ-ण-न-फ-र-श-स--यावत्तेजोऽस्ति।

अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् ।
सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

vअस्य इन्द्रस्य vसिध्मः साधको वज्रः vशत्रून् vअभि इन्द्रवैरिणोऽभिलक्ष्य vअजिगात् गतवान् । जिगातिर्गतिकर्मा । 'गाति जिगाति ' (नि. २. १४. ११३) इति गतिकर्मसु पाठात् । स च इन्द्रः vतिग्मेन तीक्ष्णेन vवृषभेण श्रेष्ठेनायुधेन तेन vवज्रेण vपुरः वृत्रस्य पुराणि vवि vअभेत् विविधं भिन्नवान् । ततः सः vइन्द्रः vवज्रेण स्वकीयेन वृत्रं vसम् vअसृजत् संयोजितवान् । संयोज्य च vशाशदानः वृत्रं हिंसन् vस्वां vमतिं स्वकीयां हर्षोपेतां बुद्धिं vप्र vअतिरत् प्रकर्षेण वर्धितवान् ॥ सिध्मः । 'षिधु संराद्धौ '। अस्मात् औणादिको मक् । कित्त्वादगुणः । प्रत्ययस्वरः। अजिगात् । 'गा स्तुतौ ' । अत्र तु गत्यर्थः । जुहोत्यादित्वात् श्लुः । द्विर्भावे ' बहुलं छन्दसि ' इत्यभ्यासस्य इत्वम् । तिग्मेन । 'युजिरुचितिजां कुश्च ' (उ. सू. १. १४३) इति मक् । कुत्वम् । वृषभेण । 'ऋषिवृषिभ्यां कित् ' (उ. सू. ३. ४०३) इत्यनेन अभच् । अभेत् । 'भिदिर् विदारणे ' । क्षमि प्राप्ते व्यत्ययेन शप् । तस्य 'बहुलं छन्दसि ' इति लुक् । लघूपधगुणे ' हल्ङ्याब्भ्यः° ' इति लोपः[1]। यद्वा । लुङि च्लेलुक् । अतिरत् । प्रपूर्वस्तिरतिर्वर्धनार्थः । यद्वा । तरतेर्व्यत्ययेन शः । 'ऋत इद्धातोः ' इति इत्वम् । शाशदानः । 'शद्लृ शातने '। अस्मात् यङन्तात् शानच् । तस्य ' छन्दस्युभयथा ' इति आर्धधातुकत्वात् अतोलोपयलोपौ । सार्वधातुकत्वात् 'अभ्यस्तानामादिः ' (पा. सू. ६. १. १८९) इत्याद्युदात्तत्वम् ॥

आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥

आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् ।
शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥ १४ ॥

हे vइन्द्र vकुत्सम् एतन्नामकं गोत्रप्रवर्तकमृषिम् vआवः रक्षितवानसि । vयस्मिन् कुत्से vचाकन् स्तुतिं कामयमानो वर्तसे । तं कुत्समिति पूर्वत्रान्वयः। तथा vदशद्युम् एतन्नामकं दशसु दिक्षु दीप्यमानमृषिं vप्रावः प्रकर्षेण रक्षितवानसि । कीदृशम् । vयुध्यन्तं स्वकीयैः शत्रुभिः सह युद्धं कुर्वन्तं vवृषभं गुणैः श्रेष्ठम् । vशफच्युतः त्वदीयाश्वस्य शफात् पतितः vरेणुः धूलिः vद्यां द्युलोकं vनक्षत प्राप्नोति । vश्वैत्रेयः श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहात् vनृसह्याय नृभिः पुरुषैः सोढव्याय vउत् vतस्थौ जलादुत्थितवान् ॥ चाकन् । 'चक तृप्तौ ' । अस्मात् ण्यन्तात् शतृ । ' छन्दस्युभयथा ' इति आर्धधातुकत्वात् णिलोपः शबभावश्च । प्रत्ययस्वरेणान्तोदात्तत्वम् । यद्वा ।

---

१. ण-त-न-ल-श-स-तिलोपः ।

' कमु कान्तौ ' इत्यस्मात् यङ्लुगन्तात् लङि सिपि अभ्यासस्य जुगभावश्छान्दसः । ' दीर्घोऽकितः ' इति दीर्घत्वम् । सिलोपे 'मो नो धातोः' ( पा. सू. ८. २. ६४ ) इति मकारस्य नकारः । धातुस्वरः। यद्वृत्तयोगादनिघातः। युध्यन्तम् । व्यत्ययेन परस्मैपदम् । दशद्युम् । दीव्यतेः प्रकाशार्थात् संपदादिलक्षणः क्विप् । ' च्छ्वोः शूठ्०' (पा. सू. ६. ४. १९) इति ऊठ्। दशसु दिक्षु द्युः यस्यासौ दशद्युः। छान्दसं ह्रस्वत्वम्। यद्वा । द्युशब्दः अहर्नामसु पठितः (नि. १. ९. २)। तेन प्रवृत्तिनिमित्तभूतः प्रकाशो लक्ष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शफच्युतः । शफेन च्युतः । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । नक्षत । ' नक्ष गतौ ' । व्यत्ययेनात्मनेपदम् । श्वैत्रेयः । श्वित्राया अपत्यम् । ' स्त्रीभ्यो ढक् ' ( पा. सू. ४. १. १२० ) । नृसह्याय । ' शकिसहोश्च ' ( पा. सू. ३. १. ९९ ) इति कर्मणि यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । ' पूर्वपदात् ' ( पा. सू. ८. ३. १०६ ) इति षत्वम् । संहितायां दीर्घश्छान्दसः ॥

आवः शर्मं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५ ॥

आवः । शर्मम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् ।
ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकरित्यकः ॥ १५ ॥

हे Vमघवन् धनवन्निन्द्र Vश्वित्र्यं श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषम् Vआवः रक्षितवानसि । किमर्थम् । Vक्षेत्रजेषे शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् । Vशर्मं त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तं Vवृषभं गुणैः श्रेष्ठं Vतुग्र्यासु Vगां जलेषु गतं मग्नमित्यर्थः । ' तुग्र्या बुर्बुरम्[1] ' (नि. १. १२.२१) इति उदकनामसु पठितत्वात् । Vअत्र अस्माभिः सह युद्धे[2] Vज्योक् Vचित् चिरकालमपि Vतस्थिवांसः अवस्थिताः सन्तः Vअक्रन् ये वैरिणः शत्रुत्वमकुर्वन् । Vशत्रूयतां शत्रूनात्मन इच्छतां तेषाम् Vअधरा Vवेदना निकृष्टानि दुःखानि त्वम् Vअकः कुरु[3] ॥ तुग्रशब्दोऽन्तरिक्षवचनः । तत्र भवास्तुग्रियाः । ' तुग्राद्घन् ' ( पा. सू. ४. ४. ११५ ) इति घन् । तस्य इयादेशः । इकारलोपश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । क्षेत्रजेषे । ' जेषृ णेषृ एषृ प्रेषृ गतौ ' । अस्मात् संपदादिलक्षणः क्विप् । क्षेत्रस्य जेट् क्षेत्रजेट् । समासान्तोदात्तत्वम् । ' अन्तोदात्तादुत्तरपदात्० ' ( पा. सू. ६. १. १६९ ) इत्यादिना विभक्तेरुदात्तत्वम् । श्वित्र्यम् । श्वित्रायां भवः । ' भवे छन्दसि ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । तस्थिवांसः । तिष्ठतेः क्वसुः । ' वस्वेकाजाद्घसाम् ' इति इडागमः । अक्रन् । करोतेर्लुङि ' मन्त्रे घस०' इत्यादिना च्लेर्लुक् । शत्रूयताम् । शत्रूनात्मन इच्छन्तीति शत्रूयन्तः । ' सुप आत्मनः क्यच् ' इति क्यच् । तदन्तात् शतृ । तस्य लसार्वधातुकानुदात्तत्वे एकादेशस्वरेणोदात्तत्वम् । तस्य च पूर्वत्रासिद्धत्वं नेष्यते ( पा. सू. ८. २. ६. १ ) इत्युक्तत्वात् शत्रन्तमन्तोदात्तत्वमिति ' शतुरनुमो नद्यजादी ' इति विभक्तेरुदात्तत्वम् । अधरा वेदना इत्युभयत्र ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । अकः । करोतेर्लुङि ' मन्त्रे घस० ' इत्यादिना च्लेर्लुक् । गुणः ॥ ॥ ३ ॥

---

१. च-फ-श- बर्बुरम् । २. छ-ण-न-ल-युक्ते युद्धे; च-फ-युक्तयुद्धे ; स-युक्ते । ३. श-कृतवानसि ।

'त्रिश्चिन्नो अद्य' इति चतुर्थं सूक्तं द्वादशर्चम्। 'ऋषिश्चान्यस्मादृषेः' इति परिभाषया आङ्गिरसो हिरण्यस्तूप ऋषिः। अश्विनौ देवता। 'क त्री चक्रा' इति नवमी 'आ नो अश्विना' इति द्वादशी च त्रिष्टुभौ। शिष्टाः त्रिष्टुबन्तपरिभाषया जगत्यः। 'त्रिश्चिद्द्वादशाश्विनं नवम्यन्त्ये त्रिष्टुभौ' इत्यनुक्रमणिका। प्रातरनुवाके आश्विने क्रतौ जागते छन्दसि इदं सूक्तम्। 'अथाश्विनः' इति खण्डे सूत्रितं– 'त्रिश्चिन्नो अद्येळे द्यावापृथिवी इति जागतम्' (आश्व. श्रौ. ४. १५) इति। आश्विने शस्त्रेऽप्येतत् सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व. श्रौ. ६. ५) इत्यतिदिष्टत्वात्॥

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः॥ १॥

त्रिः। चित्। नः। अद्य। भवतम्। नवेदसा। विऽभुः। वाम्। यामः। उत। रातिः। अश्विना

युवोः। हि। यन्त्रम्। हिम्याऽइव। वाससः। अभिऽआयंसेन्या। भवतम्। मनीषिऽभिः॥ १॥

हे नवेदसा अश्विना मेधाविनौ अश्विदेवौ[1]। नवेदा इति मेधाविनाम, 'नवेदाः कविः मनीषी' (नि. ३. १५. ९) इति तन्नामसु पठितत्वात्। तादृशौ युवां त्रिश्चित् त्रिवारमपि अद्य अस्मिन् कर्मणि नः अस्मदर्थं भवतम् आगतौ[2] भवतम्[2]। अत्र त्रिः इति वचनं सवनत्रयापेक्षम् आदरातिशयद्योतनार्थं वा। 'त्रिषत्या हि देवाः' (तै. ब्रा. ३. २. ३. ८) इति श्रुत्यन्तरात्। वां युवयोः यामः गमनसाधनभूतो रथः विभुः व्याप्तः। उत अपि च रातिः दानं विभुरिति शेषः। युवोः युवयोरुभयोः यन्त्रं हि परस्परनियमरूपः संबन्धविशेषोऽस्ति खलु। तत्र दृष्टान्तः। वाससः सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य हिम्येव हिमयुक्तया राज्येव। यथा रात्र्या सह दिवसस्य संबन्धः कदाचिदपि नापैति तद्वत्। युवामुभौ मनीषिभिः मेधाविभिर्ऋत्विग्भिः। मनीषीति मेधाविनाम, 'मनीषी मन्धाता' (नि. ३. १५. ११) इति तन्नामसु पठितत्वात्। अभ्यायंसेन्या अभितो नियन्तव्यौ अनुग्रहवशात् तदधीनौ भवतम्॥ अद्य। 'निपातस्य च' इति संहितायां दीर्घः। नवेदसा। विपरीतं न वित्तः इति नवेदसौ। 'विद ज्ञाने' इत्यस्मात् औणादिकोऽसुन्। नञ्समासे 'नभ्राण्नपात्°' इत्यादिना नकारस्य प्रकृतिभावः। 'सुपां सुलुक्°' इति आकारः। आमन्त्रितनिघातः। यामः। यायते गम्यतेऽनेनेति यामो रथः। 'अर्तिस्तुसु°' इत्यादिना मन्। नित्त्वादाद्युदात्तत्वम्। यद्वा। 'यम उपरमे' इत्यस्मात् कर्मणि घञ्। वृषादिषु पाठादाद्युदात्तत्वम्। रातिः। 'रा दाने' इत्यस्मात् भावे क्तिन्। 'मन्त्रे वृष°' इत्यादिना तस्योदात्तत्वम्। युवोः। 'सुपां सुपो भवन्ति' इति षष्ठीद्विवचनस्य षष्ठीद्विवचनादेशः। अत आदेशविषयत्वात् 'योऽचि' (पा. सू. ७. २. ८९) इति यत्वं न भवति। 'शेषे लोपः' इति टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। अन्त्यलोपपक्षे तु एकादेशस्वरेण। हिम्या इव। हिमेति रात्रिनाम, 'ऊधः पयः हिमा' (नि. १. ७. २२) इति तन्नामसु पठितत्वात्। 'हन्तेर्हि च' (उ. सू. १. १४४) इति मक्। हन्ति पद्मानीति हिमम्। अर्शआद्यच्। हिमा रात्रिः। तत उत्तरस्य तृतीयैकवचनस्य 'सुपां सुलुक्°' इति ड्यादेशः। ततः टिलोपे उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम्। वाससः। 'वस आच्छादने'। वासयति प्रकाशेनाच्छादयति इति अहर्वासः। अभ्यायंसेन्या। अभ्याङ् इत्युपसर्गद्वयोपसृष्टात् 'यम उपरमे' इत्यस्मात् औणादिकः सेन्यप्रत्ययः। 'सुपां सुलुक्°' इति आकारः॥

---

१. ढ–अश्विनौ। २. च-छ-न–आगच्छतम्; स–आगतम्।

त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।
त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ २ ॥

त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनाम् । अनु । विश्वे । इत् । विदुः ।
त्रयः । स्कम्भासः । स्कभितासः । आऽरभे । त्रिः । नक्तम् । याथः । त्रिः । ऊँ इति । अश्विना । दिवा ॥२॥

मधुवाहने मधुरद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्तेऽश्विनोः संबन्धिनि रथे पवयः वज्रसमाना दृढाश्चक्रविशेषाः त्रयः त्रिसंख्याकाः सन्ति । इत् इत्थं चक्रत्रयसद्भावप्रकारं विश्वे सर्वे देवाः सोमस्य चन्द्रस्य वेनां कमनीयां भार्यामभिलक्ष्य यात्रायां विदुः जानन्ति । यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्य अश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः । तस्य रथस्योपरि स्कम्भासः स्तम्भविशेषाः त्रयः त्रिसंख्याकाः स्कभितासः स्थापिताः । किमर्थम् । आरभे आरब्धुम् अवलम्बितुम् । यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तालम्बनभूताः स्तम्भा इत्यर्थः । हे अश्विना युवां तादृशेन रथेन नक्तं रात्रौ त्रिः याथः त्रिवारं गच्छथः । तथा दिवा दिवसेऽपि त्रिः याथः । रात्रावहनि च रथमारुह्य पुनःपुनः क्रीडथ इत्यर्थः ॥ मधुवाहने । मधु वाह्यतेऽनेनेति मधुवाहनः । करणे ल्युट् । विदुः । वेत्तेर्लटि ‘ विदो लटो वा ’ इति झेः उसादेशः । स्कम्भासः । ‘ ष्टभि स्कभि गतिप्रतिबन्धे ’ । स्कम्भन्ते प्रतिबद्धा भवन्तीति स्कम्भाः । पचाद्यच् । स्कभितासः । स्कम्भुः सौत्रो धातुः । अस्मात् निष्ठायां ‘ यस्य विभाषा ’ इति इट्प्रतिषेधे प्राप्ते ‘ प्रसितस्कभित° ’ इत्यादिना इडागमो निपातितः । आरभे । ‘ रभ राभस्ये ’ । अस्मात् आङ्पूर्वात् संपदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥ ३ ॥

समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्षतम् ।
त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥३॥

हे अश्विना अश्विनौ देवौ युवं युवामुभौ समाने अहन् एकस्मिन्ननुष्ठानदिने त्रिरवद्यगोहना त्रिवारमनुष्ठानगतानां दोषाणां संवरणकारिणौ भवतम् । अद्य अस्मिन् दिने यज्ञं यज्ञगतं हविः मधुना मधुररसेन त्रिः मिमिक्षतं त्रिवारं सिञ्चतम् । किं च दोषाः उषसश्च रात्रीर्दिवसांश्च रात्रिषु दिवसेषु च नैरन्तर्येण वाजवतीः बलकारिणीः इषः अन्नानि अस्मभ्यं पिन्वतं सिञ्चतं प्रयच्छतमित्यर्थः ॥ अहन् । ‘ सुपां सुलुक्° ’ इति सप्तम्या लुक् । अवद्यगोहना । ‘ गुहू संवरणे ’ । अवद्यस्य गूहयितारौ । नन्द्यादित्वात् ल्युः । ‘ ऊदुपधाया गोहः ’ (पा. सू. ६. ४. ८९) इति प्राप्तस्य ऊत्वस्य अभावश्छान्दसः । मिमिक्षतम् । ‘ मिह सेचने ’ । सनि ‘एकाच उपदेशेऽनुदात्तात्’ इति इट्प्रतिषेधः ।

'हलन्ताच्च' इति सनः किस्त्वात् लघूपधगुणाभावः। द्विर्भावहलादिशेषौ। ढत्वकत्वषत्वानि। वाजवतीः। 'उगितश्च' इति ङीप्। पिन्वतम्। 'पिवि मिवि णिवि सेचने'। इदित्वात् नुम्। कर्तरि शप्॥

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम्।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम्॥ ४॥

त्रिः। वर्तिः। यातम्। त्रिः। अनुऽव्रते। जने। त्रिः। सुप्रऽअव्ये। त्रेधाऽइव। शिक्षतम्।
त्रिः। नान्द्यम्। वहतम्। अश्विना। युवम्। त्रिः। पृक्षः। अस्मे इति। अक्षराऽइव। पिन्वतम्॥४॥

हे ᵛअश्विना ᵛयुवं ᵛत्रिर्वर्तिर्यातम् अस्मदीयवर्तनसाधनं गृहं त्रिर्यातं त्रिवारं प्राप्नुतम्। तथा ᵛअनुव्रते अस्मदनुकूलव्यापारयुक्ते ᵛजने ᵛत्रिः यातं त्रिवारं तदनुग्रहाय गच्छतम्। ᵛत्रिः ᵛसुप्राव्ये त्रिवारं सुष्ठु प्रकर्षेण भवद्भ्यां रक्षणीये प्रवर्तमानानस्मान् ᵛत्रेधेव त्रिभिरेव प्रकारैः ᵛशिक्षतम्। पुनःपुनरनुष्ठानमुपदेष्टव्यमित्यर्थः। तथा ᵛनान्द्यं नन्दनीयं संतोषकरं फलं ᵛत्रिः ᵛवहतं प्रापयतम्। ᵛअस्मे अस्मासु ᵛपृक्षः अन्नं ᵛत्रिः ᵛपिन्वतं त्रिवारं प्रयच्छतम्। तत्र दृष्टान्तः। ᵛअक्षरेव। अक्षराण्युदकानि। 'अक्षरा स्रोतः तृप्तिः' (नि. १.२.३२) इति तन्नामसु पाठात्। तानि पर्जन्यो यथा प्रयच्छति तद्वत्॥ वर्तिः। वर्ततेऽत्रेति वर्तिर्गृहम्। 'हृपिषिरुहिवृति°' (उ. सू. ४. ५५८) इत्यादिना इप्रत्ययः। 'सुपां सुलुक्°' इति द्वितीयैकवचनस्य सुआदेशः। सुप्राव्ये। उपसर्गद्वयोपसृष्टात् अवतेः कर्मणि ण्यत्। 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः। 'तित्स्वरितम्' इति स्वरितत्वम्। शिक्षतम्। 'शिक्ष विद्योपादाने'। नान्द्यम्। ण्यदन्तः। पृक्षः। 'पृची संपर्के'। असुनि सुडागमः। अस्मे। 'सुपां सुलुक्°' इति शेआदेशः। अक्षरा इव। अश्नुवते व्याप्नुवन्तीति अक्षराण्युदकानि। औणादिकः क्सरप्रत्ययः। शेर्लोपः॥

त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथम्॥ ५॥

त्रिः। नः। रयिम्। वहतम्। अश्विना। युवम्। त्रिः। देवऽताता। त्रिः। उत। अवतम्। धियः।
त्रिः। सौभगऽत्वम्। त्रिः। उत। श्रवांसि। नः। त्रिऽस्थम्। वाम्। सूरे। दुहिता। आ। रुहत्। रथम्॥५॥

हे ᵛअश्विना ᵛयुवं[1] ᵛनः अस्मान् ᵛरयिं धनं ᵛत्रिः ᵛवहतं त्रिवारं प्रापयतम्। ᵛदेवताता देवतातौ देवैर्युक्ते कर्मणि ᵛत्रिः त्रिवारमागच्छतमिति शेषः। ᵛउत अपि च ᵛधियः अस्मद्बुद्धीः ᵛत्रिः त्रिवारं रक्षतम्। ᵛसौभगत्वं सौभाग्यं ᵛत्रिः वहतमिति शेषः। ᵛउत अपि च ᵛश्रवांसि अन्नानि ᵛनः अस्मभ्यं ᵛत्रिः वहतम्। ᵛवां युवयोः संबन्धिनं ᵛत्रिष्ठं चक्रत्रयेऽवस्थितं ᵛरथं ᵛसूरे सूर्यस्य ᵛदुहिता पुत्री। 'दुहिता दुर्हिता दूरे हिता' (निरु. ३. ४) इति यास्कः। सा आरूढवती॥ देवताता। 'सर्वदेवात्तातिल्' (पा. सू. ४. ४. १४२) इति स्वार्थिकः तातिल्प्रत्ययः। तेन देवतातिशब्देन देवसंबद्धो यज्ञो लक्ष्यते।

---

१. त-ध-ल-स–युवं युवाम्।

'देवताता मखः ' (नि.३. १७. १०) इति तन्नामसु पठितत्वात्। 'लिति ' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। 'सुपां सुलुक्° ' इति सप्तम्या डादेशः। त्रिष्ठम्। त्रिषु चक्रेषु तिष्ठतीति त्रिष्ठः। 'सुपि स्थः ' (पा. सू. ३. २. ४) इति कः। 'अम्बाम्ब° ' (पा. सू. ८. ३. ९७) इत्यादिना सकारस्य षत्वम्। सूरे। 'षू प्रेरणे '। 'सुसूधागृधिभ्यः क्रन् ' (उ. सू. २. १८२) इति क्रन्। नित्त्वादाद्युदात्तः। विभक्तिव्यत्ययः। आ रुहत्। 'कृमृदृरुहिभ्यश्छन्दसि ' (पा. सू. ३. १. ५९) इति च्लेः अङादेशः ॥

त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः ।
ओ॒मानं॑ शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती ॥ ६ ॥

त्रिः । नः । अ॒श्विना॒ । दि॒व्यानि॑ । भे॒ष॒जा । त्रिः । पार्थि॑वानि । त्रिः । ऊँ इति॑ । द॒त्त॒म् । अ॒त्ऽभ्यः ।
ओ॒मान॑म् । श॒म्ऽयोः । मम॑काय । सू॒नवे॑ । त्रि॒ऽधातु॑ । शर्म॑ । व॒ह॒त॒म् । शु॒भः । प॒ती इति॑ ॥ ६ ॥

हे ᵛअश्विना ᵛनः अस्मभ्यं ᵛदिव्यानि द्युलोकवर्तीनि ᵛभेषजा औषधानि ᵛत्रिः ᵛदत्तम्। तथा ᵛपार्थिवानि पृथिव्यामुत्पन्नान्यौषधानि ᵛत्रिः दत्तम्। ᵛअद्भ्यः ᵛउ अन्तरिक्षसकाशादप्यौषधानि ᵛत्रिः दत्तम्। आपः इत्यन्तरिक्षनाम, 'आपः पृथिवी भूः ' (नि. १. ३. ८) इति तन्नामसु पाठात्। ᵛशंयोः एतन्नामकस्य बृहस्पतिपुत्रस्य। 'ते शंयुं बार्हस्पत्यमब्रुवन् ' (तै. सं. २. ६. १०. १) इति ब्राह्मणान्तरात्। तस्य संबन्धिनम् ᵛओमानं सुखविशेषं ᵛममकाय ᵛसूनवे मदीयाय पुत्राय ᵛदत्तम्। हे ᵛशुभस्पती शोभनस्यौषधजातस्य पालकौ युवां ᵛत्रिधातु वातपित्तश्लेष्मधातुत्रयशमनविषयं[1] सुखं[1] ᵛवहतं प्रापयतम् ॥ दिव्यानि। दण्डादित्वात् (पा. सू. ५. १. ६६) यप्रत्ययः। भेषजा। 'भिषज् चिकित्सायाम् '। 'पुंसि संज्ञायाम्° ' इति घः। शंयोः। 'शमु उपशमे '। क्विप्। शम्। 'यु अमिश्रणे '। अस्मात् विच्। कृदुत्तरपदप्रकृतिस्वरः। त्रिधातु। 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ' (उ. सू. १. ६९)। अद्भ्यः। 'ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम्। ओमानम्। अवतेः 'अन्येभ्योऽपि दृश्यन्ते ' इति मनिन्। 'ज्वरत्वर° ' इत्यादिना अकारवकारयोः ऊठ्। सार्वधातुकार्धधातुकलक्षणो गुणः। यदि 'ज्वरत्वर° ' इत्यत्र '°अनुनासिके च ' (पा. सू. ६. ४. १९) इति नानुवर्तते तर्हि पूर्वेणैव सूत्रेण वकारस्य ऊडादेशो भविष्यति। शुभस्पती। 'शुभ दीप्तौ '। संपदादिलक्षणः क्विप्। 'षष्ठ्याः पतिपुत्र° ' इति संहितायां विसर्जनीयस्य सत्वम्। 'सुबामन्त्रिते° ' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ॥ ॥ ४ ॥

त्रिर्नो॑ अश्विना यज॒ता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑ पृथि॒वीम॑शायतम् ।
ति॒स्रो ना॑सत्या रथ्या परा॒वत॑ आ॒त्मेव॒ वात॒ः स्वस॑राणि गच्छतम् ॥ ७ ॥

त्रिः । नः । अ॒श्विना॒ । य॒ज॒ता । दि॒वेऽदि॑वे । परि॑ । त्रि॒ऽधातु॑ । पृ॒थि॒वीम् । अ॒शा॒य॒त॒म् ।
ति॒स्रः । ना॒स॒त्या॒ । र॒थ्या॒ । प॒रा॒ऽवत॑ः । आ॒त्माऽइ॑व । वात॑ः । स्वस॑राणि । ग॒च्छ॒त॒म् ॥ ७ ॥

---

१. च-फ-°शमनविषयं शर्म सुखम्।

हे ^V^अश्विना ^V^दिवेदिवे प्रतिदिनम्। 'दिवेदिवे द्यविद्यवि' (नि. १. ९. ११) इति अहर्नामसु पठितत्वात्। ^V^यजता यष्टव्यौ युवां ^V^नः अस्मदीयां ^V^पृथिवीं वेदिरूपां भूमिं ^V^परि सर्वतः प्राप्य ^V^त्रिधातु कक्ष्यात्रययुक्ते आस्तीर्णे बर्हिषि ^V^त्रिः त्रिवारम् ^V^अशायतं शयनं कुरुतम्। हे ^V^रथ्या रथ्यौ रथस्वामिनौ ^V^तिस्रः त्रिसंख्याकाः ऐष्टिकपाशुकसौमिकरूपा वेदीः ^V^गच्छतम्। तत्र दृष्टान्तः। ^V^स्वसराणि शरीराणि ^V^आत्मेव ^V^वातः। यथा प्राणिनामात्मभूतः प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत्॥ यजता। यजतेः 'भृमृदृशि°' (उ. सू. ३. ३९०) इत्यादिना अतच्। 'चितः' इत्यन्तोदात्तत्वम्। त्रिधातु। त्रेधा धीयते निधीयते इति त्रिधातु। 'सितनिगमि°' (उ. सू. १. ६९) इत्यादिना धाञः तुन्। नित्त्वादाद्युदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। 'सुपां सुलुक्°' इति सप्तम्या लुक्। अशायतम्। अदादित्वात् शपो लुक्। अशयातामित्यस्य ह्रस्वदीर्घयोर्व्यत्यासः। नासत्या। सत्सु साधू सत्यौ। न सत्यौ असत्यौ। न असत्यौ नासत्यौ। 'सत्यावेव नासत्यावित्यौर्णवाभः' (निरु. ६. १३) इति यास्कः। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। रथ्या। रथार्हौ स्वामिनावित्यर्थः। 'छन्दसि च' (पा. सू. ५. १. ६७) इति यप्रत्ययः। स्वसराणि। सरन्ति गच्छन्तीति सरा इन्द्रियाणि। स्वकीयाः सरा येषां शरीराणाम्[1]। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

त्रिर॑श्विना॒ सिन्धु॑भिः स॒प्तमा॑तृभि॒स्त्रय॑ आहा॒वास्त्रे॒धा ह॒विष्कृ॒तम्।
ति॒स्रः पृ॑थि॒वीरु॒परि॑ प्र॒वा दि॒वो नाकं॑ रक्षेथे॒ द्युभि॑र॒क्तुभि॒र्हि॒तम्॥ ८॥

त्रिः। अ॒श्विना॒। सिन्धु॑ऽभिः। स॒प्तमा॑तृऽभिः। त्रयः॑। आ॒ऽहा॒वाः। त्रे॒धा। ह॒विः। कृ॒तम्।
ति॒स्रः। पृ॒थि॒वीः। उ॒परि॑। प्र॒वा। दि॒वः। नाक॑म्। र॒क्षेथे॒ इति॑। द्युऽभिः॑। अ॒क्तुऽभिः॑। हि॒तम्॥८॥

हे ^V^अश्विना ^V^सप्तमातृभिः। 'इमं मे गङ्गे' (ऋ. सं. १०. ७५. ५) इत्यादिमन्त्रोक्ताः सप्तसंख्याका गङ्गाद्या नद्यो मातर उत्पादिका येषां जलविशेषाणां ते सप्तमातरः। तैः ^V^सिन्धुभिः स्यन्दनस्वभावैर्जलैर्वसतीवरीनामभिः ^V^त्रिः सोमाभिषवः कृत इति शेषः। तथा चान्यत्र ब्राह्मणे समाम्नातम्—'अष्टौ कृत्वोऽभिषुणोति एकादश कृत्वो द्वितीयं द्वादश कृत्वस्तृतीयम्' (तै. सं. ६. ४. ५. १–२) इति। ^V^आहावाः यथोक्तजलयुक्तस्य सोमस्याधारभूताः कूपसदृशाः ^V^त्रयः त्रिसंख्याका द्रोणकलशाधवनीयपूतभृदाख्या निष्पन्ना इति शेषः। तेषु त्रिषु पात्रविशेषेषु ^V^त्रेधा त्रिभिः प्रकारैः सवनत्रयगतैः ^V^हविष्कृतं सोमाख्यं हविः संपादितं द्रव्यं वर्तते इति शेषः। ^V^तिस्रः ^V^पृथिवीरुपरि त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वं ^V^प्रवा प्रवन्तौ गच्छन्तौ युवां ^V^दिवो ^V^नाकं द्युलोकसंबन्धिनमादित्यं ^V^रक्षेथे। कीदृशं नाकम्। ^V^द्युभिः अहोभिः ^V^अक्तुभिः रात्रिभिश्च ^V^हितं स्थापितम्। अहनि सूर्य उदेति रात्रावस्तं गच्छतीत्येवमहोरात्राभ्यां सूर्यो व्यवस्थाप्यते इत्यर्थः॥ सप्तमातृभिः। बहुव्रीहिस्वरः। आहावाः। 'निपानमाहावः' (पा. सू. ३. ३. ७४) इति आङ्पूर्वात् ह्वयतेः अप्प्रत्ययः संप्रसारणं वृद्धिश्च निपातनात्। थाथादिना उत्तरपदान्तोदात्तत्वम्। प्रवा। 'च्युङ् प्रुङ् गतौ'। प्रवेते गच्छतः इति प्रवौ। पचाद्यच्। 'सुपां सुलुक्°' इति आकारः। नाकम्। न अस्मिन् अकम् अस्तीति नाकः। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। द्युभिः। 'ऊडिदम्°' इत्यादिना प्राप्तस्य विभक्त्युदात्तस्य 'दिवो झल्' (पा. सू. ६. १. १८३) इति प्रतिषेधः॥

---

१. ढ–इन्द्रियाणाम्।

क्व॑ त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य॒ क्व॑ त्रयो॑ व॒न्धुरो॒ ये सनी॑ळाः ।
क॒दा योगो॑ वा॒जिनो॒ रास॑भस्य॒ येन॑ य॒ज्ञं ना॑सत्योपया॒थः ॥ ९ ॥

क्व॑ । त्री । च॒क्रा । त्रि॒ऽवृतः॑ । रथ॑स्य । क्व॑ । त्रयः॑ । व॒न्धुरः॑ । ये । स॒ऽनी॑ळाः ।
क॒दा । योगः॑ । वा॒जिनः॑ । रास॑भस्य । येन॑ । य॒ज्ञम् । ना॒स॒त्या॒ । उ॒प॒ऽया॒थः ॥ ९ ॥

हे नासत्यौ अश्विनौ ᵛत्रिवृत्रः त्रिसंख्याकैरश्रिभिरुपेतस्य भवदीयस्य ᵛरथस्य ईषाद्वयं पूर्वभागे संयुज्यते[1] । सेयम् एका अश्रिः । पृष्ठभागे वियुज्यते । तत्र कोणद्वयं संपद्यते । ईदृशस्य रथस्य संबन्धीनि ᵛत्री ᵛचक्रा त्रीणि चक्राणि ᵛक्व । कुत्र स्थितानीत्यस्माभिर्न दृश्यते । ᵛये काष्ठविशेषाः ᵛसनीळाः । नीळं गृहसदृशं रथस्योपरि उपवेशस्थानम् । तेन सह वर्तन्ते इति सनीळाः । ते काष्ठविशेषाः ᵛवन्धुरः नीडबन्धनाधारभूताः ᵛत्रयः अक्षेण सहिते द्वे ईषे इत्येवं त्रिसंख्याकाः ᵛक्व । कुत्र स्थिता इत्यस्माभिर्न ज्ञायते । ᵛवाजिनः बलवतः ᵛरासभस्य भवदीयाश्वस्थानीयस्य गर्दभस्य ᵛयोगः रथे योजनं ᵛकदा । कस्मिन् काले निष्पन्नम्[2] इत्यस्माभिर्न दृश्यते । ᵛयेन चक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेन रथेन ᵛयज्ञम् अस्मदीयं यागस्थानम् ᵛउपयाथः युवां प्राप्नुथः । तादृशस्य रथस्येति पूर्वत्रान्वयः ॥ त्री चक्रा । उभयत्रापि 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । वन्धुरः । बन्धेः औणादिकः उरप्रत्ययः । वत्वं छान्दसम् । सनीळाः । 'वोपसर्जनस्य' इति सभावः ॥

आ ना॑सत्या॒ गच्छ॑तं हू॒यते॑ ह॒विर्मध्वः॑ पिबतं मधु॒पेभि॑रा॒सभिः॑ ।
यु॒वोर्हि पूर्वं॑ सवि॒तोषसो॒ रथ॑मृ॒ताय॑ चि॒त्रं घृ॒तव॑न्त॒मिष्य॑ति ॥ १० ॥

आ । ना॒स॒त्या॒ । गच्छ॑तम् । हू॒यते॑ । ह॒विः । मध्वः॑ । पि॒ब॒त॒म् । म॒धु॒ऽपेभिः॑ । आ॒सऽभिः॑ ।
यु॒वोः । हि । पूर्व॑म् । स॒वि॒ता । उ॒षसः॑ । रथ॑म् । ऋ॒ताय॑ । चि॒त्रम् । घृ॒तऽव॑न्तम् । इष्य॑ति ॥ १० ॥

हे नासत्यौ अश्विनौ इह कर्मणि ᵛआ ᵛगच्छतम् । अत्रास्माभिः ᵛहविः ᵛहूयते । युवां च ᵛमधुपेभिः मधुरद्रव्यपानयुक्तैः ᵛआसभिः भवदीयैरास्यैः ᵛमध्वः मधुरद्रव्याणि हवींषि ᵛपिबतम् । ᵛसविता सूर्यः ᵛउषसः ᵛपूर्वम् उषःकालात्पुरा युवयोरश्विनोः संबन्धिनं ᵛरथम् ᵛऋताय अस्मद्यज्ञार्थम् ᵛइष्यति ᵛहि प्रेरयति खलु । कीदृशम् । ᵛचित्रं पूर्वोक्तैश्चक्रत्रयादिभिः विचित्रं ᵛघृतवन्तम् अक्षाञ्जनसाधनेन घृतेनोपेतम् ॥ गच्छतम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम् । धातुस्वरः । अत्र गच्छतं पिबतं चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायाः तिङ्विभक्तेः निघातप्रतिषेधः । हूयते । लसार्वधातुकानुदात्तत्वे यकः स्वरः । मध्वः । लिङ्गव्यत्ययः शसि यणादेशश्छान्दसः । मधुपेभिः । मधु पिबन्तीति मधुपानि[3] । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । आसभिः । 'पद्दन्°' इत्यादिना आस्यशब्दस्य आसन्नादेशः । युवोः । 'युवोर्हि यन्त्रम्' इत्यत्रोक्तम् । इष्यति । 'इष गतौ' । श्यनो नित्त्वादाद्युदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः ॥

---

१. च-फ-संयोज्यते । २. ढ-निष्पादितम् । ३. ढ-मधुपाः ।

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ११ ॥

आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधुऽपेयम् । अश्विना ।
प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥ ११ ॥

हे ᵛनासत्या असत्येनानृतेन रहितौ ᵛअश्विना अश्विदेवौ युवां ᵛत्रिभिरेकादशैः ' ये देवासो दिव्येकादश स्थ ' ( ऋ. सं. १. १३९. ११ ) इत्यादिमन्त्रप्रतिपादितैस्त्रिसंख्याकैः एकादशात्मकवर्गत्रयगतैर्देवैः सह ᵛमधुपेयं सोमात्मकं मधुरद्रव्यपानम्[४] अभिलक्ष्य ᵛइह अस्मिन् देवयजनदेशे ᵛआ ᵛयातम् आगच्छतम् । ᵛआयुः अस्मदीयमायुष्यं ᵛप्र ᵛतारिष्टं प्रवर्धयतम् । ᵛरपांसि अस्मदीयानि पापानि ᵛनिः ᵛमृक्षतं निःशेषेण शोधयतम् । ᵛद्वेषः द्वेषकर्तॄन् ᵛसेधतं प्रतिषेधतम् । ᵛसचाभुवा अस्माभिः सहावस्थितौ ᵛभवतम् ॥ त्रिभिः । ' षट्त्रिचतुर्भ्यः०' इति विभक्तेरुदात्तत्वम् । एकादशैः । एकादशानां पूरणैः । ' तस्य पूरणे० ' ( पा. सू. ५. २. ४८ ) इति डट् । मधुपेयम् । ' पा पाने ' । ' अचो यत् ' इति कर्मणि यत् । ' ईद्यति ' ( पा. सू. ६. ४. ६५ ) इति आकारस्य ईकारादेशः । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । मधु च तत्पेयमिति समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । तारिष्टम् । ' तॄ प्लवनतरणयोः ' । छान्दसे प्रार्थनायां लुङि च्लेः सिच् । इडागमः । ' वॄतो वा ' ( पा. सू. ७. २. ३८ ) इति प्राप्तस्य इटो दीर्घस्य ' सिचि च परस्मैपदेषु ' ( पा. सू. ७. २. ४० ) इति प्रतिषेधः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । अत्र तारिष्टं मृक्षतं चेति चशब्दार्थप्रतीतेस्तस्य च अप्रयोगात् ' चादिलोपे विभाषा ' इति निघातप्रतिषेधः । ' आदिः सिचोऽन्यतरस्याम् ' ( पा. सू. ६. १. १८७ ) इत्याद्युदात्तत्वम् । मृक्षतम् । ' मृश आमर्शने ' । ' छन्दसि लुङ्लङ्लिटः ' इति लोडर्थे लुङ् । ' शल इगुपधादनिटः क्सः ' ( पा. सू. ३. १. ४५ ) इति क्सादेशः । ' एकाच उपदेशेऽनुदात्तात् ' इति इट्प्रतिषेधः । षत्वकुत्वे । पूर्ववत् अडभावः । सेधतम् । ' षिधु गत्याम् ' । अत्र केवलोऽपि षिधिः प्रतिपूर्वस्यार्थे वर्तते । प्रार्थनायां लोट् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । पादादित्वात् तिङः परत्वात् वा निघाताभावः । द्वेषः । 'अन्येभ्योऽपि दृश्यन्ते' इति कर्तरि विच् । भवतम् । द्वेष इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य निघातो न भवति, ' समानवाक्ये च निघातयुष्मदस्मदादेशा वक्तव्याः ' ( पा. सू. ८. १. १८. ५ ) इति वचनात् । सचाभुवा । सचा इत्ययं निपातः सहशब्दसमानार्थः । तथा च यास्कः—' सचा सहेत्यर्थः' (निरु. ५. ५) इति । सचा भवतः इति सचाभुवौ । क्विप् । ' ओः सुपि ' ( पा. सू. ६. ४. ८३ ) इति यणादेशस्य ' न भूसुधियोः ' ( पा. सू. ६. ४. ८५ ) इति प्रतिषेधः । ' सुपां सुलुक्० ' इति विभक्तेः आकारः ॥

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ १२ ॥

आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् । वहतम् । सुऽवीरम् ।
शृण्वन्ता । वाम् । अवसे । जोहवीमि । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ १२ ॥

---

४. ढ–मधुपानम् ।

हे ᵛअश्विना ᵛत्रिवृता ᵛरथेन अप्रतिहतगतित्वात् त्रिषु लोकेषु वर्तमानेन रथेन सह ᵛनः अस्माकम् ᵛअर्वाञ्चम् अभिमुखं ᵛसुवीरं शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतं ᵛरयिं धनम् ᵛआ ᵛवहतम् आनीय प्रापयतम्। ᵛशृण्वन्ता अस्मदीयस्तुतिं शृण्वन्तौ ᵛवां युवाम् ᵛअवसे अस्मद्रक्षणार्थं ᵛजोहवीमि आह्वयामि। ᵛनः अस्माकं ᵛवाजसातौ संग्रामे। 'वाजसातौ महाधने' (नि. २. १७. ३६) इति संग्रामनामसु पाठात्। ᵛवृधे वर्धनाय ᵛच ᵛभवतम्॥ सुवीरम्। शोभना वीरा यस्येति बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्। शृण्वन्ता। 'श्रु श्रवणे'। शतरि 'श्रुवः शृ च' (पा. सू. ३.१.७४) इति श्नुः शृभावश्च। 'हुश्नुवोः सार्वधातुके' इति यणादेशः। 'सुपां सुलुक्°' इति आकारः। जोहवीमि। 'ह्वेञ् स्पर्धायां शब्दे च'। यङ्लुकि 'अभ्यस्तस्य च' (पा. सू. ६. १. ३३) इति कृतसंप्रसारणादस्मात् लडुत्तमैकवचने 'यङो वा' (पा. सू. ७. ३. ९४) इति ईडागमः। वृधे। 'वृधु वृद्धौ' इत्यस्मात् संपदादिलक्षणो भावे क्विप्। वाजसातौ। 'षणु दाने'। क्तिनि 'तितुत्र°' इत्यादिना इट्प्रतिषेधः। 'जनसन°' इत्यादिना आत्वम्। वाजानां सातिर्यस्मिन्निति पूर्वपदप्रकृतिस्वरत्वम्॥ ॥ ५ ॥

'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम्। हिरण्यस्तूप ऋषिः। आद्या नवमी च जगतीच्छन्दस्के। शिष्टास्त्रिष्टुभः। कृत्स्नस्य सूक्तस्य सविता देवता। आद्यायाः 'ह्वयाम्यग्निम्' इत्यस्या अग्निमित्रावरुणरात्रिसवित्राख्या लिङ्गोक्तदेवताः। तथा चानुक्रान्तं–'ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च लिङ्गोक्तदैवतपादास्त्रयः' इति। अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदं सूक्तं सावित्रं निविद्धानम्। 'तृतीयस्य त्र्यर्यमा' इति खण्डे सूत्रितं–'ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्रः' (आश्व. श्रौ. ७. ७) इति॥

ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से।
ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑॥ १ ॥

ह्वया॑मि। अ॒ग्निम्। प्र॒थ॒मम्। स्व॒स्तये॑। ह्वया॑मि। मि॒त्रावरु॑णौ। इ॒ह। अव॑से।
ह्वया॑मि। रात्री॑म्। जग॑तः। नि॒ऽवेश॑नीम्। ह्वया॑मि। दे॒वम्। स॒वि॒तार॑म्। ऊ॒तये॑॥ १ ॥

ᵛस्वस्तये अस्माकमविनाशाय। 'स्वस्तीत्यविनाशनाम' (निरु. ३. २१) इति यास्कः। ᵛप्रथमम् आदौ ᵛअग्निं ᵛह्वयामि। ᵛइह अस्मिन् कर्मणि ᵛअवसे अस्मद्रक्षणाय ᵛमित्रावरुणौ ᵛह्वयामि। ᵛजगतः जङ्गमस्य प्राणिजातस्य ᵛनिवेशनीम् उपवेशनहेतुभूतां ᵛरात्रीं रात्रिदेवतां ᵛह्वयामि। जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रौ उपविशन्तीति प्रसिद्धम्। ᵛऊतये अस्मद्रक्षणार्थं ᵛसवितारं ᵛदेवं ᵛह्वयामि॥ मित्रावरुणौ। 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः। 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम्। रात्रीम्। 'रात्रेश्चाजसौ' (पा. सू. ४. १. ३१) इति ङीप्। निवेशनीम्। निविशन्त्यस्यामिति निवेशनी। 'करणाधिकरणयोश्च' इति ल्युट्। 'टिड्ढाणञ्°' (पा. सू. ४. १. १५) इत्यादिना ङीप्। ऊतये। अवतेः क्तिनि 'ज्वरत्वर°' इत्यादिना वकारस्य उपधायाश्च ऊठ्। 'ऊतियूति°' इत्यादिना क्तिन उदात्तत्वम्॥

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २ ॥

आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतम् । मर्त्यम् । च ।
हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥ २ ॥

सविता सूर्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन । 'कृष्णं कृष्यतेर्निकृष्टो वर्णः' (निरु. २.२०) इति यास्कः । 'लोका रजांस्युच्यन्ते' (निरु. ४. १९) इति च । अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति । तेनान्तरिक्षमार्गेण आ वर्तमानः पुनःपुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन् । यद्वा । अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरं च निवेशयन् । तथा चारण्यकाण्डे 'अमर्त्यो मर्त्येना सयोनिः' (ऋ.सं.१.१६४.३८) इत्येतस्य मन्त्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते–'मर्त्यानि हीमानि शरीराणि अमृतैषा देवता' (ऐ. आ. २. १. ८) इति । यथोक्तगुणोपेतः सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः प्रकाशयन्नित्यर्थः । हिरण्ययेन सुवर्णनिर्मितेन रथेन आ याति अस्मत्समीपमागच्छति ॥ अमृतम् । मृतं मरणं नास्ति अस्येति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मर्त्यम् । मर्ते भवम् । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । हिरण्ययेन । 'ऋत्व्यवास्त्व्य°' (पा. सू. ६. ४. १७५) इत्यादिना मयटो मकारलोपो निपातितः । यस्येति लोपे प्रत्ययस्वरः । भुवनानि । 'भू सत्तायाम्' । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ. सू. २. २३८) इति क्युन्प्रत्ययः । योरनादेशे उवङादेशः । नित्त्वादाद्युदात्तत्वम् ॥

याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् ।
आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ॥ ३ ॥

याति । देवः । प्रऽवता । याति । उत्ऽवता । याति । शुभ्राभ्याम् । यजतः । हरिऽभ्याम् ।
आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा । दुःऽइता । बाधमानः ॥ ३ ॥

देवः दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति गच्छति । तथा उद्वता उत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति । उदयानन्तरं आमध्याह्नमूर्ध्वो मार्गः; तत उपरि आसायं प्रवणो मार्ग इति विवेकः । तथा यजतः यष्टव्यः स देवः शुभ्राभ्यां श्वेताभ्यां हरिभ्याम् अश्वाभ्यां याति देवयजनदेशे गच्छति । सविता देवः विश्वा दुरिता सर्वाणि पापानि अप बाधमानः विनाशयन् परावतः दूरदेशात् । 'परावतः' (नि. ३. २६. ५) इति दूरनामसु पठितत्वात् । तादृशात् द्युलोकात् आ याति यागदेशे आगच्छति[1] ॥ प्रवता । 'वन षण संभक्तौ' । अस्मात् प्रपूर्वात् क्विप् । 'गमादीनामिति वक्तव्यम्' (पा. सू. ६. ४. ४०. १) इत्यनुनासिकलोपः । ततः तुक् । कृदुत्तरपद-

---

१. ढ–समागच्छति ।

प्रकृतिस्वरत्वम् । उद्वता । उत्पूर्वात् वनतेः पूर्ववत्प्रक्रिया । यजतः । 'भृमृदृशि°' (उ. सू. ३. ३९०) इत्यादिना यजतेः[1] कर्मणि अतच्प्रत्ययः । विश्वा दुरिता । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ॥

अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥

अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् ।
आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥४॥

ᵛसविता ᵛरथम् ᵛआस्थात् आस्थितवान् आरूढवानित्यर्थः । कीदृशम् । ᵛअभीवृतम् अभितो वर्तमानम् । तथा ᵛकृशनैर्विश्वरूपं सुवर्णेन नानारूपम् । 'कृशनं लोहम्' ( नि. १.२.७) इति सुवर्णनामसु पाठात् । क्वचित् सुवर्णनिर्मितगजपङ्क्तिः क्वचिदश्वपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिरित्येवं बहुरूपत्वम्[2] । ᵛहिरण्यशम्यम् । अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्याः । ताः सुवर्णमय्यो रथे वर्तन्ते । ᵛबृहतं प्रौढम् । कीदृशः सविता । ᵛयजतः यष्टव्यः ᵛचित्रभानुः विविधरश्मियुक्तः ᵛकृष्णा ᵛरजांसि अन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं ᵛतविषीं बलं स्वकीयं प्रकाशरूपं ᵛदधानः ॥ अभीवृतम् । अभितो वर्तते इत्यभीवृत् । 'वृतु वर्तने' । क्विपि 'नहिवृति°' ( पा. सू. ६. ३. ११६ ) इत्यादिना पूर्वपदस्य दीर्घत्वम् । विश्वरूपम् । विश्वानि रूपाणि यस्यासौ विश्वरूपः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । हिरण्यशम्यम् । 'हर्य गतिकान्त्योः' । 'हर्यतेः कन्यन् हिर च' ( उ. सू. ५. ७२२ ) इति कन्यन्प्रत्ययो धातोर्हिरादेशश्च । नित्त्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । आस्थात् । तिष्ठतेर्लुङि 'गातिस्था°' इति सिचो लुक् । कृष्णा । 'कृषेर्वर्णे' ( उ. सू. ३. २८४ ) इति नक्प्रत्ययः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । तविषीम् । तवतिः सौत्रो धातुः । 'तवतेर्णिद्वा' ( उ. सू. १. ४८ ) इति टिषच् । टित्त्वात् 'टिड्ढाणञ्' इत्यादिना ङीप् । व्यत्ययेन आद्युदात्तत्वं वृषादित्वात् द्रष्टव्यम् । दधानः । शानचि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

वि जनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥

वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः ।
शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

ᵛश्यावाः एतन्नामकाः सूर्यस्याश्वाः । 'श्यावाः सवितुः' (नि. १. १५. ८) इति निघण्टावुक्तत्वात् । ते च ᵛशितिपादः श्वेतैः पादैरुपेताः ᵛहिरण्यप्रउगम् । रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगमित्युच्यते । तच्चात्र सुवर्णमयम् । तद्युक्तं ᵛरथं ᵛवहन्तः ᵛजनान् प्राणिनः ᵛवि ᵛअख्यन् विशेषेण

---

1. ढ–यजेः । २. ढ–बहुरूपम् ।

प्रकाशितवन्त इत्यर्थः । शश्वत् सर्वदा विशः प्रजाः दैव्यस्य इतरदेवसंबन्धिनः सवितुः प्रेरकस्य सूर्यस्य उपस्थे समीपस्थाने तस्थुः स्थितवत्यः । न केवलं प्रजाः किं तर्हि विश्वा भुवनानि सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः॥ शितिपादः । शितयः श्वेतवर्णाः पादा येषां ते शितिपादाः । 'सुपां सुलुक्°' इति जसः सुआदेशः । यद्वा । शितिः श्वेतवर्णः स्फाटिकादिः । स इव पादो येषां ते । 'पादस्य लोपोऽहस्त्यादिभ्यः' (पा. सू. ५. ४. १३८) इति समासान्तपादशब्दस्यान्त्यलोपः । उपमानात् इति हि तत्रानुवर्तते । पादशब्दस्य वृषादित्वादाद्युदात्तत्वम् । तस्य बहुव्रीहौ समासे 'शितेर्नित्याबह्वज्बहुव्रीहावभसत्' (पा. सू. ६. २. १३८) इत्युत्तरपदप्रकृतिस्वरत्वम् । अख्यन् । ख्यातेर्लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेः अङादेशः । हिरण्यप्रउगम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वहन्तः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः[1] । दैव्यस्य । तस्येदमित्यर्थे 'देवाद्यञञौ' (पा. सू. ४. १. ८५. ३) इति देवशब्दात् प्राग्दीव्यतीयो यञ् । 'तद्धितेष्वचामादेः' (पा. सू. ७. २. ११७) इति आदिवृद्धिः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । उपस्थे । 'आतश्चोपसर्गे' इति कः । 'आतो लोप इटि च' इति आकारलोपः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥ ६ ॥

तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् ।
आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊँ इति । तत् । चिकेतत् ॥ ६ ॥

द्यावः स्वर्गोपलक्षिताः प्रकाशमाना लोकाः तिस्रः त्रिसंख्याकाः सन्ति । तत्र द्वौ लोकौ सवितुः सूर्यस्य उपस्था समीपस्थाने वर्तेते; द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् । एका मध्यमा भूमिरन्तरिक्षलोकः यमस्य भुवने पितृपतेर्गृहे विराषाट् विरान् गन्तॄन् सहते । प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः । अमृता अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वा अधि तस्थुः सवितारमधिगम्य स्थितानि । तत्र दृष्टान्तः । रथ्यम् आणिं न । रथाद्बहिः अक्षच्छिद्रे प्रक्षिप्तः कीलविशेषः[2] आणिरित्युच्यते । रथसंबन्धिनम् आणिम् अधिगम्य यथा रथस्तिष्ठति तद्वत् । यः तु मानवः तत् सवितृरूपं चिकेतत् जानाति स मानवः इह अस्मिन् विषये ब्रवीतु कथयतु । केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः ॥ तिस्रः । 'तिसृभ्यो जसः' (पा. सू. ६. १. १६६) इति विभक्तेरुदात्तत्वम् । द्वौ । संहितायामावादेशे 'लोपः शाकल्यस्य' इति वकारलोपः । उपस्था । 'आङ्याजयारां चोपसंख्यानम्' (पा. म. ७. १. ३९. १) इति सप्तम्या आङादेशः । 'आङोऽनुनासिकश्छन्दसि' (पा. सू. ६. १. १२६) इति प्रकृतिभावः । विराषाट् । 'वृञ् वरणे' । 'घञर्थे कविधानम्°' (पा. सू. ३. ३. ५८. ४) इति कर्मणि कः । 'बहुलं छन्दसि' (पा. सू. ७. १. १०३) इति इत्वम् । तथा सति वूर्यन्ते इति विरा इत्युक्तं भवति । तान् सहते इति विराषाट् । 'छन्दसि सहः' (पा. सू. ३. २. ६३) इति सहेर्ण्विः । 'सहेः साडः°' (पा. सू. ८. ३. ५६) इति षत्वम् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । रथ्यम् । रथस्येदं रथ्यम् । 'रथाद्यत्' ( पा. सू. ४.

---

१. च-छ-ण-त-फ-श–'धातुस्वरः' इत्यस्यानन्तरं 'कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते' इत्यधिकम् । २. ढ–काष्ठविशेषः ।

३. १२१ ) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । अमृता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । चिकेतत् । 'कित ज्ञाने' । लेटि अडागमः । 'इतश्च लोपः°' इति इकारलोपः । जुहोत्यादित्वात् श्लुः । लघूपधगुणः । 'अनुदात्ते च' (पा. सू. ६. १. १९०) इति अभ्यस्तस्याद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः ॥ ॥ ६ ॥

वि सु॒प॒र्णो अ॒न्तरि॑क्षाण्यख्यद्ग॒भी॒रवे॑पा॒ असु॑रः सुनी॒थः ।
क्वे॒३॒॑दानीं॒ सूर्यः॒ कश्चि॑केत कत॒मां द्यां र॒श्मिर॒स्या त॑तान ॥ ७ ॥

वि । सु॒ऽप॒र्णः । अ॒न्तरि॑क्षाणि । अ॒ख्य॒त् । ग॒भी॒रऽवे॑पाः । असु॑रः । सु॒ऽनी॒थः ।
क्व॑ । इ॒दानी॑म् । सूर्यः॑ । कः । चि॒के॒त॒ । क॒त॒माम् । द्याम् । र॒श्मिः । अ॒स्य॒ । आ । त॒ता॒न॒ ॥७॥

ᵛसुपर्णः शोभनपतनः सूर्यस्य रश्मिः । 'सुपर्णा[1] इति पञ्चदश रश्मिनामानि' (नि. १. ५. १५) इति तन्नामसु पठितत्वात्[1]। ᵛअन्तरिक्षाणि अन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि ᵛवि ᵛअख्यत् विशेषेण ख्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः । ᵛगभीरवेपाः गम्भीरकम्पनः । रश्मेः प्रकम्पनं[2] चलनं केनापि द्रष्टुमशक्यमित्यर्थः । ᵛअसुरः सर्वेषां प्राणदः । तथा चान्यत्र आम्नायते—'सर्वेषां भूतानां प्राणानादायोदेति' (तै. आ. १.१४.१) इति । ᵛसुनीथः सुनयनः शोभनप्रापणः । मार्गप्रकाशनेन अभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः ᵛसूर्यः ᵛइदानीं रात्रौ ᵛक्व कुत्र वर्तते । तदेतद्रहस्यं ᵛकश्चिकेत को जानाति । न कोऽपीत्यर्थः । ᵛअस्य सूर्यस्य ᵛरश्मिः ᵛकतमां ᵛद्याम् ᵛआ ᵛततान कं द्युलोकं रात्रौ व्याप्तवान् । एतदपि को जानाति ॥ सुपर्णः । 'नञ्सुभ्याम्°' इत्युत्तरपदान्तोदात्तत्वम् । गभीरवेपाः । 'टुवेपृ कम्पने' । असुन् । गभीरं वेपो यस्य । पूर्वपदप्रकृतिस्वरत्वम् । असुरः । 'असु क्षेपणे' । अस्यति शत्रून् इत्यसुरः । 'असेरुरन्' (उ. सू. १. ४२) । नित्त्वादाद्युदात्तत्वम् । यद्वा । असून् प्राणान् राति ददातीत्यसुरः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । सुनीथः । 'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ. सू. २. १५९) इति क्थन् । प्रादिसमासे थाथादिना उत्तरपदान्तोदात्तत्वम् । इदानीम् । इदंशब्दात् सप्तम्यर्थे 'दानीं च' (पा. सू. ५. ३. १८) इति दानींप्रत्ययः । 'इदम इश्' इति इदंशब्दस्य इशादेशः । प्रत्ययाद्युदात्तत्वम् । सूर्यः । 'षू प्रेरणे' । सुवतीति सूर्यः । 'राजसूयसूर्य°' इत्यादिना रुडागमसहितः क्यप्प्रत्ययो निपातितः । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । चिकेत । 'कित ज्ञाने' । लिट् । कतमां किंजातीयाम् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा. सू. ५. ३. ९३) इति किंशब्दात् डतमच् । डित्त्वात् टिलोपः । 'चितः' इत्यन्तोदात्तत्वम् ॥

अ॒ष्टौ व्य॑ख्यत्क॒कुभः॑ पृथि॒व्यास्त्री धन्व॒ योज॑ना स॒प्त सिन्धू॑न् ।
हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥ ८ ॥

अ॒ष्टौ । वि । अ॒ख्य॒त् । क॒कुभः॑ । पृ॒थि॒व्याः । त्री । धन्व॑ । योज॑ना । स॒प्त । सिन्धू॑न् ।
हि॒र॒ण्य॒ऽअ॒क्षः । स॒वि॒ता । दे॒वः । आ । अ॒गा॒त् । दध॑त् । रत्ना॑ । दा॒शुषे॑ । वार्या॑णि ॥ ८ ॥

---

१. ढ–सुपर्णा इति रश्मिनामसु पठितत्वात् । २. ढ–कम्पनम् ।

ᵛपृथिव्याः संबन्धिनीः ᵛअष्टौ ᵛककुभः प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशः ᵛव्यख्यत् सविता प्रकाशितवान् । तथा ᵛयोजना प्राणिनः स्वस्वभोगेन[1] योजयितॄन् ᵛधन्व अन्तरिक्षोपलक्षितान् ᵛत्री त्रिसंख्याकान् पृथिव्यादिलोकान् ᵛसप्त ᵛसिन्धून् गङ्गादिनदीः समुद्रान्वा सविता व्यख्यत् । ᵛहिरण्याक्षः । हितरमणीयचक्षुर्युक्तो हिरण्यमयाक्षो वा ᵛसविता ᵛदेवः ᵛआगात् इहागच्छतु । किं कुर्वन् । ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛवार्याणि वरणीयानि रत्नानि ᵛदधत् प्रयच्छन् ॥ अख्यत् । ख्यातेर्लुङि 'अस्यतिवक्ति॰' इत्यादिना च्लेः अङादेशः । त्री । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । धन्व । 'रिवि रवि धवि गत्यर्थाः' । 'इदितो नुम् धातोः' इति नुम् । अस्मात् 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् । 'सुपां सुलुक्॰' इति विभक्तेर्लुक् । नलोपः । प्रत्ययस्य नित्त्वादाद्युदात्तत्वम् । योजना । योजयन्ति प्राणिन उपभोगेनेति योजनानि । नन्द्यादिलक्षणो ल्युः । 'णेरनिटि' इति णिलोपः । पूर्ववत् शेर्लोपः । हिरण्याक्षः । हिरण्यमयान्यक्षीणि यस्यासौ हिरण्याक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः॰' (पा. सू. ५. ४. ११३) इति समासान्तः षच्प्रत्ययः । अगात् । एतेर्लुङि 'इणो गा लुङि' (पा. सू. २. ४. ४५) इति गादेशः । 'गातिस्था॰' इति सिचो लुक् । दधत् । शतरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । दाशुषे । 'दाश्वान्साह्वान्॰' इत्यादिना क्वसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । परपूर्वत्वम् । 'शासिवसिघसीनां च' इति षत्वम् । वार्याणि । 'वृङ् संभक्तौ' । ऋहलोर्ण्यत् । 'ईडवन्द॰' इत्यादिनाद्युदात्तत्वम् ॥

**हि॒र॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते ।**
**अपामी॑वां॒ बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्यामृ॑णोति ॥ ९ ॥**

हिर॑ण्यऽपाणिः । स॒वि॒ता । विऽच॑र्षणिः । उ॒भे इति॑ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तः । ई॒य॒ते॒ ।
अप॑ । अमी॑वाम् । बाध॑ते । वेति॑ । सूर्य॑म् । अ॒भि । कृ॒ष्णेन॑ । रज॑सा । द्याम् । ऋ॒णो॒ति॒ ॥९॥

ᵛहिरण्यपाणिः सुवर्णमयहस्तयुक्तः । यद्वा । यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् । ᵛविचर्षणिः विविधदर्शनयुक्तः । विचर्षणिः पश्यत्यर्थः । 'विचर्षणिः विश्वचर्षणिः' (नि. ३. ११. ६) इति तन्नामसु पाठात् । ᵛसविता देवः ᵛउभे ᵛद्यावापृथिवी ᵛअन्तः उभयोर्लोकयोर्मध्ये ᵛईयते गच्छति । ᵛअमीवां रोगादिबाधाम्[2] ᵛअप ᵛबाधते सम्यक् निराकरोति । तथा ᵛसूर्यं ᵛवेति गच्छति । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । ᵛकृष्णेन तमसः कर्षकेण निवर्तकेन ᵛरजसा तेजसा ᵛद्याम् आकाशम् ᵛअभि ᵛऋणोति सर्वतो व्याप्नोति ॥ द्यावापृथिवी । 'दिवसश्च पृथिव्याम्' (पा. सू. ६. ३. ३०) इति चशब्दात् दिवूशब्दस्य द्यावादेशः । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् । 'नोत्तरपदेऽनुदात्तादौ॰' (पा. सू. ६. २. १४२) इति न निषेधः, '॰अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वात् । ईयते । 'ईङ् गतौ' । 'तिङ्ङतिङः' इति निघातः । बाधते । बाधते च वेति चेति समुच्चयार्थप्रतीतेः चशब्दस्याप्रयोगात् 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । वेति । 'वी गतिप्रजनकान्त्यसनखादनेषु' । अदादित्वात् शपो लुक् । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्यप्येषा

---

१. ढ—स्वस्वभागेन । २. ढ—नैशं जगदान्ध्यम् ।

द्वितीया तथापि तिङः परत्वात् निघाताभावः । ऋणोति । 'ऋणु गतौ' । तनादित्वात् उः । तनादिषु करोतेरेव गुणो नान्येषामिति आपिशलिमतेन गुणाभावः ॥

हिर॑ण्यहस्तो॒ असु॑रः सुनी॒थः सु॑मृळी॒कः स्ववाँ॑ यात्व॒र्वाङ् ।
अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑द्दे॒वः प्र॑तिदो॒षं गृ॑णा॒नः ॥ १० ॥

हिर॑ण्यऽहस्तः । असु॑रः । सु॒ऽनी॒थः । सु॒ऽमृ॒ळी॒कः । स्वऽवा॑न् । या॒तु॒ । अ॒र्वाङ् ।
अ॒प॒ऽसेध॑न् । र॒क्षसः॑ । या॒तु॒ऽधाना॑न् । अस्था॑त् । दे॒वः । प्र॒ति॒ऽदो॒षम् । गृ॒णा॒नः ॥ १० ॥

ᵛहिरण्यहस्तः ᵛअसुरः प्राणदाता ᵛसुनीथः सुष्ठु नेता प्रशस्य इत्यर्थः । 'सुनीथः पाकः' ( नि. ३. ८. ७) इति प्रशस्यनामसु पाठात् । ᵛसुमृळीकः सुष्ठु सुखयिता ᵛस्ववान् धनवान् ᵛअर्वाङ् अभिमुखः[1] कर्मदेशे गच्छतु । किंचायं ᵛदेवः ᵛप्रतिदोषं प्रतिरात्रि ᵛगृणानः स्तूयमानः ᵛअस्थात् स्थितवान् । किं कुर्वन् । ᵛरक्षसः बाधकत्वेन रक्षणनिमित्तभूतान् 'रक्षो रक्षितव्यमस्मात्' ( निरु. ४. १८ ) इति यास्कः। ᵛयातुधानान् असुरान् ᵛअपसेधन् निराकुर्वन्॥ हिरण्यहस्तादयो गताः। सुमृळीकः। सुष्ठु मृळीकं सुखं यस्यासौ तथोक्तः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । स्ववान्। स्वम् अस्यास्तीति स्ववान् । 'मादुपधायाः°' इति वत्वम् । संहितायां नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । रोर्यत्वम्। यलोपश्च। अपसेधन्। 'षिधु गत्याम्'। शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्षसः । 'रक्ष पालने' इत्यस्मात् अपादाने औणादिकः असिप्रत्ययः । यद्वा । रक्षन्त्यनेनेति रक्षो बलम्। करणेऽसुन् । तदेषामस्तीति रक्षस्विनः । मत्वर्थप्रत्ययलोपश्छान्दसः । प्रत्ययस्वरः । यातुधानान् । 'यत निकारोपसंस्कारयोः' । तस्मात् ण्यन्तात् औणादिको भावे उप्रत्ययः। यातवो यातना एषु धीयन्ते इति यातुधानाः । अधिकरणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्थात् । 'गातिस्था°' इति सिचो लुक् । प्रतिदोषम्। दोषांदोषाम्। प्रति वीप्सालक्षणे यथार्थे । अव्ययीभावः । गृणानः । 'गृ शब्दे'। कर्मणि लटः शानच् । व्यत्ययेन श्ना। 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'चितः' इत्यन्तोदात्तत्वम् ॥

ये ते॒ पन्थाः॑ सवितः पू॒र्व्यासो॑ऽरे॒णवः॑ सुकृ॑ता अ॒न्तरि॑क्षे ।
तेभि॑र्नो अ॒द्य प॒थिभिः॑ सु॒गेभी॒ रक्षा॑ च नो॒ अधि॑ च ब्रूहि देव ॥ ११ ॥

ये । ते॒ । पन्थाः॑ । स॒वि॒त॒रिति॑ । पू॒र्व्यासः॑ । अ॒रे॒णवः॑ । सु॒ऽकृ॑ताः । अ॒न्तरि॑क्षे ।
तेभिः॑ । नः॒ । अ॒द्य । प॒थिऽभिः॑ । सु॒ऽगेभिः॑ । रक्ष॑ । च॒ । नः॒ । अधि॑ । च॒ । ब्रू॒हि॒ । दे॒व॒ ॥ ११ ॥

हे ᵛसवितः ᵛते तव ᵛपन्थाः मार्गाः ᵛपूर्व्यासः पूर्वसिद्धाः ᵛअरेणवः धूलिरहिताः ᵛअन्तरिक्षे ᵛसुकृताः सुष्ठु संपादिताः । ᵛसुगेभिः सुष्ठु गन्तुं शक्यैः ᵛतेभिः ᵛपथिभिः तैर्मार्गैरागत्य ᵛअद्य अस्मिन् दिने ᵛनः अस्मान् ᵛरक्ष ᵛच पालनमपि कुरु। तथा हे ᵛदेव ᵛनः अस्मान् अनुष्ठातॄन् ᵛअधि ᵛब्रूहि ᵛच

---

1. ढ–अस्मदभिमुखः ।

देवानामग्रेऽधिकत्वेन कथय च ॥ पन्थाः । 'सुपां सुलुक्०' इति जसः सुः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । पूर्व्यासः । पूर्वैः कृताः पूर्व्याः । 'पूर्वैः कृतमिनियौ च' (पा. सू. ४. ४. १३३) इति यः । प्रत्ययस्वरः । असुगागमः । अरेणवः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुकृताः । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । सुष्ठु गच्छन्त्येष्विति सुगाः । 'सुदुरोरधिकरणे' (पा. सू. ३. २. ४८. ३) इति गमेर्डप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्ष । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥ ॥ ७ ॥　　॥ ७ ॥

अष्टमेऽनुवाकेऽष्टौ सूक्तानि । तत्र 'प्र वो यह्वम्' इति विंशत्यृचं प्रथमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । अयुजो बृहत्यः तृतीयपादस्य द्वादशाक्षरत्वात् । युजः सतोबृहत्यः प्रथमतृतीययोः पादयोर्द्वादशाक्षरत्वात् । अग्निर्देवता । 'ऊर्ध्व ऊ षु' इत्यादिके यूपदेवत्ये । तथा चानुक्रान्तं-'प्र वो विंशतिः कण्वो घौर आग्नेयं प्रागाथमूर्ध्व ऊ षु यौप्यौ' इति । ननु 'ऊर्ध्व ऊ षु' इत्यादिकयोरप्यग्नेर्देवतात्वेन भवितव्यमाग्नेये क्रतौ अनयोरनुद्धारात् । तथा हि सूत्रे 'एना वो अग्निं प्र वो यह्वम्' (आश्व. श्रौ. ४. १३) इति प्रतीकमात्रस्यैवोपादानात् कृत्स्नसूक्तमाग्नेयमिति गम्यते । यद्येते अन्यदेवत्ये स्यातां 'वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्' (आश्व. श्रौ. ४. १३) इतिवत् उद्धारं ब्रूयात् । न च ब्रूते । अतः कथं यौप्याविति । नैष दोषः । यूपाधिष्ठानस्याग्नेः स्तूयमानत्वात् अनयोरपि अग्निर्देवता इत्याग्नेये क्रतौ उद्धारो न कृतः । अधिष्ठानप्राधान्यविवक्षया यौप्याविस्येतदपि न विरुध्यते । प्रातरनुवाके आग्नेये क्रतौ बार्हते छन्दसि 'प्र वो यह्वम्' इति सूक्तम् । 'अथैतस्या रात्रेर्विवासकाले' इति खण्डे सूत्रितम्-'एना वो अग्निं प्र वो यह्वम्' इति ॥

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् ।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥ १ ॥

प्र । वः॒ । य॒ह्वम् । पु॒रू॒णाम् । वि॒शाम् । दे॒व॒ऽय॒तीना॑म् ।
अ॒ग्निम् । सु॒ऽउ॒क्तेभिः॑ । वचः॑ऽभिः । ई॒म॒हे॒ । यम् । सी॒म् । इत् । अ॒न्ये । ईळ॑ते ॥ १ ॥

हे ऋत्विग्यजमानाः ᵛदेवयतीनां देवान् कामयमानानां ᵛपुरूणां बहूनां ᵛविशां प्रजारूपाणां ᵛवः युष्माकमनुग्रहाय ᵛयह्वं महान्तम् । 'यह्वः ववक्षिथ' (नि. ३.३.१३) इति महन्नामसु पाठात् । ᵛअग्निं ᵛसूक्तेभिर्वचोभिः सूक्तरूपैर्वाक्यैः ᵛप्र ᵛईमहे प्रकर्षेण याचामहे । 'ईमहे यामि' (नि. ३.१९.१) इति याच्ञाकर्मसु पाठात् । ᵛअन्ये ᵛइत् अन्येऽपि ऋषयः ᵛयम् अग्निं ᵛसीं सर्वतः ᵛईळते स्तुवन्ति । तमग्निमिति पूर्वत्रान्वयः॥ पुरूणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । विशाम् । 'सावेकाचः०' इति विभक्तेरुदात्तत्वम् । देवयतीनाम् । देवानात्मन इच्छन्त्यो देवयन्त्यः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वस्येव दीर्घस्यापि प्रतिषेधः, 'अश्वाघस्यात्' इति पुनः आत्वविधानात् ज्ञापकात् । क्यजन्तात् लटः शतृ । कर्तरि शप् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण क्यचा सह एकादेशे 'एकादेश उदात्तेनोदात्तः' इति शतुरुदात्तत्वम् । 'उगितश्च' इति ङीप् । 'अनित्यमागमशासनम्' इति वचनात् नुमभावः; एकादेशस्वरस्य पूर्वत्रासिद्धत्वं नेष्यते इति वचनात् (पा. सू. ८. २. ६. १) । शतुरुदात्तत्वं सिद्धमेवेति 'शतुरनुमः०' इति नद्या उदात्तत्वम् । सूक्तेभिः । वक्तेः 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् ।

ईळते । 'ईड स्तुतौ' । अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ॥

जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते ।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ॥ २ ॥

जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते ।
सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ २ ॥

ᵛजनासः अनुष्ठातारो जनाः ᵛसहोवृधं बलस्य वर्धयितारम् ᵛअग्निं ᵛदधिरे धृतवन्तः । ᵛहविष्मन्तः हविर्युक्ता वयं हे अग्ने ᵛते त्वां ᵛविधेम परिचरेम । विधतिः परिचरणकर्मा । 'विधेम सपर्यति' (नि. ३.५.२) इति परिचरणकर्मसु पठितत्वात् । ᵛवाजेषु अन्नेषु ᵛसन्त्य दानशील हे अग्ने ᵛस ᵛत्वम् ᵛअद्य अस्मिन् दिने ᵛइह कर्मणि ᵛनः अस्मान् प्रति ᵛसुमनाः शोभनमनस्कः ᵛअविता रक्षिता ᵛभव ॥ सहोवृधम् । 'वृधु वृद्धौ' । अस्मात् अन्तर्भावितण्यर्थात् क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । हविष्मन्तः । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । विधेम । 'विध विधाने' । तुदादित्वात् शः । सुमनाः । शोभनं मनो यस्यासौ सुमनाः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । भव । पादादित्वात् 'तिङ्ङतिङः' इति निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । सन्त्य । 'षणु दाने' । क्तिचि 'तितुत्र°' इत्यादिना इट्प्रतिषेधः । 'न क्तिचि दीर्घश्च' (पा. सू. ६. ४. ३९) इत्यनुनासिकलोपदीर्घयोर्निषेधः । सन्तिर्दाता । तत्र भवः सन्त्यः । 'भवे छन्दसि' इति यत् ॥

प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् ।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥ ३ ॥

प्र । त्वा । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ।
महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ ३ ॥

हे अग्ने ᵛहोतारं होमनिष्पादकमाह्वातारं वा ᵛविश्ववेदसं सर्वज्ञं ᵛदूतं देवानां दूत्ये प्रवृत्तम् । 'अग्निर्वै देवानां दूत आसीत्' इति श्रुत्यन्तरात् । तादृशं त्वां ᵛप्र ᵛवृणीमहे प्रकर्षेण वरणं कुर्मः । ᵛमहः महतः ᵛसतः नित्यं वर्तमानस्य ᵛते तव ᵛअर्चयः दीप्तयः ᵛवि ᵛचरन्ति विविधं प्रचरन्ति । ᵛभानवः त्वदीया रश्मयः ᵛदिवि द्युलोके ᵛस्पृशन्ति तत्रत्यान् प्राणिनः प्रकाशयन्तीत्यर्थः ॥ विश्ववेदसम् । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । 'वेदः' इति धननाम (नि. २. १०. ४) । विश्वं वेदो धनं यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । महः । 'मह पूजायाम्' । 'क्विप् च' इति क्विप् । 'सावेकाचः°' इति ङस उदात्तत्वम् । यद्वा । महच्छब्दे अच्छब्दलोपश्छान्दसः । सतः । अस्तेः शतरि 'श्नसोरल्लोपः' इति अकारलोपः । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । दिवि । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् ॥

देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥ ४ ॥

देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते ।
विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥ ४ ॥

हे ᵛअग्ने वरुणादयस्त्रयः ᵛदेवासः देवाः ᵛप्रत्नं पुरातनं ᵛदूतं त्वां ᵛसम् ᵛइन्धते सम्यक् दीपयन्ति ᵛयः ᵛमर्त्यः मनुष्यो यजमानः ᵛते तुभ्यं ᵛददाश हविर्दत्तवान् ᵛसः यजमानः ᵛत्वया सहायभूतेन ᵛविश्वं सर्वं ᵛधनं ᵛजयति ॥ अर्यमा । अर्यान्मिमीते इत्यर्यमा । ‘ श्वन्नुक्षन्° ’ ( उ. सू. १. १५७ ) इत्यादिना कनिन्प्रत्ययान्तो निपातितः । इन्धते । ‘ ञिइन्धी दीप्तौ ’ । अस्मात् लटि झस्य अदादेशे श्नम् । ‘ श्नान्नलोपः ’ ( पा. सू. ६. ४. २३ ) । ‘ श्नसोरल्लोपः ’ इति अकारलोपः । ददाश । ‘ दाश्रृ दाने ’ । लिटि णलि लित्स्वरेण प्रत्ययात्पूर्वस्य आकारस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः ॥

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥ ५ ॥

मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि ।
त्वे इति । विश्वा । सम्ऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ५ ॥

हे ᵛअग्ने त्वं ᵛमन्द्रः हर्षहेतुः ᵛहोता देवानामाह्वाता ᵛविशां यजमानरूपाणां प्रजानां ᵛगृहपतिः गृहस्य पालकः ᵛदूतः देवदूतः ᵛअसि । ᵛत्वे त्वयि ᵛविश्वा ᵛव्रता सर्वाणि कर्माणि ᵛसंगतानि । ‘ व्रतं कर्वरम् ’ ( नि. २. १. ७ ) इति कर्मनामसु व्रतशब्दः पठितः । पृथिव्यादयः ᵛदेवाः ᵛध्रुवा स्थिराणि ᵛयानि कर्माणि ᵛअकृण्वत कृतवन्तः । पृथिवी धारयति पर्जन्यो वर्षति सूर्यः प्रकाशयति । तान्येतानि त्वयि संगतानीति पूर्वत्रान्वयः ॥ गृहपतिः । ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरत्वम् । ‘ सुपां सुलुक्° ’ इति सप्तम्येकवचनस्य शेआदेशः । ‘ त्वमावेकवचने ’ इति मपर्यन्तस्य त्वादेशः । ‘ शेषे लोपः ’ इति टिलोपपक्षे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्; अन्त्यलोपपक्षे तु एकादेशस्वरेण । संगतानि । गमेः कर्मणि निष्ठायाम् ‘ एकाचः° ’ ( पा. सू. ७. २. १० ) इति इट्प्रतिषेधः । ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । व्रता ध्रुवा इत्युभयत्र शेर्लोपः । अकृण्वत । ‘ कृवि हिंसाकरणयोश्च ’ । व्यत्ययेनात्मनेपदम् । इदित्त्वात् नुम् । ‘ धिन्विकृण्व्योर च ’ इति उप्रत्ययः ॥		॥ ८ ॥

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥ ६ ॥

त्वे इति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः ।
सः । त्वम् । नः । अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥ ६ ॥

हे ^v^यविष्ठ्य युवतम ^v^अग्ने ^v^सुभगे सौभाग्ययुक्ते ^v^त्वे ^v^इत् त्वय्येव ^v^विश्वं सर्वं ^v^हविः ^v^आ ^v^हूयते सर्वतः[1] प्रक्षिप्यते। ^v^स ^v^त्वं ^v^नः अस्मान्प्रति ^v^सुमनाः शोभनमनस्को भूत्वा ^v^अद्य अस्मिन् दिने ^v^उत अपि च ^v^अपरं श्वः परश्व इत्यादिकमुत्तरं कालं सर्वस्मिन्नपि काले नैरन्तर्येण ^v^सुवीर्या शोभनवीर्योपेतान् ^v^देवान् ^v^यक्षि यज ॥ सुभगे । शोभनो भगो यस्येति बहुव्रीहौ आद्युदात्तत्वम् । 'द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। यविष्ठ्य। युवशब्दात् इष्ठन्। 'स्थूलदूर°' इत्यादिना यणादेः परस्य लोपः पूर्वस्य च गुणः । छान्दसो यकारोपजनः । यक्षि । 'बहुलं छन्दसि' इति शपो लुक् । सुवीर्या। शोभनं वीर्यं येषाम्। 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्। 'सुपां सुलुक्°' इति विभक्तेः आकारः ॥

अभिष्टवे सायंकालीने उत्तरस्मिन् पटले 'तं घेमित्था नमस्विनः' इत्येषा विनियुक्ता। 'अथो- त्तरम्' इति खण्डे सूत्रितं–'प्रागाथीं पूर्वाह्णे काण्वीमपराह्णे' (आश्व. श्रौ. ४. ७) इति॥

तं घे॑मि॒त्था न॑म॒स्विन॒ उप॑ स्व॒राज॑मासते ।
होत्रा॑भिर॒ग्निं मनु॑षः॒ समि॑न्धते तिति॒र्वांसो॒ अति॒ स्रिधः॑ ॥ ७ ॥

तम् । घ॒ । ई॒म् । इ॒त्था । न॒मस्विनः॑ । उप॑ । स्व॒ऽराज॑म् । आ॒स॒ते॒ ।
होत्रा॑भिः । अ॒ग्निम् । मनु॑षः । सम् । इ॒न्ध॒ते॒ । ति॒ति॒र्वांसः॑ । अति॑ । स्रिधः॑ ॥ ७ ॥

हे ^v^अग्ने ^v^नमस्विनः अन्नयुक्ता नमस्कारयुक्ता वा । 'नमः आयुः सूनृता' (नि. २. ७. २२) इति अन्ननामसु पाठात् नमःशब्दस्यान्नवाचित्वम्। तादृशा यजमानाः^v^स्वराजं स्वतो दीप्यमानं ^v^तं^v^घं तमेव पूर्वोक्तसर्वगुणविशिष्टं त्वाम् ^v^इत्था अनेन प्रकारेण हविष्प्रदानादिरूपेण ^v^उप ^v^आसते । ^v^मनुषः मनुष्या यजमानाः^v^होत्राभिः सप्तभिर्वषट्कर्तृभिः । 'सप्त होत्राः प्राचीर्वषट्कुर्वन्ति' (तै.ब्रा.२.३.६.४) इति श्रुत्यन्तरात् । ^v^अग्निं त्वां ^v^समिन्धते सम्यग्दीपयन्ति । कीदृशा मनुष्याः । ^v^स्रिधः शत्रून् ^v^अति ^v^तितिर्वांसः अतिशयेन तरन्तः ॥ नमस्विनः । 'अस्मायामेधा°' इति मत्वर्थीयो विनिः । स्वराजम् । स्वभासा राजते इति स्वराट् । 'सत्सूद्विष°' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आसते । 'आस उपवेशने' । अदादित्वात् शपो लुक् । तितिर्वांसः । 'तॄ प्लवनतरणयोः' । 'छन्दसि लिट्' इति वर्तमाने लिट् । तस्य 'क्वसुश्च' इति क्वसुः । 'वस्वेकाजाद्धसाम्' इति नियमात् इडभावः । 'ऋत इद्धातोः' इति इत्वम् । 'ऋच्छत्यृताम्' (पा. सू. ७. ४. ११) इति गुणः 'हलि च' (पा. सू. ८. २. ७७) इति दीर्घत्वं च न भवति, 'संज्ञापूर्वको विधिरनित्यः' इति तयोरनित्यत्वात्। यद्वा। तिरतिः प्रकृत्यन्तरं द्रष्टव्यम् । स्रिधः । 'स्रिधु शोषणे' । 'क्विप् च' इति क्विप् ॥

घ्नन्तो॑ वृ॒त्रम॑तर॒न्रोद॑सी अ॒प उ॒रु क्षया॑य चक्रिरे ।
भुव॒त्कण्वे॒ वृषा॑ द्यु॒म्न्याहु॑तः॒ क्रन्द॒दश्वो॒ गवि॑ष्टिषु ॥ ८ ॥

घ्नन्तः॑ । वृ॒त्रम् । अ॒त॒र॒न् । रोद॑सी॒ इति॑ । अ॒पः । उ॒रु । क्षया॑य । च॒क्रि॒रे॒ ।
भुव॑त् । कण्वे॑ । वृषा॑ । द्यु॒म्नी । आऽहु॑तः । क्रन्द॑त् । अश्वः॑ । गोऽइ॑ष्टिषु ॥ ८ ॥

---

1. ढ–आ सर्वतः ।

हे अग्ने ᵛघ्नन्तः त्वत्सहायेनेतरे देवाः प्रहरन्तः ᵛवृत्रम् ᵛअतरन् तीर्णवन्तः । तदनन्तरं ᵛरोदसी द्यावापृथिव्यौ ᵛअपः अन्तरिक्षं च ᵛक्षयाय प्राणिनां निवासार्थम् ᵛउरु विस्तारो यथा भवति तथा ᵛचक्रिरे । अप्शब्दोऽन्तरिक्षवाची । 'आपः पृथिवी' ( नि. १. ३. ८ ) इति तन्नामसु पठितत्वात् । भवांस्तु ᵛकण्वे कण्वनामके महर्षौ ᵛवृषा कामानां वर्षिता ᵛद्युम्नी धनवान् ᵛआहुतः सर्वतो होमयुक्तश्च ᵛभुवत् भवतु । तत्र दृष्टान्तः । ᵛगविष्टिषु गोविषयेच्छायुक्तेषु संग्रामेषु ᵛअश्वः ᵛक्रन्दत् शब्दं कुर्वन् यथाभीष्टप्रापकस्तथेति शेषः ॥ घ्नन्तः । हन्तेः शतरि 'गमहन°' इत्यादिना उपधालोपः । 'हो हन्तेर्ञ्णिन्नेषु' ( पा. सू. ७. ३. ५४ ) इति घत्वम् । अपः । 'ऊडिदम्°' इति शस उदात्तत्वम् । क्षयाय । 'क्षि निवासगत्योः' । क्षियन्ति निवसन्त्यस्मिन्निति क्षयो निवासस्थानम् । 'पुंसि संज्ञायां घः प्रायेण' इति घः । 'क्षयो निवासे' ( पा. सू. ६. १. २०१ ) इत्याद्युदात्तत्वम् । भुवत् । भवतेर्लेटि अडागमः । 'इतश्च लोपः°' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' ( पा. सू. ७. ३. ८८ ) इति गुणप्रतिषेधः । अडागमस्य अनुदात्तत्वे धातुस्वरः । आहुतः । आहूयते इति आहुतः । 'हु दानादनयोः' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । क्रन्दत् । 'कदि क्रदि क्लदि आह्वाने' । शतरि नुमभावश्छान्दसः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । गविष्टिषु । 'इषु इच्छायाम्' । एषणम् इष्टिः । गवामिष्टिर्येषु संग्रामेषु । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

प्रवर्ग्ये महावीरे खरे संसाद्यमाने 'सं सीदस्व महाँ असि' इत्येषा । 'स्पृष्ट्वोदकम्' इति खण्डे सूत्रितं—'सं सीदस्व महाँ असीति संसाद्यमाने' ( आश्व. श्रौ. ४. ६ ) इति ॥

सं सीद॑स्व म॒हाँ अ॑सि॒ शोच॑स्व देव॒वीत॑मः ।

वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त दर्श॒तम् ॥ ९ ॥

सम् । सी॒द॒स्व॒ । म॒हान् । अ॒सि॒ । शोच॑स्व । दे॒व॒ऽवीत॑मः ।

वि । धू॒मम् । अ॒ग्ने॒ । अ॒रु॒षम् । मि॒ये॒ध्य॒ । सृ॒ज । प्र॒ऽश॒स्त॒ । द॒र्श॒तम् ॥ ९ ॥

हे अग्ने ᵛसं ᵛसीदस्व बर्हिष्युपविश । ᵛमहान् ᵛअसि गुणाधिको भवसि । ᵛदेववीतमः अतिशयेन देवान् कामयमानः ᵛशोचस्व दीप्यस्व । हे ᵛमियेध्य मेधार्ह ᵛप्रशस्त उत्कृष्ट ᵛअग्ने ᵛअरुषं गमनशीलं ᵛदर्शतं दर्शनीयं ᵛधूमं ᵛवि ᵛसृज विशेषेण संपादय ॥ सीदस्व । 'षद्लृ विशरणगत्यवसादनेषु' । व्यत्ययेनात्मनेपदम् । प्रार्थनायां लोटि शपि 'पाघ्रा°' इत्यादिना सीदादेशः । महान् । संहितायां नकाराकारयोः रुत्वानुनासिकौ उक्तौ । शोचस्व । 'शुच दीप्तौ' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । तिङः परत्वात् निघाताभावः । देववीतमः । 'वी गतिप्रजनकान्त्यशनखादनेषु' । देवान् वेति गच्छतीति देववीः । 'क्विप् च' इति क्विप् । अतिशयेन देववीर्देववीतमः । तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । अरुषम् अरोषणम् । 'रिष रुष हिंसायाम्' । 'घञर्थे कविधानम्°' इति भावे कप्रत्ययः । नास्ति रुषोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मियेध्य । 'छन्दसि च' इति अर्हार्थे यप्रत्ययः । मकारात्परः इयागमश्छान्दसः । सृज । 'सृज विसर्गे' । तुदादित्वात् शः । विकरणस्वरः । पादादित्वादनिघातः । दर्शतम् । 'भृमृदृशि°' इत्यादिना दृशेः कर्मणि अतच्प्रत्ययः ॥

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १० ॥

यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् । हव्यऽवाहन ।
यम् । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतम् । यम् । वृषा । यम् । उपऽस्तुतः ॥ १० ॥

हे Vहव्यवाहन हविषो वाहकाग्ने Vमनवे मनोरनुग्रहाय Vदेवासः सर्वे देवाः Vयजिष्ठम् अतिशयेन पूज्यं यष्टृतमं वा Vयं त्वाम् Vइह देवयजनदेशे Vदधुः धृतवन्तः । Vमेध्यातिथिः मेधार्हैरतिथिभिर्युक्तः Vकण्वः एतन्नामको महर्षिः Vयं त्वां Vधनस्पृतं धनेन प्रीणयितारं कृत्वा दधे इति शेषः। तथा Vवृषा इन्द्रः Vयं त्वां दधे । तथा Vउपस्तुतः अन्योऽपि स्तोता यजमानो Vयं त्वां दधे । स त्वं सं सीदस्वेति पूर्वत्रान्वयः ॥ दधुः । लिटि उसि किंत्वे 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । यजिष्ठम् । यष्टृशब्दात् 'तुश्छन्दसि' ( पा. सू. ५. ३. ५९ ) इति अगुणवचनादपि आतिशायनिक इष्ठन् । 'तुरिष्ठेमेयःसु' ( पा. सू. ६. ४. १५४ ) इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । हव्यवाहन । हव्यं वहतीति हव्यवाहनः । 'हव्येऽनन्तःपादम्' ( पा. सू. ३. २. ६६ ) इति वहतेर्ञ्युट् । मेध्यातिथिः । मेध्या अतिथयो यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । धनस्पृतम् । धनैरस्मान् स्पृणोति प्रीणयतीति धनस्पृत् । 'स्पृ प्रीतिबलयोः' । 'क्विप् च' इति क्विप् । ततः तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । उपस्तुतः । 'क्तिच्क्तौ च संज्ञायाम्' इति कर्तरि क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥ ॥ ९ ॥

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥ ११ ॥

यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि ।
तस्य । प्र । इषः । दीदियुः । तम् । इमाः । ऋचः । तम् । अग्निम् । वर्धयामसि ॥ ११ ॥

Vमेध्यातिथिः[1] यागयोग्या अतिथय ऋत्विग्रूपा यस्य तादृशः[1] Vकण्वः ऋषिः Vऋतादधि आदित्यादध्याहृत्य Vयम् Vअग्निम् Vईधे दीप्तवान् Vतस्य अग्नेः Vइषः गमनस्वभावा रश्मयः Vप्र Vदीदियुः प्रकर्षेण दीप्यन्ते । तथा Vतम् अग्निम् Vइमाः अस्माभिः प्रयुज्यमानाः Vऋचः वर्धयन्तीति शेषः । वयमपि Vतमग्निं Vवर्धयामसि स्तोत्रैर्वर्धयामः ॥ ईधे । 'ञिइन्धी दीप्तौ' । 'इन्धिभवतिभ्यां च' ( पा. सू. १. २. ६ ) इति लिटः किंत्वात् 'अनिदिताम्' इति नकारलोपः । द्विर्भावहलादिशेषयोः कृतयोः सवर्णदीर्घः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । इषः । 'इष गतौ' । इष्यन्ति गच्छन्तीति इषो रश्मयः । दीदियुः । दीदेतिश्छान्दसो धातुर्दीप्तिकर्मा । लिटि उसि इयङादेशः । 'एरनेकाचः०' इति यणादेशाभावश्छान्दसः । वर्धयामसि । 'इदन्तो मसि' इति मस इकारागमः ॥

---

१. ढ–मेध्या यागयोग्या अतिथयः यस्य इति तादृशः ।

रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥ १२ ॥

रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् ।
त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ १२ ॥

हे ᵛस्वधावः अन्नवन् अग्ने। 'स्वधा अर्कः' (नि. २. ७. १७) इति तन्नामसु पाठात् । अस्माकं ᵛरायः धनानि ᵛपूर्धि पूरय देहि वा । 'पूर्धि पूरय देहीति वा' (निरु. ४. ३) इति यास्कः । हे ᵛअग्ने ᵛते तव ᵛदेवेष्वाप्यं प्रापणीयं सख्यम् ᵛअस्ति ᵛहि विद्यते खलु । ᵛत्वं ᵛश्रुत्यस्य श्रवणीयस्य ᵛवाजस्य अन्नस्य ᵛराजसि ईश्वरो भवसि । ᵛसः त्वं ᵛनः अस्मान् ᵛमृळ सुखय । ᵛमहान् गुणैरधिकः ᵛअसि ॥ रायः । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । पूर्धि । 'पॄ पालनपूरणयोः'। 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति शपो लुक् । हेरपित्त्वेन ङित्त्वाद्गुणाभावे 'उदोष्ठ्यपूर्वस्य' (पा. सू. ७. १. १०२) इति उत्वम् । 'हलि च' इति दीर्घः । स्वधावः । 'संबुद्धौ मतुवसोः°' इति रुत्वम् । आप्यम् । अदुपधत्वाभावेऽपि व्यत्ययेन 'पोरदुपधात्' (पा. सू. ३. १. ९८) इति कर्मणि यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । यद्वा । ण्यति छान्दसमाद्युदात्तत्वम् । श्रुत्यस्य । 'श्रु श्रवणे' । औणादिकः क्यप् । तुगागमः । यद्वा । श्रुतिशब्दात् 'भवे छन्दसि' इति यत् । मृळ । 'मृड सुखने' । शस्य ङित्त्वात् लघूपधगुणाभावः ॥

यूपोच्छ्रयणे 'ऊर्ध्व ऊ षु ण ऊतये' इति द्वे । 'पशाविष्टिः' इति खण्डे सूत्रितम्—'ऊर्ध्व ऊ षु ण ऊतय इति द्वे' (आश्व. श्रौ. ३. १) इति । एते एवाभिष्टवेऽपि विनियुक्ते । 'अथोत्तरम्' इति खण्डे सूत्रितं—'सखे सखायमभ्या ववृत्स्वोर्ध्व ऊ षु ण ऊतय इति द्वे' (आश्व. श्रौ. ४. ७) इति ॥

ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ।
ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः । वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥

हे यूप यद्वा यूपात्मकदारुनिष्ठाग्ने ᵛनः अस्माकम् ᵛऊतये रक्षणाय ᵛऊर्ध्वः उन्नतः ᵛतिष्ठ । तत्र दृष्टान्तः । ᵛसविता ᵛदेवो ᵛन । यथा सूर्यो देव उन्नतस्तिष्ठति तद्वत् । ᵛऊर्ध्वः उन्नतः सन् ᵛवाजस्य अन्नस्य ᵛसनिता दाता भविष्यसि । ᵛयत् यस्मात् कारणात् ᵛअञ्जिभिः आज्येन यूपम् अञ्जद्भिः ᵛवाघद्भिः यज्ञं वहद्भिर्ऋत्विग्भिः सह ᵛविह्वयामहे अन्नदानाय[1] त्वां विशेषेणाह्वयामः । तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः ॥ ऊ षु णः । 'इकः सुञि' (पा. सू. ६. ३. १३४) इति संहितायां दीर्घः । 'सुञः' (पा. सू. ८. ३. १०७) इति षत्वम् । 'नश्च धातुस्थोरुषुभ्यः' (पा. सू. ८.४. २७)

१. ढ—हविःसंपादनाय ।

इति णत्वम् । ऊतये । अवतेः क्तिनि ‘ ज्वरत्वर० ’ इत्यादिना ऊठ् । ‘ ऊतियूति० ’ इत्यादिना क्तिन् उदात्तत्वम् । तिष्ठ । शपि ‘ पाघ्रा० ’ इत्यादिना तिष्ठादेशः । ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घः । वाजस्य । ‘ क्रियाग्रहणं कर्तव्यम् ’ ( पा. म. १. ४. ३२ ) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । सनिता । ‘ षणु दाने ’ । लुटि तासिः । वलादिलक्षण इट् ( पा. सू. ७. २. ३५ ) । तिपो डादेशः ( पा. सू. २. ४. ८५ ) । टिलोपः । उदात्तनिवृत्तिस्वरेण लिबादेशस्य उदात्तत्वे प्राप्ते ‘ तास्यनुदात्तेत्० ’ इति तस्यानुदात्तत्वम् । धातुस्वरः । ‘ न लुट् ’ ( पा. सू. ८. १. २९ ) इति निघातप्रतिषेधः । अञ्जिभिः । ‘ अञ्जू व्यक्तिम्रक्षणगतिषु ’ । ‘ खनिकष्यञ्जि० ’ ( उ. सू. ४. ५७९ ) इत्यादिना इप्रत्ययः । विह्वयामहे । ‘ निसमुपविभ्यो ह्वः ’ ( पा. सू. १. ३. ३० ) इति अकर्त्रभिप्रायेऽप्यात्मनेपदम् । ‘अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । ‘ तिङि चोदात्तवति ’ इति गतेरनुदात्तत्वम् यद्वृत्तयोगादनिघातः ॥

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १४ ॥

ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वम् । सम् । अत्रिणम् । दह ।
कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥ १४ ॥

हे यूप यद्वा तन्निष्ठाग्ने ऊर्ध्वः उन्नतः सन् नः अस्मान् केतुना ज्ञानेन अंहसः पापात् नि पाहि नितरां पालय । विश्वम् अत्रिणम् सर्वमत्तारं भक्षकं राक्षसं सं दह सम्यग्भस्मीकुरु । नः अस्मान् ऊर्ध्वान् उन्नतान् कृधि कुरु । किमर्थम् । चरथाय लोके चरणाय जीवसे जीवनाय च नः अस्माकं दुवः धनं[1] हविःस्वरूपं देवेषु विदाः लम्भय ॥ अत्रिणम् । ‘ अद भक्षणे ’ । ‘ अदेस्त्रिनि च ’ ( उ. सू. ४. ५०८ ) इति औणादिकः त्रिनिप्रत्ययः । यद्वा । अदतस्त्रायन्ते इति अत्राः । ‘ आतोऽनुपसर्गे कः ’ इति कः । अतो मत्वर्थीय इनिः । कृधि । ‘ श्रुशृणुपृकृवृभ्यश्छन्दसि ’ इति हेर्धिरादेशः । ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । ‘ अन्येषामपि दृश्यते ’ इति संहितायां दीर्घः । ऊर्ध्वान् । ‘ उभयथर्क्षु ’ ( पा. सू. ८. ३. ८ ) इति विकल्पविधानात् ‘ नश्छव्यप्रशान् ’ ( पा. सू. ८. ३. ७) इति नकारस्य रुत्वाभावः । चरथाय । चरेः औणादिको भावे अथप्रत्ययः । जीवसे । ‘ जीव प्राणधारणे ’ । ‘ तुमर्थे सेसेन्० ’ इति असेप्रत्ययः । विदाः । ‘ विदॢ लाभे ’ । अस्मादन्तर्भावितण्यर्थात् लेटि सिपि ‘ लेटोऽडाटौ ’ इति आडागमः । तुदादित्वात् शः । ‘ शे मुचादीनाम् ’ इति नुम् न भवति, ‘ अनित्यमागमशासनम् ’ इति वचनेन तस्यानित्यत्वात् । ‘ इतश्च लोपः० ’ इति इकारलोपः आगमानुदात्तत्वे विकरणस्वरः ॥

---

१. च-छ-ण-त-ध-फ-ल-श—धनं च ।

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥ १५ ॥

पाहि । नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः ।
पाहि । रिषतः । उत । वा । जिघांसतः । बृहद्भानो इति बृहत्ऽभानो । यविष्ठ्य ॥ १५ ॥

हे अग्ने हे[1] बृहद्भानो बृहन्तो भानवो यस्य तादृश हे यविष्ठ्य युवतम हे अग्ने नः अस्मान्[1] रक्षसः बाधकाद्राक्षसादेः पाहि पालय। तथा अराव्णः धनादीनामदातृरूपात् धूर्तेः हिंसकात् पाहि। तथा रिषतः हिंसकाद्व्याघ्रादेः सकाशात् पाहि। उत वा अथवा जिघांसतः हन्तुमिच्छतः शत्रोः सकाशात् पाहि ॥ धूर्तेः । धुर्वी हिंसार्थः । ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति कर्तरि क्तिच् । ‘ तितुत्र° ’ इत्यादिना इट्प्रतिषेधः । ‘ राल्लोपः ’ ( पा. सू. ६. ४. २१ ) इति वकारलोपः । ‘ हलि च ’ इति दीर्घत्वम् । अराव्णः । ‘ रा दाने ’ । ‘ आतो मनिन्° ’ इत्यादिना वनिप् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पञ्चम्येकवचने ‘ अल्लोपोऽनः ’ इति अनः अकारस्य लोपः । रिषतः । ‘ रिष हिंसायाम् ’ । लटः शतृ । ‘ बहुलं छन्दसि ’ इति शपो लुक् । प्रत्ययस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । जिघांसतः । हन्तेरिच्छार्थे सनि ‘ अज्झनगमां सनि ’ ( पा. सू. ६. ४. १६ ) इति उपधादीर्घत्वम् । ‘ अभ्यासाच्च ’ ( पा. सू. ७. ३. ५५ ) इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । ‘ सन्यतः ’ इति इत्वम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सनो नित्त्वात् नित्स्वरेण पदस्याद्युदात्तत्वम् । बृहद्भानो । ‘ आमन्त्रितस्य च ’ इति षाष्ठिकमाद्युदात्तत्वम् । पादादित्वात् आष्टमिकनिघाताभावः । यविष्ठ्य । ‘ स्थूलदूर° ’ इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः । यकारोपजनश्छान्दसः ॥　　॥ १० ॥

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक् ।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥ १६ ॥

घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजम्भ । यः । अस्मऽध्रुक् ।
यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः । ईशत ॥ १६ ॥

हे तपुर्जम्भ तप्यमानरश्मियुक्ताग्ने अराव्णः अस्मभ्यं देयस्य धनस्य अदातॄन् वैरिणः विष्वक् सर्वतः वि जहि विशेषेण मारय[2]। तत्र दृष्टान्तः । घनेव । यथा कठिनेन दण्डपाषाणादिना भाण्डादिभङ्गं करोति तद्वत् । यः अन्योऽपि रिपुः अस्मध्रुक् अस्मद्विषयद्रोहकारी भर्त्सनादिना बाधते । यः च अन्यः मर्त्यः मनुष्यः शत्रुः अक्तुभिः आयुधैः अति शिशीते तनूकरोति अस्मान् प्रहरतीत्यर्थः । स रिपुः भर्त्सनप्रहारकारी द्विविधोऽपि शत्रुः नः अस्मान् प्रति मा ईशत ईश्वरः शक्तो मा भूत् ॥ घनाइव । ‘ सुपां सुलुक्° ’ इति तृतीयाया डादेशः । जहि । हन्तेर्लोटि हौ ‘ हन्तेर्जः ’ ( पा. सू. ६. ४. ३६ ) इति जादेशः । तस्य असिद्धत्वात् हेर्लुगभावः । तपुर्जम्भ । ‘ तप संतापे ’ । औणादिकः

---

१. च-छ-ण-फ–हे बृहद्भानो बृहन्तो भानवो यस्य तादृश हे यविष्ठ्य युवतम नः अस्मान्; न–हे बृहद्भानो......तादृश यविष्ठ्य युवतम नः अस्मान्; स–नः अस्मान् । २. ढ–हिंसय ।

करणे उसिन्प्रत्ययान्तः तपुस्शब्दो नित्त्वादाद्युदात्तः । ‘ जभि नाशने ’। जम्भ्यन्ते शत्रव एभिरिति जम्भान्यायुधानि । करणे घञ् । तपूंष्येव जम्भानि यस्यासौ तपुर्जम्भः । आमन्त्रिताद्युदात्तत्वम् । अस्मध्रुक् । ‘ द्रुह जिघांसायाम् ’। ‘ सत्सूद्विष° ’ इत्यादिना क्विप् । ‘ वा द्रुहमुहष्णुहष्णिहाम् ’ (पा. सू. ८. २. ३३ ) इति हकारस्य घत्वम् । भष्भावः । शिशीते । ‘ शो तनूकरणे ’ । व्यत्ययेनात्मनेपदम् । ‘ बहुलं छन्दसि ’ इति विकरणस्य श्लुः । ‘ आदेचः° ’ इति आत्वम् । ततो द्विर्वचने ‘ बहुलं छन्दसि ’ (पा. सू. ७. ४. ७८ ) इति अभ्यासस्य इत्वम् । ‘ ई हल्यघोः ’ इति ईत्वम् । व्यत्ययेनाद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । ईशत । लङि ‘ बहुलं छन्दसि ’ इति शपो लुगभावः । ‘ न माङ्योगे ’ इति अडागमाभावः ॥

अ॒ग्निर्व॑व्ने सु॒वीर्य॑म॒ग्निः कण्वा॑य॒ सौभ॑गम् ।
अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उप॑स्तुतम् ॥ १७ ॥

अ॒ग्निः । व॒व्ने । सु॒ऽवीर्य॑म् । अ॒ग्निः । कण्वा॑य । सौभ॑गम् ।
अ॒ग्निः । प्र । आ॒व॒त् । मि॒त्रा । उ॒त । मेध्य॑ऽअतिथिम् । अ॒ग्निः । सा॒तौ । उ॒प॒ऽस्तु॒तम् ॥ १७ ॥

ᵛअग्निः देवः ᵛसुवीर्यं शोभनवीर्योपेतं धनमुद्दिश्य ᵛवव्ने याचितः । सः ᵛअग्निः ᵛकण्वाय महर्षये ᵛसौभगं शोभनधनादिरूपं भाग्यं प्रायच्छदिति शेषः । तथा ᵛअग्निः ᵛमित्रा अस्मन्मित्राणि ᵛप्रावत् प्रकर्षेण रक्षितवान् । ᵛउत अपि च ᵛमेध्यातिथिं मेधयोग्यैरतिथिभिरुपेतमृषिं प्रावत् । तथा ᵛउपस्तुतम् अन्यमपि स्तोतारं यजमानं ᵛसातौ धनादिदाननिमित्तं प्रावदिति शेषः ॥ वव्ने । ‘ वनु याचने ’। कर्मणि लिट् । ‘ न शसददवादिगुणानाम् ’ (पा. सू. ६.४.१२६ ) इति एत्वाभ्यासलोपयोः प्रतिषेधः । उपधालोपश्छान्दसः । सौभगम् । ‘ सुभगान्मन्त्रे ’ इति उद्गात्रादिषु पाठात् तस्य भावः इत्येतस्मिन्नर्थे अञ् ( पा. सू. ५. १. १२९ ) । ञित्त्वादाद्युदात्तत्वम् । मित्रा । ‘ शेश्छन्दसि बहुलम् ’ इति शेर्लोपः । उपस्तुतम् । ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति स्तौतेः कर्तरि क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे ।
अ॒ग्निर्न॑य॒न्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥ १८ ॥

अ॒ग्निना॑ । तु॒र्वश॑म् । यदु॑म् । प॒रा॒ऽवतः॑ । उ॒ग्रऽदे॑वम् । ह॒वा॒म॒हे॒ ।
अ॒ग्निः । न॒य॒त् । नव॑ऽवास्त्वम् । बृ॒हत्ऽर॑थम् । तु॒र्वीति॑म् । दस्य॑वे । सहः॑ ॥ १८ ॥

ᵛअग्निना सहावस्थितान् तुर्वशनामकं यदुनामकम् उग्रदेवनामकं च राजर्षीन् ᵛपरावतः दूरदेशात् ᵛहवामहे आह्वयामः । स च ᵛअग्निः नववास्तुनामकं बृहद्रथनामकं तुर्वीतिनामकं च राजर्षीन् ᵛनयत् इहानयतु । कीदृशोऽग्निः । ᵛदस्यवे ᵛसहः अस्मदुपद्रवहेतोश्चोरस्याभिभविता ॥ नयत् । ‘ णीञ् प्रापणे ’। लेटि अडागमः । ‘ इतश्च लोपः° ’ इति इकारलोपः । नववास्त्वम् । नवं वास्तु यस्यासौ

नववास्तुः । 'वा छन्दसि' इत्यनुवृत्तेः अमि पूर्वत्वाभावे यणादेशः । बृहद्रथम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

नि त्वाम॑ग्ने मनु॑र्दधे ज्योति॒र्जना॑य॒ शश्व॑ते ।

दी॒देथ॒ कण्व॑ ऋ॒तजा॑त उ॒क्षितो॒ यं न॑म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥ १९ ॥

नि । त्वाम् । अ॒ग्ने॒ । मनुः॑ । द॒धे॒ । ज्योतिः॑ । जना॑य । शश्व॑ते ।

दी॒देथ॑ । कण्वे॑ । ऋ॒तऽजा॑तः । उ॒क्षि॒तः । यम् । न॒म॒स्यन्ति॑ । कृ॒ष्टयः॑ ॥ १९ ॥

हे ᵛअग्ने ᵛज्योतिः प्रकाशरूपं ᵛत्वां ᵛशश्वते बहुविधाय ᵛजनाय ᵛमनुः प्रजापतिः ᵛनि ᵛदधे देवयजनदेशे स्थापितवान् । हे अग्ने त्वम् ᵛऋतजातः ऋतेन यज्ञेन निमित्तभूतेनोत्पन्नः ᵛउक्षितः हविर्भिस्तर्पितः सन् ᵛकण्वे एतन्नामके महर्षौ ᵛदीदेथ दीप्तवानसि । ᵛयम् अग्निं ᵛकृष्टयः मनुष्याः । 'कृष्टयः चर्षणयः' ( नि. २. ३. ७ ) इति मनुष्यनामसु पठितत्वात् । ᵛनमस्यन्ति नमस्कुर्वन्ति । स त्वमिति पूर्वत्रान्वयः ॥ दीदेथ । दीदेतिश्छान्दसो दीप्तिकर्मा । थलि 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का. ६. १:८.१) इति द्विर्वचनाभावः । 'अनित्यमागमशासनम्' इति वचनात् इडभावः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । ऋतजातः । ऋते[1] जन्यते इति ऋतजातः । 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः । 'जनसन०' इत्यादिना आत्वम् । तृतीयापूर्वपदप्रकृतिस्वरत्वम् । नमस्यन्ति । 'नमोवरिवः०' (पा. सू. ३. १. १९) इति पूजार्थे क्यच् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे क्यजन्तधातुस्वरः । कृष्टयः । 'कृष विलेखने' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् ॥

त्वे॒षासो॑ अ॒ग्नेरम॑वन्तो अ॒र्चयो॑ भी॒मासो॒ न प्रती॑तये ।

र॒क्ष॒स्विनः॒ सद॒मिद्या॑तु॒माव॑तो॒ विश्वं॒ सम॒त्रिणं॑ दह ॥ २० ॥

त्वे॒षासः॑ । अ॒ग्नेः । अम॑ऽवन्तः । अ॒र्चयः॑ । भी॒मासः॑ । न । प्रति॑ऽइतये ।

र॒क्ष॒स्विनः॑ । सद॑म् । इत् । या॒तु॒ऽमाव॑तः । विश्व॑म् । सम् । अ॒त्रिण॑म् । द॒ह॒ ॥ २० ॥

ᵛअग्नेः ᵛअर्चयः ज्वालाः ᵛत्वेषासः दीप्ताः ᵛअमवन्तः बलवन्तः ᵛभीमासः भयंकराः । अतः ᵛप्रतीतये अस्माभिः प्रत्येतुं ᵛन शक्या इति शेषः । हे अग्ने ᵛरक्षस्विनः बलवतः ᵛयातुमावतः यातुधानानसुरान् ᵛसदमित् सर्वदैव ᵛसं ᵛदह सम्यग्भस्मीकुरु । तथा ᵛविश्वं सर्वं ᵛअत्रिणं भक्षकं अस्मद्बाधकं शत्रुं सं दह ॥ त्वेषासः । 'त्विष दीप्तौ' । पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । अमवन्तः । 'अम रोगे' । अमति शत्रून् रुजतीति अमो बलम् । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । तदेषामस्तीत्यमवन्तः । प्रतीतये । 'तादौ च निति०' इति गतेः प्रकृतिस्वरत्वम् । रक्षस्विनः । रक्षन्त्यनेनेति रक्षो बलम् । करणेऽसुन् । 'अस्मायामेधा०' इति मत्वर्थीयो विनिः । यातुमावतः । यातवो यातनाः । तान् मिमते निर्मिमते इति राक्षसव्यापारा यातुमाः । 'आतोऽनुपसर्गे

---

१. श—ऋतेन ।

कः ' इति कः । तदेषामस्तीति मतुप् । ' मतौ बह्वचोऽनजिरादीनाम् ' ( पा. सू. ६. ३. ११९ ) इति दीर्घत्वम् । ' संज्ञायाम् ' ( पा. सू. ८. २. ११ ) इति वत्वम् । मतुपः पित्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । अत्रिणम् । ' अदेस्त्रिनि च ' इति कर्तरि त्रिनिप्रत्ययः ॥ ॥ ११ ॥

' क्रीळं वः ' इति द्वितीयं सूक्तं पञ्चदशर्चम् । अत्रेयमनुक्रमणिका—' क्रीळं पञ्चोना मारुतं हि गायत्रं तु ' इति । ' ऋषिश्चान्यस्मादृषेरवाविशिष्टः ' इति परिभाषया घोरपुत्रः कण्व ऋषिः । इदमुत्तरं च गायत्रीच्छन्दस्के । इदमादिसूक्तत्रयं मरुद्देवताकं तुह्यिहवेति परिभाषितत्वात् । व्यूळ्हे द्वितीये छन्दोमे आग्निमारुतशस्त्रे एतत्सूक्तं निविद्धानीयम् । ' द्वितीयस्याग्निं वो देवम् ' इति खण्डे सूत्रितं—' क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतम् ' ( आश्व. श्रौ. ८. १० ) इति । ब्राह्मणं च—' क्रीळं वः शर्धो मारुतम् ' ( ऐ.ब्रा. ५. १९ ) इति । ' मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालम् ' इत्यस्यामिष्टौ ' क्रीळं वः ' इत्येषा प्रधानस्यानुवाक्या । ' तथा ततः ' इति खण्डे सूत्रितं—' क्रीळं वः शर्धो मारुतमत्यासो न ये मरुतः स्वञ्चः ' ( आश्व. श्रौ. २. १८ ) इति ॥

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत ॥ १ ॥

क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ॥१॥

हे कण्वाः कण्वगोत्रोत्पन्ना महर्षयः । यद्वा । मेधाविन ऋत्विजः । वः युष्मदर्थं मारुतं मरुत्समूहरूपं शर्धः बलम् अभि प्र गायत अभितः प्रकर्षेण स्तुध्वम् । कीदृशं शर्धः । क्रीळं विहरणशीलम् अनर्वाणं भ्रातृव्यरहितम् । अत एव श्रुत्यन्तरब्राह्मणेन मन्त्रान्तरमेवं व्याख्यातम्—' अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै ' ( तै. सं. ६. ३. ८. ४ ) इति । रथेशुभं स्वकीये रथेऽवस्थाय शोभमानम् ॥ क्रीळम् । ' क्रीडृ विहारे ' । पचाद्यच् । शर्धः । ' शृधु प्रसहने ' । शर्धयत्यनेन शत्रूनिति शर्धो बलम् । असुन् । नित्त्वादाद्युदात्तत्वम् । मारुतं मरुतां संबन्धि । ' तस्येदम् ' इति अण् । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । समूहार्थे ' अनुदात्तादेरञ् ' ( पा. सू. ४. २. ४४ ) इत्यनुदात्तादिलक्षणः अञ्प्रत्ययः । अनर्वाणम् । व्यत्ययेन पुंलिङ्गता । ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । रथेशुभम् । ' शुभ दीप्तौ ' । रथे शोभते इति रथेशुप् । ' क्विप् च ' इति क्विप् । ' तत्पुरुषे कृति बहुलम् ' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । गायत । ' कै गै रै शब्दे ' । ' तिङ्ङतिङः ' इति निघातः ॥

ये पृषतीभिरृष्टिभिः साकं वाशीभिरञ्जिभिः । अजायन्त स्वभानवः ॥ २ ॥

ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अञ्जिऽभिः । अजायन्त । स्वऽभानवः ॥२॥

ये मरुतः पृषत्यादिभिः साकं स्वभानवः स्वकीयदीप्तियुक्ताः अजायन्त इति[1] संपन्नाः । पृषत्यो बिन्दुयुक्ता मृग्यो मरुद्वाहनभूताः । ' पृषत्यो मरुताम् ' ( नि. १. १५. ६ ) इति निघण्टावुक्तत्वात् । ऋष्टय आयुधानि । वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः[2] । ' वाशी वाणी ' ( नि. १. ११. ११ ) इति वाङ्नामसु पठितत्वात् । अञ्जयोऽलंकरणानि । तान् स्तुम इति शेषः ॥ अजायन्त । ' जनी प्रादुर्भावे ' । श्यनि ' ज्ञाजनोर्जा ' ( पा. सू. ७. ३. ७९ ) इति जादेशः । अडागम उदात्तः । स्वभानवः । स्वकीया भानवो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

१. ढ–' इति ' नास्ति । २. ढ–परकीयसेनाभ्रान्तिहेतवः ।

इहेवं शृण्व एषां कशा हस्तेषु यद्वदान् । नि यामंञ्चित्रमृंञ्जते ॥ ३ ॥

इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ॥३॥

ᵛएषां मरुतां ᵛहस्तेषु स्थिताः ᵛकशाः स्वस्ववाहनताडनहेतवः ᵛयद्वदान् यद्वदन्ति यं ध्वनिं कुर्वन्ति तं ध्वनिम् ᵛइहेव अत्रैव स्थित्वा ᵛशृण्वे शृणोमि । स ध्वनिविशेषः ᵛयामन् संग्रामे ᵛचित्रं विविधं शौर्यं ᵛनि ᵛऋञ्जते नितरामलंकरोति । 'ऋञ्जतिः प्रसाधनकर्मा' ( निरु. ६. २१ ) इति यास्कः ॥ शृण्वे । 'श्रु श्रवणे' । व्यत्ययेनात्मनेपदम् । 'श्रुवः शृ च' इति श्नुः । 'हुश्नुवोः सार्वधातुके' इति यणादेशः । वदान् । 'वद व्यक्तायां वाचि' । लेटि आडागमः । 'इतश्च लोपः°' इति इकारलोपे संयोगान्तलोपः । आगमानुदात्तत्वे धातुस्वरः शिष्यते । यद्वृत्तयोगादनिघातः । यामन् । 'सुपां सुलुक्°' इति सप्तम्या लुक् । 'न ङिसंबुद्ध्योः' (पा. सू. ८. २. ८) इति नलोपप्रतिषेधः । ऋञ्जते । 'ऋजि भृजी भर्जने' । अत्र प्रसाधनार्थः ॥

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे । देवत्तं ब्रह्म गायत ॥ ४ ॥

प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ॥ ४ ॥

हे ऋत्विजः ᵛवः युष्माकं संबन्धिने ᵛशर्धाय प्रसहनशीलाय ᵛघृष्वये शत्रुघर्षणयुक्ताय ᵛत्वेषद्युम्नाय दीप्यमानयशसे । 'द्युम्नं द्योततेर्यशो वान्नं वा' ( निरु. ५. ५ ) इति यास्कः । ᵛशुष्मिणे बलवते । 'शुष्मं शुष्णम्' ( नि. २. ९. ११ ) इति बलनामसु पाठात् । एवंभूताय मरुद्गणाय ᵛब्रह्म हविर्लक्षणमन्नमुद्दिश्य ᵛप्र ᵛगायत स्तुध्वम् । कीदृशं ब्रह्म । ᵛदेवत्तं देवैर्दत्तं देवतानुग्रहाल्लब्धम् ॥ शर्धाय । 'शृधु प्रसहने' । शर्धयत्यभिभवतीति शर्धो बलम् । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । घृष्वये । 'घृष संघर्षे' । 'कृविघृष्वि°' ( उ. सू. ४. ४९६ ) इत्यादिना क्विन्प्रत्ययान्तो निपातितः । त्वेषद्युम्नाय । 'त्विष दीप्तौ' । पचाद्यच् । त्वेषं दीप्तं द्युम्नं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । देवत्तं देवैर्दत्तम् । छान्दसो वर्णलोपः । उक्तं च–'द्वौ चापरौ वर्णविकारनाशौ' (का. ६. ३. १०९) इति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् । जम्भे रसस्य वावृधे ॥ ५ ॥

प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् । जम्भे । रसस्य । ववृधे ॥५॥

ᵛगोषु मरुन्मातृभूतपृश्निप्रभृतिषु धेनुष्ववस्थितम् । 'पृश्न्यै वै पयसो मरुतो जाताः' ( तै. सं. २. २. ११. ४ ) इति श्रुत्यन्तरात् । ᵛअघ्न्यम् अहन्तव्यं ᵛक्रीळं विहारोपेतं ᵛमारुतं मरुत्संबन्धि ᵛशर्धः प्रसहनशीलं तेजो ᵛयत् अस्ति तत् ᵛप्र ᵛशंस हे ऋत्विक्समूह स्तुहि । ᵛरसस्य गोक्षीररूपस्य संबन्धि तत् तेजः ᵛजम्भे मुखे उदरे वा ᵛववृधे वृद्धमभूत् ॥ शंस । 'शंसु स्तुतौ' । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । गोषु । 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः । अघ्न्यम् । 'घ्नो हननम्' । 'वजर्थे कविधानम्°' ( पा. सू. ३. ३. ५८. ४ ) इति कः । 'गमहन°' इत्यादिना उपधालोपः । 'हो हन्तेः°' ( पा. सू. ७. ३. ५४ ) इति घत्वम् । तदर्हतीति घ्न्यम् । 'छन्दसि च' इति यः । न घ्न्यम् अघ्न्यम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । क्रीळादयो

गताः । जम्भे । ‘ जभि नाशने ’ । जम्भ्यते भक्ष्यतेऽनेनेति जम्भमास्यम् । करणे घञ् । ववृधे । ‘ वृधु वृद्धौ ’ । लिट् । छान्दसं संहितायामभ्यासदीर्घत्वम् ॥ ॥ १२ ॥

को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमन्तं न धूनुथ ॥ ६ ॥

कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ॥ ६ ॥

ᵛदिवश्च द्युलोकस्यापि ᵛग्मश्च भूलोकस्यापि । ‘ गौः ग्मा ’ ( नि. १. १. २ ) इति भूनामसु पठितत्वात् । ᵛधूतयः कम्पनकारिणो हे ᵛनरः नेतारो मरुतः ᵛवः युष्माकं मध्ये ᵛआ समन्तात् ᵛवर्षिष्ठः वृद्धतमः ᵛकः । ᵛयत् यस्मात् कारणात् ᵛसीं सर्वतः ᵛअन्तं ᵛन वृक्षाग्रमिव ᵛधूनुथ चालयथ । तस्मात् कारणात् कम्पयितॄणां युष्माकं मध्ये कः प्रबल इति प्रश्नः॥ वर्षिष्ठः । वृद्धशब्दात् इष्ठनि ‘ प्रियस्थिर° ’ ( पा. सू. ६.४.१५७ ) इत्यादिना वर्षादेशः । नित्त्वादाद्युदात्तः । ग्मः । ग्माशब्दात् षष्ठ्येकवचने ‘ आतो धातोः ’ इत्यत्र ‘ आत इति योगविभागः कर्तव्यः ’ ( का. ६. ४. १४० ) इत्युक्तत्वात् आकारलोपः उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । धूतयः । ‘ धूञ् कम्पने ’ । ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति क्तिच् । ‘ तितुत्र° ’ इत्यादिना इट्प्रतिषेधः । ‘ आमन्त्रितस्य च ’ इति सर्वानुदात्तत्वम् । धूनुथ । ‘ स्वादिभ्यः श्नुः ’ । ‘ सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ’ इति वचनात् सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते । अतस्तिङ एव स्वरः । यद्वृत्तयोगादनिघातः ॥

नि वो यामाय मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥ ७ ॥

नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥ ७ ॥

हे मरुतः ᵛवः युष्माकं ᵛयामाय गमनार्थं ᵛमानुषः गृहस्वामी कश्चिन्मनुजः ᵛनि ᵛदध्रे गृहदार्ढ्यार्थं दृढं स्तम्भं निक्षिप्तवान् । भवदीयगमनेन चालितं गृहं पतिष्यतीति भीत्या तन्निवारणाय दृढस्तम्भप्रक्षेपः । कीदृशाय यामाय । ᵛउग्राय तीव्राय ᵛमन्यवे चालनार्थमभिमन्यमानाय । युज्यते हि भवद्गमनाद्भीतिः । यतो भवद्गत्या चालितः ᵛपर्वतः बहुविधपर्वयुक्तः ᵛगिरिः शिखरी ᵛजिहीत गच्छेत् ॥ मानुषः । ‘ मनोर्जातावञ्यतौ षुक् च ’ ( पा. सू. ४. १. १६१ ) इति मनुशब्दात् अपत्यार्थे अञ् षुगागमश्च । ‘ ञ्नित्यादिर्नित्यम् ’ इत्याद्युदात्तत्वम् । दध्रे । ‘ धृञ् अवस्थाने ’ इत्यस्य लिटि कित्त्वाद्गुणाभावे सति यणादेशः । प्रत्ययस्वरः । पादादित्वात् न निघातः । जिहीत । ‘ ओहाङ् गतौ ’ । लिङि जुहोत्यादित्वात् शपः श्लुः । ‘ भृञामित् ’ ( पा. सू. ७. ४. ७६ ) इति अभ्यासस्य इत्वम् । ‘ श्नाभ्यस्तयोरातः ’ इति आकारलोपः । पर्ववान् पर्वतः । मत्वर्थीयः तप्रत्ययः ॥

येषामज्मेषु पृथिवी जुजुर्वाँइव विश्पतिः । भिया यामेषु रेजते ॥ ८ ॥

येषाम् । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥ ८ ॥

हे मरुतः ᵛयेषां युष्माकं ᵛयामेषु गमनेषु ᵛअज्मेषु क्षेपकेषु सत्सु ᵛपृथिवी भूमिः ᵛरेजते कम्पते । तत्र दृष्टान्तः । ᵛजुजुर्वाँइव ᵛविश्पतिः । यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ॥ अज्मेषु । ‘ अज गतिक्षेपणयोः ’ । बहुलग्रहणात् औणादिको मन् । ‘ अजेर्व्यघञपोः ’

( पा. सू. २. ४. ५६ ) इति वीभावो न भवति, 'वलादावार्धधातुके विकल्प इष्यते' ( का. २. ४. ५६. २ ) इति वचनात्। नित्त्वादाद्युदात्तत्वम्। जुजुर्वान्। 'जृष् वयोहानौ'। लिटः क्वसुः। 'बहुलं छन्दसि' ( पा. सू. ७. १. १०३ ) इति उत्वम्। अभ्यासहलादिशेषौ। 'वस्वेकाजाद्घसाम्' इति नियमात् इडागमाभावः। 'ऋच्छत्यृताम्' ( पा. सू. ७. ४. ११ ) इति गुणः, 'हलि च' इति दीर्घत्वं च 'संज्ञापूर्वको विधिरनित्यः' इति वचनात् न भवति। विशां पतिर्विश्पतिः। 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। भिया। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। यामेषु। 'यम उपरमे'। भावे घञ्। 'कर्षात्वतो घञः°' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम्। रेजते। 'रेजृ कम्पने'। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। यद्वृत्तयोगादनिघातः॥

स्थि॒रं हि जान॑मेषां॒ वयो॑ मा॒तुर्निरे॑तवे। यत्सी॒मनु॑ द्वि॒ता शवः॑ ॥ ९ ॥

स्थि॒रम्। हि। जान॑म्। ए॒षा॒म्। वयः॑। मा॒तुः। निःऽए॑तवे। यत्। सी॒म्। अनु॑। द्वि॒ता। शवः॑॥९॥

ᵛएषां मरुतां ᵛजानं जन्मस्थानमाकाशं ᵛस्थिरं ᵛहि चलनरहितं खलु। ᵛमातुः मरुतां जननीस्थानीयादाकाशात् ᵛवयः पक्षिणः ᵛनिरेतवे निर्गन्तुं समर्था भवन्तीति शेषः। तादृशादाकाशाद्भवज्जन्मेति मरुतां स्तुतिः। ᵛयत् यस्मात् कारणात् ᵛशवः भवदीयं बलम् अनुक्रमेण ᵛसीं सर्वतः ᵛद्विता द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते। अतो भवदीयं जानं स्थिरं हि इति पूर्वत्रान्वयः॥ जानम्। जन्यतेऽस्मिन्निति जानमन्तरिक्षम्। अधिकरणे घञ्। एषाम्। 'इदमोऽन्वादेशे°' इति अशादेशोऽनुदात्तः। विभक्तिश्च सुप्त्वादनुदात्ता। न च 'ऊडिदम्°' इत्यादिना विभक्त्युदात्तत्वम्, अन्तोदात्तात् इदंशब्दात् तस्य विधानात्। निरेतवे। 'इण् गतौ'। 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः। 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम्॥

उदु॒ त्ये सू॒नवो॒ गिरः॒ काष्ठा॒ अज्मे॑ष्वत्नत। वा॒श्रा अ॑भि॒ज्ञु यात॑वे ॥ १० ॥

उत्। ऊँ इति॑। त्ये। सू॒नवः॑। गिरः॑। काष्ठाः॑। अज्मे॑षु। अ॒त्न॒त। वा॒श्राः। अ॒भि॒ऽज्ञु। यात॑वे ॥१०॥

ᵛत्ये पूर्वप्रकृताः[1] ᵛगिरः ᵛसूनवः वाच उत्पादका मरुतः। वायवो हि ताल्वोष्ठादिषु संचरन्तो वाचमुत्पादयन्ति। ᵛअज्मेषु स्वकीयेषु गमनेषु सत्सु ᵛकाष्ठाः अपः। 'आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्ति' ( निरु. २. १५ ) इति यास्कः। ᵛउदु उत्कर्षेणैव ᵛअत्नत अतनिषत विस्तारितवन्तः। उदकं विस्तार्य तत्पानार्थं ᵛवाश्राः हम्भारवोपेता गाः ᵛअभिज्ञु जान्वाभिमुख्यं यथा भवति तथा ᵛयातवे गन्तुं प्रेरितवन्त इति शेषः॥ सूनवः। 'षू प्रेरणे'। 'सुवः कित्' ( उ. सू. ३. ३१५ ) इति नुप्रत्ययः। कित्त्वाद्गुणाभावः। अत्नत। 'तनु विस्तारे'। लङि झस्य अदादेशे 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'तनिपत्योश्छन्दसि' ( पा. सू. ६. ४. ९९ ) इति उपधालोपः। अडागमः। अभिज्ञु। अभिगते जानुनी यस्य तदभिज्ञु। 'प्रसंभ्यां जानुनोर्ज्ञुः' ( पा. सू. ५. ४. १२९ ) इति व्यत्ययेनाभिपूर्वस्यापि जानुशब्दस्य ज्ञुशब्दादेशः समासान्तः। यातवे। 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्॥     ॥ १३ ॥

---

1. च–पूर्ववृत्ताः; फ–पूर्वप्रवृत्ताः।

त्यं चिद्घा दीर्घं पृथुं मिहो नपातममृध्रम्। प्र च्यावयन्ति यामभिः ॥ ११ ॥

त्यम्। चित्। घ। दीर्घम्। पृथुम्। मिहः। नपातम्। अमृध्रम्।

प्र। च्यवयन्ति। यामऽभिः ॥ ११ ॥

ᵛत्यं ᵛचिद्घ प्रसिद्धो यो मेघस्तमपि मेघं ᵛयामभिः स्वकीयगमनैः ᵛप्र ᵛच्यावयन्ति मरुतः प्रकर्षेण गमयन्ति। कीदृशम्। ᵛदीर्घम् आयामोपेतं ᵛपृथुं तिर्यग्विस्तृतं ᵛमिहो ᵛनपातं सेचनीयस्य जलस्य न पातयितारं वृष्टिमकुर्वन्तमित्यर्थः। ᵛअमृध्रं केनाप्यहिंस्यम्॥ घ। 'ऋचि तुनुघ०' इत्यादिना दीर्घः। मिहः। 'मिह सेचने'। मेहति सिञ्चतीति मिट् वृष्टिः। 'क्विप् च' इति क्विप्। 'सावेकाचः०' इति विभक्तेरुदात्तत्वम्। नपातम्। न पातयतीति नपात्। 'नभ्राण्नपात्०' इत्यादिना नञः प्रकृतिभावः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अमृध्रम्। 'मृधु मृधु उन्दने'। मर्धति उदकेन उनत्तीति मृध्रः। बहुलवचनात् औणादिको रक्प्रत्ययः। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा। संग्रामवाचिना मृधशब्देन हिंसा लक्ष्यते। मत्वर्थीयो रः। पूर्ववत् स्वरसमासौ। च्यावयन्ति। 'च्युङ् गतौ'। णिचि वृद्ध्यावादेशौ। पदकाले ह्रस्वश्छान्दसः॥

मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन। गिरीँरचुच्यवीतन ॥ १२ ॥

मरुतः। यत्। ह। वः। बलम्। जनान्। अचुच्यवीतन। गिरीन्। अचुच्यवीतन ॥ १२ ॥

हे ᵛमरुतः ᵛयद्ध यस्मादेव कारणात् ᵛवः युष्माकं ᵛबलम् अस्ति अस्मादेव कारणात् ᵛजनान् प्राणिनः ᵛअचुच्यवीतन स्वस्वव्यापारेषु प्रेरयत। तथा ᵛगिरीन् मेघान् ᵛअचुच्यवीतन प्रेरयत॥ मरुतः। आमन्त्रिताद्युदात्तत्वम्। अचुच्यवीतन। च्यवतेर्लङि व्यत्ययेन परस्मैपदम्। 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः। 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसि' (पा. सू. ७. ३. ९७) इति ईडागमः। गुणावादेशौ। 'तिङ्ङतिङः' इति निघातः। गिरीन्। 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम्। 'अत्रानुनासिकः' इति ईकारस्यानुनासिकः॥

यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना। शृणोति कश्चिदेषाम् ॥ १३ ॥

यत्। ह। यान्ति। मरुतः। सम्। ह। ब्रुवते। अध्वन्। आ। शृणोति। कः। चित्। एषाम् ॥ १३ ॥

ᵛयद्ध यदा खलु ᵛमरुतः ᵛयान्ति गच्छन्ति तदानीम् ᵛअध्वन्ना मार्गे सर्वतः ᵛसं ᵛब्रुवते ᵛह संभूय ध्वनिमवश्यं कुर्वन्ति। ᵛएषां मरुतां संबन्धिनं शब्दं ᵛकश्चित् यः कोऽपि ᵛशृणोति॥ यान्ति। 'या प्रापणे'। अदादित्वात् शपो लुक्। 'झोऽन्तः' इति अन्तादेशस्य[1] उपदेशिवद्भावात् अन्तीत्येतदाद्युदात्तम्। धातुना सहैकादेश एकादेशस्वरः। यद्वृत्तयोगादनिघातः। ब्रुवते। 'ब्रूञ् व्यक्तायां वाचि'। झस्य अदादेशे कृते परत्वात् प्राप्तस्य गुणस्य ङित्त्वेन बाधितत्वात् उवङादेशः। अध्वन्। 'सुपां सुलुक्०' इति सप्तम्या लुक्। शृणोति। तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः॥

---

१. च-छ-त-न-स-झादेशस्य; श-लादेशस्य।

प्र या॑त॒ शीभ॑माशुभिः सन्ति॒ कण्वे॑षु॒ वो॒ दुवः॑ । तत्रो॒ षु मा॑दयाध्वै ॥ १४ ॥

प्र । या॒त॒ । शीभ॑म् । आ॒शुऽभिः॑ । सन्ति॑ । कण्वे॑षु । वः॒ । दुवः॑ । तत्रो॒ इति॑ । सु । मा॒द॒या॒ध्वै॒ ॥ १४ ॥

हे मरुतः ᵛआशुभिः वेगवद्भिः स्वकीयैर्वाहनैः ᵛशीभं शीघ्रम् । ' शीभं तृषु तूयम् ' ( नि. २. १५. ९ ) इति क्षिप्रनामसु पाठात् । ᵛप्र ᵛयात प्रकर्षेण कर्मभूमिं गच्छत । ᵛकण्वेषु मेधाविष्वनुष्ठातृषु ᵛवः युष्माकं ᵛदुवः दुवांसि परिचरणानि ᵛसन्ति । ᵛतत्रो ᵛषु तेष्वेव[1] परिचारकेषु कण्वेषु ᵛमादयाध्वै तृप्ता भवत ॥ आशुभिः । ' अशू व्याप्तौ ' । ' कृवापाजि° ' इत्यादिना उण् । प्रत्ययस्वरः । सन्ति । ' श्नसोरल्लोपः ' इति अकारलोपः । मादयाध्वै । ' मद तृप्तियोगे ' । चुरादिः । आकुस्मीय आत्मनेपदी । लेटि आडागमः । टेः एत्वम् । ' वैतोऽन्यत्र ' ( पा. सू. ३. ४. ९६ ) इति एकारस्य ऐकारादेशः ॥

अस्ति॒ हि ष्मा॒ मदा॑य वः॒ स्मसि॑ ष्मा व॒यमे॑षाम् । विश्वं॑ चि॒दायु॑र्जी॒वसे॑ ॥ १५ ॥

अस्ति॑ । हि । स्म॒ । मदा॑य । वः॒ । स्मसि॑ । स्म॒ । व॒यम् । ए॒षाम् ।

विश्व॑म् । चि॒त् । आयुः॑ । जी॒वसे॑ ॥ १५ ॥

हे मरुतः ᵛवः युष्माकं ᵛमदाय तृप्तये ᵛअस्ति ᵛहि ᵛष्म अस्माभिः प्रयुज्यमानं हविर्वो विद्यते खलु । ᵛएषां युष्माकं भृत्यभूताः ᵛवयं ᵛस्मसि ᵛष्म विद्यामहे खलु । ᵛजीवसे जीवितुं ᵛविश्वं ᵛचिदायुः सर्वमप्यायुः प्रयच्छतेति शेषः । स्म ' निपातस्य च ' इति संहितायां दीर्घः । स्मसि । इदन्तो मसिः । जीवसे । ' तुमर्थे सेसेन्° ' इति असेप्रत्ययः ॥　　॥ १४ ॥

' कद्ध नूनम् ' इति पञ्चदशर्चं तृतीयं सूक्तम् । घोरपुत्रः कण्व ऋषिः, ' ऋषिश्चान्यस्मात् ' इति परिभाषितत्वात् । पूर्वसूक्ते ' मारुतं हि ' इत्युक्तत्वादिदमपि मरुद्देवताकम् । ' गायत्रं तु ' इत्युक्तत्वात् गायत्रीच्छन्दस्कम् । ' कद्ध ' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

कद्ध॑ नू॒नं क॑धप्रियः पि॒ता पु॒त्रं न हस्त॑योः । द॒धि॒ध्वे वृ॑क्तबर्हिषः ॥ १ ॥

कत् । ह॒ । नू॒नम् । क॒ध॒ऽप्रि॒यः॒ । पि॒ता । पु॒त्रम् । न । हस्त॑योः । द॒धि॒ध्वे । वृ॒क्त॒ऽब॒र्हि॒षः॒ ॥ १ ॥

हे मरुतः ᵛकद्ध कदा खलु ᵛनूनम् अवश्यं हस्तयोः ᵛदधिध्वे यूयमस्मान् हस्ते धारयथ । तत्र दृष्टान्तः । ᵛपिता ᵛपुत्रं ᵛन ᵛहस्तयोः । यथा लोके पिता हस्तयोः[2] स्वकीयं पुत्रं धारयति तद्वत् । कीदृशा मरुतः । ᵛकधप्रियः स्तुतिप्रीताः ᵛवृक्तबर्हिषः । वृक्तं छिन्नं बर्हिर्दर्भो येषां[3] मरुतां यजमानाय[3] ते[4] मरुतः तथाविधाः ॥ कत् कदा । ' द्वौ चापरौ वर्णविकारनाशौ ' ( का. ६. ३. १०९ ) इत्युक्तत्वात् आकारलोपः । कधप्रियः । कथा स्तुतिः । तया प्रीणन्तीति कधप्रियः । ' प्रीञ् प्रीतौ ' । क्विप् । पूर्वपदस्य ' ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ' ( पा. सू. ६. ३. ६३ ) इति ह्रस्वत्वम् । धकारश्छान्दसः । आमन्त्रितनिघातः । दधिध्वे । दधातेः ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लिट् । क्रादिनियमात् इट् । प्रत्ययस्वरः वृक्तबर्हिषः । आमन्त्रितनिघातः ॥

---

१. ढ–तेषु तेष्वेव । २. ढ–स्वहस्तयोः । ३. ढ–येषां ते मरुतां यजनाय । ४. ढ–न–स–हे

क्व॑ नू॒नं कद्वो॒ अर्थं॒ गन्ता॑ दि॒वो न पृ॑थि॒व्याः । क्व॑ वो॒ गावो॒ न र॑ण्यन्ति ॥ २ ॥

क्व॑ । नू॒नम् । कत् । वः॒ । अर्थ॑म् । गन्त॑ । दि॒वः । न । पृ॒थि॒व्याः । क्व॑ । वः॒ । गावः॑ । न । र॒ण्य॒न्ति॒ ॥२॥

हे मरुतः ᵛनूनम् इदानीं ᵛक्व यूयं कुत्र स्थिताः । ᵛकत् कदा ᵛवः युष्माकम् ᵛअर्थम् अरणं[1] देवयजनदेशे गमनम्[2] । विलम्बं[2] मा कुरुतेत्यर्थः । ᵛदिवः ᵛगन्त द्युलोकाद्गच्छत । ᵛपृथिव्याः ᵛन गन्त भूलोकान्मा गच्छत । ᵛवः युष्मान् ᵛक्व ᵛरण्यन्ति । देवयजनरूपायाः पृथिव्या अन्यत्र कुत्र शब्दयन्ति । यजमानाः स्तुवन्ति । तत्र दृष्टान्तः । ᵛगावो ᵛन । यथा गावो रणन्ति शब्दयन्ति तद्वत् ॥ क्व । किंशब्दात् सप्तम्यन्तात् ‘ किमोऽत् ’ (पा. सू. ५. ३. १२) इति अत्प्रत्ययः । ‘ क्वाति ’ ( पा. सू. ७. २. १०५ ) इति किमः क्वादेशः । ‘ तित्स्वरितः ’ इति स्वरितत्वम् । अर्थम् । ‘ ऋ गतौ ’ । ‘ उषिकुषिगार्तिभ्यस्थन् ’ ( उ. सू. २. १६१ ) इति भावे थन् । नित्त्वादाद्युदात्तत्वम् । गन्त । गमेर्लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । थादेशस्य तस्य ‘ तप्तनप्तनथनाश्च ’ इति तबादेशः । अत एव ङित्त्वाभावात् ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपो न भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घत्वम् । दिवः । ‘ ऊडिदम्° ’ इति विभक्तेरुदात्तत्वम् । पृथिव्याः । ‘ उदात्तयणो हल्पूर्वात् ’ इति विभक्तेरुदात्तत्वम् । रण्यन्ति । रणतिः शब्दार्थः । व्यत्ययेन श्यन् ॥

क्व॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सु॒वि॒ता । क्वो॒३॒॑ विश्वा॑नि॒ सौभ॑गा ॥ ३ ॥

क्व॑ । वः॒ । सु॒म्ना । नव्यां॑सि । मरु॑तः । क्व॑ । सु॒वि॒ता । क्वो॒ ३॒ इति॑ । विश्वा॑नि । सौभ॑गा ॥ ३ ॥

हे ᵛमरुतः ᵛवः युष्माकं संबन्धीनि ᵛनव्यांसि नवतराणि ᵛसुम्ना प्रजापशुरूपाणि धनानि ‘ प्रजा वै पशवः सुम्नम् ’ ( तै. सं. ५. ४. ६. ६ ) इति श्रुत्यन्तरात् । ᵛक्व कुत्र वर्तन्ते । तथा ᵛसुविता शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि ᵛक्व कुत्र वर्तन्ते । ᵛविश्वानि सर्वाणि ᵛसौभगा सौभाग्यरूपाणि गजाश्वादीनि ᵛक्वो कुत्र वा वर्तन्ते । भवदीयैः सुम्नादिभिः सर्वैः सहागन्तव्यमित्यर्थः ॥ सुम्ना । ‘ शेश्छन्दसि बहुलम् ’ इति शेर्लोपः । नव्यांसि । नवशब्दात् ईयसुनि ईकारलोपश्छान्दसः । सुविता । सुष्ठु इतानि सुवितानि । ‘ तन्वादीनां छन्दसि बहुलमुपसंख्यानम् ’ ( पा. सू. ६. ४. ७७. १ ) इति उवङादेशः । सौभगा । ‘ सुभगान्मन्त्रे ’ ( पा. सू. ५. १. १२९ ग. ) इति तस्य भावः इत्यर्थे अञ् । पूर्ववत् शेर्लोपः ॥

यद्यू॒यं पृ॑श्निमातरो॒ मर्ता॑सः॒ स्यात॑न । स्तो॒ता वो॑ अ॒मृतः॑ स्यात् ॥ ४ ॥

यत् । यू॒यम् । पृ॒श्नि॒ऽमा॒त॒रः॒ । मर्ता॑सः । स्यात॑न । स्तो॒ता । वः॒ । अ॒मृतः॑ । स्या॒त् ॥ ४ ॥

हे पृश्निनामकधेनुपुत्राः[3] मरुतः ᵛयूयं यद्यपि ᵛमर्तासः मनुष्याः ᵛस्यातन भवेत तथापि ᵛवः युष्माकं ᵛस्तोता यजमानः ᵛअमृतः ᵛस्यात् देवो भवेत् ॥ पृश्निमातरः । पृश्निर्माता येषां ते । समासान्तविधेरनित्यत्वात् ‘ नद्यृतश्च ’ ( पा. सू. ५. ४. १५३ ) इति कबभावः । मर्तासः । ‘ असि-

१. ढ—प्रयोजनम् । २. ढ—गमनविलम्बम् । ३. ढ—पृश्निमातरः पृश्निनामकधेनुपुत्राः ।

हसि° ' इत्यादिना म्रियतेः तन्प्रत्ययः । 'आज्जसेरसुक्' । स्यातन । अस्तेर्लिङि तस्य 'तप्तनप्तनथनाश्च' इति तनादेशः । यासुट उदात्तत्वम् । अमृतः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् ॥

मा वो॑ मृ॒गो न यव॑से जरि॒ता भू॒दजो॑ष्यः । प॒था य॒मस्य॑ गा॒दुप॑ ॥ ५ ॥

मा । व॒ः । मृ॒गः । न । यव॑से । ज॒रि॒ता । भू॒त् । अजो॑ष्यः । प॒था । य॒मस्य॑ । गा॒त् । उप॑ ॥ ५ ॥

हे मरुतः ᵛवः युष्माकं ᵛजरिता स्तोता ᵛअजोष्यः असेव्यः ᵛमा ᵛभूत् । तत्र दृष्टान्तः । ᵛमृगो ᵛन ᵛयवसे । यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति किंतु सर्वदा तृणं भक्षयति तद्वत् । किं च स स्तोता ᵛयमस्य ᵛपथा यमलोकसंबन्धिमार्गेण मा ᵛउप ᵛगात् मा गच्छतु । तस्य मरणं मा भूदित्यर्थः ॥ जरिता । 'जॄष् वयोहानौ' । स्तुतिकर्मेति ( निरु. १०. ८ ) यास्कः । तृचि इडागमः । चित्त्वादन्तोदात्तत्वम् । भूत् । लुङि 'गातिस्था°' इति सिचो लुक् । 'न माङ्योगे' इति अडभावः । अजोष्यः । 'जुषी प्रीतिसेवनयोः' । 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पथा । तृतीयैकवचने 'भस्य टेर्लोपः' ( पा. सू. ७. १. ८८ ) इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । गात् । एतेर्लुङि 'इणो गा लुङि' ( पा. सू. २. ४. ४५ ) इति गादेशः । 'गातिस्था°' इति सिचो लुक् । पूर्ववत् अडभावः ॥　　॥ १५ ॥

मो षु ण॒ः परा॑परा॒ निर्ऋ॑तिर्दु॒र्हणा॑ वधीत् । प॒दीष्ट॒ तृष्ण॑या स॒ह ॥ ६ ॥

मो इति॑ । सु । न॒ः । परा॑ऽपरा । निःऽऋ॑तिः । दु॒ःऽहना॑ । व॒धी॒त् । प॒दी॒ष्ट । तृष्ण॑या । स॒ह ॥ ६ ॥

हे मरुतः ᵛनः अस्मान् ᵛनिर्ऋतिः रक्षोजातिदेवता[1] ᵛमो ᵛषु ᵛवधीत् सर्वथा वधं मा कार्षीत् । कीदृशी । ᵛपरापरा उत्कृष्टादप्युत्कृष्टा अतिबलेत्यर्थः । अत एव ᵛदुर्हणा केनापि हन्तुं दुःशक्या[2] । सा निर्ऋतिः ᵛतृष्णया ᵛसह ᵛपदीष्ट पततु । अस्मदीया तृष्णा बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ मो षु णः । 'सुञः' इति षत्वम् । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । दुर्हणा । 'ईषद्दुःसुषु°' इत्यादिना हन्तेः कर्मणि खल् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । वधीत् । लुङि हन्तेः 'लुङि च' ( पा.सू. २. ४. ४३ ) इति वधादेशः । सिचि इडागमः । वधादेशस्य अदन्तत्वात् 'एकाच उपदेशे°' इति इट्प्रतिषेधो न भवति । अतो लोपे सति तस्य स्थानिवत्त्वात् 'अतो हलादेः°' ( पा. सू. ७. २. ७ ) इति वृद्ध्यभावः । 'इट ईटि' ( पा. सू. ८. २. २८ ) इति सिचो लोपः । पदीष्ट । 'पद गतौ' । आशीर्लिङि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सलोपः । आर्धधातुकत्वात् सुडागमः । प्रत्ययस्वरः । तृष्णया । 'ञितृषा पिपासायाम्' । 'तृषिशुषिरसिभ्यः कित्' ( उ. सू. ३. २९२ ) इति नप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ॥

स॒त्यं त्वे॒षा अम॑वन्तो॒ धन्व॑ञ्चि॒दा रु॒द्रिया॑सः । मिहं॑ कृण्वन्त्यवा॒ताम् ॥ ७ ॥

स॒त्यम् । त्वे॒षाः । अम॑ऽवन्तः । धन्व॑न् । चि॒त् । आ । रु॒द्रिया॑सः । मिह॑म् । कृ॒ण्व॒न्ति॒ । अ॒वा॒ताम् ॥ ७ ॥

---

१. ढ–रक्षः । २. ढ–दुःशका ।

ᵛधन्वञ्चित् मरुदेशेऽपि ᵛरुद्रियासः रुद्रेण पालितत्वात् तदीया मरुतः ᵛआ सर्वतः ᵛअवातां वायुरहितां ᵛमिहं वृष्टिं ᵛकृण्वन्ति कुर्वन्ति तदेतत् ᵛसत्यम् । कीदृशा रुद्रियासः। ᵛत्वेषाः दीप्ताः ᵛअमवन्तः बलवन्तः । मरुतां रुद्रपालनमाख्यानेषु प्रसिद्धम् ॥ धन्वन् । 'धिवि रवि धवि गत्यर्थाः'। इदित्त्वात् नुम् । 'कनिन्युवृषितक्षि°' इत्यादिना कनिन् । नित्त्वादाद्युदात्तत्वम् । 'सुपां सुलुक्°' इति सप्तम्या लुक् । रुद्रियासः। रुद्रस्येमे रुद्रियाः। 'तस्येदम्' इत्यर्थे घः। 'आज्जसेरसुक्'। मिहम् । 'मिह सेचने'। 'क्विप् च' इति क्विप् । कृण्वन्ति । 'कृवि हिंसाकरणयोश्च'। 'धिन्विकृण्व्योर च' इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारादेशः । अतो लोपेन लुप्तस्य स्थानिवद्भावात् लघूपधगुणाभावः ॥

कारीर्यां 'मारुतं सप्तकपालम्' इत्यस्य हविषः 'वाश्रेव विद्युत्' इत्येषानुवाक्या । 'वर्षकामेष्टिः' इति खण्डे सूत्रितं–'वाश्रेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिभाय' ( आश्व. श्रौ. २. १३ ) इति ॥

## वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ॥ ८ ॥

वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति ।

यत् । एषाम् । वृष्टिः । असर्जि ॥ ८ ॥

ᵛवाश्रेव शब्दयुक्ता प्रस्नुतस्तनवती धेनुरिव ᵛविद्युत् मेघस्था दृश्यमाना सती ᵛमिमाति शब्दं करोति । विद्युद्वेलायां हि मेघगर्जनं प्रसिद्धम् । ᵛमाता धेनुः ᵛवत्सं ᵛन वत्समिव ᵛसिषक्ति इयं विद्युत् मरुतः सेवते । सिषक्तिः सेवनार्थः । 'सिषक्तु सचत इति सेवमानस्य' ( निरु. ३. २१ ) इति यास्केनोक्तत्वात् । ᵛयत् यस्मात् कारणात् ᵛएषां मरुतां संबन्धिनी ᵛवृष्टिरसर्जि गर्जनसहिते विद्युत्काले वृष्टा[1] भवति, तस्मात् विद्युतो मरुत्सेवनमुपपन्नम् ॥ वाश्रेव । 'वाशृ शब्दे'। 'स्फायितञ्चि°' इत्यादिना रक् । मिमाति । 'माङ् माने शब्दे च'। व्यत्ययेन परस्मैपदम् । जुहोत्यादित्वात् श्लुः । 'भृञामित्' ( पा. सू. ७. ४. ७६ ) इति अभ्यासस्य इत्वम् । सिषक्ति । 'षच समवाये'। लटि 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । असर्जि । 'सृज विसर्गे'। कर्मणि लुङ् । 'चिण् भावकर्मणोः' ( पा. सू. ३. १. ६६ ) इति चिण् । 'चिणो लुक्' ( पा. सू. ६. ४. १०४ ) इति तशब्दस्य लुक् । गुणः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः ॥

## दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत्पृथिवीं व्युन्दन्ति ॥ ९ ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥९॥

ते मरुतः ᵛउदवाहेन उदकधारिणा ᵛपर्जन्येन मेघेन सूर्यमाच्छाद्य ᵛदिवा ᵛचित् अहन्यपि ᵛतमः ᵛकृण्वन्ति अन्धकारं कुर्वन्ति । ᵛयत् यदा ᵛपृथिवीं भूमिं ᵛव्युन्दन्ति विशेषेण क्लेदयन्ति तदानीमतिवृष्टिकाले तमः कुर्वन्तीति पूर्वत्रान्वयः॥ उदवाहेन। उदकानि वहतीति उदवाहः । 'कर्मण्यण्' । मेघविशेषस्येयं संज्ञा । 'उदकस्योदः संज्ञायाम्' ( पा. सू. ६. ३. ५७ ) इति उदकशब्दस्य उदभावः ।

---

१. य–दृष्टा ।

कृदुत्तरपदप्रकृतिस्वरत्वम् । व्युन्दन्ति । ' उन्दी क्लेदने ' । रुधादित्वात् श्नम् । ' श्नान्नलोपः ' ( पा. सू. ६. ४. २३ ) इति नलोपः । यद्वृत्तयोगादनिघातः ॥

अर्ध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् । अरेजन्त प्र मानुषाः ॥ १० ॥

अर्ध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषाः ॥१०॥

<sup>v</sup>मरुतां संबन्धिनः <sup>v</sup>स्वनात् <sup>v</sup>अध ध्वनेर्गर्जनरूपादनन्तरं <sup>v</sup>पार्थिवं पृथिवीसंबन्धि <sup>v</sup>विश्वं <sup>v</sup>सद्म सर्वं गृहम् <sup>v</sup>आ समन्तात् अरेजत इति शेषः । तथा <sup>v</sup>मानुषाः गृहवर्तिनो मनुष्या अपि <sup>v</sup>प्र <sup>v</sup>अरेजन्त प्रकर्षेण कम्पितवन्तः ॥ अध । छान्दसं धत्वम् । सद्म । ' षद्लृ विशरणगत्यवसादनेषु ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । पार्थिवम् । पृथिव्याः संबन्धि । ' पृथिव्या ञाञौ ' ( पा. सू. ४. १. ८५. २) इति प्राग्दीव्यतीयः अञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । अरेजन्त । ' रेजृ कम्पने ' ॥ ॥१६॥

मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ॥ ११ ॥

मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥११॥

हे <sup>v</sup>मरुतः यूयं <sup>v</sup>वीळुपाणिभिः दृढहस्तैः सहिताः सन्तः <sup>v</sup>रोधस्वतीरनु कूलयुक्ता नदीरनुलक्ष्य <sup>v</sup>अखिद्रयामभिः अच्छिन्नगमनैः <sup>v</sup>यातें गच्छतैव ॥ मरुतः । आमन्त्रिताद्युदात्तत्वम् । वीळुपाणिभिः । वीळु इति बलनाम, ' वीळु च्यौत्नम् ' ( नि. २. ९. १४ ) इति तन्नामसु पाठात् । तेन च तद्वान् लक्ष्यते । वीळवश्च ते पाणयश्च । ' समासस्य ' इत्यन्तोदात्तत्वम् । रोधस्वतीः । ' रुधिर् आवरणे ' । रुणद्धि स्रोतः इति रोधः कूलम् । ' रोधः कूलं निरुणद्धि स्रोतः ' ( निरु. ६. १ ) इत्युक्तत्वात् । असुनो नित्त्वादाद्युदात्तत्वम् । तद्युक्ता रोधस्वत्यः । ' मादुपधायाः॰ ' इति मतुपो वत्वम् । ' उगितश्च ' इति ङीप् । मतुब्ङीपोः पित्त्वादनुदात्तत्वे असुनः स्वर एव शिष्यते । यात । ' या प्रापणे ' । अदादित्वात् शपो लुक् । ईम् । ' चादयोऽनुदात्ताः ' इत्यनुदात्तत्वम् । गुणे ' एकादेश उदात्तेनोदात्तः ' इत्युदात्तत्वम् । अखिद्रयामभिः । ' खिद दैन्ये ' । ' स्फायितञ्चि॰ ' इत्यादिना रक् । खिद्रं यान्तीति खिद्रयामानः । न खिद्रयामानः अखिद्रयामानः । तैः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ॥१२॥

स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् । सुऽसंस्कृताः । अभीशवः ॥१२॥

हे मरुतः <sup>v</sup>एषां <sup>v</sup>वः युष्माकं <sup>v</sup>नेमयः रथचक्रवलयाः <sup>v</sup>स्थिराः <sup>v</sup>सन्तु । तथा <sup>v</sup>रथा <sup>v</sup>अश्वासः अश्वाश्च स्थिराः सन्तु । <sup>v</sup>अभीशवः अङ्गुलयः, ' अभीशवः दीधितयः ' ( नि. २. ५. २० ) इति तन्नामसु पाठात् । <sup>v</sup>सुसंस्कृताः अश्वबन्धनरज्जुपरिग्रहणे[1] स्वलंकृताः सावधानाः सन्तु ॥ सुसंस्कृताः । संपूर्वात् करोतेः कर्मणि क्तः । ' संपर्युपेभ्यः॰ ' ( पा. सू. ६. १. १३७ ) इति सुट् । पुनः सुशब्देन प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अभीशवः । अभिपूर्वात् अश्नोतेः ' कृवापाजि॰ '

---

१. च-छ-ण-त-न-फ-य-ल-श-स—॰परिग्रहेण ।

इत्यादिना उण्। वर्णव्यत्ययेन आकारस्य इकारः। उक्तं च–'वर्णागमो वर्णविपर्ययश्च' (का. ६.३.१०९) इति। 'अभीशवोऽभ्यश्नुवते कर्माणि' (निरु. ३. ९) इति निरुक्तम्॥

अच्छा॑ वद॒ तना॑ गि॒रा ज॒रायै॒ ब्रह्म॑ण॒स्पति॑म्। अ॒ग्निं मि॒त्रं न द॑र्श॒तम्॥१३॥

अच्छ॑। व॒द॒। तना॑। गि॒रा। ज॒रायै॑। ब्रह्म॑णः। पति॑म्। अ॒ग्निम्। मि॒त्रम्। न। द॒र्श॒तम्॥१३॥

हे ऋत्विक्समूह ᵛतना तनया देवतास्वरूपं प्रकाशयन्त्या ᵛगिरा वाचा ᵛब्रह्मणस्पतिं मन्त्रस्य हविर्लक्षणस्यान्नस्य वा पालकं मरुद्गणम् ᵛअग्निं ᵛदर्शतं दर्शनीयं ᵛमित्रं ᵛन मित्रमपि ᵛजरायै स्तोतुम् ᵛअच्छ आभिमुख्येन ᵛवद ब्रूहि॥ अच्छ। 'निपातस्य च' इति संहितायां दीर्घत्वम्[1]। वद। 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः। तना। 'तनु विस्तारे'। तनोति देवतामाहात्म्यं विस्तारयतीति तना। पचाद्यच्। वृषादित्वादाद्युदात्तत्वम्। तृतीयाया डादेशः। गिरा। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। ब्रह्मणः। 'षष्ठ्याः पतिपुत्र°' इति संहितायां सत्वम्॥

मि॒मी॒हि श्लोक॑मा॒स्ये॑ प॒र्जन्य॑इव तत॒नः। गाय॑ गाय॒त्रमु॒क्थ्य॑म्॥ १४॥

मि॒मी॒हि। श्लोक॑म्। आ॒स्ये॑। प॒र्जन्यः॑ऽइव। त॒त॒नः। गाय॑। गा॒य॒त्रम्। उ॒क्थ्य॑म्॥ १४॥

हे ऋत्विक्समूह ᵛआस्ये स्वकीयमुखे ᵛश्लोकं स्तोत्रं ᵛमिमीहि निर्मितं कुरु। तं च श्लोकं ᵛततनः विस्तारय। तत्र दृष्टान्तः। ᵛपर्जन्यइव। यथा मेघो वृष्टिं विस्तारयति तद्वत्। ᵛउक्थ्यं शस्त्रयोग्यं ᵛगायत्रं गायत्रीच्छन्दस्कं सूक्तं ᵛगाय पठ॥ मिमीहि। 'माङ् माने'। जौहोत्यादिकः। व्यत्ययेन परस्मैपदम्। 'भृञामित्' इति अभ्यासस्य इत्वम्। आस्ये। 'असु क्षेपणे'। अस्यते क्षिप्यतेऽस्मिन्निति आस्यम्। 'कृत्यल्युटो बहुलम्' (पा. सू. ३. ३. ११३) इत्यधिकरणे ण्यत्। 'तित्स्वरितम्' इति स्वरितत्वम्। ततनः। 'तनु विस्तारे'। लेटि सिपि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। 'लेटोऽडाटौ' इति अडागमः। 'इतश्च लोपः°' इति इकारलोपः। गायत्रम्। गायत्र्याः संबन्धि। 'तस्येदम्' इति अण्। यद्वा। गायतस्त्रायते इति गायत्रम्। 'आतोऽनुपसर्गे कः'॥

वन्द॑स्व॒ मारु॑तं ग॒णं त्वे॒षं प॑न॒स्युम॒र्किण॑म्। अ॒स्मे वृ॒द्धा अ॑सन्नि॒ह॥ १५॥

वन्द॑स्व। मारु॑तम्। ग॒णम्। त्वे॒षम्। प॒न॒स्युम्। अ॒र्किण॑म्। अ॒स्मे इति॑। वृ॒द्धाः। अ॒स॒न्। इ॒ह॥१५॥

हे ऋत्विक्संघ ᵛमारुतं मरुत्संबन्धिनं ᵛगणं समूहं ᵛवन्दस्व नमस्कुरु स्तुहि वा। कीदृशं गणम्। ᵛत्वेषं दीप्तं ᵛपनस्युं स्तुतियोग्यम् ᵛअर्किणम् अर्चनोपेतम्। ᵛअस्मे अस्माकम् ᵛइह अस्मिन् कर्मणि ᵛवृद्धा ᵛअसन् मरुतः प्रवृद्धा भवन्तु॥ वन्दस्व। 'वदि अभिवादनस्तुत्योः'। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। पनस्युम्। 'पन[2] च[2]' इति स्तुत्यर्थो धातुः। असुन्। पनः स्तोत्रमात्मन इच्छतीति पनस्युः। 'सुप आत्मनः क्यच्'। 'क्याच्छन्दसि' इति उप्रत्ययः। अर्किणम्। 'ऋच स्तुतौ'।

---

१. ढ–दीर्घः। २. ढ–पनतिः।

'पुंसि संज्ञायाम्°' इति घः। अर्कोऽस्यास्तीति अर्की। 'अत इनिठनौ'। असन्। 'बहुलं छन्दसि' इति शपो लुगभावः। 'इतश्च लोपः°' इति इकारलोपः। 'तिङ्ङतिङः' इति निघातः॥ ॥१७॥

'प्र यदित्था' इति दशर्चं चतुर्थं सूक्तम्। घोरपुत्रस्य कण्वस्यार्षं मरुद्देवताकम्। युजः सतोबृहत्यः। अयुजो बृहत्यः। 'प्र यद्दश प्रागाथं तु' इत्यनुक्रमणिका। गतो विनियोगः॥

प्र यदित्था परावतः शोचिर्न मानमस्यथ।
कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः॥ १॥

प्र। यत्। इत्था। पराऽवतः। शोचिः। न। मानम्। अस्यथ।
कस्य। क्रत्वा। मरुतः। कस्य। वर्पसा। कम्। याथ। कम्। ह। धूतयः॥ १॥

हे धूतयः स्थावरादीनां कम्पनकारिणः मरुतः यत् यदा मानं मननीयं युष्मद्बलं परावतः दूरात्। 'आरे परावतः' (नि. ३. २६. ५) इति दूरनामसु पाठात्। इत्था अस्मादन्तरिक्षात् प्र अस्यथ भूमौ प्रक्षिपथ। तत्र दृष्टान्तः। शोचिर्न तेज इव। यथा सूर्यस्य तेजोऽन्तरिक्षात् भूमौ प्रक्षिप्यते तद्वत्। तदानीं यूयं कस्य यजमानस्य क्रत्वा क्रतुना संगच्छध्वे इति शेषः। तथा कस्य यजमानस्य वर्पसा स्तोत्रेण संगच्छध्वे। कं यजमानमुद्दिश्य याथ देवयजनदेशे गच्छथ। कं ह कं खलु यजमानमनुगृह्णीथेति शेषः॥ इत्था। 'था हेतौ च च्छन्दसि' (पा. सू. ५. ३. २६) इति इदंशब्दात् प्रकारवचने थाप्रत्ययः। यदि तत्र इदंशब्दस्य नानुवृत्तिः तर्हि थमुप्रत्ययान्तात् इदंशब्दादुत्तरस्या विभक्तेर्व्यत्ययेन 'सुपां सुलुक्°' इति डादेशः। प्रथमपक्षे प्रत्ययस्वरः। द्वितीयपक्षे तु उदात्तनिवृत्तिस्वरः। अस्यथ। 'असु क्षेपणे'। अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम्। यद्वृत्तयोगादनिघातः। क्रत्वा। 'जसादिषु च्छन्दसि वावचनम्°' (पा. सू. ७. ३. १०९. १) इति नाभावस्य विकल्पितत्वादभावः। वर्पसा। 'वृङ् संभक्तौ'। 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुक्च' (उ. सू. ४. ६४०) इति असुन्; तत्संनियोगेन पुगागमश्च। नित्त्वादाद्युदात्तत्वम्। अत्र रूपाभिधायिना वर्पस्शब्देन देवतास्वरूपप्रकाशकं स्तोत्रं लक्ष्यते क्रतुना साहचर्यात्॥

स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे।
युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः॥ २॥

स्थिरा। वः। सन्तु। आयुधा। पराऽनुदे। वीळु। उत। प्रतिऽस्कभे।
युष्माकम्। अस्तु। तविषी। पनीयसी। मा। मर्त्यस्य। मायिनः॥ २॥

हे मरुतः वः आयुधा युष्माकमायुधानि पराणुदे शत्रूणामपनोदनाय स्थिरा सन्तु स्थिराणि भवन्तु। उत अपि च प्रतिष्कभे शत्रूणां प्रतिबन्धाय वीळु सन्तु दृढानि सन्तु। युष्माकं तविषी बलं पनीयसी अतिशयेन स्तोतव्यं भवतु। मायिनः अस्मासु छद्मचारिणः मर्त्यस्य मनुष्यस्य शत्रोः

ᵛमा बलं मा भवतु ॥ स्थिरा आयुधा । उभयत्र ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । पराणुदे । ' णुद प्रेरणे ' । संपदादिलक्षणः क्विप् । ' उपसर्गादसमासेऽपि° ' ( पा. सू. ८. ४. १४ ) इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । वीळु । ' सुपां सुलुक्° ' इति विभक्तेर्लुक् । ईषाअक्षादित्वात्प्रकृतिभावः (पा. सू. ६. १. १२७. २ ) । प्रतिष्कभे । स्कम्भुः सौत्रो धातुः । संपदादिलक्षणो भावे क्विप् । ' अनिदिताम्° ' इति नलोपः । पनीयसी । पनतिः स्तुत्यर्थः । अस्मात् औणादिकः कर्मणि असुन् । तत ईयसुनि ' टेः ' इति टिलोपः । ' उगितश्च ' इति ङीप् । ईयसुनो नित्त्वादाद्युदात्तत्वम् । मायिनः । मायाशब्दस्य व्रीह्यादिषु पाठात् ' व्रीह्यादिभ्यश्च ' इति मत्वर्थीय इनिः ॥

परा॑ ह॒ यत्स्थि॒रं ह॒थ नरो॑ व॒र्तय॑था गु॒रु ।
वि या॑थन व॒निनः॑ पृथि॒व्या व्याशाः॒ पर्व॑तानाम् ॥ ३ ॥

परा॑ । ह॒ । यत् । स्थि॒रम् । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु ।
वि । या॒थ॒न । व॒निनः॑ । पृ॒थि॒व्याः । वि । आशाः॑ । पर्व॑तानाम् ॥ ३ ॥

हे ᵛनरः नेतारो मरुतः ᵛयत् यदा ᵛस्थिरं वस्तु ᵛपरा ᵛहथ वृक्षादिकं पराहतं भग्नं कुरुथ । ᵛगुरु पाषाणादिकं गुरुत्वोपेतं ᵛवर्तयथ प्रेरयथ । तदानीं ᵛपृथिव्याः संबन्धिनः ᵛवनिनः वनवतो वृक्षान् ᵛवि ᵛयाथन वियुज्य मध्ये गच्छथ । अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वादितरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति । तथा ᵛपर्वतानाम् ᵛआशाः पर्वतपार्श्वदिशः ᵛवि याथन वियुज्य गच्छथ ॥ हथ । ' हन हिंसागत्योः ' । ' अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । यद्वृत्तयोगादनिघातः । नरः । पादादित्वात् आमन्त्रितनिघाताभावः । वर्तयथ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिचः स्वर एव शिष्यते । यच्छब्दानुषङ्गात् निघाताभावः । याथन । ' तप्तनप्तनथनाश्च ' इति थनादेशः ॥

न॒हि व॒ः शत्रु॑र्विवि॒दे अधि॒ द्यवि॒ न भूम्यां॑ रिशादसः ।
यु॒ष्माक॑मस्तु॒ तवि॑षी॒ तना॑ यु॒जा रुद्रा॑सो॒ नू चि॑दा॒धृषे॑ ॥ ४ ॥

न॒हि । व॒ः । शत्रुः॑ । वि॒वि॒दे । अधि॑ । द्यवि॑ । न । भूम्या॑म् । रि॒शा॒द॒सः॒ ।
यु॒ष्माक॑म् । अ॒स्तु॒ । तवि॑षी । तना॑ । यु॒जा । रुद्रा॑सः । नु । चि॒त् । आ॒ऽधृषे॑ ॥ ४ ॥

हे ᵛरिशादसः शत्रुहिंसका मरुतः ᵛअधि ᵛद्यवि द्युलोकस्योपरि ᵛवः युष्माकं ᵛशत्रुः ᵛनहि ᵛविविदे न च बभूव । तथा ᵛभूम्याम् अपि शत्रुः ᵛन बभूव । हे ᵛरुद्रासः रुद्रपुत्रा मरुतः ᵛयुष्माकम् एकोनपञ्चाशत्संख्यानां भवतां ᵛयुजा योगेन परस्परैकमत्येन ᵛआधृषे वैरिणां सर्वतो धर्षणाय ᵛतविषी बलं ᵛनू ᵛचित् क्षिप्रमेव ᵛतना ᵛअस्तु विस्तृता भवतु ॥ विविदे । ' विद सत्तायाम् ' । लिटि प्रत्ययस्वरः । द्यवि नहि विविदे भूम्यां च न विविदे इति चशब्दार्थप्रतीतेः ' चादिलोपे विभाषा ' इति प्रथमायाः तिङ्विभक्तेर्निघातप्रतिषेधः । प्राथम्यं च अनुपक्तक्रियापेक्षया । रिशादसः । ' रिश हिंसायाम् ' । रिशन्ति हिंसन्तीति रिशाः । इगुपधलक्षणः कः । तान् अदन्तीति रिशादसः । असुन् । आमन्त्रित-

निघातः । युजा । ‘ युजिर् योगे ’ । ‘ ऋत्विक्° ’ इत्यादिना क्विन् । ‘ सावेकाचः° ’ इति विभक्ते-रुदात्तत्वम् । रुद्रासः । रुद्रशब्देन तत्संबन्धिनो मरुतो लक्ष्यन्ते । ‘ आज्जसेरसुक् ’ । नू चित् । ‘ ऋचि तुनुघ° ’ इत्यादिना दीर्घः । आधृषे । ‘ ञिधृषा प्रागल्भ्ये ’ । संपदादिलक्षणो भावे क्विप् । कृदुत्तरपद-प्रकृतिस्वरत्वम् ॥

प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदाइव देवासः सर्वया विशा ॥ ५ ॥

प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् ।
प्रो इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ ५ ॥

ᵛपर्वतान् मेरुहिमवदादीन् ᵛप्र ᵛवेपयन्ति मरुतः प्रकर्षेण कम्पयन्ति । ᵛवनस्पतीन् वटाश्वत्थादीन्[1] ᵛवि ᵛविञ्चन्ति परस्परवियुक्तान् कुर्वन्ति । हे ᵛमरुतः ᵛदेवासः देवाः ᵛसर्वया ᵛविशा प्रजया सहिता यूयं ᵛप्रो ᵛआरत प्रकर्षेणैव सर्वतो गच्छथ । तत्र दृष्टान्तः । ᵛदुर्मदाइव । यथा मदोन्मत्ताः स्वेच्छया सर्वतः क्रीडन्ति तद्वत् ॥ वेपयन्ति । ‘ टुवेपृ कम्पने ’ । वेपमानान् प्रयुङ्क्ते । हेतुमण्णिच् । विञ्चन्ति । ‘ विचिर् पृथग्भावे ’ । रुधादित्वात् श्नम् । ‘ श्नसोरल्लोपः ’ इति अकारलोपः । वनस्पतीन् । वनानां पतयो वनस्पतयः । पारस्करादित्वात् सुट् । वनपतिशब्दावाद्युदात्तौ । ‘ उभे वनस्पत्यादिषु युगपत् ’ इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । आरत । ‘ ऋ गतौ ’ । लङि मध्यमबहुवचने ‘ बहुलं छन्दसि ’ इति शपो लुगभावः । यद्वा लुङ् । ‘ सर्तिशास्त्यर्तिभ्यश्च ’ ( पा. सू. ३. १. ५६ ) इति अङ् । ‘ आडजादीनाम् ’ इति आडागमः । ‘ आटश्च ’ ( पा. सू. ६. १. ९० ) इति वृद्धिः । देवासः । आमन्त्रिताद्युदात्तत्वम् । सर्वया । ‘ सर्वस्य सुपि ’ ( पा. सू. ६. १. १९१ ) इत्याद्युदात्तत्वम् । विशा । ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम् ॥ ॥ १८ ॥

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६ ॥

उपो इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः ।
आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ॥ ६ ॥

हे मरुतः ᵛरथेषु भवदीयेषु ᵛपृषतीः बिन्दुयुक्ता मृगीः ᵛउपो सामीप्येनैव ᵛअयुग्ध्वं योजितवन्तः । ᵛप्रष्टिः एतत्संज्ञको वाहनत्रयमध्यवर्ती युगविशेषः[2] ᵛरोहितः मृगावान्तरजातिर्लोहितवर्णः ᵛवहति रथं नयति । ᵛवः युष्माकं ᵛयामाय गमनाय ᵛपृथिवी ᵛचित् अन्तरिक्षमपि ᵛआ ᵛअश्रोत् आभिमुख्येन अशृणोत् अनुजानातीत्यर्थः। पृथिवीत्यन्तरिक्षनाम, ‘पृथिवी भूः स्वयंभु’ ( नि.१.३.९ ) इति तन्नामसु पाठात् । ᵛमानुषाः भूलोकवर्तिनः पुरुषाः ᵛअबीभयन्त स्वयं भीताः सन्तोऽन्येषामपि भीतिमुत्पा-

---

१. ढ–वृक्षान् । २. ढ–मृगविशेषः ।

दितवन्तः॥ उपो[1] इति निपातद्वयसमुदायात्मकमन्यन्निपातान्तरम्। 'ओत्' (पा. सू. १. १. १५) इति प्रगृह्यत्वम्। अयुग्ध्वम्। लुङि 'झलो झलि' (पा. सू. ८. २. २६) इति सकारस्य लोपः। 'चोः कुः' इति कुत्वम्। रोहितः। 'रुहे रश्च लो वा' (उ. सू. ३. ३७४) इति इतन्प्रत्ययान्तः। निस्त्वादाद्युदात्तः। यामाय। यमेर्भावे घञ्। 'कर्षात्वतः०' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम्। अश्रोत्। 'श्रु श्रवणे'। 'बहुलं छन्दसि' इति विकरणस्य लुक्। अबीभयन्त। 'ञिभी भये'। अस्मात् ण्यन्तात् लुङि 'भीस्म्योर्हेतुभये' (पा. सू. १. ३. ६८) इत्यात्मनेपदम्। 'बिभेतेर्हेतुभये' (पा. सू. ६. १. ५६) इति आत्वस्य विकल्पितत्वात् पक्षे 'भियो हेतुभये षुक्' (पा. सू. ७. ३. ४०) इति षुक् प्राप्नोति। तन्न क्रियते, आगमानुशासनस्यानित्यत्वात्। णौ चङ्युपधाह्रस्वत्वादि (पा. सू. ७. ४. १)॥

आ वो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे।
गन्ता॑ नू॒नं नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥ ७ ॥

आ। वः॒। म॒क्षु। तना॑य। कम्। रु॒द्राः॒। अवः॑। वृ॒णी॒म॒हे॒।
गन्त॑। नू॒नम्। नः॒। अव॑सा। यथा॑। पु॒रा। इ॒त्था। कण्वा॑य। बि॒भ्यु॒षे॑ ॥ ७ ॥

हे ^v^रुद्राः रुद्रपुत्रा मरुतः ^v^तनाय ^v^कं अस्मदीयपुत्रार्थं ^v^मक्षु शीघ्रं ^v^वः युष्मदीयम् ^v^अवः रक्षणम् ^v^आ ^v^वृणीमहे सर्वतः प्रार्थयामहे। मक्षु इति क्षिप्रनाम, 'नु मक्षु' (नि. २. १५. २) इति तन्नामसु पठितत्वात्। ^v^पुरा पूर्वस्मिन् काले कर्मान्तरेषु ^v^नः ^v^अवसा अस्मदीयरक्षणेन निमित्तेन यूयं ^v^यथा[2] प्राप्तवन्तः ^v^इत्था अनेन प्रकारेण ^v^बिभ्युषे भीतियुक्ताय ^v^कण्वाय मेधाविने यजमानाय[3] तदनुग्रहार्थं ^v^नूनं क्षिप्रं ^v^गन्त प्राप्नुत॥ मक्षु। 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति दीर्घः। तनाय। तनोतीति तनः। पचाद्यच्। वृषादित्वादाद्युदात्तत्वम्। यद्वा। तनयशब्दे अय् इत्यस्य लोपश्छान्दसः। कम् इत्येतत् पादान्ते प्रयुज्यमानं पादपूरणं 'शिशिरं जीवनाय कम्' इतिवत्। उक्तं च– 'अथापि पादपूरणाः कमीमिद्विति' (निरु. १. ९) इति। रुद्राः। रोदयन्तीति रुद्राः। 'रोदेर्णिलुक्च' (उ. सू. २. १७९) इति रक्प्रत्ययः। आमन्त्रिताद्युदात्तत्वम्। पादादित्वात् निघाताभावः। गन्त। लोटि 'बहुलं छन्दसि' इति शपो लुक्। 'तप्तनप्॰' इत्यादिना तबादेशः। अतः पित्त्वात् अनुनासिकलोपाभावः। बिभ्युषे। बिभेतेर्लिटः क्वसुः। 'वस्वेकाजाद्घसाम्' इति नियमात् इडभावः। चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम्। परपूर्वत्वम्। 'शासिवसिघसीनां च' इति षत्वम्॥

यु॒ष्मेषि॑तो मरुतो॒ मर्त्ये॑षित॒ आ यो नो॒ अभ्व॒ ईष॑ते।
वि तं यु॑योत॒ शव॑सा॒ व्योज॑सा॒ वि यु॒ष्माका॑भिरू॒तिभिः॑ ॥ ८ ॥

यु॒ष्माऽइ॑षितः। म॒रु॒तः॒। मर्त्य॑ऽइषितः। आ। यः। नः॒। अभ्वः॑। ईष॑ते।
वि। तम्। यु॒यो॒त॒। शव॑सा। वि। ओज॑सा। वि। यु॒ष्माका॑भिः। ऊ॒तिऽभिः॑ ॥८॥

---

१. त-फ-ल–उपो उप उ। २. च-छ-ढ-त-ध-न-फ-श-स–'यथा' नास्ति। ३. ढ–यजमानाय वा।

हे ᵛमरुतः ᵛयः यः कश्चित् ᵛअभ्वः शत्रुः ᵛयुष्मेषितः युष्माभिः प्रेषितः ᵛमर्त्येषितः मारकैरन्यैर्वा प्रेषितः सन् ᵛनः अस्मान् प्रति ᵛआ ᵛईषते आभिमुख्येन प्राप्नोति, ᵛतं शत्रुं ᵛशवसा अन्नेन ᵛवि ᵛयुयोत विभक्तं कुरुत । तथा ᵛओजसा बलेन ᵛवि युयोत । ᵛयुष्माकाभिरूतिभिः युष्मत्संबन्धिभिः रक्षणैश्च ᵛवि युयोत ॥ युष्मेषितः । युष्माभिरिषितः । सुब्लुकि प्रत्ययलक्षणेन 'युष्मदस्मदोरनादेशे' इति आत्वम् । न च 'न लुमताङ्गस्य' इति प्रतिषेधः, 'इकोऽचि विभक्तौ' (पा. सू. ७. १. ७३) इत्यत्र अजूग्रहणेन तस्य पाक्षिकत्वोक्तेः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । मर्त्येषितः । पूर्ववत् । अभ्वः । आभवतीत्यभ्वः शत्रुः । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । ईषते । 'ईष गतिहिंसादर्शनेषु' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । युयोत । 'यु मिश्रणामिश्रणयोः' । लोण्मध्यमबहुवचने 'बहुलं छन्दसि' इति शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तबादेशः । पित्वाद्गुणः । युष्माकाभिः युष्मत्संबन्धिनीभिः । 'तस्मिन्नणि च युष्माकास्माकौ' (पा. सू. ४. ३. २) इति युष्मच्छब्दस्य युष्माकादेशः । ङीब्वृद्धी छान्दसत्वान्न क्रियेते । ऊतिभिः । अवतेः क्तिनि 'ज्वरत्वर°' इत्यादिना ऊठ् । 'ऊतियूति°' इत्यादिना क्तिन उदात्तत्वम् ॥

## असा॑मि॒ हि प्र॑यज्यवः॒ कण्वं॑ द॒द प्र॑चेतसः ।
## असा॑मिभिर्मरुत॒ आ न॑ ऊ॒तिभि॒र्गन्ता॑ वृ॒ष्टिं न वि॒द्युतः॑ ॥ ९ ॥

असा॑मि । हि । प्र॒ऽय॒ज्य॒वः॒ । कण्व॑म् । द॒द । प्र॒ऽचे॒त॒सः॒ ।

असा॑मिऽभिः । म॒रु॒तः॒ । आ । नः॒ । ऊ॒तिऽभिः॑ । गन्त॑ । वृ॒ष्टिम् । न । वि॒ऽद्युतः॑ ॥ ९ ॥

ᵛअसामि ᵛहि संपूर्णमेव यथा भवति तथा ᵛप्रयज्यवः प्रकर्षेण यष्टव्याः ᵛप्रचेतसः प्रकृष्टज्ञानयुक्ता हे ᵛमरुतः ᵛकण्वं मेधाविनं यजमानमेतन्नामकमृषिं वा ᵛदद धारयत । हि यस्मात् यूयं कण्वनामकमृषिं धारितवन्तस्तस्मात् कारणात् ᵛअसामिभिः ᵛऊतिभिः संपूर्णै रक्षणैः ᵛनः अस्मान् प्रति ᵛआ ᵛगन्त आगच्छत । तत्र दृष्टान्तः । ᵛवृष्टिं ᵛन ᵛविद्युतः । यथा विद्युतो वृष्टिं गच्छन्ति तद्वत् ॥ असामि । सामि अर्धं न सामि असामि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । प्रयज्यवः । प्रकर्षेण यष्टव्याः । 'यजिमनिशुन्धिदसिजनिभ्यो युः' (उ. सू. ३. ३००) इति कर्मणि युप्रत्ययः । आमन्त्रितनिघातः । दद । 'डुदाञ् दाने' । लोण्मध्यमबहुवचनस्य 'तिङां तिङो भवन्ति' (पा. म. ७. १. ३९) इति लङात्मनेपदप्रथमपुरुषबहुवचनादेशः । श्लौ द्विर्भावे सति 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'लोपस्त आत्मनेपदेषु' (पा. सू. ७. १. ४१) इति तलोपः । 'अतो गुणः' इति पररूपत्वम् । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वं न भवति, किंतु प्रत्ययस्वर एव । 'हि च' इति निघातप्रतिषेधः । प्रचेतसः । प्रकृष्टं चेतो येषाम् । आमन्त्रितनिघातः । गन्त । गमेर्लोण्मध्यमबहुवचनस्य तस्य तबादेशः । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः । पादादित्वात् निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । विद्युतः । विद्योतते इति विद्युत् । 'भ्राजभास°' (पा. सू. ३. २. १७७) इत्यादिना क्विप् ॥

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः ।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥ १० ॥

असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शवः ।
ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुम् । न । सृजत । द्विषम् ॥ १० ॥

हे सुदानवः शोभनदानोपेताः मरुतः असामि संपूर्णम् ओजः बलं बिभृथ धारयथ । हे धूतयः कम्पनकारिणो मरुतः असामि संपूर्णं शवः बलं परिमन्यवे कोपपरिवृताय ऋषिद्विषे ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थं द्विषं द्वेषकारिणं हन्तारं सृजत । तत्र दृष्टान्तः । इषुं न । यथा शत्रोरुपरि बाणं मुञ्चन्ति तद्वत् । अत्र निरुक्तम्–'असामि सामि प्रतिषिद्धं सामि स्यतेः । असाम्योजो बिभृथा सुदानवः । असुसमाप्तं बलं बिभृथ कल्याणदानाः' ( निरु. ६. २३ ) इति ॥ बिभृथ । 'डुभृञ् धारणपोषणयोः' । जुहोत्यादित्वात् श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । ऋषिद्विषे । ऋषीन् द्वेष्टीति ऋषिद्विट् । 'सत्सूद्विष°' इत्यादिना क्विप् । परिमन्यवे । मन्युना परिवृतः परिमन्युः । प्रादिसमासे 'परेरभितोभावि मण्डलम्' ( पा. सू. ६. २. १८२ ) इत्युत्तरपदान्तोदात्तत्वम् । इषुम् । 'इषु गतौ' । इष्यति गच्छतीति इषुः । 'इषेः किच्च' ( उ. सू. १. १३ ) इति उप्रत्ययः । 'धान्ये नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तत्वम् । सृजत । 'सृज विसर्गे' । विकरणस्य ङित्त्वात् गुणाभावः । द्विषम् । 'क्विप् च' इति क्विप् ॥ ॥ १९ ॥

'उत्तिष्ठ' इत्यष्टर्चं पञ्चमं सूक्तं कण्वस्य आर्षं बार्हतम् । युजः सतोबृहत्यः । अयुजो बृहत्यः । ब्रह्मणस्पतिदेवताकम् । अनुक्रम्यते च–'उत्तिष्ठाष्टौ ब्राह्मणस्पत्यम्' इति । सूक्तविनियोगो लैङ्गिकः । चतुर्विंशेऽहनि मरुत्वतीये प्राकृतात् ब्राह्मणस्पत्यात् प्रगाथात् पूर्वम् 'उत्तिष्ठ ब्रह्मणस्पते' इत्ययं प्रगाथः । 'मरुत्वतीये' इति खण्डे सूत्रितं–'प्रैतु ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यावावपते पूर्वौ नित्यात्' ( आश्व. श्रौ. ७. ३ ) इति । आद्या तु प्रवर्ग्येऽप्यभिष्टवे विनियुक्ता । 'उत्तिष्ठ ब्रह्मणस्पत इत्येतामुक्त्वावतिष्ठते' ( आश्व. श्रौ. ४. ७ ) इति सूत्रितत्वात् ॥

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १ ॥

उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे ।
उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥ १ ॥

हे ब्रह्मणस्पते एतन्नामक देव उत्तिष्ठ अस्मदनुग्रहाय त्वदीयनिवासादुत्थानं कुरु । देवयन्तः देवान् कामयमाना वयं त्वा त्वाम् ईमहे याचामहे । सुदानवः शोभनदानयुक्ताः मरुतः उप प्र यन्तु समीपे प्रकर्षेण गच्छन्तु । हे इन्द्र त्वं सचा ब्रह्मणस्पतिना सह प्राशूः सोमस्य प्राशको भव । यद्वा वृत्रस्य हिंसको भव ॥ उत्तिष्ठ । ऊर्ध्वकर्मत्वात् आत्मनेपदाभावः (पा. सू. १. ३. २४)। ब्रह्मणस्पते । 'सुबामन्त्रिते°' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । देवयन्तः । देवानात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वस्येव दीर्घ-

स्यापि निषेधः, 'अश्वाघस्यात्' इति पुनरात्वविधानसामर्थ्यात् । ईमहे इत्यादयो गताः । प्राशूः । 'शॄ हिंसायाम्' । प्रकर्षेण आ समन्तात् श्रृणाति हिनस्तीति प्राशूः । 'बहुलं छन्दसि' (पा. सू. ७. १. १०३) इति उत्वम् । 'वोरुपधाया दीर्घः°' । कृदुत्तरपदप्रकृतिस्वरत्वम् । भव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ॥

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।

सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥ २ ॥

त्वाम् । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते ।

सुऽवीर्यम् । मरुतः । आ । सुऽअश्व्यम् । दधीत । यः । वः । आऽचके ॥ २ ॥

हे ᵛसहसस्पुत्र बलस्य बहुपालक ब्रह्मणस्पते । 'पुत्रः पुरु त्रायते निपरणाद्वा' (निरु. २.११) इति निरुक्तम् । ᵛमर्त्यः मनुष्यः ᵛहिते शत्रुषु प्रक्षिप्ते ᵛधने निमित्तभूते सति ᵛत्वामित् त्वामेव ᵛउपब्रूते ᵛहि समीपं प्राप्य स्तौति खलु । तद्धनसंपादनाय प्रार्थयते इत्यर्थः । हे ᵛमरुतः ᵛयः धनार्थी मर्त्यः ᵛवः युष्मान् ब्रह्मणस्पतिसहितान् ᵛआचके स्तौति स मर्त्यः ᵛस्वश्व्यं शोभनाश्वयुक्तं ᵛसुवीर्यं शोभनवीर्ययुक्तं च धनं ᵛदधीत धारयेत् ॥ सहसस्पुत्र । ब्रह्मणस्पते इतिवत् 'षष्ठ्याः पतिपुत्र°' इति विसर्जनीयस्य सत्वम् । उपब्रूते । 'हि च' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । हिते । निष्ठायां 'दधातेर्हिः' इति हिरादेशः । सुवीर्यम् । शोभनं वीर्यं यस्येति बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । स्वश्व्यम् । अश्वानां समूहोऽश्वीयम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (पा. सू. ४.२.४८) इति समूहार्थे छप्रत्ययः । छस्य ईयादेशः । शोभनमश्वीयं यस्य तत् स्वश्व्यम् । ईकारलोपश्छान्दसः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । दधीत । सीयुटः सकारलोपे सति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । पादादित्वात् निघाताभावः । आचके । 'कै गै रै शब्दे' । 'आदेचः°' इति आत्वम् । लिटि द्विर्वचने अभ्यासस्य ह्रस्वचुत्वे । 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः ॥

चतुर्विंशेऽहनि मरुत्वतीये 'उत्तिष्ठ ब्रह्मणस्पते' इत्यस्मात्प्रगाथात्पूर्वं 'प्रैतु ब्रह्मणस्पतिः' इत्ययं प्रगाथो विनियुक्तः । सूत्रं तु 'उत्तिष्ठ ब्रह्मणस्पते' इत्यत्रैवोदाहृतम् । महावीरमादाय शालां प्रतिगच्छत्सु 'प्रैतु ब्रह्मणस्पतिः' इत्येतां पठन् होतानुगच्छेत् । सूत्रं च–'प्रैतु ब्रह्मणस्पतिरित्यनुव्रजेत्' (आश्व. श्रौ ४. ७) इति । एषैव अग्निषोमीयप्रणयनेऽपि विनियुक्ता । सूत्रितं च–'प्रैतु ब्रह्मणस्पतिर्होता देवो अमर्त्यः' (आश्व. श्रौ. ४. १०) इति ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।

अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥

प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता ।

अच्छ । वीरम् । नर्यम् । पङ्क्तिऽराधसम् । देवाः । यज्ञम् । नयन्तु । नः ॥ ३ ॥

ब्रह्मणस्पतिः देवः प्रैतु अस्मान् प्राप्नोतु । सूनृता देवी प्रियसत्यरूपा वाग्देवता प्र एतु अस्मान् प्राप्नोतु । देवाः ब्रह्मणस्पत्यादयो देवताः वीरं शत्रुं निःशेषेण दूरे प्रेरयन्तु । तं नर्यं मनुष्येभ्यो हितं पङ्क्तिराधसं ब्राह्मणोक्तहविष्पङ्क्त्यादिभिः समृद्धं यज्ञं प्रति नः अस्मान् अच्छ आभिमुख्येन नयन्तु ॥ प्रैतु । ‘ एङि पररूपम् ’ (पा. सू. ६. १. ९४) इति पररूपे प्राप्ते ‘ एत्येधत्यूठ्सु ’ ( पा. सू. ६. १. ८९ ) इति वृद्धिः । देव्येतु इत्यत्र ‘ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ’ इति स्वरितत्वम् । नर्यम् । नरेभ्यो हितम् । प्राक्क्रीतीय उगवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः ( पा. सू. ५. १. २ ) । पङ्क्तिराधसम् । पङ्क्तिभी राध्नोतीति[1] पङ्क्तिराधाः । ‘ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ’ इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । यज्ञम् । ‘ यजयाच॰ ’ इत्यादिना यजतेर्नङ् ॥

यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।

तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥ ४ ॥

यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः ।

तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ॥ ४ ॥

यः यजमानः वाघते ऋत्विजे सूनरं सुष्ठु नेतव्यं वसु धनं ददाति सः यजमानो ब्रह्मणस्पतेः प्रसादात् अक्षिति क्षयरहितं श्रवः अन्नं धत्ते धारयति । तस्मै तादृशयजमानाय इळाम् एतन्नामधेयां मनोः पुत्रीं ‘ इळा वै मानवी यज्ञानूकाशिन्यासीत् ’ (तै. ब्रा. १.१.४.४ ) इति श्रुत्यन्तरात् । आ यजामहे वयं ऋत्विजः सर्वतो यजामः । कीदृशीमिळाम् । सुवीरां शोभनैर्वीरैर्भटैर्युक्तां सुप्रतूर्तिं सुष्ठु प्रकर्षेण हिंसाकारिणीम् अनेहसं केनाप्यहिंस्याम् ॥ ददाति । ‘ अनुदात्ते च ’ (पा. सू. ६. १. १९० ) इति अभ्यस्तस्याद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । सूनरम् । सुखेन नीयते इति सूनरम् । ‘ ईषद्दुःसुषु॰ ’ इति खल् । ‘ निपातस्य च ’ इति उपसर्गस्य दीर्घत्वम् । अक्षिति । क्षयो नास्त्यस्येति अक्षिति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ‘ नञ्सुभ्याम् ’ इति तु ‘ सर्वे विधयश्छन्दसि विकल्प्यन्ते ’ इति वचनात् न प्रवर्तते । श्रवः । श्रूयते इति श्रवः । ‘ श्रु श्रवणे ’ । असुनो नित्त्वादाद्युदात्तत्वम् । सुवीराम् । शोभना वीरा यस्याः सा सुवीरा ताम् । ‘ वीरवीर्यौ च ’ इत्युत्तरपदाद्युदात्तत्वम् । सुप्रतूर्तिम् । तुर्वी हिंसार्थः । प्रपूर्वादस्मात् भावे क्तिन् । शोभना प्रतूर्तिः शत्रूणां हिंसनं यस्याः सा ताम् । ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम् । क्रत्वादिर्वा द्रष्टव्यः । अनेहसम् । न हन्यते इति अनेहाः । ‘ नञि हन एह च ’ ( उ. सू. ४. ६६३ ) इत्यसुन्प्रत्ययो धातोः एहादेशश्च । ‘ नलोपो नञः ’ ( पा. सू. ६. ३. ७३ ) इति नकारस्य लोपः । ‘ तस्मान्नुडचि ’ ( पा. सू. ६. ३. ७४ ) इति नुट् ॥

अग्निष्टोमे मरुत्वतीयशस्त्रे इन्द्रनिवहप्रगाथानन्तरं[2] ‘ प्र नूनम् ’ इति प्रगाथः । ‘ मरुत्वतीयेन ’ इति खण्डे सूत्रितं—‘ प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः ’ ( आश्व. श्रौ. ५. १४ ) इति ॥

---

१. ध-न-फ–राध्नोति । २. ढ–इन्द्रनिहवप्रगाथानन्तरम् ।

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् ।
यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ ५ ॥

ᵛब्रह्मणस्पतिः देवः ᵛउक्थ्यं शस्त्रयोग्यं ᵛमन्त्रं ᵛनूनम् अवश्यं ᵛप्र ᵛवदति होतृमुखे स्थितः सन् प्रब्रूते । ᵛयस्मिन् मन्त्रे इन्द्रादयश्च सर्वे ᵛदेवाः ᵛओकांसि स्थानानि ᵛचक्रिरे । तादृशं सर्वदेवप्रतिपादकं मन्त्रमिति[1] पूर्वत्रान्वयः[1] ॥ मन्त्रम् । 'मन्त्रि गुप्तभाषणे' । पचाद्यच् । वृषादिषु पाठादाद्युदात्तत्वम् । उक्थ्यम् उक्थार्हम् । 'छन्दसि च' इत्यर्हार्थे यप्रत्ययः । यद्वा । 'भवे छन्दसि' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'व्यत्ययेन तित्स्वरितम्' इति स्वरितत्वम् । ओकांसि । 'उच समवाये' । समवयन्त्यत्रेति अधिकरणे औणादिकोऽसुन् । बहुलग्रहणात् कुत्वं द्रष्टव्यमिति 'ओक उचः के' इत्यत्र वृत्तौ इत्युक्तम् (का. ७. ३. ६४) । चक्रिरे । इरेचः चित्त्वादन्तोदात्तत्वम् । यद्वृत्तयोगादनिघातः ॥　　॥ २० ॥

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥ ६ ॥

तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् ।
इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

हे ᵛदेवाः ब्रह्मणस्पतिप्रभृतयः ᵛतमित् तमेव इन्द्रादिसर्वदेवताप्रतिपादकं ᵛमन्त्रं ᵛविदथेषु यज्ञेषु ᵛवोचेम वयमृत्विजो ब्रवाम । कीदृशम् । ᵛशंभुवं सुखस्य भावयितारम् ᵛअनेहसम् अहिंसनीयं दोषरहितम् । हे ᵛनरः नेतारो देवाः ᵛइमाम् अस्माभिरुच्यमानां मन्त्ररूपां ᵛवाचं ᵛप्रतिहर्यथ ᵛच । यूयं कामयध्वे चेत् तर्हि ᵛविश्वेत् सर्वापि ᵛवामा वननीया वाक् ᵛवः युष्मान् ᵛअश्नवत् व्याप्नुयात् ॥ वोचेम । 'वच परिभाषणे' । आशीर्लिङि 'लिङ्याशिष्यङ्' इति अङ् । 'वच उम्' इत्युमागमः । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इति यासुटः सकारस्य लोपः । 'अतो येयः' इति इयादेशः । आद्गुणः । 'तिङ्ङतिङः' इति निघातः । विदथेषु । 'विद ज्ञाने' । विद्यते फलसाधनत्वेन ज्ञायते इति विदथो यज्ञः । 'रुविदिभ्यां कित्' (उ. सू. ३. ३९५) इति अथप्रत्ययः । शंभुवम् । भवतेः अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'ओः सुपि' (पा. सू. ६. ४. ८३) इति यणादेशस्य 'न भूसुधियोः' (पा. सू. ६. ४. ८५) इति प्रतिषेधः । मन्त्रादयो गताः । प्रतिहर्यथ । 'हर्य गतिकान्त्योः' । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वम् । इमां च इत्यत्र चशब्दश्चेदर्थः । चणिति निपातान्तरं न च समुच्चयाद्यर्थः । तेन 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्°' (पा. सू. ८. १. ३०) इति निघातप्रतिषेधः । अश्नवत् ।

---

1. ढ–मन्त्रं प्रवदति ।

'अशू व्याप्तौ'। लेटि अडागमः। व्यत्ययेन परस्मैपदम्। 'इतश्च लोपः°' इति इकारलोपः। 'इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन' (का. ६. ४. ७७) इति गुणः॥

को दे॑व॒यन्त॑मश्नव॒ज्जनं॒ को वृ॒क्तब॑र्हिषम्।
प्रप्र॑ दा॒श्वान्प॒स्त्या॑भिरस्थितान्त॒र्वाव॒त्क्षयं॑ दधे॥ ७॥

कः। दे॒व॒ऽयन्त॑म्। अ॒श्न॒व॒त्। जन॑म्। कः। वृ॒क्तऽब॑र्हिषम्।
प्रऽप्र॑। दा॒श्वान्। प॒स्त्या॑भिः। अ॒स्थि॒त॒। अ॒न्तः॒ऽवाव॑त्। क्षय॑म्। द॒धे॥ ७॥

$^{v}$देवयन्तं देवान् कामयमानं $^{v}$जनं $^{v}$कः $^{v}$अश्नवत् ब्रह्मणस्पतिव्यतिरिक्तः को नाम देवो व्याप्नुयात्। तथा $^{v}$वृक्तबर्हिषम् अनुष्ठानाय छिन्नबर्हिषं यजमानं $^{v}$कः नाम अन्यो देवोऽश्नवत्। $^{v}$दाश्वान् हविर्दत्तवान् यजमानः $^{v}$पस्त्याभिः मनुष्यैर्ऋत्विग्भिः सह $^{v}$प्रप्र $^{v}$अस्थित देवयजनदेशं प्रति प्रस्थितवान्। $^{v}$अन्तर्वावत् अन्तःस्थितबहुधनोपेतम्। यद्वा। अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधवागुपेतं $^{v}$क्षयं निवासस्थानं गृहं $^{v}$दधे धृतवान् भवति॥ देवयन्तम् इत्यादयो गताः। प्रप्र। 'प्रसमुपोदः पादपूरणे' (पा. सू. ८. १. ६) इति प्रशब्दस्य द्विर्भावः। 'अनुदात्तं च' इत्याम्रेडितानुदात्तत्वम्। अस्थित। 'ष्ठा गतिनिवृत्तौ'। लुङि 'समवप्रविभ्यः स्थः' (पा. सू. १. ३. २२) इत्यात्मनेपदम्। 'स्थाघ्वोरिच्च' (पा. सू. १. २. १७) इति धातुसिचोः इत्। कित्त्वे 'ह्रस्वादङ्गात्' (पा.सू. ८. २. २७) इति सलोपः। अन्तर्वावत्। 'वा गतिगन्धनयोः'। अन्तर्वान्ति गच्छन्तीति अन्तर्वाः पुत्रपश्वादयः। 'आतो मनिन्°' इत्यादिना विच्। 'तदस्यास्ति' इति मतुप्। मतुपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम्। यद्वा। वावदीतेः क्विप्। क्षयम्। क्षियन्ति निवसन्त्यस्मिन्निति क्षयः। 'पुंसि संज्ञायाम्°' इत्यधिकरणे घः। 'क्षयो निवासे' इत्याद्युदात्तत्वम्॥

उप॑ क्ष॒त्रं पृ॑ञ्ची॒त हन्ति॒ राज॑भिर्भ॒ये चि॑त्सुक्षि॒तिं द॑धे।
नास्य॑ व॒र्ता न त॑रु॒ता म॑हाध॒ने नार्भे॑ अस्ति व॒ज्रिणः॑॥ ८॥

उप॑। क्ष॒त्रम्। पृ॒ञ्ची॒त। हन्ति॑। राज॑ऽभिः। भ॒ये। चि॒त्। सु॒ऽक्षि॒तिम्। द॒धे।
न। अ॒स्य॒। व॒र्ता। न। त॒रु॒ता। म॒हा॒ऽध॒ने। न। अर्भे॑। अ॒स्ति॒। व॒ज्रिणः॑॥ ८॥

ब्रह्मणस्पतिर्देवः $^{v}$क्षत्रं बलम् $^{v}$उप $^{v}$पृञ्चीत स्वात्मनि संपृक्तं कुर्यात्। ततः $^{v}$राजभिः वरुणादिभिः सह $^{v}$हन्ति शत्रून् मारयति। $^{v}$भये $^{v}$चित् भीतिहेतौ युद्धेऽपि $^{v}$सुक्षितिं $^{v}$दधे सुष्ठु निवासस्थैर्यं[1] धारयति न तु पलायते। $^{v}$वज्रिणः वज्राद्यायुधवतः $^{v}$अस्य ब्रह्मणस्पतेः $^{v}$महाधने प्रभूतधननिमित्ते युद्धे $^{v}$वर्ता प्रवर्तयिता अन्यः कोऽपि $^{v}$न $^{v}$अस्ति स्वयमेव प्रवर्तते इत्यर्थः। महाधने इति संग्रामनाम, 'महाधने समीके' (नि.२. १७. ४१) इति तन्नामसु पाठात्। तथा $^{v}$तरुता तरणस्योल्लङ्घनस्य कर्ता अन्यः कोऽपि $^{v}$न अस्ति। तथैव $^{v}$अर्भे स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता $^{v}$न अस्ति॥

---

१. ढ—निवासम्।

पृञ्चीत। 'पृची संपर्के'। लिङि रुधादित्वात् श्नम्। 'श्नसोरल्लोपः' इति अकारलोपः। प्रत्ययस्वरः। क्षत्रं पृञ्चीत राजभिर्हन्ति चेति समुच्चयलक्षणस्य चार्थस्य दर्शनात् 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। हन्तीत्येषा द्वितीयापि तिङः परत्वात् न निहन्यते। सुक्षितिम्। शोभना क्षितिः सुक्षितिः। 'मन्क्तिन्°' इत्यादिना उत्तरपदान्तोदात्तत्वम्। वर्ता। वर्ततेर्वृणोतेर्वा तृचि आगमानुशासनस्यानित्यत्वात् इडभावः। तरुता। 'तॄ प्लवनतरणयोः'। 'ग्रसितस्कभित°' (पा. सू. ७. २. ३४) इत्यादिना तृचि उडागमो निपातितः। 'चितः' इत्यन्तोदात्तत्वम्। महाधने। महच्च तद्धनं च महाधनम्। 'आन्महतः°' (पा. सू. ६. ३. ४६) इति आत्वम्। तेन शब्देन तद्धेतुभूतः संग्रामो लक्ष्यते। अर्भे। 'ऋ गतौ'। 'अर्तिगॄभ्यां भन्' (उ. सू. ३. ४३२) इति भन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्॥ ॥ २१ ॥

'यं रक्षन्ति' इति नवर्चं षष्ठं सूक्तम्। तत्रानुक्रमणं–'यं रक्षन्ति नव वरुणमित्रार्यम्णां मध्ये तृच आदित्येभ्यो गायत्रं हि' इति। घोरपुत्रः कण्व ऋषिः। इदमादित्रीणि सूक्तानि गायत्राणि। आद्यन्तयोस्तृचयोर्वरुणमित्रार्यमणो देवताः। मध्यतृचस्य 'सुगः पन्थाः' इत्यस्य आदित्या देवताः। गतो विनियोगः॥

यं रक्ष॑न्ति॒ प्रचे॑तसो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा। नू चि॒त्स द॑भ्यते॒ जनः॑ ॥ १ ॥

यम्। रक्ष॑न्ति। प्रऽचे॑तसः। वरु॑णः। मि॒त्रः। अ॒र्य॒मा। नु। चि॒त्। सः। द॒भ्य॒ते॒। जनः॑ ॥ १ ॥

प्रचेतसः प्रकृष्टज्ञानयुक्ताः वरुणादयो देवाः यं यजमानं रक्षन्ति सः जनः यजमानः नू चित् क्षिप्रमेव दभ्यते दभ्नोति शत्रून् हिनस्ति ॥ प्रचेतसः। प्रकृष्टं चेतो येषाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। नू चित्। 'ऋचि तुनुघ°' इत्यादिना दीर्घः। दभ्यते। दम्भु दम्भे। व्यत्ययेन श्यन् आत्मनेपदं च॥

यं बा॒हुते॑व॒ पिप्र॑ति॒ पान्ति॒ मर्त्यं॑ रि॒षः। अरि॑ष्टः॒ सर्व॑ एधते ॥ २ ॥

यम्। बा॒हु॒ताऽइ॑व। पिप्र॑ति। पान्ति॑। मर्त्य॑म्। रि॒षः। अरि॑ष्टः। सर्वः॑। ए॒ध॒ते॒ ॥ २ ॥

यं यजमानं पिप्रति वरुणादयो देवा धनैः पूरयन्ति। तत्र दृष्टान्तः। बाहुतेव। स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत्। तथा यं मर्त्यं मनुष्यं यजमानं रिषः हिंसकात् पान्ति रक्षन्ति सः सर्वः यजमानः अरिष्टः केनाप्यहिंसितः सन् एधते वर्धते॥ बाहुतेव। बाहुता बाहुत्वम्। भाववाचिनानेन शब्देन बाहवस्तदाश्रया लक्ष्यन्ते। यद्वा। समूहार्थे तल्प्रत्ययो द्रष्टव्यः। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। पिप्रति। 'पॄ पालनपूरणयोः'। पृ इत्येके। जुहोत्यादित्वात् श्लुः। 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। पान्ति। तिङः परत्वात् पादादित्वाद्वा निघाताभावः। रिषः। 'रिष हिंसायाम्'। 'क्विप् च' इति क्विप्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। अरिष्टः। 'रिष हिंसायाम्'। 'एकाचः°' इति इट्प्रतिषेधः। व्रश्चादिना षत्वम्। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्॥

वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ॥३॥

वि । दुःऽगा । वि । द्विषः । पुरः । घ्नन्ति । राजानः । एषाम् । नयन्ति । दुःऽइता । तिरः ॥३॥

ᵛराजानः वरुणादयः ᵛएषां स्वकीययजमानानां ᵛपुरः पुरस्तात् ᵛदुर्गा गन्तुं दुःशकानि शत्रुनगराणि ᵛवि ᵛघ्नन्ति विशेषेण नाशयन्ति । तथा ᵛद्विषः शत्रूनपि ᵛवि घ्नन्ति। तथा ᵛदुरिता यजमानसंबन्धीनि दुरितानि ᵛतिरः ᵛनयन्ति विनाशं प्रापयन्ति ॥ दुर्गा । दुःखेन गच्छन्त्यत्रेति दुर्गाणि। 'सुदुरोरधिकरणे' (पा. सू. ३. २. ४८. ३) इति गमेर्डप्रत्ययः। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । पुरः । कालवाचिनः पूर्वशब्दात् सप्तम्यर्थे 'पूर्वाधरावराणाम्°' (पा. सू. ५. ३. ३९) इति असिप्रत्ययः, तत्संनियोगेन पूर्वशब्दस्य पुरादेशश्च । प्रत्ययस्वरः । घ्नन्ति । हन्तेर्लटि अदादित्वात् शपो लुक् । 'गमहन°' इत्यादिना उपधालोपः । 'हो हन्तेः°' (पा. सू. ७. ३. ५४) इति घत्वम्। अन्तादेशस्योपदेशवचनादाद्युदात्तत्वम् । पादादित्वादनिघातः ॥

सुगः पन्था अनृक्षर आदित्यास ऋतं यते । नात्रावखादो अस्ति वः ॥४॥

सुऽगः । पन्थाः । अनृक्षरः । आदित्यासः । ऋतम् । यते । न । अत्र । अवऽखादः । अस्ति । वः ॥४॥

हे ᵛआदित्यासः ᵛऋतं ᵛयते यज्ञं गच्छते भवत्समूहाय ᵛपन्थाः मार्गः ᵛसुगः सुष्ठु गन्तुं शक्यः ᵛअनृक्षरः कण्टकरहितश्च । ᵛअत्र अस्मिन् कर्मणि ᵛवः युष्माकम् ᵛअवखादः अवमन्तव्यः खादो जुगुप्सितहविर्विशेषः ᵛन ᵛअस्ति । तस्मादिहागन्तव्यमित्यर्थः ॥ सुगः । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्ययः । पन्थाः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । अनृक्षरः । 'ऋषी गतौ' ऋषन्ति अन्तर्गच्छन्ति इति ऋक्षरा कण्टकाः । 'तन्यृषिभ्यां क्सरन्' (उ. सू. ३. ३५५) इति क्सरन्प्रत्ययः । कित्त्वाद्गुणाभावः । कत्वषत्वे । यास्कस्त्वाह—'ऋक्षरः कण्टक ऋच्छतेः' (निरु. ९. ३२) इति । न विद्यन्ते ऋक्षरा अस्मिन्निति अनृक्षरः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। आदित्यासः । अदितेः पुत्रा आदित्याः । 'दित्यदित्यादित्य°' (पा. सू. ४. १. ८५) इत्यादिना ण्यप्रत्ययः । 'आज्जसेरसुक्' । आमन्त्रिताद्युदात्तत्वम् । पादादित्वादाष्टमिकनिघाताभावः । यते । 'इण् गतौ' । लटः शतृ । अदादित्वात् शपो लुक् । 'इणो यण्' (पा. सू. ६. ४. ८१) इति यणादेशः । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । अवखादः । 'खाद्द भक्षणे' । भावे घञ् । अवमतः खादोऽवखादः । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

यं यज्ञं नयथा नर आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥ ५ ॥

यम् । यज्ञम् । नयथ । नरः । आदित्याः । ऋजुना । पथा । प्र । वः । सः । धीतये । नशत् ॥५॥

हे ᵛनरः नेतारः ᵛआदित्याः ᵛयं ᵛयज्ञम् ᵛऋजुना ᵛपथा अविकलेन मार्गेण ᵛनयथ पारं प्रापयथ ᵛसः यज्ञः ᵛवः ᵛधीतये युष्मत्पानायोपभोगाय ᵛप्र ᵛनशत् प्राप्नोतु॥ नयथ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । पथा । तृतीयैकवचने 'भस्य टेर्लोपः' (पा. सू. ७. १. ८८) इति टिलोपः । 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा. सू. ६. १. १६१) इति विभक्तेरुदात्तत्वम् । धीयते । 'धेट् पाने' । 'आदेचः°

इति आत्वम्। क्तिचि 'घुमास्था°' इति ईत्वम्। नशत्। नशतिर्गत्यर्थः। लेटि अडागमः। 'इतश्च लोपः°' इति इकारलोपः॥　　॥ २२ ॥

**स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना। अच्छा गच्छत्यस्तृतः॥ ६॥**

सः। रत्नम्। मर्त्यः। वसु। विश्वम्। तोकम्। उत। त्मना। अच्छ। गच्छति। अस्तृतः॥६॥

हे आदित्याः ᵛसः तादृशो भवद्भिरनुगृहीतः ᵛमर्त्यः मनुष्यो यजमानः ᵛअस्तृतः केनाप्यहिंसितः सन् ᵛरत्नं रमणीयं ᵛविश्वं ᵛवसु सर्वं धनम् ᵛअच्छ आभिमुख्येन ᵛगच्छति प्राप्नोति। ᵛउत अपि च ᵛत्मना आत्मना स्वेन सदृशं ᵛतोकम् अपत्यं गच्छति॥ त्मना। 'मन्त्रेष्वाङ्यादेरात्मनः' (पा. सू. ६. ४. १४१) इति आकारलोपः। अच्छ। 'निपातस्य च' इति दीर्घत्वम्। अस्तृतः। 'स्तृञ् हिंसायाम्'। न स्तृतोऽस्तृतः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्॥

**कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः। महि प्सरो वरुणस्य॥ ७॥**

कथा। राधाम। सखायः। स्तोमम्। मित्रस्य। अर्यम्णः। महि। प्सरः। वरुणस्य॥ ७॥

हे ᵛसखायः सखिभूता ऋत्विजः मित्रादीनां त्रयाणां ᵛमहि महत् ᵛप्सरः रूपम्। अतस्तदनुरूपं ᵛस्तोमं स्तोत्रं ᵛकथा केन प्रकारेण ᵛराधाम साधयामः॥ कथा। 'था हेतौ च च्छन्दसि' (पा. सू. ५. ३. २६) इति किंशब्दात् प्रकारवचनेषु प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञायां 'किमः कः' (पा. सू. ७. २. १०३) इति कादेशः। प्रत्ययस्वरः। राधाम। 'राध साध संसिद्धौ'। लेटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'तिङ्ङतिङः' इति निघातः। स्तोमम्। 'ष्टुञ् स्तुतौ'। 'अर्तिस्तुसु°' इत्यादिना भावे मन्। नित्त्वादाद्युदात्तत्वम्। अर्यम्णः। षष्ठ्येकवचने 'अल्लोपोऽनः' इति अकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। महि। 'मह पूजायाम्'। औणादिक इन्प्रत्ययः। प्सरः। 'प्सा भक्षणे'। प्साति भक्षयतीति प्सरो रूपम्। औणादिको डरप्रत्ययः॥

**मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम्। सुम्नैरिद्व आ विवासे॥ ८॥**

मा। वः। घ्नन्तम्। मा। शपन्तम्। प्रति। वोचे। देवऽयन्तम्।

सुम्नैः। इत्। वः। आ। विवासे॥ ८॥

हे मित्रादयो देवाः ᵛदेवयन्तं देवान् कामयमानं यजमानं यः शत्रुर्हन्ति ᵛघ्नन्तं तादृशं शत्रुं ᵛवः युष्मभ्यं ᵛमा ᵛप्रति ᵛवोचे दुरुक्तकथनभीत्याहं न कथयामि। तथा यजमानं यः शत्रुः शपति तमपि ᵛशपन्तं ᵛमा प्रति वोचे भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः। अहं तु ᵛसुम्नैरित् धनैरेव ᵛवः युष्मान् ᵛआ ᵛविवासे सर्वतः परिचरामि॥ घ्नन्तम्। हन्तीति घ्नन्। 'गमहन°' इत्यादिना उपधालोपः। 'हो हन्तेः°' इति कुत्वे प्रत्ययस्वरः। शपन्तम्। 'शप आक्रोशे'। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। वोचे। 'ब्रूञ् व्यक्तायां वाचि'। माङि लुङि इटि 'ब्रुवो वचिः' (पा. सू. २.

४. ५३ ) इति वचिः । ‘ अस्यतिवक्ति° ’ इत्यादिना च्लेः अङादेशः । ‘ वच उम् ’ इत्युमागमः । ‘ न माङ्योगे ’ इति अडभावः । देवयन्तम् । ‘ सुप आत्मनः क्यच् ’ । ‘ न च्छन्दस्यपुत्रस्य ’ इति ईत्वप्रतिषेधः । सुम्नैः । ‘ म्ना अभ्यासे ’ । सुष्ठु म्नायतेऽभ्यस्यते इति सुम्नम् । ‘ आतश्चोपसर्गे ’ ( पा. सू. ३. १. १३६ ) इति कप्रत्ययः । ‘ आतो लोप इटि च ’ इति आकारलोपः । विवासे । विवासतिः परिचरणकर्मा ( नि. ३. ५. १० ) ॥

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥ ९ ॥

चतुरः । चित् । ददमानात् । बिभीयात् । आ । निऽधातोः । न । दुःऽउक्ताय । स्पृहयेत् ॥९॥

घ्नन्तं शपन्तं च मा प्रतिवोचे इति यदुक्तं तत्रोपपत्तिरुच्यते । ᵛदुरुक्ताय ᵛन ᵛस्पृहयेत् दुष्टं वाक्यं न कामयेत् किंतु दुरुक्तात् ᵛबिभीयात् । तत्रावशिष्टो मन्त्रभागः सर्वोऽपि दृष्टान्तः । चित् इत्युपमार्थे वर्तते । अक्षद्यूतं कुर्वतोरुभयोर्मध्ये यः पुमान् ᵛचतुरः चतुःसंख्याकान् कपर्दकान् ᵛददमानात् ददतो हस्ते धारयतः पुरुषात् ᵛआ ᵛनिधातोः कपर्दकनिपातपर्यन्तं बिभीयात् अस्य जयो भविष्यति न[1] भविष्यति[1] इत्यन्यो भीतिं प्राप्नुयात् । अत्र यथा भयं तथा दुरुक्ताद्भेतव्यमिति धर्मरहस्यम् । तस्मादहं घ्नन्तं शपन्तं मा प्रतिवोचे इत्यभिप्रायः । अत्र निरुक्तं—‘ चतुरोऽक्षान् धारयत इति तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयान्न दुरुक्ताय स्पृहयेत् ’ ( निरु. ३. १६ ) इति॥ चतुरः । ‘ चतुरः शसि ’ ( पा. सू. ६. १. १६७ ) इति विभक्तेः पूर्वस्योदात्तत्वम् । ददमानात् । ‘ दद दाने ’ । अत्र धारणार्थः । शपः पित्त्वादनुदात्तत्वम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वेन शानजनुदात्तः । धातुस्वर एव शिष्यते । बिभीयात् । ‘ ञिभी भये ’ । लिङि जुहोत्यादित्वात् शपः श्लुः । यासुट उदात्तत्वम् । पादादित्वात् निघाताभावः । निधातोः । निपूर्वात् दधातेः ‘ सितनिगमि° ’ ( उ. सू. १. ६९ ) इत्यादिना भावे तुन्प्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् । ‘ तादौ च° ’ इति गतिस्वरो न भवति ‘ अतौ ’ इति पर्युदस्तत्वात् । दुरुक्ताय । ‘ स्पृहेरीप्सितः ’ ( पा. सू. १. ४. ३६ ) इति संप्रदानसंज्ञायां ‘ चतुर्थी संप्रदाने ’ ( पा. सू. २. ३. १३ ) इति चतुर्थी । स्पृहयेत् । ‘ स्पृह ईप्सायाम् ’ । चुरादिरदन्तः । अतो लोपस्य स्थानिवद्भावात् लघूपधगुणाभावः ॥ ॥ २३ ॥

‘ सं पूषन् ’ इति दशर्चं सप्तमं सूक्तं काण्वं गायत्रं पूषदेवताकम् । ‘ सं पूषन्दश पौष्णम् ’ इत्यनुक्रान्तम् । स्मार्ते ‘ महान्तमध्वानमेष्यन् ’ इदं सूक्तं जपेत्–‘ सं पूषन्नध्वन इति महान्तमध्वानमेष्यन् प्रतिभयं वा ’ ( आश्व. गृ. ३. ७. १० ) इति सूत्रितत्वात् । तत्र जपेदित्यनुवर्तते ॥

सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस्पुरः ॥ १ ॥

सम् । पूषन् । अध्वनः । तिर । वि । अंहः । विऽमुचः । नपात् ।

सक्ष्व । देव । प्र । नः । पुरः ॥ १ ॥

---

१. च-फ–‘ न भविष्यति ’ इति नास्ति

हे ᵛपूषन् जगत्पोषक पृथिव्यभिमानिदेव ᵛअध्वनः मार्गात् ᵛसं ᵛतिर अस्मानभीष्टस्थानं सम्यक् प्रापय। ᵛअंहः विघ्नहेतुं पाप्मानं ᵛवि तिर विनाशय। पूषा विशेष्यते। ᵛविमुचो ᵛनपात् जलविमोचकहेतोर्मेघस्य पुत्र। नपात् इति पुत्रनाम, 'नपात् प्रजा' (नि. २. २. १३) इति तन्नामसु पाठात्। श्रुत्यन्तरे 'अद्भ्यः पृथिवी' इति जलात् भूम्युत्पत्तिः श्रूयते। तथा अन्यत्रापि उदकसारत्वं पृथिव्याः श्रूयते–'तद्यदपां सार आसीत्तत्समहन्यत सा पृथिव्यभवत्' इति। मेघस्य जलधारित्वादुदकपुत्र एव मेघपुत्रो भवति। न च पृथिव्या मेघपुत्रत्वे पूष्णः किमायातमिति वाच्यं, पृथिव्या एव पूषत्वात्। तथा च श्रुत्यन्तरे कस्यचिन्मन्त्रस्य ब्राह्मणमेवमाम्नायते–'पूषाध्वनः पात्वित्याहेयं वै पूषा' इति। तन्निर्वचनं चान्यत्रैवमाम्नायते—'इयं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च' (श. ब्रा. १४. ४. २. २५) इति। हे देव पूषन् ᵛनः ᵛपुरः अस्माकं पुरतः ᵛप्र ᵛसक्ष्व प्रसक्तो भव। पुरतो गच्छेत्यर्थः॥ विमुचो नपात्। उदकं विमुञ्चतीति विमुङ् मेघः। 'क्विप् च' इति क्विप्। न पातयति कुलमिति नपात् पुत्रः। नञ्पूर्वात् पातयतेः क्विप्। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। 'सुबामन्त्रिते°' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम्। सक्ष्व। 'षच सेवने'। अनुदात्तेत्त्वादात्मनेपदम्। लोटि 'बहुलं छन्दसि' इति शपो लुक्। 'तास्यनुदात्तेत्°' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः। प्र णः। 'उपसर्गाद्बहुलम्' इति नसो णत्वम्। पुरः। उक्तम्॥

## यो नः॑ पूषन्न॒घो वृको॑ दुः॒शेव॑ आ॒दिदे॑शति। अप॑ स्म॒ तं प॒थो ज॑हि ॥२॥

यः। नः॒। पू॒ष॒न्। अ॒घः। वृकः॑। दुः॒ऽशेवः॑। आ॒ऽदिदे॑शति। अप॑। स्म॒। तम्। प॒थः। ज॒हि॒ ॥२॥

हे ᵛपूषन् ᵛयः प्रतिपक्षी ᵛनः अस्मान् ᵛआदिदेशति अनेन मार्गेण गन्तव्यम्[1] इत्येवमाज्ञापयति। कीदृशः। ᵛअघः आहन्ता ᵛवृकः अस्मदीयस्य धनस्य आदाता अपहर्तेत्यर्थः। ᵛदुःशेवः सेवितुं दुःशको दुष्टसुखो वा। ᵛतं तादृशं प्रतिपक्षिणं ᵛपथः मार्गात् ᵛअप ᵛजहि ᵛस्म अवश्यमपाकुरु॥ वृकः। 'वृक वृक आदाने'। वर्कते इति वृकः। इगुपधलक्षणः कः। वृषादित्वादाद्युदात्तत्वम्। दुःशेवः। दुष्टं शेवं यस्यासौ दुःशेवः। 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। यद्वा। दुःखेन सेव्यते इति दुःशेवः। वर्णव्यत्ययेन सकारस्य शकारः। 'ईषद्दुःसुषु°' इति खल्। लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। आदिदेशति। 'दिश अतिसर्जने'। लेटि अडागमः। 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसीति वक्तव्यम्' (पा. सू. ७. ३. ८७. २) इति वचनात् 'नाभ्यस्तस्याचि°' (पा. सू. ७. ३. ८७) इति लघूपधगुणप्रतिषेधाभावः। पथः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्॥

## अप॒ त्यं प॑रिप॒न्थिनं॑ मुषी॒वाणं॑ हुर॒श्चित॑म्। दू॒रमधि॑ स्रु॒तेर॑ज ॥३॥

अप॑। त्यम्। प॒रि॒ऽप॒न्थिन॑म्। मु॒षी॒वाण॑म्। हु॒रः॒ऽचित॑म्। दू॒रम्। अधि॑। स्रु॒तेः। अ॒ज॒ ॥३॥

ᵛत्यं तादृशं पूर्वोक्तगुणयुक्तं ᵛस्रुतेः मार्गात् ᵛअधि ᵛदूरम् अत्यन्तदूरदेशं प्रति ᵛअप ᵛअज अपगमय। कीदृशम्। ᵛपरिपन्थिनं मार्गप्रतिबन्धकं ᵛमुषीवाणं तस्कररूपम्। मुषीवा इति तस्करस्य

---

१. च-छ-ण-प-य-ल-श-स–न गन्तव्यम्।

नाम, ' मुषीवान् मलिम्लुचः ' ( नि. ३. २४. ११ ) इति तन्नामसु पाठात् । ᵛहुरश्चितं कौटिल्यानां संचेतारम् ॥ परिपन्थिनम् । ' छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ' ( पा. सू. ५. २. ८९ ) इति शत्रावभिधेये इनिप्रत्ययान्तो निपातितः । मुषीवाणम् । ' मुष स्तेये ' । मोषणं मुषिः । औणादिको भावे किप्रत्ययः । मुषिं वनति संभजते इति मुषीवा । ' वन षण संभक्तौ ' । ' अन्येभ्योऽपि दृश्यन्ते ' ( पा. सू. ३. २. ७५ ) इति विच्प्रत्ययः । ' सर्वनामस्थाने चासंबुद्धौ ' ( पा. सू. ६. ४. ८ ) इति दीर्घः । ' अन्येषामपि दृश्यते ' इति पूर्वपदस्य दीर्घत्वम् । हुरश्चितम् । ' हुर्छा कौटिल्ये ' । संपदादिलक्षणो भावे क्विप् । ' राल्लोपः ' इति छकारलोपः । हुरश्चिनोतीति हुरश्चित् । चिनोतेः क्विपि तुगागमः । ' तत्पुरुषे कृति बहुलम् ' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । स्रुतेः । ' स्रु गतौ ' । ' क्तिच्क्तौ च संज्ञायाम् ' इति क्तिच् । ' चितः ' इत्यन्तोदात्तत्वम् । अज । ' अज गतिक्षेपणयोः ' ॥

## त्वं तस्यं द्वयाविनोऽघशंसस्य कस्यं चित् । पुदाभि तिष्ठ तपुंषिम् ॥ ४ ॥

त्वम् । तस्यं । द्वयाविनः । अघऽशंसस्य । कस्यं । चित् । पदा । अभि । तिष्ठ । तपुंषिम् ॥४॥

हे पूषन् ᵛत्वं ᵛतस्य चोरस्य ᵛतपुषिं परसंतापकं देहं ᵛपदाभि ᵛतिष्ठ भवदीयेन पादेनाक्रम्य तिष्ठ । कीदृशस्य । ᵛद्वयाविनः प्रत्यक्षापहारः परोक्षापहारश्चेति यद्द्वयं तद्युक्तस्य ᵛअघशंसस्य अस्मास्वघमनिष्टं शंसतः । अघशंस इति तस्करनाम, ' मलिम्लुचः अघशंसः वृकः ' ( नि. ३.२४.१३ ) इति तन्नामसु पाठात् । ᵛकस्य ᵛचित् अनिर्दिष्टविशेषस्य कस्यापि ॥ द्वयाविनः । द्वयमस्यास्तीति द्वयावी । ' बहुलं छन्दसि ' ( पा. सू. ५. २. १२२ ) इति मत्वर्थीयो विनिः । ' अन्येषामपि दृश्यते ' इति दीर्घत्वम् । अघशंसस्य । अघे पापे शंसो मनस्यभिलाषो यस्य सोऽयमघशंसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । तपुषिम् । तापयत्यनेन अन्यमिति तपुषिः । औणादिक उषिन्प्रत्ययः । बहुलवचनात् इकारस्य न इत् संज्ञा । नित्त्वादाद्युदात्तत्वम् ॥

## आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥ ५ ॥

आ । तत् । ते । दस्र । मन्तुऽमः । पूषन् । अवः । वृणीमहे । येन । पितॄन् । अचोदयः ॥ ५ ॥

हे ᵛमन्तुमः ज्ञानवन् ᵛदस्र दर्शनीय यद्वा वैर्युपक्षयकारिन् ᵛपूषन् ᵛते त्वदीयं ᵛतत् ᵛअवः तादृशं रक्षणम् ᵛआ ᵛवृणीमहे सर्वतः प्रार्थयामहे । ᵛयेन रक्षणेन ᵛपितॄन् अङ्गिरःप्रभृतीन् पितृदेहान् ᵛअचोदयः प्रेरितवानसि । तद्रक्षणमिति पूर्वत्रान्वयः ॥ दस्र । ' दसि दंसनदर्शनयोः ' । ' स्फायितञ्चि० ' इत्यादिना रक् । आगमानुशासनस्यानित्यत्वात् नुमभावः । यद्वा । ' दसु उपक्षये ' इत्यस्मादन्तर्भावितण्यर्थात् पूर्ववत् रक् । मन्तुमः । ' मन ज्ञाने ' । ' कमिमनिजनि० ' ( उ. सू. १. ७२ ) इत्यादिना भावे तुप्रत्ययः । मन्तुर्ज्ञानमस्यास्तीति मन्तुमान् । संबुद्धौ ' मतुवसो रुः ' इति रुत्वम् । अचोदयः । ' चुद संचोदने ' । चौरादिकः ॥ ॥ २४ ॥

## अधा नो विश्वसौभग हिरण्यवाशीमत्तम । धनानि सुषणा कृधि ॥ ६ ॥

अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम । धनानि । सुऽसना । कृधि ॥ ६ ॥

हे ^v^विश्वसौभग कृत्स्नधनयुक्त यद्वा कृत्स्नसौभाग्ययुक्त ^v^हिरण्यवाशीमत्तम अतिशयेन सुवर्णमयायुधवन् पूषन् ^v^अध पूर्वोक्तास्मदीयप्रार्थनानन्तरं ^v^नः अस्माकं ^v^धनानि सुवर्णमणिमुक्तादीनि ^v^सुषणा सुष्ठु दानयुक्तानि ^v^कृधि कुरु ॥ अध । अथशब्दे धत्वं छान्दसम् । 'निपातस्य च' इति संहितायां दीर्घत्वम् । विश्वसौभग । 'सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठाद्भावे अञ् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युत्तरपदवृद्धौ प्राप्तायां सत्यां सर्वविधीनां छन्दसि विकल्पितत्वादुत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् (का. ७. ३. १९) । विश्वानि सौभगानि यस्यासौ विश्वसौभगः । आमन्त्रितनिघातः । हिरण्यवाशीमत्तम । हिरण्मयी वाशी । तदेषामस्तीति हिरण्यवाशीमन्तः । अतिशयेन हिरण्यवाशीमान् हिरण्यवाशीमत्तमः । आमन्त्रितनिघातः । सुषणा । 'वन षण संभक्तौ' । सुखेन संभज्यन्ते इति सुषणानि । 'ईषद्दुःसुषु°' इति खल् । 'शेश्छन्दसि' इति शेर्लोपः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । कृधि । 'डुकृञ् करणे' । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

## अति॑ नः स॒श्चतो॑ नय सु॒गा नः॑ सु॒पथा॑ कृणु । पूष॑न्नि॒ह क्रतुं॑ विदः ॥७॥

अति॑ । नः॒ । स॒श्चतः॑ । न॒य॒ । सु॒ऽगा । नः॒ । सु॒ऽपथा॑ । कृ॒णु॒ । पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ॥७॥

^v^सश्चतः अस्मद्बाधनाय प्राप्नुवतः शत्रून् ^v^नः ^v^अति अस्मानतिक्रम्य ^v^नय अन्यत्र प्रापय । ^v^नः अस्मान् ^v^सुगा सुष्ठु गन्तुं शक्येन ^v^सुपथा शोभनमार्गेण ^v^कृणु गन्तॄन् कुरु । हे ^v^पूषन् ^v^इह अध्वनि ^v^क्रतुं प्रज्ञानमस्मद्रक्षणरूपं ^v^विदः जानीहि ॥ सश्चतः । 'ग्लुञ्च षस्ज गतौ' इत्यत्र सश्चिमप्येके पठन्तीति धातुवृत्तावुक्तम् । अस्मात् लटः शतृ । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्वरेण शतुरुदात्तत्वम् । 'शतुरनुमः°' इति विभक्त्युदात्ताभावश्छान्दसः । सुगा । सुष्ठु गच्छन्त्यत्रेति सुगः । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्ययः । 'सुपां सुलुक्°' इति तृतीयाया आकारः । सुपथा । शोभनेन पथा । 'न पूजनात्' (पा. सू. ५. ४. ६९) इति समासान्तप्रतिषेधः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वं न भवति अबहुव्रीहित्वात् । तत्र हि बहुव्रीहौ इति वर्तते । कृणु । 'कृवि हिंसाकरणयोः' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'उतश्च प्रत्ययात्°' इति हेर्लुक् । विदः । 'विद ज्ञाने' । लेटि अडागमः । 'इतश्च लोपः°' इति इकारलोपः ॥

## अ॒भि सू॒यव॑सं नय॒ न न॑वज्वा॒रो अध्व॑ने । पूष॑न्नि॒ह क्रतुं॑ विदः ॥ ८ ॥

अ॒भि । सु॒ऽयव॑सम् । न॒य॒ । न । न॒व॒ऽज्वा॒रः । अध्व॑ने । पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ॥८॥

हे ^v^पूषन् ^v^सुयवसं शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् ^v^अभि ^v^नय अस्मानभितः प्रापय । ^v^अध्वने मार्गाय ^v^नवज्वारः नूतनः संतापः ^v^न भवत्विति शेषः । मार्गे गच्छतामस्माकमिदानींतनः क्लेशः कोऽपि मा भूदित्यर्थः । गतार्थमन्यत् ॥ सूयवसम् । शोभनं यवसं यस्मिन् देशे स सूयवसो देशः । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् क्रत्वादिर्वा द्रष्टव्यः । नवज्वारः । 'ज्वर रोगे' । भावे घञ् । नवश्चासौ ज्वारो नवज्वारः । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् । पूषन्निह क्रतुं विदः ॥ ९ ॥

शग्धि । पूर्धि । प्र । यंसि । च । शिशीहि । प्रासि । उदरम् । पूषन् । इह । क्रतुम् । विदः ॥९॥

हे ᵛपूषन् ᵛशग्धि अस्माननुग्रहीतुं शक्तो भव। ᵛपूर्धि अस्मद्गृहं धनेन पूरय। किंच ᵛप्र ᵛयंसि अन्यदप्यपेक्षितं वस्तु[1] प्रयच्छ। ᵛशिशीहि अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु तेजस्विनः कुरु इत्यर्थः ᵛउदरम् अस्मदीयं ᵛप्रासि मृष्टान्नेन सोमरसेन वा पूरय। अन्यत् पूर्ववत् ॥ शग्धि। ‘ शक्लृ शक्तौ ’। लोटो हिः। ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक्। ‘ हुझल्भ्यो हेर्धिः ’ इति धिरादेशः। हेरपित्त्वात् प्रत्ययस्वरेणोदात्तत्वम्। पूर्धि। ‘ पॄ पालनपूरणयोः ’। ‘ श्रुशृणुपॄकृवृभ्यश्छन्दसि ’ इति हेर्धिरादेशः। पूर्ववद्विकरणस्य लुक्। ‘ उदोष्ठ्यपूर्वस्य ’ इति उत्वम्। ‘ हलि च ’ इति दीर्घः। तिङः परत्वात् निघाताभावः। यंसि। ‘ यम उपरमे ’। लोडर्थे लटि पूर्ववद्विकरणस्य लुक्। निघातः। शिशीहि। ‘ शो तनूकरणे ’। लोटि ‘ बहुलं छन्दसि ’ ( पा. सू. ७. ४. ७८ ) इति अभ्यासस्य इत्वम्। ‘ ई हल्यघोः ’ इति ईत्वम्। प्रत्ययस्वरः। प्रासि। ‘ प्रा पूरणे ’। अदादित्वात् शपो लुक्। सिपः पित्त्वादनुदात्तत्वे धातुस्वरः ॥

न पूषणं मेथामसि सूक्तैरभि गृणीमसि । वसूनि दस्ममीमहे ॥ १० ॥

न । पूषणम् । मेथामसि । सुऽउक्तैः । अभि । गृणीमसि । वसूनि । दस्मम् । ईमहे ॥१०॥

ᵛपूषणं देवं ᵛन ᵛमेथामसि वयं न तु निन्दामः। किंतु ᵛसूक्तैः वेदगतैः ᵛअभि ᵛगृणीमसि सर्वत्र स्तुमः। ᵛदस्मं दर्शनीयं पूषणं प्रति ᵛवसूनि धनानि ᵛईमहे याचामहे ॥ मेथामसि। ‘ मेथृ मेधाहिंसनयोः ’। लटि ‘ इन्दतो मसि ’ इति मस इकारागमः। सूक्तैः। सुष्ठु स्तुवते[2] देवताः प्रकाशयन्तीति सूक्तानि। ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति कर्तरि क्तः। ‘ वचिस्वपि° ’ इत्यादिना संप्रसारणम्। थाथादिस्वरः। यद्वा। कर्मणि निष्ठा। ‘ सूपमानात् क्तः ’ ( पा. सू. ६. २. १४५ ) इत्युत्तरपदान्तोदात्तत्वम्। गृणीमसि। ‘ गॄ शब्दे ’। ‘ प्वादीनां ह्रस्वः ’ इति ह्रस्वत्वम्। इदन्तो मसिः। दस्मम्। ‘ इषियुधीन्धिदसिश्याधूसूभ्यो मक् ’ ( उ. सू. १. १४२ ) इति मक्प्रत्ययः ॥ ॥ २५ ॥

‘ कद्रुद्राय ’ इति नवर्चमष्टमं सूक्तम्। अत्रानुक्रम्यते–‘ कद्रुद्राय नव रौद्रं तृतीया मैत्रावरुणी चान्त्यस्तृचः सौम्योऽन्त्यानुष्टुप् ’ इति। घोरपुत्रः कण्व ऋषिः। गायत्री छन्दः। ‘ यास्ते प्रजाः ’ इत्यन्त्यानुष्टुप्। रुद्रो देवता। ‘ यथा नो मित्रः ’ इत्येषा मित्रावरुणदेवताका च। ‘ अस्मे सोम ’ इत्यादिरन्त्यस्तृचस्तु सौम्य एव। सर्वेषु रुद्रदेवताकेषु कर्मसु अनेन सूक्तेन दिगुपस्थानं कर्तव्यम्। तथा च सूत्रितं–‘ कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम् ’ ( आश्व. गृ. ४. ९. २१-२२ ) इति ॥

कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे ॥ १ ॥

कत् । रुद्राय । प्रऽचेतसे । मीळ्हुःऽतमाय । तव्यसे । वोचेम । शम्ऽतमम् । हृदे ॥ १ ॥

---

१. च-छ-श-स–वसु। २. च-न-श-स–ब्रुवते।

ᵛकत् कदा ᵛरुद्राय एतन्नामकाय देवाय ᵛशंतमम् अतिशयेन सुखकरं स्तोत्रं ᵛवोचेम पठेम। कीदृशाय। ᵛप्रचेतसे प्रकृष्टज्ञानयुक्ताय ᵛमीळ्हुष्टमाय सेक्तृतमाय अभीष्टकामवर्षायेत्यर्थः[1]। ᵛतव्यसे अतिशयेन प्रवृद्धाय ᵛहृदे अस्मदीयहृन्निष्ठाय॥ कत् कदा। अन्त्यलोपश्छान्दसः। रुद्राय। रोदयति सर्वमन्तकाले इति रुद्रः। 'रोदेर्णिलुक्च' (उ. सू. २. १७९) इति रक्प्रत्ययः। प्रचेतसे। 'चिती संज्ञाने'। प्रकृष्टं चेततीति प्रचेताः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च इति असुन् पूर्वपदप्रकृतिस्वरत्वं च। मीळ्हुष्टमाय। अतिशयेन मीढ्वान् मीळ्हुष्टमः। 'दाश्वान् साह्वान् मीढ्वांश्च' इति क्वसुप्रत्ययान्तो निपातितः। तमपि अयस्मयादित्वेन भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणम्। 'शासिवसिघसीनां च' इति षत्वम्। तव्यसे। तवतिर्वृद्ध्यर्थः सौत्रो धातुः। अतिशयेन तविता तवीयान्। 'तुश्छन्दसि' इति ईयसुन्प्रत्ययः। 'तुरिष्ठेमेयःसु' इति तृलोपः। ईयसुन ईकारलोपश्छान्दसः। नित्त्वादाद्युदात्तत्वम्। वोचेम। 'वच परिभाषणे'। 'लिङ्याशिष्यङ्'। 'वच उम्' इति उमागमः। यासुटः स्वरेण एकार उदात्तः। हृदे। 'पद्दन्°' इत्यादिना हृदयशब्दस्य हृदादेशः। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्॥

**यथा॑ नो॒ अदि॑तिः॒ कर॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑। यथा॑ तो॒काय॑ रु॒द्रिय॑म् ॥२॥**

यथा॑। नः॒। अदि॑तिः। कर॑त्। पश्वे॑। नृऽभ्यः॑। यथा॑। गवे॑। यथा॑। तो॒काय॑। रु॒द्रिय॑म् ॥२॥

ᵛअदितिः भूमिः ᵛनः अस्माकं ᵛरुद्रियं रुद्रसंबन्धि भेषजं ᵛयथा येन प्रकारेण सिध्यति ᵛकरत् तथा करोतु। किंच ᵛयथा येन प्रकारेण ᵛपश्वे अस्मदीयाश्वमहिषादिपशवे[2] ᵛनृभ्यः अस्मदीयपुरुषेभ्यो विशेषेण ᵛगवे गोजातये हितं रुद्रियं सिध्यति तथा करोतु। किंच ᵛतोकाय अस्मदीयापत्याय रुद्रियं ᵛयथा सिध्यति तथा करोतु। भेषजस्य रुद्रसंबन्धित्वं मन्त्रान्तरे समाम्नातं—'या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी' (तै. सं. ४. ५. १०. १) इति। गवादिविषयभेषजं चान्यत्र स्पष्टमाम्नातं–'भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजम्' (तै. सं. १. ८. ६. १) इति॥ करत्। 'डुकृञ् करणे'। लङि व्यत्ययेन शप्। यद्वा। लेटि अडागमः। 'इतश्च लोपः°' इति इकारलोपः। यद्वा। लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः। 'ऋदृशोऽङि गुणः' इति गुणः। आद्ययोः पक्षयोः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। तृतीये तु व्यत्ययेन। यद्वृत्तयोगादनिघातः। पश्वे। संज्ञापूर्वकस्य विधेरनित्यत्वात् 'घेर्ङिति' (पा. सू. ७. ३. १११) इति गुणाभावः। यणादेशः। नृभ्यः। 'नृ चान्यतरस्याम्' (पा. सू. ६. १. १८४) इति विभक्त्युदात्तत्वाभावः। गवे। 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः। रुद्रियम्। रुद्रशब्दात् तस्येदमित्यर्थे घप्रत्ययः॥

**यथा॑ नो मि॒त्रो वरु॑णो॒ यथा॑ रु॒द्रश्चिके॑तति। यथा॒ विश्वे॑ स॒जोष॑सः ॥ ३ ॥**

यथा॑। नः॒। मि॒त्रः। वरु॑णः। यथा॑। रु॒द्रः। चिके॑तति। यथा॑। विश्वे॑। स॒ऽजोष॑सः ॥३॥

ᵛमित्रो ᵛवरुणः च ᵛनः अस्मान् ᵛयथा येन प्रकारेण ᵛचिकेतति अनुग्राह्यत्वेन जानाति। ᵛरुद्रः अपि ᵛयथा चिकेतति। ᵛसजोषसः समानप्रीतयः ᵛविश्वे सर्वे देवाः ᵛयथा चिकेतन्ति तथा भवत्विति

---

१. च-छ-न-फ-अभीष्टकामवर्षकायेत्यर्थः। २. च-फ-अस्मदीयाश्वमहिष्यादिपशवे।

शेषः । यद्वा । यशःशब्दोपेतमन्त्रद्वयस्य तथा कदा वोचेमेति पूर्वत्रान्वयः ॥ चिकेततिं । 'कित ज्ञाने' । लेटि अडागमः । 'नाभ्यस्तस्य°' (पा. सू. ७. ३. ८७) इति गुणनिषेधो न भवति, 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् । सार्वधातुकत्वाच्च 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सजोषसः । 'जुषी प्रीतिसेवनयोः' । समानं जुषन्तीति सजोषसः । 'समानस्य च्छन्दसि' इति सभावः । असुनो नित्त्वादुत्तरपदस्याद्युदात्तत्वम् । तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन शिष्यते ॥

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥ ४ ॥

गाथऽपतिम् । मेधऽपतिम् । रुद्रम् । जलाषऽभेषजम् । तत् । शम्ऽयोः । सुम्नम् । ईमहे ॥४॥

ᵛरुद्रम् अभिलक्ष्य वयं ᵛशंयोः बृहस्पतिपुत्रस्य संबन्धि ᵛतत् प्रसिद्धं सर्वप्रजाभ्यो हितं ᵛसुम्नं सुखम् ᵛईमहे याचामहे । कीदृशं रुद्रम् । ᵛगाथपतिं स्तुतिपालकं ᵛमेधपतिं यज्ञपालकं ᵛजलाषभेषजं सुखरूपौषधोपेतम् । यद्वा । उदकरूपौषधोपेतम् । उदकं हि रुद्रनामाभिमन्त्रितं सत् औषधं भवति ॥ गाथपतिम् । गाथा इति वाङ्नाम, 'गाथा गणः' (नि. १. ११. ३७) इति तन्नामसु पठितत्वात् । वाग्रूपायाः स्तुतेः पतिर्गाथपतिः । 'कै गै रै शब्दे' । 'आदेचः°' इति आत्वम् । 'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति पूर्वपदस्य ह्रस्वत्वम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'सरद्वृधादीनां छन्दस्युपसंख्यानम्' इति पूर्वपदान्तोदात्तत्वम् । मेधपतिम् । पूर्ववत् । जलाषभेषजम् । 'जनी प्रादुर्भावे' । जायन्ते इति जाः । 'अन्येष्वपि दृश्यते' (पा. सू. ३. २. १०१) इति दृशिग्रहणात् केवलादपि डप्रत्ययः । लाषः । 'लष कान्तौ' । कान्तिरभिलाषः । भावे घञ् । जानां लाषो यस्मिन् तज्जलाषं सुखम् । जलाषरूपं भेषजं यस्मिन् रुद्रे स जलाषभेषजः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शंयोः । 'कंशंभ्याम्°' (पा. सू. ५. २. १३८) इति मत्वर्थीयो युस्प्रत्ययः । 'सिति च' (पा. सू. १. ४. १६) इति पदसंज्ञायाम् अनुस्वारपरसवर्णौ । प्रत्ययस्वरः ॥

यः शुक्रइव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥ ५ ॥

यः । शुक्रःऽइव । सूर्यः । हिरण्यम्ऽइव । रोचते । श्रेष्ठः । देवानाम् । वसुः ॥ ५ ॥

ᵛयः रुद्रः ᵛसूर्यः इव ᵛशुक्रः सूर्यवद्दीप्तिमान् ᵛहिरण्यमिव ᵛरोचते । यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि । स च ᵛदेवानां सर्वेषां मध्ये ᵛश्रेष्ठः ᵛवसुः निवासहेतुश्च ॥ रोचते । 'रुच दीप्तावभिप्रीत्यां च' । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । श्रेष्ठः । प्रशस्यतरः । प्रशस्यशब्दात् इष्ठनि 'प्रशस्यस्य श्रः' (पा. सू. ५. ३. ६०) इति श्रादेशः । नित्त्वादाद्युदात्तत्वम् । वसुः । वासयति सर्वमिति वसुः । 'वस निवासे' । अन्तर्भावितण्यर्थात् 'शॄस्वृस्निहि°' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ॥ ॥ २६ ॥

आग्निमारुते 'शं नः करति' इति धाय्या । 'अथ यथेतम्' इति खण्डे सूत्रितं– 'वैश्वानराय पृथुपाजसे शं नः करत्यर्वते' (आश्व. श्रौ. ५. २०) इति ॥

शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ ६ ॥

शम् । नः । करति । अर्वते । सुऽगम् । मेषाय । मेष्ये । नृऽभ्यः । नारिऽभ्यः । गवे ॥६॥

नः अस्माकं संबन्धिभ्यः अर्वदादिभ्यः सुगं सुष्ठु गम्यं शं सुखं करति देवः करोति । अर्वते अश्वाय । अर्वन्शब्दोऽश्वनाम, 'अर्वा वाजी' (नि. १. १४. ३) इति तन्नामसु पाठात् । मेषाय मेषजातिपुरुषाय मेष्ये तज्जातीयस्त्रियै नृभ्यः पुरुषेभ्यः नारिभ्यः स्त्रीभ्यः गवे गोजातये ॥ करति । 'डुकृञ् करणे' । व्यत्ययेन शप् । अर्वते । अर्तिं गच्छतीत्यर्वा । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । चतुर्थ्येकवचने 'अर्वणस्त्रसावनञः' इति नकारस्य तृआदेशः । वनिप्सुपौ पित्त्वादनुदात्तौ । धातुस्वरः । मेषाय । 'मिष स्पर्धायाम्' । पचाद्यच् 'देवसेनमेषादयः पचादिषु द्रष्टव्याः' इति वचनात् । मेष्ये । 'जातेरस्त्रीविषयादयोपधात्' (पा. सू. ४. १. ६३) इति ङीष्प्रत्ययः । प्रत्ययस्वरः । चतुर्थ्येकवचने आगमानुशासनस्यानित्यत्वात् आडागमाभावः । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' इति तु न भवति, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् । नृभ्यः । 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'नृ चान्यतरस्याम्' इति प्रतिषेधः । नारिभ्यः । 'नृनरयोर्वृद्धिश्च' (पा. सू. ४. १. ७३ ग.) इति शार्ङ्गरवादिषु पाठात् ङीन्प्रत्ययः । नित्त्वादाद्युदात्तः । गवे । 'न गोश्वन्साववर्ण°' इति विभक्त्युदात्तस्य प्रतिषेधः ॥

अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् । महि श्रवस्तुविनृम्णम् ॥७॥

अस्मे इति । सोम । श्रियम् । अधि । नि । धेहि । शतस्य । नृणाम् । महि । श्रवः । तुविऽनृम्णम् ॥७॥

हे सोम देव नृणां पुरुषाणां शतस्य पर्याप्तां श्रियम् अस्मे अस्मासु अधि नि धेहि आधिक्येन स्थापय । तथा महि महत् तुविनृम्णं प्रभूतबलयुक्तं श्रवः अन्नम् अधि नि धेहि ॥ अस्मे । 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः । नृणाम् । 'नृ च' (पा. सू. ६. ४. ६) इति दीर्घप्रतिषेधः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । महीत्यादयो गताः ॥

मा नः सोमपरिबाधो मारातयो जुहुरन्त । आ न इन्दो वाजे भज ॥ ८ ॥

मा । नः । सोमऽपरिबाधः । मा । अरातयः । जुहुरन्त । आ । नः । इन्दो इति । वाजे । भज ॥८॥

सोमपरिबाधः सोमस्य परितो बाधका यागरहिताः नः अस्मान् मा जुहुरन्त मा हिंसन्तु । तथा अरातयः शत्रवः मा जुहुरन्त । हे इन्दो सोम वाजे बलविषयेऽन्नविषये वा नः अस्मान् आ भज सर्वतः सेवस्व ॥ सोमपरिबाधः । सोमं परिबाधन्ते ये ते तादृशाः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अरातयः । 'रा दाने' । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि क्तिन् । यद्वा । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । जुहुरन्त । 'हृ प्रसह्यकरणे' । व्यत्ययेनात्मनेपदम् । लङि जुहोत्यादित्वात् श्लुः । 'बहुलं छन्दसि' (पा. सू. ७. १. १०३) इति बहुलवचनात् इकारस्यापि? उत्वम् । द्विर्भावहलादिशेषौ । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'अदभ्यस्तात्' (पा. सू. ७. १. ४) इति अदादेशाभावे सति 'झोऽन्तः' इति अन्तादेशः । 'न माङ्योगे' इति अडभावः ॥

यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न्धाम॑न्नृ॒तस्य॑ ।

मू॒र्धा नाभा॒ सोम॑ वेन आ॒भूष॑न्तीः सोम वेदः ॥ ९ ॥

याः । ते॒ । प्र॒ऽजाः । अ॒मृत॑स्य । पर॑स्मिन् । धाम॑न् । ऋ॒तस्य॑ ।

मू॒र्धा । नाभा॑ । सो॒म॒ । वे॒नः॒ । आ॒ऽभूष॑न्तीः । सो॒म॒ । वे॒दः॒ ॥ ९ ॥

हे ᵛसोम ᵛते तव संबन्धिन्यः ᵛयाः ᵛप्रजाः सन्ति स्तोत्रं वा कुर्वन्ति ताः प्रजाः ᵛमूर्धा शिरः-स्थानीयस्त्वं ᵛनाभा संनहनयुक्ते यज्ञगृहे ᵛवेनः कामयस्व । कीदृशस्य ते । ᵛअमृतस्य मरणरहितस्य ᵛपरस्मिन्धामन्नृतस्य उत्तमे स्थाने प्राप्तस्य । हे ᵛसोम ᵛआभूषन्तीः सर्वतस्त्वामलंकुर्वन्तीः प्रजाः ᵛवेदः जानीहि ॥ धामन् । 'सुपां सुलुक्°' इति सप्तम्या लुक् । नाभा । 'णह बन्धने'। 'नहो भश्च' (उ. सू. ४. ५६५) इति कर्मणि इञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । 'सुपां सुलुक्°' इति सप्तम्या डादेशः । वेनः । 'वेनतिः कान्तिकर्मा' (नि. २.६.४)। लेटि सिपि अडागमः । 'तिङ्ङतिङः' इति निघातः । आभूषन्तीः । 'भूष अलंकारे'। भौवादिकः । शपः पित्त्वादनुदात्तत्वम्, शतुश्च लसार्वधातुकस्वरेण। धातुस्वरेण[1] आद्युदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। वेदः । 'विद ज्ञाने'। लेटि सिपि अडागमः ॥ ॥ २७ ॥ ॥ ८ ॥

नवमेऽनुवाके सप्त सूक्तानि । तत्र 'अग्ने विवस्वत्' इति चतुर्दशर्चं प्रथमं सूक्तम् । अत्रानुक्रमणिका—'अग्ने पञ्चना प्रस्कण्वः काण्व आग्नेयं तु प्रागाथमाद्यौ द्व्यौऽश्व्युषस्यां च' इति । कण्वपुत्रः प्रस्कण्व ऋषिः । अत्र द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रथमातृतीयाद्या अयुजो बृहत्यः । कृत्स्नं सूक्तमाग्नेयमुत्तरं च । आद्ये द्वे अश्विदेवताके उषोदेवताके च । प्रातरनुवाके आग्नेये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'अथैतस्या रात्रेः' इति खण्डे सूत्रितम्—'अग्ने विवस्वत्सखायस्त्वा' (आश्व. श्रौ. ४. १३) इति । वाजपेये आग्निमारुते आद्यः प्रगाथोऽनुरूपः । 'वाजपेयेन' इति खण्डे सूत्रितं—'चित्रवतीषु चेत् स्तुवीरंस्त्वं नश्चित्र ऊत्याग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ' (आश्व. श्रौ. ९. ९) इति । पर्यायव्युष्टौ आश्विनशस्त्रस्यायमेव प्रगाथः स्तोत्रियः । 'यदि पर्यायानभिव्युच्छेत्' इति खण्डे 'आश्विनायकस्तोत्रियोऽग्ने विवस्वदुषसः' (आश्व. श्रौ. ६. ६) इति सूत्रितम् ॥

अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य ।

आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुधः॑ ॥ १ ॥

अग्ने॑ । विव॑स्वत् । उ॒षसः॑ । चि॒त्रम् । राधः॑ । अ॒म॒र्त्य॒ ।

आ । दा॒शुषे॑ । जा॒त॒ऽवे॒दः॒ । व॒ह॒ । त्वम् । अ॒द्य । दे॒वान् । उ॒षः॒ऽबुधः॑ ॥ १ ॥

हे ᵛअग्ने ᵛत्वम् ᵛउषसः उषोदेवतायाः सकाशात् ᵛराधः धनं ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛआ ᵛवह आनीय प्रापय । सोऽग्निर्विशेष्यते । ᵛअमर्त्य मरणरहित ᵛजातवेदः जातानां वेदितः ।

1. च-छ-ग-त-न-फ-य-ल-श—'धातुस्वरेण' इति नास्ति ।

तमेतं शब्दं यास्को व्याचष्टे–‘ जातवेदाः कस्मात्। जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम्। तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पन्तीति च ’ ( निरु. ७. १९ ) इति। कीदृशं राधः। Vविवस्वत् विशिष्टनिवासोपेतं Vचित्रं नानाविधम्। किंच Vअद्य अस्मिन् दिने Vउषर्बुधः उषःकाले प्रबुद्धान् Vदेवान् आ वह ॥ विवस्वत्। विवासनं विवः तद्युक्तम्। ‘ वस निवासे ’। विपूर्वात् अन्तर्भावितण्यर्थात् संपदादिलक्षणो भावे क्विप्। ‘ तदस्यास्ति° ’ इति मतुप्। ‘ मादुपधायाः ’ इति वत्वम्। ‘ तसौ मत्वर्थे ’ इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः। वृषादित्वादाद्युदात्तत्वम्। राधः। ‘ राध साध संसिद्धौ ’। राध्नोत्यनेनेति राधो धनम्। करणेऽसुन्। नित्त्वादाद्युदात्तत्वम्। दाशुषे। ‘ दाशृ दाने ’। ‘ दाश्वान् साह्वान्° ’ इति क्वसुप्रत्ययान्तो निपातितः। चतुर्थ्येकवचने ‘ वसोः संप्रसारणम् ’ इति संप्रसारणम्। ‘ शासिवसि° ’ इति षत्वम्। जातवेदः। जातानि वेत्तीति जातवेदाः। ‘ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ’ इति असुन्। यद्वा। वेद इति धननाम। जातं धनं यस्य स तादृशः। आमन्त्रितनिघातः। वह। ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घत्वम्। देवान्। ‘ दीर्घादटि समानपादे ’ इति संहितायां नकारस्य रुत्वम्। ‘ आतोऽटि नित्यम् ’ इति सानुनासिक आकारः। उषर्बुधः। उषसि बुध्यन्ते इत्युषर्बुधः। ‘ बुध अवगमने ’। ‘ क्विप् च ’ इति क्विप्। रोः उत्वाभावश्छान्दसः। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम्।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ २ ॥

जुष्टः। हि। दूतः। असि। हव्यऽवाहनः। अग्ने। रथीः। अध्वराणाम्।
सऽजूः। अश्विऽभ्याम्। उषसा। सुऽवीर्यम्। अस्मे इति। धेहि। श्रवः। बृहत् ॥ २ ॥

हे Vअग्ने त्वं जुष्टत्वादिविशेषगुणयुक्तः Vअसि। Vजुष्टः सेवितः Vदूतः देवानां वार्ताहारः Vहव्यवाहनः हविषो वोढा Vअध्वराणां क्रतूनां Vरथीः रथस्थानीयः। तथा च मन्त्रान्तरं ब्राह्मणेनैव[1] व्याख्यातं–‘ रथीरध्वराणामित्याहैष हि देवरथः ’ (तै. सं. २. ५. ९. २ ) इति। ब्राह्मणान्तरं च–‘ रथीरध्वराणामित्याह रथो ह वा एष भूतो देवेभ्यो हव्यं वहति ’ इति। तादृशस्त्वम् Vअश्विभ्यां देवताभ्यां Vउषसा देवतया च Vसजूः सहितो भूत्वा Vसुवीर्यं शोभनवीर्योपेतं Vबृहत् प्रभूतं Vश्रवः अन्नम् Vअस्मे Vधेहि अस्मासु प्रक्षिप ॥ जुष्टः। ‘ जुषी प्रीतिसेवनयोः ’। ‘ नित्यं मन्त्रे° ’ (पा.सू.६. १.२१०) इत्याद्युदात्तत्वम्। असि। सिपि ‘ तासस्त्योर्लोपः ’ (पा. सू. ७. ४. ५०) इति सलोपः। ‘ हि च ’ इति निघातप्रतिषेधः। हव्यवाहनः। हव्यं वहतीति हव्यवाहनः। ‘ हव्येऽनन्तःपादम् ’ (पा. सू. ३. २. ६६ ) इति ञ्युट्। योरनादेशः। ञित्त्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम्। अग्ने। पादादित्वादाष्टमिकनिघाताभावः। रथीः। रथशब्दात् स्वार्थिक ईकारप्रत्ययः। अध्वराणाम्। ध्वरो नास्त्येष्विति बहुव्रीहौ ‘ नञ्सुभ्याम्° ’ इत्युत्तरपदान्तोदात्तत्वम्। सुवीर्यम्। ‘ वीरवीर्यौ च ’ इत्युत्तरपदाद्युदात्तत्वम्। अस्मे। ‘ सुपां सुलुक्° ’ इति सप्तम्याः शेआदेशः ॥

---

१. च-फ–ब्राह्मणेनैवम्।

अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम् ।
धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ॥ ३ ॥

अद्य । दूतम् । वृणीमहे । वसुम् । अग्निम् । पुरुऽप्रियम् ।
धूमऽकेतुम् । भाःऽऋजीकम् । विऽउष्टिषु । यज्ञानाम् । अध्वरऽश्रियम् ॥ ३ ॥

अद्य अस्मिन् दिने अग्निं वृणीमहे प्रार्थयामहे । कीदृशम् । दूतं वार्ताहारं वसुं निवासहेतुं पुरुप्रियं बहूनां प्रियं धूमकेतुं धूमरूपध्वजयुक्तं भाऋजीकं प्रसिद्धभासालंकृतम् । ' भाऋजीकः प्रसिद्धभाः ' ( निरु. ६.४ ) इति यास्कवचनम् । व्युष्टिषु उषःकालेषु यज्ञानां यजमानानाम् अध्वरश्रियं यागसेविनम् ॥ अद्य । ' निपातस्य च ' इति दीर्घत्वम् । पुरूणां प्रियः पुरुप्रियः । ' समासस्य ' इत्यन्तोदात्तत्वम् । धूमकेतुम् । ' इषियुधीन्धि° ' ( उ. सू. १. १४२ ) इत्यादिना धूमशब्दो मक्प्रत्ययान्तः अन्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । भाऋजीकम् । ' ऋज गतिस्थानार्जनोपार्जनेषु ' । ' ऋजेश्च ' ( उ. सू. ४. ४६२ ) इति ईकन्प्रत्ययः । किर्त्त्वस्यानुवर्तनात् गुणाभावः । भासः प्रकाशस्य ऋजीकः प्रार्जयिता । ' आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ' इति पूर्वपदाद्युदात्तत्वम् । यद्वा । भासोऽर्जनं यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्युष्टिषु । ' उछी विवासे ' । विवासो वर्जनम् । विशेषेणोच्छ्यन्ते तमसा वर्ज्यन्ते इति व्युष्टयः उषःकालाः। कर्मणि क्तिन् । ' तितुत्र° ' इत्यादिना इट्प्रतिषेधः । व्रश्चादिना षत्वे ष्टुत्वम् । ' तादौ च° ' इति पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे ' उदात्तस्वरितयोर्यणः° ' इति परस्यानुदात्तस्य स्वरितत्वम् । अध्वरश्रियम् । अध्वरं श्रयते इत्यध्वरश्रीः । ' क्विब्वचि° ' ( उ. सू. २. २१५ ) इत्यादिना क्विप्प्रत्ययः; तत्संनियोगेन संप्रसारणाभावो दीर्घश्च । द्वितीयैकवचने ' अचि श्नुधातु° ' इत्यादिना इयङादेशः ॥

श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥ ४ ॥

श्रेष्ठम् । यविष्ठम् । अतिथिम् । सुऽआहुतम् । जुष्टम् । जनाय । दाशुषे ।
देवान् । अच्छ । यातवे । जातऽवेदसम् । अग्निम् । ईळे । विऽउष्टिषु ॥ ४ ॥

व्युष्टिषु उषःकालेषु देवान् इतरान् सर्वदेवान् अच्छ आभिमुख्येन यातवे गन्तुम् अग्निं देवम् ईळे स्तौमि । कीदृशम् । श्रेष्ठम् अतिशयेन प्रशस्तं यविष्ठं युवतमम् अतिथिं सततगमनक्षमं स्वाहुतं सुष्ठु आ समन्तात् होमाधिकरणं दाशुषे हविर्दत्तवते जनाय यजमानाय जुष्टं प्रीतं जातवेदसं जातानां वेदितारम् ॥ यविष्ठम् । युवशब्दात् इष्ठनि ' स्थूलदूर° ' इत्यादिना यणादेः परस्य लोपः । पूर्वस्य च गुणः । अवादेशः । नित्त्वादाद्युदात्तत्वम् । अतिथिम् । ' अत सातत्यगमने ' । ' ऋतन्यञ्जि° ' ( उ. सू. ४. ४४२ ) इत्यादिना इथिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । स्वाहुतम् । ' हु दानादनयोः ' । आहूयतेऽस्मिन्निति आहुतः । ' सुः पूजायाम् ' ( पा. सू. १. ४. ९४ ) इति सुशब्दस्य कर्मप्रवचनीयसंज्ञायां ' स्वती पूजायाम् ' ( पा. म. २. २. १८. ४ ) इति समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । न च ' गतिकारकोपपदात्कृत् ' इति गतेः प्रकृतिस्वरत्वम् , अस्य सुशब्दस्य गतिसंज्ञाया बाधितत्वात् ॥

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥ ५ ॥

स्तविष्यामि । त्वाम् । अहम् । विश्वस्य । अमृत । भोजन ।
अग्ने । त्रातारम् । अमृतम् । मियेध्य । यजिष्ठम् । हव्यऽवाहन ॥ ५ ॥

हे अमृत मरणरहित विश्वस्य भोजन कृत्स्नस्य जगतः पालक हव्यवाहन हविषो वोढः मियेध्य यज्ञार्ह एवंविध हे अग्ने विश्वस्य त्रातारं सर्वस्य जगतो रक्षकम् अमृतं मरणरहितं यजिष्ठम् अतिशयेन यष्टारं त्वामहम् अनुष्ठाता स्तविष्यामि स्तुतिं करिष्यामि ॥ स्तविष्यामि । 'ष्टुञ् स्तुतौ' । व्यत्ययेन इडागमः । आगमानुदात्तत्वे प्रत्ययस्वरः । भोजन । कर्मफलं भोजयतीति भोजनः । नन्द्यादिलक्षणो ल्युः । त्रातारम् । 'त्रैङ् पालने' । 'आदेचः०' इति आत्वम् । तृचि 'एकाच उपदेशे०' इति इट्प्रतिषेधः । अमृतम् । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मियेध्य । इयागमश्छान्दसः । यजिष्ठम् । यष्टृशब्दात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः ॥ ॥२८॥

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥ ६ ॥

सुऽशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः ।
प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे । नमस्य । दैव्यम् । जनम् ॥ ६ ॥

हे यविष्ठ्य युवतमाग्ने त्वं गृणते स्तुवते यजमानार्थं सुशंसः सुष्ठु शंसनीयः मधुजिह्वः मादयितृज्वालः स्वाहुतः सुष्ठु आभिमुख्येन हुतः सन् बोधि अस्मदभिप्रायं बुध्यस्व । किंच प्रस्कण्वस्य एतन्नामकस्य कण्वपुत्रस्य महर्षेः । 'प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवः' (निरु. ३. १७) इति यास्कवचनात् । तस्य जीवसे जीवनार्थम् आयुः प्रतिरन् प्रकर्षेण वर्धयन् दैव्यं देवसंबन्धिनं जनं नमस्य पूजय ॥ सुशंसः । 'शंसु स्तुतौ' । भावे घञ् । शोभनः शंसो यस्यासौ सुशंसः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । बोधि । 'बुध अवगमने' । लोटो हिः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः । 'वा छन्दसि' इति अपित्त्वस्य विकल्पितत्वात् लघूपधगुणः । धातोरन्त्यलोपश्छान्दसः । गृणते । 'गॄ शब्दे' । लटः शतृ । 'क्र्यादिभ्यः श्ना' । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । यविष्ठ्य । गतम् । प्रस्कण्वस्य । प्रभूतिरुत्पत्तिः कण्वाद्यस्य स प्रस्कण्वः । 'प्रस्कण्वहरिश्चन्द्रावृषी' (पा. सू. ६. १. १५३) इति सुडागमो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । प्रतिरन् । प्रपूर्वस्तिरतिर्वर्धनार्थः । नमस्य । 'नमोवरिवश्चित्रङः क्यच्' (पा. सू. ३. १. १९) इति पूजार्थे क्यच् । प्रत्ययस्वरः । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । दैव्यम् । 'देवाद्यञञौ' (पा. सू. ४. १. ८५. ३) इति तस्येदमित्यर्थे प्राग्दीव्यतीयो यञ्प्रत्ययः ॥

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥ ७ ॥

होतारम् । विश्वऽवेदसम् । सम् । हि । त्वा । विशः । इन्धते ।
सः । आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ॥ ७ ॥

ᵛहोतारं होमनिष्पादकं ᵛविश्ववेदसं सर्वज्ञं त्वामग्निं ᵛविशः प्रजाः ᵛसम् ᵛइन्धते ᵛहि सम्यग्दीपयन्ति खलु । हे ᵛपुरुहूत बहुभिराहूत ᵛअग्ने ᵛसः त्वं ᵛप्रचेतसः प्रकृष्टज्ञानयुक्तान् ᵛदेवान् ᵛइह कर्मणि ᵛद्रवत् क्षिप्रम् ᵛआ ᵛवह आभिमुख्येन प्रापय । द्रवत् इति क्षिप्रनाम, 'द्रवत् ओपम्' ( नि. २. १५. ३ ) इति तन्नामसु पाठात् ॥ विश्ववेदसम् । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । वेद इति धननाम । विश्वानि वेदांसि यस्यासौ विश्ववेदाः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । इन्धते । 'ञिइन्धी दीप्तौ' । 'श्नसोरल्लोपः' इति अकारलोपः । 'श्नान्नलोपः' । प्रत्ययस्वरः । 'हि च' इति निघातप्रतिषेधः ॥

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥ ८ ॥

सवितारम् । उषसम् । अश्विना । भगम् । अग्निम् । विऽउष्टिषु । क्षपः ।
कण्वासः । त्वा । सुतऽसोमासः । इन्धते । हव्यऽवाहम् । सुऽअध्वर ॥ ८ ॥

हे ᵛस्वध्वर शोभनयागयुक्ताग्ने ᵛव्युष्टिषु उषःकालेषु सवित्रादीन् देवान् आवह इत्यनुवर्तते । स्वध्वर इत्याहवनीयाग्नेः संबोधनम् । अग्निम् इति हविष उद्देश्यं देवतान्तरमुच्यते । ᵛसुतसोमासः अभिषुतसोमाः ᵛकण्वासः मेधाविन ऋत्विजः ᵛहव्यवाहं हविषः प्रापकमाहवनीयं त्वाम् ᵛइन्धते दीपयन्ति ॥ व्युष्टिषु । 'उछी विवासे' । विवासो वर्जनम् । व्युच्छ्यते तमसा वर्ज्यते इति व्युष्टिः उषःकालः । कर्मणि क्तिनि 'तादौ च निति°' इति गतेः प्रकृतिस्वरत्वम् । संहितायाम् 'उदात्तस्वरितयोर्यणः°' इति परस्यानुदात्तस्य स्वरितत्वम् । क्षपः । क्षपा इति रात्रिनाम । ङसि 'आतो धातोः' ( पा. सू. ६. ४. १४० ) इत्यत्र आत इति योगविभागात् आकारलोपः । सुतसोमासः । सुतः सोमो यैः । 'निष्ठा' ( पा. सू. २. २. ३६) इति पूर्वनिपातः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हव्यवाहम् । हव्यं वहतीति हव्यवाट् । 'वहश्च' इति ण्विप्रत्ययः ॥

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ ९ ॥

पतिः । हि । अध्वराणाम् । अग्ने । दूतः । विशाम् । असि ।
उषःऽबुधः । आ । वह । सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥ ९ ॥

हे अग्ने विशां प्रजानां संबन्धिनो येऽध्वरा यागास्तेषां पतिः पालकस्त्वं दूतः असि हि देवानां वार्ताहारो भवसि खलु । उषर्बुधः उषःकाले प्रबुद्धान् स्वर्दृशः सूर्यदर्शिनो देवान् अद्य अस्मिन् दिने सोमपीतये सोमपानार्थम् आ वह आभिमुख्येन प्रापय ॥ असि । 'हि च' इति निघातप्रतिषेधः । सोमपीतये । 'पा पाने' । 'स्थागापापचो भावे' (पा. सू. ३. ३. ९) इति भावे क्तिन् । 'घुमास्था॰' इति ईत्वम् । सोमस्य पीतिः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । स्वर्दृशः । सुष्ठु अर्तिं गच्छतीति स्वरादित्यः । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । तं पश्यन्तीति स्वर्दृशः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्वविता पुरोहितोऽसि यज्ञेषु मानुषः ॥ १० ॥

अग्ने । पूर्वाः । अनु । उषसः । विभावसो इति विभाऽवसो । दीदेथ । विश्वऽदर्शतः ।
असि । ग्रामेषु । अविता । पुरःऽहितः । असि । यज्ञेषु । मानुषः ॥ १० ॥

हे विभावसो विशिष्टप्रकाशनरूपधनवन् अग्ने विश्वदर्शतः सर्वैर्दर्शनीयस्त्वं पूर्वाः उषसः अनु अतीतानुषःकालाननुलक्ष्य दीदेथ दीप्तवानसि । तादृशस्त्वं ग्रामेषु जननिवासस्थानेषु अविता असि रक्षको भवसि । यज्ञेषु अनुष्ठेयकर्मसु पुरोहितः वेदेः पूर्वस्यां दिश्यवस्थितः मानुषः असि ऋत्विग्यजमानानां मनुष्याणां हितोऽसि ॥ दीदेथ । दीदेतिश्छान्दसो दीप्तिकर्मा । आगमानुशासनस्य अनित्यत्वात् इडभावः । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का. ६. १. ८. १) इति वचनात् द्विर्वचनाभावः । विश्वदर्शतः विश्वैर्दर्शनीयः । 'भृमृदृशि॰' इत्यादिना दृशेः अतच् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् (पा. सू. ६. २. १०६. २) । पुरोहितः । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा. सू. ५. ३. ३९) इति असिप्रत्ययान्तः पुरस्शब्दः । 'तद्धितश्चासर्वविभक्तिः' (पा. सू. १. १. ३८) इति अव्ययत्वात् 'पुरोऽव्ययम्' (पा. सू. १. ४. ६७) इति गतिसंज्ञायां सत्यां गतिसमासे 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥　　॥ २९ ॥

नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।
मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यम् ॥ ११ ॥

नि । त्वा । यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् ।
मनुष्वत् । देव । धीमहि । प्रऽचेतसम् । जीरम् । दूतम् । अमर्त्यम् ॥ ११ ॥

हे अग्ने देव मनुष्वत् यथा मनुर्यागदेशे निदधाति तद्वद्वयं त्वां नि धीमहि अत्र स्थापयामः । कीदृशम् । यज्ञस्य साधनं यज्ञनिष्पादकं होतारमृत्विजं ऋतौ वसन्तादिके यष्टारं प्रचेतसं प्रकृष्टज्ञानयुक्तं जीरं शत्रूणां वयोहानिकरं दूतं देवानां दूतस्थानीयम् अमर्त्यं मरणरहितम् ॥ मनुष्वत् । औणादिकोसिप्रत्ययान्तो मनुस्शब्दः । 'तेन तुल्यं क्रिया चेद्वतिः' (पा. सू. ५. १. ११५) इति वतिप्रत्ययः । अयस्मयादित्वेन भत्वात् रुत्वाद्यभावः । धीमहि । 'डुधाञ् धारणपोषणयोः' । लिङि

अभ्यासलोपश्छान्दसः। जीरम्। जु इति सौत्रो धातुः। 'जोरी च' (उ. सू. २. १८१) इति रक्प्रत्ययः। कात्यायनस्त्वाह–रकि ज्यः संप्रसारणे जीरेति (पा. सू. १. १. ४. ६)॥

यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम्।
सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः॥ १२॥

यत्। देवानाम्। मित्रऽमहः। पुरःऽहितः। अन्तरः। यासि। दूत्यम्।
सिन्धोःऽइव। प्रऽस्वनितासः। ऊर्मयः। अग्नेः। भ्राजन्ते। अर्चयः॥ १२॥

हे ᵛमित्रमहः मित्राणां पूजकाग्ने ᵛयत् यदा ᵛपुरोहितः त्वं वेदैः पूर्वस्यां दिशि स्थापितः ᵛअन्तरः देवयजनमध्ये वर्तमानः सन् ᵛदेवानां ᵛदूत्यं दूतकर्म ᵛयासि प्राप्नोषि, तदानीम् ᵛअग्नेः तव ᵛअर्चयः दीप्तयः ᵛभ्राजन्ते दीप्यन्ते। तत्र दृष्टान्तः। ᵛसिन्धोरिव। यथा समुद्रस्य ᵛप्रस्वनितासः प्रकृष्टध्वनियुक्ताः ᵛऊर्मयः तरङ्गा भ्राजन्ते तद्वत्॥ मित्रमहः। 'मह पूजायाम्'। मित्रैर्ऋत्विग्भिर्मह्यते पूज्यते इति मित्रमहाः। औणादिकोऽसुन्। यासि। यद्वृत्तयोगादनिघातः। दूत्यम्। दूतस्य कर्म दूत्यम्। 'दूतस्य भागकर्मणी' (पा. सू. ४. ४. १२०) इति यत्प्रत्ययः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितम्' इति स्वरितत्वम्। प्रस्वनितासः। 'स्यमु स्वन ध्वन शब्दे'। भावे निष्ठा। प्रकृष्टं स्वनितं येषां ते प्रस्वनिताः। असुगागमः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। ऊर्मयः। 'अर्तेरूच्च' (उ. सू. ४. ४८४) इति मिप्रत्ययः॥

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम्॥ १३॥

श्रुधि। श्रुत्ऽकर्ण। वह्निऽभिः। देवैः। अग्ने। सयावऽभिः।
आ। सीदन्तु। बर्हिषि। मित्रः। अर्यमा। प्रातःऽयावानः। अध्वरम्॥ १३॥

हे ᵛश्रुत्कर्ण श्रवणसमर्थाभ्यां कर्णाभ्यां युक्त ᵛअग्ने ᵛश्रुधि अस्मदीयं वचनं शृणु। यः ᵛमित्रः देवो यश्च ᵛअर्यमा ये चान्ये ᵛप्रातर्यावाणः प्रातःकाले[1] देवयजनं गच्छन्तो देवास्तैः सर्वैः ᵛसयावभिः आहवनीयाग्निना त्वया समानगतिभिरन्यैः ᵛवह्निभिर्देवैः सह ᵛअध्वरं क्रतुमुद्दिश्य ᵛबर्हिषि दर्भे ᵛआ ᵛसीदन्तु उपविशन्तु॥ श्रुधि। 'श्रु श्रवणे'। 'श्रुशृणु°' इत्यादिना हेर्धिरादेशः। 'बहुलं छन्दसि' इति विकरणस्य लुक्। श्रुत्कर्ण। शृणोतीति श्रुत्। क्विपि तुगागमः। श्रुतौ कर्णौ यस्यासौ श्रुत्कर्णः। वह्निभिः। 'वह प्रापणे'। 'वहिश्रियुश्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्ययः। नित्त्वादाद्युदात्तत्वम्। सयावभिः। समानं यान्तीति सयावानः। 'या प्रापणे'। 'आतो मनिन्°' इति वनिप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। प्रातर्यावाणः। पूर्ववत् 'प्रातिपदिकान्तनुम्विभक्तिषु च' (पा. सू. ८. ४. ११) इति णत्वम्॥

---

१. च-छ-न-फ-श-स–प्रातः प्रातःकाले।

**शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।**
**पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ १४ ॥**

शृण्वन्तु । स्तोमम् । मरुतः । सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः ।
पिबतु । सोमम् । वरुणः । धृतऽव्रतः । अश्विऽभ्याम् । उषसा । सऽजूः ॥ १४ ॥

ᵛमरुतः देवाः ᵛस्तोमम् अस्मदीयं स्तोत्रं ᵛशृण्वन्तु । कीदृशाः । ᵛसुदानवः सुष्ठु फलस्य दातारः ᵛअग्निजिह्वाः अग्निर्जिह्वास्थानीयो मुख्यो येषु मरुत्सु तादृशाः ᵛऋतावृधः सत्यस्य यज्ञस्य वा वर्धकाः । तथा ᵛधृतव्रतः गृहीतकर्मा ᵛवरुणः देवः ᵛअश्विभ्यां देवाभ्याम् ᵛउषसा देवतया ᵛसजूः सह ᵛसोमं ᵛपिबतु ॥ सुदानवः । ‘ डुदाञ् दाने ’ । ‘ दाभाभ्यां नुः ’ ( उ. सू. ३. ३१२ ) इति भावे नुप्रत्ययः । दानुशब्द आद्युदात्तः । शोभनं दानु येषाम् । ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् । अग्निजिह्वाः । अग्नेर्जिह्वायामवस्थिताः हविर्भाज इत्यर्थः । तात्स्थ्यात् ताच्छब्द्यम् । अग्निर्जिह्वास्थानीयो येषां ते । छान्दसमन्तोदात्तत्वम् । ऋतावृधः । ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः । वृधेः अन्तर्भावितण्यर्थात् ‘ क्विप् च ’ इति क्विप् । ‘ अन्येषामपि दृश्यते ’ इति पूर्वपदस्य दीर्घत्वम् ॥ ॥ ३० ॥

‘ त्वमग्ने वसून् ’ इति दशर्चं द्वितीयं सूक्तम् । अत्रानुक्रमणिका–‘ त्वमग्ने दशानुष्टुभमर्धर्चोऽन्त्यो दैवः ’ इति । प्रस्कण्व ऋषिः । आनुष्टुभं छन्दः । इदं सूक्तमग्निदेवताकं, पूर्वत्र ‘ आग्नेयं तु ’ इत्युक्तत्वात् । ‘ अयं सोमः ’ इत्यर्धर्चो देवदेवत्यः । प्रातरनुवाके आग्नेये क्रतौ आश्विनशस्त्रे चैतत्सूक्तम् । ‘ अथैतस्या रात्रेः ’ इति खण्डे सूत्रितं—‘ त्वमग्ने वसूँस्त्वं हि क्षैतवत् ’ ( आश्व. श्रौ. ४. १३ ) इति । तथा गर्गत्रिरात्रस्यान्त्येऽहनि एतत्सूक्तमाज्यशस्त्रम् । ‘ आङ्गिरसं स्वर्गकामः ’ इति खण्डे सूत्रितं–‘ वारवन्तीयमुत्तमे त्वमग्ने वसूँरिति चाज्यम् ’ ( आश्व. श्रौ. १०. २ ) इति ॥

**त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।**
**यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ १ ॥**

त्वम् । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत ।
यज । सुऽअध्वरम् । जनम् । मनुऽजातम् । घृतऽप्रुषम् ॥ १ ॥

हे ᵛअग्ने ᵛत्वम् ᵛइह कर्मणि वस्वादीन् ᵛयज[1] । ᵛउत अपि च ᵛजनम् अन्यमपि देवतारूपं प्राणिनं यज । कीदृशम् । ᵛस्वध्वरं शोभनयागयुक्तं ᵛमनुजातं मनुना प्रजापतिनोत्पादितं ᵛघृतप्रुषम् उदकस्य सेक्तारम् ॥ यज । ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घत्वम् । स्वध्वरम् । शोभनोऽध्वरो यस्यासौ स्वध्वरः । ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । मनुजातम् । जनेः अन्तर्भावितण्यर्थात् कर्मणि क्तः । ‘ तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम् । घृतप्रुषम् । ‘ प्रुष प्लुष स्नेहनसेचनपूरणेषु ’ । घृतेनोदकेन प्रुष्णाति पूरयतीति घृतप्रुट् । ‘ क्विप् च ’ इति क्विप् ॥

---

१. श–‘ यज ’ नास्ति ।

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।
तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥ २ ॥

श्रुष्टीऽवानः । हि । दाशुषे । देवाः । अग्ने । विऽचेतसः ।
तान् । रोहित्ऽअश्व । गिर्वणः । त्रयःऽत्रिंशतम् । आ । वह ॥ २ ॥

हे अग्ने विचेतसः विशिष्टप्रज्ञानाः देवाः दाशुषे हविर्दत्तवते यजमानाय श्रुष्टीवानो हि । श्रुष्टिः फलस्य दानम् । तद्भाजः खलु । हे रोहिदश्व रोहिताख्यकैरश्वैरुपेत गिर्वणः गीर्भिः स्तुतिभिर्वननीयाग्ने । ' गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति ' ( निरु. ६. १४ ) इति यास्कः । त्रयस्त्रिंशतम् अनया संख्यया संख्यातान् तान् देवान् आ वह इहानय ॥ श्रुष्टीवानः । श्रुष्टिः प्रेरणार्थः । भावे क्तिच्[1] । श्रुष्टिं वनन्ति संभजन्ते इति श्रुष्टीवानः । ' अन्येभ्योऽपि दृश्यन्ते ' इति विच् । छान्दसं दीर्घत्वम् । विचेतसः । विशिष्टं चेतो येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । गिर्वणः । गीर्भिर्वननीयो गिर्वणाः । वनतेः असुन् । पूर्वपदस्य ह्रस्वत्वं छान्दसम् । त्रयश्च त्रिंशच्च त्रयस्त्रिंशत् । ' त्रेस्त्रयः ' ( पा. सू. ६. ३. ४८ ) इति त्रिशब्दस्य त्रयसादेशः । ' संख्या ' ( पा. सू. ६. २. ३५ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥ ३ ॥

प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् ।
अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥ ३ ॥

हे महिव्रत प्रभूतकर्मन् जातवेदः अग्ने प्रस्कण्वस्य कण्वपुत्रस्य महर्षेः हवम् आह्वानं श्रुधि शृणु । तत्र चत्वारो दृष्टान्ताः । प्रियमेधात्रिविरूपाङ्गिरोनामका एतेषामाह्वानं यथा शृणोषि तद्वत् । अत्र निरुक्तं-' प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रम् ' इति, ' विरूपो नानारूपो महिव्रतो महाव्रतः ' ( निरु. ३. १७ ) इति च ॥ प्रियमेधवत् प्रियमेधस्येव । ' तत्र तस्येव ' ( पा. सू. ५. १. ११६ ) इति षष्ठ्यर्थे वतिः । एवम् अत्रिवत् इत्यादावपि । प्रस्कण्वादयो गताः ॥

महिकेरव ऊतये प्रियमेधा अहूषत ।
राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ॥ ४ ॥

महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत ।
राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥ ४ ॥

[1] च-छ-ण-न-फ-य-ल-श-स-क्तिन् ।

ᵛमहिकेरवः प्रौढकर्माणः ᵛप्रियमेधाः प्रियेण यज्ञेनोपेता ऋषयः ᵛऊतये रक्षार्थम् ᵛअग्निम् ᵛअहूषत आहूतवन्तः। कीदृशम्। ᵛअध्वराणां यज्ञानां मध्ये ᵛशुक्रेण ᵛशोचिषा शुद्धेन प्रकाशेन ᵛराजन्तं दीप्यमानम्॥ महिकेरवः। 'मह पूजायाम्'। औणादिक इन्प्रत्ययः। 'डुकृञ् करणे'। 'कृवापाजि°' इति उण्। महयो महान्तः कारवो येषां ते। तथोक्ताः। आकारस्य एकारादेशश्छान्दसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। प्रियमेधाः। प्रियो मेधो येषां ते। अहूषत। 'ह्वेञ् स्पर्धायां शब्दे च'। लुङि सिचि 'बहुलं छन्दसि' इति संप्रसारणम्। परपूर्वत्वम्। 'हलः' (पा. सू. ६. ४. २) इति दीर्घत्वम्। 'आदेशप्रत्यययोः' इति षत्वम्॥

घृताहवन सन्त्येमा उ षु श्रुधी गिरः।
याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा॥ ५॥

घृतऽआहवन। सन्त्य। इमाः। ऊँ इति। सु। श्रुधि। गिरः।
याभिः। कण्वस्य। सूनवः। हवन्ते। अवसे। त्वा॥ ५॥

हे ᵛघृताहवन घृतेनाहूयमान ᵛसन्त्य फलप्रदाग्ने ᵛइमा ᵛउ ᵛगिरः अस्माभिः प्रयुज्यमाना अपि स्तोत्ररूपा वाचः ᵛसु ᵛश्रुधि सुष्ठु शृणु। ᵛकण्वस्य महर्षेः ᵛसूनवः पुत्राः ᵛयाभिः गीर्भिः ᵛअवसे स्वरक्षार्थं ᵛत्वा ᵛहवन्ते त्वामाह्वयन्ति॥ घृताहवन। घृतेनाहूयतेऽस्मिन्निति घृताहवनः। अधिकरणे ल्युट्। आमन्त्रिताद्युदात्तत्वम्। श्रुधि। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः। 'बहुलं छन्दसि' इति विकरणस्य लुक्॥　　॥ ३१॥

अश्वमेधे पौष्ण्यामिष्टौ स्विष्टकृतोऽनुवाक्या 'त्वां चित्रश्रवस्तम' इत्येषा। 'सर्वान् कामानाप्स्यन्' इति खण्डे सूत्रितं—'त्वां चित्रश्रवस्तम यद्वाहिष्ठं तदग्नये' (आश्व. श्रौ. १०. ६) इति॥

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे॥ ६॥

त्वाम्। चित्रश्रवःऽतम। हवन्ते। विक्षु। जन्तवः।
शोचिःऽकेशम्। पुरुऽप्रिय। अग्ने। हव्याय। वोळ्हवे॥ ६॥

हे ᵛचित्रश्रवस्तम अतिशयेन विविधहवीरूपान्नयुक्त ᵛपुरुप्रिय बहूनां यजमानानां प्रीतिकर ᵛअग्ने ᵛत्वां ᵛहव्याय ᵛवोळ्हवे हविर्वोढुं ᵛविक्षु ᵛजन्तवः प्रजासूत्पन्ना यजमानाः ᵛहवन्ते आह्वयन्ति। कीदृशम्। ᵛशोचिष्केशं दीप्तिरूपकेशोपेतम्। तथा च वाजसनेयिन आमनन्ति—'शोचन्त इव ह्येतस्य समिद्धस्य रश्मयः केशाः' इति॥ चित्रश्रवस्तम। श्रव इत्यन्ननाम। चित्रं श्रवो यस्यासौ चित्रश्रवाः। अतिशयेन चित्रश्रवाः चित्रश्रवस्तमः। आमन्त्रितानुदात्तत्वम्। शोचिष्केशम्। 'शुच दीप्तौ'। 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' (उ. सू. २. २६५) इति इसिः। प्रत्ययस्वरः। बहु-

व्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। हव्याय। हवनक्रियया[1] प्राप्यत्वात् 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी। वोळ्हवे। 'वह प्रापणे'। 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः। ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' (पा. सू. ६.३.११२) इति अकारस्य ओकारः। नित्त्वादाद्युदात्तत्वम्॥

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम्।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु॥ ७॥

नि। त्वा। होतारम्। ऋत्विजम्। दधिरे। वसुवित्ऽतमम्।
श्रुत्ऽकर्णम्। सप्रथःऽतमम्। विप्राः। अग्ने। दिविष्टिषु॥ ७॥

हे अग्ने विप्राः मेधाविनः दिविष्टिषु यागेषु त्वां नि दधिरे स्थापितवन्तः। कीदृशम्। होतारम् आह्वातारम् ऋत्विजम् ऋतुषु यजनशीलं वसुवित्तमम् अतिशयेन धनस्य लम्भयितारं श्रुत्कर्णं श्रवणयोग्यकर्णोपेतं सप्रथस्तमम् अतिशयेन प्रख्यातम्॥ दधिरे। इरेचः चित्त्वादन्तोदात्तत्वम्। पादादित्वात् निघाताभावः। दिविष्टिषु। इष्टय एषणानि। दिवः स्वर्गस्य एषणानि येषु यागेषु ते दिविष्टयः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'दिव उत्' (पा. सू. ६. १. १३१) इति उत्वं न क्रियते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः।
बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे॥ ८॥

आ। त्वा। विप्राः। अचुच्यवुः। सुतऽसोमाः। अभि। प्रयः।
बृहत्। भाः। बिभ्रतः। हविः। अग्ने। मर्ताय। दाशुषे॥ ८॥

हे अग्ने सुतसोमाः अभिषुतसोमयुक्ताः विप्राः मेधाविन ऋत्विजः प्रयः अभि हविर्लक्षणमन्नमभिलक्ष्य त्वा आ अचुच्यवुः त्वामागमयन्ति। कीदृशं त्वाम्। बृहत् महान्तं भाः भासमानम्। कीदृशा विप्राः। दाशुषे मर्ताय हविर्प्रदस्य यजमानस्य संबन्धि हविः बिभ्रतः धारयन्तः॥ अचुच्यवुः। 'च्युङ् गतौ'। अस्मात् अन्तर्भावितण्यर्थात् लङि व्यत्ययेन परस्मैपदम्। 'बहुलं छन्दसि'. इति शपः श्लुः। 'सिजभ्यस्तविदिभ्यश्च' (पा. सू. ३. ४. १०९) इति झेर्जुसादेशः 'जुसि च' (पा. सू. ७. ३. ८३) इति गुणः। बृहत्। भाः। उभयत्र 'सुपां सुलुक्°' इति विभक्तेर्लुक्। बिभ्रतः। 'डुभृञ् धारणपोषणयोः'। शतरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। मर्ताय दाशुषे। उभयत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्य' (पा. सू. २. ३. ६२. १) इति चतुर्थी॥

---

१. च-छ-ण-त-न-फ-य-ल-श-स—हवनक्रियायाम्।

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य ।
इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥ ९ ॥

प्रातःऽयाव्नः । सहःऽकृत । सोमऽपेयाय । सन्त्य ।
इह । अद्य । दैव्यम् । जनम् । बर्हिः । आ । सादय । वसो इति ॥ ९ ॥

हे ᵛसहस्कृत बलेन मथित ᵛसन्त्य फलदातः ᵛवसो निवासहेतुभूताग्ने ᵛइह देवयजनदेशे ᵛअद्य अस्मिन् दिने ᵛसोमपेयाय सोमपानार्थं ᵛप्रातर्याव्णः प्रातरागच्छतो देवान् ᵛदैव्यं ᵛजनम् अन्यमपि देवताजनं ᵛबर्हिः ᵛआ ᵛसादय यज्ञं प्रापय ॥ प्रातर्याव्णः । शसि ' अल्लोपोऽनः ' इति अकारलोपः । सहस्कृत । सहतेऽभिभवत्यनेनेति सहो बलम् । तेन क्रियते इति सहस्कृतः । ' ओजःसहोऽम्भस्तमसस्तृतीयायाः ' ( पा. सू. ६. ३. ३ ) इति अलुगभावश्छान्दसः ॥

अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः ।
अयं सोमः सुदानवस्तं पात तिरोअह्न्यम् ॥ १० ॥

अर्वाञ्चम् । दैव्यम् । जनम् । अग्ने । यक्ष्व । सहूतिऽभिः ।
अयम् । सोमः । सुऽदानवः । तम् । पात । तिरःऽअह्न्यम् ॥ १० ॥

हे ᵛअग्ने ᵛअर्वाञ्चम् अभिमुखं ᵛदैव्यं ᵛजनं देवतारूपं प्राणिनं ᵛसहूतिभिः समानाह्वानैर्देवान्तरैः सह ᵛयक्ष्व यज । हे ᵛसुदानवः सुष्ठु फलदातारो देवाः ᵛअयं ᵛसोमः युष्मदर्थं सोमः पुरतो वर्तते । ᵛतं सोमं ᵛपात पिबत । कीदृशम् । ᵛतिरोअह्न्यम् एतन्नामकम् । पूर्वस्मिन् अह्नि अभिषुतो यः सोमः उत्तरेऽहनि हूयते तस्यैतन्नामधेयम् ॥ दैव्यम् । ' देवाद्यञञौ ' इति प्राग्दीव्यतीयो यञ् । यक्ष्व । लोटि ' बहुलं छन्दसि ' इति शपो लुक् । प्रत्ययस्वराभावश्छान्दसः । अग्ने इत्यस्य पादादौ वर्तमानस्य ' आमन्त्रितं पूर्वमविद्यमानवत् ' इत्यविद्यमानवत्त्वात् ' तिङ्ङतिङः ' इति निघाताभावः । सहूतिभिः । समाना हूतिराह्वानं येषां ते सहूतयः । ' समानस्य च्छन्दसि° ' इति सभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पात । ' पा पाने ' । ' बहुलं छन्दसि ' इति शपो लुक् । तिरोअह्न्यम् । अहनि भवम् अह्न्यम् । ' भवे छन्दसि ' इति यत् । ' नस्तद्धिते ' इति टिलोपो न भवति, ' अह्नष्टखोरेव ' ( पा. सू. ६. ४. १४५ ) इति नियमात् । भसंज्ञायाम् ' अल्लोपोऽनः ' इति अकारलोपः । ' ये चाभावकर्मणोः ' ( पा. सू. ६. ४. १६८) इति प्रकृतिभावस्तु सर्वविधीनां छन्दसि विकल्पितत्वात् न क्रियते । तिरोहितोऽह्न्यः तिरोअह्न्यः । ' प्रकृत्यान्तःपादम्° ' इति प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ३२ ॥

' एषो उषाः ' इति पञ्चदशर्चं तृतीयं सूक्तं प्रस्कण्वस्यार्षम् । इदमुत्तरं चाश्विनं गायत्रीच्छन्दस्कम् । अत्रानुक्रमणिका—' एषो पञ्चोनाश्विनं तु गायत्रम् ' इति । प्रातरनुवाके आश्विने क्रतौ गायत्रीच्छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । ' अथाश्विन एषो उषाः ' ( आश्व. श्रौ. ४. १५ ) इति सूत्रितम् ॥

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥ १ ॥

एषो इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥ १ ॥

एषो एषैवास्माभिः परिदृश्यमाना प्रिया सर्वेषां प्रीतिहेतुः अपूर्व्या पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना न भवति, किंतु इदानींतनी उषाः उषोदेवता दिवः द्युलोकस्य सकाशादागत्य व्युच्छति तमो वर्जयति । हे अश्विनौ वां युवां बृहत् प्रभूतं यथा भवति तथा स्तुषे स्तौमि ॥ स्तुषे । 'ष्टुञ् स्तुतौ' । 'तिङां तिङो भवन्ति' इति उत्तमैकवचनस्य मध्यमैकवचनादेशः । यद्वा । लेटि उत्तमैकवचने 'सिब्बहुलं लेटि' इति सिप् ॥

या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ॥ २ ॥

या । दस्रा । सिन्धुऽमातरा । मनोतरा । रयीणाम् । धिया । देवा । वसुऽविदा ॥ २ ॥

या देवा यावुभावश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुषे इति पूर्वत्रान्वयः । कीदृशौ । दस्रा दस्रौ दर्शनीयौ सिन्धुमातरा समुद्रमातृकौ । यद्यपि सूर्याचन्द्रमसावेव समुद्रजौ तथाप्यश्विनोः केषांचिन्मते तद्रूपत्वात् तथात्वम् । रयीणां धनानां मनोतरा मनसा तारयितारौ धिया कर्मणा वसुविदा निवासस्थानस्य लम्भयितारौ ॥ मनोतरा । मनसा तरतः इति मनोतरौ । तरतेः अन्तर्भावितण्यर्थात् 'ऋदोरप्' इति अप् । पूर्वपदान्तस्य सकारस्य रुत्वे सति छान्दसम् उत्वम् । रयीणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । धिया । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । वसुविदा । वसूनि निवासस्थानानि विन्देते इति वसुविदौ । 'क्विप् च' इति क्विप् ॥

वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद्वां रथो विभिष्पतात् ॥ ३ ॥

वच्यन्ते । वाम् । ककुहासः । जूर्णायाम् । अधि । विष्टपि । यत् । वाम् । रथः । विऽभिः । पतात् ॥ ३ ॥

हे अश्विनौ वां युवयोः संबन्धी रथः जूर्णायां नानाशास्त्रैः स्तुतायाम् अधि विष्टपि स्वर्गलोके यत् यदा विभिः अश्वैः पतात् पतति गच्छति तदानीं वां युवयोः ककुहासः स्तुतयः वच्यन्ते अस्माभिरुच्यन्ते ॥ वच्यन्ते । ब्रवीतेर्यकि 'ब्रुवो वचिः' (पा. सू. २. ४. ५३) इति वच्यादेशः । 'वचिस्वपि°' इत्यादिना संप्रसारणम् । 'संप्रसारणाच्च' इत्यत्र 'वा छन्दसि' इत्यनुवृत्तेः परपूर्वत्वस्य पाक्षिकत्वात् यणादेशः । प्रत्ययस्वरः । ककुहासः । 'ककुभं शृङ्गे विदुः प्रधाने च' इत्यभिधानात् प्राधान्याभिधायिना ककुप्शब्देन तत्प्रतिपादिकाः स्तुतयो लक्ष्यन्ते । हत्वं छान्दसम् । 'आज्जसेरसुक्' इति असुक् । जूर्णायाम् । 'जॄष् वयोहानौ' । अत्र स्तुत्यर्थो धातूनामनेकार्थत्वात् । निष्ठायां 'श्व्युकः किति' इति इट्प्रतिषेधः । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । 'रदाभ्याम्°' (पा. सू. ८. २. ४२) इति निष्ठानत्वम् । प्रत्ययस्वरः । विभिः । वी गत्यादौ । वियन्ति गच्छन्तीति वयः अश्वाः । औणादिको डिप्रत्ययः । पतात् । 'पत्लृ गतौ' । लेटि आडागमः । 'इतश्च लोपः°' इति इकारलोपः ॥

ह॒विषा॑ जा॒रो अ॒पां पिप॑र्ति॒ पपु॑रिर्नरा । पि॒ता कुट॑स्य चर्ष॒णिः ॥ ४ ॥

ह॒विषा॑ । जा॒रः । अ॒पाम् । पिप॑र्ति । पपु॑रिः । न॒रा॒ । पि॒ता । कुट॑स्य । च॒र्ष॒णिः ॥ ४ ॥

हे अश्विनौ देवौ <sup>v</sup>अपां <sup>v</sup>जारः स्वकीयतापेनोदकानां जरयिता सूर्यः <sup>v</sup>हविषा अस्मद्दत्तेन <sup>v</sup>पिपर्ति देवान् पूरयति । उदिते सूर्ये हविष्प्रदानात् सूर्यस्य पूरकत्वं द्रष्टव्यम् । अतः सूर्योदयकाले युवाभ्यामागन्तव्यमित्यर्थः । कीदृशो जारः । <sup>v</sup>पपुरिः उक्तक्रमेण पूरणस्वभावः <sup>v</sup>पिता पालकः <sup>v</sup>कुटस्य <sup>v</sup>चर्षणिः कर्मणो द्रष्टा । अत्र निरुक्तं–' हविषापां जरयिता पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः ' ( निरु. ५. २४ ) इति ॥ जारः । जरयतीति जारः आदित्यः । ' दारजारौ कर्तरि णिलुक् च ' ( पा. सू. ३. ३. २०. ४ ) इति घञन्तो निपातितः । ' कर्षात्वतः॰ ' इत्यन्तोदात्तत्वम् । अपाम् । ' ऊडिदम्॰ ' इति विभक्तेरुदात्तत्वम् । पिपर्ति । ' पॄ पालनपूरणयोः ' । तिपि जुहोत्यादित्वात् शपः श्लुः । ' अर्तिपिपर्त्योश्च ' इति अभ्यासस्य इत्वम् । ' अनुदात्ते च ' इति अभ्यस्तस्याद्युदात्तत्वम् । पपुरिः । ' आदृगमहन॰ ' इति किन्प्रत्ययः । लिड्वद्भावात् कित्त्वे सिद्धेऽपि पुनः कित्करणसामर्थ्यात् ' ऋच्छत्यृताम् ' ( पा. सू. ७. ४. ११ ) इति गुणाभावः । ' उदोष्ठ्यपूर्वस्य ' इति उत्वम् । नित्त्वादाद्युदात्तत्वम् ॥

आ॒दा॒रो वां॑ मती॒नां नास॑त्या मतवचसा । पा॒तं सोम॑स्य धृष्णु॒या ॥ ५ ॥

आ॒ऽदा॒रः । वा॒म् । म॒ती॒नाम् । नास॑त्या । म॒त॒ऽव॒च॒सा॒ । पा॒तम् । सोम॑स्य । धृ॒ष्णु॒ऽया ॥ ५ ॥

हे <sup>v</sup>मतवचसा अभिमतस्तोत्रौ <sup>v</sup>नासत्या अश्विनौ <sup>v</sup>वां युवयोः <sup>v</sup>मतीनां बुद्धीनाम् <sup>v</sup>आदारः प्रेरको यः सोमोऽस्ति <sup>v</sup>सोमस्य तं सोमं <sup>v</sup>पातं युवां पिबतम् । कीदृशं सोमम् । <sup>v</sup>धृष्णुया धर्षणशीलम् । मदकरत्वेन तीव्रमित्यर्थः ॥ आदारः । ' दृङ् आदरे ' । आदारयतीति आदारः । ' दारजारौ कर्तरि णिलुक्च ' इति घञ्प्रत्ययः । थाथादिना उत्तरपदान्तोदात्तत्वम् । मतीनाम् । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् । मतवचसा । मतमभिमतं स्तोत्ररूपं वचो ययोस्तौ । ' सुपां सुलुक्॰ ' इति विभक्तेः आकारः । पातम् । ' पा पाने ' । ' बहुलं छन्दसि ' इति शपो लुकि सति ' पाघ्रा॰ ' इत्यादिना पिबादेशो न भवति । सोमस्य । ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । धृष्णुया । ' सुपां सुलुक्॰ ' इति विभक्तेः याजादेशः ॥　॥ ३३ ॥

या नः॒ पीप॑रदश्विना॒ ज्योति॑ष्मती॒ तम॑स्ति॒रः । ताम॒स्मे रा॑साथा॒मिष॑म् ॥ ६ ॥

या । नः॒ । पीप॑रत् । अ॒श्विना॒ । ज्योति॑ष्मती । तमः॑ । ति॒रः ।

ताम् । अ॒स्मे इति॑ । रा॒सा॒था॒म् । इष॑म् ॥ ६ ॥

हे <sup>v</sup>अश्विना <sup>v</sup>ज्योतिष्मती रसवीर्यादिरूपज्योतिर्युक्ता <sup>v</sup>या इट् अन्नं <sup>v</sup>नः अस्मान् <sup>v</sup>पीपरत् पारयेत् तृप्तिं प्रापयेत् । किं कृत्वा । <sup>v</sup>तमः दारिद्र्यरूपमन्धकारं <sup>v</sup>तिरः अन्तर्हितं विनष्टं कृत्वा <sup>v</sup>ताम् <sup>v</sup>इषं तादृशमन्नम् <sup>v</sup>अस्मे अस्मभ्यं <sup>v</sup>रासाथां युवां दत्तम् ॥ पीपरत् । ' पॄ पालनपूरणयोः ' । ण्यन्तात् लुङि चङि णिलोपः । उपधाह्रस्वत्वद्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति

अडभावः। 'चङ्यन्यतरस्याम्' (पा. सू. ६.१. २१८) इति उपोत्तमस्य धात्वकारस्योदात्तत्वे प्राप्ते व्यत्ययेन अभ्यासस्योदात्तत्वम्। 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः। अस्मे। 'सुपां सुलुक्°' इति चतुर्थीबहुवचनस्य शेआदेशः। रासाथाम्। 'रा दाने'। छान्दसे प्रार्थनायां लुङि व्यत्ययेनात्मनेपदम्। च्लेः सिच्। 'एकाचः°' इति इट्प्रतिषेधः। पूर्ववत् अडभावः। 'तिङ्ङतिङः' इति निघातः॥

आ नो॑ ना॒वा म॑ती॒नां या॒तं पा॒राय॒ गन्त॑वे। यु॒ञ्जाथा॑मश्विना॒ रथ॑म् ॥ ७ ॥

आ। नः॒। ना॒वा। म॒ती॒नाम्। या॒तम्। पा॒राय॑। गन्त॑वे। यु॒ञ्जाथा॑म्। अ॒श्वि॒ना॒। रथ॑म् ॥ ७ ॥

हे अश्विना मतीनां स्तुतीनां पाराय गन्तवे पारं गन्तुं नावा नौरूपेण गमनसाधनेन नः अस्मान् प्रति आ यातं समुद्रमध्यादागच्छतम्। भूमावागन्तुं रथं भवदीयं युञ्जाथां साश्वं कुरुतम्॥ नावा। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। गन्तवे। 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। युञ्जाथाम्। 'युजिर् योगे'। लोटि आथामि रुधादित्वात् श्नम्। 'श्नसोरल्लोपः' इति अकारलोपः। प्रत्ययस्वरः॥

अ॒रित्रं॑ वां दि॒वस्पृ॒थु ती॒र्थे सिन्धू॑नां॒ रथः॑। धि॒या यु॑यु॒ज्र इन्द॑वः ॥ ८ ॥

अ॒रित्र॑म्। वा॒म्। दि॒वः। पृ॒थु। ती॒र्थे। सिन्धू॑नाम्। रथः॑। धि॒या। यु॒यु॒ज्रे। इन्द॑वः ॥ ८ ॥

हे अश्विनौ वां युवयोः दिवस्पृथु द्युलोकादपि विस्तीर्णम् अरित्रं गमनसाधनं नौरूपं सिन्धूनां समुद्राणां तीर्थे अवतरणप्रदेशे विद्यते इति शेषः। रथः च भूमौ गन्तुं विद्यते। इन्दवः सोमाः धिया भवद्विषयेण कर्मणा युयुज्रे युक्ता बभूवुः॥ अरित्रम्। 'ऋ गतौ'। 'अर्तिलूधूसूखनसहचर इत्रः' (पा. सू. ३. २. १८४) इति करणे इत्रप्रत्ययः। प्रत्ययस्वरः। दिवः। 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम्। तीर्थे। 'तॄ प्लवनतरणयोः'। 'पातॄतुदिवचिरिचिसिचिभ्यस्थक्' (उ. सू. २. १६४) इति थक्। 'ॠत इद्धातोः' इति इत्वम्। 'हलि च' इति दीर्घः। युयुज्रे। लिटि 'इरयो रे' (पा. सू. ६. ४. ७६) इति इरेचो रेआदेशः॥

दि॒वस्क॑ण्वास॒ इन्द॑वो॒ वसु॒ सिन्धू॑नां प॒दे। स्वं व॒व्रिं कुह॑ धित्सथः ॥ ९ ॥

दि॒वः। क॒ण्वा॒सः॒। इन्द॑वः। वसु॑। सिन्धू॑नाम्। प॒दे। स्वम्। व॒व्रिम्। कुह॑। धि॒त्स॒थः॒ ॥ ९ ॥

हे कण्वासः कण्वपुत्राः। यद्वा। मेधाविन ऋत्विजः। अश्विनावित्थं पृच्छतेति शेषः। कथमिति तदुच्यते। दिवः द्युलोकसकाशात् इन्दवः सूर्यरश्मयः प्रादुर्भूताः। सिन्धूनाम् अपां वृष्टिरूपाणां स्यन्दनस्वभावानां पदे स्थानेऽन्तरिक्षे वसु अस्मदादिनिवासहेतुभूतमुषःकालीनं ज्योतिराविर्भूतमिति शेषः। अस्मिन्नवसरे युवां स्वं वव्रिं स्वकीयं रूपं कुह धित्सथः कुत्र स्थापयितुमिच्छथः। अत्रागस्य प्रदर्शनीयमिति तात्पर्यार्थः॥ कुह। 'वा ह च च्छन्दसि' (पा. सू. ५. ३. १३) इति किंशब्दात् सप्तम्यर्थे हप्रत्ययः। 'कु तिहोः' (पा. सू. ७. २. १०४) इति किमः कुः। धित्सथः। 'डुधाञ् धारणपोषणयोः'। 'सनि मीमाघुरभलभशकपतपदामच इस्' (पा. सू. ७. ४. ५४) इति आकारस्य इसादेशः। 'अत्र लोपोऽभ्यासस्य' (पा. सू. ७. ४. ५८) इति अभ्यासलोपः। 'सः स्यार्धधातुके' (पा. सू. ७. ४. ४९) इति सकारस्य तकारः॥

अभू॑दु भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ । व्य॑ख्यज्जि॒ह्वयासि॑तः ॥ १० ॥

अभू॑त् । ऊँ॒ इति॑ । भाः । ऊँ॒ इति॑ । अं॒शवे॑ । हिर॑ण्यम् । प्रति॑ । सूर्यः॑ ।

वि । अ॒ख्य॒त् । जि॒ह्वया॑ । असि॑तः ॥ १० ॥

ᵛभा ᵛउ सूर्यस्य दीप्तिस्तु ᵛअंशवे उषःकालीनरश्मिसिद्ध्यर्थम् ᵛअभूदु प्रादुर्भूतैव । ᵛसूर्यः च ᵛहिरण्यं ᵛप्रति स्वकीयोदयेन हिरण्यसदृशोऽभूत् । अग्निश्च ᵛअसितः स्वकीयदीप्तेः सूर्यप्रवेशेन स्वयं कृष्णो भूत्वा ᵛजिह्वया स्वकीयया ज्वालया ᵛव्यख्यत् प्रकाशितवान् । तस्मादयमश्विनोर्युवयोरागमनकाल इत्यर्थः ॥ अभूत् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । हिरण्यं प्रति । 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा. सू. १. ४. ९२) इति प्रतेः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते द्वितीया' (पा. सू. २. ३. ८) इति द्वितीया । अख्यत् । 'चक्षिङ् व्यक्तायां वाचि' । लुङि 'चक्षिङः ख्याञ्' इति ख्याञादेशः ॥　　॥ ३४ ॥

अभू॑दु पा॒रमेत॑वे॒ पन्था॑ ऋ॒तस्य॑ साधु॒या । अद॑र्शि॒ वि स्रु॒तिर्दि॒वः ॥ ११ ॥

अभू॑त् । ऊँ॒ इति॑ । पा॒रम् । एत॑वे । पन्थाः॑ । ऋ॒तस्य॑ । सा॒धु॒ऽया ।

अद॑र्शि । वि । स्रु॒तिः । दि॒वः ॥ ११ ॥

ᵛऋतस्य सूर्यस्य ᵛपारमेतवे रात्रेः पारभूतमुदयाद्रिं गन्तुं ᵛपन्थाः मार्गः ᵛसाधुया समीचीनः ᵛअभूदु निष्पन्न एव । ᵛदिवः द्योतनात्मकस्य सूर्यस्य ᵛस्रुतिः प्रसृता दीप्तिः ᵛवि ᵛअदर्शि विशेषेण दृष्टा । तस्मादश्विनौ युवाभ्यामागन्तव्यम् ॥ एतवे । 'इण् गतौ' । 'तुमर्थे सेसेन्°' इति तवेन्प्रत्ययः । साधुया । 'सुपां सुलुक्°' इति विभक्तेः याजादेशः । अदर्शि । कर्मणि लुङि च्लेः चिणादेशः । 'चिणो लुक्' (पा. सू. ६. ४. १०४) इति तशब्दस्य लुक् । स्रुतिः । 'स्रु गतौ' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् ॥

तत्त॒दिद॒श्विनो॒रवो॑ जरि॒ता प्रति॑ भूषति । मदे॒ सोम॑स्य॒ पिप्र॑तोः ॥ १२ ॥

तत्ऽत॑त् । इत् । अ॒श्विनोः॑ । अवः॑ । ज॒रि॒ता । प्रति॑ । भू॒ष॒ति॒ । मदे॑ । सोम॑स्य । पिप्र॑तोः ॥ १२ ॥

ᵛजरिता स्तोता ᵛअश्विनोः संबन्धि ᵛतत्तदित् पुनःपुनः कृतं सर्वमपि ᵛअवः अस्मद्विषयं रक्षणं ᵛप्रति ᵛभूषति प्रत्येकमलंकरोति । तदा तदा प्रशंसतीत्यर्थः । कीदृशयोरश्विनोः । ᵛमदे हर्षे निमित्तभूते सति ᵛसोमस्य ᵛपिप्रतोः सोमं पूरयतोः ॥ भूषति । 'भूष अलंकारे' । भौवादिकः । पिप्रतोः । 'पॄ पालनपूरणयोः' । पृ इत्येके । अस्माल्लटः शतृ । जुहोत्यादित्वात् शपः श्लुः । द्विर्भावोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । शतुर्ङित्वात् गुणाभावे यणादेशः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्छंभू आ गतम् ॥१३॥

ववसाना । विवस्वति । सोमस्य । पीत्या । गिरा ।

मनुष्वत् । शंभू इति शम्ऽभू । आ । गतम् ॥ १३ ॥

हे ᵛशंभू सुखस्य भावयितारावश्विनौ ᵛमनुष्वत् मनाविव ᵛविवस्वति परिचरणवति यजमाने ᵛववसाना निवासशीलौ युवां ᵛसोमस्य ᵛपीत्या सोमस्य पाननिमित्तं ᵛगिरा स्तुतिनिमित्तं च ᵛआ ᵛगतम् आगच्छतम् ॥ ववसाना । 'वस निवासे'। 'ताच्छील्यवयोवचन°' (पा. सू. ३.२.१२९) इति ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपः श्लुः। 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ॥ 'सुपां सुलुक्°' इति विभक्तेः आकारः । 'चितः' इत्यन्तोदात्तत्वम् । पीत्या । 'पा पाने'। 'स्थागापापचो भावे' इति भावे क्तिन् । 'घुमास्था°' इति ईत्वम् । व्यत्ययेनान्तोदात्तत्वम् । तृतीयैकवचने यणादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । मनुष्वत् । 'मन ज्ञाने'। मन्यते जानातीति मनुः । बहुलवचनात् औणादिक उसिप्रत्ययः । 'तत्र तस्येव' इति सप्तम्यर्थे वतिः । प्रत्ययस्वरः । गतम् । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः ॥

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ॥ १४ ॥

युवोः । उषाः । अनु । श्रियम् । परिऽज्मनोः । उपऽआचरत् । ऋता । वनथः । अक्तुऽभिः ॥१४॥

हे अश्विनौ ᵛपरिज्मनोः परितो गन्त्रोः ᵛयुवोः युवयोरुभयोः ᵛश्रियम् ᵛअनु आगमनरूपां शोभामनुसृत्य ᵛउषाः ᵛउपाचरत् उषःकालदेवता इहागच्छतु । युवयोरागतयोः सतोः पश्चादागतेत्यर्थः । युवां च ᵛअक्तुभिः रात्रिभिः ᵛऋता यज्ञगतानि हवींषि ᵛवनथः कामयेथे संभजेथे ॥ युवोः। युष्मच्छब्दात् षष्ठीद्विवचनस्य 'सुपां सुपो भवन्ति' इति षष्ठीद्विवचनादेशः । अत आदेशविषयत्वात् 'योऽचि' इति यत्वाभावः । 'शेषे लोपः'। परिज्मनोः । परितः अजतो गच्छत इति परिज्मानौ । 'श्वन्नुक्षन्°' इत्यादिना अजतेः मनिन्प्रत्ययान्तो निपातितः । ऋता । 'शेश्छन्दसि°' इति शेर्लोपः । वनथः । 'वन षण संभक्तौ'। 'तिङ्ङतिङः' इति निघातः ॥

प्रवर्ग्ये पौर्वाह्णिके घर्मस्य हविषो द्वितीया याज्या 'उभा पिबतम्' इत्येषा । 'अथोत्तरम्' इति खण्डे सूत्रितम्—'उभा पिबतमश्विनेति चोभाभ्यामनवानम्' (आश्व. श्रौ. ४. ७) इति । आश्विनशस्त्रेऽप्येषा द्वितीया याज्या । सूत्रितं च—'प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विनेति याज्ये' (आश्व. श्रौ. ६. ५) इति ॥

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥ १५ ॥

उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् । अविद्रियाभिः । ऊतिऽभिः ॥१५॥

हे ᵛअश्विना ᵛउभा युवामुभौ ᵛपिबतं सोमपानं कुरुतम् । तत ऊर्ध्वम् ᵛउभा युवामुभौ ᵛअविद्रियाभिः प्रशस्ताभिः ᵛऊतिभिः रक्षाभिः ᵛनः अस्मभ्यं ᵛशर्म सुखं ᵛयच्छतम् ॥ पिबतम् ।

'पा पाने'। लोटि शपि 'पाघ्रा°' इत्यादिना पिबादेशः। 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य (पा. म. ७. ३. ७८. २; परिभा. ९२) इति वचनात् लघूपधगुणाभावः। यद्वा। आद्युदात्तोऽदन्तः पिबादेशः। 'तिङ्ङतिङः' इति निघातः। यच्छतम्। 'दाण् दाने'। लोटि शपि 'पाघ्रा°' इत्यादिना यच्छादेशः। अविद्रियाभिः। 'द्रा कुत्सायां गतौ'। विपूर्वादस्माद्भावे औणादिकः किः। 'आतो लोप इटि च' इति आकारलोपः। विद्रिर्निन्दा। तद्विरोधिनी अविद्रिः स्तुतिः। तां यान्तीत्यविद्रियाः। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। कृदुत्तरपदप्रकृतिस्वरत्वम्। ऊतिभिः। अवतेः क्तिनि 'ज्वरत्वर°' इत्यादिना ऊठ्। 'ऊतियूति°' इत्यादिना क्तिन उदात्तत्वम्॥ ॥ ३५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके तृतीयोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ प्रथमाष्टके चतुर्थोऽध्याय आरभ्यते । 'अयं वाम्' इति नवमानुवाकस्य चतुर्थं सूक्तं दशर्चम् । अत्रानुक्रान्तम्—'अयं दश प्रागाथं तु' इति । 'ऋषिश्चान्यस्मादृषेः' इति परिभाषितत्वात् कण्वपुत्रः प्रस्कण्व ऋषिः । तथा पूर्वत्र 'आश्विनं तु' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमपि सूक्तमश्विदेवताकम् । अनयैव परिभाषया इदमुत्तरं च प्रागाथम् । अतः प्रथमातृतीयाद्या अयुजो बृहत्यः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रातरनुवाके आश्विने क्रतौ बार्हते छन्दस्येतत्सूक्तम् । 'अथाश्विनः' इति खण्डे सूत्रितम्–'इमा उ वामयं वाम्' ( आश्व. श्रौ. ४. १५ ) इति । आश्विनशस्त्रेऽप्येतत्सूक्तं, 'प्रातरनुवाकन्यायेन' ( आश्व. श्रौ. ६. ५ ) इत्यतिदिष्टत्वात् ॥

**अ॒यं वां॒ मधु॑मत्तमः सु॒तः सोम॑ ऋतावृधा ।**
**तम॑श्विना पिबतं ति॒रोअ॑ह्न्यं ध॒त्तं रत्ना॑नि दा॒शुषे॑ ॥ १ ॥**

अ॒यम् । वा॒म् । मधु॑मत्ऽतमः । सु॒तः । सोम॑ः । ऋ॒त॒ऽवृ॒धा॒ ।
तम् । अ॒श्वि॒ना॒ । पि॒ब॒त॒म् । ति॒रः॒ऽअ॑ह्न्यम् । ध॒त्त॒म् । रत्ना॑नि । दा॒शुषे॑ ॥ १ ॥

हे ᵛऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ ᵛअश्विना अश्विनौ ᵛवां युवयोः ᵛअयं पुरोवर्ती ᵛसोमः ᵛसुतः अभिषुतः । कीदृशः । ᵛमधुमत्तमः अतिशयेन माधुर्यवान् । ᵛतिरोअह्न्यं तिरोभूते पूर्वस्मिन् दिने अभिषुतं ᵛतं सोमं ᵛपिबतम् । ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛरत्नानि रमणीयानि धनानि ᵛधत्तं प्रयच्छतम् ॥ वाम् । 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' ( पा. सू. ८. १. २० ) इति षष्ठीद्विवचनस्य वामादेशः । स चानुदात्तः । मधुमत्तमः । 'मन ज्ञाने' । मन्यते इति मधु । 'फलिपाटिनमि°' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । धकारश्चान्तादेशः । अतिशयेन मधुमान् मधुमत्तमः । मतुप्तमपोः पित्त्वादनुदात्तत्वे पदस्वर एव शिष्यते । ऋतावृधा । वृधेरन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । तिरोअह्न्यम् । अह्नि भवः अह्न्यः । 'भवे छन्दसि' इति यत् । 'अह्नष्टखोरेव' ( पा. सू. ६. ४. १४५ ) इति नियमात् 'नस्तद्धिते' इति टिलोपाभावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'ये चाभावकर्मणोः' ( पा. सू. ६. ४. १६८ ) इति प्रकृतिभावाभावे 'अल्लोपोऽनः' इति अकारलोपः । तिरोहितः अह्न्यः तिरोअह्न्यः । 'तिरोऽन्तर्धौ' ( पा. सू. १. ४. ७१ ) इति गतित्वेन निपातत्वात् अव्ययत्वे प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दाशुषे । 'दाश्वान् साह्वान्°' इत्यादिना क्वसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥

त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।
कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥ २ ॥

त्रिऽवन्धुरेण । त्रिऽवृता । सुऽपेशसा । रथेन । आ । यातम् । अश्विना ।
कण्वासः । वाम् । ब्रह्म । कृण्वन्ति । अध्वरे । तेषाम् । सु । शृणुतम् । हवम् ॥ २ ॥

हे अश्विना त्रिवन्धुरेण उन्नतानतरूपत्रिविधबन्धनकाष्ठयुक्तेन त्रिवृता अप्रतिहतगतितया लोकत्रये वर्तमानेन सुपेशसा शोभनसुवर्णयुक्तेन रथेन आ यातं इहागच्छतम् । कण्वासः कण्वपुत्रा मेधाविन ऋत्विजो वा वां युवयोः अध्वरे यागे ब्रह्म स्तोत्ररूपं मन्त्रं हविर्लक्षणमन्नं वा कृण्वन्ति कुर्वन्ति । तेषां कण्वानां हवम् आह्वानं सु शृणुतं सुष्ठ्वादरेण शृणुतम् ॥ त्रिवन्धुरेण । बध्नन्तीति बन्धुराः । बन्धेः औणादिक उरन्प्रत्ययः । त्रयो बन्धुरा यस्यासौ त्रिबन्धुरः । त्रिचक्रादिषु पाठात् 'त्रिचक्रादीनां छन्दस्युपसंख्यानम्' ( पा. सू. ६. २. १९९. १ ) इत्युत्तरपदान्तोदात्तत्वम् । त्रिवृता । त्रिषु लोकेषु वर्तते इति त्रिवृत् । 'क्विप् च' इति क्विप् । सुपेशसा । पेश इति हिरण्यनाम । शोभनं पेशो यस्यासौ सुपेशाः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । शृणुतम् । 'श्रु श्रवणे' । 'श्रुवः शृ च' इति श्नुः; तत्संनियोगेन धातोः शृभावश्च । हवम् । ह्वयतेः 'भावेऽनुपसर्गस्य' ( पा. सू. ३. ३. ७५ ) इति अप् । संप्रसारणं च गुणावादेशौ । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

अश्विना मधुमत्तमं पातं सोममृतावृधा ।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥ ३ ॥

अश्विना । मधुमत्ऽतमम् । पातम् । सोमम् । ऋतऽवृधा ।
अथ । अद्य । दस्रा । वसु । बिभ्रता । रथे । दाश्वांसम् । उप । गच्छतम् ॥ ३ ॥

हे ऋतावृधा यज्ञस्य वर्धकौ अश्विनौ मधुमत्तमं सोमं पातं पिबतम् । हे दस्रा अश्विनौ सोमपानार्थम् अथ अस्मदाह्वानानन्तरम् अद्य अस्मिन् दिने रथे स्वकीये वसु बिभ्रता अस्मदुपयुक्तं धनं धारयन्तौ दाश्वांसं हविष्प्रदं यजमानम् उप गच्छतं समीपे प्राप्नुतम् ॥ बिभ्रता । 'डुभृञ् धारणपोषणयोः' । शतरि जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । शतुर्ङित्त्वात् गुणाभावे यणादेशः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।
कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥ ४ ॥

त्रिऽसधस्थे । बर्हिषि । विश्वऽवेदसा । मध्वा । यज्ञम् । मिमिक्षतम् ।
कण्वासः । वाम् । सुतऽसोमाः । अभिऽद्यवः । युवाम् । हवन्ते । अश्विना ॥ ४ ॥

हे विश्ववेदसा सर्वज्ञावश्विनौ त्रिषधस्थे कक्ष्यात्रयरूपेणास्तीर्णतया त्रिषु स्थानेष्ववस्थिते बर्हिषि दर्भे स्थित्वा मध्वा मधुरेण रसेन यज्ञं मिमिक्षतं सेक्तुमिच्छतम् । हे अश्विना वां युष्मदर्थं सुतसोमाः अभिषुतसोमयुक्ताः अभिद्यवः अभिगतदीप्तयः कण्वासः युवाम् उभौ हवन्ते आह्वयन्ते ॥ त्रिषधस्थे । त्रिषु स्थानेषु सह तिष्ठतीति त्रिषधस्थं बर्हिः । ' सुपि स्थः ' इति कप्रत्ययः । ' आतो लोप इटि च ' इति आकारलोपः । ' सध मादस्थयोश्छन्दसि ' ( पा. सू. ६. ३. ९६ ) इति सहशब्दस्य सधादेशः । मध्वा । आगमानुशासनस्यानित्यत्वात् नुमभावः । ' जसि च ' इत्यत्र ' जसादिषु च्छन्दसि वावचनम् ' ( पा. सू. ७. ३. १०९. १ ) इति वचनात् नाभावाभावश्च । मिमिक्षतम् । ' मिह सेचने ' । सनि ' एकाचः° ' इति इट्प्रतिषेधः । ' हलन्ताच्च ' इति सनः कित्त्वात् लघूपधगुणाभावः । अभ्यासहलादिशेषौ । ढत्वकत्वषत्वानि । सुतसोमाः । सुतः सोमो यैः । बहुव्रीहिस्वरः । अभिद्यवः । द्युः इति अहर्नाम । तेन तत्संबन्धी प्रकाशो लक्ष्यते । अभिगता द्युम् । ' अत्यादयः क्रान्ताद्यर्थे द्वितीयया ' ( पा. म. २. २. १८. ४ ) इति समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।
ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥ ५ ॥

याभिः । कण्वम् । अभिष्टिऽभिः । प्र । आवतम् । युवम् । अश्विना ।
ताभिः । सु । अस्मान् । अवतम् । शुभः । पती इति । पातम् । सोमम् । ऋतऽवृधा ॥ ५ ॥

हे अश्विना युवं युवामुभौ याभिः अभिष्टिभिः अपेक्षिताभिः रक्षाभिः कण्वं महर्षिं प्रावतं रक्षितवन्तौ हे शुभस्पती शोभनस्य कर्मणः पालकौ ताभिः रक्षाभिः अस्मान् अनुष्ठातॄन् सु अवतं सुष्ठु रक्षतम् । स्पष्टमन्यत् ॥ अभिष्टिभिः । आभिमुख्येनेष्यन्ते इति अभिष्टयः फलानि । ' इषु इच्छायाम् ' । कर्मणि क्तिनि ' तितुत्र° ' इत्यादिना इट्प्रतिषेधः । ' एमन्नादिषु च्छन्दसि पररूपं वक्तव्यम् ' ( पा. सू. ६. १. ९४. ६ ) इति पररूपत्वम् । ' तादौ च° ' इति गतेः प्रकृतिस्वरत्वम् । ' उपसर्गाश्चाभिवर्ज्यम् ' ( फि. सू. ८१ ) इति अभिः अन्तोदात्तः । शुभस्पती । ' शुभ दीप्तौ ' । ' क्विप् च ' इति क्विप् । ' षष्ठ्याः पतिपुत्र° ' इति विसर्जनीयस्य सत्वम् । ' सुबामन्त्रिते° ' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ॥ ॥ १ ॥

सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना ।
रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ॥ ६ ॥

सुऽदासे । दस्रा । वसु । बिभ्रता । रथे । पृक्षः । वहतम् । अश्विना ।
रयिम् । समुद्रात् । उत । वा । दिवः । परि । अस्मे इति । धत्तम् । पुरुऽस्पृहम् ॥ ६ ॥

हे दस्रा दर्शनीयावश्विनौ सुदासे शोभनदानयुक्ताय राज्ञे पिजवनपुत्राय रथे वसु बिभ्रता युवां पृक्षः अन्नं वहतं प्रापितवन्तौ । समुद्रात् अन्तरिक्षात् । समुद्रम् इति अन्तरिक्षनाम । ' समुद्रः

अध्वरम्' (नि. १. ३. १५) इति तन्नामसु[1] पाठात्। vउत vवा vदिवस्परि अथवा स्वर्गात् पर्याहृस्य vपुरुस्पृहं बहुभिः स्पृहणीयं vरयिं धनम् vअस्मे vधत्तम् अस्मासु स्थापयतम्॥ सुष्ठु ददातीति सुदाः। असुनि कृदुत्तरपदप्रकृतिस्वरत्वम्। दिवस्परि। 'पञ्चम्याः परावध्यर्थे' (पा. सू. ८. ३. ५१) इति विसर्जनीयस्य सत्वम्। पुरुस्पृहम्। 'स्पृह ईप्सायाम्'। चुरादिरदन्तः। पुरुभिः स्पृह्यते इति पुरुस्पृहः। कर्मणि घञ्। अतो लोपस्य स्थानिवत्त्वात् लघूपधगुणाभावः। ञित्स्वरेण उत्तरपदस्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरेण तदेव शिष्यते॥

यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे।
अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः॥ ७॥

यत्। नासत्या। पराऽवति। यत्। वा। स्थः। अधि। तुर्वशे।
अतः। रथेन। सुऽवृता। नः। आ। गतम्। साकम्। सूर्यस्य। रश्मिऽभिः॥ ७॥

हे vनासत्या असत्यरहितावश्विनौ vयत् यदि युवां vपरावति दूरदेशे vस्थः वर्तेथे। vयद्वा अथवा vअधि vतुर्वशे अधिके समीपे स्थः। vअतः अस्माद्दूरात्समीपाद्वा vसूर्यस्य vरश्मिभिः vसाकं सूर्योदयकाले vसुवृता शोभनवर्तनयुक्तेन vरथेन vनः अस्मान् प्रति vआ vगतं आगच्छतम्॥ नासत्या। सत्सु भवौ सत्यौ। न सत्यौ असत्यौ। न असत्यौ नासत्यौ। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। स्थः। 'अस भुवि'। 'श्नसोरल्लोपः' इति अकारलोपः। यद्वृत्तयोगादनिघातः। गतम्। गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक्। 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः॥

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा॥ ८॥

अर्वाञ्चा। वाम्। सप्तयः। अध्वरऽश्रियः। वहन्तु। सवना। इत्। उप।
इषम्। पृञ्चन्ता। सुऽकृते। सुऽदानवे। आ। बर्हिः। सीदतम्। नरा॥ ८॥

हे अश्विनौ vअध्वरश्रियः यागसेविनः vसप्तयः अश्वाः vसवनेदुप अस्मदनुष्ठेयानि त्रीणि सवनान्येवोपलक्ष्य vअर्वाञ्चा अभिमुखौ vवां युवां vवहन्तु प्रापयन्तु। हे vनरा अश्विनौ vसुकृते सुष्ठु कर्मकारिणे vसुदानवे शोभनदानयुक्ताय यजमानाय vइषम् अन्नं vपृञ्चन्ता संयोजयन्तौ युवां vबर्हिः vआ vसीदतं दर्भं प्राप्नुतम्॥ अर्वाञ्चा। 'सुपां सुलुक्°' इति विभक्तेः आकारः। अध्वरश्रियः। अध्वरं श्रयन्तीति अध्वरश्रियः। 'क्विब्वचिप्रच्छि°' (उ. सू. २. २१५) इत्यादिना क्विप् दीर्घश्च। वहन्तु। 'वह प्रापणे'। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वम्। पादादित्वात् निघाताभावः। सवना। 'षुञ् अभिषवे'। अभिषूयते सोम एष्विति सवनानि। अधिकरणे ल्युट्। योरनादेशः। गुणावादेशौ। 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम्। 'शेश्छन्दसि

---

१. च-छ-ण-त-ध-न-फ-ल-श-स—अन्तरिक्षनामसु।

बहुलम् ' इति शेर्लोपः । पृञ्चन्ता । ' पृची संपर्के ' । शतरि रुधादित्वात् श्नम् । ' श्नसोरल्लोपः ' इति अकारलोपः । प्रत्ययस्वरः । सुकृते । ' सुकर्मपाप° ' ( पा. सू. ३. २. ८९ ) इत्यादिना करोतेः भूते काले क्विप् । ' ह्रस्वस्य पिति° ' ( पा. सू. ६. १. ७१ ) इति तुक् । सुदानवे । शोभनं दानु दानं यस्यासौ सुदानुः । दानुशब्दो नुप्रत्ययान्त आद्युदात्तः । ' आद्युदात्तं द्व्यच्छन्दसि ' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । सीदतम् । ' षद्लृ विशरणगत्यवसादनेषु ' ॥

तेन॑ नासत्या ग॑तं रथे॑न सूर्य॑त्वचा ।

येन॒ शश्व॑दूहथु॑र्दा॒शुषे॒ वसु॒ मध्वः॒ सोम॑स्य पी॒तये॑ ॥ ९ ॥

तेन॑ । ना॒स॒त्या॒ । आ । ग॒तम् । रथे॑न । सूर्य॑ऽत्वचा ।

येन॑ । शश्व॑त् । ऊ॒हथुः॑ । दा॒शुषे॑ । वसु॑ । मध्वः॑ । सोम॑स्य । पी॒तये॑ ॥ ९ ॥

हे ᵛनासत्या ᵛसूर्यत्वचा सूर्यसंवृतेन सूर्यरश्मिसदृशेन वा ᵛतेन प्रसिद्धेन ᵛरथेन ᵛआ ᵛगतं आगच्छतम् । ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛवसु धनं ᵛशश्वत् सर्वदा ᵛयेन रथेन ᵛऊहथुः प्रापितवन्तौ । तेन रथेनेति पूर्वत्रान्वयः । किमर्थमागमनमिति तदुच्यते । ᵛमध्वः मधुरस्य ᵛसोमस्य ᵛपीतये सोमपानार्थम् ॥ सूर्यत्वचा । ' त्वच संवरणे ' । त्वचति संवृणोतीति त्वक् रश्मिः । सूर्यस्य त्वगिव त्वग्यस्य । ' सप्तम्युपमान° ' ( पा. सू. २. २. २४. १२ ) इत्यादिना बहुव्रीहिः उत्तरपदलोपश्च । सूर्यशब्दः ' षू प्रेरणे ' इत्यस्मात् क्यपि ' राजसूयसूर्य° ' इत्यादिना रुडागमसहितो निपातितः । ततः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण शिष्यते । ऊहथुः । ' वह प्रापणे ' । लिटि ' असंयोगाल्लिट् कित् ' ( पा. सू. १. २. ५ ) इति लिटः कित्त्वे ' वचिस्वपि° ' इत्यादिना संप्रसारणम् । अभ्यासहलादिशेषौ सवर्णदीर्घः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः ॥

उ॒क्थेभि॑र॒र्वागव॑से पुरू॒वसू॑ अ॒र्कैश्च॒ नि ह्व॑यामहे ।

शश्व॒त्कण्वा॑नां॒ सद॑सि प्रि॒ये हि कं॒ सोमं॑ प॒पथु॑रश्विना ॥ १० ॥

उ॒क्थेभिः॑ । अ॒र्वाक् । अव॑से । पु॒रु॒वसू॒ इति॑ पु॒रु॒ऽवसू॑ । अ॒र्कैः॑ । च॒ । नि । ह्व॒या॒म॒हे॒ ।

शश्व॑त् । कण्वा॑नाम् । सद॑सि । प्रि॒ये । हि । क॒म् । सोम॑म् । प॒पथुः॑ । अ॒श्वि॒ना॒ ॥ १० ॥

ᵛपुरूवसू प्रभूतधनावश्विनौ ᵛअवसे अस्मद्रक्षणार्थम् ᵛउक्थेभिः उक्थैः शस्त्रैः ᵛअर्कैश्च अर्चनसाधनैः स्तोत्रैश्च ᵛअर्वाक् अस्मदाभिमुख्येन ᵛनि ᵛह्वयामहे नितरामाह्वयामः । हे ᵛअश्विना ᵛकण्वानां कण्वपुत्राणां मेधाविनां वा ᵛप्रिये ᵛसदसि यज्ञस्थाने ᵛशश्वत् सर्वदा ᵛसोमं ᵛपपथुः ᵛहि ᵛकं युवां पीतवन्तौ खलु ॥ उक्थेभिः । ' बहुलं छन्दसि ' इति भिसः ऐसादेशाभावः । ' बहुवचने झल्येत् ' इति एत्वम् । अर्कैः । ' ऋच स्तुतौ ' । ' पुंसि संज्ञायां घः प्रायेण ' इति करणे घः । ' चजोः कु घिण्ण्यतोः ' इति कुत्वम् । नि ह्वयामहे । ' निसमुपविभ्यो ह्वः ' ( पा. सू. १. ३. ३० ) इत्यात्मनेपदम् ।

सदसि । सीदन्त्यस्मिन्निति सदः । असुनो नित्त्वादाद्युदात्तत्वम् । पपथुः । 'पा पाने'। लिटि 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । 'हि च' इति निघातप्रतिषेधः ॥ ॥२॥

'सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः । बार्हतत्वात् अयुजो बृहत्यो युजः सतोबृहत्यः । उषा देवता । 'सह षोळशोषस्यं तु' इति अनुक्रमणिका । प्रातरनुवाके उषस्ये क्रतौ बार्हते छन्दसीदं सूक्तम् । 'अथोषस्यः' इति खण्डे सूत्रितं–'प्रत्यु अदर्शि सह वामेनेति बार्हतम्' (आश्व. श्रौ. ४. १४) इति । तथा आश्विनशस्त्रेऽप्येतत्सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व. श्रौ. ६. ५) इत्यतिदिष्टत्वात् ॥

सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥ १ ॥

सह । वामेन । नः । उषः । वि । उच्छ । दुहितः । दिवः ।
सह । द्युम्नेन । बृहता । विभाऽवरि । राया । देवि । दास्वती ॥ १ ॥

हे ᵛदुहितर्दिवः[1] द्युदेवतायाः पुत्रि ᵛउषः उषःकालदेवते ᵛनः अस्मदर्थं ᵛवामेन धनेन ᵛसह ᵛव्युच्छ प्रभातं कुरु । हे ᵛविभावरि उषोदेवते ᵛबृहता प्रभूतेन ᵛद्युम्नेन अन्नेन ᵛसह व्युच्छ । हे ᵛदेवि त्वं ᵛदास्वती दानयुक्ता सती ᵛराया पशुलक्षणेन धनेन सह व्युच्छ ॥ उच्छ । 'उछी विवासे'। दुहितर्दिवः । 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यत्र 'परमपि च्छन्दसि' (पा. सू. २. १. २. ६) इति वचनात् दिवः इत्यस्य पूर्वाङ्गवद्भावे सति 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । बृहता । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । विभावरि । 'भा दीप्तौ'। 'आतो मनिन्°' इत्यादिना वनिप् । 'वनो र च' इति ङीप्; तत्संनियोगेन नकारस्य रेफादेशः । संबुद्धौ ह्रस्वत्वम् । दास्वती । 'डुदाञ् दाने'। भावे असुन्प्रत्ययः । तदस्यास्तीति दास्वती । 'मादुपधायाः°' इति मतुपो वत्वम् । 'उगितश्च' इति ङीप् ॥

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥ २ ॥

अश्वऽवतीः । गोऽमतीः । विश्वऽसुविदः । भूरि । च्यवन्त । वस्तवे ।
उत् । ईरय । प्रति । मा । सूनृताः । उषः । चोद । राधः । मघोनाम् ॥ २ ॥

ᵛअश्वावतीः बह्वश्वोपेताः ᵛगोमतीः बहुभिर्गोभिर्युक्ताः ᵛविश्वसुविदः कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्यः उषोदेवताः ᵛवस्तवे प्रजानां निवासाय ᵛभूरि प्रभूतं यथा भवति तथा ᵛच्यवन्त प्राप्ताः । हे

---

1. ढ–दिवः दुहितः ।

उषोदेवते[1] मा प्रति मामुद्दिश्य सूनृताः प्रियहितवाचः[2] उदीरय ब्रूहि। मघोनां धनवतां संबन्धि राधः धनं चोद[3] अस्मदर्थं प्रेरय ॥ अश्वावतीः। ' मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ' ( पा. सू. ६. ३. १३१ ) इति पूर्वपदस्य दीर्घत्वम्। ' वा छन्दसि ' इति पूर्वसवर्णदीर्घनिषेधस्य पाक्षिकस्योक्तेः पूर्वसवर्णदीर्घत्वम्। च्यवन्त। ' च्युङ् गतौ '। लङि ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः। वस्तवे। ' वस निवासे '। ' तुमर्थे सेसेन्° ' इति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। ईरय। ' ईर गतौ कम्पने च '। हेतुमति णिच्। चोद। ' चुद संचोदने '। चौरादिकः। लोटि ' छन्दस्युभयथा ' इति शपः आर्धधातुकत्वात् ' णेरनिटि ' इति णिलोपः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः। पादादित्वात् निघाताभावः। मघोनाम्। षष्ठीबहुवचने ' श्वयुवमघोनामतद्धिते ' ( पा. सू. ६. ४. १३३ ) इति संप्रसारणम्॥

उवासोषा उच्छाच्च नु देवी जीरा रथानाम्।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ ३ ॥

उवास। उषाः। उच्छात्। च। नु। देवी। जीरा। रथानाम्।
ये। अस्याः। आऽचरणेषु। दध्रिरे। समुद्रे। न। श्रवस्यवः ॥ ३ ॥

उषाः देवी उवास पुरा[4] निवासमकरोत् प्रभातं कृतवतीत्यर्थः। च नु अद्यापि उच्छात् व्युच्छति प्रभातं करोति[5]। कीदृशी देवी। रथानां जीरा प्रेरयित्री उषःकाले हि रथाः प्रेर्यन्ते। अस्याः उषसः आचरणेषु आगमनेषु ये रथाः दध्रिरे धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वत्रान्वयः। रथप्रेरणे दृष्टान्तः। श्रवस्यवः धनकामाः समुद्रे न[6] यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् ॥ उवास। ' वस निवासे '। णलि ' लिट्यभ्यासस्योभयेषाम् ' ( पा. सू. ६. १. १७ ) इति अभ्यासस्य संप्रसारणम्। लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम्। उच्छात्। लेटि आडागमः। ' इतश्च लोपः° ' इति इकारलोपः। तुदादित्वात् शप्रत्ययः। आगमानुदात्तत्वे प्रत्ययस्वरः। उषाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य निघातो न भवति, ' समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ' ( पा. सू. ८. १. १८. ५ ) इति वचनात्। जीरा। जु इति गत्यर्थः सौत्रो धातुः। ' जोरी च ' ( उ. सू. २. १८१ ) इति रक्प्रत्ययः। अस्याः। ' इदमोऽन्वादेशे° ' इति अशादेशोऽनुदात्तः विभक्तिरपि सुप्त्वादनुदात्तेति सर्वानुदात्तत्वम्। आचरणेषु। चर गत्यर्थः। ' ल्युट् च ' ( पा. सू. ३. ३. ११५ ) इति भावे ल्युट्। लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। दध्रिरे। ' धृङ् अवस्थाने '। लिटः कित्त्वाद्गुणाभावे यणादेशः। चित्त्वादन्तोदात्तत्वम्। यच्छब्दयोगादनिघातः। श्रवस्यवः। श्रूयते इति श्रवो धनम्। असुन्। तदात्मन इच्छन्तीति श्रवस्यवः। ' सुप आत्मनः क्यच् '। ' क्याच्छन्दसि ' इति उप्रत्ययः ॥

---

१. ढ–उषः उषोदेवते। २. ढ–प्रियहिताः वाचः। ३. त-फ–चोदय; ल-स–चोद चोदय। ४. ढ–पुरस्तात्। ५. ढ–करोतीत्यर्थः। ६. ढ–न इव।

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥ ४ ॥

उषः । ये । ते । प्र । यामेषु । युञ्जते । मनः । दानाय । सूरयः ।
अत्र । अह । तत् । कण्वः । एषाम् । कण्वऽतमः । नाम । गृणाति । नृणाम् ॥ ४ ॥

हे उषः ते तव यामेषु गमनेषु सत्सु ये सूरयः विद्वांसः दानाभिज्ञाः दानाय धनादिदानार्थं मनः स्वकीयं प्र युञ्जते प्रेरयन्ति । दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः । एषां दातुमिच्छतां नृणां तत् नाम दानविषये लोकप्रसिद्धं नाम कण्वतमः अतिशयेन मेधावी कण्वः महर्षिः अत्राह अत्रैव उषःकाले गृणाति उच्चारयति । यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तावुभावप्युषःकाले एव तथा कुरुत इत्युषसः स्तुतिः ॥ गृणाति । ' गॄ शब्दे ' । क्रैयादिकः । ' प्वादीनां ह्रस्वः ' इति ह्रस्वत्वम् । नृणाम् । नामि ' नृ च ' ( पा. सू. ६. ४. ६ ) इति दीर्घप्रतिषेधः । ' नृ चान्यतरस्याम् ' ( पा. सू. ६. १. १८४ ) इति विभक्तेरुदात्तत्वम् ॥

आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।
जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥ ५ ॥

आ । घ । योषाऽइव । सूनरी । उषाः । याति । प्रऽभुञ्जती ।
जरयन्ती । वृजनम् । पत्ऽवत् । ईयते । उत् । पातयति । पक्षिणः ॥ ५ ॥

उषाः देवी प्रभुञ्जती प्रकर्षेण सर्वं पालयन्ती आ याति घ प्रतिदिनमागच्छति खलु । तत्र दृष्टान्तः । सूनरी सुष्ठु गृहकृत्यस्य नेत्री योषेव गृहिणीव । कीदृशी उषाः । वृजनं गमनशीलं जङ्गमं प्राणिजातं जरयन्ती जरां प्रापयन्ती । असकृदुषस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवन्ति । किंच उषःकाले पद्वत् पादयुक्तं प्राणिजातम् ईयते निद्रां परित्यज्य स्वस्वकृत्यार्थं[1] गच्छति । किंच इयमुषाः पक्षिणः उत्पातयति । पक्षिणो ह्युषःकाले समुत्थाय तत्र तत्र व्रजन्ति ॥ घ । ' ऋचि तुनुघ° ' इत्यादिना संहितायां दीर्घः । सुष्ठु नयतीति सूनरी । ' णीञ् प्रापणे ' । ' अच इः ' इति इप्रत्ययः । गतिसमासे ' कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ' ( परिभा. २८ ) इति वचनात् ' कृदिकारादक्तिनः' ( पा. सू. ४. १. ४५ ग. ) इति ङीष् । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । ' निपातस्य च ' इति पूर्वपदस्य दीर्घः । प्रभुञ्जती । ' भुज पालनाभ्यवहारयोः ' । लटः शतृ । रुधादित्वात् श्नम् । ' श्नसोरल्लोपः ' इति अकारलोपः । ' उगितश्च ' इति ङीप् । ' शतुरनुमः° ' इति नद्या उदात्तत्वम् । वृजनम् । ' वृजी वर्जने ' । वर्ज्यते इति वृजनं प्राणिजातम् । ' कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः ' ( उ. सू. २. २३९ ) इति क्युप्रत्ययः । कित्त्वात् लघूपधगुणाभावः । योरनादेशे प्रत्ययस्वरः । पद्वत् । पत् पादः तदस्यास्तीति पद्वत् । ' झयः ' इति मतुपो वत्वम् । व्यत्ययेन मतुप उदात्तत्वम् । न च ' स्वरविधौ व्यञ्जनमविद्यमानवत् ' ( परिभा. ७९ ) इति व्यञ्जनस्य

---

१. ढ–स्वकीयकृत्याय ।

अविद्यमानवत्त्वे सति ' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वमिति वाच्यम्। ह्रस्वादित्येव सिद्धे पुनर्नुड्ग्रहणसामर्थ्यादेषा परिभाषा नाश्रीयते इति वृत्तावुक्तम् ( का. ६. १. १७६ )। इतरथा हि मरुत्वान् इत्यत्रापि मतुप उदात्तत्वं स्यात् ॥ ॥ ३ ॥

वि या सृजति समनं व्य१र्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥ ६ ॥

वि । या । सृजति । समनम् । वि । अर्थिनः । पदम् । न । वेति । ओदती ।
वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥ ६ ॥

$^{v}$या देवता $^{v}$समनं समीचीनचेष्टावन्तं पुरुषं $^{v}$वि $^{v}$सृजति प्रेरयति। गृहारामादिचेष्टाकुशलान् पुरुषान् उषःकालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम्। किंच उषाः $^{v}$अर्थिनः याचकान् $^{v}$वि सृजति। तेऽपि ह्युषःकाले समुत्थाय स्वकीयदातृगृहे गच्छन्ति। $^{v}$ओदती उषोदेवता $^{v}$पदं स्थानं $^{v}$न $^{v}$वेति न कामयते। उषःकालः शीघ्रं गच्छतीत्यर्थः। हे $^{v}$वाजिनीवति उषोदेवते $^{v}$ते $^{v}$व्युष्टौ त्वदीये प्रभातकाले $^{v}$पप्तिवांसः पतनयुक्ताः $^{v}$वयः पक्षिणः $^{v}$नकिः $^{v}$आसते न तिष्ठन्ति। किंतु स्वस्वनीडाद्विनिर्गत्य गच्छन्तीत्यर्थः॥ सृजति। ' सृज विसर्गे '। तुदादित्वात् शः। तस्य ङित्त्वात् लघूपधगुणाभावः। प्रत्ययस्य पित्त्वादनुदात्तत्वे विकरणस्वरः। यद्वृत्तयोगादनिघातः। ओदती। ' उन्दी क्लेदने '। उनत्ति सर्वं नीहारेण इति ओदती उषाः। शतरि व्यत्ययेन शप्। व्यत्ययेन अनुनासिकलोपे लघूपधगुणः। ' उगितश्च ' इति ङीप्। आगमानुशासनस्यानित्यत्वात् नुमभावः। शपः पित्त्वादनुदात्तत्वम्। शतुः अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्। न च ' शतुरनुमः० ' इति नद्या उदात्तत्वम्, अन्तोदात्तात् शतुः परस्यास्तद्विधानात्। नकिष्टे। ' युष्मत्तत्ततक्षुःष्वन्तःपादम् ' इति षत्वम्। पप्तिवांसः। ' पत्लृ गतौ '। लिटः क्वसुः। क्रादिनियमात् प्राप्त इट् ' वस्वेकाजाद्घसाम् ' इति नियमात् न प्राप्नोति। तत्क्रियते सर्वविधीनां छन्दसि विकल्पितत्वात्। ' तनिपत्योश्छन्दसि ' (पा. सू. ६. ४. ९९) इति उपधालोपः। ' द्विर्वचनेऽचि ' इति स्थानिवद्भावात् द्विर्भावः। प्रत्ययस्वरः। वाजिनीवति। वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया। मत्वर्थीय इनिः। ' ऋन्नेभ्यः० ' इति ङीप्। तादृशी क्रिया यस्याः सा। ' तदस्यास्ति० ' इति मतुप्। ' संज्ञायाम् ' इति मतुपो वत्वम्॥

एषायुक्त परावतः सूर्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥ ७ ॥

एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्ऽअयनात् । अधि ।
शतम् । रथेभिः । सुऽभगा । उषाः । इयम् । वि । याति । अभि । मानुषान् ॥ ७ ॥

$^{v}$एषा उषोदेवी $^{v}$शतम् $^{v}$अयुक्त स्वकीयानां रथानां शतं योजितवती। $^{v}$सुभगा सौभाग्ययुक्ता $^{v}$इयम् $^{v}$उषाः $^{v}$परावतः दूरस्थात् $^{v}$सूर्यस्योदयनादधि सूर्योदयस्थानादधिकात् द्युलोकात्

मानुषान् ᵛअभि मनुष्यानुद्दिश्य ᵛरथेभिः शतसंख्याकैः युक्तैः[1] रथैः[1] ᵛवि ᵛयाति विशेषेण गच्छति ॥ अयुक्त। लुङि 'झलो झलि' (पा. सू. ८. २. २६) इति सिचो लोपः। उदयनात्। उदेत्यत्रेति उदयनम्। 'इण् गतौ'। अधिकरणे ल्युट्। कृदुत्तरपदप्रकृतिस्वरत्वम्। सुभगा। शोभनो भगो यस्याः सा। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। मानुषान्। मनोः पुत्रा मानुषाः। 'मनोर्जातावञ्यतौ षुक् च' इति अञ् षुगागमश्च। ञित्त्वादाद्युदात्तत्वम् ॥

विश्व॑मस्या नानाम॒ चक्ष॑से॒ जग॒ज्ज्योति॑ष्कृणोति सू॒नरी॑ ।
अप॒ द्वेषो॑ म॒घोनी॑ दुहि॒ता दि॒व उ॒षा उ॑च्छद॒प स्रिध॑ः ॥ ८ ॥

विश्व॑म् । अ॒स्याः॒ । न॒ना॒म॒ । चक्ष॑से । जग॑त् । ज्योति॑ः । कृ॒णो॒ति॒ । सू॒नरी॑ ।
अप॑ । द्वेष॑ः । म॒घोनी॑ । दु॒हि॒ता । दि॒वः । उ॒षाः । उ॒च्छ॒त् । अप॑ । स्रिध॑ः ॥ ८ ॥

ᵛविश्वं सर्वं ᵛजगत् जङ्गमं प्राणिजातम् ᵛअस्याः उषसः ᵛचक्षसे प्रकाशाय ᵛननाम प्रह्वीभवति। रात्रौ तमसि निमग्नाः सर्वे जनास्तन्निवारयित्रीमुषसमुपलभ्य नमस्कुर्वन्तीत्यर्थः[2]। कुतः। यस्मादेषा ᵛसूनरी सुष्ठु नेत्री अभिमतफलस्य प्रापयित्री उषाः ᵛज्योतिष्कृणोति सर्वं प्रकाशयति। किंच ᵛमघोनी मघवती धनवती ᵛदिवः ᵛदुहिता द्युलोकसकाशादुत्पन्ना ᵛउषाः ᵛद्वेषः द्वेष्टॄन् ᵛअप ᵛउच्छत् अपवर्जयति। तथा ᵛस्रिधः शोषयितॄन् ᵛअप उच्छत् अपवर्जयति। तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतामुषोदेवतां विश्वं जगन्नमस्करोतीत्यर्थः ॥ अस्याः। 'इदमोऽन्वादेशे॰' इति अशादेशः अनुदात्तः विभक्तिश्च सुप्त्वादनुदात्तेति सर्वानुदात्तत्वम्। ननाम। संहितायाम् 'अन्येषामपि दृश्यते' इति अभ्यासस्य दीर्घत्वम्। तुजादित्वे हि तूतुजानः इत्यादाविव पदकालेऽपि दीर्घः श्रूयते। ज्योतिः। 'इणः षः' इत्यनुवृत्तौ 'इसुसोः सामर्थ्ये' (पा. सू. ८. ३. ४४) इति विसर्जनीयस्य षत्वम्। द्वेषः। 'द्विष अप्रीतौ'। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। लघूपधगुणः। मघोनी। मघं वनति संभजते इति मघोनी। 'श्वन्नुक्षन्॰' इत्यादिना मघवञ्शब्दः कनिन्प्रत्ययान्तो निपातितः। स्त्रियाम् 'ऋन्नेभ्यो ङीप्' इति ङीप्। भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति संप्रसारणम्। उच्छत्। 'उछी विवासे'। विवासो वर्जनम्। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ्। बहुलं 'छन्दस्यमाङ्योगेऽपि' इति अडागमाभावः। स्रिधः। 'स्रिधु शोषणे'। 'क्विप् च' इति क्विप् ॥

उष॒ आ भा॑हि भा॒नुना॑ च॒न्द्रेण॑ दुहितर्दिवः ।
आ॒वह॑न्ती॒ भूर्य॒स्मभ्यं॒ सौभ॑गं व्यु॒च्छन्ती॒ दिवि॑ष्टिषु ॥ ९ ॥

उष॑ः । आ । भा॒हि॒ । भा॒नुना॑ । च॒न्द्रेण॑ । दु॒हि॒त॒ः । दि॒वः॒ ।
आ॒ऽवह॑न्ती । भूरि॑ । अ॒स्मभ्य॑म् । सौभ॑गम् । वि॒ऽउ॒च्छन्ती॑ । दिवि॑ष्टिषु ॥ ९ ॥

हे ᵛदिवः ᵛदुहितः द्युलोकस्य पुत्रि ᵛउषः उषोदेवते ᵛचन्द्रेण सर्वेषामाह्लादकेन[3] ᵛभानुना प्रकाशेन ᵛआ समन्तात् ᵛभाहि प्रकाशस्व। किं कुर्वती। ᵛदिविष्टिषु दिवसेषु ᵛभूरि प्रभूतं ᵛसौभगं सौभाग्यम्

---

१. ढ–'युक्तैः रथैः' नास्ति। २. ढ–नमनं कुर्वन्तीत्यर्थः। ३. ढ–सर्वेषामाह्लादकरेण।

ᵛअस्मभ्यम् ᵛआवहन्ती संपादयन्ती । तथा ᵛव्युच्छन्ती तमांसि वर्जयन्ती ॥ उषः । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । दुहितर्दिवः । 'परमपि च्छन्दसि' इति दिवः इत्यस्य परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । आवहन्ती । ङीप्शपौ पित्त्वादनुदात्तौ । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेणानुदात्तत्वम् । अतो धातुस्वरः शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । भूरि । प्रभवति न विनश्यतीति भूरि । 'अदिशदिभूशुभिभ्यः क्रिन्' (उ.सू. ४. ५०५) इति क्रिन् । नित्त्वादाद्युदात्तत्वम् । सुभगस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धौ प्राप्तायां 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् अत्रोत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् (का. ७. ३. १९)। व्युच्छन्ती । 'उछी विवासे'। विवासो वर्जनम् । तौदादिकः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । दिविष्टिषु । दिव्शब्देन दिविष्ठः आदित्यो लक्ष्यते । तस्य इष्टयः एषणानि गमनानि येषु दिवसेषु ते दिविष्टयः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

विश्व॑स्य॒ हि प्राण॑नं॒ जीव॑नं॒ त्वे वि यदु॒च्छसि॑ सूनरि ।
सा नो॒ रथे॑न बृह॒ता वि॑भावरि श्रु॒धि चि॑त्रामघे॒ हव॑म् ॥ १० ॥

विश्व॑स्य । हि । प्राण॑नम् । जीव॑नम् । त्वे इति॑ । वि । यत् । उ॒च्छसि॑ । सू॒न॒रि॒ ।
सा । नः॒ । रथे॑न । बृ॒ह॒ता । वि॒भा॒ऽव॒रि॒ । श्रु॒धि । चि॒त्र॒ऽम॒घे॒ । हव॑म् ॥ १० ॥

हे ᵛसूनरि उषोदेवि[1] ᵛविश्वस्य प्राणिजातस्य ᵛप्राणनं चेष्टनं ᵛजीवनं प्राणधारणं च ᵛत्वे ᵛहि त्वय्येव वर्तते । ᵛयत् यस्मात् त्वं ᵛवि ᵛउच्छसि तमो वर्जयसि । हे ᵛविभावरि विशिष्टप्रकाशयुक्ते ᵛसा तादृशी त्वं ᵛनः अस्मान्प्रति ᵛबृहता प्रौढेन ᵛरथेन आयाहीति शेषः । तथा हे ᵛचित्रामघे विचित्रधनयुक्ते उषोदेवि नः अस्मदीयं ᵛहवम् आह्वानं ᵛश्रुधि शृणु ॥ प्राणनम् । 'अन चेष्टायाम्'। 'ल्युट् च' इति भावे ल्युट् । योरनादेशः । समासे 'अनितेः' (पा. सू. ८. ४. १९) इति उपसर्गस्थात्[2] रकारात् निमित्तात्[2] उत्तरस्य नकारस्य णत्वम् । ननु 'अनितेः' इति इटा निर्देशात् कथम् 'अन चेष्टायाम्' इत्यस्य णत्वम् । तर्हि जीवनस्य पृथगुपादानात् तेनैव धातुना चेष्टा लक्ष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । संहितायाम् एकादेशस्वरेण एकादेशस्योदात्तत्वम् । त्वे । 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः । उच्छसि । 'उछी विवासे'। तौदादिकः । सिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । 'निपातैर्यद्यदिहन्त°' इति निघातप्रतिषेधः । सूनरि । सुष्ठु नयतीति सूनरी । 'नॄ नये' इत्यस्मात् 'अच इः' इति औणादिक इप्रत्ययः । गतिसमासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् 'कृदिकारादक्तिनः' इति ङीष् । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वे प्राप्ते 'आमन्त्रितस्य च' इति आष्टमिको निघातः । विभावरि । विशिष्टा भा यस्याः सा । 'छन्दसीवनिपौ' (पा. सू. ५. २. १०९. २) इति मत्वर्थीयो वनिप् । 'वनो र च' इति ङीप्; तत्संनियोगेन नकारस्य रेफादेशश्च । श्रुधि । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । हेरपित्त्वेन प्रत्ययस्वरेणान्तोदात्तत्वम् । पादादित्वात् निघाताभावः । मघम् इति धननाम । चित्रं मघं यस्याः सा चित्रमघा । 'अन्येषामपि दृश्यते' इति

---

१. ढ–उषोदेवते । २ च-छ-ण-फ-ल-श-स-उपसर्गस्थात् निमित्तात्; त–उपसर्गस्थनिमित्तात् ।

संहितायां पूर्वपदस्य दीर्घत्वम् । हवम् । 'ह्वेञ् स्पर्धायां शब्दे च' । 'भावेऽनुपसर्गस्य' इति अप्प्रत्ययः; तत्संनियोगेन संप्रसारणं च ॥　　॥ ४ ॥

उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।

तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥ ११ ॥

उषः । वाजम् । हि । वंस्व । यः । चित्रः । मानुषे । जने ।

तेन । आ । वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा । गृणन्ति । वह्नयः ॥ ११ ॥

हे उषः वाजं हविर्लक्षणमन्नं हि श्रुतिषु प्रसिद्धं वंस्व याचस्व स्वीकुर्वित्यर्थः । यः वाजः चित्रः चायनीयः मानुषे मनुष्ये जने जाते यजमाने वर्तते तं वाजमिति पूर्वत्रान्वयः । तेन कारणेन सुकृतः सुष्ठु कृतवतो यजमानान् अध्वरान् हिंसारहितान् यागान् उप आ वह प्रापय । ये यजमानाः वह्नयः यज्ञनिर्वाहकाः त्वा त्वां गृणन्ति स्तुवन्ति तान् सुकृत इति पूर्वेण संबन्धः । एतदुक्तं भवति । यजमानैः प्रत्तं हविः स्वीकृत्य पुनरपि तेषां यज्ञं संपादयेति ॥ वाजम् । 'वज व्रज गतौ' । कर्मणि घञ् । 'अजिव्रज्योश्च' ( पा. सू. ७. ३. ६० ) इत्यत्र चशब्दस्य अनुक्तसमुच्चयार्थत्वात् वाजो वाज्यमित्यत्रापि कुत्वाभाव इति वृत्तावुक्तत्वात् कुत्वाभावः । 'कर्षात्वतः°' इत्यन्तोदात्तत्वे प्राप्ते वृषादित्वादाद्युदात्तत्वम् । वंस्व । 'वनु याचने' । अत्र याचनवाचिना धातुना तदुत्तरभावी स्वीकारो लक्ष्यते । 'बहुलं छन्दसि' इति विकरणस्य लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'हि च' इति निघातप्रतिषेधः । सुकृतः । 'सुकर्मपाप°' इत्यादिना करोतेः भूतार्थे क्विप् । तुगागमः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अध्वरान् । ध्वरो हिंसा नास्त्यस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अध्वरान् इत्यस्य ईप्सिततमत्वात् 'कर्तुरीप्सिततमम्°' ( पा. सू. १. ४. ४९ ) इति कर्मसंज्ञा, सुकृत इत्यस्य तु 'अकथितं च' ( पा. सू. १. ४. ५१ ) इति, 'नीवह्योर्हरतेश्च' ( पा. म. १. ४. ५१ ) इति द्विकर्मकेषु वहतेः परिगणितत्वात् । अध्वरान् इत्यत्र नकारस्य संहितायां 'दीर्घादटि°' इति रुत्वम् । 'आतोऽटि नित्यम्' इति पूर्वस्य आकारस्य सानुनासिकता । गृणन्ति । 'गॄ शब्दे' । 'क्र्यादिभ्यः श्ना' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः ॥

विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।

सास्मासु धा गोमदश्वावदुक्थ्यमुषो वाजं सुवीर्यम् ॥ १२ ॥

विश्वान् । देवान् । आ । वह । सोमऽपीतये । अन्तरिक्षात् । उषः । त्वम् ।

सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् । उक्थ्यम् । उषः । वाजम् । सुऽवीर्यम् ॥ १२ ॥

हे उषः त्वं सोमपीतये सोमपानाय अन्तरिक्षात् अन्तरिक्षलोकात् विश्वान् सर्वान् देवान् आ वह अस्मदीयं देवयजनदेशं प्रापय । हे उषः सा तादृशी त्वं गोमत् गोमन्तं बहुभिर्गोभिर्युक्तं अश्वावत् अश्वैरुपेतम् उक्थ्यं प्रशस्यं सुवीर्यं शोभनवीर्योपेतं वाजम् अन्नम् अस्मासु धाः

निधेहि स्थापयेत्यर्थः ॥ धाः । दधातेः ‘ छन्दसि लुङ्लङ्लिटः ’ इति प्रार्थनायां लुङ् । ‘ गातिस्था° ’ इति सिचो लुक् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । गोमत् । अश्वावत् । ‘ मन्त्रे सोमाश्वेन्द्रिय° ’ इति मतुपि दीर्घत्वम् । उभयत्र ‘ सुपां सुलुक्° ’ इति विभक्तेर्लुक् । उक्थ्यम् । उक्थं स्तोत्रम् । तत्र भवमुक्थ्यम् । ‘ भवे छन्दसि ’ इति यत् । ‘ सर्वे विधयश्छन्दसि विकल्प्यन्ते ’ इति ‘ यतोऽनावः ’ इत्याद्युदात्तत्वाभावे ‘ तित्स्वरितम् ’ इति स्वरितत्वम् । उपः । आमन्त्रिताद्युदात्तत्वम् । पादादित्वात् निघाताभावः । सुवीर्यम् । शोभनं वीर्यं यस्य । ‘ वीरवीर्यौ च ’ इत्युत्तरपदाद्युदात्तत्वम् ॥

यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥ १३ ॥

यस्याः । रुशन्तः । अर्चयः । प्रति । भद्राः । अदृक्षत ।
सा । नः । रयिम् । विश्वऽवारम् । सुऽपेशसम् । उषाः । ददातु । सुग्म्यम् ॥ १३ ॥

यस्याः उषसः अर्चयः प्रकाशाः रुशन्तः शत्रून् हिंसन्तः भद्राः कल्याणाः प्रति अदृक्षत प्रतिदृश्यन्ते, सा तथाभूता उषाः नः अस्मभ्यं रयिं ददातु । कीदृशं रयिम् । विश्ववारं विश्वस्य वारकम् । यद्वा । विश्वैर्वरणीयम्[1] । सुपेशसम् । पेश इति रूपनाम । शोभनरूपोपेतं सुग्म्यं सुष्ठु गन्तव्यम् । यद्वा । सुग्म्यमिति सुखनाम । तद्धेतुत्वात् ताच्छब्द्यम् ॥ रुशन्तः । ‘ रुश रिश हिंसायाम् ’ । शतरि तुदादित्वात् शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सतिशिष्टत्वात् विकरणस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । अदृक्षत । दृशेः कर्मणि लुङि झस्य अदादेशः । च्लेः सिच् । ‘ न दृशः ’ ( पा. सू. ३. १. ४७ ) इति क्सप्रतिषेधः । ‘ एकाचः° ’ इति इट्प्रतिषेधः । ‘ लिङ्सिचावात्मनेपदेषु ’ (पा. सू. १. २. ११ ) इति सिचः कित्त्वात् लघूपधगुणाभावः । ‘ सृजिदृशोर्झल्यमकिति ’ ( पा. सू. ६. १. ५८ ) इति अमागमाभावश्च कित्त्वादेव । षत्वकत्वषत्वानि । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । विश्ववारम् । विश्वं वृणोतीति विश्ववारः । ‘ वृञ् वरणे ’ । कर्मणि अण् । यद्वा । विश्वैर्व्रियते इति विश्ववारः । कर्मणि घञ् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । सुग्म्यम् । सुष्ठु गन्तव्यः सुग्मः । गमेः ‘ घञर्थे कविधानम्° ’ इति कप्रत्ययः । ‘ गमहन° ’ इत्यादिना उपधालोपः । तत्र भवं सुग्म्यम् । ‘ भवे छन्दसि ’ इति यत् । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् ॥

ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥ १४ ॥

ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि ।
सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥ १४ ॥

---

१. सर्वैर्वरणीयम् ।

हे ᵛमहि महिते[1] पूजनीये वा उषोदेवते ᵛत्वां ᵛये ᵛचिद्धि ये खलु प्रसिद्धाः ᵛपूर्वे चिरंतनाः ᵛऋषयः मन्त्रद्रष्टारः ᵛऊतये रक्षणाय। अवः इति अन्ननाम। ᵛअवसे अन्नाय च ᵛजुहूरे जुह्विरे आहूतवन्तः सूक्तरूपैर्मन्त्रैः स्तुतवन्त इत्यर्थः। हे ᵛउषः ᵛसा तादृशी त्वं ᵛराधसा अस्माभिर्दत्तेन हविर्लक्षणेन धनेन ᵛशुक्रेण ᵛशोचिषा दीप्तेन तमो निवारयितुं समर्थेन तेजसा चोपलक्षिता सती तेषामृषीणामिव ᵛनः अस्माकं ᵛस्तोमान् ᵛअभि स्तुतीरभिलक्ष्य ᵛगृणीहि सम्यक् स्तुतमिति शब्दय। अस्मदीयाभिः स्तुतिभिः संतुष्टा भवेत्यर्थः॥ ऊतये। अवतेः क्तिनि 'ज्वरत्वर°' इत्यादिना वकारस्य उपधायाश्च ऊठ्। 'ऊतियूति°' इत्यादिना क्तिन् उदात्तो निपातितः। जुहूरे। 'ह्वेञ् स्पर्धायां शब्दे च'। लिटि 'अभ्यस्तस्य च' इति द्विर्वचनात् पूर्वमेव अभ्यस्तकारणभूतस्य ह्वयतेः संप्रसारणम्। 'अभ्यस्तस्य यो ह्वयतिः कश्चाभ्यस्तस्य ह्वयतिः यस्तस्य कारणम्' (का. ६. १. ३३) इति व्याख्यातत्वात्। परपूर्वत्वे 'हलः' इति दीर्घत्वम्। द्विर्वचनादीनि। 'इरयो रे' इति इरेचो रेआदेशः। 'चितः' इत्यन्तोदात्तत्वम्। यद्वृत्तयोगादनिघातः। तत्र हि पञ्चमीनिर्देशेऽपि व्यवहितेऽपि कार्यं भवतीत्युक्तम् (का. ८. १. ६६)। महि। 'मह पूजायाम्'। औणादिकः इप्रत्ययः। 'कृदिकारादक्तिनः' इति ङीष्। संबुद्धौ 'अम्बार्थ°[2]' (पा. सू. ७. ३. १०७) इति ह्रस्वत्वम्। स्तोमान्। संहितायां नकारस्य रुत्वाद्युक्तम्। नित्त्वादाद्युदात्तत्वम्। गृणीहि। 'गॄ शब्दे'। क्रैयादिकः। शिति 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्। राधसा। राध्नोत्यनेनेति राधः। असुनो नित्त्वादाद्युदात्तत्वम्। उषः। पादादित्वात् आष्टमिकनिघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम्॥

उषो यद॒द्य भा॒नुना॒ वि द्वारा॑वृ॒णवो॑ दि॒वः।
प्र नो॑ यच्छतादवृ॒कं पृ॒थु च्छ॒र्दिः प्र दे॑वि॒ गोम॑ती॒रिषः॑॥ १५॥

उषः॑। यत्। अ॒द्य। भा॒नुना॑। वि। द्वारौ॑। ऋ॒णवः॑। दि॒वः।
प्र। नः॒। य॒च्छ॒ता॒त्। अ॒वृ॒कम्। पृ॒थु। छ॒र्दिः। प्र। दे॒वि॒। गोऽम॑तीः। इषः॑॥ १५॥

हे ᵛउषः त्वम् ᵛअद्य अस्मिन् प्रभातसमये ᵛयत् यस्मात् ᵛभानुना प्रकाशेन ᵛदिवः अन्तरिक्षस्य ᵛद्वारौ द्वारभूतौ पूर्वापरदिग्भागावन्धकारेणाच्छादितौ ᵛवि ᵛऋणवः विश्लिष्य प्राप्नोषि, तस्मात् त्वं ᵛनः अस्मभ्यं ᵛछर्दिः तेजस्वि गृहं ᵛप्र ᵛयच्छतात् देहि। कीदृशं छर्दिः। ᵛअवृकं हिंसकरहितं ᵛपृथु विस्तीर्णम्। अपि च हे ᵛदेवि देवनशीले ᵛगोमतीः बहुभिर्गोभिर्युक्ताः[3] ᵛइषः अन्नानि। प्र इत्युपसर्गस्य आवृत्तेः यच्छतात् इत्यनुषज्यते। ᵛप्र यच्छतात् देहि। त्वदागमनस्यास्मद्रक्षणार्थत्वादस्मदभीष्टं गृहादिकं प्रयच्छेत्यर्थः। छर्दिः इति गृहनाम, 'छर्दिः छदिः' (नि. ३. ४. १८) इति तन्नामसु पाठात्॥ ऋणवः। 'ऋणु गतौ'। छान्दसे लङि सिपि तनादित्वात् उप्रत्ययः। ततो व्यत्ययेन शपि गुणावादेशौ। शपः पित्त्वादनुदात्तत्वे उप्रत्ययस्वरः शिष्यते। यद्वृत्तयोगादनिघातः। दिवः। 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्। प्र नः। 'उपसर्गाद्बहुलम्' इति बहुलवचनात् नसो णत्वाभावः। यच्छतात्। 'दाण् दाने'। शपि 'पाघ्रा°' इत्यादिना यच्छादेशः। अवृकम्। नास्ति वृकोऽस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्'। इत्युत्तरपदान्तोदात्तत्वम्। पृथु। 'प्रथ प्रख्याने'। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' (उ. सू. १. २८) इति कुप्रत्ययः संप्रसारणं च। छर्दिः इति गृहनाम। 'उछृदिर्

१. ढ–महति। २. श–अम्बार्थनद्योर्ह्रस्वः। ३. ढ–गोयुक्ताः।

दीप्तिदेवनयोः ’। ‘ अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ’ ( उ. सू. २. २६५ ) इति इसिप्रत्ययः । लघूपधगुणः । प्रत्ययस्वरः ॥

सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।
सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ॥ १६ ॥

सम् । नः॒ । रा॒या । बृ॒ह॒ता । वि॒श्वऽपे॑शसा । मि॒मि॒क्ष्व । सम् । इळा॑भिः । आ ।
सम् । द्यु॒म्नेन॑ । वि॒श्व॒ऽतु॒रा॑ । उ॒षः॒ । म॒हि॒ । सम् । वाजैः॑ । वा॒जि॒नी॒ऽव॒ति॒ ॥ १६ ॥

हे ᵛउषः ᵛनः अस्मान् ᵛराया धनेन ᵛसं ᵛमिमिक्ष्व संसिञ्च संयोजयेत्यर्थः । कीदृशेन धनेन । ᵛबृहता प्रभूतेन ᵛविश्वपेशसा । पेश इति रूपनाम । बहुविधरूपयुक्तेन । तथा ᵛइळाभिः ᵛआ गोभिश्च अस्मान् ᵛसं मिमिक्ष्व । इळा इति गोनाम । ‘ इळा जगती ’ ( नि. २. ११. ७ ) इति तन्नामसु पाठात् । आकारः समुच्चये पदान्ते वर्तमानत्वात् । उक्तं च—‘ एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारः ’ ( निरु. १. ४ ) इति । किंच हे ᵛमहि महनीये उषोदेवते ᵛद्युम्नेन यशसा ᵛसं मिमिक्ष्व । ‘ द्युम्नं द्योततेर्यशो वान्नं वा ’ ( निरु. ५. ५ ) इति यास्कः । कीदृशेन द्युम्नेन । ᵛविश्वतुरा सर्वेषां शत्रूणां हिंसकेन । तथा हे ᵛवाजिनीवति अन्नसाधनभूतक्रियायुक्ते ᵛवाजैः अन्नैः अस्मान् ᵛसं मिमिक्ष्व । ‘ अन्नं वै वाजः ’ ( श. ब्रा. ९. ३. ४. १ ) इति श्रुत्यन्तरात् ॥ राया । ‘ ऊडिदम्° ’ इत्यादिना विभक्तेरुदात्तत्वम् । बृहता । ‘ बृहन्महतोरुपसंख्यानम् ’ इति विभक्तिरुदात्ता । विश्वपेशसा । विश्वानि पेशांसि यस्यासौ विश्वपेशाः । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । यद्वा । मरुद्वृधादिर्द्रष्टव्यः । मिमिक्ष्व । ‘ मिह सेचने ’ । व्यत्ययेन आत्मनेपदम् । लोटि ‘ बहुलं छन्दसि ’ इति शपः श्लुः । द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । प्रत्ययस्वरस्य सतिशिष्टत्वात् स एव शिष्यते । पूर्वपदस्य असमानवाक्यस्थत्वात् ‘ तिङ्ङतिङः ’ इति निघातो न भवति, ‘ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ’ इति वचनात् । विश्वतुरा । तूर्वतीति तूः । तुर्वी हिंसार्थः । ‘ क्विप् च ’ इति क्विप् । ‘ राल्लोपः ’ इति वलोपः । विश्वेषां तूः विश्वतूः । ‘ समासस्य ’ इत्यन्तोदात्तत्वम् । वाजिनीवति । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । तादृशी क्रिया यस्याः सा तथोक्ता ॥ ॥ ५ ॥

‘ उषो भद्रेभिः ’ इति चतुर्ऋचं षष्ठं सूक्तम् । अत्रानुक्रम्यते—‘ उषश्चतुष्कमानुष्टुभं तु ’ इति । कण्वपुत्रः प्रस्कण्व ऋषिः । तुह्यादिपरिभाषया इदमुत्तरं चानुष्टुभम् । पूर्वत्र ‘ उषस्यं तु ’ इत्युक्तत्वात् इदमपि सूक्तम् उषस्यम् । प्रातरनुवाकस्योषस्ये क्रतावानुष्टुभे छन्दस्येतत्सूक्तम् । सूत्र्यते हि—‘ उषो भद्रेभिरित्यानुष्टुभम् ’ ( आश्व. श्रौ. ४. १४ ) इति । आश्विनशस्त्रेऽप्येतत्सूक्तं, ‘ प्रातरनुवाकन्यायेन ’ ( आश्व. श्रौ. ६. ५ ) इत्यतिदेशात् ॥

उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि ।
वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥ १ ॥

उषः । भद्रेभिः । आ । गहि । दिवः । चित् । रोचनात् । अधि ।
वहन्तु । अरुणऽप्सवः । उप । त्वा । सोमिनः । गृहम् ॥ १ ॥

हे ᵛउषः उषोदेवते ᵛभद्रेभिः भन्दनीयैः[1] शोभनैर्मार्गैः ᵛदिवः अन्तरिक्षलोकात् । ᵛरोचनात् रोचमानात् दीप्यमानात् । अधिः उपर्यर्थः । उपरि वर्तमानात् । चित् इति पूजितार्थः[2] । पूजितात् एवंविधादन्तरिक्षलोकात् ᵛआ ᵛगहि आगच्छ । हे उषः ᵛअरुणप्सवः अरुणवर्णा गावः ᵛसोमिनः सोमयुक्तस्य यजमानस्य ᵛगृहं देवयजनरूपं यज्ञगृहं ᵛत्वा त्वाम् ᵛउप ᵛवहन्तु प्रापयन्तु ॥ गहि । गमेर्लोटि ' बहुलं छन्दसि ' इति शपो लुक् । हेरपित्त्वेन ङित्त्वे ' अनुदात्तोपदेश॰ ' इत्यादिना अनुनासिकलोपः । ' अतो हेः ' इति लुक् न भवति, ' असिद्धवदत्रा भात् ' इति अनुनासिकलोपस्यासिद्धत्वात् । रोचनात् । ' रुच दीप्तौ ' । ' अनुदात्तेतश्च हलादेः ' इति युच् । योरनादेशे ' चितः ' इत्यन्तोदात्तत्वम् । अरुणप्सवः । ' प्सा भक्षणे ' । प्सान्ति भक्षयन्ति स्तनं पिबन्तीति प्सवो वत्साः । औणादिकः कुप्रत्ययः । ' आतो लोप इटि च ' इति आकारलोपः । अरुणाः प्सवो यासां तास्तथोक्ताः । अत्र वत्सानामारुण्यप्रतिपादनात् मातॄणामपि तथात्वं गम्यते । ' पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते ' ( पा. म. १. ३. २१. ५ ) इति गोनर्दीयः । तासां च उषोवाहनत्वं निघण्टावुक्तम्—' अरुण्यो गाव उषसाम् ' ( नि. १. १५. ७ ) इति । अरुणशब्दः ' अर्तेश्च ' ( उ. सू. ५. ६८५ ) इति उनन्प्रत्ययान्तः । ' तृणाख्यायां चित् ' ( उ. सू. ३. ३३९ ) इत्यतः ' चित् ' इत्यनुवृत्तेरन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते ॥

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।
तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥ २ ॥

सुऽपेशसम् । सुऽखम् । रथम् । यम् । अधिऽअस्थाः । उषः । त्वम् ।
तेन । सुऽश्रवसम् । जनम् । प्र । अव । अद्य । दुहितः । दिवः ॥ २ ॥

हे ᵛउषः ᵛत्वं ᵛयं ᵛरथम् ᵛअध्यस्थाः अधितिष्ठसि । कीदृशं रथम् । ᵛसुपेशसं शोभनावयवं शोभनरूपयुक्तं वा । ' पेश इति रूपनाम ' ( निरु. ८. ११ ) इति यास्कः । यद्वा । शोभनहिरण्ययुक्तम् । ' पेशः कृशनम् ' ( नि. १. २. ६ ) इति तन्नामसु पाठात् । ᵛसुखं शोभनेन खेन आकाशेन युक्तं विस्तृतमित्यर्थः । यद्वा । सुखहेतुभूतम् । अथवा सुखमिति क्रियाविशेषणम् । सुखं यथा भवति तथेत्यर्थः । हे ᵛदिवः ᵛदुहितः द्युलोकसकाशात् उत्पन्ने उषोदेवते ᵛतेन रथेन ᵛअद्य अस्मिन् काले ᵛसुश्रवसं शोभनहविर्युक्तं ᵛजनं यजमानं ᵛप्राव प्रकर्षेण गच्छ[3] ॥ सुपेशसम् । ' पिश अवयवे ' । अस्मात् असुन्प्रत्ययः । नित्त्वादाद्युदात्तः पेशस्शब्दः । शोभनं पेशो यस्यासौ सुपेशाः । ' आद्युदात्तं

---

१. ढ–भजनीयैः । २. ढ–पूजार्थीयः । ३. ढ–रक्ष ।

च्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् । अध्यस्थाः । तिष्ठतेः ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लुङि ' गातिस्था० ' इति सिचो लुक् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । ' तिङि चोदात्तवति ' इति गतेरनुदात्तत्वम् । तेन । ' अन्येषामपि दृश्यते ' इति संहितायां दीर्घः । सुश्रवसम् । 'श्रव इत्यन्ननाम श्रूयत इति सतः ' ( निरु. १०. ३ ) इति यास्कः । सुपेशसमितिवदुत्तरपदाद्युदात्तत्वम् । अव । ' अव रक्षणगतिप्रीतितृप्ति० ' इत्युक्तत्वात् अत्र अवतिर्गत्यर्थः । दुहितर्दिवः । ' परमपि च्छन्दसि ' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति पदद्वयसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ॥

वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३ ॥

वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि ।
उषः । प्र । आरन् । ऋतून् । अनु । दिवः । अन्तेभ्यः । परि ॥ ३ ॥

हे अर्जुनि शुभ्रवर्णे उषः उषोदेवते ते तव ऋतूँरनु गमनान्यनुलक्ष्य द्विपत् द्विपात् मनुष्यादिकं चतुष्पत् गवादिकं तथा पतत्रिणः पतत्रवन्तः पक्षोपेताः वयश्चित् पक्षिणश्च दिवः अन्तेभ्यः आकाशप्रान्तेभ्यः परि उपरि प्रारन् प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनः त्वदागमानन्तरं चेष्टावन्तो भवन्तीत्यर्थः ॥ पतत्रिणः । ' पतॢ गतौ ' । पतत्यनेनेति पतत्रम् । ' अमिनक्षि० ' ( उ. सू. ३. ३८५ ) इत्यादिना अत्रन्प्रत्ययः । ततो मत्वर्थीय इनिः । द्विपत् । द्वौ पादावस्येति ' संख्यासुपूर्वस्य ' ( पा. सू. ५. ४. १४० ) इति पादशब्दस्य अन्त्यलोपः समासान्तः । अयस्मयादित्वेन भत्वात् ' पादः पत् ' ( पा. सू. ६. ४. १३० ) इति पद्भावः । ' द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ' ( पा. सू. ६. २. १९७ ) इत्युत्तरपदान्तोदात्तत्वम् । चतुष्पत् । चत्वारः पादा अस्य । स्वरव्यतिरिक्तं पूर्ववत् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ' इणः षः ' इत्यनुवृत्तौ ' इदुदुपधस्य चाप्रत्ययस्य ' ( पा. सू. ८. ३. ४१ ) इति विसर्जनीयस्य षत्वम् । न च परत्वेनास्य असिद्धत्वात् ' कुप्वोः ≍क ≍पौ च ' ( पा. सू. ८. ३. ३७ ) इति उपध्मानीयादेशः शङ्कनीयः, येन नाप्राप्तिन्यायेन तस्यापवादत्वात् । 'अपवादस्तु परमपि पूर्वं बाधते एव' इति वृत्तावुक्तम् । आरन् । ' ऋ गतौ ' । ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लुङि ' सर्तिशास्त्यर्तिभ्यश्च ' इति च्लेः अङादेशः । ' ऋदृशोऽङि गुणः ' इति गुणः । आडागमः । ऋतून् । ' ऋ गतौ ' । अस्मात् औणादिको भावे कुप्रत्ययः । अनु । ' अनुर्लक्षणे ' ( पा. सू. १. ४. ८४ ) इति अनोः कर्मप्रवचनीयत्वम् । ' कर्मप्रवचनीययुक्ते० ' ( पा. सू. २. ३. ८) इति द्वितीया । संहितायां ' दीर्घादटि समानपादे ' इति नकारस्य रुत्वम् । ' अत्रानुनासिकः पूर्वस्य तु वा ' इति रोः पूर्वस्य वर्णस्य सानुनासिकत्वम् । दिवः । ' ऊडिदम्० ' इति विभक्तिरुदात्ता । अन्तेभ्यः । ' पञ्चम्याः परावध्यर्थे ' इति विसर्जनीयस्य सत्वम् ॥

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।
तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥ ४ ॥

विऽउच्छन्ती । हि । रश्मिऽभिः । विश्वम् । आऽभासि । रोचनम् ।
ताम् । त्वाम् । उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥ ४ ॥

हे ^v^उषः ^v^व्युच्छन्ती तमो वर्जयन्ती त्वं ^v^रश्मिभिः स्वकीयैस्तेजोभिः ^v^विश्वं सर्वं भूतजातं ^v^रोचनं रोचमानं प्रकाशयुक्तं यथा भवति तथा ^v^आ भासि आ समन्तात् प्रकाशसे । ^v^हि यस्मादेवं तस्मात् ^v^तां तादृशीं ^v^त्वां ^v^वसूयवः वसुकामाः ^v^कण्वाः मेधाविन ऋत्विजः कण्वगोत्रोत्पन्ना वा महर्षयः ^v^गीर्भिः स्तुतिलक्षणैर्वचोभिः ^v^अहूषत[1] स्तुतवन्तः[1] इत्यर्थः । कण्व इति मेधाविनाम, 'कण्वः ऋभुः' ( नि. ३. १५. ७ ) इति तन्नामसु पाठात् ॥ आभासि । 'भा दीप्तौ'। अदादित्वात् शपो लुक् । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'हि च' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । रोचनम् । 'रुच दीप्तौ'। 'अनुदात्तेतश्च हलादेः' इति युच् । 'चितः' इत्यन्तोदात्तत्वम् । वसूयवः । वसु धनमात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' । 'अकृत्सार्वधातुकयोः°' इति दीर्घः । 'क्याच्छन्दसि' इति उप्रत्ययः । गीर्भिः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । कण्वाः । कण शब्दार्थः । 'अशिप्रुषिलटिकणि°' इत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । अहूषत । ह्वेञो लुङि 'ह्वः संप्रसारणम्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति संप्रसारणम् । परपूर्वत्वे 'हलः' इति दीर्घत्वम् । च्लेः सिच् । 'एकाचः°' इति इट्प्रतिषेधः । संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावः ॥　　॥ ६ ॥

'उदु त्यम्' इति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यम् । आदौ नव गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभ इत्युक्तम् । तथा चानुक्रान्तम्—'उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्यः' इति। आश्विनशस्त्रे सौर्ये क्रतौ 'उदु त्यम्' इत्यादयो नवर्चः शंसनीयाः । 'संस्थितेष्वाश्विनाय' इति खण्डे सूत्रितं—'सूर्यो नो दिव उदु त्यं जातवेदसमिति नव' ( आश्व. श्रौ. ६. ५ ) इति ॥

**उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १ ॥**

उत् । ऊँ इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ॥१॥

^v^केतवः प्रज्ञापकाः सूर्याश्वाः यद्वा सूर्यरश्मयः ^v^सूर्यं सर्वस्य प्रेरकमादित्यम् ^v^उदु ^v^वहन्ति ऊर्ध्वं वहन्ति । उ इति पादपूरणः । उक्तं च—'मिताक्षरेष्वनर्थकाः कमीमिद्विति' ( निरु. १. ९ ) । किमर्थम् । ^v^विश्वाय विश्वस्मै भुवनाय ^v^दृशे द्रष्टुम् । यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् । ^v^त्यं प्रसिद्धं ^v^जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा ^v^देवं द्योतमानम् । अत्र निरुक्तम्—'उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्यम्' ( निरु. १२. १५ ) इति ॥ जातवेदसम् । जातानि वेत्तीति जातवेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । दृशे । 'दृशे विख्ये च' ( पा. सू. ३. ४. ११ ) इति तुमर्थे निपातितः । सूर्यम् । 'राजसूयसूर्य°' इत्यादिना 'षू प्रेरणे' इत्यस्मात् क्यपि रुडागमसहितो निपातितः । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ॥

**अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ २ ॥**

अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥ २ ॥

---

१. ढ–अहूषत आहूतवन्तः स्तुतवन्तः ।

vत्ये vतायवो vयथा प्रसिद्धास्तस्करा इव vनक्षत्रा नक्षत्राणि देवगृहरूपाणि । ‘ देवगृहा वै नक्षत्राणि ’ (तै. ब्रा. १. ५. २. ६ ) इति श्रुत्यन्तरात् । यद्वा । इह लोके कर्मानुष्ठाय[1] ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते । तथा च श्रूयते–‘ यो वा इह यजतेऽमुँ स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम् ’ (तै. ब्रा. १. ५. २. ५ ) इति । यद्वा । तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते, ‘ सुकृतां वा एतानि ज्योतीँषि यन्नक्षत्राणि ’ ( तै. सं. ५. ४. १. ३ ) इत्याम्नानात् । यास्कस्त्वाह— ‘ नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम् ’ ( निरु. ३. २० ) इति । तथाविधानि नक्षत्राणि vअक्तुभिः रात्रिभिः सह vअप vयन्ति अपगच्छन्ति । vविश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य vसूराय सूर्यस्यागमनं दृष्ट्वेति शेषः। तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्ते इत्यर्थः । तायुरिति स्तेननाम, ‘ तायुः तस्करः ’ ( नि. ३. २४. ७ ) इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम, ‘ शर्वरी अक्तुः ’ ( नि. १. ७. ४ ) इति तत्र पाठात् ॥ यथा । ‘ यथेति पादान्ते ’ इति सर्वानुदात्तत्वम् । नक्षत्रा । ‘ नक्ष गतौ ’ । ‘ अमिनक्षियजिबन्धिपतिभ्योऽत्रन् ’ ( उ. सू. ३. ३८५ ) इति अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । ‘ नभ्राण्नपात्° ’ इत्यत्र वृत्तौ त्वेवमुक्तं–‘ न क्षरति न क्षीयत इति वा नक्षत्रम् । क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यते ’ ( का. ६. ३. ७५ ) इति । ‘ शेश्छन्दसि बहुलम् ’ इति शेर्लोपः । यन्ति । ‘ इण् गतौ ’ । ‘ इणो यण् ’ इति यणादेशः । सूराय विश्वचक्षसे । विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः । ‘ चक्षेर्बहुलं शिच्च ’ ( उ. सू. ४. ६७२ ) इति असुन्प्रत्ययः । शित्त्वेन सार्वधातुकत्वात् ख्याञादेशाभावः । उभयत्र ‘ षष्ठ्यर्थे चतुर्थी वक्तव्या ’ ( पा. म. २. ३. ६२. १ ) इति चतुर्थी ॥

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ ३ ॥

अदृश्रम । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥३ ॥

vअस्य सूर्यस्य vकेतवः प्रज्ञापकाः vरश्मयः दीप्तयः vजनान् vअनु vवि vअदृश्रं जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते । सर्वं जगत्प्रकाशयन्तीत्यर्थः । तत्र दृष्टान्तः । vभ्राजन्तः दीप्यमानाः vअग्नयो vयथा अग्नय इव ॥ अदृश्रम् । ‘ दृशिर् प्रेक्षणे ’ । वर्तमाने लुङ् । ‘ इरितो वा ’ ( पा. सू. ३. १. ५७ ) इति च्लेः अङादेशः । ‘ रुट् ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ ( पा. सू. ७. १. ८ ) इति रुडागमः । अत एव बहुलवचनात् ‘ ऋदृशोऽङि गुणः ’ इति गुणाभावः इत्युक्तम् । ‘ तिङां तिङो भवन्ति ’ इति प्रथमपुरुषबहुवचनस्योत्तमपुरुषैकवचनादेशः । प्रथमपुरुषान्त एव शाखान्तरे श्रूयते–‘ अदृश्रन्नस्य केतवः ’ ( अ. सं. १३. २. १८ ) इति । जनान् इत्यस्य नकारस्य संहितायां रुत्वयत्वादि पूर्ववत् । भ्राजन्तः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते ॥

चातुर्मास्येषु शुनासीर्ये पर्वण्यस्ति सौर्य एककपालः । तस्य ‘ तरणिः ’ इत्येषा अनुवाक्या । तथा च सूत्रितं–‘ तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ’ ( आश्व. श्रौ. २. २० ) इति । तथा अतिमूर्तिनाम्न्येकाहे कृष्णपक्षे सौरीष्टिः कर्तव्या । तस्यामप्येषा अनुवाक्या । ‘ अतिमूर्तिना ’ इति खण्डे सूत्रितं–‘ नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतः ’ ( आश्व. श्रौ. ९. ८ ) इति ॥

---

१. च-छ-फ–कर्मानुष्ठानात् ।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ ४ ॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचनम् ॥ ४ ॥

हे ᵛसूर्य त्वं ᵛतरणिः तरिता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्ता ᵛअसि । तथा च स्मर्यते–' योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ' इति । यद्वा । उपासकानां रोगात् तारयितासि । ' आरोग्यं भास्करादिच्छेत् ' इति स्मरणात् । तथा ᵛविश्वदर्शतः विश्वैः सर्वैः प्राणिभिर्दर्शनीयः । आदित्यदर्शनस्य चण्डालादिदर्शनजनितपापनिर्हरणहेतुत्वात् । तथा च आपस्तम्बः–' दर्शने ज्योतिषां दर्शनम् ' इति । यद्वा । विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः । तथा ᵛज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता । सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा । चन्द्रादीनां रात्रौ प्रकाशयिता । रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति यथा द्वारस्थदर्पणोपरि[1] निपतिताः[2] सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः । यस्मादेवं तस्मात् ᵛविश्वं व्याप्तं ᵛरोचनं रोचमानमन्तरिक्षम् ᵛआ समन्तात् ᵛभासि प्रकाशयसि । यद्वा । हे सूर्य अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् तरणिः संसाराब्धेस्तारकः असि । यस्मात् त्वं विश्वदर्शतः विश्वैः सर्वैर्मुमुक्षुभिः दर्शतः द्रष्टव्यः साक्षात्कर्तव्यः इत्यर्थः । अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते । ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता । तथा चाम्नायते–' चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ' ( तै. आ. ३. १२.६ ) इति । ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं रोचमानं दीप्यमानं यथा भवति तथा आ भासि प्रकाशयसि । चैतन्यस्फुरणे हि सर्वं जगत् दृश्यते । तथा चाम्नायते–' तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ( क. उ. ५. १५ ) इति ॥ तरणिः । ' तॄ प्लवनतरणयोः ' । अस्मादन्तर्भावितण्यर्थात् ' अर्तिसृधृधम्यश्यवितॄभ्योऽनिः ' इति अनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । ज्योतिः करोतीति ज्योतिष्कृत् । ' क्विप् च ' इति क्विप् । ' नित्यं समासेऽनुत्तरपदस्थस्य ' इति विसर्जनीयस्य षत्वम् । भासि । 'भा दीप्तौ ' । अन्तर्भावितण्यर्थात् लटि अदादित्वात् शपो लुक् ॥

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥ ५ ॥

प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषान् ।

प्रत्यङ् । विश्वम् । स्वः । दृशे ॥ ५ ॥

हे सूर्य त्वं ᵛदेवानां ᵛविशः मरुन्नामकान् देवान् । ' मरुतो वै देवानां विशः ' ( तै. सं. २. २. ५. ७ ) इति श्रुत्यन्तरात् । तान् मरुत्संज्ञकान् देवान् ᵛप्रत्यङ् ᵛउदेषि तान्प्रतिगच्छन्नुदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा ᵛमानुषान् मनुष्यान् ᵛप्रत्यङ्ङुदेषि । तेऽपि यथा अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा ᵛविश्वं व्याप्तं ᵛस्वः स्वर्लोकं ᵛदृशे द्रष्टुं ᵛप्रत्यङ् उदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथोदेषीत्यर्थः । एतदुक्तं भवति । लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति । तथा चाम्नायते–'तस्मात्सर्व एव मन्यते मां प्रत्युदगात् ' ( तै. सं. ६. ५. ४. २) इति ॥ प्रत्यङ् । प्रति अञ्चतीति प्रत्यङ् । ' अञ्चु गति-

---

१. ल–द्वारस्थदर्पणे । २. त-ध-श–निपातिताः; फ–पतिताः ।

पूजनयोः '। 'ऋत्विक्° ' इत्यादिना क्विन्। 'अनिदिताम्° ' इति नलोपः। 'उगिदचाम्° ' इति नुम्। हल्ङ्यादिसंयोगान्तलोपौ। संयोगान्तलोपस्यासिद्धत्वात् उपधादीर्घनलोपयोरभावः। 'क्विन्प्रत्ययस्य कुः' ( पा. सू. ८. २. ६२ ) इति कुत्वम्। 'अनिगन्तोऽञ्चतौ° ' ( पा. सू. ६. २. ५२ ) इति अनिगन्तः इति पर्युदासात् पूर्वपदप्रकृतिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम्। एषि। 'इण् गतौ '। सिपि अदादित्वात् शपो लुक्। 'आदेशप्रत्यययोः ' इति षत्वम्। स्वः। सुपूर्वात् अर्तेः विच्। गुणे यणादेशः। 'न्यङ्स्वरौ स्वरितौ च ' इति स्वरितत्वम्। दृशे। 'दृशिर् प्रेक्षणे ' इत्यस्मात् 'दृशे विख्ये च ' इति तुमर्थे निपातितः ॥ ॥ ७ ॥

## येना॑ पावक॒ चक्ष॑सा भु॒रण्य॑न्तं॒ जनाँ॒ अनु॑ । त्वं व॑रुण॒ पश्य॑सि ॥ ६ ॥

येन॑ । पा॒व॒क॒ । चक्ष॑सा । भु॒रण्य॑न्तम् । जना॑न् । अनु॑ । त्वम् । व॒रु॒ण॒ । पश्य॑सि ॥ ६ ॥

हे ᵛपावक सर्वस्य शोधक ᵛवरुण अनिष्टनिवारक सूर्य ᵛत्वं ᵛजनान् जातान् प्राणिनः ᵛभुरण्यन्तं धारयन्तं पोषयन्तं वा इमं लोकं ᵛयेन ᵛचक्षसा प्रकाशेन ᵛअनु ᵛपश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं[1] स्तुम इति शेषः। यद्वा। उत्तरस्यामृचि संबन्धः। तेन चक्षसा व्येषीति। तथा च यास्केनोक्तं– 'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि ' ( निरु. १२. २२ ) इति ॥ भुरण्यन्तम्। 'भुरण धारणपोषणयोः '। कण्ड्वादित्वात् यक्। ततः शतरि कर्तरि शप्। अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। वरुण। 'वृञ् वरणे '। अस्मादन्तर्भावितण्यर्थात् 'कृवृदारिभ्य उनन् ' ( उ. सू. ३. ३३३ ) इति उनन्प्रत्ययः। अत्र वरुणशब्देनादित्य एवोच्यते। तथा चान्यत्राम्नातं—'तस्यै मित्रश्च वरुणश्चाजायेताम् ' ( तै. ब्रा. १. १. ९. २ ) इति। 'मित्रश्च वरुणश्च धाता चार्यमा च ' ( तै. आ. १. १३. ३ ) इति च ॥

## वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑ । पश्य॒ञ्जन्मा॑नि सूर्य ॥ ७ ॥

वि । द्याम् । ए॒षि॒ । रजः॑ । पृ॒थु । अहा॑ । मिमा॑नः । अ॒क्तुऽभिः॑ । पश्य॑न् । जन्मा॑नि । सू॒र्य॒ ॥ ७ ॥

हे ᵛसूर्य त्वं ᵛपृथु विस्तीर्णं ᵛरजः लोकम्। 'लोका रजांस्युच्यन्ते ' ( निरु. ४. १९ ) इति यास्कः। कं लोकम्। ᵛद्याम् अन्तरिक्षलोकं ᵛवि ᵛएषि विशेषेण गच्छसि। किं कुर्वन्। ᵛअहा अहानि ᵛअक्तुभिः रात्रिभिः सह ᵛमिमानः उत्पादयन्। आदित्यगत्यधीनत्वात् अहोरात्रविभागस्य। तथा ᵛजन्मानि जननवन्ति भूतजातानि[2] ᵛपश्यन् प्रकाशयन् ॥ रजस्पृथु इत्यत्र 'छन्दसि वाप्राम्रेडितयोः ' ( पा. सू. ८. ३. ४९ ) इति विसर्जनीयस्य सत्वम्। अहा। 'शेश्छन्दसि बहुलम् ' इति शेर्लोपः। मिमानः। 'माङ् माने '। जौहोत्यादिकः। शानचि श्लौ द्विर्भावे 'भृञामित् ' इति अभ्यासस्य इत्वम्। 'श्नाभ्यस्तयोरातः ' इति आकारलोपः। 'अभ्यस्तानामादिः ' इति अभ्यस्तस्याद्युदात्तत्वम्। जन्मानि। 'जनी प्रादुर्भावे '। 'अन्येभ्योऽपि दृश्यन्ते ' इति मनिन्। नित्त्वादाद्युदात्तत्वम् ॥

## स॒प्त त्वा॑ ह॒रितो॒ रथे॒ वह॑न्ति देव सूर्य । शो॒चिष्के॑शं विचक्षण ॥ ८ ॥

स॒प्त । त्वा॒ । ह॒रितः॑ । रथे॑ । वह॑न्ति । दे॒व॒ । सू॒र्य॒ । शो॒चिःऽके॑शम् । वि॒ऽच॒क्ष॒ण॒ ॥ ८ ॥

---

१. च-फ–प्रकाशरूपम्। २. च-फ–भूतानि।

हे ᵛसूर्य ᵛदेव द्योतमान ᵛविचक्षण सर्वस्य प्रकाशयितः ᵛसप्त सप्तसंख्याकाः ᵛहरितः अश्वाः रसहरणशीला रश्मयो वा ᵛत्वा त्वां ᵛवहन्ति प्रापयन्ति। कीदृशम्। ᵛरथे अवस्थितमिति शेषः। तथा ᵛशोचिष्केशम्। शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तः तम्। हरितः इति आदित्याश्वानां संज्ञा, 'हरित आदित्यस्य' (नि. १. १५. ३) इति निघण्टावुक्तत्वात्॥ शोचिष्केशम्। 'शुच दीप्तौ'। 'अर्चिशुचिहुसृपि°' इत्यादिना इसिप्रत्ययान्तः अन्तोदात्तः। स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते। 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम्॥

## अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः। ताभिर्याति स्वयुक्तिभिः॥ ९॥

अयुक्त। सप्त। शुन्ध्युवः। सूरः। रथस्य। नप्त्यः। ताभिः। याति। स्वयुक्तिऽभिः॥९॥

ᵛसूरः सर्वस्य प्रेरकः सूर्यः ᵛशुन्ध्युवः शोधिका अश्वस्त्रियः तादृशीः ᵛसप्त सप्तसंख्याकाः ᵛअयुक्त स्वरथे योजितवान्। कीदृश्यः[1]। ᵛरथस्य ᵛनप्त्यः न पातयित्र्यः। याभिर्युक्ताभिः रथो याति न पतति तादृशीभिरित्यर्थः। एवंभूताभिः ᵛताभिः अश्वस्त्रीभिः ᵛस्वयुक्तिभिः स्वकीययोजनेन रथे संबद्धाभिः ᵛयाति यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः॥ अयुक्त। 'युजिर् योगे'। स्वरितेत्त्वात् कर्त्रभिप्राये आत्मनेपदम्। लुङि च्लेः सिच्। 'एकाचः°' इति इट्प्रतिषेधः। 'लिङ्सिचावात्मनेपदेषु' (पा. सू. १. २. ११) इति सिचः किस्त्वात् लघूपधगुणाभावः। 'झलो झलि' इति सिचः सकारलोपः। 'चोः कुः' इति कुत्वम्। शुन्ध्युवः। 'शुन्ध विशुद्धौ'। 'यजिमनिशुन्धिदसिजनिभ्यो युः' (उ. सू. ३. ३००) इति युप्रत्ययः। शसि 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (पा. सू. ६. ४. ७७. १) इति उवङादेशः। सूरः। 'षू प्रेरणे'। 'सुसूधागृधिभ्यः क्रन्' (उ. सू. २. १८२) इति क्रन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। नप्त्यः। न पातयतीत्यर्थे 'नप्तृनेष्टृ°' (उ. सू. २. २५२) इत्यादिना उणादिषु नप्तृशब्दस्तृजन्तो निपातितः। 'ऋन्नेभ्यो ङीप्' इति ङीप्। यणादेशे 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वम्। 'सुपां सुपो भवन्ति' इति शसो जसादेशः। ततो यणादेशे 'उदात्तस्वरितयोर्यणः°' इति स्वरितत्वम्। रेफलोपश्छान्दसः। उक्तं च–'द्वौ चापरौ वर्णविकारनाशौ' (का. ६. ३. १०९) इति। 'शाखान्तरे तु नप्त्र्यः' इत्येव पठ्यते। स्वयुक्तिभिः। स्वकीयाः सूर्यसंबन्धिन्यो युक्तयो योजनानि यासाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

अवभृथेष्टौ होत्रकाः जलान्निष्क्रम्य 'उद्वयं तमसस्परि' इति मन्त्रं ब्रूयुः। तथा च 'पत्नीसंयाजैश्चरित्वा' इति खण्डे सूत्रितम्–'उद्वयं तमसस्परीत्युदेत्य' (आश्व. श्रौ. ६. १३) इति॥

## उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।
## देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ १०॥

उत्। वयम्। तमसः। परि। ज्योतिः। पश्यन्तः। उत्ऽतरम्।

देवम्। देवऽत्रा। सूर्यम्। अगन्म। ज्योतिः। उत्ऽतमम्॥ १०॥

---

[1]. ढ–कीदृशीः।

वयम् अनुष्ठातारः तमसस्परि तमस उपरि रात्रेरूर्ध्वं वर्तमानं तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः । तथा चाम्नायते–' उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्ति ' ( तै. सं. ५. १. ८. ६ ) इति । ज्योतिः तेजस्विनम् उत्तरम् उद्गततरमुत्कृष्टतरं वा देवत्रा देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यन्तः स्तुतिभिर्हविर्भिश्चोपासीनाः सन्तः उत्तमम् उत्कृष्टतमं ज्योतिः सूर्यरूपम् अगन्म प्राप्नवाम । तथा च श्रूयते–' अगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति ' (तै.सं.५.१.८.६) इति । युक्तं चैतत्, ' तं यथा यथोपासते तदेव भवन्ति ' इति श्रुत्यन्तरात् ॥ तमसस्परि । ' पञ्चम्याः परावध्यर्थे ' इति विसर्जनीयस्य सत्वम् । ज्योतिष्पश्यन्तः । ' इसुसोः सामर्थ्ये ' ( पा. सू. ८. ३. ४४ ) इति विसर्जनीयस्य षत्वम् । व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते । देवत्रा । ' देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ' ( पा. सू. ५. ४. ५६ ) इति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः । अगन्म । ' छन्दसि लुङ्लङ्लिटः ' इति प्रार्थनायां लङि ' बहुलं छन्दसि ' इति शपो लुक् । ' म्वोश्च ' ( पा. सू. ८. २. ६५ ) इति धातोः मकारस्य नकारः । अडागम उदात्तः । पादादित्वात् निघाताभावः । उत्तमम् । तमपः पित्त्वादनुदात्तत्वे प्राप्ते ' उत्तमशश्वत्तमौ सर्वत्र ' इति उञ्छादिषु पाठादन्तोदात्तत्वम् ॥

' उद्यन् ' इत्ययं तृचो रोगशान्त्यर्थः । तथा च अनुक्रमण्यामुक्तम्—' अन्त्यस्तृचो रोगघ्न उपनिषत् ' इति । युक्तं चैतत् । यस्मादनेन तृचेन त्वग्दोषशान्तये प्रस्कण्वः सूर्यमस्तौत् तेन तृचेन स्तुतः सूर्यस्तमृषिं रोगान्निरगमयत् तस्मादिदानीमपि रोगशान्तयेऽनेन तृचेन सूर्य उपासनीयः । तदुक्तं शौनकेन—' उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः । रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः ' इति ॥

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।

हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ ११ ॥

उत्ऽयन् । अद्य । मित्रऽमहः । आऽरोहन् । उत्ऽतराम् । दिवम् ।

हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥ ११ ॥

हे सूर्य सर्वस्य प्रेरक मित्रमहः सर्वेषामनुकूलदीप्तियुक्त अद्य अस्मिन् काले उद्यन् उदयं गच्छन् उत्तराम् उद्गततरां दिवम् अन्तरिक्षम् आरोहन् आभिमुख्येन प्राप्नुवन् । यद्वा । दिवम् अन्तरिक्षम् उत्तराम् आरोहन् उत्कर्षेण प्राप्नुवन् । एवंविधस्त्वं मम हृद्रोगं हृदयगतमान्तरं रोगं हरिमाणं शरीरगतकान्तिहरणशीलं बाह्यं रोगम्[1] । यद्वा । शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः । तदुभयमपि नाशय । मां स्तोतारमुभयविधाद्रोगान्मोचयेत्यर्थः ॥ मित्रमहः । मित्रमनुकूलं महस्तेजो यस्यासौ । आमन्त्रितनिघातः । उत्तराम् । उत् इत्यनेन उपसर्गेण स्वसंसृष्टधात्वर्थो लक्ष्यते । तस्मादातिशायनिकः तरप्प्रत्ययः । प्रथमपक्षेऽन्तरिक्षविशेषणत्वेन द्रव्यप्रकर्षप्रतीतेः आम् न भवति । द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यते इति ' किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ' ( पा. सू. ५. ४. ११ ) इति आमुः[2] । प्रथमपक्षे टाप्तरपोः पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । द्वितीये तु आम्प्रत्ययस्य सतिशिष्टत्वात् तस्यैव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगणः । हृद्रोगम् । ' वा शोकष्यञ्रोगेषु ' ( पा. सू. ६. ३. ५१ )

---

१. च-छ-न-फ–रोगं च । २. च-छ-त-न-फ-श-स–आम् ।

इति हृदयशब्दस्य हृदादेशः। मम। 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम्। हरिमाणम्। 'हृञ् हरणे'। 'जनिहृभ्यामिमनिन्' (उ. सू. ४. ५८८) इति औणादिक इमनिन्प्रत्ययः। व्यत्ययेनान्तोदात्तत्वम्। यद्वा। हरिच्छब्दस्य वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ् च' (पा. सू. ५. १. १२३) इति चकारात् इमनिन्प्रत्ययः। 'इष्ठेमेयःसु' इत्यनुवृत्तौ 'टेः' इति टिलोपः॥

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि॥ १२॥

शुकेषु। मे। हरिमाणम्। रोपणाकासु। दध्मसि।
अथो इति। हारिद्रवेषु। मे। हरिमाणम्। नि। दध्मसि॥ १२॥

ᵛमे मदीयं ᵛहरिमाणं शरीरगतं हरिद्वर्णस्य भावं ᵛशुकेषु तादृशं वर्णं कामयमानेषु पक्षिषु तथा ᵛरोपणाकासु शारिकासु पक्षिविशेषेषु ᵛदध्मसि स्थापयामः। ᵛअथो अपि च ᵛहारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णवत्सु ᵛमे मदीयं ᵛहरिमाणं ᵛनि ᵛदध्मसि निदधीमहि। स च हरिमा तत्रैव सुखेनास्ताम् अस्मान् मा बाधिष्टेत्यर्थः॥ दध्मसि। 'इदन्तो मसि' इति मस इकारागमः॥

उदगादयमादित्यो विश्वेन सहसा सह।
द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम्॥ १३॥

उत्। अगात्। अयम्। आदित्यः। विश्वेन। सहसा। सह।
द्विषन्तम्। मह्यम्। रन्धयन्। मो इति। अहम्। द्विषते। रधम्॥ १३॥

ᵛअयं पुरोवर्ती ᵛआदित्यः अदितेः पुत्रः सूर्यः ᵛविश्वेन ᵛसहसा सर्वेण बलेन ᵛसह ᵛउदगा उदयं प्राप्तवान्। किं कुर्वन्। ᵛमह्यं ᵛद्विषन्तं ᵛरन्धयन् ममोपद्रवकारिणं[1] हिंसन्[1] अपि च ᵛअहं ᵛद्विषते अनिष्टकारिणे रोगाय ᵛमो ᵛरधं नैव हिंसां करोमि। सूर्य एव अस्मदनिष्टकारिणं रोगं विनाशयत्वित्यर्थः॥ अगात्। एतेर्लुङि 'इणो गा लुङि' इति गादेशः। 'गातिस्था°' इति सिचो लुक्। आदित्यः। 'दित्यदित्यादित्य°' इति अपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः। रन्धयन्। 'रध हिंसासंराद्ध्योः'। ण्यन्तात् लटः शतृ। 'रधिजभोरचि' (पा. सू. ७. १. ६१) इति णौ धातोः नुमागमः। मो। मा उ निपातद्वयसमुदायो मैवेत्यस्यार्थे। 'ओत्' (पा. सू. १. १. १५) इति प्रगृह्यत्वे 'प्लुतप्रगृह्या अचि°' इति प्रकृतिभावः। द्विषते। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्। रधम्। रधेर्लुङि पुषादित्वात् च्लेः अङादेशः। 'रधिजभोरचि' इति धातोः नुम्। 'अनिदिताम्°' इति अनुषङ्गलोपः। 'न माङ्योगे' इति अडभावः॥ ॥ ८॥ ॥ ९॥

---

१. च-छ-ण-त-ध-न-फ-श–ममोपद्रवकारिणं रोगं हिंसन्; ल–ममोपद्रवकारणं हिंसन्; स–ममोपद्रवकारकं रोगं हिंसन्।

दशमेऽनुवाके सप्त सूक्तानि । तत्र ‘अभि त्यम्’ इति पञ्चदशर्चं प्रथमं सूक्तम् । अत्रेतिहासमाचक्षते—अङ्गिरा इन्द्रसदृशं पुत्रमात्मनः कामयमानो देवता उपासांचक्रे । तस्य सव्याख्येन पुत्ररूपेणेन्द्र एव स्वयं जज्ञे जगति मत्तुल्यः कश्चिन्मा भूदिति । स सव्य आङ्गिरसोऽस्य सूक्तस्य ऋषिः । चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ । ‘त्रिष्टुबन्तस्य सूक्तस्य शिष्टा जगत्यः’ इति परिभाषयावशिष्टास्त्रयोदशर्चो जगत्यः । इन्द्रो देवता । तदेतत्सर्वम् अनुक्रमण्यामुक्तम्—‘अभि त्यं पञ्चोना सव्यो द्वित्रिष्टुबन्तमङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन्नभ्यध्यायत्सव्य इतीन्द्र एवास्य पुत्रोऽजायत’ इति । अतिरात्रे प्रथमे रात्रिपर्याये होतुः शस्त्रे इदं सूक्तं शंसनीयम् । ‘अतिरात्रे पर्यायाणाम्’ इति खण्डे सूत्रितम्—‘अभि त्यं मेषमध्वर्यवो भरतेन्द्राय सोममिति याज्या’ ( आश्व. श्रौ. ६. ४ ) इति । गवामयनस्य मध्यभूते विषुवत्संज्ञकेऽहन्यपि निष्केवल्ये इदं सूक्तं शंसनीयम् । तथा च सूत्रितं—‘यस्तिग्मशृङ्गोऽभि त्यं मेषमिन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं शस्त्वा’ ( आश्व. श्रौ. ८. ६ ) इति ॥

अ॒भि त्यं मे॒षं पु॑रुहू॒तमृ॒ग्मिय॒मिन्द्रं॑ गी॒र्भिर्म॑दता॒ वस्वो॑ अर्ण॒वम् ।
यस्य॒ द्यावो॒ न वि॒चर॑न्ति॒ मानु॑षा भु॒जे मंहि॑ष्ठम॒भि विप्र॑मर्चत ॥ १ ॥

अ॒भि । त्यम् । मे॒षम् । पु॒रु॒ऽहू॒तम् । ऋ॒ग्मिय॑म् । इन्द्र॑म् । गी॒ःऽभिः । म॒द॒त॒ । वस्वः॑ । अ॒र्ण॒वम् ।
यस्य॑ । द्याव॑ः । न । वि॒ऽचर॑न्ति । मानु॑षा । भु॒जे । मंहि॑ष्ठम् । अ॒भि । विप्र॑म् । अ॒र्च॒त॒ ॥ १ ॥

त्यं तं[1] प्रसिद्धं मेषं शत्रुभिः स्पर्धमानम् । यद्वा । कण्वपुत्रं मेधातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ । स ऋषिस्तं मेष इत्यवोचत् । अत इदानीमपि मेष[2] इति इन्द्रः[2] अभिधीयते । ‘मेधातिथेर्मेष’ इति सुब्रह्मण्यमन्त्रैकदेशस्य व्याख्यानरूपं ब्राह्मणमेवमाम्नायते—‘मेधातिथिं हि कण्वायनिं[3] मेषो भूत्वाजहार’ इति । आगत्य सोममपहृतवानित्यर्थः । पुरुहूतं पुरुभिर्यजमानैराहूतं ऋग्मियम् ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः । स्तुत्या हि देवता विक्रियते । यद्वा । ऋग्भिर्मीयते शब्द्यते[4] इति ऋग्मीः । तम् । वस्वो अर्णवं धनानामावासभूमिं एवंगुणविशिष्टम् इन्द्रं हे स्तोतारः गीर्भिः स्तुतिभिः अभि मदत आभिमुख्येन हर्षं प्रापयत । यस्य इन्द्रस्य कर्माणि मानुषा मनुष्याणां हितानि विचरन्ति विशेषेण वर्तन्ते । तत्र दृष्टान्तः । द्यावो न । यथा सूर्यरश्मयः सर्वेषां हितकराः । भुजे भोगाय मंहिष्ठम् अतिशयेन प्रवृद्धं विप्रं मेधाविनं तथाविधम् इन्द्रम् अभि अर्चत अभिपूजयत ॥ मेषम् । ‘मिष स्पर्धायाम्’ । इगुपधलक्षणे के प्राप्ते ‘देवसेनमेषादयः पचादिषु द्रष्टव्याः’ इति वचनात् अच्प्रत्ययः । ऋग्मियम् । ‘तस्य विकारः’ इत्यर्थे ‘एकाचो नित्यं मयटमिच्छन्ति’ ( का. ४. ३. १४४ ) इति मयट्प्रत्ययः । अकारस्य इकारश्छान्दसः । प्रत्ययस्वरः । यद्वा । ‘माङ् माने शब्दे च’ । ऋग्भिर्मीयते इति ऋग्मीः । क्विपि वलि लोपात् पूर्वमेव परत्वात् ‘घुमास्था॰’ इति ईत्वम् । ‘अचि श्नुधातु॰’ इत्यादिना इयङादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । मदत । ‘मदी हर्षे’ । हेतुमति णिच् । ‘मदी हर्षग्लपनयोः’ इति घटादिषु पाठात् हर्षार्थे वर्तमानस्य ‘घटादयो मितः’ इति मित्त्वे सति ‘मितां ह्रस्वः’ ( पा. सू. ६. ४. ९२ ) इति ह्रस्वत्वम् । लोण्मध्यमपुरुषबहुवचने शपि ‘छन्दस्युभयथा’ इति आर्धधातुकत्वात् ‘णेरनिटि’ इति णिलोपः । तशब्दस्य ‘सार्वधातुकमपित्’ इति ङित्त्वे ‘ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्’ इति दीर्घः । वस्वः । ङस्य आगमानुशासनस्यानित्यत्वात् नुमभावः । ‘जसादिषु च्छन्दसि वावचनम्’ ( पा. सू. ७. ३. १०९. १ ) इति वचनात्

१. त-ध-श-स–‘तं’ नास्ति । २. ढ–इन्द्रो मेष इति । ३. छ-न-ल-श-स–काण्वायनिम् । ४. ढ-न–शस्यते ।

'घेर्ङिति' (पा. सू. ७. ३. १११) इति गुणाभावे यणादेशः। अर्णवम्। अर्ण उदकमस्मिन्नस्तीति अर्णवः समुद्रः। 'अर्णसो लोपश्च' (का. ५. २. १०९. २) इति मत्वर्थीयो वप्रत्ययः सलोपश्च। तेन शब्देन जलाश्रयवाचिना आश्रयमात्रं लक्ष्यते। प्रत्ययस्वरः। विचरन्ति। चर गत्यर्थः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। 'तिङि चोदात्तवति' इति गतिरनुदात्ता। यद्-वृत्तयोगादनिघातः। मानुषा। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। भुजे। 'भुज पालना-भ्यवहारयोः'। संपदादिलक्षणो भावे क्विप्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। मंहिष्ठम्। 'महि वहि वृद्धौ'। अतिशयेन मंहिता मंहिष्ठः। 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः। 'तुरिष्ठेमेयःसु' इति तृलोपः। नित्त्वादाद्युदात्तत्वम्। अर्चत। 'अर्च पूजायाम्'। भौवादिकः॥

अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम्।
इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत्॥ २॥

अभि। ईम्। अवन्वन्। सुऽअभिष्टिम्। ऊतयः। अन्तरिक्षऽप्राम्। तविषीभिः। आऽवृतम्। इन्द्रम्। दक्षासः। ऋभवः। मदऽच्युतम्। शतऽक्रतुम्। जवनी। सूनृता। आ। अरुहत्॥२॥

ऊतयः अवितारो रक्षितारः दक्षासः दक्षयितारः प्रवर्धयितारः ऋभवः। उरु भान्ति इति नैरुक्तव्युत्पत्त्या ऋभवोऽत्र मरुत उच्यन्ते। एवंभूता मरुतः इन्द्रम् अभीमवन्वन् आभिमुख्येन खलु अभजन्त। वृत्रेण सह युध्यमानमिन्द्रं सर्वे देवाः पर्यत्यजन्। मरुतस्तु तथा न पर्यत्याक्षुः। तथा चाम्नास्यते[1]–'विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्तु' (ऋ. सं. ८. ९६. ७) इति। ब्राह्मणेऽप्याम्नातं–'मरुतो हैनं नाजहुः' (ऐ. ब्रा. ३. २०) इति। कीदृशमिन्द्रम्। स्वभिष्टिं शोभनाभ्येषणवन्तं शोभनाभिगमनमित्यर्थः। अन्तरिक्षप्राम्। अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीति अन्तरिक्षप्राः। द्वादशस्वादित्येषु इन्द्रस्य विद्यमानत्वात्। शाखान्तरेऽपि श्रूयते—'तस्या इन्द्रश्च विवस्वाँश्चाजायेताम्' (तै. ब्रा. १. १. ९. ३) इति, 'इन्द्रश्च विवस्वांश्चेत्येते (तै. आ. १. १३. ३) इति च। तविषीभिरावृतम्। तविषीति बलनाम। 'तविषी शुष्मम्' (नि. २. ९. १०) इति तन्नामसु पाठात्। बलैरावृतम्। अतिबलिनमित्यर्थः। अत एव मदच्युतं शत्रूणां मदस्य गर्वस्य च्यावयितारम्। किंच शतक्रतुं शतसंख्यानां क्रतूनामाहर्तारं बहुविधकर्माणं वा। पूर्वोक्तं तमिन्द्रं जवनी वृत्रवधं प्रति प्रेरयित्री सूनृता तैर्मरुद्भिः प्रयुक्ता 'प्रहर भगवो जहि वीरयस्व' (ऐ. ब्रा. ३. २०) इति ब्राह्मणोक्तरूपा प्रियसत्यात्मिका वागपि आरुहत् आरूढवती। वृत्रवधं प्रति सापि वाक् इन्द्रस्योत्साहकारिण्यभूदित्यर्थः॥ अवन्वन्। 'वन षण संभक्तौ'। लङि शपि प्राप्ते व्यत्ययेन उप्रत्ययः। स्वभिष्टिम्। 'इष गतौ'। भावे क्तिन्प्रत्ययः। 'तितुत्र°' इत्यादिना इट्प्रतिषेधः। एमन्नादित्वात् पररूपत्वम् (पा. सू. ६. १. ९४. ६)। शोभना अभिष्टयो यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। ऊतयः। अवतेः 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिन्प्रत्ययः। यद्वा। 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्। 'ज्वरत्वर°' इत्यादिना ऊठ्। 'चितः' इत्यन्तोदात्तत्वम्। अन्तरिक्षप्राम्। 'प्रा पूरणे'। अन्तरिक्षं प्राति पूरयतीति अन्तरिक्षप्राः। 'आतो मनिन्°' इत्यत्र चशब्दात् विच्। आवृतम्। 'वृञ् वरणे'। आव्रियते इति आवृतः। कर्मणि निष्ठा। 'गतिरनन्तरः'

---

[1] च-छ-न-फ-स–चाम्नायते।

इति गतेः प्रकृतिस्वरत्वम् । दक्षासः । ‘ दक्ष वृद्धौ ’ । दक्षन्ते एभिरिति दक्षाः । करणे घञ् । ञित्त्वादाद्युदात्तत्वम् । ‘ आज्जसेरसुक् ’ । मदच्युतम् । ‘ च्युङ् गतौ ’ । अन्तर्भावितण्यर्थात् ‘ क्विप् च ’ इति क्विप् । ‘ ह्रस्वस्य पिति कृति° ’ इति तुक् । शतक्रतुम् । शतं क्रतवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । जवनी । जु इति सौत्रो धातुः । करणे ल्युट् । ‘ टिड्ढाणञ्° ’ इत्यादिना ङीप् । लित्स्वरेण जकारात् परस्योदात्तत्वम् । अरुहत् । रुहेर्लुङि ‘ कृमृदृरुहिभ्यश्छन्दसि ’ इति च्लेः अङादेशः ॥

त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित् ।
ससेनं चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥ ३ ॥

त्वम् । गोत्रम् । अङ्गिरःऽभ्यः । अवृणोः । अप । उत । अत्रये । शतऽदुरेषु । गातुऽवित् ।
ससेन । चित् । विऽमदाय । अवहः । वसु । आजौ । अद्रिम् । वव्सानस्य । नर्तयन् ॥ ३ ॥

हे इन्द्र ᵛत्वं ᵛगोत्रम् अव्यक्तशब्दवन्तं वृष्ट्युदकस्यावरकं[1] मेघम् ᵛअङ्गिरोभ्यः अङ्गिरसामृषीणामर्थाय ᵛअप ᵛअवृणोः अपवरणं कृतवानसि । वृष्टेरावरकं[2] मेघं वज्रेणोद्घाट्य वर्षणं कृतवानसीत्यर्थः । यद्वा । गोत्रं गोसमूहं पणिभिरपहृतं गुहासु निहितम् अङ्गिरोभ्यः ऋषिभ्यः अप अवृणोः गुहाद्वारोद्घाटनेन प्राकाशयः । ᵛउत अपि च ᵛअत्रये महर्षये । कीदृशाय । ᵛशतदुरेषु शतद्वारेषु यन्त्रेष्वसुरैः पीडार्थं प्रक्षिप्ताय ᵛगातुवित् मार्गस्य लम्भयिताभूः । तथा ᵛविमदाय ᵛचित् विमदनाम्ने महर्षयेऽपि ᵛससेन अन्नेन युक्तं ᵛवसु धनम् ᵛअवहः प्रापितवान् । तथा ᵛआजौ संग्रामे जयार्थं ᵛवव्सानस्य निवसतो वर्तमानस्यान्यस्यापि स्तोतुः ᵛअद्रिं वज्रं ᵛनर्तयन्[3] रक्षणं कृतवानसीति शेषः । अतस्तव महिमा केन वर्णयितुं शक्यते इति भावः ॥ गोत्रम् । ‘ गुङ् अव्यक्ते शब्दे ’ । औणादिकः त्रप्रत्ययः । यद्वा । ‘ खलगोरथात् ’ इत्यनुवृत्तौ ‘ इनित्रकट्यचश्च ’ (पा. सू. ४. २. ५१) इति समूहार्थे त्रप्रत्ययः । शतदुरेषु । शतं दुरा द्वाराण्येषाम् । दृ इत्येके । द्रियन्ते संध्रियन्ते इति दुराः । ‘ घञर्थे कविधानम्° ’ इति कप्रत्ययः । छान्दसं संप्रसारणं परपूर्वत्वम् । तच्च यो ह्युभयोः स्थाने भवति स लभतेऽन्यतरेणापि व्यपदेशम् इति ‘ उरण् रपरः ’ (पा. सू. १. १. ५१) इति रपरं भवति । यद्वा । द्वारशब्दस्यैव छान्दसं संप्रसारणं द्रष्टव्यम् । गातुवित् । ‘ गाङ् गतौ ’ । अस्मात् ‘ कमिमनिजनिभागापायाहिभ्यश्च ’ (उ. सू. १. ७२) इति तुप्रत्ययः । तं वेदयति लम्भयतीति गातुवित् । ‘ विद्लृ लाभे ’ । अन्तर्भावितण्यर्थात् क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । ससेन । ससम् इति अन्ननाम । ‘ ससं नमः आयुः ’ (नि. २. ७. २१) इति तन्नामसु पाठात् । आजिः इति संग्रामनाम । ‘ आहवे आजौ ’ (नि. २. १७. ८) इति तत्र पाठात् । अद्रिम् । अत्ति भक्षयति वैरिणम् इति अद्रिर्वज्रः । ‘ अदिशदिभूशुभिभ्यः क्रिन् ’ इति क्रिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । यास्कस्त्वेवम् अद्रिशब्दं व्याचख्यौ—‘ अद्रिरादृणात्यनेनापि वात्तेः स्यात् ’ (निरु. ४. ४) इति । वव्सानस्य । ‘ वस निवासे ’ । कर्तरि ताच्छीलिकः चानश् । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । द्विर्भावहलादिशेषौ । चित्त्वादन्तोदात्तत्वम् ॥

---

१. ढ–वृष्ट्युदकावरकम् । २. ढ–वृष्टेरावारकम् । ३. ढ-स–नर्तयन् प्रेरयन् ।

त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु ।
वृत्रं यदिन्द्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ॥ ४ ॥

त्वम् । अपाम् । अपिऽधाना । अवृणोः । अप । अधारयः । पर्वते । दानुऽमत् । वसु ।
वृत्रम् । यत् । इन्द्र । शवसा । अवधीः । अहिम् । आत् । इत् । सूर्यम् ।
दिवि । आ । अरोहयः । दृशे ॥ ४ ॥

हे ᵛइन्द्र ᵛत्वम् ᵛअपाम् उदकानाम् ᵛअपिधाना अपिधानानि आच्छादकान् मेघान् ᵛअप ᵛअवृणोः अपावरीष्ठाः । तथा ᵛपर्वते पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने ᵛदानुमत् दानुमतो हिंसायुक्तस्य । यद्वा । दनुः असुरमाता सैव दानुः । तद्वतः । तादृशस्य वृत्रादेः ᵛवसु धनम् ᵛअधारयः । शत्रून् जित्वा तदीयं धनमपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः । यद्वा । दानुमत् इति वसुविशेषणम् । शोभनदानयुक्तमित्यर्थः । हे इन्द्र त्वं ᵛयत् यदा ᵛशवसा बलेन ᵛवृत्रं त्रयाणां[1] लोकानामावरीतारम्[1] । तथा च शाखान्तरे समाम्नातं–‘ यदिमान् लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम् ’ (तै. सं. २. ४. १२.२) इति । ᵛअहिं आ समन्तात् हन्तारम् । तथा च वाजसनेयिनः समामनन्ति–‘ सोऽग्नीषोमावभिसंबभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत्समभवत्तस्मादहिः ’ इति । एवंभूतमसुरम् ᵛअवधीः वधं प्रापयः । ᵛआदित् अनन्तरमेव ᵛदिवि द्युलोके ᵛदृशे द्रष्टुं ᵛसूर्यम् ᵛआरोहयः । वृत्रेणावृतं सूर्यं तस्माद्वृत्रात् अमूमुचः इत्यर्थः ॥ अपाम् । ‘ ऊडिदम्° ’ इत्यादिना विभक्तेरुदात्तत्वम् । अपिधाना । अपिधीयते आच्छाद्यते एभिरिति अपिधानानि । करणे ल्युट् । ‘ लिति ’ इति प्रत्ययात् पूर्वस्य धात्वाकारस्योदात्तत्वम् । तत एकादेशस्वरः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ‘ सुपां सुलुक्° ’ इति विभक्तेः पूर्वसवर्णदीर्घत्वम् । अधारयः । पादादित्वात् निघाताभावः । पर्वते । पर्ववान् पर्वतः । ‘ पर्व पुनः पृणातेः प्रीणातेर्वा ’ ( निरु. १. २० ) इति यास्कः । दानुमत् । ‘ दो अवखण्डने ’ इत्यस्मात् वा ‘ दाण् दाने ’ इत्यस्मात् वा ‘ दाभाभ्यां नुः ’ इति औणादिको नुप्रत्ययः । असुरविशेषणत्वे ‘ सुपां सुलुक्° ’ इति षष्ठ्या लुक् ॥

त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत ।
त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ॥ ५ ॥

त्वम् । मायाभिः । अप । मायिनः । अधमः । स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत ।
त्वम । पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानम् । दस्युऽहत्येषु । आविथ ॥५॥

हे इन्द्र ᵛत्वं ᵛमायाभिः जयोपायज्ञानैः । मायेति ज्ञाननाम, ‘ शची माया ’ ( नि. ३. ९. ९ ) इति तन्नामसु पाठात् । यद्वा । मायाभिः लोकप्रसिद्धैः कपटैः । ᵛमायिनः उक्तलक्षणमायोपेतान्

---

१. ढ–लोकत्रयावारकम् ।

वृत्रादीनसुरान् ^V^अप ^V^अधमः अपाजीगमः । ' धमतिर्गतिकर्मा ' (निरु. ६. २ ) इति यास्कः । ^V^ये असुराः ^V^स्वधाभिः हविर्लक्षणैरन्नैः ^V^शुप्तौ ^V^अधि शोभमाने स्वकीये मुखे एव ^V^अजुह्वत अहौषुः नाग्नौ तानसुरानिति पूर्वेण संबन्धः[1] । तथा च कौषीतकिभिराम्नायते—' असुरा वा आत्मन्नजुहवुरुद्धातेऽग्नौ ते पराभवन् ' इति । वाजसनेयिभिरप्याम्नातं—' देवाश्च ह वा असुराश्चास्पर्धन्त ततो हासुरा अभिमानेन कस्मै च न जुहुम इति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते पराबभूवुः ' इति । तथा हे ^V^नृमणः नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्त ^V^त्वं ^V^पिप्रोः पूरयितुरेतन्नाम्नोऽसुरस्य ^V^पुरः पुराणि निवासस्थानानि ^V^प्र ^V^अरुजः प्राभाङ्क्षीः । एवं कृत्वा तेनासुरेणोपद्रुतम् ^V^ऋजिश्वानम् ऋजुगमनमेतत्संज्ञकं स्तोतारं ^V^दस्युहत्येषु दस्यूनामुपक्षपयितॄणां हननेन युक्तेषु संग्रामेषु । यद्वा । दस्यूनां हनने निमित्तभूतेषु ^V^प्र ^V^आविथ प्रकर्षेण ररक्षिथ ॥ मायिनः । मायाशब्दस्य व्रीह्यादिषु पाठात् ' व्रीह्यादिभ्यश्च ' इति मत्वर्थीय इनिः । शुप्तौ । ' शुभ दीप्तौ ' । कर्मणि क्तिन् । ' तितुत्र° ' इत्यादिना इट्प्रतिषेधः । ' झषस्तथोः° ' इति धत्वाभावश्छान्दसः । ' खरि च ' ( पा. सू. ८. ४. ५५ ) इति चर्त्वम् । अजुह्वत । जुहोतेर्लङि व्यत्ययेन आत्मनेपदम् । ' अदभ्यस्तात् ' ( पा. सू. ७. १. ४ ) इति झस्य अदादेशः । ' हुश्नुवोः सार्वधातुके ' इति यणादेशः । पिप्रोः । ' पॄ पालनपूरणयोः ' । ' पॄभिदिव्यधि° ' ( उ. सू. १. २३) इत्यादिना कुप्रत्ययः । ' उदोष्ठ्यपूर्वस्य ' इत्यत्र ' बहुलं छन्दसि ' इत्युक्तत्वात् उत्वाभावः । छान्दसं द्विर्वचनम् । अभ्यासस्य उरदत्वहलादिशेषाः । ' अर्तिपिपर्त्योश्च, बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् । यणादेशः । नृमणः । नृषु मनो यस्य । ' छन्दस्यृदवग्रहात् ' ( पा. सू. ८. ४. २६ ) इति णत्वम् । अरुजः । ' रुजो भङ्गे ' । शस्य ङित्त्वात् गुणाभावः । ऋजिश्वानम् । ऋजु अश्नुते प्राप्नोतीति ऋजिश्वा । पृषोदरादिः । दस्युहत्येषु । ' हन हिंसागत्योः ' । ' हनस्त च ' ( पा. सू. ३. १. १०८ ) इति भावे क्यप्प्रत्ययः तकारश्चान्तादेशः । दस्यूनां हत्या येषु संग्रामेषु । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । तत्पुरुषपक्षे तु कृदुत्तरपदप्रकृतिस्वरत्वम् । आविथ । ' अव रक्षणे ' ॥ ॥ ९ ॥

**त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम् ।**
**महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥ ६ ॥**

त्वम् । कुत्सम् । शुष्णऽहत्येषु । आविथ । अरन्धयः । अतिथिऽग्वाय । शम्बरम् ।
महान्तम् । चित् । अर्बुदम् । नि । क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ॥६॥

हे इन्द्र ^V^त्वं ^V^कुत्सं कुत्ससंज्ञकमृषिं ^V^शुष्णहत्येषु । शुष्णः शोषयिता । एतन्नाम्नोऽसुरस्य हननयुक्तेषु संग्रामेषु ^V^आविथ ररक्षिथ । तथा ^V^अतिथिग्वाय अतिथिभिर्गन्तव्याय दिवोदासाय ^V^शम्बरम् एतन्नामानमसुरम् ^V^अरन्धयः हिंसां प्रापयः । तथा ^V^महान्तं ^V^चित् अतिप्रवृद्धमपि ^V^अर्बुदम् एतत्संज्ञकमसुरं ^V^पदा पादेन ^V^नि ^V^क्रमीः नितरामाक्रमिताभूः । यस्मादेवं तस्मात् ^V^सनादेव चिरकालादेवारभ्य ^V^दस्युहत्याय उपक्षपयितॄणां हननाय ^V^जज्ञिषे । सर्वदा त्वं दस्युहननशीलो भवसीत्यर्थः ॥ अरन्धयः । 'रध हिंसासंराद्ध्योः ' । ' रधिजभोरचि ' ( पा. सू. ७. १. ६१ ) इति धातोः नुम् । अतिथिग्वाय । गमेः औणादिको ड्वप्रत्ययः । क्रमीः । ' क्रमु पादविक्षेपे ' । ' ह्मयन्तक्षण° ' ( पा. सू. ७. २. ५ ) इति वृद्धिप्रतिषेधः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । पदा । ' सावेकाचः° ' इति वा

1. ढ–अन्वयः ।

'ऊडिदंपदादि°' इति वा विभक्तेरुदात्तत्वम्। जज्ञिषे। 'जनी प्रादुर्भावे'। लिटि 'गमहन°' इत्यादिना उपधालोपः ॥

त्वे विश्वा तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या ॥ ७ ॥

त्वे इति । विश्वा । तविषी । सध्र्यक् । हिता । तव । राधः । सोमऽपीथाय । हर्षते ।
तव । वज्रः । चिकिते । बाह्वोः । हितः । वृश्च । शत्रोः । अव । विश्वानि । वृष्ण्या ॥ ७ ॥

हे इन्द्र ^v^त्वे त्वयि ^v^विश्वा ^v^तविषी सर्वं बलं ^v^सध्र्यक् सध्रीचीनं अपराङ्मुखं यथा भवति तथा ^v^हिता निहितम्। तथा ^v^तव ^v^राधः मनः ^v^सोमपीथाय सोमपानाय ^v^हर्षते हृष्यति। किंच ^v^तव ^v^बाह्वोः हस्तयोः ^v^हितः अवस्थितः ^v^वज्रः ^v^चिकिते अस्माभिर्ज्ञायते। अतः ^v^शत्रोः शातयितुर्वैरिणः ^v^विश्वानि सर्वाणि ^v^वृष्ण्या वृष्ण्यानि वीर्याणि ^v^अव ^v^वृश्च छेदनं कुरु ॥ सहाञ्चतीति सध्र्यक्। अञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन्। 'अनिदिताम्°' इति नलोपः। समासे 'सहस्य सध्रिः' इति सहशब्दस्य सध्र्यादेशः। 'चोः कुः' इति कुत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्' ( वा. सू. ६. ३. ९५. १ ) इति वचनात् सध्र्यादेशः अन्तोदात्तः। तस्य यणादेशे 'उदात्तस्वरितयोर्यणः°' इति परस्यानुदात्तस्य स्वरितत्वम्। राधः। राध्नोति समृद्धो भवत्यनेन। राधोऽत्र मन उच्यते। असुनो नित्त्वादाद्युदात्तत्वम्। सोमपीथाय। 'पा पाने'। 'पातृतुदिवचि°' इत्यादिना थक्प्रत्ययः। 'घुमास्था°' इति ईत्वम्। हर्षते। 'हृष तुष्टौ'। श्यनि प्राप्ते व्यत्ययेन शप् आत्मनेपदं च। चिकिते। 'कित ज्ञाने'। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लिट्। बाह्वोः। 'उदात्तयणः°' इति विभक्तेरुदात्तत्वम्। वृश्च। 'ओव्रश्चू छेदने'। तौदादिकः। ग्रहिज्यादिना संप्रसारणम्। विकरणस्वरः। संहितायां 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम्। वृष्ण्या। 'वृष सेचने'। औणादिको नक्प्रत्ययः। तत्र भवानि वृष्ण्यानि। 'भवे छन्दसि' इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। 'शेश्छन्दसि°' इति शेर्लोपः ॥

वि जानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।
शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन ॥ ८ ॥

वि । जानीहि । आर्यान् । ये । च । दस्यवः । बर्हिष्मते । रन्धय । शासत् । अव्रतान् ।
शाकी । भव । यजमानस्य । चोदिता । विश्वा । इत् । ता । ते । सधऽमादेषु । चाकन ॥ ८ ॥

हे इन्द्र त्वं ^v^आर्यान् विदुषः अनुष्ठातॄन् ^v^वि ^v^जानीहि विशेषेण बुध्यस्व। ^v^ये ^v^च ^v^दस्यवः तेषामनुष्ठातॄणामुपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः। ज्ञात्वा च ^v^बर्हिष्मते बर्हिषा यज्ञेन युक्ताय यजमानाय ^v^अव्रतान्। व्रतमिति कर्मनाम। कर्मविरोधिनस्तान् दस्यून् ^v^रन्धय हिंसां प्रापय। यद्वा यजमानस्य वशं गमय। 'रध्यतिर्वशगमने' ( निरु. ६. ३२ ) इति यास्कः। किं कुर्वन्। ^v^शासत् दुष्टानामनुशासनं निग्रहं कुर्वन्। अतः ^v^शाकी शक्तियुक्तस्त्वं ^v^यजमानस्य ^v^चोदिता प्रेरको

ᵛभव । यज्ञविघातकानसुरांस्तिरस्कृत्य यज्ञान् यजमानैः सम्यगनुष्ठापय इति[1] भावः[1] । अहमपि स्तोता ᵛते तव ᵛता तानि पूर्वोक्तानि कर्माणि ᵛविश्वेत् सर्वाण्येव ᵛसधमादेषु सहमदनयुक्तेषु[2] यज्ञेषु स्तोतुं ᵛचाकन कामये ॥ जानीहि । 'ज्ञा अवबोधने' । क्रैयादिकः । 'ज्ञाजनोर्जा' इति जादेशः । अत्र 'प्ली गतौ वृत्' इति वृत्करणं ल्वादिपरिसमाप्त्यर्थमेव न प्वादिपरिसमाप्त्यर्थमिति येषां दर्शनं तेषां 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वेन भवितव्यम् । मैवम् । 'ज्ञाजनोर्जा' इति दीर्घोच्चारणसामर्थ्यात् । 'जनी प्रादुर्भावे' इत्यस्य तु दीर्घोच्चारणमन्तरेणापि 'अतो दीर्घो यञि' (पा. सू. ७. ३. १०१) इत्यनेनैव दीर्घः सिध्यति। तस्माद्दीर्घोच्चारणवैयर्थ्यप्रसंगादत्र ह्रस्वो न भवतीति सिद्धम् । बर्हिष्मते । 'तसौ मत्वर्थे' इति भत्वात् रुत्वजश्त्वयोरभावः । रन्धय । 'रध हिंसासंराद्ध्योः' । शासत् । 'शासु अनुशिष्टौ' । शतरि अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' (पा. सू. ६. १. ६) इत्यभ्यस्तसंज्ञायां 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । शाकी । 'शक्लृ शक्तौ' । भावे घञ् । ततो मत्वर्थीय इनिः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । वृषादिर्द्रष्टव्यः । विश्वा ता । उभयत्र 'शेश्छन्दसि॰' इति शेर्लोपः । सधमादेषु । सह माद्यन्त्येष्विति सधमादा यज्ञाः । अधिकरणे घञ्प्रत्ययः । ननु 'मदोऽनुपसर्गे' इति अप्प्रत्ययेन भवितव्यम् । मैवम् । 'व्यधजपोरनुपसर्गे' (पा. सू. ३. ३. ६१) इत्यत्रैव मद इति वक्तव्ये यत् 'मदोऽनुपसर्गे' इति पृथगुपादानं तत् घञपि पक्षे यथा स्यादिति न्यासकारेण प्रत्ययादीत्यस्माभिर्धातुवृत्तावुक्तम् । 'सध मादस्थयोश्छन्दसि' इति सहशब्दस्य सधादेशः । चाकन । 'कन दीप्तिकान्तिगतिषु' । अत्र कान्त्यर्थः । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । 'णलुत्तमो वा' (पा. सू. ७. १. ९१) इति णित्त्वस्य विकल्पनात् वृद्ध्यभावः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् ॥

अनु॑व्रताय र॒न्धय॒न्नप॑व्रताना॒भूभि॒रिन्द्रः॑ श्न॒थय॒न्नना॑भुवः ।
वृ॒द्धस्य॑ चि॒द्वर्ध॑तो॒ द्यामिन॑क्षत॒: स्तवा॑नो व॒म्रो वि ज॑घान सं॒दिहः॑ ॥ ९ ॥

अनु॑ऽव्रताय । र॒न्धय॑न् । अप॑ऽव्रतान् । आ॒ऽभूभिः॑ । इन्द्रः॑ । श्न॒थय॑न् । अना॑भुवः ।
वृ॒द्धस्य॑ । चि॒त् । वर्ध॑तः । द्याम् । इन॑क्षतः । स्तवा॑नः । व॒म्रः । वि । ज॒घा॒न॒ । स॒म्ऽदिहः॑ ॥ ९ ॥

यः ᵛइन्द्रः ᵛअनुव्रताय अनुकूलकर्मणे यजमानाय ᵛअपव्रतान् अपगतकर्मणः अयजमानान्[3] ᵛरन्धयन् हिंसयन् वशीकुर्वन् वा तथा ᵛआभूभिः । आभिमुख्येन भवन्तीति आभुवः स्तोतारः । तैः ᵛअनाभुवः तद्विपरीतान् ᵛश्नथयन् हिंसयन् वर्तते । ᵛवृद्धस्य ᵛचित् ᵛवर्धतः पूर्वं वृद्धस्यापि पुनर्वर्धमानस्य ᵛद्यामिनक्षतः स्वर्गं व्याप्नुवतः[4] तस्येन्द्रस्य ᵛस्तवानः स्तुतिं कुर्वाणः ᵛवम्रः स्तुत्युद्गिरणशील एतत्संज्ञक ऋषिः ᵛसंदिहः सम्यगुपचिता वल्मीकवपाः ᵛवि ᵛजघान । इन्द्रेण परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसंभारमाहार्षीदित्यर्थः । तथा च शाखान्तरे समाम्नातं— 'यद्वल्मीकवपासंभारो भवति ऊर्जमेव रसं पृथिव्या अवरुन्धे' (तै. ब्रा. १. १. ३. ४) इति ॥ अनुव्रताय । अनुकूलं व्रतं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । श्नथयन् । 'श्नथ हिंसायाम्' । णिचि घटादित्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् । वर्धतः । व्यत्ययेन परस्मैपदम् । इनक्षतः ।

---

१. ढ–इत्यर्थः । २. च-छ-फ-ल-श-स–सहमादनयुक्तेषु । ३. च-ण-न-फ–असुरान् । ४. न-स–प्राप्नुवतः ।

'नक्ष गतौ'। इकारोपजनश्छान्दसः। यद्वा। इनक्षतिर्गत्यर्थः प्रकृत्यन्तरमन्वेष्टव्यम्। स्तवानः। 'सम्यानच् स्तुवः' (उ. सू. २. २४६) इति स्तौतेर्बहुलवचनात् निरुपपदादपि आनच्प्रत्ययः। व्यत्ययेनाद्युदात्तत्वम्। जघान। 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हन्तेर्हकारस्य कुत्वम्। संदिहः। 'दिह उपचये'। 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः॥ १०॥

तक्षत्। यत्। ते। उशना। सहसा। सहः। वि। रोदसी इति। मज्मना। बाधते। शवः।
आ। त्वा। वातस्य। नृऽमनः। मनःऽयुजः। आ। पूर्यमाणम्। अवहन्। अभि। श्रवः॥१०॥

हे इन्द्र यत् यदा उशना काव्यः सहसा आत्मीयेन बलेन ते सहः त्वदीयं बलं तक्षत् तनूकृतवान्। सम्यक् तीक्ष्णमकार्षीदित्यर्थः। तदा शवः त्वदीयं बलं मज्मना सर्वस्य शोधकेन स्वतैक्ष्ण्येन रोदसी द्यावापृथिव्यौ वि बाधते। ते बिभीतः इत्यर्थः। तथा चान्यत्राम्नातं—'यस्य शुष्माद्रोदसी अभ्यसेताम्' (ऋ. सं. २. १२. १) इति। यद्वा। रोदसी यस्माद्वृत्रादेः बिभीतः तं बाधते इत्यर्थः। हे नृमणः नृषु रक्षितव्येषु यजमानेष्वनुग्रहबुद्धियुक्तेन्द्र आ पूर्यमाणं पूर्वोक्तेन बलेन आ समन्तात् पूर्यमाणं त्वा त्वां मनोयुजः मनोव्यापारमात्रेण युक्ताः वातस्य वायोः संबन्धिनः। तद्वद्वेगेन गच्छन्त इत्यर्थः। एवंभूता अश्वाः श्रवः अभि हविर्लक्षणमन्नमभिलक्ष्य आ अवहन् आभिमुख्येन प्रापयन्तु॥ तक्षत्। 'तक्षू त्वक्षू तनूकरणे'। लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। उशना। 'वश कान्तौ' 'वशेः कनसिः' (उ. सू. ४. ६७८) इति कनस्। 'ग्रहिज्या°' इत्यादिना संप्रसारणम्। 'ऋदुशनस्पुरुदंसोऽनेहसां च' (पा. सू. ७. १. ९४) इति अनङादेशः। 'सर्वनामस्थाने च°' (पा. सू. ६. ४. ८) इति उपधादीर्घत्वम्। हल्ङ्यादिनलोपौ। मज्मना। 'टुमस्जो शुद्धौ'। औणादिको मनिप्रत्ययः। नृमणः। 'छन्दस्यृदवग्रहात्' इति णत्वम्। अवहन्। 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङ्॥　　॥ १०॥

मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति।
उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः॥ ११॥

मन्दिष्ट। यत्। उशने। काव्ये। सचा। इन्द्रः। वङ्कू इति। वङ्कुऽतरा। अधि। तिष्ठति।
उग्रः। ययिम्। निः। अपः। स्रोतसा। असृजत्। वि। शुष्णस्य। दृंहिताः। ऐरयत्। पुरः॥११॥

यत् यदा इन्द्रः उशने कामयमाने काव्ये सचा सह मन्दिष्ट स्तुतोऽभूत् तदानीं वङ्कू वङ्कुतरा अतिशयेन कुटिलं गच्छन्तावश्वौ अधि तिष्ठति। रथे संयोज्य तमारोहतीत्यर्थः। यद्वा। वङ्कुतरा अतिशयेन वक्रं गच्छति रथे वङ्कू वक्रगमनशीलावश्वौ संयोज्येति योजनीयम्। उग्रः उद्गूर्णस्तादृशः

इन्द्रः ययिं गमनयुक्तात् मेघात् स्रोतसा प्रवाहरूपेण अपः निः असृजत् जलानि निरगमयत् । तथा शुष्णस्य सर्वस्य शोषयितुरसुरस्य दृंहिताः प्रवृद्धाः पुरः नगराणि निवासस्थानानि वि ऐरयत् विविधं प्रेरितवान् ॥ मन्दिष्ट । ' मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ' । लुङि ' बहुलं छन्दस्यमाङ्-योगेऽपि ' इति अडभावः । उशने । वशेः औणादिकः क्युप्रत्ययः । ग्रहिज्यादिना संप्रसारणम् । यो-रनादेशः । सचा । ' षच समवाये ' । संपदादिलक्षणो भावे क्विप् । ' आङ्याजयारां चोपसंख्यानम् ' ( पा. म. ७. १. ३९. १ ) इति विभक्तेः आङादेशः । संहितायां ' आङोऽनुनासिकश्छन्दसि ' (पा. सू. ६. १. १२६) इति तस्य सानुनासिकत्वम् । वङ्कू । ' वञ्चु गतौ ' । औणादिक उप्रत्ययः । बहुलवचनात् कुत्वम् । वङ्कुतरा । अतिशयेन वङ्कू वङ्कुतरा । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । अत्र गतिसामान्यवाचिना गतिविशेषो लक्ष्यते । ययिम् । ' या प्रापणे ' । ' आदृगमहनजनः° ' इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनह्रस्वत्वे । ' आतो लोप इटि च ' इति आकारलोपः । प्रत्ययस्वरः । ' सुपां सुपो भवन्ति ' इति पञ्चम्या अमादेशः । दृंहिताः । ' दृहि वृद्धौ ' । इदित्त्वात् नुम् । ऐरयत् । ' ईर प्रेरणे ' । चौरादिकः । लङि आडागमः । ' आटश्च ' ( पा. सू. ६. १. ९० ) इति वृद्धिः ॥

आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।
इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥ १२ ॥

आ । स्म । रथम् । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृताः । येषु । मन्दसे ।
इन्द्र । यथा । सुतऽसोमेषु । चाकनः । अनर्वाणम् । श्लोकम् । आ । रोहसे । दिवि ॥१२॥

अत्र कौषीतकिन इतिहासमाचक्षते—शार्यातनाम्नो राजर्षेर्यज्ञे भृगुगोत्रोत्पन्नश्च्यवनो महर्षिराश्विनं ग्रहमगृह्णात् । इन्द्रस्तं दृष्ट्वा क्रुद्धोऽभूत् । तमिन्द्रमनुनीय पुनः सोमं तस्मै प्रादादिति । अयमर्थोऽस्यां प्रतिपाद्यते । हे इन्द्र त्वं वृषपाणेषु । वृष्णः सेचनसमर्थस्य सोमस्य पानानि वृषपाणानि । तेषु निमित्तभूतेषु रथम् आ तिष्ठसि स्म स्वयमेव रथमारुह्य गच्छसि । न त्वन्यः कश्चित् प्रवर्तयितेति भावः । एवं च सति येषु सोमेषु त्वं मन्दसे हर्षं प्राप्नोषि तादृशाः सोमाः शार्यातस्य एतन्नाम्नो राजर्षेः संबन्धिनः प्रभृताः प्रकर्षेण संपादिताः । अभिषवादिसंस्कारैः संस्कृता इत्यर्थः । अतः सुत-सोमेषु अभिषुतसोमयुक्तेष्वन्यदीयेषु यज्ञेषु यथा चाकनः यथा कामयसे एवमस्यापि शार्यातस्य सोमान् कामयस्व । तथा सति दिवि द्युलोके अनर्वाणं गमनरहितं स्थिरं श्लोकं स्तोत्रलक्षणं वचो यशो वा आ रोहसे प्राप्नोषि । यद्वा । इमं यजमानं दिवि द्युलोके उक्तलक्षणं यशः प्रापयसि ॥ स्म । ' निपातस्य च ' इति दीर्घत्वम् । वृषपाणेषु । ' पा पाने ' । भावे ल्युट् । ' वा भावकरणयोः ' ( पा. सू. ८. ४. १० ) इति पूर्वपदस्थान्निमित्तादुत्तरस्य पानशब्दनकारस्य णत्वम् । प्रभृताः । ' भृञ् भरणे ' । कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । मन्दसे । ' मदि स्तुतिमोदमद-स्वप्नकान्तिगतिषु ' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । चाकनः । ' कन दीप्तिकान्ति-गतिषु ' । अत्र कान्त्यर्थः । कान्तिश्चाभिलाषः । लेटि सिपि अडागमः । ' बहुलं छन्दसि ' इति शपः श्लुः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' इति अभ्यस्तस्य आद्युदात्तत्वाभावे ' धातोः ' इति धात्वन्तस्योदात्तत्वम् । अनर्वाणम् । अर्तेः ' अन्येभ्योऽपि दृश्यन्ते ' इति दृशिग्रहणाद्भावे वनिप् । नञा बहुव्रीहौ अमि ' अर्वणस्त्रसावनञः ' इति पर्युदासात् तृआदेशाभावे

' सर्वनामस्थाने च° ' इति उपधादीर्घत्वम्। ' नन्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम्। श्लोकम्। ' श्लोकृ संघाते '। श्लोक्यते इति श्लोकः। कर्मणि घञ्। ञित्त्वादाद्युदात्तत्वम्। रोहसे। रुहेः व्यत्ययेन आत्मनेपदम् ॥

अद॑दा अ॒र्भां म॑ह॒ते व॑च॒स्यवे॑ क॒क्षीव॑ते वृ॒चया॑मिन्द्र सु॒न्व॒ते ।
मेना॑भवो वृषण॒श्वस्य॑ सुक्रतो॒ विश्वेत्ता ते॒ सव॑नेषु प्र॒वाच्या॑ ॥ १३ ॥

अद॑दाः । अ॒र्भाम् । म॒ह॒ते । व॒च॒स्यवे॑ । क॒क्षीव॑ते । वृ॒चया॑म् । इ॒न्द्र॒ । सु॒न्व॒ते । मेना॑ । अ॒भ॒वः । वृ॒ष॒ण॒श्वस्य॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो । विश्वा॑ । इत् । ता । ते॒ । सव॑नेषु । प्र॒ऽवाच्या॑ ॥ १३ ॥

अत्रेयमाख्यायिका। अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभियोषिद्भिः सह गङ्गायां जलक्रीडां चक्रे। तस्मिन् समये दीर्घतमा नाम ऋषिः स्वभार्यया पुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कर्तुं न शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे। स च ऋषिः केनचित् प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम। स च राजा सर्वज्ञं तमृषिमवगत्य प्लवादवतार्यैवमवोचत्। हे भगवन् मम पुत्रो नास्ति एषा महिषी अस्यां कंचित्[1] पुत्रमुत्पादयेति। स च तथेत्यब्रवीत्। सा महिषी तु[2] राजानं प्रति तथेत्युक्त्वा[2] अयं वृद्धतरो जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या[3] स्वकीयाम् उशिक्संज्ञां दासीं प्राहैषीत्। तेन च सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणाभ्युक्षिता सती सैव ऋषिपत्नी बभूव। तस्यामुत्पन्नः कक्षीवान्नाम ऋषिः। स एव राज्ञः पुत्रोऽभूत्। स च बहुविधेन राजसूयादिनेजे। तस्मै राज्ञे तत्कृतैर्यज्ञैः परितुष्ट इन्द्रो वृचयाख्यां तरुणीं योषितं प्रादात्। अयमर्थः पूर्वार्धे प्रतिपाद्यते ॥ हे ᵛइन्द्र त्वं ᵛमहते प्रवृद्धाय ᵛवचस्यवे त्वदीयस्तोत्रलक्षणं वच आत्मन इच्छते ᵛसुन्वते त्वद्देवताकेषु यज्ञेषु सोमाभिषवं कुर्वते ᵛकक्षीवते एतन्नाम्ने राज्ञे ᵛवृचयां वृचयाख्याम् ᵛअर्भाम् अल्पाम्। युवतिमित्यर्थः। एवंभूतां स्त्रियम् ᵛअददाः। तथा ᵛसुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे इन्द्र त्वं ᵛवृषणश्वस्य एतदाख्यस्य राज्ञः ᵛमेनाभवः मेना नाम कन्यकाभूः। तथा च शाट्यायनिभिः सुब्रह्मण्यामन्त्रैकदेशव्याख्यानरूपं[4] ब्राह्मणमेवमाम्नायते–' वृषणश्वस्य मेन इति वृषणश्वस्य[5] मेना भूत्वा मघवा कुल उवास ' इति। तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे। तथा च ताण्डिभिराम्नातं–' वृषणश्वस्य मेना नाम दुहितास। तामिन्द्रश्चकमे ' इति। अत उक्तरूपाणि यानि कर्माणि त्वया कृतानि ᵛते ᵛता त्वदीयानि तानि ᵛविश्वेत् सर्वाण्येव ᵛसवनेषु यज्ञेषु ᵛप्रवाच्या प्रकर्षेण वक्तव्यानि। स्तुतिभिः स्तोतव्यानीत्यर्थः ॥ महते। ' बृहन्महतोरुपसंख्यानम् ' इति विभक्तेरुदात्तत्वम्। वचस्यवे। ' सुप आत्मनः क्यच् '। ' क्याच्छन्दसि ' इति उप्रत्ययः। कक्षीवते। अश्वबन्धनहेतवो रज्जवः कक्ष्याः। ' कक्षीवान् कक्ष्यावान् ' ( निरु. ६. १० ) इति यास्कः। ' आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्° ' ( पा. सू. ८. २. १२ ) इति संप्रसारणं मतुपो वत्वं च संज्ञायां निपात्यते। मेनेति स्त्रीनाम। ' मेना ग्नाः ' ( नि. रु. ३. २१ ) इति पाठात्। ' मन ज्ञाने '। मन्यते गृहकृत्यं जानातीति मेना। पचाद्यच्। ' नशिमन्योरलिट्येत्वं वक्तव्यम् ' ( पा. सू. ६. ४. १२०. ५ ) इति एत्वम्। वृषादिर्द्रष्टव्यः। ' मेना मानयन्त्येनाः ' ( निरु. ३. २१ ) इति यास्कः। सवनेषु। सवनमिति यज्ञनाम। सूयतेऽभिषूयते एष्विति अधिकरणे ल्युट्। प्रवाच्या। ' वच परिभाषणे '। ण्यति ' यजयाचरुच-

---

१. ढ–कमपि। २. ढ–' तु राजानं प्रति तथेत्युक्त्वा ' इति नास्ति। ३. ढ–मत्वा।
४. ढ–सुब्रह्मण्योमिति मन्त्रैकदेशव्याख्यानरूपम्। ५. ढ-स–वृषणश्वस्य हि।

प्रवचर्चश्च' ( पा. सू. ७. ३. ६६ ) इति कुत्वाभावः। तिस्वरिते प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। यद्वा। वाचयतेः ' अचो यत् ' इति यत्। ' यतोऽनावः ' इत्याद्युदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः ।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ॥ १४ ॥

इन्द्रः । अश्रायि । सुऽध्यः । निरेके । पज्रेषु । स्तोमः । दुर्यः । न । यूपः ।
अश्वऽयुः । गव्युः । रथऽयुः । वसुऽयुः । इन्द्रः । इत् । रायः । क्षयति । प्रऽयन्ता ॥१४॥

ᵛइन्द्रः देवः ᵛसुध्यः शोभनकर्मणो यजमानान् शोभनप्रज्ञान् वा ᵛनिरेके नैर्धन्ये निमित्तभूते सति तान् रक्षितुम् ᵛअश्रायि असेविष्ट। ᵛपज्रेषु। पज्रा इत्यङ्गिरसामाख्या। तथा च शाट्यायनिभिराम्नातं–' पज्रा वा अङ्गिरसः पशुकामास्तपोऽतप्यन्त ' इति। येषु यजमानेष्वङ्गिरःसु ᵛस्तोमः स्तोत्रं निश्चलं तिष्ठति ᵛदुर्यो ᵛन ᵛयूपः द्वारि निखाता स्थूणेव। तान् सुध्यः इति पूर्वेणान्वयः। तस्मादिदानीमपि ᵛरायः ᵛप्रयन्ता धनस्य प्रदाता ᵛइन्द्र ᵛइत् इन्द्र एव यजमानानां दातुम् ᵛअश्वयुः अश्वानिच्छन्। तथा ᵛगव्युः गा इच्छन् ᵛरथयुः रथानिच्छन् ᵛवसूयुः एवमन्यदपि यद्धनमस्ति तदपीच्छन् ᵛक्षयति वर्तते॥ अश्रायि। ' श्रिञ् सेवायाम् '। कर्तरि लुङि व्यत्ययेन च्लेः चिणादेशः। सुध्यः। धीरिति कर्मनाम। शोभना धीर्येषाम्। ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम्। शसि ' छन्दस्युभयथा ' इति यणादेशः। ' उदात्तस्वरितयोर्यणः॰ ' इति स्वरितत्वम्। निरेके। नितरां रेचनं निरेकः। ' रिचिर् विरेचने '। भावे घञ्। थाथादिना उत्तरपदान्तोदात्तत्वम्। दुर्यः। दुरे भवो दुर्यः। ' भवे छन्दसि ' इति यत्। ' यतोऽनावः ' इत्याद्युदात्तत्वम्। यूपः। ' यु मिश्रणे '। यूयते युज्यतेऽस्मिन्निति यूपः। ' कुयुभ्यां च ' ( उ. सू. ३. ३०७ ) इति पप्रत्ययः। दीर्घः इत्यनुवृत्तेः दीर्घत्वम्। अश्वयुः। यजमानेभ्योऽश्वानिच्छन्। ' छन्दसि परेच्छायाम् ' ( का. ३. १. ८. २ ) इति क्यच्। ' न च्छन्दस्यपुत्रस्य ' इति ईत्वदीर्घयोर्निषेधः। ' अश्वाघस्यात् ' इति आत्वं तु छान्दसत्वात् न भवति। ' क्याच्छन्दसि ' इति उप्रत्ययः। एवमुत्तरत्रापि। एतावांस्तु विशेषः। गव्युरित्यत्र ' वान्तो यि प्रत्यये ' इति अवादेशः। यास्कस्त्वेवं व्याचष्टे–' इदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यर्थः। अश्वयुर्गव्यू रथयुर्वसूयुरित्यपि निगमो भवति '( निरु. ६. ३१ ) इति। क्षयति। ' क्षि क्षये '। भौवादिकः। प्रयन्ता। ' यम उपरमे '। तृचि ' एकाचः॰ ' इति इट्प्रतिषेधः। ' चितः ' इत्यन्तोदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि ।
अस्मिन्निन्द्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्त्स्याम ॥ १५ ॥

इदम् । नमः । वृषभाय । स्वऽराजे । सत्यऽशुष्माय । तवसे । अवाचि ।
अस्मिन् । इन्द्र । वृजने । सर्वऽवीराः । स्मत् । सूरिऽभिः । तव । शर्मन् । स्याम ॥ १५॥

ᵛइदं पुरोवर्ति ᵛनमः स्तुतिलक्षणं वचो हे ᵛइन्द्र तुभ्यम् ᵛअवाचि अस्माभिः प्रायोजि। कीदृशाय। ᵛवृषभाय वर्षणशीलाय ᵛस्वराजे स्वकीयेन तेजसा राजमानाय ᵛसत्यशुष्माय। शुष्ममिति बलनाम शत्रूणां शोषकत्वात्। अवितथबलयुक्ताय। ᵛतवसे अत्यन्तं प्रवृद्धाय। यस्मादेवं तस्मात् ᵛअस्मिन् ᵛवृजने वर्जनवति संग्रामे ᵛसर्ववीराः। विशेषेण ईरयन्त्यमित्रानिति वीरा भटाः। तादृशैः सर्वैर्भटैरुपेता वयम्। स्मत् इति निपातः सुशब्दार्थः। ᵛतव ᵛस्मत् ᵛशर्मन् त्वया दत्ते शोभने गृहे ᵛसूरिभिः विद्वद्भिः पुत्रादिभिः सह ᵛस्याम भवेम निवसेमेत्यर्थः। यद्वा। त्वत्संबन्धिनि शोभने यज्ञगृहे सूरिभिः विद्वद्भिर्ऋत्विग्भिः सह स्याम। शर्मेति गृहनाम, 'शर्म वर्म' (नि. ३. ४. २१) इति पठितत्वात्॥ स्वराजे। 'राजृ दीप्तौ'। 'सत्सूद्विष०' इति क्विप्। सत्यशुष्माय। सत्यं शुष्मं बलं यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। तवसे। तवतिः सौत्रो धातुः। अस्मात् औणादिकः असिप्रत्ययः। वृजने। 'वृजी वर्जने'। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ. सू. २. २३९) इति क्युः[1] प्रत्ययः[1]। शर्मन्। 'सुपां सुलुक्०' इति सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' (पा. सू. ८. २. ८) इति नलोपप्रतिषेधः। स्याम। 'नश्च' (पा. सू. ८. ३. ३०) इति संहितायां सकारस्य धुडागमः। 'खरि च' इति चर्त्वम्। 'चयो द्वितीयाः शरि पौष्करसादेः' (पा. सू. ८. ४. ४८. ३) इति तकारस्य थकारः॥ ॥ ११ ॥

'त्यं सु मेषम्' इति पञ्चदशर्चं द्वितीयं सूक्तं सव्यस्यार्षमैन्द्रम्। त्रयोदशी[2] पञ्चदशी[2] त्रिष्टुभौ शिष्टा जगत्यः। तथा चानुक्रान्तं—'त्यं सु त्रयोदश्यन्त्ये त्रिष्टुभौ' इति। गवामयनस्य मध्यमेऽहनि विषुवत्संज्ञके मरुत्वतीयशस्त्रे इदं सूक्तम्। 'विषुवान्दिवाकीर्त्यः' इति खण्डे सूत्रितं—'त्यं सु मेषं कया शुभेति च मरुत्वतीयम्' (आश्व. श्रौ. ८. ६) इति॥

**त्यं सु मे॒षं म॑हया स्व॒र्विदं॑ श॒तं यस्य॑ सु॒भ्व॑ः सा॒कमीर॑ते।**

**अत्यं॒ न वाजं॑ हवन॒स्यदं॒ रथ॒मेन्द्रं॑ ववृत्या॒मव॑से सुवृ॒क्तिभि॑ः॥ १॥**

त्यम्। सु। मे॒षम्। म॒हय॒। स्वः॒ऽविदं॑म्। श॒तम्। यस्य॑। सु॒ऽभ्व॑ः। सा॒कम्। ईर॑ते।

अत्य॑म्। न। वाज॑म्। ह॒व॒न॒ऽस्यद॑म्। रथ॑म्। आ। इन्द्र॑म्। व॒वृ॒त्या॒म्। अव॑से। सु॒वृ॒क्तिऽभि॑ः॥१॥

ᵛत्यं तं प्रसिद्धं ᵛमेषं शत्रुभिः सह स्पर्धमानं ᵛस्वर्विदम्। स्वरादित्यो द्यौर्वा। तस्य वेदितारं लब्धारं वा। यद्वा। स्वः सुष्ठ्वरणीयं धनं तस्य लम्भयितारम्। एवंगुणविशिष्टमिन्द्रं हे अध्वर्यो ᵛसु ᵛमहय सम्यक् पूजय। ᵛयस्य इन्द्रस्य ᵛशतं शतसंख्याकाः ᵛसुभ्वः स्तोतारः ᵛसाकं सहैव युगपदेव ᵛईरते स्तुतौ प्रवर्तन्ते। यद्वा। यस्येन्द्रस्य रथं शतं सुभ्वः शतसंख्याका अश्वाः साकं सह ईरते गमयन्ति। तम् ᵛइन्द्रम् ᵛअवसे अस्मद्रक्षणाय ᵛसुवृक्तिभिः सुष्ठ्वावर्जकैः स्तोत्रैः ᵛरथम् ᵛआ ᵛववृत्यां रथं प्रत्यावर्तयामि। कीदृशं रथम्। ᵛहवनस्यदं हवनमाह्वानं यागं वा प्रति वेगेन गच्छन्तम्। वेगगमने दृष्टान्तः। ᵛअत्यं ᵛन ᵛवाजं गमनसाधनमश्वमिव॥ महय। 'मह पूजायाम्'। चुरादिरदन्तः। संहितायाम् 'अन्येषामपि दृश्यते' इति दीर्घत्वम्। सुभ्वः। सुष्ठु भवन्तीति सुभ्वः स्तोतारः। 'क्विप् च' इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। जसि 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः'

---

१. च-न-फ-स—क्युप्रत्ययः। २ छ-ण-न-फ—त्रयोदशीपञ्चदश्यौ; त-ल-श-स—त्रयोदशी पञ्चदशी च।

इति प्रतिषेधे प्राप्ते ‘ छन्दस्युभयथा ’ इति उभयथाभावात् यणादेशः । ‘ उदात्तस्वरितयोर्यणः° ’ इति परस्य जसोऽनुदात्तस्य स्वरितत्वम् । ईरते । ‘ ईर गतौ कम्पने च ’ । अदादित्वात् शपो लुक् । झस्य अदादेशः । टेः एत्वम् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । यद्वृत्तयोगादनिघातः । तत्र हि पञ्चमीनिर्देशेऽपि व्यवहितेऽपि कार्यमिष्यते (का. ८. १. ६६) इत्युक्तम् । अत्यम् । अत्य इत्यश्वनाम, ‘ अत्यः हयः ’ ( नि. १. १४. १ ) इति पाठात् । वाजम् । वाज्यते गम्यतेऽनेनेति वाजः । ‘ वज व्रज गतौ ’ । करणे घञ् । ‘ अजिव्रज्योश्च ’ ( पा. सू. ७. ३. ६० ) इत्यत्र चशब्दस्य अनुक्तसमुच्चयार्थत्वात् वाजः वाज्यम् इत्यत्रापि कुत्वाभावः इत्युक्तम् । हवनस्यदम् । ‘ स्यन्दू प्रस्रवणे ’ । ‘ स्यदो जवे ’ ( पा. सू. ६. ४. २८ ) इति वेगे गम्यमाने घञन्तो निपातितः । अत एव नलोपो वृद्ध्यभावश्च । न च ‘ न धातुलोप आर्धधातुके ’ ( पा. सू. १. १. ४ ) इति वृद्धेः प्रतिषेधः । इग्लक्षणा हि वृद्धिस्तत्र प्रतिषिध्यते । न चेयमिग्लक्षणा । घञो ञित्त्वात् उत्तरपदस्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । ववृत्याम् । ‘ वृतु वर्तने ’ । लिङि व्यत्ययेन परस्मैपदम् । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । द्विर्वचनादि । यासुटो ङित्त्वात् लघूपधगुणाभावः । ‘ तिङ्ङतिङः ’ इति निघातः ॥

**स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे ।**

**इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अन्धसा ॥ २ ॥**

सः । पर्वतः । न । धरुणेषु । अच्युतः । सहस्रम्ऽऊतिः । तविषीषु । ववृधे ।

इन्द्रः । यत् । वृत्रम् । अवधीत् । नदीऽवृतम् । उब्जन् । अर्णांसि । जर्हृषाणः । अन्धसा ॥२॥

ᵛअन्धसा सोमलक्षणेनान्नेन ᵛजर्हृषाणः अत्यर्थं हृष्यन् ᵛइन्द्रो ᵛयत् यदा ᵛवृत्रं त्रयाणां लोकानामावरीतारमसुरम् ᵛअवधीत् हतवान् । कीदृशं वृत्रम् । ᵛनदीवृतम् । नदनात् नद्य आपः । तासामावरीतारम् । किं कुर्वन्निन्द्रः । ᵛअर्णांसि जलानि ᵛउब्जन् अधःपातयन् । तदानीं ᵛसः इन्द्रः ᵛपर्वतो ᵛन पर्ववान्[1] शिलोच्चय इव[1] ᵛधरुणेषु सर्वस्य धारकेषूदकेषु मध्ये ᵛअच्युतः चलनराहित्येन स्थितः ᵛसहस्रमूतिः बहुविधरक्षणवान् ᵛतविषीषु बलेषु ᵛवावृधे[2] प्रवृद्धो बभूव ॥ धरुणेषु । ‘ धारयतेर्णिलुक् च ’ इति उनप्रत्ययः । प्रत्ययस्वरः । सहस्रमूतिः । सहस्रम् ऊतयो यस्यासौ । लुगभावश्छान्दसः । ववृधे । संहितायामभ्यासस्य ‘ अन्येषामपि दृश्यते ’ इति दीर्घत्वम् । नदीवृतम् । नदीं वृणोतीति नदीवृत् । क्विप् । तुगागमः । उब्जन् । ‘ उब्ज आर्जवे ’ । विकरणस्वरः । अर्णांसि । ‘ उदके नुट् च ’ ( उ. सू. ४. ६३६ ) इति अर्तेः असुन्प्रत्ययः, तत्संनियोगेन नुडागमश्च । नित्त्वादाद्युदात्तत्वम् । जर्हृषाणः । ‘ हृष तुष्टौ ’ । यङ्लुगन्तात् व्यत्ययेन शानच् । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । यद्वा । यङन्तादेव शानचि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ छन्दस्युभयथा ’ इति शानचः आर्धधातुकत्वात् अतोलोपयलोपौ । सार्वधातुकत्वाच्च अभ्यस्तस्याद्युदात्तत्वम् । अन्धसा । अद्यते इत्यन्धः । ‘ अदेर्नुम् धश्च ’ ( उ. सू. ४. ६४५ ) इति असुन्, धातोः नुमागमो धकारान्तादेशश्च । नित्त्वाद्युदात्तत्वम् ॥

---

१. ढ–पर्वत इव । २. ढ-ववृधे ।

स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मनीषिभिः ।
इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरन्धसः ॥ ३ ॥

सः । हि । द्वरः । द्वरिषु । वव्रः । ऊधनि । चन्द्रऽबुध्नः । मदऽवृद्धः । मनीषिऽभिः ।
इन्द्रम् । तम् । अह्वे । सुऽअपस्यया । धिया । मंहिष्ठऽरातिम् । सः । हि । पप्रिः । अन्धसः ॥३॥

ᵛसः पूर्वोक्तगुणविशिष्टः[1] इन्द्रः ᵛद्वरिषु आवरीतृषु शत्रुषु ᵛद्वरः ᵛहि अतिशयेनावरीता खलु । शत्रुजयशील इत्यर्थः । यस्मात् ᵛऊधनि उद्धृतजलवति अन्तरिक्षे ᵛवव्रः संभक्तो व्याप्य वर्तते । अत एव ᵛचन्द्रबुध्नः सर्वासां प्रजानामाह्लादकमूलः अन्तरिक्षस्य सर्वाह्लादकत्वात् । ᵛमदवृद्धः । माद्यन्ति एभिरिति मदाः सोमाः तैर्वर्धितः । एवंभूतो य इन्द्रः ᵛमंहिष्ठरातिं प्रवृद्धधनं प्रवृद्धदानं वा ᵛतम् ᵛइन्द्रं ᵛमनीषिभिः मनस ईषितृभिः प्राज्ञैरृत्विग्भिः सह ᵛस्वपस्यया ᵛधिया शोभनकर्मयोग्यया बुद्ध्या ᵛअह्वे आह्वयामि । ᵛहि यस्मात् ᵛसः इन्द्रः ᵛअन्धसः अन्नस्य अस्मदपेक्षितस्य ᵛपप्रिः पूरयिता ॥ द्वरः । द्वृ इत्येके । द्वरति आवृणोतीति द्वरः । पचाद्यच् । चित्स्वरेणान्तोदात्तत्वम् । द्वरिषु । 'अच इः' इति कर्तरि इप्रत्ययः । वव्रः । 'वृङ् संभक्तौ' । व्रियते संभज्यते इति वव्रः । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पा. सू. ३. ३. ५८. ४) इति परिगणनस्य उपलक्षणार्थत्वात् कर्मणि कप्रत्ययः । द्विर्भावश्छान्दसः । ऊधनि । उत् ऊर्ध्वं ध्रियतेऽस्मिन् जलमिति ऊधः । सप्तम्येकवचने 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः, छन्दस्यपि दृश्यते' (पा. सू. ७. १. ७५–७६) इति दृशिग्रहणात् ऊधस्शब्दस्यापि अनङादेशः । यद्वा । 'ऊधसोऽनङ्' (पा. सू. ५. ४. १३१) इति समासे विधीयमानः अनङादेशः छान्दसत्वात् केवलादपि भवति । चन्द्रबुध्नः । 'चदि आह्लादने दीप्तौ च' । इदित्त्वात् नुम् । 'स्फायितञ्चि०' इत्यादिना रक् । प्रत्ययस्वरेणान्तोदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । मदवृद्धः । 'मदी हर्षे' । 'मदोऽनुपसर्गे' इति करणे अप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अह्वे । 'ह्वेञ् स्पर्धायां शब्दे च' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'आत्मनेपदेष्वन्यतरस्याम्' (पा. सू. ३. १. ५४) इति च्लेः अङादेशः । 'आतो लोप इटि च' इति आकारलोपः । गुणः । स्वपस्यया । अप इति कर्मनाम । शोभनमपः स्वपः । तदर्हतीति स्वपस्यः । 'छन्दसि च' इति यप्रत्ययः । मंहिष्ठरातिम् । 'महि वृद्धौ' । अतिशयेन मंहित्री मंहिष्ठा । 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । मंहिष्ठा रातिर्यस्य । 'स्त्रियाः पुंवत्०' (पा. सू. ६. ३. ३४) इति पुंवद्भावात् ह्रस्वत्वम् । 'बहुव्रीहौ प्रकृत्या०' इति पूर्वपदप्रकृतिस्वरत्वम् । पप्रिः । 'पॄ पालनपूरणयोः' । 'आदृगमहनजनः०' इति किन्प्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इति उत्वस्य 'बहुलं छन्दसि' इति वचनादभावे यणादेशः । लिड्वद्भावात् 'द्विर्वचनेऽचि' इति स्थानिवद्भावे सति द्विर्भावोरदत्वहलादिशेषाः । नित्त्वादाद्युदात्तत्वम् ॥

---

१. ढ–तादृशः ।

आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः ।
तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अह्रुतप्सवः ॥ ४ ॥

आ । यम् । पृणन्ति । दिवि । सद्मऽबर्हिषः । समुद्रम् । न । सुऽभ्वः । स्वाः । अभिष्टयः ।
तम् । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इन्द्रम् । अवाताः । अह्रुतऽप्सवः ॥४॥

सद्म सदनं स्थानं बर्हिःशब्दोपलक्षितो यज्ञो येषां सोमानां ते सोमाः दिवि स्वर्गलोकेऽवस्थितं यम् इन्द्रम् आ पृणन्ति आ समन्तात् पूरयन्ति । तत्र दृष्टान्तः । सुष्ठु भवन्तीति सुभ्वः नद्यः समुद्रं न[१] । यथा नद्यः समुद्रं पूरयन्ति तद्वदित्यर्थः । कीदृश्यो नद्यः । स्वाः समुद्रस्य स्वभूताः । तथा चाम्नायते—‘ समुद्राय वयुनाय सिन्धूनां पतये नमः ’ ( तै. सं. ४. ६. २. ६ ) इति । अभिष्टयः आभिमुख्येन गमनवत्यः ऊतयः अवितारो मरुतः वृत्रहत्ये वृत्रहनने निमित्तभूते सति तम् इन्द्रम् अनु तस्थुः अनुलक्ष्य स्थिता बभूवुः । कीदृशा मरुतः । शुष्माः शत्रूणां शोषयितारः अवाताः । वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवः तद्रहिताः । अह्रुतप्सवः अकुटिलरूपाः शोभनावयवा इत्यर्थः ॥ पृणन्ति । ‘ पॄ पालनपूरणयोः ’ । क्रैयादिकः । ‘ प्वादीनां ह्रस्वः ’ इति ह्रस्वत्वम् । ‘ श्नाभ्यस्तयोरातः ’ इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । सद्मबर्हिषः । ‘ षद्ऌ विशरणगत्यवसादनेषु ’ । सीदन्त्यस्मिन्निति सद्म । औणादिकोऽधिकरणे मनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । सुभ्वः । भवतेः ‘ क्विप् च ’ इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जसि ‘ ओः सुपि ’ इति यणादेशस्य ‘ न भूसुधियोः ’ इति प्रतिषेधे प्राप्ते ‘ छन्दस्युभयथा ’ इति यणादेशः । ‘ उदात्तस्वरितयोर्यणः° ’ इति अनुदात्तस्य जसः स्वरितत्वम् । अभिष्टयः । इष्टय एषणानि । ‘ उपसर्गाश्चाभिवर्जम् ’ इति वचनात् अभिः अन्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । एमन्नादित्वात् पररूपत्वम् । वृत्रहत्ये । ‘ हनस्त च ’ इति हन्तेः भावे क्यप् तकारान्तादेशश्च । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अह्रुतप्सवः । ‘ ह्वृ कौटिल्ये ’ । अस्मात् निष्ठायां ‘ ह्रु ह्वरेश्छन्दसि ’ ( पा. सू. ७. २. ३१ ) इति ह्रुआदेशः । ‘ प्सा भक्षणे ’ इत्यस्मात् औणादिको डुप्रत्ययः । न ह्रुतप्सवः अह्रुतप्सवः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।
इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः ॥ ५ ॥

अभि । स्वऽवृष्टिम् । मदे । अस्य । युध्यतः । रघ्वीःऽइव । प्रवणे । सस्रुः । ऊतयः ।
इन्द्रः । यत् । वज्री । धृषमाणः । अन्धसा । भिनत् । वलस्य । परिधीन्ऽइव । त्रितः ॥५॥

ऊतयः मरुतः मदे सोमपानेन हर्षे सति अस्य इन्द्रस्य युध्यतः वृत्रेण सह युध्यमानस्य पुरतः स्ववृष्टिं स्वभूतवृष्टिमन्तं वृत्रम् अभि आभिमुख्येन सस्रुः जग्मुः । रघ्वीरिव प्रवणे । यथा गमनस्वभावा आपो निम्नदेशे गच्छन्ति । यत् यदा अन्धसा सोमलक्षणेनान्नेन

१. ढ–न समुद्रमिव ।

पीतेन ^v^धृषमाणः प्रगल्भः सन् ^v^वज्री वज्रवान् ^v^इन्द्रः ^v^वलस्य संवृण्वतः एतत्संज्ञकमसुरं ^v^भिनत् व्यदारयत् अवधीदित्यर्थः। तत्र दृष्टान्तः। ^v^त्रितः ^v^परिधीनिव। देवानां हविर्लेपनिघर्षणाय अग्नेः सकाशात् अप्सु एकतो द्वितस्त्रित इति त्रयः पुरुषा जज्ञिरे। तथा च तैत्तिरीयैः समाम्नातं–'सोऽङ्गारेणापः। अभ्यपातयत्। तत एकतोऽजायत। स द्वितीयमभ्यपातयत्। ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत' (तै. ब्रा. ३. २. ८. १०–११) इति। तत्रोदकपानार्थं प्रवृत्तस्य कूपे पतितस्य[1] प्रतिरोधाय असुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः। तान्यथा स अभिनत् तद्वत्॥ स्ववृष्टिम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। युध्यतः। 'युध संप्रहारे'। दैवादिकः। व्यत्ययेन शतृ। अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम्। रघ्वीः। रघि गत्यर्थः। 'रङ्घिबंह्योर्नलोपश्च' (उ. सू. १. २९) इति उप्रत्ययः। 'वोतो गुणवचनात्' इति ङीप्। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। ङीप्स्वरः शिष्यते। धृषमाणः। 'ञिधृषा प्रागल्भ्ये'। श्नुप्रत्यये प्राप्ते व्यत्ययेन शः आत्मनेपदं च। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते। भिनत्। लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। विकरणस्वरः। यद्वृत्तयोगादनिघातः। वलस्य। 'वल संवरणे'। वलति संवृणोति सर्वमिति वलः। पचाद्यच्। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। परिधीन्। परिधीयन्ते इति परिधयः। 'उपसर्गे घोः किः' (पा. सू. ३. ३. ९२) इति दधातेः कर्मणि किप्रत्ययः। 'आतो लोप इटि च' इति आकारलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ॥ १२ ॥

परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत्।
वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम्॥ ६ ॥

परि। ईम्। घृणा। चरति। तित्विषे। शवः। अपः। वृत्वी। रजसः। बुध्नम्। आ। अशयत्।
वृत्रस्य। यत्। प्रवणे। दुःऽगृभिश्वनः। निऽजघन्थ। हन्वोः। इन्द्र। तन्यतुम्॥ ६ ॥

यो वृत्रः ^v^अपो ^v^वृत्वी उदकान्यावृत्य ^v^रजसः ^v^बुध्नम् अन्तरिक्षस्योपरिप्रदेशम् ^v^आशयत् आश्रित्याशेत तस्य ^v^वृत्रस्य ^v^प्रवणे प्रकर्षेण वननीयेऽन्तरिक्षे वर्तमानस्य ^v^दुर्गृभिश्वनः दुर्ग्रहव्यापनस्य। तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते। 'स इमान् लोकानावृणोत्' इति श्रुतेः। एवंभूतस्य वृत्रस्य ^v^हन्वोः मुखपार्श्वयोः हे ^v^इन्द्र ^v^यत् यदा ^v^तन्यतुं प्रहारं विस्तारयन्तं यद्वा शब्दकारिणं वज्रम्। तृतीयार्थे द्वितीया। तन्यतुना वज्रेण ^v^निजघन्थ नितरां प्रजहर्थ तदानीम् ^v^ईम् एनं त्वाम् इन्द्रं ^v^घृणा शत्रुजयलक्षणा दीप्तिः ^v^परि ^v^चरति परितो व्याप्नोति। त्वदीयं ^v^शवः बलं च ^v^तित्विषे प्रदिदीपे॥ तित्विषे। 'त्विष दीप्तौ'। लिटि प्रत्ययस्वरः। तिङ्परत्वात् निघाताभावः। वृत्वी। 'वृञ् वरणे'। 'स्नात्व्यादयश्च' (पा. सू. ७. १. ४९) इति आदिग्रहणात् क्त्वाप्रत्ययस्य ईकारः। रजसः। 'रञ्ज रागे'। रजन्त्यस्मिन्[2] गन्धर्वादयः इति रजोऽन्तरिक्षम्। असुनि 'रजकरजनरजःसूपसंख्यानम्' (का. ६. ४. २४. ४) इति नलोपः। नित्त्वादाद्युदात्तत्वम्। अशयत्। शीङो व्यत्ययेन परस्मैपदम्। 'बहुलं छन्दसि' इति शपो लुगभावः। दुर्गृभिश्वनः। 'ग्रह उपादाने', 'अशू व्याप्तौ' इत्यनयोः दुःशब्दे उपपदे पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः। निजघन्थ। 'हन

---

१. ढ-स–पतितस्य त्रितस्य। २. ढ–रज्जन्त्यस्मिन्।

हिंसागत्योः ’। लिटि थलि क्रादिनियमात्प्राप्तस्य इटः ‘ उपदेशेऽत्वतः ’ ( पा. सू. ७. २. ६२ ) इति निषेधः। ‘ अभ्यासाच्च ’ इति अभ्यासादुत्तरस्य हकारस्य घत्वम्। ‘ लिति ’ इति प्रत्ययात् पूर्वस्योदात्तत्वम्। ‘ तिङि चोदात्तवति ’ इति गतेः निघातः। यद्वृत्तयोगात् निघाताभावः। तन्यतुम्। ‘ तनु विस्तारे ’। अस्मात् ‘ ऋतन्यञ्जि° ’ ( उ. सू. ४. ४४२ ) इत्यादिना यतुच्। यद्वा। ‘ स्तन शब्दे ’ इत्यस्मात् बहुलवचनात् यतुच्प्रत्यये सकारलोपः॥

ह्रदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना।
त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम्॥ ७॥

ह्रदम्। न। हि। त्वा। निऽऋषन्ति। ऊर्मयः। ब्रह्माणि। इन्द्र। तव। यानि। वर्धना।
त्वष्टा। चित्। ते। युज्यम्। ववृधे। शवः। ततक्ष। वज्रम्। अभिभूतिऽओजसम्॥ ७॥

हे इन्द्र यानि ब्रह्माणि स्तोत्रशस्त्ररूपाणि मन्त्रजातानि तव वर्धना वर्धयितॄणि तानि त्वा त्वां न्यृषन्ति हि नितरां प्राप्नुवन्त्येव। तत्र दृष्टान्तः। ऊर्मयः जलप्रवाहाः ह्रदं न। यथा जलाशयं प्राप्नुवन्ति तद्वत्। त्वष्टा[1] चित् स त्वष्टा च देवः[1] ते तव युज्यं योग्यं शवः बलं ववृधे प्रावर्धयत्। अपि च अभिभूत्योजसं शत्रूणामभिभवितृणा ओजसा बलेन युक्तं वज्रं ततक्ष तीक्ष्णीचकार॥ न्यृषन्ति। ‘ ऋषी गतौ ’। तौदादिकः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः। ‘ हि च ’ इति निघातप्रतिषेधः। ऊर्मयः। ‘ ऋ गतौ ’। ऋच्छन्ति गच्छन्तीति ऊर्मयः। ‘ अर्तेरू च ’ ( उ. सू. ४. ६३४ ) इति मिप्रत्ययः। गुणे सति अकारस्य ऊकारादेशश्च। प्रत्ययस्वरः। वर्धना। ‘ वृधु वृद्धौ ’। वर्धते एभिरिति वर्धना। करणे ल्युट्। ‘ शेश्छन्दसि° ’ इति शेर्लोपः। ततक्ष। ‘ तक्षू त्वक्षू तनूकरणे ’। लिटि णलि लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम्। पादादित्वात् निघाताभावः। अभिभूत्योजसम्। अभिभूयतेऽनेनेति अभिभूति। करणे क्तिन्। ‘ तादौ च निति° ’ इति गतेः प्रकृतिस्वरत्वम्। अभिभूति ओजो यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे॥ ८॥

जघन्वान्। ऊँ इति। हरिऽभिः। संभृतक्रतो इति संभृतऽक्रतो। इन्द्र। वृत्रम्। मनुषे। गातुऽयन्। अपः।
अयच्छथाः। बाह्वोः। वज्रम्। आयसम्। अधारयः। दिवि। आ। सूर्यम्। दृशे॥ ८॥

हे संभृतक्रतो संपादितकर्मन् संपादितप्रज्ञ वा इन्द्र मनुषे जनाय गातुयन् गातुं मार्गमिच्छन् वृत्रं लोकानामावरकमसुरं हरिभिः अश्वैर्युक्तस्त्वं जघन्वान् उ हतवान् खलु। तदनन्तरम् अपः वृष्ट्युदकानि प्रावर्तय इत्यध्याहारः। बाह्वोः त्वदीययोर्हस्तयोः आयसम् अयोमयं वज्रम् अयच्छथाः अग्रहीः। आकारः समुच्चयार्थः। सूर्यं च दिवि द्युलोके दृशे द्रष्टुं सर्वेषामस्माकं दर्शनाय

---

१. च-छ-त-फ-श–त्वष्टाचिदेव; ध–त्वष्टा चित् त्वष्टा च देवः; न-स– त्वष्टा चित् त्वष्टा चिदेव।

अधारयः स्थापयांचकृषे ॥ जघन्वान् । हन्तेर्लिटः क्वसुः । ‘ विभाषा गमहनविदविशाम् ’ ( पा. सू. ७. २. ६८ ) इति इडागमस्य विकल्पोक्तेरभावः । गातुयन् गातुमिच्छसि । ‘ छन्दसि परेच्छायामपि ’ ( का. ३. १. ८. २ ) इति क्यच् । ‘ न च्छन्दस्यपुत्रस्य ’ इति दीर्घप्रतिषेधः । क्यजन्तात् शतरि अदुपदेशात् लसार्वधातुकानुदात्तत्वे क्यच एव स्वरः शिष्यते । बाह्वोः । ‘ उदात्तयणो हल्पूर्वात् ’ इति विभक्तेरुदात्तत्वम् ॥

बृहत्स्वश्चन्द्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः ।
यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥ ९ ॥

बृहत् । स्वऽचन्द्रम् । अमऽवत् । यत् । उक्थ्यम् । अकृण्वत । भियसा । रोहणम् । दिवः ।
यत् । मानुषऽप्रधनाः । इन्द्रम् । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् । अनु ॥९॥

बृहत् बृहत्साम स्तोतारो यजमानाः भियसा वृत्रभयेन यत् यदा उक्थ्यम् उक्थार्हं स्तोत्रयोग्यम् अकृण्वत अकुर्वन् । कीदृशं बृहत्साम । स्वश्चन्द्रं स्वकीयेन चन्द्रेणाह्लादकेन तेजसा युक्तं अमवत् । अमति शत्रून् रुजत्यनेनेति अमो बलम् । तद्युक्तम् । दिवः स्वर्गस्य रोहणम् आरोहणहेतुभूतम् । एवंविधेन स्तोत्रेण वृत्राद्भीता इन्द्रमस्तोषतेत्यर्थः । यत् यदा मानुषप्रधनाः । ‘ प्रकीर्णान्यस्मिन्धनानि भवन्ति ’ ( निरु. ९. २३ ) इति नैरुक्तव्युत्पत्त्या प्रधनमिति संग्रामनाम । मनुष्यहितसंग्रामाः ऊतयः स्वः द्युलोकस्य[2] रक्षितारः मरुतः नृषाचः प्राणरूपेण नॄन् सेवमाना भूत्वा इन्द्रम् अपि तेनैव रूपेण अनु अमदन् आनुपूर्व्येण हर्षं प्रापयन् । तदानीं स इन्द्रो वृत्रवधं प्रति उद्युक्तो बभूवेति शेषः ॥ स्वश्चन्द्रम् । स्वकीयं चन्द्रं यस्य । ‘ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ’ ( पा. सू. ६. १. १५१ ) इति सुट् । श्चुत्वेन शकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । भियसा । भीशब्दस्य तृतीयैकवचने छान्दसः असुगागमः तस्य उदात्तत्वं च । नृषाचः । ‘ षच समवाये ’ । अयं सेवनार्थ इति यास्कः । ‘ वहश्च ’ ( पा. सू. ३. २. ६४ ) इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादस्मादपि ण्विप्रत्ययः । अमदन् । ‘ मदी हर्षे ’ । णिचि ‘ मदी हर्षग्लपनयोः ’ इति घटादिषु पाठात् मित्त्वे सति ‘ मितां ह्रस्वः ’ इति ह्रस्वत्वम् । लङि ‘ छन्दस्युभयथा ’ इति शप आर्धधातुकत्वात् ‘ णेरनिटि ’ इति णिलोपः ॥

द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र ते ।
वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥ १० ॥

द्यौः । चित् । अस्य । अमऽवान् । अहेः । स्वनात् । अयोयवीत् । भियसा । वज्रः । इन्द्र । ते ।
वृत्रस्य । यत् । बद्बधानस्य । रोदसी इति । मदे । सुतस्य । शवसा । अभिनत् । शिरः ॥१०॥

अमवान् बलवान् द्यौश्चित् द्युलोकोऽपि अस्य अहेः वृत्रस्य स्वनात् शब्दात् भियसा भयेन अयोयवीत् अत्यर्थं पृथग्भूत आसीत् । अकम्पतेत्यर्थः । हे इन्द्र ते तव सुतस्य

---

२. ढ–स्वर्गलोकस्य ।

अभिषवादिभिः संस्कृतस्य सोमस्य पानेन ᵛमदे हर्षे जाते सति त्वदीयः ᵛवज्रः ᵛरोदसी द्यावापृथिव्यौ ᵛबद्बधानस्य बाधनशीलस्य ᵛवृत्रस्य ᵛशिरः ᵛयत् यदा ᵛशवसा बलेन ᵛअभिनत् अच्छिनत्। तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः ॥ अयोयवीत्। 'यु मिश्रणामिश्रणयोः'। अस्मात् यङ्लुगन्तात् लङि 'यङो वा' (पा. सू. ७. ३. ९४) इति अपृक्तप्रत्ययस्य ईडागमः। अडागम उदात्तः। बद्बधानस्य। 'बाधृ विलोडने'। ताच्छीलिके चानशि 'बहुलं छन्दसि' इति शपः श्लुः। हलादिशेषाभावो धातोर्ह्रस्वत्वं च छान्दसत्वात्। 'चितः' इत्यन्तोदात्तत्वम् ॥ ॥ १३ ॥

यदिन्न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः ।
अत्राह ते मघवन्विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ॥ ११ ॥

यत्। इत्। नु। इन्द्र। पृथिवी। दशऽभुजिः। अहानि। विश्वा। ततनन्त। कृष्टयः।
अत्र। अह। ते। मघऽवन्। विऽश्रुतम्। सहः। द्याम्। अनु। शवसा। बर्हणा। भुवत् ॥ ११ ॥

ᵛयदिन्नु यदा खलु ᵛपृथिवी ᵛदशभुजिः दशगुणिता भवेत् यदि वा ᵛकृष्टयः[1] सर्वे मनुष्याः[1] ᵛविश्वा सर्वाणि ᵛअहानि ᵛततनन्त विस्तारयेयुः। हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛअत्राह अत्रैव पूर्वोक्तेष्वेव देशकालकर्तृकेषु ᵛते त्वदीयं ᵛसहः वृत्रवधादिकारणं बलं ᵛविश्रुतं विख्यातं प्रसिद्धम्। ᵛशवसा त्वदीयेन बलेन कृता ᵛबर्हणा वृत्रादेर्वधरूपा क्रिया ᵛद्यामनु ᵛभुवत् अनुभवति। यथा द्यौर्महती तथा त्वत्कृतं वृत्रादेर्हिंसनमपि महदिति भावः ॥ ततनन्त। 'तनु विस्तारे'। स्वरितेत्त्वात् आत्मनेपदम्। लिङर्थे लङि उप्रत्यये प्राप्ते व्यत्ययेन शप्। छान्दसो द्विर्भावः। यद्वा। 'बहुलं छन्दसि' इति उप्रत्ययस्य श्लौ सति पुनरपि व्यत्ययेन शप्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। यद्वृत्तयोगादनिघातः। विश्रुतम्। 'श्रु श्रवणे'। कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। बर्हणा। 'वर्ह वल्ह परिभाषणहिंसाच्छादनेषु'। अस्मात् औणादिकः क्युप्रत्ययः। बवयोरभेद इति वकारस्य बत्वम्। प्रत्ययस्वरः। 'निबर्हयति' (नि. २. १९. ३०) इति वधकर्मसु पठितं च। भुवत्। 'भू सत्तायाम्'। लेटि अडागमः। 'इतश्च लोपः॰' इति इकारलोपः। 'बहुलं छन्दसि' इति शपो लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेधे उवङादेशः ॥

त्वमस्य पारे रजसो व्योमनः स्वभूत्योजा अवसे धृषन्मनः ।
चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या दिवम् ॥ १२ ॥

त्वम्। अस्य। पारे। रजसः। विऽओमनः। स्वभूतिऽओजाः। अवसे। धृषत्ऽमनः।
चकृषे। भूमिम्। प्रतिऽमानम्। ओजसः। अपः।
स्वरिति स्वः। परिऽभूः। एषि। आ। दिवम् ॥ १२ ॥

---

[1] च-फ—कृष्टयः प्रजाः; न-स—कृष्टयः।

हे ᵛधृषन्मनः शत्रूणां धर्षकमनोयुक्तेन्द्र ᵛअस्य अस्माभिः परिदृश्यमानस्य ᵛव्योमनः व्याप्तस्य अन्तरिक्षस्य ᵛरजसः लोकस्य ᵛपारे उपरिप्रदेशे वर्तमानः ᵛस्वभूत्योजाः स्वभूतबलः ᵛत्वम् ᵛअवसे अस्मद्रक्षणार्थं ᵛभूमिं भूलोकं ᵛचकृषे कृतवानसि । किंच ᵛओजसः बलवतां बलस्य ᵛप्रतिमानं प्रतिनिधिरभूः । तथा ᵛस्वः सुष्ठु अरणीयं गन्तव्यम् । आपः इति अन्तरिक्षनाम । ᵛअपः अन्तरिक्षलोकं ᵛआ ᵛदिवं द्युलोकं च ᵛपरिभूः परिग्रहीता । परिपूर्वो भवतिः परिग्रहणार्थः । ᵛएषि प्राप्नोषि ॥ अस्य । 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् । व्योमनः । अवतिर्गत्यर्थः, 'अव रक्षणगतिकान्ति०' इत्यभिधानात् । विशेषेण गच्छति व्याप्नोतीति व्योम । यद्वा । वृष्टिप्रदानेन विशेषेण प्राणिनोऽवति रक्षतीति व्योम । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'ज्वरत्वर०' इत्यादिना उपधाया वकारस्य च ऊठ् । गुणः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । भावे मनिन् । विविधम् ओम रक्षणं यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे 'उदात्तस्वरितयोर्यणः०' इति परस्यानुदात्तस्य स्वरितत्वम् । स्वः । सुपूर्वात् अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । 'अव्ययादाप्सुपः' ( पा. सू. २. ४. ८२ ) इति सुपो लुक् । 'न्यङ्स्वरौ स्वरितौ' ( फि. सू. ७४ ) इति स्वरितत्वम् ॥

भूनाम्न्येकाहे मरुत्वतीयशस्त्रे निविद्धानीयात् सूक्तात् पुरा 'त्वं भुवः प्रतिमानम्' इत्येषा शंसनीया । तथैवासूत्रयत्—'शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्याः' ( आश्व. श्रौ. ९. ५ ) इति ॥

त्वं भु॒वः प्र॑ति॒मानं॑ पृथि॒व्या ऋ॒ष्ववी॑रस्य बृह॒तः पति॑र्भूः ।
विश्व॒मा॒प्रा अ॒न्तरि॑क्षं महि॒त्वा स॒त्यम॒द्धा नकि॑र॒न्यस्त्वावा॑न् ॥ १३ ॥

त्वम् । भु॒वः । प्र॒ति॒ऽमान॑म् । पृ॒थि॒व्याः । ऋ॒ष्वऽवी॑रस्य । बृ॒ह॒तः । पतिः॑ । भूः ।
विश्व॑म् । आ । अ॒प्राः । अ॒न्तरि॑क्षम् । म॒हि॒ऽत्वा । स॒त्यम् । अ॒द्धा । नकिः॑ । अ॒न्यः । त्वाऽवा॑न् ॥ १३ ॥

हे इन्द्र ᵛत्वं ᵛपृथिव्याः प्रथितायाः विस्तीर्णाया भूमेः । ᵛप्रतिमानं ᵛभुवः प्रतिनिधिर्भवसि । यथा भूलोको महानचिन्त्यशक्तिः एवं त्वमपीत्यर्थः । तथा ᵛऋष्ववीरस्य । वीरयन्ति विक्रान्ता भवन्तीति वीरा देवाः । ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः । तस्य ᵛबृहतः बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य ᵛपतिर्भूः पालयितासि । तथा ᵛअन्तरिक्षम् अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशं ᵛविश्वं सर्वमपि ᵛमहित्वा महत्त्वेन ᵛसत्यम् ᵛआप्राः निश्चयेन आ समन्तादपूरयः । अतः ᵛत्वावान् त्वत्सदृशः ᵛअन्यः कश्चित् ᵛनकिः अस्ति नास्तीति यदेतत् तत् ᵛअद्धा सत्यमेव ॥ भुवः । भवतेर्लेटि सिपि अडागमः । उवङादेशः । पृथिव्याः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तिरुदात्ता । बृहतः । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । भूः । छान्दसे वर्तमाने लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । अप्राः । 'प्रा पूरणे' । आदादिकः । लङि अडागमः । महित्वा । 'सुपां सुलुक्०' इति तृतीयाया डादेशः । त्वावान् । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' ( पा. सू. ५. २. ३९. १ ) इति सादृश्यार्थे वतुप् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । 'आ सर्वनाम्नः' इति आत्वम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ॥

न यस्य॒ द्यावा॑पृथि॒वी अनु॒ व्यचो॒ न सिन्ध॑वो॒ रज॑सो॒ अन्त॑मान॒शुः ।
नोत स्ववृ॑ष्टिं॒ मदे॑ अस्य॒ युध्य॑त॒ एको॑ अ॒न्यच्च॑कृषे॒ विश्व॑मानु॒षक् ॥ १४ ॥

न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । अनु॑ । व्यचः॑ । न । सिन्ध॑वः । रज॑सः । अन्त॑म् । आ॒न॒शुः ।
न । उ॒त । स्वऽवृ॑ष्टिम् । मदे॑ । अ॒स्य॒ । युध्य॑तः । एकः॑ । अ॒न्यत् । च॒कृ॒षे । विश्व॑म् । आ॒नु॒षक् ॥ १४ ॥

ᵛयस्य इन्द्रस्य ᵛव्यचः व्यापनं ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛन ᵛअनु आनशाते प्राप्तुमसमर्थे बभूवतुः । तथा[1] ᵛरजसः अन्तरिक्षलोकस्योपरि ᵛसिन्धवः स्यन्दनशीला आपो यस्य इन्द्रस्य तेजसः ᵛअन्तम् अवसानं ᵛन ᵛआनशुः न प्रापुः । ᵛउत अपि च सोमपानेन ᵛमदे हर्षे सति ᵛस्ववृष्टिं स्वीकृतवृष्टिं वृत्रादिं ᵛयुध्यतः युध्यमानस्य ᵛअस्य इन्द्रस्य बलस्य अन्तं वृत्रादयः ᵛन प्रापुः । अतो हे इन्द्र ᵛएकः[2] त्वम् ᵛअन्यत् स्वव्यतिरिक्तं ᵛविश्वं सर्वं भूतजातम् ᵛआनुषक् आनुषक्तं[3] ᵛचकृषे । सकलमपि भूतजातं त्वदधीनमभूदिति भावः ॥ द्यावापृथिवी । द्यौश्च पृथिवी च । 'दिवो द्यावा' (पा. सू. ६. ३. २९) इति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दः 'षिद्गौरादिभ्यश्च' इति ङीषन्तोऽन्तोदात्तः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । '°अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदासात् 'नोत्तरपदेऽनुदात्तादौ' इति निषेधाभावः । व्यचः । 'व्यचेः कुटादित्वमनसि' (का. १. २. १. १) इति वचनात् ङित्त्वाभावे संप्रसारणाभावः । आनशुः । अश्नोतेर्व्यत्ययेन परस्मैपदम् । 'अत आदेः' इति अभ्यासस्य आत्वम् । 'अश्नोतेश्च' इति नुडागमः ॥

आर्च॒न्नत्र॑ म॒रुतः॒ सस्मि॑न्ना॒जौ विश्वे॑ दे॒वासो॑ अमद॒न्ननु॑ त्वा ।
वृ॒त्रस्य॒ यद्भृ॑ष्टि॒मता॑ व॒धेन॒ नि त्वमि॑न्द्र॒ प्रत्या॒नं ज॒घन्थ॑ ॥ १५ ॥

आर्च॑न् । अत्र॑ । म॒रुतः॑ । सस्मि॑न् । आ॒जौ । विश्वे॑ । दे॒वासः॑ । अ॒म॒द॒न् । अनु॑ । त्वा॒ ।
वृ॒त्रस्य॑ । यत् । भृ॒ष्टि॒ऽमता॑ । व॒धेन॑ । नि । त्वम् । इ॒न्द्र॒ । प्रति॑ । आ॒नम् । ज॒घन्थ॑ ॥ १५ ॥

हे इन्द्र त्वां ᵛमरुतः ᵛअत्र अस्मिन् संग्रामे ᵛआर्चन् । 'प्रहर भगवो जहि वीरयस्व' (ऐ. ब्रा. ३. २०) इत्यनेन वचनेन अपूजयन् । ᵛसस्मिन् तस्मिन् यद्वा सर्वस्मिन् ᵛआजौ संग्रामे ᵛविश्वे ᵛदेवासः ते सर्वे दानादिगुणयुक्ता मरुतः ᵛत्वा त्वाम् ᵛअनु ᵛअमदन् अनुक्रमेण हर्षं प्रापयन् । यद्वा । त्वदीयमदानन्तरं तेऽपि मदं प्राप्ताः । हे ᵛइन्द्र ᵛत्वं ᵛयत् यदा ᵛभृष्टिमता । भ्रंशयति शत्रूनिति भृष्टिः अश्रिः । तद्वता ᵛवधेन हननसाधनेन वज्रेण । अश्रिमत्त्वं च वज्रस्य ब्राह्मणे समाम्नातं—'वज्रो वा एष यद्यूपः सोऽष्टाश्रिः कर्तव्योऽष्टाश्रिर्वै वज्रः' (ऐ. ब्रा. २. १) इति । तेन वज्रेण ᵛवृत्रस्य ᵛआनं ᵛप्रति आननं मुखं प्रति यद्वा श्वासहेतुं प्राणं प्रति ᵛनि ᵛजघन्थ नितरां प्राहार्षीः ॥ आर्चन् । 'अर्च पूजायाम्' । भौवादिकः । आडागम उदात्तः । सस्मिन् । 'तदोः सः सौ°' (पा. सू. ७. २. १०६) इति विधीयमानं सत्वं व्यत्ययेन सप्तम्यामपि द्रष्टव्यम् । यद्वा । सर्वस्मिन्नित्यत्र वर्णलोपो द्रष्टव्यः । देवासः । 'आज्जसेरसुक् ।' आनम् आननम् । वर्णलोपश्छान्दसः । यद्वा । 'अन प्राणने' । अन्यते

---

१. ढ–तथा च । २. ढ–एक एव । ३. ढ- स–अनुषक्तम् ।

अनेनेति आनं प्राणम् । करणे घञ् । ' कर्षात्वतः° ' इत्यन्तोदात्तत्वम् । जघन्थ । ' हन हिंसागत्योः ' । थलि ' उपदेशेऽत्वतः ' इति इट्प्रतिषेधः । ' अभ्यासाच्च ' इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् ॥ ॥ १४ ॥

' न्यू षु ' इति एकादशर्चं तृतीयं सूक्तम् । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा नव जगत्यः । सव्य ऋषिः । इन्द्रो देवता । तथा चानुक्रान्तं—' न्यू ष्वेकादश्यन्त्ये त्रिष्टुभौ ' इति । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिनः शस्त्रे एतत्सूक्तम् । तथा चासूत्रयदाचार्यः—' न्यू षु वाचमप्सु धूतस्य हरिवः पिबेहेति याज्या ' ( आश्व. श्रौ. ६. ४ ) इति ॥

न्यू३ षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः ।
नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥ १ ॥

नि । ऊँ इति । सु । वाचम् । प्र । महे । भरामहे । गिरः । इन्द्राय । सदने । विवस्वतः ।
नु । चित् । हि । रत्नम् । ससताम्ऽइव । अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥१॥

ᵛमहे महते ᵛइन्द्राय ᵛसु ᵛवाचं शोभनां स्तुतिं ᵛनि ᵛप्र ᵛभरामहे नितरां प्रयुञ्ज्महे । ᵛउ इति पादपूरणः । यतः ᵛविवस्वतः परिचरतो यजमानस्य ᵛसदने यज्ञगृहे इन्द्राय ᵛगिरः स्तुतयः क्रियन्ते । ᵛहि यस्मात् स इन्द्रः ᵛनू ᵛचित् क्षिप्रमेव ᵛरत्नं रमणीयमसुराणां धनम् ᵛअविदत् विन्दति । तत्र दृष्टान्तः । ᵛससतामिव । यथा स्वपतां पुरुषाणां धनं चोरः क्षिप्रं लभते तद्वत् । अतोऽस्मभ्यं धनं दातुं शक्त इति भावः । ᵛद्रविणोदेषु धनस्य दातृषु पुरुषेषु ᵛदुष्टुतिः असमीचीना स्तुतिः ᵛन ᵛशस्यते नाभिधीयते । अतः सुवाचं प्र भरामहे इति पूर्वेण संबन्धः ॥ न्यू षु इत्यस्य ' उदात्तस्वरितयोर्यणः° ' इति स्वरितत्वम् । तत्र उदात्तपरत्वात् संहितायां कम्प्यते । ' इकः सुञि ' ( पा. सू. ६. ३. १३४ ) इति दीर्घत्वम् । ' सुञः ' इति षत्वम् । महे । ' मह पूजायाम् ' इत्यस्मात् ' क्विप् च ' इति क्विप् । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । यद्वा । महच्छब्दस्य अच्छब्दलोपश्छान्दसः । नू चित् । ' ऋचि तुनुघ° ' इत्यादिना दीर्घः । ससतामिव । ' षस स्वप्ने ' । अस्मात् शत्रन्तादन्तोदात्तात्परस्या विभक्तेः ' शतुरनुमः° ' इत्युदात्तत्वम् । ' इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ' ( पा. सू. २. १. ४. २ ) इति समासः । अविदत् । ' विदॢ लाभे ' । ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लुङि ' पुषादिद्युतादि° ' इति च्लेः अङादेशः । अडागम उदात्तः । ' हि च ' इति निघातप्रतिषेधः । द्रविणोदेषु । द्रविणानि धनानि ददातीति द्रविणोदाः । ' द्रु गतौ ' इत्यस्मात् ' द्रुदक्षिभ्यामिनन् ' ( उ. सू. २. २०८ ) इति इनन्प्रत्ययान्तो द्रविणशब्दः । तस्मिन् कर्मण्युपपदे ' आतोऽनुपसर्गे कः ' इति कः । पूर्वपदस्य सुगागमश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् । शस्यते । ' शंसु स्तुतौ ' । यकि ' अनिदिताम्° ' इति नलोपः ॥

**दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।**
**शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ॥ २ ॥**

दुरः । अश्वस्य । दुरः । इन्द्र । गोः । असि । दुरः । यवस्य । वसुनः । इनः । पतिः ।
शिक्षाऽनरः । प्रऽदिवः । अकामऽकर्शनः । सखा । सखिऽभ्यः । तम् । इदम् । गृणीमसि ॥२॥

हे Vइन्द्र त्वम् Vअश्वस्य Vदुरः दाता Vअसि । तथा Vगोः पश्वादेः Vदुरः दातासि । तथा Vयवस्य यवादेर्धान्यजातस्य Vदुरः दाता असि । Vवसुनः निवासहेतोः धनस्य Vइनः स्वामी Vपतिः सर्वेषां पालयिता Vशिक्षानरः । शिक्षतिर्दानकर्मा ( नि. ३. १०. ८ ) । शिक्षाया दानस्य नेतासि । Vप्रदिवः पुराणः । प्रगता दिवो दिवसा यस्मिन् स तथोक्तः । Vअकामकर्शनः । कामान् कर्शयति नाशयतीति कामकर्शनः । न कामकर्शनोऽकामकर्शनः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । हविर्दत्तवतां यजमानानां कामानभिमतफलप्रदानेन पूरयतीत्यर्थः । Vसखिभ्यः समानख्यानेभ्य ऋत्विग्भ्यः Vसखा सखिवदत्यन्तं प्रियः एवंभूतो य इन्द्रः Vतं प्रति Vइदं स्तोत्रलक्षणं वचः Vगृणीमसि ब्रूमहे ॥ दुरः । 'डुदाञ् दाने' । 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' (उ. सू. १. ३८) इति विधीयमान उरच्प्रत्ययो बहुलवचनादस्मादपि भवति । अत एव आकारलोपः । शिक्षानरः । 'शिक्ष विद्योपादाने' । 'गुरोश्च हलः' (पा. सू. ३. ३. १०३) इति अकारप्रत्ययः । ततः टाप् । षष्ठीसमासः । 'समासस्य' इत्यन्तोदात्तत्वम् । गृणीमसि । 'गॄ शब्दे' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'इदन्तो मसि' इति मसेः इकारः ॥

**शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु ।**
**अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥ ३ ॥**

शचीऽवः । इन्द्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदम् । अभितः । चेकिते । वसु ।
अतः । सम्ऽगृभ्य । अभिऽभूते । आ । भर । मा । त्वाऽयतः । जरितुः । कामम् । ऊनयीः ॥३॥

शचीवः । शची इति प्रज्ञानाम । हे Vइन्द्र Vशचीवः प्रज्ञावान् Vपुरुकृत् प्रभूतस्य वृत्रवधादेः कर्तः Vद्युमत्तम अतिशयेन दीप्तिमन् Vअभितः सर्वत्र वर्तमानं Vवसु धनं यदस्ति तत् Vइदं Vतवेत् तवैव स्वभूतमिति Vचेकिते भृशमस्माभिर्ज्ञायते । Vअतः कारणात् धनं Vसंगृभ्य सम्यक् गृहीत्वा Vअभिभूते शत्रूणामभिभवितः Vआ Vभर अस्मभ्यमाहर देहीत्यर्थः । Vत्वायतः त्वामात्मन इच्छतः Vजरितुः स्तोतुः Vकामम् अभिलाषं Vमा Vऊनयीः परिहीनं मा कार्षीः[1] । पूरयेत्यर्थः[1] ॥ शचीवः । 'मतुवसो रुः°' इति रुत्वम् । षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । इतरेषु आष्टमिकं सर्वानुदात्तत्वम् । न च 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वम्, 'नामन्त्रिते समानाधिकरणे°' इति निषेधात् । चेकिते । 'कित ज्ञाने' । अस्मात् यङन्ताद्वर्तमाने लिटि '°अमन्त्रे°' (पा. सू. ३. १. ३५) इति निषेधात् आम्प्रत्ययाभावे सति लिट आर्धधातुकत्वात् अतोलोपयलोपौ । संगृभ्य आभर इति उभयत्र 'हृग्रहोर्भ-

---

१. ढ–कार्षीरित्यर्थः पूरयेति भावः ।

ऽछन्दसि° ' इति भत्वम् । त्वायतः । त्वामात्मन इच्छति । ' सुप आत्मनः क्यच् ' । ' प्रत्ययोत्तरपदयोश्च ' इति मपर्यन्तस्य त्वादेशः । छान्दसम् आत्वम् । क्यजन्तात् लटः शतृ । तस्य अदुपदेशात् लसार्वधातुकस्वरेण अनुदात्तस्य एकादेशस्वरेणोदात्तत्वम् । ' एकादेशस्वरोऽन्तरङ्गः सिद्धो भवतीति वक्तव्यम् ' ( पा. सू. ८. २. ६. १ ) इति वचनात् तस्य सिद्धत्वे सति ' शतुरनुमः° ' इति अजादिविभक्तेरुदात्तत्वम् । कामम् । ' कमु कान्तौ ' इत्यस्मात् भावे घञ् । ' कर्षात्वतः° ' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । ऊनयीः । ' ऊन परिहाणे ' । चुरादिः । लुङि ' णिश्रिद्रुस्रुभ्यः° ' ( पा. सू. ३. १. ४८ ) इति च्लेः चङादेशस्य ' नोनयतिध्वनयति° ' ( पा. सू. ३. १. ५१ ) इत्यादिना प्रतिषेधः । ' ह्म्यन्तक्षण° ' ( पा. सू. ७. २. ५ ) इति सिचि वृद्धिप्रतिषेधः ॥

**एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।**
**इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥ ४ ॥**

एभिः । द्युऽभिः । सुऽमनाः । एभिः । इन्दुऽभिः । निऽरुन्धानः । अमतिम् । गोभिः । अश्विना ।
इन्द्रेण । दस्युम् । दरयन्तः । इन्दुऽभिः । युतऽद्वेषसः । सम् । इषा । रभेमहि ॥ ४ ॥

हे इन्द्र एभिः अस्माभिर्दत्तैः द्युभिः दीप्तैश्चरुपुरोडाशादिभिः एभिरिन्दुभिः पुरोवर्तिभिः तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वम् अस्माकम् अमतिं दारिद्र्यं गोभिः त्वया दत्तैः पशुभिः अश्विना अश्वयुक्तेन धनेन च निरुन्धानः निवर्तयन् सुमनाः शोभनमना भव । वयम् इन्दुभिः अस्माभिर्दत्तैः सोमैः प्रीतेन इन्द्रेण दस्युम् उपक्षपयितारं शत्रुं दरयन्तः हिंसन्तः अत एव युतद्वेषसः पृथग्भूतशत्रुका भूत्वा इषा इन्द्रदत्तेन अन्नेन सं रभेमहि संरब्धा भवेम । संगच्छेमहीत्यर्थः ॥ सुमनाः । शोभनं मनो यस्य । ' सोर्मनसी अलोमोषसी ' इत्युत्तरपदाद्युदात्तत्वम् । निरुन्धानः । ' रुधिर् आवरणे ' । स्वरितेत्त्वात् आत्मनेपदम् । ' श्नसोरल्लोपः ' इति अकारलोपः । ' चितः ' इत्यन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अमतिम् । मन्तव्या मतिः ऐश्वर्यम् । न मतिः अमतिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ' न लोकाव्यय° ' इति षष्ठीप्रतिषेधः । अश्विना । अश्वोऽस्यास्तीति अश्वि धनम् । मत्वर्थीय इनिः ॥

**समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः ।**
**सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥ ५ ॥**

सम् । इन्द्र । राया । सम् । इषा । रभेमहि । सम् । वाजेऽभिः । पुरुऽचन्द्रैः । अभिद्युऽभिः ।
सम् । देव्या । प्रऽमत्या । वीरऽशुष्मया । गोऽअग्रया । अश्वऽवत्या । रभेमहि ॥ ५ ॥

हे इन्द्र राया धनेन वयं सं रभेमहि संगच्छेमहि । तथा इषा अन्नेन सं रभेमहि । तथा वाजेभिः बलैः सं रभेमहि । कीदृशैः वाजैः । पुरुश्चन्द्रैः पुरूणां बहूनामाह्लादकैः अभिद्युभिः अभितो दीप्यमानैः । किंच देव्या द्योतमानया प्रमत्या त्वदीयया प्रकृष्टबुद्ध्या सं रभेमहि । कीदृश्या । वीरशुष्मया । वीरं विशेषेण शत्रूणां क्षेपणसमर्थं शुष्मं बलं यस्याः सा तथोक्ता । गोअग्रया ।

स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता । ᐯअश्वावत्या अश्वैरुपेतया ॥ राया । 'ऊडिदम्०' इत्यादिना विभक्तेरुदात्तत्वम् । पुरुश्चन्द्रैः । 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुट् । श्चुत्वेन शकारः । समासस्वरः । अभिद्युभिः । अभिगता द्यौर्दीप्तिर्येषाम् । अत्र दिव्शब्दो दीप्तिं लक्षयति । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । देव्या । 'उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । प्रमत्या । 'तादौ च निति०' इति गतेः प्रकृतिस्वरत्वम् । उत्तरयोर्बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'सर्वत्र विभाषा गोः' ( पा. सू. ६. १. १२२ ) इति गोअग्रया इत्यत्र प्रकृतिभावः । अश्वावत्या । 'मन्त्रे सोमाश्वेन्द्रिय०' इति मतुपि दीर्घत्वम् ॥ ॥ १५ ॥

ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते ।
यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥ ६ ॥

ते । त्वा । मदाः । अमदन् । तानि । वृष्ण्या । ते । सोमासः । वृत्रऽहत्येषु । सत्ऽपते ।
यत् । कारवे । दश । वृत्राणि । अप्रति । बर्हिष्मते । नि । सहस्राणि । बर्हयः ॥ ६ ॥

हे ᐯसत्पते सतां पालयितरिन्द्र ᐯवृत्रहत्येषु वृत्रहननेषु निमित्तभूतेषु सत्सु ᐯते पूर्वोक्ताः ᐯमदाः मादका मरुतः ᐯत्वा त्वाम् ᐯअमदन् अमदयन् हर्षं प्रापयन् । ᐯतानि पूर्वोक्तानि ᐯवृष्ण्या वृष्णः सेचनसमर्थस्य तव संबन्धीनि चरुपुरोडाशादीनि हवींषि त्वाम् अमदन् । ᐯते ᐯसोमासः प्रसिद्धाः सोमाश्च त्वाम् अमदन् । ᐯयत् यदा ᐯकारवे स्तुतिकर्त्रे ᐯबर्हिष्मते यज्ञवते यजमानाय ᐯदश ᐯसहस्राणि अपरिमितानि ᐯवृत्राणि आवरकाण्युपद्रवजातानि ᐯअप्रति शत्रुभिरप्रतिगतस्त्वं ᐯनि ᐯबर्हयः न्यवधीः । तदानीमिति पूर्वेण संबन्धः ॥ वृष्ण्या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । बर्हयः । बर्हयतिर्हिंसाकर्मा ( नि. २. १९. ३० ) । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते । यद्वृत्तयोगादनिघातः ॥

युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा ।
नम्या यदिन्द्र सख्या परावति निबर्हयो नमुचिं नाम मायिनम् ॥ ७ ॥

युधा । युधम् । उप । घ । इत् । एषि । धृष्णुऽया । पुरा । पुरम् । सम् । इदम् । हंसि । ओजसा ।
नम्या । यत् । इन्द्र । सख्या । पराऽवति । निऽबर्हयः । नमुचिम् । नाम । मायिनम् ॥ ७ ॥

हे इन्द्र ᐯधृष्णुया शत्रूणां धर्षकस्त्वं ᐯयुधा युद्धेन संबद्धं ᐯयुधं युद्धम् ᐯउप ᐯघेदेषि उपैव गच्छसि । सर्वदा युद्धशीलो भवसीत्यर्थः । घ इति पादपूरणः । शत्रूणामसुराणां ᐯपुरा पुरेण नगरेण सह ᐯइदं पुरोवर्ति ᐯपुरं शत्रुनगरम् ᐯओजसा बलेन ᐯसं ᐯहंसि सम्यग्विनाशयसि । शत्रूणां पुराण्यभैत्सीरित्यर्थः । हे ᐯइन्द्र त्वं ᐯनम्या शत्रुषु नमनशीलेन ᐯसख्या सहायभूतेन वज्रेण ᐯपरावति दूरदेशे ᐯनमुचिं ᐯनाम अनया संज्ञया प्रसिद्धं ᐯमायिनं मायाविनमसुरं ᐯयत् यस्मात् ᐯनिबर्हयः नितरामहिंसीः । अतस्त्वमेवं स्तूयसे इत्यर्थः ॥ युधा । 'युध संप्रहारे' । संपदादिलक्षणो भावे क्विप् । 'सावेकाचः०' इति विभक्तेरुदात्तत्वम् । एषि । 'इण् गतौ' । अदादित्वात् शपो लुक् । धृष्णुया ।

'ञिधृषा प्रागल्भ्ये'। 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः। कित्त्वाद्गुणाभावः। 'सुपां सुलुक्°' इति सोः याजादेशः। 'चितः' इत्यन्तोदात्तत्वम्। पुरा। 'पॄ पालनपूरणयोः'। पूरयति राज्ञामभिमतानीति। 'क्विप् च' इति क्विप्। 'उदोष्ठ्यपूर्वस्य' इति उत्वम्। 'सावेकाचः°' इति विभक्तिरुदात्ता[1]। हंसि। हन्तेर्लटि सिपि अदादित्वात् शपो लुकि 'नश्चापदान्तस्य झलि' (पा. सू. ८. ३. २४) इति अनुस्वारः। नम्या। 'णमु प्रह्वत्वे'। औणादिक इन्प्रत्ययः। 'सुपां सुलुक्°' इति तृतीयाया ड्यादेशः। टिलोपः। सख्या। 'शेषो घ्यसखि' (पा. सू. १. ४. ७) इति घिसंज्ञाप्रतिषेधात् नाभावाभावे यणादेशः। नमुचिम्। इन्द्रेण सह युद्धं न मुञ्चतीति नमुचिः। औणादिकः किप्रत्ययः। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। नञ् न गतिर्न च कारकमिति कृदुत्तरपदप्रकृतिस्वरत्वाभावे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। मायिनम्। मायाशब्दस्य व्रीह्यादिषु पाठात् मत्वर्थीय इनिः॥

त्वं कर॑ञ्जमु॒त प॒र्णयं॑ वधी॒स्तेजि॑ष्ठयातिथि॒ग्वस्य॑ वर्त॒नी ।
त्वं श॒ता वङ्गृ॑दस्याभिन॒त्पुरो॑ऽनानु॒दः परि॑षूता ऋ॒जिश्व॑ना ॥ ८ ॥

त्वम्। कर॑ञ्जम्। उ॒त। प॒र्णय॑म्। व॒धीः॒। तेजि॑ष्ठया। अ॒ति॒थि॒ऽग्वस्य॑। व॒र्त॒नी।
त्वम्। श॒ता। वङ्गृ॑दस्य। अ॒भि॒न॒त्। पुरः॑। अ॒न॒नु॒ऽदः। परि॑ऽसूताः। ऋ॒जिश्व॑ना ॥ ८ ॥

हे इन्द्र ᐯत्वं ᐯकरञ्जं एतत्संज्ञकमसुरम् ᐯउत अपि च ᐯपर्णयम् एतन्नामानमसुरं च ᐯअतिथिग्वस्य एतत्संज्ञस्य राज्ञः प्रयोजनाय ᐯतेजिष्ठया अतिशयेन तेजस्विन्या ᐯवर्तनी वर्तन्या शत्रुप्रेरणकुशलया शक्त्या ᐯवधीः हतवानसि। तथा ᐯअननुदः। अनु पश्चात् द्यति खण्डयतीति अनुदः अनुचरः। तादृशोऽनुचररहित एक एव ᐯत्वम् ᐯऋजिश्वना एतत्संज्ञकेन राज्ञा ᐯपरिषूताः परितोऽवष्टब्धाः ᐯशता शतानि शतसंख्याकाः ᐯवङ्गृदस्य एतत्संज्ञकस्यासुरस्य ᐯपुरः पुराणि नगराणि ᐯअभिनत् बिभिदिषे॥ वधीः। हन्तेर्लुङि सिपि 'लुङि च' इति वधादेशः। तस्य अदन्तत्वात् वृद्ध्यभावः (पा. सू. ७. ३. ३५)। अत एव अनेकाच्त्वात् इट्प्रतिषेधाभावः (पा. सू. ७. २. १०)। 'इट ईटि' इति सिचो लोपः। तेजिष्ठया। तेजस्शब्दात् 'अस्मायामेधा°' इति मत्वर्थीयो विनिः। तस्मात् आतिशायनिके इष्ठनि 'विन्मतोर्लुक्' इति विनो लुक्। 'टेः' इति टिलोपः। नित्त्वादाद्युदात्तत्वम्। वर्तनी। वृत्यते प्रेर्यतेऽनयेति वर्तनी। करणे ल्युट्। टित्त्वात् ङीप् (पा. सू. ४. १. १५)। 'सुपां सुलुक्°' इति विभक्तेः पूर्वसवर्णदीर्घत्वम्। व्यत्ययेनान्तोदात्तत्वम्। अभिनत्। 'भिदिर् विदारणे'। लङि सिपि रुधादित्वात् श्नम्। 'इतश्च' इति इकारलोपः। 'हल्ङ्याब्भ्यः°' इति सकारलोपः। अननुदः। 'दो अवखण्डने'। 'आदेचः°' इति आत्वम्। 'आतश्चोपसर्गे' इति कप्रत्ययः। नास्ति अनुदः अस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। संहितायां दीर्घश्छान्दसः। परिषूताः। 'षू प्रेरणे'। कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥

1. ढ-न-विभक्तेरुदात्तत्वम्।

त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥

त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा । उपऽजग्मुषः ।
षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥९॥

हे इन्द्र ᵛश्रुतः विश्रुतः प्रख्यातः ᵛत्वं ᵛद्विर्दश विंशतिसंख्याकान् ᵛअबन्धुना बन्धुरहितेन सहायरहितेन ᵛसुश्रवसा एतत्संज्ञकेन राज्ञा युद्धार्थम् ᵛउपजग्मुषः उपगतवतः ᵛएतान् एवंविधान् ᵛजनराज्ञः जनपदानामधिपतीन् । षष्टिमित्यादिना तेषां राज्ञामनुचरसंख्योच्यते । ᵛषष्टिं ᵛसहस्रा सहस्राणां षष्टिं ᵛनवतिं ᵛनव नवसंख्योत्तरां नवतिम् । तान् राज्ञ ईदृक्संख्याकाननुचरांश्च ᵛरथ्या रथसंबन्धिना ᵛदुष्पदा दुष्प्रपदनेन । शत्रुभिः प्राप्तुमशक्येनेत्यर्थः । ईदृशेन ᵛचक्रेण ᵛनि ᵛअवृणक् न्यवर्जयः । त्वां स्तुवतः सुश्रवसो जयार्थं त्वमागत्य तदीयान् शत्रूनजैषीरित्यर्थः ॥ जनराज्ञः । समासान्तविधेरनित्यत्वात् ( परिभा. ८४ ) टच्प्रत्ययाभावः ( पा. सू. ५. ४. ९१ ) । राजन्शब्दो 'राजृ दीप्तौ' इत्यस्मात् कनिन्प्रत्ययान्त आद्युदात्तः । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । अबन्धुना । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुश्रवसा । शोभनं श्रवोऽन्नं यस्य । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । उपजग्मुषः । गमेर्लिटः क्वसुः । शसि भसंज्ञायां 'वसोः संप्रसारणम्' इति संप्रसारणम् । परपूर्वत्वम् । 'गमहन°' इत्यादिना उपधालोपः । 'शासिवसिघसीनां च' इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन क्वसोरेव स्वरः शिष्यते । रथ्या । रथस्येदं रथ्यम् । 'रथाद्यत्' ( पा. सू. ४. ३. १२१ ) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । 'सुपां सुलुक्°' इति विभक्तेः आकारः । दुष्पदा । 'पद गतौ' । 'ईषद्दुःसुषु°' इति खल् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । पूर्ववत् विभक्तेः आकारः । अवृणक् । 'वृजी वर्जने' । रौधादिकः । लङि मध्यमैकवचने 'हल्ङ्याब्भ्यः' इति सिपो लोपः । 'चोः कुः' इति कुत्वम् ॥

त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ॥ १० ॥

त्वम् । आविथ । सुऽश्रवसम् । तव । ऊतिऽभिः । तव । त्रामऽभिः । इन्द्र । तूर्वयाणम् ।
त्वम् । अस्मै । कुत्सम् । अतिथिऽग्वम् । आयुम् । महे । राज्ञे । यूने । अरन्धनायः ॥१०॥

हे ᵛइन्द्र ᵛत्वं ᵛतवोतिभिः त्वदीयैः पालनैः ᵛसुश्रवसं पूर्वोक्तं राजानम् ᵛआविथ ररक्षिथ । तथा ᵛतूर्वयाणम् एतन्नामानं राजानं ᵛतव ᵛत्रामभिः त्वदीयैस्त्रायकैः पालकैर्बलैः आविथेति शेषः । किंच ᵛत्वं ᵛमहे महते ᵛयूने तरुणाय ᵛअस्मै सुश्रवसे ᵛराज्ञे कुत्सादीन् त्रीन् राज्ञः ᵛअरन्धनायः वशमनयः । 'रध्यतिर्वशगमने' ( निरु. ६. ३२ ) इति यास्कः ॥ त्रामभिः । 'त्रैङ् पालने' । 'आदेचः°' इति आत्वम् । 'आतो मनिन्°' इति मनिन् । नित्त्वादाद्युदात्तत्वम् । अरन्धनायः । रन्धनं वशीकरणं करोति रन्धनयति । 'तत्करोति°' ( पा. सू. ३. १. २६. ५ ) इति णिच् । 'इष्ठवण्णौ प्रातिपदिकस्य' ( पा, सू. ६. ४. १५५. १ ) इति इष्ठवद्भावात् टिलोपः । लङि सिपि दीर्घश्छान्दसः ॥

य उदृचीन्द्र देवगोपाः सखायस्ते शिवतमा असाम ।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ११ ॥

ये । उत्ऽऋचि । इन्द्र । देवऽगोपाः । सखायः । ते । शिवऽतमाः । असाम ।
त्वाम् । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ११ ॥

हे इन्द्र ये वयम् उदृचि उदर्के यज्ञसमाप्तौ वर्तमानाः देवगोपाः देवैः पालिताः ते तव सखायः सखिवदत्यन्तं प्रिया अत एव शिवतमा असाम अतिशयेन कल्याणा अभूम, ते वयं यज्ञसमाप्त्युत्तरकालमपि त्वां स्तोषाम स्तवाम । अस्माभिः स्तुतेन त्वया सुवीराः शोभनपुत्रवन्तः सन्तः द्राघीयः अतिशयेन दीर्घम् आयुः जीवनं प्रतरं प्रकृष्टतरं यथा भवति तथा दधानाः धारयन्तो भूयास्म ॥ देवगोपाः । देवा गोपा येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । असाम । ' अस भुवि '। लुङर्थे लोटि ' आडुत्तमस्य पिच्च ' इति पिद्वद्भावात् ' पिच्च ङिन्न ' इति ङित्त्वाभावे ' श्नसोरल्लोपः ' इति अकारलोपाभावः । पित्त्वादेव तिङोऽनुदात्तत्वे धातुस्वरः शिष्यते । स्तोषाम । स्तौतेर्लोटि ' सिब्बहुलं लेटि ' इति बहुलग्रहणात् लोट्यपि सिप् । तस्य पित्त्वात् गुणः । सुवीराः । ' वीरवीर्यौ च ' इति उत्तरपदाद्युदात्तत्वम् । द्राघीयः । दीर्घशब्दात् ईयसुनि ' प्रियस्थिर॰ ' ( पा. सू. ६. ४. १५७ ) इत्यादिना द्राघादेशः । नित्त्वादाद्युदात्तत्वम् । प्रतरम् । प्रशब्दात् तरपि ' अमु च च्छन्दसि ' ( पा. सू. ५. ४. १२ ) इति अद्रव्यप्रकर्षे अमुप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तत्वम् । दधानाः । दधातेः शानचि ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥    ॥ १६ ॥

' मा नः ' इति एकादशर्चं चतुर्थं सूक्तम् । षष्ठ्यष्टमीनवम्येकादश्यस्त्रिष्टुभः । शिष्टाः सप्त जगत्यः । सव्य ऋषिः । इन्द्रो देवता । तथा चानुक्रान्तम्–' मा नोऽन्त्या त्रिष्टुप् षष्ठ्यष्टमी नवमी च ' इति । अतिरात्रे प्रथमे पर्याये अच्छावाकशस्त्रे इदं सूक्तम् । तथा च सूत्रितम्–' मा नो अस्मिन्मघवन्निन्द्र पिब तुभ्यं सुतो मदायेति याज्या ' ( आश्व. श्रौ. ६. ४ ) इति ॥

मा नो अस्मिन्मघवन्पृत्स्वंहसि नहि ते अन्तः शवसः परीणशे ।
अक्रन्दयो नद्यो३ रोरुवद्वना कथा न क्षोणीर्भियसा समारत ॥ १ ॥

मा । नः । अस्मिन् । मघऽवन् । पृत्ऽसु । अंहसि । नहि । ते । अन्तः । शवसः । परिऽनशे ।
अक्रन्दयः । नद्यः । रोरुवत् । वना । कथा । न । क्षोणीः । भियसा । सम् । आरत ॥ १ ॥

हे मघवन् धनवन्निन्द्र अस्मिन् परिदृश्यमाने अंहसि पापे पृत्सु पृतनासु पापफलभूतेषु संग्रामेषु च नः अस्मान् मा प्रक्षैप्सीरिति शेषः । यस्मात् ते तव शवसः बलस्य अन्तः अवसानं परीणशे परितो व्याप्तुं नहि शक्यते । सर्वोऽपि जनस्त्वदीयं बलमतिक्रमितुं न शक्नोतीत्यर्थः । तस्मात् त्वमन्तरिक्षे वर्तमानः रोरुवत् अत्यर्थं शब्दं कुर्वन् नद्यः नदीः वना तत्संबन्धीन्युदकानि च अक्रन्दयः शब्दयसि । क्षोणीः क्षोण्यः । क्षोणीति पृथिवीनाम । तदुपलक्षितास्त्रयो लोकाः भियसा त्वद्भयेन कथा कथं न समारत न संगच्छन्ते । त्वदीयं बलमवलोक्य त्रयोऽपि लोका बिभ्यतीति

भावः ॥ पृत्सु । 'पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' (पा. सू. ६. १. ६३. १) इति पृतनाशब्दस्य पृद्भावः । परीणशे । नशतिर्व्याप्तिकर्मा । 'कृत्यार्थे तवैकेन्°' इति केन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । नद्यः । द्वितीयार्थे प्रथमा । रोरुवत् । 'रु शब्दे' । यङ्लुगन्तात् लटः शतृ । 'अदादिवच्च' इति वचनात् शपो लुक् । शतुर्ङित्त्वात् गुणाभावे उवङादेशः । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । कथा । 'था हेतौ च च्छन्दसि' इति किंशब्दात् प्रकारवचने थाप्रत्ययः । तस्य विभक्तिसंज्ञायां 'किमः कः' (पा. सू. ७. २. १०३) इति कादेशः । आरत । 'ऋ गतौ' । 'समो गम्यृच्छि°' इत्यात्मनेपदम् । छान्दसे वर्तमाने लङि अदादित्वात् शपो लुक् । झस्य अदादेशः । आडागमो वृद्धिश्च ॥

अर्चा शक्राय शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभि ष्टुहि ।
यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृञ्जते ॥ २ ॥

अर्च । शक्राय । शाकिने । शचीऽवते । शृण्वन्तम् । इन्द्रम् । महयन् । अभि । स्तुहि ।
यः । धृष्णुना । शवसा । रोदसी इति । उभे इति । वृषा । वृषऽत्वा । वृषभः । निऽऋञ्जते ॥२॥

हे अध्वर्यो शाकिने शक्तियुक्ताय शचीवते प्रज्ञावते शक्राय इन्द्राय अर्च एवंविधमिन्द्रं पूजय । किंच[1] स्तुतीः शृण्वन्तं समीचीनेयं स्तुतिरिति जानन्तं तम् इन्द्रं महयन् पूजयन् अभि ष्टुहि आभिमुख्येन तस्य स्तोत्रं कुरु । यः इन्द्रः धृष्णुना शत्रूणां धर्षकेण शवसा बलेन उभे रोदसी द्यावापृथिव्यौ न्यृञ्जते नितरां प्रसाधयति । 'ऋञ्जतिः प्रसाधनकर्मा' (निरु. ६. २१) इति यास्कः । स इन्द्रः वृषा सेचनसमर्थः वृषत्वा वृषत्वेनानेनैव सेचनसामर्थ्येन वृषभः वर्षिता कामानां यद्वा वृष्ट्युदकानाम् ॥ अर्च । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । शाकिने । शक्तिः शाकः । 'शक्लृ शक्तौ' । भावे घञ् । मत्वर्थीय इनिः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थी । अभि ष्टुहि । स्तौतेः अदादित्वात् शपो लुक् । 'उपसर्गात्सुनोति°' इति षत्वम् । 'ष्टुना ष्टुः' इति ष्टुत्वम् । वृषत्वा । 'सुपां सुलुक्°' इति विभक्तेः आकारः । न्यृञ्जते । 'ऋजि भृजी भर्जने' । इदित्त्वात् नुम् । शपि प्राप्ते व्यत्ययेन शः ॥

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥ ३ ॥

अर्च । दिवे । बृहते । शूष्यम् । वचः । स्वऽक्षत्रम् । यस्य । धृषतः । धृषत् । मनः ।
बृहत्ऽश्रवाः । असुरः । बर्हणा । कृतः । पुरः । हरिऽभ्याम् । वृषभः । रथः । हि । सः ॥३॥

हे स्तोतः दिवे दीप्ताय बृहते महते इन्द्राय शूष्यम् । शूषम् इति सुखनाम । तत्र साधु शूष्यम् । तादृशं स्तुतिलक्षणं वचः अर्च उच्चारय । यस्य इन्द्रस्य धृषतः शत्रून् धर्षयतः स्वक्षत्रं स्वभूत-

1. च-छ-ण-न-फ–कीदृशम् ।

बलवत् ᵛमनः ᵛधृषत् धृष्टं भवति । ᵛहि ᵛसः स हि स खल्विन्द्रः ᵛबृहच्छ्रवाः प्रभूतयशाः ᵛअसुरः शत्रूणां निरसिता । यद्वा । असुः प्राणो बलं वा । तद्वान् । रो मत्वर्थीयः । अथवा । असवः प्राणाः तेन च आपो लक्ष्यन्ते, 'प्राणा वा आपः' (तै. ब्रा. ३. २. ५. २) इति श्रुतेः । तान् राति ददातीति असुरः । ᵛबर्हणा शत्रूणां निबर्हयिता ᵛहरिभ्याम् अश्वाभ्यां ᵛपुरः ᵛकृतः पूजितः ᵛवृषभः कामानां वर्षिता ᵛरथः रंहणशीलः ॥ शूष्यम् । 'तत्र साधुः' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितम्' इति स्वरितत्वम् । धृषतः । 'ञिधृषा प्रागल्भ्ये' । व्यत्ययेन शः । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । बृहच्छ्रवाः । बृहत् श्रवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । असुरः । 'असु क्षेपणे' । 'असेरुरन्' (उ. सू. १. ४२) इति उरन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । बर्हणा । 'सुपां सुलुक्°' इति विभक्तेः आकारः । पुरः । 'पूर्वाधर°' इत्यादिना असिप्रत्ययान्तः अन्तोदात्तः ॥

त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शम्बरं भिनत् ।
यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥ ४ ॥

त्वम् । दिवः । बृहतः । सानु । कोपयः । अव । त्मना । धृषता । शम्बरम् । भिनत् ।
यत् । मायिनः । व्रन्दिनः । मन्दिना । धृषत् । शिताम् । गभस्तिम् । अशनिम् । पृतन्यसि ॥४॥

हे इन्द्र ᵛत्वं ᵛबृहतः महतः ᵛदिवः द्युलोकस्य ᵛसानु समुच्छ्रितमुपरिप्रदेशं ᵛकोपयः अकम्पयः । ᵛधृषता शत्रूणां धर्षयित्रा ᵛत्मना आत्मना स्वयमेव ᵛशम्बरम् एतत्संज्ञमसुरम् ᵛअवाभिनत् अवधीः । ᵛयत् यदा ᵛव्रन्दिनः शत्रून् जेतुं मृदुभावं प्राप्तान् । यद्वा । वृन्दं समूहः असुरसमूहवतः । ᵛमायिनः मायाविनोऽसुरान् ᵛमन्दिना हृष्टेन ᵛधृषत् ᵛधृषता प्रागल्भ्यं प्राप्नुवता मनसा युक्तस्त्वं ᵛशितां तीक्ष्णीकृतां ᵛगभस्तिं हस्तेन गृहीताम् । यद्वा । गभस्तिः इति रश्मिनाम । तद्वतीम् ᵛअशनिं वज्रं ᵛपृतन्यसि तानसुरान् जेतुं पृतनारूपेणेच्छसि । तान्प्रति प्रेरयसीत्यर्थः । तदानीं बृहतो दिवः सानु कोपयः इति पूर्वेणान्वयः ॥ कोपयः । कुप कोपे । ण्यन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । त्मना । 'मन्त्रेष्वाङ्यादेरात्मनः' इति आकारलोपः । धृषत् । 'सुपां सुलुक्°' इति तृतीयाया लुक् । शिताम् । 'शो तनूकरणे' । निष्ठायां 'शाच्छोरन्यतरस्याम्' (पा. सू. ७. ४. ४१) इति इकारादेशः । पृतन्यसि । पृतनाशब्दात् 'सुप आत्मनः क्यच्' । 'कव्यध्वरपृतनस्य°' इति अन्तलोपः । प्रत्ययस्वरः ॥

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ।
प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥ ५ ॥

नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रन्दिनः । रोरुवत् । वना ।
प्राचीनेन । मनसा । बर्हणाऽवता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥ ५ ॥

हे इन्द्र त्वं ᵛरोरुवत् मेघैरत्यर्थं शब्दयन् ᵛश्वसनस्य अन्तरिक्षे श्वसितीति श्वसनो वायुः । तस्य ᵛव्रन्दिनः स्वकिरणैराम्रफलादीन् मृदुभावं प्रापयतः ᵛशुष्णस्य ᵛचित् रसानां शोषयितुरादित्यस्यापि

vमूर्धनि उपरिप्रदेशे vवना वनान्युदकानि vयत् यस्मात् vनि vवृणक्षि आवर्जयसि । प्रापयसीत्यर्थः। वायुना सूर्यकिरणैश्च वृष्टा आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते । तदेवावस्थापनमिन्द्रः[1] करोतीत्युपचर्यते। vप्राचीनेन प्रकर्षेण गन्त्रा । अपराङ्मुखेनेत्यर्थः । vबर्हणावता । निबर्हयतीति वधकर्मसु पाठात् बर्हणा शत्रूणां हिंसा तद्वता । एवंभूतेन vमनसा युक्तस्त्वं vयत् यस्मात् vअद्या vचित् अद्यापि vकृणवः घर्मकाले सूर्यस्योपरि भौमान् रसानवस्थापयसि वर्षासु च वर्षयसीति[2]। यस्मादेतत्[3] कुरुषे तस्मात् कारणात् vत्वा त्वां vपरि उपरि vकः वर्तते न कोऽपीत्यर्थः । अतस्त्वमेव सर्वाधिक इति भावः ॥ वृणक्षि। ‘ वृजी वर्जने ’। रौधादिकः । सिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । प्राचीनेन । प्रपूर्वात् अञ्चतेः ‘ ऋत्विक्° ’ इत्यादिना क्विन् । ‘ अनिदिताम्° ’ इति नलोपः । ‘ विभाषाञ्चेरदिक्स्त्रियाम् ’ इति स्वार्थे खः । खस्य ईनादेशः । ‘ अचः ’ इति अकारलोपे ‘ चौ ’ इति दीर्घत्वम् । खप्रत्ययस्य सतिशिष्टत्वात् तदादेशस्य उपदेशिवद्भावेन ईकार उदात्तः । अद्या चित् । ‘ निपातस्य च ’ इति दीर्घत्वम् । कृणवः । ‘ कृवि हिंसाकरणयोश्च ’ । इदित्त्वात् नुम् । लेटि सिपि अडागमः। ‘ धिन्विकृण्व्योर च ’ इति उप्रत्ययः, वकारस्य अकारादेशश्च । तस्य अतो लोपे सति स्थानिवद्भावात् लघूपधगुणाभावः । गुणावादेशौ । आगमानुदात्तत्वे विकरणस्वरः । अत्र[4] निरुक्तं–‘ क्रन्दी क्रन्दतेर्मृदूभावकर्मणः । निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितृ रोरूयमाणो वनानीति वा धनानीति वा ’ ( निरु. ५.।१५–१६ ) इति। धनानीति पक्षे मेघस्य धनानीति व्याख्येयम् ॥ ॥ १७ ॥

त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो ।

त्वं रथमेतशं कृत्व्ये धने त्वं पुरो नवतिं दम्भयो नव ॥ ६ ॥

त्वम् । आविथ । नर्यम् । तुर्वशम् । यदुम् । त्वम् । तुर्वीतिम् । वय्यम् । शतक्रतो इति शतऽक्रतो ।

त्वम् । रथम् । एतशम् । कृत्व्ये । धने । त्वम् । पुरः । नवतिम् । दम्भयः । नव ॥ ६ ॥

हे इन्द्र vत्वं नर्यादीन् त्रीन् राज्ञः vआविथ ररक्षिथ । तथा हे vशतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वा vत्वं vवय्यं वय्यकुलजं तुर्वीतिनामानं[5] राजानम् आविथ इत्येव । अपि च vत्वं vरथं रंहणस्वभावम्[6] एतत्संज्ञमृषिम् vएतशम् एतत्संज्ञकं[6] vधने धननिमित्ते संग्रामे vकृत्व्ये कर्तव्ये सति आविथेति शेषः । यद्वा पूर्वोक्तानां राज्ञां रथम् । एतशः इति अश्वनाम । एतशम् अश्वं च ररक्षिथेति योज्यम् । तथा vत्वं शम्बरस्य vनवतिं vनव नवोत्तरनवतिसंख्याकाः vपुरः पुराणि vदम्भयः व्यनीनशः ॥ एतशम् । एति गच्छतीति एतशः । ‘ इण् गतौ ’ । ‘ इणस्तशन्तशसुनौ ’ (उ. सू. ३. ४२९) इति तशन्प्रत्ययः । गुणः । कृत्व्ये । कर्तव्ये इत्यस्य शब्दस्य वर्णविकारः पृषोदरादित्वात् ॥

---

१. च–तदवस्थापनमिन्द्रः; न–तादृगवस्थापनमिन्द्रः; स–तदेव स्थापनमिन्द्रः । २. ढ-न-स–वर्षसीति । ३. ढ–यदेतत् । ४. श–क्रन्दिनः । अत्र । ५. त-थ-द-ध-स–तुर्वीतिं तुर्वीतिनामानम् । ६. च-छ-फ–रंहणस्वभावम् एतशम् एतत्संज्ञमृषिम् ।

स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।
उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ॥ ७ ॥

सः । घ । राजा । सत्ऽपतिः । शूशुवत् । जनः । रातऽहव्यः । प्रति । यः । शासम् । इन्वति ।
उक्था । वा । यः । अभिऽगृणाति । राधसा । दानुः । अस्मै । उपरा । पिन्वते । दिवः ॥७॥

स घ स खलु जनः जातः राजा राजमानः सत्पतिः सतां पालयिता यजमानः शूशुवत् आत्मानं वर्धयति । यः इन्द्रं प्रति रातहव्यः दत्तहविष्कः सन् शासम् इन्द्रकर्तृकमनुशासनं यद्वा तस्य स्तुतिम् इन्वति व्याप्नोति । उक्था वा उक्थानि शस्त्राणि वा यः स्तोता राधसा हविर्लक्षणेनान्नेन सह अभिगृणाति तस्याभिमुखीकरणाय शंसति अस्मै स्तोत्रे दानुः अभिमतफलप्रदातेन्द्रः उपरा उपरान् मेघान् । उपरः इति मेघनाम । स च यास्केनैवं निरुक्तः–‘ उपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा ’ ( निरु. २. २१ ) इति । तान् मेघान् दिवः सकाशात् पिन्वते सेचयति दोग्धीति यावत् ॥ घ । ‘ ऋचि तुनुघ° ’ इत्यादिना दीर्घः । सत्पतिः । सतां पतिः सत्पतिः । ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरत्वम् । शूशुवत् । ‘ टुओश्वि गतिवृद्ध्योः ’ । ण्यन्तात् वर्तमाने लुङि च्लेः चङादेशे ‘ संप्रसारणं संप्रसारणाश्रयं च बलीयः ’ ( पा. म. ६. १. १७. २ ) इति अन्तरङ्गमपि वृद्ध्यादिकं बाधित्वा ‘णौ च संश्चङोः’ ( पा. सू. ६. १. ३१ ) इति संप्रसारणम् । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावे द्विर्वचनादि । उवङादेशः । रातहव्यः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शासम् । ‘ शासु अनुशिष्टौ ’ इत्यस्मात् भावे घञि ‘ कर्षात्वतः° ’ इत्यन्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगण इत्युक्तम् । यद्वा । ‘ शंसु स्तुतौ ’ इत्यस्मात् घञि व्यत्ययेन नलोपः । इन्वति । ‘ इवि व्याप्तौ ’ । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । अभिगृणाति । ‘ गॄ शब्दे ’ । क्रैयादिकः । ‘ प्वादीनां ह्रस्वः ’ इति ह्रस्वत्वम् । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । पूर्ववत् निघाताभावः । उपरा । ‘सुपां सुलुक्° ’ इति शसः पूर्वसवर्णदीर्घत्वम् । पिन्वते । ‘ पिवि मिवि णिवि सेचने ’ । व्यत्ययेन आत्मनेपदम् ॥

असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे ।
ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च ॥ ८ ॥

असमम् । क्षत्रम् । असमा । मनीषा । प्र । सोमऽपाः । अपसा । सन्तु । नेमे ।
ये । ते । इन्द्र । ददुषः । वर्धयन्ति । महि । क्षत्रम् । स्थविरम् । वृष्ण्यम् । च ॥ ८ ॥

इन्द्रस्य क्षत्रं बलम् असमं न केनचित् समम् । सर्वाधिकमित्यर्थः । तथा मनीषा बुद्धिश्च असमा न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । नेमे इति सर्वनामशब्दः एतच्छब्दसमानार्थः । नेमे एते सोमपाः सोमस्य पातारो यजमानाः अपसा कर्मणा प्र सन्तु प्रवृद्धा भवन्तु । हे इन्द्र ते तव ददुषः हविर्दत्तवन्तः ये त्वदीयं महि महत् क्षत्रं बलं स्थविरं स्थूलं प्रवृद्धं वृष्ण्यं वृषत्वं पुंस्त्वं च वर्धयन्ति प्रवृद्धं कुर्वन्ति । यद्वा । ददुषो यजमानेभ्यो यागफलं दत्तवतः

तवेति योजनीयम् ॥ नेमे । सर्वनामत्वात् जसः शीभावे (पा. सू. ७. १. १७) गुणः । 'त्वसमसिमनेमेत्यनुच्चानि' (फि. सू. ७८) इति सर्वानुदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । ददुषः । ददातेर्लिटः क्वसुः । जसो व्यत्ययेन शसादेशः । 'संप्रसारणं संप्रसारणाश्रयं च बलीयः' इति इडागमात् पूर्वमेव संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । प्रत्ययस्वरः । मंहि । महेरौणादिकः इन्प्रत्ययः । स्थविरम् । 'अजिरशिशिर०' (उ. सू. १. ५३) इत्यादिना तिष्ठतेः किरच्प्रत्ययान्तो निपातितः ॥

तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः ।
व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व ॥ ९ ॥

तुभ्य । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इन्द्रऽपानाः ।
वि । अश्नुहि । तर्पय । कामम् । एषाम् । अथ । मनः । वसुऽदेयाय । कृष्व ॥ ९ ॥

हे इन्द्र तुभ्येत् तुभ्यमेव चमसाः । चम्यन्ते भक्ष्यन्ते इति चमसाः सोमाः । एते सोमाः त्वदर्थं संपादिताः । कीदृशा इत्याह । बहुलाः प्रभूताः अद्रिदुग्धाः अद्रिभिर्ग्रावभिरभिषुताः चमूषदः चमूषु चमसेष्ववस्थिताः इन्द्रपानाः इन्द्रस्य पानेन सुखकराः । अतस्त्वं तान्[1] व्यश्नुहि व्याप्नुहि । व्याप्य च एषां त्वदीयानामिन्द्रियाणां कामम् अभिलाषं तैः तर्पय पूरयेति यावत् । अथ अनन्तरं वसुदेयाय अस्मभ्यमभिमतधनप्रदानाय त्वदीयं मनः कृष्व कुरुष्व ॥ तुभ्य । छान्दसो मलोपः । अद्रिदुग्धाः । दुहेः कर्मणि निष्ठा । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । चमूषदः । 'चमु अदने' । चमन्त्यनेनेति चमूः । 'कृषिचमितनि०' (उ. सू. १. ८१) इत्यादिना औणादिकः ऊप्रत्ययः । चमूषु सीदन्तीति चमूषदः ।'सत्सूद्विष०' इत्यादिना क्विप् । 'पूर्वपदात्' (पा. सू. ८. ३. १०६) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्रपानाः । 'कर्मणि च येन संस्पर्शात्०' (पा. सू. ३. ३. ११६) इति पिबतेः कर्मणि ल्युट् । अश्नुहि । व्यत्ययेन परस्मैपदम् । वसुदेयाय । 'डुदाञ् दाने' । अस्मात् 'अचो यत्' इति भावे यत् । 'ईद्यति' (पा. सू. ६. ४. ६५) इति ईकारादेशः । गुणः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । कृष्व । 'डुकृञ् करणे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः ।
अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥ १० ॥

अपाम् । अतिष्ठत् । धरुणऽह्वरम् । तमः । अन्तः । वृत्रस्य । जठरेषु । पर्वतः ।
अभि । ईम् । इन्द्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥ १० ॥

---

1. ढ-स-तान् सोमान् ।

ᵛअपां वृष्ट्युदकानां ᵛधरुणह्वरम् । धरुणशब्दो धारावचनः । धारानिरोधकं ᵛतमः अन्धकारम् ᵛअतिष्ठत् । अयमेवार्थः स्पष्टीक्रियते । ᵛवृत्रस्य लोकत्रयावरितुरसुरस्य ᵛजठरेषु उदरप्रदेशेषु ᵛअन्तः मध्ये ᵛपर्वतः पर्ववान् मेघोऽभूत् । अतस्तमोरूपेण वृत्रेण मेघस्यावृतत्वात् वृष्ट्युदकमप्यावृतमित्युच्यते । ᵛईम् इमाः पूर्वोक्ताः ᵛनद्यः नदीः अपः । नदनात् नद्यः इति व्युत्पत्त्या नदीशब्देन आप उच्यन्ते । ᵛवव्रिणा आवरकेण वृत्रेण ᵛहिताः पिहिताः[1] ᵛविश्वाः व्यापिनीः ᵛअनुष्ठाः अनुक्रमेण तिष्ठन्तीः एवंविधा अपः ᵛइन्द्रः ᵛप्रवणेषु निम्नेषु भूप्रदेशेषु ᵛअभि ᵛजिघ्नते अभिगमयति ॥ वव्रिणा । 'वृञ् वरणे' इत्यस्मात् 'आदृगमहनजनः॰' इति किप्रत्ययः । लिड्वद्भावात् द्विर्भावादि । यणादेशः । प्रत्ययस्वरः । अनुष्ठाः । 'आतश्चोपसर्गे' इति तिष्ठतेः कप्रत्ययः । 'उपसर्गात्सुनोति॰' इति षत्वम् । जिघ्नते । हन्तेर्गत्यर्थात् व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । 'अर्तिपिपर्त्योश्च, बहुलं छन्दसि' ( पा. सू. ७. ४. ७७–७८ ) इति अभ्यासस्य इत्वम् ॥

स शेवृ॑धमधि॑ धा द्यु॒म्नम॒स्मे महि॑ क्ष॒त्रं ज॑ना॒षाळि॑न्द्र॒ तव्य॑म् ।

रक्षा॑ च नो म॒घोनः॑ पा॒हि सू॒रीन्रा॒ये च॑ नः स्वप॒त्या इ॒षे धाः॑ ॥ ११ ॥

सः । शेऽवृ॑धम् । अधि॑ । धाः॒ । द्यु॒म्नम् । अ॒स्मे इति॑ । महि॑ । क्ष॒त्रम् । ज॒ना॒षाट् । इ॒न्द्र॒ । तव्य॑म् ।

रक्ष॑ । च॒ । नः॒ । म॒घोनः॑ । पा॒हि । सू॒रीन् । रा॒ये । च॒ । नः॒ । सु॒ऽअ॒प॒त्यै । इ॒षे । धाः॒ ॥ ११ ॥

हे ᵛइन्द्र ᵛसः त्वम् ᵛअस्मे अस्मासु ᵛद्युम्नं यशः ᵛअधि ᵛधाः अधिनिधेहि । कीदृशमित्याह । ᵛशेवृधम् । शं शमनम् । रोगाणां शमने सति यत् वर्धते तादृशम् । तथा ᵛमहि महत् ᵛजनाषाट् शत्रुजनानामभिभवितृ ᵛतव्यं प्रवृद्धं ᵛक्षत्रं बलं च अधि धा इति शेषः । किंच हे इन्द्र ᵛनः अस्मान् ᵛमघोनः धनवतः कृत्वा ᵛरक्ष पालय । ᵛसूरीन् विदुषोऽन्यानपि ᵛपाहि पालय । तथा ᵛराये धनाय ᵛच ᵛस्वपत्यै शोभनपुत्रयुक्ताय[2] ᵛइषे अन्नाय ᵛच ᵛनः अस्मान् ᵛधाः धेहि स्थापय ॥ धाः । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङि 'गातिस्था॰' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । अस्मे । 'सुपां सुलुक्॰' इति अस्मच्छब्दात् सप्तम्याः शेआदेशः । जनाषाट् । जनान् सहते इति जनाषाट् । 'छन्दसि सहः' ( पा. सू. ३. २. ६३ ) इति ण्विः । 'अत उपधायाः' इति वृद्धिः । 'सहेः साडः सः' ( पा. सू. ८. ३. ५६) इति षत्वम् । 'अन्येषामपि दृश्यते' इति पूर्वपददीर्घः । तव्यम् । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । 'अचो यत्' इति यत् । गुणे 'धातोस्तन्निमित्तस्यैव' ( पा. सू. ६. १. ८० ) इति अवादेशः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । रक्ष । 'रक्ष पालने' । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । मघोनः । 'श्वयुवमघोनामतद्धिते' इति शसि संप्रसारणम् । पाहि । अदादित्वात् शपो लुक् । हेः अपित्त्वात् तस्यैव स्वरः शिष्यते । मघोनः इत्यस्य वाक्यान्तरगतत्वात् निघाताभावः । स्वपत्यै । शोभनान्यपत्यानि यस्याः सा तथोक्ता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । 'जसादिषु च्छन्दसि वावचनम्' इति 'याडापः' ( पा. सू. ७. ३. ११३ ) इति याडागमाभावे 'वृद्धिरेचि' ( पा. सू. ६. १. ८८ ) इति वृद्धिः ॥        ॥ १८ ॥

---

१. ढ–प्रहिताः । २. ढ–शोभनपुत्राय ।

'दिवश्चिदस्य ' इति अष्टर्चं पञ्चमं सूक्तं सव्यस्यार्षमैन्द्रं जागतम्। तथा चानुक्रान्तम्–' दिवश्चिदष्टौ जागतं हि ' इति। हि इत्यभिधानात् तुह्यादिपरिभाषया उत्तरे द्वे[1] च[1] सूक्ते जागते। अतिरात्रे प्रथमे पर्याये मैत्रावरुणशस्त्रे इदं सूक्तम्। सूत्रितं च–' दिवश्चिदस्येति पर्यासः स नो नव्येभिरिति च ' ( आश्व. श्रौ. ६. ४ ) इति। विषुवति निष्केवल्येऽप्येतत्सूक्तम्। सूत्रितं च–' शंसेदेवोत्तराणि षड् दिवश्चिदस्य ' ( आश्व. श्रौ. ८. ६ ) इति। समूळ्हस्य दशरात्रस्य द्वितीये छन्दोमेऽपि निष्केवल्ये एतत्सूत्रितम्–' त्वं महाँ इन्द्र यो ह दिवश्चिदस्य त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यम् ' ( आश्व. श्रौ. ८. ७ ) इति ॥

दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति ।
भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥ १ ॥

दिवः। चित्। अस्य। वरिमा। वि। पप्रथे। इन्द्रम्। न। मह्ना। पृथिवी। चन। प्रति।
भीमः। तुविष्मान्। चर्षणिऽभ्यः। आऽतपः। शिशीते। वज्रम्। तेजसे। न। वंसगः ॥१॥

अस्य इन्द्रस्य वरिमा उरुत्वं[2] प्राभवं[3] दिवश्चित् द्युलोकादपि वि पप्रथे विस्तीर्णं बभूव। पृथिवी चन पृथिव्यपि च मह्ना महिम्ना महत्त्वेन इन्द्रं न प्रति भवति। भूमिरपीन्द्रस्य प्रतिनिधिर्न भवति। ततोऽपि स गरीयानित्यर्थः। भीमः शत्रूणां भयंकरः तुविष्मान् प्रज्ञावान् बलवान् वा चर्षणिभ्यः मनुष्येभ्यः स्तोतृभ्यस्तेषामर्थाय शत्रूणाम् आतपः आ समन्तात् तापकारी। एवंविधः स इन्द्रः वज्रं वर्जनशीलमायुधं तेजसे तैक्ष्ण्याय शिशीते तनूकरोति तीक्ष्णीकरोति। तत्र दृष्टान्तः। वंसगः न। वननीयगतिमान् वृषभो यथा स्वशृङ्गे युद्धार्थं तीक्ष्णीकरोति तद्वत् ॥ दिवः। 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम्। वरिमा। उरुशब्दात् पृथ्वादिलक्षणः इमनिच्। ' प्रियस्थिर° ' इत्यादिना उरुशब्दस्य वरादेशः। पप्रथे। ' प्रथ प्रख्याने '। मह्ना महिम्ना। वर्णलोपश्छान्दसः। यद्वा। महेरौणादिकः कनिप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः। तृतीयैकवचने ' अल्लोपोऽनः ' इति अकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। प्रति। ' प्रतिः प्रतिनिधिप्रतिदानयोः ' इति प्रतिनिधौ कर्मप्रवचनीयत्वम्। ' कर्मप्रवचनीययुक्ते° ' ( पा. सू. २. ३. ८ ) इति इन्द्रशब्दात् द्वितीया। ' प्रतिनिधिप्रतिदाने च यस्मात् ' (पा. सू. २. ३. ११) इति पञ्चमी तु छान्दसत्वात् न भवति। भीमः। ' ञिभी भये ' इत्यस्मात् ' भियः षुग्वा ' ( उ. सू. १. १४५ ) इति मक्प्रत्ययः। 'भीमो बिभ्यत्यस्मात्' ( निरु. १. २० ) इति यास्कः। आतपः। तपतीति तपः। पचाद्यच्। थाथादिना उत्तरपदान्तोदात्तत्वम्। शिशीते। ' शो तनूकरणे '। व्यत्ययेनात्मनेपदम्। ' बहुलं छन्दसि ' इति विकरणस्य श्लुः। ' बहुलं छन्दसि ' इति अभ्यासस्य इत्वम्। ' ई हल्यघोः ' इति ईत्वम्। अनजादावपि लसार्वधातुके व्यत्ययेन अभ्यस्ताद्युदात्तत्वम् ( पा. सू. ६. १. १८९ )। वंसगः। ' वन षण संभक्तौ ' इत्यस्मात् कर्मणि औणादिकः सप्रत्ययः। वंसं वननीयं गच्छतीति वंसगः। ' डोऽन्यत्रापि दृश्यते ' ( पा. म. ३. २. ४८ ) इति गमेः डप्रत्ययः। दिवोदासादित्वात् पूर्वपदाद्युदात्तत्वम् ॥

---

१. ढ–च द्वे। २. स–महत्वम्। ३. ढ-स–प्रभावम्।

सो अ॒र्ण॒वो न न॒द्यः॑ समु॒द्रियः॒ प्रति॑ गृभ्णाति॒ विश्रि॑ता॒ वरी॑मभिः ।
इन्द्रः॒ सोम॑स्य पी॒तये॑ वृषायते स॒नात्स यु॒ध्म ओज॑सा पनस्यते ॥ २ ॥

सः । अ॒र्ण॒वः । न । न॒द्यः॑ । स॒मु॒द्रियः॑ । प्रति॑ । गृ॒भ्णा॒ति॒ । विऽश्रि॑ताः । वरी॑मऽभिः ।
इन्द्रः॑ । सोम॑स्य । पी॒तये॑ । वृ॒ष॒ऽय॒ते॒ । स॒नात् । सः । यु॒ध्मः । ओज॑सा । प॒न॒स्य॒ते॒ ॥ २ ॥

ᵛसः इन्द्रः ᵛसमुद्रियः । समुद्रवन्त्यस्मादापः इति समुद्रमन्तरिक्षम् । तत्र भवः समुद्रियः । एवंभूतः सन् ᵛवरीमभिः स्वकीयैः संवरणैः यद्वा उरुत्वैः ᵛविश्रिताः व्याप्ताः ᵛनद्यः नदीः शब्दकारिणीः वृत्रेणावृता आपः ᵛअर्णवो ᵛन समुद्र इव ᵛप्रति ᵛगृभ्णाति । स्वीकृत्य ववर्षेति भावः । स च ᵛइन्द्रः ᵛसोमस्य ᵛपीतये पानाय ᵛवृषायते वृष इवाचरति । हर्षयुक्तो वर्तते इत्यर्थः । तथा ᵛसः इन्द्रः ᵛयुध्मः योद्धा ᵛसनात् चिरादेव यद्वा सनातनः ᵛओजसा बलकृतेन वृत्रवधादिरूपेण कर्मणा ᵛपनस्यते पनः स्तोत्रमिच्छति ॥ अर्णवः । 'अर्णसो लोपश्च' (का. ५. २. १०९. २) इति मत्वर्थीयो वप्रत्ययः सलोपश्च । प्रत्ययस्वरः । नद्यः । 'नद अव्यक्ते शब्दे' इत्यस्मात् कर्तरि पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । 'नदट्' (पा. सू. ३. १. १३४ ग.) इति टित्त्वेन पाठात् 'टिड्ढाणञ्०' इति ङीप् । 'यस्य०' इति लोपे उदात्तनिवृत्तिस्वरेण तस्य उदात्तत्वम् । जसि यणादेशे 'उदात्तस्वरितयोर्यणः०' इति स्वरितत्वम् । द्वितीयार्थे प्रथमा । अनया व्युत्पत्त्या नद्य इत्याप उच्यन्ते । तथा च श्रूयते–'अहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः' (तै. सं. ५. ६. १. २) इति । समुद्रियः । 'समुद्राभ्राद्घः' (पा. सू. ४. ४. ११८) इति भवार्थे घप्रत्ययः । घस्य इयादेशः । तस्योपदेशिवद्वचनात्[1] उदात्तत्वम् । गृभ्णाति । 'हृग्रहोर्भः०' इति भत्वम् । विश्रिताः । 'श्रिञ् सेवायाम्' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । वरीमभिः । 'वृञ् वरणे' इत्यस्मात् औणादिक ईमनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । यद्वा उरुशब्दात् इमनिचि दीर्घ आद्युदात्तत्वं च छान्दसत्वात् । वृषायते । 'कर्तुः क्यङ् सलोपश्च' (पा. सू. ३. १. ११) इति आचारार्थे क्यङ् । ङित्त्वात् आत्मनेपदम् । 'अकृत्सार्वधातुकयोः०' इति दीर्घः । युध्मः । 'युध संप्रहारे' इत्यस्मात् 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' इति मक् । पनस्यते । 'पन स्तुतौ' । पननं पनः तदिच्छति पनस्यति । व्यत्ययेनात्मनेपदम् ॥

त्वं तमि॑न्द्र॒ पर्व॑तं॒ न भोज॑से म॒हो नृ॒म्णस्य॒ धर्म॑णामिरज्यसि ।
प्र वी॒र्ये॑ण दे॒वताति॑ चेकिते॒ विश्व॑स्मा उ॒ग्रः कर्म॑णे पु॒रोहि॑तः ॥ ३ ॥

त्वम् । तम् । इ॒न्द्र॒ । पर्व॑तम् । न । भोज॑से । म॒हः । नृ॒म्णस्य॑ । धर्म॑णाम् । इ॒र॒ज्य॒सि॒ ।
प्र । वी॒र्ये॑ण । दे॒वता॑ । अति॑ । चे॒कि॒ते॒ । विश्व॑स्मै । उ॒ग्रः । कर्म॑णे । पु॒रःऽहि॑तः ॥ ३ ॥

हे ᵛइन्द्र ᵛत्वं ᵛभोजसे भोजनाय ᵛपर्वतं पर्ववन्तं मेघं ᵛन अकार्षीः । न हि हतो भुङ्क्ते । इन्द्रो हि वर्षणार्थं मेघं वज्रेण हन्ति । तथा ᵛमहः महतः ᵛनृम्णस्य धनस्य ᵛधर्मणां धारयितॄणां कुबेरादीनाम्

---

1. ढ–तस्योपदेशिवद्भावात्; स–तस्योपदेशवद्वचनात् ।

ᵛइरज्यसि ईशिषे । इरज्यतिरैश्वर्यकर्मा । स इन्द्रः ᵛदेवता ᵛवीर्येण ᵛअति अतिशयित इति ᵛप्र ᵛचेकिते प्रकर्षेणास्माभिर्ज्ञातो बभूव । स च ᵛउग्रः उद्गूर्ण इन्द्रः ᵛविश्वस्मै सर्वस्मै वृत्रवधादिरूपाय ᵛकर्मणे देवैः ᵛपुरोहितः पुरस्तादवस्थापितः ॥ धर्मणाम् । ‘ धृञ् धारणे[1] ’ । ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति कर्तरि मनिन् । नित्त्वादाद्युदात्तत्वम् । इरज्यसि । ‘ इरज् ईर्ष्यायाम् ’ । ऐश्वर्ये इत्येके । कण्ड्वादित्वात् यक् । वीर्येण । ‘ शूर वीर विक्रान्तौ ’ । चुरादिः । ‘ अचो यत् ’ इति यत् । णिलोपः । बहुव्रीहौ ‘ वीरवीर्यौ च ’ इत्युत्तरपदाद्युदात्तत्वविधानसामर्थ्यात् ‘ यतोऽनावः ’ इत्याद्युदात्तत्वाभावे ‘ तित्स्वरितम् ’ इति स्वरितत्वम् । तस्मिन् हि सति ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्यनेनैव सिद्धत्वात् पुनर्वीर्यग्रहणमनर्थकं स्यादित्युक्तम् । देवता । देव एव देवता । ‘ देवात्तल् ’ ( पा. सू. ५. ४. २७ ) इति स्वार्थे तल्प्रत्ययः । ‘ लिति ’ इति प्रत्ययात् पूर्वस्योदात्तत्वम् । चेकिते । ‘ कित ज्ञाने ’ । अस्मात् यङन्तात् चेकित्यतेः कर्मणि लिटि अतोलोपयलोपौ । पुरोहितः । पुरस्शब्दस्य असिप्रत्ययान्तस्य ‘ तद्धितश्चासर्वविभक्तिः ’ इति अव्ययत्वेन ‘ पुरोऽव्ययम् ’ इति गतिसंज्ञायां ‘ गतिरनन्तरः ’ इति पूर्वपदप्रकृतिस्वरत्वम् ॥

स इद्वने॑ नम॒स्युभि॑र्वचस्य॒ते चारु॒ जने॑षु प्रब्रु॒वा॒ण इ॑न्द्रि॒यम् ।
वृषा॒ छन्दु॑र्भवति हर्य॒तो वृषा॒ क्षेमे॑ण धेनां॑ म॒घवा॒ यदिन्व॑ति ॥ ४ ॥

सः । इत् । वने॑ । न॒म॒स्युऽभिः॑ । व॒च॒स्य॒ते । चारु॑ । जने॑षु । प्र॒ऽब्रु॒वा॒णः । इ॒न्द्रि॒यम् ।
वृषा॑ । छन्दुः॑ । भ॒व॒ति॒ । ह॒र्य॒तः । वृषा॑ । क्षेमे॑ण । धेना॑म् । म॒घऽवा॑ । यत् । इन्व॑ति ॥ ४ ॥

ᵛस ᵛइत् स एवेन्द्रः ᵛवने अरण्ये ᵛनमस्युभिः नमसा स्तोत्रेण पूजयितृभिर्ऋषिभिः ᵛवचस्यते वच इच्छन् क्रियते स्तूयते इत्यर्थः । यद्वा वचः स्तोत्रमात्मन इच्छति । स चेन्द्र आत्मीयेषु ᵛजनेषु ᵛइन्द्रियं स्ववीर्यं ᵛप्रब्रुवाणः प्रकटयन् ᵛचारु वर्तते । किंच सः ᵛवृषा कामानां वर्षकः ᵛहर्यतः प्रेप्सावतो यियक्षतः ᵛछन्दुः उपच्छन्दयिता ᵛभवति । यियक्षतां पुरुषाणां यागे रुचिमुत्पादयतीति भावः । ᵛवृषा हविषां वर्षयिता । हविष्प्रदातेत्यर्थः । ᵛमघवा धनवान् । एवंभूतो यजमानः ᵛक्षेमेण इन्द्रकृतेन रक्षणेन युक्तः सन् ᵛयत् यदा ᵛधेनां स्तुतिलक्षणां वाचम् ᵛइन्वति प्रेरयति । तदानीं छन्दुर्भवतीति पूर्वेणान्वयः । यद्वा । मघवा वृषा इन्द्रः क्षेमेण क्षेमकरेण मनसा धेनां यजमानैः कृतां स्तुतिं यद्यस्मात् इन्वति व्याप्नोति । तस्मादिति योज्यम् ॥ नमस्युभिः । ‘ नमोवरिवः० ’ इति पूजार्थे क्यच् । ‘ क्याच्छन्दसि ’ इति उप्रत्ययः । वचस्यते । वच इच्छति वचस्यति । तं वचस्यन्तं कुर्वन्ति मुनयो वचस्ययन्ति । वचस्ययतेः कर्मणि यकि अतोलोपयलोपौ । यद्वा । वचस्यतेर्व्यत्ययेनात्मनेपदम् । प्रब्रुवाणः । ‘ ब्रूञ् व्यक्तायां वाचि ’ । लटः शानच् । अदादित्वात् शपो लुक् । शानचो ङित्त्वात् गुणाभावे उवङ् । चित्स्वरेणान्तोदात्तः । इन्द्रियम् । इन्द्रस्य लिङ्गमिन्द्रियम् । ‘ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ’ ( पा. सू. ५. २. ९३ ) इति लिङ्गादिष्वर्थेषु इन्द्रशब्दात् घच्प्रत्ययो निपात्यते । अतः अन्तोदात्तत्वम् । इन्वति । ‘ इवि व्याप्तौ ’ । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ॥

---

१. ढ–धारणे । अस्मात् ।

स इन्मुहानि समिथानि मुज्मना कृणोति युध्म ओजसा जनेभ्यः ।
अधा चन श्रद्दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ॥ ५ ॥

सः । इत् । महानि । सम्ऽइथानि । मज्मना । कृणोति । युध्मः । ओजसा । जनेभ्यः ।
अध । चन । श्रत् । दधति । त्विषिऽमते । इन्द्राय । वज्रम् । निऽघनिघ्नते । वधम् ॥ ५ ॥

vस vइत् स एवेन्द्रः vयुध्मः योद्धा vमहानि vसमिथानि महतः संग्रामान् vमज्मना सर्वस्य शोधकेन vओजसा बलेन vकृणोति करोति । किमर्थम् । vजनेभ्यः स्तोतृजनार्थम् । यदा इन्द्रः vवधं हननसाधनं vवज्रम् आयुधं मेघेषु vनिघनिघ्नते निहन्ति vअधा vचन अनन्तरमेव vत्विषीमते दीप्तिमते vइन्द्राय सर्वे जनाः vश्रद्दधति । श्रत् इति सत्यनाम । इन्द्रो बलवानिति यदुच्यते तत्सत्यमेवेति सर्वे प्रतिपद्यन्ते ॥ महानि । महान्तीत्यस्य तकारलोपश्छान्दसः । यद्वा । मह्यन्ते पूज्यन्ते इति महानि प्रवृद्धानि । 'घञर्थे कविधानम्°' इति कः । प्रत्ययस्वरः । समिथानि । 'इण् गतौ' । संयन्ति संगच्छन्तेऽस्मिन्वीरा इति समिथानि संग्रामाः । 'समीणः' (उ. सू. ४. ५३२) इति थक्प्रत्ययः । कित्त्वाद्गुणाभावः । थाथादिना उत्तरपदान्तोदात्तत्वम् । मज्मना । 'टुमस्जो शुद्धौ' । मनिप्रत्ययः[1] । 'झलां जश् झशि' (पा. सू. ८. ४. ५३) इति सकारस्य जश्त्वं दकारः । ततश्चुत्वं जकारः । प्रत्ययस्वरः । अध । छान्दसं धत्वम् । 'निपातस्य च' इति सांहितिको दीर्घः । त्विषीमते । 'त्विष दीप्तौ' । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । मतुपः पित्त्वादनुदात्तत्वे तदेव शिष्यते । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । निघनिघ्नते । हन्तेर्व्यत्ययेनात्मनेपदं बहुवचनं च । 'बहुलं छन्दसि' इति शपः श्लुः । 'गमहन°' इत्यादिना उपधालोपः । अभ्यासस्य घत्वं निगागमश्च । '°आगनीगन्तीति च' (पा. सू. ७. ४. ६५) इति इतिचशब्दः प्रकारार्थ इत्युक्तत्वात् दाधर्त्यादौ एतद्द्रष्टव्यम् ॥     ॥ १९ ॥

स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन् ।
ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ॥ ६ ॥

सः । हि । श्रवस्युः । सदनानि । कृत्रिमा । क्ष्मया । वृधानः । ओजसा । विऽनाशयन् ।
ज्योतींषि । कृण्वन् । अवृकाणि । यज्यवे । अव । सुऽक्रतुः । सर्तवै । अपः । सृजत् ॥६॥

vश्रवस्युः अन्नं यशो वात्मन इच्छन् vकृत्रिमा कृत्रिमाणि क्रियया निर्वृत्तानि vसदनानि असुरपुराणि vओजसा बलेन vविनाशयन्[2] vक्ष्मया भूम्या समानं vवृधानः वर्धनशीलः । यद्वा । क्ष्मया इति ओजोविशेषणम् । शत्रूणामभिभवित्रा बलेनेत्यर्थः । vज्योतींषि सूर्यादीनि वृत्रेणावृतानि vअवृकाणि वृकेणावरकेण तेन रहितानि vकृण्वन् कुर्वन् vसुक्रतुः शोभनकर्मसहितः[3] एवंविधः vसः खलु इन्द्रः vयज्यवे यष्ट्रे यजमानाय तदर्थं vसर्तवै सरणाय vअपः वृष्टिलक्षणान्युदकानि vअव vसृजत् । वृष्टिं

---

१. ढ–औणादिको मनिन्प्रत्ययः; न-स–मनिन्प्रत्ययः । २. ढ-स–विनाशयन् विनाशं प्रापयन् । ३. ढ-स–शोभनकर्मा स हि ।

कृतवानित्यर्थः ॥ कृत्रिमा । ' डुकृञ् करणे ' । ' ड्वितः क्त्रिः ' ( पा. सू. ३. ३. ८८ ) इति भावे क्त्रिप्रत्ययः । ' क्त्रेर्मम्नित्यम् ' ( पा. सू. ४. ४. २० ) इति निर्वृत्तार्थे मप् । तस्य पित्त्वादनुदात्तत्वे क्त्रिप्रत्ययस्वर एव शिष्यते । ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । क्षमया । ' क्षमूष् सहने ' । क्षमते प्राणिजातकृतमुपद्रवमिति क्षमा । ' षिद्भिदादिभ्योऽङ् ' ( पा. सू. ३. ३. १०४ ) इति अङ्प्रत्ययः । ततः टाप् । व्यत्ययेन धातोः उपधालोपः । छान्दसं विभक्त्युदात्तत्वम् । यद्वा । अयं धातुरभिभवार्थः, ' षह अभिभवे ' इति सहनस्याभिभवार्थत्वात् । अस्मात् औणादिको मनिन् । व्यत्ययेन स्त्रीलिङ्गता । ' मनः ' ( पा. सू. ४. १. ११ ) इति ङीपो निषेधे ' डाबुभाभ्यामन्यतरस्याम् ' ( पा. सू. ४. १. १३ ) इति डाप् । टिलोपः । वृधानः । ताच्छीलिकः चानश् । ' बहुलं छन्दसि ' इति शपो लुक् । ' चितः ' इत्यन्तोदात्तत्वम् । अवृकाणि । ' वृञ् वरणे ' । ' सृवृभूशुषिमुषिभ्यः कित् ' ( उ. सू. ३. ३२१ ) इति कन्प्रत्ययः । बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । यज्यवे । ' यजिमनिशुन्धिदसिजनिभ्यो युः ' इति युप्रत्ययः । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । सुक्रतुः । बहुव्रीहौ ' क्रत्वादयश्च ' इत्युत्तरपदाद्युदात्तत्वम् । सर्तवै । ' सृ गतौ ' । ' कृत्यार्थे तवैकेन्° ' इति भावे तवैप्रत्ययः । गुणः । ' अन्तश्च तवै युगपत् ' ( पा. सू. ६. १. २०० ) इति आद्यन्तयोः युगपत् उदात्तत्वम् । अपः । ' ऊडिदम्° ' इति शस उदात्तत्वम् । सृजत् । लङि ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः ॥

दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।

यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥ ७ ॥

दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वाञ्चा । हरी इति । वन्दनऽश्रुत् । आ । कृधि ।

यमिष्ठासः । सारथयः । ये । इन्द्र । ते । न । त्वा । केताः । आ । दभ्नुवन्ति । भूर्णयः ॥ ७ ॥

हे सोमपावन् सोमस्य पातरिन्द्र ते त्वदीयं मनः दानाय अस्मदभिमतफलप्रदानाय अस्तु भवतु । हे वन्दनश्रुत् वन्दनानां स्तुतीनां श्रोतः हरी त्वदीयावश्वौ अर्वाञ्चा अस्मद्यज्ञाभिमुखौ आ कृधि आभिमुख्येन कुरु । हे इन्द्र ते तव स्वभूताः ये सारथयः सन्ति ते यमिष्ठासः अतिशयेन यन्तारः अश्वनियमनकुशला इत्यर्थः । यस्मादेवं तस्मात् केताः प्रातिकूल्यज्ञातारः[1] भूर्णयः स्वकीयायुधादीनां भर्तारः । यद्वा । भीताः तीक्ष्णाः शत्रवः त्वा त्वां न आ दभ्नुवन्ति न हिंसन्ति ॥ सोमपावन् । ' आतो मनिन् ' इति वनिप् । ' °असंबुद्धौ ' इति पर्युदासात् दीर्घाभावः । अर्वाञ्चा । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । वन्दनश्रुत् । ' वदि अभिवादनस्तुत्योः ' । इदित्त्वात् नुम् । भावे ल्युट् । तेषां श्रोता । ' श्रु श्रवणे ' । क्विपि तुगागमः[2] । यमिष्ठासः । यन्तृशब्दात् ' तुश्छन्दसि ' इति इष्ठन्प्रत्ययः । ' तुरिष्ठेमेयःसु ' इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । ' आज्जसेरसुक् ' इति असुक् । केताः । ' कित ज्ञाने ' । चिकेतति प्रतिकूलं जानन्तीति केताः । पचाद्यच् । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । यद्वा । प्रतिकूलतया ज्ञायन्ते इति

---

१. ह–प्रातिकूल्यस्य ज्ञातारः । २. ह-स–' तुगागमः ' इत्यस्यानन्तरं ' कृधि । करोतेर्लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' श्रुशृणुपृकृवृभ्यश्छन्दसि ' इति हेर्धिरादेशः ' इत्यधिकम् ।

केताः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । दभ्नुवन्ति । 'दम्भु दम्भे'। स्वादित्वात् श्नुः । तस्य ङित्त्वात् 'अनिदिताम्°' इति नलोपः । संयोगपूर्वत्वेन 'हुश्नुवोः°' इति यणादेशाभावे 'अचि श्नुधातु°' इत्यादिना उवङादेशः । भूर्णयः । 'भृञ् भरणे'। 'घृणिः पृश्निः' इत्यादौ अस्मात् निप्रत्ययान्तो निपात्यते । ऋत उत्वं दीर्घश्च । यद्वा । 'भॄ भये' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिनि 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । 'हलि च' इति दीर्घः । 'ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति' (पा. सू. ८. २. ४४. १) इति निष्ठावद्भावात् नत्वम् । नित्त्वादाद्युदात्तत्वम् ॥

अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥ ८ ॥

अप्रऽक्षितम् । वसु । बिभर्षि । हस्तयोः । अषाळ्हम् । सहः । तन्वि । श्रुतः । दधे ।
आऽवृतासः । अवतासः । न । कर्तृऽभिः । तनूषु । ते । क्रतवः । इन्द्र । भूरयः ॥ ८ ॥

हे इन्द्र त्वम् ᵛअप्रक्षितम् प्रक्षयरहितं ᵛवसु धनं ᵛहस्तयोः ᵛबिभर्षि स्तोतृभ्यो दातुं धारयसि । तथा ᵛश्रुतः प्रख्यातो भवान् ᵛतन्वि आत्मीये शरीरे ᵛअषाळ्हं शत्रुभिरनभिभूतं ᵛसहः बलं ᵛदधे धारयति । त्वदीयास्तनवः ᵛकर्तृभिः वृत्रादेरसुरस्य वधं कुर्वद्भिर्बलकृतैः कर्मभिः ᵛआवृतासः आवृताः । बलकृतानि सर्वाणि कर्माणि एतस्य शरीरमावृत्यावतिष्ठन्ते । तत्र दृष्टान्तः । ᵛअवतासो ᵛन । अवतः इति कूपनाम । यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणिभिराव्रियन्ते तद्वत् । यस्मादेवं तस्मात् हे ᵛइन्द्र ᵛते तव शरीरेषु[1] ᵛक्रतवः कर्माणि ᵛभूरयः बहूनि विद्यन्ते ॥ अप्रक्षितम् । 'क्षि क्षये' इत्यस्मात् भावे निष्ठा । '°अण्यदर्थे' (पा. सू. ६. ४. ६०) इति पर्युदासात् दीर्घाभावः। अत एव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावः । प्रकृष्टं क्षितं यस्य तत् प्रक्षितम् । न प्रक्षितम् अप्रक्षितम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बिभर्षि । 'डुभृञ् धारणपोषणयोः'। लटि सिपि शपः श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । अषाळ्हम् । 'षह अभिभवे' इत्यस्मात् निष्ठायां तकारादौ प्रत्यये 'तीषसह°' (पा. सू. ७. २. ४८) इति इटः विकल्पितत्वात् 'यस्य विभाषा' इति इट्प्रतिषेधः । ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इति ओत्वे प्राप्ते 'साढ्यै साढ्वा साढेति निगमे' (पा. सू. ६. ३. ११३) इति निपातनात् आत्वम्। यदुक्तं साढेति तृजन्तमेतदिति तदुपलक्षणार्थं द्रष्टव्यम् । तन्वि । 'जसादिषु च्छन्दसि वावचनम्' इति 'अच्च घेः' (पा. सू. ७. ३. ११९) इति अत्वौत्वयोरभावे यणादेशः । 'उदात्तस्वरितयोर्यणः°' इति विभक्तेः स्वरितत्वम्। 'उदात्तयणो हल्पूर्वात्' इति उदात्तत्वं तु छान्दसत्वात् न प्रवर्तते ॥ ॥२०॥

'एष प्र पूर्वीः' इति षडृचं षष्ठं सूक्तं सव्यस्यार्षमैन्द्रं जागतमित्युक्तम् । अनुक्रान्तं च-'एष प्र षट्' इति । विषुवति निष्केवल्ये एतत् सूक्तं शंसनीयम् । 'विषुवान्दिवाकीर्त्यः' इति खण्डे सूत्रितम्- 'एष प्र पूर्वीर्वृषामदः प्र मंहिष्ठाय' (आश्व. श्रौ. ८. ६) इति ॥

---

1. ढ-स-तनूषु शरीरेषु ।

एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ॥ १ ॥

एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषाम् । उत् । अयंस्त । भुर्वणिः ।
दक्षम् । महे । पाययते । हिरण्ययम् । रथम् । आऽवृत्य । हरिऽयोगम् । ऋभ्वसम् ॥ १ ॥

ᐯभुर्वणिः अत्ता ᐯएषः इन्द्रः ᐯतस्य यजमानस्य ᐯपूर्वीः प्रभूताः ᐯचम्रिषः चमूषु चमसेष्ववस्थिताः सोमलक्षणा इषः ᐯप्र ᐯअव ᐯउदयंस्त प्रकर्षेण पानार्थमुद्धरति । तत्र दृष्टान्तः । ᐯअत्यो ᐯन ᐯयोषाम् । यथाश्वो वडवां क्रीडार्थमुपयच्छति[1] । स चेन्द्रः ᐯहिरण्ययं सुवर्णमयं ᐯहरियोगं हरिभ्यां युक्तम् ᐯऋभ्वसम् उरु भासमानं ᐯरथम् ᐯआवृत्य अवस्थाप्य ᐯमहे महते वृत्रवधादिरूपाय कर्मणे ᐯदक्षं प्रवृद्धमात्मानं सोमं ᐯपाययते पानं[2] कारयति ॥ पूर्वीः । 'पॄ पालनपूरणयोः' । 'पॄभिदिव्यधि°' ( उ. सू. १. २३ ) इत्यादिना कुप्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । यणादेशः । 'हलि च' इति दीर्घत्वम् । प्रत्ययस्वरः । चम्रिषः । 'चमु अदने' इत्यस्मात् 'कृषिचमितनिधनि°' ( उ. सू. १. ८१ ) इत्यादिना ऊप्रत्ययान्तश्चमूशब्दः । तस्यां वर्तमाना इषः चम्रिषः । वकारस्य रेफश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अयंस्त । छान्दसे वर्तमाने लुङि व्यत्ययेनात्मनेपदम् । 'एकाचः°' इति इट्प्रतिषेधः । भुर्वणिः । 'भुर्वतिरत्तिकर्मा' ( निरु. ९. २३ ) इति यास्कः । धातुपाठे तु 'भर्व हिंसायाम्' इति पठ्यते । अस्मात् औणादिकः अनिप्रत्ययः । अकारस्य उकारश्छान्दसः । पाययते । 'पा पाने' । 'शाच्छासाह्वाव्यावेपां युक्' ( पा. सू. ७. ३. ३७ ) इति हेतुमति णिचि युगागमः । 'णिचश्च' ( पा. सू. १. ३. ७४ ) इत्यात्मनेपदम् । हिरण्ययम् । 'ऋत्व्यवास्त्व्य°' इत्यादिना हिरण्यशब्दात् उत्तरस्य मयटो मशब्दलोपो निपात्यते । हरियोगम् । हर्योर्योगो योजनं यस्मिन् । हरिशब्द इन्प्रत्ययान्त आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते । ऋभ्वसम् । उरुभासम् इत्यस्य पृषोदरादित्वात् ऋभ्वसादेशः ॥

तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः ।
पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ॥ २ ॥

तम् । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रम् । न । सम्ऽचरणे । सनिष्यवः ।
पतिम् । दक्षस्य । विदथस्य । नु । सहः । गिरिम् । न । वेनाः । अधि । रोह । तेजसा ॥ २ ॥

ᐯगूर्तयः स्तोतारः ᐯनेमन्निषः नमस्कारपूर्वं गच्छन्तः । यद्वा नीतहविष्काः ᐯपरीणसः परितो व्याप्नुवन्तः एवंगुणविशिष्टा यजमानाः ᐯतम् इन्द्रं स्तुतिभिः अधिरोहन्ति स्तुवते इत्यर्थः । तत्र दृष्टान्तः । ᐯसनिष्यवः सनिं धनमात्मन इच्छन्तो वणिजो धनार्थं ᐯसंचरणे संचारे निमित्तभूते सति ᐯसमुद्रं ᐯन । यथा नावा समुद्रमधिरोहन्ति एवं स्तोतारोऽपि स्वाभिमतधनलाभायेन्द्रं स्तुवन्तीति भावः । हे स्तोतस्त्वं

---

१. च-छ-द-ध-फ-क्रीडार्थमुपगच्छति । २. ढ-सोमपानम् । ३. ढ-यथा वा ।

च ᵛदक्षस्य प्रवृद्धस्य ᵛविदथस्य यज्ञस्य ᵛपतिं पालयितारं ᵛसहः सहस्वन्तं बलवन्तमिन्द्रं ᵛतेजसा देवताप्रकाशकेन स्तोत्रेण ᵛनु क्षिप्रम् ᵛअधि ᵛरोह स्तुहीति यावत्। तत्र दृष्टान्तः। ᵛवेनाः कान्ताः स्त्रियः ᵛगिरिं ᵛन। यथा पर्वतं स्वाभिमतपुष्पोपचयार्थमधिरोहन्ति॥ गूर्तयः। 'गॄ शब्दे'। गृणन्ति स्तुवन्तीति गूर्तयः। 'क्तिच्क्तौ च°' इति कर्तरि क्तिच्। 'बहुलं छन्दसि' इति उत्वम्। 'हलि च' इति दीर्घः। 'चितः' इत्यन्तोदात्तत्वम्। नेमन्निषः। 'णमु प्रह्वत्वे' इत्यस्मात् शतरि व्यत्ययेन एत्वम्, तकारस्य नकारादेशश्च। नमन्तः इष्यन्तीन्द्रं[1] प्राप्नुवन्तीति[1] नेमन्निषः। 'इषु गतौ' इत्यस्मात् 'क्विप् च' इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। यद्वा। 'णीञ् प्रापणे' इत्यस्मात् 'अर्तिस्तुसु°' इत्यादिना मन्प्रत्ययः। बहुलवचनात् नकारस्य इत्संज्ञाभावः। नीताः प्रत्ता इषो येषाम्। 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। परीणसः। 'णस कौटिल्ये' इत्ययं धातुर्गत्यर्थो धातूनामनेकार्थत्वात्। परितो नसन्ति गच्छन्तीति परीणसः। 'क्विप् च' इति क्विप्। 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम्। 'उपसर्गादसमासेऽपि°' इति णत्वम्। व्यत्ययेनाद्युदात्तत्वम्। यद्वा। नशतिर्गतिकर्मा। अस्मात् पूर्ववत् क्विपि शकारस्य सकारः। सनिष्यवः। 'षणु दाने' इत्यस्मात् 'इन्सर्वधातुभ्यः' इति कर्मणि इन्प्रत्ययः। सनिमात्मन इच्छन्तीति क्यचि 'सर्वप्रातिपदिकेभ्यो लालसायाम-सुग्वक्तव्यः सुगागमोऽपि वक्तव्यः' (का. ७. १. ५१. ३) इति सुक्। 'क्याच्छन्दसि' इति उप्रत्ययः। नु। 'ऋचि तुनुघ°' इति सांहितिको दीर्घः। सहः। अस्मादुत्तरस्य मतुपः छान्दसो लुक्॥

**स तु॒र्वणि॑र्म॒हाँ अ॑रे॒णु पौंस्ये॑ गि॒रेर्भृ॒ष्टिर्न भ्रा॑जते तु॒जा शवः॑।**

**येन॒ शुष्णं॑ मा॒यिन॑माय॒सो मदे॑ दु॒ध्र आ॒भूषु॑ रा॒मय॒न्नि दाम॑नि॥ ३॥**

सः। तु॒र्वणिः॑। म॒हान्। अ॒रे॒णु। पौंस्ये॑। गि॒रेः। भृ॒ष्टिः। न। भ्रा॒ज॒ते॒। तु॒जा। शवः॑।

येन॑। शुष्ण॑म्। मा॒यिन॑म्। आ॒य॒सः। मदे॑। दु॒ध्रः। आ॒भूषु॑। र॒मय॑त्। नि। दाम॑नि॥ ३॥

ᵛसः इन्द्रः ᵛतुर्वणिः शत्रूणां हिंसिता क्षिप्रकारी वा। 'तुर्वणिस्तूर्णवनिः' (निरु. ६. १४) इति यास्कः। तूर्णसंभजन इति तस्यार्थः। ᵛमहान् प्रवृद्धश्च भवति। तस्येन्द्रस्य ᵛशवः बलं ᵛपौंस्ये वीरैः पुरुषैः कर्तव्ये संग्रामे ᵛअरेणु अनवद्यं ᵛतुजा शत्रूणां हिंसकं सत् ᵛभ्राजते दीप्यते। तत्र दृष्टान्तः। ᵛगिरेः पर्वतस्य ᵛभृष्टिर्न शृङ्गमिव। तद्यथोन्नतं सद्दीप्यते तद्वत्। ᵛआयसः अयोमयकवचयुक्तदेहः ᵛदुध्रः दुष्टानां शत्रूणां धर्तावस्थापयिता एवंभूत इन्द्रः ᵛमदे सोमपानेन हर्षे सति ᵛयेन बलेन ᵛशुष्णं सर्वस्य शोषकमसुरं ᵛमायिनं मायाविनम् ᵛआभूषु कारागृहेषु ᵛदामनि बन्धके निगडे ᵛनि ᵛरमयत् न्यवासयत्। तद्बलमिति पूर्वेणान्वयः॥ तुर्वणिः। तुर्वी हिंसार्थः। अस्मात् औणादिकः अनिप्रत्ययः। अरेणु। रेणुवदाच्छादकत्वात् रेणुशब्देनावद्यमुच्यते। बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। तुजा। 'तुज हिंसायाम्'। इगुपधलक्षणः कः। 'सुपां सुलुक्°' इति विभक्तेः आकारः। दुध्रः। दुष्टान् ध्रियतेऽवस्थापयतीति दुध्रः। 'धृञ् अवस्थाने' इत्यस्मात् अन्तर्भावितण्यर्थात् मूलविभुजादित्वात् कप्रत्ययः (पा. सू. ३. २. ५. २)। यणादेशः। रेफलोपश्छान्दसः। रमयत्। अमन्तत्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम्। छान्दसः संहितायां दीर्घः॥

---

1. च-छ-ण-द-न-फ-ल-स-इष्यन्ति प्राप्नुवन्तीति।

देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः ।
यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥ ४ ॥

देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इन्द्रम् । सिसक्ति । उषसम् । न । सूर्यः ।
यः । धृष्णुना । शवसा । बाधते । तमः । इयर्ति । रेणुम् । बृहत् । अर्हरिऽस्वनिः ॥ ४ ॥

यः इन्द्रः धृष्णुना धर्षकेन शवसा बलेन तमः तमोरूपं वृत्रादिमसुरं बाधते हिनस्ति ऊतये रक्षणाय त्वावृधा त्वया स्तोत्रा वर्धितं तम् इन्द्रं देवी तविषी द्योतमानं बलं यदि यदा सिषक्ति समवैति। सेवते इति यास्कः (निरु. ३.२१)। सूर्यः उषसं न यथोषोदेवतां सेवते नित्यं तत्संबद्धो भवतीत्यर्थः। तदानीम् अर्हरिष्वणिः। गच्छन्तो हरन्तीति अर्हरयः शत्रवः। तेषां व्यथोत्पादनेन स्वनयिता शब्दयिता इन्द्रः रेणुं रेषणं हिंसनं बृहत् प्रभूतम् इयर्ति शत्रून् गमयति॥ त्वावृधा। त्वया वर्धते इति त्वावृत्। 'क्विप् च' इति क्विप्। 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः। छान्दसं दकारस्य आत्वम्। 'सुपां सुलुक्॰' इति द्वितीयाया आकारः। सिषक्ति। 'षच समवाये'। 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। इयर्ति। 'ऋ सृ गतौ'। जौहोत्यादिकः। अस्मात् अन्तर्भावितण्यर्थात् लट्। शप्श्लुद्विर्भावोरदत्वहलादिशेषाः[1]। 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम्। 'अभ्यासस्यासवर्णे' (पा. सू. ६. ४. ७८) इति इयङादेशः। 'अनुदात्ते च' इति अभ्यासस्याद्युदात्तत्वम्। पूर्वपदस्य वाक्यान्तरगतत्वेन पदादपरत्वात् निघाताभावः। रेणुम्। 'री गतिरेषणयोः'। अस्मात् औणादिको नुप्रत्ययः। अर्हरिष्वणिः। अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। अरो गच्छन्तश्चेमे हरयश्चेत्यर्हरयः। तेषां स्वनयिता। 'स्यमु[2] स्वन ध्वन शब्दे'। अस्मात् ण्यन्तात् औणादिक इन्प्रत्ययः। 'णेरनिटि' इति णिलोपः। घटादित्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याहन्वृत्रं निरपामौब्जो अर्णवम् ॥ ५ ॥

वि । यत् । तिरः । धरुणम् । अच्युतम् । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा ।
स्वःऽमीळ्हे । यत् । मदे । इन्द्र । हर्ष्या । अहन् । वृत्रम् । निः । अपाम् । औब्जः । अर्णवम् ॥५॥

यत् यदा तिरः वृत्रेण तिरोहितं धरुणं सर्वस्य प्राणिजातस्य धारकम् अच्युतं विनाशरहितं रजः उदकं दिवः द्युलोकात् आतासु। आता इति दिङ्नाम। आतासु[3] विस्तृतासु दिक्षु हे इन्द्र बर्हणा हन्ता[4] त्वं वि अतिष्ठिपः विविधं स्थापयांचकृषे। तथा यत् यदा स्वर्मीळ्हे। मीळ्हम् इति धननाम। स्वः सुष्ठु गन्तव्यं मीळ्हं धनं यस्मिन् तस्मिन् संग्रामे मदे तव सोमपानेन हर्षे सति हर्ष्या हृष्टया शक्त्या वृत्रम् आवरकमसुरम् अहन् त्वमवधीः। तदानीम् अपां पूर्णम् अर्णवं मेघं निः

१. छ-ण-न-ल-श-स—शपः श्लुः। द्विर्भावोरदत्वहलादिशेषाः। २. ढ—'स्यमु' नास्ति। ३. ढ—आततासु। ४. ढ—शत्रूणां हन्ता।

^v^औब्जः वर्षणाभिमुखमधोमुखमकार्षीः । वृष्टेरावरकं वृत्रं हत्वा वृष्टिजलेन भूमिं न्यसैक्षीरिति तात्पर्यार्थः ॥ अतिष्ठिपः । तिष्ठतेः ण्यन्तात् लुङि च्लेः चङादेशः । णिलोपः । 'तिष्ठतेरित्' (पा. सू. ७. ४. ५) इति उपधाया इत्वम् । 'चङि' (पा. सू. ६. १. ११) इति द्विर्वचने 'शर्पूर्वाः खयः' इति थकारः शिष्यते । चर्त्वेन तकारः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । बर्हणा । 'सुपां सुलुक्०' इति सोः आकारः । स्वर्मीळ्हे । 'मिह सेचने' । निष्ठा[1] । 'हो ढः' (पा. सू. ८. २. ३१) इति ढत्वम् । 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम् । तस्य ष्टुत्वे 'ढो ढे लोपः' (पा. सू. ८. ३. १३) इति ढलोपः । 'ढ्रलोपे पूर्वस्य०' (पा. सू. ६. ३. १११) इति दीर्घत्वम् । स्वरित्येतत् 'न्यङ्स्वरौ स्वरितौ' इति स्वर्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । अहन् । हन्तेर्लङि मध्यमैकवचने 'हल्ङ्याब्भ्यः०' इति सेर्लोपः[2] । यद्वृत्तयोगादनिघातः । औब्जः । 'उब्ज आर्जवे' । लङि आडागमो वृद्धिश्च ॥

त्वं दि॒वो ध॒रुणं॑ धिष॒ ओज॑सा पृथि॒व्या इ॑न्द्र॒ सद॑नेषु॒ माहि॑नः ।
त्वं सु॒तस्य॒ मदे॑ अरिणा अ॒पो वि वृ॒त्रस्य॑ स॒मया॑ पा॒ष्या॑रुजः ॥ ६ ॥

त्वम् । दि॒वः । ध॒रुण॑म् । धि॒षे॒ । ओज॑सा । पृ॒थि॒व्याः । इ॒न्द्र॒ । सद॑नेषु । माहि॑नः ।
त्वम् । सु॒तस्य॑ । मदे॑ । अ॒रि॒णाः॒ । अ॒पः । वि । वृ॒त्रस्य॑ । स॒मया॑ । पा॒ष्या॑ । अ॒रु॒जः॒ ॥ ६ ॥

हे ^v^इन्द्र ^v^माहिनः प्रवृद्धः ^v^त्वं ^v^दिवः द्युलोकात् ^v^पृथिव्याः ^v^सदनेषु प्रदेशेषु ^v^ओजसा बलेन ^v^धरुणं सर्वस्य जगतो धारकं वृष्टिजलं ^v^धिषे दधिषे स्थापयसि । यस्मात् ^v^त्वं ^v^सुतस्य सोमस्य पानेन ^v^मदे हर्षे सति ^v^अपः जलानि ^v^अरिणाः मेघात् निरगमयः । ^v^वृत्रस्य आवरकं वृत्रं च ^v^समया धृष्ट्या ^v^पाष्या शिलया यद्वा शक्त्या ^v^वि ^v^अरुजः विशेषेणाभाङ्क्षीः ॥ धिषे । दधातेश्छान्दसो वर्तमाने लिट् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का. ६. १. ८. १) इति वचनात् द्विर्वचनाभावः । क्रादिनियमात् इडागमे 'आतो लोप इटि च' इति आकारलोपः । माहिनः । 'महेरिनण् च' (उ. सू. २. २१४) इति 'मह पूजायाम्' इत्यस्मात् औणादिक इनण्प्रत्ययः । 'अत उपधायाः' इति वृद्धिः । अरिणाः । 'री गतिरेषणयोः' । क्रैयादिकः । लङि सिपि 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । समया । 'षम ष्टम अवैक्लव्ये' । समतीति समा । पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । पाष्या । 'पिषॢ संचूर्णने' इत्यस्मात् औणादिक इन्प्रत्ययः । बहुलवचनात् उपधाया आकारः । 'कृदिकारादक्तिनः' (पा. सू. ४. १. ४५ ग.) इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । तृतीयैकवचने यणादेशे सति 'उदात्तस्वरितयोर्यणः०' इति स्वरितत्वम् । अरुजः । 'रुजो भङ्गे' । तौदादिकः । शस्य ङित्त्वात् गुणाभावः ॥　　॥ २१ ॥

'प्र मंहिष्ठाय' इति षड्टचं सप्तमं सूक्तं सव्यस्यार्षमैन्द्रं जागतम् । तथा चानुक्रान्तं—'प्र मंहिष्ठाय' इति । विषुवति निष्केवल्ये इदं सूक्तं शंसनीयम् । सूत्रितं च—'प्र मंहिष्ठाय स्यमू ष्वितीह ताक्ष्यमन्ततः' (आश्व. श्रौ. ८. ६) इति । उक्थ्यसंस्थे क्रतौ तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽपि एतत्सूक्तम् । सूत्रितं च—'सर्वाः ककुभः प्र मंहिष्ठायोद्घृतः' (आश्व. श्रौ. ६. १) इति ॥

---

१. ढ–निष्ठायाम् । २. ढ–सलोपः ।

प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे ।
अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ॥ १ ॥

प्र । मंहिष्ठाय । बृहते । बृहत्ऽरये । सत्यऽशुष्माय । तवसे । मतिम् । भरे ।
अपाम्ऽइव । प्रवणे । यस्य । दुःऽधरम् । राधः । विश्वऽआयु । शवसे । अपऽवृतम् ॥ १ ॥

मंहिष्ठाय । मंहतिर्दानकर्मेति यास्कः ( निरु. १. ७ ) । दातृतमाय बृहते गुणैर्महते बृहद्रये महाधनाय सत्यशुष्माय अवितथबलाय तवसे आकारतः प्रवृद्धाय एवंगुणविशिष्टायेन्द्राय मतिं मननीयां स्तुतिं प्र भरे प्रकर्षेण संपादयामि[1] । यस्य इन्द्रस्य बलं दुर्धरम् अन्यैर्धर्तुमशक्यम् । तत्र दृष्टान्तः । प्रवणे निम्नप्रदेशे अपामिव । यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत् । तथा राधः धनं विश्वायु सर्वेषु व्याप्तं शवसे स्तोतॄणां बलाय येनेन्द्रेण अपावृतं अपगतावरणं क्रियते, तस्येन्द्रस्येति पूर्वेण संबन्धः ॥ मंहिष्ठाय । अतिशयेन मंहिता मंहिष्ठः । 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । बृहते । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । उत्तरयोर्बहुव्रीहिस्वरः[2] । मतिम् । 'मन्त्रे वृष°' इत्यादिना क्तिन्[3] उदात्तत्वम्[3] । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । दुर्धरम् । 'धृञ् धारणे' । 'ईषद्दुःसुषु°' इति कर्मणि खल् । विश्वायु । विश्वस्मिन् सर्वस्मिन् आयु गमनं यस्य तत् विश्वायु । एतेः 'छन्दसीणः' ( उ. सू. १. २ ) इति उण्प्रत्ययः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । अपावृतम् । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः ।
यत्पर्वते न समशीत हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ॥ २ ॥

अध । ते । विश्वम् । अनु । ह । असत् । इष्टये । आपः । निम्नाऽइव । सवना । हविष्मतः ।
यत् । पर्वते । न । सम्ऽअशीत । हर्यतः । इन्द्रस्य । वज्रः । श्नथिता । हिरण्ययः ॥ २ ॥

अध ह अनन्तरमेव हे इन्द्र विश्वं सर्वमिदं जगत् ते तव संबन्धिने इष्टये यागाय अनु असत् अन्वभवत् । यद्वा । इष्टये हविरादिभिस्तव प्राप्तये इति योज्यम् । हविष्मतः यजमानस्य सवना सवनानि यज्ञजातानि निम्नेव निम्नानि भूस्थलानि आपः इव त्वां संभजन्ते इति शेषः । हर्यतः शत्रुवधं प्रेप्सतः इन्द्रस्य । 'हर्यतिः प्रेप्साकर्मा' ( निरु. ७. १७ ) इति यास्कः । यद्वा । हर्यतः शोभनः । हिरण्ययः हिरण्मयः श्नथिता शत्रूणां हिंसनशीलः वज्रः पर्वते पर्ववति शिलोच्चये वृत्रे वा यत् यदा न समशीत संसुप्तो नाभवत् । किंतु जागरितः सन्नवधीदित्यर्थः । यदेन्द्रेण प्रेरितो वज्रः अप्रतिहतः सन् वृत्रमवधीत्तदाप्रभृत्येव तं यष्टुं सर्वे यजमानाः प्रावर्तिषतेति भावः ॥ अध । छान्दसं धत्वम् । असत् । अस्तेर्लेङि 'बहुलं छन्दसि' इति शपो लुगभावः । इष्टये । यजतेर्भावे क्तिनि 'वचिस्वपि°' इत्यादिना संप्रसारणम् । व्रश्चादिना षत्वम् । व्यत्ययेनान्तोदात्तत्वम् । यद्वा । 'इष गतौ'

---

१. ढ–उत्पादयामि । २. च-छ-ण-त-न-फ-ल-श–उत्तरयोश्च बहुव्रीहिस्वरः । ३, ढ-स–क्तिन उदात्तत्वम् ।

इत्यस्मात् भावे क्तिनि ‘ मन्त्रे वृषेष° ’ इति तस्योदात्तत्वम् । निम्नेव सवना । ‘ शेश्छन्दसि° ’ इति शेर्लोपः । ससशीत । ‘ शीङ् स्वप्ने ’ । लङि संज्ञापूर्वकस्य विधेरनित्यत्वात् ‘ शीङः सार्वधातुके° ’ ( पा. सू. ७. ४. २१ ) इति गुणाभावः । हर्यतः । ‘ हर्य गतिकान्त्योः ’ । ‘ भृमृदृशि° ’ इत्यादिना अतच्प्रत्ययः । श्नथिता । ‘ श्नथ क्नथ क्रथ हिंसार्थाः ’ । ताच्छीलिकः तृन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।
यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ॥ ३ ॥

अस्मै । भीमाय । नमसा । सम् । अध्वरे । उषः । न । शुभ्रे । आ । भर । पनीयसे ।
यस्य । धाम । श्रवसे । नाम । इन्द्रियम् । ज्योतिः । अकारि । हरितः । न । अयसे ॥ ३ ॥

हे उषः उषोदेवते शुभ्रे शोभने त्वं भीमाय शत्रूणां भयंकराय पनीयसे अतिशयेन स्तोतव्याय अस्मै इन्द्राय अध्वरे हिंसारहितेऽस्मिन्यागे । न इति संप्रत्यर्थे । तथा च यास्कः—‘ अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इहेव निधेहि ’ ( निरु. ७. ३१ ) इति । संप्रतीदानीं नमसा नमो हविर्लक्षणमन्नं सम् आ भर सम्यक् संपादय । धाम सर्वस्य धारकं नाम स्तोतृषु नमनशीलं प्रसिद्धं वा इन्द्रियम् इन्द्रत्वस्य[1] परमैश्वर्यस्य[1] लिङ्गं यस्य इन्द्रस्य एवंविधं ज्योतिः श्रवसे अन्नाय हविर्लक्षणान्नलाभार्थम् अयसे इतस्ततो गमनाय अकारि क्रियते । हरितो न । यथाश्वान्सादिनः स्वाभिलषितदेशं गमयन्ति तद्वदिन्द्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भावः ॥ उषः । पादादित्वात् निघाताभावः । शुभ्रे । ‘ शुभ दीप्तौ ’ । ‘ स्फायितञ्चि° ’ इत्यादिना रक् । भर । ‘ हृग्रहोर्भः° ’ इति भत्वम् । ‘ द्व्यचोऽतस्तिङः ’ इति दीर्घः । पनीयसे । पनतेः स्तुत्यर्थात् बहुलवचनात् कर्मणि असुन् । तस्मात् आतिशायनिके ईयसुनि ‘ टेः ’ इति टिलोपः । अकारि । ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमाने कर्मणि लुङ् । यद्वृत्तयोगादनिघातः । अडागम उदात्तः । अयसे । ‘ अय गतौ ’ इत्यस्मात् भावे असुन् ॥

इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः ॥ ४ ॥

इमे । ते । इन्द्र । ते । वयम् । पुरुऽस्तुत । ये । त्वा । आऽरभ्य । चरामसि । प्रभुवसो इति प्रभुऽवसो ।
नहि । त्वत् । अन्यः । गिर्वणः । गिरः । सघत् । क्षोणीःऽइव । प्रति । नः । हर्य । तत् । वचः ॥ ४ ॥

हे इन्द्र प्रभूवसो प्रभूतधन अत एव पुरुष्टुत पुरुभिर्बहुभिर्यजमानैः स्तुत ये च वयं त्वा त्वाम् आरभ्य आश्रयतयावलम्ब्य चरामसि चरामो यागे वर्तामहे ते इमे वयं ते तव स्वभूताः । हे गिर्वणः गीर्भिर्वननीयेन्द्र त्वदन्यः त्वत्तोऽन्यः कश्चिदपि गिरः स्तुतीः नहि सघत् न हि

---

[1]. ध-स—इन्द्रस्य परमेश्वरस्य ।

प्राप्नोति । अतस्त्वं ᵛनः अस्माकं ᵛतत् स्तुतिलक्षणं ᵛवचः ᵛप्रति ᵛहर्य कामयस्व । ᵛक्षोणीरिव । यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते ॥ चरामसि । इदन्तो मसिः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । सघत् । 'षघ हिंसायाम्'। अत्र प्राप्त्यर्थो धातूनामनेकार्थत्वात् । लेटि अडागमः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । पादादित्वात् निघाताभावः । क्षोणीरिव । 'हल्ङ्याब्भ्यः°' इति सुलोपाभावश्छान्दसः ॥

भूरि॑ त इन्द्र वी॒र्यं१॒॑ तव॑ स्मस्य॒स्य स्तो॒तुर्म॑घव॒न्काम॒मा पृ॑ण ।
अनु॑ ते॒ द्यौर्बृ॑ह॒ती वी॒र्यं॑ मम इ॒यं च॑ ते पृथि॒वी ने॑म॒ ओज॑से ॥ ५ ॥

भूरि॑ । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । तव॑ । स्म॒सि॒ । अ॒स्य । स्तो॒तुः । म॒घ॒ऽव॒न् । काम॑म् । आ । पृ॒ण॒ ।
अनु॑ । ते॒ । द्यौः । बृ॒ह॒ती । वी॒र्य॑म् । म॒मे॒ । इ॒यम् । च॒ । ते॒ । पृ॒थि॒वी । ने॒मे॒ । ओज॑से ॥ ५ ॥

हे ᵛइन्द्र ᵛते तव ᵛवीर्यं सामर्थ्यं ᵛभूरि बहु । न केनाप्यवच्छेत्तुं शक्यते । तादृशस्य ᵛतव वयं ᵛस्मसि स्वभूता भवामः । हे ᵛमघवन् ᵛअस्य ᵛस्तोतुः त्वां स्तुवतो यजमानस्य ᵛकामम् अभिलाषम् ᵛआ ᵛपृण आपूरय । ᵛबृहती ᵛद्यौः महान् द्युलोकोऽपि ᵛते तव ᵛवीर्यम् ᵛअनु ᵛममे अन्वमंस्त । इन्द्रेण सहावस्थानात् ᵛइयं ᵛच इयमपि ᵛपृथिवी ᵛते तव ᵛओजसे बलाय ᵛनेमे प्रह्वीबभूव । त्वद्बलाद्भीता सती अध एव वर्तते इति भावः ॥ स्मसि । 'अस भुवि'। लटि 'श्नसोरल्लोपः' इति अकारलोपः । इदन्तो मसिः । पृण । 'पृण प्रीणने'। अत्र प्रीतिहेतुतया पूरणं लक्ष्यते । तुदादित्वात् शप्रत्ययः । तस्य ङित्त्वाद्गुणाभावः । ममे । 'माङ् माने शब्दे च'। ङित्त्वात् आत्मनेपदम् । लिटि 'आतो लोप इटि च' इति आकारलोपः । नेमे । 'णमु प्रह्वत्वे'। लिटि 'अत एकहल्मध्ये°' इति एत्वाभ्यासलोपौ । 'तिङ्ङतिङः' इति निघातः ॥

त्वं तमि॑न्द्र॒ पर्व॑तं म॒हामु॒रुं वज्रे॑ण वज्रि॒न्पर्व॒शश्च॑कर्तिथ ।
अवा॑सृजो॒ निवृ॑ताः॒ सर्त॒वा अ॒पः स॒त्रा विश्वं॑ दधिषे॒ केव॑लं॒ सहः॑ ॥ ६ ॥

त्वम् । तम् । इ॒न्द्र॒ । पर्व॑तम् । म॒हाम् । उ॒रुम् । वज्रे॑ण । व॒ज्रि॒न् । प॒र्व॒ऽशः । च॒क॒र्ति॒थ॒ ।
अव॑ । अ॒सृ॒जः॒ । निऽवृ॑ताः । सर्त॑वै । अ॒पः । स॒त्रा । विश्व॑म् । द॒धि॒षे॒ । केव॑लम् । सहः॑ ॥ ६ ॥

हे ᵛवज्रिन् वज्रवन् ᵛइन्द्र ᵛत्वं ᵛतं प्रसिद्धं ᵛमहाम् आयामतो महान्तम् ᵛउरुं विस्तीर्णं पर्वतं ᵛपर्ववन्तं मेघं वृत्रासुरं वा ᵛवज्रेण आयुधेन ᵛपर्वशः पर्वणि पर्वणि ᵛचकर्तिथ शकलीचकृषे । तेन मेघेन ᵛनिवृताः आवृताः ᵛअपः ᵛसर्तवै सरणाय गमनाय ᵛअवासृजः अवाङ्मुखमस्राक्षीः । अतस्त्वमेव ᵛकेवलं ᵛविश्वं व्याप्तं ᵛसहः बलं ᵛदधिषे धारयसि नान्यः कश्चिदिति यदेतत् तत् ᵛसत्रा सत्यमेव । सत्रा इति सत्यनाम, 'सत्रा इत्था' (नि. ३. १०. ३) इति तन्नामसु पाठात् ॥ महां महान्तम् । नकारतकारयोर्लोपश्छान्दसः । चकर्तिथ । 'कृती छेदने'। लिटि थलि अभ्यासस्य उरदत्वहलादिशेषचुत्वानि । सर्तवै । 'कृत्यार्थे तवैकेन्°' इति भावे तवैप्रत्ययः । 'कृन्मेजन्तः' (पा. सू. १. १. ३९) इति अव्ययत्वे 'अव्ययादाप्सुपः' इति सुपो लुक् । 'अन्तश्च तवै युगपत्' इति आद्यन्तयोर्युगपत् उदात्तत्वम् । दधिषे । लिटि क्रादिनियमात् इट् ॥ ॥ २२ ॥ ॥ १० ॥

एकादशानुवाके सप्त सूक्तानि । तत्र ' नू चित् ' इति नवर्चं प्रथमं सूक्तं गौतमस्य नोधस आर्षमाग्नेयम् । आद्याः पञ्च जगत्यः । शिष्टाश्चतस्रस्त्रिष्टुभः । तथा चानुक्रान्तम्–' नू चिन्नव नोधा गौतम आग्नेयं हि चतुस्त्रिष्टुबन्तम् ' इति । हि इति वचनात् उत्तरे च द्वे सूक्ते अग्निदेवताके । अभिप्लवषडहस्य पञ्चमेऽहनि आग्निमारुते[1] इदं[2] जातवेदस्यं निविद्धानम् । ' तृतीयस्य ' इति खण्डे सूत्रितं– ' पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतम् ' ( आश्व. श्रौ. ७. ७ ) इति । प्रातरनुवाकस्याग्नेये क्रतावाश्विनशस्त्रे च जागते छन्दस्यादितः पञ्चर्चः । सूत्रितं च–' त्वमग्ने प्रथमो अङ्गिरा नू चित्सहोजा अमृतो नि तुन्दत इति पञ्च ' ( आश्व. श्रौ. ४. १३ ) इति ॥

नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥ १ ॥

नु । चित् । सहःऽजाः । अमृतः । नि । तुन्दते । होता । यत् । दूतः । अभवत् । विवस्वतः ।
वि । साधिष्ठेभिः । पथिऽभिः । रजः । ममे । आ । देवऽताता । हविषा । विवासति ॥ १ ॥

ᵛसहोजाः सहसा बलेन जातः । अग्निर्हि बलेन मथ्यमानोऽरण्योः सकाशात् जायते । ᵛअमृतः मरणरहितः । एवंभूतोऽग्निः ᵛनू ᵛचित् क्षिप्रमेव ᵛनि ᵛतुन्दते नितरां व्यथयति । उत्पन्नमात्रस्याग्नेः[2] स्प्रष्टुमशक्यत्वात् । यद्वा निर्गच्छति । तुन्दतिर्गत्यर्थः सौत्रो धातुः । ᵛयत् यदा ᵛहोता देवानामाह्वाता होमनिष्पादको वायमग्निः ᵛविवस्वतः परिचरतो यजमानस्य देवान्प्रति हविर्वहनाय ᵛदूतः ᵛअभवत् हविर्वहने नियुक्तो भवति तदानीं ᵛसाधिष्ठेभिः समीचीनैः ᵛपथिभिः मार्गैर्गच्छन् ᵛरजः अन्तरिक्षलोकं ᵛवि ᵛममे निर्ममे । पूर्वं विद्यमानमप्यन्तरिक्षम् असत्कल्पमभूत् । इदानीं तस्य तेजसा प्रकाशमानं सत् उत्पन्नमिव दृश्यते । किंच । देवताता इति यज्ञनाम । ᵛदेवताता देवतातौ यज्ञे ᵛहविषा चरुपुरोडाशादिलक्षणेन देवान् ᵛआ ᵛविवासति परिचरति ॥ अमृतः । मृतं मरणमस्य नास्तीति बहुव्रीहौ ' नञो जरमरमित्रमृताः ' इत्युत्तरपदाद्युदात्तत्वम् । तुन्दते । ' तुद व्यथने ' । स्वरितेत्त्वात् आत्मनेपदम् । नकारोपजनश्छान्दसः । साधिष्ठेभिः । बाढशब्दात् आतिशायनिके इष्ठनि ' अन्तिकबाढयोर्नेदसाधौ ' ( पा. सू. ५. ३. ६३ ) इति साधादेशः । ' बहुलं छन्दसि ' इति भिसः ऐसभावः । नित्त्वादाद्युदात्तत्वम् । देवताता । ' सर्वदेवात्तातिल् ' ( पा. सू. ४. ४. १४२ ) इति स्वार्थिकः तातिल्प्रत्ययः । तेन च तत्संबन्धी यज्ञो लक्ष्यते । यद्वा । देवान्हविषा आ विवासति इति योज्यम् । ' सुपां सुलुक्° ' इति विभक्तेः डादेशः । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् ॥

आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।
अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥ २ ॥

आ । स्वम् । अद्म । युवमानः । अजरः । तृषु । अविष्यन् । अतसेषु । तिष्ठति ।
अत्यः । न । पृष्ठम् । प्रुषितस्य । रोचते । दिवः । न । सानु । स्तनयन् । अचिक्रदत् ॥ २ ॥

---

१. श–आग्निमारुतमिदम् । २. ढ–उत्पन्नमात्रस्याप्यग्नेः ।

अजरः जरारहितोऽयमग्निः स्वं स्वकीयम् अद्म अदनीयं तृणगुल्मादिकं युवमानः स्वकीयज्वालया संमिश्रयन् तदनन्तरं च अविष्यन् भक्षयंश्च । अविष्यन् इत्येतत् अत्तिकर्मसु पठितम् ( नि. २. ८. ६)। एवंभूतोऽग्निः तृषु क्षिप्रमेव अतसेषु प्रभूतेषु काष्ठेषु आ तिष्ठति आरोहति। अत्र अतसशब्दः काष्ठवाची, 'अतसं न शुष्कम्' ( ऋ. सं. ४. ४. ४ ) इति दर्शनात्। शुषितस्य दग्धुमितस्ततः प्रवृत्तस्याग्नेः पृष्ठम् उपर्यवस्थितं ज्वालाजालम् अत्यो न रोचते। यथा सततगमनशीलः अश्वः[1] इतस्ततो गच्छन् शोभते एवमग्नेर्ज्वालापि सर्वत्र गच्छन्ती शोभते इति भावः। तदानीं दिवः द्युलोकस्य संबन्धि सानु समुच्छ्रितमभ्रं स्तनयन् न शब्दयन्निव अचिक्रदत् गम्भीरं[2] शब्दम्[2] आत्मानमचीकरत्॥ युवमानः। 'यु मिश्रणे'। व्यत्ययेन आत्मनेपदम्। शपि प्राप्ते व्यत्ययेन शः। तस्य 'बहुलं छन्दसि' इति लुगभावः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते। अजरः। बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। अचिक्रदत्। 'कदि क्रदि क्लदि आह्वाने रोदने च'। अस्मात् ण्यन्तात् लुङि चङि आगमानुशासनस्यानित्यत्वात् नुमभावः। द्विर्भावहलादिशेषसन्वद्भावेत्वानि॥

क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः।
रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥ ३ ॥

क्राणा। रुद्रेभिः। वसुऽभिः। पुरःऽहितः। होता। निऽसत्तः। रयिषाट्। अमर्त्यः।
रथः। न। विक्षु। ऋञ्जसानः। आयुषु। वि। आनुषक्। वार्या। देवः। ऋण्वति ॥ ३ ॥

क्राणा हविर्वहनं कुर्वाणः रुद्रेभिः रुद्रैः वसुभिः च पुरोहितः पुरस्कृतः होता देवानामाह्वाता निषत्तः हविःस्वीकरणाय देवयजने निषण्णः रयिषाट् रयीणां शत्रुधनानामभिभविता अमर्त्यः मरणरहितः। एवंभूतः देवः द्योतमानोऽग्निः विक्षु प्रजासु लौकिकजनेषु रथो न रथ इव आयुषु यजमानलक्षणेषु मनुष्येषु ऋञ्जसानः स्तूयमानः वार्या वार्याणि संभजनीयानि धनानि आनुषक् आनुषक्तं[3] यथा भवति तथा वि ऋण्वति विशेषेण प्रापयति। यद्वा। वार्याणि वरणीयानि हवींषि स्वयं प्राप्नोति॥ क्राणा। करोतेः शानचि 'बहुलं छन्दसि' इति विकरणस्य लुक्। शानचो ङित्त्वात् गुणाभावे यणादेशः। 'चितः' इत्यन्तोदात्तत्वम्। 'सुपां सुलुक्°' इति सोः पूर्वसवर्णदीर्घत्वम्। निषत्तः। 'षद्लृ विशरणगत्यवसादनेषु'। अस्मात् कर्मणि निष्ठा। 'नसत्तनिषत्त°' ( पा. सू. ८. २. ६१ ) इत्यादिना निष्ठानत्वाभावो निपातितः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। रयिषाट्। 'षह अभिभवे'। 'छन्दसि सहः' ( पा. सू. ३. २. ६३ ) इति ण्विः। 'सहेः साडः सः' ( पा. सू. ८. ३. ५६ ) इति षत्वम्। ऋञ्जसानः। ऋञ्जतिः स्तुतिकर्मा। 'असानच्' इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' ( उ. सू. २. २४४ ) इति कर्मणि असानच्प्रत्ययः। 'चितः' इत्यन्तोदात्तत्वम्। आयुषु। आयवः इति मनुष्यनाम ( नि. २. ३. १७ )। 'इण् गतौ' इत्यस्मात् 'छन्दसीणः' इति उण्प्रत्ययः। वृद्ध्यायादेशौ। वार्या। 'वृङ् संभक्तौ'। 'ऋहलोर्ण्यत्'। तित्स्वरिते प्राप्ते 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम्। 'शेश्छन्दसि°' इति शेर्लोपः। ऋण्वति। 'रिवि गतौ'। व्यत्ययेन संप्रसारणम्। इदित्त्वात् नुम्। कर्तरि शप्॥

---

१. छ-द्-ध-न-श-स—अत्योऽश्वः; ढ—जात्यश्वः। २. ढ—गंभीरशब्दम्। ३. ढ—अनुषक्तम्।

वि वार्तजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।
तृषु यदंग्ने वनिनौ वृषायसे कृष्णं त एम रुशंदूर्मे अजर ॥ ४ ॥

वि । वार्तऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः ।
तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ॥ ४ ॥

ᵛवातजूतः वायुना प्रेरितः ᵛतुविष्वणिः महास्वनः एवंभूतोऽग्निः ᵛजुहूभिः स्वकीयाभिः जिह्वाभिः ᵛसृण्या सरणशीलेन तेजःसमूहेन च युक्तः सन् । वृथा इति अनायासवचनः । ᵛवृथा अनायासेनैव ᵛअतसेषु उन्नतेषु वृक्षेषु ᵛवि ᵛतिष्ठते विशेषेण तिष्ठति । हे ᵛअग्ने ᵛयत् यदा ᵛवनिनः वनसंबन्धान् वृक्षान् दग्धुं[1] ᵛवृषायसे वृषवदाचरसि दहसीत्यर्थः । हे ᵛरुशदूर्मे दीप्तज्वाल ᵛअजर जरारहिताग्ने ᵛते तव ᵛएम गमनमार्गः ᵛकृष्णं कृष्णवर्णो भवति ॥ वातजूतः । जू इति सौत्रो धातुः । वातेन जूतो वातजूतः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । वि तिष्ठते । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । जुहूभिः । 'हु दानादनयोः' । हूयते[2] आस्विति जुह्वः । 'हुवः श्लुवच्च' (उ. सू. २. २१८) इति क्विप्, चकारात् दीर्घः । श्लुवद्भावात् द्विर्भावादि । 'धातोः' इत्यन्तोदात्तत्वम् । सृण्या । 'सृ गतौ' । सरतीति सृणिः । 'सृवृषिभ्यां कित्' (उ. सू. ४. ४८९) इति निप्रत्ययः । एम । एत्यनेनेति एम मार्गः । 'इण् गतौ' इत्यस्मात् करणे औणादिको मनिन् । नित्त्वादाद्युदात्तत्वम् ॥

तपुंर्जम्भो वन आ वार्तचोदितो यूथे न साह्वाँ अव वाति वंसंगः ।
अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥ ५ ॥

तपुंःऽजम्भः । वने । आ । वार्तऽचोदितः । यूथे । न । सह्वान् । अव । वाति । वंसंगः ।
अभिऽव्रजन् । अक्षितम् । पाजसा । रजः । स्थातुः । चरथम् । भयते । पतत्रिणः ॥ ५ ॥

ᵛतपुर्जम्भः । तपूंषि ज्वाला एव जम्भा आयुधानि मुखानि वा यस्य स तथोक्तः । ᵛवातचोदितः वायुना प्रेरितः । एवंभूतोऽग्निः ᵛयूथे ज्वालासमूहे सति ᵛअक्षितम् अक्षीणं ᵛरजः आर्द्रवृक्षान्तर्गतमुदकं ᵛपाजसा तेजोबलेन ᵛअभिव्रजन् आभिमुख्येन गच्छन् ᵛवने अरण्ये ᵛसाह्वान् सर्वमभिभवन् ᵛआ आभिमुख्येन[3] ᵛअव ᵛवाति व्याप्नोति । तत्र दृष्टान्तः । ᵛवंसगः ᵛन । यथा वननीयगतिः वृषः[4] गोयूथे सर्वमभिभवन् वर्तते तद्वत् । यस्मादेवं तस्मात् ᵛपतत्रिणः पतनवतोऽग्नेः सकाशात् ᵛस्थातुः स्थावरं ᵛचरथं च जङ्गमं च ᵛभयते बिभेति ॥ साह्वान् । 'दाश्वान्साह्वान्॰' इति क्वसुप्रत्ययान्तो निपातितः । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । यत्वलोपौ । ह्रस्वत्वं छान्दसम् । स्थातुः । 'कमिमनिजनि॰' (उ. सू. १.७२) इत्यादिना विहितः तुप्रत्ययो बहुलवचनात् तिष्ठतेरपि भवति । यद्वा । स्थातुरनन्तरं चरथं भयते । प्रथमं स्थातृ स्थावरं बिभेति पश्चाच्चरथमित्यर्थः । चरथम् । चर गत्यर्थः । अस्मात् औणादिकः अथ-

१. ढ-स-दग्धुं तृषु क्षिप्रम् । २. ढ-स-हूयन्ते । ३. ढ-आभिमुख्येन गच्छन् । ४. ढ-वृषभः ।

प्रत्ययः । भयते । 'ञिभी भये' । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति श्लोरभावः । गुणावादेशौ ॥ ॥ २३ ॥

द॒धुष्ट्वा॒ भृग॑वो॒ मानु॑षे॒ष्वा र॒यिं न चारुं॑ सु॒हवं॒ जने॑भ्यः ।
होता॑रमग्ने॒ अति॑थिं॒ वरे॑ण्यं मि॒त्रं न शेवं॑ दि॒व्याय॒ जन्म॑ने ॥ ६ ॥

द॒धुः । त्वा॒ । भृग॑वः । मानु॑षेषु । आ । र॒यिम् । न । चारु॑म् । सु॒ऽहव॑म् । जने॑भ्यः ।
होता॑रम् । अ॒ग्ने॒ । अति॑थिम् । वरे॑ण्यम् । मि॒त्रम् । न । शेव॑म् । दि॒व्याय॑ । जन्म॑ने ॥ ६ ॥

हे ᵛअग्ने ᵛत्वा त्वां ᵛमानुषेषु मनुष्येषु मध्ये ᵛभृगवः एतत्संज्ञा महर्षयः ᵛदिव्याय ᵛजन्मने देवत्वप्राप्तये ᵛचारुं ᵛरयिं ᵛन शोभनं धनमिव ᵛआ ᵛदधुः आधानसंभारेषु मन्त्रैः स्थापनेन समस्कुर्वन् । कीदृशं त्वाम् । ᵛजनेभ्यः ᵛसुहवं यजमानार्थमाह्वातुं सुशकं ᵛहोतारं देवानामाह्वातारं ᵛअतिथिम् अतिथिवत्पूज्यम् । यद्वा । देवयजनदेशेषु सततं गन्तारम् । ᵛवरेण्यं वरणीयं ᵛमित्रं ᵛन ᵛशेवम् । यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ॥ दधुः । लिटि उसि 'आतो लोप इटि च' इति आकारलोपः । 'युष्मत्तत्तक्षुःष्वन्तःपादम्' इति विसर्जनीयस्य षत्वम् । सुहवम् । ह्वयतेः 'ईषद्दुः-सुषु°' इति खल् । 'बहुलं छन्दसि' इति संप्रसारणम् । परपूर्वत्वम् । गुणावादेशौ । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

होता॑रं स॒प्त जु॒ह्वो॒३ यजि॑ष्ठं॒ यं वा॒घतो॑ वृ॒णते॑ अध्व॒रेषु॑ ।
अ॒ग्निं विश्वे॑षामर॒तिं वसू॑नां सप॒र्यामि॒ प्रय॑सा॒ यामि॒ रत्न॑म् ॥ ७ ॥

होता॑रम् । स॒प्त । जु॒ह्वः॑ । यजि॑ष्ठम् । यम् । वा॒घतः॑ । वृ॒णते॑ । अ॒ध्व॒रेषु॑ ।
अ॒ग्निम् । विश्वे॑षाम् । अ॒र॒तिम् । वसू॑नाम् । स॒प॒र्यामि॑ । प्रय॑सा । यामि॑ । रत्न॑म् ॥ ७ ॥

ᵛसप्त सप्तसंख्याकाः ᵛजुह्वः होतारः ᵛवाघतः ऋत्विजः ᵛअध्वरेषु यागेषु ᵛयजिष्ठं यष्टृतमं ᵛहोतारं देवानामाह्वातारं ᵛयम् अग्निं ᵛवृणते संभजन्ते ᵛविश्वेषां सर्वेषां ᵛवसूनाम्[1] ᵛअरतिं प्रापयितारं तम् ᵛअग्निं ᵛप्रयसा हविर्लक्षणेनान्नेन ᵛसपर्यामि परिचरामि । ᵛरत्नं रमणीयं कर्मफलं च ᵛयामि याचामि ॥ वृणते । 'वृङ् संभक्तौ' । क्रैयादिकः । प्रत्ययस्वरः । अरतिम् । 'ऋ गतिप्रापणयोः' । अस्मात् औणादिकः 'वहिवस्यर्तिभ्यश्चित्' (उ. सू. ४. ५००) इति अतिप्रत्ययः । चित्त्वादन्तोदात्तत्वम् । सपर्यामि । सपर्यतिः परिचरणकर्मा । 'सपर पूजायाम्' इति धातुः कण्ड्वादिः । अतो यक एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । यामि । याचामीत्यस्य वर्णलोपश्छान्दसः ॥

---

१. ढ-स—वसूनां धनानाम् ।

अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।
अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥ ८ ॥

अच्छिद्रा । सूनो इति । सहसः । नः । अद्य । स्तोतृऽभ्यः । मित्रऽमहः । शर्म । यच्छ ।
अग्ने । गृणन्तम् । अंहसः । उरुष्य । ऊर्जः । नपात् । पूःऽभिः । आयसीभिः ॥ ८ ॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्र । बलेन हि मथ्यमानोऽग्निर्जायते । ᵛमित्रमहः अनुकूलदीप्तिमन्नग्ने ᵛनः अस्मभ्यं ᵛस्तोतृभ्यः ᵛअद्य अस्मिन् कर्मणि ᵛअच्छिद्रा अच्छेद्यानि ᵛशर्म शर्माणि सुखानि ᵛयच्छ देहि । किंच हे ᵛऊर्जो ᵛनपात् अन्नस्य पुत्र । भुक्तेनान्नेन जठराग्नेः प्रवर्धनादग्नेरन्नपुत्रत्वम् । एवंविध ᵛअग्ने ᵛगृणन्तं त्वां स्तुवन्तम् ᵛआयसीभिः व्याप्तैः । यद्वा अयोवत् दृढतरैः । ᵛपूर्भिः पालनैः ᵛअंहसः पापात् ᵛउरुष्य रक्ष । ‘ उरुष्यती रक्षाकर्मा ’ ( निरु. ५. २३ ) इति यास्कः ॥ अच्छिद्रा । ‘ शेश्छन्दसि° ’ इति शेर्लोपः । सूनो सहसः । ‘ परमपिच्छन्दसि ’ इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति पदद्वयसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । शर्म । ‘ सुपां सुलुक्° ’ इति विभक्तेः लुक्[1] । ऊर्जो नपात् । न पातयतीति नपात् । ‘ नभ्राण्नपात्° ’ इति नञः प्रकृतिभावः । ‘ सुबामन्त्रिते° ’ इति षष्ठ्यन्तस्य पराङ्गवद्भावे सति पादादित्वात् आष्टमिकनिघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । पूर्भिः । ‘ पॄ पालनपूरणयोः ’ इत्यस्मात् संपदादिलक्षणो भावे क्विप् । उत्वदीर्घौ । ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम् ॥

भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।
उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥

भव । वरूथम् । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः । शर्म ।
उरुष्य । अग्ने । अंहसः । गृणन्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ९ ॥

हे ᵛविभावः विशिष्टप्रकाशाग्ने ᵛगृणते त्वां स्तुवते यजमानाय । वरूथम् इति गृहनाम । ᵛवरूथम् अनिष्टनिवारकं[2] गृहं ᵛभव । हे ᵛमघवन् धनवन्नग्ने ᵛमघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः ᵛशर्म सुखं यथा भवति तथा ᵛभव । हे ᵛअग्ने ᵛगृणन्तं स्तुवन्तम् ᵛअंहसः पापकारिणः शत्रोः ᵛउरुष्य रक्ष । ᵛधियावसुः कर्मणा बुद्ध्या वा प्राप्तधनोऽग्निः ᵛप्रातः इदानीमिव परेद्युरपि ᵛमक्षु शीघ्रं ᵛजगम्यात् आगच्छतु ॥ वरूथम् । ‘ वृञ् वरणे ’ । ‘ जॄवृभ्यामूथन् ’ ( उ. सू. २. १६३ ) इति ᵛऊथन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । गृणते । ‘ शतुरनुमः° ’ इति विभक्तेरुदात्तत्वम् । विभावः । विशिष्टा भा विभाः । ‘ आतो मनिन्° ’ इति विच् । ‘ तदस्यास्ति° ’ इति मतुप् । ‘ मादुपधायाः° ’ इति मतुपो वत्वम् । ‘ मतुवसो रुः° ’ इति नकारस्य रुत्वम् । मघवद्भ्यः । ‘ मघवा बहुलम् ’ ( पा. सू. ६. ४. १२८ ) इति मघवन्शब्दस्य तृआदेशः । स च ‘ नानुबन्धकृतमनेकाल्त्वम् ’

---

१. ढ-स–‘ लुक् ’ इत्यस्यानन्तरं ‘ यच्छ । दाण् दाने । पाघ्रेत्यादिना यच्छादेशः ’ इत्यधिकम् ।
२. ढ–अरिष्टनिवारकम् ।

(परिभा. ६) इति वचनात् ‘ अलोऽन्त्यस्य ’ (पा. सू. १. १. ५२) इति अन्त्यस्य भवति । मक्षु । ‘ ऋचि तुनुघमक्षु° ’ इति दीर्घः । धियावसुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदस्य[1] ‘ सावेकाचः° ’ इति विभक्तिरुदात्ता । लुगभावश्छान्दसः । जगम्यात् । ‘ गम्लृ सृप्लृ गतौ ’ । लिङि ‘ बहुलं छन्दसि ’ इति शपः श्लुः ॥ ॥ २४ ॥

‘ वया इत् ’ इति सप्तर्चं द्वितीयं सूक्तं नोधस आर्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निर्देवता । तथा चानुक्रान्तम् ‘ वया इत्सप्त वैश्वानरीयम् ’ इति । सूक्तविनियोगो लिङ्गादवगन्तव्यः ॥

वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते ।
वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ॥ १ ॥

वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे । अमृताः । मादयन्ते ।
वैश्वानर । नाभिः । असि । क्षितीनाम् । स्थूणाऽइव । जनान् । उपऽमित् । ययन्थ ॥ १ ॥

‘ वयाः शाखा वेतेर्वातायना भवन्ति ’ ( निरु. १. ४ ) इति यास्कः । हे ^v^अग्ने ये ^v^अन्ये ^v^अग्नयः सन्ति सर्वेऽपि ^v^ते तव ^v^वया ^v^इत् शाखा एव । ततस्त्वत्तोऽन्ये न सन्तीति भावः । किंच ^v^त्वे त्वयि सति ^v^विश्वे सर्वे ^v^अमृताः अमरणधर्माणो देवाः ^v^मादयन्ते हृष्यन्ति । न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते । हे ^v^वैश्वानर विश्वेषां नराणां जाठररूपेण संबन्धिन्नग्ने ^v^क्षितीनां मनुष्याणां ^v^नाभिः संनद्धा ^v^असि अवस्थापको भवसि । अतस्त्वम् ^v^उपमित् उपस्थापयिता सन् । यद्वा । उपमित् इत्येतत् दृष्टान्तविशेषणम् । ^v^जनान् ^v^ययन्थ अधारयः । तत्र दृष्टान्तः । उपमित् उपनिखाता ^v^स्थूणेव । वंशधारणार्थं निखातः स्तम्भः यथा गृहोपरिस्थं वंशं धारयति तद्वत् ॥ वैश्वानर । विश्वे चेमे नरा विश्वानराः । ‘ नरे संज्ञायाम् ’ ( पा. सू. ६. ३. १२९ ) इति पूर्वपदस्य दीर्घः । तत्संबन्धी वैश्वानरः । ‘ तस्येदम् ’ इति अण् । नाभिः । ‘ नहो भश्च ’ ( उ. सू. ४. ५६५ ) इति इञ्प्रत्ययो भकारश्चान्तादेशः । ञित्त्वादाद्युदात्तत्वम् । असि । ‘ तासस्त्योर्लोपः ’ इति सलोपः । क्षितीनाम् । ‘ क्षि निवासगत्योः ’ । अस्मात् ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति क्तिच् । अन्तोदात्तात्क्षितिशब्दादुत्तरस्य नामः ‘ नामन्यतरस्याम् ’ इत्युदात्तत्वम् । उपमित् । ‘ डुमिञ् प्रक्षेपणे ’ । अस्मात् उपपूर्वात् बहुलवचनात् कर्मणि क्विप् । तुगागमः । ययन्थ । ‘ यम उपरमे ’ । लिटि थलि क्रादिनियमात् इटि प्राप्ते ‘ उपदेशेऽत्वतः ’ ( पा. सू. ७. २. ६२ ) इति प्रतिषेधः ॥

विषुवत्संज्ञेऽहनि[2] आग्निमारुते ‘ मूर्धा दिवो नाभिरग्निः पृथिव्याः ’ इति वैकल्पिकोऽनुरूपस्तृचः । ‘ विषुवान्दिवाकीर्त्यः ’ इति खण्डे सूत्रितं—‘ मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा ’ ( आश्व. श्रौ. ८. ६ ) इति ॥

---

1. ढ-न-स—पूर्वपदस्य च । २. ढ-स—विषुवत्संज्ञकेऽहनि ।

मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।
तं त्वा देवासोऽजनयन्त देवं वैश्वानर ज्योतिरिदार्याय ॥ २ ॥

मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अर्थ । अभवत् । अरतिः । रोदस्योः ।
तम् । त्वा । देवासः । अजनयन्त । देवम् । वैश्वानर । ज्योतिः । इत् । आर्याय ॥ २ ॥

अयम् ᵛअग्निः ᵛदिवः द्युलोकस्य ᵛमूर्धा शिरोवत्प्रधानभूतो भवति । ᵛपृथिव्याः भूमेश्च ᵛनाभिः संनाहकः रक्षक इत्यर्थः । ᵛअथ अनन्तरं ᵛरोदस्योः द्यावापृथिव्योः अयम् ᵛअरतिः अधिपतिः ᵛअभवत् । हे ᵛवैश्वानर ᵛतं तादृशं ᵛदेवं दानादिगुणयुक्तं ᵛत्वा त्वां ᵛदेवासः सर्वे देवाः ᵛआर्याय विदुषे मनवे यजमानाय वा ᵛज्योतिरित् ज्योतीरूपमेव ᵛअजनयन्त उदपादयन् ॥ मूर्तमस्मिन्धीयते इति मूर्धा ( निरु. ७. २७ )। 'श्वन्नुक्षन्°' इत्यादौ निपातनात् रूपसिद्धिः । पृथिव्याः । पृथिवीशब्दः 'षिद्गौरादिभ्यश्च' इति ङीष्प्रत्ययान्तः अन्तोदात्तः । अजनयन्त । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥

आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥

आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना । वसूनि ।
या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि । तस्य । राजा ॥ ३ ॥

ᵛअग्ना ᵛवैश्वानरे अग्नौ ᵛवसूनि धनानि ᵛआ ᵛदधिरे आहितानि स्थापितानि बभूवुः । तत्र दृष्टान्तः । ᵛध्रुवासः निश्चलाः ᵛरश्मयः किरणाः ᵛसूर्ये ᵛन यथा सूर्ये आधीयन्ते तद्वत् । अतस्त्वं पर्वतादिषु यानि धनानि विद्यन्ते ᵛतस्य धनजातस्य ᵛराजा ᵛअसि अधिपतिर्भवसि ॥ अग्ना । 'सुपां सुलुक्°' इति विभक्तेः डादेशः । या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । ओषधीषु । 'उष दाहे'। ओषः पाकः । भावे घञ् । ञित्त्वादाद्युदात्तत्वम् । ओष आसु धीयते इति ओषधयः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । सप्तमीबहुवचने 'ओषधेश्च विभक्तावप्रथमायाम्' ( पा. सू. ६. ३. १३२ ) इति दीर्घः । अप्सु । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् ॥

बृहतीइव सूनवे रोदसी गिरो होता मनुष्यो न दक्षः ।
स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥ ४ ॥

बृहती इवेति बृहतीऽइव । सूनवे । रोदसी इति । गिरः । होता । मनुष्यः । न । दक्षः ।
स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ॥ ४ ॥

रोदसी द्यावापृथिव्यौ सूनवे स्वपुत्राय वैश्वानराय बृहतीइव प्रभूते इवाभूताम्। वैश्वानरस्य द्यावापृथिव्योः पुत्रत्वं मन्त्रान्तरे स्पष्टमवगम्यते– ‘ उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ’ ( ऋ. सं. ३. ३. ११ ) इति। महतो वैश्वानरस्य अवस्थानाय[1] द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः। किंचायं होता दक्षः समर्थः पूर्वीः बहुविधाः यह्वीः महतीः गिरः स्तुतीः वैश्वानराय अग्नये प्रायुङ्क्तेति शेषः। कीदृशाय। स्वर्वते शोभनगमनयुक्ताय सत्यशुष्माय अवितथबलाय नृतमाय अतिशयेन सर्वेषां नेत्रे। तत्र दृष्टान्तः। मनुष्यो न। यथा मनुष्यो लौकिको वन्दी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत्॥ मनुष्यः। ‘ मनोर्जातावञ्यतौ षुक्च ’ इति जातौ गम्यमानायां मनुशब्दात् यत् षुगागमश्च। ‘ तित्स्वरितम् ’ इति स्वरितत्वम्। ‘ यतोऽनावः ’ इत्याद्युदात्तत्वं न भवति। तत्र हि द्व्यच् इति अनुवर्तते। स्वर्वते। सुपूर्वात् अर्तेः भावे विच्। ततो मतुप्। ‘ मादुपधायाः° ’ इति वत्वम्॥

दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम्।
राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ॥ ५॥

दिवः। चित्। ते। बृहतः। जातऽवेदः। वैश्वानर। प्र। रिरिचे। महिऽत्वम्।
राजा। कृष्टीनाम्। असि। मानुषीणाम्। युधा। देवेभ्यः। वरिवः। चकर्थ॥ ५॥

हे जातवेदः जातानां वेदितः वैश्वानर अग्ने ते तव महित्वं माहात्म्यं बृहतः महतः दिवश्चित् द्युलोकादपि प्र रिरिचे प्रववृधे। किंच त्वं मानुषीणां मनोर्जातानां कृष्टीनां प्रजानां राजा असि अधिपतिर्भवसि। तथा वरिवः असुरैरपहृतं धनं युधा युद्धेन देवेभ्यः चकर्थ देवाधीनमकार्षीः॥ वैश्वानर। पादादित्वात् आष्टमिकनिघाताभावः। रिरिचे। ‘ रिचिर् विरेचने ’। अत्रोपसर्गवशात् तद्विपरीते आधिक्ये वर्तते। कृष्टीनाम्। ‘ नामन्यतरस्याम् ’ इति नाम उदात्तत्वम्। मानुषीणाम्। मानुषशब्दः ‘ मनोर्जातौ° ’ इति अञ्प्रत्ययान्तः। जातिलक्षणे ङीषि प्राप्ते तदपवादतया ‘ शार्ङ्गरवाद्यञः° ’ इति ङीन्। नित्त्वादाद्युदात्तत्वम्। ‘ ङ्याश्छन्दसि बहुलम् ’ ( पा. सू. ६. १. १७८ ) इति बहुलवचनात् नाम उदात्तस्याभावः[2]। युधा। ‘ युध संप्रहारे ’ इत्यस्मात् संपदादिलक्षणो भावे क्विप्। वरिवः इति धननाम। ‘ नब्विषयस्य° ’ इत्याद्युदात्तत्वम्॥

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत्॥ ६॥

प्र। नु। महिऽत्वम्। वृषभस्य। वोचम्। यम्। पूरवः। वृत्रऽहनम्। सचन्ते।
वैश्वानरः। दस्युम्। अग्निः। जघन्वान्। अधूनोत्। काष्ठाः। अव। शम्बरम्। भेत्॥६॥

अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते। पूरवः इति मनुष्यनाम। पूरवः मनुष्याः वृत्रहणम् आवरकस्य मेघस्य हन्तारं यं वैश्वानरं सचन्ते वर्षार्थिन

---

१. ढ–अवस्थापनाय। २. ढ–उदात्तत्वाभावः।

सेवन्ते तस्य वृषभस्य अपां वर्षितुर्वैश्वानरस्य महित्वं माहात्म्यं नु क्षिप्रं प्र वोचं प्रब्रवीमि। किं तदित्यत आह। अयं वैश्वानरः अग्निः दस्युं रसानां कर्मणां वा उपक्षयितारं[1] राक्षसादिकं जघन्वान् हतवान्। तथा काष्ठाः अपो वृष्ट्युदकानि अधूनोत् अधोमुखान्यपातयत्। शम्बरं तन्निरोधकारिणं मेघम् अव भेत् अवाभिनत्॥ वोचम्। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेः अङादेशः। 'वच उम्' इति उमागमः। गुणः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। जघन्वान्। हन्तेर्लिटः क्वसुः। 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हकारस्य घत्वम्। 'विभाषा गमहन°' इति विकल्पनात् इडभावः। भेत्। 'भिदिर् विदारणे'। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'हल्ङ्याब्भ्यः°' इति तकारस्य लोपः। पूर्ववत् अडभावः। अत्र निरुक्तं—'प्र ब्रवीमि तन्महित्वं महाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम्' (निरु. ७. २३) इति॥ अत्रेदं चिन्तनीयम्। कोऽसौ वैश्वानर इति। तत्र केचिदाहुः। मध्यमस्थानस्थो वायुरिन्द्रो वा वैश्वानरः। तस्य हि वर्षकर्मणा संस्तव उपपद्यते; न त्वग्नेः पृथिवीस्थानत्वादिति। अन्ये त्वेवं मन्यन्ते। द्युस्थानः सूर्यो वैश्वानर इति। युक्तिं चाहुः। प्रातःसवनादीनि त्रीणि सवनानि लोकत्रयात्मकानि। तत्र तृतीयसवनं प्राप्तो यजमानः स्वर्गं प्राप्त[2] इति[2] पृथिव्याः प्रच्युतो भवेत्। तत्प्रच्युतिपरिहाराय आग्निमारुतेऽन्तिमे शस्त्रे होता स्वर्गात् भूमिं प्रत्यवरोहति। कथमिति तदुच्यते। इतरशस्त्रवत् स्तोत्रियतृचेन प्रारम्भमुक्त्वा द्युस्थानसंबन्धिना वैश्वानरीयेण सूक्तेन शस्त्रं प्रारभते। ततो मध्यमस्थानसंबन्धिनं रुद्रं मरुतश्च प्रति तद्देवत्यसूक्तपाठेनावरोहति। तत्र पृथिवीस्थानमग्निम्। यद्यत्र वैश्वानरः सूर्यो न स्यात् तदानीमवरोहो नोपपद्यते। तदेतन्मतद्वयमप्यनुपपन्नम्। अयमेवाग्निर्वैश्वानरः। कुतः। वैश्वानरशब्दनिर्वचनानुरोधात्। विश्वेषां नराणां लोकान्तरं प्रति नेतृतया संबन्धी वैश्वानरः। तथा चाम्नातं—'वैश्वानर पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोकाः' इति। यद्वा। विश्वे सर्वे नरा एनमग्निं यज्ञादौ प्रीणयन्तीति तत्संबन्धाद्वैश्वानरः। यद्वा। विश्वान् सर्वान् प्राणिनः प्रस्यृतो गच्छतः इति विश्वानरौ मध्यमोत्तमौ। 'ऋ गतौ' इत्यस्मात् पचाद्यच्। लुगभावश्छान्दसः। ताभ्यामुत्पन्नत्वादयमग्निर्वैश्वानरः। वैद्युतोऽग्निर्हि मध्यमसकाशात् जायते। अशनिपतनानन्तरमयमेव पार्थिवोऽग्निः संपद्यते। आदित्यसकाशादपि घर्मकाले सूर्यकान्तादिमणिष्वग्नेरुत्पत्तिः प्रसिद्धा। तस्मान्नामनिर्वचनानुरोधेनायमेवाग्निर्वैश्वानर इत्येतदुपपन्नम्। अस्यापि वर्षकर्मणा स्तुतिः संभवति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनु. ३. ७६) इति स्मरणात्। प्रत्यवरोहोऽपि न कर्तव्यः। तृतीयसवनस्य भाक्तस्वर्गत्वात्[3]। एतत्सर्वं यास्केन 'वैश्वानरः कस्मात्' (निरु. ७. २१) इत्यादिना बहुधा प्रपञ्चितम्। अत्र यदनुक्तं तत्सर्वं तत्रैवानुसंधेयम्॥

वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा।
शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान्॥ ७॥

वैश्वानरः। महिम्ना। विश्वऽकृष्टिः। भरत्ऽवाजेषु। यजतः। विभाऽवा।
शातऽवनेये। शतिनीभिः। अग्निः। पुरुऽनीथे। जरते। सूनृताऽवान्॥ ७॥

---

१. ढ-द-ध-न—उपक्षपयितारम्। २. ढ—प्राप्नुते इति। ३. स—व्याकृतस्वर्गत्वात्।

ᵛवैश्वानरः अग्निः ᵛमहिम्ना महत्त्वेन ᵛविश्वकृष्टिः। कृष्टिः इति मनुष्यनाम। विश्वे सर्वे मनुष्या यस्य स्वभूताः स तथोक्तः। ᵛभरद्वाजेषु पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु यद्वा एतत्संज्ञेषु ऋषिषु ᵛयजतः यष्टव्यः ᵛविभावा विशेषेण प्रकाशयिता ᵛसूनृतावान्। सूनृता प्रिया[1] सत्या वाक्[1] तद्युक्तः। एवंभूतः ᵛअग्निः ᵛशातवनेये। शतसंख्याकान् क्रतून् वनति संभजते इति शतवनिः तस्य पुत्रः शातवनेयः। तस्मिन् ᵛपुरुणीथे बहूनां नेतरि एतत्संज्ञके राजनि च ᵛशतिनीभिः बहुभिः[2] स्तुतिभिः ᵛजरते स्तूयते॥ भरद्वाजेषु। भरन्ति पोषयन्ति भोक्तॄनिति भरन्तः। तादृशा वाजा येषु। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। यजतः। 'भृमृदृशियजिपर्वपच्यमितमिनमिहर्येभ्योऽतच्' (उ. सू. ३. ३९०) इति यजतेः अतच्प्रत्ययः। विभावा। 'भा दीप्तौ'। 'आतो मनिन्°' इति वनिप्। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। शातवनेये। 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः शतवनिशब्दः। 'इतश्चानिञः' (पा. सू. ४. १. १२२) इति ढक्। 'कितः' (पा. सू. ६. १. १६५) इत्यन्तोदात्तत्वम्। शतिनीभिः। शतशब्दात् मत्वर्थीय इनिः। 'ऋन्नेभ्यः°' इति ङीप्। पुरुणीथे। 'पूर्वपदात्संज्ञायामगः' (पा. सू. ८. ४. ३) इति णत्वम्। जरते। व्यत्ययेन कर्मणि कर्तृप्रत्ययः॥ ॥२५॥

'वह्निम्' इति पञ्चर्चं तृतीयं सूक्तं नोधस आर्षं त्रैष्टुभमाग्नेयम्। अनुक्रान्तं च—'वह्निं पञ्च' इति। प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसीदं सूक्तमाश्विने शस्त्रे च। तथा च सूत्रितं—'वह्निं यशसमुप प्र जिन्वन्निति त्रीणि' (आश्व. श्रौ. ४. १३) इति॥

वह्निं॑ य॒शसं॑ वि॒दथ॑स्य के॒तुं सु॑प्रा॒व्यं॑ दू॒तं स॒द्योअ॑र्थम्।
द्वि॒जन्मा॑नं र॒यिमि॑व प्रश॒स्तं रा॒तिं भ॑र॒द्भृग॑वे मा॒तरि॑श्वा॥ १॥

वह्नि॑म्। य॒शस॑म्। वि॒दथ॑स्य। के॒तुम्। सु॒प्र॒ऽअ॒व्य॑म्। दू॒तम्। स॒द्यःऽअ॑र्थम्।
द्वि॒ऽजन्मा॑नम्। र॒यिम्ऽइ॑व। प्र॒ऽश॒स्तम्। रा॒तिम्। भ॒र॒त्। भृग॑वे। मा॒तरि॑श्वा॥ १॥

ᵛवह्निं हविषां वोढारं ᵛयशसं यशस्विनं ᵛविदथस्य ᵛकेतुं यज्ञस्य प्रकाशयितारं ᵛसुप्राव्यं सुष्ठु प्रकर्षेण रक्षितारं ᵛदूतं देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तं ᵛसद्योअर्थं यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान् गन्तारम्। यद्वा। सद्यः अर्थम् अरणं गमनं यस्य तम्। ᵛद्विजन्मानं द्वयोर्द्यावापृथिव्योररण्योर्वा जायमानं ᵛरयिमिव धनमिव ᵛप्रशस्तं प्रख्यातम् एवंभूतमग्निं ᵛमातरिश्वा वायुः ᵛभृगवे एतत्संज्ञकाय महर्षये ᵛरातिं ᵛभरत् मित्रमहरत्। अकरोदित्यर्थः। 'रातिना संभाष्य' (आप. गृ. १२. १४) इत्यत्र रातिर्मित्रमिति[3] कपर्दिनोक्तम्। रातिः पुत्र इत्येके। एतदर्थप्रतिपादकं मन्त्रान्तरं च भवति—'रातिं भृगूणामुशिजं कविक्रतुम्' (ऋ. सं. ३. २. ४) इति। वह्निम्। 'वहिश्रियुश्रुग्लाहात्वरिभ्यो नित्' इति वहतेर्निप्रत्ययः। नित्त्वाबादाद्युदात्तत्वम्। यशसम्। यशस्शब्दात् उत्तरस्य विनो लुक्। व्यत्ययेनान्तोदात्तत्वम्। यद्वा। अर्शआदित्वात् अच्। स्वरः पूर्ववत्। सुप्राव्यम्। सुष्ठु प्रकर्षेणावति रक्षतीति सुप्रावीः। उपसर्गद्वयोपसृष्टात् अवतेः 'अवितृस्तृतन्त्रिभ्य ईः' (उ. सू. ३. ४३८) इति ईकारप्रत्ययः। 'वा छन्दसि' इति 'अमि पूर्वः' इत्यस्य विकल्पे सति यणादेशः। 'उदात्तस्वरितयोर्यणः°' इति स्वरितत्वम्। सद्योअर्थम्। 'उषिकुषिगार्तिभ्यस्थन्' इति

१. ढ—प्रियसत्यात्मिका वाक्; स—प्रियसत्या वाक्। २. ढ—बहुविधाभिः। ३. ढ—रातिर्मित्रमिति हि।

अर्तेः कर्तरि थन्प्रत्ययः । सद्य एवार्थो गन्ता सद्योअर्थः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यदि तु 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (पा. सू. ६. २. २. ३) इति अव्ययग्रहणेन त्रितयं गृह्येत तर्हि बहुव्रीहिस्वरो भविष्यति । मातरिश्वा । सर्वनिर्माणहेतुत्वात् माता अन्तरिक्षम् । श्वसितिरत्र गतिकर्मा । मातरि अन्तरिक्षे श्वसिति गच्छतीति मातरिश्वा । 'श्वन्नुक्षन्°' इत्यादौ निपातनात् रूपसिद्धिः । यद्वा । मातरि अन्तरिक्षे शु आशु असति गच्छतीति मातरिश्वा । 'अस गतिदीप्त्यादानेषु' इत्यस्मात् औणादिको ड्वन्प्रत्ययः । एतच्च यास्केनोक्तम् (निरु. ७. २६) ॥

अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।
दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ॥ २ ॥

अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः । उशिजः । ये । च । मर्ताः ।
दिवः । चित् । पूर्वः । नि । असादि । होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥२॥

ᵛशासुः शासितुः ᵛअस्य अग्नेः ᵛउभयासः उभयेऽपि देवा मनुष्याश्च । यद्वा । स्तुतिभिः स्तोतारो यज्ञैर्यजमानाश्च इममग्निं शासितारं ᵛसचन्ते सेवन्ते । ᵛउशिजः कामयमाना देवाः ᵛहविष्मन्तः हविषा युक्ताः ᵛये ᵛच ᵛमर्ताः मरणधर्माणो यजमानाः । यद्वा । उशिजः इति मेधाविनाम । उशिजः मेधाविनः स्तोतारो हविष्मन्तः हविर्युक्ताः मर्ताः यजमानाः । किंच अयं ᵛहोता होमनिष्पादकोऽग्निः ᵛदिवश्चित् आदित्यादपि ᵛपूर्वः उषःसु[1] वर्तमानो भूत्वा अग्निहोत्रहोमार्थं ᵛविक्षु यजमानेषु ᵛन्यसादि अध्वर्युणा अग्न्यायतने न्यधायि स्थाप्यते । कीदृशो होता । ᵛआपृच्छ्यः आप्रष्टव्यः पूज्य इत्यर्थः । ᵛविश्पतिः विशां प्रजानां पालयिता ᵛवेधाः विधाताभिमतफलस्य कर्ता ॥ शासुः । 'शासु अनुशिष्टौ' । 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' (उ. सू. २. २५०) इति तृन् इडागमाभावश्च । षष्ठ्येकवचने तकारलोपश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । उशिजः । 'वशः कित्' (उ. सू. २. २२९) इति वष्टेः इजिप्रत्ययः । ग्रहिज्यादिना संप्रसारणम् । मर्ताः । 'मृङ् प्राणत्यागे' । 'असिहसिमृग्रिण्वामि°' इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । आपृच्छ्यः । 'प्रच्छ ज्ञीप्सायाम्' । आङ्पूर्वात् अस्मात् 'छन्दसि निष्टर्क्य°' (पा. सू. ३. १. १२३) इत्यादौ[2] क्यप्प्रत्ययो निपातितः । ग्रहिज्यादिना संप्रसारणम् । क्यपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । विश्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ॥

तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥ ३ ॥

तम् । नव्यसी । हृदः । आ । जायमानम् । अस्मत् । सुऽकीर्तिः । मधुऽजिह्वम् । अश्याः ।
यम् । ऋत्विजः । वृजने । मानुषासः । प्रयस्वन्तः । आयवः । जीजनन्त ॥ ३ ॥

---

1. ढ–उषसि । 2. ढ–इत्यादिना ।

ᵛनव्यसी नवतरा ᵛसुकीर्तिः सुष्ठु कीर्तिरियं ᵛअस्मत् अस्माकं स्तुतिः ᵛहृदः हृदयस्थितात् प्राणात् ᵛजायमानम् उत्पद्यमानम्। अग्निर्हि वायोरुत्पद्यते[1] वायुश्च प्राण एव। 'यः प्राणः स वायुः' इत्याम्नानात्। ᵛमधुजिह्वं मादयितृज्वालम्। एवंभूतं ᵛतम् अग्निम् ᵛआ ᵛअश्याः आभिमुख्येन व्याप्नोतु। ᵛवृजने संग्रामे प्राप्ते सति ᵛआयवः मनुष्याः ᵛयम् अग्निं ᵛजीजनन्त यज्ञार्थमुदपादयन्। कीदृशा मनुष्याः। ᵛऋत्विजः ऋतौ काले यष्टारः ᵛमानुषासः मनोः पुत्राः ᵛप्रयस्वन्तः हविर्लक्षणान्नोपेताः॥ नव्यसी। नवीयसीत्यत्र ईकारलोपश्छान्दसः। हृदः। अत्र हृदयशब्देन तत्स्थः प्राणो लक्ष्यते। 'पद्दन्°' इत्यादिना हृदयशब्दस्य हृदादेशः। जायमानम्। 'जनी प्रादुर्भावे'। श्यनि 'ज्ञाजनोर्जा' इति जादेशः। अनुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम्। अस्मत्। 'सुपां सुलुक्°' इति विभक्तेर्लुक्। अश्याः। 'अशू व्याप्तौ'। लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। व्यत्ययेन परस्मैपदमध्यमौ। जीजनन्त। 'जनी प्रादुर्भावे'। ण्यन्तात् लुङि च्लेः चङादेशः। द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः। अनुपदेशात् लसार्वधातुकानुदात्तत्वे चङ एव स्वरे प्राप्ते व्यत्ययेन अभ्यस्ताद्युदात्तत्वम्॥

**उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु।**
**दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम्॥ ४॥**

उशिक्। पावकः। वसुः। मानुषेषु। वरेण्यः। होता। अधायि। विक्षु।
दमूनाः। गृहऽपतिः। दमे। आ। अग्निः। भुवत्। रयिऽपतिः। रयीणाम्॥ ४॥

ᵛउशिक् कामयमानः ᵛपावकः शोधकः ᵛवसुः निवासयिता ᵛवरेण्यः वरणशीलः[2] एवंभूतः ᵛहोता अग्निः ᵛविक्षु यज्ञगृहं प्रविष्टेषु ᵛमानुषेषु यजमानेषु ᵛअधायि स्थाप्यते। स च ᵛअग्निः ᵛदमूनाः रक्षसां दमनकरेण मनसा युक्तः ᵛगृहपतिः गृहाणां पालयिता च सन् ᵛदमे यज्ञगृहे ᵛरयिपतिः धनाधिपतिः ᵛआ ᵛभुवत् आ समन्ताद्भवति। न केवलमेकस्य रयेरपि तु सर्वेषामित्याह ᵛरयीणाम् इति। यद्वा। रयीणां मध्ये उत्कृष्टं यद्धनं तस्य पतिरित्यर्थः॥ अधायि। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लुङि च्लेः चिणादेशे 'आतो युक् चिण्कृतोः' इति युगागमः। दमयति राक्षसादिकमिति दमूनाः। 'दम उपशमे'। 'दमेरूनसिः (उ. सू. ४. ६७४) इति औणादिक ऊनसिप्रत्ययः। यास्कस्त्वाह—'दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात्' (निरु. ४. ४) इति। दम आँ अग्निः। 'आङोऽनुनासिकश्छन्दसि' इति आकारस्य सानुनासिकत्वं प्रकृतिभावश्च। भुवत्। लेटि अडागमः। 'इतश्च लोपः°' इति इकारलोपः। रयिपतिः। 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। रयीणाम्। 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्॥

---

१. ढ-स—वायोरुत्पद्यते। वायोरग्निरिति श्रुतेः। २. ढ—वरणीयः।

तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः ।
आशुं न वाजंभरं मर्जयन्तः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥

तम् । त्वा । वयम् । पतिम् । अग्ने । रयीणाम् । प्र । शंसामः । मतिऽभिः । गोतमासः ।
आशुम् । न । वाजम्ऽभरम् । मर्जयन्तः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ५ ॥

ᵛगोतमासः गोतमगोत्रोत्पन्नाः ᵛवयम् । नोधसः स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनम् । हे ᵛअग्ने ᵛरयीणां धनानां ᵛपतिं रक्षितारं तादृशं ᵛत्वा त्वां ᵛमतिभिः मननीयैः स्तोत्रैः ᵛप्र ᵛशंसामः प्रकर्षेण स्तुमः । किं कुर्वन्तः । ᵛवाजंभरं वाजस्य हविर्लक्षणान्नस्य भर्तारं त्वां ᵛमर्जयन्तः मार्जयन्तः । तत्र दृष्टान्तः । ᵛआशुं ᵛन अश्वमिव । यथाश्वमारोहन्तः पुरुषास्तस्य वहनप्रदेशं हस्तैर्निमृजन्ति तद्वत् वयमपि अग्नेर्हविर्वहनप्रदेशं निमृजन्तः इत्यर्थः । तथा च अग्निसंमार्जनप्रकरणे वाजसनेयिभिराम्नातम्— 'अथ मध्ये[1] तूष्णीमेव त्रिः संमार्ष्टि यथा युक्त्वा प्रेहि वहेति व्रजेदेवमेतदग्निं युक्त्वोपक्षिपति प्रेहि देवेभ्यो हव्यं वह' इति । ᵛधियावसुः कर्मणा बुद्ध्या वा प्राप्तधनः सोऽग्निः ᵛप्रातः श्वोभूतस्य[2] अह्नः प्रातःकाले ᵛमक्षु शीघ्रं ᵛजगम्यात् आगच्छतु ॥ मतिभिः । 'मन ज्ञाने' इत्यस्मात् कर्मणि क्तिन् । 'मन्त्रे वृषेष°' इत्यादिना तस्योदात्तत्वम् । वाजंभरम् । अग्नेरेषा वैदिकी संज्ञा । 'संज्ञायां भृतृवृजि°' (पा. सू. ३. २. ४६) इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' (पा. सू. ६. ३. ६७) इति मुमागमः । 'चितः' इत्यन्तोदात्तत्वम् । मर्जयन्तः । संज्ञापूर्वकस्य विधेरनित्यत्वात् 'मृजेर्वृद्धिः' (पा. सू. ७. २. ११४) इति वृद्ध्यभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । जगम्यात् । लिङि 'बहुलं छन्दसि' इति शपः श्लुः ॥ ॥२६॥

'अस्मा इदु प्र तवसे' इति षोडशर्चं चतुर्थं सूक्तं नोधस आर्षमैन्द्रं त्रैष्टुभम् । अनुक्रान्तं च— 'अस्मा इदु षोळश' इति । अस्य सूक्तस्य नोधा द्रष्टा इत्येतद्ब्राह्मणे समाम्नायते—'अस्मा इदु प्र तवसे तुरायेति नोधास्त एते प्रातःसवने' (ऐ. ब्रा. ६. १८) इति । षळहस्तोत्रियावापवत्सु चतुर्विंशमहाव्रतादिष्वहःसु माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे 'ब्रह्मणा ते ब्रह्मयुजा' इत्यस्या आरम्भणीयाया ऊर्ध्वमहीनसूक्तसंज्ञमेतच्छंसनीयम् । तथा च सूत्रितम्— 'अस्मा इदु प्र तवसे शासद्वह्निरितीतरावहीनसूक्ते' (आश्व. श्रौ. ७. ४) इति । ब्राह्मणं च भवति—'त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यंदिनेऽहीनसूक्तानि शंसन्ति' इति ॥

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।
ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥ १ ॥

अस्मै । इत् । ऊँ इति । प्र । तवसे । तुराय । प्रयः । न । हर्मि । स्तोमम् । माहिनाय ।
ऋचीषमाय । अध्रिऽगवे । ओहम् । इन्द्राय । ब्रह्माणि । रातऽतमा ॥ १ ॥

---

१. ढ—मध्यमे । २. ढ—सुत्यस्य ।

ᵛइत् ᵛउ इति निपातद्वयं पादपूरणे[1]। 'अथापि पादपूरणाः[2] कमीमिद्विति' इति यास्कः। यद्वा अवधारणार्थम्। ᵛतवसे प्रवृद्धाय ᵛतुराय त्वरमाणाय। यद्वा। तुर्विने शत्रूणां हिंसित्रे। ᵛमाहिनाय गुणैर्महते ᵛऋचीषमाय ऋचा समाय। यादृशी स्तुतिः क्रियते तत्समायेत्यर्थः। ᵛअध्रिगवे अधृतगमनाय। अप्रतिहतगमनायेत्यर्थः। तथा च यास्कः—'अधृतगमनकर्मवन्निन्द्रोऽप्यध्रिगुरुच्यते' (निरु. ५. ११) इति। एवंभूताय ᵛअस्मै ᵛइन्द्राय ᵛस्तोमं स्तोत्रं ᵛप्र ᵛहर्मि प्रहरामि करोमीत्यर्थः। तत्र दृष्टान्तः। ᵛप्रयो ᵛन। प्रयः इति अन्ननाम। यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति। कीदृशं स्तोमम्। ᵛओहं वहनीयं प्रापणीयं वा। अत्यन्तोत्कृष्टमित्यर्थः। न केवलं स्तोमं किं तर्हि ᵛब्रह्माणि हविर्लक्षणान्यन्नानि। कीदृशानि। ᵛराततमा पूर्वैर्यजमानैरतिशयेन दत्तानि। इन्द्रं स्तुत्या हविषा च परिचरेमेति भावः॥ तुराय। 'तुर त्वरणे'। इगुपधलक्षणः कः। यद्वा। तुर्वी हिंसार्थः। तुर्वतीति तुरः। पचाद्यचि छान्दसो वलोपः। हर्मि। 'हृञ् हरणे'। 'बहुलं छन्दसि' इति शपो लुक्। माहिनाय। 'मह पूजायाम्' इत्यस्मात् 'महेरिनण् च' (उ. सू. २. २१४) इति इनण्प्रत्ययः उपधावृद्धिश्च। ऋचीषमाय। 'ऋचीषम ऋचा समः' (निरु. ६. २३) इति यास्कः। 'तृतीया तत्कृत°' (पा. सू. २. १. ३०) इति समासः। तृतीयापूर्वपदप्रकृतिस्वरत्वम्। पृषोदरादित्वात् ईकारोपजनः। सुषामादित्वात् षत्वम्। केचिदाहुः। 'ऋच स्तुतौ' इत्यस्मात् 'इगुपधात्कित्' इति इन्प्रत्ययः। 'कृदिकारादक्तिनः' इति ङीप्। ऋची स्तुतिः। तया समः। पूर्ववत् षत्वम्। अस्मिन् पक्षे तृतीयापूर्वपदप्रकृतिस्वरत्वे सति ङीष उदात्तत्वेन भवितव्यम्। तथा च न दृश्यते। तस्मात् स्वरश्चिन्तनीयः। यद्वा। दिवोदासादिर्द्रष्टव्यः। अध्रिगवे। अधृतोऽन्येन अनिवारितो गौर्गमनं यस्य स तथोक्तः। 'गोस्त्रियोरुपसर्जनस्य' (पा.सू १.२.४८) इति ह्रस्वत्वम्। पृषोदरादित्वात् अधृतशब्दस्य अध्रिभावः। ओहम्। वहतेः कर्मणि घञि छान्दसं संप्रसारणम्। यद्वा। 'तुहिर् दुहिर् उहिर् अर्दने' इत्यस्मात् ओहतेः पूर्ववत् घञ्। राततमा। 'रा दाने' इत्यस्मात् निष्ठान्तादातिशायनिकस्तमप्। 'शेश्छन्दसि°' इति शेर्लोपः॥

अस्मा इदु प्रयइव प्र यंसि भराम्याङ्गूषं बाधे सुवृक्ति।
इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त॥ २॥

अस्मै। इत्। ऊँ इति। प्रयःऽइव। प्र। यंसि। भरामि। आङ्गूषम्। बाधे। सुऽवृक्ति।
इन्द्राय। हृदा। मनसा। मनीषा। प्रत्नाय। पत्ये। धियः। मर्जयन्त॥ २॥

ᵛअस्मा ᵛइदु अस्मै एव इन्द्राय। प्रयः इति अन्ननाम। ᵛप्रयइव अन्नमिव ᵛप्र ᵛयंसि प्रयच्छामि। तदेव स्पष्टीक्रियते। ᵛबाधे शत्रूणां बाधनाय समर्थं ᵛसुवृक्ति सुष्ठावर्जकम् ᵛआङ्गूषं स्तोत्ररूपमाघोषं ᵛभरामि संपादयामि। अन्येऽपि स्तोतारः ᵛप्रत्नाय पुराणाय ᵛपत्ये स्वामिने ᵛइन्द्राय ᵛहृदा हृदयेन ᵛमनसा तदन्तर्वर्तिनान्तःकरणेन ᵛमनीषा मनीषया तज्जन्येन ज्ञानेन च ᵛधियः स्तुतीः कर्माणि वा ᵛमर्जयन्त मार्जयन्ति संस्कुर्वन्ति॥ प्र यंसि। 'यम उपरमे' इत्यस्मात् लटि पुरुषव्यत्ययः। 'बहुलं छन्दसि' इति शपो लुक्। आङ्गूषम्। 'आङ्गूषः स्तोम आघोषः' (निरु. ५. ११) इति यास्कः। आङ्पूर्वात् घुषेः घञि पृषोदरादित्वात् घो इत्यस्य गूआदेशः आङो ङकारस्य लोपाभावश्च। थाथादिना उत्तरपदान्तोदात्तत्वम्। बाधे। 'बाधृ विलोडने' इत्यस्मात् 'कृत्यार्थे तवैकेन्°' इति भावे

1. ढ-न-स–पदपूरणे। 2. ढ-न-स–पदपूरणाः।

केन्प्रत्ययः। एजन्तत्वात् अव्ययत्वेन सुपो लुक्। मनीषा। 'सुपां सुलुक्॰' इति तृतीयाया डादेशः। पत्ये। 'पतिः समास एव' (पा. सू. १. ४. ८) इति घिसंज्ञायाः समासविषयत्वात् 'घेर्ङिति' इति गुणाभावे यणादेशः॥

अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन।
मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै॥ ३॥

अस्मै। इत्। ऊँ इति। त्यम्। उपऽमम्। स्वःऽसाम्। भरामि। आङ्गूषम्। आस्येन।
मंहिष्ठम्। अच्छोक्तिऽभिः। मतीनाम्। सुवृक्तिऽभिः। सूरिम्। ववृधध्यै॥ ३॥

अस्मा इदु अस्मै एव इन्द्राय त्यं तं प्रसिद्धम् उपमम् उपमानहेतुभूतं स्वर्षां सुष्ठुरणीयस्य धनस्य दातारं सूरिं विपश्चितमिन्द्रं ववृधध्यै वर्धयितुं सुवृक्तिभिः सुष्ठ्वावर्जकैः। समर्थैरित्यर्थः। मतीनां स्तुतीनां संबन्धिभिः अच्छोक्तिभिः स्वच्छैर्वचोभिः मंहिष्ठम् अतिशयेन प्रवृद्धमेवंलक्षणम् आङ्गूषम् आघोषम् आस्येन मुखेन भरामि करोमीत्यर्थः॥ उपमम्। उपमीयतेऽनेनेति उपमः। 'घञर्थे कविधानम्॰' इति करणे कप्रत्ययः। 'आतो लोप इटि च' इति आकारलोपः। स्वर्षाम्। सुपूर्वात् अर्तेः विजन्तः स्वर्शब्दः। 'षणु दाने'। 'जनसनखनक्रमगमो विट्'। 'विड्वनोरनुनासिकस्यात्' इति आत्वम्। 'सनोतेरनः' (पा. सू. ८. ३. १०८) इति षत्वम्। भरामि। पादादित्वात् निघाताभावः। अच्छोक्तिभिः। अच्छा उक्तयो येषाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। मतीनाम्। 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्। ववृधध्यै। 'वृधु वृद्धौ' इत्यस्मात् अन्तर्भावितण्यर्थात् 'तुमर्थे सेसेन्॰' इति कध्यैप्रत्ययः। कित्त्वात् गुणाभावः। द्विर्भावश्छान्दसः। यद्वा यङ्लुगन्तादस्मिन्प्रत्यये आगमानुशासनस्यानित्यत्वात् रीगाद्यभावः[1]। 'अन्येषामपि दृश्यते' इति सांहितिकम् अभ्यासस्य दीर्घत्वम्। प्रत्ययाद्युदात्तत्वम्॥

अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय।
गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय॥ ४॥

अस्मै। इत्। ऊँ इति। स्तोमम्। सम्। हिनोमि। रथम्। न। तष्टाऽइव। तत्ऽसिनाय।
गिरः। च। गिर्वाहसे। सुऽवृक्ति। इन्द्राय। विश्वम्ऽइन्वम्। मेधिराय॥ ४॥

अस्मै एव इन्द्राय स्तोमं शस्त्ररूपं स्तोत्रं सं हिनोमि प्रेरयामि। तत्र दृष्टान्तः। तत्सिनाय। सिनम् इति अन्ननाम। 'सिनमन्नं भवति सिनाति भूतानि' (निरु. ५. ५) इति यास्कः। तेन रथेन सिनमन्नं यस्य स तथोक्तः। तस्मै रथस्वामिने तष्टेव तष्टा तक्षको रथनिर्माता रथं न यथा रथं प्रेरयति तद्वत्। इव इत्येतत् पादपूरणम्। तथा गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमानाय इन्द्राय गिरश्च शस्त्रसंबन्धिनीः केवला ऋचश्च सुवृक्ति शोभनमावर्जनं यथा भवति तथा प्रेरयामि। तथा मेधिराय

---

1. इ—रिगाद्यभावः।

मेधाविने इन्द्राय विश्वमिन्वं विश्वव्यापकं विश्वैर्व्याप्तं[1] सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषङ्गः ॥ हिनोमि । ‘ हि गतौ वृद्धौ च ’। स्वादित्वात् श्नुः । तष्टेव । ‘ तक्षू त्वक्षू तनूकरणे ’। ताच्छीलिकस्तृन् । ऊदित्वात् पक्षे इडभावः । ‘ स्कोः संयोगाद्योरन्ते च ’ इति ककारलोपः । नित्त्वादाद्युदात्तत्वम् । तत्सिनाय । सिनशब्दः ‘ षिञ् बन्धने ’ इत्यस्मात् ‘ इण्षिञ्जिदीङुष्यविभ्यो नक् ’ ( उ. सू. ३. २८२ ) इति नक्प्रत्ययान्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । गिर्वाहसे । ‘ वहिहाधाञ्भ्यश्छन्दसि ’ इति वहतेः केवलाद्विहितः असुन्प्रत्ययः ‘ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ’ इति वचनात् कारकपूर्वस्यापि भवति पूर्वपदप्रकृतिस्वरत्वं च । ‘ णित् ’ इत्यनुवृत्तेः उपधावृद्धिः । ‘ हलि च ’ इति दीर्घाभावश्छान्दसः । विश्वमिन्वम् । ‘ इवि व्याप्तौ ’ । विश्वमिन्वति व्याप्नोतीति विश्वमिन्वम् । पचाद्यच् । लुगभावश्छान्दसः । यद्वा । खच्प्रत्ययो बहुलवचनादस्मादपि धातोर्द्रष्टव्यः । मेधिराय । मेधा अस्यास्तीति मेधिरः । ‘ मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ’ ( पा. सू. ५. २. १०९. ३ ) इति मत्वर्थीय इरन् । नित्त्वादाद्युदात्तत्वम् ॥

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥ ५ ॥

अस्मै । इत् । ऊँ इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे ।
वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ॥ ५ ॥

अस्मै एव इन्द्राय अर्कं स्तुतिरूपं मन्त्रं श्रवस्या श्रवस्यया अन्नेच्छया । अन्नलाभायेत्यर्थः । जुह्वा आह्वानसाधनेन वागिन्द्रियेण समञ्जे समक्तं करोमि । एकीकरोमीत्यर्थः । तत्र दृष्टान्तः । सप्तिमिव । यथा अन्नलाभाय गन्तुकामः पुमानश्वं रथेनैकीकरोति तद्वत् । एकीकृत्य च वीरं शत्रुक्षेपणकुशलं दानौकसं दानानामेकनिलयं गूर्तश्रवसं प्रशस्यान्नं पुराम् असुरपुराणां दर्माणं विदारयितारं एवंगुणविशिष्टमिन्द्रं वन्दध्यै वन्दितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः ॥ सप्तिमिव । ‘ षप समवाये ’। समवैति रथेनैकीभवतीति सप्तिरश्वः । ‘ वसस्तिप् ’ ( उ. सू. ४. ६१९ ) इति विधीयमानः तिप्प्रत्ययः बहुलवचनादस्मादपि धातोर्भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । इवेन समास उक्तः । श्रवस्या । श्रवस्शब्दात् ‘ सुप आत्मनः क्यच् ’। क्यजन्तात् धातोः भावे ‘ अ प्रत्ययात् ’ ( पा. सू. ३. ३. १०२ ) इति अकारप्रत्ययः । ततः टाप् । ‘ सुपां सुलुक्° ’ इति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । अर्कम् । ‘ ऋच स्तुतौ ’। ऋच्यते स्तूयतेऽनेनेति अर्को मन्त्रः । ‘ पुंसि संज्ञायां घः प्रायेण ’ इति करणे घप्रत्ययः । ‘ चजोः कु घिण्ण्यतोः ’ इति कुत्वम् । लघूपधगुणः । प्रत्ययस्वरः । जुह्वा । ‘ बहुलं छन्दसि ’ इति कृतसंप्रसारणस्य ह्वेञः ‘ हुवः श्लुवच्च ’ ( उ. सू. २.२१८ ) इति क्विप् धातोर्दीर्घश्च । धातुस्वरेणान्तोदात्तत्वम् । तृतीयैकवचने ‘ उदात्तस्वरितयोर्यणः° ’ इति स्वरितत्वम् । ‘ उदात्तयणो हल्पूर्वात् ’ इत्यस्य विभक्त्युदात्तत्वस्य ‘ नोङ्धात्वोः ’ (पा. सू. ६. १. १७५) इति प्रतिषेधः । अञ्जे । ‘ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ’। व्यत्ययेन आत्मनेपदम् । वन्दध्यै । ‘ वदि अभिवादनस्तुत्योः ’। ‘ तुमर्थे सेसेन्° ’ इति कध्यैप्रत्ययः । गूर्तश्रवसम् । ‘ गॄ शब्दे ’। निष्ठायां ‘ श्युकः किति ’ इति इट्प्रतिषेधः । ‘ बहुलं छन्दसि ’ इति उत्वम् । ‘ हलि च ’

---

१. ढ–‘ विश्वैर्व्याप्तम् ’ नास्ति ।

इति दीर्घः । 'नसत्तनिपत्त॰' ( पा. सू. ८. २. ६१ ) इत्यादौ निपातनात् निष्ठानत्वाभावः । गूर्तं श्रवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । दर्माणम् । 'दॄ विदारणे' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'नेड्वशि कृति' इति इट्प्रतिषेधः । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । यद्वा । औणादिको मनिप्रत्ययो द्रष्टव्यः ॥ ॥ २७ ॥

अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।

वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥ ६ ॥

अस्मै । इत् । ऊँ इति । त्वष्टा । तक्षत् । वज्रम् । स्वपःऽतमम् । स्वर्यम् । रणाय ।

वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥ ६ ॥

ᵛत्वष्टा विश्वकर्मा ᵛअस्मा ᵛइदु अस्मै एवेन्द्राय ᵛवज्रं वर्जकमायुधं ᵛरणाय युद्धार्थं ᵛतक्षत् तीक्ष्णमकरोत् । कीदृशं वज्रम् । ᵛस्वपस्तमम् अतिशयेन शोभनकर्माणं ᵛस्वर्यं सुष्ठु शत्रुषु प्रेर्यं यद्वा स्तुत्यम् । ᵛतुजन् शत्रून् हिंसन् ᵛईशानः ऐश्वर्यवान् ᵛकियेधाः बलवान् एवंगुणविशिष्ट इन्द्रः ᵛवृत्रस्य ᵛचित् आवरकस्यासुरस्य[1] ᵛमर्म मर्मस्थानं ᵛतुजता हिंसता ᵛयेन वज्रेण ᵛविदत् प्राहार्षी- दित्यर्थः ॥ स्वपस्तमम् । शोभनमपः कर्म यस्यासौ । अतिशयेन स्वपाः स्वपस्तमः । तमपः पित्त्वादनु- दात्तत्वम् । 'सोमनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । स्वर्यम् । 'स्वर्यं ततक्ष' ( ऋ. सं. १. ३२. २ ) इत्यत्रोक्तम् । विदत् । 'विद्लृ लाभे' । लृदित्त्वात् च्लेः अङादेशः । 'बहुलं छन्दस्य- माङ्योगेऽपि' इति अडभावः । यद्वृत्तयोगादनिघातः । तुजन् । 'तुज हिंसायाम्' । शपि प्राप्ते व्यत्ययेन शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । ईशानः । 'ईश ऐश्वर्ये' । शानचि अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । तुजता । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् । कियेधाः । अत्र निरुक्तं--'कियेधाः कियद्धा इति वा क्रममाणधा इति वा' ( निरु. ६. २० ) इति । अस्यायमभिप्रायः । कियत् किंपरिमाणमित्यस्य[2] बलस्य तादृशं बलं दधाति धारयतीति कियद्धाः । यः कोऽप्यस्य बलस्येयत्तां न जानातीत्यर्थः । यद्वा । क्रममाणमाक्रममाणं परेषां बलं धारयति निवारयतीति क्रममाणधाः । उभयत्रापि पृषोदरादित्वात् पूर्वपदस्य कियेभावः । दधातेर्विच् ॥

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।

मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥ ७ ॥

अस्य । इत् । ऊँ इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना ।

मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥ ७ ॥

ᵛइत् ᵛउ इत्येतत् निपातद्वयं पादपूरणम्[3] । यद्वा अवधारणार्थम् । ᵛमातुः वृष्टिद्वारेण सकलस्य जगतो निर्मातुः ᵛमहः महतः ᵛअस्य यज्ञस्य ᵛसवनेषु अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु

१. ढ--आवरकस्याप्यसुरस्य । २. ढ--किंपरिमाणमस्य । ३. ढ--न-स-पदपूरणम् ।

<sup>v</sup>पितुं सोमलक्षणमन्नं <sup>v</sup>सद्यः <sup>v</sup>पपिवान्। यदाग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः। तथा <sup>v</sup>चार्वन्ना चारूणि शोभनानि धानाकरम्भादिरूविलक्षणान्यन्नानि भक्षितवानिति शेषः। किंच <sup>v</sup>विष्णुः सर्वस्य जगतो व्यापकः <sup>v</sup>पचतं परिपक्वमसुराणां धनं यदस्ति तत् <sup>v</sup>मुषायत् अपहरन् <sup>v</sup>सहीयान् अतिशयेन शत्रूणामभिभविता <sup>v</sup>अद्रिमस्ता अद्रेर्वज्रस्य क्षेपकः। एवंभूत इन्द्रः 'तिरः'[1] सत इति प्राप्तस्य' (निरु. ३. २०) इति यास्कः। <sup>v</sup>तिरः प्राप्तः सन् <sup>v</sup>वराहं मेघं <sup>v</sup>विध्यत् अताडयत्। यद्वा। विष्णुः सुत्यादिवसात्मकः[2] यज्ञः। 'यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा' (तै. सं. ६.२.४.२) इत्याम्नानात्। स विष्णुः पचतं परिपक्वमसुरधनं यत्तत् मुषायत् अवूवुरत्। तदनन्तरं दीक्षोपसदात्मनां दुर्गरूपाणां सप्तानामह्नां परस्तादासीत्। अद्रिमस्ता सहीयानिन्द्रो दुर्गाण्यतीत्य तिरः प्राप्तः सन् वराहमुत्कृष्टदिवसरूपं तं यज्ञं विध्यत्। तथा च तैत्तिरीयकं—'वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति' इति, 'स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्' (तै. सं. ६. २. ४. २-३) इति च॥ महः महतः। अच्छन्दलोपश्छान्दसः। यद्वा। मह इत्येतत् पितुविशेषणम्। महः प्रशस्तं पितुमित्यर्थः। पपिवान्। पिबतेर्लिटः क्वसुः। 'वस्वेकाजाद्घसाम्' इति इडागमः। 'आतो लोप इटि च' इति आकारलोपः। प्रत्ययस्वरः। चारु। 'सुपां सुलुक्°' इति विभक्तेर्लुक्। मुषायत्। 'मुष स्तेये'। 'घञर्थे कविधानम्°' इति भावे कप्रत्ययः। मुषमात्मन इच्छति। 'सुप आत्मनः क्यच्'। 'न च्छन्दस्यपुत्रस्य' इति ईत्ववत् दीर्घस्यापि प्रतिषेधे व्यत्ययेन दीर्घः। अस्मात् क्यजन्तात् लटः शतृ। आगमानुशासनस्यानित्यत्वात् नुमभावः। द्वितीयपक्षे तु क्यजन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। अत्र स्तेयेच्छया तदुत्तरभाविनी क्रिया लक्ष्यते। पचतम्। 'भृमृदृशि°' इत्यादिना पचतेः अतच्प्रत्ययः। चित्त्वादन्तोदात्तत्वम्। विध्यत्। 'व्यध ताडने'। लङि दिवादित्वात् श्यन्। तस्य ङित्त्वात् ग्रहिज्यादिना संप्रसारणम्। श्यनो नित्त्वादाद्युदात्तत्वम्। पादादित्वात् निघाताभावः। वराहम्। वरमुदकमाहारो यस्य। यद्वा। वरमाहरतीति वराहारः सन् पृषोदरादित्वात् वराह इत्युच्यते। अत्र निरुक्तं—'वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्' (निरु. ५. ४) इति। यज्ञपक्षे तु वरं च तदहो वराहः। 'राजाहःसखिभ्यः°' (पा. सू. ५. ४. ९१) इति समासान्तः टच्प्रत्ययः। चित्त्वादन्तोदात्तत्वम्। अस्ता। 'असु क्षेपणे' इत्यस्मात् साधुकारिणि 'तृन्' (पा. सू. ३. २. १३५)। इडभावश्छान्दसः। 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः॥

अ॒स्मा इदु॒ ग्नाश्चि॑द्दे॒वप॑त्नी॒रिन्द्रा॑या॒र्कम॑हि॒हत्य॑ ऊवुः।
परि॒ द्यावा॑पृथि॒वी ज॑भ्र उ॒र्वी नास्य॒ ते म॑हि॒मानं॒ परि॑ ष्टः॥ ८॥

अ॒स्मै। इत्। ऊँ इति॑। ग्नाः। चि॒त्। दे॒वऽप॑त्नीः। इन्द्रा॑य। अ॒र्कम्। अ॒हि॒ऽहत्ये॑। ऊ॒वु॒रित्यू॑वुः।
परि॑। द्यावा॑पृथि॒वी इति॑। ज॒भ्रे॒। उ॒र्वी इति॑। न। अ॒स्य॒। ते इति॑। म॒हि॒मान॑म्। परि॑। स्त॒ इति॑ स्तः॥८॥

अस्मै एव इन्द्राय <sup>v</sup>अहिहत्ये अहेर्वृत्रस्य हनने निमित्तभूते सति <sup>v</sup>ग्नाश्चित् गमनस्वभावा अपि स्थिताः <sup>v</sup>देवपत्नीः देवानां पालयित्र्यो गायत्र्याद्या देवताः <sup>v</sup>अर्कम् अर्चनसाधनं स्तोत्रम् <sup>v</sup>ऊवुः समतन्वत चक्रुरित्यर्थः। स च इन्द्रः <sup>v</sup>उर्वी विस्तृते <sup>v</sup>द्यावापृथिवी द्यावापृथिव्यौ <sup>v</sup>परि <sup>v</sup>जभ्रे

१. स–तिरः। तिरः। २. ह–सुत्यादिदिवसात्मकः।

स्वतेजसा परिजहार अतिचक्रामेत्यर्थः । ते द्यावापृथिव्यौ ᵛअस्य इन्द्रस्य ᵛमहिमानं न ᵛपरि ᵛष्टः न परिभवतः ॥ ऊवुः । ' वेञ् तन्तुसंताने ' । लिटि ' वेञो वयिः ' ( पा. सू. २. ४. ४१ ) । लिटः किंत्त्वात् यजादित्वेन संप्रसारणे क्रियमाणे यकारस्य ' लिटि वयो यः ' ( पा. सू. ६. १. ३८ ) इति प्रतिषेधात् वकारस्य संप्रसारणं परपूर्वत्वं द्विर्वचनादि । ' वश्चास्यान्यतरस्यां किति ' ( पा. सू. ६. १. ३९ ) इति यकारस्य वकारादेशः । जभ्रे । ' हृञ् हरणे ' । लिटि ञित्त्वात् कर्त्रभिप्राये आत्मनेपदम् । ' हृग्रहोर्भः° ' इति भत्वम् । उर्वी । उरुशब्दात् ' वोतो गुणवचनात् ' इति ङीप् । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । स्तः । अस्तेर्लटि रूपम् । उपसर्गप्रादुर्भ्यामिति षत्वं सांहितिकम् ॥

अ॒स्येदे॒व प्र रि॑रिचे महि॒त्वं दि॒वस्पृ॑थि॒व्याः पर्य॒न्तरि॑क्षात् ।

स्व॒राळिन्द्रो॒ दम॒ आ वि॒श्वगू॑र्तः स्व॒रिरम॑त्रो ववक्षे॒ रणा॑य ॥ ९ ॥

अ॒स्य । इत् । ए॒व । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वम् । दि॒वः । पृ॒थि॒व्याः । परि॑ । अ॒न्तरि॑क्षात् ।

स्व॒ऽराट् । इन्द्रः॑ । दमे॑ । आ । वि॒श्वऽगू॑र्तः । सु॒ऽअ॒रिः । अम॑त्रः । व॒व॒क्षे॒ । रणा॑य ॥ ९ ॥

ᵛअस्येदेव । इत् इति पादपूरणः । अस्यैवेन्द्रस्य ᵛमहित्वं माहात्म्यं ᵛप्र ᵛरिरिचे अतिरिच्यते । अधिकं भवतीत्यर्थः । अत्रोपसर्गो धात्वर्थस्य निवृत्तिमाचष्टे । यथा प्रस्मरणं प्रस्थानमिति । कुतः सकाशात् प्ररिरिचे इत्यत आह । ᵛदिवः द्युलोकात् ᵛपृथिव्याः भूलोकात् ᵛअन्तरिक्षात् द्यावापृथिव्योर्मध्ये वर्तमानादन्तरिक्षलोकाच्च । ᵛपरि उपर्यर्थः । त्रीन् लोकानतीत्योपरि प्ररिरिचे इत्यर्थः । ᵛदमे दमयितव्ये विषये ᵛस्वराट् स्वेनैव तेजसा राजमानः ᵛविश्वगूर्तः विश्वस्मिन् सर्वस्मिन् कार्ये उद्गूर्णः समर्थः । यद्वा विश्वं सर्वमायुधं गूर्तम् उद्यतं यस्य स तथोक्तः । ᵛस्वरिः शोभनशत्रुकः । शोभने शत्रौ हन्तव्ये सति हन्ता वीर्यवत्तम इति गम्यते । यथा ' अकवारिं दिव्यं शासमिन्द्रम् ' ( ऋ. सं. ३. ४७. ५) इति । अकुत्सितारिमिति हि तस्यार्थः । ᵛअमत्रः युद्धादिषु गमनकुशलः । मात्रया इयत्तया रहितो वा । ' अमत्रोऽमात्रो महान्भवत्यभ्यमितो वा ' ( निरु. ६. २३ ) इति यास्कः । एवंभूतः ᵛइन्द्रः ᵛरणाय रणं युद्धम् ᵛआ ᵛववक्षे आवहति मेघान् प्रापयति । मेघैः परस्परयुद्धं[1] कारयित्वा वृष्टिं चकारेति भावः । यद्वा । युद्धाय स्वकीयान् भटान् गमयति ॥ अस्य । ' ऊडिदम्° ' इति विभक्तेरुदात्तत्वम् । रिरिचे । ' रिचिर् विरेचने ' । ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने कर्मणि लिट् । पृथिव्याः । ' उदात्तयणः° ' इति विभक्तेरुदात्तत्वम् । स्वराट् । ' राजृ दीप्तौ ' इत्यस्मात् ' सत्सूद्विष° ' इति क्विप् । व्रश्चादिना षत्वे जश्त्वम् । दमे । ' दम उपशमे ' इत्यस्मात् कर्मणि घञि ' नोदात्तोपदेशस्य मान्तस्यानाचमेः ' ( पा. सू. ७. ३. ३४ ) इति वृद्धिप्रतिषेधः । घञो ञित्त्वादाद्युदात्तत्वम् । विश्वगूर्तः । ' गॄ निगरणे ' । अस्मात् निष्ठायां ' श्र्युकः किति ' इति इट्प्रतिषेधः । ' बहुलं छन्दसि ' इति उत्वम् । ' हलि च ' इति दीर्घः । यद्वा । ' गूरी उद्यमे ' । अस्मात् निष्ठा । ' नसत्तनिषत्त° ' इत्यादौ निपातनात् निष्ठानत्वाभावः । तत्पुरुषपक्षे मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । बहुव्रीहिपक्षे तु ' बहुव्रीहौ विश्वं संज्ञायाम् ' इति असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । अमत्रः । ' अम गत्यादिषु ' । ' अमिनक्षियजिबन्धि° ' इत्यादिना औणादिकः अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । ववक्षे । वहेर्लेटि ' सिब्बहुलं लेटि ' इति सिप् । ' बहुलं छन्दसि ' इति शपः श्लुः । ढत्वकत्वषत्वानि । ' लोपस्त

१. ढ–न–परस्परं युद्धम् ।

आत्मनेपदेषु ' इति तलोपः । रणाय । ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानत्वाच्चतुर्थी । यद्वा । ' गत्यर्थकर्मणि° ' ( पा. सू. २. ३. १२ ) इति चतुर्थी ॥

अस्येदेव शवसा शुषन्तं वि वृश्चद्वज्रेण वृत्रमिन्द्रः ।
गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥ १० ॥

अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण । वृत्रम् । इन्द्रः ।
गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि । श्रवः । दावने । सऽचेताः ॥ १० ॥

अस्यैवेन्द्रस्य Vशवसा बलेन Vशुषन्तं शुष्यन्तं Vवृत्रम् Vइन्द्रः Vवज्रेण Vवि Vवृश्चत् व्यच्छिनत् । तथा Vगा Vन चौरैरपहृताः[1] गाव इव Vव्राणाः वृत्रेणावृताः Vअवनीः रक्षणहेतुभूता अपः Vअमुञ्चत् अवर्षीत् । तथा Vदावने हविर्दात्रे यजमानाय Vसचेताः तेन यजमानेन समानचित्तः सन् Vश्रवः कर्मफलभूतमन्नम् Vअभि आभिमुख्येन ददातीति शेषः ॥ शुषन्तम् । ' शुष शोषणे ' । श्यनि प्राप्ते व्यत्ययेन शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते । व्राणाः । ' वृञ् वरणे ' । कर्मणि लटः शानचि ' बहुलं छन्दसि ' इति यको लुक् । शानचो ङित्त्वाद्गुणाभावे यणादेशः । अवनीः । अवतेः करणे ' अर्तिसृधृधमि° ' ( उ. सू. २. २५९ ) इत्यादिना अनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । दावने । 'आतो मनिन्° ' इति वनिप् । चतुर्थ्येकवचने अल्लोपाभावश्छान्दसः ॥ ॥ २८ ॥

अस्येदु त्वेषसा रन्त सिन्धवः परि यद्वज्रेण सीमयच्छत् ।
ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥

अस्य । इत् । ऊँ इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् । वज्रेण । सीम् । अयच्छत् ।
ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधम् । तुर्वणिः । करिति कः ॥ ११ ॥

अस्यैवेन्द्रस्य Vत्वेषसा दीप्तेन बलेन Vसिन्धवः समुद्राः । यद्वा । गङ्गाद्याः सप्त नद्यः Vरन्त स्वे स्वे स्थाने रमन्ते । Vयत् यस्मात् अयमिन्द्रः Vवज्रेण Vसीम् एनान् सिन्धून् वज्रेण Vपरि Vअयच्छत् परितो नियमितवान् । अपि च Vईशानकृत् वृत्रादिशत्रुवधेनात्मानमैश्वर्यवन्तं कुर्वन् इन्द्रः Vदाशुषे हविर्दत्तवते यजमानाय फलं Vदशस्यन् प्रयच्छन् Vतुर्वणिः तूर्णसंभजनः । ' तुर्वणिस्तूर्णवनिः ' ( निरु. ६. १४ ) इति यास्कः । यद्वा । तुर्विता शत्रूणां हिंसिता । एवंभूत इन्द्रः Vतुर्वीतये एतत्संज्ञाय[2] उदके निमग्नाय ऋषये[3] Vगाधम् अवस्थानयोग्यं धिष्ण्यप्रदेशं Vकः अकार्षीत् ॥ रन्त । ' रमु क्रीडायाम् ' । छान्दसे लङि बहुवचने ' बहुलं छन्दसि ' इति शपो लुक् । धातोरन्त्यलोपश्छान्दसः । अयच्छत् । ' यम उपरमे ' । ' इषुगमियमां छः ' इति छत्वम् । कः । करोतेर्लुङि ' मन्त्रे घसह्वरणश° ' ( पा. सू. २. ४. ८० ) इत्यादिना च्लेर्लुक् । गुणः । हल्ङ्यादिना तलोपः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः ॥

---

१. ढ.–चोरैरपहृताः । २. ढ–एतत्संज्ञकाय । ३. ढ–स–राज्ञे ।

अ॒स्मा इदु॒ प्र भ॑रा॒ तूतु॑जानो वृ॒त्राय॒ वज्र॒मीशा॑नः किये॒धाः ।
गोर्न पर्व॒ वि र॑दा तिर॒श्चेष्य॒न्नर्णां॑स्य॒पां च॒रध्यै॑ ॥ १२ ॥

अ॒स्मै । इत् । ऊँ इति॑ । प्र । भ॒र॒ । तूतु॑जानः । वृ॒त्राय॑ । वज्र॑म् । ईशा॑नः । कि॒ये॒धाः ।
गोः । न । पर्व॑ । वि । र॒द॒ । ति॒र॒श्चा । इष्य॑न् । अर्णां॑सि । अ॒पाम् । च॒रध्यै॑ ॥ १२ ॥

तूतुजानः इति क्षिप्रनाम । ᵛतूतुजानः त्वरमाणः । यद्वा । शत्रून् हिंसन् । ᵛईशानः ईश्वरः सर्वेषां ᵛकियेधाः कियतोऽनवधृतपरिमाणस्य बलस्य धाता । यद्वा । क्रममाणं शत्रुबलं दधात्यवस्थापयतीति कियेधाः । हे इन्द्र एवंभूतस्त्वम् ᵛअस्मै ᵛवृत्राय ᵛवज्रं ᵛप्र ᵛभर । इमं वृत्रं वज्रेण प्रहरेत्यर्थः । प्रहृत्य च ᵛअर्णांसि वृष्टिजलानि ᵛइष्यन् तस्मात् वृत्राद्गमयंस्त्वम् ᵛअपां ᵛचरध्यै तासामपां चरणाय भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य ᵛपर्व पर्वाण्यवयवसंधीन् ᵛतिरश्चा तिर्यगवस्थितेन वज्रेण ᵛवि ᵛरद विलिख । छिन्द्धीत्यर्थः । तत्र दृष्टान्तः । ᵛगोर्न । यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत् । अत्र निरुक्तम्–‘ अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय ’ ( निरु. ६. २० ) इति ॥ भर । ‘ हृग्रहोर्भः°’ इति भत्वम् । ‘ द्व्यचोऽतस्तिङः°’ इति सांहितिको दीर्घः । तूतुजानः । ‘ तुज हिंसायाम् ’ । कानचि ‘ तुजादीनां दीर्घोऽभ्यासस्य ’ इति अभ्यासस्य दीर्घत्वम् । ‘ छन्दस्युभयथा ’ इति कानचः सार्वधातुकत्वे सति ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । कियेधाः । ‘ तुजता कियेधाः ’ ( ऋ. सं. १. ६१. ६ ) इत्यत्रोक्तम् । रद । ‘ रद विलेखने ’ । ‘ तिङ्ङतिङः ’ इति निघातः । तिरश्चा । तिरोऽञ्चतीति तिर्यङ् । ‘ ऋत्विक्° ’ इत्यादिना क्विन् । ‘ अनिदिताम्° ’ इति नलोपः । तृतीयैकवचने भसंज्ञायाम् ‘ अचः ’ इति अकारलोपः । श्चुत्वेन सकारस्य शकारः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । इष्यन् । ‘ इष गतौ ’ इत्यस्मात् अन्तर्भावितण्यर्थात् शतरि ‘ दिवादिभ्यः श्यन् ’ । तस्य नित्त्वादाद्युदात्तत्वम् । चरध्यै । ‘ तुमर्थे सेसेन्° ’ इति चरतेः अध्यैप्रत्ययः ॥

अ॒स्येदु॒ प्र ब्रू॑हि पू॒र्व्याणि॑ तु॒रस्य॒ कर्मा॑णि॒ नव्य॑ उ॒क्थैः ।
यु॒धे यदि॑ष्णा॒न आयु॑धान्यृघा॒यमा॑णो निरि॒णाति॒ शत्रू॑न् ॥ १३ ॥

अ॒स्य । इत् । ऊँ इति॑ । प्र । ब्रू॒हि॒ । पू॒र्व्याणि॑ । तु॒रस्य॑ । कर्मा॑णि । नव्यः॑ । उ॒क्थैः ।
यु॒धे । यत् । इ॒ष्णा॒नः । आयु॑धानि । ऋ॒घा॒यमा॑णः । नि॒ऽरि॒णाति॑ । शत्रू॑न् ॥ १३ ॥

ᵛउक्थैः शस्त्रैः ᵛनव्यः स्तुत्यो य इन्द्रः ᵛअस्येदु अस्यैव ᵛतुरस्य युद्धार्थं त्वरमाणस्येन्द्रस्य ᵛपूर्व्याणि पुराणानि ᵛकर्माणि एतत्कृतानि बलकर्माणि हे स्तोतः ᵛप्र ᵛब्रूहि प्रशंस । ᵛयत् यदा ᵛयुधे योधनाय ᵛआयुधानि वज्रादीनि ᵛइष्णानः आभीक्ष्ण्येन प्रेरयन् ᵛशत्रून्[1] ᵛऋघायमाणः हिंसंश्चेन्द्रः[2] ᵛनिरिणाति अभिमुखं[3] गच्छति[3] । तदानीं प्र ब्रूहीति पूर्वेण संबन्धः । पूर्व्यम् इति पुराणनाम । ‘ पूर्व्यम् अह्नाय ’ ( नि. ३. ७. ५ ) इति पुराणनामसु[4] पाठात् ॥ तुरस्य । ‘ तुर त्वरणे ’ । इगुपधलक्षणः कः ।

---

१. ढ–‘ शत्रून् ’ नास्ति । २. ढ-स–हिंसक इव आचरन् इन्द्रः शत्रून् । ३. ढ-स–नितराम् उपक्षपयति । ४. ढ–तन्नामसु ।

नव्यः । ‘ णु स्तुतौ ’ । ‘ अचो यत् ’ इति यत् । गुणः । ‘ धातोस्तन्निमित्तस्यैव ’ इति अवादेशः । इष्णानः । ‘ इष आभीक्ष्ण्ये ’ । क्रैयादिकः । व्यत्ययेन आत्मनेपदम् । शानचः चित्त्वादन्तोदात्तत्वम् । ऋघायमाणः[1] । ‘ नहि त्वा रोदसि उभे ऋघायमाणम् ’ ( ऋ. सं. १. १०. ८ ) इत्यत्र व्युत्पादितम्[1] । निरिणाति । ‘री गतिरेषणयोः’ । ‘ क्र्यादिभ्यः श्ना ’ । ‘ प्वादीनां ह्रस्वः’ इति ह्रस्वत्वम् । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः शिष्यते[2] । ‘ तिङि चोदात्तवति ’ इति गतेः निघातः । यद्वृत्तयोगात् ‘ तिङ्ङतिङः ’ इति निघाताभावः ॥

अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।
उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥ १४ ॥

अस्य । इत् । ऊँ इति । भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेते इति । उपो इति । वेनस्य । जोगुवानः । ओणिम् । सद्यः । भुवत् । वीर्याय । नोधाः ॥ १४ ॥

अस्यैवेन्द्रस्य[3] ^v^भिया[3] पक्षच्छेदभयेन ^v^गिरयः पर्वता अपि ^v^दृळ्हाः निश्चलाः स्वस्वदेशेऽवतिष्ठन्ते । ^v^जनुषः प्रादुर्भूतादस्मादेवेन्द्रात् भीत्या ^v^द्यावा ^v^भूमा ^v^च द्यावापृथिव्यावपि ^v^तुजेते । तुजिर्हिंसार्थोऽप्यत्र कम्पने द्रष्टव्यः । कम्पेते इत्यर्थः । किंच ^v^वेनस्य कान्तस्यास्य ^v^ओणिं दुःखस्यापनायकं रक्षणम् ^v^उपो ^v^जोगुवानः अनेकैः सूक्तैः पुनःपुनरुपशब्दयन् उपश्लोकयन्नित्यर्थः । एवंभूतः ^v^नोधाः ऋषिः ^v^सद्यः तदानीमेव ^v^वीर्याय ^v^भुवत् वीर्यवानभवत् ॥ द्यावा च भूमा । द्यावा भूमेत्यनयोर्मध्ये चशब्दस्य पाठश्छान्दसः । ‘दिवो द्यावा’ इति दिव्शब्दस्य द्यावादेशः । ‘ सुपां सुलुक्°’ इति विभक्तेः डादेशः । ‘ देवताद्वन्द्वे च ’ इति उभयपदप्रकृतिस्वरत्वम् । पदद्वयप्रसिद्धिरपि सांप्रदायिकी । जनुषः । ‘जनी प्रादुर्भावे’ । ‘जनेरुसिः’ ( उ. सू. २. २७२. ) इति औणादिक उसिप्रत्ययः । जोगुवानः । ‘ गुङ् अव्यक्ते शब्दे ’ । अस्मात् यङ्लुगन्तात् व्यत्ययेन शानच् । ‘ अदादिवच्च ’ इति वचनात् शपो लुक् । उवङादेशः । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । ओणिम् । ‘ ओणृ अपनयने ’ । अस्मात् औणादिक इप्रत्ययः । भुवत् । भवतेर्लेटि अडागमः । ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘भूसुवोस्तिङि’ इति गुणप्रतिषेधः । नोधाः । ‘ नोधा ऋषिर्भवति नवनं दधाति ’ ( निरु. ४. १६ ) इति यास्कः । तस्मात् धाञः असुन् नवशब्दस्य नोभावश्च ॥

अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥ १५ ॥

अस्मै । इत् । ऊँ इति । त्यत् । अनु । दायि । एषाम् । एकः । यत् । वव्ने । भूरेः । ईशानः । प्र । एतशम् । सूर्ये । पस्पृधानम् । सौवश्व्ये । सुस्विम् । आवत् । इन्द्रः ॥ १५ ॥

---

१. ढ–ऋघायमाणः । ऋघ इव आचरति इत्यर्थे क्यच् । शानचो लसार्वधातुकानुदात्तत्वे क्यच्स्वरः । २. ढ–एव शिष्यते । ३. च-फ–अस्येदु भिया अस्यैवेन्द्रस्य ।

$^v$एकः एक एव शत्रून् जेतुं समर्थः $^v$भूरेः बहुविधस्य धनस्य $^v$ईशानः स्वामी $^v$यत् स्तोत्रं $^v$वव्रे ययाचे $^v$एषां स्तोतॄणां संबन्धि । यद्वा । विभक्तिव्यत्ययः । एतैः $^v$त्यत् तत्प्रसिद्धं स्तोत्रम् अस्मै इन्द्राय $^v$अनु $^v$दायि अकारीत्यर्थः । उत्तरार्धस्येयमाख्यायिका । स्वश्वो नाम कश्चित् राजा । स च पुत्रकामः सूर्यमुपासांचक्रे । तस्य च सूर्य एव पुत्रो बभूव । तेन सह एतशनाम्नो महर्षेर्युद्धं जातमिति तदेतदिहोच्यते[1] । अयम् $^v$इन्द्रः $^v$सौवश्व्ये स्वश्वपुत्रे $^v$सूर्ये $^v$पस्पृधानं स्पर्धमानं $^v$सुष्विं सोमानामभिषोतारम् $^v$एतशम् एतत्संज्ञकमृषिं $^v$प्र $^v$आवत् प्ररक्षत् ॥ दायि । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । वव्रे । 'वनु याचने' । लिटि व्यत्ययेन उपधालोपः । पस्पृधानम् । 'स्पर्ध संघर्षे' । अस्मात् लिटः कानच् । द्विर्वचने 'शर्पूर्वाः खयः' इति पकारः शिष्यते । धात्वकारस्य लोपो रेफस्य संप्रसारणं च पृषोदरादित्वात् । चित्त्वादन्तोदात्तत्वम् । सौवश्व्ये । स्वश्वः इति जनपदशब्दः क्षत्रिये संज्ञात्वेन वर्तते । 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' (पा. सू. १. १. ७३. ५) इति वृद्धसंज्ञायां 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (पा. सू. ४. १. १७१) इति अपत्यार्थे ञ्यङ्प्रत्ययः । 'न य्वाभ्यां पदान्ताभ्याम्°' (पा. सू. ७. ३. ३) इति वृद्धेः प्रतिषेधः ऐजागमश्च । ञित्त्वादाद्युदात्तत्वम् । सुष्विम् । 'षुञ् अभिषवे' । 'उत्सर्गश्छन्दसि' (पा. सू. ३. २. १७१. २) इति अस्मात् किन्प्रत्ययः । लिड्वद्भावात् द्विर्भावः । यणादेशः । उवङादेशाभावश्छान्दसः ॥

एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।
ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥

एव । ते । हारिऽयोजन । सुऽवृक्ति । इन्द्र । ब्रह्माणि । गोतमासः । अक्रन् ।
आ । एषु । विश्वऽपेशसम् । धियम् । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १६ ॥

हर्योरश्वयोर्योजनं यस्मिन् रथे स तथोक्तः । तस्य स्वामित्वेन संबन्धी हारियोजनः । हे $^v$हारियोजन $^v$इन्द्र $^v$गोतमासः गोतमगोत्रोत्पन्ना ऋषयः $^v$सुवृक्ति सुष्टु आवर्जकान्यभिमुखीकरणकुशलानि $^v$ब्रह्माणि स्तुतिरूपाणि मन्त्रजातानि $^v$ते तव $^v$एव $^v$अक्रन् अकृषत । $^v$एषु स्तोतृषु $^v$विश्वपेशसं बहुविधरूपयुक्तं $^v$धियं $^v$धाः । धिया लभ्यत्वात् धीः धनमुच्यते । यद्वा । धीशब्दः कर्मवचनः । पश्वादिबहुविधरूपं धनम् अग्निष्टोमादिकं बहुविधरूपं कर्म वा $^v$आ धाः । धेहि स्थापय । $^v$प्रातः इदानीमिव परेद्युरपि प्रातःकाले $^v$धियावसुः बुद्ध्या कर्मणा वा प्राप्तधन इन्द्रः $^v$मक्षु शीघ्रं $^v$जगम्यात् अस्मद्रक्षणार्थमागच्छतु ॥ एव[2] । 'निपातस्य च' इति संहितायां दीर्घः । सुवृक्ति । 'सुपां सुलुक्°' इति शसो लुक् । अक्रन् । करोतेर्लुङि 'मन्त्रे घसह्वर°' इत्यादिना च्लेर्लुक् । अन्तादेशः । तस्य ङित्त्वात् गुणाभावे यणादेशः । 'इतश्च' इति इकारलोपे संयोगान्तलोपे च अडागमः । धाः । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङि 'गातिस्था°' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ॥ ॥२९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन[3] विर-
चिते[3] माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

१. ढ–'तदेतदिहोच्यते' नास्ति । २. ढ–एवा ते; स–एवा । ३. च-श–सायणाचार्येण विरचिते; स–सायणाचार्यविरचिते ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाध्याय आरभ्यते । प्रथमे मण्डले एकादशेऽनुवाके चत्वारि सूक्तानि गतानि । 'प्र मन्महे' इत्येतत् त्रयोदशर्चं पञ्चमं सूक्तम् । अत्रानुक्रम्यते[1]—'प्र ससोनेति । अनिरुक्ता संख्या विंशतिः' ( अनु. १२. ४ ) इत्युक्तत्वात् प्र[2] ससोनेत्युक्ते त्रयोदशेत्युक्तं भवति । 'ऋषिश्चान्यस्मात्' इति परिभाषया नोधा ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छन्दः । इन्द्रो देवता । गतः सामान्यविनियोगः । विशेषविनियोगस्तु लिङ्गादवगन्तव्यः ॥

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् ।
सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १ ॥

प्र । मन्महे । शवसानाय । शूषम् । आङ्गूषम् । गिर्वणसे । अङ्गिरस्वत् ।
सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम । अर्कम् । नरे । विऽश्रुताय ॥ १ ॥

vशवसानाय । शव इति बलनाम । तदिवाचरते । यथा बलं शत्रून् हन्ति तथा शत्रूणां हन्तेत्यर्थः । vगिर्वणसे । गीर्भिः स्तुतिलक्षणैर्वचोभिः संभजनीयाय । 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' ( निरु. ६. १४ ) इति यास्कः । एवंभूतायेन्द्राय । शूषमिति सुखनाम । vशूषं सुखहेतुभूतम् । 'आङ्गूषः[3] स्तोम आघोषः' ( निरु. ५. ११ ) इति यास्कः[3] । vआङ्गूषं स्तोत्रम् vअङ्गिरस्वत् अङ्गिरस इव vप्र vमन्महे वयं स्तोतारः प्रकर्षेणावगच्छामः । अवगत्य च vसुवृक्तिभिः सुष्ठावर्जकैः स्तुत्याभिमुखीकरणसमर्थैः स्तोत्रैः vस्तुवते स्तोत्रं कुर्वते ऋषये य इन्द्र ऋग्मियोऽर्चनीयो भवति । यद्वा । कर्मणि कर्तृप्रत्ययः । ऋषिणा स्तूयमानायेत्यर्थः । vनरे सर्वेषां नेत्रे । यद्वा । नरे यजमाने । vविश्रुताय यष्टव्यतया विशेषेण प्रख्याताय । एवंभूताय तस्मै vअर्कं मन्त्ररूपं स्तोत्रम् । 'अर्को मन्त्रो भवति यदेनेनार्चन्ति' ( निरु. ५. ४ ) इति यास्कः । vअर्चाम पूजयाम । उच्चारयामेत्यर्थः ॥ मन्महे । 'मनु अवबोधने' । तनादित्वात् उप्रत्ययः । 'लोपश्चास्यान्यतरस्यां म्वोः' ( पा. सू. ६. ४. १०७ ) इति मकारादौ प्रत्यये उकारलोपः । शवसानाय । शव इवाचरति शवस्यते । अस्मात् लटः शानच् । 'बहुलं छन्दसि' इति शपो लुक् । शानचः 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अतोलोपयलोपौ । 'चितः' इत्यन्तोदात्तत्वम् । ननु क्यङो ङित्त्वात् 'तास्यनुदात्तेत्०' इति शानचोऽनुदात्तेन भवितव्यम् । एवं तर्हि ताच्छीलिकः चानश् । तस्य सार्वधातुकत्वेऽपि लसार्वधातुकत्वाभावात् चितः स्वर एव शिष्यते । शूषम् । 'शूष प्रसवे' । पचाद्यच् । आङ्गूषम् । आङ्पूर्वात् घुषेः पचाद्यचि घो इत्यस्य गूआदेशः पृषोदरादित्वात् । आङो ङकारस्य इत्संज्ञाभावश्छान्दसः । चित्स्वरेणोत्तरपदस्यान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । घञि वा थाथादिना उत्तरपदान्तोदात्तत्वम् । गिर्वणसे । 'गॄ शब्दे' । संपदादिलक्षणो भावे क्विप् । 'ऋत इद्धातोः' इति इत्वम् । गीर्भिर्वन्यते संभज्यते इति गिर्वणाः । औणादिकः कर्मणि

---

१. च-छ-ण-द-फ-ल-श-स–तत्रानुक्रम्यते। २. ढ–'प्र' नास्ति। ३. ढ–'आङ्गूषः...यास्कः' इति नास्ति।

असुन्। संज्ञापूर्वकस्य विधेरनित्यत्वात् ‘ हलि च ’ इति दीर्घाभावः। ‘ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ’ इति वचनात् पूर्वपदप्रकृतिस्वरत्वम्। अङ्गिरस्वत्। ‘ तेन तुल्यम्° ’ इति वतिः। ‘ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ’ ( पा. सू. १. ४. १८. ३ ) इति भसंज्ञायां रुत्वाद्यभावः। प्रत्ययस्वरः। सुवृक्तिभिः। ‘ वृजी वर्जने ’। भावे क्तिन्। ‘ तितुत्र° ’ इति इट्प्रतिषेधः। शोभनमावर्जनं येषाम्। ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम्। ननु क्तिनन्तस्योत्तरपदस्याद्युदात्तत्वात् ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इति वचनादुत्तरपदाद्युदात्तत्वं प्राप्नोति। एवं तर्हि तत्पुरुषोऽस्तु। शोभनमावर्जितो भवत्येभिरिति सुवृक्तयः स्तोत्राणि। करणे क्तिन्। ‘ तादौ च निति° ’ इति गतेः प्रकृतिस्वरत्वे प्राप्ते ‘ मन्क्तिन्° ’ इत्यादिना कारकादुत्तरस्य क्तिनो विहितमुत्तरपदान्तोदात्तत्वमकारकादपि व्यत्ययेन भवति। स्तुवते। ‘ शतुरनुमः° ’ इति विभक्तेरुदात्तत्वम्। ऋग्मियाय। ‘एकाचो नित्यं मयटमिच्छन्ति ’ (का.४. ३. १४४) इति ऋक्शब्दात् विकारार्थे मयट्। ‘ स्वादिष्वसर्वनामस्थाने ’ ( पा. सू. १. ४. १७ ) इति पदसंज्ञायां कुत्वजश्त्वे। व्यत्ययेन इत्वम्। यद्वा। ‘ ऋच स्तुतौ ’ इत्यस्मात् भावे मक्। बहुलवचनात् कुत्वं जश्त्वं च। ऋग्मं स्तुतिमर्हतीति ऋग्मियः। अर्हार्थे घच्। ‘ चितः ’ इत्यन्तोदात्तत्वम्। अर्चाम। ‘ अर्च पूजायाम् ’। भौवादिकः। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। अर्कम्। अर्च्यतेऽनेनेत्यर्कः। ‘ पुंसि संज्ञायां घः प्रायेण ’ इति घप्रत्ययः। ‘ चजोः कु घिण्ण्यतोः ’ इति कुत्वम्। नरे। नृशब्दात् चतुर्थ्येकवचने गुणश्छान्दसः। विश्रुताय। ‘ श्रु श्रवणे ’। कर्मणि निष्ठा। ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम्॥

**प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्यं॑ शवसा॒नाय॒ साम॑।**
**येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन्॥ २॥**

प्र। वः॒। म॒हे। महि॑। नमः॑। भ॒र॒ध्व॒म्। आ॒ङ्गू॒ष्य॑म्। श॒व॒सा॒नाय॑। साम॑।
येन॑। नः॒। पूर्वे॑। पि॒तरः॑। प॒द॒ऽज्ञाः। अर्च॑न्तः। अङ्गि॑रसः। गाः। अवि॑न्दन्॥ २॥

हे ऋत्विजः ᵛवः यूयं ᵛमहे महते ᵛशवसानाय बलमिवाचरते। अतिबलायेत्यर्थः। उत्तरवाक्ये यच्छब्दश्रुतेः तच्छब्दाध्याहारः[1]। एवंभूताय तस्मै इन्द्राय ᵛमहि महत् प्रौढं ᵛनमः स्तोत्रं ᵛप्र ᵛभरध्वं प्रकर्षेण संपादयत। किं तत् स्तोत्रमित्याह[2]। ᵛआङ्गूष्यं ᵛसाम आघोषयोग्यं रथन्तरादिसाम। तन्निष्पाद्यतामित्यर्थः[3]। ‘ अभि त्वा शूर ’ ( ऋ. सं. ७. ३२. २२ ) इत्यादिषु ऋक्षु यद्गानं तस्य सामेत्याख्या। तथा चोक्तं– ‘ गीतिषु सामाख्या ’ ( जै. सू. २. १. ३६) इति। ᵛयेन इन्द्रेण ᵛनः अस्माकं ᵛपितरः पितृविशेषाः ᵛपूर्वे पूर्वपुरुषाः ᵛअङ्गिरसः पणिनाम्नासुरेणापहृतानां गवां ᵛपदज्ञाः मार्गज्ञाः सन्तोऽत एव ᵛअर्चन्तः तं पूजयन्तः ᵛगा ᵛअविन्दन् अलभन्त॥ वः। प्रथमार्थे द्वितीया। पदज्ञाः। पदानि जानन्तीति। ‘ आतोऽनुपसर्गे कः ’ इति कः। ‘ आतो लोप इटि च ’ इति आकारलोपः। अविन्दन्। ‘ विद्लृ लाभे ’। ‘ शे मुचादीनाम् ’ इति नुमागमः॥

---

१. ढ–तच्छब्दोध्याहार्यः। २. च-छ-ण-त-न-फ–स्तोत्रमित्यत आह। ३. ढ-न–तन्निष्पाद्यमित्यर्थः।

इन्द्रस्याङ्गिरसां चेष्टौ विदत्सरमा तनयाय धासिम् ।
बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ॥ ३ ॥

इन्द्रस्य । अङ्गिरसाम् । च । इष्टौ । विदत् । सरमा । तनयाय । धासिम् ।
बृहस्पतिः । भिनत् । अद्रिम् । विदत् । गाः । सम् । उस्रियाभिः । वावशन्त । नरः ॥३॥

अत्रेदमाख्यानम् । सरमा नाम देवशुनी । पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमामिन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा च सरमा एवमवोचत् । हे इन्द्र अस्मदीयाय शिशवे तद्गोसंबन्धि क्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामीति । स तथेत्यब्रवीत् । तथा च शाट्यायनकम्–अन्नादिनीं ते सरमे प्रजां करोमि या नो गा अन्वविन्दः ’ इति ततो गत्वा गवां स्थानमज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । तथा निवेदितासु गोषु तमसुरं हत्वा ता गाः स इन्द्रोऽलभतेति । अयमर्थोऽस्यां प्रतिपाद्यते ॥ इन्द्रस्य अङ्गिरसाम् ऋषीणां च इष्टौ प्रेषणे सति सरमा देवशुनी तनयाय स्वपुत्राय धासिम् अन्नं विदत् अविन्दत् । धासिः इत्यन्ननाम, ‘ धासिः इरा ’ ( नि. २.७. ११) इति तन्नामसु पाठात् । तथा गोषु निवेदितासु बृहस्पतिः बृहतां देवानामधिपतिरिन्द्रः अद्रिम् अत्तारमसुरं भिनत् अवधीत् । तेनापहृताः गाः विदत् अलभत । ततः नरः नेतारो देवाः उस्रियाभिः गोभिः सह । उस्रिया इति गोनाम । सं वावशन्त भृशं हर्षशब्दमकुर्वन् । यद्वा । गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त[1] समगच्छन्तेत्यर्थः ॥ इष्टौ । ‘ इष गतौ ’ इत्यस्मात् भावे क्तिनि ‘ मन्त्रे वृष° ’ इत्यादिना क्तिन उदात्तत्वम् । विदत् । ‘ विद्लृ लाभे ’ । लुङि ऌदित्वात् अङ् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । अङ एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । सरमा । ‘ सरमा सरणात् ’ ( निरु. ११. २४ ) इति यास्कः । सर्तेः औणादिकः अमप्रत्ययः । धासिम् । ‘ धेट् पाने ’ । धीयते पीयते इति धासिः । औणादिकः सिप्रत्ययः । यद्वा । दधातेः पोषणार्थात् सिप्रत्ययः । बृहस्पतिः । ‘ तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ’ ( पा. सू. ६. १. १५७. ग.) इति सुडागमस्तलोपश्च । बृहच्छब्दः अन्तोदात्तः । तस्य केचिदाद्युदात्तत्वं वर्णयन्तीत्युक्तम् । पतिशब्दो डतिप्रत्ययान्त आद्युदात्तः । अतः ‘ उभे वनस्पत्यादिषु° ’ इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । उस्रियाभिः । निवसत्यस्यां क्षीरादिकमिति[2] उस्रा गौः । ‘ वस निवासे ’ इत्यस्मात् ‘ स्फायितञ्चि° ’ इत्यादिना अधिकरणे रक् । ‘ वचिस्वपि° ’ इत्यादिना संप्रसारणम् । ‘ उस्राशब्दात् स्वार्थे पृषोदरादित्वेन घप्रत्ययः ’ इति निघण्टुभाष्यम् । घस्य इयादेशः । प्रत्ययस्वरः । वावशन्त । ‘ वाशृ शब्दे ’ । अस्मात् यङन्तात् लङि झस्य अन्तादेशे सति तस्य ‘ छन्दस्युभयथा ’ इति आर्धधातुकत्वात् अतोलोपयलोपौ । व्यत्ययेन धातोर्ह्रस्वत्वम् । यद्वा । ‘ वश कान्तौ ’ इत्यस्मात् यङि ‘ न वशः ’ ( पा. सू. ६. १. २० ) इति संप्रसारणे प्रतिषिद्धे[3] पूर्ववत् प्रक्रिया ॥

---

१. ल–क्षीरादिकमन्नमकामयन्त; स–क्षीरादिकमलभन्त । २. ढ–क्षीरमिति । ३. ढ–प्रतिषिद्धे लङि; स–प्रतिषिद्धे सति ।

स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः ।
सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः ॥ ४ ॥

सः । सुऽस्तुभा । सः । स्तुभा । सप्त । विप्रैः । स्वरेण । अद्रिम् । स्वर्यः । नवऽग्वैः ।
सरण्युऽभिः । फलिऽगम् । इन्द्र । शक्र । वलम् । रवेण । दरयः । दशऽग्वैः ॥ ४ ॥

अङ्गिरसो द्विविधाः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । 'नवग्वा नवनीतगतयः' (निरु. ११. १९) इति यास्को व्याचख्यौ । ये तु दशभिर्मासैः समाप्य जग्मुस्ते दशग्वाः । तादृशैरुभयविधैः ᵛविप्रैः मेधाविभिः ᵛसरण्युभिः सरणं शोभनां गतिमिच्छद्भिः ᵛसप्त सप्तसंख्याकैः । सप्त ह्यत्र मेधातिथिप्रभृतयोऽङ्गिरसो दृश्यन्ते । एवंभूतैरङ्गिरोभिः ᵛसुष्टुभा शोभनस्तोभयुक्तेन ᵛस्वरेण उदात्तादिश्रव्यस्वरोपेतेन । यद्वा । मन्द्रमध्यमादिस्वरेण ᵛस्तुभा स्तोत्रेण ᵛस्वर्यः सुष्ठु प्राप्यः । यद्वा । शब्दनीयः स्तुत्य इत्यर्थः । हे ᵛशक्र शक्तिमन् ᵛइन्द्र एवंभूतः ᵛसः त्वम् ᵛअद्रिम् आदरणीयं वज्रेण छेत्तव्यमित्यर्थः । ᵛफलिगम् । प्रतिफलं प्रतिबिम्बम् । तदस्मिन्नस्तीति फलि स्वच्छमुदकम् । तद्गच्छति आधारत्वेनेति फलिगः । यद्वा । व्रीह्यादि फलम् । तदस्मिन् सति भवतीति फलि वृष्टिजलम् । तद्गच्छतीति फलिगः । एवंभूतं ᵛवलं मेघं ᵛरवेण आत्मीयेन शब्देन ᵛदरयः अभाययः[1] । त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः । यद्वा । अद्रिः पर्वतः । अद्यतेऽस्मिन् पटलादिकमिति[2] । फलिगो मेघः । 'फलिगः उपलः' (नि. १. १०. १७) इति तन्नामसु पाठात् । वलोऽसुरः । 'देवा वै वले गाः पर्यपश्यन्' (ऐ. ब्रा. ६. २४) इत्यादौ असुरे प्रयुक्तत्वात् । एते त्रयोऽपि त्वदीयशब्दश्रवणमात्रेणाबिभयुरित्यर्थः ॥ सः इत्येकः पादपूरणः । सुष्टुभा । स्तोभतिः स्तुतिकर्मा । संपदादिलक्षणो भावे क्विप् । शोभनः स्तुप् स्तोभो यस्य । 'नञ्सुभ्याम्°' इत्युत्तरपदान्तोदात्तत्वम् । 'उपसर्गात्सुनोति°' इति षत्वम् । स्तुभा । करणभूतस्यापि स्तोत्रस्य स्वव्यापारे कर्तृत्वात् स्तोभति स्तौतीति 'क्विप् च' इति कर्तरि क्विप् । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । सप्त । 'सुपां सुलुक्°' इति भिसो लुक् । स्वर्यः । 'स्वृ शब्दोपतापयोः' । 'ऋहलोर्ण्यत्' इति ण्यत् । वृद्ध्यभावश्छान्दसः । 'तित्स्वरितम्' इति स्वरितत्वम् । नवग्वैः । नवशब्दे उपपदे गमेर्भावे क्विपि 'गमः क्वौ' (पा. सू. ६. ४. ४०) इत्यनुनासिकलोपे 'ऊ च गमादीनामिति वक्तव्यम्' (पा. सू. ६. ४. ४०. २) इति ऊकारान्तादेशः । नवभिः गूः गमनं येषां ते नवग्वाः । अकारोपजनश्छान्दसः । यद्वा । गमेर्भावे ड्वप्रत्ययः । पूर्ववत् बहुव्रीहिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सरण्युभिः । सरणमात्मन इच्छन्तः सरण्यवः । क्यचि अन्त्यलोपश्छान्दसः । 'क्याच्छन्दसि' इति उः । फलिगम् । फलि उदकं गच्छतीति फलिगः । 'डोऽन्यत्रापि दृश्यते' (पा. म. ३. २. ४८) इति गमेर्डः । वलम् । वृणोतीति वलः । पचाद्यच् । कपिलकादित्वात् लत्वम् (पा. म. ८. २. १८) । दरयः । 'दॄ विदारणे' । वृद्धौ कृतायां दॄ भये इति घटादिषु पाठात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥

---

१. ढ-अदारयः । २. ढ-स-फलादिकमिति ।

गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः ।
वि भूम्या अप्रथय इन्द्र सानु दिवो रज उपरमस्तभायः ॥ ५ ॥

गृणानः । अङ्गिरःऽभिः । दस्म । वि । वः । उषसा । सूर्येण । गोभिः । अन्धः ।
वि । भूम्याः । अप्रथयः । इन्द्र । सानु । दिवः । रजः । उपरम् । अस्तभायः ॥ ५ ॥

हे दस्म दर्शनीय शत्रूणामुपक्षयितर्वा[1] इन्द्र त्वम् अङ्गिरोभिः ऋषिभिः गृणानः स्तूयमानः सन् उषसा सूर्येण च सह गोभिः किरणैः अन्धः अन्धकारं वि वः व्यवृणोः व्यनाशय इत्यर्थः । तथा हे इन्द्र त्वं भूम्याः पृथिव्याः सानु समुच्छ्रितप्रदेशं वि अप्रथयः विशेषेण विस्तीर्णमकरोः । विषमामिमां समीकृतवानित्यर्थः । तथा दिवः अन्तरिक्षस्य रजः रजसो लोकस्य उपरम् उप्तं मूलप्रदेशम् अस्तभायः अस्तभ्नाः । यथान्तरिक्षलोकस्य मूलं दृढं भवति तथाकार्षीरित्यर्थः ॥ गृणानः । कर्मणि लटः शानचि यकि प्राप्ते व्यत्ययेन श्ना । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । चित्स्वरेणान्तोदात्तत्वम् । दस्म । 'दसु उपक्षये' । 'इषियुधीन्धिदसि°' ( उ. सू. १. १४२ ) इत्यादिना मक् । वः । 'वृञ् वरणे' । लुङि सिपि 'मन्त्रे घस°' इत्यादिना च्लेर्लुक् । गुणे 'हल्ङ्याब्भ्यः°' इति सलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । अन्धः । 'तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति' ( निरु. ५. १ ) इति यास्कः । रजः । 'लोका रजांस्युच्यन्ते' ( निरु. ४. १९ ) इत्युक्तत्वात् रजःशब्दो लोकवचनः । 'सुपां सुलुक्°' इति षष्ठ्या लुक् । अस्तभायः । लङि 'स्तम्भुस्तुम्भु°' ( पा. सू. ३. १. ८२ ) इत्यादिना श्नाप्रत्ययः । 'छन्दसि शायजपि' ( पा. सू. ३. १. ८४ ) इति अहावपि व्यत्ययेन श्नाप्रत्ययस्य शायजादेशः । 'अनिदिताम्°' इति नलोपः । अडागमः ॥ ॥ १ ॥

प्रवर्ग्येऽभिष्टवे 'तदु प्रयक्षतमम्' इत्येषा । 'अथोत्तरम्' इत्यत्र सूत्रितं—'तदु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतं पयः' ( आश्व. श्रौ. ४. ७ ) इति ॥

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्यश्चतस्रः ॥ ६ ॥

तत् । ऊँ इति । प्रयक्षऽतमम् । अस्य । कर्म । दस्मस्य । चारुऽतमम् । अस्ति । दंसः ।
उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ॥ ६ ॥

दस्मस्य दर्शनीयस्य अस्य इन्द्रस्य तदु तदेव कर्म प्रयक्षतमम् अतिशयेन पूज्यम् । दंसः इति कर्मनाम । दंसः तदेव कर्म चारुतमम् अतिशयेन शोभनम्[2] । किं तदित्यत आह । अयमिन्द्रः उपह्वरे उपह्वर्तव्ये गन्तव्ये पृथिव्याः संबन्धिनि समीपदेशे उपराः उप्ताः स्थापिताः मध्वर्णसः मधुरोदकाः चतस्रः नद्यः प्रधानभूता गङ्गादिनदीः अपिन्वत् असिञ्चदिति यत् एतत् कर्म

---

१. ढ-स–शत्रूणामुपक्षपयितर्वा । २. ढ-स–शोभनमास्ति ।

तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः ॥ प्रयक्षतमम् । ‘यक्ष पूजायाम्’। यक्ष्यते इति यक्षः । अतिशयेन यक्षो यक्षतमः । पुनः प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दंसः । ‘दसि दंसनदर्शनयोः’। चुरादिरात्मनेपदी । दंस्यते कर्तव्यतया दृश्यते इति दंसः कर्म । औणादिकः कर्मणि असुन् । उपह्वरे । ‘ह्वृ कौटिल्ये’। कौटिल्यलक्षणगतिवाचिनात्र गतिमात्रं लक्ष्यते । उपह्वरन्ति गच्छन्त्यस्मिन् नद्य इत्युपह्वरो भूप्रदेशः । ‘पुंसि संज्ञायां घः प्रायेण’ ( पा. सू. ३. ३. ११८ ) इत्यधिकरणे घप्रत्ययः । गुणः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अपिन्वन् । ‘पिवि सेचने’। भौवादिकः । चतस्रः । शस्[1] । ‘त्रिचतुरोः स्त्रियां तिसृचतसृ’ ( पा. सू. ७. २. ९९ ) इति चतुर्शब्दस्य चतस्रादेश आद्युदात्तो निपातितः । पूर्वसवर्णदीर्घे प्राप्ते ‘अचि र ऋतः’ ( पा. सू. ७. २. १०० ) इति रेफादेशः । चतुर्शब्दस्य आद्युदात्तत्वात् स्थानिवद्भावेन चतस्रादेशस्य आद्युदात्तत्वे सिद्धेऽपि पुनराद्युदात्तनिपातनसामर्थ्यात् यणादेशस्य वा पूर्वविधौ स्थानिवद्भावात् ‘चतुरः शसि’ इत्यन्तोदात्तत्वस्याभावः । न च ‘न पदान्त०’ इति स्थानिवद्भावप्रतिषेधः, स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् अन्यत्तु स्थानिवदेव ( पा. सू. १. १. ५८. १ ) इति नियमात् ॥

द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः ।
भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः ॥ ७ ॥

द्विता । वि । वव्रे । सनऽजा । सनीळे इति सऽनीळे । अयास्यः । स्तवमानेभिः । अर्कैः ।
भगः । न । मेने इति । परमे । विऽओमन् । अधारयत् । रोदसी इति । सुऽदंसाः ॥ ७ ॥

ᵛअयास्यः । यासः प्रयत्नः । तत्साध्यो यास्यः । न यास्योऽयास्यः । युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः । कथं साध्यते इत्यत आह । ᵛस्तवमानेभिः स्तोत्रं कुर्वद्भिः पुरुषैः ᵛअर्कैः स्तुतिरूपैर्मन्त्रैः स्तूयमानः सन्निन्द्रः सुसाध्यः[2] भवति । यद्वा । अयास्यः पञ्चवृत्तिर्मुख्यप्राणः । स हि आस्यात् मुखात् अयते गच्छति निष्क्रामति । तदुपासकोऽप्यङ्गिरा उपचारात् अयास्य उच्यते । तथा च छन्दोगैराम्नातं—‘तं हायास्य उद्गीथमुपासांचक्रे एतमु एवायास्यं मन्यन्त आस्याद्यदयते तेन’ ( छा. उ. १. २. १२ ) इति । अथवा । अयमास्ये मुखे वर्तते इत्ययास्यः । तथा च वाजसनेयकं— ‘ते होचुः क नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति’ ( बृ. उ. १. ३. ८ ) इति । पूर्ववदुपासकोऽप्ययास्यः । तेन ऋषिणा स्तवमानेभिः गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वद्भिः अर्कैः मन्त्रैः करणभूतैः स्तूयमानः सन् ᵛसनजा । सना इति निपातो नित्यार्थः । नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः । प्रथमभावविकारवाचिना जनिना द्वितीयो भावविकारः सत्ता लक्ष्यते । यथा ‘औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः’ इति । ‘औत्पत्तिकमिति[3] नित्यं ब्रूमः’ (शा. भा. १.१.५) इति हि तद्भाष्यम् । ᵛसनीळे समानं नीळम् ओको निवासस्थानं ययोस्ते । संलग्ने इत्यर्थः । एवंविधे द्यावापृथिव्यौ ᵛद्विता द्विधा ᵛवि ᵛवव्रे विवृते अकरोत् भेदेनास्थापयदित्यर्थः । ᵛमेने मननीये ᵛपरमे उत्कृष्टे ᵛव्योमन् विविधरक्षणे नभसि वर्तमानः ᵛभगो ᵛन सूर्य इव ᵛसुदंसाः शोभनकर्मेन्द्रः ᵛरोदसी द्यावापृथिव्यौ ᵛअधारयत् अपोषयत् । यद्वा । मेना इति स्त्रीनाम । तथा च यास्कः—‘मेना ग्ना इति स्त्रीणां मेना मानयन्त्येनाः’ ( निरु. ३. २१ ) इति । स्त्रीरूपमापन्ने रोदसी इन्द्रोऽपुष्यदित्यर्थः[4] ॥ द्विता । द्विधा

---

१. ढ-न-स-शसि । २. ढ-सुसाधः । ३. ढ-औत्पत्तिक इति । ४. ढ-स-अपुषदित्यर्थः ।

इयस्य धकारस्य तकारश्छान्दसः । सनजा । ' जनी प्रादुर्भावे ' । अस्मात् भावे ' अन्येष्वपि दृश्यते ' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः । सना नित्यं जो जननं ययोस्ते सनजे । पूर्वपदस्य ह्रस्वश्छान्दसः । एवमादित्वादन्तोदात्तत्वम् । तदेव बहुव्रीहि-स्वरेण शिष्यते । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । अयास्यः । ' यसु प्रयत्ने ' । यासः प्रयत्नः । तत्र भवो यास्यः । ' भवे छन्दसि ' इति यत् । न यास्योऽयास्यः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । श्रुत्युक्तनिर्वचने तु पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः । मेने । सप्तम्येकवचनस्य ' सुपां सुलुक्° ' इति शेआदेशः । ' शे ' (पा. सू. १. १. १३) इति प्रगृह्यत्वम् । यद्वा । मन्यते इति मेना । पचाद्यच् । ' नशिमन्योरलिट्येत्वं वक्तव्यम् ' ( पा. सू. ६. ४. १२०.५) इति एत्वम् । ततः टाप् । द्विर्वचने ' ईदूदेद्द्विवचनम्° ' ( पा. सू. १. १. ११ ) इति प्रगृह्यत्वम् । सुदंसाः । दंस इति कर्मवाची । असुन्प्रत्ययान्तः आद्युदात्तः । बहुव्रीहौ ' आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् ॥

सनाद्दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।

कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥ ८ ॥

सनात् । दिवम् । परि । भूम । विरूपे इति विऽरूपे । पुनःऽभुवा । युवती इति । स्वेभिः । एवैः ।

कृष्णेभिः । अक्ता । उषाः । रुशत्ऽभिः । वपुःऽभिः । आ । चरतः । अन्याऽअन्या ॥ ८ ॥

ᵛविरूपे शुक्लकृष्णतया विषमरूपे ᵛपुनर्भुवा पुनःपुनः प्रतिदिवसं जायमाने ᵛयुवती तरुण्यौ रात्र्युषसोः सर्वदैकरूप्यात् । एवंभूते रात्र्युषसौ ᵛदिवं द्युलोकं ᵛभूम भूमिं च ᵛसनात् चिरकालादारभ्य ᵛस्वेभिरेवैः स्वकीयैर्गमनैः ᵛपरि चरतः पर्यावर्तेते । अयमेवार्थः स्पष्टीक्रियते । ᵛअक्ता रात्रिः ᵛकृष्णेभिः अन्धकाररूपैर्वर्णैरुपलक्षिता ᵛउषाः च ᵛरुशद्भिः दीप्यमानैः ᵛवपुर्भिः स्वशरीरभूतैस्तेजोभिरुपलक्षिता ᵛअन्यान्या परस्परव्यतिहारेण ᵛआ ᵛचरतः आवर्तेते । हे इन्द्र एतत्सर्वं त्वयैव कार्यते त्वदधीनत्वात् सर्वासां देवतानामित्यर्थः ॥ भूम । ' सुपां सुलुक्° ' इति द्वितीयाया डादेशः । छान्दसो ह्रस्वः । एवैः । ' इण् गतौ ' । ' इण्शीङ्भ्यां वन् ' ( उ. सू. १. १५० ) इति भावे वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । अक्ता । नक्ता इति रात्रिनाम । नलोपश्छान्दसः । वपुर्भिः । ' अर्तिपृवपि° ' ( उ. सू. २. २७४ ) इत्यादिना उस् । नित्त्वादाद्युदात्तः । अन्यान्या । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम् ' ( पा. म. ८. १. १२. ११ ) इति द्विर्भावे 'तस्य परमाम्रेडितम् ' (पा. सू. ८. १. २ ) इति आम्रेडितसंज्ञायाम् ' अनुदात्तं च ' ( पा. सू. ८. १. ३ ) इति आम्रेडितस्यानुदात्तत्वम् ॥

सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।

आमासु चिद्दधिषे पक्वमन्तः पयः कृष्णासु रुशद्रोहिणीषु ॥ ९ ॥

सनेमि । सख्यम् । सुऽअपस्यमानः । सूनुः । दाधार । शवसा । सुऽदंसाः ।

आमासु । चित् । दधिषे । पक्वम् । अन्तरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ॥९॥

^Vस्वपस्यमानः। स्वपः शोभनं कर्म। तदिवाचरन् ^Vशवसा शवसो बलस्य ^Vसूनुः पुत्रः। अतिबलवानित्यर्थः। ^Vसुदंसाः शोभनयागादिकर्मयुक्तः। एवंभूत इन्द्रः ^Vसख्यं यजमानानां सखित्वं ^Vसनेमि पुराणं ^Vदाधार धारयति पोषयतीत्यर्थः। सनेमीति पुराणनाम। 'प्रवयाः सनेमि' (नि. ३. २७. ४) इति पाठात्। किंच ^Vआमासु ^Vचित् आर्द्रासु अपरिपक्वासु गोषु च ^Vअन्तः मध्ये ^Vपक्वं परिपक्वं ^Vपयः ^Vदधिषे धारयसि। तथा ^Vकृष्णासु कृष्णवर्णासु ^Vरोहिणीषु लोहितवर्णासु च गोषु तद्विपरीतं ^Vरुशत् दीप्यमानं श्वेतवर्णं पयः दधिषे॥ सख्यम्। सख्युर्भावः सख्यम्। 'सख्युर्यः' इति यः[1]। प्रत्ययस्वरः। दाधार। 'धृञ् धारणे'। तुजादित्वात् अभ्यासस्य दीर्घत्वम्। पक्वम्। 'पचो वः' (पा. सू. ८. २. ५२) इति निष्ठातकारस्य वत्वम्। रोहिणीषु। 'रुह बीजजन्मनि प्रादुर्भावे'। 'रुहे रश्च लो वा' (उ. सू. ३. ३७४) इति इतन्प्रत्ययान्तो रोहितशब्द आद्युदात्तो वर्णवाची। 'वर्णादनुदात्तात्तोपधात्तो नः' (पा. सू. ४. १. ३९) इति ङीप्; तत्संनियोगेन तकारस्य नकारादेशश्च। ङीपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते॥

सनात्सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः।
पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम्॥ १०॥

सनात्। सऽनीळाः। अवनीः। अवाताः। व्रता। रक्षन्ते। अमृताः। सहःऽभिः।
पुरु। सहस्रा। जनयः। न। पत्नीः। दुवस्यन्ति। स्वसारः। अह्रयाणम्॥ १०॥

^Vसनात् चिरकालादारभ्य ^Vसनीळाः समाननिवासस्थानाः ^Vअवाताः। वातं गमनं तद्रहिताः एकपाण्यवस्थानात्। 'अवनयः' इति अङ्गुलिनाम। एवंभूताः ^Vअवनीः अङ्गुलयः ^Vपुरु पुरूणि बहूनि ^Vसहस्रा असंख्यातानि ^Vव्रता व्रतानि इन्द्रसंबन्धीनि कर्माणि ^Vअमृताः पुनःपुनःकरणेऽप्यालस्यरहिताः सत्यः ^Vसहोभिः आत्मीयैर्बलैः ^Vरक्षन्ते पालयन्ति। अपि च ^Vस्वसारः स्वयमेव सरन्त्योऽङ्गुलयः ^Vपत्नीः पालयित्र्यः ^Vअह्रयाणं लज्जारहितं प्रगल्भमित्यर्थः। यद्वा। अह्रीतयानं प्रशस्तगमनमिन्द्रं ^Vजनयो ^Vन। जनयः इति देवानां पत्न्य उच्यन्ते-'देवानां वै पत्नीर्जनयः' इति श्रुतेः। ता इव ^Vदुवस्यन्ति परिचरन्ति। अञ्जलिबन्धनेन इन्द्रं प्रीणयन्तीत्यर्थः॥ अवनीः। 'अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि' (निरु. ३. ९) इति यास्कः। 'सुपां सुलुक्°' इति जसः पूर्वसवर्णदीर्घत्वम्। अवाताः। 'वा गतिगन्धनयोः'। 'असिहसि°' इत्यादिना भावे तन्प्रत्ययः। बहुव्रीहौ 'नञ्सुभ्याम्°' इत्युत्तरपदान्तोदात्तत्वम्। व्रता। 'शेश्छन्दसि बहुलम्। इति शेर्लोपः। दुवस्यन्ति। दुवस्यतिः परिचरणकर्मा। कण्ड्वादिः। अतो यक एव स्वरः शिष्यते। पादादित्वात् निघाताभावः। अह्रयाणम्। 'ह्री लज्जायाम्'। 'बहुलं छन्दसि' इति श्लोरभावः। व्यत्ययेन शानच्। मुगभावश्छान्दसः। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा। 'बहुलं छन्दसि' इति शपो लुकि 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वेन ङित्त्वाभावे गुणायादेशौ। पूर्ववत् समासस्वरौ। यास्कस्तु एवं व्याख्यत्-'अह्रयाणोऽह्रीतयानः' (निरु. ५. १५) इति॥ ॥ २॥

---

१. ढ-यप्रत्ययः।

सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।
पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः ॥ ११ ॥

सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः । दस्म । दद्रुः ।
पतिम् । न । पत्नीः । उशतीः । उशन्तम् । स्पृशन्ति । त्वा । शवसाऽवन् । मनीषाः ॥ ११ ॥

हे ᵛदस्म दर्शनीयेन्द्र ᵛअर्कैः शस्त्ररूपैर्मन्त्रैः ᵛनमसा नमस्कारेण यस्त्वं ᵛनव्यः स्तुत्यो भवसि । ᵛसनायुवः सनातनमग्निहोत्रादि नित्यं कर्म आत्मन इच्छन्तः ᵛवसूयवः वसु धनमात्मन इच्छन्तो धनकामा वा ᵛमतयः मेधाविनस्त्वां ᵛदद्रुः बहुना प्रयासेन जग्मुः । हे ᵛशवसावन् बलवन्निन्द्र तैः प्रयुक्ताः ᵛमनीषाः स्तुतयः ᵛत्वा त्वां ᵛस्पृशन्ति प्राप्नुवन्ति । तत्र दृष्टान्तः । ᵛउशतीः उशत्यः कामयमानाः ᵛपत्नीः पत्न्यः ᵛउशन्तं कामयमानं ᵛपतिं ᵛन । यथा पतिं संभजन्ते तद्वत् ॥ सनायुवः । सना इत्येतदव्ययं नित्यत्वमाचष्टे । तेन च तद्वान् लक्ष्यते । सना सनातनं कर्म आत्मन इच्छन्तीति सनायुवः । 'क्याच्छन्दसि' इति उप्रत्ययः । जसि वर्णव्यत्ययेन उत्वम् । मतयः । 'मन ज्ञाने' । मन्यन्ते इति मतयः स्तोतारः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति निषेधे प्राप्ते बाहुलकात् 'अनुदात्तोपदेश॰' इत्यादिना अनुनासिकलोपः । चित्त्वादन्तोदात्तत्वम् । दद्रुः । 'द्रा कुत्सायां गतौ' । लिटि उसि 'आतो लोप इटि च' इति आकारलोपः । उशतीः । 'वश कान्तौ' । लटः शतृ । अदादित्वात् शपो लुक् । शतुर्ङित्त्वात् ग्रहिज्यादिना संप्रसारणम् । 'उगितश्च' इति ङीप् । 'शतुरनुमः॰' इति नद्या उदात्तत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । शवसावन् । मतुपि आकारोपजनश्छान्दसः । यद्वा । मत्वर्थीय आवनिप् ॥

सनादेव तव रायो गभस्तौ न क्षीयन्ते नोप दस्यन्ति दस्म ।
द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥ १२ ॥

सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयन्ते । न । उप । दस्यन्ति । दस्म ।
द्युऽमान् । असि । क्रतुऽमान् । इन्द्र । धीरः । शिक्ष । शचीऽवः । तव । नः । शचीभिः ॥ १२ ॥

हे ᵛदस्म दर्शनीयेन्द्र । गभस्तिरिति बाहुनाम । ᵛतव ᵛगभस्तौ हस्ते ᵛसनादेव चिरकालादारभ्य स्थितानि ᵛरायः धनानि ᵛन ᵛक्षीयन्ते न विनश्यन्ति । ᵛनोप ᵛदस्यन्ति च स्तोतृभ्यो दत्तेऽपि[1] त्वद्धस्तगतं धनमुपक्षयं न प्राप्नोति । अपि तु वर्धते । हे ᵛइन्द्र ᵛधीरः बुद्धिमान् धृष्टो वा त्वं ᵛद्युमान् दीप्तिमान् ᵛअसि । तथा ᵛक्रतुमान् लोकरक्षणहेतुभूतकर्मयुक्तोऽसि । हे ᵛशचीवः कर्मवन्निन्द्र ᵛतव ᵛशचीभिः त्वदीयैः कर्मभिः ᵛनः अस्मभ्यं धनं ᵛशिक्ष देहि । शिक्षतिर्दानकर्मा ॥ क्षीयन्ते । 'क्षीञ् हिंसायाम्' । अस्मात् कर्मकर्तरि कर्मवद्भावात् यगात्मनेपदे । 'वत्करणं स्वाश्रयमपि यथा स्यात्' (का. ३. १ ८७) इति कर्तृवद्भावात् 'अचः कर्तृयकि' (पा. सू. ६. १. १९५) इत्याद्युदात्तत्वम् । 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । शचीवः । शची अस्यास्तीति शचीवान् । 'छन्दसीरः' इति मतुपो वत्वम् । संबुद्धौ 'मतुवसो रुः॰' इति नकारस्य रुत्वम् ॥

---

१. च-छ-ण-न-फ-दत्तमपि ।

सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १३ ॥

सनाऽयते । गोतमः । इन्द्र । नव्यम् । अतक्षत् । ब्रह्म । हरिऽयोजनाय ।
सुऽनीथाय । नः । शवसान । नोधाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१३॥

स इन्द्रः सनायते नित्य इवाचरति सर्वेषामाद्यो भवति । हे शवसान बलवन् इन्द्र हरियोजनाय । हरी अश्वौ रथे योजयतीति हरियोजनः । सुनीथाय सुष्ठु नेत्रे । एवंभूताय तस्मै तुभ्यं गोतमः गोतमस्य ऋषेः पुत्रः नोधाः ऋषिः नव्यं नूतनं ब्रह्म एतत्सूक्तरूपं स्तोत्रं नः अस्मदर्थम् अतक्षत् अकरोत् । अतोऽस्माभिरनेन स्तोत्रेण स्तुतः सन् धिया बुद्ध्या कर्मणा वा प्राप्तवसुरिन्द्रः प्रातःकाले मक्षु शीघ्रं जगम्यात् आगच्छतु ॥ सनायते । सना इति निपातो नित्यशब्दसमानार्थः । तस्मादाचारार्थे क्यङ्प्रत्ययः । सुनीथाय । 'णीञ् प्रापणे' इत्यस्मात् औणादिकः थक्प्रत्ययः । थाथादिस्वरः ॥　　॥ ३ ॥

'त्वं महान्' इति नवर्चं षष्ठं सूक्तं नोधस आर्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—'त्वं नव' इति । समूळ्हे दशरात्रे द्वितीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम् । 'विश्वजितोऽग्निं नरः' इति खण्डे सूत्रितं—'तां सु ते कीर्तिं त्वं महाँ इन्द्र यो ह' ( आश्व. श्रौ. ८. ७ ) इति ॥

त्वं महाँ इन्द्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।
यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ॥ १ ॥

त्वम् । महान् । इन्द्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः । पृथिवी इति । अमे । धाः ।
यत् । ह । ते । विश्वा । गिरयः । चित् । अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ॥१॥

हे इन्द्र त्वं महान् गुणैः सर्वाधिको भवसि । यो ह यः खलु त्वम् अमे असुरकृते भये सति जज्ञानः तदानीमेव प्रादुर्भूतः सन् शुष्मैः शत्रूणां शोषकैरात्मीयैर्बलैः द्यावा पृथिवी द्यावापृथिव्यौ धाः अधारयः । तादृशाद्भयात् अमूमुचः इत्यर्थः । किंच । यद्ध ते यस्य खलु तव संबन्धिन्या भिया भीत्या विश्वा विश्वानि व्याप्तानि यानि भूतजातानि गिरयश्चित् ये च शिलोच्चयाः । अभ्वा । महन्नामैतत् । अन्यान्यपि महान्ति यानि सन्ति । तेऽपि सर्वे दृळ्हासः दृढा अपि ऐजन् अकम्पिषत । तत्र दृष्टान्तः । किरणा न । यथा सूर्यरश्मय इतस्ततो नभसि कम्पन्ते तद्वत् ॥ जज्ञानः । 'जनी प्रादुर्भावे' । लिटः कानच् । 'गमहन°' इत्यादिना उपधालोपः । स्थानिवद्भावात् द्विर्भावादि । 'चितः' इत्यन्तोदात्तत्वम् । द्यावापृथिवी इत्यस्य समस्तपदस्य मध्ये जज्ञान इत्यस्य पाठश्छान्दसः । यत् । 'सुपां सुलुक्°' इति षष्ठ्या लुक् । अभ्वा । आ समन्ताद्भवन्ति सद्भावं प्राप्नुवन्तीति अभ्वा महान्तः । आङ्पूर्वात् भवतेः औणादिको ड्वन्प्रत्ययः । उपसर्गस्य ह्रस्वत्वं च । यद्वा । नञ्पूर्वात् भवतेः प्राप्त्यर्थात् 'नञि भुवो डित्' इति क्वन्प्रत्ययः । महान्तो हि प्राप्तुं न शक्यन्ते । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । किरणाः । कीर्यन्ते विक्षिप्यन्ते

इति किरणाः । ‘ कृ विक्षेपे ’ । ‘ कृपृवृजिमन्दिनिधाञ्भ्यः क्युः ’ ( उ. सू. २. २३९ ) इति क्युप्रत्ययः । योरनादेशे प्रत्ययाद्युदात्तत्वम् । ‘ ऋत इद्धातोः ’ इति इत्वम् । ऐजन् । ‘ एजृ कम्पने’ । लङि आडागमः । स चोदात्तः । वृद्धिश्च ॥

आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।
येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः ॥ २ ॥

आ । यत् । हरी इति । इन्द्र । विऽव्रता । वेः । आ । ते । वज्रम् । जरिता । बाह्वोः । धात् ।
येन । अविहर्यतक्रतो इत्यविहर्यतऽक्रतो । अमित्रान् । पुरः । इष्णासि । पुरुऽहूत । पूर्वीः ॥२॥

हे इन्द्र त्वं यत् यदा विव्रता विविधकर्माणौ हरी त्वदीयावश्वौ आ वेः रथे[1] आगमयसि[1] रथे योजयसीत्यर्थः । तदानीं ते तव बाह्वोः हस्तयोः जरिता स्तोता वज्रम् आ धात् स्तोत्रेण स्थापयति । स्तोत्रा स्तुते प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दृश्यते इत्यर्थः । हे अविहर्यतक्रतो प्रेप्सितकर्मन्निन्द्र अमित्रान् शत्रून् येन वज्रेण इष्णासि अभिगच्छसि । हे पुरुहूत पुरुभिर्बहुभिर्यजमानैराहूत त्वं पूर्वीः बह्वीः पुरः असुरपुराणि भेत्तुमभिगच्छसीत्यर्थः ॥ विव्रता । व्रतमिति कर्मनाम । विविधं व्रतं ययोस्तौ । ‘ सुपां सुलुक्° ’ इति पूर्वसवर्णदीर्घत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वेः । ‘ वी गतिप्रजनकान्त्यशनखादनेषु[2] ’ । अन्तर्भावितण्यर्थात् छान्दसे लङि सिपि अदादित्वात् शपो लुक् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । धात् । दधातेः छान्दसे लुङि ‘ गातिस्था° ’ इति सिचो लुक् । पूर्ववत् अडभावः । अविहर्यतक्रतो । ‘ हर्यतिः प्रेप्साकर्मा ’ ( निरु. ७. १७ ) इति यास्कः । ‘ हर्य गतिकान्त्योः ’ । कान्तिरभिलाषः । विहर्यतोऽनभिलषितः । अविहर्यतोऽभिलषित इत्यर्थः । तादृशः क्रतुः कर्म यस्य स तथोक्तः । अमित्रान् । न सन्ति मित्राण्येष्विति बहुव्रीहौ ‘ नञो जरमरमित्रमृताः ’ इत्युत्तरपदाद्युदात्तत्वम् । इष्णासि । ‘ इष आभीक्ष्ण्ये ’ । अत्र गत्यर्थः । ‘ क्र्यादिभ्यः श्ना ’ । सिपः पित्त्वादनुदात्तत्वे तस्यैव स्वरः शिष्यते । यद्वृत्तयोगादनिघातः ॥

त्वं सत्य इन्द्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट् ।
त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ॥ ३ ॥

त्वम् । सत्यः । इन्द्र । धृष्णुः । एतान् । त्वम् । ऋभुक्षाः । नर्यः । त्वम् । षाट् ।
त्वम् । शुष्णम् । वृजने । पृक्षे । आणौ । यूने । कुत्साय । द्युऽमते । सचा । अहन् ॥ ३ ॥

हे इन्द्र त्वं सत्यः सत्सु भवः सर्वोत्कृष्ट इत्यर्थः । एतान् शत्रूनभिगतः सन् धृष्णुः तेषां धर्षयिता तिरस्कर्ता । किंच त्वम् ऋभुक्षाः ऋभूणामधिपतिः । तेषु कृतनिवासो वा । यद्वा । महन्नामैतत् । महान् प्रवृद्धोऽसि । नर्यः नृभ्यो हितः । तथा त्वं षाट् शत्रूणामभिभविता हन्तेत्यर्थः । किंच । वृजने इत्यादीनि त्रीणि संग्रामनामानि । अत्र पूर्वे विशेषणे । वृजने वर्जनयुक्ते । संग्रामे हि वीराः पुरुषा वर्ज्यन्ते हिंस्यन्ते । पृक्षे संपर्चनीये वीरैः[3] योद्धुं प्राप्तव्ये । एवंविधे आणौ संग्रामे

---

१. ढ-न-आगमयसि; स-‘ रथे आगमयसि ’ नास्ति । २. ढ- °कान्त्यसनखादनेषु । ३. च-छ-ण-न-फ-वीर्यैः ।

[v]द्युमते दीप्तिमते [v]यूने तरुणाय [v]कुत्साय [v]सचा [v]त्वं सहायो भूत्वा [v]शुष्णं शोषयितारमेतत्संज्ञमसुरम् [v]अहन् अवधीः ॥ ऋभुक्षाः । ऋभुरिति मेधाविनाम । उरु विस्तीर्णं भाति । यद्वा । ऋतेन यज्ञेन भाति भवतीति वा ऋभुः । उरुशब्दे ऋतशब्दे वोपपदे भातेर्भवतेर्वा 'मृगय्वादयश्च' (उ. सू. १. ३८) इति कुप्रत्ययः पूर्वपदस्य ऋभावश्च निपात्यते । क्षयतिरैश्वर्यकर्मा । तेषामीष्टे इति ऋभुक्षाः । यद्वा । 'क्षि निवासगत्योः'। तेषु निवसतीति 'पतेस्थ' (उ. सू. ४. ४५२) इति विधीयमान इनि-प्रत्ययो बहुलवचनादस्मादपि भवति। टिलोपश्च । सौ 'पथिमथ्यृभुक्षामात्' (पा.सू. ७. १. ८५) इति आत्वम् । प्रत्ययस्वरः । षाट् । 'सह[1] अभिभवे'। 'छन्दसि सहः' (पा. सू. ३. २. ६३) इति केवलादपि ण्विः । षत्वं छान्दसम् । द्युमते । द्यौर्दीप्तिरस्मिन्नस्तीति द्युमान् । 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां 'दिव उत्' इति उत्वम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥

त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद्वज्रिन्वृषकर्मन्नुभ्नाः ।
यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥ ४ ॥

त्वम् । ह । त्यत् । इन्द्र । चोदीः । सखा । वृत्रम् । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः ।
यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ । अकृतः । वृथाषाट् ॥ ४ ॥

हे [v]इन्द्र [v]त्वं [v]ह त्वं खलु [v]सखा कुत्सस्य सहायः सन् [v]त्यत् तत् अभिवृद्धं धनं जयलक्षणं यशो वा [v]चोदीः प्रेरितवान् अकार्षीरित्यर्थः । हे [v]वृषकर्मन् वृष्ट्युदकसेचनरूपकर्मोपेत [v]वज्रिन् वज्रवन्निन्द्र [v]वृत्रं सर्वस्य धनस्यावरीतारं कुत्सस्य शत्रुं [v]यत् यदा [v]उभ्नाः अतुभ्नाः अहिंसीः । अपि च हे [v]शूर शत्रूणां प्रेरक [v]वृषमणः कामाभिवर्षकमनस्केन्द्र [v]वृथाषाट् अनायासेन शत्रूणामभिभविता त्वं [v]यद्ध यदा खलु [v]योनौ वीरैर्मिश्रणीये संग्रामे [v]दस्यून् कुत्सस्योपक्षयितॄन् अन्यान् शत्रून् [v]पराचैः परागमनैः [v]वि [v]अकृतः पराङ्मुखा यथा भवन्ति तथा व्यच्छिनः । तदानीं कुत्सः सर्वं यशः प्राप्नो-दित्यर्थः ॥ चोदीः । 'चुद प्रेरणे'। लुङि 'नेटि' (पा. सू. ७. २. ४) इति सिचि वृद्धि-प्रतिषेधः । उभ्नाः । 'उभ तुभ हिंसायाम्' । क्रैयादिकः । लङि सिपि तलोपश्छान्दसः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । पराचैः इत्येतदव्ययं नीचैरुच्चैरितिवत् इति भट्टभास्करमिश्रः[2] । 'पराचैः पराञ्चनैः' (निरु. ११. २५) इति निरुक्तम् । दस्यून् । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति ऊकारस्य सानुनासिकता । अकृतः । 'कृती छेदने'। लङि सिपि तुदादित्वात् शप्रत्ययः । आगमानुशासनस्यानित्यत्वात् 'शे मुचादीनाम्' इति नुमागमस्याभावः । शस्य ङित्त्वात् गुणाभावः ॥

त्वं ह त्यदिन्द्रारिषण्यन्दृळ्हस्य चिन्मर्तानामजुष्टौ ।
व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥ ५ ॥

त्वम् । ह । त्यत् । इन्द्र । अरिषण्यन् । दृळ्हस्य । चित् । मर्तानाम् । अजुष्टौ ।
वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव । वज्रिन् । श्नथिहि । अमित्रान् ॥५॥

---

१. ढ-स-षह । २. ढ-भट्टभास्करमिश्राः ।

हे ᵛइन्द्र ᵛत्वं ᵛह त्वं खलु ᵛत्यत् तस्य ᵛदृळहस्य ᵛचित् दृढस्य कस्यचिदपि ᵛअरिषण्यन् रेषणमनिच्छन् एवंस्वभावो भवसि । देवतात्वेनानुग्रहीतृत्वात् । तथापि ᵛमर्तानां स्तोतॄणामस्माकं शत्रुभिः ᵛअजुष्टौ अप्रीतौ सत्याम् ᵛअस्मत् ᵛअर्वते अस्मदीयाश्वाय गन्तुं ᵛकाष्ठाः दिशः ᵛआ समन्तात् ᵛवि ᵛवः विवृताः कुरु। यथा सर्वासु दिक्षु अस्मदीया अश्वाः प्रतिरोधमन्तरेण गच्छन्ति तथा कुरु इत्यर्थः। किंच तत्रत्यान् ᵛअमित्रान्[1] हे ᵛवज्रिन् वज्रवन्निन्द्र ᵛघनेव घनेन कठिनेन पर्वतेनेव वज्रेण ᵛश्नथिहि श्नथय जहीत्यर्थः । यद्वा । मर्तानां मनुष्याणां मध्ये यस्मिन् कस्मिंश्चित्तव अप्रीतौ सत्यां तस्य शत्रोर्दृढस्यापि अरिषण्यन् रेषणं हिंसनमनिच्छन् वर्तसे । यस्मिंस्तु कुत्सादौ प्रीतिरस्ति तस्य शत्रुवधं चकृषे । अतस्तव प्रियाणामस्माकमर्वते इत्यादि पूर्ववत् ॥ त्यत् । 'सुपां सुलुक्°' इति षष्ठ्या लुक् । अरिषण्यन् । रिष्टशब्दात् क्यचि 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' (पा. सू. ७. ४. ३६) इति रिषण्भावो निपात्यते । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अस्मत् । पूर्ववत् षष्ठ्या लुक् । अर्वते । 'अर्वणस्त्रसावनञः' इति नकारस्य तकारादेशः । वनिप्सुपौ पित्त्वादनुदात्तौ । परिशेषात् धातुस्वरः । घनेव । 'मूर्तौ घनः' (पा. सू. ३. ३. ७७) इति काठिन्ये गम्यमाने हन्तेः अप्प्रत्ययान्तो निपात्यते । श्नथिहि । श्नथ हिंसार्थः । ण्यन्तात् लोटि 'बहुलं छन्दसि' इति शपो लुक् ॥ ॥ ४ ॥

त्वां ह॒ त्यदि॑न्द्रा॒र्णसा॑तौ॒ स्व॑र्मीळ्हे॒ नर॑ आ॒जा ह॑वन्ते ।

तव॑ स्वधाव इ॒यमा स॑म॒र्य ऊ॒तिर्वाजे॑ष्वत॒साय्या॑ भूत् ॥ ६ ॥

त्वाम् । ह॒ । त्यत् । इ॒न्द्र॒ । अर्ण॑ऽसातौ । स्वः॑ऽमीळ्हे । नरः॑ । आ॒जा । ह॒व॒न्ते॒ ।

तव॑ । स्व॒धा॒ऽव॒ः । इ॒यम् । आ । स॒ऽम॒र्ये । ऊ॒तिः । वाजे॑षु । अ॒त॒साय्या॑ । भू॒त् ॥ ६ ॥

हे ᵛइन्द्र ᵛअर्णसातौ अर्णानां गन्तॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् ᵛस्वर्मीळ्हे । मीळ्हमिति धननाम । सुष्ठु अरणीयं धनं यस्मिन् । एवंभूते ᵛआजा आजौ संग्रामे ᵛत्यत् तं प्रसिद्धं त्वामेव ᵛनरः योद्धुकामाः पुरुषाः सहायार्थं ᵛहवन्ते आह्वयन्ति । यद्वा । अर्णस उदकस्य सातिर्लाभो यस्मिन् वृत्रादियुद्धे तस्मिन्नित्यर्थः । वृष्टिनिरोधकेन वृत्रेण सह वर्षणार्थं ᵛतव यद्युद्धं तत्र स्तोतारस्त्वां प्रोत्साहयन्तीति भावः । यस्मादेवं तस्मात् हे ᵛस्वधावः हे[2] अन्नवन् बलवन् वा इन्द्र ᵛसमर्ये संग्रामे ᵛतव संबन्धिनी ᵛइयम् ऊतिः त्वदीयमिदं रक्षणम् ᵛआ अस्मदाभिमुख्येन ᵛभूत् भवतु । ᵛवाजेषु संग्रामेषु या एषा ᵛऊतिः ᵛअतसाय्या योद्धृभिः प्राप्तव्या भवति ॥ त्यत् । 'सुपां सुलुक्°' इति द्वितीयाया लुक् । अर्णसातौ । 'ऋ गतौ' । बहुलवचनात् औणादिको नप्रत्ययः । 'षणु दाने' इत्यस्मात् भावे क्तिनि 'जनसनखनाम्°' इत्यनुनासिकस्य आत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । 'उदके नुट् च' (उ. सू. ४. ६३६) इति अर्तेः असुन्प्रत्ययो नुडागमश्च । 'पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः' (पा. म. ६. ३. १०९. ६) इति सलोपः । नित्त्वादाद्युदात्तत्वम् । पूर्ववत् बहुव्रीहिस्वरः । स्वर्मीळ्हे । स्वर्शब्दः 'न्यङ्स्वरौ स्वरितौ' (फि. सू. ७४) इति स्वरितः । बहुव्रीहिस्वरेण स एव शिष्यते । आजा । 'सुपां सुलुक्°' इति सप्तम्या डादेशः । स्वधावः । 'मतुवसो रुः°' इति मतुपो रुत्वम् । अतसाय्या । 'अत सातत्यगमने' । औणादिकः साय्यप्रत्ययः तस्य आडागमश्च । आगमानुदात्तत्वे प्रत्ययाद्युदात्तत्वम् । भूत् । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ॥

---

१. ढ-स-अमित्रान् शत्रून् । २. ढ-'हे' नास्ति ।

त्वं ह त्यदिन्द्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः ।
बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः ॥ ७ ॥

त्वम् । ह । त्यत् । इन्द्र । सप्त । युध्यन् । पुरः । वज्रिन् । पुरुऽकुत्साय । दर्दरिति दर्दः ।
बर्हिः । न । यत् । सुऽदासे । वृथा । वर्क् । अंहोः । राजन् । वरिवः । पूरवे । करिति कः ॥७॥

हे vवज्रिन् वज्रवन् vइन्द्र vपुरुकुत्साय एतत्संज्ञाय ऋषये vयुध्यन् तदीयशत्रुभिः सह युद्धं कुर्वाणः vत्वम् एव vत्यत् ताः vसप्त vपुरः तदीयानि सप्तसंख्यानि नगराणि vदर्दः व्यदारयः अभैत्सीरित्यर्थः । अपि च vसुदासे एतत्संज्ञाय राज्ञे vअंहोः एतत्संज्ञस्यासुरस्य संबन्धि vयत् धनमस्ति तत् vवृथा अनायासेन vबर्हिर्न बर्हिरिव vवर्क् अवृणक् अच्छिनः इत्यर्थः । तदनन्तरं vपूरवे त्वां हविषा पूरयते तस्मै सुदासे हे vराजन् स्वामिन् इन्द्र vवरिवः धनं vकः अकार्षीः ॥ त्यत् । ‘ सुपां सुलुक्° ’ इति विभक्तेर्लुक् । दर्दः । ‘ दॄ विदारणे ’। अस्मात् यङ्लुगन्तात् लङि सिपि ‘अदादिवच्च’ इति वचनात् शपो लुक् । ‘ हल्ङ्याब्भ्यः° ’ इति सलोपः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । सुदासे । शोभनं ददातीति सुदाः । असुन् । ‘सुदाः कल्याणदानः ’ ( निरु. २. २४ ) इति यास्कः । वर्क् । ‘ वृजी वर्जने ’ । लङि सिपि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । लघूपधगुणे पूर्ववत् सलोपः[1] । अडभावश्च । ‘ चोः कुः ’ इति कुत्वम् । कः । ‘ डुकृञ् करणे ’। लुङि सिपि ‘ मन्त्रे घस° ’ इति च्लेर्लुक् । पूर्ववत् सलोपाडभावौ[2] ॥

त्वं त्यां न इन्द्र देव चित्रामिषमापो न पीपयः परिज्मन् ।
यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ॥ ८ ॥

त्वम् । त्याम् । नः । इन्द्र । देव । चित्राम् । इषम् । आपः । न । पीपयः । परिऽज्मन् ।
यया । शूर । प्रति । अस्मभ्यम् । यंसि । त्मनम् । ऊर्जम् । न । विश्वध । क्षरध्यै ॥ ८ ॥

हे vदेव द्योतमान vइन्द्र vत्वं vनः अस्माकं vचित्रां चायनीयां vत्यां ताम् vइषम् अन्नं vपरिज्मन् परितो व्याप्तायां भूमौ vपीपयः प्रावर्धयः । यथा सर्वा भूमिरन्नेन परिपूर्णा भवति तथा कुर्वित्यर्थः । तत्र दृष्टान्तः । vआपो vन । यथा अपो वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि तद्वत् । यद्वा । भूमौ वर्तमानानस्मान् यथा अपः पाययसि तद्वत् चित्रामिषमपि पाययेति भावः । हे vशूर इन्द्र vयया इषा vत्मनम् आत्मानं जीवम् vअस्मभ्यं vप्रति vयंसि प्रयच्छसि । तत्र दृष्टान्तः । vविश्वध विश्वतः सर्वतः vक्षरध्यै क्षरितुम् vऊर्जं vन उदकमिव । यथास्मभ्यं बहुलमुदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः ॥ आपः । शसि प्राप्ते व्यत्ययेन जस् । ‘ अप्तृन्° ’ इत्यादिना दीर्घः । पीपयः । ‘ स्फायी ओप्यायी वृद्धौ ’ । ण्यन्तात् छान्दसे लुङि ‘ प्यायः पी ’ ( पा. सू. ६. १. २८ ) इति व्यत्ययेन पीभावः । ‘ णिश्रिद्रुस्रुभ्यः ’

---

१. ढ– सेर्लोपः ।　२. ढ–सेर्लोपाडभावौ ।

इति च्लेः चङादेशः । णिलोपादीनि । यद्वा । 'पीङ् पाने' इत्यस्मात् लुङि चङि पूर्ववत् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । परिज्मन् । जमतिर्गतिकर्मा । 'अज गतिक्षेपणयोः' । आभ्यां परिपूर्वाभ्यां 'श्वन्नुक्षन्°' इत्यादौ कनिन्प्रत्ययान्तौ निपातितः । 'सुपां सुलुक्°' इति सप्तम्या लुक् । यंसि । 'यम उपरमे' । 'बहुलं छन्दसि' इति शपो लुक् । त्मनम् । 'आङोऽन्यत्रापि च्छन्दसि दृश्यते' (का. ६. ४. १४१. १) इत्यात्मनः आकारलोपः । संज्ञापूर्वकस्य विधेरनित्यत्वात् उपधादीर्घाभावः । विश्वध । विश्वशब्दात्तसिलः सकारलोपो धत्वं च पृषोदरादित्वात् । क्षरध्यै । 'क्षर संचलने' । 'तुमर्थे सेसेन्°' इति अध्यैन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

अकारि त इन्द्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्याम् ।
सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥

अकारि । ते । इन्द्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा । हरिऽभ्याम् ।
सुऽपेशसम् । वाजम् । आ । भर । नः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ९ ॥

हे इन्द्र ते तव गोतमेभिः गन्तृतमैरेतत्संज्ञैर्ऋषिभिः अकारि स्तोत्रं कृतमित्यर्थः । एतदेव स्पष्टीकरोति । ब्रह्माणि मन्त्रजातानि नमसा हविर्लक्षणेनान्नेन सह हरिभ्याम् अश्वाभ्यां युक्ताय तुभ्यम् ओक्ता आभिमुख्येन उक्तानि[1]। यद्वा । मर्यादायाम् आकारः । यथाशास्त्रं प्रयुक्तानि । स त्वं सुपेशसम् । पेश इति रूपनाम । बहुविधरूपयुक्तं वाजम् अन्नं नः अस्मभ्यम् आ भर आहर देहीति यावत् । धिया बुद्ध्या कर्मणा वा प्राप्तधन इन्द्रः प्रातःकाले अस्मद्रक्षणार्थं जगम्यात् आगच्छतु ॥ ओक्ता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । सुपेशसम् । 'पिश अवयवे' । असुन् । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । भर । 'हृग्रहोर्भः°' इति भत्वम् । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घः ॥ ॥ ५ ॥

'वृष्णे शर्धाय' इति पञ्चदशर्चं सप्तमं सूक्तम् । नोधस आर्षं मारुतम् । अन्त्या त्रिष्टुप् । शिष्टाश्चतुर्दश जगत्यः । तथा चानुक्रान्तं–'वृष्णे पञ्चोना मारुतं त्रिष्टुबन्तम्' इति । चातुर्विंशिकेऽहनि आग्निमारुते इदं मारुतं निविद्धानीयम् । सूत्रितं च–'प्रक्षस्य वृष्णो वृष्णे शर्धाय यज्ञेन वर्धतेत्याग्निमारुतम्' (आश्व. श्रौ. ७. ४) इति । आभिप्लविके पञ्चमेऽहन्यपि एतत् आग्निमारुते मारुतनिविद्धानम् । सूत्रितं च–'प्रक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतम्' (आश्व. श्रौ. ७. ७) इति ॥

वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः ।
अपो न धीरो मनसा सुहस्त्यो गिरः समञ्जे विदथेष्वाभुवः ॥ १ ॥

वृष्णे । शर्धाय । सुऽमखाय । वेधसे । नोधः । सुऽवृक्तिम् । प्र । भर । मरुत्ऽभ्यः ।
अपः । न । धीरः । मनसा । सुऽहस्त्यः । गिरः । सम् । अञ्जे । विदथेषु । आऽभुवः ॥ १ ॥

---

१. ढ–उक्ता उक्तानि ।

अत्र पूर्वार्धेन स्तुतौ नोधाः प्रेर्यते । हे नोधः वृष्णे कामानां वर्षित्रे सुमखाय शोभनयज्ञाय वेधसे पुष्पफलादीनां कर्त्रे । वायौ सति हि पुष्पाणि फलानि चोत्पद्यन्ते । एवंविधाय मरुद्भ्यः । विभक्तिव्यत्ययः । मरुतां मितराविणां शर्धाय समूहाय सुवृक्तिं सुष्टु आवर्जकं सुष्टु प्रवृत्तं वा स्तोत्रं प्र भर प्रेरय स्तुहीति यावत् । स्तुतौ प्रेरितो नोधा आह । धीरः धीमान् सुहस्त्यः शोभनाङ्गुलियुक्तः । कृताञ्जलिरित्यर्थः । एवंभूतोऽहं मनसा गिरः स्तुतिलक्षणा वाचः समञ्जे सम्यग्व्यक्ताः[1] करोमि[1] । या गिरः विदथेषु यज्ञेषु आभुवः । आङ् मर्यादायाम् । यथाशास्त्रं प्रयुक्ता भवन्तीति आभुवः । देवताभिमुखीकरणाय समर्थाः । यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः । तत्र दृष्टान्तः । अपो न । यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् ॥ वृष्णे । ‘ वृषु सेचने ’ । ‘ कनिन्युवृषितक्षि° ’ इत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावो नित्त्वादाद्युदात्तत्वम् । चतुर्थ्येकवचने ‘ अल्लोपोऽनः ’ इति अकारलोपः । शर्धाय । ‘ शृधु प्रसहने ’ । शर्ध्यते प्रसह्यते अनेन पर्वतादिकमिति शर्धो मरुत्संघः । करणे घञ् । ञित्त्वादाद्युदात्तत्वम् । सुमखाय । शोभनो मखो यस्य । ‘ नञ्सुभ्याम् ’ इति प्राप्ते व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । नोधः । पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । सुहस्त्यः । हस्ते भवा हस्त्याः । ‘ भवे छन्दसि ’ इति यत् । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् । ततः सुशब्देन बहुव्रीहौ ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् ॥

**ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः ।**

**पावकासः शुचयः सूर्याइव सत्वानो न द्रप्सिनो घोरवर्पसः ॥ २ ॥**

ते । जज्ञिरे । दिवः । ऋष्वासः । उक्षणः । रुद्रस्य । मर्याः । असुराः । अरेपसः ।

पावकासः । शुचयः । सूर्याःऽइव । सत्वानः । न । द्रप्सिनः । घोरऽवर्पसः ॥ २ ॥

ते मरुतः दिवः अन्तरिक्षात् जज्ञिरे प्रादुर्बभूवुः । कीदृशाः । ऋष्वासः दर्शनीयाः उक्षणः सेक्तारः । युवान इत्यर्थः । रुद्रस्य मर्याः । मर्यशब्दो मनुष्यवाची इह मरुतां मर्त्यत्वासंभवात्पुत्रा इत्यस्मिन्नर्थे पर्यवस्यति । मरुतां रुद्रपुत्रत्वं च मन्त्रान्तरे स्पष्टम्—‘ आ ते पितर्मरुतां सुम्नमेतु ’ ( ऋ. सं. २. ३३. १ ) इति । असुराः शत्रूणां निरसितारः अरेपसः । रेप इति पापनाम । पापरहिताः पावकासः सर्वेषां शोधकाः सूर्याइव शुचयः दीप्ताः सत्वानो न यथा परमेश्वरस्य भूतगणा अतिशयितबलपराक्रमाः तत्सदृशा इत्यर्थः । सत्वान इति भूतगणा उच्यन्ते—‘ अथो ये अस्य सत्वानः ’ ( तै. सं. ४. ५. १. ३ ) इत्यादौ तथा दर्शनात् । द्रप्सिनः वृष्ट्युदकबिन्दुभिर्युक्ताः । ‘ मरुतः सृष्टां वृष्टिं नयन्ति ’ ( तै. सं. २. ४. १०. २ ) इति श्रुतेः । घोरवर्पसः । वर्प इति रूपनाम । घोररूपाः । शत्रूणां भयंकररूपा इत्यर्थः । यद्वा । सत्वानो न घोरवर्पसः । यथा भूतगणा भयंकररूपास्तद्वदेतेऽपीत्यर्थः ॥ ऋष्वासः । ‘ ऋषी गतौ ’ । गत्यर्था बुद्ध्यर्था इति अत्र ज्ञानार्थः । ‘ सर्वनिघृष्व° ’ ( उ. सू. १. १५१ ) इत्यादौ वप्रत्ययान्तो निपातितः । ‘ आज्जसेरसुक् ’ । उक्षणः । ‘ वा षपूर्वस्य निगमे ’ इति उपधादीर्घाभावः । अरेपसः । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । सत्वानः । ‘ षद्लृ विशरणगत्यवसादनेषु ’ । ‘ प्र ईरसद्योस्तुट् च ’ ( उ. सू. ४. ५२६ ) इति विधीयमानः क्वनिप्प्रत्ययो बहुलवचनात् केवलादपि भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते ॥

---

१. ढ–सम्यग्व्यक्तीकरोमि ।

युवानो रुद्रा अजरा अभोग्घनो ववक्षुरध्रिगावः पर्वताइव ।
दृळ्हा चिद्विश्वा भुवनानि पार्थिवा प्र च्यावयन्ति दिव्यानि मज्मना ॥३॥

युवानः । रुद्राः । अजराः । अभोक्ऽहनः । ववक्षुः । अध्रिऽगावः । पर्वताःऽइव ।
दृळ्हा । चित् । विश्वा । भुवनानि । पार्थिवा । प्र । च्यवयन्ति । दिव्यानि । मज्मना ॥३॥

vयुवानः तरुणाः vरुद्राः रुद्रपुत्राः vअजराः जरारहिताः vअभोग्घनः ये देवान् हविर्भिर्न भोजयन्ति तेषां हन्तारः vअध्रिगावः अधृतगमनाः परैरनिवारितगतयः vपर्वताइव दृढाङ्गाः एवंभूता मरुतः vववक्षुः स्तोतृणामभिमतं प्रापयितुमिच्छन्ति । अपि च vविश्वा सर्वाणि vभुवनानि सद्भावं प्राप्तानि vपार्थिवा पृथिव्यां भवानि vदिव्यानि दिवि भवानि च वसूनि[1] vदृळ्हा vचित् दृढान्यपि vमज्मना । मज्मनेति बलनाम । मज्मना शोधकेन बलेन vप्र vच्यावयन्ति प्रचालयन्ति ॥ अभोग्घनः । भोजयन्तीति भोजः । न भोजः अभोजः । तेषां हन्तारः । ' बहुलं छन्दसि ' इति हन्तेः क्विप् । ' झयो होऽन्यतरस्याम् ' ( पा. सू. ८. ४. ६२ ) इति हकारस्य घत्वम् । ' इन्हन्पूषार्यम्णां शौ ' ( पा. सू. ६. ४. १२ ) इति नियमात् दीर्घाभावः । ववक्षुः । ' वह प्रापणे ' । अस्मात् इच्छासनि ' एकाचः°' इति इट्प्रतिषेधः । द्विर्भावः । ढत्वकत्वषत्वानि । ' सन्यतः ' इति इत्वाभावश्छान्दसः । लिटि उसि ' °अमन्त्रे° ' ( पा. सू. ३. १. ३५ ) इति निषेधात् आम्प्रत्ययाभावे ' अतो लोपः ' इति अकारलोपः । प्रत्ययस्वरः । पादादित्वात् निघाताभावः ॥

चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षःसु रुक्माँ अधि येतिरे शुभे ।
अंसेष्वेषां नि मिमृक्षुरृष्टयः साकं जज्ञिरे स्वधया दिवो नरः ॥ ४ ॥

चित्रैः । अञ्जिऽभिः । वपुषे । वि । अञ्जते । वक्षःऽसु । रुक्मान् । अधि । येतिरे । शुभे ।
अंसेषु । एषाम् । नि । मिमृक्षुः । ऋष्टयः । साकम् । जज्ञिरे । स्वधया । दिवः । नरः ॥४॥

वपुरिति रूपनाम । vवपुषे रूपाय शोभार्थं मरुतः vचित्रैः नानाविधैः vअञ्जिभिः रूपाभिव्यञ्जनसमर्थैराभरणैः स्वशरीराणि vव्यञ्जते व्यक्तं कुर्वन्ति । अलंकुर्वन्तीत्यर्थः । vवक्षःसु[2] भुजान्तरेषु vरुक्मान् रोचमानान् हारान् vअधि vयेतिरे उपरि चक्रिरे । किमर्थम् । vशुभे शोभार्थम् । अपि च vएषां मरुताम् vअंसेषु vऋष्टयः आयुधानि vनि vमिमृक्षुः निमृष्टाः स्थिता बभूवुः । तैरायुधैः सहिताः vनरः नेतारो मरुतः vदिवः अन्तरिक्षात् vस्वधया स्वकीयेन बलेन vसाकं सह vजज्ञिरे प्रादुर्बभूवुः ॥ येतिरे । ' यती प्रयत्ने ' । लिटि ' अत एकहल्मध्ये° ' इति एत्वाभ्यासलोपौ । शुभे । ' शुभ दीप्तौ ' । संपदादिलक्षणो भावे क्विप् । ' सावेकाचः° ' इति चतुर्थ्या उदात्तत्वम् । मिमृक्षुः । ' मृजूष् शुद्धौ ' । सनि ऊदित्त्वात् इडभावः । ' हलन्ताच्च ' इति सनः कित्त्वाद्गुणाभावः । द्विर्वचनादि । ' सन्यतः ' इति इत्वम् । लिटि उसि ' अतो लोपः ' इति अकारलोपः । जज्ञिरे । ' जनी प्रादुर्भावे ' । लिटि ' गमहन° ' इत्यादिना उपधालोपः ॥

---

१. ढ-स–वस्तूनि । २. ढ–तथा वक्षःसु ।

ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत ।
दुहन्त्यूधर्दिव्यानि धूतयो भूमिं पिन्वन्ति पयसा परिज्रयः ॥ ५ ॥

ईशानऽकृतः । धुनयः । रिशादसः । वातान् । विऽद्युतः । तविषीभिः । अक्रत ।
दुहन्ति । ऊधः । दिव्यानि । धूतयः । भूमिम् । पिन्वन्ति । पयसा । परिऽज्रयः ॥ ५ ॥

ईशानकृतः स्तोतारमीशानं धनाधिपतिं कुर्वाणाः धुनयः मेघादीनां कम्पयितारः रिशादसः रिशानां हिंसकानामत्तारः । यद्वा । रिशतां हिंसतामसितारो निरसितारः । एवंभूता मरुतः तविषीभिः आत्मीयैर्बलैः वातान् पुरोवातादीन् विद्युतः विद्योतमानास्तडितश्च अक्रत कुर्वन्ति । कृत्वा च परिज्रयः परितो गन्तारः धूतयः कम्पयितारो मरुतः दिव्यानि दिविभवानि ऊधः ऊधःस्थानीयान्यभ्राणि दुहन्ति रिक्तीकुर्वन्ति । जलरहितानि कुर्वन्तीत्यर्थः । तदनन्तरं भूमिं पयसा मेघान्निर्गतेनोदकेन जलेन पिन्वन्ति सिञ्चन्ति ॥ रिशादसः । 'रिश हिंसायाम्'। इगुपधलक्षणः कः । रिशन्ति हिंसन्तीति रिशाः शत्रवः । तानदन्तीति रिशादसः । असुन् । नित्त्वादाद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा । रिशच्छब्दात् शत्रन्तात् 'असु क्षेपणे' इत्यस्मात् क्विप् । व्यत्ययेन पूर्वपदस्य उपधादीर्घः अन्तोदात्तत्वं च । अक्रत । करोतेश्छान्दसो वर्तमाने लुङ् । 'मन्त्रे घस°' इति च्लेर्लुक् । ऊधः । 'सुपां सुलुक्°' इति विभक्तेर्लुक् ॥ ॥ ६ ॥

मरुत्वतीयशस्त्रे 'पिन्वन्त्यपः' इत्येषा धाय्या । सूत्रितं च–'अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः' ( आश्व. श्रौ. ५. १४ ) इति ॥

पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।
अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ॥ ६ ॥

पिन्वन्ति । अपः । मरुतः । सुऽदानवः । पयः । घृतऽवत् । विदथेषु । आऽभुवः ।
अत्यम् । न । मिहे । वि । नयन्ति । वाजिनम् । उत्सम् । दुहन्ति । स्तनयन्तम् । अक्षितम् ॥ ६ ॥

सुदानवः शोभनदानाः मरुतः पयः क्षीरवत् सारवतीः अपः पिन्वन्ति सिञ्चन्ति । आभुवः । आभवन्तीत्याभुव ऋत्विजः । ते विदथेषु यज्ञेषु घृतवत् । यथा घृतं सिञ्चत्येवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः । तत्र हेतुमाह । अत्यं न यथा अश्वं सादिनो विनयन्ति युद्धार्थं शिक्षन्त्येवं[1] मरुतः वाजिनं वेगवन्तं मेघं मिहे वर्षणाय वि नयन्ति स्वाधीनं कुर्वन्तीति भावः । विनीय च स्तनयन्तं गर्जन्तम् अक्षितम् अक्षीणम् उत्सम् । उत्सवन्त्यस्मादाप इत्युत्सो मेघः । तं दुहन्ति रिक्तीकुर्वन्ति ॥ सुदानवः । नुप्रत्ययान्तो दानुशब्द आद्युदात्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । मिहे । 'मिह सेचने' । संपदादिलक्षणो भावे क्विप् । 'सावेकाचः°' इति

१. च–शिक्षयन्त्येवम् ।

विभक्तिरुदात्ता । स्तनयन्तम् । 'स्तन शब्दे' । चुरादिरदन्तः । अतो लोपस्य स्थानिवद्भावात् वृद्ध्याद्यभावः[1] ॥

महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः ।
मृगाइव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम् ॥ ७ ॥

महिषासः । मायिनः । चित्रऽभानवः । गिरयः । न । स्वऽतवसः । रघुऽस्यदः ।
मृगाःऽइव । हस्तिनः । खादथ । वना । यत् । आरुणीषु । तविषीः । अयुग्ध्वम् ॥ ७ ॥

महिष इति महन्नाम । ᵛमहिषासः महान्तः । मायेति ज्ञाननाम । ᵛमायिनः प्राज्ञाः ᵛचित्रभानवः शोभनदीप्तयः ᵛगिरयो ᵛन ᵛस्वतवसः पर्वता इव स्वकीयेन बलेन युक्ताः ᵛरघुष्यदः शीघ्रगमना हे मरुत एवंभूतगुणविशिष्टाः[2] यूयं ᵛहस्तिनः हस्तवन्तः ᵛमृगाइव गजा इव ᵛवना वनानि वृक्षजातानि ᵛखादथ भक्षयथ । प्रभङ्क्थेति यावत् । ᵛयत् यस्मात् ᵛआरुणीषु अरुणवर्णासु वडवासु ᵛतविषीः बलानि ᵛअयुग्ध्वं संयोजितवन्तः । तस्माद्भवतामिव वाहनस्यापि प्रबलत्वात्तत्संयुक्ता भवन्तः सर्वं भञ्जन्तीत्यर्थः ॥ रघुष्यदः । 'स्यन्दू प्रस्रवणे' । रघु शीघ्रं स्यन्दन्ते गच्छन्तीति रघुष्यदः । 'क्विप् च' इति क्विप् । 'अनिदिताम्°' इति नलोपः । 'वाल्मूललध्वलम्°' (पा. म. ८. २. १८) इति लत्वविकल्पः । कृदुत्तरपदप्रकृतिस्वरत्वम् । खादथ । 'खाद भक्षणे' । अयुग्ध्वम् । 'युजिर् योगे' । लुङि च्लेः सिच् । 'एकाचः°' इति इट्प्रतिषेधः । 'धि च' (पा. सू. ८. २. २५) इति सकारलोपः । 'चोः कुः' इति कुत्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः ॥

सिंहाइव नानदति प्रचेतसः पिशाइव सुपिशो विश्ववेदसः ।
क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः समित्सबाधः शवसाहिमन्यवः ॥ ८ ॥

सिंहाःऽइव । नानदति । प्रऽचेतसः । पिशाःऽइव । सुऽपिशः । विश्वऽवेदसः ।
क्षपः । जिन्वन्तः । पृषतीभिः । ऋष्टिऽभिः । सम् । इत् । सऽबाधः । शवसा । अहिऽमन्यवः ॥ ८ ॥

ᵛप्रचेतसः प्रकृष्टज्ञाना मरुतः ᵛसिंहाइव ᵛनानदति भृशं शब्दं कुर्वन्ति । यथा सिंहा गिरिगह्वरेषु गम्भीरं शब्दं कुर्वन्ति एवं मरुत्सु अप्यागतेषु गम्भीरः शब्द उत्पद्यते इति भावः । तथा ᵛसुपिशः शोभनावयवाः शोभनालंकारा वा । तत्र दृष्टान्तः । ᵛपिशाइव । पिश इति रुरुनाम । यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिरलंकृतास्तद्वत् । ᵛविश्ववेदसः सर्वज्ञाः ᵛक्षपः शत्रूणां क्षपयितारः ᵛजिन्वन्तः स्तोतॄन् प्रीणयन्तः ᵛशवसा बलेन ᵛअहिमन्यवः आहननशीलमन्युयुक्ताः । यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः । यद्वा । मननं ज्ञानं मन्युः । अहीनज्ञानाः । उत्कृष्टबुद्धय इत्यर्थः । एवंभूता मरुतः ᵛपृषतीभिः । पृषत्य इति मरुतां वाहनस्याख्या । पृषत्यः श्वेतबिन्द्वङ्किता मृग्य इत्यैतिहासिकाः । नानावर्णा मेघमाला इति नैरुक्ताः । ताभिः ᵛऋष्टिभिः आयुधैश्च सहिताः सन्तः ᵛसबाधः शत्रुभिर्बाधितान्

---

1. ड-स-वृद्ध्यभावः । 2. ड-न-एवंगुणविशिष्टाः ।

यजमानान् ^Vसमिन् समानमेव युगपदेव रक्षितुमागच्छन्तीति शेषः ॥ नानदति । 'नद अव्यक्ते शब्दे'। अस्मात् यङ्लुगन्तात् लट्। पिशाइव। 'पिश अवयवे'। इगुपधलक्षणः कः। सुपिशः। सुपूर्वात् 'पिश अवयवे' इत्यस्मात् 'क्विप् च' इति क्विप्। पृषतीभिः। 'पृषु सेचने'। 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ. सू. २. २४१) इति शतृवद्भावात् 'उगितश्च' इति ङीप्। अत एव 'शतुरनुमः' इति नद्या उदात्तत्वे प्राप्ते 'बृहन्महतोरुपसंख्यानम्' इति नियमात् तस्याभावः ॥

रोद॑सी॒ आ व॑दता गणश्रियो॒ नृषा॑चः शूरा॒ः शव॑साहिमन्यवः ।
आ व॒न्धुरे॑ष्व॒मति॒र्न द॑र्श॒ता वि॒द्युन्न त॑स्थौ मरुतो॒ रथे॑षु वः ॥ ९ ॥

रोद॑सी॒ इति॑ । आ । व॒द॒त॒ । ग॒ण॒ऽश्रि॒यः॒ । नृ॒ऽसा॑चः । शूरा॒ः । शव॑सा । अहि॑ऽमन्यवः ।
आ । व॒न्धुरे॑षु । अ॒मतिः॑ । न । द॒र्श॒ता । वि॒ऽद्युत् । न । त॒स्थौ॒ । म॒रु॒तः॒ । रथे॑षु । व॒ः ॥९॥

हे ^Vगणश्रियः गणशः श्रयमाणाः सप्तगणरूपेणावस्थिताः ^Vनृषाचः नॄन् यजमानान् हविःस्वीकरणाय सेवमानाः ^Vशूराः शौर्योपेता एवंभूता हे मरुतः ^Vशवसा बलेन ^Vअहिमन्यवः आहननस्वभावकोपयुक्ताः सन्तः ^Vरोदसी द्यावापृथिव्यौ ^Vआ ^Vवदत आ समन्ताच्छब्दयत। युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः। किंच हे ^Vमरुतः ^Vवः युष्माकं तेजः ^Vवन्धुरेषु। वन्धककाष्ठनिर्मितं[1] सारथेः स्थानं वन्धुरमित्युच्यते। तद्युक्तेषु ^Vरथेषु ^Vआ ^Vतस्थौ आतिष्ठति। अवस्थितं सत्सर्वैर्दृश्यते। तत्र दृष्टान्तद्वयमुच्यते। ^Vअमतिर्न। अमतिरिति रूपनाम। यथा निर्मलं रूपं सर्वैर्दृश्यते। ^Vदर्शता ^Vविद्युन्न। यथा वा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते एवं रथे[2] स्थितानां[2] युष्माकं ज्योतिरपि सर्वैर्दृश्यते इत्यर्थः ॥ वदत। 'ऋचि तुनुघ॰' इत्यादिना दीर्घः। नृषाचः। पादादित्वादामन्त्रिताद्युदात्तत्वम्। अमतिः। अम गत्यादिषु। 'अमेरतिः' (उ. सू. ४. ४९९) इति औणादिकः अतिप्रत्ययः। प्रत्ययाद्युदात्तत्वम्। दर्शता। 'भृमृदृशि॰' इत्यादिना अतच्प्रत्ययः। चित्त्वादन्तोदात्तत्वम् ॥

वि॒श्ववे॑दसो र॒यिभि॒ः समो॑कस॒ः संमि॑श्लास॒स्तवि॑षीभिर्वि॒र॒प्शिन॑ः ।
अस्ता॑र॒ इषुं॑ दधि॒रे गभ॑स्त्योरन॒न्तशु॑ष्मा॒ वृष॑खादयो॒ नर॑ः ॥ १० ॥

वि॒श्वऽवे॑दसः । र॒यिऽभि॑ः । सम्ऽओ॑कसः । सम्ऽमि॑श्लासः । तवि॑षीभिः । वि॒ऽर॒प्शिन॑ः ।
अस्ता॑रः । इषु॑म् । द॒धि॒रे । गभ॑स्त्योः । अ॒न॒न्तऽशु॑ष्माः । वृष॑ऽखादयः । नर॑ः ॥ १० ॥

^Vविश्ववेदसः सर्वज्ञाः ^Vरयिभिः धनैः ^Vसमोकसः समाननिवासाः समवेता वा। धनाधिपतय इत्यर्थः। ^Vतविषीभिः बलैः ^Vसंमिश्लासः संमिश्राः। संयुक्ता इत्यर्थः। ^Vविरप्शिनः। महन्नामैतत्। महान्तः। ^Vअस्तारः शत्रूणां निरसितारः ^Vअनन्तशुष्माः अनवच्छिन्नबलाः ^Vवृषखादयः। वृषा इन्द्रः

---

१. ढ–बन्धनकाष्ठनिर्मितम्। २. ढ-द-ध-स–रथेऽवस्थितानाम्; च-छ-न-फ–रथेष्ववस्थितानाम्।

खादिः आयुधस्थानीयो येषां ते तथोक्ताः । यद्वा । वृषा सोमः खादिः खाद्यः पेयो येषां ते । नरः नेतारः । एवंभूता मरुतः । गभस्तिरिति बाहुनाम । गभस्त्योः बाह्वोः इषुं दधिरे । शत्रूणां निरसनाय धनुर्बाणादिकमायुधं धारयन्ति ॥ स्वोकसः । ‘ उच समवाये ’ । असुनि बहुलवचनात् कुत्वमिति ‘ ओक उचः के ’ इत्यत्रोक्तम् ( का. ७. ३. ६४ ) । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । संमिश्लासः । कपिलकादित्वात् लत्वम् । विरप्शिनः । ‘ रप लप व्यक्तायां वाचि ’ । विपूर्वादस्मात् बहुलवचनात् शक्प्रत्ययः । विविधं शब्दं रपन्तीति विरप्शाः स्तोतारः । ते एषां सन्तीति विरप्शिनः । यद्वा । विविधं रपणं विरप्शम् । तदेषामस्तीति । मरुतो हि विविधं शब्दं कुर्वते । इनिप्रत्ययस्वरः । अस्तारः । ताच्छीलिकः तृन् । इडभावश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । अनन्तशुष्माः । नास्त्यन्तोऽस्येति अनन्तः । ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । अनन्तः शुष्मो बलं येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वृषखादयः । ‘ खाद भक्षणे ’ । औणादिक इन्प्रत्ययः । वृषन्शब्दः कनिन्प्रत्ययान्त आद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ७ ॥

हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नन्त आपथ्यो३ न पर्वतान् ।

मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ॥ ११ ॥

हिरण्ययेभिः । पविऽभिः । पयःऽवृधः । उत् । जिघ्नन्ते । आऽपथ्यः । न । पर्वतान् ।

मखाः । अयासः । स्वऽसृतः । ध्रुवऽच्युतः । दुध्रऽकृतः । मरुतः । भ्राजत्ऽऋष्टयः ॥ ११ ॥

मरुतः हिरण्ययेभिः सुवर्णमयैः । यद्वा । हितरमणीयैः पविभिः रथानां चक्रैः पर्वतान् पर्ववतो मेघान् यद्वा शिलोच्चयान् उज्जिघ्नन्ते ऊर्ध्वं गमयन्ति । स्थानात् प्रच्यावयन्तीत्यर्थः । तत्र दृष्टान्तः । पथ्यः न । यथा पथि गच्छन् रथो मार्गे आस्थितं तृणवृक्षादिकं चूर्णीकृत्योर्ध्वं नयति गमयति । यद्वा । यथा संयुक्ता गजा मार्गस्थितं वृक्षादिकं भग्नं कुर्वन्ति । कीदृशा मरुतः । पयोवृधः पयसो वृष्ट्युदकस्य वर्धयितारः । यद्वा पृश्नेः पयसा वर्धमानाः । ‘ पृश्नियै वै पयसो मरुतो जाताः ’ ( तै. सं. २. २. ११. ४ ) । इति श्रूयते । मखाः । मख इति यज्ञनाम । तद्वन्तः । अयासः देवयजनदेशं प्रति गन्तारः स्वसृतः शत्रून्प्रति स्वयमेव सरन्तो गच्छन्तः ध्रुवच्युतः ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः दुध्रकृतः दुध्रं दुष्टानां[1] धारयितारमात्मानं कुर्वाणाः । यद्वा । दुर्धरमन्यैर्धर्तुमशक्यमात्मानं कुर्वाणाः । भ्राजदृष्टयः दीप्यमानायुधाः ॥ उज्जिघ्नन्ते । हन्तेर्व्यत्ययेनात्मनेपदम् । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । ‘ बहुलं छन्दसि ’ इति अभ्यासस्य इत्वम् । ‘ गमहन० ’ इत्यादिना उपधालोपः । ‘ हो हन्तेः० ’ इति घत्वम् । व्यत्ययेन अन्तादेशः । पथ्यः । पथि भवः । ‘ भवे छन्दसि ’ इति यत् । ‘ नस्तद्धिते ’ ( पा. सू. ६. ४. १४४ ) इति टिलोपः । व्यत्ययेनान्तस्वरितत्वम् । यद्वा । ‘ छन्दसीवनिपौ० ’ इति मत्वर्थीय ईकारः । ‘ उदात्तस्वरितयोर्यणः० ’ इति विभक्तेः स्वरितत्वम् । अयासः । ‘ अय पय गतौ ’ । अयन्ते इत्ययाः । पचाद्यच् । ‘ आज्जसेरसुक् ’ । दुध्रकृतः । अत्र दुःशब्देन दुष्टा लक्ष्यन्ते । ‘ धृञ् धारणे ’ । दुष्टान् धारयतीति दुध्रः । मूलविभुजादित्वात् ( पा. सू. ३. २. ५. २ ) कप्रत्ययः । यद्वा । ‘ ईषद्दुःसुषु० ’ इति दुःशब्दे उपपदे कर्मणि खल् । गुणाभावश्छान्दसः । तं कुर्वन्तीति दुध्रकृतः । करोतेः ‘ क्विप् च ’ इति क्विप् । रेफलोपश्छान्दसः ॥

---

1. ह-स-दुष्टानां शत्रूणाम् ।

घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि ।
रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ॥ १२ ॥

घृषुम् । पावकम् । वनिनम् । विऽचर्षणिम् । रुद्रस्य । सूनुम् । हवसा । गृणीमसि ।
रजःऽतुरम् । तवसम् । मारुतम् । गणम् । ऋजीषिणम् । वृषणम् । सश्चत । श्रिये ॥१२॥

घृषुं शत्रूणां बलस्य घर्षकं विनाशयितारं पावकं सर्वेषां शोधकं वनिनम् । वनमित्युदकनाम । उदकवन्तम् । वृष्टिप्रदमित्यर्थः । विचर्षणिं विशेषेण सर्वस्य द्रष्टारं रुद्रस्य महादेवस्य सूनुं पुत्रभूतम् । एवंविधं मरुतां समूहं हवसा आह्वानसाधनेन स्तोत्रेण गृणीमसि शब्दयामः[1] । स्तुम इत्यर्थः । हे ऋत्विग्यजमानाः यूयमपि श्रिये ऐश्वर्याय धनार्थं मारुतं गणं मरुतां संघं सश्चत प्राप्नुत । कीदृशम् । रजस्तुरं पार्थिवस्य पांसोस्त्वरयितारं प्रेरकमित्यर्थः । तवसं प्रवृद्धं ऋजीषिणम् । तृतीयसवने हि मरुतः स्तूयन्ते तत्र च ऋजीषमभिषुण्वन्तीति ऋजीषसंबन्धः श्रुतः । अतस्तद्वन्तं वृषणं कामानां वर्षितारम् ॥ हवसा । ह्वेञः असिप्रत्यये 'बहुलं छन्दसि' इति संप्रसारणम् । गृणीमसि । 'गॄ शब्दे' । इदन्तो मसिः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । रजस्तुरम् । रजांसि तुतोर्तीति रजस्तूः । 'तुर त्वरणे' । 'क्विप् च' इति क्विप् । वृषणम् । 'वा षपूर्वस्य निगमे' इति दीर्घाभावः । सश्चत । 'ष्लुच्च षस्ज गतौ' इत्यत्र सश्चिमप्येके इति धातुवृत्तावुक्तम् । गतिकर्मसु च सश्चतीति पठितम् । श्रिये । 'सावेकाचः०' इति विभक्तेरुदात्तत्वम् ॥

प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत ।
अर्वद्भिर्वाजं भरते धना नृभिराप्रच्छ्यं क्रतुमा क्षेति पुष्यति ॥ १३ ॥

प्र । नु । सः । मर्तः । शवसा । जनान् । अति । तस्थौ । वः । ऊती । मरुतः । यम् । आवत ।
अर्वत्ऽभिः । वाजम् । भरते । धना । नृऽभिः । आऽपृच्छ्यम् । क्रतुम् । आ । क्षेति । पुष्यति ॥१३॥

स मर्तः मनुष्यः शवसा बलेन जनान् जातान् अन्यान् पुरुषान् अति अतीत्य नु क्षिप्रं तस्थौ प्रतिष्ठितो भवति । हे मरुतः वः युष्माकम् ऊती ऊत्या रक्षणेन यं पुरुषम् आवत अरक्षत । अपि च स पुरुषः अर्वद्भिः अश्वैः साधनभूतैः वाजम् अन्नं नृभिः स्वकीयैर्मनुष्यैः धना धनानि च भरते संपादयति । तथा आपृच्छ्यम् आप्रष्टव्यं शोभनं क्रतुम् अग्निष्टोमादिकर्म[2] आ क्षेति आप्नोति । पुष्यति प्रजया पशुभिः पुष्टो भवति च ॥ ऊती । तृतीयायाः पूर्वसवर्णदीर्घत्वम् । नृभिः । 'नृ चान्यतरस्याम्' इति विभक्त्युदात्तत्वप्रतिषेधः । आपृच्छ्यम् । 'छन्दसि निष्टर्क्य०' इत्यादौ आङ्पूर्वात् पृच्छतेः क्यप्प्रत्ययान्तो निपात्यते । ग्रहिज्यादिना संप्रसारणम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । कृदुत्तरपदप्रकृतिस्वरत्वम् । क्षेति । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । पुष्यति । 'पुष पुष्टौ' । दिवादित्वात् श्यन् । नित्त्वादाद्युदात्तत्वम् । तिङः परत्वात् निघाताभावः ॥

---

१. ढ–गृणीमः । २. ढ–अग्निष्टोमादिकं कर्म ।

चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्तं शुष्मं मघवत्सु धत्तन ।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥ १४ ॥

चर्कृत्यम् । मरुतः । पृत्ऽसु । दुस्तरम् । द्युऽमन्तम् । शुष्मम् । मघवत्ऽसु । धत्तन ।
धनऽस्पृतम् । उक्थ्यम् । विश्वऽचर्षणिम् । तोकम् । पुष्येम । तनयम् । शतम् । हिमाः ॥ १४ ॥

हे मरुतः मघवत्सु हविर्लक्षणधनयुक्तेषु यजमानेषु पुत्रं धत्तन स्थापयत । दत्तेति यावत् । कीदृशं पुत्रम् । चर्कृत्यं कार्येषु[1] पुनःपुनः पुरस्कर्तव्यम् । सर्वकर्मकुशलमित्यर्थः । पृत्सु संग्रामेषु दुष्टरं दुःखेन तरितव्यम् । अजेयमित्यर्थः । द्युमन्तं दीप्तिमन्तं शुष्मं शत्रूणां शोषकं बलवन्तं धनस्पृतं धनानां स्प्रष्टारं धनैः प्रीतं वा उक्थ्यम् । उक्थं स्तोत्रम् । तदर्हम् । प्रशस्यमित्यर्थः । विश्वचर्षणिं विशेषेण द्रष्टारं सर्वज्ञम् । एवंविधं तोकं पुत्रं तनयं पौत्रं च शतं हिमाः हेमन्तर्तूपलक्षितान् शतं संवत्सरान् जीवन्तः सन्तः पुष्येम पोषयेम । अत्र हिमशब्देन तद्युक्ता हेमन्तर्तवोऽभिधीयन्ते । तथा च ब्राह्मणमेवमाम्नायते–' शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह ' ( तै. सं. १. ५. ८. ५ ) इति ॥ चर्कृत्यम् । ' प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ' ( परिभा. ९३. ९ ) इति न्यायेन करोतेर्यङ्लुगन्तात् ' विभाषा कृवृषोः ' ( पा. सू. ३. १. १२० ) इति क्यप् । तुगागमः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । पृत्सु । ' पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ' ( पा. सू. ६. १. ६३. १ ) इति पृतनाशब्दस्य पृदादेशः । दुष्टरम् । ' तॄ प्लवनतरणयोः ' । ' ईषद्दुःसुषु° ' इति खल् । सुषामादेराकृतिगणत्वात् षत्वम् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । धत्तन । ' तप्तनप्तनथनाश्च ' इति तस्य तनादेशः ॥

ऐकादशिनस्य मारुतस्य पशोर्वपायागस्य ' नू ष्ठिरम् ' इत्येषा याज्या । सूत्रितं च–' शुची वो हव्या मरुतः शुचीनां नू ष्ठिरं मरुतो वीरवन्तम् ' ( आश्व. श्रौ. ३. ७ ) इति ॥

नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त ।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १५ ॥

नु । स्थिरम् । मरुतः । वीरऽवन्तम् । ऋतिऽसहम् । रयिम् । अस्मासु । धत्त ।
सहस्रिणम् । शतिनम् । शूशुऽवांसम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १५ ॥

हे मरुतः स्थिरं स्थास्नुं वीरवन्तं वीरैः पुत्रैस्तद्वन्तम् । यद्वा । वीर्योपेतम् । ऋतीषाहं गन्तणां शत्रूणामभिभवितारं एवंविधं रयिं पुत्रलक्षणं धनम् अस्मासु[2] धत्त[2] स्थापयत । सहस्रिणं शतिनम् एतत्संख्याकधनवन्तं अत एव शूशुवांसं प्रवृद्धम् । अपि चास्माकं रक्षणाय धिया बुद्ध्या कर्मणा वा प्राप्तधनो मरुद्गणः प्रातःकाले जगम्यात् आगच्छतु ॥ नू ष्ठिरम् । ' ऋचि तुनुघ° ' इति दीर्घः । ' पूर्वपदात् ' इति षत्वम् । ऋतीषाहम् । ' ऋ गतौ ' । कर्तरि क्विप् । ' षह अभिभवे ' ।

---

१. न–पुत्रकार्येषु । २. द–अस्मासु नु क्षिप्रं धत्त ।

'छन्दसि सहः' इति ण्विप्रत्ययः। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्। सुषामादित्वात् षत्वम्। शुशुवांसम्। 'टुओश्वि गतिवृद्ध्योः'। लिटः क्वसुः। 'विभाषा श्वेः' (पा. सू. ६. १. ३०) इति संप्रसारणम्। द्विर्वचने तुजादित्वात् अभ्यासस्य दीर्घत्वम्। 'वस्वेकाजाद्घसाम्' इति नियमात् इडभावः। प्रत्ययस्वरः ॥　　॥ ८ ॥　॥ ११ ॥

द्वादशेऽनुवाके नव सूक्तानि। तत्र 'पश्वा' इत्यादीनि षट् सूक्तानि द्वैपदानि। तेष्वध्ययनसमये द्विपदे द्वे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते। अयुक्संख्यासु तु या अन्त्या अतिरिच्यते सा तथैवाम्नायते। प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव। प्रयोगे तु ताः पृथक् पृथक् शंसनीयाः। सूत्र्यते हि–'पश्वा न तायुमिति द्वैपदम्' (आश्व. श्रौ. ८. १२) इति। तत्र 'पश्वा' इति दशर्चं प्रथमं सूक्तम्। अत्रानुक्रम्यते–'पश्वा दश पराशरः शाक्त्यो द्वैपदं तत्' इति। शक्तिपुत्रः पराशर ऋषिः। तत्पुत्रत्वं च स्मर्यते–'वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः' इति। द्विपदा विराट् छन्दः। 'विंशतिका द्विपदा विराजः' (अनु. १२. ८) इति हि तल्लक्षणम्। अग्निर्देवता। 'परमाग्नेयमैन्द्रात्' इति परिभाषितम्। 'पश्वा न तायुम्' इत्यारभ्य 'इत्था हि' इत्यतः प्राक् यत्सूक्तजातं तत्सर्वमाग्नेयमिति तस्यार्थः। 'द्वैपदं तत्' इत्युक्तत्वादिदमादीनि षट् सूक्तानि तुह्यादिपरिभाषया द्वैपदानि। दशमेऽहनि वैश्वदेवशस्त्रे वैश्वदेवसूक्तात् पूर्वमेतत् द्वैपदं सूक्तं शंसनीयम्। सूत्रमुदाहृतम् ॥

**प॒श्वा न ता॒युं गुहा॒ चत॑न्तं॒ नमो॑ युजा॒नं नमो॒ वह॑न्तम्।**

**स॒जोषा॒ धीरा॑ः प॒दैरनु॑ ग्मन्नुप॑ त्वा सीद॒न्विश्वे॒ यज॑त्राः ॥ १ ॥ २ ॥**

प॒श्वा। न। ता॒युम्। गुहा॑। चत॑न्तम्। नम॑ः। यु॒जा॒नम्। नम॑ः। वह॑न्तम्।

स॒ऽजोषा॑ः। धीरा॑ः। प॒दैः। अनु॑। ग्मन्। उप॑। त्वा॒। सी॒द॒न्। विश्वे॑। यज॑त्राः ॥ १ ॥ २ ॥

ᵛधीराः मेधाविनो देवाः ᵛसजोषाः समानप्रीतयः सन्तो हे अग्ने त्वां ᵛपदैः मार्गे पादकृतैर्लाञ्छनैः ᵛअनु ᵛग्मन् अन्वगमन्। कीदृशम्। ᵛपश्वा अपहृतेन पशुना सह वर्तमानं ᵛतायुं ᵛन। तायुरिति स्तेननाम। यथा स्तेनः परकीयं पश्वादिधनमपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वत्। ᵛगुहा ᵛचतन्तं अप्रूपायां गुहायां गच्छन्तं वर्तमानम्। चततिर्गतिकर्मा। तथा च तैत्तिरीयैरग्नेरप्सु प्रवेशः समाम्नायते— 'स निलायत सोऽपः प्राविशत्' (तै. सं. २. ६. ६. १) इति। यद्वा। अश्वत्थगुहायां[1] वर्तमानम्[1]। श्रूयते च—'अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठत्' (तै. ब्रा. १. १. ३. ९) इति। तथा ᵛनमो ᵛयुजानं हविर्लक्षणमन्नमात्मना संयुजानं ᵛनमो ᵛवहन्तं देवेभ्यः प्रत्तं हविर्वहन्तम्। ᵛयजत्राः यजनीयाः ᵛविश्वे सर्वे देवा[2] हे अग्ने ᵛत्वा[2] त्वाम् ᵛउप ᵛसीदन् समीपं प्राप्नुवन्। ददृशुरित्यर्थः ॥ पश्वा। तृतीयैकवचनस्य 'जसादिषु च्छन्दसि वावचनम्' इति नाभावाभावः। 'उदात्तयणः°' इति विभक्तेरुदात्तत्वम्। गुहा। भिदादिषु पाठात् अङ्प्रत्ययान्तः। वृषादिषु पाठादाद्युदात्तत्वम्। 'सुपां सुलुक्°' इति सप्तम्या लुक्। युजानम्। शानचि 'बहुलं छन्दसि' इति विकरणस्य लुक्। सजोषाः। 'जुषी प्रीतिसेवनयोः'। समानं जुषन्त इति सजोषसः। 'समानस्य च्छन्दसि°' इति सभावः। कृदुत्तरपदप्रकृतिस्वरत्वम्। 'सुपां सुलुक्°' इति जसः सुः। ग्मन्।

---

१. च-न-फ–अश्वत्थगुहायां गच्छन्तं वर्तमानम्।　२. च-छ-ण-न-फ-ल-श–देवा त्वा।

गमेर्लुङि ' मन्त्रे घस ' इति च्लेर्लुक् । ' गमहन ' इत्यादिना उपधालोपः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । यजत्राः । ' अमिनक्षि ' इत्यादिना अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

ऋतस्य॑ दे॒वा अनु॑ व्र॒ता गु॒र्भुव॒त्परि॑ष्टि॒र्द्यौर्न भूम॑ ।
वर्ध॑न्ती॒माप॑ः प॒न्वा सुशि॑श्वि॒मृ॒तस्य॒ योना॒ गर्भे॒ सुजा॑तम् ॥ ३ ॥ ४ ॥

ऋतस्य॑ । दे॒वाः । अनु॑ । व्र॒ता । गुः॒ । भुव॑त् । परि॑ष्टिः । द्यौः । न । भूम॑ ।
वर्ध॑न्ति । ई॒म् । आप॑ः । प॒न्वा । सु॒ऽशि॑श्विम् । ऋ॒तस्य॑ । योना॑ । गर्भे॑ । सु॒ऽजा॑तम् ॥३॥४॥

उक्त एवार्थः स्पष्टीक्रियते । देवाः ऋतस्य गतस्य पलायितस्याग्नेः व्रता व्रतानि कर्माणि गमनावस्थानशयनादिरूपाणि अनु गुः अन्वेष्टुमगमन् । तदनन्तरं परिष्टिः परितः सर्वतोऽन्वेषणं भुवत् अभवत् । भूम भूमिरप्यग्नेरन्वेष्टृभिर्देवैः द्यौर्न स्वर्ग इवाभूत् । इन्द्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ताः[1] इत्यर्थः । आपः अब्देवताः ईम् एनमुदके प्रविष्टमग्निं वर्धन्ति प्रवर्धयन्ति[2] । यथा देवा न पश्यन्ति तथारक्षन्नित्यर्थः । कीदृशम् । पन्वा स्तोत्रेण सुशिश्विं सुष्ठु प्रवर्धितम् । ऋतस्य योना । योनिरित्युदकनाम । ऋतस्य यज्ञस्याग्नस्य वा कारणभूते जले गर्भे गर्भस्थाने मध्ये सुजातं सुष्ठु प्रादुर्भूतम् । एवमप्सु वर्तमानमग्निं देवेभ्यो मत्स्यः प्रावोचत् । तदनन्तरं देवास्तमज्ञासिषुरिति भावः । तथा च तैत्तिरीयके—'स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् ' ( तै. सं. २. ६. ६. १ ) इति ॥ व्रता । ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । गुः । ' इण् गतौ ' । ' इणो गा लुङि ' इति गादेशः । ' गातिस्था० ' इति सिचो लुक् । ' आतः ' इति झेर्जुस् । ' उस्यपदान्तात् ' इति पररूपत्वम् । परिष्टिः । ' इषु इच्छायाम् ' । क्तिनि ' तितुत्र० ' इति इट्प्रतिषेधः । शकन्ध्वादित्वात्पररूपत्वम् ( पा. सू. ६. १. ९४. ४ ) । ' तादौ च निति०' इति गतेः प्रकृतिस्वरत्वम् । भूम । ' सुपां सुलुक्० ' इति सोः डादेशः । ह्रस्वश्छान्दसः । वर्धन्ति । ' छन्दस्युभयथा ' इति शप आर्धधातुकत्वात् ' णेरनिटि ' इति णिलोपः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । पन्वा । ' पन स्तुतौ ' । औणादिको भावे उप्रत्ययः । सुशिश्विम् । ' टुओश्वि गतिवृद्ध्योः ' । ' आदृगमहनजनः० ' इत्यत्र ' उत्सर्गश्छन्दसि ' ( पा. सू. ३. २. १७१. २ ) इति वचनात् किप्रत्ययः । ' वचिस्वपि० ' इत्यादिना संप्रसारणम् । लिड्वद्भावात् द्विर्भावे 'बहुलं छन्दसि ' इति उकारस्य इत्वम् । छान्दसो यणादेशः । ' सुः पूजायाम् ' ( पा. सू. १. ४. ९४ ) इति सोः कर्मप्रवचनीयत्वम् । ' स्वती पूजायाम् ' ( पा. म. २. २. १८. ४ ) इति प्रादिसमासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

पु॒ष्टिर्न र॒ण्वा क्षि॒तिर्न पृ॒थ्वी गि॒रिर्न भुज्म॒ क्षोदो॒ न श॒म्भु ।
अत्यो॒ नाज्म॒न्त्सर्ग॑प्रतक्त॒ः सिन्धु॒र्न क्षोद॒ः क ईं॑ वराते ॥ ५ ॥ ६ ॥

पु॒ष्टिः । न । र॒ण्वा । क्षि॒तिः । न । पृ॒थ्वी । गि॒रिः । न । भुज्म॑ । क्षोद॑ः । न । श॒म्ऽभु ।
अत्य॑ः । न । अज्म॑न् । सर्ग॑ऽप्रतक्तः । सिन्धु॑ः । न । क्षोद॑ः । कः । ई॒म् । व॒रा॒ते ॥ ५ ॥ ६ ॥

---

१- ढ–प्रापुः । २. च-छ-ण-न-फ-ल–वर्धयन्ति ।

रण्वा रमणीया सर्वेषां हृद्या पुष्टिर्न अभिमतफलानामभिवृद्धिरिव अग्निः सर्वेषां रमणीयः। ऐहिकामुष्मिकसकलव्यवहारस्य अग्न्यधीनत्वात्। यद्वा। पुष्टिरिव रण्वा गन्तव्यः शब्दनीयः स्तुत्यो वा। यथा पुष्टिः प्राप्यते तद्वदग्निर्यज्ञे हविर्भिः प्राप्यते इति भावः। पृथ्वी विस्तीर्णा क्षितिर्न भूमिरिव अग्निरपि विस्तीर्णः सर्वेषु भूतेषु जाठररूपेणावस्थानात्। गिरिर्न पर्वत इव भुज्म सर्वेषां भोजयिता। यथा गिरौ विद्यमानं फलमूलादिकमाहृत्य सर्वे भुञ्जते तद्वदग्नावपि पचन्तः सर्वे भुञ्जते। यद्वा। अग्नावाहुतिं हुत्वा यजमानाः स्वर्गफलं भुञ्जते। अथवा गिरिर्यथा दुर्भिक्षे सर्वान् प्राणिनो भुनक्ति स्वकीयफलमूलादिदानेन[1] पालयति तद्वदयमपि पापादस्मुष्मात् प्रमुञ्चति। तथा चाम्नायते—'अग्निर्मा तस्मादेनसः प्र मुञ्चतु' (तै. सं. १. ८. ५. ३) इति। शंभु सुखकरं क्षोदो न उदकमिव। यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारीत्यर्थः। अज्मन्। संग्रामनामैतत्। अज्मनि संग्रामे अत्यो न सततगमनशीलो जात्यश्व इव सर्गप्रतक्तः सर्गेण विसर्जनेन प्रगमितः। यथा सादिना प्रेषितो जात्यश्वो हन्तव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून् हन्तुं शीघ्रं गच्छतीति भावः। अपि च सिन्धुर्न क्षोदः। स्यन्दनशीलमुदकमिव अयमपि शीघ्रगामी। यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः तद्वदरण्याभिमुखोऽग्निरपीत्यर्थः। अतो यस्मादेवं तस्मात् ईम् एनमग्निं कः वराते को वारयेत्[2]। कोऽपि वारयितुं न शक्नोतीत्यर्थः॥ रण्वा। रविर्गत्यर्थः[3]। रण्व्यते[3] प्राप्यते इति रण्वः। 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि पचाद्यच्। भुज्म। 'भुज पालनाभ्यवहारयोः'। 'इषियुधीन्धि°' इति विधीयमानो मक् बहुलवचनादस्मादपि भवति। 'सुपां सुलुक्°' इति सोर्लुक्। अज्मन्। 'अज गतिक्षेपणयोः'। मनिनि 'वलादावार्धधातुके विकल्प इष्यते' (का. २. ४. ५६. २) इति वचनात् वीभावाभावः। 'सुपां सुलुक्°' इति सप्तम्या लुक्। सर्गप्रतक्तः। 'सृज विसर्गे' इत्यस्मात् घञन्तः सर्गशब्द आद्युदात्तः। 'तक्कु गतौ'। अस्मादन्तर्भावितण्यर्थात् निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः। 'अनिदिताम्°' इति नलोपः। सर्गेण प्रतक्तः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। वराते। 'वृञ् वरणे'। अन्तर्भावितण्यर्थात् लेटि 'लेटोऽडाटौ' इति आडागमः। व्यत्ययेन शप्। 'वैतोऽन्यत्र' (पा. सू. ३. ४. ९६) इति ऐत्वस्य निघातस्वरत्वादभावः॥

जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति।
यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः॥ ७॥ ८॥

जामिः। सिन्धूनाम्। भ्राताऽइव। स्वस्राम्। इभ्यान्। न। राजा। वनानि। अत्ति।
यत्। वातऽजूतः। वना। वि। अस्थात्। अग्निः। ह। दाति। रोम। पृथिव्याः॥ ७॥ ८॥

सिन्धूनां स्यन्दनशीलानामपामयमग्निः जामिः बन्धुः। तासामुत्पादकत्वात्। तथा चाम्नातम्—'अग्नेरापः' (तै. आ. ८. १) इति। यद्वा। देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः। तत्र दृष्टान्तः[4]। स्वस्रां स्वसॄणां भ्रातेव। यथा भ्रातातिशयेन हितकरो भवति तद्वत्। तादृशोऽग्निः वनानि महान्त्यरण्यानि अत्ति भक्षयति। दहतीत्यर्थः। तत्र निदर्शनम्। राजा इभ्यान्न

---

१. ट-ण-ल-श—स्वकीयमूलफलादिदानेन। २. च-छ-ण-द-ध-न-फ-ल—वारयते। ३. ढ—रणिर्गत्यर्थः। रण्यते। ४. च-छ-त-द-ध-न-फ-श-स—निदर्शनम्।

भियं करोतीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः । तान् यथा समूलं हिनस्ति तद्वत् । यद्वा । इभ्या धनिनः । तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः । अपि च यत् यदा वातजूतः वातेन प्रेरितः सन् वना वनान्यरण्यानि व्यस्थात् उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीम् अग्निर्ह असावग्निरेव पृथिव्याः भूमेः संबन्धीनि रोम ओषधिरूपाणि रोमाणि दाति छिनत्ति। भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः ॥ स्वन्नाम् । आमो नुडभावश्छान्दसः । अस्थात् । लुङि 'गातिस्था०' इति सिचो लुक् । दाति । 'दाप् लवने' । अदादित्वात् शपो लुक् ॥

श्वसि॑त्य॒प्सु हं॒सो न सीद॒न् क्रत्वा॒ चेति॑ष्ठो वि॒शामु॑ष॒र्भुत् ।
सोमो॒ न वे॒धा ऋ॒तप्र॑जातः प॒शुर्न शिश्वा॑ वि॒भुर्दू॒रेभाः॑ ॥ ९ ॥ १० ॥

श्वसि॑ति । अ॒प्ऽसु । हं॒सः । न । सीद॑न् । क्रत्वा॑ । चेति॑ष्ठः । वि॒शाम् । उ॒षः॒ऽभुत् ।
सोमः॑ । न । वे॒धाः । ऋ॒तऽप्र॑जातः । प॒शुः । न । शिश्वा॑ । वि॒ऽभुः । दू॒रेऽभाः॑ ॥९॥ १० ॥

अयमग्निर्देवेभ्यः पलायितः सन् अप्सु उदकेषु श्वसिति प्राणिति । निगूढो वर्तते इत्यर्थः । तत्र दृष्टान्तः । हंसो न सीदन् । उदकमध्ये उपविशन् हंस इव । कीदृशोऽग्निः । क्रत्वा क्रतुना ज्ञानहेतुनात्मीयेन प्रकाशेन विशां प्रजानां चेतिष्ठः अतिशयेन चेतयिता ज्ञापयिता । रात्रौ हि सर्वे जना अन्धकारावृतं सर्वमग्नेः प्रकाशाज्जानन्ति । उषर्भुत् उषस्युषःकालेऽग्निहोत्रादौ प्रबुद्धः[1] सोमो न वेधाः सोम इव विधाता स्रष्टा । सोमो यथा सकलमोषधिरूपं भोग्यजातं[2] सृजति । 'सोमो वा ओषधीनां राजा' ( तै. सं. ६. १. ९. १; तै. ब्रा. ३. ९. १७. १ ) इति श्रुतेः । तथा सक[illegible]जातं सृजति । अग्नेरेव भोक्तृरूपेणावस्थानात् । तथा च तैत्तिरीयकम्—'अग्निरन्नादोऽन्नपतिः [illegible] ब्रा. २. ५. ७. २ ) इति । वाजसनेयकेऽपि भोक्तृभोग्ययोरग्नीषोमात्मकत्वमाम्नातम्—'एतावद्वा[illegible] इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' इति । ऋतप्रजातः । ऋतमित्युदकनाम । ऋतादुदकात् प्रभूतः पशुर्न शिश्वा । उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः संकुचितगात्रोऽभूत् । ततः प्रादुर्भूतः सन् विभुः प्रभूतः संपन्नः । यद्वा शिश्वा शिशुना गर्भस्थेन वत्सेन सहिता गौरिव विभुः प्रभूतावयवो जात इत्यर्थः । दूरेभाः । दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः । एवंभूतोऽग्निरप्सु श्वसितीति पूर्वेण संबन्धः ॥ श्वसिति । 'श्वस प्राणने' । अदादित्वात् शपो लुक् । 'रुदादिभ्यः सार्वधातुके' ( पा. सू. ७. २. ७६ ) इति इडागमः । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । क्रत्वा । 'जसादिषु च्छन्दसि वावचनम्' इति नाभावाभावः । उषसि बुध्यते इत्युषर्भुत् । 'बुध अवगमने' । 'क्विप् च' क्विप् । 'एकाचो बशः०' इति भष्भावः । 'अहरादीनां पत्यादिषूपसंख्यानम्' ( पा. म. ८. २. ७० ) इति सकारस्य रेफादेशः । शिश्वा । 'शो तनूकरणे' । 'आदेचः०' इति आत्वम् । 'शः कित्सन्वच्च' ( उ. सू. १. २० ) इति उप्रत्ययः । सन्वद्भावात् द्विर्भावेत्वे । अत एव नित्त्वादाद्युदात्तत्वम् । किद्भावात् 'आतो लोप इटि च' इति आकारलोपः । प्रथमपक्षे 'सुपां सुलुक्०' इति सोः आकारः । द्वितीये तु पूर्ववत् नाभावाभावः । दूरेभाः । 'तत्पुरुषे कृति बहुलम्' इति बहुव्रीहावपि बहुलवचनात् अलुक् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ९ ॥

---

१. श-स-प्रवृद्धः । २. छ-त-श-भोज्यजातम् ।

' रयिः ' इति दशर्चं द्वैपदमध्ययनतः पञ्चर्चं द्वितीयं सूक्तं पराशरस्यार्षमाग्नेयम् । अनुक्रान्तं च–' रयिः ' इति । विनियोगो लैङ्गिकः ॥

**र॒यिर्न चि॒त्रा सूरो॒ न सं॒दृगायु॒र्न प्रा॒णो नित्यो॒ न सू॒नुः ।**
**तक्वा॒ न भूर्णि॒र्वना॑ सिषक्ति॒ पयो॒ न धे॒नुः शुचि॑र्वि॒भावा॑ ॥ १ ॥ २ ॥**

र॒यिः । न । चि॒त्रा । सूरः॑ । न । स॒म्ऽदृक् । आयुः॑ । न । प्रा॒णः । नित्यः॑ । न । सू॒नुः॑ ।
तक्वा॑ । न । भूर्णिः॑ । वना॑ । सि॒स॒क्ति॒ । पयः॑ । न । धे॒नुः । शुचिः॑ । वि॒भाऽवा॑ ॥१ ॥ २ ॥

अयमग्निः ˇरयिर्न धनमिव ˇचित्रा चायनीयो विचित्ररूपो वा ˇसूरो ˇन सूर्य इव ˇसंदृक् संद्रष्टा सर्वेषां वस्तूनां[1] दर्शयिता ˇआयुर्न ˇप्राणः आयुर्मुखे संचरन् प्राणः प्रश्वसन्वायुरिव[2] प्रियतमः । यद्वा । यथा प्राणवायुः आयुः जीवनमवस्थापयति । तथा चाम्नायते—' यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः ' (कौ.उ.३.२) इति । एवमग्निरपि जाठररूपेणायुषोऽवस्थापयिता । ˇनित्यः[3] ˇन ˇसूनुः नित्यो ध्रुवः पुत्र इव प्रियकारी । यथौरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि[4] हितस्य स्वर्गस्य प्रापयिता । तथा चाम्नायते—' पुत्रः पित्रे लोककृज्जातवेदः ' ( तै. ब्रा. ३. ७. ७. १० ) इति । ˇतक्वा ˇन गतिमानश्व इव ˇभूर्णिः भर्ता । यथाश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीत्यर्थः । ˇपयो ˇन ˇधेनुः पय इव प्रीणयिता ˇशुचिः दीप्तः ˇविभावा विशिष्टप्रकाशयुक्तः । एवंगुणविशिष्टोऽग्निः ˇवना वनान्यरण्यानि ˇसिषक्ति दग्धुं समवैति सेवते वा ॥ चित्रा । ' सुपां सुलुक्° ' इति सोः पूर्वसवर्णदीर्घत्वम् । नित्यः । [illegible] वे ' ( पा. सू. ४. २. १०४ ) इति त्यप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शि[illegible] तक्वा । ' तक हसने ' । गतिकर्मसु पठितत्वादत्र गत्यर्थः । तकति [illegible]ति तक्वा । ' अन्येभ्योऽपि [illegible]न्ते ' इति वनिप् । भूर्णिः । ' घृणिः पृश्निः ' इत्यादौ भरतेर्निप्रत्ययान्तो निपातितः ॥

**दा॒धार॒ क्षेम॒मोको॒ न र॒ण्वो यवो॒ न प॒क्वो जेता॒ जना॑नाम् ।**
**ऋषि॒र्न स्तु॒भ्वा॑ वि॒क्षु प्र॑श॒स्तो वा॒जी न प्री॒तो वयो॑ दधाति ॥ ३ ॥ ४ ॥**

दा॒धार॑ । क्षेम॑म् । ओकः॑ । न । र॒ण्वः । यवः॑ । न । प॒क्वः । जेता॑ । जना॑नाम् ।
ऋषिः॑ । न । स्तु॒भ्वा॑ । वि॒क्षु । प्र॒ऽश॒स्तः । वा॒जी । न । प्री॒तः । वयः॑ । द॒धा॒ति॒ ॥ ३ ॥ ४ ॥

अयमग्निः ˇक्षेमं लब्धस्य धनस्य रक्षणं ˇदाधार धारयति । स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः । ˇओको ˇन निवासस्थानं गृहमिव ˇरण्वः रमणीयः । यद्वा । गन्तव्यः । गृहवत् सर्वैः प्राप्यते इत्यर्थः । ˇयवो ˇन यव इव ˇपक्वः । यथा पक्वो यव उपभोगयोग्यः[5] भवति तद्वदग्निरपि पाकादिकार्यहेतुतया उपभोग्यः[6] इत्यर्थः । ˇजनानां ˇजेता शत्रुजनानां मध्येऽभिभविता ˇऋषिर्न

१. स–वसूनाम् । २. त–श्वसनवायुरिव; न-फ–श्वसन्वायुरिव; श–प्रश्वसनवायुरिव ३. ढ–तथा नित्यः । ४. ढ–तद्वदयमग्निरपि । ५. ढ–उपयोगयोग्यः । ६. ढ–उपयोगयोग्यः ।

मन्त्रद्रष्टा ऋषिरिव ^v^स्तुभ्वा देवानां स्तोता ^v^विक्षु यजमानलक्षणेषु मनुष्येषु ^v^प्रशस्तः प्रख्यातः ^v^वाजी ^v^न अश्व इव ^v^प्रीतः हर्षयुक्तः । यथाश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः । एवंभूतोऽग्निः ^v^वयः अन्नं ^v^दधाति दधातु । अस्मभ्यं ददात्वित्यर्थः । वय इत्यन्ननाम । ' वयः क्षत्र ' इति तन्नामसु पाठात् ॥ दाधार । ' तुजादीनाम्° ' इति अभ्यासस्य दीर्घत्वम् । क्षेमम् । क्षियति निवसत्यनेनेति क्षेमः । ' अर्तिस्तुसु° ' इत्यादिना मन् । नित्त्वादाद्युदात्तत्वम् । रण्वः । ' रवि धवि गत्यर्थाः ' । अस्मात् कर्मणि कप्रत्ययः । इदित्त्वात् नुम् । जेता । तृन्नन्त आद्युदात्तः । जनानाम् । ' यतश्च निर्धारणम् ' ( पा. सू. २. ३. ४१ ) इति निर्धारणे षष्ठी, नेयं कर्मणि षष्ठी इति ' न लोकाव्ययनिष्ठा° ' इति षष्ठीप्रतिषेधो न भवति । स्तुभ्वा । स्तोभतिः स्तुतिकर्मा । ' अन्येभ्योऽपि दृश्यन्ते ' इति क्वनिप् ॥

दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।
चित्रो यदभ्राट्छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥ ५ ॥ ६ ॥

दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरम् । विश्वस्मै ।
चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥५॥६॥

^v^दुरोकशोचिः दुष्प्रापतेजाः ^v^क्रतुर्न ^v^नित्यः । क्रतुः कर्मणां कर्ता । स इव ध्रुवः । यथा[1] सः[1] कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति तद्वदयमप्यग्निः कर्मसु रक्षसां दहने[2] ध्रुवो जागर्तीत्यर्थः । ^v^योनौ गृहे वर्तमाना ^v^जायेव योषिदिव अग्निहोत्रादिगृहे वर्तमानो वह्निः ^v^विश्वस्मै सर्वस्मै यष्टृजनाय[3] ^v^अरम् अलं भूषणं भवति । यथा जायया गृहमलंकृतं भवति तद्वदग्निना यज्ञगृहमप्यलंकृतं सत्[4] दृश्यते[4] इत्यर्थः । ^v^चित्रः चायनीयो विचित्रदीप्तिर्वा ^v^यत् यदायमग्निः ^v^अभ्राट् भ्राजते तदानीं ^v^श्वेतो ^v^न शुभ्रवर्ण आदित्य इव भवति । रात्रौ हि अहनि सूर्य[5] इवाग्निः[5] प्रकाशको भवति । ^v^विक्षु प्रजासु ^v^रथो ^v^न रथ इव ^v^रुक्मी सुवर्णवद्रोचमानदीप्तियुक्तः ^v^समत्सु संग्रामेषु ^v^त्वेषः दीप्तः । एवंभूतोऽग्निर्यदभ्राडिति पूर्वेणान्वयः ॥ दुरोकशोचिः । ' उच समवाये ' । ' ईषद्दुःसुषु° ' इति कृच्छ्रार्थे खल् । बहुलवचनात् कुत्वम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । दुरोकं शोचिस्तेजो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अरम् । ' वालमूल° ' ( पा. म. ८. २. १८ ) इत्यादिना लकारस्य रेफादेशः । अभ्राट् । ' भ्राजृ दीप्तौ ' । लङि व्यत्ययेन परस्मैपदम् । ' बहुलं छन्दसि ' इति शपो लुक् । व्रश्चादिषत्वे जश्त्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः[6] । समत्सु । समानं माद्यन्त्येष्विति समदः संग्रामाः । औणादिकः अधिकरणे क्विप् । ' समानस्य च्छन्दसि° ' इति सभावः । यद्वा । सम्यगत्ति भक्षयति वीरानिति समत् । संपूर्वादत्तेः ' क्विप् च ' इति क्विप् ॥

---

१. ढ-स- स यथा । २. च-छ-न-फ-हनने । ३. च-छ न-फ-ल-यजमानाय । ४. ढ-दृश्यते । ५. ढ-सूर्यवदग्निः । ६. ढ-यद्वृत्तान्नित्यमिति निघातप्रतिषेधः

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥ ७ ॥ ८ ॥

सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ।
यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ॥ ७ ॥ ८ ॥

ᵛसृष्टा प्रेरिता ᵛसेनेव स्वामिना सह वर्तमाना भटसंहतिरिव[1] अयमग्निः ᵛअमं शत्रूणां भयं दधाति विदधाति । करोतीत्यर्थः । यद्वा । सृष्टा सेनेव अमं बलं ᵛदधाति । सा यथा बलवती तद्वदग्निरपि बलवानित्यर्थः । निदर्शनान्तरमुच्यते । दिद्युदिति वज्रनाम । तेन चात्रेषुर्लक्ष्यते[2] । ᵛत्वेषप्रतीका दीप्तमुखा ᵛअस्तुर्न ᵛदिद्युत् क्षेप्तुः संबन्धिनी इषुरिव । सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयते इत्यर्थः । अत्र निरुक्तं—' सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका ' ( निरु. १०. २१ ) इत्यादि । यच्छति ददाति स्तोतृभ्यः कामानिति यमोऽग्निरुच्यते । यद्वा । इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् । अस्मिन्नर्थे यास्केन मन्त्रब्राह्मणे दर्शिते—' यमो ह जात इन्द्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवति ' ( निरु. १०. २१ ) इति । यः ᵛजातः उत्पन्नो भूतसंघो यच्च ᵛजनित्वं जनयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि ᵛयमो ᵛह अग्निरेव । सर्वेषां भावानामाहुतिद्वारा अग्न्यधीनत्वात् । ᵛकनीनां कन्यकानां ᵛजारः जरयिता । यतो विवाहसमये अग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते । अतो जरयितेत्युच्यते । तथा ᵛजनीनां जायानां कृतविवाहानां ᵛपतिः भर्ता । तथा चाख्यायते—' अनुपजातपुरुषसंभोगेच्छावस्थां स्त्रियं सोमो लेभे । स च सोमः ईषदुपजातभोगेच्छां तां विश्वावसवे गन्धर्वाय प्रादात् । स च गन्धर्वो विवाहसमयेऽग्नये प्रददौ । अग्निश्च मनुजाय भर्त्रे धनपुत्रैः सहितामिमां प्रायच्छत् ' इति । इममर्थं काचिदृक् स्पष्टं ब्रूते—' सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ' ( ऋ. सं. १०. ८५. ४१ ) इति । यास्कस्त्वाह—' तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति ' ( निरु. १०. २१ ) इति । यद्वा । जनीनां पालयिता यतोऽयम् अनुष्ठितैर्यागैः फलं प्रयच्छति ॥ सेनेव । इनेन सह वर्तते इति सेना । ' वोपसर्जनस्य ' इति सभावः । बहुव्रीहिस्वरः । जनित्वम् । ' जनी प्रादुर्भावे ' । ' कृत्यार्थे तवैकेन्° ' इति कर्मणि त्वन्प्रत्ययः । इडागमः । नित्त्वादाद्युदात्तत्वम् । जारः । जरयतीति जारः । ' दारजारौ कर्तरि णिलुक् च ' ( पा. सू. ३. ३. २०. ४ ) इति निपात्यते । कनीनाम् । कन्याशब्दात् षष्ठ्येकवचने ' बहुलं छन्दसि ' इति बहुलग्रहणात् संप्रसारणम् । परपूर्वत्वम् । जनीनाम् । जन्यन्ते आसु इति जनयः स्त्रियः । ' इन्सर्वधातुभ्यः ' इति इन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ।
सिन्धुर्न क्षोदः प्र नीचीरैनोन्नवन्त गावः स्वर्दृशीके ॥ ९ ॥ १० ॥

तम् । वः । चराथा । वयम् । वसत्या । अस्तम् । न । गावः । नक्षन्ते । इद्धम् ।
सिन्धुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥ ९ ॥ १० ॥

---

1. च-छ-ण-न-फ—वीरसंहतिरिव । २. ड—अत्रेषुर्लक्ष्यते ।

ᵛवः इति व्यत्ययेन बहुवचनम्। हे अग्ने ᵛतं त्वां ᵛचराथा। चरतीति चरथः पशुः। तत्प्रभवैर्हृदयादिभिः साध्या आहुतिरपि चरथा इत्युच्यते। उपचारात् कार्ये कारणशब्दः। चराथा चरथया पशुप्रभवहृदयादिसाधनया आहुत्या। ᵛवसत्या। वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः। पूर्ववत् तत्साध्याहुतिर्लक्ष्यते। वसत्या पुरोडाशाद्याहुत्या च ᵛवयम् ᵛइद्धं प्रदीप्तमग्निं ᵛनक्षन्ते व्याप्नुयाम। पुरुषव्यत्ययः। तत्र दृष्टान्तः। ᵛअस्तं ᵛन ᵛगावः। अस्तमिति गृहनाम। यथा गावो गृहं व्याप्नुवन्ति तद्वत्। अत्र यास्कः— 'तं चराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयाम' (निरु. १०. २१) इति। अयमग्निः ᵛसिन्धुर्न ᵛक्षोदः स्यन्दनशीलमुदकमिव ᵛनीचीः नितरामञ्चतीः इतस्ततो नितरामुद्गच्छन्तीर्ज्वालाः ᵛप्र ᵛऐनोत् प्रेरयति। यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वालाः दग्धव्यं प्रति गच्छन्तीति भावः। ᵛस्वः नभसि वर्तमाने ᵛदृशीके दर्शनीये तस्मिन्नग्नौ ᵛगावः गमनस्वभावा रश्मयः ᵛनवन्त संगच्छन्ते। नवतिर्गतिकर्मा॥ चराथा। चरेरौणादिकः अथक्प्रत्ययः। दीर्घश्छान्दसः। 'सुपां सुलुक्॰' इति विभक्तेः आकारः। वसत्या। 'वहिवस्यर्तिभ्यश्चित्' (उ. सू. ४. ५००) इति अतिप्रत्ययः। 'उदात्तयणः॰' इति विभक्तेरुदात्तत्वम्। अस्तम्। अस्यते अस्मिन् सर्वमित्यस्तं गृहम्। 'असिहसि॰' इत्यादिना तन्। 'तितुत्र॰' इति इट्प्रतिषेधः। नित्त्वादाद्युदात्तत्वम्। नक्षन्ते। नक्षतिर्व्याप्तिकर्मा। 'नक्ष गतौ'। व्यत्ययेनात्मनेपदम्। 'चादिलोपे विभाषा' इति निघाताभावः। नीचीः। निपूर्वात् 'अञ्चतेश्चोपसंख्यानम्' (पा. सू. ४. १. ६. २) इति ङीप्। 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम्। 'न्यधी च' (पा. सू. ६. २. ५३) इति गतेः प्रकृतिस्वरत्वम्। ऐनोत्। 'इण् गतौ'। अन्तर्भावितण्यर्थात् 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङि व्यत्ययेन श्नुः। आडागमो वृद्धिश्च। दृशीके। 'दृशिर् प्रेक्षणे'। 'अनिदृशिभ्यां च' इति कीकन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्॥ ॥ १० ॥

'वनेषु' इति द्वैपदं[1] दशर्चम्[1] अध्ययनतः पञ्चर्चं तृतीयं सूक्तं पराशरस्यार्षमाग्नेयम्। 'वनेषु' इत्यनुक्रान्तम्। विनियोगो लैङ्गिकः॥

**वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम्।**

**क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट्॥ १ ॥ २ ॥**

वनेषु। जायुः। मर्तेषु। मित्रः। वृणीते। श्रुष्टिम्। राजाऽइव। अजुर्यम्।

क्षेमः। न। साधुः। क्रतुः। न। भद्रः। भुवत्। सुऽआधीः। होता। हव्यऽवाट्॥ १ ॥ २ ॥

ᵛवनेषु ᵛजायुः अरण्येषु जायमानः ᵛमर्तेषु मनुष्येषु ᵛमित्रः सखा सोऽयमग्निः ᵛश्रुष्टिम्। श्रु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिर्यजमानः। क्षिप्रेण कर्मणा मनुष्ठातेत्यर्थः। तथा च यास्कः—'श्रुष्टीति क्षिप्रनामाशु अष्टीति' (निरु. ६.१२)। एवंभूतं यजमानं ᵛवृणीते संभजते। अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः। तत्र दृष्टान्तः। ᵛराजेव ᵛअजुर्यम्। अजुर्यं जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः। एवंभूतं पुरुषं यथा राजा वृणीते तद्वत्। ᵛक्षेमो ᵛन रक्षक इव ᵛसाधुः साधयिता ᵛक्रतुर्न। क्रतुः कर्मणां कर्ता। स इव ᵛभद्रः भजनीयः कल्याणो वा ᵛहोता देवानामाह्वाता ᵛहव्यवाट् हव्यवाहनो नाम देवानामग्निः।

---

1. ढ–दशर्चं द्वैपदम्।

तथा चाम्नायते– 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम्' (तै. सं. २. ५. ८. ६) इति। एवंभूतोऽग्निः ᵛस्वाधीः शोभनकर्मा शोभनाध्यानः[1] वा ᵛभुवत् भवतु ॥ जायुः। 'जि जये'। 'कृवापाजि०' इति उण्। अजुर्यम्। 'जॄष् वयोहानौ'। भावे ण्यन्। वृद्धौ कृतायाम् आकारस्य व्यत्ययेन उकारः। जुर्यं जरा नास्त्यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। भुवत्। भवतेर्लेटि अडागमः। 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेधः ॥

हस्ते॒ दधा॑नो नृ॒म्णा विश्वा॒न्यमे॑ दे॒वान्धा॒द्गुहा॑ नि॒षीद॑न्।
वि॒दन्ती॒मत्र॒ नरो॑ धियं॒धा हृ॒दा यत्त॒ष्टान्मन्त्राँ॒ अशं॑सन् ॥ ३ ॥ ४ ॥

हस्ते॑। दधा॑नः। नृ॒म्णा। विश्वा॑नि। अमे॑। दे॒वान्। धा॒त्। गुहा॑। नि॒ऽसीद॑न्।
वि॒दन्ति॑। ई॒म्। अत्र॑। नरः॑। धि॒य॒म्ऽधाः। हृ॒दा। यत्। त॒ष्टान्। मन्त्रा॑न्। अशं॑सन् ॥ ३ ॥ ४ ॥

ᵛविश्वानि सर्वाणि ᵛनृम्णा नृम्णानि हविर्लक्षणानि धनानि ᵛहस्ते स्वकीये बाहौ ᵛदधानः धारयन्नयमग्निः ᵛगुहा गुहायामप्सु मध्येऽश्वत्थादौ वा संवृतप्रदेशे ᵛनिषीदन् निगूढो वर्तमानः सन् ᵛअमे भये ᵛदेवान् ᵛधात् अस्थापयत्। अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः। ᵛनरः नेतारः ᵛधियंधाः कर्मणां बुद्धीनां वा धारयितारो देवाः ᵛअत्र अस्मिन् काले ᵛईम् एनमग्निं ᵛविदन्ति जानन्ति। ᵛयत् यदा ᵛहृदा हृदयावस्थितया बुद्ध्या ᵛतष्टान् निर्मितान् अग्निस्तुतिपरान् ᵛमन्त्रान् ᵛअशंसन् अस्तुवन् अवोचन्नित्यर्थः ॥ निषीदन्। 'सदिरप्रतेः' इति षत्वम्। विदन्ति। 'विद ज्ञाने'। अदादित्वात् शपो लुक्। प्रत्ययस्वरः। धियंधाः। 'आतोऽनुपसर्गे कः' इति कः। 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अपि अलुक्। तष्टान्। 'तक्षू त्वक्षू तनूकरणे'। निष्ठा[2]। 'यस्य विभाषा' इति इट्प्रतिषेधः। 'स्कोः संयोगाद्योः०' इति कलोपः ॥

अ॒जो न क्षां दा॒धार॑ पृथि॒वीं त॒स्तम्भ॒ द्यां मन्त्रे॑भिः स॒त्यैः।
प्रि॒या प॒दानि॑ प॒श्वो नि पा॑हि वि॒श्वायु॑रग्ने गु॒हा गुहं॑ गाः ॥ ५ ॥ ६ ॥

अ॒जः। न। क्षाम्। दा॒धार॑। पृ॒थि॒वीम्। त॒स्तम्भ॑। द्याम्। मन्त्रे॑भिः। स॒त्यैः।
प्रि॒या। प॒दानि॑। प॒श्वः। नि। पा॒हि॒। वि॒श्वऽआ॑युः। अ॒ग्ने॒। गु॒हा। गुह॑म्। गाः॒ ॥ ५ ॥ ६ ॥

ᵛअजो ᵛन। अजति गच्छतीत्यजः सूर्यः। यद्वा। न जायते इत्यजः। जन्मरहित इत्यर्थः। स इव। क्षा इति पृथिवीनाम। ᵛक्षां भूमिं ᵛदाधार अयमग्निः प्रकाशकत्वेन धारयति। पृथिवीत्यन्तरिक्षनाम। ᵛपृथिवीम्[3] अन्तरिक्षं च धारयतीत्येव[4]। ᵛद्यां द्युलोकं ᵛसत्यैः अवितथार्थैः ᵛमन्त्रेभिः मन्त्रैः

---

१. च-छ-ण-न-फ-स–शोभनध्यानः। २. ढ-स–निष्ठायाम्। ३. ढ–'पृथिवीम्' नास्ति। ४. च-त-फ–धारयतीत्येवम्।

तस्तम्भ स्तब्धानि । यथाधो न पतन्ति उपर्येव तिष्ठन्ति तथा करोतीत्यर्थः । मन्त्रैर्दिवो धारणं तैत्तिरीये समाम्नातं–‘ देवा वा आदित्यस्य सुवर्गस्य लोकस्य पराचोऽतिपादादबिभयुः । तं छन्दोभिरदृंहन्धृत्यै ’ ( तै. ब्रा. १. २. ४. २ ) इति। यद्वा। सत्यैर्मन्त्रैः स्तूयमानोऽग्निर्द्यां तस्तम्भेति । हे अग्ने विश्वायुः विश्वं सर्वमायुरन्नं यस्य स त्वं पश्वः पशोः प्रिया प्रियाणि पदानि शोभनतृणोदकोपेतानि स्थानानि नि पाहि नितरां पालय मा धाक्षीरित्यर्थः । तर्हि कुत्र निवसामीति चेत् तत्राह । गुहा गुहाया अपि गुहं गुह्यां गवां संचारायोग्यस्थानं गाः गच्छ तत्रैव निवसेत्यर्थः ॥ पश्वः । ‘ जसादिषु च्छन्दसि वावचनम् ’ इति ‘ घेर्ङिति ’ इति गुणाभावे यणादेशः । ‘ उदात्तयणः° ’ इति विभक्तेरुदात्तत्वम् । गुहा । ‘ सुपां सुलुक्° ’ इति पञ्चम्या आजादेशः । चित्त्वादन्तोदात्तत्वम् । गुहम् । व्यत्ययेन ह्रस्वत्वम् । गाः । छान्दसो लुङ् । ‘ इणो गा लुङि ’ इति गादेशः ॥

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ।

वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥ ७ ॥ ८ ॥

यः । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य ।

वि । ये । चृतन्ति । ऋता । सपन्तः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ॥ ७ ॥ ८ ॥

यः पुमान् ईम् एनं गुहा भवन्तं गुहायां सन्तमग्निं चिकेत जानाति । यः च ऋतस्य सत्यस्य यज्ञस्य वा धारां धारयितारमेनमग्निम् आ ससाद आसीदति उपास्ते इत्यर्थः । ये च ऋता ऋतानि सत्यानि यज्ञान् वा सपन्तः समवयन्तः स्पृशन्तो वा पुरुषा एतमग्निं वि चृतन्ति अग्निमुद्दिश्य स्तुतीर्ग्रथ्नन्ति कुर्वन्तीत्यर्थः । आदित् स्तुत्यनन्तरमेव अस्मै सर्वस्मै स्तोतृजनाय वसूनि धनानि प्र ववाच प्रकथयति ॥ चिकेत । ‘ कित ज्ञाने ’ । लिटि णलि लित्स्वरः । चृतन्ति । ‘ चृती हिंसाग्रन्थनयोः ’ । तौदादिकः । लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । ववाच । लिटि ‘ ब्रुवो वचिः ’ । ‘ लिट्यभ्यासस्योभयेषाम् ’ ( पा. सू. ६. १. १७ ) इति अभ्यासस्य संप्रसारणम् । ‘ संप्रसारणाच्च ’ इति परपूर्वत्वस्य ‘ वा छन्दसि ’ ( पा. सू. ६. १. १०६ ) इति विकल्पनात् यणादेशः ॥

वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः ।

चित्तिरपां दमे विश्वायुः सद्मेव धीराः संमाय चक्रुः ॥ ९ ॥ १० ॥

वि । यः । वीरुत्ऽसु । रोधत् । महिऽत्वा । उत । प्रऽजाः । उत । प्रऽसूषु । अन्तः ।

चित्तिः । अपाम् । दमे । विश्वऽआयुः । सद्मऽइव । धीराः । सम्ऽमाय । चक्रुः ॥ ९ ॥ १० ॥

यः अग्निः वीरुत्सु ओषधीषु महित्वा यानि महत्त्वानि सन्ति तानि वि रोधत् विरुणद्धि विशेषेणावृणोति नावशेषयति । उत अपि च प्रजाः प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः प्रसूषु उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु अन्तः मध्ये विरुणद्धीत्येव। द्वितीयः उतशब्दः पादपूरणः। तथा चित्तिः चेतयिता

ज्ञापयिता ᵛअपां ᵛदमे जलानां मध्यभूते गृहे ᵛविश्वायुः सर्वान्नो योऽग्निर्वर्तते इति शेषः । तमग्निं ᵛधीराः मेधाविनः ᵛसंमाय संमाननं पूजनं कृत्वा । स्तुतिभिः स्तुत्वेत्यर्थः । ᵛचक्रुः कर्माणि कुर्वन्ति । तत्र दृष्टान्तः । ᵛसद्मेव । यथा सदनं गृहं प्रथमतः संपूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत् ॥ वीरुत्सु । वि-पूर्वात् रोहतेः क्विप् । न्यङ्क्वादिषु ' वीरुध् ' ( पा. सू. ७. ३. ५३. ग. ) इति पठितत्वादुपसर्गस्य दीर्घो धकारश्चान्तादेशः । उक्तं च । ' वीरुध ओषधयो भवन्ति ' ( निरु. ६. ३ ) । रोधत् । ' रुधिर् आवरणे ' । लेटि अडागमः । ' इतश्च लोपः० ' इति इकारलोपः । संमाय । ' माङ् माने शब्दे च ' । ' समासेऽनञ्पूर्वे क्त्वो ल्यप् ' ( पा. सू. ७. १. ३७ ) । ' न ल्यपि ' ( पा. सू. ६. ४. ६९ ) इति ईत्वप्रतिषेधः ॥ ॥ ११ ॥

' श्रीणन् ' इति द्वैपदं दशर्चं चतुर्थं सूक्तम् । तत्राध्ययनतः[1] पञ्चर्चम् । ऋष्याद्याः पूर्ववत् । विनियोगो लैङ्गिकः ॥

**श्रीणन्नुप॑ स्था॒द्दिवं॑ भु॒र॒ण्युः स्था॒तुश्च॒रथ॑म॒क्तून्व्यू॑र्णोत् ।**

**परि॒ यदे॑षा॒मेको॒ विश्वे॑षां॒ भुव॑द्दे॒वो दे॒वानां॑ महि॒त्वा ॥ १ ॥ २ ॥**

श्री॒णन् । उप॑ । स्था॒त् । दिव॑म् । भु॒र॒ण्युः । स्था॒तुः । च॒रथ॑म् । अ॒क्तून् । वि । ऊ॒र्णो॒त् ।
परि॑ । यत् । ए॒षा॒म् । एकः॑ । विश्वे॑षाम् । भुव॑त् । दे॒वः । दे॒वाना॑म् । म॒हि॒ऽत्वा ॥ १ ॥ २ ॥

ᵛभुरण्युः हविषां भर्ता धारयिता पयःप्रभृतिना श्रयणद्रव्येण[2] सोममिव तैर्हविर्भिः ᵛश्रीणन् मिश्रयन् ᵛदिवम् ᵛउप ᵛस्थात् उपतिष्ठति प्राप्नोतीत्यर्थः । ᵛस्थातुः स्थावरं ᵛचरथं जङ्गमं तदुभयात्मकं जगत् ᵛअक्तून् सर्वा रात्रीश्च ᵛव्यूर्णोत् स्वतेजसा विशेषेणाच्छादयति । हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्म इति भावः । ᵛविश्वेषां सर्वेषां देवानां दानादिगुणयुक्तानां इन्द्रादीनां मध्ये ᵛदेवः द्योतमानः ᵛएकः एव अयमग्निः ᵛएषां पूर्वोक्तानां स्थावरादीनां ᵛमहित्वा महत्त्वानि माहात्म्यानि ᵛयत् यस्मात् ᵛपरि ᵛभुवत् परिभवति परिगृह्णाति परितो व्याप्य वर्तते । परिपूर्वो भवतिः परिग्रहार्थः । यद्वा । एषां विश्वेषां स्थावरादीनां मध्ये वर्तमानोऽयं देवोऽग्निर्देवानां महत्त्वानि यत् यदा परि भुवत् परितो व्याप्नोति । तदानीमिति पूर्वत्रान्वयः ॥ ऊर्णोत् । ' ऊर्णुञ् आच्छादने ' । ' ऊर्णोतेर्विभाषा ' ( पा. सू. ७. २. ६ ) इति वृद्धेर्विकल्पः ।

**आदित्ते॒ विश्वे॒ क्रतुं॑ जुषन्त॒ शुष्का॒द्यद्दे॑व जी॒वो जनि॑ष्ठाः ।**

**भज॑न्त॒ विश्वे॑ देव॒त्वं नाम॑ ऋ॒तं सप॑न्तो अ॒मृत॒मेवैः॑ ॥ ३ ॥ ४ ॥**

आत् । इत् । ते॒ । विश्वे॑ । क्रतु॑म् । जु॒ष॒न्त॒ । शुष्का॑त् । यत् । दे॒व॒ । जी॒वः । जनि॑ष्ठाः ।
भज॑न्त । विश्वे॑ । दे॒व॒ऽत्वम् । नाम॑ । ऋ॒तम् । सप॑न्तः । अ॒मृत॑म् । एवैः॑ ॥ ३ ॥ ४ ॥

---

१. ढ–तत्राध्ययनतः । २. ढ-स–श्रपणद्रव्येण ।

हे देव द्योतमानाग्ने जीवः जीवन् प्रज्वलन् शुष्कात् नीरसात् अरणिरूपात् काष्ठात् यत् यदा जनिष्ठाः प्रादुर्भवसि मथनेनोत्पद्यसे आदित् अनन्तरमेव विश्वे सर्वे यजमानाः ते तुभ्यं क्रतुं कर्म जुषन्त सेवन्ते अनुतिष्ठन्ति । तथा अनुष्ठाय च विश्वे ते सर्वे नाम नामकम् ऋतम् अवितथं देवत्वं देवतात्वं भजन्त भजन्ते प्राप्नुवन्ति । किं कुर्वन्तः । अमृतम् अमरणं त्वाम् एवैः त्वां गन्तृभिः स्तोत्रैः सपन्तः समवयन्तः प्राप्नुवन्तः इत्यर्थः ॥ जुषन्तेत्यादीनि त्रीण्याख्यातानि ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमानार्थानि । एवैः । यन्ति स्तोतव्याभिमुख्येन गच्छन्ति इति एवानि स्तोत्राणि । ‘ इण्शीङ्भ्यां वन् ’ ( उ. सू. १. १५० ) ॥

ऋ॒तस्य॒ प्रेषा॑ ऋ॒तस्य॑ धी॒तिर्वि॒श्वायु॒र्विश्वे॒ अपां॑सि चक्रुः ।

यस्तुभ्यं॒ दाशा॒द्यो वा॑ ते॒ शिक्षा॒त्तस्मै॑ चिकि॒त्वान्र॒यिं द॑यस्व ॥ ५ ॥ ६ ॥

ऋ॒तस्य॑ । प्रेषाः॑ । ऋ॒तस्य॑ । धी॒तिः । वि॒श्वऽआ॑युः । विश्वे॑ । अपां॑सि । च॒क्रुः ।

यः । तुभ्य॑म् । दाशा॑त् । यः । वा॒ । ते॒ । शिक्षा॑त् । तस्मै॑ । चि॒कि॒त्वान् । र॒यिम् । द॒य॒स्व॒ ॥ ५ ॥ ६ ॥

ऋतस्य गतस्य[1] देवयजनं प्राप्तस्याग्नेः प्रेषाः प्रकर्षेणेष्यमाणाः स्तुतयः क्रियन्ते । धीतिः[2] । धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः । सोऽपि ऋतस्य देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते । अतः सोऽग्निः विश्वायुः । विश्वं सर्वमायुरन्नं यस्य स तथाविधो भवति । अपि चास्मै विश्वे सर्वे यजमानाः अपांसि दर्शपूर्णमासादीनि कर्माणि चक्रुः कुर्वन्ति । हे अग्ने तुभ्यं यः दाशात् चरुपुरोडाशादीनि हवींषि ददाति । यो वा अन्योऽपि यो यजमानः ते शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासम् इति इच्छति । उभयविधाय तस्मै यजमानाय चिकित्वान् तत्कृतमनुष्ठानं जानंस्त्वं रयिं दयस्व धनं देहि ॥ दाशात् । ‘ दाशृ दाने ’ । लेटि आडागमः । शिक्षात् । ‘ शक्लृ शक्तौ ’ । इच्छार्थे सन् । ‘ सनि मीमाघुरभलभशक॰ ’ ( पा. सू. ७. ४. ५४ ) इति अकारस्य इसादेशः । ‘ अत्र लोपोऽभ्यासस्य ’ इति अभ्यासलोपः । ‘ स्कोः संयोगाद्योः॰ ’ इति सकारलोपः । पूर्ववत् लेटि आडागमः । चिकित्वान् । ‘ कित ज्ञाने ’ । लिटः क्वसुः । दयस्व । ‘ दय दानगतिरक्षणहिंसादानेषु ’ ॥

होता॒ निष॑त्तो॒ मनो॒रप॑त्ये॒ स चि॒न्न्वा॑सां॒ पती॑ र॒यी॒णाम् ।

इ॒च्छन्त॒ रेतो॑ मि॒थस्त॒नूषु॒ सं जा॑नत॒ स्वैर्दक्षै॒रमू॑राः ॥ ७ ॥ ८ ॥

होता॑ । निऽस॑त्तः । मनोः॑ । अप॑त्ये । सः । चित् । नु । आ॒सा॒म् । पतिः॑ । र॒यी॒णाम् ।

इ॒च्छन्त॑ । रेतः॑ । मि॒थः । त॒नूषु॑ । सम् । जा॒न॒त॒ । स्वैः । दक्षैः॑ । अमू॑राः ॥ ७ ॥ ८ ॥

हे अग्ने त्वं मनोरपत्ये यजमानस्वरूपायां[3] प्रजायां होता देवानामाह्वाता सन् निषत्तः निषण्णः । ‘ मानव्यो हि प्रजाः ’ ( तै. सं. ५. १. ५. ६ ) इति हि ब्राह्मणम् । स चिन्नु स एव त्वम् आसां प्रजानां रयीणां गवादीनां धनानामपि पतिः स्वामी । अतस्ताः प्रजाः तनूषु

---

१. फ– ‘ गतस्य ’ नास्ति । २. च-छ-न-फ–तथा धीतिः । ३. ढ–यजमानरूपायाम् ।

आत्मीयेषु शरीरेषु ᵛमिथः संसृष्टमेकीभूतं पुत्ररूपेण परिणतं ᵛरेतः वीर्यम् ᵛइच्छन्त ऐच्छन् । त्वदनुग्रहेण पुत्रमलभन्तेति यावत् । लब्धपुत्राश्च ताः प्रजाः ᵛअमूराः अमूढाः सत्यः ᵛस्वैः स्वकीयैः ᵛदक्षैः समर्थैः पुत्रैः सह ᵛसं ᵛजानत सम्यगवगच्छन्ति चिरकालं जीवन्तीत्यर्थः । यद्वा । दक्षशब्दः प्राणवाची । 'प्राणो वै दक्षोऽपानः क्रतुः' ( तै. सं. २. ५. २. ४ ) इति श्रुतेः । स्वैर्दक्षैः स्वकीयैः प्राणैः अमूराः संगतास्तवयैव सर्वं जानन्ति ॥ इच्छन्त । व्यत्ययेनात्मनेपदम् । जानत । छान्दसो लङ् । अस्य अदादेशे 'श्नाभ्यस्तयोरातः' इति आकारलोपः । अमूराः । मूरा अमूरेत्यत्र यास्क एवं व्याचख्यौ—'मूढा वयं स्मोऽमूढस्त्वमसि' ( निरु. ६. ८ ) इति । अतोऽत्रापि अमूरशब्देन अमूढत्वमुच्यते । वर्णव्यापत्त्या ढकारस्य रेफः । यद्वा । 'मुर्छा मोहसमुच्छ्राययोः' । अस्मात् संपदादिलक्षणो भावे क्विप् । 'राल्लोपः' इति छलोपः । रो मत्वर्थीयः । न मूरा अमूराः । अथवा । 'अम गत्यादिषु' । अस्मादौणादिक ऊरन्प्रत्ययः ॥

पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन्ये अस्य शासं तुरासः ।
वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥ ९ ॥ १० ॥

पितुः । न । पुत्राः । क्रतुम् । जुषन्त । श्रोषन् । ये । अस्य । शासम् । तुरासः ।
वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकम् । स्तृऽभिः । दमूनाः ॥ ९ ॥ १० ॥

ᵛअस्य अग्नेः ᵛशासं शासनं ᵛतुरासः त्वरमाणाः सन्तः ᵛये यजमानाः ᵛश्रोषन् शृण्वन्ति ते सर्वे तेनानुशिष्टं ᵛक्रतुं कर्म ᵛजुषन्त सेवन्ते । तत्र दृष्टान्तः । ᵛपितुर्न ᵛपुत्राः । यथा पुत्राः पुरु बहुलं त्रायकाः पुन्नाम्नो नरकाद्वा रक्षकास्तनयाः पितुराज्ञां कुर्वन्ति तद्वत् । 'पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा' ( निरु. २. ११ ) इति यास्कः । ᵛपुरुक्षुः । क्षु इत्यन्ननाम । बह्वन्नः सोऽग्निरेषां यजमानानां ᵛदुरः द्वाराणि यज्ञस्य द्वारभूतानि ᵛरायः धनानि ᵛवि ᵛऔर्णोत् विवृणोति प्रकाशयति । ददातीति यावत् । अपि च ᵛदमूनाः दमे यज्ञगृहे मनो यस्य सोऽग्निः । नास्मिन्नकं[1] दुःखमस्तीति नाको द्युलोकः । तम् । स्तृभिरिति नक्षत्रनाम । ᵛस्तृभिः नक्षत्रैः ᵛपिपेश अवयवीचकार नक्षत्रैर्युक्तमकरोदित्यर्थः ॥ श्रोषन् । 'श्रु श्रवणे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'इतश्च लोपः॰' इति इकारलोपः । संयोगान्तस्य लोपः । पिपेश । 'पिश अवयवे' ॥ ॥ १२ ॥

'शुक्रः' इति द्वैपदं[2] दशर्चम्[2] अध्ययनतः पञ्चर्चं पञ्चमं सूक्तं पराशरस्यार्षमाग्नेयम् । 'शुक्रः' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥ १ ॥ २ ॥

शुक्रः । शुशुक्वान् । उषः । न । जारः । पप्रा । समीची इति सम्ऽईची । दिवः । न । ज्योतिः ।
परि । प्रऽजातः । क्रत्वा । बभूथ । भुवः । देवानाम् । पिता । पुत्रः । सन् ॥ १ ॥ २ ॥

---

१. ढ–नाकम् । नास्मिन्नकम् । २. ढ–दशर्चं द्वैपदम् ।

vशुक्रः शुभ्रवर्णोऽयमग्निः vउषो vन vजारः उषसो जरयिता सूर्य इव vशुशुक्वान् शोचयिता सर्वस्य प्रकाशयिता भवति। तथा vसमीची संगते द्यावापृथिव्यौ vदिवो vन vज्योतिः द्योतमानस्य सूर्यस्य ज्योतिरिव vपप्रा स्वतेजसा पूरयिता। हे अग्ने अतस्त्वं vप्रजातः प्रादुर्भूतः सन् vक्रत्वा कर्मणा यद्वा ज्ञानहेतुना प्रकाशेनोक्तप्रकारेण सर्वं जगत् vपरि vबभूथ परितो व्याप्नोषि। दीव्यन्तीति देवा ऋत्विजः। तेषां vपुत्रः vसन् पुन्नाम्नो नरकात् त्रायकः सन् vपिता vभुवः पालयिता भवसि। यद्वा। देवानाम् इन्द्रादीनामेव पुत्रः सन् पुत्र इव दूतो भूत्वा पिता हविर्भिः पालयिता भवसि॥ शुशुक्वान्। 'शुच दीप्तौ'। लिटः क्वसुः। व्यत्ययेन कुत्वम्। पप्रा। 'पॄ पालनपूरणयोः' इत्यस्मात् 'आदृगमहनजनः' इति किप्रत्ययः। 'सुपां सुलुक्' इति सोः डादेशः। समीची। संपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्। 'समः समि' (पा. सू. ६. ३. ९३) इति सम्यादेशः। 'अञ्चतेश्चेति वक्तव्यम्' इति ङीप्। 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। यदि तु सम्ऽईची इति पदविभागः क्रियते तर्हि 'उद ईत्' (पा. सू. ६. ४. १३९) इति विधीयमानमीत्वं सम उत्तरस्यापि द्रष्टव्यम्। बभूथ। 'बभूथा ततन्थ' (पा. सू. ७. २. ६४) इति निपातनात् इडभावः॥

**वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम्।**
**जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे॥ ३॥ ४॥**

वेधाः। अदृप्तः। अग्निः। विऽजानन्। ऊधः। न। गोनाम्। स्वाद्म। पितूनाम्।
जने। न। शेवः। आऽहूर्यः। सन्। मध्ये। निऽसत्तः। रण्वः। दुरोणे॥ ३॥ ४॥

vवेधाः। मेधाविनामैतत्। मेधावी। यद्वा। विधाता सर्वस्य कर्ता। vअदृप्तः दर्परहितः vविजानन् कर्तव्याकर्तव्यविभागं जानन् vअग्निः vगोनां गवाम् vऊधर्न गोसंबन्धि पयस आश्रयभूतं स्थानमिव vपितूनाम् अन्नानां vस्वाद्म स्वादयिता रसयिता। यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति तद्वदग्निरपि सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः। अपि चैवंभूतोऽग्निः vजने vन vशेवः जनपदे लोकसुखकरः[1] पुरुष इव vमध्ये यज्ञेषु मध्ये vआहूर्यः आह्वातव्यः vसन् vदुरोणे यज्ञगृहे vनिषत्तः निषण्णः vरण्वः रमयिता स्तुत्यो वा भवति॥ गोनाम्। 'गोः पादान्ते' (पा. सू. ७. १. ५७) इत्यपादान्तेऽपि नुट्। स्वाद्म। 'स्वाद आस्वादने'। अन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। 'सुपां सुलुक्' इति सोर्लुक्। पितूनाम्। 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्। आहूर्यः। आङ्पूर्वात् ह्वयतेः 'अचो यत्' इति यत्। 'बहुलं छन्दसि' इति संप्रसारणम्। 'हलः' इति दीर्घः। रेफोपजनश्छान्दसः। 'यतोऽनावः' इत्याद्युदात्तत्वम्॥

**पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत्।**
**विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः॥ ५॥ ६॥**

पुत्रः। न। जातः। रण्वः। दुरोणे। वाजी। न। प्रीतः। विशः। वि। तारीत्।
विशः। यत्। अह्वे। नृऽभिः। सऽनीळाः। अग्निः। देवऽत्वा। विश्वानि। अश्याः॥५॥६॥

---

१. त-श-स—लोके सुखकरः।

पुत्रो न पुत्र इव जातः प्रादुर्भूतोऽग्निः दुरोणे गृहे रण्वः रमयिता भवति । वाजी न अश्व इव प्रीतः हर्षयुक्तः सन् विशः संग्रामे वर्तमानाः शत्रुभूताः प्रजाः वि तारीत् विशेषेण तरति अतिक्रामति । अपि च नृभिः ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहं सनीळाः समाननिवासस्थानाः विशः दैवीः प्रजाः यत् यदा अह्वे आह्वयामि तदानीमयम् अग्निः विश्वानि सर्वाणि देवत्वा देवत्वानि अश्याः अश्नुते प्राप्नोति । स्वयमेव तत्तद्देवतारूपो भवतीत्यर्थः । तथा च मन्त्रान्तरमाम्नायते— 'त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः' (ऋ. सं. ५. ३. १) इत्यादि ॥ अश्याः । 'अशू व्याप्तौ' । लिङि व्यत्ययेन परस्मैपदमध्यमौ । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

**नकिंष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।**

**तत्तु ते दंसो यदहन्त्समानैर्नृभिर्यद्युक्तो विवे रपांसि ॥ ७ ॥ ८ ॥**

नकिः । ते । एता । व्रता । मिनन्ति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ ।

तत् । तु । ते । दंसः । यत् । अहन् । समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ॥७॥८॥

हे अग्ने ते तव संबन्धीनि एता व्रता एतानि परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि नकिः मिनन्ति राक्षसादयो बाधका न हिंसन्ति । यत् यस्मात् त्वम् एभ्यः कर्मसु वर्तमानेभ्यः नृभ्यः यज्ञस्य नेतृभ्यो यजमानेभ्यः श्रुष्टिम् । श्रु आशु अश्नुते व्याप्नोतीति श्रुष्टिर्यज्ञफलरूपं सुखम् । तत् चकर्थ कृतवानसि । सति हि तव व्रतानां बाधके एतन्नोपपद्यते । अतोऽवगम्यते तव व्रतानां हिंसका न सन्तीति । हे अग्ने ते त्वदीयं तत्तु दंसः तदेव कर्म यत् यदि राक्षसादिः अहन् हन्ति नाशयति तदानीं समानैः सप्तगणरूपेण सदृशैः नृभिः नेतृभिर्मरुद्भिः युक्तः त्वं रपांसि बाधकानि राक्षसादीनि यत् यस्मात् त्वम् विवेः गमयसि पलायनं प्रापयसि । तस्मात् तव व्रतानि न हिंसन्तीति योज्यम् ॥ मिनन्ति । 'मीञ् हिंसायाम्' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । विवेः । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । वी गत्यादिषु । सिपि अदादित्वात् शपो लुकि प्राप्ते 'बहुलं छन्दसि' इति शपः श्लुः ॥

**उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै ।**

**त्मना वहन्तो दुरो व्यृण्वन्नवन्त विश्वे स्वर्दृशीके ॥ ९ ॥ १० ॥**

उषः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् । अस्मै ।

त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे । स्वः । दृशीके ॥ ९ ॥ १० ॥

उषो न जारः उषसो जरयिता आदित्य इव विभावा विशिष्टप्रकाशयुक्तः उस्रः निवासयिता संज्ञातरूपः सर्वैः प्राणिभिरवगतस्वरूपः । देवतान्तरवदप्रत्यक्षो न भवतीत्यर्थः । एवंभूतोऽग्निः अस्मै यजमानाय चिकेतत् जानातु । अभिमतफलं ददात्वित्यर्थः । यद्वा । विभक्तिव्यत्ययः । अस्मै इदं सूक्तरूपं स्तोत्रं चिकेतत् जानातु । तथा अस्य रश्मयः त्मना आत्मनैव स्वयमेव वहन्तः हविर्वहनं कुर्वन्तः दुरः यज्ञगृहद्वाराणि व्यृण्वन् विशेषेण गच्छन्ति । व्याप्नुवन्तीत्यर्थः । तदनन्तरं दृशीके

दर्शनीये ᵛस्वः नभसि ᵛविश्वे सर्वे ते रश्मयः ᵛनवन्त गच्छन्ति । नवतिर्गतिकर्मा । देवान् प्राप्नुवन्ती-त्यर्थः ॥ उस्रः । 'वस निवासे'। 'स्फायितञ्चि' इत्यादिना रक् । यजादित्वात् संप्रसारणम् । चिकेतन् । 'कित ज्ञाने'। जौहोत्यादिकः । लेटि अडागमः । 'बहुलं छन्दसीति वक्तव्यम्' (का. ७. ३. ८७. १) इति वचनात् 'नाभ्यस्तस्याचि पिति-' इति लघूपधगुणप्रतिषेधाभावः । 'अभ्यस्ता-नामादिः' इत्याद्युदात्तत्वम् । ऋण्वन् । 'इवि रिवि रवि धवि गत्यर्थाः' । इदित्त्वात् नुम् । छान्दसो लङ् । व्यत्ययेन रेफस्य संप्रसारणम् । यद्वा । 'ऋणु गतौ' । तनोत्यादिः ॥ ॥ १३ ॥

'वनेम' इति द्विपदमेकादशर्चमध्ययनतः षडृचं षष्ठं सूक्तम् । ऋष्याद्याः पूर्ववत् । अनुक्रान्तं च—'वनेमैकादश' इति । विनियोगो लैङ्गिकः ॥

वनेम पूर्वीरर्यो मनीषा अग्निः सुशोको विश्वान्यश्याः ।
आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ॥ १ ॥ २ ॥

वनेम । पूर्वीः । अर्यः । मनीषा । अग्निः । सुऽशोकः । विश्वानि । अश्याः ।
आ । दैव्यानि । व्रता । चिकित्वान् । आ । मानुषस्य । जनस्य । जन्म ॥ १ ॥ २ ॥

ᵛपूर्वीः प्रभूता इषोऽन्नानि ᵛवनेम संभजेमहि । अग्निस्ताद्दशान्यन्नानि ददात्वित्यर्थः । ᵛमनीषा मनी-षया बुद्ध्या ᵛअर्यः गन्तव्यः प्राप्तव्यः । यद्वा । मनीषया अर्यः स्वामी । ᵛसुशोकः शोभनदीप्तिः । एवंभूतः ᵛअग्निः ᵛविश्वानि सर्वाणि कर्माणि ᵛअश्याः अश्नुते व्याप्नोति । किं कुर्वन् । ᵛदैव्यानि देवेषु भवानि ᵛव्रता व्रतानि कर्माणि ᵛचिकित्वान् ᵛआ समन्तात् जानन् । तथा ᵛमानुषस्य ᵛजनस्य मनुष्यजातस्य ᵛजन्म उत्पत्तिरूपं कर्म चिकित्वान् आभिमुख्येन जानन् । द्यावापृथिव्योः संबन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन् । अवगत्य व्याप्नोतीत्यर्थः ॥ वनेम । 'वन षण संभक्तौ' । शपि प्राप्ते व्यत्ययेन शः[1] । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । पूर्वीः । पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । 'हलि च' इति दीर्घः । मनीषा । ईषाअक्षादित्वात्प्रकृतिभावः (पा. सू. ६. १. १२७. २) । सुशोकः । 'शुच दीप्तौ' । भावे घञ् । 'चजोः कु घिण्यतोः' इति कुत्वम् । शोभनः शोको यस्य । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अश्याः । 'देवत्वा विश्वान्यश्याः' (ऋ. सं. १. ६९. ६) इतिवत् । चिकित्वान् । 'कित ज्ञाने' । लिटः क्वसुः ॥

गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम् ।
अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ॥ ३ ॥ ४ ॥

गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् ।
अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ॥३॥४॥

---

[1] द-न-स-शः आत्मनेपदं च ।

^v^यः अग्निः ^v^अपां ^v^गर्भः गर्भवदन्तर्वर्ती अपांनपात्संज्ञः । यश्च ^v^वनानाम् अरण्यानां ^v^गर्भः दावाग्निरूपेण तन्मध्ये वर्तते । यः ^v^च ^v^स्थातां स्थावराणां[1] काष्ठादीनां ^v^गर्भः अन्तरवस्थाता । ^v^चरथां चरणवतां[2] जङ्गमानां ^v^गर्भः जाठररूपेण देहमध्येऽवतिष्ठते । एवंभूताय ^v^अस्मै अग्नये ^v^दुरोणे दुस्तर्यगृहे ^v^अद्रौ ^v^चित् पर्वतेऽपि ^v^अन्तः मध्ये हविः प्रयच्छन्तीति शेषः । सोऽयम् ^v^अमृतः अमरणधर्माग्निः ^v^स्वाधीः शोभनकर्मयुक्तः शोभनाध्यानः[3] वा अस्माकं भवत्विति शेषः । तत्र दृष्टान्तः । ^v^विश्वः निवेशयिता सुखेनावस्थापयिता राजा ^v^विशां ^v^न । प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत् ॥ स्थाताम् । तिष्ठतेः क्विपि छान्दसः तुक् । यद्वा । औणादिकः तुप्रत्ययः । आमि अन्त्यलोपश्छान्दसः । चरथाम् । 'शीङ्शपिरुगमि°' (उ. सू. ३. ३९३) इति विधीयमानः अथप्रत्ययो बहुलवचनात् चरेरपि द्रष्टव्यः । आगमानुशासनस्यानित्यत्वात् आमो नुडभावे सवर्णदीर्घः । विश्वः । 'विश प्रवेशने' । अस्मात् अन्तर्भावितण्यर्थात् 'अशिप्रुषि°' इत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

**स हि क्षपावाँ अग्नी रयीणां दाशद्यो अस्मा अरं सूक्तैः ।**
**एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्ताँश्च विद्वान् ॥ ५ ॥ ६ ॥**

सः । हि । क्षपाऽवान् । अग्निः । रयीणाम् । दाशत् । यः । अस्मै । अरम् । सुऽउक्तैः ।
एता । चिकित्वः । भूम । नि । पाहि । देवानाम् । जन्म । मर्तान् । च । विद्वान् ॥ ५ ॥६ ॥

^v^स ^v^हि ^v^अग्निः ^v^क्षपावान् । क्षपा इति रात्रिनाम । रात्रिमान् । 'आग्नेयी वै रात्रिः' (तै. ब्रा. २. १. २. ७) इति श्रुतेः । रात्रेरग्निसंबन्धोऽपि 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' (तै. आ. ४. १०. ५) इति हूयमानत्वात् । यद्वा । राक्षसादीनां क्षपणेन नाशनेन युक्तः । एवंभूतोऽग्निः स्तोत्रे यजमानाय ^v^रयीणां धनानि ^v^दाशत् दाशति प्रयच्छति । ^v^यः यजमानः ^v^अस्मै अग्नये ^v^सूक्तैः सुष्टुक्तैर्यथाशास्त्रं प्रयुक्तैर्मन्त्रैः ^v^अरम् अलं पर्याप्तं स्तोत्रं करोति तस्मै इत्यर्थः । हे ^v^चिकित्वः । 'चिकित्वांश्चेतनावान्' (निरु. २. ११) इति यास्कः । हे चेतनावन् सर्वज्ञाग्ने त्वं ^v^देवानाम् इन्द्रादीनां ^v^जन्म जन्मानि ^v^मर्तान् मनुष्यान् ^v^च ^v^विद्वान् जानन् ^v^एता एतानि ^v^भूम भूम्युपलक्षितानि भूतजातानि ^v^नि ^v^पाहि नितरां पालय । यतस्त्वं देवमनुष्यादीन् सर्वान् जानासि अत एवमुच्यसे इत्यर्थः ॥ रयीणाम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । दाशत् । 'दाशृ दाने' । लेटि अडागमः । अरम् । 'वालमूल°' इत्यादिना लत्वविकल्पः । सूक्तैः । 'सूपमानात् क्तः' (पा. सू. ६. २. १४५) इत्युत्तरपदान्तोदात्तत्वम् । चिकित्वः । 'मतुवसो रुः°' इति नकारस्य रुत्वम् । भूम । 'सुपां सुलुक्°' इति भूमिशब्दादुत्तरस्या द्वितीयाया डादेशः । पदकाले ह्रस्वश्छान्दसः ॥

**वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतम् ।**
**अराधि होता स्वर्निषत्तः कृण्वन्विश्वान्यपांसि सत्या ॥ ७ ॥ ८ ॥**

वर्धान् । यम् । पूर्वीः । क्षपः । विऽरूपाः । स्थातुः । च । रथम् । ऋतऽप्रवीतम् ।
अराधि । होता । स्वः । निऽसत्तः । कृण्वन् । विश्वानि । अपांसि । सत्या ॥ ७ ॥ ८ ॥

---

१. ध—स्थावरादीनाम् । २. च—चराणाम् । ३. च-ण-न-स—शोभनध्यानः ।

"पूर्वीः बह्वय उपसः "क्षपः निशाः च "विरूपाः शुक्लकृष्णतया विविधरूपाः सत्यः "यम् अग्निं "वर्धान् वर्धयन्ति । तथा "स्थातुः स्थावरं वृक्षादिकं "रथं रममाणं[1] जङ्गमं मनुष्यादिकं "च "ऋतप्रवीतम् ऋतेनोदकेन सत्येन यज्ञेन वा प्रकर्षेण वेष्टितं यमग्निं वर्धयन्ति । सोऽग्निः "स्वः सुष्ठु अरणीये देवयजने "निषत्तः निषण्ण उपविष्टः सन् "होता देवानामाह्वाता "अराधि संसिद्धोऽभूत् । यद्वा । ऋत्विग्भिरराधि आराधित इत्यर्थः । किं कुर्वन् । "विश्वानि सर्वाणि "सत्या सत्सु यजमानेषु भवानि यद्वा सत्यफलानि "अपांसि कर्माणि "कृण्वन् कुर्वन् ॥ वर्धान् । वृधेर्ण्यन्तात् लेटि आडागमः । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् णिलोपः । 'इतश्च लोपः॰' इति इकारलोपे संयोगान्तलोपः । ऋतप्रवीतम् । 'व्येञ् संवरणे' । अस्मात् कर्मणि निष्ठा । 'वचिस्वपि॰' इत्यादिना संप्रसारणम् । कृद्ग्रहणे गतिकारकपूर्वस्य ग्रहणात् 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अराधि । 'राध साध संसिद्धौ' । कर्तरि लुङि व्यत्ययेन च्लेः चिण् ॥

गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।

वि त्वा नरः पुरुत्रा सपर्यन्पितुर्न जिव्रेर्वि वेदो भरन्त ॥ ९ ॥ १० ॥

गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे । बलिम् । स्वः । नः ।

वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरन्त ॥९॥१०॥

हे अग्ने त्वं "वनेषु वननीयेषु संभजनीयेषु "गोषु अस्मदीयेषु "पशुषु "प्रशस्तिं प्रशंसां "धिषे दधिषे स्थापयसि । अस्माकं प्रशस्ता गवादिपशवो भवन्त्वित्यर्थः । "विश्वे सर्वे जनाः "नः अस्मभ्यं "स्वः सुष्ठु अरणीयं "बलिम् उपायनरूपं धनं "भरन्त आहरन्तु । हे अग्ने "त्वा त्वां "नरः मनुष्याः "पुरुत्रा बहुषु देवयजनदेशेषु "वि "सपर्यन् विविधं पूजयन्ति । पूजयित्वा च "वेदः धनं "वि "भरन्त त्वत्तो विशेषेण हरन्ति गृह्णन्तीत्यर्थः । तत्र दृष्टान्तः । "जिव्रेः जीर्णात् वृद्धात् "पितुर्न पितुरिव । यथा पुत्रा वृद्धात् पितुः सकाशाद्धनं हरन्ति तद्वत् ॥ धिषे । छान्दसो वर्तमाने लिट् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' ( का. ६. १.८. १ ) इति द्विर्वचनाभावः । भरन्त । 'हृञ् हरणे' । केवलोऽपि सोपसर्गार्थो द्रष्टव्यः । छान्दसो लङ् । 'हृग्रहोर्भः॰' इति भत्वम् । पुरुत्रा । 'देवमनुष्यपुरुषपुरुमर्त्ये॰' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः । जिव्रेः । 'जॄष् वयोहानौ' । 'जॄशॄस्तृजागृभ्यः क्विन्' (उ.सू. ४.४९४)। 'ऋत इद्धातोः' इति इत्वम् । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति जिव्रिः कियोंर्गियोंरित्येवमादिषु दीर्घो न भवति' ( का. ८. २. ७८ ) इत्युक्तत्वात् 'हलि च' इति दीर्घत्वाभावः । रेफवकारयोर्विपर्ययः । उक्तं च– 'वर्णागमो वर्णविपर्ययश्च' ( का. ६. ३. १०९ ) इति । नित्त्वादाद्युदात्तत्वम् । वेद इति धननाम । विद्यते लभ्यते इति वेदः । 'विद्लृ लाभे' । कर्मणि असुन् ॥

द्विपदास्वयुक्संख्यासु या अन्त्या अतिरिच्यते सा तथैव पठितव्येत्युक्तम् । उत्तरा तादृशी द्विपदा ॥

साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥ ११ ॥

साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । याताऽइव । भीमः । त्वेषः । समत्ऽसु ॥ ११ ॥

---

१. ढ–रंहमाणम् ।

अयमग्निः vसाधुर्न साधक इव गृध्नुः vगृहीता । यथा साधकः साध्यफलमाशु गृह्णाति तद्वदग्निरपि सर्वं स्वीकरोतीत्यर्थः । तथायमग्निः vअस्तेव vशूरः । यथा इषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि दहन् सर्वं[1] प्राणिजातं[2] प्रेरयति[2]। तथा vयातेव vभीमः। याता यातयिता हिंसको भीमः सर्वेषां भयंकरो भवति । तद्वदग्निरपि दृष्टमात्रेण[3] सर्वेषां भयमुत्पादयति। अत एवंविधोऽग्निः vसमत्सु संग्रामेषु vत्वेषः दीप्तः सन् अस्माकं सहायो भवत्वित्यर्थः ॥ गृध्नुः । 'गृधु अभिकाङ्क्षायाम्' । 'त्रसिगृधिधृषिक्षिपेः क्नुः'। शूरः । 'शु गतौ'। अन्तर्भावितण्यर्थात् अस्मात् 'शुसिचिमीनां दीर्घश्च' ( उ. सू. २. १८२ ) इति क्रन् ॥　　　॥१४॥

'उप प्र' इति दशर्चं सप्तमं सूक्तम् । अत्रानुक्रम्यते–'उप प्र दश' इति। 'ऋषिश्चान्यस्मात्' इति परिभाषया शक्तिपुत्रः पराशर ऋषिः । अनादेशपरिभाषया त्रिष्टुप् । 'परमाग्नेयमैन्द्रात्' इति परिभाषितत्वादग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादीनि त्रीणि सूक्तानि। 'अथैतस्याः' इति खण्डे तथैव सूत्रितम्– 'उप प्र जिन्वन्निति त्रीणि का त उपेतिरिति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति। आश्विनशस्त्रेऽपि प्रातरनुवाकातिदेशादिदमादीनि त्रीणि सूक्तानि । तथैव सूत्र्यते[4]– 'एतयाग्नेयं गायत्रमुपसंतनुयात् प्रातरनुवाकन्यायेन' ( आश्व. श्रौ. ६. ५ ) इति ॥

उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः ।

स्वसारः श्यावीमरुषीमजुषञ्चित्रमुच्छन्तीमुषसं न गावः ॥ १ ॥

उप । प्र । जिन्वन् । उशतीः । उशन्तम् । पतिम् । न । नित्यम् । जनयः । सऽनीळाः ।

स्वसारः । श्यावीम् । अरुषीम् । अजुषन् । चित्रम् । उच्छन्तीम् । उषसम् । न । गावः ॥ १ ॥

vउशतीः उशत्यः कामयमानाः vसनीळाः । नीळो निवासस्थानम् । समाननिवासस्थानाः एकपाण्यवस्थानात्। स्वसारः[5] इत्यङ्गुलिनाम। एवंभूता अङ्गुलयः vउशन्तं कामयमानमग्निं vजनयः जायाः vनित्यम् असाधारणं vपतिं vन भर्तारमिव vउप vप्र vजिन्वन् । उपेत्य हविष्प्रदानादिकर्मणा प्रीणयन्ति। प्रीणयित्वा च vचित्रं चायनीयं पूजनीयं तमग्निमञ्जलिबन्धनेन vअजुषन् असेवन्त । तत्र दृष्टान्तः ।vश्यावीं श्याववर्णां रात्रिसंबन्धात् कृष्णां ततः vउच्छन्तीं सूर्यकिरणसंबन्धात् तमो वर्जयन्तीं अत एव vअरुषीं आरोचमानां यद्वा शुभ्ररूपयुक्ताम् vउषसं vन उषोदेवतां vगावः रश्मयो यथा सेवन्ते तद्वत् । यथा रश्मय उषसा नित्यसंबद्धा एवं सर्वेषु यज्ञेष्वग्निपरिचरणेनाङ्गुलयो नित्यसंबद्धा इति तात्पर्यार्थः ॥ जिन्वन् । जिवि प्रीणनार्थः । इदित्त्वात् नुम् । लेटि अडागमः । उशतीः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'शतुरनुमः°' इति नद्या उदात्तत्वम् । स्वसारः । 'असु क्षेपणे' इत्यस्मात् 'सुञ्यसेर्ऋन्' ( उ. सू. २. २५३ ) इति ऋन् । 'न षट्स्वस्रादिभ्यः' ( पा. सू. ४. १. १० ) इति ङीप्प्रतिषेधः । नित्त्वादाद्युदात्तत्वम् । अरुषीम् । अरुषमिति रूपनाम । 'ऋ गतौ'। 'ऋहनिभ्यामुषच्' ( उ. सू. ४. ५१३ )। 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः । व्यत्ययेनाद्युदात्तत्वम् । अजुषन् । 'जुषी प्रीतिसेवनयोः'। तौदादिकः। लङि व्यत्ययेन परस्मैपदम् । 'रुट्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इत्यन्तादेशस्य रुडागमः ॥

---

१. स–'सर्वम्' नास्ति । २. ल–प्राणिजातं गृह्णाति । अस्ताइव क्षेपक इव देवान्प्रति हविः प्रेरयति । ३. च-छ-द-ध-न-फ–दृष्टिमात्रेण। ४. ढ–सूत्रितम् । ५. छ-त-श–स्वसारः। स्वसारः ।

वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।
चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ २ ॥

वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिम् । रुजन् । अङ्गिरसः । रवेण ।
चक्रुः । दिवः । बृहतः । गातुम् । अस्मे इति । अहरिति । स्वः । विविदुः । केतुम् । उस्राः ॥ २ ॥

नः अस्माकं पितरः अङ्गिरसः एतत्संज्ञा ऋषयः उक्थैः शस्त्रैरग्निं स्तुत्वा वीळु चिद्दृळ्हा । वीळु इति बलनाम । बलवन्तं दृढाङ्गमपि अद्रिम् अत्तारं पणिनामानमसुरं रवेण स्तुतिशब्दमात्रेणैव रुजन् अभञ्जन् । तैः स्तुतोऽग्निस्तमसुरं हनवानित्यर्थः[1] । किंच बृहतः महतः दिवः द्युलोकस्य गातुं मार्गम् अस्मे अस्माकं चक्रुः कृतवन्तः । आवरकस्यासुरस्याग्निना हतत्वात् । मार्गं कृत्वा च स्वः सुष्ठु अरणीयमसुरराहित्येन सुखेन प्राप्यम् अहः दिवसं विविदुः अजानन् लब्धवन्तो वा । तथा केतुम् अह्नां केतयितारं ज्ञापयितारमादित्यम् उस्राः पणिनापहृता गाश्च विविदुरित्यनुषङ्गः ॥ वीळु । ' सुपां सुलुक्° ' इति विभक्तेर्लुक् । दृळ्हा । ' दृढः स्थूलबलयोः ' (पा. सू. ७. २. २०) इति निपातितः । ' सुपां सुलुक्° ' इति डादेशः । रुजन् । ' रुजो भङ्गे ' । तौदादिकः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । विविदुः । ' विद ज्ञाने ', ' विद्लृ लाभे ' इति वा । लिटि उसि रूपम् ॥

दधन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वो विभृत्राः ।
अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ॥ ३ ॥

दधन् । ऋतम् । धनयन् । अस्य । धीतिम् । आत् । इत् । अर्यः । दिधिष्वः । विऽभृत्राः ।
अतृष्यन्तीः । अपसः । यन्ति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयन्तीः ॥ ३ ॥

ऋतं देवयजनदेशं प्राप्तमग्निमङ्गिरसो महर्षयः दधन् गार्हपत्यादिरूपेणाधारयन् । धारयित्वा च अस्य अग्नेः धीतिं कर्म अग्निहोत्रादिलक्षणं धनयन् धनमकुर्वन् । यथा पुरुषा धनं संपादयन्ति तद्वदग्निदेवत्यं[2] कर्म अन्वतिष्ठन्नित्यर्थः । आदित् अङ्गिरसामनुष्ठानानन्तरमेव अर्यः अर्या धनस्य स्वामिन्यः दिधिष्वः तेन धनेन दिधिष्वोऽग्नीनां धारणं कुर्वत्यः । कृताग्न्याधाना इत्यर्थः । विभृत्राः आहितानग्नीन् अग्निहोत्रादिकर्मणि विहरन्त्यः अतृष्यन्तीः विषयान्तरतृष्णारहिताः अत एव अपसः अपसा कर्मणा युक्ताः एवंभूता यजमानलक्षणाः प्रजाः प्रयसा हविर्लक्षणेनान्नेन देवान् इन्द्रादीन् जन्म जातान् मनुष्यांश्च वर्धयन्तीः वर्धयन्त्यः सत्यः एनमग्निम् अच्छ आभिमुख्येन यन्ति प्राप्नुवन्ति परिचरन्तीति यावत् ॥ दधन् । ' दध धारणे ' । लङि व्यत्ययेन परस्मैपदम् । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । धनयन् । धनशब्दात् ' तत्करोति° ' इति णिच् । ' इष्ठवण्णौ प्रातिपदिकस्य ' इति इष्ठवद्भावात् टिलोपः । लङि पूर्ववत् । अर्यः । 'अर्यः स्वामिवैश्ययोः' ( पा. सू. ३. १. १०३ ) इति निपातितः । लिङ्गवचनव्यत्ययौ । ' अर्यः स्वाम्याख्या चेत् ' ( फि. सू. १७ ) इत्यन्तोदात्तत्वम् । दिधिष्वः । ' डुधाञ् धारणपोषणयोः ', ' षो अन्तकर्मणि ' इत्याभ्याम् ' अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः '

---

१. ढ-स–हतवानिति यावत् । २. च-छ-त-न-फ-श–तद्वदग्निदैवत्यम् ।

( उ. सू. ३. ९३ ) इति क्रप्रत्ययान्तो निपातितः। प्रत्ययस्वरः। 'उदात्तस्वरितयोर्यणः०' इति जसः स्वरितत्वम्। विभृत्राः। 'हृञ् हरणे'। विपूर्वादस्मादौणादिकः क्त्रप्रत्ययः। 'हृग्रहोर्भः०' इति भत्वम्। अतृष्यन्तीः। 'ञितृषा पिपासायाम्'। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घस्य विकल्पितत्वात् पूर्वसवर्णदीर्घः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अपसः। अपस्शब्दादुत्पन्नस्य मत्वर्थीयस्य विनो 'बहुलं छन्दसि' (पा. सू. ५. २. १२२) इति बहुलवचनात् लुक्। विनन्तस्य त्रिलिङ्गत्वेन नब्विषयत्वाभावात् प्रातिपदिकस्वरेणान्तोदात्तत्वम्। जन्म। जायन्ते इति जन्मानो मनुष्याः। 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। 'सुपां सुलुक्०' इति शसो लुक्॥

मथीद्यदीं विभृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत्।
आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं भृगवाणो विवाय॥ ४॥

मथीत्। यत्। ईम्। विऽभृतः। मातरिश्वा। गृहेऽगृहे। श्येतः। जेन्यः। भूत्।
आत्। ईम्। राज्ञे। न। सहीयसे। सचा। सन्। आ। दूत्यम्। भृगवाणः। विवाय॥४॥

ᵛमातरिश्वा व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः ᵛईम् एनमग्निं ᵛयत् यदा ᵛमथीत् अमथ्नात्। अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम् 'अथ यः प्राणापानयोः संधिः स व्यानः' इत्युपक्रम्य छन्दोगैराम्नातम्— 'अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति' (छा. उ. १. ३. ३; ५) इति। मन्त्रान्तरं च भवति—'आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः' (ऋ. सं. १. ९३. ६) इति। कीदृशो मातरिश्वा। ᵛविभृतः प्राणिषु प्राणापानादिपञ्चवृत्तिरूपेण विहृतो विभज्य स्थितः। तदपि प्राणसंवादे तैरेवाम्नातं—'तान्वरिष्ठः प्राण उवाच। मा मोहमापद्यथाहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति' (प्र. उ. २. ३)। मन्थनेनोत्पन्नोऽयमग्निः ᵛश्येतः शुभ्रवर्णो भूत्वा ᵛगृहेगृहे सर्वस्मिन् यज्ञगृहे यदा ᵛजेन्यः प्रादुर्भूतः ᵛभूत्। यद्वा। रक्षसां जेन्यो जेताभिभविता भूत्। तथा च तैत्तिरीयकं— 'देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वासुरानभ्यभवन्' (तै. सं. ६. २. २. ६-७) इति। ऐतरेयिणोऽप्यामनन्ति—'ते देवाः प्रतिबुध्याग्निं पुरस्तात्प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपाघ्नत' (ऐ. ब्रा. ६. ४) इति। ᵛआत् यज्ञगृहे प्रादुर्भावानन्तरम् ᵛईम् एनमग्निं ᵛभृगवाणः। भृगुर्ऋषिः। स इवाचरन् यजमानः ᵛदूत्यं दूतस्य कर्म ᵛआ ᵛविवाय शास्त्रमर्यादया प्रापयामास। तत्र दृष्टान्तः। ᵛसचा ᵛसन्। सखा भवन्नन्यो राजा ᵛसहीयसे अभिभवित्रे प्रबलाय ᵛराज्ञे ᵛन। यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत्॥ मथीत्। 'मथे विलोडने'। लुङि 'ह्म्यन्तक्षण०' इति वृद्धिप्रतिषेधः। जेन्यः। 'जनी प्रादुर्भावे'। अस्मादौणादिक एन्यप्रत्ययः टिलोपश्च इति भट्टभास्करमिश्राः। यद्वा। 'जि जये' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि 'अचो यत्' इति यत्, तस्य नुडागमश्च। 'यतोऽनावः' इत्याद्युदात्तत्वम्। दूत्यम्। दूतस्य कर्म दूत्यम्। 'दूतस्य भागकर्मणी' इति यत्। 'तित्स्वरितम्' इति स्वरितत्वम्। 'यतोऽनावः' इत्याद्युदात्तत्वं तु अनित्यमिति 'वीरवीर्यौ च' इत्यत्र ज्ञापितम्। भृगवाणः भृगुरिवाचरन्। 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' (पा. म. ३. १. ११. ३) इति वचनात् क्विप्। तदन्तात् लटो व्यत्ययेन शानच्। अदुपदेशात् लसार्वधातुकानुदात्तत्वे प्रत्ययान्तधातोरन्तोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम्। विवाय। 'वी गत्यादिषु'। अस्मात् अन्तर्भावितण्यर्थात् लिट्॥

मुहे यत्पित्र ईं रसं दिवे करवं त्सरत्पृशुन्यश्चिकित्वान् ।
सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात् ॥ ५ ॥

मुहे । यत् । पित्रे । ईम् । रसम् । दिवे । कः । अवं । त्सरत् । पृशन्यः । चिकित्वान् ।
सृजत् । अस्ता । धृषता । दिद्युम् । अस्मै । स्वायाम् । देवः । दुहितरि । त्विषिम् । धात् ॥५॥

महे महते पित्रे पालयित्रे दिवे द्योतमानाय देवगणाय ईम् इमं रसं पृथिव्याः सारभूतं हविः यत् यदा यजमानः कः करोति तदानीं पृशन्यः स्पर्शनकुशलो राक्षसादिः चिकित्वान् हवींषि वहन्तं हे अग्ने त्वां जानन् अव त्सरत् त्वद्भयात्पलायते। अस्ता इषुक्षेपणशीलोऽग्निः धृषता धर्षकेण धनुषा अस्मै पलायमानाय राक्षसादये दिद्युं दीप्यमानं बाणं सृजत् विसृजति। देवः दीप्यमान उषःकालं प्राप्तोऽग्निः स्वायां स्वकीयायां दुहितरि दुहितृवत् समनन्तरभाविन्यामुषसि त्विषिं स्वकीयां दीप्तिं धात् स्थापयति। उषःकाले हि सूर्यकिरणाः प्रादुर्भवन्ति। तैः स्वकीयं प्रकाशमेकीकरोति। तथा च तैत्तिरीयकम्–‘ उद्यन्तं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे ’ ( तै. ब्रा. २. १. २. १० ) इति। अत उषसि दीप्तिं निदधातीत्युच्यते ॥ कः। करोतेर्लुङि ‘ मन्त्रे घस° ’ इत्यादिना च्लेर्लुक्। त्सरत्। ‘ त्सर छद्मगतौ ’। लेटि अडागमः। ‘ इतश्च ’ इति इकारलोपः। पृशन्यः। ‘ स्पृश संस्पर्शने ’। ‘ कृपृवृजि° ’ ( उ. सू. २. २३९ ) इति विधीयमानः क्युप्रत्ययो बहुलवचनादस्मादपि भवति। स्पृशनं स्पर्शः। ‘ तत्र साधुः ’ इति यत्। सलोपश्छान्दसः। ‘ तित्स्वरितम् ’ इति स्वरितत्वम्। दिद्युम्। दिद्युदिति वज्रनाम। अन्त्यलोपश्छान्दसः। धात्। छान्दसो वर्तमाने लुङ् ॥
॥ १५ ॥

स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।
वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि ॥ ६ ॥

स्वे । आ । यः । तुभ्यम् । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः । अनु । द्यून् ।
वर्धो इति । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथम् । यम् । जुनासि ॥६॥

हे अग्ने तुभ्यं त्वां स्वे दमे स्वकीये यज्ञगृहे यः यजमानः। एक आकारो मर्यादायाम्। यथाशास्त्रम् आ विभाति आ समन्तात् समिदादिभिः काष्ठैः प्रज्वलयति। अनु द्यून् अनुदिवसम् उशतः कामयमानाय तुभ्यं नमो वा दाशात् हविर्लक्षणमन्नं वा दद्यात्। अस्य यजमानस्य हे अग्ने द्विबर्हाः द्वयोर्मध्यमोत्तमस्थानयोर्बृंहितो वर्धितस्त्वं वयः अन्नं वर्धो वर्धयैव। सरथं रथेन सहितं युयुत्सुं यं पुरुषं जुनासि युद्धे प्रेरयसि स पुरुषः राया धनेन यासत् संगच्छते ॥ तुभ्यम्। ‘ क्रियाग्रहणं कर्तव्यम् ’ इति कर्मणः संप्रदानत्वात् चतुर्थी। दाशात्। ‘ दाशृ दाने ’। लेटि आडागमः। उशतः। ‘ शतुरनुमः° ’ इति विभक्तेरुदात्तत्वम्। ‘ चतुर्थ्यर्थे बहुलं छन्दसि ’ इति षष्ठी। अनुद्यून्। द्युरित्यहर्नाम। लक्षणेऽनोः कर्मप्रवचनीयत्वम्। ‘कर्मप्रवचनीययुक्ते°’ इति द्वितीया। वर्धो। वर्ध उ। वृधेर्ण्यन्तात् लोटि ‘ छन्दस्युभयथा ’ इति शप आर्धधातुकत्वात् ‘ णेरनिटि ’ इति णिलोपः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। उञा सहैकादेशे ‘ उञः ’

( पा. सू. १. १. १७ ) इति प्रगृह्यत्वम् । यासत् । ' या प्रापणे ' । ' सिब्बहुलं लेटि ' इति सिप् । ' लेटोऽडाटौ ' इति अडागमः । जुनासि । जु इति गत्यर्थः सौत्रो धातुः । शपि प्राप्ते व्यत्ययेन श्ना ॥

अग्निं विश्वा अभि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः ।

न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान् ॥ ७ ॥

अग्निम् । विश्वाः । अभि । पृक्षः । सचन्ते । समुद्रम् । न । स्रवतः । सप्त । यह्वीः ।

न । जामिऽभिः । वि । चिकिते । वयः । नः । विदाः । देवेषु । प्रऽमतिम् । चिकित्वान् ॥७॥

विश्वाः पृक्षः चरुपुरोडाशादीनि सर्वाण्यन्नानि अग्निम् अङ्गनादिगुणयुक्तमेनम् अभि सचन्ते आभिमुख्येन समवयन्ति प्राप्नुवन्ति । तत्र दृष्टान्तः । स्रवतः समुद्रं न । यथा स्रवन्त्यो नद्यः समुद्रमभिगच्छन्ति तद्वत् । कीदृश्यो नद्यः । सप्त सप्तसंख्याकाः । ' इमं मे गङ्गे ' इत्यस्यामृचि सप्त हि नद्यः प्राधान्येन श्रूयन्ते । यह्वीः । महन्नामैतत् । महत्यः । जामिभिः । जमन्त्येकस्मिन् पात्रे सह भुञ्जते इति जामयो ज्ञातयः । तैः नः अस्मदीयं वयः अन्नं न वि चिकिते न ज्ञायते । तेभ्यो दातुमस्माकमन्नं प्रभूतं[1] नास्तीति भावः । अतो हे अग्ने त्वं देवेषु । दीव्यन्तीति देवा धनपतयः। तेषु प्रमतिं प्रकर्षेण मननीयं धनं चिकित्वान् अवगच्छन् विदाः अस्मभ्यं लम्भय । यद्वा । प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदाः वेदय ज्ञापय ॥ पृक्षः । अन्ननामैतत् । ' पृची संपर्के ' इत्यस्मात् औणादिकः कर्मणि क्विप् धातोः षुगागमश्च । यद्वा । असुनि ' सुपां सुलुक्° ' इति जसो लुक् । स्रवतः । ' स्रु गतौ ' । स्रवणं स्रवः । तत्कुर्वन्ति । ' सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः ' इति क्विप् । एतदन्तात् धातोः ' क्विप् च ' इति क्विप् । ' ह्रस्वस्य पिति° ' इति तुक् । क्विबन्तात् धातोः सतिशिष्टत्वात् धातुस्वरेणान्तोदात्तत्वम् । यह्वीः । ' पिप्पल्यादिभ्यश्च ' ( पा. सू. ४. १. ४१ ग. ) इति गौरादिषु पठितत्वात् तस्य च आकृतिगणत्वादत्रापि ङीष् । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । चिकिते । छान्दसो वर्तमाने कर्मणि लिट् । विदाः । ' विद्लृ लाभे ' । अन्तर्भावितण्यर्थात् लेटि आडागमः । तुदादित्वात् शः । आगमानुशासनस्यानित्यत्वात् नुमभावः । विकरणस्वरः शिष्यते । यद्वा । विदेर्ज्ञानार्थस्य लेटि व्यत्ययेन शः ॥

आ यदिषे नृपतिं तेज आनट् छुचि रेतो निषिक्तं द्यौरभीके ।

अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥ ८ ॥

आ । यत् । इषे । नृऽपतिम् । तेजः । आनट् । शुचि । रेतः । निऽसिक्तम् । द्यौः । अभीके ।

अग्निः । शर्धम् । अनवद्यम् । युवानम् । सुऽआध्यम् । जनयत् । सूदयत् । च ॥ ८ ॥

अग्नेः यत् तेजः नृपतिं नृणामृत्विजां पालकं यजमानम् आनट् जाठररूपेण आ समन्तात् व्याप्नोत्[2] । किमर्थम् । इषे अन्नाय । कीदृशम्[3] । शुचि शुद्धं द्यौः दीप्तम् । तेन तेजसा परिपक्वमन्नं[4] रसरूपं[4] रेतः वीर्यम् अभीके अभ्यक्तेऽभिगतेऽभिप्राप्ते गर्भस्थाने निषिक्तं नितरां सिक्तम् अग्निः

१. च-छ-ण-न-फ—पूर्णम् । २. च-छ-त-न-फ-श—व्याप्नोति । ३. च-छ-न-फ—कीदृशं तेजः । ४. ढ—अन्नरसरूपम् ।

वक्ष्यमाणगुणविशिष्टपुत्ररूपेण ^V^जनयत् जनयतु । ^V^शर्धं बलवन्तम् ^V^अनवद्यम् अवद्यरहितं ^V^युवानं तरुणं जरारहितमित्यर्थः । ^V^स्वाध्यं शोभनकर्माणं शोभनप्रज्ञं वोत्पन्नं पुत्रं ^V^सूदयच्च यागादिकर्मसु प्रेरयतु च। यद्वा । रेत इत्युदकनाम । निषिक्तं मेघेन वृष्टमुदकम् इषेऽन्नाय सस्यादिनिष्पत्तयेऽग्नेर्यत्तेज आनट् व्याप्नोत् वृष्ट्युदकेन[1] भौमाग्नेः संयोगे सति हि सस्यान्युत्पद्यन्ते । कीदृशं तेजः । नृपतिं नृणां रक्षकं शुचि दीप्तम्। तादृशेन तेजसा युक्तो द्यौर्दीप्तोऽग्निरभीके आसन्नकाले एव शर्धादिगुणविशिष्टं पुत्रं जनयतु तं च प्रेरयतु यज्ञादौ ॥ इषे । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । नृपतिम् । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । आनट् । ' अशू व्याप्तौ ' । लङि व्यत्ययेन परस्मैपदश्नमौ । आडागमः । व्रश्चादिषत्वे ष्टुत्वम् । निषिक्तम् । ' षिचिर् क्षरणे ' । कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । ' उपसर्गात्सुनोति° ' इति षत्वम् । अभीके । अभिपूर्वादञ्चतेः पचाद्यचि पृषोदरादित्वात् रूपसिद्धिः । यद्वा । ' इण् गतौ ' इत्यस्मात् औणादिकः कक्प्रत्ययः । उभयथापि दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । स्वाध्यम् । ' एरनेकाचः° ' इति यणादेशः । ' उदात्तस्वरितयोर्यणः° ' इति स्वरितत्वम् । जनयत् । जनेर्ण्यन्तात् लेटि अडागमः । सूदयत् । ' षूद क्षरणे' । पूर्ववत् लेटि अडागमः ॥

मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।
राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥ ९ ॥

मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे ।
राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । गोषु । प्रियम् । अमृतम् । रक्षमाणा ॥९॥

^V^यः ^V^सूरः सूर्यः ^V^एकः एकाकी असहायः सन् ^V^अध्वनः दिव्यान् मार्गान् ^V^सद्यः ^V^एति आशु गच्छति । असहायत्वं च श्रूयते—' सूर्य एकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति ' ( तै. ब्रा. ३. ९. ५. ४ ) इति । शीघ्रगमनं च स्मर्यते—' योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ' इति । शीघ्रगमने दृष्टान्तः । ^V^मनो ^V^न । यथा मनः शीघ्रं गच्छति तद्वत् । स च सूरः ^V^वस्वः धनस्य ^V^सत्रा सहैव युगपदेव ^V^ईशे ईष्टे । यो हि शीघ्रं गच्छति स बहुदेशेष्ववस्थितानि धनानि प्राप्नोति । तथा ^V^राजाना राजमानौ ^V^सुपाणी शोभनबाहू ^V^मित्रावरुणा मित्रावरुणौ अस्मदीयासु ^V^गोषु ^V^प्रियं सर्वेषां प्रीतिकरम् ^V^अमृतम् अमृतवत्स्वादुभूतं पयः ^V^रक्षमाणा रक्षन्तौ वर्तेते । हे अग्ने तत्तद्रूपेण त्वमेवैवं वर्तसे इति भावः ॥ , वस्वः । लिङ्गव्यत्ययः । ' जसादिषु च्छन्दसि वावचनम् ' इति ' घेर्ङिति ' इति गुणाभावे यणादेशः । ईशे । ' ईश ऐश्वर्ये '। ' लोपस्त आत्मनेपदेषु ' इति तलोपः । मित्रावरुणा । ' देवताद्वन्द्वे च ' इति पूर्वपदस्य आनङादेशः । ' देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम् ॥

---

1. त-द-ध-श-स-वृष्टेन उदकेन ।

मा नो॑ अग्ने स॒ख्या पित्र्या॑णि॒ प्र म॑र्षिष्ठा अ॒भि वि॒दुष्क॒विः सन् ।
नभो॒ न रू॒पं ज॑रि॒मा मि॑नाति पु॒रा तस्या॑ अ॒भिश॑स्ते॒रधी॑हि ॥ १० ॥

मा । नः॒ । अ॒ग्ने॒ । स॒ख्या । पित्र्या॑णि । प्र । म॒र्षि॒ष्ठाः॒ । अ॒भि । वि॒दुः । क॒विः । सन् ।
नभः॑ । न । रू॒पम् । ज॒रि॒मा । मि॒ना॒ति॒ । पु॒रा । तस्याः॑ । अ॒भिऽश॑स्तेः । अधि॑ । इ॒हि॒ ॥१०॥

हे ᵛअग्ने ᵛपित्र्याणि पितरं वसिष्ठमुपक्रम्यागतानि ᵛसख्या सखित्वानि ᵛमा ᵛप्र ᵛमर्षिष्ठाः मा विनाशय । अत्र मृष्यतेरुपसर्गवशादर्थान्तरे वृत्तिः । यतस्त्वं ᵛकविः क्रान्तदर्शी ᵛसन् ᵛअभि आभिमुख्येन ᵛविदुः सर्वं विद्वान् । ᵛनभो ᵛन ᵛरूपम् । यथान्तरिक्षं रूपवन्तः सूर्यरश्मय आच्छादयन्ति तद्वदाच्छादयति । ᵛजरिमा जरा ᵛमिनाति मां सूक्तद्रष्टारं हिनस्ति । ᵛअभिशस्तेः हिंसाहेतोः ᵛतस्याः जरायाः ᵛपुरा ᵛअधीहि मां बुध्यस्व । सा यथा न प्राप्नोति तथा कुरु । अमृतत्वं प्रयच्छेति यावत् ॥ सख्या । सख्युर्भावः सख्यम् । ' सख्युर्यः ' इति यः । पित्र्याणि । पितृभ्य आगतानि । ' पितुर्यच्च ' ( पा. सू. ४. ३. ७९ ) इति यत्प्रत्ययः । ' रीङृतः ' ( पा. सू. ७. ४. २७ ) इति रीङादेशः । ' यस्येति च ' इति ईकारलोपः । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । मर्षिष्ठाः । ' मृष तितिक्षायाम् '। प्रार्थनायां छान्दसो लुङ् । ' न माङ्योगे ' इति अडभावः । विदुः । ' विद ज्ञाने ' । ' बहुलमन्यत्रापि ' इति उसिप्रत्ययः । अत एव बहुलवचनाद्गुणाभावः । ' छन्दसि वाप्राम्रेडितयोः ' ( पा. सू. ८. ३. ४९ ) इति विसर्जनीयस्य षत्वम् । नभः । ' नहेर्दिवि भश्च ' ( उ. सू.४.६५०) इति असुन् । जरिमा । ' जॄष् वयोहानौ ' । औणादिको भावे इमनिच्प्रत्ययः । मिनाति । ' मीञ् हिंसायाम् ' । ' प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । अभिशस्तेः । अभिशस्यते हिंस्यतेऽनयेत्यभिशस्तिः । करणे क्तिन् । ' तादौ च° ' इति गतेः प्रकृतिस्वरत्वम् । अधीहि । ' इक् स्मरणे ' । लोटि अदादित्वात् शपो लुक् । हेरपित्त्वेन ङित्त्वाद्गुणाभावः ॥ ॥ १६ ॥

' नि काव्या ' इति दशर्चमष्टमं सूक्तं त्रैष्टुभमाग्नेयं पराशरस्यार्षम् । अनुक्रान्तं च–' नि काव्या ' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

नि काव्या॑ वे॒धसः॒ शश्व॑तस्क॒र्हस्ते॒ दधा॑नो॒ नर्या॑ पु॒रूणि॑ ।
अ॒ग्निर्भु॑वद्रयि॒पती॑ रयी॒णां स॒त्रा च॑क्रा॒णो अ॒मृता॑नि॒ विश्वा॑ ॥ १ ॥

नि । काव्या॑ । वे॒धसः॑ । शश्व॑तः । क॒रिति॑ क॒: । हस्ते॑ । दधा॑नः । नर्या॑ । पु॒रूणि॑ ।
अ॒ग्निः । भु॒व॒त् । र॒यि॒ऽपतिः॑ । र॒यी॒णाम् । स॒त्रा । च॒क्रा॒णः । अ॒मृता॑नि । विश्वा॑ ॥ १ ॥

ᵛशश्वतः शाश्वतस्य नित्यस्य ᵛवेधसः विधातुर्ब्रह्मणः संबन्धीनि ᵛकाव्या काव्यानि मन्त्ररूपाणि स्तोत्राण्ययमग्निः ᵛनि ᵛकः नियमेन स्वात्माभिमुखं करोति । किं कुर्वन् । ᵛनर्या नृभ्यो हितानि नृषु साधूनि वा ᵛपुरूणि बहूनि धनानि ᵛहस्ते ᵛदधानः हस्ते धारयन् । ईदृग्भूतमग्निमवलोक्य सर्वे जनाः स्तुवन्तीति भावः । स्तोतृभ्यो धनेषु दत्तेष्वप्यग्नेर्धनं न क्षीयते इत्याह अग्निरिति । अयम् ᵛअग्निः ᵛरयीणां ᵛरयिपतिः ᵛभुवत् धनानां मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति । किं कुर्वन् ।

<sup>v</sup>विश्वा विश्वानि सर्वाणि <sup>v</sup>अमृतानि । हिरण्यनामैतत् । ' अमृतं हिरण्यम् ' ( अ. सं. ५. २८. ११ ) इति श्रुतेः । सर्वाणि हिरण्यानि स्तोतृभ्यः <sup>v</sup>सत्रा सहैव <sup>v</sup>चक्राणः कुर्वन् युगपत्प्रयच्छन्नित्यर्थः ॥ कः । करोतेश्छान्दसो लुङ् । ' मन्त्रे घस° ' इति च्लेर्लुक् । ' हल्ङ्याब्भ्यः° ' इति तकारलोपः । नर्या । नरशब्दात् हितार्थे गवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः ( पा. सू. ५. १. २) । यद्वा । ' तत्र साधुः ' इति यत् । चक्राणः । करोतेर्लटः शानच् । ' बहुलं छन्दसि ' इति विकरणस्य श्लुः । नन्वेवं सति ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वं प्राप्नोति । एवम् । तर्हि लिटः कानजस्तु । तस्यार्धधातुकत्वेन अभ्यस्ताद्युदात्तत्वाभावे चित्स्वर एव शिष्यते ॥

अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥ २ ॥

अस्मे इति । वत्सम् । परि । सन्तम् । न । विन्दन् । इच्छन्तः । विश्वे । अमृताः । अमूराः ।
श्रमऽयुवः । पदऽव्यः । धियम्ऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ॥ २ ॥

<sup>v</sup>अस्मे अस्माकं <sup>v</sup>वत्सं वत्सवदत्यन्तं प्रियम् । यद्वा । वत्सः पुत्रः पश्चादुत्पन्नत्वात् । तद्वदग्निरप्यस्माकं पुत्रः[1] । तथा चाम्नायते—' ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः ' (तै. ब्रा. ३. ७. ७. १० ) इति । <sup>v</sup>परि <sup>v</sup>षन्तं परितः सर्वत्र वर्तमानम् । देवेभ्यो निर्गत्याश्वत्थवेण्वादिषु निलीनं सन्तमित्यर्थः । एवंविधमग्निम् <sup>v</sup>इच्छन्तो <sup>v</sup>विश्वे <sup>v</sup>अमृताः सर्वेऽमरणधर्माणो देवाः <sup>v</sup>अमूराः अमूढा मरुतश्च <sup>v</sup>न <sup>v</sup>विन्दन् तमग्निं नालभन्त । अलभमानाश्च ते <sup>v</sup>श्रमयुवः हव्यवाहनस्याभावेन हविषामभावात्तज्जन्येन श्रमेण क्लेशेनैकीभूताः तस्य <sup>v</sup>अग्नेः अन्वेषणाय <sup>v</sup>पदव्यः पादैर्गच्छन्तः <sup>v</sup>धियंधाः धियामग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः । एवंविधाः सन्तः <sup>v</sup>चारु चारुणि शोभनेऽग्नेः <sup>v</sup>परमे उत्तमेऽन्त्ये <sup>v</sup>पदे । यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः । तस्मिन्पदे <sup>v</sup>तस्थुः स्थितवन्तः । बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ॥ परि षन्तम् । ' उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ' ( पा. सू. ८. ३. ८७ ) इति षत्वम् । श्रमयुवः । ' यु मिश्रणे ' । श्रमेण यूयन्ते इति श्रमयुवः । ' क्विब्वचिप्रच्छि° ' ( उ. सू. २. २१५ ) इत्यादिना विधीयमानौ क्विब्दीर्घावस्मादपि धातोर्भवतः । तन्वादित्वात् उवङ् । पदव्यः । वी गत्यादिषु । पादेन वियन्ति गच्छन्तीति पदव्यः । ' क्विप् च ' इति क्विप् । धियंधाः । ' आतोऽनुपसर्गे कः ' इति कः । ' तत्पुरुषे कृति बहुलम् ' इति बहुलवचनात् द्वितीयाया अपि अलुक् । तस्थुः । पादादित्वात् निघाताभावः । चारु । ' सुपां सुलुक्° ' इति सप्तम्या लुक् ॥

तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।
नामानि चिद्दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ॥ ३ ॥

तिस्रः । यत् । अग्ने । शरदः । त्वाम् । इत् । शुचिम् । घृतेन । शुचयः । सपर्यान् ।
नामानि । चित् । दधिरे । यज्ञियानि । असूदयन्त । तन्वः । सुऽजाताः ॥ ३ ॥

---

१. त-द-ध-श—पुत्रः पश्चादुत्पन्नत्वात् ।

ᵛशुचयः शोधयितारो दीप्ता वा मरुतो हे ᵛअग्ने ᵛशुचिं शुद्धं दीप्यमानं वा ᵛत्वामित् देवेभ्यो निर्गतं त्वामेवोद्दिश्य ᵛतिस्रः ᵛशरदः त्रीन् संवत्सरान् ᵛघृतेन आज्येन ᵛयत् यदा ᵛसपर्यान् पूजां कुर्युः तदानीं त्वमाविरभूः। तदनन्तरं ते मरुतस्त्वयानुगृहीताः सन्तः ᵛयज्ञियानि यज्ञार्हाणि यज्ञे प्रयोक्तुं योग्यानि ᵛनामानि ᵛचित् नामान्यपि ᵛदधिरे अधारयन्। नामानि च तैत्तिरीयके समाम्नायन्ते— 'ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च संमितश्च सभराः' (तै. सं. ४. ६. ५. ५) इत्यादीनि। एतैश्चाग्निचयने मारुताः सप्तकपाला हूयन्ते। नामानि धारयित्वा च ᵛसुजाताः पूर्वं रूपं परित्यज्य शोभनममृतत्वं प्राप्ताः सन्तः ᵛतन्वः स्वकीयानि शरीराणि ᵛअसूदयन्त स्वर्गं प्रापितवन्तः॥ तिस्रः। शसि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति पूर्वसवर्णदीर्घत्वे प्राप्ते 'अचि र ऋतः' इति रेफादेशः। त्रिशब्दः 'फिषः°' (फि. सू. १ ) इत्यन्तोदात्तः। तिस्रादेशस्यापि स्थानिवद्भावेनान्तोदात्तत्वे 'उदात्तयणो हल्पूर्वात्' इति शस उदात्तत्वम्। शरदः। 'शॄ हिंसायाम्'। शीर्यन्तेऽस्याम् ओषधयः इति शरत् संवत्सरः। 'शृदृभसोऽदिः' (उ. सू. १. १२७) इति अदिप्रत्ययः। उभयत्र 'कालाध्वनोरत्यन्तसंयोगे' (पा. सू. २. ३. ५ ) इति द्वितीया। सपर्यान्। 'सपर पूजायाम्'। कण्ड्वादिः। लेटि आडागमः। 'इतश्च लोपः°' इति इकारलोपः। यज्ञियानि। 'यज्ञर्त्विग्भ्यां घखञौ' इत्यर्हार्थे घप्रत्ययः॥

आ रोद॑सी बृह॒ती वेवि॑दाना॒: प्र रु॒द्रिया॑ जभ्रिरे य॒ज्ञिया॑सः।
वि॒दन्मर्तो॑ ने॒मधि॑ता चिकि॒त्वान॒ग्निं प॒दे प॑र॒मे त॑स्थि॒वांस॑म्॥ ४॥

आ। रोद॑सी॒ इति॑। बृ॒ह॒ती इति॑। वेवि॑दानाः। प्र। रु॒द्रिया॑। ज॒भ्रि॒रे। य॒ज्ञिया॑सः।
वि॒दत्। मर्तः॑। ने॒मऽधि॑ता। चि॒कि॒त्वान्। अ॒ग्निम्। प॒दे। प॒र॒मे। त॒स्थि॒ऽवांस॑म्॥ ४॥

ᵛबृहती महत्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛवेविदानाः अत्यर्थं ज्ञापयन्तः। कुत्राग्निर्वर्तते इति परस्परं वदन्तः[1] द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थः। यद्वा। महत्योर्द्यावापृथिव्योर्मध्ये आ वेविदाना अग्निमुपलभमानाः। एवंभूताः ᵛयज्ञियासः यज्ञार्हाः देवाः ᵛरुद्रिया रुद्रोऽग्निः देवानामसुरैः सह युद्धसमये तैर्देवैः स्थापितं धनमपहृत्य गतवन्तमग्निं देवा आगत्य अग्निसकाशाद्बलेन तद्धनमगृह्णन्। तदानीं सोऽग्निररोदीत्। तस्मात् रुद्र इत्याख्यायते। तथा च तैत्तिरीयकं–'तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन् तदस्य सहसादित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' (तै. सं. १. ५. १. १) इति। तस्य रुद्रस्यार्हाणि स्तोत्राणि ᵛप्र ᵛजभ्रिरे प्रजहिरे चक्रुः इत्यर्थः। ᵛनेमधिता। नेमशब्दोऽर्धवचनः। तथा च यास्कः—'त्वो नेम इत्यर्धस्य' (निरु. ३. २०) इति। सर्वेषां देवानामर्धभागेन धीयते धार्यते इति नेमधित इन्द्रः। सर्वे देवा एकोऽर्धः इन्द्र एक एवापरोऽर्धः इति यावत्। तथा च तैत्तिरीयकं–'यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तै. सं. ५. ४. ८. ३) इति। तेनेन्द्रेण सहितः ᵛमर्तः मरुद्गणः ᵛपरमे उत्तमेऽन्त्ये ᵛपदे स्थानेऽश्वत्थादौ ᵛतस्थिवांसं स्थितवन्तम् ᵛअग्निं ᵛचिकित्वान् जानन् ᵛविदत् अलभत॥ वेविदानाः। विदेर्ज्ञानार्थात् लाभार्थाद्वा यङन्तात् लटः शानच्। 'बहुलं छन्दसि' इति शपो लुक्। 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वात् अतोलोपयलोपौ। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्।

---

1. ढ–पृच्छन्तः।

विंदत् । ' विद्लृ लाभे ' । लुङि लृदित्त्वात् च्लेः अङादेशः । नेमधिता । दधातेः कर्मणि निष्ठा । ' सुधित वसुधित नेमधित° ' ( पा. सू. ७. ४. ४५ ) इति धिभावो निपात्यते । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । ' सुपां सुलुक्° ' इति तृतीयाया आकारः । तस्थिवांसम् । तिष्ठतेर्लिटः क्वसुः । ' वस्वेकाजाद्घसाम् ' इति इडागमः ॥

घर्माभिष्टवे ' संजानानाः ' इत्येषा । ' अथोत्तरम् ' इति खण्डे सूत्रितं-' संजानाना उप सीदन्नभिज्ञु दशभिर्विवस्वतः ' ( आश्व. श्रौ. ४. ७ ) इति ॥

संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन् ।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ ५ ॥

सम्ऽजानानाः । उप । सीदन् । अभिऽज्ञु । पत्नीऽवन्तः । नमस्यम् । नमस्यन्निति नमस्यन् ।
रिरिक्वांसः । तन्वः । कृण्वत । स्वाः । सखा । सख्युः । निऽमिषि । रक्षमाणाः ॥ ५ ॥

हे अग्ने त्वां संजानानाः सम्यग्जानन्तो देवाः उप सीदन् उपसीदन्ति प्राप्नुवन्ति । उपसत्तिं कृत्वा च पत्नीवन्तः सपत्नीकाः सन्तः नमस्यं नमस्कारार्हम् अभिज्ञु आभिमुख्येनावस्थितजानुयुक्तं त्वां नमस्यन् अपूजयन् । पूजयित्वा च सख्युः मित्रस्य तव निमिषि दर्शने निमित्तभूते सति रक्षमाणाः त्वया परिरक्ष्यमाणाः सखा सखायो देवाः स्वाः तन्वः स्वकीयानि शरीराणि रिरिक्वांसः अनशनादिरूपेण दीक्षानियमेन रिक्तीकुर्वन्तः शोषयन्तः कृण्वत यागानकुर्वन् । ' देवा वै यज्ञमतन्वत ' ( ऐ. ब्रा. २. ११ ) इति श्रुतेः ॥ नमस्यन् । ' नमोवरिवश्चित्रङः° ' इति पूजार्थे क्यच् । लङि ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । रिरिक्वांसः । ' रिचिर् विरेचने ' । लिटः क्वसुः । निमिषि । ' मिष स्पर्धायाम् ' । अत्रोपसर्गवशाद्दर्शनार्थः । संपदादिलक्षणो भावे क्विप् । रक्षमाणाः । कर्मणि लटः शानच् । यकि प्राप्ते व्यत्ययेन शप् ॥ ॥ १७ ॥

त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः ।
तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि ॥ ६ ॥

त्रिः । सप्त । यत् । गुह्यानि । त्वे इति । इत् । पदा । अविदन् । निऽहिता । यज्ञियासः ।
तेभिः । रक्षन्ते । अमृतम् । सऽजोषाः । पशून् । च । स्थातॄन् । चरथम् । च । पाहि ॥ ६ ॥

त्रिः सप्त एकविंशतिसंख्याकानि गुह्यानि रहस्यानि वेदैकसमधिगम्यानि यत् यानि पदा पदानि । पद्यते गम्यते स्वर्गः एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते । ते चैकविंशतिसंख्याकाः । औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः । अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः । अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः । एवमेकविंशतिसंख्याकानि यज्ञलक्षणानि पदानि हे अग्ने त्वे इत् त्वय्येव निहिता स्थापितानि । तेषां सर्वेषां त्वत्प्रधानत्वात् । न ह्यग्निमन्तरेण यागा अनुष्ठातुं शक्यन्ते ।

vयज्ञियासः यज्ञार्हाः अर्थित्वसामर्थ्यवैदुष्यादिभिः[1] अधिकारहेतुभिर्युक्ताः। तथा चोक्तम्—'अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः कर्मण्यधिकारी[2]' इति। एवंविधलक्षणोपेता यजमानास्तानि पदानि vअविदन् अलभन्त। लब्ध्वा च vतेभिः यज्ञलक्षणैः पदैः vअमृतम् अमरणधर्माणं त्वां vरक्षन्ते पालयन्ति यजन्तीत्यर्थः। vसजोषाः। तैर्यजमानैः समानप्रीतिस्त्वं vपशून् गवाश्वादिपशून् vच vस्थातॄन् व्रीह्यादिस्थावराणि vचरथं पशुव्यतिरिक्तमन्यद्यत्प्राणिजातमस्ति तत् vच vपाहि रक्ष। तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा। अतस्त्वमेवमुच्यसे इत्यर्थः॥ यत्। 'सुपां सुलुक्' इति विभक्तेर्लुक्। गुह्यानि। गुहायां भवानि। 'भवे छन्दसि' इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। त्वे। 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः। अविदन्। 'विद्लृ लाभे'। लुङि लृदित्वात् अङ्। पशून् स्थातॄन्। उभयत्र 'उभयथर्क्षु' (पा. सू. ८. ३. ८) इत्युभयथाभावात् नकारस्य रुत्वाभावः॥

विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः।
अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट्॥ ७॥

विद्वान्। अग्ने। वयुनानि। क्षितीनाम्। वि। आनुषक्। शुरुधः। जीवसे। धाः।
अन्तःऽविद्वान्। अध्वनः। देवऽयानान्। अतन्द्रः। दूतः। अभवः। हविःऽवाट्॥ ७॥

हे vअग्ने vवयुनानि। ज्ञाननामैतत् इह तु ज्ञातव्ये वर्तते। सर्वाणि ज्ञातव्यानि vविद्वान् जानंस्त्वं vक्षितीनां यजमानलक्षणानां प्रजानां vजीवसे जीवितुं vशुरुधः क्षुद्रूपस्य शोकस्य रोधयित्रीरिषोऽन्नानि vआनुषक् अनुषक्तं संततं यथा भवति तथा vवि vधाः विधेहि कुर्वित्यर्थः। एवं यजमानान् अन्नसमृद्धान् कृत्वानन्तरं vहविर्वाट् तैर्देवेभ्यः प्रत्तं हविर्वहन् vदूतः vअभवः देवानां दूतो भवसि। कीदृशस्त्वम् vअन्तर्विद्वान् द्यावापृथिव्योर्मध्ये जानन्। किं जानन्। vअध्वनः मार्गान्। कीदृशान्। vदेवयानान्। देवा यैर्मार्गैर्यान्ति गच्छन्ति ताञ्जानन्नित्यर्थः। vअतन्द्रः पुनःपुनर्हविर्वहनेऽप्यनलसः॥ वयुनानि। 'अज गतिक्षेपणयोः'। 'अजियमिशीङ्भ्यश्च' (उ. सू. ३. ३४१) इति कर्मणि उनन्प्रत्ययः[3]। 'अजेर्व्यघञपोः' (पा. सू. २. ४. ५६) इति वीभावः। क्षितीनाम्। क्षियन्ति निवसन्तीति क्षितयो मनुष्याः। 'क्तिच्क्तौ च संज्ञायाम्' इति कर्तरि क्तिच्। अन्तोदात्तात् ह्रस्वान्तात् क्षितिशब्दादुत्तरस्य नामः 'नामन्यतरस्याम्' इत्युदात्तत्वम्। शुरुधः। शुचं रुन्धन्तीति शुरुधः। 'क्विप् च' इति क्विप्। पूर्वपदस्यान्त्यलोपः पृषोदरादित्वात्॥

स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन्।
विदद्गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट्॥ ८॥

सुऽआध्यः। दिवः। आ। सप्त। यह्वीः। रायः। दुरः। वि। ऋतऽज्ञाः। अजानन्।
विदत्। गव्यम्। सरमा। दृळ्हम्। ऊर्वम्। येन। नु। कम्। मानुषी। भोजते। विट्॥८॥

---

१. ढ–अर्थित्वसामर्थ्यविद्वत्तादिभिः। २. ढ–कर्मस्वधिकारी। ३. न–उननूप्रत्ययः।

^v^स्वाध्यः शोभनकर्मयुक्ताः ^v^यह्वीः यह्व्यो महत्यः ^v^सप्त गङ्गाद्याः सप्त नद्यः ^v^दिवः द्युलोकादागत्य भूम्यां प्रवहन्तीति शेषः । हे अग्ने ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तस्मिन्नर्थे स्मृतिः पूर्वमुदाहृता । अतो वृष्टिद्वाराग्निरेव नदीः करोतीत्युच्यते । तथा ^v^ऋतज्ञाः ऋतं यज्ञं जानन्तोऽङ्गिरसः ^v^रायः वलनाम्नासुरेणापहृतस्य गोरूपस्य धनस्य ^v^दुरः द्वाराणि गमनमार्गान् ^v^अजानन् त्वया ज्ञातवन्तः । त्वत्साध्येन यागेन प्रीत इन्द्रो गवामन्वेषणाय सरमां नाम देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानमवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तानङ्गिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् । अङ्गिरोभ्यः सकाशात् ^v^गव्यं गवि भवं ^v^दृळ्हं स्थूलम् । बहुलमित्यर्थः[1] । एवंविधं पयोलक्षणम् ^v^ऊर्वं अन्नं ^v^सरमा देवशुनी ^v^विदत् अलभत । ^v^कम् इत्येतत्पादपूरणम् । ^v^येन ^v^नु येन हि गव्येन ^v^मानुषी ^v^विट् मनोः संबन्धिनी प्रजा ^v^भोजते इदानीं भुङ्क्ते तद्गव्यमपि परंपरयाग्निरेव करोति ॥ स्वाध्यः । सुआङ्पूर्वात् धीशब्दात् जसि ' एरनेकाचः° ' इति यणादेशः । यह्वीः । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । गव्यम् । सर्वत्र ' गोरजादिप्रत्ययप्रसंगे यद्वक्तव्यम्[2] ' इति भावार्थे यत् । ऊर्वम् । उर्वी हिंसार्थः । ऊर्वति क्षुधं हिनस्तीत्यूर्वमन्नम् । पचाद्यच् । भोजते । ' भुज पालनाभ्यवहारयोः ' । श्नमि प्राप्ते व्यत्ययेन शप् ॥

आ ये विश्वा॑ स्वप॒त्यानि॑ त॒स्थुः कृ॑ण्वा॒नासो॑ अमृत॒त्वाय॑ गा॒तुम् ।
म॒ह्ना म॒हद्भिः॑ पृथि॒वी वि त॑स्थे मा॒ता पु॒त्रैरदि॑ति॒र्धाय॑से वेः ॥ ९ ॥

आ । ये । विश्वा॑ । सु॒ऽअप॒त्यानि॑ । त॒स्थुः । कृ॒ण्वा॒नासः॑ । अ॒मृ॒त॒ऽत्वाय॑ । गा॒तुम् ।
म॒ह्ना । म॒हत्ऽभिः॑ । पृ॒थि॒वी । वि । त॒स्थे॒ । मा॒ता । पु॒त्रैः । अदि॑तिः । धाय॑से । वेरिति॑ वेः ॥९॥

^v^ये आदित्याः ^v^अमृतत्वाय अमरणत्वसिद्धये ^v^गातुं मार्गमुपायं ^v^कृण्वानासः कुर्वाणाः सन्तः ^v^विश्वा विश्वानि सर्वाणि ^v^स्वपत्यानि शोभनान्यपतनहेतुभूतानि[3] चतुर्दशरात्रषट्त्रिंशद्रात्रादित्यानामयनादीनि कर्माणि ^v^आ ^v^तस्थुः आस्थितवन्तः कृतवन्त इत्यर्थः । तथा च तैत्तिरीयकम्— ' आदित्या अकामयन्त सुवर्गं लोकमियामेति ' इति, ' त एतँ षट्त्रिंशद्रात्रमपश्यन् तमाहरन् तेनायजन्त ' ( तै. सं. ७. ४. ६. १ ) इति च । ^v^महद्भिः अनुष्ठानेन महानुभावैस्तैः ^v^पुत्रैः सहिता ^v^माता जनयित्री ^v^अदितिः अदीना ^v^पृथिवी ^v^धायसे सर्वस्य जगतो धारणाय ^v^मह्ना स्वकीयेन महत्त्वेन ^v^वि ^v^तस्थे विशेषेण तिष्ठति । हे अग्ने यतस्त्वं ^v^वेः आदित्यैरनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींष्यभक्षयः । अत एतत्सर्वं जातमित्यर्थः ॥ कृण्वानासः । ' कृवि हिंसाकरणयोश्च ' । व्यत्ययेनात्मनेपदम् । ' धिन्विकृण्व्योर च ' इति उप्रत्ययः; तत्संनियोगेन अकारान्तादेशश्च । तस्यातो लोपे सति स्थानिवद्भावाद्गुणाभावः । शानचश्चित्त्वादन्तोदात्तत्वम् । ' आज्जसेरसुक् ' । मह्ना । महिम्नेत्यस्य वर्णलोपश्छान्दसः । धायसे । ' वहिहाधाञ्भ्यश्छन्दसि ' इति दधातेर्भावे असुन् । ' णित् ' इत्यनुवृत्तेः ' आतो युक् चिण्कृतोः ' इति युक् । वेः । ' वी गतिप्रजनकान्त्यशनखादनेषु ' । लङि सिपि अदादित्वात् शपो लुक् । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । धायसे इत्यस्य वाक्यान्तरगतत्वादस्य निघाताभावः ॥

---

1. च-छ-ण-न-फ—बलप्रदमित्यर्थः । २. ढ-न-स—यद्वक्तव्यः । ३. च-छ-ध-न—शोभनापत्यहेतुभूतानि; श—शोभनान्यपत्यहेतुभूतानि ।

अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन् ।
अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥ १० ॥

अधि । श्रियम् । नि । दधुः । चारुम् । अस्मिन् । दिवः । यत् । अक्षी इति । अमृताः । अकृण्वन् ।
अध । क्षरन्ति । सिन्धवः । न । सृष्टाः । प्र । नीचीः । अग्ने । अरुषीः । अजानन् ॥ १० ॥

ᐯअस्मिन् अग्नौ ᐯचारुं शोभनां ᐯश्रियं परिस्तरणपरिषेचनादिरूपां यज्ञसंपदम् ᐯअधि ᐯनि ᐯदधुः यजमानाः स्थापितवन्तः । निधाय च ᐯयत् यदा ᐯअक्षी यज्ञस्याज्यभागलक्षणे चक्षुषी ᐯअकृण्वन् कुर्वन्ति । 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ' (तै. सं. २. ६. २. १) इति श्रुतेः । तदानीं ᐯदिवः द्युलोकात् ᐯअमृताः अमरणधर्माणो देवाः यागसमयो जात इत्यवगम्यागच्छन्तीति शेषः । ᐯअध आज्यभागानन्तरं ᐯसृष्टाः अग्नेरुत्पन्नाः ᐯसिन्धवो ᐯन शीघ्रं गच्छन्त्यो नद्य इव ᐯनीचीः नितरां सर्वासु दिक्षु गच्छन्तीः ᐯअरुषीः आरोचमानाः[1] । यद्वा । निर्मलरूपाः । हे ᐯअग्ने एवंभूतास्त्वदीया ज्वालाः ᐯक्षरन्ति संचलन्ति । सर्वासु दिक्षु गच्छन्तीत्यर्थः । आगता देवाश्च ᐯप्र ᐯअजानन् अस्माकं होमायेदृश्यो ज्वाला उत्पन्ना इति हृष्टाः सन्तः प्रकर्षेण जानन्ति ॥ अक्षी । परत्वात् नुमं बाधित्वा 'ई च द्विवचने' (पा. सू. ७. १. ७७) इति अक्षिशब्दस्य ईकारान्तादेशः । स चोदात्तः । ईत्वे कृते सकृद्गतपरिभाषया (परिभा. ४०) पुनर्नुम् न भवति । सवर्णदीर्घः । नीचीः । निपूर्वादञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन् । 'अनिदिताम्°' इति नलोपः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । 'न्यधी च' (पा. सू. ६. २. ५३) इति गतेः प्रकृतिस्वरत्वम् । अरुषीः । अरुषमिति रूपनाम । 'ऋहनिभ्यामुषच्' इति अर्तेः उषच् । 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः ॥　　॥ १८ ॥

'रयिर्न' इति दशर्चं नवमं सूक्तं पराशरस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तं च–'रयिर्न' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥ १ ॥

रयिः । न । यः । पितृऽवित्तः । वयःऽधाः । सुऽप्रनीतिः । चिकितुषः । न । शासुः ।
स्योनऽशीः । अतिथिः । न । प्रीणानः । होताऽइव । सद्म । विधतः । वि । तारीत् ॥ १ ॥

ᐯपितृवित्तः पितुः सकाशाल्लब्धः ᐯरयिः[2] धनमिव ᐯयः अग्निः ᐯवयोधाः अन्नस्य दाता । यथा पैतृकं धनं विश्रम्भेण व्यवह्रियमाणं सत् अन्नप्रदं भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विश्रम्भेण व्यवहृतः सन् अन्नप्रदो भवतीत्यर्थः । ᐯचिकितुषो ᐯन विदुषो धर्मशास्त्राभिज्ञस्य ᐯशासुः शासनमिव ᐯसुप्रणीतिः

---

१. द–रोचमानाः । २. त-द-ध-श-स–रयिर्न ।

सुखेन प्रणेतव्यः । यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्तत्संशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते । यश्च vस्योनशीः सुखप्रदे गार्हपत्यायतनादौ शयानः vअतिथिर्न सुखासने उपवेशितः अर्घपाद्यादिभिः सत्कृतोऽतिथिरिव vप्रीणानः हविर्भिस्तर्पणीयः सोऽग्निः vविधतः परिचरतो यजमानस्य vसद्म गृहं vवि vतारीत् प्रवर्धयति ददाति वा । तत्र दृष्टान्तः । vहोतेव । होता होमकर्ताध्वर्युस्तत्तत्कर्मकरणेन फलैर्यजमानस्य गृहं यथा वर्धयति तद्वत् ॥ पितृवित्तः । 'विद्लृ लाभे' । कर्मणि निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'विभाषा गमहनविदविशाम्' इति क्वसौ अस्य धातोः इटः विकल्पितत्वात् तत्रापि विशिसाहचर्यात्तौदादिक एव विदिर्गृह्यते इत्युक्तम् (का. ७.२. ६८) । 'वित्तो भोगप्रत्यययोः' ( पा. सू. ८. २. ५८ ) इति निष्ठानत्वाभावो निपातितः । वयोधाः । 'डुधाञ् धारणपोषणयोः' । 'आतो मनिन्°' इति विच् । सुप्रणीतिः । प्रणीयत इति प्रणीतिः । कर्मणि क्तिन् । 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम् । पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कृदुत्तरपदप्रकृतिस्वरत्वम् । चिकितुषः । लिटः क्वसुः । षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । शासुः । 'शासु अनुशिष्टौ' । 'भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः' ... 'भृस्वृस्निहि°' इत्यादिना विधीयमान उप्रत्ययो बहुलवचनादस्मादपि द्रष्टव्यः । तत्र 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । स्योनशीः । स्योनमिति सुखनाम । स्योने सुखकरे गार्हपत्यादिस्थाने शेते इति स्योनशीः । 'क्विप् च' इति क्विप् । प्रीणानः । 'प्रीञ् तर्पणे' । कर्मणि शानचि व्यत्ययेन श्ना । विधतः । 'विध विधाने' । 'विधतिः परिचरणकर्मा' इति नैरुक्ताः । तुदादित्वात् शप्रत्ययः । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् ॥

देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।
पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ॥ २ ॥

देवः । न । यः । सविता । सत्यऽमन्मा । क्रत्वा । निऽपाति । वृजनानि । विश्वा ।
पुरुऽप्रशस्तः । अमतिः । न । सत्यः । आत्माऽइव । शेवः । दिधिषाय्यः । भूत् ॥ २ ॥

vदेवो vन vसविता द्योतमानः सर्वस्य प्रेरकः सूर्य इव vयः अग्निः vसत्यमन्मा सत्यज्ञानो यथार्थदर्शी सोऽग्निः vक्रत्वा आत्मीयेन कर्मणा vविश्वा vवृजनानि । विभक्तिव्यत्ययः । सर्वेभ्यः संग्रामेभ्यः vनिपाति नितरां पालयति । वर्ज्यन्ते हिंस्यन्तेऽस्मिन्निति वृजनं संग्रामः । अपि च vपुरुप्रशस्तः पुरुभिर्यजमानैः स्तुतोऽग्निः vअमतिर्न । रूपनामैतत् । रूपमिव vसत्यः बाधरहितः । रूप्यत इति रूपं स्वरूपम् । यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमेकरूप्येण नित्यं भवति तद्वदग्निरप्युच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः vशेवः सुखकरः । तत्र दृष्टान्तः । vआत्मेव । परमप्रेमास्पदतया निरतिशयानन्दस्वरूपः आत्मा यथा सर्वान् सुखयति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' ( बृ. उ. ४. ३. ३२ ) 'एष ह्येवानन्दयाति' (तै.आ. ८.७) इति च श्रवणात् । तद्वदग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवंभूतोऽग्निः vदिधिषाय्यो vभूत् सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति । तथा च तैत्तिरीयकं–'वीरहा वा एष देवानां योऽग्निमुद्वासयते' ( तै. सं. १.५. २. १ ) इति ॥ सत्यमन्मा । मननं मन्म । 'मन ज्ञाने' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । सत्यमवितथं मन्म यस्य । बहुव्रीहिस्वरः । वृजनानि । 'वृजी वर्जने' । 'कॄपॄवृजि°' इत्यादिना क्युप्रत्ययः । पुरुप्रशस्तः । 'तृतीया कर्मणि' इति

पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'प्रवृद्धादीनां च' (पा. सू. ६. २. १४७) इत्युत्तरपदान्तोदात्तत्वम्। स ह्याकृतिगण इत्युक्तम्। अमतिः। 'अम गत्यादिषु'। 'अमेरतिः'। दिधिषाय्यः। दधातेः 'दिधिषाय्यः' (उ. सू. ३. ३७७) इति साय्यप्रत्ययान्तो निपात्यते॥

देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा।
पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी॥ ३॥

देवः। न। यः। पृथिवीम्। विश्वऽधायाः। उपऽक्षेति। हितऽमित्रः। न। राजा।
पुरःऽसदः। शर्मऽसदः। न। वीराः। अनवद्या। पतिजुष्टाऽइव। नारी॥ ३॥

देवो न द्योतमानः सूर्य इव यः अग्निः विश्वधायाः सर्वस्य जगतो धर्ता। यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगत् धत्ते एवमग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता। सोऽग्निः पृथिवीं पृथिव्याम् उपक्षेति सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति। तत्र दृष्टान्तः। हितमित्रो न राजा। हितान्यनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत्। यथा सर्वजनमित्रो राजा एवमग्निरपि सर्वजनमित्र इत्यर्थः। न ह्यग्निं कश्चन द्विष्टे। यस्याग्नेः पुरःसदः पुरस्तात् सीदन्त उपविशन्तः पुरुषाः शर्मसदो न वीराः पितृगृहे वर्तमानाः पुत्राः इव वर्तन्ते। पिता पुत्रानिव अग्निः स्वस्य परिचारकान् रक्षतीति भावः। सोऽयमग्निरतिशयेन शुद्धः कर्मयोग्यो भवति। तत्र दृष्टान्तः। अनवद्या अनिन्दिता पतिजुष्टेव नारी स्वपतिना सेविता स्वीकृता योषिदिव। सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवति एवमग्निरपि॥ विश्वधायाः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् कारकपूर्वादपि दधातेः 'वहिहाधाञ्भ्यश्छन्दसि' इति असुन्। 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युक्। मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। उपक्षेति। 'क्षि निवासगत्योः'। 'बहुलं छन्दसि' इति विकरणस्य लुक्। अनवद्या। बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। पतिजुष्टेव। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। नारी। 'नृनरयोर्वृद्धिश्च' (पा. सू. ४. १. ७३ ग.) इति शार्ङ्गरवादिषु पाठात् ङीनन्त आद्युदात्तः॥

तं त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु।
अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणाम्॥ ४॥

तम्। त्वा। नरः। दमे। आ। नित्यम्। इद्धम्। अग्ने। सचन्त। क्षितिषु। ध्रुवासु।
अधि। द्युम्नम्। नि। दधुः। भूरि। अस्मिन्। भव। विश्वऽआयुः। धरुणः। रयीणाम्॥ ४॥

हे अग्ने तं त्वा पूर्वोक्तगुणविशिष्टं त्वां नरः यज्ञस्य नेतारो यजमानाः ध्रुवासु क्षितिषु निश्चलासु चलनरहितासु भूमिषु। निरुपद्रवेषु ग्रामेष्वित्यर्थः। दमे स्वकीये यज्ञगृहे नित्यम् इद्धम् अनवरतं समिद्भिः प्रज्वलितं कृत्वा आ सचन्त आभिमुख्येन सेवन्ते। किंच अस्मिन् अग्नौ द्युम्नं हविर्लक्षणमन्नं भूरि चरुपुरोडाशादिरूपेण बहुविधम् अधि नि दधुः स्थापितवन्तः। एवंगुणविशिष्टो

योऽग्निः स त्वं विश्वायुः उक्तप्रकारेण सर्वान्नो भूत्वा रयीणां धनानां धरुणः धारयिता भव । अस्मभ्यं दातुं धनानि धारयेत्यर्थः ॥ सचन्त । 'षच समवाये' । छान्दसो वर्तमाने लङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । भव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । धरुणः । 'धारेर्णिलुक् च' इति उनप्रत्ययः ॥

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ ५ ॥

वि । पृक्षः । अग्ने । मघऽवानः । अश्युः । वि । सूरयः । ददतः । विश्वम् । आयुः ।
सनेम । वाजम् । सम्ऽइथेषु । अर्यः । भागम् । देवेषु । श्रवसे । दधानाः ॥ ५ ॥

हे अग्ने मघवानः हविर्लक्षणेन धनेन युक्ता यजमानाः पृक्षः अन्नानि वि अश्युः व्याप्नुवन्तु । त्वयानुगृहीताः सर्वाण्यन्नानि लभन्ताम् । ये च सूरयः विद्वांसः त्वां स्तुवन्ति । ददतः[1] ये च तुभ्यं हवींषि ददतः प्रयच्छन्तो वर्तन्ते ते सर्वे विश्वमायुः सर्वं जीवितं वि अश्युः व्याप्नुवन्तु । वयं च समिथेषु संग्रामेषु अर्यः अरेः शत्रोः संबन्धिनं वाजं अन्नं सनेम त्वदनुग्रहात् संभजेमहि । तदनन्तरं देवेषु त्वत्प्रमुखेष्विन्द्रादिषु श्रवसे यशसे[2] तदर्थं भागं हविर्भागं दधानाः स्थापयन्तो भूयास्मेति शेषः ॥ अश्युः । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । ददतः । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सनेम । 'वन षण संभक्तौ' । व्यत्ययेन शः । अर्यः । अरिशब्दात् षष्ठ्येकवचने 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । अरिशब्दः 'अच इः' इति इप्रत्ययान्तः अन्तोदात्तः । 'उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । भागम् । 'कर्षात्वतः०' इत्यन्तोदात्तत्वम् ॥ ॥१९॥

ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ॥ ६ ॥

ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः ।
पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ॥ ६ ॥

ऋतस्य हि ऋतं देवयजनदेशं प्राप्तमग्निमेव धेनवः अग्निहोत्रादिहविषां दोग्ध्र्यो गावः पीपयन्त क्षीरादिलक्षणं गव्यमपाययन् । कीदृश्यो गावः । वावशानाः अग्निं पुनःपुनः कामयमानाः स्मदूध्नीः । स्मच्छब्दो नित्यशब्दसमानार्थः । नित्यमूधसा युक्ताः । सर्वदा पयसः प्रदात्र्य इत्यर्थः । द्युभक्ताः दिवा प्रकाशेन संभक्ताः संश्लिष्टाः तेजस्विन्य इत्यर्थः । अपि च सिन्धवः स्यन्दनशीला नद्यः सुमतिम् अस्याग्नेः शोभनामनुग्रहात्मिकां बुद्धिं भिक्षमाणाः याचमानाः

---

1. ढ-'ददतः' नास्ति । २. च-छ-ण-न-फ-श्रवः अन्नम् ।

सत्यः ᵛअद्रिं ᵛसमया अद्रेः पर्वतस्य समीपे ᵛपरावतः दूरदेशात् ᵛवि ᵛसस्रुः विशेषेण गच्छन्ति प्रवहन्ति। अग्नये दातव्यानां हविषां निष्पत्तये प्रवहन्तीत्यर्थः ॥ ऋतस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। वावशानाः । 'वश कान्तौ'। यङन्तात् शानच्। 'न वशः' (पा. सू. ६. १. २०) इति संप्रसारणप्रतिषेधः। 'बहुलं छन्दसि' इति शपो लुक्। 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वात् अतोलोपयलोपौ। अत एव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एव शिष्यते। स्मदूध्नीः। स्मत् निस्यान्यूधांसि यासाम्। 'ऊधसोऽनङ्' (पा. सू. ५. ४. १३१) इति अनङादेशः समासान्तः। 'संख्याव्ययादेर्ङीप्' (पा. सू. ४. १. २६) इति ङीप्। भसंज्ञायाम् 'अल्लोपोऽनः' इति अल्लोपः। ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिस्वर एव शिष्यते। पीपयन्त। 'पा पाने'। अस्मात् हेतुमति णिच्। 'शाच्छासाह्वा°' इति युक्। ण्यन्तात् लुङि च्लेः चङादेशादि। 'चङ्यन्यतरस्याम्' इति चङः पूर्वस्योदात्तत्वम्। 'हि च' इति निघातप्रतिषेधः। परावतः परागतात्। दूरं हि परागतं भवति। अस्मिन् धात्वर्थे गम्यमाने 'उपसर्गाच्छन्दसि धात्वर्थे' (पा. सू. ५. १. ११८) इति वतिः॥

त्वे अ॑ग्ने सुम॒तिं भिक्ष॑माणा दि॒वि श्रवो॑ दधिरे य॒ज्ञियासः।
नक्ता॑ च च॒क्रुरु॒षसा॒ विरू॑पे कृ॒ष्णं च॒ वर्ण॑मरु॒णं च॒ सं धुः॥ ७॥

त्वे इति॑। अ॒ग्ने॒। सु॒ऽम॒तिम्। भिक्ष॑माणाः। दि॒वि। श्रव॑ः। द॒धि॒रे॒। य॒ज्ञियासः।
नक्ता॑। च॒। च॒क्रुः। उ॒षसा॑। विरू॑पे॒ इति॒ विऽरू॑पे। कृ॒ष्णम्। च॒। वर्ण॑म्।
अ॒रु॒णम्। च॒। सम्। धु॒रिति॑ धुः॥ ७॥

हे ᵛअग्ने ᵛसुमतिं शोभनामनुग्रहात्मिकां बुद्धिं ᵛभिक्षमाणाः याचमानाः ᵛयज्ञियासः यज्ञार्हाः सर्वे देवाः ᵛदिवि द्योतमाने ᵛत्वे त्वयि ᵛश्रवः हविर्लक्षणमन्नं ᵛदधिरे अस्थापयन्। 'अग्निर्देवानामन्नादः' (तै. ब्रा. ३.१.४.१.) इति श्रुतेः। तदनन्तरं तादृशे हविर्युक्तायानुष्ठानाय[1] ᵛविरूपे विविधरूपे ᵛउषसा उषःकालोपलक्षितमहः। ᵛनक्ता ᵛच नक्तं रात्रिं च ᵛचक्रुः अकुर्वन्। एतदेव स्पष्टयति। ᵛकृष्णं ᵛच ᵛवर्णं रात्र्यां श्यामलवर्णमन्धकारम् अह्नि ᵛअरुणम् आरोचनं श्वेतवर्णं तेजः ᵛच ᵛसं ᵛधुः सम्यक् स्थापितवन्तः॥ त्वे। 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः। नक्ता। तेनैव द्वितीयाया डादेशः। उषसा। तेनैव विभक्तेः आकारः। धुः। 'डुधाञ् धारणपोषणयोः'। लुङि 'गातिस्था°' इति सिचो लुक्। 'आतः' इति झेः जुसादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः॥

यात्रा॒ये मर्ता॒न्त्सुषू॑दो अग्ने॒ ते स्या॑म म॒घवा॑नो व॒यं च॑।
छा॒येव॒ विश्वं॒ भुव॑नं सिसक्ष्यापप्रि॒वान्रोद॑सी अ॒न्तरि॑क्षम्॥ ८॥

यान्। रा॒ये। मर्ता॑न्। सु॒सू॑दः। अ॒ग्ने॒। ते। स्या॒म॒। म॒घऽवा॑नः। व॒यम्। च॒।
छा॒याऽइ॑व। विश्व॑म्। भुव॑नम्। सि॒स॒क्षि॒। आ॒प॒प्रि॒ऽवान्। रोद॑सी॒ इति॑। अ॒न्तरि॑क्षम्॥८॥

१. ढ–हविर्युक्तयागानुष्ठानाय।

यान् मर्तान् मनुष्यानस्मान् राये धनाय सुषूदः अग्निहोत्रादिकर्मसु प्रेरयसि ते तादृशाः वयं च मघवानः धनिनः स्याम भवेम। रोदसी द्यावापृथिव्यौ अन्तरिक्षं च आपप्रिवान् स्वतेजसा वृष्ट्युदकेन वा आपूरितवांस्त्वं च विश्वं भुवनं सर्वं जगत् सिसक्षि सेवसे अनुगृह्य सर्वं रक्षसीत्यर्थः। तत्र दृष्टान्तः । छायेव । यथा छत्रादेः छाया आतपादिजनितं क्लेशं निवार्य रक्षति तद्वत्॥ राये। 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम्। सुषूदः। 'षूद प्रेरणे'। लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः। सिसक्षि। 'षच समवाये'। 'बहुलं छन्दसि' इति शपः श्लुः। 'इत्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। आपप्रिवान्। 'प्रा पूरणे'। लिटः क्वसुः। 'वस्वेकाजाद्घसाम्' इति इडागमः। 'आतो लोप इटि च' इति आकारलोपः। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्भावादि॥

अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः॥ ९॥

अर्वत्ऽभिः। अग्ने। अर्वतः। नृऽभिः। नॄन्। वीरैः। वीरान्। वनुयाम। त्वाऽऊताः।
ईशानासः। पितृऽवित्तस्य। रायः। वि। सूरयः। शतऽहिमाः। नः। अश्युः॥ ९॥

हे अग्ने त्वोताः त्वया रक्षिताः सन्तो वयम् अर्वद्भिः अस्मदीयैरश्वैः अर्वतः शत्रुसंबन्धिनः अश्वान् नृभिः अस्मदीयैर्भटैः नॄन् शत्रोर्भटान्। वीर्याज्जायन्ते इति वीराः पुत्राः। तैः वीरान् शत्रुपुत्रांश्च वनुयाम हन्याम। 'वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति' (निरु. ५. २) इति यास्कः। पितृवित्तस्य पित्रादिपरंपरया लब्धस्य रायः धनस्य ईशानासः स्वामिनः सूरयः विद्वांसः नः अस्माकं पुत्राः शतहिमाः शतं संवत्सरान् जीवन्तः सन्तः वि अश्युः विशेषेण भुञ्जताम्। अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः॥ त्वोताः त्वयोताः। 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः। व्यत्ययेन आत्वम्। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। शतहिमाः। अत्र हिमशब्देन तद्वान् हेमन्तो लक्ष्यते। ब्राह्मणं च भवति–'शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' (तै. सं. १. ५. ८. ५) इति। शतं हिमाः शतं हेमन्तर्तवो येषां ते शतसंवत्सरजीविन इत्यर्थः। अश्युः। 'अश भोजने'। 'बहुलं छन्दसि' इति विकरणस्य लुक्॥

एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः॥ १०॥

एता। ते। अग्ने। उचथानि। वेधः। जुष्टानि। सन्तु। मनसे। हृदे। च।
शकेम। रायः। सुऽधुरः। यमम्। ते। अधि। श्रवः। देवऽभक्तम्। दधानाः॥ १०॥

हे वेधः। मेधाविनामैतत्। मेधाविन् अग्ने एता उचथानि एतानि इदानीमस्माभिः प्रयुक्तानि स्तोत्राणि ते तव मनसे मनोवृत्तये हृदे तद्वृत्तिमते अन्तःकरणाय च जुष्टानि सन्तु

प्रियाणि भवन्तु । ᵛते तव संबन्धिनः ᵛसुधुरः सुष्ठु निर्वाहकस्य । यद्वा । शोभनं धूर्वति दारिद्र्यं हिनस्तीति सुधूः । तादृशस्य ᵛरायः धनस्य ᵛयमं नियमनं कर्तुं ᵛशकेम शक्ता भूयास्म । किं कुर्वन्तः । ᵛदेवभक्तं देवैः संभजनीयं ᵛश्रवः हविर्लक्षणमन्नम् ᵛअधि ᵛदधानाः अग्नेरुपरि धारयन्तः । अग्नौ हविर्भिर्होमं कुर्वन्तः इत्यर्थः ॥ उचथानि । 'वच परिभाषणे' । 'रुविदिभ्यां कित्' (उ. सू. ३. ३९५) इति विधीयमानः अथप्रत्ययः कित्त्वं च बहुलवचनादस्मादपि भवति । वच्यादिना संप्रसारणम् । जुष्टानि । 'जुष्टार्पिते च छन्दसि, नित्यं मन्त्रे' (पा. सू. ६. १. २०९ - २१०) इत्याद्युदात्तत्वम् । हृदे । 'पद्दन्०' इत्यादिना हृदयशब्दस्य हृदादेशः । शकेम । 'शक्लृ शक्तौ' । 'लिङ्याशिष्यङ्' । सुधुरः । धुर्वी हिंसार्थः । 'क्विप् च' इति क्विप् । 'राल्लोपः' इति वकारलोपः । 'न पूजनात्' इति समासान्तप्रतिषेधः । देवैर्भक्तं देवभक्तम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥　　॥ २० ॥　　॥ १२ ॥

त्रयोदशानुवाके एकादश सूक्तानि । तत्र 'उपप्रयन्तः' इति नवर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते– 'उपप्रयन्तो नव गोतमो राहूगणो गायत्रं तु' इति । अस्यायमर्थः । रहूगणनामा कश्चिदृषिः । तस्य पुत्रो गोतमोऽस्य सूक्तस्य ऋषिः । 'गायत्रं तु' इत्युक्तत्वादिदमुत्तरं च गायत्रीच्छन्दस्कम् । 'परमाग्नेयमैन्द्रात्' इति परिभाषितत्वादग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दस्येतदादिके द्वे सूक्ते । सूत्रितं च– 'आपो रेवतीः क्षयथा हि वस्व उपप्रयन्त इति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति । आश्विनशस्त्रेऽप्येते सूक्ते 'प्रातरनुवाकन्यायेन' ( आश्व. श्रौ. ६. ५ ) इत्यतिदेशात् । पृष्ठ्यषडहस्य प्रथमेऽहनि एतदेव सूक्तमाज्यशस्त्रम् । सूत्रितं च– 'उपप्रयन्त इति तु प्रथमेऽहन्याज्यम्' ( आश्व. श्रौ. ७. १० ) इति ॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १ ॥

उपऽप्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति । च । शृण्वते ॥१॥

ᵛअध्वरं हिंसाप्रत्यवायरहितमग्निष्टोमादियज्ञम् ᵛउपप्रयन्तः उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्रात्यविच्छेदेन सम्यगनुतिष्ठन्तः इत्यर्थः । तादृशा वयम् ᵛअग्नये अङ्गनादिगुणयुक्ताय देवाय ᵛमन्त्रं मननसाधनमेतत्सूक्तरूपं स्तोत्रं ᵛवोचेम । वक्तारो भूयास्मेत्याशास्यते । कीदृशायाग्नये । ᵛआरे ᵛअस्मे ᵛच ᵛशृण्वते । चशब्दः अप्यर्थे आरेशब्दात्परो द्रष्टव्यः । आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृण्वते । अस्मासु प्रीत्यतिशयेन सर्वत्र प्रवर्तमानोऽग्निरस्मदीयमेव स्तोत्रं शृणोतीति भावः ॥ वोचेम । 'ब्रुवो वचिः' । 'लिङ्याशिष्यङ्' । 'वच उम्' इति उमागमः । शृण्वते । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् ॥

यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥ २ ॥

यः । स्नीहितीषु । पूर्व्यः । सम्ऽजग्मानासु । कृष्टिषु । अरक्षत् । दाशुषे । गयम् ॥ २ ॥

ᵛपूर्व्यः चिरंतनः ᵛयः अग्निः ᵛस्नीहितीषु वधकारिणीषु ᵛकृष्टिषु शत्रुभूतासु प्रजासु ᵛसंजग्मानासु संगतासु सतीषु ᵛदाशुषे हवींषि दत्तवते यजमानाय ᵛगयं धनम् ᵛअरक्षत् रक्षति तस्मै मन्त्रं वोचेमेति पूर्वेण संबन्धः ॥ स्नीहितीषु । 'ष्णिह स्नेहने' । चुरादिः । 'स्नेहयति' (नि. २. १९. १३)

इति वधकर्मसु पठितः । स्नेह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नेहितयः । करणे क्तिन् । 'तितुत्रेष्व-ग्रहादीनामिति वक्तव्यम्' (पा. म. ७. २. ९. १) इति वचनात् निगृहीतिर्निपठितिरितिवत् इडागमः । व्यत्ययेन एकारस्य ईकारादेशः क्तिनो दीर्घश्च । नित्त्वादाद्युदात्तत्वम् । संजग्मानासु । 'समो गम्यृच्छि°' इति आत्मनेपदम् । लिटः कानच् । 'गमहन°' इत्यादिना उपधालोपः । अरक्षत् । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् ॥

अग्निमन्थने 'जातायानुब्रूहि' इत्युक्ते 'उत ब्रुवन्तु' इत्येषानुवचनीया । 'प्रातर्वैश्वदेव्याम्' इति खण्डे सूत्रितं–'शिष्टेनोत्तरामुत ब्रुवन्तु जन्तवः' (आश्व. श्रौ. २. १६) इति । तथा साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशम् इत्यस्यामिष्टौ एषैव प्रथमाज्यभागानुवाक्या । सूत्रितं च–'मरुद्भ्यः क्रीडिभ्य उत्तरोत ब्रुवन्तु जन्तवः' (आश्व. श्रौ. २. १८) इति ॥

उ॒त ब्रु॑वन्तु ज॒न्तव॒ उद॒ग्निर्वृ॑त्र॒हाज॑नि । ध॒नं॒ज॒यो रणे॑रणे ॥ ३ ॥

उ॒त । ब्रु॒व॒न्तु॒ । ज॒न्तवः॑ । उत् । अ॒ग्निः । वृ॒त्र॒ऽहा । अ॒ज॒नि॒ । ध॒न॒म्ऽज॒यः । रणे॑ऽरणे ॥ ३ ॥

vअग्निः vउत् vअजनि अरण्योः सकाशादुत्पन्नः । vउत अनन्तरं vजन्तवः जाताः सर्वे ऋत्विजः vब्रुवन्तु तमग्निं स्तुवन्तु । कीदृशोऽग्निः । vवृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता vरणेरणे सर्वेषु संग्रामेषु vधनंजयः शत्रुधनानां जेता ॥ धनंजयः । 'संज्ञायां भृतॄवृजि°' (पा. सू. ३. २. ४६) इति खच् । 'अरुर्द्विषदजन्तस्य°' (पा. सू. ६. ३. ६७) इति मुम् । चित्स्वरेणान्तोदात्तत्वम् । रणेरणे । 'रण शब्दार्थः' । रणन्ति दुन्दुभयोऽस्मिन्निति रणः संग्रामः । 'वशिरण्योरुपसंख्यानम्' (पा. सू. ३. ३. ५८. ३) इति अप् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । आम्रेडितानुदात्तत्वम् ॥

यस्य॑ दू॒तो अ॑सि॒ क्षये॒ वेषि॑ ह॒व्यानि॑ वी॒तये॑ । द॒स्मत्कृ॑णो॒ष्य॑ध्व॒रम् ॥ ४ ॥

यस्य॑ । दू॒तः । असि॑ । क्षये॑ । वेषि॑ । ह॒व्यानि॑ । वी॒तये॑ । द॒स्मत् । कृ॒णोषि॑ । अ॒ध्व॒रम् ॥ ४ ॥

हे अग्ने vयस्य यजमानस्य vक्षये देवयजनलक्षणे गृहे देवानां vदूतः त्वम् vअसि भवसि । यस्य च vहव्यानि चरुपुरोडाशादीनि हवींषि vवीतये देवानां भक्षणाय vवेषि गमयसि । यस्य च vअध्वरं यज्ञं vदस्मत् सर्वैर्दर्शनीयं vकृणोषि करोषि । 'तमित्सुहव्यम्' इत्युत्तरया संबन्धः ॥ वेषि । वी गत्यादिषु । अन्तर्भावितण्यर्थात् लट् । अदादित्वात् शपो लुक् । पादादित्वात् निघाताभावः । दस्मत् । 'दसि दंसनदर्शनयोः' । 'इषियुधीन्धि°' इत्यादिना मक् । दस्ममित्यत्र मकारस्य वर्णव्यापत्त्या तकारः । कृणोषि । 'कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः; तत्संनियोगेन वकारस्य अकारः । तस्य अतो लोपे सति स्थानिवद्भावात् लघूपधगुणाभावः । यस्य इत्यनुषङ्गात् निघाताभावः ॥

तमित्सु॑ह॒व्यम॑ङ्गिरः सु॒दे॒वं स॑हसो यहो । जना॑ आहुः सुब॒र्हिष॑म् ॥ ५ ॥

तम् । इत् । सु॒ऽह॒व्यम् । अ॒ङ्गि॒रः॒ । सु॒ऽदे॒वम् । स॒ह॒सः॒ । य॒हो॒ इति॑ । जनाः॑ । आ॒हुः॒ । सु॒ऽब॒र्हिष॑म् ॥ ५ ॥

हे ᵛसहसो ᵛयहो बलस्य पुत्र ᵛअङ्गिरः अङ्गनादिगुणयुक्ताग्ने यो यजमानः पूर्वमुक्तः ᵛतमित् तमेव यजमानं ᵛसुहव्यं शोभनहविष्कं ᵛसुदेवं शोभनदैवतं ᵛसुबर्हिषम् । बर्हिरिति यज्ञनाम । शोभनयज्ञं च ᵛजनाः सर्वे मनुष्याः ᵛआहुः कथयन्ति ॥ सुहव्यमित्यादिषु ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । सहसो यहो । ' सुबामन्त्रिते° ' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकमामन्त्रितानुदात्तत्वम् ॥　　॥ २१ ॥

आ च॒ वहा॑सि॒ ताँ इ॒ह दे॒वाँ उप॒ प्रश॑स्तये । ह॒व्या सु॑श्चन्द्र वी॒तये॑ ॥ ६ ॥

आ । च॒ । वहा॑सि । तान् । इ॒ह । दे॒वान् । उप॑ । प्रऽश॑स्तये । ह॒व्या । सु॒ऽच॒न्द्र॒ । वी॒तये॑ ॥६॥

हे ᵛसुश्चन्द्र शोभनाह्लादनाग्ने ᵛतान् ᵛदेवान् ᵛइह अस्मिन् कर्मणि ᵛउप अस्मत्समीपं ᵛप्रशस्तये स्तुतये ᵛआ ᵛवहासि ᵛच आवह प्रापय च । आगतेभ्यस्तेभ्यः ᵛहव्या हव्यानि चरुपुरोडाशादीनि हवींषि ᵛवीतये भक्षणाय प्रापयेत्यर्थः ॥ वहासि । 'वह प्रापणे' । लेटि आडागमः । प्रशस्तये । 'शंसु स्तुतौ ' । भावे क्तिन् । ' तितुत्र° ' इति इट्प्रतिषेधः । ' अनिदिताम्° ' इति नलोपः । ' तादौ च° ' इति गतेः प्रकृतिस्वरत्वम् । सुश्चन्द्र । ' ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ' इति सुट् ॥

न योरु॑प॒ब्दिरश्व्यः॑ शृ॒ण्वे रथ॑स्य॒ कच्च॒न । यद॑ग्ने॒ यासि॑ दू॒त्य॑म् ॥ ७ ॥

न । योः । उ॒प॒ब्दिः । अश्व्यः॑ । शृ॒ण्वे । रथ॑स्य । कत् । च॒न । यत् । अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् ॥७॥

हे ᵛअग्ने ᵛयत् यदा ᵛदूत्यं देवानां दूतत्वं ᵛयासि प्राप्नोषि ᵛकच्चन कदाचन तदानीं सर्वदापि ᵛयोः गच्छतस्तव ᵛरथस्य ᵛअश्व्यः अश्वैरुत्पादितः ᵛउपब्दिः श्रवणार्हः शब्दः ᵛन ᵛशृण्वे न श्रूयते । रथस्य शीघ्रगमनेनास्माभिः शब्दो नोपलभ्यते इत्यर्थः ॥ योः । ' या प्रापणे ' इत्यस्मात् ' यो द्वे च ' ( उ. सू. १. २१ ) इति औणादिकः कुप्रत्ययः । बहुलवचनात् द्विर्भावाभावः । उपब्दिरित्येतत् श्रोतुमर्हस्य शब्दस्याख्या । तथा च तैत्तिरीयाणां प्रातिशाख्यं ' सशब्दमुपब्दिमत् ' ( तै. प्रा. २३. ९ ) इति । शृण्वे । ' श्रु श्रवणे ' । कर्मणि लटि ' श्रुवः शृ च ' इति व्यत्ययेन श्नुः शृभावश्च । ' लोपस्त आत्मनेपदेषु ' इति तलोपः । ' हुश्नुवोः सार्वधातुके ' इति यणादेशः ॥

त्वोतो॑ वा॒ज्यह्र॑यो॒ऽभि पूर्व॑स्मा॒दप॑रः । प्र दा॒श्वाँ अ॑ग्ने अस्थात् ॥ ८ ॥

त्वाऽऊ॑तः । वा॒जी । अह्र॑यः । अ॒भि । पूर्व॑स्मात् । अप॑रः । प्र । दा॒श्वान् । अ॒ग्ने॒ । अ॒स्था॒त् ॥८॥

यः पुरुषः ᵛपूर्वस्मात् स्वस्मादधिकारात् ᵛअपरः निकृष्टो भवति हे ᵛअग्ने स इदानीं ᵛदाश्वान् तुभ्यं हवींषि दाता सन् ᵛत्वोतः त्वया ऊतः रक्षितः ᵛवाजी अन्नवान् ᵛअह्रयः लज्जारहितः एवंभूतः सन् ᵛअभि ᵛप्र ᵛअस्थात् ऐश्वर्यमभिप्राप्य प्रतितिष्ठति सर्वोत्कृष्टो भवतीत्यर्थः ॥ अह्रयः । ' ह्री लज्जायाम् ' । जिह्रेतीति ह्रयः । न ह्रयोऽह्रयः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दाश्वान् । ' दाशृ दाने ' । ' दाश्वान् साह्वान्° ' इति क्वसुप्रत्ययान्तो निपातितः ॥

उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ॥ ९ ॥

उत । द्युऽमत् । सुऽवीर्यम् । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ॥ ९ ॥

vउत अपि च हे vदेव द्योतमान vअग्ने vदेवेभ्यः vदाशुषे चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय vबृहत् प्रौढं धनं vविवाससि गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । vद्युमत् अतिशयेन दीप्तं vसुवीर्यं शोभनवीर्योपेतम् ॥ सुवीर्यम् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । विवाससि । 'वा गतिगन्धनयोः' । सनि द्विर्भावे 'सन्यतः' इति इत्वम् । दाशुषे । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥ ॥२२॥

'जुषस्व' इति पञ्चर्चं द्वितीयं सूक्तम् । अनुक्रान्तं च– 'जुषस्व पञ्च' इति । ऋष्याद्याः पूर्ववत् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः । पशौ स्तोकानुवचने आद्या विनियुक्ता । सूत्रितं च– 'प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तमम्' (आश्व. श्रौ. ३. ४) इति ॥

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥ १ ॥

जुषस्व । सप्रथःऽतमम् । वचः । देवप्सरःऽतमम् । हव्या । जुह्वानः । आसनि ॥ १ ॥

हे अग्ने vसप्रथस्तमम् अतिशयेन विस्तीर्णं vवचः स्तोत्रलक्षणमस्मदीयं वचनं vजुषस्व सेवस्व । कीदृशम् । vदेवप्सरस्तमं देवानां प्रीणयितृतमम् । किं कुर्वन् । vआसनि तवास्ये vहव्या हव्यानि स्तोकलक्षणानि हवींषि vजुह्वानः प्रक्षिपन् । इमानि स्तोकलक्षणानि हवींषि वृथा मा भूवन् तत्सर्वं त्वदीयेन मुखेन स्वीकुर्वित्यर्थः ॥ देवप्सरस्तमम् । 'स्पृ प्रीतिबलयोः' । देवान् स्पृणोति प्रीणयतीति देवप्सराः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । सकारपकारयोः स्थानविपर्ययः । अतिशयेन देवप्सरा देवप्सरस्तमः । जुह्वानः । जुहोतेर्व्यत्ययेन शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । आसनि । 'पद्दन्०' इत्यादिना आस्यशब्दस्य आसन्नादेशः ॥

अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसि ॥ २ ॥

अथ । ते । अङ्गिरःऽतम । अग्ने । वेधःऽतम । प्रियम् । वोचेम । ब्रह्म । सानसि ॥ २ ॥

हे vअङ्गिरस्तम अतिशयेनाङ्गनादिगुणयुक्त । यद्वा । अङ्गिरसां वरिष्ठ । vवेधस्तम । वेधा इति मेधाविनाम । अतिशयेन मेधाविन् vअग्ने । vअथ अनन्तरं vते तुभ्यं vसानसि संभजनीयं vप्रियं प्रीतिकरं vब्रह्म स्तोत्रं vवोचेम वक्तारो भूयास्म ॥ वोचेम । 'लिङ्याशिष्यङ्' । 'वच उम्' इति उमागमः । सानसि । 'वन षण संभक्तौ' । 'सानसिवर्णसि०' इत्यादौ असिच्प्रत्ययान्तो निपात्यते ॥

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥ ३ ॥

कः । ते । जामिः । जनानाम् । अग्ने । कः । दाशुऽअध्वरः ।

कः । ह । कस्मिन् । असि । श्रितः ॥ ३ ॥

हे ᵛअग्ने ᵛजनानां मनुष्याणां मध्ये ᵛते तव ᵛकः ᵛजामिः को बन्धुः । त्वं सर्वैर्गुणैरधिकोऽसि। तवानुरूपो बन्धुर्नास्तीति भावः । ᵛको ᵛदाश्वध्वरः । दाशुर्दत्तोऽध्वरो यज्ञो येन स तथोक्तः । त्वां यष्टुमपि समर्थः कोऽपि नास्तीत्यर्थः । ᵛको ᵛह त्वं कथंभूतस्त्वम् । ईदृग्रूपः इति सर्वैर्न ज्ञायसे इत्यर्थः । ᵛकस्मिन् स्थाने ᵛश्रितः आश्रितः ᵛअसि वर्तसे । तत्स्थानमपि न केनचित् ज्ञायते । अतस्त्वमस्माभिः मांसदृष्टिभिः कथमुपलब्धव्यः इत्यग्निः प्रशस्यते ॥ दाश्वध्वरः । ' दाश्व दाने ' । ' उणादयो बहुलम् ' (पा. सू. ३. ३. १ ) इति बहुलवचनात् कर्मणि उण्प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे ' उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ' इति स्वरितत्वम् ॥

## त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥ ४ ॥

त्वम् । जामिः । जनानाम् । अग्ने । मित्रः । असि । प्रियः । सखा । सखिऽभ्यः । ईड्यः ॥४॥

हे ᵛअग्ने ᵛत्वम् उक्तप्रकारेण अचिन्त्यरूपोऽप्यनुग्रहीतृतया सर्वेषां ᵛजनानां ᵛजामिः बन्धुः ᵛअसि[1] । तथा ᵛप्रियः प्रीणयिता त्वं यजमानानां ᵛमित्रः प्रमीतेस्त्रायकोऽसि । ᵛईड्यः स्तुतिभिः स्तुत्यस्त्वं ᵛसखिभ्यः समानख्यानेभ्य ऋत्विग्भ्यः ᵛसखा सखिवदत्यन्तं प्रियः असि ॥ जामिः । ' जमु अदने ' । जमन्ति सहैकस्मिन्पात्रे अदन्तीति जामयो बन्धवः । ' जनिघसिभ्यामिण् ' ( उ. सू. ४-५६९ ) इति विधीयमानः इण् बहुलवचनादस्मादपि द्रष्टव्यः । ईड्यः । ' ईड स्तुतौ ' । ' ईडवन्दवृशंसदुहां ण्यतः ' इत्याद्युदात्तत्वम् ।

## यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ५ ॥

यज । नः । मित्रावरुणा । यज । देवान् । ऋतम् । बृहत् । अग्ने । यक्षि । स्वम् । दमम् ॥५॥

हे ᵛअग्ने ᵛनः अस्मदर्थं ᵛमित्रावरुणा एतत्संज्ञौ देवौ ᵛयज हविषा पूजय । तथा ᵛदेवान् इन्द्रादीन् ᵛयज पूजय । ᵛऋतं सत्यं यथार्थफलं यज्ञं च यजेत्येव । तदर्थं ᵛबृहत् प्रौढं ᵛस्वं स्वकीयं ᵛदमं यज्ञगृहं ᵛयक्षि यज संगच्छस्व । त्वय्यन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ यज[2] । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । देवान् । ' दीर्घादटि समानपादे ' इति संहितायां नकारस्य रुत्वम् । ' आतोऽटि नित्यम् ' इति अनुनासिकः[3] आकारः । यत्वलोपौ । यक्षि । यजेः ' बहुलं छन्दसि ' इति शपो लुक् ॥　　॥ २२ ॥

' का ते ' इति पञ्चर्चं तृतीयं सूक्तम् । ' का ते ' इत्यनुक्रान्तम् । राहूगणो गोतम ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादिके द्वे सूक्ते । सूत्रितं च– ' उप प्र जिन्वन्निति त्रीणि का त उपेतिरिति सूक्ते ' (आश्व. श्रौ. ४. १३) इति । आश्विनशस्त्रेऽप्येते प्रातरनुवाकातिदेशात् ॥

---

१. ट-ढ—असि भवसि । २. ट-ढ—यजा नः । ३. ट-ढ—सानुनासिकः ।

का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥ १ ॥

का । ते । उपऽइतिः । मनसः । वराय । भुवत् । अग्ने । शम्ऽतमा । का । मनीषा ।
कः । वा । यज्ञैः । परि । दक्षम् । ते । आप । केन । वा । ते । मनसा । दाशेम ॥ १ ॥

हे अग्ने ते तव मनसो वराय निवारणाय अस्मास्ववस्थापनाय का उपेतिः भुवत् कीदृशमुपगमनं भवेत् । न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुमः इति भावः । मनीषा स्तुतिः शंतमा तवातिशयेन सुखकरी का कीदृशी भवेत् तवोचिता स्तुतिरपि नास्तीत्यर्थः । को वा यजमानः यज्ञैः तव संबन्धिभिर्यागैः दक्षं वृद्धिं बलं वा परि आप पर्याप्नोत् । न कोऽपीत्यर्थः । तवोचितान् यागाननुष्ठाय तैः[1] फलं प्राप्यते इत्येतदपि दुर्घटमेवेति भावः । उपगमनादिकं तावदास्तां तस्य सर्वस्य साधनभूतं मन एवास्माकं दुर्लभमित्याह केनेति । हे अग्ने ते तुभ्यं केन मनसा कीदृश्या बुद्ध्या दाशेम हवींषि प्रयच्छाम । तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यते इत्यर्थः ॥ उपेतिः । 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम् । वराय । 'वृञ् वरणे' । अस्मादन्तर्भावितण्यर्थात् 'ग्रहवृदृनिश्चिगमश्च' (पा. सू. ३. ३. ५८) इति अप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । भुवत् । लेटि अडागमः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । दक्षम् । 'दक्ष वृद्धौ' । भावे करणे वा घञ् । ञित्त्वादाद्युदात्तत्वम् ॥

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ २ ॥

आ । इहि । अग्ने । इह । होता । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः ।
अवताम् । त्वा । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । यज । महे । सौमनसाय । देवान् ॥ २ ॥

हे अग्ने एहि आगच्छ । इह अस्मिन् यज्ञे होता देवानामाह्वाता सन् नि षीद उपविश[2] । नः अस्माकं पुरएता पुरतो गन्ता सु भव सुष्ठु भव । यस्मात्त्वम् अदब्धः राक्षसादिभिः अहिंस्योऽसि । तादृशं त्वां विश्वमिन्वे सर्वं व्याप्नुवत्यौ रोदसी द्यावापृथिव्यौ त्वा त्वाम् अवतां रक्षतां । आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्च सन् महे महते सौमनसाय सौमनस्याय देवान् दानादिगुणयुक्तान् इन्द्रादीन् यज हविर्भिः पूजय ॥ नि षीद । 'सदिरप्रतेः' इति षत्वम् । सौमनसाय । सुमनसो भावः सौमनसम् । 'तस्येदम्' इति संबन्धसामान्ये इति[3] अण्प्रत्ययः[3] । स[4] चात्र भावलक्षणे[4] संबन्धविशेषे पर्यवस्यति । यद्वा । 'हायनान्तयुवादिभ्योऽण्' (पा. सू. ५. १. १३०) इति भावे अण् । युवादिष्वस्य पाठो द्रष्टव्यः ॥

---

१. ट-ढ-' तैः ' नास्ति । २. त-द-ध-स-उपविश उपविश्य; श-उपाविश उपाविश्य च । ३. ट-ढ-अण् । ४. ट-ढ-स च समवायलक्षणे ।

प्र सु विश्वा॑न्र॒क्षसो॒ धक्ष्य॑ग्ने॒ भवा॑ य॒ज्ञाना॑मभिशस्ति॒पावा॑ ।
अथा व॑ह॒ सोम॑पतिं॒ हरि॑भ्यामाति॒थ्यम॑स्मै चकृमा सु॒दाव्ने॑ ॥ ३ ॥

प्र । सु । विश्वा॑न् । र॒क्षस॑ः । धक्षि॑ । अ॒ग्ने॒ । भव॑ । य॒ज्ञाना॑म् । अ॒भि॒श॒स्ति॒ऽपावा॑ ।
अथ॑ । आ । व॒ह॒ । सोम॑ऽपतिम् । हरि॑ऽभ्याम् । आ॒ति॒थ्यम् । अ॒स्मै॒ । च॒कृ॒म॒ । सु॒ऽदाव्ने॑ ॥३॥

हे ᵛअग्ने ᵛविश्वान् सर्वान् ᵛरक्षसः राक्षसान् ᵛप्र ᵛसु ᵛधक्षि प्रकर्षेण दह । दग्ध्वा च ᵛयज्ञानाम् अस्माभिरनुष्ठेयानां यागानाम् ᵛअभिशस्तिपावा अभिशस्तेर्हिंसायाः पाता रक्षिता ᵛभव। ᵛअथ अनन्तरं ᵛसोमपतिं सर्वेषां सोमानां पालकमिन्द्रं ᵛहरिभ्यां तदीयाश्वाभ्याम् ᵛआ ᵛवह अस्मद्यज्ञं प्रापय । आगताय ᵛअस्मै ᵛसुदाव्ने शोभनस्य फलस्य दात्रे इन्द्राय ᵛआतिथ्यम् अतिथ्यर्हं सत्कारं ᵛचकृम कुर्मः ॥ धक्षि । 'दह भस्मीकरणे' । 'बहुलं छन्दसि' इति शपो लुक् । ढत्वभष्भावकत्वषत्वानि । अभिशस्तिपावा । 'शसु हिंसायाम्' । अस्मादभिपूर्वात् भावे क्तिन् । अभिशस्तेः पातीति अभिशस्तिपावा । 'पा रक्षणे' । 'आतो मनिन्°' इति वनिप् । सोमपतिम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । सुदाव्ने । पूर्ववद्दातेर्वनिप् । 'अल्लोपोऽनः' इति अकारलोपः ॥

प्र॒जाव॑ता॒ वच॑सा॒ वह्नि॑रा॒सा च॑ हु॒वे नि च॑ सत्सी॒ह दे॒वैः ।
वेषि॑ हो॒त्रमु॒त पो॒त्रं य॑जत्र बो॒धि प्र॑यन्तर्जनित॒र्वसू॑नाम् ॥ ४ ॥

प्र॒जाऽव॑ता । वच॑सा । वह्नि॑ः । आ॒सा । आ । च॒ । हु॒वे । नि । च॒ । स॒त्सि॒ । इ॒ह । दे॒वैः ।
वेषि॑ । हो॒त्रम् । उ॒त । पो॒त्रम् । य॒ज॒त्र॒ । बो॒धि॒ । प्र॒ऽय॒न्तः॒ । ज॒नि॒तः॒ । वसू॑नाम् ॥ ४ ॥

ᵛप्रजावता यजमानेभ्यो दातव्यापत्यादिफलोपेतेन ᵛवचसा स्तोत्रेण स्तुतः सन् योऽग्निः ᵛआसा आस्यस्थानीयया ज्वालया ᵛवह्निः देवेभ्यो हविषां वोढा तमग्निम् ᵛआ ᵛच ᵛहुवे आह्वयामि । आहूतः सन् त्वम् ᵛइह अस्मिन् कर्मणि ᵛदेवैः अन्यैः सह ᵛनि ᵛसत्सि ᵛच निषीद च । निषद्य च हे ᵛयजत्र यजनीयाग्ने ᵛहोत्रं होत्रा क्रियमाणं कर्म ᵛउत अपि च ᵛपोत्रं पोत्रा कृतं कर्म च ᵛवेषि कामयस्व । ᵛवसूनां धनानां ᵛप्रयन्तः प्रकर्षेण नियन्तः वसून्यस्मदायत्तानि कुर्वन् ᵛजनितः आहुतिद्वारा सर्वस्य जनयितरग्ने ᵛबोधि अस्मान् बोधय ॥ आसा । 'पद्दन्°' इत्यादिना आस्यशब्दस्य आसन्नादेशः । 'सुपां सुलुक्°' इति तृतीयाया डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । हुवे । ह्वेञो लटि 'बहुलं छन्दसि' इति संप्रसारणम् । 'बहुलं छन्दसि' इति शपो लुक् । 'चवायोगे प्रथमा' इति निघातप्रतिषेधः । बोधि । 'बुध अवगमने' । अस्मात् ण्यन्तात् 'छन्दस्युभयथा' इति हेः आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । 'हुझल्भ्यो हेर्धिः' । धातोः अन्त्यलोपश्छान्दसः । हेरपित्त्वात् तस्यैव स्वरः शिष्यते ॥

एकादशिनस्याग्नेयस्य पशोः 'यथा विप्रस्य' इत्येषा पशुपुरोडाशस्य याज्या। सूत्रितं च 'प्रदानानाम्' इति खण्डे-'यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वच्यमानाः' (आश्व. श्रौ. ३. ७) इति ॥

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन्।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥ ५ ॥

यथा। विप्रस्य। मनुषः। हविःऽभिः। देवान्। अयजः। कविऽभिः। कविः। सन्।
एव। होतः। सत्यऽतर। त्वम्। अद्य। अग्ने। मन्द्रया। जुह्वा। यजस्व ॥ ५ ॥

कविः क्रान्तदर्शी सन् कविभिः मेधाविभिर्ऋत्विग्भिः सह विप्रस्य मेधाविनः मनुषः मनोर्यज्ञे हविर्भिः चरुपुरोडाशादिभिः हे अग्ने यथा देवान् अयजः एवमेव होतः होमनिष्पादक सत्यतर अतिशयेन सत्सु साधो अग्ने त्वम् अद्य अस्मिन् यज्ञे मन्द्रया हर्षयित्र्या जुह्वा होमसाधनभूतया स्रुचा यजस्व देवान् हविर्भिः पूजय ॥ मनुषः। 'मन ज्ञाने'। 'बहुलमन्यत्रापि' इति मनेः उसिन्प्रत्ययः ॥ ॥ २४ ॥

'कथा' इति पञ्चर्चं चतुर्थं सूक्तं त्रैष्टुभं गोतमस्यार्षमाग्नेयम्। अनुक्रान्तं च-'कथा' इति। प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः ॥

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान् ॥ १ ॥

कथा। दाशेम। अग्नये। का। अस्मै। देवऽजुष्टा। उच्यते। भामिने। गीः।
यः। मर्त्येषु। अमृतः। ऋतऽवा। होता। यजिष्ठः। इत्। कृणोति। देवान् ॥ १ ॥

अस्मै अग्नये कथा दाशेम कथं हवींषि ददाम। अग्नेरनुरूपं यज्ञं कर्तुमशक्ता वयमित्यर्थः। अथवा[1] अस्मै भामिने तेजस्विनेऽग्नये देवजुष्टा सर्वैः देवैः सेवितव्या गीः वाक् स्तुतिरपि का कीदृशी उच्यते। तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः। अमृतः मरणरहितः ऋतावा ऋतवान् सत्यवान् यज्ञवान् वा होता देवानामाह्वाता होमनिष्पादको वा यजिष्ठः अतिशयेन यष्टा एवंभूतः यः अग्निः मर्त्येषु मरणधर्मसु अस्मासु वर्तमानः सन् देवान् इत् कृणोति हविर्भिर्युक्तान्करोत्येव। तादृशायाग्नये कथा दाशेमेति पूर्वेणान्वयः ॥ कथा। 'था हेतौ च च्छन्दसि' इति थाप्रत्ययः। भामिने। 'भा दीप्तौ'। 'अर्तिस्तुसु०' इत्यादिना मन्प्रत्ययः। ततो मत्वर्थीय इनिः। ऋतावा। 'छन्दसीवनिपौ०' इति मत्वर्थीयो वनिप्। 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

---

१. ट-ढ-अपि च।

यो अध्वरेषु शंतम ऋतावा होता तमू नमोभिरा कृणुध्वम् ।
अग्निर्यद्वेर्मर्ताय देवान्त्स चा बोधाति मनसा यजाति ॥ २ ॥

यः । अध्वरेषु । शम्ऽतमः । ऋतऽवा । होता । तम् । ऊँ इति । नमःऽभिः । आ । कृणुध्वम् ।
अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥ २ ॥

यः अग्निः अध्वरेषु यागेषु शंतमः अतिशयेन सुखकारी ऋतावा सत्यवान् यथार्थदर्शीत्यर्थः । होता देवानामाह्वाता भवति । हे ऋत्विग्यजमाना यूयं तमु तमेवाग्निं नमोभिः स्तोत्रैः आ कृणुध्वम् अभिमुखीकुरुत । यत् यदा अयम् अग्निः मर्ताय मनुष्याय यजमानार्थं देवान् वेः वेति गच्छति तदानीं सः अग्निर्यष्टव्यान् सर्वान् देवान् बोधाति च जानाति च । ज्ञात्वा च मनसा नमसा तान् यजाति हविर्भिः पूजयति[1] । अतस्तमेवाग्निम् आ कृणुध्वमिति योज्यम् ॥ वेः । वी गत्यादिषु । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । 'तिङां तिङो भवन्ति' इति प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनादेशः । बोधाति । 'बुध अवगमने' । लेटि आडागमः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । 'चवायोगे प्रथमा' इति निघातप्रतिषेधः । मनसा । मकारनकारयोः स्थानविपर्ययः ॥

स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥ ३ ॥

सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ।
तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ॥ ३ ॥

स हि अग्निः क्रतुः कर्मणां कर्ता । सः एव मर्यः मारयिता विश्वस्योपसंहर्ता साधुः साधयितोत्पादयितापि सः एव अद्भुतस्य अभूतस्यालब्धस्य धनस्य रथीः रंहयिता प्रापयिता भूत् भवति । तत्र दृष्टान्तः । मित्रो न । यथा सखा धनानि प्रापयति तद्वत् । एवंभूतो योऽग्निः तम् एव मेधेषु यज्ञेषु देवयन्तीः देवयन्त्यो देवानात्मन इच्छन्त्यः विशः प्रजाः प्रथमम् उप ब्रुवते । स्तुतिभिरुपेत्य प्रधानभूतः इति कथयन्ति । कीदृश्यो विशः । दस्मं दर्शनीयं तमग्निम् आरीः गच्छन्त्यः भजन्त्यः इत्यर्थः ॥ मर्यः । 'मृङ् प्राणत्यागे' । अस्मात् अन्तर्भावितण्यर्थात् 'छन्दसि निष्टर्क्य°' इत्यादौ निपातनात् यत् 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि द्रष्टव्यः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । देवयन्तीः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । आरीः । 'ऋ गतौ' । 'जनिघसिभ्यामिण्' ( उ. सू. ४. ५६९ ) इति बहुलग्रहणादस्मादपि इण्प्रत्ययः । 'कृदिकारादक्तिनः' इति ङीष् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । व्यत्ययेनाद्युदात्तत्वम्[2] ॥

---

१. ट-ढ–पूजयति च । २. ट-ढ–'व्यत्ययेनाद्युदात्तत्वम्' नास्ति ।

स नो॑ नृ॒णां नृत॑मो रि॒शादा॑ अ॒ग्निर्गिरोऽव॑सा वेतु धी॒तिम् ।
तना॑ च॒ ये म॒घवा॑नः शवि॑ष्ठा॒ वाज॑प्रसूता इ॒षय॑न्त॒ मन्म॑ ॥ ४ ॥

सः । नः॒ । नृ॒णाम् । नृऽत॑मः । रि॒शादाः॑ । अ॒ग्निः । गिरः॑ । अव॑सा । वे॒तु । धी॒तिम् ।
तना॑ । च॒ । ये । म॒घऽवा॑नः । शवि॑ष्ठाः । वाज॑ऽप्रसूताः । इ॒षय॑न्त । मन्म॑ ॥ ४ ॥

ᐯनृणां यज्ञस्य नेतॄणां मध्ये ᐯनृतमः अतिशयेन नेता ᐯरिशादाः रिशानां शत्रूणामत्ता भक्षयिता। यद्वा । रिशतां हिंसतामसिता निरसिता । एवंविधः ᐯसः ᐯअग्निः ᐯनः अस्माकं ᐯगिरः स्तुतीः ᐯअवसा हविर्लक्षणेनान्नेन युक्तां ᐯधीतिं कर्म च ᐯवेतु कामयताम् । अपि ᐯच ᐯये यजमानाः ᐯतना । धननामैतत् । विस्तृतेन धनेन ᐯमघवानः धनवन्तः ᐯशविष्ठाः अतिशयेन बलिनश्च सन्तः ᐯवाजप्रसूताः प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैस्तादृशा भूत्वा ᐯमन्म अग्नेर्मननरूपं स्तोत्रम् ᐯइषयन्त एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति । तेषामपि स्तुतिमग्निः कामयतामिति भावः ॥ नृणाम् । ‘ नृ च ’ इति उभयथाभावात् दीर्घाभावः । ‘ नामन्यतरस्याम् ’ इति नाम उदात्तत्वम् । तना । ‘ तनु विस्तारे ’ । पचाद्यच् । तृतीयैकवचनस्य ‘ सुपां सुलुक्° ’ इति आकारः । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । शविष्ठाः । शव इति बलनाम । ‘ अस्मायामेधा° ’ इति मत्वर्थीयो विनिः । ततः आतिशायनिकः इष्ठन् । ‘ विन्मतोर्लुक् ’ इति विनो लुक् । ‘ टेः ’ इति टिलोपः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । इषयन्त । ‘ इषु इच्छायाम् ’ । अस्मात् ण्यन्तात् छान्दसो लङ् । संज्ञापूर्वकस्य विधेरनित्यत्वात् णौ लघूपधगुणाभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते ॥

ए॒वाग्निर्गोत॑मेभिर्ऋ॒तावा॒ विप्रे॑भिरस्तोष्ट जा॒तवे॑दाः ।
स ए॑षु द्यु॒म्नं पी॑पय॒त्स वाजं॒ स पु॒ष्टिं या॑ति॒ जोष॒मा चि॑कि॒त्वान् ॥ ५ ॥

ए॒व । अ॒ग्निः । गोत॑मेभिः । ऋ॒तऽवा॑ । विप्रे॑भिः । अ॒स्तो॒ष्ट । जा॒तऽवे॑दाः ।
सः । ए॒षु॒ । द्यु॒म्नम् । पी॒प॒य॒त् । सः । वाज॑म् । सः । पु॒ष्टिम् । या॒ति॒ । जोष॑म् । आ । चि॒कि॒त्वान् ॥५॥

ᐯऋतावा ऋतवान् यज्ञवान् ᐯजातवेदाः जातधनो जातप्रज्ञो वा अयम् ᐯअग्निः ᐯविप्रेभिः मेधाविभिः ᐯगोतमेभिः गोतमैर्ऋषिभिरेवमुक्तेन प्रकारेण ᐯअस्तोष्ट स्तुतोऽभूत् । स्तुतश्च ᐯसः अग्निः ᐯएषु गोतमेषु ᐯद्युम्नं द्योतमानं सोमं ᐯपीपयत् अपिबत् । यद्वा । तानृषीन् अपाययत्[1] । तथा[2] ᐯसः अग्निः ᐯवाजं हविर्लक्षणमन्नं पीपयदित्येव । एवं सोमलक्षणं चरुपुरोडाशादिलक्षणं हविश्च स्वीकृत्य ᐯसः अग्निः ᐯजोषम् अस्माभिः कृतं सेवनम् ᐯआ ᐯचिकित्वान् आ समन्तात् जानन् ᐯपुष्टिं ᐯयाति पोषं प्राप्नोतु । यद्वा । अस्माकं धनानि पोषं प्रापयतु ॥ गोतमेभिः । ‘ ऋष्यन्धकवृष्णिकुरुभ्यश्च ’ ( पा. सू. ४. १. ११४ ) इति विहितस्य अणः ‘ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ’ ( पा. सू. २. ४. ६५ ) इति बहुषु लुक् । अस्तोष्ट । स्तौतेः कर्मणि लुङि चिणभावश्छान्दसः । पीपयत् । ‘ पा पाने ’ ।

---

१. ट-ढ—पीपयत्; स—अपीपयत् । २. च-फ—ततः ।

ण्यन्तात् लुङि च्लेश्चङादि । जोषम् । 'जुषी प्रीतिसेवनयोः' । भावे घञ् । ञित्त्वादाद्युदात्तत्वम् ॥ ॥ २५ ॥

'अभि त्वा' इति पञ्चर्चं पञ्चमं सूक्तं गोतमस्यार्षमाग्नेयं गायत्रम् । तथा चानुक्रान्तम्—'अभि त्वा गायत्रं तु' इति । विनियोगो लैङ्गिकः ॥

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥ १ ॥

अभि । त्वा । गोतमाः । गिरा । जातऽवेदः । विऽचर्षणे । द्युम्नैः । अभि । प्र । नोनुमः ॥१॥

हे ^v^जातवेदः जातानां वेदितः ^v^विचर्षणे विशेषेण सर्वस्य द्रष्टः एवंभूताग्ने ^v^त्वा त्वां ^v^गोतमाः अस्य सूक्तस्य द्रष्टा गोतम ऋषिः । ऋषेरेकत्वेऽपि पूजार्थं बहुवचनम् । ^v^गिरा स्तोत्रलक्षणया वाचा ^v^अभि आभिमुख्येन अस्तौदिति शेषः । तद्वद्वयमपि त्वां ^v^द्युम्नैः त्वदीयगुणप्रकाशकैर्मन्त्रैः ^v^अभि ^v^प्र ^v^णोनुमः आभिमुख्येन पुनःपुनः स्तुमः ॥ नोनुमः । 'णु स्तुतौ' । अस्मात् यङ्लुगन्तात् लट् । 'उपसर्गादसमासेऽपि॰' इति णत्वम् ॥

तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति । द्युम्नैरभि प्र णोनुमः ॥२॥

तम् । ऊँ इति । त्वा । गोतमः । गिरा । रायःऽकामः । दुवस्यति । द्युम्नैः । अभि । प्र । नोनुमः॥२॥

^v^रायस्कामः धनकामः ^v^गोतमः यमग्निं ^v^गिरा स्तुत्या ^v^दुवस्यति परिचरति ^v^तमु तमेव त्वां ^v^द्युम्नैः द्योतमानैः स्तोत्रैराभिमुख्येन पुनःपुनः स्तुमः ॥ रायस्कामः । रायो धनानि कामयते इति रायस्कामः । 'कर्मण्यण्' । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् अलुक् । 'ऊडिदम्॰' इत्यादिना पूर्वपदस्य विभक्तेरुदात्तत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । 'अतः कृकमिकंस-कुम्भ॰' ( पा. सू. ८. ३. ४६ ) इति विसर्जनीयस्य सत्वम् । दुवस्यति । 'दुवस उपतापे परिचरणे च' । कण्ड्वादिः ॥

तमु त्वा वाजसातममङ्गिरस्वद्धवामहे । द्युम्नैरभि प्र णोनुमः ॥ ३ ॥

तम् । ऊँ इति । त्वा । वाजऽसातमम् । अङ्गिरस्वत् । हवामहे । द्युम्नैः । अभि । प्र । नोनुमः॥३॥

हे अग्ने ^v^वाजसातमं वाजानामन्नानामतिशयेन सनितारं दातारं तमेव ^v^त्वा त्वाम् ^v^अङ्गिरस्वत् अङ्गिरस इव ^v^हवामहे आह्वयामः । शिष्टं गतम् ॥ वाजसातमम् । 'षणु दाने' । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । अतिशयेन वाजसा वाजसातमः । तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वर एव शिष्यते । अङ्गिरस्वत् । 'तेन तुल्यम्॰' इति वतिः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' ( पा. सू. १. ४. १८. ३ ) इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः ॥

तमु॑ त्वा वृत्र॒हन्त॑मं॒ यो दस्यूँ॑रवधू॒नुषे । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥ ४ ॥

तम् । ऊँ इति॑ । त्वा॒ । वृ॒त्र॒हन्ऽत॑मम् । यः । दस्यू॑न् । अ॒व॒ऽधू॒नु॒षे ।

द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ४ ॥

हे अग्ने ᵛदस्यून् उपक्षपयितॄन् राक्षसादीन् ᵛयः त्वम् ᵛअवधूनुषे अवचालयसि स्थानात् प्रच्यावयसि ᵛवृत्रहन्तमं वृत्राणां पाप्मनाम्[1] अतिशयेन हन्तारं ᵛतमु ᵛत्वा तमेव त्वां द्युम्नैरित्यादि पूर्ववत्॥ वृत्रहन्तमम् । अतिशयेन वृत्रहा वृत्रहन्तमः । पदसंज्ञायां नलोपे ' नाद्धस्य ' ( पा. सू. ८. २. १७) इति तमपो नुट् । दस्यून् । ' दीर्घादटि समानपादे ' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा ' इति ऊकारः सानुनासिकः ॥

अवो॑चाम॒ रहू॑गणा अ॒ग्नये॒ मधु॑मद्वचः॑ । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥ ५ ॥

अवो॑चाम । रहू॑गणाः । अ॒ग्नये॑ । मधु॑ऽमत् । वचः॑ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ५ ॥

ऋषिः कृतं स्तोत्रमनयोपसंहरति । ᵛरहूगणाः रहूगणस्य पुत्रा वयं गोतमाः ᵛअग्नये अङ्गनादिगुणयुक्ताय देवाय ᵛमधुमद्वचः माधुर्योपेतं वचनम् ᵛअवोचाम प्रावादिष्म । तद्वचनरूपैः[2] ᵛद्युम्नैः द्योतमानैः स्तोत्रैः पुनःपुनरग्निं वयम् ᵛअभि ᵛप्र ᵛणोनुमः आभिमुख्येन प्रकर्षेण स्तुमः ॥ ॥ २६ ॥

' हिरण्यकेशः ' इति द्वादशर्चं षष्ठं सूक्तम् । रहूगणपुत्रस्य गोतमस्यार्षम् । अत्रानुक्रम्यते— ' हिरण्यकेशो द्वादशाद्यौ तृचौ त्रैष्टुभौष्णिहौ पूर्वोऽग्नये वा मध्यमाय ' इति । पूर्वत्र ' गायत्रं तु ' इत्युक्तत्वादिदमपि गायत्रं[3] सूक्तम्[3] । एतावांस्तु विशेषः । आद्यस्तृचस्त्रैष्टुभः । द्वितीयस्त्वौष्णिहः । प्रथमतृचस्य मध्यमस्थानो वैद्युतोऽग्निः शुद्धाग्निर्वा देवता । शिष्टा नवर्चः केवलाग्निदेवताकाः । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चाद्यस्तृचः । सूत्रितं च—' हिरण्यकेश इति तिस्रोऽपश्यमस्य महत इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति । कारीर्यामग्नेर्धामच्छदो हिरण्यकेश इति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च—' हिरण्यकेशो रजसो विसार इति द्वे त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधि श्रितमिति वा ' ( आश्व. श्रौ. २. १३ ) इति ॥

हिर॑ण्यकेशो॒ रज॑सो विसा॒रेऽहि॒र्धुनि॒र्वात॑इव॒ ध्रजी॑मान् ।

शुचि॑भ्राजा उ॒षसो॒ नवे॑दा॒ यश॑स्वतीरप॒स्युवो॒ न स॒त्याः ॥ १ ॥

हिर॑ण्यऽकेशः । रज॑सः । वि॒ऽसा॒रे । अहिः॑ । धुनिः॑ । वातः॑ऽइव । ध्रजी॑मान् ।

शुचि॑ऽभ्राजाः । उ॒षसः॑ । नवे॑दाः । यश॑स्वतीः । अ॒प॒स्युवः॑ । न । स॒त्याः ॥ १ ॥

---

१. ट-ढ–पापानाम् । २. ट-ढ–वचनानुरूपैः । ३. ट-ढ–सूक्तं गायत्रम् ।

ᵛहिरण्यकेशः हितरमणीयाः केशस्थानीया ज्वाला यस्य स तथोक्तः सुवर्णवद्दीप्यमानज्वालो वा ᵛअहिः आगत्य हन्ता मेघानां ᵛधुनिः तेषां कम्पयिता ᵛवातइव वायुरिव ᵛध्रजीमान् शीघ्रगतियुक्तः एवंभूतो वैद्युतोऽग्निः ᵛरजसः उदकस्य ᵛविसारे विसरणे मेघान्निर्गमने निमित्तभूते सति ᵛशुचिभ्राजाः शोभनदीप्तिः सन् मेघाज्जलानि निर्गमयितुं जानाति । ᵛउपसः उषोदेवताः ᵛनवेदाः । न विदन्ति इति नवेदाः । मेघादुदकस्य निःसारणमग्निरेव जानाति उषसस्तु न जानन्तीत्यर्थः । अज्ञाने दृष्टान्तः । ᵛयशस्वतीः अन्नयुक्ता अन्नवत्यः ᵛअपस्युवः अपः कर्म आत्मन इच्छन्त्यः ᵛसत्याः अवितथारम्भाः ᵛन एवंभूताः प्रजा इव । अत्र उषसामज्ञानेनाग्निः प्रशस्यते न तु ता निन्द्यन्ते, 'न हि निन्दा निन्द्यं निन्दितुं अपि तु स्तुत्यं स्तोतुम्' इति न्यायात् ॥ ध्रजीमान् । 'ध्रज गतौ' । 'इन्सर्वधातुभ्यः' इति भावे इन्प्रत्ययः । ततो मतुप् । तस्य पित्त्वादनुदात्तत्वे इनो नित्त्वात् प्रातिपदिकस्याद्युदात्तत्वम् । नवेदाः । नञ्पूर्वात् वेत्तेः पचाद्यच् । 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः । अपस्युवः । अपस्शब्दात् 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (पा. सू. ६. ४. ७७. १) इति उवङ् ॥

आ ते॑ सु॒प॒र्णा अ॑मिनन्तँ॒ एवैः॑ कृ॒ष्णो नो॑नाव वृष॒भो यदी॒दम् ।
शि॒वाभि॒र्न स्मय॑मानाभि॒राग॒ात्पत॑न्ति॒ मिहः॑ स्त॒नय॑न्त्य॒भ्रा ॥ २ ॥

आ । ते॒ । सु॒ऽप॒र्णाः । अ॒मि॒न॒न्त॒ । एवैः॑ । कृ॒ष्णः । नो॒ना॒व॒ । वृ॒ष॒भः । यदि॑ । इ॒दम् ।
शि॒वाभिः॑ । न । स्मय॑मानाभिः । आ । अ॒गा॒त् । पत॑न्ति । मिहः॑ । स्त॒नय॑न्ति । अ॒भ्रा ॥२॥

हे अग्ने ᵛते तव ᵛसुपर्णाः शोभनपतना रश्मयः ᵛएवैः गन्तृभिर्मरुद्भिः सह ᵛअमिनन्त ᵛआ समन्तात् मेघं हिंसन्ति । वर्षणार्थं ताडयन्ति । प्रहृतश्च ᵛकृष्णः कृष्णवर्णः ᵛवृषभः वर्षिता मेघः ᵛनोनाव भृशं शब्दमकरोत् । ᵛयदि यदा ᵛइदं ईदृशं कर्म तदानीं ᵛशिवाभिर्न सुखकारिणीभिः ᵛस्मयमानाभिः हसनवतीभिः कान्ताभिरिव शुभ्रवर्णाभिः फेनयुक्ताभिरद्भिर्विद्युद्भिर्वा सह ᵛआ ᵛअगात् वैद्युताग्निप्रेरितः पर्जन्य आगच्छति । तदनन्तरं ᵛमिहः आपः ᵛपतन्ति दिवः सकाशात् प्रवृष्टा भवन्ति । ᵛअभ्रा अभ्राण्यद्भिः पूर्णा मेघाः ᵛस्तनयन्ति इतस्ततः शब्दं कुर्वन्ति ॥ अमिनन्त । 'मीञ् हिंसायाम्' । क्रैयादिकः । व्यत्ययेन अन्तादेशः । ईषाअक्षादित्वात् प्रकृतिभावः । 'अणोऽप्रगृह्यस्य°' (पा. सू. ८. ४. ५७) इति वैकल्पिकमवसाने विधीयमानमनुनासिकत्वं व्यत्ययेनात्र संहितायामपि द्रष्टव्यम् । नोनाव । नौतेर्यङ्लुगन्तात् लिटि '°अमन्त्रे°' (पा. सू. ३. १. ३५) इति निषेधात् आम्प्रत्ययाभावः । स्मयमानाभिः । 'ष्मिङ् ईषद्धसने' । शपः पित्त्वादनुदात्तत्वम् । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । स्तनयन्ति । 'स्तन शब्दे' । चुरादिरदन्तः । पतन्ति स्तनयन्तीत्यनयोः पादादित्वाद्वाक्यादित्वाच्च निघाताभावः ॥

यदी॑मृ॒तस्य॒ पय॑सा॒ पिया॑नो॒ नय॑न्नृ॒तस्य॑ प॒थिभी॒ रजि॑ष्ठैः ।
अ॒र्य॒मा मि॒त्रो वरु॑णः॒ परि॑ज्मा॒ त्वचं॑ पृञ्च॒न्त्युप॑रस्य॒ योनौ॑ ॥ ३ ॥

यत् । ई॒म् । ऋ॒तस्य॑ । पय॑सा । पिया॑नः । नय॑न् । ऋ॒तस्य॑ । प॒थिऽभिः॑ । रजि॑ष्ठैः ।
अ॒र्य॒मा । मि॒त्रः । वरु॑णः । परि॑ऽज्मा । त्वच॑म् । पृ॒ञ्च॒न्ति॒ । उप॑रस्य । योनौ॑ ॥ ३ ॥

ᵛयदीं यदायमग्निः ᵛऋतस्य उदकस्य ᵛपयसा पयोवत्सारभूतेन रसेन ᵛपियानः जगदाप्यायनं कुर्वन् आप्यायितं च जगत् ᵛऋतस्य उदकस्य संबन्धिभिः ᵛरजिष्ठैः ऋजुतमैः ᵛपथिभिः मार्गैः स्नानपानादिभिः ᵛनयन् प्रापयन् वर्तते तदानीम् ᵛअर्यमा ᵛमित्रो ᵛवरुणः च ᵛपरिज्मा परितो गन्ता मरुद्गणश्च ᵛउपरस्य मेघस्य ᵛयोनौ वृष्ट्युदकोत्पत्तिस्थाने ᵛत्वचं ᵛपृञ्चन्ति वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति उद्घाटयन्तीति यावत्॥ पियानः। 'स्फायी ओप्यायी वृद्धौ'। 'बहुलं छन्दसि' इति शपो लुक्। धातोर्व्यत्ययेन पीभावः। अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते। रजिष्ठैः। ऋजुशब्दात् इष्ठनि 'विभाषर्जोश्छन्दसि' (पा. सू. ६. ४. १६२) इति ऋकारस्य रत्वम्। 'टेः' इति टिलोपः। पृञ्चन्ति। 'पृची संपर्के'। रौधादिकः॥

प्रातरनुवाकस्याग्नेये क्रतौ औष्णिहे छन्दस्याश्विनशस्त्रे च 'अग्ने वाजस्य' इत्याद्यास्तिस्र ऋचः। सूत्रितं च– 'अग्ने वाजस्येति तिस्रः पुरु त्वा त्वामग्ने' (आश्व. श्रौ. ४. १३) इति॥

अग्ने॒ वाज॑स्य॒ गोम॑त॒ ईशा॑नः सहसो यहो ।

अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रवः॑ ॥ ४ ॥

अग्ने॑। वाज॑स्य। गोऽम॑तः। ईशा॑नः। स॒ह॒सः॒। य॒हो॒ इति॑।

अ॒स्मे इति॑। धे॒हि॒। जा॒त॒ऽवे॒दः॒। महि॑। श्रवः॑ ॥ ४ ॥

हे ᵛसहसो ᵛयहो बलस्य पुत्र ᵛअग्ने ᵛगोमतः बहुभिर्गोभिर्युक्तस्य ᵛवाजस्य अन्नस्य ᵛईशानः ईश्वरस्त्वमसि। अतः ᵛअस्मे अस्मासु हे ᵛजातवेदः जातधन जातानां वेदितर्वाग्ने ᵛमहि प्रभूतं ᵛश्रवः अन्नं ᵛधेहि स्थापय॥ सहसो यहो। पराङ्गवद्भावात् 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायो निहन्यते। अस्मे। 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः॥

स इ॑धा॒नो वसु॑ष्क॒विर॒ग्निरी॒ळेन्यो॑ गि॒रा। रे॒वद॒स्मभ्यं॑ पुर्वणीक दीदिहि ॥५॥

सः। इ॒धा॒नः। वसुः॑। क॒विः। अ॒ग्निः। ई॒ळेन्यः॑। गि॒रा।

रे॒वत्। अ॒स्मभ्य॑म्। पु॒रु॒ऽअ॒नी॒क॒। दी॒दि॒हि॒ ॥ ५ ॥

ᵛसः ᵛअग्निः ᵛइधानः दीपनशीलः ᵛवसुः निवासयिता सर्वेषां ᵛकविः क्रान्तदर्शनो मेधावी वा ᵛगिरा स्तोत्ररूपया वाचा ᵛईळेन्यः स्तोतव्यो भवति। हे ᵛपुर्वणीक। अनीकं मुखम्। पुरुभिर्बह्वीभिरनीकस्थानीयाभिर्ज्वालाभिर्युक्ताग्ने ᵛअस्मभ्यं ᵛरेवत् धनयुक्तमन्नं यथा भवति तथा ᵛदीदिहि दीप्यस्व॥ इधानः। 'ञिइन्धी दीप्तौ'। ताच्छीलिकः चानश्। 'बहुलं छन्दसि' इति शपो लुक्। ईळेन्यः। 'ईड स्तुतौ'। औणादिक एन्यप्रत्ययः। रेवत्। 'रयेर्मतौ बहुलम्' इति संप्रसारणम्। 'छन्दसीरः' इति मतुपो वत्वम्। 'रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्' (का. ६. १. १७६. १) इति मतुप उदात्तत्वम्। दीदिहि। दीदेतिश्छान्दसो दीप्तिकर्मा॥

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥६॥

क्षपः । राजन् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः ।

सः । तिग्मऽजम्भ । रक्षसः । दह । प्रति ॥ ६ ॥

हे राजन् राजनशील अग्ने क्षपः क्षपय । राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व । उत अपि च त्मना न केवलमन्यैरेव आत्मना च तान् बाधस्व । कदेति चेन् उच्यते । वस्तोः सर्वाण्यहानि उत अपि च उषसः उषःकालोपलक्षिता रात्रीः । अत्यन्तसंयोगे द्वितीया । सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः । हे तिग्मजम्भ तीक्ष्णमुखाग्ने रक्षसः राक्षसानुक्तप्रकारेण क्षपयित्वा सः एव त्वं प्रति दह प्रत्येकं दह । न किंचिद्दग्धव्यमित्युदास्वेत्यर्थः ॥ क्षपः । 'क्षप क्षान्त्याम्' । लोडर्थे छान्दसो लङ् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । उदात्तनिवृत्तिस्वरेण शप उदात्तत्वम् । त्मना । 'मन्त्रेष्वाङ्यादेरात्मनः' इति आकारलोपः । रक्षसः । 'रक्ष पालने' । रक्षितव्यमस्मादिति रक्षः । भीमादित्वात् (पा. सू. ३. ४. ७४) अपादाने असिप्रत्ययः । क्षरतेर्वा ण्यन्तात् असिप्रत्यये णिलोपो वर्णविपर्ययश्च । अस्य च रक्षःशब्दस्य असिप्रत्ययान्तत्वात् प्रत्ययस्वर एव शिष्यते ॥　　॥ २७ ॥

प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि 'अवा नो अग्ने' इत्याद्याः षडृचः । सूत्रितं च–'अवा नो अग्न इति षळग्निमीळेऽग्निं दूतम्' (आश्व. श्रौ. ४. १३) इति ॥ आश्विनशस्त्रे चैताः शंसनीयाः प्रातरनुवाकातिदेशात् ॥

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥ ७ ॥

अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि । विश्वासु । धीषु । वन्द्य ॥ ७ ॥

विश्वासु धीषु सर्वेषु कर्मसु वन्द्य स्तुत्य हे अग्ने गायत्रस्य गायत्रसाम्नो गायत्रीच्छन्दस्कस्य सूक्तस्य वा प्रभर्मणि प्रभरणे संपादने निमित्तभूते सति नः अस्मान् ऊतिभिः त्वदीयैः पालनैः अव रक्ष ॥ अव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ॥

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥ ८ ॥

आ । नः । अग्ने । रयिम् । भर । सत्राऽसहम् । वरेण्यम् । विश्वासु । पृत्ऽसु । दुस्तरम् ॥८॥

हे अग्ने रयिं धनं नः अस्मभ्यम् आ भर प्रयच्छ । कीदृशम् । सत्रासाहं सत्रा सह युगपदेव दारिद्र्यस्य नाशकं वरेण्यं सर्वैर्वरणीयं विश्वासु पृत्सु सर्वेषु संग्रामेषु दुष्टरं शत्रुभिस्तरीतुमशक्यम् ॥ सत्रासाहम् । 'छन्दसि सहः' इति ण्विः । वरेण्यम् । 'वृञ एण्यः' । पृत्सु । 'पद्दादिषु मांस्पृत्स्नूनामुपसंख्यानम्' इति पृतनाशब्दस्य पृद्भावः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् ॥

आयुष्कामेष्ट्यां प्रथमस्याज्यभागस्यानुवाक्या 'आ नो अग्ने' इति । सूत्रितं च–'आयुष्कामेष्ट्यां जीवातुमन्तावा नो अग्ने सुचेतुना' (आश्व. श्रौ. २. १०) इति । महापितृयज्ञेऽप्येषैव प्रथमाज्यभागानुवाक्या । सूत्रितं च–'जीवातुमन्तौ सद्योत्तर्युपस्थाः' (आश्व. श्रौ. २. १९) इति ॥

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ ९ ॥

आ । नः । अग्ने । सुऽचेतुना । रयिम् । विश्वायुऽपोषसम् । मार्डीकम् । धेहि । जीवसे ॥९॥

हे अग्ने नः अस्माकं जीवसे जीवनाय सुचेतुना शोभनेन ज्ञानेन युक्तं रयिं धनम् आ धेहि आस्थापय । कीदृशम् । मार्डीकम् । मृडीकं सुखम् । तद्धेतुभूतम् । विश्वायुपोषसं सर्वस्मिन्नायुषि देहादेः पोषकम् । यावज्जीवमस्मदुपभोगपर्याप्तमित्यर्थः ॥ सुचेतुना । 'चिती संज्ञाने' । औणादिकः उप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । विश्वायुपोषसम् । विश्वमायुर्यस्मिन् शरीरादौ तद्विश्वायु । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । तत्पुष्णातीति विश्वायुपोषाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । मकारलोपश्छान्दसः 'दीर्घायुत्वाय वर्चसे' इति यथा ॥

प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरः ॥ १० ॥

प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये । भरस्व । सुम्नऽयुः । गिरः ॥१०॥

हे गोतम सूक्तद्रष्टः सुम्नयुः सुम्नं धनमात्मन इच्छंस्त्वं तिग्मशोचिषे तीक्ष्णज्वालाय अग्नये पूताः शुद्धाः वाचः अग्नेर्गुणान् सम्यगभिदधतीः गिरः स्तुतीः प्र भरस्व प्रकर्षेण संपादय ॥ तिग्मशोचिषे । 'तिज निशाने' । 'युजिरुचितिजां कुत्वं च' ( उ. सू. १. १४२ ) इति मक् । तिग्मानि शोचींषि यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुम्नयुः । सुम्नशब्दात् क्यचि 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोः प्रतिषेधः । 'क्याच्छन्दसि' इति उप्रत्ययः ॥

यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः । अस्माकमिद्वृधे भव ॥ ११ ॥

यः । नः । अग्ने । अभिऽदासति । अन्ति । दूरे । पदीष्ट । सः ।

अस्माकम् । इत् । वृधे । भव ॥ ११ ॥

हे अग्ने नः अस्मान् अन्ति अन्तिके समीपे दूरे विप्रकृष्टदेशे अवस्थितः[1] सन् यः शत्रुः अभिदासति उपक्षपयति सः शत्रुः पदीष्ट पततु नश्यतु । त्वं च अस्माकमित् अस्माकमेव वृधे वर्धनाय भव ॥ अभिदासति । 'दसु उपक्षये' । अस्मात् ण्यन्तात् लटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । अन्ति । 'कादिलोपो बहुलमिति वक्तव्यम्' इति अन्तिकशब्दस्य ककारलोपः । वृधे । 'वृधु वृद्धौ' । संपदादिलक्षणो भावे क्विप् । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् ॥

सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यः ॥ १२ ॥

सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि । सेधति । होता । गृणीते । उक्थ्यः ॥१२॥

१. ट-ड—च स्थितः ।

<sup>v</sup>सहस्राक्षः असंख्यातज्वालः <sup>v</sup>विचर्षणिः विशेषेण सर्वस्य द्रष्टा अयम् <sup>v</sup>अग्निः <sup>v</sup>रक्षांसि <sup>v</sup>सेधति प्रतिषेधति । यज्ञान्निर्गमयति । स चाग्निः <sup>v</sup>उक्थ्यः उक्थैः शस्त्रैरस्माभिः स्तूयमानः सन् <sup>v</sup>होता देवानामाह्वाता भूत्वा <sup>v</sup>गृणीते तान् स्तौति ॥ सहस्राक्षः । ' बहुव्रीहौ सक्थ्यक्ष्णोः०' इति षच् समासान्तः । सतिशिष्टत्वात्तस्यैव स्वरः शिष्यते । सेधति । ' षिधु गत्याम् ' । अत्र केवलोऽपि सोपसर्गार्थो द्रष्टव्यः । गृणीते । ' गॄ शब्दे ' । ' प्वादीनां ह्रस्वः ' इति ह्रस्वत्वम् ॥　　॥ २८ ॥

' इत्था ' इति षोडशर्चं सप्तमं सूक्तं गोतमस्यार्षमैन्द्रं पङ्क्तिच्छन्दस्कम् । अनुक्रान्तं च–' इत्था षोळशैन्द्रं पाङ्क्तं हि[1] ' । हिशब्दप्रयोगात् तुह्यादिपरिभाषया इदमुत्तरे च द्वे पङ्क्तिच्छन्दस्के । पृष्ठ्यषडहस्य पञ्चमेऽहनि मरुत्वतीये इदं सूक्तम् । सूत्रितं च–' अविता सीत्था हीन्द्र पिब तुभ्यमिति मरुत्वतीयम् ' (आश्व. श्रौ. ७. १२ ) इति । चतुर्विंशेऽहनि अच्छावाकस्यायस्तृचो वैकल्पिकोऽनुरूपः । ' होत्रकाणाम् ' इति खण्डे सूत्रितम्–' इत्था हि सोम इन्मद उभे यदिन्द्र रोदसी ' ( आश्व. श्रौ. ७. ४ ) इति । महाव्रते निष्केवल्यस्य दक्षिणपक्षे ' इत्था हि ' इत्येका । तथैव पञ्चमारण्यके सूत्रितम्–' इत्था हि सोम इन्मद इति पङ्क्तिः ' ( ऐ. आ. ५. २. २ ) इति ॥

**इ॒त्था हि सोम॒ इन्मदे॑ ब्र॒ह्मा च॒कार॒ वर्ध॑नम् ।**

**शवि॑ष्ठ वज्रि॒न्नोज॑सा पृथि॒व्या निः श॑शा॒ अहि॒मर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १ ॥**

इ॒त्था । हि । सोमे॑ । इत् । मदे॑ । ब्र॒ह्मा । च॒कार॑ । वर्ध॑नम् ।

शवि॑ष्ठ । व॒ज्रि॒न् । ओज॑सा । पृ॒थि॒व्याः । निः । श॒शाः॒ । अहि॑म् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥१॥

हे <sup>v</sup>शविष्ठ अतिशयेन बलवन् <sup>v</sup>वज्रिन् वज्रवन्निन्द्र <sup>v</sup>इत्था <sup>v</sup>हि इत्थमेव अनेन शास्त्रोक्तप्रकारेणैव <sup>v</sup>मदे मदकरे हर्षकरे <sup>v</sup>सोमे त्वया पीते सति <sup>v</sup>ब्रह्मा ब्राह्मणः स्तोता <sup>v</sup>वर्धनं तव वृद्धिकरं स्तोत्रं <sup>v</sup>चकार अनेन सूक्तेन कृतवान् । <sup>v</sup>इत् इत्येतत् पादपूरणम्[2] । अतस्त्वम् <sup>v</sup>ओजसा बलेन <sup>v</sup>पृथिव्याः सकाशात् <sup>v</sup>अहिम् आगत्य हन्तारं वृत्रं <sup>v</sup>निः <sup>v</sup>शशाः निःशेषेण अशाः । मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशात् निरगमयः इत्यर्थः । किं कुर्वन् । <sup>v</sup>स्वराज्यं स्वस्य राज्यं राजत्वम् <sup>v</sup>अनु अनुलक्ष्य <sup>v</sup>अर्चन् पूजयन् स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः॥ शशाः । ' शासु अनुशिष्टौ ' । लङि लुकि प्राप्ते ' बहुलं छन्दसि ' इति शपः श्लुः । स्वराज्यम् । राज्ञो भावः कर्म वा राज्यम् । ' पत्यन्तपुरोहितादिभ्यो यक् ' इति यक् । तत्र हि ' राजासे ' ( पा. सू. ५. १. १२८ग. ) इति पठ्यते । स्वस्य राज्यं स्वराज्यम् । ' अकर्मधारये राज्यम् ' ( पा. सू. ६. २. १३० ) इत्युत्तरपदाद्युदात्तत्वम् ॥

**स त्वा॑मद॒द्वृषा॒ मदः॒ सोमः॑ श्ये॒नाभृ॑तः सु॒तः ।**

**येना॑ वृ॒त्रं निर॒द्भ्यो ज॒घन्थ॑ वज्रि॒न्नोज॒सार्च॒न्ननु॑ स्व॒राज्य॑म् ॥ २ ॥**

सः । त्वा॒ । अ॒म॒द॒त् । वृषा॑ । मदः॑ । सोमः॑ । श्ये॒नऽआ॑भृतः । सु॒तः ।

येन॑ । वृ॒त्रम् । निः । अ॒त्ऽभ्यः । ज॒घन्थ॑ । व॒ज्रि॒न् । ओज॑सा । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥२॥

---

१. क्ष–हि इति । २. क्ष-ट-ढ-न-म–पदपूरणम् ।

हे इन्द्र vत्वा त्वां vसः vसोमः vअमदत् अमदयत् हर्षं प्रापयत्। कीदृशः सोमः। vवृषा सेचनस्वभावः vमदः मदकरो हर्षकारी vश्येनाभृतः श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः vसुतः अभिषुतः। हे vवज्रिन्[1] वज्रवन्निन्द्र[1] vयेन पीतेन सोमेन vओजसा बलकरेण vअद्भ्यः अन्तरिक्षसकाशात् vवृत्रं vनिः vजघन्थ हतवानसि। अन्यत् पूर्ववत्॥ अमदत्। 'मदी हर्षे'। अस्मात् णिचि 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् मित्त्वे सति 'मितां ह्रस्वः' इति ह्रस्वत्वम्। लङि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः। अद्भ्यः। आप इत्यन्तरिक्षनाम। 'अपो भि' (पा. सू. ७. ४. ४८) इति पकारस्य तत्वम्। जघन्थ। क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति प्रतिषेधः। 'अभ्यासाच्च' इति हकारस्य घत्वम्। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यद्वृत्तयोगादनिघातः[2]॥

प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते।

इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम्॥ ३॥

प्र। इहि। अभि। इहि। धृष्णुहि। न। ते। वज्रः। नि। यंसते।

इन्द्र। नृम्णम्। हि। ते। शवः। हनः। वृत्रम्। जयाः। अपः। अर्चन्। अनु। स्वऽराज्यम्॥३॥

हे vइन्द्र vप्रेहि प्रकर्षेण गच्छ। vअभीहि। हन्तव्यान् शत्रूनाभिमुख्येन प्राप्नुहि। प्राप्य च vधृष्णुहि। तान् शत्रूनभिभव। vते तव vवज्रः vन vनि vयंसते शत्रुभिर्न नियम्यते अप्रतिहतगतिरित्यर्थः। तथा vते vशवः त्वदीयं बलं vनृम्णं नृणां पुरुषाणां नामकमभिभावकं vहि यस्मादेवं तस्मात् vवृत्रम् असुरं मेघं वा vहनः जहि। ततोऽनन्तरं[3] तेन निरुद्धाः vअपः उदकानि vजयाः जय। वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः। अन्यत् समानम्॥ यंसते। यमेः कर्मणि लेटि 'सिब्बहुलम्' इति सिप्। 'लेटोऽडाटौ' इति अडागमः। हनः। लोडर्थे छान्दसो लङ्। 'बहुलं छन्दसि' इति शपो लुगभावः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। पूर्वपदस्यासमानवाक्यस्थत्वात् निघाताभावः। जयाः। जयतेर्लेटि आडागमः। पूर्ववत्स्वरः॥

निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः।

सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम्॥ ४॥

निः। इन्द्र। भूम्याः। अधि। वृत्रम्। जघन्थ। निः। दिवः।

सृज। मरुत्वतीः। अव। जीवऽधन्याः। इमाः। अपः। अर्चन्। अनु। स्वऽराज्यम्॥४॥

हे vइन्द्र vभूम्याः vअधि भूलोकस्योपरि vवृत्रं vनिः vजघन्थ निःशेषेण हतवानसि। तथा vदिवः द्युलोकात् vनिः जघन्थ। हत्वा च vइमाः vअपः वृष्ट्युदकानि vअव vसृज [अधः पातय।]

---

१. क्ष-ट-ढ-न-स—इन्द्र वज्रिन् वज्रवन्। २. क्ष-ट-ढ—यद्वृत्तयोगान्निघाताभावः। ३. क्ष-ट-ढ—तदनन्तरम्।

कीदृशीरपः[1] । ᵛमरुत्वतीः मरुद्भिः संयुक्ताः ᵛजीवधन्याः जीवाः प्राणिनो धन्यास्तृप्ता याभिस्ताः । अन्यत् समानम् ॥

इन्द्रो॑ वृ॒त्रस्य॒ दोध॑तः॒ सानुं॒ वज्रे॑ण हीळि॒तः ।
अ॒भि॒क्रम्याव॑ जिघ्नते॒ऽपः सर्मा॑य चो॒दय॒न्नर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ५ ॥

इन्द्रः॑ । वृ॒त्रस्य॑ । दोध॑तः । सानु॑म् । वज्रे॑ण । ही॒ळि॒तः ।
अ॒भि॒ऽक्रम्य॑ । अव॑ । जि॒घ्न॒ते॒ । अ॒पः । सर्मा॑य । चो॒दय॑न् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥५॥

ᵛहीळितः क्रुद्धः ᵛइन्द्रः ᵛअभिक्रम्य आभिमुख्येन गत्वा ᵛदोधतः भृशं कम्पमानस्य ᵛवृत्रस्य ᵛसानुं समुच्छ्रितं हनुप्रदेशं ᵛवज्रेण ᵛअव ᵛजिघ्नते प्रहरति । किं कुर्वन् । ᵛअपः वृष्ट्युदकानि ᵛसर्माय सरणाय निर्गमनाय ᵛचोदयन् प्रेरयन् ॥ दोधतः । ‘ धूञ् कम्पने ’ । अस्मात् यङ्लुगन्तात् शतरि अन्त्यलोपश्छान्दसः । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । हीळितः । ‘ हेडृ होडृ अनादरे ’ । ‘ हेळते ’ ( नि. २. १२. २ ) इत्येतत् क्रुध्यतिकर्मसु पठितम् । अस्मान्निष्ठायां वर्णव्यापत्त्या ईकारः । जिघ्नते । हन्तेर्लेटि व्यत्ययेन आत्मनेपदं बहुवचनं च । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । ‘ इत् ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति अभ्यासस्य इत्वम् । ‘ गमहन॰ ’ इत्यादिना उपधालोपः । समाय । ‘ सृ गतौ ’ । ‘ अर्तिस्तुसु॰ ’ इत्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥　　॥ २९ ॥

अधि॒ सानौ॒ नि जि॑घ्नते॒ वज्रे॑ण श॒तप॑र्वणा ।
म॒न्दा॒न इन्द्रो॒ अन्ध॑सः॒ सखि॑भ्यो गा॒तुमि॑च्छ॒त्यर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ६ ॥

अधि॑ । सानौ॑ । नि । जि॒घ्न॒ते॒ । वज्रे॑ण । श॒तऽप॑र्वणा ।
म॒न्दा॒नः । इन्द्रः॑ । अन्ध॑सः । सखि॑ऽभ्यः । गा॒तुम् । इ॒च्छ॒ति॒ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥६॥

इन्द्रः ᵛशतपर्वणा शतसंख्याकधाराभिर्युक्तेन ᵛवज्रेण ᵛसानौ ᵛअधि ᵛनि ᵛजिघ्नते । अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स च ᵛइन्द्रः ᵛमन्दानः मन्दमानः स्तूयमानः सन् ᵛसखिभ्यः समानख्यानेभ्यः स्तोतृभ्यः ᵛअन्धसः अन्नस्य ᵛगातुं मार्गमुपायम् ᵛइच्छति । अन्यत् पूर्ववत् ॥ मन्दानः । ‘ मदि स्तुतौ ’ । कर्मणि शानचि यक् । ‘ छन्दस्युभयथा ’ इति शानच आर्धधातुकत्वात् अतोलोपयलोपौ । अनुदात्तेतः परत्वात् शानचो लसार्वधातुकानुदात्तत्वे सति यक एवोदात्तत्वम् । अनुदात्ते शानचि तस्य यको लोपे सति उदात्तनिवृत्तिस्वरेण शानच उदात्तत्वं[2] प्राप्नोति[2] । एवं तर्हि शानच आर्धधातुकत्वादेव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एवावशिष्यते ॥

---

१. क्ष–कीदृश्य आपः ।　२. क्ष-ट-ढ–उदात्तत्वम् । नन्वेवमादेरनुदात्तस्य उदात्तत्वं प्राप्नोति ।

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥ ७ ॥

इन्द्र । तुभ्यम् । इत् । अद्रिऽवः । अनुत्तम् । वज्रिन् । वीर्यम् ।
यत् । ह । त्यम् । मायिनम् । मृगम् । तम् । ऊँ इति । त्वम् । मायया ।
अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥ ७ ॥

अद्रिरिति मेघनाम । हे ᵛअद्रिवः वाहनरूपमेघयुक्त ᵛवज्रिन् वज्रवन् ᵛइन्द्र ᵛतुभ्यमित् षष्ठ्यर्थे[1] चतुर्थी[1] । तवैव ᵛवीर्यं सामर्थ्यम् ᵛअनुत्तं शत्रुभिरतिरस्कृतम् । ᵛयद्ध यस्मात् खलु ᵛमायिनं मायाविनं ᵛत्यं[2] तं प्रसिद्धं वञ्चयितारम्[2] । लोकोपद्रवकारिणमित्यर्थः । ᵛमृगं मृगरूपमापन्नं ᵛतं वृत्रं ᵛत्वम् अपि ᵛमायया एव ᵛअवधीः हतवानसि ॥ अनुत्तम् । 'नसत्तनिषत्त°' इति निपातनात् निष्ठानत्वाभावः । अवधीः । हन्तेः 'लुङि च' इति वधादेशः । स चादन्तः । तस्य अतो लोपे सति स्थानिवद्भावात् सिचि वृद्ध्यभावः ॥

वि ते वज्रासो अस्थिरन्नवतिं नाव्या३ अनु ।
महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ॥ ८ ॥

वि । ते । वज्रासः । अस्थिरन् । नवतिम् । नाव्याः । अनु ।
महत् । ते । इन्द्र । वीर्यम् । बाह्वोः । ते । बलम् । हितम् । अर्चन् । अनु । स्वऽराज्यम् ॥८॥

हे इन्द्र ᵛते तव ᵛवज्रासः वज्राः त्वत्सकाशान्निर्गतान्यायुधानि ᵛनाव्याः नावा तार्याः ᵛनवतिं नवतिसंख्याका वृत्रेण निरुद्धा नदीः ᵛअनु उपलक्ष्य ᵛवि ᵛअस्थिरन् विविधम् अस्थिषत । सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः । किं च ᵛइन्द्र ᵛते तव ᵛवीर्यं ᵛमहत् प्रभूतम् । अन्यैरजेयमित्यर्थः । तथा ᵛते ᵛबाह्वोः त्वदीययोर्हस्तयोः ᵛबलं ᵛहितं निहितम् । त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः । अन्यत् पूर्ववत् ॥ अस्थिरन् । तिष्ठतेर्लुङि 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'मन्त्रे घस°' इति च्लेर्लुक् । 'स्थाघ्वोरिच्च' (पा. सू. १. २. १७) इति इत्वम् । व्यत्ययेन झस्य रनादेशः । नाव्याः । 'नौवयोधर्म°' (पा. सू. ४. ४. ९१) इत्यादिना यत् । 'यतोऽनावः' इति पर्युदासात् 'तित्स्वरितम्' इति स्वरितत्वम् । बाह्वोः । 'उदात्तयणः°' इति विभक्त्युदात्तत्वम् ॥

---

१. क्ष–'षष्ठ्यर्थे चतुर्थी' नास्ति । २. क्ष-ट-ढ–त्यं त्याजयितारम् ।

सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।
शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यम् ॥ ९ ॥

सहस्रम् । साकम् । अर्चत । परि । स्तोभत । विंशतिः ।
शता । एनम् । अनु । अनोनवुः । इन्द्राय । ब्रह्म । उत्ऽयतम् । अर्चन् । अनु । स्वऽराज्यम् ॥९॥

सहस्रं सहस्रसंख्याका मनुष्याः साकमर्चत एनमिन्द्रं युगपदेवापूजयन् । तथा[1] विंशतिः । षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विंशतिसंख्याकाः । तेषां या विंशतिसंख्या सा परि ष्टोभत परितः सर्वतोऽस्तौत् । तथा च[2] शता शतसंख्याका ऋषयः एनम् इन्द्रम् अन्वनोनवुः पुनः पुनरस्तुवन् । अस्मा एव इन्द्राय ब्रह्म हविर्लक्षणमन्नम् उद्यतं दातुमूर्ध्वं धृतम् । अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः । अन्यत् पूर्ववत् ॥ परि ष्टोभत । स्तोभतिः स्तुतिकर्मा । 'उपसर्गात्सुनोति°' इति षत्वम् । अनोनवुः । 'णु स्तुतौ' । अस्मात् यङ्लुगन्तात् लुङि 'सिजभ्यस्तविदिभ्यश्च' इति झेः उसादेशः । उद्यतम् । 'यम उपरमे' । उत्पूर्वादस्मात् कर्मणि निष्ठा । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

इन्द्रो वृत्रस्य तविषीं निरहन्त्सहसा सहः ।
महत्तदस्य पौंस्यं वृत्रं जघन्वाँ असृजदर्चन्ननु स्वराज्यम् ॥ १० ॥

इन्द्रः । वृत्रस्य । तविषीम् । निः । अहन् । सहसा । सहः ।
महत् । तत् । अस्य । पौंस्यम् । वृत्रम् । जघन्वान् । असृजत् । अर्चन् । अनु । स्वऽराज्यम् ॥१०॥

इन्द्रो वृत्रस्य असुरस्य तविषीं बलं स्वकीयेन बलेन निरहन् हतवान् । सहसा सहनेन अभिभवसाधनेनायुधेन सहः अभिभवसाधनं वृत्रायुधं निरहन् । अस्य इन्द्रस्य तत् पौंस्यं बलं महत् अतिप्रौढम् । यस्मादयं वृत्रं जघन्वान् हतवान् हत्वा च तन्निरुद्धा अपः असृजत् तस्मात् वृत्रान्निरगमयत् । अन्यत् पूर्ववत् ॥ पौंस्यम् । 'पुंस अभिवर्धने' । चुरादिः । 'अचो यत्' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । जघन्वान् । हन्तेर्लिटः क्वसुः । 'विभाषा गमहनविद°' इति इटः विकल्पादभावः । 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हन्तेर्हकारस्य घत्वम् ॥ ॥ ३० ॥

इमे चित्तव मन्यवे वेपेते भियसा मही ।
यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ॥ ११ ॥

इमे इति । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति ।
यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥११॥

---

१. क्ष-ट-ढ-'तथा' नास्ति । २. क्ष-स-'च' नास्ति ।

ᵛमही महस्यौ ᵛइमे द्यावापृथिव्यावपि हे इन्द्र ᵛतव ᵛमन्यवे त्वदीयकोपात् ᵛभियसा भीत्या ᵛवेपेते कम्पेते । हे ᵛवज्रिन् वज्रवन् ᵛइन्द्र ᵛमरुत्वान् मरुद्भिर्युक्तस्त्वम् ᵛओजसा बलेन ᵛयत् यदा ᵛवृत्रं ᵛअवधीः तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः ॥ वेपेते । 'टुवेपृ कम्पने' । भियसा । 'ञिभी भये' । औणादिकः कसिप्रत्ययः ॥

न वेप॑सा न त॑न्य॒तेन्द्रं॑ वृ॒त्रो वि बी॑भयत् ।
अ॒भ्ये॑नं॒ वज्र॑ आय॒सः स॒हस्र॑भृष्टिराय॒तार्च॑न्न॒नु॑ स्व॒राज्य॑म् ॥ १२ ॥

न । वेप॑सा । न । त॒न्य॒ता । इन्द्र॑म् । वृ॒त्रः । वि । बी॒भ॒य॒त् ।
अ॒भि । ए॒न॒म् । वज्रः॑ । आ॒य॒सः । स॒हस्र॑ऽभृष्टिः । आ॒य॒त॒ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १२ ॥

ᵛवृत्रः ᵛइन्द्रं ᵛवेपसा स्वकीयेन वेपनेन कम्पनेन ᵛन ᵛवि ᵛबीभयत् भीतं नाकरोत् । तथा ᵛतन्यता स्वकीयेन घोरेण गर्जनशब्देन ᵛन वि बीभयत् । अपि च इन्द्रेण विसृष्टः ᵛआयसः अयोमयः ᵛसहस्रभृष्टिः अनेकाभिर्धाराभिर्युक्तः ᵛवज्रः ᵛएनं वृत्रम् ᵛअभि ᵛआयत हन्तुमाभिमुख्येनागच्छत् । अन्यत् पूर्ववत् ॥ तन्यता । 'स्तन शब्दे' । 'ऋतन्यञ्जि°' इत्यादिना तनोतेर्विधीयमानो यतुच् बहुलवचनादस्मादपि भवति । अत एव सलोपश्च । 'सुपां सुलुक्°' इति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । बीभयत् । 'ञिभी भये' । हेतुमति णिच् । अत्र वेपस्तन्यतुभ्यां भयं न हेतोर्वृत्रादिति हेतुभयाभावात् 'बिभेतेर्हेतुभये' ( पा. सू. ६. १. ५६ ) इति आत्वाभावः। ण्यन्तात् लुङि च्लेश्चङादि । आयत । 'अय पय गतौ' । भौवादिरात्मनेपदी ॥

यद्वृ॒त्रं तव॑ चा॒शनिं॒ वज्रे॑ण स॒मयो॑धयः ।
अहि॑मिन्द्र॒ जिघां॑सतो दि॒वि ते॑ बद्बधे॒ शवोऽर्च॑न्न॒नु॑ स्व॒राज्य॑म् ॥ १३ ॥

यत् । वृ॒त्रम् । तव॑ । च॒ । अ॒शनि॑म् । वज्रे॑ण । स॒म्ऽअयो॑धयः ।
अहि॑म् । इ॒न्द्र॒ । जिघां॑सतः । दि॒वि । ते॒ । ब॒द्ब॒धे॒ । शवः॑ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १३ ॥

हे ᵛइन्द्र ᵛयत् यदा ᵛवृत्रं ᵛतव हननार्थं तेन सृष्टाम् ᵛअशनिं ᵛच त्वं ᵛवज्रेण ᵛसमयोधयः सम्यक् प्राहार्षीः तदानीम् ᵛअहिम् आगत्य हन्तारं वृत्रं ᵛजिघांसतः हन्तुमिच्छतः ᵛते तव ᵛशवः बलं ᵛदिवि ᵛबद्बधे बद्धमनुस्यूतं व्याप्तमासीत् । शिष्टं पूर्ववत् ॥ जिघांसतः । हन्तेरिच्छार्थे सनि 'अज्झनगमां सनि' ( पा. सू. ६. ४. १६ ) इति उपधादीर्घत्वम् । बद्बधे । 'बध बन्धने' । कर्मणि लिटि व्यत्ययेन हलादिशेषाभावः ॥

अ॒भि॒ष्ट॒ने ते॑ अद्रि॒वो॒ यत्स्था जग॑च्च रेजते ।
त्वष्टा॑ चि॒त्तव॑ म॒न्यव॒ इन्द्र॑ वेवि॒ज्यते॑ भि॒यार्च॑न्न॒नु॑ स्व॒राज्य॑म् ॥ १४ ॥

अ॒भि॒ऽस्त॒ने । ते॒ । अ॒द्रि॒ऽवः॒ । यत् । स्थाः । जग॑त् । च॒ । रे॒ज॒ते॒ ।
त्वष्टा॑ । चि॒त् । तव॑ । म॒न्यवे॑ । इन्द्र॑ । वे॒वि॒ज्यते॑ । भि॒या । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १४ ॥

हे अद्रिवः वज्रवन् इन्द्र ते तव अभिष्टने सिंहनादे सति स्थाः स्थावरं जगत् जङ्गमं च यत् अस्ति तदुभयं रेजते कम्पते । त्वष्टा चित् वज्रनिर्माता त्वष्टा च तव मन्यवे त्वदीयाय कोपाय भिया भीत्या वेविज्यते भृशं कम्पते । अन्यत् समानम् ॥ स्थाः । तिष्ठतेः ' क्विप् च ' इति क्विप् । वेविज्यते । ' ओविजी भयचलनयोः ' । अस्मात् क्रियासमभिहारे यङ् । ' सन्यङोः ' इति द्विर्भावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यङ एव स्वरः शिष्यते । इन्द्रेत्यस्य पादादौ वर्तमानस्य ' आमन्त्रितं पूर्वमविद्यमानवत् ' इति अविद्यमानवत्त्वे सति अस्य पादादित्वात् ' अपादादौ ' इति पर्युदासात् निघाताभावः ॥

नहि नु यादधीमसीन्द्रं को वीर्या परः ।

तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ॥ १५ ॥

नहि । नु । यात् । अधिऽइमसि । इन्द्रम् । कः । वीर्या । परः ।

तस्मिन् । नृम्णम् । उत । क्रतुम् । देवाः । ओजांसि । सम् । दधुः । अर्चन् । अनु । स्वऽराज्यम् ॥ १५ ॥

यात् यान्तं सर्वत्र व्याप्य वर्तमानमिन्द्रं नहि नु अधीमसि वयं न ह्यवगच्छामः । यतो वयमल्पाः । परः इत्येतत्सकारान्तमव्ययं वैदूर्यमाचष्टे । ' परो दिवा पर एना ' ( ऋ. सं. १०. ८२. ५ ) इति यथा । परः परस्तादतिदूरे मनुष्यैरनवगाह्ये स्थाने वीर्या वीर्येण सामर्थ्येन वर्तमानम् इन्द्रं कः मनुष्यो जानीयात् । न कोऽपीत्यर्थः । कस्मादिति चेत् अत्राह[1] तस्मिन् इति । यस्मात् तस्मिन् इन्द्रे देवाः नृम्णं धनं उत अपि च क्रतुं वीर्यकर्म ओजांसि बलानि च सं दधुः स्थापयांचक्रुः तस्मादित्यर्थः ॥ यात् । ' या प्रापणे ' । अस्मात् लटः शतृ । ' सुपां सुलुक्॰ ' इति द्वितीयाया लुक् । अधीमसि । ' इण् गतौ ' । इदन्तो मसिः । वीर्या । ' सुपां सुलुक्॰ ' इति तृतीयाया आकारः ॥

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।

तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥ १६ ॥

याम् । अथर्वा । मनुः । पिता । दध्यङ् । धियम् । अत्नत ।

तस्मिन् । ब्रह्माणि । पूर्वऽथा । इन्द्रे । उक्था । सम् । अग्मत । अर्चन् । अनु । स्वऽराज्यम् ॥ १६ ॥

अथर्वा एतत्संज्ञक ऋषिः पिता सर्वासां प्रजानां पितृभूतः मनुः च दध्यङ् अथर्वणः पुत्र एतत्संज्ञक ऋषिश्च यां धियम् अत्नत यत्कर्मातन्वत अकुर्वन् तस्मिन् कर्मणि यानि ब्रह्माणि हविर्लक्षणान्यन्नानि उक्था शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति तानि सर्वाणि तस्मिन् इन्द्रे समग्मत समगच्छन्त । तत्र दृष्टान्तः । पूर्वथा पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेन्द्रेण संगच्छन्ते तद्वत् । य इन्द्रः स्वराज्यं स्वस्य राजत्वम् अनु अर्चन् अनुपूजयन् । वृत्रवधादि-

---

१. क्ष—तत्राह ।

रूपेण कर्मणा स्वकीयमधिपतित्वं प्रकटयन्नित्यर्थः ॥ अत्नत । 'तनु विस्तारे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तनिपत्योश्छन्दसि' इति उपधालोपः । पूर्वथा । 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' ( पा. सू. ५. ३. १११ ) इति इवार्थे पूर्वशब्दात् थाल्प्रत्ययः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । उक्था । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । समग्मत । 'समो गम्यृच्छिभ्याम्' इति आत्मनेपदम् । लुङि 'मन्त्रे घस॰' इति च्लेर्लुक् । 'गमहन॰' इत्यादिना उपधाया लोपः ॥ ॥३१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्[1] । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते
माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके पञ्चमोऽध्यायः समाप्तः ॥

१. क्ष–विदारयन् ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
*दशतय्याः[1] पञ्चमोऽयमध्यायो व्याकृतः पुरा* ।
श्रीमता सायणार्येण षष्ठोऽध्यायोऽथ वर्ण्यते ॥

प्रथमे मण्डले त्रयोदशानुवाके सप्त सूक्तानि व्याकृतानि । ‘ इन्द्रो मदाय ’ इति नवर्चमष्टमं सूक्तम् । अत्रानुक्रम्यते—‘ इन्द्रो नव ’ इति । ‘ ऋषिश्चान्यस्मादृषेः ’ ( अनु. १२. २ ) इति परिभाषया रहूगणपुत्रस्य गोतमस्य अनुवृत्तेः अस्य[2] सूक्तस्य स ऋषिः[2] । पूर्वसूक्ते ‘ पाङ्क्तं हि ’ इत्युक्तत्वात् तुह्यादिपरिभाषयेदमुत्तरं च सूक्तं पाङ्क्तम् । अनादेशपरिभाषयेन्द्रो देवता ॥ पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्यशस्त्रे इदं सूक्तम् । सूत्रितं च–‘ प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम् ’ ( आश्व. श्रौ. ७. १२ ) इति । आरम्भणीये चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्रे ‘ इन्द्रो मदाय ’ इति आद्यस्तृचो वैकल्पिकः स्तोत्रियः । ‘ होत्रकाणाम् ’ इति खण्डे सूत्रितम्–‘ इन्द्रो मदाय वावृधे मदे मदे हि नो ददिः ’ ( आश्व. श्रौ. ७. ४ ) इति । महाव्रते निष्केवल्ये उत्तरपक्षे ‘ इन्द्रो मदाय ’ इत्येका शंसनीया । तथैव पञ्चमारण्यके सूत्रितम्— ‘ इन्द्रो मदाय वावृध इति पङ्क्तिः सूददोहाः ’ ( ऐ. आ. ५. २. २ ) इति ॥

**इन्द्रो॒ मदा॑य वावृधे॒ शव॑से वृत्र॒हा नृभिः॑ ।**

**तमिन्म॒हत्स्वा॒जिषू॒तेमर्भे॑ हवामहे॒ स वाजे॑षु॒ प्र नो॑ऽविषत् ॥ १ ॥**

इन्द्रः॑ । मदा॑य । व॒वृ॒धे॒ । शव॑से । वृ॒त्र॒ऽहा । नृ॒ऽभिः॑ । तम् । इत् । म॒हत्ऽसु॑ । आ॒जिषु॑ ।

उ॒त । ई॒म् । अर्भे॑ । ह॒वा॒म॒हे॒ । सः । वाजे॑षु । प्र । नः॒ । अ॒वि॒ष॒त् ॥ १ ॥

ᵛवृत्रहा वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता । यद्वा आवरकाणां शत्रूणां हन्ता ᵛइन्द्रो ᵛमदाय हर्षार्थं ᵛशवसे । बलनामैतत् । बलार्थं च ᵛनृभिः यज्ञस्य नेतृभिर्ऋत्विग्भिः ᵛववृधे स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते । ᵛतमित् तमेवेन्द्रं ᵛमहत्सु प्रभूतेषु ᵛआजिषु संग्रामेषु ᵛहवामहे अस्माकं रक्षणायाह्वयामहे । ᵛउत अपि च ᵛईम् एनम् ᵛअर्भे अल्पे संग्रामे हवामहे । अस्माभिराहूतः ᵛसः च इन्द्रः ᵛवाजेषु संग्रामेषु ᵛनः अस्मान् ᵛप्र ᵛअविषत् प्रावतु प्रकर्षेण रक्षतु ॥ ववृधे । वृधेः कर्मणि लिट्[3] । संहितायामभ्यासस्य ‘अन्येषामपि दृश्यते ’ इति दीर्घत्वम् । तुजादित्वे हि तूतुजान इतिवत् पदकाले दीर्घः श्रूयेत[4] । नृभिः । ‘सावेकाचः०’ इति प्राप्तस्य विभक्त्युदात्तत्वस्य ‘ नृ चान्यतरस्याम् ’ इति प्रतिषेधः । हवामहे । ह्वयतेर्लटि ‘ह्वः’ इति अनुवृत्तौ ‘ बहुलं छन्दसि ’ इति संप्रसारणम् । शपि गुणावादेशौ । अविषत् । ‘ अव रक्षणे ’ । लेटि

---

१. त-द-ध-ल-श-स–दाशतय्याः । * क्ष-ट-ढ–अष्टके प्रथमे दाशतय्यां पञ्चम ईरितः । २. क्ष-ट-ढ–स एव ऋषिः । ३. क्ष–लिटि । ४. च-न-श-स–श्रूयते ।

अडागमः । ‘ इतश्च लोपः° ’ इति इकारलोपः । ‘ सिब्बहुलं लेटि ’ इति सिप् । तस्य आर्धधातुकत्वात् वलादिलक्षण इट् ॥

असि हि वीर सेन्योऽसि भूरि परादुदिः ।
असि दुभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वुते भूरि ते वसु ॥ २ ॥

असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः ।
असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥२॥

हे वीर शत्रुक्षेपणकुशलेन्द्र त्वं सेन्यः असि सेनार्हो भवसि । त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः । हि यस्मादेवं तस्मात् भूरि प्रभूतं शत्रूणां धनं परादुदिः परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता असि भवसि । दभ्रस्य चित् । अल्पनामैतत् । अल्पस्यापि तव स्तोतुः वृधः वर्धयिता असि । तथा यजमानाय यागं कुर्वते सुन्वते सोमाभिषवं कुर्वते पुरुषाय शिक्षसि अपेक्षितं धनं ददासि । शिक्षतिर्दानकर्मा । यस्मात् ते तव वसु धनं भूरि बहुलमक्षयं धनं विद्यते तस्मात् ददासीति भावः ॥ परादुदिः । ‘ डुदाञ् दाने ’ । ‘ आदृगमहनजनः° ’ इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचने ह्रस्वत्वम् । ‘आतो लोप इटि च ’ इति आकारलोपः । वृधः । वृधेरन्तर्भावितण्यर्थात् इगुपधलक्षणः कः । सुन्वते । ‘ शतुरनुमः° ’ इति विभक्तेरुदात्तत्वम् ॥

यदुदीरत आजयो धृष्णवे धीयते धना ।
युक्ष्वा मदुच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३॥

यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना ।
युक्ष्व । मदऽच्युता । हरी इति । कम् । हनः । कम् । वसौ । दधः । अस्मान् । इन्द्र । वसौ । दधः ॥३॥

अत्रेदमाख्यानम्[3] । रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञां परैः सह युद्धे सति स ऋषिरनेन सूक्तेनेन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातम्— ‘ गोतमो ह वै राहूगण उभयेषां कुरुसृञ्जयानां पुरोहित आसीत् ’ इति । यत् यदा आजयः संग्रामाः उदीरते उद्गच्छन्ति उत्पद्यन्ते तदानीं धना धनं धृष्णवे यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै धीयते निधीयते । जयतो धनं भवतीत्यर्थः । हे इन्द्र त्वं तादृशेषु युद्धेषु प्रवृत्तेषु[2] मदच्युता शत्रूणां मदस्य गर्वस्य च्यावयितारौ हरी त्वदीयावश्वौ युक्ष्व रथे योजय । योजयित्वा च कं कंचित् राजानं तव परिचरणमकुर्वन्तं हनः हन्याः । कंचन त्वां परिचरन्तं वसौ वसुनि[3] धने दधः स्थापयसि । अतो जयपराजययोस्त्वमेव कारयितासि । तस्मात् हे इन्द्र अस्मान् अस्मदीयान् राज्ञः वसौ धने दधः स्थापय ॥ उदीरते । ‘ ईर गतौ ’ । आदादिकः । अनु

---

१. क्ष-ट-ढ—अत्रेदमुपाख्यानम् । २. क्ष—वृत्तेषु । ३. क्ष—‘ वसुनि ’ नास्ति ।

दात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। यद्वृत्तयोगादनिघातः[1]। धना। 'सुपां सुलुक्॰' इति डादेशः। युक्ष्व। 'युजिर् योगे'। अन्तर्भावितण्यर्थात् लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम्। हनः। हन्तेर्लेटि सिपि अडागमः। हनश्च दधश्चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेः निघातप्रतिषेधः। वसौ। लिङ्गव्यत्ययः। दधः। 'दध धारणे'। लेटि व्यत्ययेन परस्मैपदम्॥

क्रत्वा॑ म॒हाँ अ॑नुष्व॒धं भी॒म आ वा॑वृधे॒ शवः॑।
श्रि॒य ऋ॒ष्व उ॑पा॒कयो॒र्नि शि॒प्री हरि॑वान्दधे॒ हस्त॑यो॒र्वज्र॑माय॒सम्॥ ४॥

क्रत्वा॑। म॒हान्। अ॒नु॒ऽस्व॒धम्। भी॒मः। आ। व॒वृ॒धे॒। शवः॑।
श्रि॒ये। ऋ॒ष्वः। उ॒पा॒कयोः॑। नि। शि॒प्री। हरि॑ऽवान्। द॒धे॒। हस्त॑योः। वज्र॑म्। आ॒य॒सम्॥४॥

^क्रत्वा कर्मणा प्रज्ञया वा ^महान् सर्वाधिकः ^भीमः शत्रूणां भयंकरः इन्द्रः ^अनुष्वधम्। स्वधा इति अन्ननाम। स्वधायाम्। विभक्त्यर्थे अव्ययीभावः। सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः। ^शवः आत्मीयं बलम् ^आ ^ववृधे[2] आभिमुख्येन प्रावर्धयत्। तदनन्तरम् ^ऋष्वः दर्शनीयः ^शिप्री। शिप्रे हनू नासिके वा। तद्युक्तः ^हरिवान् हरिनामकाश्वोपेत इन्द्रः ^उपाकयोः अन्तिकनामैतत्। समीपवर्तिनोः ^हस्तयोः बाह्वोः ^आयसम् अयोमयं ^वज्रं ^श्रिये संपदर्थं ^नि ^दधे निदधाति स्थापयति[3]। सोमपानेन हृष्टः प्रबल इन्द्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः॥ क्रत्वा। 'जसादिषु च्छन्दसि वावचनम्' इति नाभावस्य विकल्पितत्वादभावः। आयसम्। 'तस्य विकारः' इति अण्प्रत्ययः॥

आ प॑प्रौ॒ पार्थि॑वं॒ रजो॑ बद्ब॒धे रो॑च॒ना दि॒वि।
न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑निष्य॒तेऽति॒ विश्वं॑ ववक्षिथ॥ ५॥

आ। प॒प्रौ॒। पार्थि॑वम्। रजः॑। ब॒द्ब॒धे॒। रो॒च॒ना। दि॒वि।
न। त्वाऽवा॑न्। इ॒न्द्र॒। कः। च॒न। न। जा॒तः। न। ज॒नि॒ष्य॒ते॒। अति॑। विश्व॑म्। व॒व॒क्षि॒थ॥५॥

इन्द्रः स्वतेजसा ^पार्थिवं पृथिव्याः संबन्धि वस्तुजातं[4] ^रजः अन्तरिक्षलोकं च ^आ ^पप्रौ आपूरयति। तथा ^दिवि द्युलोके ^रोचना रोचमानानि दीप्तानि नक्षत्राणि ^बद्बधे बबन्ध स्थापितवान्। अतो हे ^इन्द्र ^त्वावान् त्वत्सदृशः ^कश्चन ^न ^जातः नोऽत्पन्नोऽस्ति। ^न च ^जनिष्यते। उत्पत्स्यमानोऽपि नास्ति। तादृशस्त्वं ^विश्वं सर्वं रक्षितव्यं जगत् ^अति ^ववक्षिथ अतिशयेन वोढुमिच्छसि। सर्वस्य जगतो निर्वाहको भवसीत्यर्थः॥ पप्रौ। 'प्रा पूरणे'। लिटि 'आत औ णलः' (पा. सू. ७. १. ३४) इति औकारादेशः। पार्थिवम्। 'पृथिव्या ञाञौ' (पा. सू. ४. १. ८५. २)

---

१. क्ष-ट-ढ-यद्वृत्तान्नित्यमिति निघातप्रतिषेधः; स-यद्वृत्तयोगान्न निघातः। २. क्ष-स-वावृधे। ३. क्ष-'स्थापयति' नास्ति। ४. क्ष-ट-ढ-वस्तु।

इति अप्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । रजः । रजन्त्यस्मिन्[1] गन्धर्वादय इति रजः अन्तरिक्षम् । ‘ रञ्ज रागे ’ । असुनि ‘ रजकरजनरजःसूपसंख्यानम् ’ ( का. ६. ४. २४. ४ ) इति नलोपः । बद्धधे । ‘ बध बन्धने ’ । लिटि व्यत्ययेन हलादिशेषाभावः । एकहल्मध्यगतत्वाभावात् एत्वाभ्यासलोपावपि न स्तः । पादादित्वात् निघाताभावः । त्वावान् । ‘ वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ’ इति वतुप् । ‘ आ सर्वनाम्नः ’ इति आत्वम् । ववक्षिथ । ‘ वह प्रापणे ’ । अस्मात् इच्छासनि ‘ सन्यतः ’ इति इत्वस्य ‘ सर्वे विधयश्छन्दसि विकल्प्यन्ते ’ इति अभावः । सनन्तात् लिटि ‘ °अमन्त्रे° ’ इति निषेधात् आम्प्रत्ययाभावः ॥ ॥ ५ ॥

यो अर्यो मर्तभोजनं परादर्दाति दाशुषे ।
इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरिं ते वसु भक्षीय तव राधसः ॥ ६ ॥

यः । अर्यः । मर्तऽभोजनम् । पराऽददाति । दाशुषे ।
इन्द्रः । अस्मभ्यम् । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥ ६ ॥

<sup>v</sup>अर्यः स्वामी पालयिता <sup>v</sup>यः इन्द्रः <sup>v</sup>मर्तभोजनं सर्वैर्मनुष्यैरुपभोज्यमन्नं <sup>v</sup>दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय <sup>v</sup>पराददाति प्रयच्छति सः <sup>v</sup>इन्द्रः <sup>v</sup>अस्मभ्यं <sup>v</sup>शिक्षतु तादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतम् । हे इन्द्र अस्मभ्यं दातुं धनं <sup>v</sup>वि <sup>v</sup>भज विभक्तं कुरु । यतः <sup>v</sup>ते तव <sup>v</sup>वसु धनं <sup>v</sup>भूरि बहुलमसंख्यातं अतः <sup>v</sup>तव <sup>v</sup>राधसः धनस्यैकदेशं <sup>v</sup>भक्षीय भजेय प्राप्नुयाम् ॥ पराददाति । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । ‘ तिङि चोदात्तवति ’ इति गतेः अनुदात्तत्वम् । दाशुषे । ‘ दाश्ट दाने ’ । ‘ दाश्वान् साह्वान्° ’ इति क्वसुप्रत्ययान्तो निपात्यते । चतुर्थ्येकवचने ‘ वसोः संप्रसारणम् ’ इति संप्रसारणम् । ‘ शासिवसिघसीनां च ’ इति षत्वम् । भक्षीय । ‘ भज सेवायाम् ’। प्रार्थनायां लिङि तस्य ‘ छन्दस्युभयथा ’ इति आर्धधातुकत्वात् शबभावः सलोपाभावश्च । ‘ एकाचः ’ इति इट्प्रतिषेधः । आगमानुदात्तत्वे प्रत्ययस्वर एव[2] शिष्यते । पूर्वपदस्यासमानवाक्यगतत्वात् निघाताभावः ‘ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ’ इति वचनात् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनो ‘ मदेमदे हि नो ददिः ’ इति वैकल्पिकोऽनुरूपस्तृचः । ‘ होत्रकाणाम् ’ इति खण्डे सूत्रितम्—‘ मदेमदे हि नो ददिः सुरूपकृत्नुमूतये ’ ( आश्व. श्रौ. ७. ४ ) इति ॥

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥ ७ ॥

मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः ।
सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥ ७ ॥

---

१. क्ष-रजन्तेऽस्मिन् । २. क्ष-‘ एव ’ नास्ति ।

ᵛमदेमदे सोमपानेन हर्षेहर्षे सति ᵛऋतुक्रतुः ऋजुकर्मा स इन्द्रः ᵛनः अस्मभ्यं ᵛगवां ᵛयूथा यूथानि ᵛददिः ᵛहि गोयूथानां दाता खलु। हे इन्द्र स त्वं ᵛपुरु पुरूणि प्रभूतानि ᵛशता शतसंख्याकानि अपरिमितानीत्यर्थः। ᵛवसु वसूनि धनानि ᵛउभयाहस्त्या उभाभ्यां हस्ताभ्यां ᵛसं ᵛगृभाय अस्मभ्यं दातुं सम्यग्गृहाण[1]। ᵛशिशीहि अस्मांस्तीक्ष्णीकुरु। निशितबुद्धियुक्तान् कुर्वित्यर्थः। ᵛरायः धनानि हस्तयोः स्थितानि ᵛआ ᵛभर आहर प्रयच्छ॥ ददिः। 'डुदाञ् दाने'। 'आदृगमहनजनः°' इति किप्रत्ययः। यूथा। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। गवाम्। 'सावेकाचः°' इति प्राप्तस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः। गृभाय। 'ग्रह उपादाने'। लोटि हौ 'छन्दसि शायजपि' (पा. सू. ३. १. ८४) इति श्नाप्रत्ययस्य शायजादेशः। 'हृग्रहोर्भः°' इति भत्वम्। उभयाहस्त्या। उभयहस्तशब्दादुत्तरस्य तृतीयाद्विवचनस्य 'सुपां सुलुक्°' इति ड्यादेशः। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्। समासान्तोदात्तत्वे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। वसु। 'सुपां सुलुक्°' इति विभक्तेर्लुक्। शिशीहि। 'शो तनूकरणे'। 'बहुलं छन्दसि' इति विकरणस्य श्लुः। 'आदेचः°' इति आत्वम्। 'इत्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। 'ई हल्यघोः' इति धातोः ईत्वम्। पादादित्वात् निघाताभावः। रायः। 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम्॥

मादयस्व सुते सचा शवसे शूर राधसे।

विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव॥ ८॥

मादयस्व। सुते। सचा। शवसे। शूर। राधसे।

विद्म। हि। त्वा। पुरुऽवसुम्। उप। कामान्। ससृज्महे। अथ। नः। अविता। भव॥८॥

हे ᵛशूर शौर्यवन्निन्द्र ᵛसुते सोमेऽभिषुते सति आगत्य ᵛसचा अस्माकं सखा सन् ᵛमादयस्व तेन सोमेन तृप्तो भव। किमर्थम्। ᵛशवसे बलार्थं ᵛराधसे अस्माकं धनार्थं च। ᵛत्वा त्वां ᵛपुरूवसुं बहुधनं ᵛविद्म ᵛहि वयं जानीमः खलु। अतः अस्मदीयान् ᵛकामान् मात्रा गवा वत्सानिव त्वया ᵛउप ᵛससृज्महे हि त्वया खल्वेकीकुर्मः। ᵛअथ अनन्तरं ᵛनः अस्माकम् ᵛअविता अभिलषितफलप्रदानेन रक्षिता ᵛभव॥ मादयस्व। 'मद तृप्तियोगे'। चुरादिरात्मनेपदी। अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते। ससृज्महे। 'सृज विसर्गे'। 'बहुलं छन्दसि' इति विकरणस्य श्लुः। प्रत्ययाद्युदात्तत्वम्। अत्रापि हिशब्दानुषङ्गात् 'छन्दस्यनेकमपि साकाङ्क्षम्' (पा. सू. ८. १. ३५) इति निघातप्रतिषेधः॥

एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम्।

अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर॥ ९॥

एते। ते। इन्द्र। जन्तवः। विश्वम्। पुष्यन्ति। वार्यम्।

अन्तः। हि। ख्यः। जनानाम्। अर्यः। वेदः। अदाशुषाम्। तेषाम्। नः। वेदः। आ। भर॥९॥

---

1. क्ष–संगृह्णाण।

हे ᵛइन्द्र ᵛते तव स्वभूताः ᵛएते ᵛजन्तवः यजमानलक्षणा जनाः ᵛविश्वं सर्वं ᵛवार्यं सर्वैः संभजनीयं हविः ᵛपुष्यन्ति वर्धयन्ति । ᵛअदाशुषां हविषामदातॄणां ᵛजनानाम् ᵛअन्तः मध्ये विद्यमानं ᵛवेदः धनम् ᵛअर्यः सर्वेषां स्वामी त्वं ᵛख्यः ᵛहि पश्यसि हि जानासीत्यर्थः। ᵛतेषाम् अयजमानानां ᵛवेदः धनं ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर प्रयच्छेति यावत्। अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वात् व्यर्थमेव भवेत्। अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः[1] ॥ ख्यः । ' ख्या प्रकथने ' । अयं दर्शनार्थोऽपि । वर्तमाने छान्दसो लुङ् । ' अस्यतिवक्ति° ' इत्यादिना च्लेः अङादेशः । ' आतोलोप इटि च ' इति आकारलोपः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । ' हि च ' इति निघातप्रतिषेधः ॥ ॥ २ ॥

' उपो षु ' इति षडृचं नवमं सूक्तं गोतमस्यार्षमैन्द्रम् । अन्त्या जगती । आद्याः[2] पङ्क्तयः । अनुक्रान्तं च –' उपो षु षड् जगत्यन्तम् ' इति । सूक्तविनियोगो लैङ्गिकः ॥ षोडशिशस्त्रे आद्या ' सुसंदृशम् ' इत्यादिके द्वे ऋचौ च विनियुज्यन्ते । ' अथ षोडशी ' इति खण्डे सूत्रितम्–' उपो षु शृणुही गिरः सुसंदृशं त्वा वयं मघवन्नित्येका द्वे च पङ्क्ती ' ( आश्व. श्रौ. ६. २ ) इति ॥

उपो॒ षु शृ॑णु॒ही गिरो॒ मघ॑व॒न्मात॑थाइव ।
य॒दा नः॑ सू॒नृता॑वतः॒ कर॒ आद॒र्थया॑स॒ इद्योजा॒ न्विन्द्र॑ ते॒ हरी॑ ॥ १ ॥

उपो॒ इति॑ । सु । शृ॒णु॒हि । गिरः॑ । मघ॒ऽवन् । मा । अत॑थाःऽइव ।
य॒दा । नः॒ । सू॒नृता॑ऽवतः । करः॑ । आत् । अ॒र्थया॑से । इत् । योज॑ । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इति॑ ॥१॥

हे ᵛमघवन् धनवन्निन्द्र ᵛगिरः अस्मदीयाः स्तुतीः ᵛउपो उपैव ᵛसु ᵛशृणुहि उपगत्य सम्यक् शृणु । ᵛअतथाइव पूर्वं यथाविधस्त्वं तद्विपरीतः ᵛमा भूः। अस्मासु पूर्वं यथानुग्रहबुद्धियुक्तस्तथाविध एव भवेत्यर्थः। अपि च ᵛनः अस्मान् ᵛसूनृतावतः। प्रियसत्यात्मिका वाक् सूनृता । तया स्तुतिरूपया वाचा युक्तान् ᵛयदा ᵛकरः करोषि ᵛआत् अनन्तरं त्वमपि ᵛअर्थयासे ᵛइत् अर्थयसे एव याचयसे[3] एव न तूदास्से । अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः। अतो हे ᵛइन्द्र ᵛते ᵛहरी त्वदीयावश्वौ ᵛनु क्षिप्रं ᵛयोज रथे योजय॥ शृणुहि । ' उतश्च प्रत्ययाच्छन्दसि वावचनम् ' इति वचनात् ' उतश्च प्रत्ययात्° ' इति हेः लुगभावः । अतथाइव । तथेवाचरति तथाति । ' सर्वप्रातिपदिकेभ्य इत्येके ' (का. ३. १. ११. २) इति क्विप् । तथातेः अप्रत्ययः । न तथा इव अतथाइव । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । करः । ' डुकृञ् करणे ' । लुङि ' कृमृदृरुहिभ्यश्छन्दसि ' इति च्लेः अङादेशः । ननु अङः सतिशिष्टत्वात् चित्स्वरेण[4] अन्तोदात्तेन भवितव्यम् । तर्हि लङि व्यत्ययेन शप् । ननु ' डुकृञ् करणे ' इति भूवादौ पठ्यते । अतो व्यत्ययः कस्मात् क्रियते इति चेत् नैवम् । यस्मादस्य धातोस्तत्र पाठः अनार्षः । तथा हि–' कः करत्करति° ' इत्यत्र यदाहतुः न्यासकारहरदत्तौ व्यत्ययेन शप् इति तस्मादस्य धातोर्भूवादौ पाठो नास्तीति गम्यते । किंच यद्ययं पठ्येत करत् इत्येवमादिरूपसिद्ध्यर्थं ' कृमृदृरुहिभ्यश्छन्दसि ' इति करोतेः अङ्विधानमनर्थकं स्यात् । अस्मात् लङि शपि अस्य रूपस्य सिद्धिः[5] । लङ्लुङोरर्थभेदात् लुङि एतद्रूपसिद्धये कर्तव्यम् अङ्विधानमिति चेन्न । ' छन्दसि लुङ्लङ्लिटः ' इति

१. क्ष–तात्पर्यम् । २. क्ष–अन्याः । ३. क्ष–न–स–याचसे । ४. क्ष–तत्स्वरेण । ५. क्ष–ट–ढ–सिद्धेः ।

लुङादीनामेकत्र विधानेन अर्थभेदाभावात् इत्यनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः । अतो व्यत्ययेन इति सिद्धम् । अर्थयासे । 'अर्थ याच्ञायाम्' । चुरादिरात्मनेपदी । लेटि आडागमः । योज । 'युजिर् योगे' । ण्यन्तात् लोटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २ ॥

अक्षन् । अमीमदन्त । हि । अव । प्रियाः । अधूषत ।
अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति ॥२॥

हे 'इन्द्र त्वया दत्तानि अन्नानि 'अक्षन् यजमाना भुक्तवन्तः । भुक्त्वा च 'अमीमदन्त 'हि तृप्ताश्चासन् । 'प्रियाः स्वकीयास्तनूः 'अव 'अधूषत अकम्पयन् । अतिशयितरसास्वादनेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन् । तदनन्तरं 'स्वभानवः स्वायत्तदीप्तयः 'विप्राः मेधाविनस्ते 'नविष्ठया नवितृतमया 'मती मत्या स्तुत्या 'अस्तोषत अस्तुवन् । अन्यत्पूर्ववद्योज्यम् ॥ अक्षन् । अदेर्लुङि 'लुङ्सनोर्घस्लृ' ( पा. सू. २. ४. ३७ ) इति घस्लादेशः । 'मन्त्रे घस॰' इत्यादिना च्लेर्लुक् । 'गमहन॰' इत्यादिना उपधालोपः । 'खरि च' इति चर्त्वम् । 'शासिवसिघसीनां च' इति षत्वम् । अडागम उदात्तः । अमीमदन्त । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी । लुङि च्लेः चङि णिलोपोपधाह्रस्वत्वद्विर्भावसन्वद्भावेत्वदीर्घाः। अधूषत । 'धूञ् कम्पने' । लुङि सिचि व्यत्ययेन गुणाभावः । यद्वा 'छन्दस्युभयथा' इति सिचः सार्वधातुकत्वेन ङित्त्वात् 'क्ङिति च' इति प्रतिषेधः । अथवा 'धू विधूनने' । तौदादिकः । कुटादिः । अस्मात् कर्मणि लुङि 'गाङ्कुटादिभ्यः॰' इति सिचो ङित्त्वात् गुणाभावः । नविष्ठया । 'णु स्तुतौ' । करणभूताया अपि स्तुतेः स्वव्यापारे कर्तृत्वात् तृच् । तदन्तात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । मती । 'सुपां सुलुक्॰' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । 'मन्त्रे वृषेषपचमन॰' इति क्तिनः उदात्तत्वम् ॥

महापितृयज्ञे 'सुसंदृशम्' इत्येषाहवनीयोपस्थाने विनियुक्ता । सूत्रितं च—'आहवनीयं सुसंदृशं त्वेति पङ्क्त्या' ( आश्व. श्रौ. २. १९ ) इति ॥

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥ ३ ॥

सुऽसंदृशम् । त्वा । वयम् । मघऽवन् । वन्दिषीमहि ।
प्र । नूनम् । पूर्णऽवन्धुरः । स्तुतः । याहि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ॥३॥

हे मघवन् इन्द्र सुसंदृशं सुष्ठु अनुग्रहदृष्ट्या सर्वस्य द्रष्टारं त्वा त्वां वयं वन्दिषीमहि स्तवामहि[1] । स्तुतिकर्तारो भूयास्मेत्याशास्यते । अस्माभिर्वन्दिभिः स्तुतः त्वं पूर्णवन्धुरः स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् वशान् कामयमानानन्यान् यजमानान्प्रति नूनं प्र याहि अवश्यं प्रतिष्ठस्व । योजेत्यादि पूर्ववत् ॥ वन्दिषीमहि । 'वदि अभिवादनस्तुत्योः' । आशीर्लिङ् । 'लिङाशिषि' ( पा. सू. ३. ४. ११६ ) इति तस्य आर्धधातुकत्वेन लसार्वधातुकस्वराभावे प्रत्ययाद्युदात्तत्वम् । मघवन् इत्यस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वे सति पादादित्वात् निघाताभावः ॥

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ४ ॥

सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् ।
यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ॥४॥

स घ स खल्विन्द्रः वृषणं कामाभिवर्षकं गोविदं गवां लम्भयितारं तं रथम् अधि तिष्ठाति ईदृशे रथेऽधितिष्ठतु आरूढो भवतु । हे इन्द्र यः रथः हारियोजनम् एतत्संज्ञकं धानामिश्रितं पूर्णं सोमेन पूर्णं पात्रं चिकेतति ज्ञापयति । तं रथमधितिष्ठेति पूर्वेणान्वयः । अधिष्ठाय च त्वदीयावश्वौ क्षिप्रं योजय ॥ घ । 'ऋचि तुनुघ°' इति दीर्घः । रथम् । 'अधिशीङ्स्थासां कर्म' ( पा. सू. १. ४. ४६ ) इति अधिकरणस्य कर्मसंज्ञा । तिष्ठाति । तिष्ठतेर्लेटि आडागमः । चिकेतति । 'कित ज्ञाने' । लेटि अडागमः । जुहोत्यादित्वात् शपः श्लुः । 'बहुलं छन्दसीति वक्तव्यम्' ( का. ७. ३. ८७. १ ) इति वचनात् 'नाभ्यस्तस्याचि पिति°' इति लघूपधगुणप्रतिषेधो न भवति ॥

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।
तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥ ५ ॥

युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो ।
तेन । जायाम् । उप । प्रियाम् । मन्दानः । याहि । अन्धसः । योज । नु । इन्द्र । ते । हरी इति ॥५॥

हे शतक्रतो बहुकर्मवन्निन्द्र[2] ते त्वदीये रथे दक्षिणः दक्षिणपार्श्वस्थोऽश्वः युक्तः अस्तु । उत अपि च सव्यः वामपार्श्वस्थोऽपि युक्तः अस्तु । तेन रथेन अन्धसः सोमलक्षणस्यान्नस्य पानेन मन्दानः मत्तस्त्वं प्रियां प्रीणयित्रीं जायाम् उप याहि । सा यत्र वर्तते तत्र गच्छेरित्यर्थः । तदर्थं हे इन्द्र त्वदीयावश्वौ रथे क्षिप्रं योजय । अनयोत्तरया च पीतसोमस्येन्द्रस्य स्वगृहं प्रति प्रस्थानं[3] प्रतिपाद्यते ॥ मन्दानः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । लिटः कानच् । द्विर्वचनप्रकरणे

१. क्ष-स्तवामः । २. क्ष-न-स-बहुकर्मन्निन्द्र । ३. क्ष-प्रस्थापनम् ।

'छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः। अन्धसः। 'अद भक्षणे'। 'अदेर्नुम् धश्च' (उ. सू. ४.६४५) इति असुन्, धातोः नुमागमो धकारान्तादेशश्च॥

अन्त्येष्वहःसु हारियोजनस्य 'युनज्मि' इत्येषा याज्या। सूत्रितं च—'युनज्मि ते ब्रह्मणा केशिना हरी इति याज्यानुवाक्ये अन्त्येष्वहःसु' (आश्व. श्रौ. ६. ११) इति॥

**युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः।**
**उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः॥ ६॥**

युनज्मि। ते। ब्रह्मणा। केशिना। हरी इति। उप। प्र। याहि। दधिषे। गभस्त्योः।
उत्। त्वा। सुतासः। रभसाः। अमन्दिषुः। पूषण्ऽवान्।
वज्रिन्। सम्। ऊँ इति। पत्न्या। अमदः॥ ६॥

हे इन्द्र ᵛकेशिना केशयुक्तौ शिखावन्तौ ᵛते ᵛहरी त्वदीयावश्वौ ᵛब्रह्मणा स्तोत्ररूपेण मन्त्रेण ᵛयुनज्मि रथे संयोजयामि। तेन रथेन ᵛउप ᵛप्र ᵛयाहि स्वगृहमुपगच्छ[3]। ᵛगभस्त्योः। बाहुनामैतत्। बाह्वोरश्वबन्धकान् रश्मीन् ᵛदधिषे धारयस्व। ᵛत्वा त्वां ᵛसुतासः यज्ञेऽभिषुताः सोमाः ᵛरभसाः वेगवन्तः। तीव्राः क्षिप्रं मदकारिण इत्यर्थः। ᵛउत् ᵛअमन्दिषुः उत्कृष्टमदयुक्तमकार्षुः। हे ᵛवज्रिन् अतस्त्वं स्वगृहं गत्वा ᵛपूषण्वान्। अत्र पूषन्शब्दः पुष्टौ वर्तते। 'पुष्टिर्वै पूषा पुष्टिमेवावरुन्धे' (तै. ब्रा. २. ७. २. १) इति श्रुतेः। सोमपानजनितया पुष्ट्या युक्तः सन् ᵛपत्न्या स्वभार्यया सह ᵛसमु ᵛअमदः सम्यगेव तृप्तो भव॥ केशिना। केशशब्दात् मत्वर्थीय इनिः। 'सुपां सुलुक्°' इति विभक्तेः आकारः। ᵛरभसाः। अर्शआदित्वात् अच्। अमन्दिषुः। व्यत्ययेन परस्मैपदम्। पूषण्वान्। 'पुष पुष्टौ'। 'श्वन्नुक्षन्°' इत्यादौ पूषन्निति निपात्यते। तच्चात्र भावसाधनं द्रष्टव्यम्। पूषास्यास्तीति पूषण्वान्। 'मादुपधायाः°' इति मतुपो वत्वम्। नलोपे 'अनो नुट्' (पा. सू. ८. २. १६) इति नुट्। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्। अमदः। 'मदी हर्षे'। 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङ्। श्यनि प्राप्ते व्यत्ययेन शप्॥　　॥ ३॥

'अश्वावति' इति षडृचं दशमं सूक्तं गोतमस्यार्षमैन्द्रं जागतम्। तथा चानुक्रान्तम्—'अश्वावति जागतम्' इति। अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिशस्त्रे इदं सूक्तम्। सूत्रितं च—'अश्वावति प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या' (आश्व. श्रौ. ६. ४) इति॥

**अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिन्द्र मर्त्यस्तवोतिभिः।**
**तमित्पृणक्षि वसुना भवीयसा सिन्धुमापो यथाभितो विचेतसः॥ १॥**

अश्वऽवति। प्रथमः। गोषु। गच्छति। सुप्रऽअवीः। इन्द्र। मर्त्यः। तव। ऊतिऽभिः।
तम्। इत्। पृणक्षि। वसुना। भवीयसा। सिन्धुम्। आपः। यथा। अभितः। विऽचेतसः॥१॥

---

३. क्ष–त्वं गृहमुपगच्छ।

हे इन्द्र यः मर्त्यः मनुष्यः तवोतिभिः त्वदीयैः रक्षणैः सुप्रावीः सुष्ठु प्ररक्षितो भवति स मर्त्यः अश्वावति बहुभिरश्वैर्युक्ते गृहे वर्तमानः गोषु प्राशस्त्येषु[1] प्रथमः गच्छति । सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः । त्वं तमित् तमेव पुरुषं भवीयसा बहुतरेण भवितृतमेन वा शतसहस्रादिसंख्यायुक्तेन वसुना धनेन पृणक्षि संपृक्तं संपूर्णं करोषि । तत्र दृष्टान्तः । विचेतसः विशिष्टज्ञानहेतुभूताः आपः यथा अभितः सर्वासु दिक्षु सिन्धुं समुद्रं पूरयन्ति तद्वत् ॥ अश्वावति । ‘ मन्त्रे सोमाश्व° ’ इति मतौ दीर्घत्वम् । सुप्रावीः । ‘ अवितृस्तृतन्त्रिभ्य ईः ’(उ. सू. ३. ४३८) इति अवतेः ईकारप्रत्ययः । ऊतिभिः । ‘ ऊतियूति° ’ इत्यादिना क्तिनः उदात्तत्वम् । पृणक्षि । ‘ पृची संपर्के ’ । रौधादिकः । भवीयसा । बहुशब्दात् ईयसुनि ‘ बहोर्लोपो भू च बहोः ’ इति बहुशब्दस्य भूभावः ईयसुनः ईकारलोपश्च । अत्र तु छान्दसत्वात् ईकारलोपो न क्रियते भूभावश्च क्रियते । अथवा भवितृशब्दात् ‘ तुश्छन्दसि ’ इति ईयसुन् । ‘ तुरिष्ठेमेयःसु ’ इति तृलोपः ॥

अपोनप्त्रीये होतृचमसेऽद्भिः पूर्यमाणे ‘ आपो न देवीः ’ इत्येषानुवक्तव्या । सूत्रितं च—‘आपो न देवीरुप यन्ति होत्रियमिति समाप्य’ ( आश्व. श्रौ. ५. १ ) इति । ब्राह्मणं च भवति[2]–‘ आपो न देवीरुप यन्ति होत्रियमिति होतृचमसे समवनीयमानास्वन्वाह ’ ( ऐ. ब्रा. २. २० ) इति ॥

**आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः ।**

**प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वराइव ॥ २ ॥**

आपः । न । देवीः । उप । यन्ति । होत्रियम् । अवः । पश्यन्ति । विऽततम् । यथा । रजः ।

प्राचैः । देवासः । प्र । नयन्ति । देवऽयुम् । ब्रह्मऽप्रियम् । जोषयन्ते । वराःऽइव ॥ २ ॥

होत्रियं होतुः स्वभूतं चमसं देवीः देव्यो द्योतमानाः आपो न यथा आपः उप यन्ति उपगच्छन्ति तद्वदुपरि वर्तमाना देवा एतमेव चमसम् अवः अवस्तात् पश्यन्ति । होतृचमसे अस्माकं सोमाभिषवाय आपः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाभूत् । तत्र दृष्टान्तः । विततं विस्तीर्णं रजः ज्योतिः सूर्यसंबन्धि यथा निरन्तरमवस्तात् पतति तद्वत् । देवयुं देवान् कामयमानमेतं चमसं प्राचैः प्राचीनं यद्वा प्राञ्चनैः प्रगमनैः उत्तरवेद्यभिमुखं होमकाले प्र णयन्ति । होमार्थे[3] प्रणीतं ब्रह्मप्रियं ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं संतृप्तं पूरितमित्यर्थः । जोषयन्ते सर्वे देवास्तं चमसं सेवन्ते । वराइव कन्यकाम् । यथा वरा ममेयं भविष्यति ममेयं भविष्यतीति कन्यकां सेवन्ते एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तन्ते इत्यर्थः । एवम् अपोनप्त्रीयविनियोगानुसारेण योजितं मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वात् । यदा तु रात्रिपर्यायेऽस्या विनियोगः तदा[4] त्वेवं[4] व्याख्येयम् । हे इन्द्र देव्य आपो यथा निम्नदेशमुपगच्छन्ति एवं देवास्त्वदीयं स्तोत्रं शुश्रूषमाणाः होत्रियं होतृसंबन्धि धिष्ण्यस्थानमुपगच्छन्ति । उपगत्य च अवस्तात् पश्यन्ति विततं[5] ज्योतिरिव । देवयुं देवानात्मन इच्छन्तमेतं[6] शंसितारमागताः सर्वे देवाः प्राचीनं प्र णयन्ति अग्रतो धारयन्ति । ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसन्तं वराः कन्यका इव सेवन्ते ॥ होत्रियम् । होतृशब्दात् तस्येदमर्थे घप्रत्ययः । अवः । ‘पूर्वाधरावराणामसि पुरधवश्चैषाम्’ इति

---

१. क्ष-ट-ढ-स–प्राशस्त्येषु पशुषु । २. च-छ-त-द-न-फ-श–‘ भवति ’ नास्ति । ३. क्ष–होमार्थम् । ४. क्ष–तदैवम् । ५. क्ष–विततं विततम् । ६. क्ष-न-स–इच्छन्तमेनम् ।

असिप्रत्ययान्तोऽन्तोदात्तः । प्राचैः । उच्चैर्नीचैरितिवदव्ययम् । यद्वा प्रपूर्वात् अञ्चतेः 'घजर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति परिगणनस्योपलक्षणार्थत्वात् भावे कप्रत्ययः । 'अनिदिताम्°' इति नलोपः । जोषयन्ते । 'जुषी प्रीतिसेवनयोः' । स्वात्मनः प्रयोज्यत्वात् हेतुमति णिच् ॥

प्रवर्ग्याभिष्टवे 'अधि द्वयोः' इत्येषा । 'स्पृष्टोदकम्' इति खण्डे सूत्रितम्—'अधि द्वयोरदधा उक्थ्यं वचः शुक्रं ते अन्यद्यजतं ते अन्यत्' ( आश्व. श्रौ. ४. ६ ) इति ॥ हविर्धान-प्रवर्तनेऽप्येषा । सूत्रितं च—'यमे इव यतमाने यदैतमधि द्वयोरदधा उक्थ्यं वच इत्यर्धर्चे आरमेत्' ( आश्व. श्रौ. ४. ९ ) इति ॥

अधि॒ द्वयो॑रदधा उ॒क्थ्यं१॒॑ वचो॑ य॒तस्रु॑चा मिथु॒ना या स॑प॒र्यतः॑ ।
अस॑यत्तो व्र॒ते ते॑ क्षेति॒ पुष्य॑ति भ॒द्रा श॒क्तिर्यज॑मानाय सुन्व॒ते ॥ ३ ॥

अधि॑ । द्वयोः॑ । अ॒द॒धाः॒ । उ॒क्थ्य॑म् । वचः॑ । य॒तऽस्रु॑चा । मि॒थु॒ना । या । स॒प॒र्यतः॑ ।
अस॑म्ऽयत्तः । व्र॒ते । ते॒ । क्षे॒ति॒ । पुष्य॑ति । भ॒द्रा । श॒क्तिः । यज॑मानाय । सु॒न्व॒ते ॥ ३ ॥

हे इन्द्र ᵛद्वयोः हविर्धानयोः ᵛउक्थ्यम् । उक्थं शस्त्रम् । तद्योग्यं ᵛवचः 'युजे वाम्' इत्यादिमन्त्ररूपं वचनम् ᵛअधि ᵛअदधाः निहितवानसि । ननु हविर्धानयोर्द्वयोः कथमेकमेव वचोऽधिनिधीयते इत्याशङ्क्य ब्राह्मणेनैवं व्याख्यातम्—'अधि द्वयोरदधा उक्थ्यं वच इति द्वयोर्ह्येतत्तृतीयं छदिरधिनिधीयत उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति' ( ऐ. ब्रा. १. २९ ) इति । तत्र यथा हविर्धानद्वये एकमेव तृतीयं छदिरधिनिधीयते एवं स्तोत्रमप्युभयोरेकं युक्तम् । उक्थं नाम यज्ञसंबन्धि शस्त्रं तद्योग्यं वचनमपि यज्ञियं कर्म । तस्य[1] यज्ञरूपयोर्हविर्धानयोर्यज्ञत्वसंपादनाय अधिनिधानात् यज्ञोऽपि समृद्धो भवति । कीदृशयोर्हविर्धानयोः । ᵛयतस्रुचा । यताः संबद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते । ᵛमिथुना युगलरूपेण वर्तमाने ᵛया ये हविर्धाने त्वां ᵛसपर्यतः पूजयतस्तयोरित्यर्थः । किंच ईदृग्रूपहविर्धानयुक्तो यजमानः ᵛअसंयत्तः शत्रुभिः सह युद्धार्थमनभिगतः सन् ᵛते ᵛव्रते त्वदीये कर्मणि ᵛक्षेति निवसति ᵛपुष्यति च । प्रजया पशुभिश्च पुष्टो भवति च । ᵛसुन्वते त्वद्देवत्ये यागे सोमाभिषवं कुर्वतो यजमानस्य ᵛभद्रा कल्याणी ᵛशक्तिः उत्कृष्टं बलं भवति । एतत्सर्वं हविर्धानयोरुक्थ्यस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः ॥ यतस्रुचा । 'यम उपरमे' । निष्ठायाम् 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । इदमादिषु त्रिषु पदेषु 'सुपां सुलुक्°' इति विभक्तेः आकारः । सपर्यतः । 'सपर पूजायाम्' । 'कण्ड्वादिभ्यो यक्' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे तस्यैव स्वरः शिष्यते । क्षेति । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । सुन्वते । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् ॥

---

१. क्ष—तस्मात् ।

आदङ्गिराः प्रथमं दधिरे वयं इद्धाग्नयः शम्या ये सुकृत्यया ।
सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥ ४ ॥

आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया ।
सर्वम् । पणेः । सम् । अविन्दन्त । भोजनम् । अश्वऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ॥ ४ ॥

यदा पणिभिर्गावोऽपहृतास्तदानीम् अङ्गिराः अङ्गिरसः प्रथमं पूर्वमग्रतः वयः हविर्लक्षणमन्नं दधिरे इन्द्रार्थं संपादितवन्तः । आत् अनन्तरं तादृशाः ये अङ्गिरसः इद्धाग्नयः प्रज्वलिताग्नियुक्ताः सन्तः सुकृत्यया शोभनकर्मोपेतया शम्या कर्मणा शोभनेन यागेनेन्द्रमयजन्निति शेषः । ते नरः यज्ञस्य नेतारोऽङ्गिरसः पणेः एतन्नाम्नोऽसुरस्य संबन्धि सर्वं भोजनं धनं समविन्दन्त समलभन्त । कीदृशम् । अश्वावन्तं अश्वैर्युक्तं गोमन्तं गोभिर्युक्तम् । आकारः समुच्चये । गवाश्वव्यतिरिक्तमन्यत्पशुजातं च समविन्दन्त ॥ अङ्गिराः । ‘ सुपां सुलुक्° ’ इति जसः सुः । शम्या । शमी इति कर्मनाम । शाम्यत्यनया क्रियया दोषजातमिति शमी । करणे घञ् । ‘ नोदात्तोपदेशस्य मान्तस्यानाचमेः ’ ( पा. सू. ७. ३. ३४ ) इति वृद्धिप्रतिषेधः । गौरादित्वात् ङीष् । व्यत्ययेनाद्युदात्तत्वम् । सुकृत्यया । शोभनं कृत्यं करणं यस्यां सा तथोक्ता । ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् ॥

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।
आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥ ५ ॥

यज्ञैः । अथर्वा । प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ । अजनि ।
आ । गाः । आजत् । उशना । काव्यः । सचा । यमस्य । जातम् । अमृतम् । यजामहे ॥ ५ ॥

पणिभिरपहृतासु गोषु अथर्वा एतत्संज्ञः ऋषिः यज्ञैः इन्द्रदेवत्यैरनुष्ठितैर्यागैः पथः गोसंबन्धिनो मार्गान् प्रथमः तते तनुते । सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवानित्यर्थः । ततः तदनन्तरं व्रतपाः व्रतानां कर्मणां पालयिता वेनः कान्तः सूर्यः सूर्यरूप इन्द्रः आ अजनि गवां प्रदर्शनाय आविरभूत् । ततोऽथर्वा ताः गाः आ आजत् आभिमुख्येन प्राप्नोत् । तादृशस्येन्द्रस्य काव्यः कवेः पुत्रः उशना भृगुः सचा असुरनिरसनाय सहायोऽभूत् । यमस्य असुराणां नियमनार्थं जातं प्रादुर्भूतम् अमृतं मरणरहितं तमिन्द्रं यजामहे हविर्भिः पूजयामः ॥ पथः । शसि ‘ भस्य टेर्लोपः ’ इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । तते । ‘ तनु विस्तारे ’ । ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपः । अजनि । ‘ जनी प्रादुर्भावे ’ । ‘ दीपजनबुध° ’ ( पा. सू. ३. १. ६१ ) इत्यादिना कर्तरि लुङि च्लेः चिण् । आजत् । ‘ अज गतिक्षेपणयोः ’ ॥

बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।
ग्रावा यत्र वदति कारुरुक्थ्यस्तस्येदिन्द्रो अभिपित्वेषु रण्यति ॥ ६ ॥

बर्हिः । वा । यत् । सुऽअपत्याय । वृज्यते । अर्कः । वा । श्लोकम् । आऽघोषते । दिवि ।
ग्रावा । यत्र । वदति । कारुः । उक्थ्यः । तस्य । इत् । इन्द्रः । अभिऽपित्वेषु । रण्यति ॥६॥

ᵛस्वपत्याय शोभनापत्यहेतुभूताय कर्मणे ᵛबर्हिर्वा ᵛयत् यदा ᵛवृज्यते छिद्यते अध्वर्युणा यागार्थमाह्रियते ᵛअर्को ᵛवा स्तोत्रनिष्पादको होता वा ᵛश्लोकं स्तुतिरूपां वाचं ᵛदिवि द्योतमाने यज्ञे यदा ᵛआघोषते उच्चारयति । ᵛयत्र यस्मिन् काले ᵛग्रावा अभिषवार्थं प्रवृत्तः उपलः ᵛवदति शब्दं करोति । तत्र दृष्टान्तः । ᵛकारुरुक्थ्यः । लुप्तोपममेतत् । उक्थ्यस्य शस्त्रस्य शंसिता कारुः स्तोता यथाभिमतशब्दं करोति तद्वत् । ᵛतस्य पूर्वोक्तस्य सर्वस्य ᵛअभिपित्वेषु अभिप्राप्तिषु ᵛइन्द्रः ᵛरण्यति रमते । यद्वा । पूर्वोक्तानां बर्हिरादीनामभिप्राप्तिषु सतीष्विन्द्रो रण्यति अस्मदीयो यागो भविष्यतीति हर्षशब्दं करोति ॥ वृज्यते । ' वृजी वर्जने ' । अनुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । ' निपातैर्यद्यदिहन्त॰ ' इति निघातप्रतिषेधः । आघोषते । ' घुषिर् विशब्दने ' । भौवादिकः । अत्रापि ' यत् ' इत्यस्य निपातस्यानुषङ्गात् निघाताभावः । रण्यति । ' रमु क्रीडायाम् ' । व्यत्ययेन श्यन् परस्मैपदं च । अन्त्यविकारश्छान्दसः । यद्वा रण शब्दार्थः । व्यत्ययेन श्यन् ॥ ॥ ४ ॥

' असावि ' इति विंशत्यृचमेकादशं सूक्तम् । अत्रानुक्रम्यते—' असावि विंशतिः षळनुष्टुभ औष्णिहपाङ्क्तगायत्रत्रैष्टुभास्तृचाः प्रगाथः ' इति । आदितः षडनुष्टुभः सप्तम्याद्यास्तिस्र उष्णिहः । दशम्याद्यास्तिस्रः पङ्क्तयः त्रयोदश्याद्यास्तिस्रो गायत्र्यः । षोडशाद्यास्तिस्रस्त्रिष्टुभः । एकोनविंशी बृहती विंशी सतोबृहती । अनुवर्तनात् गोतम ऋषिः । अनादेशपरिभाषया इन्द्रो देवता । सूक्तविनियोगो लिङ्गादवगन्तव्यः । अविहृतषोडशिशस्त्रे आद्यौ तृचौ स्तोत्रियानुरूपौ । सूत्रितं च–' अथ षोडश्यसावि[1] सोम इन्द्र त इति स्तोत्रियानुरूपौ ' ( आश्व. श्रौ. ६. २ ) इति । आभिप्लविकेपूक्थ्येषु तृतीयसवनेऽच्छावाकस्येमावेव तृचौ वैकल्पिकौ स्तोत्रियानुरूपौ । ' एह्यू षु ' इति खण्डे सूत्रितम्– ' असावि सोम इन्द्र त इममिन्द्र सुतं पिब ' ( आश्व. श्रौ. ७. ८ ) इति ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ १ ॥

असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो इति । आ । गहि ।
आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न । रश्मिऽभिः ॥ १ ॥

हे ᵛइन्द्र ᵛते त्वदर्थं ᵛसोमः ᵛअसावि अभिषुतोऽभूत् । हे ᵛशविष्ठ अतिशयेन बलवन् अत एव ᵛधृष्णो शत्रूणां धर्षयितरिन्द्र ᵛआ ᵛगहि देवयजनदेशमागच्छ । आगतं च त्वाम् ᵛइन्द्रियं सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् ᵛआ ᵛपृणक्तु आपूरयतु । ᵛरजः अन्तरिक्षं ᵛरश्मिभिः किरणैः ᵛसूर्यो ᵛन ।

---

१. क्ष–षोळश्यसावि ।

यथा सूर्यः पूरयन्ति तद्वत् ॥ शविष्ठ । शवस्विन्शब्दात् इष्ठनि ‘ विन्मतोर्लुक् ’ । ‘ टेः ’ इति टिलोपः । पादादित्वात् निघाताभावः । गहि । गमेर्लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपः । तस्य ‘ असिद्धवदत्रा भात् ’ इति असिद्धवत्त्वात्[1] हेः लुगभावः ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥ २ ॥

इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टऽशवसम् ।
ऋषीणाम् । च । स्तुतीः । उप । यज्ञम् । च । मानुषाणाम् ॥ २ ॥

अप्रतिधृष्टशवसं केनाप्यप्रतिधर्षितबलम् । अहिंसितबलमित्यर्थः । इन्द्रमित् इन्द्रमेव ऋषीणां वसिष्ठादीनां मानुषाणाम् अन्येषां[2] मनुष्याणां[2] च[3] स्तुतीः यज्ञं च हरी अश्वौ उप वहतः समीपं प्रापयतः । यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्रेन्द्रमश्वौ प्रापयतः इत्यर्थः ॥ मानुषाणाम् । ‘ मनोर्जातौ ’ इति मनुशब्दात् अञ् षुगागमश्च ॥

आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ ३ ॥

आ । तिष्ठ । वृत्रऽहन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति ।
अर्वाचीनम् । सु । ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥ ३ ॥

हे वृत्रहन् शत्रूणां हन्तरिन्द्र रथम् आ तिष्ठ आरोह । यस्मात् ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्रलक्षणेन मन्त्रेण युक्ता रथेऽस्माभिर्योजितौ तस्मात् त्वं[4] रथमातिष्ठ । ते मनः त्वदीयं मनश्च ग्रावा अभिषवार्थं प्रवृत्तः पाषाणः वग्नुना वचनीयेनाभिषवशब्देन अर्वाचीनम् अस्मदभिमुखं सु कृणोतु सुष्ठु करोतु ॥ युक्ता । ‘ सुपां सुलुक्° ’ इति आकारः । वग्नुना । ‘ वचेर्गश्च ’ ( उ. सू. ३. ३१३ ) इति नुप्रत्ययो गकारश्चान्तादेशः ॥

इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ४ ॥

इमम् । इन्द्र । सुतम् । पिब । ज्येष्ठम् । अमर्त्यम् । मदम् ।
शुक्रस्य । त्वा । अभि । अक्षरन् । धाराः । ऋतस्य । सदने ॥ ४ ॥

---

१. क्ष–असिद्धत्वात् । २. स–‘ अन्येषां मनुष्याणाम् ’ नास्ति । ३. क्ष–‘ च ’ नास्ति । ४. क्ष–तम् ।

हे इन्द्र सुतम् अभिषुतम् इमं सोमं पिब। कीदृशम्। ज्येष्ठम् अतिशयेन प्रशस्यं मदं मदकरं अमर्त्यम् अमारकम्। सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः। तथा ऋतस्य यज्ञस्य संबन्धिनि सदने गृहे वर्तमानाः शुक्रस्य दीप्तस्यास्य सोमस्य धाराः त्वाम् अभ्यक्षरन् आभिमुख्येन संचलन्ति त्वां प्राप्नुवन्ति[1] स्वयमेवागच्छन्तीत्यर्थः॥ ज्येष्ठम्। प्रशस्यशब्दात् इष्ठनि 'ज्य च' (पा. सू. ५. ३. ६१) इति ज्यादेशः। अक्षरन्। 'क्षर संचलने'। छान्दसो लङ्॥

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः॥ ५॥

इन्द्राय। नूनम्। अर्चत। उक्थानि। च। ब्रवीतन।
सुताः। अमत्सुः। इन्दवः। ज्येष्ठम्। नमस्यत। सहः॥ ५॥

हे ऋत्विजः इन्द्राय नूनं क्षिप्रम् अर्चत पूजनं कुरुत। एतदेव स्पष्टीक्रियते। उक्थानि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि च ब्रवीतन ब्रूत। सुताः अभिषुताः इन्दवः सोमाः च अमत्सुः आगतमेनमिन्द्रं मत्तं कुर्वन्तु। अनन्तरं ज्येष्ठं प्रशस्यतमं सहः सहस्विनं बलवन्तं तमिन्द्रं नमस्यत नमस्कुरुत॥ ब्रवीतन। ब्रवीतेर्लोटि 'तप्तनप्तनथनाश्च' इति तनबादेशः। अमत्सुः। 'मदी हर्षे'। छान्दसः प्रार्थनायां लुङ्। आगमानुशासनस्यानित्यत्वात् इडभावः। नमस्यत। 'नमोवरिवश्चित्रङः०' इति क्यच्। सहः। 'लुगकारेकाररेफाश्च वक्तव्याः' (पा. सू. ४. ४. १२८. २) इति मत्वर्थीयस्य लुक्॥ ॥ ५॥

नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे।
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे॥ ६॥

नकिः। त्वत्। रथिऽतरः। हरी इति। यत्। इन्द्र। यच्छसे।
नकिः। त्वा। अनु। मज्मना। नकिः। सुऽअश्वः। आनशे॥ ६॥

हे इन्द्र यत् यस्मात् त्वं हरी एतत्संज्ञावश्वौ यच्छसे रथे योजयसि तस्मात् त्वत्तोऽन्यः[2] कश्चित् रथीतरः अतिशयेन रथवान् नकिः नास्ति। अन्येषामीदृगश्वयुक्तस्याभावात्। त्वा त्वामनुलक्ष्य मज्मना। बलनामैतत्। बलेन सदृशोऽपि नकिः न ह्यस्ति। स्वश्वः शोभनाश्वोऽन्यश्च त्वां नकिः आनशे न प्राप। इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः॥ नकिष्ट्वत्। 'युष्मत्तत्तक्षुःष्वन्तःपादम्' इति षत्वम्। रथीतरः। अतिशयेन रथी। तरपि 'ईद्रथिनः' (पा. सू. ८. २. १७. १) इति ईकारान्तादेशः। अवग्रहसमये छान्दसं ह्रस्वत्वम्। यच्छसे। यमेर्व्यत्ययेन आत्मनेपदम्। स्वश्वः। बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। आनशे। 'अश्नोतेश्च' इति अभ्यासादुत्तरस्य नुट्॥

१. क्ष–प्राप्तुम्। २. क्ष–त्वत् त्वत्तोऽन्यः।

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः ‘ य एक इद्विदयते ’ इति वैकल्पिकः स्तोत्रियस्तृचः । ‘ एह्यू षु ’ इति खण्डे सूत्रितम्–‘ सखाय आशिषामहि य एक इद्विदयते ’ ( आश्व. श्रौ. ७. ८ ) इति । महाव्रतेऽपि निष्केवल्ये औष्णिहतृचाशीतावयं तृचो विनियुक्तः । तथैव पञ्चमारण्यके सूत्र्यते–‘ य एक इद्विदयत आ याह्यद्रिभिः सुतम् ’ ( ऐ. आ. ५. २. ५ ) इति ॥

**य एक इद्विदयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ७ ॥**

यः । एकः । इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिऽस्कुतः । इन्द्रः । अङ्ग ॥ ७ ॥

यः इन्द्रः एकः इत् एक एव दाशुषे हविर्दत्तवते मर्ताय मनुष्याय यजमानाय वसु धनं विदयते विशेषेण ददाति । अङ्ग इति क्षिप्रनाम । अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहित इत्यर्थः । एवंभूतः सः इन्द्रः क्षिप्रम् ईशानः सर्वस्य जगतः स्वामी भवति ॥ विदयते । ‘ दय दानगतिरक्षणहिंसादानेषु ’ । शपः पित्त्वात् अनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः एव शिष्यते । यद्वृत्तयोगादनिघातः[1] । अप्रतिष्कुतः । ‘ कु शब्दे ’ । प्रतिकूलं कूयते शब्द्यते इति प्रतिष्कुतः । पारस्करादेराकृतिगणत्वात् सुट् । सुषामादित्वात् षत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

**कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥ ८ ॥**

कदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव । स्फुरत् ।
कदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ॥ ८ ॥

अराधसं हविर्लक्षणेन राधसा धनेन रहितम् । अयष्टारमित्यर्थः । एवंविधं मर्तं मनुष्यम् इन्द्रः पदा पादेन क्षुम्पमिव अहिच्छत्रकमिव[2] कदा स्फुरत् स्फुरिष्यति वधिष्यति । यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदा अस्मच्छत्रून् हनिष्यतीत्यर्थः । स्फुरतिर्वधकर्मा । ‘ स्फुरति स्फुलति ’ (नि. २. १९. १५) इति वधकर्मसु पठितत्वात् । नः अस्माकं यष्टॄणां गिरः स्तुतिलक्षणा वाचः इन्द्रः कदा कस्मिन्काले अङ्ग क्षिप्रं शुश्रवत् श्रोष्यतीति वितर्क्यते । अत्र निरुक्तम्–‘ क्षुम्पमहिच्छत्रकं भवति यत् क्षुभ्यते । कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति । कदा नः श्रोष्यति गिर इन्द्रोऽङ्ग । अङ्गेति क्षिप्रनाम ’ ( निरु. ५. १७ ) इति ॥ पदा । पादशब्दस्य ‘ पद्न्° ’ इत्यादिना पदादेशः । ‘ ऊडिदम् ’ इति विभक्तेः उदात्तत्वम् । क्षुम्पमिव । ‘ क्षुभ संचलने ’ । अस्मात् कर्मणि घञि बहुलवचनात् धातोर्नुमागमः । वर्णव्यापत्त्या भकारस्य पकारः । स्फुरत् । ‘ स्फुर संचलने ’ । ‘ छन्दसि लुङ्लङ्लिटः ’ इति लडर्थे लङ् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । शुश्रवत् । ‘ श्रु श्रवणे ’ । लेटि अडागमः । ‘ बहुलं छन्दसि ’ इति शपः श्लुः ॥

---

१. क्ष–यद्वृत्तान्नित्यम् इति निघातप्रतिषेधः । २. क्ष-ट–अहिच्छत्रमिव ।

यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति। उग्रं तत्पत्यते शव इन्द्रो अङ्ग॥९॥

यः। चित्। हि। त्वा। बहुऽभ्यः। आ। सुतऽवान्। आऽविवासति।

उग्रम्। तत्। पत्यते। शवः। इन्द्रः। अङ्ग॥ ९॥

"बहुभ्यः मनुष्येभ्यः सकाशात् "यश्चिद्धि य एव खलु यजमानः "सुतावान् अभिषुतसोमयुक्तः सन् हे इन्द्र "त्वा त्वाम् "आविवासति परिचरति। विवासतिः परिचरणकर्मा। "तत् तस्मै यजमानाय यत् "उग्रम् उद्गूर्णं "शवः बलम् "इन्द्रः "अङ्ग क्षिप्रं "पत्यते पातयति प्रापयति॥ तत्। 'सुपां सुलुक्०' इति चतुर्थ्याः लुक्। पत्यते। 'पत्लृ गतौ'। अस्मात् अन्तर्भावितण्यर्थात् व्यत्ययेन श्यन्॥

चातुर्विंशिकेऽहनि माध्यंदिने[1] सवने[1] अच्छावाकस्य 'स्वादोरित्था विषूवतः' इति वैकल्पिकः स्तोत्रियस्तृचः। 'होत्रकाणाम्' इति खण्डे सूत्रितम्—'यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः' (आश्व. श्रौ. ७. ४.) इति। पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्येऽप्ययं तृचोऽनुरूपः। 'स्तोमे वर्धमाने' इति खण्डे सूत्रितम्—'स्वादोरित्था विषूवत उप नो हरिभिः सुतम्' (आश्व. श्रौ. ७. १२) इति॥

स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः।

या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम्॥ १०॥

स्वादोः। इत्था। विषुऽवतः। मध्वः। पिबन्ति। गौर्यः।

याः। इन्द्रेण। सऽयावरीः। वृष्णा। मदन्ति। शोभसे। वस्वीः। अनु। स्वऽराज्यम्॥१०॥

"स्वादोः स्वादुभूतस्य रसयुक्तस्य "इत्था "विषूवतः इत्थमनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य "मध्वः मधुररसस्य सोमस्य। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। एवंविधं सोमं "गौर्यः गौरवर्णा गावः "पिबन्ति। "याः गावः "शोभसे शोभार्थं "वृष्णा कामाभिवर्षकेण "इन्द्रेण "सयावरीः सह यान्त्यो गच्छन्त्यः सत्यः "मदन्ति हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः। "वस्वीः पयःप्रदानेन निवासकारिण्यस्ता गावः "स्वराज्यं स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वं तदनुलक्ष्यावस्थिता इति शेषः॥ विषूवतः। 'विष्लृ व्याप्तौ'। अस्मात् औणादिकः कुप्रत्ययः। ततो मतुप्। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुपः उदात्तत्वम्। 'अन्येषामपि दृश्यते' इति संहितायां[2] दीर्घः। व्यत्ययेन मतोर्वत्वम्। मध्वः। 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः। गौर्यः। 'षिद्गौरादिभ्यश्च' इति ङीष्। जसि यणादेशे 'उदात्तस्वरितयोर्यणः०' इति परस्यानुदात्तस्य स्वरितत्वम्। सयावरीः। 'या प्रापणे'। 'आतो मनिन्०' इति वनिप्। 'वनो र च' इति ङीब्रेफौ। मदन्ति। 'मदी हर्षे'। श्यनि प्राप्ते व्यत्ययेन शप्। वस्वीः। 'वस निवासे'। 'शॄस्वृस्निहि०' इत्यादिना वसेः उप्रत्ययः। 'धान्ये नित्' इत्यनुवृत्तेः

---

१. क्ष—माध्यंदिनसवने। २. क्ष—सांहितिकः।

आद्युदात्तत्वम्। 'वोतो गुणवचनात्' इत्यत्र 'गुणवचनात् ङीबाद्युदात्तार्थम्' (का. ४. १. ४४. १) इति वचनात् वसुशब्दात् ङीपि यणादेशः। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। स्वस्य राज्यं स्वराज्यम्। 'अकर्मधारये राज्यम्' (पा. सू. ६. २. १३०) इत्युत्तरपदाद्युदात्तत्वम् ॥ ॥ ६ ॥

ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ ११ ॥

ताः । अस्य । पृशनऽयुवः । सोमम् । श्रीणन्ति । पृश्नयः ।
प्रियाः । इन्द्रस्य । धेनवः । वज्रम् । हिन्वन्ति । सायकम् । वस्वीः । अनु । स्वऽराज्यम् ॥ ११ ॥

ताः पूर्वोक्ताः अस्य इन्द्रस्य पृशनायुवः स्पर्शनकामाः पृश्नयः नानावर्णा गावः इन्द्रेण पातव्यं सोमं पयसा श्रीणन्ति मिश्रीकुर्वन्ति। इन्द्रस्य प्रियाः प्रीतिहेतुभूतास्ताः धेनवः सायकं शत्रूणामन्तकारकं वज्रम् आयुधं हिन्वन्ति शत्रुषु प्रेरयन्ति। इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत् ॥ हिन्वन्ति। हिवि: प्रीणनार्थः। इदित्त्वात् नुम्। सायकम्। 'षो अन्तकर्मणि'। ण्वुलि आत्वे युगागमः ॥

ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १२ ॥

ताः । अस्य । नमसा । सहः । सपर्यन्ति । प्रऽचेतसः ।
व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये । वस्वीः । अनु । स्वऽराज्यम् ॥ १२ ॥

प्रचेतसः प्रकृष्टज्ञानाः ताः गावः अस्य इन्द्रस्य सहः बलं नमसा स्वकीयेन पयोरूपेणान्नेन सपर्यन्ति परिचरन्ति। पुरूणि बहूनि अस्य इन्द्रस्य व्रतानि शत्रुवधादिरूपाणि वीर्यकर्माणि सश्चिरे सिषेविरे ज्ञायन्ते[1] इत्यर्थः। किमर्थम्। पूर्वचित्तये युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय। अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्ते[2] इति तेषां बोधनायेत्यर्थः। अन्यत् पूर्ववत्॥ सश्चिरे। 'सश्च गतौ'। व्यत्ययेनात्मनेपदम्। पूर्वचित्तये। 'चिती संज्ञाने'। भावे क्तिन्। मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥

चातुर्विंशिकेऽहनि प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे 'इन्द्रो दधीचः' इति षडहस्तोत्रिय-संज्ञकस्तृचः। सूत्रितं च– 'आदह स्वधामन्वित्येका द्वे चेन्द्रो दधीचो अस्थभिः' (आश्व. श्रौ. ७. २) इति ॥

---

१. क्ष-ट-ज्ञातवत्यः। २. क्ष-ट-ढ-प्राणस्त्यज्यते।

इन्द्रो॑ दधी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑ नव॒तीर्नव॑ ॥ १३ ॥

इन्द्रः॑ । द॒धी॒चः । अ॒स्थऽभिः॑ । वृ॒त्राणि॑ । अप्र॑तिऽस्कुतः । ज॒घान॑ । न॒व॒तीः । नव॑ ॥ १३ ॥

अत्र शाट्यायनिन इतिहासमाचक्षते–' आथर्वणस्य दधीचो जीवतो दर्शनेनासुराः पराबभूवुः । अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत् । अथेन्द्रः तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ पप्रच्छ तत्रत्यान् नेह किमस्य किंचित्परिशिष्टमङ्गमस्तीति । तस्मा अवोचन् अस्त्येतदाश्वं शीर्षं येन शिरसाश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् । तदन्विच्छतेति । तद्धान्वैषिषुः । तच्छर्यणावत्यनुविद्याजहुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघान ' इति । अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः इन्द्रः आथर्वणस्य दधीचः एतत्संज्ञकस्य ऋषेः अस्थभिः अश्वशिरःसंबन्धिभिरस्थिभिः नवतीर्नव नवसंख्याका नवतीर्दशोत्तराष्टशतसंख्याकाः । तथा हि । लोकत्रयवर्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा संपद्यते । त्रिविधा[1] अतीतानागतवर्तमानकालभेदेन तत्कालवर्तिनो देवाञ्जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति । एवं नव संपद्यते[2] । पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः संपद्यते[3] । पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः संपद्यते[4] । एवं चतुर्भिस्त्रिकैर्गुणितायाः मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः संपद्यन्ते । एवंविधमायारूपाणि वृत्राणि आवरकाण्यसुरजातानि जघान हतवान् ॥ दधीचः । दधि अञ्चतीति दध्यङ् । अञ्चतेः ' ऋत्विक्° ' इत्यादिना क्विन् । ' अनिदिताम्° ' इति नलोपः । षष्ठ्येकवचने ' अचः ' इति अकारलोपे ' चौ ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वे प्राप्ते तदपवादतया ' चौ ' इति पूर्वपदस्य अन्तोदात्तत्वं प्राप्तम् ' अञ्चेश्छन्दस्यसर्वनामस्थानम् ' ( पा. सू. ६. १. १७० ) इति पुनर्विभक्त्युदात्तत्वविधानेन तद्बाध्यते । अस्थभिः । ' छन्दस्यपि दृश्यते ' ( पा. सू. ७. १. ७६ ) इति अनजादावपि अस्थिशब्दस्य अनङादेशः स चोदात्तः ॥

इ॒च्छन्नश्व॑स्य॒ यच्छिरः॑ पर्व॑ते॒ष्वप॑श्रितम् । तद्वि॑दच्छर्य॒णाव॑ति ॥ १४ ॥

इ॒च्छन् । अश्व॑स्य । यत् । शिरः॑ । पर्व॑तेषु । अप॑ऽश्रितम् । तत् । वि॒द॒त् । श॒र्य॒णाऽव॑ति ॥ १४ ॥

पर्वतेषु पर्ववत्सु गिरिषु अपश्रितम् अपगत्य स्थितम् अश्वस्य अश्वसंबन्धि दधीचः यच्छिरः इच्छन् इन्द्रो वर्तते शर्यणावति एतत्संज्ञे[5] सरसि तत् शिरः विदत् अज्ञासीत् । ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृचि संबन्धः ॥ इच्छन् । ' इषु इच्छायाम् ' । तुदादित्वात् शप्रत्ययः । विदत् । वेत्तेर्लुङि व्यत्ययेन च्लेः अङादेशः । शर्यणावति । शर्यणा नाम देशाः । तेषामदूरभवं सरः शर्यणावत् । मध्वादिषु शर्यणशब्दस्य पाठात् ' मध्वादिभ्यश्च ' ( पा. सू. ४. २. ८६ ) इति चातुरर्थिको मतुप् । ' संज्ञायाम् ' इति मतुपो वत्वम् । ' मतौ बह्वचोऽनजिरादीनाम् ' ( पा. सू. ६. ३. ११९ ) इति दीर्घः ॥

---

१. क्ष-ट-ढ–त्रिविधा सा ।    २. क्ष–संपद्यन्ते ।    ३. क्ष-न–संपद्यन्ते ।    ४. क्ष–संपद्यन्ते ।
५. क्ष-स–एतत्संज्ञके ।

अतिमूर्तिनाम्न्येकाहे कर्तव्ये पूर्वमेवैकं मासं सौर्याचान्द्रमसीभ्यामिष्टिभ्यां यष्टव्यम् । तत्र पूर्वपक्षे चान्द्रमसीष्टिः । ‘ अत्राह गोः ’ इति तस्यां प्रधानस्यानुवाक्या । ‘ अतिमूर्तिना ’ इति खण्डे सूत्रितम्— ‘ अत्राह गोरमन्वत नवोनवो भवति जायमानः ’ ( आश्व. श्रौ. ९. ८ ) इति ॥

## अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥ १५ ॥

अत्र । अह । गोः । अमन्वत । नाम । त्वष्टुः । अपीच्यम् । इत्था । चन्द्रमसः । गृहे ॥१५॥

अत्राह अस्मिन्नेव गोः गन्तुः चन्द्रमसो गृहे मण्डले त्वष्टुः दीप्तस्यादित्यस्य संबन्धि अपीच्यं रात्रावन्तर्हितं स्वकीयं यत् नाम तेजः तदादित्यस्य रश्मयः[1] इत्था इत्थमनेन प्रकारेण अमन्वत अजानन् । उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्ते इत्यर्थः । एतदुक्तं भवति । यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्य अह्नीव नैशं तमो निवार्य सर्वं प्रकाशयति । ईदृग्भूततेजसा युक्तः सूर्यश्च इन्द्र एव द्वादशस्वादित्येष्विन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेतीन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतेत्येतदुपपन्नं भवति । ईदृग्भूतस्य तेजस आश्रयत्वेन चन्द्रमसः प्राधान्यविवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते । अत्र निरुक्तम्— ‘ अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति । सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति । सोऽपि गौरुच्यते । अत्राह गोरमन्वतेति ’ ( निरु. २. ६. ), ‘ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वा ’ ( निरु. ४. २५ ) इति ॥ अमन्वत । ‘ मनु अवबोधने ’ । अपीच्यम् । अपपूर्वात्[2] चिनोतेः ‘ अघ्न्यादयश्च ’ ( उ. सू. ४. ५५१) इति निपातनात् यत् । अत एवाभिमतरूपसिद्धिः । यद्वा । अपिपूर्वात् अञ्चतेः ‘ ऋत्विक्° ’ इत्यादिना क्विन् । ‘ अनिदिताम्° ’ इति नलोपः । अपिगते[3] निगते[4] भवमपीच्यम् । ‘ भवे छन्दसि ’ इति यत् । ‘ अचः ’ इति अकारलोपे ‘ चौ ’ इति दीर्घत्वम् । तित्स्वरितः । ‘ अपीच्योऽप्रकाशः ’ इति भट्टभास्करमिश्रः । इत्था । इदंशब्दात् ‘ था हेतौ च च्छन्दसि ’ इति प्रकारवचने थाप्रत्ययः । यदि तत्रेदंशब्दो नानुवर्तते[5] तदानीम् ‘ इदमस्थमुः ’ ( पा. सू. ५. ३. २४ ) इति थमुप्रत्ययः । ‘ अव्ययादाप्सुपः ’ ( पा. सू. २. ४. ८२ ) इति सुब्लुकं बाधित्वा ‘ सुपां सुलुक्° ’ इति डादेशः । चन्द्रमसः । चन्द्रमाह्लादनं मिमीते निर्मिमीते इति चन्द्रमाः । ‘ चन्द्रे माङो डित् ’ ( उ. सू. ४. ६६७ ) इति असिप्रत्ययः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदं च ‘ स्फायितञ्चि° ’ इत्यादिना रक्प्रत्ययान्तमन्तोदात्तम् ॥ ॥७॥

सर्वपृष्ठायामिष्टौ कायस्य हविषः ‘ को अद्य ’ इति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च– ‘ कायं दशमं को अद्य युङ्क्ते धुरि गा ऋतस्येति द्वे ’ ( आश्व. श्रौ. ४. १२ ) इति ॥

---

१. क्ष-ट-ढ-न–तदादित्यरश्मयः । २. त-श–अपिपूर्वात् । ३. च-फ–अपगते । ४. क्ष-च-छ-ट-ढ-द-फ–निर्गते । ५. क्ष–नानुवर्तेत ।

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ १६ ॥

कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् ।
आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषाम् । भृत्याम् । ऋणधत् । सः । जीवात् ॥ १६ ॥

[1]अद्य अस्मिन् कर्मणि [1]ऋतस्य गच्छतः इन्द्रसंबन्धिनो रथस्य [1]धुरि अश्ववहनप्रदेशे [1]गाः गतिमतोऽश्वान् [1]कः [1]युङ्क्ते को नाम नियोक्तुं शक्नोति । न कोऽपीत्यर्थः । कीदृशानश्वान् । [1]शिमीवतः वीर्यकर्मोपेतान् [1]भामिनः तेजसा युक्तान् [1]दुर्हृणायून् परैर्दुःसहेन क्रोधेन युक्तान् । हृणीयतिः क्रुध्यतिकर्मा । [1]आसन्निषून् येषामासनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान् [1]हृत्स्वसः । हृत्सु शत्रूणां हृदयेष्वस्यन्ति स्वकीयं पादं क्षिपन्तीति हृत्स्वसः । [1]मयोभून् मयसः सुखस्य भावयितॄन् । स्वकीयानां सुखप्रदानित्यर्थः । [1]यः यजमानः [1]एषाम् ईदृशानामश्वानां [1]भृत्यां भरणक्रियां रथवाहनक्रियाम् [1]ऋणधत् समर्धयति स्तौतीति यावत् । [1]सः यजमानः [1]जीवात् जीवनवान्भवेत् ॥ यद्वा । क इति प्रजापतिरुच्यते । 'को वै नाम प्रजापतिः' इति श्रुतेः । ऋतस्य यज्ञस्य धुरि निर्वाहे गा वेदरूपान् वाग्विशेषान् अद्येदानीं युङ्क्ते संयोजयति । कीदृशान् । शिमीवतः प्रतिपाद्यैः कर्मभिर्युक्तान् भामिनः उज्ज्वलान् दुर्हृणायून् । हृणीयतिर्हानिकर्मा । हातुमशक्यान् वेदाध्ययनस्य नित्यत्वात् । आसन्निषून् आसनि आस्ये इषुरेषणं गमनमुच्चारणं येषां तान् हृत्स्वसो हृत्सु हृदयेषु दीप्यमानान् । प्रकाशमानानित्यर्थः । मयोभून् मयसोऽध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन् । यो यजमान एषां वचसां भृत्यां भरणक्रियाम् ऋणधत् ऋद्धिमतीं करोति स जीवात् स एव[1] जीवति[2] । अन्ये जीवन्मृता इत्यर्थः ॥ दुर्हृणायून् । 'हृणीङ् लज्जायाम्' । कण्ड्वादित्वात् यक् । बहुलवचनात् अस्मात् उण्प्रत्ययः । अतो लोपे सति वर्णव्यापत्त्या[3] आकारः । मृगय्वादिर्वा द्रष्टव्यः । आसन्निषून् । 'पद्दन्०' इत्यादिना आस्यशब्दस्य आसन्नादेशः । 'इष गतौ' इत्यस्मात् 'इषेः किच्च' ( उ. सू. १. १३ ) इति उप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हृत्स्वसः । 'असु क्षेपणे' । 'अस गतिदीप्त्यादानेषु' । 'क्विप् च' इति क्विप् । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । मयोभून् । व्यत्ययेन ह्रस्वत्वम् । यद्वा । 'मितद्र्वादिभ्य उपसंख्यानम्' ( पा. सू. ३. २. १८०. १ ) इति डुप्रत्ययः । भृत्याम् । 'भृञ् भरणे' । 'संज्ञायां समजनिषद०' ( पा. सू. ३. ३. ९९ ) इति क्यप् । 'उदात्तः' इत्यनुवृत्तेः प्रत्ययस्योदात्तत्वम् । ऋणधत् । 'ऋधु वृद्धौ' । लेटि व्यत्ययेन श्नम् । 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः०' इति इकारलोपः । जीवात् । 'जीव प्राणधारणे' । पूर्ववत् लेटि आडागमः ॥

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ॥ १७ ॥

कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । सन्तम् । इन्द्रम् । कः । अन्ति ।
कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ॥ १७ ॥

---

१. फ–'एव' नास्ति । २. च-छ-त-न-फ-श–जीवेत् । ३. च-छ-त-द-न-फ-श-स–वर्णव्यत्ययेन ।

अनुग्रहीतरि इन्द्रे आगते सति <sup>V</sup>कः <sup>V</sup>ईषते शत्रोर्भीतः सन् को निर्गच्छति न कोऽपीत्यर्थः। <sup>V</sup>कः <sup>V</sup>तुज्यते को हिंस्यते शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः। <sup>V</sup>कः यजमानः <sup>V</sup>बिभाय बिभेति। इन्द्रे रक्षके सति भयमपि नोत्पद्यते दूरे तस्य शत्रुकृता हिंसा। <sup>V</sup>अन्ति अन्तिके समीपे <sup>V</sup>सन्तम् अस्माकं रक्षकत्वेन वर्तमानम् <sup>V</sup>इन्द्रं <sup>V</sup>कः पुरुषः <sup>V</sup>मंसते जानाति। वयमेव जानीमो नान्यः इत्यर्थः। एकः कः पूरकः। युद्धे सहायार्थमिन्द्रे आगते सति <sup>V</sup>कः यजमानः <sup>V</sup>तोकाय पुत्राय <sup>V</sup>अधि <sup>V</sup>ब्रवत्। हे इन्द्र अस्मदीयं पुत्रं रक्षेत्येवंरूपमधिवचनं पक्षपातेन वचनम्। 'ब्राह्मणायाधिब्रूयात्' इति यथा। एवंरूपमधिवचनं को यजमानः कुर्यात्। स्वयमेवेन्द्रो रक्षतीति भावः। <sup>V</sup>इभाय गजाय <sup>V</sup>कः अधि ब्रवत्। <sup>V</sup>उत अपि च <sup>V</sup>राये शत्रुभिरपह्रियमाणाय धनाय कः अधि ब्रवत्। अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात्। न कोऽपीत्यर्थः। अपि च <sup>V</sup>तन्वे स्वकीयाय शरीराय <sup>V</sup>जनाय परिजनाय च <sup>V</sup>कः अधि ब्रवत्। स्वशरीररक्षार्थं परिजनरक्षार्थं चेन्द्रस्याधिवचनं नापेक्षितम्। स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः। यदा तु कशब्दाभिधेयस्य प्रजापतेः संबन्धिनि कर्मणि विनियोगः तदानीं परमैश्वर्ययोगादिन्द्रशब्देन प्रजापतिरेवाभिधीयते। यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विनियोगानुसारेण 'कदा चन' इत्यस्यामृचि विद्यमान इन्द्रो गार्हपत्यपरतया नीयते तद्वत्॥ ईषते। 'ईष गतिहिंसादर्शनेषु'। भौवादिक आत्मनेपदी। तुज्यते। 'तुज हिंसायाम्'। कर्मणि यक्। अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। '°अतिङः' इति पर्युदासात् निघाताभावः। मंसते। लेटि अडागमः। 'सिब्बहुलं लेटि' इति सिप्। अन्ति। अन्तिकस्य 'कादिलोपो बहुलम्' इति कलोपः। ब्रवत्। ब्रवीतेर्लेटि अडागमः। तन्वे। तनुशब्दाच्चतुर्थ्येकवचने 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः। 'उदात्तस्वरितयोर्यणः°' इति विभक्तेः स्वरितत्वम्॥

को अ॒ग्निमी॑ट्टे ह॒विषा॑ घृ॒तेन॑ स्रु॒चा य॑जाता ऋ॒तुभि॑र्ध्रु॒वेभिः॑ ।
कस्मै॑ दे॒वा आ व॑हाना॒शु होम॒ को मं॑सते वी॒तिहो॑त्रः सुदे॒वः ॥ १८ ॥

कः । अ॒ग्निम् । ई॒ट्टे॒ । ह॒विषा॑ । घृ॒तेन॑ । स्रु॒चा । य॒जा॒तै॒ । ऋ॒तुऽभिः॑ । ध्रु॒वेभिः॑ ।
कस्मै॑ । दे॒वाः । आ । व॒हा॒न् । आ॒शु । होम॑ । कः । मं॒स॒ते॒ । वी॒तिऽहो॑त्रः । सु॒ऽदे॒वः ॥१८॥

<sup>V</sup>कः यजमानः <sup>V</sup>अग्निम् <sup>V</sup>ईट्टे इन्द्रार्थं हविर्निरुप्याग्निं स्तौति। इन्द्राय हविर्निर्वापोऽपि सम्यक्कर्तुं न शक्यते। इन्द्रस्य दुर्विज्ञानत्वात्। को वा इन्द्रयागार्थमग्निं <sup>V</sup>स्रुचा जुह्वा <sup>V</sup>ध्रुवेभिः ध्रुवैर्नित्यैः <sup>V</sup>ऋतुभिः वसन्तादिकालैरुपलक्षितेन <sup>V</sup>घृतेन <sup>V</sup>हविषा <sup>V</sup>यजातै यजेत्। यद्वा। ऋतवः प्रयाजदेवताः। 'ऋतवो वै प्रयाजाः' (तै.सं.१.६.११.५) इति श्रुतेः। ताभिः ध्रुवैः प्रकृतौ विकृतौ[1] च[1] अनुष्ठेयतया निश्चलैर्ऋतुभिः सह अग्निमाज्यभागदेवतां घृतेन हविषा को यजेत्। न कोऽपीत्यर्थः। <sup>V</sup>कस्मै यजमानाय <sup>V</sup>होम ह्वातव्यं[2] प्रशस्यं धनम् <sup>V</sup>आशु शीघ्रं <sup>V</sup>देवाः <sup>V</sup>आ <sup>V</sup>वहान् आवहन्ति प्रयच्छन्ति। न कस्मा अपीत्यर्थः। इन्द्र एव धनस्य दाता नान्ये देवा इति इन्द्रः[3] स्तूयते। <sup>V</sup>वीतिहोत्रः प्राप्तयज्ञः <sup>V</sup>सुदेवः शोभनदेवताकः <sup>V</sup>कः यजमानः <sup>V</sup>मंसते इन्द्रं सम्यग्जानाति। न कोऽपीत्यर्थः। बहुविधेन स्तोत्रेण चिरकालोपासनेन चेन्द्रः प्रत्यक्षो भवति नान्येन प्रकारेणेति तात्पर्यार्थः॥ ईट्टे। 'ईड स्तुतौ'। अदादित्वात् शपो लुक्। स्रुचा। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। यजातै। यजतेर्लेटि आडागमः। 'वैतोऽन्यत्र' इति

---

१. क्ष-ट-ढ-न-स-'विकृतौ च' नास्ति। २. क्ष-ह्वोतव्यम्। ३. क्ष-ठ-ढ-इन्द्र एव।

ऐकारः । वहान् । वहतेर्लेटि आडागमः । ‘ इतश्च लोपः० ’ इति इकारलोपः । ‘ संयोगान्तस्य० ’ इति तकारलोपः । होम । ह्वयतेः कृतात्वस्य ‘ आतो मनिन्० ’ इति मनिन् । ‘ ह्वः ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति संप्रसारणम् । यद्वा । ‘ नामन्सीमन्० ’ ( उ. सू. ४. ५९० ) इत्यादौ होमन्शब्दो मनिन्प्रत्ययान्तो निपात्यते । मंसते । ‘ मन ज्ञाने ’ । लेटि अडागमः । ‘ सिब्बहुलं लेटि ’ इति सिप् । वीतिहोत्रः । वी गत्यादिषु । अस्मात् कर्मणि ‘ मन्त्रे वृष० ’ इत्यादिना क्तिन् स चोदात्तः । होत्रं होमः । ‘ हुयामाश्रुभसिभ्यस्त्रन् ’ ( उ. सू. ४. ६०७ ) इति त्रन्प्रत्ययः । वीतिः प्राप्तो होमो येन । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुदेवः । ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् ॥

त्वम॒ङ्ग प्र शं॑सिषो दे॒वः श॑विष्ठ॒ मर्त्य॑म् ।

न त्वद॒न्यो म॑घवन्नस्ति मर्डि॒तेन्द्र॒ ब्रवी॑मि ते॒ वचः॑ ॥ १९ ॥

त्वम् । अ॒ङ्ग । प्र । शं॒सि॒षः॒ । दे॒वः । श॒वि॒ष्ठ॒ । मर्त्य॑म् ।

न । त्वत् । अ॒न्यः । म॒घ॒ऽव॒न् । अ॒स्ति॒ । म॒र्डि॒ता । इन्द्र॑ । ब्रवी॑मि । ते॒ । वचः॑ ॥ १९ ॥

अङ्ग इति अभिमुखीकरणे । ᵛअङ्ग ᵛशविष्ठ हे बलवत्तमेन्द्र ᵛदेवः द्योतमानः ᵛत्वं ᵛमर्त्यं मरणधर्माणं त्वां स्तुतवन्तं पुरुषं ᵛप्र ᵛशंसिषः । सम्यगनेन स्तुतम् इति प्रशंस । हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛत्वदन्यः त्वत्तोऽन्यः कश्चित् ᵛमर्डिता सुखयिता ᵛन ᵛअस्ति । अतः कारणात् ᵛते तुभ्यमिदं स्तुतिलक्षणं ᵛवचः ᵛब्रवीमि उच्चारयामि ॥ शंसिषः । ‘ शंसु स्तुतौ ’ । लेटि सिपि अडागमः । ‘ सिब्बहुलं लेटि ’ इति विकरणश्च सिप् । तस्य आर्धधातुकत्वात् इडागमः । शविष्ठ । अतिशयेन शवस्वी शविष्ठः । इष्ठनि ‘ विन्मतोर्लुक् ’ । ‘ टेः ’ इति टिलोपः । मर्डिता । ‘ मृड सुखने ’ । तृचः इडागमः ॥

मा ते॒ राधां॑सि॒ मा त॑ ऊ॒तयो॑ वसो॒ऽस्मान्कदा॑ च॒ना द॑भन् ।

विश्वा॑ च न उपमिमी॒हि मा॑नुष॒ वसू॑नि चर्ष॒णिभ्य॒ आ ॥ २० ॥

मा । ते॒ । राधां॑सि । मा । ते॒ । ऊ॒तयः॑ । व॒सो॒ इति॑ । अ॒स्मान् । कदा॑ । च॒न । द॒भ॒न् ।

विश्वा॑ । च॒ । नः॒ । उ॒प॒ऽमि॒मी॒हि॒ । मा॒नु॒ष॒ । वसू॑नि । च॒र्ष॒णिऽभ्यः॑ । आ ॥ २० ॥

हे ᵛवसो निवासयितरिन्द्र ᵛते तव संबन्धीनि राध्नोत्येभिरिति ᵛराधांसि भूतानि ᵛअस्मान् ᵛकदा ᵛचन कदाचिदपि ᵛमा ᵛदभन् ᵛमा विनाशयन्तु । तथा ᵛऊतयः गन्तारः । यद्वा । धूतयः[1] इत्यत्र वर्णलोपः । धूतयः कम्पयितारः ᵛते त्वदीया मरुतश्च मा दभन् । हे ᵛमानुष मनुष्यहितेन्द्र ᵛचर्षणिभ्यः मन्त्रद्रष्टृभ्यः ᵛनः अस्मभ्यं ᵛविश्वा विश्वानि सर्वाणि ᵛवसूनि धनानि ᵛच ᵛआ ᵛउपमिमीहि सर्वत आहृत्यास्मत्समीपे कुरु। सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः ॥ कदा । किंशब्दात् ‘ सर्वैकान्यकिंयत्तदः काले दा ’ (पा.सू.५.३.१५) इति दाप्रत्ययः। ‘किमः कः’ इति कादेशः। व्यत्ययेन आद्युदात्तत्वम्।

---

१. क्ष-ट-ढ—ऊतयः ।

दभन्। ‘ दम्भु दम्भे ’। लोडर्थे छान्दसे लङि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक्। ‘ न माङ्योगे ’ इति अडभावः। मिमीहि। ‘ माङ् माने शब्दे च ’। व्यत्ययेन परस्मैपदम्। जुहोत्यादित्वात् श्लुः। ‘ भृञामित् ’ इति अभ्यासस्य इत्वम्। हेर्ङित्वात् ‘ घुमास्था° ’ इति ईत्वम्॥ ८॥ ॥ १३॥

चतुर्दशेऽनुवाके नव सूक्तानि। तत्र ‘ प्र ये ’ इति द्वादशर्चं प्रथमं सूक्तं गोतमस्यार्षम्। पञ्चमीद्वादश्यौ त्रिष्टुभौ। शिष्टा जगत्यः। मरुतो देवता। तथा चानुक्रान्तम्–‘ प्र ये द्वादश मारुतं ह पञ्चम्यन्त्ये त्रिष्टुभौ ’ इति। हशब्दप्रयोगादिदमादीनि चत्वारि सूक्तानि मरुद्देवत्यानि॥ अभिप्लवषडहस्य चतुर्थेऽहनि आग्निमारुते एतत्सूक्तं मारुतनिविद्धानीयम्। सूत्रितं च–‘ प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम् ’ ( आश्व. श्रौ. ७. ७ ) इति॥

प्र ये शुम्भ॑न्ते॒ जन॑यो॒ न सप्त॑यो॒ याम॑न्रु॒द्रस्य॑ सू॒नवः॑ सु॒दंस॑सः।
रोद॑सी॒ हि म॒रुत॑श्चक्रि॒रे वृ॒धे मद॑न्ति वी॒रा वि॒दथे॑षु॒ घृष्व॑यः॥ १॥

प्र। ये। शुम्भ॑न्ते। जन॑यः। न। सप्त॑यः। याम॑न्। रु॒द्रस्य॑। सू॒नवः॑। सु॒ऽदंस॑सः।
रोद॑सी॒ इति॑। हि। म॒रुतः॑। च॒क्रि॒रे। वृ॒धे। मद॑न्ति। वी॒राः। वि॒दथे॑षु। घृष्व॑यः॥ १॥

ये मरुतः यामन् यामनि गमने निमित्तभूते सति प्र शुम्भन्ते प्रकर्षेण स्वकीयान्यङ्गानि अलंकुर्वन्ति[1] जनयो न जाया इव। यथा योषितः स्वकीयान्यङ्गान्यलंकुर्वन्ति तद्वत्। कीदृशा मरुतः। सप्तयः सर्पणशीलाः रुद्रस्य सूनवः। रोदयति सर्वमन्तकाले इति रुद्रः परमेश्वरः। तस्य पुत्राः। सुदंससः शोभनकर्माणः। एतदेवोपपादयति। हि यस्मात् मरुतः रोदसी द्यावापृथिव्यौ वृधे वृष्टिप्रदानादिना वर्धनाय चक्रिरे कृतवन्तः। अतः सुदंसस इत्यर्थः। वीराः विशेषेण शत्रुक्षेपणशीलाः[2] घृष्वयः घर्षणशीलाः। महीरुहशिलोच्चयादेर्भञ्जका इत्यर्थः। एवंभूतास्ते मरुतः विदथेषु। विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञाः। तेषु मदन्ति सोमपानेन हृष्यन्ति॥ शुम्भन्ते। ‘ शुभ शुम्भ दीप्तौ ’। भौवादिकः। जनयः। जायन्ते आस्वपत्यानीति जनयो जायाः। ‘ इन्सर्वधातुभ्यः ’ इति इन्प्रत्ययः। यामन्। ‘ या प्रापणे ’। ‘ कृत्यल्युटो बहुलम् ’ इति बहुलवचनात् ‘ आतो मनिन्° ’ इति भावे मनिन्। ‘ सुपां सुलुक्° ’ इति सप्तम्याः लुक्। सुदंससः। दंसः इति कर्मनाम। शोभनं दंसो येषाम्। ‘ सोर्मनसी अलोमोषसी ’ इत्युत्तरपदाद्युदात्तत्वम्। चक्रिरे। ‘ हि च ’ इति निघातप्रतिषेधः। वृधे। ‘ वृधु वृद्धौ ’। संपदादिलक्षणो भावे क्विप्। ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम्। मदन्ति। ‘ मदी हर्षे ’। श्यनि प्राप्ते व्यत्ययेन शप्। पादादित्वात् निघाताभावः। विदथेषु। ‘ विद ज्ञाने ’। ‘ रुविदिभ्यां कित् ’ इति अथप्रत्ययः। घृष्वयः। ‘ घृषु संघर्षे ’। ‘ कृविघृष्वि° ’ इत्यादिना विन्प्रत्ययान्तो निपात्यते॥

---

१. क्ष–अलंकुर्वते। २. क्ष-ट-ढ–शत्रुक्षेपणकुशलाः।

त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः ।
अर्चन्तो अर्कं जनयन्त इन्द्रियमधि श्रियो दधिरे पृश्निमातरः ॥ २ ॥

ते । उक्षितासः । महिमानम् । आशत । दिवि । रुद्रासः । अधि । चक्रिरे । सदः ।
अर्चन्तः । अर्कम् । जनयन्तः । इन्द्रियम् । अधि । श्रियः । दधिरे । पृश्निऽमातरः ॥२॥

ये पूर्वोक्तगुणविशिष्टाः ते मरुतः उक्षितासः देवैरभिषिक्ताः सन्तः महिमानं महत्त्वम् आशत आप्नुवन्[1] । रुद्रासः रुद्रस्य पुत्राः । उपचाराज्जन्ये जनकशब्दः । ते रुद्रपुत्रा मरुतः दिवि द्योतमाने नभसि सदः सदनं स्थानम् अधि चक्रिरे अधिकं सर्वोत्कृष्टं कृतवन्तः । अर्कम् अर्चनीयमिन्द्रम् अर्चन्तः पूजयन्तः इन्द्रियम् इन्द्रस्य लिङ्गं वीर्यं जनयन्तः । ‘ प्रहर भगवो जहि वीरयस्व ’ ( ऐ. ब्रा. ३. २० ) इत्येवंरूपेण वाक्येनोत्पादयन्तः । पृश्निमातरः पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः श्रियः ऐश्वर्याणि अधि दधिरे आधिक्येनाधारयन् ॥ उक्षितासः । ‘ उक्ष सेचने ’ । कर्मणि निष्ठा । ‘ आज्जसेरसुक् ’ । महिमानम् । महच्छब्दात् पृथ्वादिलक्षण इमनिच् । ‘ टेः ’ इति टिलोपः । आशत । ‘ अशू व्याप्तौ ’ । लङि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । इन्द्रियम् । ‘ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्° ’ ( पा. सू. ५. २. ९३ ) इति घच्प्रत्ययान्तो निपात्यते । पृश्निमातरः । प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः । श्रूयते च–‘ इयं वै पृश्निः ’ ( तै. ब्रा. १. ४. १. ५ ) इति । ‘ घृणिः पृश्निः ’ इत्यादौ निपातनात् अभिमतरूपसिद्धिः[2] । पृश्निर्माता येषां ते तथोक्ताः । ‘ ऋतश्छन्दसि ’ ( पा. सू. ५. ४. १५८ ) इति समासान्तस्य कपः प्रतिषेधः ॥

गोमातरो यच्छुभयन्ते अञ्जिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः ।
बाधन्ते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतम् ॥ ३ ॥

गोऽमातरः । यत् । शुभयन्ते । अञ्जिऽभिः । तनूषु । शुभ्राः । दधिरे । विरुक्मतः ।
बाधन्ते । विश्वम् । अभिऽमातिनम् । अप । वर्त्मानि । एषाम् । अनु । रीयते । घृतम् ॥३॥

गोमातरः गोरूपा भूमिर्माता येषां ते मरुतः अञ्जिभिः रूपाभिव्यञ्जकैराभरणैः यत् यदा शुभयन्ते स्वकीयान्यङ्गानि शोभायुक्तानि कुर्वन्ति तदानीं शुभ्राः दीप्ता मरुतः तनूषु स्वकीयेषु शरीरेषु विरुक्मतः विशेषेण रोचमानानलंकारान् दधिरे धारयन्ति । अपि च विश्वं सर्वम् अभिमातिनं शत्रुम् अप बाधन्ते हिंसन्ति । एषां मरुतां वर्त्मानि मार्गाननुसृत्य घृतं क्षरणशीलमुदकं रीयते स्रवति । यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः ॥ शुभयन्ते । संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः । अञ्जिभिः । ‘ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ’ । ‘ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च ’ ( उ. सू. ४. ५७९ ) इति इप्रत्ययः । शुभ्राः । ‘ शुभ दीप्तौ ’ । ‘ स्फायितञ्चि° ’ इत्यादिना रक् । विरुक्मतः । विशिष्टा रुक् विरुक् । तद्वन्तो विरुक्मन्तः । मतुपि अयस्मयादित्वेन पदत्वात् कुत्वम् । भत्वात् जश्त्वाभावः । रीयते । ‘ रीङ् स्रवणे ’ । दैवादिकः ॥

---

१. क्ष-ट-ढ–प्राप्नुवन् । २. क्ष-ट-ढ–अभिमतरूपस्वरासिद्धिः ।

वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।

मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥ ४ ॥

वि । ये । भ्राजन्ते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयन्तः । अच्युता । चित् । ओजसा ।

मनःऽजुवः । यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ॥ ४ ॥

Vसुमखासः शोभनयज्ञाः Vये मरुतः Vऋष्टिभिः आयुधैः Vवि Vभ्राजन्ते विशेषेण दीप्यन्ते ते मरुतः Vअच्युता Vचित् च्यावयितुमशक्यानि दृढानि पर्वतादीन्यपि Vओजसा स्वकीयेन बलेन Vप्रच्यावयन्तः प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति । उत्तरार्धः प्रत्यक्षकृतः । हे Vमरुतः Vमनोजुवः मनोवद्वेगगतयः Vवृषव्रातासः वृष्ट्युदकसेचनसमर्थसप्तसंघात्मका यूयं Vरथेषु आत्मीयेषु Vपृषतीः । पृषत्यः इति मरुद्वाहनानां संज्ञा 'पृषत्यो मरुताम्' ( नि. १. १५. ६ ) इत्युक्तत्वात् । पृषद्भिः श्वेतबिन्दुभिर्युक्ताः मृगीः Vयत् यदा Vआ Vअयुग्ध्वं आभिमुख्येन नियुक्ता अकुरुध्वम् । तदानीं पर्वतादिकं प्रच्यवते इत्यर्थः ॥ सुमखासः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'नञ्सुभ्याम्' इत्यस्य प्रवृत्त्यभावे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अच्युता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । मनोजुवः । जु इति सौत्रो धातुर्गत्यर्थः । 'क्विब्वचि॰' इत्यादिना क्विब्दीर्घौ । अयुग्ध्वम् । 'युजिर् योगे' । लुङि 'धि च' ( पा. सू. ८. २. २५ ) इति सकारलोपः ॥

प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।

उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम ॥ ५ ॥

प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः । रंहयन्तः ।

उत । अरुषस्य । वि । स्यन्ति । धाराः । चर्मऽइव । उदऽभिः । वि । उन्दन्ति । भूम ॥५॥

हे Vमरुतः Vपृषतीः Vयत् यदा Vरथेषु[1] Vप्र Vअयुग्ध्वं प्रायूयुजत । किं कुर्वन्तः । Vवाजे अन्ने निमित्तभूते सति Vअद्रिं मेघं Vरंहयन्तः वर्षणार्थं प्रेरयन्तः । Vउत तदानीम् Vअरुषस्य आरोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशात् वृष्ट्युदकधाराः[2] भवन्तः Vवि Vष्यन्ति विमुञ्चन्ति । विमुक्तास्ताश्च Vधाराः Vउदभिः उदकैः Vचर्मेव परिमितमल्पं[3] चर्म यथा अप्रयत्नेन क्लेद्यते एवं Vभूम सर्वां भूमिं Vव्युन्दन्ति विशेषेणार्द्रां[4] कुर्वन्ति[4] ॥ रंहयन्तः । 'रहि गतौ' । वि ष्यन्ति । 'षो अन्तकर्मणि' । दैवादिकः । 'ओतः श्यनि' ( पा. सू. ७. ३. ७१ ) इति ओकारलोपः । 'उपसर्गात्सुनोति॰' इति षत्वम् । उदभिः । 'पद्दन्॰' इत्यादिना उदकशब्दस्य उदन्नादेशः । व्युन्दन्ति । 'उन्दी क्लेदने' । भूम । 'सुपां सुलुक्॰' इति भूमिशब्दात् उत्तरस्य अमः डादेशः । छान्दसं ह्रस्वत्वम् ॥

तृतीयसवने 'आ वो वहन्तु' इति पोतुः प्रस्थितयाज्या । सूत्रितं च–'आ वो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आ हि गन्तन' ( आश्व. श्रौ. ५. ५ ) इति ॥

---

१. क्ष–रथे । २. क्ष-ट-ढ–वृष्ट्युदकस्य धाराः । ३. क्ष–परिमितबलम् । ४. क्ष-ट-ढ-स–आर्द्रीकुर्वन्ति ।

आ वो॑ वहन्तु॒ सप्त॑यो रघु॒ष्यदो॑ रघु॒पत्वा॑नः॒ प्र जि॑गात बा॒हुभि॑ः ।
सीद॒ता ब॒र्हिरु॒रु वः॒ सद॑स्कृ॒तं मा॒दय॑ध्वं मरुतो॒ मध्वो॒ अन्ध॑सः ॥ ६ ॥

आ । व॒ः । व॒हन्तु॑ । सप्त॑यः । र॒घु॒ऽस्यदः॑ । र॒घु॒ऽपत्वा॑नः । प्र । जि॒गा॒त॒ । बा॒हु॒ऽभिः॑ ।
सीद॑त । आ । ब॒र्हिः । उ॒रु । व॒ः । सदः॑ । कृ॒तम् । मा॒दय॑ध्वम् । म॒रु॒तः॒ । मध्वः॑ । अन्ध॑सः ॥६॥

हे मरुतः ᵛवः युष्मान् ᵛसप्तयः सर्पणशीला अश्वाः ᵛआ ᵛवहन्तु अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । ᵛरघुष्यदः लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छन्त इत्यर्थः । ᵛरघुपत्वानः लघु शीघ्रं पतन्तो गच्छन्तो यूयं ᵛबाहुभिः स्वकीयैर्हस्तैः अस्मभ्यं दातव्यं धनमाहृत्य[1] ᵛप्र ᵛजिगात प्रकर्षेण गच्छत । हे ᵛमरुतः ᵛवः युष्माकं ᵛसदः सदनं वेदिलक्षणं स्थानम् ᵛउरु विस्तीर्णं ᵛकृतम् । तत्र यदास्तीर्णं ᵛबर्हिः तत् ᵛआ ᵛसीदत तस्मिन्बर्हिष्युपविशत । उपविश्य च ᵛमध्वः मधुरस्य ᵛअन्धसः सोमलक्षणस्यान्नस्य[2] पानेन ᵛमादयध्वं तृप्ता भवत ॥ रघुष्यदः । रघु स्यन्दन्ते इति रघुष्यदः । ' स्यन्दू प्रस्रवणे ' । ' क्विप् च ' इति क्विप् । ' अनिदिताम्° ' इति नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रघुपत्वानः । ' पत्लृ गतौ ' ' अन्येभ्योऽपि दृश्यन्ते ' इति वनिप् । जिगात । ' गा स्तुतौ ' । जौहोत्यादिकः । ' जिगाति ' ( नि. २.१४.११३ ) इति गतिकर्मसु पाठादत्र गत्यर्थः । लोण्मध्यमबहुवचनस्य ' तप्तनप्तनथनाश्च ' इति तबादेशः । तस्य पित्त्वेन ङित्त्वाभावात् ' ई हल्यघोः ' इति ईत्वाभावः । सदः । ' अतः कृकमि° ' ( पा. सू. ८. ३. ४६ ) इति विसर्जनीयस्य सत्वम् । मादयध्वम् । ' मद तृप्तियोगे ' । चुरादिरात्मनेपदी ॥ ॥ ९ ॥

तेऽव॑र्धन्त॒ स्वत॑वसो महित्व॒ना नाकं॑ त॒स्थुरु॒रु च॑क्रिरे॒ सदः॑ ।
विष्णु॒र्यद्धाव॒द्वृष॑णं मद॒च्युतं॒ वयो॒ न सी॑द॒न्नधि॑ ब॒र्हिषि॑ प्रि॒ये ॥ ७ ॥

ते । अ॒व॒र्ध॒न्त॒ । स्वऽत॑वसः । म॒हि॒ऽत्व॒ना । आ । नाक॑म् । त॒स्थुः । उ॒रु । च॒क्रि॒रे॒ । सदः॑ ।
विष्णुः॑ । यत् । ह॒ । आव॑त् । वृष॑णम् । म॒द॒ऽच्युत॑म् । वयः॑ । न । सी॒द॒न् । अधि॑ । ब॒र्हिषि॑ । प्रि॒ये॥७॥

ᵛते मरुतः ᵛअवर्धन्त वृद्धिं गताः । कीदृशाः । ᵛस्वतवसः स्वाश्रयबलाः । नान्यस्य कस्यचिद्बलमपेक्षन्ते । वृद्धिं प्राप्य च ᵛमहित्वना महिम्ना महत्त्वेन ᵛनाकं स्वर्गम् ᵛआ ᵛतस्थुः आस्थितवन्तः । ᵛसदः सदनं नभोलक्षणं स्थानं च स्वकीयनिवासाय ᵛउरु विस्तीर्णं ᵛचक्रिरे । ᵛयत् येभ्यो मरुद्भ्यो यदर्थं ᵛवृषणं कामाभिवर्षकं ᵛमदच्युतं मदस्य हर्षस्य आसेक्तारं यज्ञं ᵛविष्णुः ᵛह ᵛआवत् विष्णुरेवागत्य रक्षति ते मरुतः ᵛवयो ᵛन पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य ᵛबर्हिषि ᵛअधि अस्मदीये यज्ञे ᵛप्रिये प्रीतिकरे ᵛसीदन् सीदन्तु उपविशन्तु ॥ तेऽवर्धन्त । ' स्वरितो वानुदात्ते पदादौ ' ( पा. सू. ८. २. ६ ) इति एकादेशस्य स्वरितत्वम् । महित्वना । भावप्रत्ययादुत्तरस्य आङः व्यत्ययेन नाभावः उदात्तत्वं च । यद्वा । ' सुपां सुलुक्° ' इति आजादेशो नकारोपजनश्च । तस्थुः । नाकमातस्थुश्च सदश्च विस्तीर्णं चक्रिरे इति चार्थप्रतीतेः ' चादिलोपे विभाषा ' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः ।

---

१. क्ष-स–धनमाहृत्य बाहुभिरन्तरिक्षं भिन्दानाः ।　२. क्ष–सोमलक्षणान्नस्य

यत्। 'सुपां सुलुक्०' इति चतुर्थ्या लुक्। आवत्। छान्दसो वर्तमाने लङ्। वृषणम्। 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः। मदच्युतम्। मदं च्योततीति मदच्युत्। 'च्युतिर् आसेचने'। 'क्विप् च' इति क्विप्। सीदत्। लिङर्थे लेटि अडागमः॥

शूरा॑इ॒वेद्युयु॑धयो॒ न जग्म॑यः श्रव॒स्यवो॒ न पृत॑नासु येतिरे।
भय॑न्ते॒ विश्वा॒ भुव॑ना म॒रुद्भ्यो॒ राजा॑नइव त्वे॒षसं॑दृशो॒ नरः॑ ॥ ८ ॥

शूराः॑ऽइव। इत्। युयु॑धयः। न। जग्म॑यः। श्र॒व॒स्यवः॑। न। पृत॑नासु। ये॒ति॒रे॒।
भय॑न्ते। विश्वा॑। भुव॑ना। म॒रुत्ऽभ्यः॑। राजा॑नःऽइव। त्वे॒षऽसं॑दृशः। नरः॑ ॥ ८ ॥

इत् इत्येतत्समुच्चये। ᵛशूराइवेत् शौर्योपेता युयुत्सवः पुरुषा इव च ᵛयुयुधयः शत्रुभिर्युध्यमानाः पुरुषा इव च ᵛजग्मयः शीघ्रं गच्छन्तो मरुतः ᵛश्रवस्यवो ᵛन श्रवोऽन्नमात्मन इच्छन्तः पुरुषा इव ᵛपृतनासु संग्रामेषु ᵛयेतिरे प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते। तादृशेभ्यः ᵛमरुद्भ्यः ᵛविश्वा ᵛभुवना सर्वाणि भूतजातानि[1] ᵛभयन्ते बिभ्यति। ये ᵛनरः वृष्ट्यादेर्नेतारो मरुतः ᵛराजानइव राजमाना नृपतय इव ᵛत्वेषसंदृशः दीप्तसंदर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति तेभ्य इत्यर्थः॥ युयुधयः। 'युध संप्रहारे'। 'आदृगमहनजनः०' इत्यत्र 'उत्सर्गश्छन्दसि' (पा. सू. ३. २. १७१. २) इति वचनात् किन्प्रत्ययः। लिड्वद्भावात् द्विर्भावादि। कित्त्वात् गुणाभावः। नित्त्वादाद्युदात्तत्वम्। जग्मयः। तेनैव सूत्रेण किन्प्रत्ययः। 'गमहन०' इत्यादिना उपधालोपः। स्थानिवद्भावात् द्विर्भावादि। श्रवस्यवः। श्रव इच्छति श्रवस्यति। 'क्याच्छन्दसि' इति उप्रत्ययः। येतिरे। 'यती प्रयत्ने'। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट्। भयन्ते। 'ञिभी भये'। 'बहुलं छन्दसि' इति शपः श्लोरभावः। त्वेषसंदृशः। 'त्विष दीप्तौ'। पचाद्यच्। 'दृशिर् प्रेक्षणे'। संपूर्वादस्मात् संपदादिलक्षणो भावे क्विप्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

त्वष्टा॒ यद्वज्रं॒ सुकृ॑तं हिर॒ण्ययं॑ स॒हस्र॑भृष्टिं॒ स्वपा॒ अव॑र्तयत्।
ध॒त्त इन्द्रो॒ नर्यपां॑सि॒ कर्त॒वेऽह॑न्वृ॒त्रं निर॒पामौ॑ब्जदर्ण॒वम् ॥ ९ ॥

त्वष्टा॑। यत्। वज्र॑म्। सुऽकृ॑तम्। हि॒र॒ण्यय॑म्। स॒हस्र॑ऽभृष्टिम्। सु॒ऽअपाः॑। अव॑र्तयत्।
ध॒त्ते। इन्द्रः॑। नरि॑। अपां॑सि। कर्त॑वे। अह॑न्। वृ॒त्रम्। निः। अ॒पाम्। औ॒ब्ज॒त्। अ॒र्ण॒वम् ॥ ९ ॥

ᵛस्वपाः शोभनकर्मा ᵛत्वष्टा विश्वनिर्माता ᵛयद्वज्रम् ᵛअवर्तयत् इन्द्रं प्रत्यगमयत् दत्तवानित्यर्थः। कीदृशम्। ᵛसुकृतं सम्यङ्निष्पादितं ᵛहिरण्ययं सुवर्णमयं ᵛसहस्रभृष्टिम् अनेकाभिर्धाराभिर्युक्तम्। तद्वज्रम् ᵛइन्द्रः ᵛधत्ते धारयति। किमर्थम्। ᵛनरि। अत्र नृसंबन्धात् नृशब्देन संग्रामोऽभिधीयते। संग्रामे ᵛअपांसि शत्रुहननादिलक्षणानि कर्माणि ᵛकर्तवे कर्तुम्। एवं वज्रं धृत्वा तेन वज्रेण ᵛवृत्रं वृष्ट्युदकस्यावरकम् ᵛअर्णवम् अर्णसोदकेन युक्तं मेघम् ᵛअहन् अवधीत्। ᵛअपां तेन निरुद्धा अपश्च सः[2] ᵛनिः ᵛऔब्जत् निःशेषेणाधोमुखमपातयत् प्रवृष्टा अकरोदित्यर्थः॥ सुकृतम्। सुपूर्वात् करोतेः

१. क्ष–भूतानि। २. क्ष-न-स–'सः' नास्ति।

कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । हिरण्ययम् । हिरण्यशब्दादुत्तरस्य मयटो मकारस्य लोपः 'ऋत्व्यवास्त्व्यवास्त्व' इत्यादौ निपात्यते । स्वपाः । 'सोमनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । कर्तवे । 'तुमर्थे सेसेन्' इति करोतेः तवेन्प्रत्ययः । अपाम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । औब्जत् । 'उब्ज आर्जवे' । अर्णवम् । 'अर्णसो लोपश्च' (का. ५. २. १०९. २) इति मत्वर्थीयो वः सलोपश्च[1] ॥

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् ।
धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥ १० ॥

ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । दृदृहाणम् । चित् । बिभिदुः । वि । पर्वतम् ।
धमन्तः । वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥ १० ॥

अत्रेयमाख्यायिका । गोतम ऋषिः पिपासया पीडितः सन् मरुत उदकं ययाचे । तदनन्तरं मरुतोऽदूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं[2] नीत्वा ऋषिसमीपे कूपमवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयांचक्रुः । अयमर्थोऽनयोत्तरया च प्रतिपाद्यते ॥ ᵛते मरुतः ᵛअवतम् । अवस्तात्ततो भवतीति अवतः कूपः । कूपनामसु च 'अवतः अवटः' (नि. ३. २३. ७) इति पठितम् । तम् ᵛऊर्ध्वम् उपरि यथा भवति तथा ᵛओजसा स्वकीयेन बलेन ᵛनुनुद्रे प्रेरितवन्तः उत्खातवन्त इत्यर्थः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तः मरुतः मार्गमध्ये ᵛदृदृहाणं प्रवृद्धं गतिनिरोधकं ᵛपर्वतं ᵛचित् पर्ववन्तं शिलोच्चयमपि ᵛवि ᵛबिभिदुः विशेषेण बभञ्जुः । ᵛसुदानवः शोभनदानास्ते ᵛमरुतः ᵛवाणं शतसंख्याभिः[3] तन्त्रीभिर्युक्तं वीणाविशेषं ᵛधमन्तः वादयन्तः ᵛसोमस्य ᵛमदे सोमपानेन हर्षे सति ᵛरण्यानि स्तुत्यानि रमणीयानि धनानि ᵛचक्रिरे स्तोतृभ्यः कुर्वन्ति ॥ नुनुद्रे । 'णुद प्रेरणे' । लिटि 'इरयो रे' इति रेआदेशः । दृदृहाणम् । 'दृह दृहि वृद्धौ' । लिटः कानच् । धमन्तः । 'ध्मा शब्दाग्निसंयोगयोः' । 'पाघ्रा°' इत्यादिना धमादेशः । वाणम् । 'अण रण वण शब्दार्थाः' । कर्मणि घञ् । 'कर्षात्वतः°' इत्यन्तोदात्तत्वम् । रण्यानि । रणतेर्भावे 'वशिरण्योरुपसंख्यानम्' (पा. सू. ३. ३. ५८. ३) इति अप् । ततः 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् ॥

जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।
आ गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥ ११ ॥

जिह्मम् । नुनुद्रे । अवतम् । तया । दिशा । असिञ्चन् । उत्सम् । गोतमाय । तृष्णऽजे ।
आ । गच्छन्ति । ईम् । अवसा । चित्रऽभानवः । कामम् । विप्रस्य । तर्पयन्त । धामऽभिः ॥ ११ ॥

---

१. क्ष—सकारलोपश्च । २. क्ष-स—दिशं प्रति । ३. क्ष—शतसंख्याकाभिः ।

मरुतः ᐯअवतम् उद्धृतं कूपं यस्यां दिशि ऋषिर्वसति ᐯतया ᐯदिशा ᐯजिह्मं वक्रं तिर्यञ्चं ᐯनुनुद्रे प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य ᐯतृष्णजे तृषिताय ᐯगोतमाय ऋषये तदर्थम् ᐯउत्सं जलप्रवाहं कूपादुद्धृत्य ᐯअसिञ्चन् आहावेऽवानयन् । एवं कृत्वा ᐯईम् एनं स्तोतारमृषिं ᐯचित्रभानवः विचित्रदीप्तयस्ते मरुतः ᐯअवसा ईदृशेन रक्षणेन सह ᐯआ ᐯगच्छन्ति तत्समीपं प्राप्नुवन्ति । प्राप्य च ᐯविप्रस्य मेधाविनो गोतमस्य ᐯकामम् अभिलाषं ᐯधामभिः आयुषो धारकैरुदकैः ᐯतर्पयन्त अतर्पयन् ॥ तया । 'न गोश्वन्साववर्ण°' इति 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तस्य प्रतिषेधः । दिशा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । तृष्णजे । 'ञितृषा पिपासायाम्' । 'स्वपितृषोर्नजिङ्' (पा. सू. ३. २. १७२) । प्रत्ययाद्युदात्तत्वम् । पदकारस्य शाकल्यस्य त्वयमभिप्रायः । 'अन्येष्वपि दृश्यते' इति दृशिग्रहणात् केवलादपि जनेर्डप्रत्ययः । तृष्णा जाता यस्य स तथोक्तः । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । धामभिः । दधातेः 'आतो मनिन्°' इति मनिन् ॥

मारुते पशौ 'या वः शर्म' इति हविषो याज्या । 'प्रदानानाम्' इति खण्डे सूत्रितम्—'अरा इवेदचरमा अहेव या वः शर्म शशमानाय सन्ति' (आश्व. श्रौ. ३. ७) इति ॥

**या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।**

**अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ॥ १२ ॥**

या । वः । शर्म । शशमानाय । सन्ति । त्रिऽधातूनि । दाशुषे । यच्छत । अधि ।

अस्मभ्यम् । तानि । मरुतः । वि । यन्त । रयिम् । नः । धत्त । वृषणः । सुऽवीरम् ॥ १२ ॥

हे मरुतः ᐯवः युष्माकं संबन्धीनि ᐯया यानि ᐯशर्म शर्माणि सुखानि गृहाणि वा । कीदृशानि । ᐯत्रिधातूनि पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि ᐯशशमानाय युष्मान् स्तुतिभिर्भजमानाय दातुं संपादितानि । पूर्वोक्तलक्षणानि शर्माणि यानि ᐯसन्ति यानि च ᐯदाशुषे हविर्दत्तवते यजमानाय ᐯअधि ᐯयच्छत अधिकं प्रयच्छथ हे ᐯमरुतः ᐯतानि सर्वाणि शर्माणि ᐯअस्मभ्यं ᐯवि ᐯयन्त विशेषेण प्रयच्छत । किंच हे ᐯवृषणः कामानां वर्षितारो मरुतः ᐯनः अस्मभ्यं ᐯसुवीरं शोभनैर्वीरैः पुत्रादिभिर्युक्तं ᐯरयिं धनं ᐯधत्त दत्त ॥ या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । शर्म । 'सुपां सुलुक्°' इति जसो लुक् । शशमानाय । 'शश प्लुतगतौ' । ताच्छीलिकः चानश् । यच्छत । छान्दसे लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । यन्त । यमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः । अतस्तस्य पित्त्वेन ङित्त्वाभावात् 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपो न भवति । वृषणः । 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः । सुवीरम् । बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥ ॥ १० ॥

'मरुतो यस्य' इति दशर्चं द्वितीयं सूक्तं गोतमस्यार्षं गायत्रं मरुद्देवताकम् । अनुक्रम्यते च—'मरुतो दश गायत्रम्' इति । व्यूळ्हे तृतीये छन्दोमे आग्निमारुते शस्त्रे एतत्सूक्तम् । 'तृतीयस्यागन्म महः' इति खण्डे सूत्रितं—'मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतम्' (आश्व. श्रौ. ८. ११)

इति । ऐन्द्रामारुत्यां प्रधानस्य[1] हविषो ' मरुतो यस्य ' इत्येषा अनुवाक्या । सूत्रितं च–' ऐन्द्रामारुतीं भेदकामा मरुतो यस्य हि क्षये ' ( आश्व. श्रौ. २. ११ ) इति । एवैव वरुणप्रघासेषु मारुत्याः आमिक्षाया अनुवाक्या । सूत्रितं च–' मरुतो यस्य हि क्षयेऽरा इवेदचरमा अहेव ' ( आश्व. श्रौ. २. १७ ) इति । तथा प्रातःसवने पोतुरेषा प्रस्थितयाज्या । सूत्रितं च–' मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहा वह ' ( आश्व. श्रौ. ५. ५ ) इति ॥

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ १ ॥

मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ॥ १ ॥

हे विमहसः विशिष्टप्रकाशाः मरुतः दिवः अन्तरिक्षलोकादागत्य यस्य हि यस्य खलु यजमानस्य क्षये यज्ञगृहे पाथ सोमं पिबथ सः जनः जातो यजमानः सुगोपातमः शोभनैः पालकैरत्यन्तं युक्तो भवति ॥ पाथ । ' पा पाने ' । लटि ' बहुलं छन्दसि ' इति शपो लुक् । यद्वृत्तयोगादनिघातः[2] । विमहसः । विशिष्टं महस्तेजो येषां ते तथोक्ताः । सुगोपातमः । शोभनो गोपा रक्षको यस्य स सुगोपाः । अतिशयेन सुगोपाः सुगोपातमः । तमपः पित्त्वादनुदात्तत्वे सति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वमेव शिष्यते ॥

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥ २ ॥

यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनाम् । मरुतः । शृणुत । हवम् ॥ २ ॥

हे यज्ञवाहसः यज्ञस्य वोढारः मरुतः यूयं यज्ञैर्वा । वाशब्दः समुच्चये । यज्ञैश्च यजमानस्य मतीनां स्तुतीनां संबन्धिनः विप्रस्य वा अयजमानस्य मेधाविनश्च हवम् आह्वानं शृणुत । यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानमवश्यं भवद्भिः श्रोतव्यं यतः[3] भवन्तो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः ॥ यज्ञवाहसः । ' गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इति वचनात् ' वहिहाधाञ्भ्यश्छन्दसि ' इति कारकपूर्वात् वहतेरसुन् । ' णित् ' इत्यनुवृत्तेः उपधावृद्धिः । मतीनाम् । ' मन ज्ञाने ' । अस्मात् करणे क्तिन् । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् । शृणुत । ' श्रुवः शृ च ' इति श्नुः । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् तिङ एव स्वरः शिष्यते । मरुत इत्यस्य आमन्त्रितस्य ' आमन्त्रितं पूर्वमविद्यमानवत् ' इति अविद्यमानवत्त्वेन पदादपरत्वात् निघाताभावः । हवम् । ' भावेऽनुपसर्गस्य ' इति ह्वयतेरप् संप्रसारणं च ॥

उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गन्ता गोमति व्रजे ॥ ३ ॥

उत । वा । यस्य । वाजिनः । अनु । विप्रम् । अतक्षत । सः । गन्ता । गोऽमति । व्रजे ॥३॥

उत वा अपि च यस्य यजमानस्य वाजिनः हविर्लक्षणान्नोपेता ऋत्विजः विप्रं मेधाविनं मरुद्गणम् अनु अतक्षत हविष्प्रदानादिना तीक्ष्णीकुर्वन्ति सः यजमानः गोमति बहुभिर्गोभिर्युक्ते

१. स–प्रथमस्य ।　२. क्ष–यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ।　३. क्ष-स–अतः

ᐯव्रजे गोष्ठे ᐯगन्ता गमनशीलो भवति ॥ अतक्षत । ' तक्षू त्वक्षू तनूकरणे ' । छान्दसो लङ् । व्यत्ययेन मध्यमः । गन्ता । गमेस्ताच्छीलिकः तृन् ॥

अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥ ४ ॥

अस्य । वीरस्य । बर्हिषि । सुतः । सोमः । दिविष्टिषु । उक्थम् । मदः । च । शस्यते ॥४॥

ᐯदिविष्टिषु यजनीयदिवसेषु ᐯबर्हिषि यज्ञे ᐯवीरस्य शत्रुक्षेपणकुशलस्य ᐯअस्य मरुद्गणस्य यागाय[1] ᐯसोमः ᐯसुतः । ऋत्विग्भिरभिषुतो भवति । ᐯउक्थं मरुद्देवताकं शस्त्रं ᐯमदश्च मदिधातुना युक्ता ' मरुतो देवाः सोमस्य मत्सन् ' इत्यादिका मारुती निवित् च अस्य मरुद्गणस्य हर्षाय ᐯशस्यते होत्रा पठ्यते ॥ अस्य । ' ऊडिदम्० ' इति विभक्तेरुदात्तत्वम् । दिविष्टिषु । इष्टय एषणानि गमनानि । दिवो द्योतमानस्य सूर्यस्येष्टयो येषु दिवसेषु ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्यत्ययेन उत्वा-भावः ॥

अस्य श्रोषन्त्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित्सस्रुषीरिषः ॥ ५ ॥

अस्य । श्रोषन्तु । आ । भुवः । विश्वाः । यः । चर्षणीः । अभि । सूरम् । चित् । सस्रुषीः । इषः ॥५॥

ᐯअस्य यजमानस्य स्तुतिं मरुतः ᐯआ आभिमुख्येन ᐯश्रोषन्तु शृण्वन्तु । ᐯयः मरुद्गणः ᐯविश्वाः ᐯचर्षणीः सर्वान् शत्रुभूतान्मनुष्यान् ᐯअभि ᐯभुवः अभिभवति । तादृग्गणाकारा मरुतः शृण्वन्त्वित्यर्थः । ᐯसूरं ᐯचित् स्तुतेः प्रेरयितारं यजमानमपि ᐯइषः मरुद्भिः प्रत्तान्यन्नानि ᐯसस्रुषीः प्राप्तानि भवन्तु ॥ श्रोषन्तु । ' श्रु श्रवणे ' । लोटि ' सिब्बहुलं लेटि ' इति बहुलवचनात् सिप् । भुवः । भवतेर्लेटि तिपः ' तिङां तिङो भवन्ति ' इति सिप् । ' लेटोऽडाटौ ' इति अडागमः । ' बहुलं छन्दसि ' इति शपो लुक् । ' भूसुवोस्तिङि ' इति गुणप्रतिषेधः । सूरम् । ' षू प्रेरणे ' । ' सुसूधागृधिभ्यः क्रन् ' इति क्रन्प्रत्ययः । सस्रुषीः । ' स्रु गतौ ' । अस्मात् लिटः क्वसुः । ' उगितश्च ' इति ङीप् । भसंज्ञायां ' वसोः संप्रसारणम् ' इति संप्रसारणम् । ' शासिवसिघसीनां च ' इति षत्वम् । जसि ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् ॥ ॥ ११ ॥

पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । अवोभिश्चर्षणीनाम् ॥ ६ ॥

पूर्वीभिः । हि । ददाशिम । शरत्ऽभिः । मरुतः । वयम् । अवःऽभिः । चर्षणीनाम् ॥६॥

हे ᐯमरुतः ᐯपूर्वीभिः बह्वीभिः ᐯशरद्भिः संवत्सरैः ᐯचर्षणीनां सर्वस्य द्रष्टॄणां सर्वज्ञानां भवतां संबन्धिभिः ᐯअवोभिः रक्षणैर्युक्ताः सन्तः ᐯवयं ᐯददाशिम युष्मभ्यं हवींषि दत्तवन्तः । ᐯहि यस्मा-दर्थे । यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छत इत्यर्थः ॥ पूर्वीभिः । पुरुशब्दात् ' वोतो गुणवचनात् ' इति ङीष् । यणादेशे ' हलि च ' इति दीर्घत्वम् । ददाशिम । ' दाशृ दाने ' । लिटि इडागमः । ' हि च ' इति निघातप्रतिषेधः । चर्षणीनाम् । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् ॥

---

१. क्ष-ट-ढ—पानाय ।

सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ॥ ७ ॥

सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ॥ ७ ॥

हे प्रयज्यवः प्रकर्षेण यष्टव्याः मरुतः सः मर्त्यः मनुष्यो यजमानः सुभगः अस्तु शोभनधनो भवतु । यस्य यजमानस्य प्रयांसि हविर्लक्षणान्यन्नानि पर्षथ आत्मनि सिञ्चथ स्वीकुरुथ इत्यर्थः ॥ सुभगः । भग इति धननाम । शोभनो भगो यस्य । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । पर्षथ । 'पृषु वृषु मृषु सेचने' । भौवादिकः । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ॥

शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ॥ ८ ॥

शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ॥ ८ ॥

हे सत्यशवसः अवितथबलाः नरः नेतारो मरुतः शशमानस्य युष्मान् स्तुतिभिः संभजमानस्य स्वेदस्य स्तावकमन्त्रोच्चारणजनितेन श्रमेण स्विद्यमानगात्रस्य वेनतः । वेनतिः कान्तिकर्मा । कामयमानस्य । वाशब्दः समुच्चये । एवंभूतस्य स्तोतुश्च कामस्य काममभिलाषं विद लम्भयत प्रयच्छतेत्यर्थः ॥ शशमानस्य । 'शश प्लुतगतौ' । ताच्छीलिकः चानश् । स्वेदस्य । 'ञिष्विदा गात्रप्रक्षरणे' । अन्तर्भावितण्यर्थात् कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । विद । 'विद्लृ लाभे' । लोटि मध्यमपुरुषबहुवचनस्य व्यत्ययेन झादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । झस्य अदादेशः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । प्रत्ययाद्युदात्तत्वम् । पादादित्वात् निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । कामस्य । वृषादिषु पाठादाद्युदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥

यूयं तत्सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥ ९ ॥

यूयम् । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥९॥

हे सत्यशवसः सत्यबला अन्यैरप्रधृष्यबला मरुतः यूयं तत् वृत्रवधादिषु प्रसिद्धं युष्मदीयं माहात्म्यम् आविष्कर्त आविष्कुरुत प्रकाशयत । विद्युता विद्योतमानेन महित्वना तेन महत्त्वेन माहात्म्येन रक्षः अस्माकमुपद्रवकारिणं राक्षसादिकं विध्यत ताडयत नाशयतेत्यर्थः ॥ कर्त । करोतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तबादेशः । गुणः । 'इदुदुपधस्य चाप्रत्ययस्य' ( पा. सू. ८. ३. ४१ ) इति आविःशब्दे विसर्जनीयस्य षत्वम् । महित्वना । भावप्रत्ययादुत्तरस्य आङः व्यत्ययेन नाभावः उदात्तत्वं च । यद्वा । 'सुपां सुलुक्°' इति तृतीयाया आजादेशो नकारोपजनश्च । विध्यत । 'व्यध ताडने' । श्यनि ग्रहिज्यादिना संप्रसारणम् । तशब्दस्य 'सार्वधातुकमपित्' इति ङित्त्वे सति 'ऋचि तुनुघमक्षुतङ्°' इति संहितायां दीर्घः ॥

गूहता गुह्यं तमो वि यात विश्वमत्रिणम् । ज्योतिष्कर्ता यदुश्मसि ॥ १० ॥

गूहत । गुह्यम् । तमः । वि । यात । विश्वम् । अत्रिणम् । ज्योतिः । कर्त । यत् । उश्मसि ॥१०॥

हे मरुतः vगुह्यं गुहायां स्थितं सर्वत्र व्याप्य वर्तमानं vतमः अन्धकारं vगूहत संवृतं कुरुत । यथा अस्माभिर्न दृश्यते तथा अदर्शनं प्रापयत विनाशयतेत्यर्थः । vविश्वं सर्वम् vअत्रिणम् अत्तारं राक्षसादिकं vवि vयात विविधं यापयत अस्मत्सकाशात् निर्गमयत । vयत् vज्योतिः सूर्यादिकं वयम् vउश्मसि कामयामहे तत् vकर्त कुरुत । यद्वा । गुह्यं गुहायां शरीरान्तर्गतगुहारूपे हृदये भवं तमो भावरूपाज्ञानं तद्गूहत[1] विनाशयत । अत्रिणं पुरुषार्थस्यात्तारं कामक्रोधादिकं सर्वं विनिर्गमयत । यज्ज्योतिः परतत्त्वसाक्षात्काररूपं ज्ञानं कामयामहे प्राणापानादिपञ्चवृत्तिरूपा हे मरुतस्तत्कर्त कुरुत ॥ गूहत । 'गुहू संवरणे' । शपि लघूपधगुणे 'ऊदुपधाया गोहः' ( पा. सू. ६. ४. ८९ ) इति उपधाया ऊकारः । यात । 'या प्रापणे' । अस्मात् अन्तर्भावितण्यर्थात् लोट् । अत्रिणम् । 'अदेस्त्रिनि च' ( उ. सू. ४. ५०८ ) इति त्रिनिप्रत्ययः । उश्मसि । 'वश कान्तौ' । इदन्तो मसिः । अदादित्वात् शपो लुक् । ग्रहिज्यादिना संप्रसारणम् ॥ ॥ १२ ॥

'प्रत्वक्षसः' इति षड्टचं तृतीयं सूक्तं गोतमस्यार्षं जागतं मारुतम् । तथा चानुक्रान्तं— 'प्रत्वक्षसः षड् जागतम्' इति । अग्निष्टोमे आग्निमारुतशस्त्रे इदं सूक्तं मारुतनिविद्धानम् । 'अथ यथेनम्' इति खण्डे सूत्रितं—'प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये' ( आश्व. श्रौ. ५. २० ) इति ॥

प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
जुष्टतमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्राइव स्तृभिः ॥ १ ॥

प्रऽत्वक्षसः । प्रऽतवसः । विऽरप्शिनः । अनानताः । अविथुराः । ऋजीषिणः ।
जुष्टऽतमासः । नृऽतमासः । अञ्जिऽभिः । वि । आनज्रे । के । चित् । उस्राःऽइव । स्तृऽभिः ॥१॥

vप्रत्वक्षसः शत्रूणां प्रकर्षेण तनूकर्तारः शत्रुघातिन इत्यर्थः । यतः vप्रतवसः प्रकृष्टबलोपेताः अत एव vविरप्शिनः विविधेन जयघोषेणोपेताः । यद्वा । महन्नामैतत् । महान्तो हि विविधैः शब्दैः प्रशस्यन्ते । अत एव vअनानताः आनतिरहिताः सर्वोत्कृष्टा इत्यर्थः । vअविथुराः अवियुक्ताः । सप्तगणरूपेण संघीभूता इत्यर्थः । vऋजीषिणः । तृतीयसवने ऋजीषस्याभिषवात् तत्र च मरुतः स्तूयन्ते इति तेषामृजीषित्वम् । यद्वा । ऋजीषिणः प्रार्जयितारो रसानाम् । vजुष्टतमासः अतिशयेन यष्टृभिः सेविताः vनृतमासः अतिशयेन मेघादेर्नेतारः एवंभूता मरुतः vस्तृभिः स्वशरीरस्याच्छादकैः vअञ्जिभिः रूपाभिव्यञ्जकैराभरणैः vव्यानज्रे नभसि व्यक्ता दृश्यन्ते । तत्र दृष्टान्तः । vके vचित् vउस्राइव । ये[2] केचन सूर्यरश्मयो यथा नभसि दीप्यन्ते तद्वत् ॥ प्रत्वक्षसः । प्रकर्षेण त्वक्षन्ते तनूकुर्वन्तीति प्रत्वक्षसः । 'तक्षू त्वक्षू तनूकरणे' । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । प्रतवसः । तवः इति बलनाम । प्रकृष्टं तवो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । विरप्शिनः । 'रप लप व्यक्तायां वाचि' । विरपणं विरप्शः । औणादिकः शक्प्रत्ययः । तद्वन्तो विरप्शिनः । अनानताः । आनता अवनताः प्रह्वीभूताः । न आनता अनानताः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अविथुराः । 'व्यथ भयचलनयोः' । 'व्यथेः संप्रसारणं धः किच्च'

---

१. क्ष—गूहत । २. ट-ढ-स—'ये' नास्ति ।

( उ. सू. १. ३९ ) इति उरच्प्रत्ययः । अत्र तु बहुलवचनात् घत्वं न क्रियते । पूर्ववत् समासस्वरौ । जुष्टतमासः । ' नित्यं मन्त्रे ' इति जुष्टशब्दः आद्युदात्तः । तत आतिशायनिकस्य तमपः पित्त्वादनुदात्तत्वे स एव स्वरः शिष्यते । आनञ्जे । ' अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ' । कर्मणि ' छन्दसि लुङ्लङ्लिटः ' इति वर्तमाने लिट् । ' अत आदेः ' इति अभ्यासस्य आत्वम् । ' तस्मान्नुड् द्विहलः ' ( पा. सू. ७. ४. ७१ ) इति नुट् । व्यत्ययेन उपधालोपः । ' इरयो रे ' । स्तृभिः । ' स्तृञ् आच्छादने ' । क्विप् । आगमानुशासनस्यानित्यत्वात् तुगभावः ॥

उपह्वरेषु यदचिध्वं ययिं वयइव मरुतः केन चित्पथा ।

श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते ॥ २ ॥

उपऽह्वरेषु । यत् । अचिध्वम् । ययिम् । वयःऽइव । मरुतः । केन । चित् । पथा ।

श्चोतन्ति । कोशाः । उप । वः । रथेषु । आ । घृतम् । उक्षत । मधुऽवर्णम् । अर्चते ॥२॥

हे मरुतः उपह्वरेषु उपह्वर्तव्येषु गन्तव्येष्वस्माकं संनिकृष्टेषु नभसः प्रदेशेषु यत् यदा ययिं गतिमन्तं मेघम् अचिध्वं वर्षणसामर्थ्येनोपचितं कुरुथ । किं कुर्वन्तः । वयइव पक्षिण इव केन चित् पथा केनचिदाकाशमार्गेण शीघ्रं गच्छन्तः । नभसि शीघ्रं वर्षणार्थं प्रवर्तमानैर्मरुद्भिर्मेघा उपचीयन्ते इत्यर्थः । तदानीं कोशाः । मेघनामैतत् । वः युष्माकं रथेषु आसक्ता मेघाः श्चोतन्ति जलं मुञ्चन्ति । यस्मादेवं तस्मात् हे मरुतो यूयम् अर्चते युष्मान् हविर्भिः पूजयते मह्यं यजमानाय मधुवर्णं मधुसदृशरूपं स्वच्छं घृतं वृष्ट्युदकम् आ समन्तात् उक्षत सिञ्चत । अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः ॥ उपह्वरेषु । ' ह्वृ कौटिल्ये ' । उपह्वरन्ति कौटिल्येन तिर्यग्गच्छन्त्येष्विति उपह्वरा नभःप्रदेशाः । ' पुंसि संज्ञायां घः प्रायेण ' इति अधिकरणे घः । अचिध्वम् । चिनोतेः वर्तमाने लङ् । ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ययिम् । ' या प्रापणे ' । ' आदृगमहनजनः० ' इति किप्रत्ययः । पथा । आङि ' भस्य टेर्लोपः ' इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । श्चोतन्ति । ' श्च्युतिर् क्षरणे ' । छान्दसो यलोपः । उक्षत । ' उक्ष सेचने ' । लोटि तशब्दस्य ङित्त्वे सति ' ऋचि तुनुघ० ' इत्यादिना सांहितिको दीर्घः ॥

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।

ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः ॥ ३ ॥

प्र । एषाम् । अज्मेषु । विथुराऽइव । रेजते । भूमिः । यामेषु । यत् । ह । युञ्जते । शुभे ।

ते । क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः । स्वयम् । महिऽत्वम् । पनयन्त । धूतयः ॥ ३ ॥

यद्ध यदा खलु एते मरुतः शुभे शोभनाय वृष्ट्युदकाय युञ्जते मेघान् सज्जीकुर्वन्ति तदानीम् अज्मेषु मेघानामुत्क्षेपकेषु एषां मरुतां संबन्धिषु यामेषु मेघानां नियमनेषु सत्सु भूमिः पृथिवी[1] प्र

१. क्ष-स-' पृथिवी ' नास्ति ।

vरेजते प्रकर्षेण कम्पते। यद्वा। यदा खलु मरुतः स्वकीयान् रथान् युञ्जते अश्वैर्योजयन्ति तदानीमेषां रथानां संबन्धिषु पर्वतादृत्क्षेपकेषु यामेषु गमनेषु[1] भूमिर्भीत्या कम्पते। तत्र दृष्टान्तः। vविथुरेव। यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत्। vते तादृशाः vक्रीळयः विहारशीलाः vधुनयः चलनस्वभावाः vभ्राजदृष्टयः दीप्यमानायुधाः एवंभूता मरुतः vधूतयः पर्वतादीन् धुन्वन्तः सन्तः vमहित्वं स्वकीयं महिमानं स्वयमेव vपनयन्त व्यवहरन्ति प्रकटयन्तीत्यर्थः ॥ अज्मेषु। 'अज गतिक्षेपणयोः'। 'अर्तिस्तुसु°' इत्यादिना विधीयमानो मन् बहुलवचनादस्मादपि द्रष्टव्यः। 'वलादावार्धधातुके विकल्प इष्यते' (का. २. ४. ५६. २) इति वचनात् 'अजेर्व्यघञपोः' इति वीभावाभावः। नित्त्वादाद्युदात्तत्वम्। रेजते। 'रेजृ कम्पने'। 'भ्यसते रेजत इति भयवेपनयोः' (निरु. ३. २१) इति यास्कः। यामेषु। 'यम उपरमे'। भावे घञ्। 'कर्षात्वतः°' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम्। यद्वा। 'या प्रापणे' इत्यस्मात् 'अर्तिस्तुसु°' इत्यादिना मन्प्रत्ययः। शुभे। 'शुभ दीप्तौ'। संपदादिलक्षणः कर्मणि क्विप्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। पनयन्त। 'पन व्यवहारे'। 'गुपूधूपविच्छि°' (पा. सू. ३. १. २८) इति आयः। अस्मात् छान्दसो लङ्। व्यत्ययेन ह्रस्वत्वम् ॥

स हि स्वसृत्पृषदश्वो युवा गणो३ऽया ईशानस्तविषीभिरावृतः।
असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४ ॥

सः। हि। स्वऽसृत्। पृषत्ऽअश्वः। युवा। गणः। अया। ईशानः। तविषीभिः। आऽवृतः।
असि। सत्यः। ऋणऽयावा। अनेद्यः। अस्याः। धियः। प्रऽअविता। अथ। वृषा। गणः ॥४॥

vस vहि स खलु मरुद्गणः vअया अस्य सर्वस्य जगतः vईशानः ईशनशीलः भवति। कीदृशः। vस्वसृत् स्वयमेव सरन्। न ह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति। vपृषदश्वः। पृषत्यः श्वेतबिन्द्वङ्किताः मृग्यः अश्वस्थानीयाः यस्य स तथोक्तः। vयुवा नित्यतरुणः vतविषीभिः अन्येषामसाधारणैर्बलैः vआवृतः परिवेष्टितः vसत्यः सत्कर्मार्हः vऋणयावा स्तोतॄणामृणस्यापगमयिता बहुलस्य धनस्य दातेत्यर्थः। vअनेद्यः। प्रशस्यनामैतत्। सर्वैरनिन्दितः vवृषा जलानां वर्षिता। एवंभूतो मरुद्गणः vअस्याः vधियः अस्मदीयस्यास्य कर्मणः vअथ अनन्तरं vप्राविता vअसि प्रकर्षेण रक्षिता भवति॥ अया। 'सुपां सुलुक्°' इति षष्ठ्याः याजादेशः। 'हलि लोपः' (पा. सू. ७. २. ११३) इति इदम इद्रूपस्य लोपः। ईशानः। 'ईश ऐश्वर्ये' इत्यस्मात् ताच्छीलिकः चानश्। तस्य लसार्वधातुकत्वाभावेन[2] चित्स्वरेणान्तोदात्तत्वम्। अया ईशान इत्यत्र ईषाअक्षादित्वात् प्रकृतिभावः। असि। पुरुषव्यत्ययः। ऋणयावा। 'या प्रापणे' इत्यस्मात् अन्तर्भावितण्यर्थात् 'आतो मनिन्°' इति वनिप्। अनेद्यः। 'णिदि कुत्सायाम्'। 'ऋहलोर्ण्यत्' इति ण्यत्। आगमानुशासनस्यानित्यत्वात् नुमभावे लघूपधगुणः। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

---

१. क्ष-न-स–गमनेषु सत्सु। २. क्ष-ढ–लसार्वधातुकत्वाभावेन लसार्वधातुकस्वराभावे।

पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।
यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥ ५ ॥

पितुः । प्रत्नस्य । जन्मना । वदामसि । सोमस्य । जिह्वा । प्र । जिगाति । चक्षसा ।
यत् । ईम् । इन्द्रम् । शमि । ऋक्वाणः । आशत । आत् । इत् । नामानि । यज्ञियानि । दधिरे ॥५॥

ᐯप्रत्नस्य चिरंतनस्य ᐯपितुः अस्माकं जनकस्य रहूगणस्य सकाशात् यत् जन्म तेन वयं ᐯवदामसि ब्रूमः । वक्ष्यमाणं वृत्तान्तम्[1] अस्माकं पितोपदिष्टवान् अतो वयं ब्रूम इत्यर्थः । कोऽसौ वृत्तान्तः इति चेत् उच्यते । ᐯसोमस्य यज्ञेष्वभिषुतस्य सोमद्रव्यस्य ᐯचक्षसा प्रकाशमानयाहुत्या सहिता ᐯजिह्वा स्तुतिरूपा वाक् ᐯप्र ᐯजिगाति मरुद्गणं प्रकर्षेण गच्छति । यज्ञेषु सोमाहुतिः स्तुतिश्च मरुद्भ्यः क्रियते । यस्मात् ᐯईम् एनम्[2] ᐯइन्द्रं ᐯशमि वृत्रवधादिरूपे कर्मणि ᐯऋक्वाणः 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपया स्तुत्या युक्ताः सन्तः ᐯआशत प्राप्नुवन् न पर्यत्याक्षुः । ᐯआदित् एवमिन्द्रप्राप्त्यनन्तरमेव ᐯयज्ञियानि यज्ञार्हाणि 'ईदृङ् चान्यादृङ् च' इत्येवमादीनि ᐯनामानि इन्द्रसकाशात् लब्ध्वा ᐯदधिरे धृतवन्तः तस्मादेषां यज्ञे सोमाहुतिः स्तुतिश्च क्रियते ॥ शमि । शमी इति कर्मनाम । सप्तम्येकवचने छान्दसः ईकारलोपः । ऋक्वाणः । 'ऋच स्तुतौ' । संपदादिलक्षणो भावे क्विप् । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । अन्त्यविकारश्छान्दसः । यद्वा । अयस्मयादिषु क्वचिदुभयं भवति (का. १. ४. २०) इत्युक्तत्वात् 'स सुष्टुभा स ऋक्वता' इत्यादाविव पदत्वात् कुत्वं भत्वात् जश्त्वाभावः । आशत । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । यज्ञियानि । 'यज्ञर्त्विग्भ्यां घखञौ' इति अर्हार्थे घः ॥

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ ६ ॥

श्रियसे । कम् । भानुऽभिः । सम् । मिमिक्षिरे । ते । रश्मिऽभिः । ते । ऋक्वऽभिः । सुऽखादयः ।
ते । वाशीऽमन्तः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः ॥ ६ ॥

ᐯते पूर्वोक्ता मरुतः ᐯभानुभिः भानुशीलैर्दीप्यमानैः सूर्यरश्मिभिः सह ᐯकं वृष्ट्युदकं ᐯश्रियसे श्रयितुं प्राणिभिः सेवितुं ᐯसं ᐯमिमिक्षिरे सम्यङ्मेढुमिच्छन्ति । पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति । एवं वृष्टिमुत्पाद्य ᐯते मरुतः ᐯऋक्वभिः स्तुतिमद्भिर्ऋत्विग्भिः सह ᐯसुखादयः शोभनस्य हविषो भक्षयितारो भवन्ति । ᐯवाशीमन्तः । वाशी इति वाङ्नाम । शोभनया स्तुतिलक्षणया वाचोपेताः ᐯइष्मिणः गतिमन्तः ᐯअभीरवः भयरहिताः ᐯते मरुतः ᐯप्रियस्य सर्वाभिमतस्य ᐯमारुतस्य मरुत्संबन्धिनः ᐯधाम्नः स्थानस्य सर्वाभिमतं मरुत्संबद्धं विशिष्टं स्थानं ᐯविद्रे लब्धवन्तः ॥ श्रियसे । 'तुमर्थे सेसेन्°' इति कसेन्प्रत्ययः । मिमिक्षिरे । 'मिह सेचने' । अस्मात् इच्छासनन्तात् लिटि '°अमन्त्रे' इति निषेधात् आमभावः । व्यत्ययेन आत्मनेपदम् । सुखादयः । 'खाद भक्षणे' । औणादिकः[3] इप्रत्ययः ।

---

१. क्ष-ट-ढ–'वृत्तान्तम्' नास्ति । २. त-श–एतम् । ३. ढ–अस्मादौणादिकः ।

शोभना स्वादिर्भक्षणं येषाम्। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। इष्मिणः। 'इष गतौ'। 'इषि-युधीन्धि' इत्यादिना मक्। ततो मत्वर्थीय इनिः। विद्रे। 'विद्लृ लाभे'। लिटि द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः। 'इरयो रे' इति इरयो रेभावः॥ ॥ १३ ॥

'आ विद्युन्मद्भिः' इति षड्ऋचं चतुर्थं सूक्तम्। अत्रानुक्रम्यते—'आ विद्युन्मद्भिराद्यान्त्ये प्रस्तारपङ्क्ती पञ्चमी विराड्रूपा' इति। पूर्ववदृषिदेवते। आद्या षष्ठी च द्वे प्रस्तारपङ्क्ती। आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपङ्क्तिः। सूत्रितं च–'प्रस्तारपङ्क्तिः पुरतः' (पि. सू. ३. ४०) इति। अस्यायमर्थः। 'जागतौ गायत्रौ च' इत्यनुवर्तते। यदि पुरतः पुरस्तात् द्वौ जागतौ पादौ स्याताम् अन्त्यौ गायत्रौ सा प्रस्तारपङ्क्तिरिति। 'एतत्त्यत्' इत्येषा पञ्चमी विराड्रूपा। आदितस्त्रयः पादा एकादशका अन्त्योऽष्टकः सा विराड्रूपेत्युच्यते। विनियोगो लैङ्गिकः॥

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।

आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥ १ ॥

आ। विद्युन्मत्ऽभिः। मरुतः। सुऽअर्कैः। रथेभिः। यात। ऋष्टिमत्ऽभिः। अश्वऽपर्णैः।

आ। वर्षिष्ठया। नः। इषा। वयः। न। पप्तत। सुऽमायाः॥ १ ॥

हे मरुतः मितं निर्मितमन्तरिक्षं प्राप्य रुवन्ति शब्दं कुर्वन्तीति मरुतः। यद्वा। अमितं भृशं शब्दकारिणः। अथवा मितं स्वैर्निर्मितं मेघं प्राप्य विद्युदात्मना रोचमानाः। अथवा महत्यन्तरिक्षे द्रवन्तीति मरुतः। ये मध्यमस्थाने देवगणाः समाम्नातास्ते सर्वे मरुतः[1] आख्यायन्ते। तथा चाहुः– 'सर्वा स्त्री मध्यमस्थाना पुमान् वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम्' इति। पौराणिकास्त्वाचक्षते–'मारीचात्कश्यपात्सप्तगणात्मका एकोनपञ्चाशत्संख्याका मरुतो जज्ञिरे' इति। एवंभूता हे ^v^मरुतः ^v^रथेभिः आत्मीयैः रथैः ^v^आ ^v^यात अस्मदीयं यज्ञमागच्छत। कीदृशैः रथैः। ^v^विद्युन्मद्भिः। विद्योतनं विद्युत्। विशिष्टदीप्तियुक्तैः ^v^स्वर्कैः स्वञ्चनैः शोभनगमनयुक्तैः। यद्वा। शोभनमर्कोऽर्चनं स्तुतिर्येषामस्ति तादृशैः। अथवा शोभनदीप्तियुक्तैः। ^v^ऋष्टिमद्भिः। ऋष्टयः शक्ति-रूपाण्यायुधानि। स्थूणा इत्यन्ये। तद्वद्भिः। ^v^अश्वपर्णैः। अश्वानां पतनं गमनं येषामस्ति तादृशैः। यद्वा। रंहणशीला मेघा रथाः। तैः सह अन्तरिक्षे वर्षणार्थमागच्छत। कीदृशैः। विद्युन्मद्भिः। विद्युता तडिता तद्वद्भिः स्वर्कैः शोभनगमनैः ऋष्टिमद्भिः। अर्षणं गमनम्। तत्स्वभावनीरयुक्तैः। अश्वपर्णैः। अश्वं व्याप्तं पर्णं पतनं गमनं येषाम्। अन्तरिक्षं व्याप्य वर्तमानैरित्यर्थः। हे ^v^सुमायाः। माया इति कर्मणो ज्ञानस्य च नामधेयम्। शोभनकर्माणः शोभनप्रज्ञा वा मरुतः ^v^वर्षिष्ठया प्रवृद्ध-तरया ^v^इषा अस्मभ्यं दातव्येनान्नेन सह ^v^नः अस्मान्प्रति ^v^वयो ^v^न पक्षिण इव शीघ्रम् ^v^आ ^v^पप्तत आपतत आगच्छतेत्यर्थः। अत्र निरुक्तम्–'अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति। मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा' इति, 'विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा' (निरु. ११. १३-१४)

---

१. क्ष-ट-ढ–मरुतः इति।

इति ॥ विद्युन्मद्भिः । यवादेराकृतिगणत्वेन विद्युच्छब्दस्य यवाद्यन्तर्भावात् ‘अयवादिभ्यः’ इत्यत्र अनुवृत्तेः ‘झयः’ ( पा. सू. ८. २. १० ) इति मतुपो वत्वं न प्रवर्तते । ऋष्टिमद्भिः । ‘ह्रस्वनुड्भ्यां मतुप्’ इति मतुप उदात्तत्वम् । अश्वपर्णैः । ‘अशू व्याप्तौ’ । ‘अशिप्रुषि°’ इत्यादिना क्वन्प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्षिष्ठया । वृद्धशब्दात् आतिशायनिके इष्ठनि ‘प्रियस्थिर°’ इत्यादिना वर्षादेशः । पप्तत । ‘पत्लृ गतौ’ । लुङि लृदित्त्वात् च्लेः अङादेशः । ‘पतः पुम्’ ( पा. सू. ७. ४. १९ ) इति पुमागमः ॥

**तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः ।**
**रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जङ्घनन्त भूम ॥ २ ॥**

ते । अरुणेभिः । वरम् । आ । पिशङ्गैः । शुभे । कम् । यान्ति । रथतूःऽभिः । अश्वैः ।
रुक्मः । न । चित्रः । स्वधितिऽवान् । पव्या । रथस्य । जङ्घनन्त । भूम ॥ २ ॥

ते पूर्वोक्ता मरुतः अरुणेभिः अरुणवर्णैः पिशङ्गैः पिङ्गलवर्णैरुभयवर्णोपेतैः रथतूर्भिः रथस्य प्रेरयितृभिः अश्वैः वरं देवानां वरीतारं कं शब्दयितारं स्तुवन्तं यजमानम् आ यान्ति आगच्छन्ति । किमर्थम् । शुभे तस्य शोभां कर्तुम् । अथवा शुभे उदकाय । वृष्ट्यर्थमित्यर्थः । तेषां मरुतां गणः रुक्मो न रोचमानं सुवर्णमिव चित्रः अतिशयेन दर्शनीयः स्वधितीवान् । स्वधितिः इति वज्रनाम । शत्रूणां खण्डकेनायुधेनोपेतः । एवंविधगणरूपास्ते मरुतः रथस्य पव्या चक्रधारया भूम भूमिं जङ्घनन्त अत्यर्थं घ्नन्ति । स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः ॥ वरम् । व्रियन्ते देवाः अनेनेति वरः । ‘ग्रहवृदृनिश्चि°’ इति करणे अप् । कम् । ‘कै गै शब्दे’ । कायतीति कः । बहुलवचनात् कप्रत्ययः । रथतूर्भिः । ‘तुर त्वरणे’ । रथं तुतुरति त्वरायुक्तं कुर्वन्तीति रथतुरः । ‘क्विप् च’ इति क्विप् । भिसि ‘हलि च’ इति दीर्घत्वम् । पव्या । ‘पवी रथनेमिर्भवति’ ( निरु. ५. ५ ) इति यास्कः । ‘पूङ् पवने’ । अस्मात् ‘अच इः’ इति इप्रत्ययः । ‘उदात्तयणः°’ इति विभक्तेरुदात्तत्वम् । जङ्घनन्त । हन्तेर्यङन्तात् वर्तमाने छान्दसो लङ् । ‘छन्दस्युभयथा’ इति शप आर्धधातुकत्वात् अतोलोपयलोपौ । भूम । भूमिशब्दादुत्तरस्य अमः ‘सुपां सुलुक्°’ इति डादेशः । छान्दसं ह्रस्वत्वम् ॥

**श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा ।**
**युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ॥ ३ ॥**

श्रिये । कम् । वः । अधि । तनूषु । वाशीः । मेधा । वना । न । कृणवन्ते । ऊर्ध्वा ।
युष्मभ्यम् । कम् । मरुतः । सुऽजाताः । तुविऽद्युम्नासः । धनयन्ते । अद्रिम् ॥ ३ ॥

हे मरुतः ᵛवः युष्माकं ᵛतनूषु शरीरेष्वंसप्रदेशेषु ᵛवाशीः शत्रूणामाक्रोशकम् आराख्यमायुधं ᵛश्रिये ᵛकम् ऐश्वर्यार्थं वर्तते इति शेषः। कम् इत्येतत् पादपूरणम्[1]। तदुक्तम्–'अथापि पादपूरणाः[2] कमीमिद्विति' इति। तादृशा मरुतः ᵛवना ᵛन उच्छ्रितान् वृक्षसमूहानिव ᵛमेधा मेधान् यज्ञान् ᵛऊर्ध्वा ऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितान् ᵛकृणवन्ते यजमानैः कारयन्ति। हे ᵛसुजाताः शोभन-जननयुक्ताः ᵛमरुतः ᵛयुष्मभ्यं युष्मदर्थं ᵛकं सुखकरम् ᵛअद्रिं सोमाभिषवे प्रवृत्तं ग्रावाणं ᵛतुविद्युम्नासः प्रभूतधना यजमानाः ᵛधनयन्ते धनं कुर्वन्ति युष्माकं यागाय ग्रावभिरभिषुण्वन्तीत्यर्थः॥ वाशीः। शत्रूणां भयोत्पादनेनाक्रोशशब्दकरणं वाशः। ततः 'छन्दसीवनिपौ°' इति मत्वर्थीय ईकारः। व्यत्ययेनाद्युदात्तत्वम्। मेधा। 'सुपां सुलुक्°' इति शसो डादेशः। वना। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। कृणवन्ते। 'कृवि हिंसाकरणयोश्च'। लटि व्यत्ययेन आत्मनेपदम्। 'धिन्विकृण्व्योर च' इति उप्रत्ययः। पुनरपि व्यत्ययेन अन्तादेशः। 'छन्दस्युभयथा' इति आर्धधातुकत्वेन झस्य अङित्त्वात् गुणे अवादेशः। ऊर्ध्वा। पूर्ववत् डादेशः। धनयन्ते। धनशब्दात् 'तत्करोति°' इति णिच्॥

अहा॑नि गृध्राः॒ पर्या व॒ आगु॑रि॒मां धियं॑ वार्का॒र्यां च॑ दे॒वीम्।
ब्रह्म॑ कृ॒ण्वन्तो॒ गोत॑मासो अ॒र्कैरू॒र्ध्वं नु॑नुद्र उत्स॒धिं पिब॑ध्यै॥ ४॥

अहा॑नि। गृध्राः॑। परि॑। आ। वः॒। आ। अ॒गुः॒। इ॒माम्। धिय॑म्। वा॒र्का॒र्या॑म्। च॒। दे॒वीम्।
ब्रह्म॑। कृ॒ण्वन्तः॑। गोत॑मासः। अ॒र्कैः। ऊ॒र्ध्वम्। नु॒नु॒द्रे॒। उ॒त्स॒ऽधिम्। पिब॑ध्यै॥ ४॥

तृषितैर्गोतमैः स्तुता मरुतस्तेभ्यो गोतमेभ्यो देशान्तरे वर्तमानं कूपमुत्खायानीय प्रददुः[3]। एतत् दृष्ट्वा कश्चिदृषिर्ब्रूते। हे गोतमाः ᵛगृध्राः जलाभिकाङ्क्षायुक्तान् ᵛवः युष्मान् ᵛअहानि शोभनोदकोपेतानि दिनानि ᵛपरि ᵛआ ᵛअगुः पर्यागतानि परितः आभिमुख्येन प्राप्तानि। प्राप्य च ᵛवार्कार्यां वार्भिः उदकैर्निष्पाद्यां ᵛधियं ज्योतिष्टोमादिलक्षणं कर्म ᵛच ᵛदेवीं द्योतमानमकुर्वन्[4]। येष्वहःसु ᵛब्रह्म हवि-र्लक्षणमन्नम् ᵛअर्कैः मन्त्रसाध्यैः स्तोत्रैः सह ᵛकृण्वन्तः मरुद्भ्यः कुर्वन्तः ᵛगोतमासः गोतमा ऋषयः ᵛउत्सधिम्। उत्सो जलप्रवाहोऽस्मिन्धीयते इत्युत्सधिः कूपः तं ᵛपिबध्यै स्वकीयपानाय ᵛऊर्ध्वं ᵛनुनुद्रे नुनुदिरे देशान्तरे वर्तमानं कूपमुत्खातवन्तः। एतदीयस्तोत्रैः स्तुता मरुतः कूपमुत्खातवन्त इति यत् तदेतदीयस्तोत्रकारितमिति एतेषूपचर्यते॥ गृध्राः। 'गृधु अभिकाङ्क्षायाम्'। 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः। 'सुपां सुपो भवन्ति' इति शसो जस्। नित्त्वादाद्युदात्तत्वम्। अगुः। एतेर्लुङि 'इणो गा लुङि' इति गादेशः। 'आतः' इति झेः जुस्। वार्कार्याम्। 'डुकृञ् करणे'। 'ऋहलोर्ण्यत्'। वार्भिः कार्या वार्कार्या। त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वम्। नुनुद्रे। 'णुद प्रेरणे'। 'इरयो रे' इति रेआदेशः। उत्सधिम्। 'कर्मण्यधिकरणे च' इति दधातेरधिकरणे किप्रत्ययः। पिबध्यै। 'पा पाने'। 'तुमर्थे सेसेन्°' इति शध्यैन्प्रत्ययः। 'पाघ्रा°' इत्यादिना पिबादेशः॥

---

१. क्ष–पदपूरणम्। २. क्ष-ट-न-स–पदपूरणाः। ३. स-जलं ददुः। ४. क्ष-स–द्योतमानामकुर्वन्।

एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।
पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥ ५ ॥

एतत् । त्यत् । न । योजनम् । अचेति । सस्वः । ह । यत् । मरुतः । गोतमः । वः ।
पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् । विऽधावतः । वराहून् ॥ ५ ॥

हे ᵛमरुतः ᵛएतत् ᵛयोजनं युज्यतेऽनेन देवतेति योजनम् एतत्सूक्तसाध्यं स्तोत्रम् । ᵛत्यन्न[1] त्यत् प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिव ᵛअचेति सर्वैर्ज्ञायते । ᵛवः युष्मदर्थं ᵛयत् यदेतत्सूक्तरूपं स्तोत्रं ᵛगोतमः ऋषिः ᵛसस्वर्ह उच्चारितवान् खलु । किं कुर्वन् । ᵛहिरण्यचक्रान् हिरण्मयचक्ररथारूढान् हितरमणीय-कर्मयुक्तान् वा ᵛअयोदंष्ट्रान् । दशतीति दंष्ट्रा चक्रधारा । अयोमयीभिश्चक्रधाराभिर्युक्तान् । यद्वा दंशन-साधना ऋष्टयो दंष्ट्राः । अयोमया ऋष्टयो येषाम् । तान् ᵛविधावतः विविधमितस्ततः प्रवर्तमानान् ᵛवराहून् । वरस्योत्कृष्टस्य शत्रोर्हन्तॄन् । यद्वा उत्कृष्टस्य वृष्ट्युदकस्याहर्तॄन् । अथवा उत्कृष्टानां देवतानामाह्वातॄन्[2] वरस्य हविषो भक्षयितॄन् वा । एवंभूतान् मरुतः ᵛपश्यन् सम्यग्जानन् गोतमः यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सत् अस्माभिः सर्वैरुपलभ्यते इत्यर्थः । अत्र निरुक्तम्—' अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते । पश्यन्हिरण्यचक्रान् ' ( निरु. ५. ४ ) इति ॥ अचेति । ' चिती संज्ञाने ' । छान्दसो वर्तमाने कर्मणि लुङ् । सस्वः । ' स्वृ शब्दोपतापयोः ' । लङि तिपि ' बहुलं छन्दसि ' इति शपः श्लुः । गुणे ' हल्ङ्याब्भ्यः° ' इति तलोपः । धातुस्वरेण अन्तोदात्तत्वम् । वराहून् । वरशब्दोपपदात् आङ्पूर्वात् हन्तेर्वा हरतेर्वा ह्वयतेर्वा जुहोतेरदनार्थात् वा हु इत्येतस्य निष्पत्तिः इति स्कन्दस्वामी । अस्य पृषोदरादित्वात् अभिमतसिद्धिः॥

एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।
अस्तोभयद्वृथासामनु स्वधां गभस्त्योः ॥ ६ ॥

एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी ।
अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ॥ ६ ॥

हे ᵛमरुतः ᵛस्या सा ᵛएषा अस्मदीया स्तुतिः ᵛवः युष्माकम् ᵛअनुभर्त्री युष्माननुहरन्ती युष्मद्गुण-सदृशी ᵛप्रति ᵛष्टोभति प्रत्येकं स्तौति । स्तोभतिः स्तुतिकर्मा । तथा ᵛवाघतो ᵛन ᵛवाणी । नशब्दः संप्रत्यर्थे । तदुक्तं यास्केन–' अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ' ( निरु. ७. ३१ ) इति । इदानीम् ऋत्विक्संबन्धिनी वागपि ᵛवृथा अनायासेन ᵛआसाम् आभिः ऋग्भिः ᵛअस्तोभयत् अस्तौत् । इदानी-मित्युक्ते कदेत्याह । ᵛगभस्त्योः अस्मदीययोर्बाह्वोः ᵛस्वधाम् । अन्ननामैतत् । यदा बहुविधमन्नं मरुतः स्थापयन्ति । तामनुलक्ष्येत्यर्थः ॥ अनुभर्त्री । ' हृञ् हरणे ' । तृच् । ' ऋन्नेभ्यः° ' इति ङीप् । ' उदात्तयणो हल्पूर्वात् ' इति नद्या उदात्तत्वम् ॥  ॥ १४ ॥

---

१. क्ष-ट-ढ–तदेतत्स्तोत्रं त्यन्न । २. क्ष-न-स–देवानामाह्वातॄन् ।

' आ नो भद्राः ' इति दशर्चं पञ्चमं सूक्तम् । गोतमस्यार्षं वैश्वदेवम् । आदितः पञ्चर्चः सप्तमी च जगत्यः षष्ठी ' स्वस्ति न इन्द्रः ' इत्येषा विराट्स्थाना । ' नवकौ वैराजत्रैष्टुभश्च ' ( अनु. ९. ५ ) इत्युक्तलक्षणयोगात् । अष्टम्याद्यास्तिस्त्रस्त्रिष्टुभः । तथा चानुक्रान्तम्–' आ नो दश वैश्वदेवं तु पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थाना ' इति । अग्निष्टोमे वैश्वदेवशस्त्रे उत्तमावर्जमेतत्सूक्तं वैश्वदेवनिविद्धानीयम् । सा तु प्रकृतौ विकृतौ च वैश्वदेवशस्त्रस्य परिधानीया । तथा च सूत्रितम्–' आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम् ' इति, ' अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे ' ( आश्व. श्रौ. ५. १८ ) इति च । ब्राह्मणं च भवति–' सदैव पञ्चजनीयया परिदध्यात् ' ( ऐ. ब्रा. ३. ३१ ) इति । महाव्रते निष्केवल्ये एतत्सूक्तम् । तथा[१] च[१] पञ्चमारण्यके सूत्र्यते– ' आनोभद्रीयं च तस्य स्थाने ' ( ऐ. आ. ५. ३. २ ) इति ॥

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।
दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥ १ ॥

आ । नः॒ । भ॒द्राः । क्रत॑वः । यन्तु॑ । वि॒श्वतः॑ । अद॑ब्धासः । अप॑रिऽइतासः । उ॒त्ऽभिदः॑ । दे॒वाः । नः॒ । यथा॑ । सद॑म् । इत् । वृ॒धे । अस॑न् । अप्र॑ऽआयुवः । र॒क्षि॒तारः॑ । दि॒वेऽदि॑वे ॥१॥

नः अस्मान् क्रतवः अग्निष्टोमादयो महायज्ञाः विश्वतः सर्वस्मादपि दिग्भागात् आ यन्तु आगच्छन्तु । कीदृशाः क्रतवः । भद्राः समीचीनफलसाधनत्वेन कल्याणाः भजनीया वा अदब्धासः असुरैरहिंसिताः अपरीतासः शत्रुभिरपरिगताः अप्रतिरुद्धा इत्यर्थः । उद्भिदः शत्रूणामुद्भेत्तारः । ईदृशाः क्रतवः अस्मांस्तथा आगच्छन्तु । अप्रायुवः अप्रगच्छन्तः स्वकीयं रक्षितव्यमपरित्यजन्तः अत एव दिवेदिवे प्रतिदिवसं रक्षितारः रक्षां कुर्वन्तः एवंगुणविशिष्टाः सर्वे देवाः नः अस्माकं सदमित् सदैव वृधे वर्धनाय यथा असन् भवेयुस्तथा आगच्छन्तु इति संबन्धः ॥ अदब्धासः । ' दम्भु दम्भे ' । दम्भो हिंसा । निष्ठायां ' यस्य विभाषा ' इति इट्प्रतिषेधः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अपरीतासः । ' इण् गतौ ' । पूर्ववत् कर्मणि निष्ठा । उभयत्र ' आज्जसेरसुक् ' । वृधे । ' वृध वृद्धौ ' । संपदादिलक्षणो भावे क्विप् । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । असन् । ' अस भुवि ' । लेटि अडागमः । ' बहुलं छन्दसि ' इति शपो लुगभावः । तस्य अङित्त्वात् ' श्नसोरल्लोपः ' इति अकारलोपाभावः । अप्रायुवः । ' इण् गतौ ' । अस्मात् प्रपूर्वात् ' छन्दसीणः ' इति उण्प्रत्ययः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । जसि ' जसादिषु च्छन्दसि वावचनम् ' इति गुणस्य विकल्पितत्वादभावे तन्वादित्वात् उवङ् ॥

दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥ २ ॥

दे॒वाना॑म् । भ॒द्रा । सु॒ऽम॒तिः । ऋ॒जु॒ऽय॒ताम् । दे॒वाना॑म् । रा॒तिः । अ॒भि । नः॒ । नि । व॒र्त॒ता॒म् । दे॒वाना॑म् । स॒ख्यम् । उप॑ । से॒दि॒म॒ । व॒यम् । दे॒वाः । नः॒ । आयुः॑ । प्र । ति॒र॒न्तु॒ । जी॒वसे॑ ॥२॥

---

१. क्ष–तथैव; न–स–तथा ।

ᵛभद्रा सुखयित्री भजनीया वा ᵛदेवानां ᵛसुमतिः शोभना मतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः । कीदृशानाम् । ᵛऋजूयताम् ऋजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम् । तथा ᵛदेवानां ᵛरातिः दानं ᵛनः अस्मानाभिमुख्येन नितरां ᵛवर्तताम् । तदभिमतफलप्रदानमप्यस्माकं भवत्वित्यर्थः । ᵛवयं च तेषां ᵛदेवानां ᵛसख्यं सखित्वं सख्युः कर्म वा ᵛउप ᵛसेदिम प्राप्नुवाम । तादृशाः ᵛदेवाः ᵛनः अस्माकम् ᵛआयुः ᵛजीवसे जीवितुं ᵛप्र ᵛतिरन्तु वर्धयन्तु ॥ भद्रा । ' भदि कल्याणे सुखे च ' । ' ऋज्रेन्द्राग्र॰ ' ( उ. सू. २. १८६ ) इत्यादौ रन्प्रत्ययान्तो निपातितः । ऋजूयताम् । ऋजुमात्मन इच्छति ऋजूयति । ' सुप आत्मनः क्यच् ' । तदन्तात् लटः शतृ । ' शतुरनुमः॰ ' इति अजादिविभक्तेरुदात्तत्वम् । रातिः । ' रा दाने ' । ' मन्त्रे वृष॰ ' इति क्तिन उदात्तत्वम् । सख्यम् । ' सख्युर्यः ' इति भावे कर्मणि वा यप्रत्ययः । सेदिम । ' षद्लृ विशरणगत्यवसादनेषु ' । ' छन्दसि लुङ्लङ्लिटः ' इति प्रार्थनायां लिट् । सत्वस्यानैमित्तिकत्वेन लिटि परत आदेशादित्वाभावात् ' अत एकहल्मध्ये॰ ' इति एत्वाभ्यासलोपौ । ' अन्येषामपि दृश्यते ' इति संहितायां दीर्घत्वम् । प्र तिरन्तु । प्रपूर्वस्तिरतिर्वर्धनार्थः । तथा च यास्को व्याचख्यौ–' देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय ' ( निरु. १२. ३९ ) इति ॥

## तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
## अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥

तान् । पूर्वया । निऽविदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् । अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् ॥३॥

ᵛतान् विश्वान् देवान् ᵛपूर्वया पूर्वकालीनया नित्यया ᵛनिविदा वेदात्मिकया वाचा । निविदिति वाङ्नाम । यद्वा निविदा ' विश्वे देवाः सोमस्य मत्सन् ' इत्यादिकया वैश्वदेव्या निविदा ᵛवयं ᵛहूमहे आह्वयामः । देवानिति यत्सामान्येनोक्तं तदेव विव्रियते । ᵛभगं भजनीयं द्वादशानामादित्यानामन्यतमं ᵛमित्रं प्रमीतेस्त्रायकमहरभिमानिनं देवम् । ' मैत्रं वा अहः ' ( तै. ब्रा. १. ७. १०. १ ) इति श्रुतेः । ᵛअदितिम् अखण्डनीयामदीनां वा देवमातरं ᵛदक्षं सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम् । यद्वा । प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम् । ' प्राणो वै दक्षः ' ( तै. सं. २. ५. २. ४ ) इति श्रुतेः । ᵛअस्रिधं शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणम् । ᵛअर्यमणम् । अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीति अर्यमा सूर्यः । ' असौ वा आदित्योऽर्यमा ' ( तै. सं. २. ३. ४. १ ) इति श्रुतेः । तम् । ᵛवरुणम् । वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानिदेवो वरुणः । श्रूयते च–' वारुणी रात्रिः ' ( तै. ब्रा. १. ७. १०. १ ) इति । ᵛसोमं द्वेधा[2] आत्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् । ᵛअश्विना अश्ववन्तौ । यद्वा सर्वं व्याप्नुवन्तौ । तथा च यास्कः–' अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्काश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः ' ( निरु. १२. १ ) इति । एवंभूतान् सर्वान् देवान् अस्मद्रक्षणार्थमाह्वयामः इति पूर्वत्र संबन्धः । अस्माभिराहूता ᵛसुभगा शोभनधनोपेता ᵛसरस्वती ᵛनः अस्मभ्यं ᵛमयः सुखं ᵛकरत् करोतु ॥ हूमहे । ह्वेञो लटि ' ह्वः ' इत्यनुवृत्तौ ' बहुलं छन्दसि ' इति संप्रसारणम् । परपूर्वत्वे ' हलः '

---

१. क्ष–तदीयमभिमतफलप्रदानम् ।　२. क्ष–द्विधा ।

इति दीर्घत्वम् । ‘ बहुलं छन्दसि ’ इति शपो लुक् । अस्रिधम् । ‘ स्रिधु शोषणे ’ । संपदादिलक्षणो भावे क्विप् । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । मयस्करत् । करोतेर्लेटि अडागमः । ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । ‘ अतः कृकमि॰ ’ इति विसर्जनीयस्य[1] सत्वम्[1] ॥

तन्नो॒ वातो॑ मयो॒भु वा॑तु भेष॒जं तन्मा॒ता पृ॑थि॒वी तत्पि॒ता द्यौः ।

तद्ग्रावा॑णः सोम॒सुतो॑ मयो॒भुव॒स्तद॑श्विना शृणुतं धिष्ण्या यु॒वम् ॥ ४ ॥

तत् । नः॒ । वातः॑ । म॒यः॒ऽभु । वा॒तु॒ । भे॒ष॒जम् । तत् । मा॒ता । पृ॒थि॒वी । तत् । पि॒ता । द्यौः ।

तत् । ग्रावा॑णः । सो॒म॒ऽसुतः॑ । म॒यः॒ऽभुवः॑ । तत् । अ॒श्वि॒ना॒ । शृ॒णु॒त॒म् । धि॒ष्ण्या॒ । यु॒वम् ॥४॥

ᵛवातः वायुः ᵛतत् ᵛभेषजम् औषधं ᵛनः अस्मान् ᵛवातु प्रापयतु । यद्भेषजं ᵛमयोभु मयसः सुखस्य भावयितृ । ᵛमाता सर्वेषां जननी ᵛपृथिवी भूमिरपि ᵛतत् भेषजम् अस्मान् प्रापयतु । ᵛपिता वृष्टिप्रदानेन सर्वेषां रक्षिता ᵛद्यौः द्युलोकोऽपि ᵛतत् भेषजम् अस्मान् प्रापयतु । ᵛसोमसुतः सोमाभिषवं कृतवन्तः ᵛमयोभुवः मयसः यागफलभूतस्य सुखस्य भावयितारः ᵛग्रावाणः अभिषवसाधनाः पाषाणाश्च ᵛतत् भेषजम् अस्मान् प्रापयन्तु । हे ᵛधिष्ण्या । धिषणा बुद्धिः । तदर्हावश्विनौ ᵛयुवं युवां तत् भेषजं ᵛशृणुतं आकर्णयतम् । यद्भेषजमस्माभिर्वाय्वादिषु प्रार्थ्यते तद्भेषजं देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः ॥ मयोभु । ‘ ह्रस्वो नपुंसके प्रातिपदिकस्य ’ ( पा. सू. १. २. ४७ ) इति ह्रस्वत्वम् । वातु । ‘ वा गतिगन्धनयोः ’ । अन्तर्भावितण्यर्थात् प्रार्थनायां लोट् । सोमसुतः । ‘ सोमे सुञः ’ ( पा. सू. ३. २. ९० ) इति भूते क्विप् । धिष्ण्या । धिषणाशब्दात् अर्हार्थे ‘ छन्दसि च ’ इति यः । वर्णलोपश्छान्दसः । ‘ सुपां सुलुक्॰ ’ इति आकारः ॥

तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यम् ।

पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ ५ ॥

तम् । ईशा॑नम् । जग॑तः । त॒स्थुषः॑ । पतिम् । धि॒यम्ऽजि॒न्वम् । अव॑से । हू॒म॒हे॒ । व॒यम् ।

पू॒षा । नः॒ । यथा॑ । वेद॑साम् । अस॑त् । वृ॒धे । र॒क्षि॒ता । पा॒युः । अद॑ब्धः । स्व॒स्तये॑ ॥५॥

पूर्वार्धेनेन्द्रः स्तूयते अपरार्धेन पूषा । ᵛईशानम् ऐश्वर्यवन्तं अत एव ᵛजगतः जङ्गमस्य प्राणिजातस्य ᵛतस्थुषः स्थावरस्य च ᵛपतिं स्वामिनं ᵛधियंजिन्वं धीभिः कर्मभिः प्रीणयितव्यं एवंभूतं ᵛतम् इन्द्रम् ᵛअवसे रक्षणाय ᵛवयं ᵛहूमहे आह्वयामः । ᵛपूषा ᵛनः अस्माकं ᵛवेदसां धनानां ᵛवृधे वर्धनाय ᵛरक्षिता ᵛयथा ᵛअसत् येन प्रकारेण भवति[2] तेनैव प्रकारेण ᵛअदब्धः केनाप्यहिंसितः पूषा ᵛस्वस्तये अस्माकमविनाशाय ᵛपायुः रक्षिता भवतु[2] ॥ तस्थुषः । तिष्ठतेर्लिटः क्वसुः । षष्ठ्येकवचने

---

१. क्ष—मयसो विसर्जनीयस्य सांहितिकं सत्वम् । २. क्ष-ट-ढ-स—भवति भवेत् तेनैव प्रकारेण रक्षिता पालयिता पायुः पाता प्रपिष्टभागस्य पाता अदब्धः केनापि अहिंसितः स एव पूषा स्वस्तये अस्माकमविनाशाय च भवतु ।

'वसोः संप्रसारणम्' इति संप्रसारणम्। 'शासिवसिघसीनां च' इति षत्वम्। 'षष्ठ्याः पतिपुत्र°' इति विसर्जनीयस्य सत्वम्। धियंजिन्वम्। जिविः प्रीणनार्थः। 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् खच्। 'इच एकाचोऽम् प्रत्ययवच्च' (पा. सू. ६. ३. ६८) इति अमागमः। असत्। 'अस भुवि'। लेटि अडागमः। 'बहुलं छन्दसि' इति शपो लुगभावः। पायुः। 'पा रक्षणे[1]'। 'कृवापाजि°' इति उण्। स्वस्तये। सुपूर्वात् अस्तेः भावे क्तिन्। 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् 'अस्तेर्भूः[2]' (पा. सू. २. ४. ५२) इति भूभावाभावः[2] इति वृत्तावुक्तम्॥ १५॥

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ६॥**

स्वस्ति। नः। इन्द्रः। वृद्धऽश्रवाः। स्वस्ति। नः। पूषा। विश्वऽवेदाः।
स्वस्ति। नः। ताक्ष्र्यः। अरिष्टऽनेमिः। स्वस्ति। नः। बृहस्पतिः। दधातु॥ ६॥

वृद्धश्रवाः वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृशः इन्द्रः नः अस्माकम्। 'स्वस्तीत्यविनाशनाम' (निरु. ३. २१)। स्वस्ति अविनाशं दधातु विदधातु करोतु। विश्ववेदाः। विश्वानि वेत्तीति विश्ववेदाः। यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य। तादृशः पूषा पोषको देवः नः अस्माकं स्वस्ति विदधातु। अरिष्टनेमिः। नेमिः इति आयुधनाम। अरिष्टोऽहिंसितो नेमिर्यस्य। यद्वा रथचक्रस्य धारा नेमिः। यत्संबन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः। एवंभूतः ताक्ष्र्यः तृक्षस्य पुत्रो गरुत्मान् नः अस्माकं स्वस्ति अविनाशं विदधातु। तथा बृहस्पतिः बृहतां देवानां पालयिता नः अस्माकं स्वस्ति अविनाशं विदधातु॥ वृद्धश्रवाः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। विश्ववेदाः। 'विद ज्ञाने', 'विद्लृ लाभे'। आभ्यामसुन्प्रत्ययान्तो वेदस्शब्दः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। ताक्ष्र्यः। तृक्षस्यापत्यम्। 'गर्गादिभ्यो यञ्' (पा. सू. ४. १. १०५)। ञित्त्वादाद्युदात्तत्वम्। अरिष्टनेमिः। न रिष्टा अरिष्टा। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अरिष्टा नेमिर्यस्य स तथोक्तः। बृहस्पतिः। 'तद्बृहतोः करपत्योः°' (पा. सू. ६. १. १५७. ग.) इति सुट्तलोपौ। 'उभे वनस्पत्यादिषु°' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्॥

**पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह॥ ७॥**

पृषत्ऽअश्वाः। मरुतः। पृश्निऽमातरः। शुभम्ऽयावानः। विदथेषु। जग्मयः।
अग्निऽजिह्वाः। मनवः। सूरऽचक्षसः। विश्वे। नः। देवाः। अवसा। आ। गमन्। इह॥७॥

पृषदश्वाः। पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः। पृश्निमातरः। पृश्निर्नानावर्णा गौर्माता येषाम्। शुभंयावानः। शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः। शोभनगतय इत्यर्थः।

---

१. क्ष-स-'पा पाने'।　२. ढ-अस्तेर्भूभावाभावः।

ᵛविदथेषु यज्ञेषु ᵛजग्मयः गन्तारः ᵛअग्निजिह्वाः अग्नेर्जिह्वायां वर्तमानाः । सर्वे हि देवा हविःस्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । तात्स्थ्यात् ताच्छब्द्यम् । ᵛमनवः सर्वस्य मन्तारः ᵛसूरचक्षसः सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते एवंभूताः ᵛमरुतः मरुत्संज्ञकाः ᵛविश्वे ᵛदेवाः[1] सर्वे देवाः ᵛनः अस्मान् ᵛइह अस्मिन्काले ᵛअवसा रक्षणेन सह ᵛआ ᵛगमन् आगच्छन्तु ॥ शुभंयावानः । 'या प्रापणे'। 'आतो मनिन्॰' इति वनिप् । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अपि अलुक् । गमन् । गमेः प्रार्थनायां लेटि अडागमः । 'इतश्च लोपः॰' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् ॥

अस्ति सौम्यचरुस्तृतीयसवने । तेन चरुणा देवतामिष्ट्वा इष्टशेषे तस्मिन् बहु घृतमवनीय तस्मिन्वषट्कर्त्रा स्वकीया छाया द्रष्टव्या । सा यदि न दृश्येत तदानीं 'भद्रम्' इत्येका[2] पठितव्या । 'त्वं सोम' इति खण्डे तथैव सूत्र्यते[3]—'राज्ञा सोमेन तद्वयमस्मासु धारयामसि भद्रं कर्णेभिः शृणुयाम देवा इति च' (आश्व. श्रौ. ५. १९) इति । महानाम्नीव्रतेऽप्येषा भूमिस्पर्शने[4] जप्या । सूत्रितं च 'एतद्विदम्' इति खण्डे—'भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः' (आश्व. श्रौ. ८. १४) इति ॥

**भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः ।**

**स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॑ ॥ ८ ॥**

भ॒द्रम् । कर्णे॑भिः । शृ॒णु॒याम॑ । दे॒वाः॒ । भ॒द्रम् । प॒श्ये॒म॒ । अ॒क्षऽभिः॑ । य॒ज॒त्राः॒ ।

स्थि॒रैः । अङ्गैः॑ । तु॒स्तु॒ऽवांसः॑ । त॒नूभिः॑ । वि । अ॒शे॒म॒ । दे॒वऽहि॑तम् । यत् । आयुः॑ ॥८॥

हे ᵛदेवाः दानादिगुणयुक्ताः सर्वे[5] देवाः[5] ᵛकर्णेभिः अस्मदीयैः श्रोत्रैः ᵛभद्रं भजनीयं कल्याणं वचनं ᵛशृणुयाम युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम । अस्माकं बाधिर्यं कदाचिदपि मा भूत् । हे ᵛयजत्राः यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवाः ᵛअक्षभिः अक्षिभिरात्मीयैश्चक्षुर्भिः ᵛभद्रं शोभनं ᵛपश्येम द्रष्टुं समर्थाः स्याम । अस्माकं दृष्टिप्रतिघातोऽपि मा भूत्[6] । ᵛस्थिरैः दृढैः ᵛअङ्गैः हस्तपादादिभिरवयवैः ᵛतनूभिः शरीरैश्च युक्ता वयं ᵛतुष्टुवांसः युष्मान् स्तुवन्तः ᵛयत् ᵛआयुः षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा ᵛदेवहितं देवेन प्रजापतिना स्थापितं तत् ᵛव्यशेम प्राप्नुयाम॥ कर्णेभिः 'बहुलं छन्दसि' इति भिसः ऐसभावः । अक्षभिः । 'छन्दस्यपि दृश्यते' इति अनङ् स च उदात्तः। यजत्राः । 'अमिनक्षि॰' इत्यादिना यजेः अत्रन्प्रत्ययः । तुष्टुवांसः । 'ष्टुञ् स्तुतौ'। लिटः क्वसुः । 'शर्पूर्वाः खयः' इति तकारः शिष्यते । अशेम । 'अशू व्याप्तौ' । 'लिङ्याशिष्यङ्' । यदि तु तत्र परिगणनमन्यव्यावृत्त्यर्थं तदानीं लिङि व्यत्ययेन शप् । देवहितम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

---

१. क्ष-ट-ढ-'देवाः' नास्ति । २. क्ष-ट-ढ-इत्येषा । ३. न-स-सूत्रितम् । ४. क्ष-भूम्युपस्पर्शने । ५. क्ष-ट-ढ-'सर्वे देवाः' नास्ति । ६. क्ष-ट-ढ-स-'भूत्' इत्यस्यानन्तरं 'श्रोत्रचक्षुषोः भद्राभद्रविषयश्रवणदर्शने प्रतिनियते । अतो नित्यं भद्रविषयश्रवणदर्शने स्यातामिति प्रार्थ्यते (स-प्रार्थ्यम्)' इत्यधिकम् ।

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र । जरसम् । तनूनाम् ।
पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः । मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

हे ᵛदेवाः ᵛअन्ति अन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः ᵛशरदः संवत्सराः ᵛशतम् ᵛइत् ᵛनु शतं खलु । यस्मात् सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितं तस्मात् ᵛनः अस्मान् ᵛआयुर्गन्तोः कृत्स्नस्यायुषो गमनात्पूर्वं ᵛमध्या मध्ये ᵛमा ᵛरीरिषत मा हिंसिष्ट । कीदृशान् । ᵛनः अस्माकं ᵛतनूनां शरीराणां ᵛजरसं जरां ᵛयत्र यस्यामवस्थायां ᵛचक्र कृतवन्तो यूयं ᵛयत्र[1] च ᵛपुत्रासः पुत्राः ᵛपितरः अस्माकं रक्षितारः[1] ᵛभवन्ति[2] । ईदृग्दशापन्नानित्यर्थः ॥ अन्ति । अन्तिकशब्दस्य ' कादिलोपो बहुलमिति वक्तव्यम् ' इति कलोपः । यत्र । ' ऋचि तुनुघमक्षुतङ्कुत्र° ' इति संहितायां दीर्घः । चक्र । लिटि मध्यमबहुवचनस्य कित्त्वात् गुणाभावे यणादेशः । 'द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घत्वम् । जरसम् । ' जराया जरसन्यतरस्याम् ' ( पा. सू. ७. २. १०१ ) इति जरसादेशः । मध्या । ' सुपां सुलुक्° ' इति सप्तम्या डादेशः । रीरिषत । ' रिष रुष हिंसायाम् ' अस्मात् ण्यन्तात् माङि लुङि मध्यमबहुवचने च्लेः चङि णिलोपोपधाह्रस्वद्विर्वचनहलादिशेषसन्वद्भावेत्वदीर्घाः[3] । छान्दसः पदकालीनो ह्रस्वः । गन्तोः । ' भावलक्षणे स्थेण्° ' ( पा. सू. ३. ४. १६ ) इति गमेः तोसुन्प्रत्ययः ॥

' अदितिर्द्यौरदितिः ' इत्येषा अदितिदेवताके पशौ हविषो याज्या । सूत्रितं च–' अदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातः ' ( आश्व. श्रौ. ३. ८ ) इति ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ १० ॥

अदितिः । द्यौः । अदितिः । अन्तरिक्षम् । अदितिः । माता । सः । पिता । सः । पुत्रः ।
विश्वे । देवाः । अदितिः । पञ्च । जनाः । अदितिः । जातम् । अदितिः । जनिऽत्वम् ॥ १० ॥

ᵛअदितिः अदीना अखण्डनीया वा पृथिवी देवमाता वा सैव ᵛद्यौः द्योतनशीलो नाकः । सैव ᵛअन्तरिक्षम् अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम । सैव ᵛमाता निर्मात्री जगतो जननी । सैव ᵛपिता उत्पादकः । ततश्च[4] ᵛसः ᵛपुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव । ᵛविश्वे ᵛदेवाः सर्वेऽपि देवाः ᵛअदितिः एव । ᵛपञ्च ᵛजनाः निषादपञ्चमाश्चत्वारो वर्णाः । यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि ।

---

१. क्ष-ट-ढ–यत्र च यस्यामवस्थायां पुत्रासः पुत्राः स्वपुत्राणां पितरः । २. स–' भवन्ति ' इत्यस्यानन्तरं ' यद्वा । यत्र यस्यामवस्थायां पुत्रासः अस्माकं पुत्राः स्वपुत्राणां पितरो भवन्ति । अस्माकं यदा पौत्रा भवन्ति ' इत्यधिकम् ३. स– णिलोपोपधाह्रस्वचर्त्वद्विर्वचनहलादिशेषसन्वद्भावेत्वदीर्घाः । ४. क्ष-न-स–तातश्च ।

तदुक्तं यास्केन–‘ गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः ’ ( निरु. ३. ८ ) इति । ब्राह्मणे त्वेवमाम्नातं–‘ सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च ’ ( ऐ. ब्रा. ३. ३१ ) इति । तत्र गन्धर्वाप्सरसामैक्यात्पञ्चजनत्वम् । एवंविधाः पञ्च जना अपि ᵛअदितिः एव । ᵛजातं जननं प्रजानामुत्पत्तिः सा अपि ᵛअदितिः एव । ᵛजनित्वं जन्माधिकरणं[1] तदपि ᵛअदितिः एव । एवं सकलजगदात्मनादितिः स्तूयते । उक्तं च यास्केन–‘ इत्यदितेर्विभूतिमाचष्टे ’ ( निरु. ४. २३ ) इति ॥ अदितिः । ‘ दो अवखण्डने ’ । अस्मात् कर्मणि क्तिनि ‘ द्यतिस्यतिमास्थाम्° ’ ( पा. सू. ७. ४. ४० ) इति इत्वम् । यास्कपक्षे तु ‘ दीङ् क्षये ’ इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । स पिता । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददते इत्युद्देश्यलिङ्गतया पुंलिङ्गत्वम् । जनित्वम् । जनेरौणादिकः त्वन्प्रत्ययः[2] ॥ ॥ १६ ॥

‘ ऋजुनीती ’ इति नवर्चं षष्ठं सूक्तं गोतमस्यार्षम् । अत्रानुक्रम्यते–‘ ऋजुनीती नव गायत्रमन्त्यानुष्टुप् ’ इति । पूर्वत्र ‘ वैश्वदेवं तु ’ इत्युक्तत्वात् तुह्यादिपरिभाषया इदमपि सूक्तं बहुदेवताकम् । सूक्तविनियोगो लैङ्गिकः । चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य ‘ ऋजुनीती[3] नः[3] ’ इत्येषा[4] आरम्भणीया । ‘ चतुर्विंशे ’ इति खण्डे सूत्रितम्–‘ ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि ’ ( आश्व. श्रौ. ७. २ ) इति । अहर्गणेषु द्वितीयादिष्वहःस्वप्येषारम्भणीया शंसनीया । सूत्रितं च–‘ आरम्भणीयाः पर्यासान्कद्वतोऽहरहः शस्यानीति होत्रका द्वितीयादिष्वेव ’ ( आश्व. श्रौ. ७. १ ) इति ॥

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषाः ॥ १ ॥

ऋजुऽनीती । नः । वरुणः । मित्रः । नयतु । विद्वान् । अर्यमा । देवैः । सऽजोषाः ॥ १ ॥

अहरभिमानी देवः ᵛमित्रः, ᵛवरुणः राज्यभिमानी । मित्रश्च वरुणश्च ᵛविद्वान् नेतव्यमुत्तमं स्थानं जानन् ᵛनः अस्मान् ᵛऋजुनीती ऋजुनीत्या ऋजुनयनेन कौटिल्यरहितेन गमनेन ᵛनयतु अभिमतं फलं प्रापयतु । तथा ᵛदेवैः अन्यैरिन्द्रादिभिः ᵛसजोषाः समानप्रीतिः ᵛअर्यमा अहोरात्रविभागस्य[5] कर्ता[5] सूर्यश्चास्मानृजुगमनेनाभिमतं स्थानं प्रापयतु ॥ ऋजुनीती । ‘ सुपां सुलुक्° ’ इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ॥

ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः । व्रता रक्षन्ते विश्वाहा ॥ २ ॥

ते । हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः । व्रता । रक्षन्ते । विश्वाहा ॥ २ ॥

ᵛते ᵛहि पूर्वोक्ता मित्रादयः ᵛवस्वः वसुनो धनस्य ᵛवसवानाः वासका आच्छादयितारः सर्वं जगद्धनेनाच्छादयन्तीत्यर्थः । अतः ᵛते मित्रादयः ᵛअप्रमूराः अप्रमूर्च्छिता अमूढाः प्राज्ञाः सन्तः ᵛमहोभिः आत्मीयैस्तेजोभिः ᵛविश्वाहा सर्वाण्यहानि । अत्यन्तसंयोगे द्वितीया । सर्वेष्वप्यहःसु ᵛव्रता व्रतानि जगन्निर्वाहरूपाणि स्वकीयानि कर्माणि ᵛरक्षन्ते पालयन्ति ॥ वस्वः । आगमानुशासनस्य

१. क्ष–जन्माधिकरणं । यद्वा जातमुत्पन्नं जनित्वमुत्पत्स्यमानं वा यदस्ति । २. क्ष-ट-ढ-स–इत्वन्प्रत्ययः । ३. क्ष-ट-ढ–‘ ऋजुनीती नः ’ इति नास्ति । ४. क्ष-ट-ढ–आद्या । ५. न-स–अहोरात्रस्य विभागकर्ता ।

अनित्यत्वात् नुमभावे ' जम्यादिषु छन्दसि वावचनम् ' इति ' वेड्डिति ' इति गुणस्य विकल्पनादभावे यणादेशः । वसवानाः । ' वस आच्छादने ' । अस्मात् अन्तर्भावितण्यर्थात् लटः शानच् । ' बहुलं छन्दसि ' इति शपो लुगभावः । वर्णव्यापत्त्या सकारस्य वकारः । अप्रमूराः । ' मुर्छा मोहसमुच्छ्राययोः ' । अस्मात् संपदादिलक्षणो भावे क्विप् । ' राल्लोपः ' इति छकारलोपः । प्रकृष्टा मूः प्रमूः । ततो मत्वर्थीयो रः । ' रो रि ' ( पा. सू. ८. ३. १४ ) इति रेफलोपः । न प्रमूरा अप्रमूराः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । रक्षन्ते । ' रक्ष पालने ' । व्यत्ययेन तङ् ॥

## ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः । बाधमाना अप द्विषः ॥ ३ ॥

ते । अस्मभ्यम् । शर्म । यंसन् । अमृताः । मर्त्येभ्यः । बाधमानाः । अप । द्विषः ॥ ३ ॥

ᵛअमृताः अमरणधर्माणः ᵛते विश्वे देवाः ᵛमर्त्येभ्यः मरणधर्मभ्यः ᵛअस्मभ्यम् अनुष्ठातृभ्यः ᵛशर्म अमृतलक्षणं सुखं ᵛयंसन् यच्छन्तु प्रयच्छन्तु । किं कुर्वन्तः । ᵛद्विषः अस्मदीयान् पापलक्षणान् शत्रून् ᵛअप ᵛबाधमानाः विनाशं प्रापयन्तः ॥ यंसन् । ' यम उपरमे ' । लेटि अडागमः । ' सिब्बहुलं लेटि ' इति सिप् । अमृताः । मृतं मरणं येषां नास्तीति अमृताः । ' नञो जरमरमित्रमृताः ' इत्युत्तरपदाद्युदात्तत्वम् ॥

## वि नः पथः सुविताय चियन्त्विन्द्रो मरुतः । पूषा भगो वन्द्यासः ॥४॥

वि । नः । पथः । सुविताय । चियन्तु । इन्द्रः । मरुतः । पूषा । भगः । वन्द्यासः ॥ ४ ॥

ᵛवन्द्यासः सर्वैर्वन्दनीयाः स्तोतव्या नमस्कर्तव्या वा इन्द्रादयो देवाः ᵛनः अस्माकं ᵛपथः मार्गान् ᵛवि ᵛचियन्तु विचिन्वन्तु अशोभनेभ्यो मार्गेभ्यः सकाशात् पृथक्कुर्वन्तु । किमर्थम् । ᵛसुविताय सुष्ठु प्राप्तव्याय स्वर्गादिफलाय ॥ पथः । शसि ' भस्य टेर्लोपः ' इति टिलोपः । उदात्तनिवृत्तिस्वरेण शस उदात्तत्वम् । सुविताय । ' इण् गतौ ' इत्यस्मात् कर्मणि निष्ठा । ' तन्वादीनां छन्दसि बहुलमुपसंख्यानम् ' इति उवङ् । ' गतिरनन्तरः ' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते ' सूपमानात् क्तः ' इति उत्तरपदान्तोदात्तत्वम् । चियन्तु । ' चिञ् चयने ' । ' बहुलं छन्दसि ' इति विकरणस्य लुक् । इयङ् । पादादित्वात् निघाताभावः । वन्द्यासः । ' वदि अभिवादनस्तुत्योः ' । ' ऋहलोर्ण्यत् ' । ' ईडवन्दवृशंसदुहां ण्यतः ' इति आद्युदात्तत्वम् । ' आज्जसेरसुक् ' ॥

अप्तोर्यामे सन्ति चत्वार्यतिरिक्तोक्थानि । तत्र चतुर्थे अच्छावाकातिरिक्तोक्थे ' उत नो धियः ' इत्येषा अनुरूपतृचस्य वैकल्पिकी तृतीया । सूत्रितं च–' उत नो धियो गोअग्रा इति वानुरूपस्योत्तमा ' ( आश्व. श्रौ. ९. ११ ) इति ॥

## उत नो धियो गोअग्राः पूषन्विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥५॥

उत । नः । धियः । गोऽअग्राः । पूषन् । विष्णो इति । एवऽयावः । कर्त । नः । स्वस्तिऽमतः ॥५॥

हे ᵛपूषन् पोषक देव हे ᵛविष्णो व्यापनशील देव हे ᵛएवयावः । एवैर्गन्तृभिरश्वैर्याति गच्छतीति एवयावा मरुद्गणः । हे मरुद्गण ते सर्वे यूयं ᵛनः अस्माकं ᵛधियः अप्तोर्यामलक्षणानि

कर्माणि ᵛगोअग्राः पश्वग्राणि पशुप्रमुखान्यस्मत्सकाशात् श्रेष्ठैः पशुभिर्युक्तानि ᵛकर्त कुरुत । अप्तोर्यामकर्मणश्च पशुप्राप्तिहेतुत्वमाम्नायते–' यस्मात्पशवः प्रप्रेव भ्रंशेरन् स एतेन यजेत ' ( तै. ब्रा. २. ७. १४. २ ) इति । ᵛउत अपि च ᵛनः अस्मान् ᵛस्वस्तिमतः अविनाशिनः कुरुत[१] ॥ एवयावः । ' इण् गतौ ' । ' इण्शीङ्भ्यां वन् ' इति वन्प्रत्ययः । अस्मिन्नुपपदे ' या प्रापणे ' इत्यस्मात् ' आतो मनिन्° ' इति वनिप् । संबुद्धौ ' वन उपसंख्यानम् ' ( पा. सू. ८. ३. १. १ ) इति नकारस्य रुत्वम् ॥ ॥ १७ ॥

ऋत्विगाद्यर्थमाहृतं मधुपर्कं ' मधु वाताः ' इति तृचेन ऋत्विगादिः प्रतिग्रहीतावेक्षेत । तथा च सूत्र्यते—' मधु वाता ऋतायत इति तृचेनावेक्ष्य ' ( आश्व. गृ. १. २४. १४ ) इति ॥

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥६॥**

मधु । वाताः । ऋतऽयते । मधु । क्षरन्ति । सिन्धवः । माध्वीः । नः । सन्तु । ओषधीः ॥६॥

ᵛऋतायते ऋतं यज्ञमात्मन इच्छते यजमानाय ᵛवाताः वायवः ᵛमधु माधुर्योपेतं कर्मफलं ᵛक्षरन्ति वर्षन्ति प्रयच्छन्तीत्यर्थः । तथा ᵛसिन्धवः स्यन्दनशीला नद्यः समुद्रा वा ᵛमधु माधुर्योपेतं स्वकीयं रसं क्षरन्ति[२] । एवं[३] ᵛनः अस्मभ्यम् ᵛओषधीः फलपाकान्ता ओषधयस्ताश्च ᵛमाध्वीः माधुर्योपेताः ᵛसन्तु भवन्तु ॥ मधु । अस्मादुत्तरस्य मत्वर्थीयस्य ' लुगकारेकाररेफाश्च वक्तव्याः ' ( पा. सू. ४. ४. १२८. २ ) इति लुक् । ऋतायते । ऋतमात्मन इच्छति । ' सुप आत्मनः क्यच् ' । ' न च्छन्दस्यपुत्रस्य° ' इति ईत्वदीर्घयोर्निषेधः । अन्येषामपि[४] संहितायां दीर्घत्वम्[४] । क्यजन्तात् लटः शतृ । ' शतुरनुमः° ' इति विभक्तेरुदात्तत्वम् । माध्वीः । ' मधोरञ् च ' ( पा. सू. ४. ४. १२९ ) इति मत्वर्थीयः अञ्प्रत्ययः । ' ऋत्व्यवास्त्व्य° ' इत्यादौ अञि यणादेशो निपात्यते । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । ओषधीः । ओषः पाकः आसु धीयते इति ओषधयः । ' कर्मण्यधिकरणे च ' इति किप्रत्ययः । ' कृदिकारादक्तिनः ' इति ङीष् । जसि पूर्ववत् पूर्वसवर्णदीर्घः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । तच्च वजन्तमाद्युदात्तम् ॥

**मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥ ७ ॥**

मधु । नक्तम् । उत । उषसः । मधुऽमत् । पार्थिवम् । रजः । मधु । द्यौः । अस्तु । नः । पिता ॥७॥

ᵛनक्तं रात्रिः ᵛनः अस्माकं ᵛमधु मधुमती माधुर्योपेतफलप्रदा भवतु । ᵛउत अपि च ᵛउषसः उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु । ᵛपार्थिवं ᵛरजः पृथिव्याः संबन्धी लोकोऽस्माकं ᵛमधुमत् माधुर्यविशिष्टफलयुक्तो भवतु । ᵛपिता वृष्टिप्रदानेन सर्वेषां पालयिता ᵛद्यौः द्युलोकोऽपि ᵛमधु मधुयुक्तः[५] भवतु ॥ पार्थिवम् । ' पृथिव्या ञाञौ ' ( पा. सू. ४. १. ८५. २ ) इति प्राग्दीव्यतीयः अञ्प्रत्ययः । रजः । रजःशब्दो लोकवाची । ' लोका रजांस्युच्यन्ते ' ( निरु. ४. १९ ) इति यास्कः । रजन्त्यस्मिन् जना इति रजः । असुनि ' रजकरजनरजःसूपसंख्यानम् ' ( का. ६. ४. २४. ४ ) इति रञ्जेर्नलोपः ॥

---

१ क्ष-ट-ढ—कर्त कुरुत । २. क्ष—प्रयच्छन्त्येव । ३. क्ष—' एवम् ' नास्ति । ४. क्ष—अन्येषामपि दृश्यते इति सांहितिकं दीर्घत्वम्; स—अन्येषामपीति संहितायां दीर्घत्वम् । ५. क्ष-ट-ढ—माधुर्ययुक्तः ।

**मधु॑मान्नो॒ वन॒स्पति॒र्मधु॑माँ अस्तु॒ सूर्यः॑ । माध्वी॒र्गावो॑ भवन्तु नः ॥ ८ ॥**

मधु॑ऽमान् । नः॒ । वन॒स्पतिः॑ । मधु॑ऽमान् । अ॒स्तु॒ । सूर्यः॑ । माध्वीः॑ । गावः॑ । भ॒व॒न्तु॒ । नः॒ ॥८॥

ᵛनः अस्माकं ᵛवनस्पतिः वनानां पालयिता यूपाभिमानी देवः ᵛमधुमान् माधुर्योपेतफलवान् ᵛअस्तु । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । ᵛसूर्यः सर्वस्य प्रेरकः सविता च ᵛमधुमान् अस्तु । ᵛगावः अग्निहोत्राद्यर्था धेनवश्च ᵛनः अस्माकं ᵛमाध्वीः माधुर्योपेतेन पयसा युक्ताः ᵛभवन्तु ॥ वनस्पतिः । वनानां पतिर्वनस्पतिः । पारस्करादित्वात् सुट् । वनपतिशब्दावाद्युदात्तौ । ' उभे वनस्पत्यादिषु युगपत् ' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

**शं नो॑ मि॒त्रः शं वरु॑णः॒ शं नो॑ भवत्वर्य॒मा ।**

**शं न॒ इन्द्रो॒ बृह॒स्पतिः॒ शं नो॒ विष्णु॑रुरुक्र॒मः ॥ ९ ॥**

शम् । नः॒ । मि॒त्रः । शम् । वरु॑णः । शम् । नः॒ । भ॒व॒तु॒ । अ॒र्य॒मा ।

शम् । नः॒ । इन्द्रः॑ । बृ॒ह॒स्पतिः॑ । शम् । नः॒ । विष्णुः॑ । उ॒रु॒ऽक्र॒मः ॥ ९ ॥

अहरभिमानी ᵛमित्रः देवः ᵛनः अस्माकं ᵛशं सुखकरो भवतु । यद्वा । अस्मदीयानामुपद्रवाणां शमयिता भवतु । रात्र्यभिमानी ᵛवरुणः च ᵛशं सुखकरः ᵛभवतु । ᵛअर्यमा अहोरात्रयोः स्थापयिता सूर्यश्च ᵛनः अस्माकं ᵛशं सुखकरो भवतु । ᵛबृहस्पतिः बृहतां देवानां पालयिता ᵛइन्द्रः च ᵛनः अस्माकं ᵛशं सुखकरो भवतु । ᵛउरुक्रमः । उरु विस्तीर्णं क्रामति पादौ विक्षिपतीति उरुक्रमः । विष्णुर्हि वामनावतारे पृथिव्यादीन् लोकान्[1] पदत्रयरूपेणाक्रान्तवान् । अतः उरुक्रमः ᵛविष्णुः च ᵛनः अस्माकं ᵛशं सुखकरः[2] उपद्रवाणां शमयिता वा भवतु[3] ॥ उरुक्रमः । ' क्रमु पादविक्षेपे ' । पचाद्यच् । यद्वा । उरून् क्रामतीति उरुक्रमः । कर्मणि अण् । ' नोदात्तोपदेशस्य मान्तस्य० ' इति वृद्धिप्रतिषेधः ॥ ॥१८॥

' त्वं सोम ' इति त्रयोविंशत्यृचं सप्तमं सूक्तं गोतमस्यार्षं सोमदेवताकम् । पञ्चम्याद्याः षोडश्यन्ता द्वादशर्चो गायत्र्यः । सप्तदश्युष्णिक् । शिष्टा दश त्रिष्टुभः । तथा चानुक्रान्तं–' त्वं सोम त्र्यधिका सौम्यं पञ्चम्यादि गायत्र्यो द्वादशोष्णिक् च ' इति । सूक्तविनियोगो लैङ्गिकः । एकादशिनस्य सौम्यस्य पशोर्वपापुरोडाशयोः ' त्वं सोम ' इति द्वे ऋचावनुवाक्ये । सूत्रितं च–' त्वं सोम प्र चिकितो मनीषेति द्वे ' ( आश्व. श्रौ. ३. ७ ) इति । महापितृयज्ञे एकैकस्य हविषो द्वे द्वे अनुवाक्ये । तत्र सोमस्य पितृमतः ' त्वं सोम ' इत्येषा प्रथमानुवाक्या । ' दक्षिणाग्नेरग्निम् ' इति खण्डे सूत्रितं–' त्वं सोम प्र चिकितो मनीषा सोमो धेनुम् ' ( आश्व. श्रौ. २. १९ ) इति । एषैव प्रायणीयेष्टौ सौम्यस्यानुवाक्या । ' तदहः प्रायणीयेष्टिः ' इत्यत्र सूत्रितं–' त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्याम् ' ( आश्व. श्रौ. ४. ३ ) इति ॥

---

१. क्ष-ट-ढ-स–त्रीन् लोकान् । २. क्ष-ट-ढ–सुखकरो भवतु । ३. क्ष-ट-ढ-स–' भवतु ' इत्यस्यानन्तरं ' बृहस्पतिः । तद्बृहतोः करपत्योरिति सुट्तलोपौ । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरत्वम् ' इत्यधिकम् ।

**त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् ।**

**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १ ॥**

त्वम् । सोम । प्र । चिकितः । मनीषा । त्वम् । रजिष्ठम् । अनु । नेषि । पन्थाम् ।

तव । प्रऽनीती । पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ॥ १ ॥

हे सोम त्वं मनीषा मनीषयास्मदीयया बुद्ध्या प्र चिकितः प्रकर्षेण ज्ञातोऽसि वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः । अतः त्वं रजिष्ठम् ऋजुतममकुटिलं पन्थां पन्थानं कर्मफलावाप्तिहेतुभूतं मार्गम् अनु नेषि अस्माननुक्रमेण प्रापयसि । किंच हे इन्दो उन्दनशील सर्वं जगदमृतेन क्लेदयितः सोम तव प्रणीती प्रणीत्या त्वत्कर्तृकेण प्रकृष्टनयनेन धीराः धीमन्तः कर्मवन्तः प्रज्ञावन्तो वा नः अस्माकं पितरः देवेषु इन्द्रादिषु रत्नं रमणीयं धनम् अभजन्त असेवन्त प्राप्नुवन् । अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः ॥ प्र चिकितः । ‘ कित ज्ञाने ’ । अस्मात् कर्मणि निष्ठा । छान्दसं द्विर्वचनम् । यद्वा । यङ्लुगन्तात् निष्ठा । संज्ञापूर्वकस्य विधेरनित्यत्वात् ‘ गुणो यङ्लुकोः ’ इति अभ्यासस्य गुणाभावः । यद्वा । ‘ छन्दस्युभयथा ’ इति निष्ठायाः सार्वधातुकसंज्ञायां शप् । जुहोत्यादित्वात् तस्य श्लुः । ‘ श्लौ ’ इति द्विर्वचनम् । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । मनीषा । ‘ सुपां सुलुक्° ’ इति तृतीयाया डादेशः । रजिष्ठम् । ऋजुशब्दात् इष्ठनि ‘ विभाषर्जोश्छन्दसि ’ ( पा. सू. ६. ४. १६२ ) इति रत्वम् । ‘ टेः ’ इति टिलोपः । नेषि । नयतेर्लेटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । पन्थाम् । ‘ पथिमथ्यृभुक्षामात् ’ ( पा. सू. ७. १. ८५ ) इति असावपि व्यत्ययेन आत्वम् । ‘ पथिमथोः सर्वनामस्थाने ’ इत्याद्युदात्तत्वम्[1] । प्रणीती । ‘ तादौ च ’ इति गतेः प्रकृतिस्वरत्वम् । ‘ सुपां सुलुक्° ’ इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ॥

अग्निष्टोमे मरुत्वतीये ‘ त्वं सोम क्रतुभिः ’ इत्येषा धाय्या । सूत्रितं च—‘ अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः ’ ( आश्व. श्रौ. ५. १४ ) इति ॥

**त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।**

**त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ २ ॥**

त्वम् । सोम । क्रतुऽभिः । सुऽक्रतुः । भूः । त्वम् । दक्षैः । सुऽदक्षः । विश्वऽवेदाः ।

त्वम् । वृषा । वृषऽत्वेभिः । महिऽत्वा । द्युम्नेभिः । द्युम्नी । अभवः । नृऽचक्षाः ॥ २ ॥

हे सोम त्वं क्रतुभिः त्वत्संबन्धिभिरग्निष्टोमादिकर्मभिः आत्मीयैर्ज्ञानैर्वा सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा भूः भवसि । तथा विश्ववेदाः सर्वधनः त्वं दक्षैः आत्मीयैर्बलैः सुदक्षः शोभनबलो भवसि । तथा त्वं वृषत्वेभिः वृषत्वैः कामाभिवर्षणैः महित्वा महत्त्वेन माहात्म्येन च वृषा कामानां वर्षिता महांश्च भवसि । तथा त्वं नृचक्षाः नृणां यज्ञस्य नेतॄणां यजमानानामभिमतफलस्य दर्शयिता

---

१. क्ष-स-इत्याद्युदात्तत्वम् । तव । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् ।

सन् ᵛद्युम्नेभिः द्युम्नैः तैर्दत्तैर्हविर्लक्षणैरन्नैः ᵛद्युम्नी ᵛअभवः प्रभूतान्नो भवसि ॥ सुक्रतुः । बहुव्रीहौ 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । सुदक्षः । 'दक्ष वृद्धौ' । दक्ष्यतेऽनेनेति दक्षो बलम् । करणे घञ् । ञित्त्वादाद्युदात्तत्वम् । सुशब्देन बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । विश्ववेदाः । विश्वानि वेदांसि यस्यासौ । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । वृषत्वेभिः । वृष्णो भावो वृषत्वम् । 'बहुलं छन्दसि' इति भिसः ऐसभावः । महित्वा । महेरौणादिक इन्प्रत्ययः । भावप्रत्ययान्तात् 'सुपां सुलुक्°' इति विभक्तेः आकारः ॥

राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम ।
शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ३ ॥

राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव । सोम । धाम ।
शुचिः । त्वम् । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥३॥

हे ᵛसोम ᵛराज्ञः ब्राह्मणानां स्वामिनः । 'सोमोऽस्माकं ब्राह्मणानां राजा' ( तै. सं. १. ८. १०. २ ) इति श्रुतेः । ᵛवरुणस्य । यागार्थमाहृतः क्रीतो वस्त्रेणावृतः सोमो वरुणः । 'वरुणोऽसि धृतव्रतः' ( तै. सं. १. २. १०. २ ) इति मन्त्रलिङ्गात् । क्रीतस्य ᵛते ᵛनु तव संबन्धीनि हि ᵛव्रतानि सर्वाण्यग्निष्टोमादीनि कर्माणि । अतः सर्वेषु यागेषु त्वमेव करणभूतः[1] भवसीत्यर्थः । अतः ᵛतव ᵛधाम स्वदीयं तेजः ᵛबृहत् महत् विस्तीर्णं ᵛगभीरं गाम्भीर्योपेतं च । यद्वा । नु इत्येतदुपमार्थे । तदुक्तं यास्केन –'अथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूत वयाः' ( निरु. १. ४ ) इति । राज्ञः राजमानस्य वरुणस्य नु वरुणस्येव हे सोम ते तव व्रतानि कर्माणि लोकहितकारीणि । शिष्टं समानम् । हे ᵛसोम ᵛत्वं ᵛशुचिः सर्वेषां शोधकः ᵛअसि । तत्र दृष्टान्तः । ᵛप्रियो ᵛन ᵛमित्रः । यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत् । तथा त्वम् ᵛअर्यमेव अस्माभिर्दृश्यमानः सूर्य इव ᵛदक्षाय्यः ᵛअसि सर्वेषां वर्धको भवसि । यथाहनि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगद्वर्धते ॥ शुचिष्ट्वम् । 'युष्मत्ततत्क्षुःष्वन्तःपादम्' इति विसर्जनीयस्य षत्वम् । दक्षाय्यः । 'दक्ष वृद्धौ' । 'श्रुदक्षिस्पृहिगृहिभ्य आय्यः' ( उ. सू. ३. ३७६ ) इति आय्यप्रत्ययः ॥

आग्रयणेष्टौ सौम्यस्य हविषः 'या ते धामानि' इति याज्या । 'आग्रयणं व्रीहिश्यामाकयवानाम्' इति खण्डे सूत्रितम्–'सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्याम्' ( आश्व. श्रौ. २. ९ ) इति । एषैवैकादशिनस्य सौम्यस्य पशोर्वपायां याज्या । सूत्रितं च–'या ते धामानि दिवि या पृथिव्यामषाळ्हं युत्सु पृतनासु पप्रिम्' ( आश्व. श्रौ. ३. ७ ) इति । प्रायणीयेष्टावप्येषैव सौम्यस्य याज्या । सूत्रितं च–'त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्याम् ( आश्व. श्रौ. ४. ३ ) इति ॥

---

१. क्ष-च-छ-ट-ढ-ण-द-ध-न-फ-ल-स–कारणभूतः ।

या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैः सुमना अहेळन्राजन्त्सोम प्रति हव्या गृभाय ॥ ४ ॥

या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्ऽसु ।
तेभिः । नः । विश्वैः । सुऽमनाः । अहेळन् । राजन् । सोम । प्रति । हव्या । गृभाय ॥ ४ ॥

हे सोम ᵛते तव ᵛदिवि द्युलोके ᵛया यानि ᵛधामानि तेजांसि वर्तन्ते । तथा ᵛपृथिव्यां भूमौ यानि वर्तन्ते । तथा ᵛपर्वतेषु पर्ववत्सु शिलोच्चयेषु यानि वर्तन्ते । तथा व्रीह्याद्योषधीषु ᵛअप्सु च यानि वर्तन्ते । ᵛतेभिः ᵛविश्वैः तैः सर्वैस्तेजोभिर्युक्तः ᵛसुमनाः शोभनमनाः ᵛअहेळन् अक्रुध्यन् हे ᵛराजन् ᵛसोम राजमान सोम एवंभूतस्त्वं ᵛहव्या अस्माभिः प्रत्तानि हवींषि ᵛप्रति ᵛगृभाय प्रतिगृहाण ॥ या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । पृथिव्याम् । 'उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । ओषधीषु । 'ओषधेश्च विभक्तावप्रथमायाम्' ( पा. सू. ६. ३. १३२ ) इति दीर्घः । अप्सु । 'ऊडिदम्०' इत्यादिना विभक्तेरुदात्तत्वम् । सुमनाः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । गृभाय । 'ग्रह उपादाने' । 'छन्दसि शायजपि' इति हौ श्नाप्रत्ययस्य शायजादेशः ॥

पौर्णमासेष्टौ सौम्यस्याज्यभागस्य 'त्वं सोम' इत्येषानुवाक्या । सूत्रितं च–'अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या त्वं सोमासि सत्पतिरित्युत्तरस्य' (आश्व. श्रौ. १. ५) इति । एवं यत्र यत्र वार्त्रघ्नावाज्यभागौ तत्र सर्वत्रास्या विनियोगः । प्रातःकालीनायामुपसदि प्रधानस्य सौम्यस्यैषैवानुवाक्या । आपराह्णिक्यामुपसदि सैव याज्या । सूत्रितं च–'त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा' इति, 'विपर्यासो याज्यानुवाक्यानाम्' ( आश्व. श्रौ. ४. ८ ) इति च ॥

त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ॥ ५ ॥

त्वम् । सोम । असि । सत्ऽपतिः । त्वम् । राजा । उत । वृत्रऽहा । त्वम् । भद्रः । असि । क्रतुः ॥५॥

हे ᵛसोम ᵛत्वं ᵛसत्पतिः ᵛअसि सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि । 'तस्मात्सोमराजानो ब्राह्मणाः' ( तै. ब्रा. १. ७. ४. २ ) इति श्रुतेः । यद्वा । सन्तः स्वानादयः पतयः पालका यस्य सोमस्य तादृशो भवसि । तथा चाम्नायते–'स्वान भ्राजेत्याहैते वा अमुष्मिन् लोके सोममरक्षन्' ( तै. सं. ६. १. १०. ५) इति । ᵛउत अपि च ᵛराजा राजमानः ᵛत्वं ᵛवृत्रहा वृत्रस्यासुरस्य[1] शत्रोर्वा हन्तासि । ᵛभद्रः शोभनः ᵛक्रतुः योऽयमग्निष्टोमादियागः[2] ᵛत्वम् एव तद्रूपो भवसि । त्वत्साध्यत्वाद्यागानाम् ॥ सत्पतिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । तत्पुरुषपक्षे तु 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ १९ ॥

साग्निचित्ये क्रतावग्नीषोमीयस्य पशुपुरोडाशमनु अष्टौ देवसुवां हवींषि निरुप्यन्ते । तत्र सोमस्य वनस्पतेर्हविषः 'त्वं च सोम' इत्येषानुवाक्या । 'अथाग्नीषोमीयेण' इति खण्डे सूत्रितं—'त्वं च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनाम्' ( आश्व. श्रौ. ४. ११ ) इति ॥

---

१. क्ष- ट-ढ–वृत्रस्यावरकस्य असुरस्य । २. क्ष-ट-ढ–योऽप्यग्निष्टोमादियागः ।

त्वं च॑ सोम नो॒ वशो॑ जी॒वातुं॒ न म॑रामहे । प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑ ॥ ६ ॥

त्वम् । च॒ । सो॒म॒ । नः॒ । वशः॑ । जी॒वातु॑म् । न । म॒रा॒म॒हे॒ । प्रि॒यऽस्तो॑त्रः । वन॒स्पतिः॑ ॥ ६ ॥

हे ᵛसोम ᵛनः अस्माकं स्तोतॄणां ᵛजीवातुं जीवनौषधं ᵛत्वं ᵛच त्वं चेत् ᵛवशः कामयेथाः तदानीं वयं ᵛन ᵛमरामहे न म्रियामहे । कीदृशस्त्वम् । ᵛप्रियस्तोत्रः । प्रियाणि स्तोत्राणि यस्य स तथोक्तः । बहुभिः स्तोतव्य इत्यर्थः । ᵛवनस्पतिः वनानामोषधिवनस्पतिरूपाणां पतिः पालयितासि । 'सोमो वा ओषधीनां राजा' ( तै. सं. ६. १. ९. १ ) इति श्रुतेः ॥ वशः । 'वश कान्तौ' । लेटि सिपि अडागमः । आगमानुदात्तत्वे धातुस्वरः शिष्यते । त्वं चेति चशब्दश्चणिति निपातान्तरं चेदर्थम्[1] । तद्योगात् 'निपातैर्यद्यदिहन्त°' इति निघातप्रतिषेधः । जीवातुम् । 'जीव प्राणधारणे' । 'जीवेरातुः' ( उ. सू. १. ७९ ) । मरामहे । 'मृङ् प्राणत्यागे' । व्यत्ययेन शप् ॥

आयुष्कामेष्ट्यां द्वितीयस्याज्यभागस्य 'त्वं सोम महे भगम्' इत्येषानुवाक्या । 'अथ काम्याः' इति खण्डे सूत्रितम्–'आ नो अग्ने सुचेतुना त्वं सोम महे भगम्' ( आश्व. श्रौ. २. १० ) इति ॥

त्वं सो॑म म॒हे भगं॒ त्वं यून॑ ऋता॒यते । दक्षं॑ दधासि जी॒वसे॑ ॥ ७ ॥

त्वम् । सो॒म॒ । म॒हे । भग॑म् । त्वम् । यूने॑ । ऋ॒त॒ऽय॒ते । दक्ष॑म् । द॒धा॒सि॒ । जी॒वसे॑ ॥ ७ ॥

हे ᵛसोम ᵛत्वं ᵛमहे महते वृद्धाय ᵛऋतायते ऋतं यज्ञमात्मन इच्छते पुरुषाय ᵛजीवसे जीवितुं ᵛदक्षम् उपभोगसमर्थं ᵛभगं धनं ᵛदधासि विदधासि करोषि । तथा ᵛत्वं ᵛयूने तरुणाय च ऋतायते जीवितुं धनं करोषि ॥ महे । महते । अच्छब्दलोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । यूने । 'श्वयुवमघोनामतद्धिते' इति संप्रसारणम् । ऋतायते । ऋतमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । क्यजन्तात् लटः शतृ । 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् । जीवसे । 'जीव प्राणधारणे' । 'तुमर्थे सेसेन्°' इति असेप्रत्ययः ॥

स्वस्त्ययन्यां द्वितीयस्याज्यभागस्य 'त्वं नः सोम' इत्येषानुवाक्या । सूत्रितं च–'स्वस्त्ययन्यां रक्षितवन्तावग्ने रक्षा णो अंहसस्त्वं नः सोम विश्वतः' ( आश्व. श्रौ. २. १० ) इति ॥

त्वं नः॑ सोम वि॒श्वतो॒ रक्षा॑ राजन्नघाय॒तः । न रि॑ष्येत्त्वाव॑तः॒ सखा॑ ॥ ८ ॥

त्वम् । नः॒ । सो॒म॒ । वि॒श्वतः॑ । रक्ष॑ । रा॒ज॒न् । अ॒घ॒ऽय॒तः । न । रि॒ष्ये॒त् । त्वाऽव॑तः । सखा॑ ॥ ८ ॥

हे ᵛसोम ᵛराजन् राजनशील ᵛत्वम् ᵛअघायतः । अघं पापम् । तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतः ᵛविश्वतः सर्वस्मादपि पुरुषात् ᵛनः अस्मान् ᵛरक्ष पालय । ᵛत्वावतः त्वत्सदृशस्य ᵛसखा सख्यं प्राप्तः पुरुषः ᵛन ᵛरिष्येत् नहि विनश्येत् किमु वक्तव्यं त्वत्सखा न विनश्यतीति ॥ अघायतः ।

---

१. क्ष–चेदर्थः ।

अयं पापं परेषामिच्छन्नीत्यघायन् । ‘ छन्दसि परेच्छायामपि ’ इति क्यच् । ‘ अश्वाघस्यात् ’ इति आत्वम् । रिष्येत् । ‘ रुष रिष हिंसायाम् ’ । त्वावतः । ‘ वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ’ इति वतुप् । ‘ प्रत्ययोत्तरपदयोश्च ’ इति मपर्यन्तस्य त्वादेशः । ‘ आ सर्वनाम्नः ’ इति आत्वम् ॥

सोमप्रवहणे ‘ सोम यास्ते ’ इति तृचोऽनुवक्तव्यः । सूत्रितं च–‘ सोम यास्ते मयोभुव इति तिस्रः ’ ( आश्व. श्रौ. ४. ४ ) इति । आग्रयणे सौम्यस्य ‘ सोम यास्ते ’ इत्येषानुवाक्या । सूत्रितं च–‘ सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्याम् ’ ( आश्व. श्रौ. २. ९ ) इति । अश्वमेधेऽपि पौष्ण्यामिष्टौ द्वितीयस्याज्यभागस्यैषानुवाक्या । सूत्रितं च–‘ त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ ’ ( आश्व. श्रौ. १०. ६ ) इति ॥

## सोम॒ यास्ते॑ मयो॒भुव॑ ऊ॒तयः॒ सन्ति॑ दा॒शुषे॑ । ताभि॑र्नोऽवि॒ता भ॑व ॥ ९ ॥

सोम॑ । याः । ते॒ । म॒यः॒ऽभुवः॑ । ऊ॒तयः॑ । सन्ति॑ । दा॒शुषे॑ । ताभिः॑ । नः॒ । अ॒वि॒ता । भ॒व ॥ ९ ॥

हे ^v^सोम ^v^ते तव संबन्धिन्यः ^v^दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय ^v^मयोभुवः मयसः सुखस्य भावयित्र्यः ^v^याः ^v^ऊतयः रक्षाः ^v^सन्ति विद्यन्ते ^v^ताभिः रक्षाभिः ^v^नः अस्माकम् ^v^अविता रक्षिता ^v^भव ॥ मयोभुवः । अस्य ऊतिविशेषणत्वेन स्त्रीलिङ्गत्वे ‘ भुवश्च ’ (पा. सू. ४. १. ४७ ) इति ङीप् प्राप्नोति । तत् ‘ वोतो गुणवचनात् ’ इत्यस्मात् उतः इति तपरकरणस्यानुवर्तनात् न भवति ॥

## इ॒मं य॒ज्ञमि॒दं वचो॑ जुजुषा॒ण उ॒पाग॑हि । सोम॒ त्वं नो॑ वृ॒धे भ॑व ॥ १० ॥

इ॒मम् । य॒ज्ञम् । इ॒दम् । वचः॑ । जु॒जु॒षा॒णः । उ॒प॒ऽआग॑हि । सोम॑ । त्वम् । नः॒ । वृ॒धे । भ॒व ॥ १० ॥

हे ^v^सोम ^v^त्वम् ^v^इमम् अस्माभिः क्रियमाणं ^v^यज्ञम् ^v^इदं ^v^वचः इदानीं क्रियमाणं स्तुतिलक्षणं वचनं ^v^जुजुषाणः सेवमानः सन् ^v^उपागहि उपागच्छ प्राचीनवंशलक्षणं गृहं प्राप्नुहि । प्राप्य च ^v^नः अस्माकं ^v^वृधे यज्ञस्य वर्धनाय ^v^भव ॥ जुजुषाणः । ‘ जुषी प्रीतिसेवनयोः । छन्दसि लिट् । लिटः कानच् । ‘ चितः ’ इत्यन्तोदात्तत्वम् । उपागहि । गमेर्लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ अनुदात्तोपदेश॰ ’ इत्यादिना मकारलोपः । ‘ असिद्धवदत्रा भात् ’ इति अस्य[1] असिद्धत्वात् हेः लुगभावः । ‘ गतिर्गतौ ’ ( पा. सू. ८. १. ७० ) इति पूर्वस्य गतेर्निघातः ॥ ॥ २० ॥

दर्शयागे सौम्यस्याज्यभागस्य ‘ सोम गीर्भिः ’ इत्येषानुवाक्या । सूत्रितं च—‘ अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयम् ’ ( आश्व. श्रौ. १. ५ ) इति । अन्यत्रापि यत्र वृधन्वन्तावाज्यभागौ तत्रैषा द्वितीयाज्यभागानुवाक्या ॥

## सोम॑ गी॒र्भिष्ट्वा॑ व॒यं व॒र्धया॑मो वचो॒विदः॑ । सु॒मृ॒ळी॒को न॒ आ वि॑श ॥ ११ ॥

सोम॑ । गीः॒ऽभिः । त्वा॒ । व॒यम् । व॒र्धया॑मः । व॒चः॒ऽविदः॑ । सु॒ऽमृ॒ळी॒कः । नः॒ । आ । वि॒श ॥ ११ ॥

---

१. क्ष—तस्य ।

हे ᵛसोम ᵛत्वा त्वां ᵛवचोविदः स्तुतिलक्षणानां वचसां वेदितारः ᵛवयम् अनुष्ठातारः ᵛगीर्भिः स्तुतिलक्षणैर्वचोभिः ᵛवर्धयामः प्रवृद्धं कुर्मः । तादृशस्त्वं च ᵛनः अस्माकं ᵛसुमृळीकः शोभनं सुखं कुर्वन् सन् ᵛआ ᵛविश आगच्छ ॥ सुमृळीकः । ' मृड सुखने ' । ' मृडेः कीकच्कङ्कनौ ' ( उ. सू. ४. ४६४ ) इति भावे कीकच्प्रत्ययः । शोभनं मृडीकं यस्येति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् ॥

सन्ति पवमानेष्टयस्तिस्रः[1] । तत्र तृतीयस्यामिष्टावुत्तरस्याज्यभागस्य ' गयस्फानः ' इत्येषानुवाक्या । सूत्रितं च–' पुष्टिमन्तावग्निना रयिमश्नवद्गयस्फानो अमीवहा ' ( आश्व. श्रौ. २. १ ) इति । एषैव प्रातःकालीनोपसदि सौम्ययागस्य याज्या सायंकालीनायां त्वनुवाक्या । सूत्रितं च ' अथोपसत् ' इति खण्डे–' त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा ' ( आश्व. श्रौ. ४. ८ ) इति ॥

गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥ १२ ॥

गयऽस्फानः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः । सुऽमित्रः । सोम । नः । भव ॥१२॥

ᵛगयस्फानः । गयः इति धननाम । धनस्य वर्धयिता ᵛअमीवहा अमीवानां रोगाणां हन्ता ᵛवसुवित् स्तोतॄणां धनस्य लम्भयिता प्रापयिता ᵛपुष्टिवर्धनः पुष्टेः संपदो वर्धयिता ᵛसुमित्रः । शोभनानि मित्राणि सखायो यस्य स तथोक्तः । हे ᵛसोम त्वं ᵛनः अस्माकम् एवंगुणविशिष्टः ᵛभव ॥ गयस्फानः । ' स्फायी वृद्धौ ' । अन्तर्भावितण्यर्थात् ल्युटि व्यत्ययेन यलोपः । इदमादिषु चतुर्षु पदेषु कृदुत्तरपदप्रकृतिस्वरत्वम् । सुमित्रः । ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् ॥

सोम रारन्धि नो हृदि गावो न यवसेष्वा । मर्य इव स्व ओक्ये ॥ १३ ॥

सोम । ररन्धि । नः । हृदि । गावः । न । यवसेषु । आ । मर्यःऽइव । स्वे । ओक्ये ॥१३॥

हे ᵛसोम त्वं ᵛनः अस्माकं ᵛहृदि हृदये ᵛररन्धि रमस्व । तत्र निदर्शनद्वयमुच्यते । ᵛगावो ᵛन । यथा गावः ᵛयवसेषु शोभनतृणेषु ᵛआ आभिमुख्येन रमन्ते । ᵛमर्यइव । यथा वा मर्यो मरणधर्मा मनुष्यः ᵛस्वे ᵛओक्ये स्वकीये ओकसि गृहे पुत्रादिभिः सह रमते तद्वदस्माभिर्दत्तेन हविषा तृप्तः सन् अस्मास्वेवावतिष्ठस्व । नान्यत्र गच्छेति निदर्शनद्वयस्य तात्पर्यार्थः ॥ ररन्धि । 'रमु क्रीडायाम् '। व्यत्ययेन परस्मैपदम् । ' बहुलं छन्दसि ' इति शपः श्लुः । ' छन्दस्युभयथा ' इति हेः आर्धधातुकत्वेन ङित्त्वाभावात् ' अङितश्च ' इति हेर्धिः । अत एव अङित्त्वात् अनुनासिकलोपाभावः । ' सेर्ह्यपिच्च ' इति हेः अपित्त्वात् तस्यैव स्वरः शिष्यते । छान्दसमभ्यासदीर्घत्वम् । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्य अविद्यमानवत्त्वात् पदादपरत्वेन[2] निघाताभावः[3]। मर्यइव । ' छन्दसि निष्टर्क्य° ' इत्यादौ मर्यशब्दो यत्प्रत्ययान्तो निपात्यते । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । ओक्ये । ' उच समवाये ' । उच्यते समवेयते प्राप्यते इति ओक्यं गृहम् । ' ऋहलोर्ण्यत् '। ' चजोः कु घिण्ण्यतोः ' इति कुत्वम् । तित्स्वरितः ॥

---

१. क्ष-ट-ढ–पावमानेष्ट्यास्तिस्रः । २. स–पादादित्वेन । ३. स–न निघातः ।

य: सोम सख्ये तव रारणद्देव मर्त्यः । तं दक्षः सचते कविः ॥ १४ ॥

यः । सोम । सख्ये । तव । ररणत् । देव । मर्त्यः । तम् । दक्षः । सचते । कविः ॥१४॥

हे ᵛदेव द्योतमान ᵛसोम ᵛतव ᵛसख्ये त्वदीये सखित्वे निमित्तभूते सति ᵛयः ᵛमर्त्यः मरणधर्मा यजमानः ᵛरारणत् रणति एतत्सूक्तरूपेण स्तोत्रेण त्वां स्तौति ᵛतं यजमानं ᵛकविः क्रान्तदर्शी ᵛदक्षः सर्वकार्यसमर्थस्त्वं ᵛसचते सेवसे । अनुगृह्णासीत्यर्थः[1] ॥ ररणत्[2] । रण शब्दार्थः । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'इतश्च लोपः॰' इति इकारलोपः । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अचि अनिटि लसार्वधातुके विधीयमानस्य अभ्यस्ताद्युदात्तत्वस्याभावे धातुस्वरः शिष्यते । सचते । 'षच समवाये' । पुरुषव्यत्ययः ॥

उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥ १५ ॥

उरुष्य । नः । अभिऽशस्तेः । सोम । नि । पाहि । अंहसः । सखा । सुऽशेवः । एधि । नः ॥ १५ ॥

हे ᵛसोम त्वं ᵛनः अस्मान् ᵛअभिशस्तेः अभिशंसनात् अभिशापरूपान्निन्दनात् ᵛउरुष्य रक्ष । 'उरुष्यती रक्षाकर्मा' ( निरु. ५. २३ ) इति यास्कः । तथा ᵛअंहसः अस्मत्कृतात् पापाच्च ᵛनि ᵛपाहि नितरां पालय । एवमस्मदीयं पापं परिहृत्य ᵛसुशेवः अस्मभ्यं दातव्येन शोभनेन सुखेन युक्तः सन् ᵛसखा ᵛएधि हितकारी भव ॥ अभिशस्तेः । 'शंसु स्तुतौ' । अस्मात् भावे क्तिन् । 'तादौ च॰' इति गतेः प्रकृतिस्वरत्वम् । एधि । 'अस भुवि' । लोटि सेर्हिः । तस्य ङित्त्वात् 'श्नसोरल्लोपः' इति अकारलोपः । 'घ्वसोरेद्धावभ्यासलोपश्च' इति सकारस्य एत्वम् । तस्य 'असिद्धवदत्रा भात्' इति असिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः ॥ ॥ २१ ॥

ग्रावस्तोत्रे 'आ प्यायस्व समेतु ते' इति तृचो विनियुक्तः । सूत्रितं च–'आ प्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दश क्षिपः' ( आश्व. श्रौ. ५. १२ ) इति । पत्नीसंयाजेषु सौम्यस्य 'आ प्यायस्व' इत्येषानुवाक्या । सूत्रितं च–'आ प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजाः' ( आश्व. श्रौ. १. १० ) इति ॥ चमसाप्यायनेऽप्येषा विनियुक्ता । सूत्रितं च—'आ प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इति चमसानाप्योपाद्यान्' ( आश्व. श्रौ. ५. ६ ) इति ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥१६॥

आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥१६॥

हे ᵛसोम त्वम्[3] ᵛआ ᵛप्यायस्व वर्धस्व । ᵛते तव ᵛवृष्ण्यं वृषत्वं वीर्यं सामर्थ्यं ᵛविश्वतः सर्वतः ᵛसमेतु संगच्छतां त्वया संयुक्तं भवतु । एवंभूतस्त्वं ᵛवाजस्य अन्नस्य ᵛसंगथे संगमने ᵛभव । अस्माकमन्नप्रदो भवेत्यर्थः ॥ वृष्ण्यम् । 'वृष सेचने' । 'कनिन्युवृषि॰' इत्यादिना कनिन् । वृष्णि

---

१. क्ष-ट-ढ-स–'अनुगृह्णासीत्यर्थः' इत्यस्यानन्तरं 'सख्ये । सख्युर्यः इति भावे यप्रत्ययः' इत्यधिकम् । २. न-स–रारणत् । ३. ट-ढ–'त्वम्' नास्ति ।

भवं वृष्ण्यम् । ' भवे छन्दसि ' इति यत् । ' अल्लोपोऽनः ' इति अकारलोपः । ' ये चाभावकर्मणोः ' इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । भव । ' द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घत्वम् । संगथे । ' पातृतुदिवचि॰ ' इत्यादिना विधीयमानः थक्प्रत्ययो बहुलवचनात् गमेरपि भवति । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नः सुश्रवस्तमः सखा वृधे ॥ १७ ॥

आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः ।
भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥ १७ ॥

हे ᵛमदिन्तम अतिशयेन मदवन् ᵛसोम ᵛविश्वेभिः सर्वैः ᵛअंशुभिः लतावयवैः ᵛआ ᵛप्यायस्व आ समन्तात् वृद्धो भव । स त्वं ᵛसुश्रवस्तमः अतिशयेन शोभनान्नयुक्तः सन् ᵛनः अस्माकं ᵛवृधे वर्धनाय ᵛसखा ᵛभव मित्रीभव ॥ मदिन्तम । मदो हर्षः । तद्वान् मदी । अतिशयेन मदी मदिन्तमः । ' नाद्घस्य ' ( पा. सू. ८. २. १७ ) इति तमपो नुट् । सुश्रवस्तमः । ' श्रवः इत्यन्ननाम श्रूयत इति सतः ' ( निरु. १०. ३ ) इति यास्कः । शोभनं श्रवो यस्य स तथोक्तः । अतिशयेन सुश्रवाः सुश्रवस्तमः । तमपः पित्त्वादनुदात्तत्वे ' सोमनसी अलोमोषसी ' इत्युत्तरपदाद्युदात्तत्वमेव शिष्यते ॥

पत्नीसंयाजेषु सौम्यस्य ' सं ते पयांसि ' इति याज्या । सूत्रितं च–' सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियम् ' ( आश्व. श्रौ. १. १० ) इति । चमसाप्यायनेऽप्येषा । सूत्रितं च– ' सं ते पयांसि समु यन्तु वाजा इति चमसानाप्योपाप्यान् ' ( आश्व. श्रौ. ५. ६ ) इति ॥

सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८ ॥

सम् । ते । पयांसि । सम् । ऊँ इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः ।
आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥ १८ ॥

हे सोम ᵛअभिमातिषाहः अभिमातीनां शत्रूणां हन्तुः ᵛते तव एवंभूतं त्वां ᵛपयांसि श्रयणार्थानि[1] क्षीराणि ᵛसं ᵛयन्तु संगच्छन्ताम् । तथा ᵛवाजाः ᵛउ हविर्लक्षणान्यन्नानि च त्वां संगच्छन्ताम् । ᵛवृष्ण्यानि वीर्याणि च संगच्छन्ताम् । हे ᵛसोम त्वम् ᵛअमृताय अस्माकममृतत्वाय अमरणत्वाय ᵛआप्यायमानः आ समन्तात् वर्धमानः सन् ᵛदिवि नभसि स्वर्गे ᵛउत्तमानि उद्गततमान्युत्कृष्टानि ᵛश्रवांसि अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि वा ᵛधिष्व धारय ॥ ते । ' क्रियाग्रहणं कर्तव्यम् ' इति

---

१. ट-स–श्रपणार्थानि ।

कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । अभिमातिषाहः । ' षह अभिभवे ' । ' छन्दसि सहः ' इति ण्विप्रत्ययः । सुषामादित्वात् षत्वम् । अमृताय । ' नञो जरमरमित्रमृताः ' इत्युत्तरपदाद्युदात्तत्वम् । उत्तमानि । उच्छब्दात् ससाधनक्रियावचनात् आतिशायनिकस्तमप् । ' उत्तमशश्वत्तमौ सर्वत्र ' ( पा. सू. ६. १. १६०. ग. ) इति उञ्छादिषु पाठात् अन्तोदात्तत्वम् । धिष्व । ' सुधित वसुधित नेमधित धिष्व धिषीय च ' ( पा. सू. ७. ४. ४५ ) इति धिभावो निपात्यते ॥

सोमप्रवहणे ' या ते धामानि ' इत्येषा । सूत्रितं च–' या ते धामानि हविषा यजन्तीमां धियं शिक्षमाणस्य देवेति निहिते परिदध्यात् ' ( आश्व. श्रौ. ४. ४ ) इति । एकादशिनस्य सौम्यस्य पशोर्हविष एषैव याज्या । ' प्रदानानाम् ' इति खण्डे सूत्रितम्–अषाढं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति ' ( आश्व. श्रौ. ३. ७ ) इति ॥

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥ १९ ॥

या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिऽभूः । अस्तु । यज्ञम् ।
गयऽस्फानः । प्रऽतरणः । सुऽवीरः । अवीरऽहा । प्र । चर । सोम । दुर्यान् ॥ १९ ॥

हे सोम ते त्वदीयानि या यानि धामानि द्युप्रभृतिष्ववस्थितानि तेजांसि हविषा चरुपुरोडाशादिना यजन्ति यजमानाः पूजयन्ति ता ते विश्वा त्वदीयानि तानि सर्वाणि धामानि यज्ञम् अस्मदीयमध्वरं परिभूरस्तु परितो भावयितॄणि परितः प्राप्तानि सन्तु । यद्वा । त्वदीयानां तेषां सर्वेषां धाम्नामस्मदीयो यजमानः परिभूर्यज्ञं प्रति परिग्रहीता यागेन स्वीकर्ता अस्तु भवतु । परिपूर्वो भवतिः परिग्रहार्थः । तादृशैर्धामभिरुपेतस्त्वं दुर्यान् प्राचीनवंशादिलक्षणानस्मदीयान् गृहान् । ' गृहा वै दुर्याः ' ( तै. सं. ६. २. ९. १ ) इति श्रुतेः । प्र चर प्रकर्षेण गच्छ । कीदृशस्त्वम् । गयस्फानः गयस्य गृहस्य धनस्य वा वर्धयिता प्रतरणः प्रकर्षेण दुरितात् तारयिता सुवीरः शोभनैः वीरैरुपेतः[1] अवीरहा । वीर्यात् जायन्ते इति वीराः पुत्राः । तेषामहन्ता ॥ परिभूः । ' भू प्राप्तौ ' । अस्मात् ' क्विप् च ' इति क्विप् । ' व्यत्ययो बहुलम् ' ( पा. सू. ३. १. ८५ ) इति लिङ्गवचन-व्यत्ययौ । अस्तु । व्यत्ययेन एकवचनम् । गयस्फानः । गय इति गृहस्य धनस्य च नामधेयम् । तेषां स्फायिता वर्धयिता । ' कृत्यल्युटो बहुलम् ' इति कर्तरि ल्युटि छान्दसो यलोपः । अवीरहा । वीराणां हन्ता वीरहा । न वीरहा अवीरहा ॥

महापितृयज्ञे सोमस्य पितृमतो यागे ' सोमो धेनुम् ' इत्येषा द्वितीयानुवाक्या । तत्र ह्येकैकस्य हविषो द्वे द्वे अनुवाक्ये समुच्चयेन विहिते । तथैव ' दक्षिणाग्नेः ' इति खण्डे सूत्रितम्–' सोमो धेनुं सोमो अर्वन्तमाशुं त्वं सोम पितृभिः संविदानः ' ( आश्व. श्रौ. २. १९ ) इति ॥

---

१. क्ष–वीरपुरुषैरुपेतः ।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २० ॥

सोमः । धेनुम् । सोमः । अर्वन्तम् । आशुम् । सोमः । वीरम् । कर्मण्यम् । ददाति ।
सदन्यम् । विदथ्यम् । सभेयम् । पितृऽश्रवणम् । यः । ददाशत् । अस्मै ॥ २० ॥

[v]यः यजमानः [v]ददाशत् सोमाय हविर्लक्षणान्यन्नानि दद्यात् तस्मै[1] यजमानाय [v]सोमः [v]धेनुं सवत्सां दोग्ध्रीं गां [v]ददाति । तथा [v]आशुं शीघ्रगामिनम् [v]अर्वन्तम् अश्वं ददाति प्रयच्छति। तथा [v]वीरं पुत्रम् [v]अस्मै यजमानाय ददाति। कीदृशं पुत्रम्। [v]कर्मण्यं लौकिककर्मसु कुशलं [v]सदन्यम्। सदनं गृहम्। तदर्हम्। गृहकार्यकुशलमित्यर्थः । [v]विदथ्यम्। विदन्त्येषु देवानिति विदथाः यज्ञाः । तदर्हम्। दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः । [v]सभेयं सभायां साधुम्। सकलशास्त्राभिज्ञमित्यर्थः। [v]पितृश्रवणं पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम्॥ कर्मण्यम्। कर्मसु साधुः कर्मण्यः। 'तत्र साधुः' (पा. सू. ४. ४. ९८) इति यत्। 'ये चाभावकर्मणोः' इति प्रकृतिभावः। 'तित्स्वरितम्' इति स्वरितत्वम्। एवमुत्तरत्रापि यत्प्रत्ययः। सभेयम्। 'ढश्छन्दसि' (पा. सू. ४. ४. १०६) इति तत्र साधुः इत्यर्थे ढप्रत्ययः। ददाशत्। 'दाश्ट दाने'। लेटि अडागमः। 'बहुलं छन्दसि' इति शपः श्लुः ॥ ॥ २२ ॥

एकादशिनस्य[2] सौम्यस्य पशोः पुरोडाशस्य 'अषाळ्हं युत्सु' इत्येषा याज्या । 'प्रदानानाम्' इति खण्डे सूत्रितम्—'अषाळ्हं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति' (आश्व. श्रौ. ३. ७) इति ॥

अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ २१ ॥

अषाळ्हम् । युत्ऽसु । पृतनासु । पप्रिम् । स्वःऽसाम् । अप्साम् । वृजनस्य । गोपाम् ।
भरेषुऽजाम् । सुऽक्षितिम् । सुऽश्रवसम् । जयन्तम् । त्वाम् । अनु । मदेम । सोम ॥ २१ ॥

[v]युत्सु युद्धेषु [v]अषाळ्हं शत्रुभिरनभिभवनीयं तथा [v]पृतनासु सेनासु [v]पप्रिं जयस्य पूरयितारं [v]स्वर्षां स्वर्गस्य सनितारं दातारं [v]अप्साम् अपां वृष्टिलक्षणानामुदकानां दातारम्। यद्वा अप्साम् अप्सातृकं भक्षकरहितम्। सर्वेषामनुग्राहकमित्यर्थः। [v]वृजनस्य [v]गोपाम्। वृज्यतेऽनेनेति[3] वृजनं बलम्। तस्य गोपां गोपयितारं[4] रक्षितारं [v]भरेषुजाम्। भ्रियन्ते एषु हवींषीति भराः यागाः। तेषु प्रादुर्भवन्तं [v]सुक्षितिं शोभननिवासस्थानं [v]सुश्रवसं शोभनयशस्कं [v]जयन्तं शत्रूनभिभवन्तम्। हे [v]सोम ईदृग्भूतं [v]त्वाम् अनुलक्ष्य [v]मदेम हर्षयुक्ता भवेम ॥ अषाळ्हम्। 'षह अभिभवे'। 'साढ्यै साढ्वा साढेति

---

१. क्ष-ट-ढ—अस्मै । २. क्ष-ट—ऐकादशिनस्य । ३. क्ष—वर्ज्यतेऽनेनेति । ४. क्ष—गोपायितारम् ।

निगमे ' ( पा. सू. ६. ३. ११३ ) इति निपातनात् ' सहिवहोरोदवर्णस्य ' ( पा. सू. ६. ३. ११२ ) इति ओत्वाभावः । ' सहेः साडः सः ' इति षत्वम् । पप्रिम् । ' पॄ पालनपूरणयोः ' । ' आदृगमहनजनः° ' इति किन्प्रत्ययः । स्वर्षाम् । स्वः स्वर्गं सनोतीति स्वर्षाः । ' षणु दाने ' । ' जनसनखन° ' इति विट् । ' विड्वनोरनुनासिकस्यात् ' इति आत्वम् । अप्साम् । अप्शब्दोपपदात् सनोतेः पूर्ववत् विट् । यद्वा । ' प्सा भक्षणे ' । प्साति भक्षयतीति प्साः । ' क्विप् च ' इति क्विप् । न विद्यते प्सा अस्येति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । भरेषुजाम् । ' जनी प्रादुर्भावे ' । पूर्ववत् विट् आत्वं च । मदेम । ' मदी हर्षे ' । व्यत्ययेन शप् ॥

त्वमि॒मा ओष॑धीः सोम॒ विश्वा॒स्त्वम॒पो अ॑जनय॒स्त्वं गाः ।
त्वमा त॑तन्थो॒र्वे॑१॒॑न्तरि॑क्षं॒ त्वं ज्योति॑षा॒ वि तमो॑ ववर्थ ॥ २२ ॥

त्वम् । इ॒माः । ओष॑धीः । सोम॒ । विश्वाः॑ । त्वम् । अ॒पः । अ॒ज॒न॒यः॒ । त्वम् । गाः ।
त्वम् । आ । त॒त॒न्थ॒ । उ॒रु । अ॒न्तरि॑क्षम् । त्वम् । ज्योति॑षा । वि । तमः॑ । व॒व॒र्थ॒ ॥२२॥

हे ᵛसोम ᵛत्वम् ᵛइमाः भूम्यां वर्तमानाः ᵛविश्वाः सर्वाः ᵛओषधीः ᵛअजनयः उत्पादितवानसि । तथा ᵛत्वम् ᵛअपः तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः । तथा ᵛत्वं ᵛगाः सर्वान् पशूनुदपादयः । ᵛउरु विस्तीर्णम् ᵛअन्तरिक्षं ᵛत्वम् ᵛआ ᵛततन्थ विस्तारितवानसि । तस्मिन्नन्तरिक्षे यत् ᵛतमः अस्मद्दृष्टिनिरोधकमन्धकारं तदपि ᵛत्वं ᵛज्योतिषा आत्मीयेन प्रकाशेन ᵛवि ᵛववर्थ विवृतं विश्लिष्टं विनष्टं कृतवानसि ॥ ततन्थ । ' तनु विस्तारे ' । ववर्थ । ' वृञ् वरणे ' । उभयत्र लिटस्थलि ' बभूथा ततन्थ जगृभ्म ववर्थेति निगमे ' ( पा. सू. ७. २. ६४ ) इति निपात्यते ॥

दे॒वेन॑ नो॒ मन॑सा देव सोम रा॒यो भा॒गं स॑हसावन्न॒भि यु॑ध्य ।
मा त्वा त॑न॒दीशि॑षे वी॒र्य॑स्यो॒भये॑भ्यः॒ प्र चि॑कित्सा॒ गवि॑ष्टौ ॥ २३ ॥

दे॒वेन॑ । नः॒ । मन॑सा । दे॒व॒ । सो॒म॒ । रा॒यः । भा॒गम् । स॒ह॒सा॒ऽव॒न् । अ॒भि । यु॒ध्य॒ ।
मा । त्वा॒ । आ । त॒न॒त् । ईशि॑षे । वी॒र्य॑स्य । उ॒भये॑भ्यः । प्र । चि॒कि॒त्स॒ । गोऽइ॑ष्टौ ॥२३॥

हे ᵛदेव द्योतमान ᵛसहसावन् बलवन् ᵛसोम ᵛदेवेन ᵛमनसा द्योतमानया त्वदीयया बुद्ध्या ᵛरायो ᵛभागं धनस्यांशं ᵛनः अस्मानभिलक्ष्य ᵛयुध्य प्रेरय । यद्वा । नोऽस्माकं रायो धनस्य भागं भक्तारमपहर्तारं शत्रुम् अभि युध्य आभिमुख्येन सम्यक् प्रहर । ᵛत्वा तादृशं त्वां कश्चिदपि शत्रुः ᵛमा ᵛआ ᵛतनत् क्लेशेन आततं ᵛमा कार्षीत् । मा हिंसीदित्यर्थः । ᵛउभयेभ्यः उभयेषां युध्यमानानां संबन्धिनः ᵛवीर्यस्य बलस्य त्वम् ᵛईशिषे ईश्वरो भवसि । स त्वं ᵛगविष्टौ संग्रामे ᵛप्र ᵛचिकित्स अस्मदीयमुपद्रवं परिहर ॥ रायः । ' ऊडिदम्° ' इति विभक्तेरुदात्तत्वम् । भागम् । भजतेः कर्मणि घञ् ; ' कृत्यल्युटो बहुलम् ' इति बहुलवचनात् कर्तरि वा । ' कर्षात्वतः ' इत्यन्तोदात्तत्वम् । सहसावन् । सहःशब्दात् मतुपि छान्दस आकारोपजनः । युध्य । ' युध संप्रहारे ' । व्यत्ययेन परस्मैपदम् । तनत् । ' तनु विस्तारे ' । व्यत्ययेन शप् । ' न माङ्योगे ' इति अडभावः । ईशिषे । ' ईशः से '

( पा. सू. ७. २. ७७ ) इति इडागमः । चिकित्स । 'कित ज्ञाने' । 'गुप्तिज्किद्भ्यः सन्' ( पा. सू. ३. १. ५ ) । गविष्टौ । गवां बाणानामिष्टयः एषणानि गमनानि येष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥२३॥

'एता उ त्याः' इति अष्टादशर्चमष्टमं सूक्तं गोतमस्यार्षम्। आदितश्चतस्रो जगत्यः । त्रयोदश्याद्याः षड्च उष्णिहः । शिष्टा अष्टौ त्रिष्टुभः । उषा देवता । 'अश्विना वर्तिः' इति अन्त्यस्तृचोऽश्विदेवताकः । तथा चानुक्रान्तम्–'एता उ त्या व्यूनोषस्यं चतुर्जगत्यादि षळुष्णिगन्तं तृचोऽन्त्य आश्विनः' इति । सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके उषस्ये क्रतौ जागते छन्दस्याश्विनशस्त्रे च 'एता उ त्याः' इति चतस्रो विनियुक्ताः । सूत्रितं च–'एता उ त्या इति चतस्रो जागतम्' ( आश्व. श्रौ. ४. १४ ) इति ॥

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १ ॥

एताः । ऊँ इति । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्धे । रजसः । भानुम् । अञ्जते ।
निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ॥१॥

ᵛउ इत्येतत् पादपूरणम्[1] । ᵛत्याः ताः ᵛएताः ᵛउषसः प्रभातकालाभिमानिन्यो देवताः । ᵛकेतुम् अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् ᵛअक्रत अकृषत कृतवत्यः । यस्मादेवं तस्मात् उषसः ᵛरजसः अन्तरिक्षलोकस्य ᵛपूर्वे ᵛअर्धे प्राचीनदिग्भागे ᵛभानुं प्रकाशम् ᵛअञ्जते व्यक्तीकुर्वन्ति । ᵛधृष्णवः धर्षणशीला योद्धारः ᵛआयुधानीव यथा असिप्रभृतीन्यायुधानि संस्कुर्वन्ति एवं ᵛनिष्कृण्वानाः स्वभासा जगत्संस्कुर्वाणाः ᵛगावः गमनस्वभावाः ᵛअरुषीः आरोचमानाः ᵛमातरः सूर्यप्रकाशस्य निर्मात्र्यो जगज्जनन्यो वा उषसः ᵛप्रति ᵛयन्ति प्रतिदिवसं गच्छन्ति । एवंविधा उषसोऽस्मान् रक्षन्त्वित्यर्थः । अत्र निरुक्तम्–'एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने । एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति। प्रति यन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः' ( निरु. १२. ७ ) इति ॥ अक्रत । करोतेर्लुङि 'मन्त्रे घस°' इति च्लेः लुक् । निष्कृण्वानाः । 'कृवि हिंसाकरणयोश्च' । अस्मात् ताच्छीलिकः चानश् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ २ ॥

उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत ।
अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशन्तम् । भानुम् । अरुषीः । अशिश्रयुः ॥२॥

---

१. क्ष-ट-न-स–पदपूरणम् ; ट–पादपूरणे ।

ᵛअरुणाः आरोचमानाः ᵛभानवः औषस्यो दीप्तयः ᵛवृथा अनायासेन स्वयमेव ᵛउदपप्तन् उदगमन्। तदनन्तरम् ᵛउषसः च ᵛस्वायुजः सुखेन रथे आयोक्तुं शक्याः ᵛअरुषीः शुभ्रवर्णाः ᵛगाः पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहनभूताश्चतुष्पदीर्गा एव वा ᵛअयुक्षत स्वरथेऽयोजयन्। उक्तं च– 'अरुण्यो गाव उषसाम्' ( नि. १. १५. ७ ) इति। एवं गोभिर्युक्तं रथमारुह्य उषसः ᵛपूर्वथा पूर्वेष्वतीतेष्वहःस्विव ᵛवयुनानि सर्वेषां प्राणिनां ज्ञानानि ᵛअक्रन् अकार्षुः। उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति। तदनन्तरम् ᵛअरुषीः आरोचमानास्ताः उषसः ᵛरुशन्तम्। 'रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः' ( निरु. २. २० ) इति यास्कः। शुभ्रवर्णं ᵛभानुं सूर्यम् ᵛअशिश्रयुः असेवन्त। तेन सह एकीभवन्तीत्यर्थः॥ अपप्तन्। 'पत्लृ गतौ'। लुङि लृदित्त्वात् च्लेः अङादेशः। 'पतः पुम्' ( पा. सू. ७. ४. १९ ) इति धातोः पुमागमः। अक्रन्। 'मन्त्रे घस°' इत्यादिना च्लेः लुक्। पूर्वथा। 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' ( पा. सू. ५. ३. १११ ) इति इवार्थे थाल्प्रत्ययः। अशिश्रयुः। 'श्रिञ् सेवायाम्'। 'बहुलं छन्दसि' इति शपः श्लुः। 'सिजभ्यस्तविदिभ्यश्च' इति झेः जुस्। 'जुसि च' ( पा. सू. ७. ३. ८३ ) इति गुणः॥

अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः।
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते॥ ३॥

अर्चन्ति। नारीः। अपसः। न। विष्टिऽभिः। समानेन। योजनेन। आ। पराऽवतः।
इषम्। वहन्तीः। सुऽकृते। सुऽदानवे। विश्वा। इत्। अह। यजमानाय। सुन्वते॥ ३॥

ᵛनारीः नेत्र्यः उषसः ᵛविष्टिभिः निवेशकैः स्वकीयैस्तेजोभिः ᵛसमानेन ᵛयोजनेन[1] एकेनैव योजनेनोद्योगेन[2] ᵛआ ᵛपरावतः आ दूरदेशात् आ पश्चिमदिग्भागात् ᵛअर्चन्ति नभःप्रदेशं पूजयन्ति। कृत्स्नं जगद्युगपदेव व्याप्नुवन्तीत्यर्थः। तत्र दृष्टान्तः। ᵛअपसो ᵛन। युद्धकर्मणोपेताः[3] पुरुषा यथा स्वकीयैरा-युधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत्। किं कुर्वत्यः। ᵛसुकृते शोभनस्य कर्मणः कर्त्रे ᵛसुन्वते सोमाभिषवं कुर्वते ᵛसुदानवे कल्याणीर्दक्षिणाः ऋत्विग्भ्यो ददते ᵛयजमानाय ᵛविश्वेदह सर्वमेव ᵛइषम् अन्नं ᵛवहन्तीः आवहन्त्यः प्रयच्छन्त्य इत्यर्थः॥ नारीः। 'नॄ नये'। 'ऋदोरप्'। 'नृनरयो-र्वृद्धिश्च' ( पा. सू.४. १. ७३. ग. ) इति शार्ङ्गरवादिषु पाठात् ङीन्। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। अपसः। अपस्शब्दात् 'अर्शआदिभ्योऽच्' इति अच्। 'सुपां सुलुक्°' इति जसः सुः। व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम्। विष्टिभिः। 'विश प्रवेशने'। विशन्ति प्रविशन्तीति विष्टयः किरणाः। 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्। विश्वा। 'सुपां सुलुक्°' इति अमः डादेशः॥

अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम्।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः॥ ४॥

अधि। पेशांसि। वपते। नृतूःऽइव। अप। ऊर्णुते। वक्षः। उस्राऽइव। बर्जहम्।
ज्योतिः। विश्वस्मै। भुवनाय। कृण्वती। गावः। न। व्रजम्। वि। उषाः। आवरित्यावः। तमः॥ ४॥

१. न–'योजनेन' नास्ति। २. क्ष-ट-ढ–उद्योगेन। ३. क्ष-ट-ढ–युद्धकर्मोपेताः।

उषाः पेशांसि जगत्स्वाश्लिष्टानि कृष्णवर्णानि तमांसि अधि आधिक्येन वपते छिनत्ति । तत्र दृष्टान्तः । नृतूरिव । नॄन् तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः । स यथा केशानिःशेषेण छिनत्ति एवमुषा अप्यन्धकारं समूलं हिनस्तीत्यर्थः । यद्वा नृतूरिव नृत्यन्ती योषिदिव । पेशांसि । रूपनामैतत् । सर्वैर्दर्शनीयानि रूपाण्युषा अधि वपते स्वात्मन्यधिकं धारयति । एवं प्रथमतोऽन्धकारं स्वकिरणैर्निरस्य वक्षः स्वकीयमुरःप्रदेशम्[1] अपोर्णुते तमसानाच्छादितं करोति । स्वयमाविर्भवतीत्यर्थः । बर्जहं[2] पयस उत्पत्तिस्थानं दोहनसमये उस्रा[3] गौर्यथा[3] आविष्करोति तद्वत् । किं कुर्वती । गावो न व्रजं यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति[4] एवं स्वयमेव प्राचीं दिशं प्राप्य विश्वस्मै भुवनाय सर्वस्मै लोकाय ज्योतिः कृण्वती प्रकाशं कुर्वती । एवमुक्तेन प्रकारेणोषाः तमः अन्धकारं वि आवः विवृतमपश्लिष्टमकरोत् ॥ नृतूरिव । तुर्वी हिंसार्थः । 'क्विप् च' इति क्विप् । 'राल्लोपः' इति वलोपः । 'र्वोरुपधायाः॰' इति दीर्घत्वम् । यद्वा । 'नृती गात्रविनामे' । 'नृतिशृध्योः कूः' (उ. सू. १.९१) इति कूप्रत्ययः । बर्जहम् । 'वृङ् संभक्तौ' । वृणीते संभजते गामिति बः पयः । विच् । तज्जहातीति बर्जहः । 'ओहाक् त्यागे' । 'खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम्' (पा. सू. ३. २. २८. १) इति अगर्धशब्दोपपदादपि 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् खश् । तस्य सार्वधातुकत्वेन कर्तरि शपि जुहोत्यादित्वात् श्लुः । द्विर्वचनादि । बवयोरभेद इति बत्वम् । दिवोदासादित्वात् पूर्वपदाद्युदात्तत्वम् । आवः । 'वृञ् वरणे' । लुङि 'मन्त्रे घस॰' इति च्लेः लुक् । गुणे 'हल्ङ्याब्भ्यः' इति लोपः[5] । 'छन्दस्यपि दृश्यते' (पा. सू. ६. ४. ७३) इति आडागमः ॥

प्रातरनुवाकस्योपस्ये क्रतौ 'प्रत्यर्चिः' इति अष्टावनुवक्तव्याः आश्विनशस्त्रे च । तथा च सूत्रितम्—'प्रत्यर्चिरित्यष्टौ व्युषा आ वो दिविजा इति पळिति त्रैष्टुभम्' (आश्व. श्रौ. ४. १४) इति ॥

प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।
स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥ ५ ॥

प्रति । अर्चिः । रुशत् । अस्याः । अदर्शि । वि । तिष्ठते । बाधते । कृष्णम् । अभ्वम् ।
स्वरुम् । न । पेशः । विदथेषु । अञ्जन् । चित्रम् । दिवः । दुहिता । भानुम् । अश्रेत् ॥ ५ ॥

अस्याः उषसः रुशत् दीप्यमानम् अर्चिः तेजः प्रति अदर्शि सर्वैः पूर्वस्यां दिशि प्रथमतो दृश्यते[6] । वि तिष्ठते सर्वासु दिक्षु विविधमवतिष्ठते व्याप्नोतीत्यर्थः । सर्वा दिशो व्याप्य च अभ्वम् । महन्नामैतत् । अतिशयेन विपुलं कृष्णं कृष्णवर्णमन्धकारं बाधते अपसारयति । विदथेषु यज्ञेषु स्वरुं न स्वरुनाम्ना शकलेन युक्तं यूपं यथा आज्येन आध्वर्यवः अञ्जन् अञ्जन्ति तद्वन्नभसि स्वकीयं पेशः रूपम् उषा अनक्ति संश्लिष्टं करोति । तदनन्तरं चित्रं चायनीयं भानुं सूर्यं दिवो दुहिता द्युलोकादुत्पन्नोषाः अश्रेत् असेवत ॥ वि तिष्ठते । 'समवप्रविभ्यः॰[7]' इत्यात्मनेपदम् । अश्रेत् । 'श्रिञ् सेवायाम्' । लङि 'बहुलं छन्दसि' इति शपो लुक् ॥ ॥ २४ ॥

---

१. क्ष–स्वावयवमुरःप्रदेशम् । २. क्ष-स–उस्रेव । यथा गौः बर्जहम् । ३. क्ष–'उस्रा गौर्यथा' नास्ति; स–यथा । ४. क्ष–प्राप्नुवान्ति । ५. क्ष-न–तिलोपः । ६. क्ष-दृश्यते । ततः । ७. क्ष–समवप्रविभ्यः स्थः ।

अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति ।
श्रिये छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ ६ ॥

अतारिष्म । तमसः । पारम् । अस्य । उषाः । उच्छन्ती । वयुना । कृणोति ।
श्रिये । छन्दः । न । स्मयते । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति ॥६॥

ᵛअस्य नैशस्य ᵛतमसः अन्धकारस्य ᵛपारं समाप्तिप्रदेशम् ᵛअतारिष्म उत्तीर्णा अभूम । अनन्तरम् ᵛउच्छन्ती नैशं तमो वर्जयन्ती ᵛउषाः ᵛवयुना वयुनानि सर्वेषां प्राणिनां ज्ञानानि ᵛकृणोति निर्मिमीते । ᵛश्रिये संपदर्थं ᵛछन्दो ᵛन ᵛस्मयते । यथोपच्छन्दयिता वशीकरणे समर्थः पुरुषः आढ्यसमीपं प्राप्य तच्छ्रीस्यर्थं स्मयते हसति एवं ᵛविभाती विशिष्टप्रकाशं कुर्वत्युषाः स्वकीयया निर्मलदीप्त्या हसन्तीव दृश्यते । एवं ᵛसुप्रतीका विशिष्टप्रकाशरूपत्वेन शोभनाङ्गी[1] सती ᵛसौमनसाय सर्वेषां सौमनस्याय ᵛअजीगः अन्धकारं भक्षितवती ॥ अतारिष्म । ' तॄ प्लवनतरणयोः ' । लुङि सिचि वृद्धिः । तमसः । ' षष्ठ्याः पतिपुत्र॰' इति विसर्जनीयस्य संहितायां सत्वम् । स्मयते । ' स्मिङ् ईषद्धसने' । भौवादिकः । अजीगः । ' गॄ निगरणे ' । लङि ' बहुलं छन्दसि ' इति शपः श्लुः । ' बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् । तुजादित्वात् दीर्घः ॥

भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः ।
प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥ ७ ॥

भास्वती । नेत्री । सूनृतानाम् । दिवः । स्तवे । दुहिता । गोतमेभिः ।
प्रजाऽवतः । नृऽवतः । अश्वऽबुध्यान् । उषः । गोऽअग्रान् । उप । मासि । वाजान् ॥७॥

ᵛभास्वती तेजस्विनी । सूनृता इति वाङ्नाम । ᵛसूनृतानां प्रियसत्यात्मिकानां ᵛनेत्री[2] प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापाराय इतस्ततः शब्दं कुर्वन्ति । एवंभूता ᵛदिवः ᵛदुहिता द्युलोकसकाशादुत्पन्ना उषाः ᵛगोतमेभिः ऋषिभिरस्माभिः ᵛस्तवे स्तूयते । हे ᵛउषः अस्माभिः स्तुता त्वं ᵛवाजान् अन्नानि ᵛउप ᵛमासि प्रयच्छ । कीदृशान् वाजान् । ᵛप्रजावतः प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् ᵛनृवतः दासलक्षणैर्नृभिरुपेतान् ᵛअश्वबुध्यान् । अश्वाः बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान् । यद्वा अश्वबुध्नान्[3] । वर्णव्यापत्त्या यकारः[4] । अश्वमूलान् । अश्वैर्हि राजानो धनान्यन्नानि च लभन्ते । अतोऽन्नानां तन्मूलत्वम् । ᵛगोअग्रान् । गावोऽग्रे प्रमुखे येषां तादृशान् ॥ भास्वती । ' भा दीप्तौ ' । असुन् । ततो मतुप् । ' मादुपधायाः॰ ' इति मतुपो[5] वत्वम्[5] । ' उगितश्च ' इति ङीप् । नेत्री । ' ऋन्नेभ्यो ङीप् ' । ' उदात्तयणो हल्पूर्वात् ' इति ङीप उदात्तत्वम् । स्तवे । ' ष्टुञ् स्तुतौ ' । कर्मणि लटि ' बहुलं छन्दसि ' इति बहुलग्रहणात् यकोऽपि लुक् । ' लोपस्त आत्मने-

१. च-छ-ण-त-ध-न-फ-ल-श-स—शोभमाना । २. क्ष-ट-ढ—शब्दानां नेत्री । ३. क्ष-त-स—अश्वबुध्नान् । ४. ल—नकारस्थाने यकारः । ५. क्ष-ट-ढ—मतोर्वत्वम् ।

पदेषु ' इति तलोपः । ' छन्दस्युभयथा ' इति एकारस्य आर्धधातुकत्वेन ङित्त्वाभावात् गुणावादेशौ । नृवतः । व्यत्ययेन मतोर्वत्वम् । ' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वम् । मासि । ' मा[1] माने ' । आदादिकः[2] ॥

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।

सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ॥ ८ ॥

उषः । तम् । अश्याम् । यशसम् । सुऽवीरम् । दासऽप्रवर्गम् । रयिम् । अश्वऽबुध्यम् ।

सुऽदंससा । श्रवसा । या । विऽभासि । वाजऽप्रसूता । सुऽभगे । बृहन्तम् ॥ ८ ॥

हे ᵛउषः उषोदेवते ᵛतं ᵛरयिं धनम् ᵛअश्यां प्राप्नुयाम् । कीदृशम् । ᵛयशसं यशसा कीर्त्या युक्तम् । सर्वैः प्रशस्यमित्यर्थः । ᵛसुवीरं शोभनैर्वीरैः पुत्रादिभिर्युक्तं ᵛदासप्रवर्गम् । प्रकृष्टो वर्गः संघः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तम् । अनेकैर्भृत्यैरुपेतमित्यर्थः । ᵛअश्वबुध्यम् । अश्वा बुध्या बोद्धव्या येन धनेन तादृशम् । हे ᵛसुभगे शोभनधने उषः ᵛसुदंससा शोभनेन कर्मणा युक्तेन ᵛश्रवसा श्रवणीयेन स्तोत्रेण प्रीता त्वं ᵛवाजप्रसूता अस्मभ्यं दत्तान्ना सती ᵛबृहन्तं प्रौढं ᵛया यं[3] रयिं ᵛविभासि विशेषेण प्रकाशयसि तमश्यामिति पूर्वेण संबन्धः ॥ अश्याम् । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । यशसम् । अर्शआदित्वात् मत्वर्थीयोऽच् । व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम् । दासप्रवर्गम् । दासयत्युपक्षपयति शत्रूनिति दासो भृत्यः । 'दसु उपक्षये' । अस्मात् ण्यन्तात् पचाद्यच् । चित्त्वादन्तोदात्तत्वम् । तदेव बहुव्रीहिस्वरेण शिष्यते । सुदंससा । ' सोर्मनसी अलोमोषसी ' इति बहुव्रीहावुत्तरपदाद्युदात्तत्वम् । या । ' सुपां सुलुक्° ' इति अमः डादेशः ॥

विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।

विश्वं जीवं चरसे बोधयन्ती विश्वस्य वाचमविदन्मनायोः ॥ ९ ॥

विश्वानि । देवी । भुवना । अभिऽचक्ष्य । प्रतीची । चक्षुः । उर्विया । वि । भाति ।

विश्वम् । जीवम् । चरसे । बोधयन्ती । विश्वस्य । वाचम् । अविदत् । मनायोः ॥ ९ ॥

ᵛदेवी द्योतमानोषाः ᵛविश्वानि सर्वाणि ᵛभुवना भुवनानि भूतजातानि ᵛअभिचक्ष्य अभिप्रकाश्य प्रकाशवन्ति कृत्वा अनन्तरं ᵛप्रतीची प्रत्यङ्मुखी सती ᵛचक्षुः प्रकाशकेन तेजसा ᵛउर्विया उर्वी विस्तीर्णा सती ᵛवि ᵛभाति प्रकाशते । अपि च ᵛविश्वं ᵛजीवं सर्वं प्राणिजातं ᵛचरसे चरणाय स्वस्व-

---

१. क्ष-स–माङ् । २. क्ष-स–अदादिकः । ३. क्ष-त-स–याम् ।

व्यापारेषु प्रवर्तनाय ^V^बोधयन्ती निद्रातः सकाशात् उद्बोधयन्त्युषाः ^V^विश्वस्य सर्वस्य ^V^मनायोः मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य या वागस्ति तां ^V^वाचमविदत् अलभत । अत एवोषसः सूनृतावतीति संज्ञोपपन्ना भवति ॥ अभिचक्ष्य । 'चक्षिङ् व्यक्तायां वाचि'। अयं प्रकाशनार्थोऽपि। 'समासेऽनञ्पूर्वे०' ( पा. सू. ७. १. ३७ ) इति क्त्वाप्रत्ययस्य ल्यबादेशः । प्रतीची । प्रतिपूर्वात् अञ्चतेः 'ऋत्विक्०' इत्यादिना क्विन् । 'अनिदिताम्०' इति नलोपः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । उर्विया । उर्वीशब्दादुत्तरस्य सोः 'इयाडियाजीकाराणां चोपसंख्यानम्' ( पा. सू. ७. १. ३९. १ ) इति डियाजादेशः[1] । आदेशसामर्थ्यात् तस्य लोपो न भवति । मनायोः । मन आत्मन इच्छति मनस्यति । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उः । वर्णव्यापत्त्या सकारे आकारः । यद्वा । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् सकारलोपश्च । 'अकृत्सार्वधातुकयोः०' इति दीर्घः ॥

पुनःपुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना ।

श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥ १० ॥

पुनःऽपुनः । जायमाना । पुराणी । समानम् । वर्णम् । अभि । शुम्भमाना ।

श्वघ्नीऽइव । कृत्नुः । विजः । आऽमिनाना । मर्तस्य । देवी । जरयन्ती । आयुः ॥ १० ॥

^V^पुनःपुनर्जायमाना प्रतिदिवसं सूर्योदयात्पूर्वं प्रादुर्भवन्ती ^V^पुराणी चिरंतनी नित्येत्यर्थः । यस्मात् ^V^समानं ^V^वर्णम् एकमेव रूपम् ^V^अभि प्राप्य ^V^शुम्भमाना शोभमाना । विभिन्नेष्वपि दिवसेष्वस्या ऐकरूप्येण[2] अवस्थानान्नित्यत्वमित्यर्थः । एवंगुणविशिष्टा ^V^देवी देवनशीलोषाः ^V^मर्तस्य मरणधर्मणः सर्वस्य प्राणिजातस्य ^V^आयुः जीवनं ^V^जरयन्ती ऊनयन्ती वर्तते । बह्वीषूषःसु अतीतासु हि सर्वेषामायुर्हीयते । उषाश्च पुनःपुनर्जायमानेत्युक्तं अतः सैवायुर्जरयति । तत्र दृष्टान्तः । ^V^कृत्नुः कर्तनशीला ^V^श्वघ्नीव व्याधस्त्रीव । सा यथा ^V^विजः चलतः पक्षिणः ^V^आमिनाना पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत् ॥ पुराणी । पुरा इत्यस्मात् अव्ययात् 'सायंचिरंप्राह्णे०' ( पा. सू. ४. ३. २३ ) इत्यादिना भवार्थे ट्युप्रत्ययः । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ( पा. सू. ४. ३. १०५ ) इति निपातनात् तुडभावः । योरनादेशः । टित्त्वात् ङीप् । व्यत्ययेन अन्तोदात्तत्वम् । शुम्भमाना । 'शुम्भ[3] दीप्तौ' । शपः पित्त्वादनुदात्तत्वम् । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । श्वघ्नी । शुना मृगान् हतवान् श्वहा । 'बहुलं छन्दसि' (पा. सू. ३. २. ८८) इति वचनात् ब्रह्मादिव्यतिरिक्तेऽप्युपपदे हन्तेः क्विप् । 'ऋन्नेभ्यो ङीप्' इति ङीप् । 'अल्लोपोऽनः' इति अकारलोपः । 'हो हन्तेः०' इति घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । कृत्नुः । 'कृती छेदने' । औणादिकः क्नुप्रत्ययः । विजः । 'ओविजी भयचलनयोः' । विजन्ति चलन्तीति विजः पक्षिणः । आमिनाना । 'मीञ्[4] हिंसायाम्' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । शानचश्चित्त्वादन्तोदात्तत्वम् ॥ ॥ २५ ॥

---

१. क्ष-ट-ढ–इयाजादेशः । २. च-छ-ण न-फ-श-स–एकरूपेण । ३. क्ष-स–शुभ शुम्भ । ४. क्ष-न-स–मीङ् ।

व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति ।
प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥ ११ ॥

विऽऊर्ण्वती । दिवः । अन्तान् । अबोधि । अप । स्वसारम् । सनुतः । युयोति ।
प्रऽमिनती । मनुष्या । युगानि । योषा । जारस्य । चक्षसा । वि । भाति ॥ ११ ॥

ᵛदिवः नभसः ᵛअन्तान् प्रान्तान् ᵛव्यूर्ण्वती विवृतांस्तमसा वियुक्तान् कुर्वत्युषाः ᵛअबोधि सर्वैः प्राणिभिरज्ञायि ज्ञाताभूत्। तदनन्तरं ᵛस्वसारम् उषसः प्रादुर्भावे सति स्वयमेव सरन्तीं निशां ᵛसनुतः। अन्तर्हितनामैतत्। अन्तर्हितप्रदेशे ᵛअप ᵛयुयोति अपगमय्य पृथक्करोति। ᵛमनुष्या मनुष्याणां संबन्धीनि ᵛयुगानि कृतत्रेतादीनि ᵛप्रमिनती स्वगमनागमनाभ्यां प्रकर्षेण हिंसन्ती ᵛजारस्य रात्रेर्जरयितुः सूर्यस्य ᵛयोषा जायोषाः ᵛचक्षसा आत्मीयेन प्रकाशेन ᵛवि ᵛभाति विशेषेण प्रकाशते ॥ व्यूर्ण्वती। 'ऊर्णुञ् आच्छादने'। विपूर्वात् अस्मात् लटः शतृ। 'उगितश्च' इति ङीप्। 'शतुरनुमः०' इति नद्या उदात्तत्वम्। सनुतः। एतदन्तोदात्तं स्वरादिषु निपातितम्। अतोऽव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सप्तम्या लुक्। युयोति। 'यु मिश्रणामिश्रणयोः'। 'बहुलं छन्दसि' इति शपः श्लुः। मनुष्या। 'सुपां सुलुक्०' इति षष्ठ्या डादेशः। युगानि। युजेः करणे कर्मणि वा घञ्। 'चजोः कु घिण्यतोः' इति कुत्वम्। उञ्छादिषु कालविशेषे रथाद्युपकरणे च युगशब्दपाठात् लघूपधगुणाभावः (पा. सू. ६. १. १६०. ग.)। 'उञ्छादीनां च' इत्यन्तोदात्तत्वम्। जारस्य। 'दारजारौ कर्तरि णिलुक्च' (पा. सू. ३. ३. २०. ४) इति घञन्तो निपात्यते ॥

पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।
अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ १२ ॥

पशून्। न। चित्रा। सुऽभगा। प्रथाना। सिन्धुः। न। क्षोदः। उर्विया। वि। अश्वैत्।
अमिनती। दैव्यानि। व्रतानि। सूर्यस्य। चेति। रश्मिऽभिः। दृशाना ॥ १२ ॥

ᵛसुभगा शोभनधना ᵛचित्रा चायनीया पूजनीयोषाः ᵛपशून्न यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा ᵛप्रथाना तेजांसि विस्तारयन्ती ᵛउर्विया उर्वी महती एवंभूता सा ᵛव्यश्वैत् सव जगत् व्याप्नोत्। तत्र दृष्टान्तः। ᵛसिन्धुर्न ᵛक्षोदः। यथा स्यन्दनशीलमुदकं निम्नदेशेऽचिरादेव व्याप्नोति तद्वत्। सैवोषाः[1] ᵛसूर्यस्य ᵛरश्मिभिः किरणैः सह ᵛदृशाना दृश्यमाना सती ᵛचेति प्रज्ञाता आसीत्। किं कुर्वती। ᵛदैव्यानि देवसंबन्धीनि ᵛव्रतानि दर्शपूर्णमासादीनि कर्माणि ᵛअमिनती अहिंसती। अनुष्ठाने यजमानान् प्रवर्तयन्तीत्यर्थः। उषसः प्रादुर्भावानन्तरं हि अग्निहोत्रादीनि सर्वाणि कर्माण्यनुष्ठीयन्ते न रात्रौ। 'न सायमस्ति देवया अजुष्टम्' (ऋ. सं. ५. ७७. २) इति श्रुतेः ॥ प्रथाना। 'प्रथ प्रख्याने'।

---

१. क्ष-ट-ढ–सैषोषाः।

अस्मात् अन्तर्भावितण्यर्थात् ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपो लुक् । सिन्धुः । 'स्यन्दू प्रस्रवणे' । 'स्यन्देः संप्रसारणं धश्च' ( उ. सू. १. ११ ) इति उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । अश्वैत् । 'टुओश्वि गतिवृद्ध्योः' । लुङि अङ्‍चङोर्विकल्पितत्वात् ( पा. सू. ३. १. ५८; ४९ ) च्लेः सिच् । आगमानुशासनस्यानित्यत्वात् इडभावः । 'सिचि वृद्धिः०' ( पा. सू. ७. २. १ ) । अनिडादित्वात् 'ह्म्यन्तक्षण०' इति वृद्धिप्रतिषेधाभावः । 'बहुलं छन्दसि' ( पा. सू. ७. ३. ९७ ) इति ईडागमाभावः । 'स्कोः संयोगाद्योः०' इति सलोपः । चेति । 'चिती संज्ञाने' । कर्मणि लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । दशाना । दशेः कर्मणि लटः शानच् । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

प्रातरनुवाकस्योपस्थे क्रतावौष्णिहे छन्दसि 'उपस्तच्चित्रम्' इति तृचो विनियुक्तः आश्विनशस्त्रे च । 'अथोपस्यः' इति खण्डे सूत्रितम्–'उपस्तच्चित्रमा भरेति तिस्र औष्णिहम्' ( आश्व. श्रौ. ४. १४ ) इति ॥

उष॒स्तच्चि॒त्रमा भ॑रा॒स्मभ्यं॑ वाजिनीवति ।

येन॑ तो॒कं च॒ तन॑यं च॒ धाम॑हे ॥ १३ ॥

उषः॑ । तत् । चि॒त्रम् । आ । भ॒र । अ॒स्मभ्य॑म् । वा॒जि॒नी॒ऽव॒ति॒ ।

येन॑ । तो॒कम् । च॒ । तन॑यम् । च॒ । धाम॑हे ॥ १३ ॥

हे वाजिनीवति। वाजो हविर्लक्षणमन्नम् । तद्युक्ता क्रिया वाजिनी । तया क्रियया युक्ते उषः उषोदेवते अस्मभ्यं चित्रं चायनीयं तत् धनम् आ भर आहर प्रयच्छ । येन धनेन तोकं पुत्रं तनयं तत्पुत्रं च धामहे दध्महे धारयामः । अत्र निरुक्तम्–'उषस्तच्चित्रं चायनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि' ( निरु. १२. ६ ) इति ॥ धामहे। दधातेर्लेटि 'बहुलं छन्दसि' इति शपो लुक् । व्यत्ययेन आद्युदात्तत्वम् । यद्वा । लोटि 'आडुत्तमस्य पिच्च' इति आडागमः प्रत्ययस्य पिद्वद्भावश्च । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अस्मिन् पक्षे 'एत ऐ' ( पा. सू. ३. ४. ९३ ) इति ऐत्वाभावो व्यत्ययेन द्रष्टव्यः । यद्वृत्तयोगादनिघातः[1] ॥

उषो॑ अ॒द्येह गो॑म॒त्यश्वा॑वति विभावरि । रे॒वद॒स्मे व्यु॑च्छ सूनृतावति ॥ १४ ॥

उषः॑ । अ॒द्य । इ॒ह । गो॒ऽम॒ति॒ । अश्व॑ऽवति । वि॒भा॒ऽव॒रि॒ ।

रे॒वत् । अ॒स्मे इति॑ । वि । उ॒च्छ॒ । सू॒नृ॒ता॒ऽव॒ति॒ ॥ १४ ॥

हे गोमति अस्मभ्यं दातव्यैर्गोभिर्युक्ते तथा अश्वावति अश्वैर्युक्ते विभावरि विशिष्टप्रकाशोपेते सूनृतावति । प्रियसत्यात्मिका वाक् सूनृता । तादृश्या वाचा युक्ते एवंभूते हे उषः उषोदेवते अद्य

१. क्ष–यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ।

इदानीं प्रभातसमये ᵛइह अस्मिन् देशे ᵛअस्मे अस्माकं ᵛरेवत् धनयुक्तं कर्म यथा भवति तथा ᵛव्युच्छ नैशं तमो निवारय ॥ अश्वावति। ' मन्त्रे सोमाश्वेन्द्रिय० ' इति मतौ दीर्घत्वम्। पादादित्वात् आमन्त्रितस्य आष्टमिकनिघाताभावः। रेवत्। ' रयेर्मतौ बहुलम् ' ( पा. सू. ६. १. ३७. ६ ) इति संप्रसारणम्। ' छन्दसीरः ' इति मतुपो वत्वम्। ' रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् ' ( का. ६. १. १७६. १ ) इति मतुप उदात्तत्वम्। उच्छ। ' उछी विवासे '। विवासो वर्जनम् ॥

युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः।
अथा नो विश्वा सौभगान्या वह ॥ १५ ॥

युक्ष्व। हि। वाजिनीऽवति। अश्वान्। अद्य। अरुणान्। उषः।
अथ। नः। विश्वा। सौभगानि। आ। वह ॥ १५ ॥

हे ᵛवाजिनीवति हविर्लक्षणान्नवति ᵛउषः उषोदेवते ᵛअरुणान् अरुणवर्णान् ᵛअश्वान् अश्वस्थानीयान् गोविशेषान् ᵛअद्य अस्मिन् काले ᵛयुक्ष्वा ᵛहि योजयैव। हिः अवधारणे। ᵛअथ अनन्तरं रथमारुह्य ᵛविश्वा ᵛसौभगानि सर्वाणि सौभाग्यानि ᵛनः अस्मभ्यम् ᵛआ ᵛवह आनय ॥ अश्वान्। ' दीर्घादटि समानपादे ' इति संहितायां नकारस्य रुत्वम्। ' आतोऽटि नित्यम् ' इति सानुनासिक आकारः। सौभगानि। ' सुभगान्मन्त्रे ' इति उद्गात्रादिषु पाठात् भावकर्मणोरर्थयोः ' प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ' इति अञ्प्रत्ययः। ' हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ' इति उभयपदवृद्धौ प्राप्तायां सर्वविधीनां छन्दसि विकल्पितत्वादत्रोत्तरपदवृद्धिर्न भवति ( का. ७. ३. १९ ) इत्युक्तम् ॥
॥ २६ ॥

प्रातरनुवाकस्याश्विने क्रतावौष्णिहे छन्दसि ' अश्विना वर्तिः ' इत्ययं तृचः आश्विनशस्त्रे च। तथा च सूत्रितम्– ' अश्विना वर्तिरस्मदाश्विनावेह गच्छतमिति तृचौ ' ( आश्व. श्रौ. ४. १५ ) इति ॥

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत्।
अर्वाग्रथं समनसा नि यच्छतम् ॥ १६ ॥

अश्विना। वर्तिः। अस्मत्। आ। गोऽमत्। दस्रा। हिरण्यऽवत्।
अर्वाक्। रथम्। सऽमनसा। नि। यच्छतम् ॥ १६ ॥

उषःसाहचर्यात्[1] बुद्धिस्थौ अश्विनौ इदमादिकेन तृचेन स्तूयेते। हे ᵛअश्विना अश्ववन्तौ व्यापनशीलौ वा देवौ ᵛदस्रा शत्रूणामुपक्षपयितारौ ᵛअस्मत् अस्माकं ᵛवर्तिः वर्तनहेतुभूतं गृहम् ᵛआ समन्तात्

१. क्ष-ट-ढ–उषसा साहचर्यात्।

गोमत् बहुभिर्गोभिर्युक्तं हिरण्यवत् हितरमणीयधनयुक्तं च यथा भवति तथा समनसा समानमनस्कौ सन्तौ युवां युष्मदीयं रथम् अर्वाक् अर्वाचीनम् अस्मदीयगृहमभिमुखं[1] नि यच्छतम् आवर्तयतम् ॥ अश्विना । ' सुपां सुलुक्° ' इति आकारः । वर्तिः । वर्ततेऽस्मिन्निति वर्तिर्गृहम् । औणादिक इसिप्रत्ययः । अस्मत् । ' सुपां सुलुक्° ' इति षष्ठ्या लुक् । समनसा । समानं मनो ययोस्तौ । ' समानस्य च्छन्दसि° ' इति सभावः ॥

याविृत्था श्लोकृमा दिृवो ज्योतिृर्जना॑य चृक्रथुः॑ ।

आ नृ ऊर्जं॑ वहतमश्विना युृवम् ॥ १७ ॥

यौ । इृत्था । श्लोक॑म् । आ । दिृवः । ज्योति॑ः । जना॑य । चृक्रथुः॑ ।

आ । नृः । ऊर्ज॑म् । वृहृतम् । अृश्विृना । युृवम् ॥ १७ ॥

हे अश्विनौ यौ युवां दिवः द्युलोकात् श्लोकम् उपश्लोकनीयं प्रशंसनीयं ज्योतिः तेजः इत्था इत्थमस्माभिरनुभूयमानेन प्रकारेण चक्रथुः कृतवन्तौ । केषांचिन्मतेन सूर्याचन्द्रमसावश्विनौ उच्येते । तदुक्तं यास्केन–' तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके ' ( निरु. १२. १ ) इति । तथा च प्रकाशकत्वं तयोरुपपन्नम् । तौ युवं युवां नः अस्मभ्यम् ऊर्जं बलप्रदमन्नम् आ वहतं आनयतं प्रयच्छतम् ॥ श्लोकम् । ' श्लोकृ संघाते ' । अयं स्तुत्यर्थोऽपि । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् ॥

एह देृवा म॑योृभुवा॑ दृस्रा हिर॑ण्यवर्तनी । उृषृर्बुधो॑ वहन्तु सोम॑पीतये ॥ १८ ॥

आ । इृह । देृवा । मृयः॑ऽभुवा॑ । दृस्रा । हिर॑ण्यवर्तृनी इति॑ हिर॑ण्यऽवर्तनी ।

उृषः॑ऽबुधः॑ । वृहृन्तु । सोम॑ऽपीतये ॥ १८ ॥

उषर्बुधः उषसि प्रबुद्धा अश्वाः इह अस्मिन् यागे सोमपीतये सोमपानाय दस्रा शत्रूणामुपक्षपयितारावश्विनौ आ वहन्तु आनयन्तु । कीदृशौ । देवा देवनशीलौ दानादिगुणयुक्तौ वा मयोभुवा मयस आरोग्यप्रदस्य सुखस्य भावयितारौ[2] । ' अश्विनौ वै देवानां भिषजौ ' ( ऐ. ब्रा. १. १८ ) इति श्रुतेः । हिरण्यवर्तनी । वर्ततेऽनेनेति व्युत्पत्त्या वर्तनिशब्देन रथ उच्यते । सुवर्णमयो वर्तनिर्ययोस्तौ ॥ देवेत्यादिषु त्रिषु[3] ' सुपां सुलुक्° ' इति आकारः । सोमपीतये । ' पा पाने ' । भावे क्तिनि ' घुमास्था° ' इति ईत्वम् । सोमस्य पीतिः सोमपीतिः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ २७ ॥

' अग्नीषोमौ ' इति द्वादशर्चं नवमं सूक्तं गोतमस्यार्षम् । आदितस्तिस्रोऽनुष्टुभः । नवम्याद्यास्तिस्रो गायत्र्यः । अष्टमी जगती त्रिष्टुब्वा । शिष्टाः पञ्च त्रिष्टुभः । अग्नीषोमौ देवता । तथा चानुक्रान्तम्–

---

१. क्ष–अस्मदाभिमुखम् । २. स–भावयितारौ अश्विनौ । ३. क्ष-न-स–' त्रिषु ' नास्ति ।

'अग्नीषोमौ द्वादशाग्नीषोमीयमाद्यास्तिस्रोऽनुष्टुभ उपान्त्यास्तिस्रो[1] गायत्र्योऽष्टमी[1] जगती वा' इति । अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषामादितस्तिस्र ऋचः क्रमेणानुवाक्याः । सूत्रितं च–'अग्नीषोमाविमं सु मे युवमेतानि दिवि रोचनानीति तृचौ' ( आश्व. श्रौ. ३. ८ ) इति ॥

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।
प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १ ॥

अग्नीषोमौ । इमम् । सु । मे । शृणुतम् । वृषणा । हवम् ।
प्रति । सुऽउक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ॥ १ ॥

"वृषणा वृषणौ कामानां वर्षितारौ हे "अग्नीषोमौ "इमम् इदानीं प्रयुज्यमानं "मे मदीयं "हवम् आह्वानं "सु "शृणुतं सम्यगवगच्छतम् । "सूक्तानि शोभनानि स्तुतिलक्षणान्यस्माभिः कृतानि वचांसि "प्रति "हर्यतं प्रत्येकं कामयेथाम् । तदनन्तरं "दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय "मयः मयसः सुखस्य दातारौ "भवतम् ॥ अग्नीषोमौ । अग्निश्च सोमश्च । द्वन्द्वे 'ईदग्नेः सोमवरुणयोः' ( पा. सू. ६. ३. २७ ) इति ईत्वम् । 'अग्नेः स्तुत्स्तोमसोमाः' ( पा. सू. ८. ३. ८२ ) इति षत्वम् । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरे प्राप्ते 'आमन्त्रितस्य च' इत्याद्युदात्तत्वम् । वृषणा । 'सुपां सुलुक्°' इति आकारः । 'वा षपूर्वस्य°' इति विकल्पनादुपधाया दीर्घाभावः । हवम् । 'भावेऽनुपसर्गस्य' इति ह्वयतेः अप् संप्रसारणं च । सूक्तानि । सुपूर्वात् वक्तेः कर्मणि निष्ठा । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । हर्यतम् । 'हर्य गतिकान्त्योः' । भौवादिकः ॥

यदा पौर्णमास्यामग्नीषोमावुपांशुयाजस्य देवता तदानीम् 'अग्नीषोमा यो अद्य' इति तस्यानुवाक्या । सूत्रितं च 'उक्ता देवताः' इति खण्डे—'अग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभार' ( आश्व. श्रौ. १. ६ ) इति ॥

अग्नीषोमा यो अद्य वामिदं वचः सपर्यति ।
तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥ २ ॥

अग्नीषोमा । यः । अद्य । वाम् । इदम् । वचः । सपर्यति ।
तस्मै । धत्तम् । सुऽवीर्यम् । गवाम् । पोषम् । सुऽअश्व्यम् ॥ २ ॥

हे "अग्नीषोमौ "यः यजमानः "अद्य अस्मिन् कर्मणि "वां युवाभ्यां युष्मदर्थम् "इदं स्तुतिलक्षणं "वचः वाक्यं "सपर्यति पूजितं करोति "तस्मै यजमानाय "गवां पशूनां "पोषम् अभिवृद्धिं "धत्तं प्रयच्छतम् । कीदृशं पोषम् । "सुवीर्यं शोभनेन वीर्येण सामर्थ्येनोपेतं "स्वश्व्यं शोभनैरश्वैर्युक्तम् ॥ गवाम् । 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः ॥

---

१. क्ष–उपान्त्यस्तृचो गायत्रोऽष्टमी ।

अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् ।
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३ ॥

अग्नीषोमा । यः । आऽहुतिम् । यः । वाम् । दाशात् । हविःऽकृतिम् ।
सः । प्रऽजया । सुऽवीर्यम् । विश्वम् । आयुः । वि । अश्नवत् ॥ ३ ॥

हे अग्नीषोमौ ᵛयः यजमानः ᵛआहुतिम् आज्याहुतिं ᵛवां युवाभ्यां ᵛदाशात् दद्यात् । अथवा ᵛहविष्कृतिं हविषा चरुपुरोडाशादिना कृताम्[१] आहुतिं ᵛयः यजमानो दद्यात् । ᵛसः यजमानः ᵛप्रजया पुत्रपौत्रादिना युक्तं ᵛसुवीर्यं शोभनवीर्ययुक्तं ᵛविश्वं सर्वम् ᵛआयुः जीवनं ᵛव्यश्नवत् व्याप्नोतु ॥ आहुतिम् । जुहोतेः क्तिनि ' नाङ्ो च° ' इति गतेः प्रकृतिस्वरत्वम् । दाशात् । ' दाशृ दाने ' । लेटि आडागमः । यद्वृत्तयोगादनिघातः । हविष्कृतिम् । हविषः कृतिः करणं यस्यामाहुतौ । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ' नित्यं समासेऽनुत्तरपदस्थस्य ' इति विसर्जनीयस्य षत्वम् । अश्नवत् । अश्नोतेर्व्यत्ययेन परस्मैपदम् । लेटि अडागमः ॥

अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।
अवातिरतं बृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः ॥ ४ ॥

अग्नीषोमा । चेति । तत् । वीर्यम् । वाम् । यत् । अमुष्णीतम् । अवसम् । पणिम् । गाः ।
अव । अतिरतम् । बृसयस्य । शेषः । अविन्दतम् । ज्योतिः । एकम् । बहुऽभ्यः ॥ ४ ॥

हे अग्नीषोमौ ᵛवां युवयोः ᵛतत् वक्ष्यमाणं ᵛवीर्यं सामर्थ्यं ᵛचेति अस्माभिर्ज्ञातमभूत् । ᵛयत् येन वीर्येण ᵛगाः ᵛअवसं गोरूपमन्नं ᵛपणिं पणेः । विभक्तिव्यत्ययः । एतन्नाम्नोऽसुरात् ᵛअमुष्णीतं अपाहार्ष्टम् । तथा ᵛबृसयस्य । बृसिः[२] वेष्टनार्थः । बृसयति[३] सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा । तस्यासुरस्य ᵛशेषः अपत्यम् । ' शेष इत्यपत्यनाम शिष्यते प्रयतः ' ( निरु. ३. २ ) इति यास्कः । त्वष्टृसकाशादुत्पन्नं वृत्रम् ᵛअवातिरतम् अवधिष्टम् । अवतिरतिर्वधकर्मा । प्राणापानरूपयोर्युवयोर्वृत्रेऽनवस्थानात् स मरणं प्राप्तः । तथा चाम्नायते–' तस्माज्जञ्भ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिताम् ' ( तै. सं. २. ५. २. ४ ) इति । ततो वृत्रवधानन्तरं ᵛज्योतिः द्योतमानं सूर्यम् ᵛएकं नभसि गच्छन्तं ᵛबहुभ्यः जनेभ्यो बहूनामर्थाय ᵛअविन्दतम् अलप्साथाम् । एतत् सर्वं येन वीर्येण क्रियते तदस्माभिर्ज्ञातमित्यर्थः ॥ चेति । ' चिती संज्ञाने ' । लुङि ' चिण् भावकर्मणोः ' ( पा. सू. ३. १. ६६ ) इति च्लेः चिणादेशः । ' चिणो लुक् ' इति तशब्दस्य लुक् । अमुष्णीतम् । ' मुष स्तेये ' । क्रैयादिकः । अवसम् । अवतेरौणादिकः असच् । शेषः । ' सुपां सुलुक्° ' इति द्वितीयायाः सुः । एकम् । ' इण् गतौ ' । ' इण्भीकापाशल्यतिमर्चिभ्यः कन् ' ( उ. सू. ३. ४३ ) इति कन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

---

१. क्ष–कर्तव्याम् । २. क्ष–बृसिः । ३. क्ष-स–बृसयति ।

अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषां 'युवमेतानि' इति आद्यास्तिस्र ऋचः क्रमेण याज्याः। सूत्रं तु पूर्वमेवोदाहृतम् (आश्व. श्रौ. ३. ८)। पौर्णमास्ययागेऽग्नीषोमीयस्य पुरोडाशस्य 'युवमेतानि' इत्येषा याज्या। 'उक्ता देवताः' इति खण्डे सूत्रितं-'युवमेतानि दिवि रोचनान्यग्नीन्द्राग्नी अवसा गतम्' (आश्व. श्रौ. १. ६) इति॥

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्॥ ५॥

युवम्। एतानि। दिवि। रोचनानि। अग्निः। च। सोम। सक्रतू इति सऽक्रतू। अधत्तम्। युवम्। सिन्धून्। अभिऽशस्तेः। अवद्यात्। अग्नीषोमौ। अमुञ्चतम्। गृभीतान्॥ ५॥

हे ᵛसोम त्वम् ᵛअग्निश्च ᵛसक्रतू समानकर्माणौ सन्तौ ᵛयुवं युवां ᵛरोचनानि रोचमानानि दीप्यमानानि ᵛएतानि अस्माभिर्निशि दृश्यमानानि ताराग्रहादीनि ज्योतींषि ᵛदिवि द्युलोके ᵛअधत्तम् अधारयतम्। उत्तरार्धस्येयमाख्यायिका। इन्द्रो वृत्रं हत्वा ब्रह्महत्याया भीतः सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत् तासामपां शुद्धिरग्नीषोमाभ्यां जातेति। ब्रह्महत्यांशेन पापेन ᵛगृभीतान् गृहीतानाक्रान्तान् ᵛसिन्धून् नदीविशेषान् हे ᵛअग्नीषोमौ युवाम् ᵛअभिशस्तेः अभिशस्यमानादभितः प्रकटितात् ᵛअवद्यात् तस्मात् पापात् ᵛअमुञ्चतं मुक्तवन्तौ। यद्वा। वृत्रः इन्द्रेण हतः सन् नदीषु पपात। ततो मृतेन वृत्रशरीरेण नद्यः सर्वा दुष्टा बभूवुः। तथा च तैत्तिरीयकम्-'इन्द्रो वृत्रमहन् सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियं सदेवमासीत्तदपोदक्रामत्' (तै. ब्रा. ३. २. ५. १) इति। तेन दोषेण गृहीता नदीस्तस्माद्दोषादग्नीषोमौ मुक्तवन्तौ॥ रोचनानि। 'रुच दीप्तौ'। 'अनुदात्तेतश्च हलादेः' इति युच्। सिन्धून्। 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम्। 'अत्रानुनासिकः०' इति अनुनासिकः। गृभीतान्। 'हृग्रहोर्भः०' इति भत्वम्॥

अग्नीषोमीयस्योपांशुयाजस्य 'आन्यं दिवः' इत्येषा याज्या। 'अग्नीषोमा यो अद्य वाम्' इत्यत्र सूत्रमुदाहृतम्॥

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम्॥ ६॥

आ। अन्यम्। दिवः। मातरिश्वा। जभार। अमथ्नात्। अन्यम्। परि। श्येनः। अद्रेः। अग्नीषोमा। ब्रह्मणा। ववृधाना। उरुम्। यज्ञाय। चक्रथुः। ऊँ इति। लोकम्॥ ६॥

हे अग्नीषोमौ युवयोर्मध्ये ᵛअन्यम् एकमग्निं ᵛमातरिश्वा वायुः ᵛदिवः द्युलोकात् ᵛआ ᵛजभार भृगवे यजमानाय आजहार। तथा च मन्त्रान्तरम्-'द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा' (ऋ. सं. १. ६०. १) इति। ᵛश्येनः शंसनीयगतिमान्पक्षी पक्ष्याकारा गायत्री ᵛअन्यं सोमम् ᵛअद्रेः ᵛपरि मेरोरुपर्यवस्थितात् स्वर्गात् ᵛअमथ्नात् बलादाहृतवती। एवं महानुभावौ युवां ᵛब्रह्मणा

त्वष्टा मन्त्ररूपेण स्तोत्रेण हविर्लक्षणेनान्नेन वा ᵛववृधाना वर्धमानौ युवां ᵛयज्ञाय अन्येषां देवानां यागाय ᵛउरुं विस्तीर्णं ᵛलोकं स्थानं ᵛचक्रथुः कृतवन्तौ। ᵛउ इत्येतत् पादपूरणम्[1]। आज्यभागदेवतयोरग्नीषोमयोः उत्तरार्धदक्षिणार्धयोर्हूयते[2]। तन्मध्येऽन्यदेवत्यानि सर्वाणि हवींषि हूयन्ते। तन्मध्यमं स्थानमग्नीषोमकृतम्। तथा च तैत्तिरीयकम्–' राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै ' ( तै. सं. २. ६. २. १-२ ) इति ॥ ववृधाना। वृधेर्लिटः कानच्। छान्दसमभ्यासस्य दीर्घत्वम्। ' सुपां सुलुक्° ' इति आकारः ॥ ॥ २८ ॥

अग्नी॑षोमा ह॒विष॒: प्रस्थि॑तस्य वी॒तं हर्य॑तं वृषणा जु॒षेथा॑म् ।
सु॒शर्मा॑णा॒ स्वव॑सा॒ हि भू॒तमथा॑ धत्तं॒ यज॑मानाय॒ शं योः ॥ ७ ॥

अग्नी॑षोमा । ह॒विषः॑ । प्रऽस्थि॑तस्य । वी॒तम् । हर्य॑तम् । वृ॒ष॒णा॒ । जु॒षेथा॑म् ।
सु॒ऽशर्मा॑णा । सु॒ऽअव॑सा । हि । भू॒तम् । अथ॑ । ध॒त्तम् । यज॑मानाय । शम् । योः ॥ ७ ॥

हे अग्नीषोमौ ᵛप्रस्थितस्य होमार्थमाहवनीयसमीपं प्राप्तं[3] ᵛहविषः इदं हविः ᵛवीतं भक्षयतम्। तदनन्तरं च ᵛहर्यतं अस्मान् कामयेथाम्। हे ᵛवृषणा कामानां वर्षितारौ ᵛजुषेथाम् अस्मदीयं परिचरणं सेवेथाम्। तदनन्तरं ᵛसुशर्माणा शोभनसुखौ ᵛस्ववसा ᵛहि शोभनरक्षणौ च ᵛभूतम् अस्माकं भवतम्। ᵛअथ अनन्तरं हविर्दत्तवते ᵛयजमानाय ᵛशं शमनीयानां रोगाणां शमनं ᵛयोः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं च ᵛधत्तं विधत्तं कुरुतम्। उक्तं च यास्केन–' शमनं च रोगाणां यावनं च भयानाम् ' ( निरु. ४. २१ ) इति ॥ हविषः। ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। वीतम्। ' वी गतिप्रजनकान्त्यशनखादनेषु '। थसस्तम्। अदादित्वात् शपो लुक्। वीतं च हर्यतं चेति चार्थप्रतीतेः ' चादिलोपे विभाषा ' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। हर्यतम्। पादादित्वात् निघाताभावः। जुषेथाम्। वृषणा इत्यामन्त्रितस्य ' आमन्त्रितं पूर्वम्° ' इति अविद्यमानवत्त्वे सति तिङः परत्वात् निघाताभावः। सुशर्माणा स्ववसा। उभयत्र बहुव्रीहौ ' सोर्मनसी अलोमोषसी ' इत्युत्तरपदाद्युदात्तत्वम्। भूतम्। लोटि ' बहुलं छन्दसि ' इति शपो लुक् ॥

यो अ॒ग्नीषोमा॑ ह॒विषा॑ सप॒र्याद्दे॑व॒द्रीचा॒ मन॑सा॒ यो घृ॒तेन॑ ।
तस्य॑ व्र॒तं र॑क्षतं पा॒तमंह॑सो वि॒शे जना॑य॒ महि॒ शर्म॑ यच्छतम् ॥ ८ ॥

यः । अ॒ग्नीषोमा॑ । ह॒विषा॑ । स॒प॒र्यात् । दे॒व॒द्रीचा॑ । मन॑सा । यः । घृ॒तेन॑ ।
तस्य॑ । व्र॒तम् । र॒क्ष॒तम् । पा॒तम् । अंह॑सः । वि॒शे । जना॑य । महि॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

ᵛयः यजमानः ᵛअग्नीषोमा अग्नीषोमौ ᵛदेवद्रीचा देवानञ्चता देवतापरायणेन श्रद्धायुक्तेन ᵛमनसा अन्तःकरणेन[4] युक्तः सन् ᵛहविषा चरुपुरोडाशादिना ᵛसपर्यात् सपर्यति परिचरति। ᵛयः च यजमानः

---

१. क्ष-न-स–पदपूरणम्। २. क्ष–अग्नेरुत्तरार्धदक्षिणार्धयोर्हूयते। ३. क्ष-स–प्राप्तस्य।
४. क्ष-ट-ढ–' अन्तःकरणेन ' नास्ति।

vघृतेन आज्येनाग्नीषोमौ परिचरति । vतस्य यजमानस्य vव्रतं कर्म vरक्षतम् । vअंहसः पापात् तं च यजमानं vपातं रक्षतम् । vविशे यागेषु प्रविशते तस्मै vजनाय यजमानाय vमहि महत् प्रभूतं vशर्म सुखं vयच्छतं दत्तम् ॥ अग्नीषोमा । ' देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम् । सपर्यान् । ' सपर पूजायाम् ' । कण्ड्वादिः । लेटि आडागमः । देवद्रीचा । देवानञ्चतीति देवद्र्यङ् । अञ्चतेः ' ऋत्विक् ' इत्यादिना क्विन् । ' अनिदिताम्० ' इति नलोपः । ' विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ' ( पा. सू. ६. ३. ९२ ) इति देवशब्दस्य टेः अद्र्यादेशः । तृतीयैकवचने ' अचः ' इति अकारलोपे ' चौ ' इति दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते ' अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् ' ( पा. सू. ६. ३. ९५. १ ) इति वचनात् अद्र्यादेशः अन्तोदात्तः[1] । विशे । ' सावेकाचः० ' इति विभक्तेरुदात्तत्वम् ॥

पौर्णमासयागेऽग्नीषोमीयस्य यागस्य ' अग्नीषोमा ' इत्येषानुवाक्या । तथा च सूत्रितम् ' उक्ता देवताः ' इति खण्डे–' अग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानि ( आश्व. श्रौ. १. ६ ) इति ॥

**अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ९ ॥**

अग्नीषोमा । सऽवेदसा । सहूती इति सऽहूती । वनतम् । गिरः । सम् । देवऽत्रा । बभूवथुः ॥९॥

हे अग्नीषोमौ युवां vसवेदसा समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ vसहूती समानह्वानौ[2] च सन्तौ vगिरः अस्मदीयाः स्तुतीः vवनतं संभजेथाम् । vदेवत्रा देवेषु सर्वेषु यौ युवां vसं vबभूवथुः संभूतौ संभावितौ प्रशस्तौ स्थः । ' राजानौ वा एतौ देवतानां यदग्नीषोमौ ' ( तै. सं. २. ६. २. १-२ ) इति श्रुतेः ॥ सवेदसा । समानं वेदो ययोः । ' समानस्य च्छन्दसि ' इति सभावः । वनतम् । ' वन षण संभक्तौ ' । देवत्रा । ' देवमनुष्यपुरुषपुरुमर्त्ये० ' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥

**अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥ १० ॥**

अग्नीषोमौ । अनेन । वाम् । यः । वाम् । घृतेन । दाशति । तस्मै । दीदयतम् । बृहत् ॥१०॥

हे vअग्नीषोमौ vवां युवयोः संबन्धी vयः यजमानः vअनेन vघृतेन उत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविः vवां युवाभ्यां vदाशति प्रयच्छति vतस्मै यजमानाय vबृहत् प्रभूतं धनं vदीदयतं प्रकाशयतं प्रयच्छतमित्यर्थः ॥ दाशति । ' दाशृ दाने ' । शप्पिपोः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । दीदयतम् । दीदयतिः[3] दीप्तिकर्मा ॥

**अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा ॥११॥**

अग्नीषोमौ । इमानि । नः । युवम् । हव्या । जुजोषतम् । आ । यातम् । उप । नः । सचा ॥११॥

---

१. च-छ-त-न-फ-श-स–अन्तोदात्तो निपातितः । २. ट-ढ-स–समानाह्वानौ । ३. क्ष–दीदेतिः ।

हे ᵛअग्नीषोमौ ᵛयुवं युवां ᵛनः अस्मदीयानि ᵛइमानि ᵛहव्या हवींषि ᵛजुजोषतं सेवेथाम्। तदर्थं ᵛनः अस्मान् ᵛसचा सह युवाम् ᵛउप ᵛआ ᵛयातं उपागच्छतम् ॥ जुजोषतम्। 'जुषी प्रीतिसेवनयोः। लोटि व्यत्ययेन शप्। छान्दसं द्विर्वचनम्। यद्वा। विकरणस्य 'बहुलं छन्दसि' इति श्लुः। ततो व्यत्ययेन शप्। 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् 'नाभ्यस्तस्याचि पिति°' इति लघूपधगुणप्रतिषेधाभावः ॥

अग्नी॑षोमा पिपृ॒तमर्व॑तो न॒ आ प्या॑यन्तामु॒स्रिया॑ हव्य॒सूदः॑ ।
अ॒स्मे बला॑नि म॒घव॑त्सु धत्तं कृणु॒तं नो॑ अध्व॒रं श्रु॒ष्टिमन्त॑म् ॥ १२ ॥

अग्नी॑षोमा । पिपृ॒तम् । अर्व॑तः । न॒ः । आ । प्या॒यन्ता॒म् । उ॒स्रिया॑ः । ह॒व्य॒ऽसू॒दः॑ ।
अ॒स्मे इति॑ । बला॑नि । म॒घव॑त्ऽसु । ध॒त्तम् । कृ॒णु॒तम् । न॒ः । अ॒ध्व॒रम् । श्रु॒ष्टि॒ऽमन्त॑म् ॥ १२ ॥

हे अग्नीषोमौ ᵛनः अस्माकम् ᵛअर्वतः अश्वान् ᵛपिपृतं पालयतम्। ᵛहव्यसूदः क्षीरादिहविषामुत्पादयित्र्यः ᵛउस्रियाः अस्मदीया गावश्च ᵛआ ᵛप्यायन्ताम् आप्यायिताः प्रवृद्धाः सन्तु। ᵛमघवत्सु हविर्लक्षणधनयुक्तेषु ᵛअस्मे अस्मासु ᵛबलानि ᵛधत्तं स्थापयतम्। तथा ᵛनः अस्माकम् ᵛअध्वरं यागं ᵛश्रुष्टिमन्तं धनयुक्तं ᵛकृणुतं कुरुतम् ॥ पिपृतम्। 'पॄ पालनपूरणयोः। पृ इत्येके'। जुहोत्यादित्वात् शपः श्लुः। 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम्। हव्यसूदः। हव्यं सूदन्ते क्षरन्तीति हव्यसूदः। 'षूद क्षरणे'। 'क्विप् च' इति क्विप्। अस्मे। 'सुपां सुलुक्°' इति सप्तम्याः शेआदेशः। श्रुष्टिमन्तम्। श्रुष्टीति धननाम। श्रु आशु अश्यते व्याप्यते इति श्रुष्टिः। पृषोदरादिः। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥ ॥ २९ ॥ ॥ १४ ॥

पञ्चदशेऽनुवाके द्वादश सूक्तानि। तत्र 'इमं स्तोमम्' इति षोडशर्चं प्रथमं सूक्तम्। आङ्गिरसस्य कुत्सस्यार्षम्। पञ्चदशीषोडश्यौ त्रिष्टुभौ शिष्टा जगत्यः। अग्निर्देवता। 'पूर्वो देवा भवतु सुन्वतो रथः' इति त्रयः पादा देवदेवत्याः। 'तन्नो मित्रो वरुणः' इति अर्धर्चो लिङ्गोक्तमित्रावरुणादिषड्देवत्यः। अथवा तस्याप्यग्निरेव देवता मित्रावरुणादयस्तु निपातभाक्त्वेनाप्रधानाः। एतत्सर्वमनुक्रान्तम्– 'इमं षोळश कुत्स आग्नेयं तद्द्वित्रिष्टुबन्तं पूर्वो देवास्त्रयः पादा दैवास्तन्नो मित्रोऽर्धर्चो लिङ्गोक्तदेवतो यद्देवत्यं वा सूक्तम्' इति। प्रातरनुवाकस्याग्नेये क्रतौ जागते छन्दस्येतत् सूक्तम् आश्विनशस्त्रे च। तथा च सूत्रितम्– 'इमं स्तोममर्हते सं जागृवद्भिः' (आश्व. श्रौ. ४. १३) इति। आभिप्लविके षष्ठेऽहन्याग्निमारुतेऽप्येतत्सूक्तं जातवेदस्यनिविद्धानम्। सूत्रितं च–'प्रयज्यव इमं स्तोममित्याग्निमारुतम्' (आश्व. श्रौ. ७. ७) इति। तृतीयसवने 'इमं स्तोमम्' इत्येषा अग्नीधः[1] प्रस्थितयाज्या। सूत्रितं च–'इमं स्तोममर्हते जातवेदस इति तार्तीयसवनिक्यः' (आश्व. श्रौ. ५. ५.) इति ॥

१. क्ष-ट-ढ-स–आग्नीध्रस्य।

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥

इमम् । स्तोमम् । अर्हते । जातऽवेदसे । रथम्ऽइव । सम् । महेम । मनीषया ।
भद्रा । हि । नः । प्रऽमतिः । अस्य । सम्ऽसदि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१॥

vअर्हते पूज्याय vजातवेदसे जातानामुत्पन्नानां वेदित्रे जातप्रज्ञाय जातधनाय वाग्नये vमनीषया निशितया बुद्ध्या vइमम् एतत्सूक्तरूपं vस्तोमं स्तोत्रं vरथमिव यथा तक्षा रथं संस्करोति तथा vसं vमहेम सम्यक् पूजितं कुर्मः । vअस्य अग्नेः vसंसदि संभजने vनः अस्माकं vप्रमतिः प्रकृष्टा बुद्धिः vभद्रा vहि कल्याणी समर्था खलु । अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे vअग्ने vतव vसख्ये अस्माकं त्वया सह सखित्वे सति vवयं vमा vरिषाम हिंसिता न भवाम । अस्मान् रक्षेत्यर्थः ॥ अर्हते । 'अर्ह पूजायाम्' । 'अर्हः प्रशंसायाम्' (पा. सू. ३. २. १३३) इति लटः शत्रादेशः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेण[1] धातुस्वरः[2] शिष्यते[2] । महेम । 'मह पूजायाम्' । रिषाम । 'रिष हिंसायाम्' । व्यत्ययेन शः । तव । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् ॥

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥ २ ॥

यस्मै । त्वम् । आऽयजसे । सः । साधति । अनर्वा । क्षेति । दधते । सुऽवीर्यम् ।
सः । तूताव । न । एनम् । अश्नोति । अंहतिः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥२॥

vयस्मै यजमानाय हे vअग्ने vत्वम् vआयजसे देवानाभिमुख्येन यजसि vसः यजमानः vसाधति स्वाभिलषितं साधयति । प्राप्नोतीत्यर्थः । किंच स यजमानः vअनर्वा शत्रुभिरप्रस्पृतः[3] सन् vक्षेति निवसति । तथा vसुवीर्यं शोभनवीर्योपेतं धनं vदधते धारयति । प्राप्नोतीत्यर्थः[4] । धृत्वा च vसः यजमानः vतूताव वर्धते । vएनं यजमानम् vअंहतिः आर्तिर्दारिद्र्यं vन vअश्नोति न प्राप्नोति । अन्यत् पूर्ववत् ॥ साधति । 'षिधु संराद्धौ' । णिचि 'सिध्यतेरपारलौकिके' (पा. सू. ६. १. ४९) इति आत्वम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । क्षेति । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । दधते । 'दध धारणे' । भौवादिकः । तूताव । तु इति वृद्ध्यर्थः सौत्रो धातुः । अस्मात् छान्दसो लिट् । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । अश्नोति । व्यत्ययेन परस्मैपदम् । अंहतिः । 'हन्तेरंह च' (उ. सू. ४. ५०२) इति अतिप्रत्ययः । 'चित्' इत्यनुवृत्तेः अन्तोदात्तत्वम् ॥

---

१. फ—लसार्वधातुकस्वरावशेषेण । २. क्ष-ट-ढ-न-फ-स—आद्युदात्तत्वम् । ३. च—शत्रुभिरप्राप्तः । ४. क्ष-स—' प्राप्नोतीत्यर्थः ' नास्ति ।

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आ वह तान्ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥

शकेम । त्वा । सम्ऽइधम् । साधय । धियः । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ।
त्वम् । आदित्यान् । आ । वह । तान् । हि । उश्मसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥३॥

हे अग्ने त्वा त्वां समिधं सम्यगिद्धं कर्तुं शकेम शक्ता भूयास्म । त्वं च धियः अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि साधय निष्पादय । त्वया हि सर्वे यागा निष्पाद्यन्ते । यस्मात् त्वे त्वय्यग्नौ आहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं[1] हविः[1] देवाः अदन्ति भक्षयन्ति । तस्मात् त्वं साधयेत्यर्थः । अपि च त्वम् आदित्यान् अदितेः पुत्रान् सर्वान् देवान् आ वह अस्मद्यज्ञार्थमानय । तान् हि इदानीमेव वयम् उश्मसि कामयामहे । अन्यत् पूर्ववत् ॥ शकेम । 'शक्लृ शक्तौ' । 'लिङ्याशिष्यङ्' । अदुपदेशात् लसार्वधातुकानुदात्तत्वेऽङ एव स्वरः शिष्यते । समिधम् । 'ञिइन्धी दीप्तौ' । अस्मात् संपदादिलक्षणः कर्मणि क्विप् । त्वे । 'सुपां सुलुक्°' इति सप्तम्येकवचनस्य शेआदेशः । उश्मसि । 'वश कान्तौ' । इदन्तो मसिः । अदादित्वात् शपो लुक् । 'ग्रहिज्या°' इत्यादिना संप्रसारणम् ॥

भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥

भराम । इध्मम् । कृणवाम । हवींषि । ते । चितयन्तः । पर्वणाऽपर्वणा । वयम् ।
जीवातवे । प्रऽतरम् । साधय । धियः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ४ ॥

हे अग्ने त्वद्यागार्थम् इध्मम् इन्धनसाधनमेकविंशतिदार्वात्मकं समित्समूहं भराम[2] संपादयाम । तदनन्तरं ते तुभ्यं हवींषि चरुपुरोडाशादिलक्षणान्यन्नानि[3] वयं कृणवाम करवाम । किं कुर्वन्तः । पर्वणापर्वणा प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्यां चितयन्तः त्वां प्रज्ञापयन्तः । स त्वं जीवातवे अस्माकं जीवनौषधाय चिरकालावस्थानाय धियः कर्माण्यग्निहोत्रादीनि प्रतरं प्रकृष्टतरं साधय निष्पादय । अन्यत् समानम् ॥ चितयन्तः ॥ 'चिती संज्ञाने' । संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः । पर्वणापर्वणा । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः । 'तस्य परमाम्रेडितम्' इति परस्याम्रेडितसंज्ञायाम् 'अनुदात्तं च' इत्यनुदात्तत्वम् । प्रतरम् । तरबन्तात् प्रशब्दात् क्रियाप्रकर्षे वर्तमानात् 'अमु च च्छन्दसि' ( पा. सू. ५. ४. १२ ) इति अमुप्रत्ययः ॥

---

१. क्ष-ट-ढ–हविश्चरुपुरोडाशादिकम् । २. क्ष-ट-ढ–भराम संभराम । ३. त-श–चरुपुरोडाशलक्षणान्यन्नानि ।

विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥

विशाम् । गोपाः । अस्य । चरन्ति । जन्तवः । द्विऽपत् । च । यत् । उत । चतुःऽपत् । अक्तुऽभिः ।
चित्रः । प्रऽकेतः । उषसः । महान् । असि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥५॥

ᵛअस्य अग्नेः ᵛजन्तवः जाता रश्मयः ᵛविशां सर्वेषां प्राणिनां ᵛगोपाः । गोपायितारो रक्षकाः सन्तः ᵛचरन्ति उद्गच्छन्ति । तदनन्तरं ᵛयत् ᵛच ᵛद्विपत् द्विपात् मनुष्यादिकमस्ति ᵛउत अपि च ᵛचतुष्पत् चतुष्पात् गवादिकं यदस्ति तदुभयम् ᵛअक्तुभिः अक्तैः अस्य रश्मिभिरक्तम् आश्लिष्टमभूत् । हे ᵛअग्ने ᵛचित्रः विचित्रदीप्तियुक्तः ᵛप्रकेतः रात्रावन्धकारावृतानां सर्वेषां प्रज्ञापयिता प्रदर्शयिता[1] ᵛउषसः उषोदेवताया अपि ᵛमहान् गुणैरधिकः ᵛअसि भवसि । उषास्तु रात्रेश्चरमभागे प्रकाशयति अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यम् ॥ गोपाः । 'गुपू रक्षणे' । 'गुपूधूपविच्छि०' (पा. सू. ३. १. २८) इति आयप्रत्ययः । अस्मात् क्विप् । अतो लोपः । 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं वलि लोपः । न चातो लोपस्य स्थानिवत्त्वं, 'न पदान्त०' इत्यादिना यलोपं प्रति तन्निषेधात् । द्विपत् । द्वौ पादावस्येति बहुव्रीहौ 'संख्यासुपूर्वस्य' (पा. सू. ५. ४. १४०) इति पादशब्दस्य अन्त्यलोपः[2] समासान्तः । अयस्मयादित्वेन भत्वे 'पादः पत्' (पा. सू. ६. ४. १३०) इति पद्भावः । एकदेशविकृतस्यानन्यवत्त्वात्[3] (परिभा. ३७) 'द्वित्रिभ्यां पाद्दन्मूर्धसु०' (पा. सू. ६. २. १९७) इत्युत्तरपदान्तोदात्तत्वम् । चतुष्पत् । पूर्ववत् समासान्तः पद्भावश्च । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । 'त्रः संख्यायाः' (फि. सू. २८) इति चतुर्शब्द आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते ॥ ॥ ३० ॥

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥

त्वम् । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता । जनुषा । पुरःऽहितः ।
विश्वा । विद्वान् । आर्त्विज्या । धीर । पुष्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥६॥

हे ᵛअग्ने ᵛत्वम् ᵛअध्वर्युः अध्वरस्य यागस्य नेता देवान्प्रति प्रेरयिता यद्वा यागे आध्वर्यवस्य कर्ता भवसि[4] । अध्वर्यौ मनुष्ये जाठररूपेण[5] वागिन्द्रियाधिष्ठातृत्वेन वावस्थाय[5] यागनिष्पादकः असि । ᵛउत अपि च ᵛपूर्व्यः मुख्यः ᵛहोता देवानामाह्वाता पूर्ववद्धोतर्यवस्थाय हौत्रस्य कर्मणः कर्ता वा ᵛअसि भवसि । मानुषो होता अमुख्यः । तदपेक्षयास्य मुख्यत्वम् । तथा ᵛप्रशास्ता प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि । यद्वा । 'होतर्यज पोतर्यज' इत्यादिना प्रैषेण शास्तीति[6] मैत्रावरुणः प्रशास्ता । पूर्ववत्

---

१. क्ष-ट-ढ-स–प्रदर्शयिता त्वम् । २. क्ष–अन्तलोपः । ३. एकदेशविकृतस्यानन्यत्वात् । ४. क्ष-ट-ढ–असि भवसि । ५. क्ष-ट-ढ–जाठररूपो भवानिन्द्रियाधिष्ठातृत्वेनावस्थाय; न-स–जाठररूपेण वा त्वगिन्द्रियाधिष्ठातृत्वेन वावस्थाय । ६. क्ष–प्रशास्तीति ।

तस्मिन्नवस्थाय यागनिष्पादकोऽसि। ᵛपोता यज्ञस्य पावयिता शोधयितासि। यद्वा पोतृनामकस्य ऋत्विजः पूर्ववदधिष्ठाय यागनिष्पादकोऽसि । तथा ᵛजनुषा जन्मना स्वाभाव्येन ᵛपुरोहितः पुरस्तादागामिनि[1] स्वर्गादौ हितोऽनुकूलाचरणोऽसि । यद्वा । सर्वेषु कर्मसु पूर्वस्यां दिश्याहवनीये स्थापितोऽसि । अथवा पुरोहितो ब्रह्मा देवपुरोहितस्य बृहस्पतेः प्रतिनिधित्वात् । तथा च मन्त्रान्तरम्–‘ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ’ ( तै. ब्रा. ३. ७. ६. ३) इति । अतस्तस्मिन्ब्रह्मणि पूर्ववदवस्थाय तद्रूपः सन् ᵛविश्वा सर्वाणि ᵛआर्त्विज्या ऋत्विजः कर्माण्यध्वर्यवादीनि ᵛविद्वान् जानंस्त्वं हे ᵛधीर प्राज्ञ ᵛअग्ने ᵛपुष्यसि न्यूनाधिकभावराहित्येन संपूर्णानि करोषि । अन्यत् समानम् ॥ जनुषा । जनेरुसिः । पुरोहितः । दधातेः कर्मणि निष्ठा । ‘ पूर्वाधर॰ ’ इत्यादिना असिप्रत्ययान्तः पूरस्शब्दोऽन्तोदात्तः । ‘ तद्धितश्चासर्वविभक्तिः ’ इति अव्ययसंज्ञायां ‘ पुरोऽव्ययम् ’ इति गतित्वात् ‘ गतिरनन्तरः ’ इति पूर्ववदप्रकृतिस्वरत्वम् । आर्त्विज्या । ब्राह्मणादित्वात् ष्यञ् । ञित्त्वादाद्युदात्तत्वम् ॥

**यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे ।**
**रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥**

यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽइव । अति । रोचसे ।
रात्र्याः । चित् । अन्धः । अति । देव । पश्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥७॥

हे ᵛअग्ने ᵛयः त्वं ᵛसुप्रतीकः शोभनाङ्गः सन् ᵛविश्वतः सर्वस्मादपि ᵛसदृङ्ङसि अन्यूनः सदृशो भवसि स त्वं ᵛदूरे ᵛचित् ᵛसन् दूरेऽपि वर्तमानः सन् ᵛतळिदिव । अन्तिकनामैतत् । अन्तिके वर्तमान इव ᵛअति ᵛरोचसे अतिशयेन दीप्यसे । तदुक्तं यास्केन–‘ दूरेऽपि सन्नन्तिक इव संदृश्यसे ’ ( निरु. ३. ११ ) इति। ᵛरात्र्याश्चित् रात्रेरपि रात्रेः संबन्धिनम् ᵛअन्धः बहुलमन्धकारमपि हे ᵛदेव द्योतमान अग्ने ᵛअति ᵛपश्यसि अतीत्य प्रकाशसे । अन्यत् पूर्ववत् ॥ सुप्रतीकः । शोभनं प्रतीकोऽङ्गं यस्य । ‘ क्त्वादयश्च ’ इत्युत्तरपदाद्युदात्तत्वम् । सदृङ् । ‘ समानान्ययोश्चेति वक्तव्यम् ’ ( पा. सू. ३. २. ६०. १ ) इति समानोपपदात् दृशेः क्विन् । ‘ दृग्दृशवतुषु ’ ( पा. सू. ६. ३. ८९ ) इति समानस्य सभावः । ‘ ऋत्वित्वःस्वतवसां छन्दसि ’ ( पा. सू. ७. १. ८३ ) इति नुम् । संयोगान्तलोपः । क्विन्प्रत्ययस्य ‘ कुः ’ इति कुत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । रात्र्याः । ‘ रात्रेश्चाजसौ ’ ( पा. सू. ४. १. ३१ ) इति ङीप् ॥

**पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।**
**तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥**

पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः ।
तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥८॥

---

१. क्ष–पुरः पुरस्तादागामिनि ।

हे <sup>v</sup>देवाः अग्न्यवयवभूताः सर्वे देवाः <sup>v</sup>सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य <sup>v</sup>रथः <sup>v</sup>पूर्वः अन्येषामयजमानानां रथेभ्यो मुख्यः <sup>v</sup>भवतु । अपि च <sup>v</sup>अस्माकं <sup>v</sup>शंसः शंसनीयमभिशापरूपं पापं <sup>v</sup>दूढ्यः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपराञ्छत्रून् <sup>v</sup>अभ्यस्तु अभिभवतु तान् बाधताम् । <sup>v</sup>तत् इदं मद्वाक्यं हे देवाः <sup>v</sup>आ <sup>v</sup>जानीत आभिमुख्येनावगच्छत । <sup>v</sup>उत अपि च तत् <sup>v</sup>वचः अस्मदीयं वचनं तदर्थाचरणेन <sup>v</sup>पुष्यत प्रवर्धयत । हे सर्वदेवात्मक <sup>v</sup>अग्ने । सख्ये इत्यादि पूर्ववत् ॥ सुन्वतः । ' शतुरनुमः० ' इति विभक्तेरुदात्तत्वम् । शंसः । शंस्यते[1] कीर्त्यते इति शंसोऽभिशापः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । दूढ्यः । दुष्टं ध्यायन्तीति दुर्धियः । ' ध्यै चिन्तायाम् ' इत्यस्मात् ' क्विप् च ' इति क्विप् । दृशिग्रहणानुवृत्तेस्तस्य च विध्यन्तरोपसंग्रहार्थत्वात् संप्रसारणम् । पृषोदरादिषु ' ध्यै च ' इति पाठात् दुरो रेफस्योत्वं उत्तरपदादेः ष्टुत्वं च ॥

**व॒धैर्दुः॒शंसाँ॒ अप॑ दू॒ढ्यो॑ जहि दू॒रे वा॒ ये अन्ति॑ वा॒ के चि॑द॒त्रिणः॑ ।**
**अथा॑ य॒ज्ञाय॑ गृण॒ते सु॒गं कृ॑ध्यग्ने स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ९ ॥**

व॒धैः । दुः॒ऽशंसा॑न् । अप॑ । दुः॒ऽध्यः॑ । ज॒हि॒ । दू॒रे । वा॒ । ये । अन्ति॑ । वा॒ । के । चि॒त् । अ॒त्रिणः॑ ।
अथ॑ । य॒ज्ञाय॑ । गृ॒ण॒ते । सु॒ऽगम् । कृ॒धि॒ । अ॒ग्ने॒ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ ९ ॥

हे <sup>v</sup>अग्ने त्वं <sup>v</sup>वधैः हननसाधनैरायुधैः <sup>v</sup>दुःशंसान् दुःखेन कीर्तनीयान् <sup>v</sup>दूढ्यः दुर्धियः पापबुद्धीन् <sup>v</sup>अप <sup>v</sup>जहि वधं प्रापय । <sup>v</sup>ये <sup>v</sup>के <sup>v</sup>चित् ये केचन <sup>v</sup>दूरे विप्रकृष्टदेशे <sup>v</sup>वा अन्तिके[2] समीपदेशे <sup>v</sup>वा वर्तमानाः <sup>v</sup>अत्रिणः अत्तारो राक्षसादयो विद्यन्ते तान् दुर्धियोऽप जहीत्यर्थः । <sup>v</sup>अथ अनन्तरं <sup>v</sup>यज्ञाय यज्ञपतये <sup>v</sup>गृणते त्वां स्तुवते यजमानाय <sup>v</sup>सुगं शोभनं मार्गं <sup>v</sup>कृधि कुरु । अन्यत् पूर्ववत् ॥ वधैः । ' हनश्च वधः ' इति हन्तेः करणेऽप् वधादेशश्च । स च अदन्तोऽन्तोदात्तः । तस्यातो लोपे सति उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । दुःशंसान् । ' ईषद्दुःसुषु ' इति कर्मणि खल् । ' लिति ' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । जहि । लोटि[3] हिः । ' हन्तेर्जः ' इति जादेशः । तस्य ' असिद्धवदत्राभात् ' इति असिद्धत्वात् हेर्लुगभावः । अन्ति । अन्तिकस्य ' कादिलोपो बहुलम् ' इति कलोपः । अत्रिणः । ' अदेस्त्रिनि च ' इति त्रिनिप्रत्ययः । इकारो नकारपरित्राणार्थः । गृणते । ' शतुरनुमः ' इति विभक्तेरुदात्तत्वम् । सुगम् । ' सुदुरोरधिकरणे ' ( पा. सू. ३. २. ४८. ३ ) इति गमेर्डः । कृधि । ' श्रुशृणुपॄकृवृभ्यश्छन्दसि ' इति हेर्धिः । ' बहुलं छन्दसि ' इति विकरणस्य लुक् ॥

**यद॑यु॑क्था अ॒रु॒षा रोहि॑ता॒ रथे॒ वात॑जूता वृष॒भस्ये॑व ते॒ रवः॑ ।**
**आदि॑न्वसि व॒निनो॑ धू॒मके॑तुना॒ग्ने स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ १० ॥**

यत् । अयु॑क्थाः । अ॒रु॒षा । रोहि॑ता । रथे॑ । वात॑ऽजूता । वृ॒ष॒भस्य॑ऽइव । ते॒ । रवः॑ ।
आत् । इ॒न्व॒सि॒ । व॒निनः॑ । धू॒मऽके॑तुना । अ॒ग्ने॒ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ १० ॥

---

१. क्ष—शस्यते । २. स—आन्ति अन्तिके । ३. क्ष—लोटः ।

हे Vअग्ने Vअरुषा आरोचमानौ Vरोहिता लोहितवर्णौ। रोहित इत्यग्नेरश्वस्याख्या 'रोहितोऽग्नेः' (नि. १. १५. २) इति दर्शनात्। 'रोहितेन त्वाग्निर्देवतां गमयतु' (तै. सं. १. ७. ४. ३) इति मन्त्रवर्णाच्च। 'एते वै देवाश्वाः' (तै. सं. १. ७. ४. ३) इति हि तत्र व्याख्यातम्। Vवातजूता। वातस्य वायोर्जूतं जवो वेग इव वेगो ययोस्तौ। ईदृशावश्वौ Vरथे Vयत् यदा Vअयुक्थाः अयोजयः तदानीं वनानि दहतः Vते तव Vरवः शब्दः Vवृषभस्येव दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति। Vआत् अनन्तरं Vवनिनः वनसंबद्धान् वृक्षान् Vधूमकेतुना धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना Vइन्वसि व्याप्नोषि। अन्यत् पूर्ववत्॥ अयुक्थाः। 'युजिर् योगे'। लुङि 'झलो झलि' इति सकारलोपः। अरुषेत्यादिद्विवचनेषु[1] 'सुपां सुलुक्°' इति आकारः। रवः। 'रु शब्दे'। 'ऋदोरप्' इति भावे अप्। इन्वसि। 'इवि व्याप्तौ'। भौवादिकः। इदित्त्वात् नुम्॥ ॥ ३१ ॥

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन्।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ॥

अध। स्वनात्। उत। बिभ्युः। पतत्रिणः। द्रप्साः। यत्। ते। यवसऽअदः। वि। अस्थिरन्।
सुऽगम्। तत्। ते। तावकेभ्यः। रथेभ्यः। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥११॥

हे Vअग्ने Vअध दग्धुं वनप्रवेशानन्तरं Vस्वनात् त्वदीयात् पूर्वोक्तगम्भीरशब्दात्। उतशब्दोऽप्यर्थः। Vपतत्रिणः पक्षिणोऽपि Vबिभ्युः बिभ्यति भयं प्राप्नुवन्ति। उत्पतनेन देशान्तरं गन्तुं समर्थाः पक्षिणोऽपि यदा भयं प्राप्नुवन्ति किमु वक्तव्यमन्येषां तत्रत्यानां[2] वृकादीनां भीतिर्जायते इति। अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्तीत्यर्थः। तादृशस्य Vते तव Vद्रप्साः ज्वालैकदेशाः Vयवसादः यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः Vयत् यदा Vव्यस्थिरन् विविधमवतिष्ठन्ते Vतत् तदा Vते तव सर्वमरण्यं Vसुगं सुखेन गन्तुं शक्यम्। अतः Vतावकेभ्यः त्वदीयेभ्यः Vरथेभ्यः च तदरण्यं सुगं भवति। पूर्वं प्रवृत्तैर्ज्वालाग्रैः तृणादिषु[3] दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण पश्चाद्गच्छन्तीति भावः। अन्यत् समानम्॥ बिभ्युः। 'ञिभी भये'। छान्दसो लिट्। 'एरनेकाचः°' इति यण्। व्यस्थिरन्। 'समवप्रविभ्यः°' इति तिष्ठतेरात्मनेपदम्। लुङि व्यत्ययेन झस्य रन्। 'स्थाघ्वोरिच्च' इति इत्वम्। 'ह्रस्वादङ्गात्' (पा. सू. ८. २. २७) इति सलोपः। तावकेभ्यः[4]। 'तवकममकावेकवचने' (पा. सू. ४. ३. ३) इति युष्मदस्तवकादेशः॥

अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ १२ ॥

अयम्। मित्रस्य। वरुणस्य। धायसे। अवऽयाताम्। मरुताम्। हेळः। अद्भुतः।
मृळ। सु। नः। भूतु। एषाम्। मनः। पुनः। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥१२॥

---

१. क्ष-न-स-अरुषेत्यादिषु द्विवचनेषु। २. क्ष-तत्रस्थानाम्। ३. क्ष-ट-ढ-स-सर्वेषु तृणादिषु। ४. क्ष-ट-ढ-स-तावकेभ्यः। तवेमे तावकाः।

ᐯअयम् अग्नेः स्तोता ᐯमित्रस्य अहरभिमानिनो देवस्य ᐯवरुणस्य राज्यभिमानिनश्च संबन्धिने ᐯधायसे धारणायावस्थापनाय भवतु। मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः। ᐯअवयाताम् अवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानां ᐯमरुताम् एतत्संज्ञानां देवानां ᐯहेळः क्रोधः ᐯअद्भुतः महान् भवति। अद्भुत इत्येतन्महन्नाम। तस्मात् क्रोधात् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः। अपि च ᐯनः अस्मान् हे ᐯअग्ने[1] ᐯसु ᐯमृळ सुष्ठु सुखय सुखय। ᐯएषां मरुतां ᐯमनः च ᐯपुनः ᐯभूतु पुनरपि[2] प्रसन्नं भवतु। अन्यत् समानम्॥ धायसे। 'वहिहाधाञ्भ्यश्छन्दसि' इति भावे असुन्। 'नित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युक्। अवयाताम्। 'या प्रापणे'। अस्मात् अवपूर्वात् लटः शतृ। 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम्। मृळ। 'मृड सुखने'। 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः। 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम्। भूतु। 'बहुलं छन्दसि' इति शपो लुक्॥

**देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।**
**शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव॥ १३॥**

देवः। देवानाम्। असि। मित्रः। अद्भुतः। वसुः। वसूनाम्। असि। चारुः। अध्वरे।
शर्मन्। स्याम। तव। सप्रथःऽतमे। अग्ने। सख्ये। मा। रिषाम। वयम्। तव॥१३॥

हे ᐯअग्ने ᐯदेवः द्योतमानस्त्वं ᐯदेवानां सर्वेषाम् ᐯअद्भुतः महान् ᐯमित्रः ᐯअसि प्रौढः सखा भवसि। तथा ᐯचारुः शोभनस्त्वम् ᐯअध्वरे यज्ञे ᐯवसूनां सर्वेषां धनानां ᐯवसुः ᐯअसि निवासयिता भवसि। अतोऽस्माकं वसूनि देहीत्यर्थः। किंच ᐯसप्रथस्तमे सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे ᐯतव त्वत्संबन्धिनि शर्मणि यज्ञगृहे ᐯस्याम वर्तमाना भवेम। अन्यत् पूर्ववत्॥ शर्मन्। 'सुपां सुलुक्॰' इति सप्तम्या लुक्॥

**तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः।**
**दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव॥ १४॥**

तत्। ते। भद्रम्। यत्। सम्ऽइद्धः। स्वे। दमे। सोमऽआहुतः। जरसे। मृळयत्ऽतमः।
दधासि। रत्नम्। द्रविणम्। च। दाशुषे। अग्ने। सख्ये। मा। रिषाम। वयम्। तव॥१४॥

हे ᐯअग्ने ᐯते त्वत्संबन्धि ᐯतत् खलु ᐯभद्रं भजनीयम्। प्रशस्तमित्यर्थः। किं पुनस्तत्। ᐯस्वे ᐯदमे स्वकीये उत्तरवेदिलक्षणे निवासस्थाने। 'तस्यैष स्वो लोको यदुत्तरवेदीनाभिः' (ऐ. ब्रा. १. २८) इति श्रुतेः। तस्यामुत्तरवेद्यां ᐯसमिद्धः सम्यगिद्धः प्रज्वलितः ᐯसोमाहुतः हुतेन सोमरसेन संतर्पितः सन् ᐯजरसे ऋत्विग्भिः स्तूयसे इति यदस्ति तद्भद्रमित्यर्थः। एवं प्रशस्तस्त्वं ᐯमृळयत्तमः

---

१. क्ष-ट-ढ-स-अग्ने त्वम्। २. क्ष-स-क्रोधवियुक्तं सत् पुनरपि।

अतिशयेनास्माकं सुखयिता भूत्वा ᵛरत्नं रमणीयं कर्मफलं ᵛद्रविणं धनं ᵛच ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛदधासि प्रयच्छसि । अन्यत् समानम् ॥ समिद्धः । ' ञिइन्धी दीप्तौ ' । कर्मणि निष्ठा । ' श्वीदितो निष्ठायाम् ' इति इट्प्रतिषेधः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । सोमाहुतः । सोमेनाहुतः । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । जरसे । जरतिः स्तुतिकर्मा । व्यत्ययेन कर्मणि कर्तृप्रत्ययः। यद्वृत्तयोगादनिघातः । दधासि। ' अनुदात्ते च ' इति अभ्यस्तस्य आद्युदात्तत्वम्॥

यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽनागा॒स्त्वम॑दिते स॒र्वता॑ता ।
यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म ॥ १५ ॥

यस्मै॑ । त्वम् । सु॒ऽद्र॒वि॒णः॒ । ददा॑शः । अ॒ना॒गाः॒ऽत्वम् । अ॒दि॒ते॒ । स॒र्वऽता॑ता ।
यम् । भ॒द्रेण॑ । शव॑सा । चो॒दया॑सि । प्र॒जाऽव॑ता । राध॑सा । ते । स्या॒म॒ ॥ १५ ॥

हे ᵛसुद्रविणः शोभनधन ᵛअदिते अखण्डनीयाग्ने ᵛसर्वताता सर्वासु कर्मततिषु यद्वा सर्वेषु यज्ञेषु वर्तमानाय ᵛयस्मै यजमानाय ᵛअनागास्त्वम् अपापत्वं पापराहित्येन कर्मार्हतां ᵛत्वं ᵛददाशः प्रयच्छसि स यजमानः समृद्धो भवति । ᵛयं च यजमानं ᵛभद्रेण भजनीयेन कल्याणेन ᵛशवसा बलेन ᵛचोदयासि संयोजयसि सोऽपि समृद्धो भवति । वयं च स्तोतारः ᵛप्रजावता प्रजाभिः पुत्रपौत्रैर्युक्तेन ᵛते ᵛराधसा त्वया दत्तेन धनेन युक्ताः ᵛस्याम भवेम ॥ सुद्रविणः । शोभनानि द्रविणानि धनानि यस्य । ' द्रु गतौ ' । ' द्रुदक्षिभ्यामिनन् ' ( उ. सू. २. २०८ ) । द्रविणशब्दस्यान्ते सकारोपजनश्छान्दसः । ददाशः । ' दाश्र दाने ' । लेटि अडागमः । 'बहुलं छन्दसि ' इति शपः श्लुः । ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् । सर्वताता । 'सर्वदेवात्तातिल्' इति स्वार्थे तातिल्प्रत्ययः। यास्कपक्षे तु सर्वाः स्तुतयो येषु यागेष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्णव्यापत्त्या आत्वम् । उभयत्रापि ' सुपां सुलुक्° ' इति सप्तम्या डादेशः । चोदयासि । ' चुद प्रेरणे ' । लेटि आडागमः ॥

स त्वम॑ग्ने सौभग॒त्वस्य॑ वि॒द्वान॒स्माक॒मायुः॒ प्र ति॑रे॒ह दे॑व ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ १६ ॥

सः । त्वम् । अ॒ग्ने॒ । सौ॒भ॒ग॒ऽत्वस्य॑ । वि॒द्वान् । अ॒स्माक॑म् । आयुः॑ । प्र । ति॒र॒ । इ॒ह । दे॒व॒ ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ १६ ॥

हे ᵛदेव दानादिगुणयुक्त ᵛअग्ने ᵛसः पूर्वोक्तगुणविशिष्टः ᵛत्वं ᵛसौभगत्वस्य सुभगत्वं सौभाग्यं ᵛविद्वान् जानन् ᵛइह अस्मिन् कर्मणि ᵛअस्माकमायुः ᵛप्र ᵛतिर प्रवर्धय । प्रपूर्वस्तिरतिर्वर्धनार्थः । त्वया प्रवर्धितं ᵛनः अस्माकं ᵛतत् आयुः मित्रादयः षड्देवताः ᵛममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः । ᵛमित्रः प्रमीतेस्त्राता ᵛवरुणः अनिष्टानां निवारयिता ᵛअदितिः अदीना अखण्डनीया वा देवमाता ᵛसिन्धुः स्यन्दनशीलोदकात्मा देवता ᵛपृथिवी प्रथिता भूदेवता । ᵛउत इति समुच्चये । ᵛद्यौः प्रकाशमाना द्युलोकात्मा

देवता । एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्तामिति पूर्वत्रान्वयः ॥ सौभगत्वस्य । सुभगस्य भावः सौभगम् । ' सुभगान्मन्त्रे ' इति उद्गात्रादिषु पाठात् भावे अञ् । पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी । ममहन्ताम् । ' मह पूजायाम् ' । भौवादिकः । लोटि ' बहुलं छन्दसि ' इति शपः श्लुः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् ॥　　॥ ३२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्[1] । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण[2] विरचिते
माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

१. क्ष—विनाशयन् ।　२. क्ष-स—सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

प्रथमे मण्डले पञ्चदशेऽनुवाके प्रथमं सूक्तं व्याख्यातम् । 'द्वे विरूपे' इत्येकादशर्चं द्वितीयं सूक्तम् । अत्रानुक्रम्यते–'द्वे एकादशौपसाय वाग्नेये' इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया कुत्सस्यानुवृत्तेराङ्गिरसः कुत्सः ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छन्दः । उपसि प्रातःकाले हविर्भाक्[1] योऽग्निरस्ति स देवता । यद्वा । 'आग्नेयं तत्' इति पूर्वोत्रोक्तत्वात् तुह्यादिपरिभाषया इदमादीनि पञ्च सूक्तानि केवलाग्निदेवत्यानि । अतोऽस्य सूक्तस्य औपसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवता इति वाशब्दार्थः । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादिके द्वे सूक्ते । तथा च सूत्रितम् 'अथैतस्याः' इति खण्डे–'द्वे विरूपे इति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति । आश्विनशस्त्रे चैते 'प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य' ( आश्व. श्रौ. ६. ५. ) इत्यतिदिष्टत्वात् ॥

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।

हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे ।

अन्याऽअन्या । वत्सम् । उप । धापयेते इति ।

हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥१॥

^v^स्वर्थे स्वरणे शोभनगमनागमने । यद्वा । अर्थः प्रयोजनम् । शोभनप्रयोजनोपेते ^v^विरूपे विषमरूपे शुक्लकृष्णतया नानारूपे ^v^द्वे अहोरात्रे ^v^चरतः पुनःपुनः पर्यावर्तेते । ते[2] चाहोरात्रे[2] अग्नेः सूर्यस्य च जनन्यौ । तत्र रात्रेः पुत्रः सूर्यः । स हि गर्भवत् रात्रावन्तर्हितः सन् तस्याः चरमभागादुत्पद्यते[3] । अह्नः पुत्रोऽग्निः । स हि तत्र[4] विद्यमानोऽपि प्रकाशराहित्येन असत्कल्पःसन् तस्मात् अह्नः सकाशात् निर्मुक्तः प्रकाशमानं स्वात्मानं लभते । अनयोरेतयोः पुत्रत्वं च तैत्तिरीयैराम्नायते–'तयोरेतौ वत्सौ । अग्निश्चादित्यश्च । रात्रेर्वत्सः । श्वेत आदित्यः । अह्नोऽग्निः । ताम्रो अरुणः' ( तै. आ. १. १० ) इति । ते चाहोरात्रे ^v^वत्सं स्वं[5] स्वं पुत्रम्[5] ^v^अन्यान्या परस्परव्यतिहारेण ^v^उप ^v^धापयेते स्वकीयं रसं पाययतः । यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य[6] पायनं[6] तदह्नः करोति । यदह्ना कर्तव्यं स्वपुत्रस्याग्नेः रसस्य[7] पायनं तद्रात्रिः करोति । एतच्च सायंप्रातःकालीनाहुत्यभिप्रायम् । श्रूयते च–'तस्मादग्नये सायं हूयते सूर्याय प्रातः' ( तै. ब्रा. २. १. २. ६ ) इति । यस्मादेवं तस्मात् ^v^अन्यस्यां स्वजनन्याः अन्यस्याम् अहरात्मिकायामग्नेर्जनन्यां ^v^हरिः रसहरणशील आदित्यः ^v^स्वधावान् हविर्लक्षणान्नवान् ^v^भवति ।

---

१. क्ष-ट-ठ–हविर्भाक्तया । २. ट-ठ–अहोरात्रे । ३. क्ष-ट-ढ–चरमभागे उत्पद्यते । ४. क्ष-ट-ढ–तदा । ५. क्ष–स्वस्वपुत्रम् । ६. क्ष-स–रसपायनम् । ७. क्ष-न-स–'रसस्य' नास्ति ।

ᵛशुक्रः निर्मलदीप्तिरग्निः स्वजनन्याः ᵛअन्यस्यां रात्र्यामादित्यस्य जनन्यां ᵛसुवर्चाः शोभनदीप्तियुक्तः सन् ᵛददृशे दृश्यते ॥ स्वर्थे। 'ऋ गतौ'। 'उषिकुषिगार्तिभ्यस्थन्' इति भावे कर्मणि वा थन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। शोभनोऽर्थो ययोस्ते। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। अन्यान्या। 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्' (पा. म. ८. १. १२. ११) इति द्विर्भावः। बहुलग्रहणात् समासवद्भावाभावे 'तस्य परमाम्रेडितम्' इति परस्याम्रेडित-संज्ञायाम् 'अनुदात्तं च' इति आम्रेडितानुदात्तत्वम्। धापयेते। 'धेट् पाने'। 'आदेचः°' इति आत्वम्। ततो हेतुमति णिच्। 'अर्तिह्री°' (पा. सू. ७. ३. ३६) इत्यादिना धातोः पुगागमः। तत्र हि लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापितं 'शाच्छासाह्वाव्या°[1]' इति कृतात्वानां निर्देशेन। स हि युक्प्राप्तिख्यापनार्थः। यदि तत्र लक्षणप्रतिपदोक्तपरिभाषया पुक् न प्राप्नोति[2] सोऽनर्थकः स्यात्। तस्मात् अध्यापयति इत्यादाविव धापयेते इत्यत्रापि पुगागमः सिद्धः। 'निगरणचलनार्थेभ्यश्च' (पा. सू. १. ३. ८७) इति प्राप्तस्य परस्मैपदस्य 'पादिषु धेट उपसंख्यानम्' (पा. सू. १. ३. ८९. १) इति प्रतिषेधात् आत्मनेपदम्। हरिः। 'हृञ् हरणे'। औणादिकः इन्प्रत्ययः। 'ञ्नित्यादि-र्नित्यम्' इत्याद्युदात्तत्वम्। भवति। 'एकान्याभ्यां समर्थाभ्याम्' (पा. सू. ८. १. ६५) इति प्रथमायाः तिङ्विभक्तेः[3] निघातप्रतिषेधः। ददृशे। दृशेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट्। सुवर्चाः। शोभनं वर्चस्तेजो यस्य। 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम्॥

**दशे॒मं त्वष्टु॑र्जनयन्त॒ गर्भ॒मत॑न्द्रासो युव॒तयो॒ विभृ॑त्रम्।**
**ति॒ग्मानी॑कं॒ स्वय॑शसं॒ जने॑षु वि॒रोच॑मानं॒ परि॑ षीं नयन्ति॥ २॥**

दश॑। इ॒मम्। त्वष्टुः॑। ज॒न॒य॒न्त॒। गर्भ॑म्। अत॑न्द्रासः। यु॒व॒तयः॑। विऽभृ॑त्रम्।
ति॒ग्मऽअ॑नीकम्। स्वऽय॑शसम्। जने॑षु। वि॒ऽरोच॑मानम्। परि॑। सी॒म्। न॒य॒न्ति॒॥ २॥

ᵛअतन्द्रासः स्वकार्ये जगतः पोषणेऽनलसाः आलस्यरहिताः जागरूका इत्यर्थः। ᵛयुवतयः नित्यतरुण्यः जरामरणरहिता इत्यर्थः। एवंभूताः ᵛदश प्राच्याद्या दशसंख्याकाः दिशः ᵛगर्भं मेघेषु गर्भरूपेणान्तर्वर्तमानं ᵛत्वष्टुः दीप्तात् मध्यमात् वायोः सकाशात् ᵛजनयन्त वैद्युतमग्निम्[4] उत्पादयन्ति। यद्वा दशसंख्याका अङ्गुलयस्त्वष्टुर्दीप्तस्य वायोः गर्भं स्वकारणभूते वायौ गर्भरूपेण वर्तमानम्। अग्नेर्हि वायुः कारणं 'वायोरग्निः' (तै. आ. ८. १) इति श्रुतेः। एवंभूतम् ᵛइमम् अग्निम् अरण्योः सकाशात् जनयन्त उत्पादयन्ति। कीदृश्योऽङ्गुलयः। अतन्द्रासः पुनःपुनः कर्मकरणे आलस्यरहिताः। युवतयः अपृथक्कृत्य वर्तमानाः। एकस्मिन्पाणौ संहत्यावस्थिता इत्यर्थः। कीदृशमग्निम्। ᵛविभृत्रं सर्वेषु भूतेषु विहृतम्। जाठररूपेण विभज्य वर्तमानमित्यर्थः। ᵛतिग्मानीकं तीक्ष्णमुखं तीक्ष्णतेजसम्। अत एव हि वैद्युताग्निदर्शने दृष्टिः प्रतिहन्यते। ᵛस्वयशसं स्वायत्तयशस्कम्। अतिशयेन यशस्विन-मित्यर्थः। ᵛजनेषु जनपदेषु सर्वदेशेषु[5] ᵛविरोचमानं विशेषेण दीप्यमानम्। बहूनामुपकारकमित्यर्थः। एवंभूतं ᵛसीम् एनमग्निं ᵛपरि परितः सर्वतः ᵛनयन्ति स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति॥ त्वष्टुः। 'त्विष दीप्तौ'। 'नप्तृनेष्टृत्वष्टृ°' (उ. सू. २. २५२) इत्यादिना उणादिषु तृनन्तः[6] निपातितः। अतो नित्त्वादाद्युदात्तत्वम्। विभृत्रम्। 'हृञ् हरणे'। अस्मात् कर्मणि निष्ठा।

---

१. ट.ठ–शाच्छासाह्वा°। २. क्ष-स–प्राप्येत। ३. क्ष-ट-ठ-स–अस्यास्तिङ्विभक्तेः। ४. क्ष-ट-ठ-न-स–'वैद्युतमग्निम्' नास्ति। ५. क्ष-न-स–सर्वेषु देशेषु। ६. क्ष-स–तृन्नन्तः।

छान्दसो रेफोपजनः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । ' हृग्रहोर्भः° ' इति भत्वम् । यद्वा औणादिकः क्रूप्रत्ययः । तिग्मानीकम् । ' तिज निशाने ' । ' युजिरुचितिजां कुत्वं च ' ( उ. सू. १. १४३ )इति मक् । ' अन प्राणने ' । ' अनिदशिभ्यां च ' इति कीकन् । तिग्मं तीक्ष्णमनीकं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । परि षीम् । ' पूर्वपदात् ' इति षत्वम् ॥

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।

पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥ ३ ॥

त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु ।

पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ॥३॥

ᵛअस्य अग्नेः ᵛत्रीणि त्रिसंख्याकानि ᵛजाना जननानि जन्मानि ᵛपरि ᵛभूषन्ति परितः सर्वतोऽलंकुर्वन्ति । यद्वा परीत्येष समित्येतस्य स्थाने । अस्याग्नेस्त्रीणि जन्मानि संभवन्ति । ᵛसमुद्रे अब्धौ वडवानलरूपेण ᵛएकं जन्म । ᵛदिवि द्युलोके आदित्यात्मना ᵛएकम् । ᵛअप्सु । आपः इति अन्तरिक्षनाम । अन्तरिक्षे वैद्युताग्निरूपेणैकम् । एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तते इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः[1] ᵛऋतून् वसन्ताद्यान् षडृतून् ᵛप्रशासत् प्रकर्षेण विभक्ततया ज्ञापयन् ᵛपार्थिवानां पृथिव्याः संबन्धिनां सर्वेषां प्राणिनां ᵛपूर्वां प्राचीं ᵛप्र ᵛदिशं प्रकृष्टां ककुभम् । ᵛअनुष्ठु इत्येतदव्ययं सम्यक्शब्दसमानार्थं सुष्ठ्विति यथा । सम्यगनुक्रमेण ᵛवि ᵛदधौ कृतवान् । स्वतो भेदरहितयोरखण्डयोर्दिक्कालयोः प्राच्यादिभेदो वसन्तादिभेदश्च सूर्यगत्या निष्पाद्यते[2] । अतः सूर्य एव तयोः कर्तेत्यर्थः ॥ जाना । ' जनी प्रादुर्भावे ' । घञ्[3] । ' कर्षात्वतः° ' इत्यन्तोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । भूषन्ति । ' भूष अलंकारे ' । भौवादिकः । यद्वा । भवतेर्लेटि[4] ' सिब्बहुलं लेटि ' इति सिप् । आगमानुशासनस्यानित्यत्वात् इडभावः, संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावश्च । दिवि । अप्सु । उभयत्र ' ऊडिदम्° ' इति विभक्तेः उदात्तत्वम् । पार्थिवानाम् । ' पृथिव्या ञाञौ ' इति प्राग्दीव्यतीयः अञ्प्रत्ययः । प्रशासत् । ' शासु अनुशिष्टौ ' । अस्मात् लटः शतृ । ' जक्षित्यादयः षट् ' इति अभ्यस्तसंज्ञायां ' नाभ्यस्ताच्छतुः ' इति नुम्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अनुष्ठु । ' अपदुःसुषु स्थः ' ( उ. सू. १. २५ ) इति विधीयमानः कुप्रत्ययो बहुलवचनात् तिष्ठतेरनुपूर्वादपि भवति ॥

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।

बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥ ४ ॥

कः । इमम् । वः । निण्यम् । आ । चिकेत । वत्सः । मातॄः । जनयत । स्वधाभिः ।

बह्वीनाम् । गर्भः । अपसाम् । उपऽस्थात् । महान् । कविः । निः । चरति । स्वधाऽवान् ॥४॥

---

१. क्ष-ट-ठ-' सोऽग्निः ' नास्ति । २. क्ष-निष्पद्यते । ३. क्ष-न-स-भावे घञ् । ४. क्ष-भवतेरेव ।

हे ऋत्विग्यजमानाः ᵛनिण्यं निर्णीतम् । अन्तर्हितनामैतत् । अब्धादिषु गर्भरूपेणान्तर्हितम् । तथा च मन्त्रान्तरम्–' गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्' ( ऋ. सं. १. ७०. २ ) इति । एवंभूतम् ᵛइमम् अग्निं ᵛवः युष्माकं मध्ये ᵛकः ᵛआ ᵛचिकेत को जानाति । न कोऽपीत्यर्थः । सोऽयमग्निः ᵛवत्सः मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् ᵛमातॄः तस्य[1] मातृस्थानीयानि वृष्ट्युदकानि ᵛस्वधाभिः हविर्लक्षणैरन्नैः ᵛजनयत उत्पादयति । तथा च स्मर्यते–' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' ( मनु. ३. ७६ ) इति । अपि च ᵛबह्वीनां मेघस्थानामपां ᵛगर्भः वैद्युतरूपेण गर्भस्थानीयः सोऽग्निः ᵛअपसामुपस्थात्[2] समुद्रात् ᵛनिश्चरति औपसाग्निरूपेणादित्यः सन्निर्गच्छति । कीदृशः । ᵛमहान् तेजसा प्रौढः ᵛकविः क्रान्तदर्शी ᵛस्वधावान् हविर्लक्षणान्नवान् । एक एवाग्निर्होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना औपसरूपेण आदित्यात्मना च विभज्य वर्तते इत्यर्थः ॥ चिकेत । ' कित ज्ञाने ' । छान्दसो लिट् । जनयत । ' जनीजृष्क्नसुरञ्जोऽमन्ताश्च ' इति मित्त्वात् ' मितां ह्रस्वः ' इति ह्रस्वत्वम् । पूर्ववत् छान्दसो लङ् । बह्वीनाम् । ' नित्यं छन्दसि ' ( पा. सू. ४. १. ४६ ) इति बहुशब्दात् ङीष् । ' ङ्याश्छन्दसि बहुलम् ' ( पा. सू. ६. १. १७८ ) इति नाम उदात्तत्वम् । अपसाम् । ' आप्लृ व्याप्तौ ' । ' आपः कर्माख्यायां ह्रस्वो नुट् च वा ' ( उ. सू. ४. ६४७ ) इति बहुलवचनादकर्माख्यायामपि आप्नोतेः असिप्रत्ययः[3] ह्रस्वश्च । उपस्थात् । उपतिष्ठन्त्यापोऽत्र इत्युपस्थः । ' आतश्चोपसर्गे ' इति ' कृत्यल्युटो बहुलम् ' इति बहुलवचनात् अधिकरणे कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।
उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥ ५ ॥

आविःऽत्यः । वर्धते । चारुः । आसु । जिह्मानाम् । ऊर्ध्वः । स्वऽयशाः । उपऽस्थे ।
उभे इति । त्वष्टुः । बिभ्यतुः । जायमानात् । प्रतीची इति । सिंहम् । प्रति । जोषयेते इति ॥५॥

ᵛआसु मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः ᵛचारुः शोभनदीप्तिः सन् ᵛआविष्ट्यो ᵛवर्धते आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति । किं कुर्वन् । ᵛजिह्मानां कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् ᵛउपस्थे उत्सङ्गे ᵛस्वयशाः स्वायत्तयशस्कोऽग्निः ᵛऊर्ध्वः ऊर्ध्वज्वलनः सन् । स्वकारणभूतास्वप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः । तदुक्तं वैशेषिकैः—' अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम्[4] अणुमनसोराद्यं कर्मेत्यदृष्टकारितानि ' इति । अपि च ᵛउभे द्यावापृथिव्यौ ᵛत्वष्टुः दीप्तात् ᵛजायमानात् उत्पद्यमानात्तस्मादग्नेः ᵛबिभ्यतुः भयं प्रापतुः । तदनन्तरमुत्पन्नं ᵛसिंहं सहनशीलमभिभवनशीलं तमग्निं ᵛप्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ ᵛजोषयेते सेवेते । यास्कस्त्वाह–' आविरावेदनात्तत्त्यो वर्धते चारुरासु चारु चरतेर्जिह्मं जिहीतेरूर्ध्वं उच्छ्रितो भवति स्वयशा आत्मयशा उपस्थ उपस्थान उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वापि चैते प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते '

---

१. क्ष-ट-ठ-स–स्वस्य । २. क्ष-स–अपसामुपस्थात् अपामुपस्थानात् । ३. क्ष-ट-ठ–असिन् प्रत्ययः । ४. स–वायोस्तिर्यग्गमनम् ।

(निरु. ८. १५ ) इति॥ आविष्ट्यः । आविःशब्दात् '°छन्दसि ' ( पा. सू. ४. २. १०४. १ ) इति शैषिकस्त्यप् । 'ह्रस्वात्तादौ तद्धिते ' ( पा. सू. ८. ३. १०१ ) इति षत्वम् । आसु । ' इदमोऽन्वादेशे° ' इति अशादेशोऽनुदात्तः, विभक्तिश्च सुप्त्वादनुदात्ता इति सर्वानुदात्तत्वम् । न च ' ऊडिदम्° ' इति विभक्तेरुदात्तत्वं शङ्कनीयम् । अन्तोदात्तादिदंशब्दाद्धि तद्विधीयते । प्रतीची । प्रतिपूर्वात् अञ्चतेः ' ऋत्विक्° ' इत्यादिना क्विन् । ' अनिदिताम्° ' इति नलोपः । ' अञ्चतेश्चोपसंख्यानम् ' इति ङीप् । ' अचः ' इति अकारलोपे ' चौ ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घः । जोषयेते । ' जुषी प्रीतिसेवनयोः ' । स्वार्थे णिच् ॥ ॥ ५ ॥

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।
स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥ ६ ॥

उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः ।
सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥ ६ ॥

उभे अहश्च रात्रिश्च । यद्वा उभे द्यावापृथिव्यौ । अरणी वा । भद्रे भजनीये शोभनाङ्ग्यौ मेने स्त्रियौ जोषयेते न सेवेते इव । यथा शोभने स्त्रियौ चामरहस्ते राजानमुभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निमुभयतः सेवेते इत्यर्थः । अपि च वाश्राः हम्भारवं कुर्वत्यः गावो न गावो यथा एवैः स्वकीयैश्चरित्रैरादरातिशयेन स्वकीयान् वत्सान् उप तस्थुः संगच्छन्ते तथेममग्निं द्यावापृथिव्यौ उपस्थिते भवतः । पूर्वं सेवनमात्रमुक्तम्[1] इदानीं पुनः[2] गोनिदर्शनेन तत्रैवादरातिशयो द्योत्यते[3]। अतः सः अग्निः दक्षाणां सर्वेषां बलानां दक्षपतिः बलाधिपतिः बभूव आसीत् । बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः । यम् अग्निं दक्षिणतः आहवनीयस्य दक्षिणभागे अवस्थिताः[4] ऋत्विजः हविर्भिः चरुपुरोडाशादिभिः अञ्जन्ति आर्द्रीकुर्वन्ति तर्पयन्ति सोऽग्निरिति पूर्वेणान्वयः ॥ वाश्राः । ' वाशृ शब्दे ' । ' स्फायितञ्चि° ' इत्यादिना रक् । एवैः । ' इण् गतौ ' ' इण्शीङ्भ्यां वन् ' इति भावे वन्प्रत्ययः ॥

उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन् ।
उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ ७ ॥

उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् ।
उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ ७ ॥

---

१. क्ष-ट-ठ-स–सेवामात्रमुक्तम् । २. क्ष-ट-ठ-न-स–' पुनः ' नास्ति । ३. क्ष-ट-ठ-स–' द्योत्यते ' इत्यस्यानन्तरम् ' यद्वा । शब्दयुक्ता गाव इव तमग्निम् ऋत्विजो मन्त्रैरुपास्थितवन्त इत्यर्थः ' इत्यधिकम् । ४. क्ष-ट-ठ–स्थिताः ।

ᵛसवितेव सर्वस्य प्रेरकः आदित्यो यथा ᵛबाहू बाहुस्थानीयान् रश्मीनुद्गमयति तथायमौपसोऽग्निः स्वकीयानि तेजांसि ᵛउद्यंयमीति भृशमुद्यतान्यूर्ध्वाभिमुखानि करोति। तदनन्तरं ᵛभीमः सर्वेषां भयंकरोऽग्निः ᵛउभे ᵛसिचौ उभे द्यावापृथिव्यौ ᵛऋञ्जन् प्रसाधयन् स्वतेजसालंकुर्वन् ᵛयतते स्वव्यापारे प्रयतते[1]। तदनन्तरं ᵛसिमस्मात् सर्वस्माद्भूतजातात् ᵛशुक्रं दीप्तम् ᵛअत्कं सारभूतं रसम् ᵛउत् ᵛअजते रश्मिभिरूर्ध्वमादत्ते। अपि च ᵛमातृभ्यः स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् ᵛनवा नवानि प्रत्यग्राणि ᵛवसना सर्वस्य जगतः आच्छादकानि तेजांसि ᵛजहाति उद्गमयति ॥ यंयमीति। 'यम उपरमे'। अस्मात् यङ्लुकि 'नुगतोऽनुनासिकान्तस्य' (पा. सू. ७. ४. ८५) इति अभ्यासस्य नुगागमः। एतच्चानुस्वारोपलक्षणार्थम्। सिचौ। 'षिचिर् क्षरणे'। सिञ्चतः फलेन संयोजयतः इति सिचौ द्यावापृथिव्यौ। 'क्विप् च' इति क्विप्। यतते। 'यती प्रयत्ने'। अत्कम्। 'अत सातत्यगमने'। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ. सू. ३. ३२३) इति कन्[2]। नित्त्वादाद्युदात्तत्वम्। सिमस्मात्[3]। सिमशब्दः सर्वशब्दपर्यायः। नवा वसना। उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। जहाति। 'ओहाक् त्यागे'। जौहोत्यादिकः॥

त्वे॒षं रू॒पं कृ॑णुत॒ उत्त॑रं॒ यत्सं॑पृञ्चा॒नः सद॑ने॒ गोभि॑र॒द्भिः।

क॒विर्बु॒ध्नं परि॑ मर्मृज्यते॒ धीः सा दे॒वता॑ता॒ समि॑तिर्बभूव ॥ ८ ॥

त्वे॒षम्। रू॒पम्। कृ॒णु॒ते॒। उ॒त्ऽत॑रम्। यत्। स॒म्ऽपृ॒ञ्चा॒नः। सद॑ने। गोभिः॑। अ॒त्ऽभिः॑।

क॒विः। बु॒ध्नम्। परि॑। म॒र्मृ॒ज्य॒ते॒। धीः। सा। दे॒वऽता॑ता। स॒म्ऽइ॑तिः। ब॒भू॒व॒ ॥ ८ ॥

ᵛसदने अन्तरिक्षे ᵛगोभिः गन्त्रीभिः ᵛअद्भिः मेघस्थाभिः[4] सह ᵛसंपृञ्चानः वैद्युतरूपेण संयुक्तः[5] सन् ᵛत्वेषं दीप्तं सर्वैर्द्रष्टुमशक्यम् ᵛउत्तरम् उत्कृष्टतरं ᵛरूपं वैद्युतं प्रकाशं ᵛयत् यदा ᵛकृणुते करोति तदानीं ᵛकविः क्रान्तदर्शी ᵛधीः सर्वेषां धारकः सोऽग्निः ᵛबुध्नं सर्वस्योदकस्य मूलभूतमन्तरिक्षं ᵛपरि ᵛमर्मृज्यते परितो मार्ष्टि स्वतेजसाच्छादयति। तस्याग्नेः ᵛसा ᵛदेवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती ᵛसमितिर्बभूव तेजसां संहतिर्भवति॥ संपृञ्चानः। 'पृची संपर्के'। रौधादिकः। अस्मात् लटः शानच्। 'श्नसोरल्लोपः' इति अकारलोपः। सीदन्त्यस्मिन् गन्धर्वादय इति सदनमन्तरिक्षम्। अधिकरणे ल्युट्। मर्मृज्यते। 'मृजूष् शुद्धौ'। अस्मात् यङि 'मर्मृज्यते मर्मृज्यमानास उपसंख्यानम्' (पा. सू. ७. ४. ९१. १) इति निपातनात् अभ्यासस्य रुगागमः। देवताता। देवेन तता देवताता। तनोतेः कर्मणि निष्ठा। 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः। व्यत्ययेन आत्वम्। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्॥

---

१. क्ष-ट-ठ-प्रवर्तते। २. क्ष-स-कन्प्रत्ययः। ३. क्ष-न-स-'सिमस्मात्' नास्ति। ४. क्ष-ट-ठ-मेघस्थाभिरद्भिः। ५. क्ष-संपृक्तः।

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ ९ ॥

उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम ।
विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ ९ ॥

ᐯमहिषस्य महतः ᐯते तव ᐯज्रयः राक्षसादीनामभिभावुकं[1] ᐯविरोचमानं विशेषेण दीप्यमानम् ᐯउरु विस्तीर्णं ᐯधाम तेजः ᐯबुध्नम् अपां मूलभूतमन्तरिक्षं ᐯपर्येति परितो व्याप्नोति । हे ᐯअग्ने ᐯइद्धः अस्माभिः प्रज्वलितः सन् ᐯविश्वेभिः सर्वैः ᐯस्वयशोभिः स्वकीयैरात्मीयैस्तेजोभिः ᐯअस्मान् ᐯपाहि रक्ष । कीदृशैः । ᐯअदब्धेभिः राक्षसादिभिरहिंसितैः ᐯपायुभिः पालनशक्तैः ॥ ज्रयः । ' जि ज्रि अभिभवे ' । असुन् । अदब्धेभिः । ' दम्भु दम्भे ' । निष्ठायां ' यस्य विभाषा ' इति इट्प्रतिषेधः । ' अनिदिताम्° ' इति नलोपः । ' झषस्तथोर्धोऽधः ' इति धत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ' बहुलं छन्दसि ' इति भिस ऐसभावः ॥

धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।
विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥ १० ॥

धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् ।
विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ॥ १० ॥

ᐯधन्वन्[2] नभसि ᐯगातुं गमनशीलम् ᐯऊर्मिम् उदकसंघम् अयमग्निः ᐯस्रोतः ᐯकृणुते स्रोतसा प्रवाहरूपेण युक्तं करोति । ᐯशुक्रैः निर्मलैः ᐯऊर्मिभिः तैर्जलसंघैः ᐯक्षां भूमिम् ᐯअभि ᐯनक्षति अभिव्याप्नोति । स्वतेजोभिरन्तरिक्षे जलसंघमुत्पाद्य तेन सर्वां भूमिमभिवर्षतीत्यर्थः । पश्चात् ᐯविश्वा सर्वाणि ᐯसनानि । अन्ननामैतत् । सर्वाण्यन्नानि ᐯजठरेषु ᐯधत्ते अवस्थापयति । तदर्थं ᐯनवासु वृष्ट्यनन्तरमुत्पन्नासु ᐯप्रसूषु सर्वेषामन्नानां प्रसवित्रीष्वोषधीषु पाकार्थम् ᐯअन्तः ᐯचरति मध्ये वर्तते । अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते ॥ धन्वन् । ' रिवि रवि धवि गत्यर्थाः ' । इदित्त्वात् नुम् । ' कनिन्युवृषि° ' इत्यादिना कनिन् । ' सुपां सुलुक्° ' इति सप्तम्या[3] लुक्[3] । ' धन्वान्तरिक्षं धन्वन्त्यस्मादापः ' ( निरु. ५. ५ ) इति यास्कः । नित्त्वात् आद्युदात्तत्वम् । गातुम् । ' गाङ् गतौ ' । ' कमिमनिजनि° ' इत्यादिना तुप्रत्ययः । ऊर्मिम् । ' अर्तेरू च ' इति मिप्रत्ययः । नक्षति । ' नक्ष गतौ ' ॥

---

१. क्ष-ट-ठ-स–राक्षसानामभिभावकम् । २. च-फ–धन्वन् धन्वनि । ३. ट-ठ–सप्तम्येकवचनस्य लुक् ।

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥

एव। नः। अग्ने। सम्ऽइधा। वृधानः। रेवत्। पावक। श्रवसे। वि। भाहि।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥११॥

हे पावक शोधक अग्ने समिधा अस्माभिर्दत्तेन समिदादिद्रव्येण एव एवमुक्तप्रकारेण वृधानः वर्धमानः सन् रेवत् रयिमते धनयुक्ताय नः अस्माकं श्रवसे अन्नाय वि भाहि विशेषेण दीप्यस्व। अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः। नः अस्माकं तत् अन्नं मित्रादयः ममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः। उतशब्दः समुच्चये। पृथिवी च द्यौश्चेत्यर्थः॥ एव। 'निपातस्य च' इति संहितायां दीर्घः। वृधानः। वृधेः अन्तर्भावितण्यर्थात् ताच्छीलिकः चानश्। 'बहुलं छन्दसि' इति शपो लुक्। चानशः सार्वधातुकत्वेन ङित्त्वात् लघूपधगुणाभावः। लसार्वधातुकत्वाभावेनानुदात्तत्वाभावे[1] चित्स्वर एव शिष्यते। रेवत्। रयिशब्दात् मतुप्। 'रयेर्मतौ बहुलम्' इति संप्रसारणम्। 'छन्दसीरः' इति मतुपो वत्वम्। 'रेशब्दाच्च' (का. ६. १. १७६. १) इति मतुप उदात्तत्वम्। 'सुपां सुलुक्' इति चतुर्थ्या लुक्॥ ॥ २ ॥

'स प्रत्नथा' इति नवर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभम्। द्रविणोदस्त्वगुणविशिष्टोऽग्निः शुद्धाग्निर्वा देवता। तथा चानुक्रान्तम्—'स प्रत्नथा नव द्रविणोदसः' इति। प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः। व्यूढस्य दशरात्रस्य षष्ठेऽहन्याग्निमारुते इदं सूक्तं जातवेदस्यनिविद्धानम्। 'व्यूळहश्चेत्' इति खण्डे सूत्रितं—'स प्रत्नथेत्याग्निमारुतम्' (आश्व. श्रौ. ८. ८) इति। 'स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कम्' (ऐ. ब्रा. ५. १५) इत्यादि ब्राह्मणम्। महापितृयज्ञे स्विष्टकृत्स्थानीयस्य कव्यवाहनस्य 'स प्रत्नथा' इत्येषा याज्या। 'दक्षिणाग्नेः' इति खण्डे सूत्रितं—'स प्रत्नथा सहसा जायमान इत्यग्निः स्विष्टकृत्कव्यवाहनः' (आश्व. श्रौ. २. १९) इति॥

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा।
आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम् ॥ १ ॥

सः। प्रत्नऽथा। सहसा। जायमानः। सद्यः। काव्यानि। बट्। अधत्त। विश्वा।
आपः। च। मित्रम्। धिषणा। च। साधन्। देवाः। अग्निम्। धारयन्। द्रविणःऽदाम् ॥१॥

सहसा बलेन जायमानः निर्मथनेनोत्पद्यमानः[2] सः अग्निः सद्यः तदानीमुत्पत्त्यनन्तरमेव प्रत्नथा प्रत्न इव चिरंतन इव विश्वा विश्वानि सर्वाणि काव्यानि कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि बट् सत्यम् अधत्त अधारयत्। पूर्वं विद्यमान इवाग्निरुत्पत्तिसमकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः। इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिताः आपश्च धिषणा

---

१. क्ष—लसार्वधातुकत्वाभावेन तास्यनुदात्तेत् इति लसार्वधातुकानुदात्तत्वाभावे। २. स—निर्मन्थनेनोत्पद्यमानः।

च या माध्यमिका वाक् सा च मित्रं सखिभूतं साधन् साधयन्ति कुर्वन्ति । तमिमं द्रविणोदां द्रविणस्य धनस्य दातारम् अग्निं देवाः ऋत्विजः धारयन् गार्हपत्यादिरूपेण धारयन्ति । यद्वा । देवा एवेन्द्रादय इममग्निं द्रविणोदां हविर्लक्षणस्य धनस्य दातारं कृत्वा दूत्ये धारयन् धारयन्ति ॥ प्रत्नथा । ' प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ' इति इवार्थे थाल्प्रत्ययः । काव्यानि । कवेः[1] कर्म काव्यम्[1] । ' गुणवचनब्राह्मणादिभ्यः° ' इति ष्यञ् । ञित्वादाद्युदात्तत्वम् । साधन् । ' षिधु संराद्धौ ' । णौ[2] ' सिध्यतेरपारलौकिके ' ( पा. सू. ६. १. ४९ ) इति आत्वम् । लेटि अडागमः । ' इतश्च लोपः° ' इति इकारलोपः । ' छन्दस्युभयथा ' इति शपः आर्धधातुकत्वात् ' णेरनिटि ' इति णिलोपः । द्रविणोदाम् । द्रविणानि ददातीति द्रविणोदाः । ' द्रु गतौ ' । ' द्रुदक्षिभ्यामिनन् ' । छान्दसः पूर्वपदस्य सुक् । ' अन्येभ्योऽपि दृश्यन्ते ' इति ददातेः विच् । सकारान्तं त्वसुनि कृते निष्पद्यते ॥

स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।
विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्रविणोदाम् ॥ २ ॥

सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनाम् ।
विवस्वता । चक्षसा । द्याम् । अपः । च । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥२॥

सः अग्निः पूर्वया प्रथमया ' अग्निर्देवेद्धः ' इत्यादिकया निविदा कव्यता गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता आयोः मनोः संबन्धिनोक्थेन च स्तूयमानः सोऽग्निः मनूनां संबन्धिनीः इमाः प्रजाः अजनयत् उदपादयत् । मनुना स्तुतः सन् मानवीः सर्वाः प्रजा अजनयदित्यर्थः । तथा[3] विवस्वता विवासनवता विशेषेणाच्छादयता चक्षसा आत्मीयेन तेजसा द्यां द्युलोकम् अपश्च अन्तरिक्षं च व्याप्नोतीति शेषः । अन्यत् समानम् ॥ कव्यता । ' कु शब्दे ' । ' अचो यत् ' इति भावे यत् । कव्यं कवनं स्तुतिं करोति । ' तत्करोति° ' ( पा. सू. ३. १. २६. ५ ) इति णिच् । तदन्तात् क्विप् । ' बहुलमन्यत्रापि संज्ञाच्छन्दसोः ' इति णिलुक् । ततस्तुक् । धातुस्वरेणान्तोदात्तत्वम् । आयोः । ' इण् गतौ ' । ' छन्दसीणः ' इति उण्प्रत्ययः ॥

तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम् ।
ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदाम् ॥ ३ ॥

तम् । ईळत । प्रथमम् । यज्ञऽसाधम् । विशः । आरीः । आऽहुतम् । ऋञ्जसानम् ।
ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदानुम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ३ ॥

हे विशः सर्वे मनुष्याः आरीः अग्निं स्वामिनं गच्छन्त्यो यूयं तम् अग्निम् ईळत स्तुध्वम् । कीदृशम् । प्रथमं सर्वेषु देवेषु मुख्यं यज्ञसाधं यज्ञस्य दर्शपूर्णमासादेः साधकं निष्पादकं आहुतं हविर्भिस्तर्पितं ऋञ्जसानं स्तोत्रैः प्रसाध्यमानं ऊर्जः अन्नस्य पुत्रम् । भुक्तेनान्नेन जाठराग्नेर्वर्धनात्

१. क्ष-ट-ठ–कवेः कर्माणि । २. क्ष-स–णिचि । ३. क्ष-ट-ठ–' तथा ' नास्ति; स–तथा च ।

अग्नेरन्नपुत्रत्वम् । ᵛभरतं हविषो भर्तारम् । यद्वा । प्राणरूपेण सर्वासां प्रजानां भर्तारम् । श्रूयते च–' स्वदेहे[1] वा एष प्राणो भूत्वा प्रजा बिभर्ति तस्मादेष भरतः ' इति । ᵛसृप्रदानुं सर्पणशीलदानयुक्तम् । अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः । देवाः इत्यादि गतम् ॥ ईळत । ' ईड स्तुतौ ' । लोटि व्यत्ययेन परस्मैपदम् । ' बहुलं छन्दसि ' इति शपो लुगभावः । यज्ञसाधम् । यज्ञं साधयतीति यज्ञसाध् । साधयतेः क्विप् । ' णेरनिटि ' इति णिलोपः । आरीः । ' ऋ गतौ ' । ' सूचिसूत्रि° ' ( पा. म. ३. १. २२. ३ ) इत्यादिना यङ् । ' यङोऽचि च ' इति चशब्देन बहुलग्रहणानुकर्षणात् अनैमित्तिको लुक् । प्रत्ययलक्षणेन द्विर्भावे उरदत्वहलादिशेषौ । ' रुग्रिकौ च लुकि ' इति रुक् । यङ्लुगन्तात् औणादिकः क्रिप्रत्ययः । यणादेशे ' रो रि ' इति रेफलोपः । ' ढ्रलोपे पूर्वस्य° ' इति दीर्घत्वम् । ' कृदिकारादक्तिनः ' इति ङीष् । जसि ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । व्यत्ययेन आद्युदात्तत्वम् । ऋञ्जसानम् । ऋञ्जतिः प्रसाधनकर्मा । ' ऋञ्जिवृधिमन्दिसहिभ्यः कित् ' ( उ. सू. २. २४४ ) इति कर्मणि असानच् । भरतम् । ' भृञ् भरणे ' । ' भृमृदृशि° ' इत्यादिना अतच् । सृप्रदानुम् । सृप्लृ गतौ ' । ' स्फायितञ्चि° ' इत्यादिना रक् । सृप्रो दानुर्दानं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

स मा॒त॒रिश्वा॑ पुरु॒वार॑पुष्टिर्वि॒दद्गा॒तुं तन॑याय स्व॒र्वित् ।
वि॒शां गो॒पा ज॑नि॒ता रोद॑स्यो॒र्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ४ ॥

सः । मा॒त॒रिश्वा॑ । पु॒रु॒वार॑ऽपुष्टिः । वि॒दत् । गा॒तुम् । तन॑याय । स्वः॒ऽवित् ।
वि॒शाम् । गो॒पाः । ज॒नि॒ता । रोद॑स्योः । दे॒वाः । अ॒ग्निम् । धा॒र॒यन् । द्र॒वि॒णः॒ऽदाम् ॥ ४ ॥

ᵛसः अग्निः ᵛतनयाय अस्मदीयाय पुत्राय ᵛगातुम् अनुष्ठानमार्गं ᵛविदत् लम्भयतु । कीदृशः । ᵛमातरिश्वा मातरि सर्वस्य जगतो निर्मातरि अन्तरिक्षे श्वसन् वर्तमानः ᵛपुरुवारपुष्टिः । पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । ᵛस्वर्वित् स्वः स्वर्गस्य यागद्वारेण लम्भयिता ᵛविशां सर्वासां प्रजानां ᵛगोपाः गोपायिता रक्षिता ᵛरोदस्योः द्यावापृथिव्योः ᵛजनिता जनयितोत्पादयिता । देवाः इत्यादि गतम् ॥ मातरिश्वा । ' श्वन्नुक्षन्° ' इत्यादौ मातृशब्दोपपदात् ' श्वस प्राणने ' इत्यस्मात् कनिन्प्रत्ययान्तो निपात्यते । विदत् । ' विदॢ लाभे ' । अस्मात् अन्तर्भावितण्यर्थात् छान्दसो लुङ् । ऌदित्वात् च्लेः अङादेशः । पादादित्वात् निघाताभावः । जनिता[2] । ' जनिता मन्त्रे ' ( पा. सू. ६. ४. ५३ ) इति तृचि णिलोपो निपात्यते ॥

नक्तो॒षासा॒ वर्ण॑मा॒मेम्या॑ने धा॒पये॑ते॒ शिशु॒मेकं॑ स॒मीची॑ ।
द्यावा॒क्षामा॑ रु॒क्मो अ॒न्तर्वि भा॑ति दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ५ ॥

नक्तो॒षसा॑ । वर्ण॑म् । आ॒मेम्या॑ने॒ इत्या॒ऽमेम्या॑ने । धा॒पये॑ते॒ इति॑ ।
शिशु॑म् । एक॑म् । स॒मीची॒ इति॑ स॒म्ऽई॒ची ।
द्यावा॒क्षामा॑ । रु॒क्मः । अ॒न्तः । वि । भा॒ति॒ । दे॒वाः । अ॒ग्निम् । धा॒र॒यन् । द्र॒वि॒णः॒ऽदाम् ॥५॥

---

१. क्ष-ख-शश्वदिह । २. क्ष-ट-ठ-जनिता ।' जनी प्रादुर्भावे ।

ᵛनक्तोषासा रात्रिरहश्च ᵛवर्णं स्वकीयं स्वरूपम्[1] ᵛआमेम्याने परस्परं पुनःपुनर्हिंसन्त्यौ ᵛसमीची संगते संश्लिष्टे एवंभूते अहस्त्रियामे ᵛएकं ᵛशिशुम् अह्नः पुत्रमग्निं ᵛधापयेते हवींषि पाययेते। ᵛरुक्मः रोचमानः सोऽग्निः ᵛद्यावाक्षामा द्यावापृथिव्योः ᵛअन्तः मध्ये ᵛवि ᵛभाति विशेषेण प्रकाशते।अन्यत् पूर्ववत्॥ नक्तोषसा[2]। नक्ता इति रात्रिनाम। नक्ता उषाश्च नक्तोषसा। 'सुपां सुलुक्°' इति विभक्तेः आकारः। 'अन्येषामपि°' इति सांहितिकमुपधादीर्घत्वम्[3]। 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम्। आमेम्याने। 'मीङ् हिंसायाम्'। अस्मात् यङ्लुगन्तात् व्यत्ययेन शानच्। 'अदादिवच्च' इति वचनात् शपो लुक्। 'एरनेकाचः°' इति यण्। 'अभ्यस्तानामादिः' इति आद्युदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। धापयेते। 'धेट् पाने'। अस्मात् ण्यन्तात् 'निगरणचलन°' (पा. सू. १. ३. ८७) इति प्राप्तस्य परस्मैपदस्य 'पादिषु धेट उपसंख्यानम्' (पा. सू. १. ३. ८९. १) इति वचनात् 'न पादम्याङ्यम°' (पा. सू. १. ३. ८९) इति प्रतिषेधः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते। पादादित्वात् निघाताभावः। समीची। संपूर्वात् अञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन्। 'अनिदिताम्°' इति नलोपः। 'समः समि' (पा. सू. ६. ३. ९३) इति सम्यादेशः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण[4] ङीप उदात्तत्वम्[4]। पदकारस्य त्वयमभिप्रायः। 'उद ईत्' (पा. सू. ६. ४. १३९) इति विधीयमानम् ईत्वं सम उत्तरस्याप्यञ्चतेर्व्यत्ययेन भवतीति। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। द्यावाक्षामा। 'दिवो द्यावा' इति द्यावादेशः। 'सुपां सुलुक्°' इति षष्ठ्याः डादेशः। 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्॥ ॥३॥

रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः।
अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदाम्॥ ६॥

रायः। बुध्नः। सम्ऽगमनः। वसूनाम्। यज्ञस्य। केतुः। मन्मऽसाधनः। वेरिति वेः।
अमृतऽत्वम्। रक्षमाणासः। एनम्। देवाः। अग्निम्। धारयन्। द्रविणःऽदाम्॥ ६॥

योऽग्निः ᵛरायः धनस्य ᵛबुध्नः मूलभूतः। आहुतिद्वारा सर्वेषां धनानां कारणत्वात्। ᵛवसूनां निवासहेतूनां[5] धनानां ᵛसंगमनः संगमयिता स्तोतॄणां प्रापयिता ᵛयज्ञस्य दर्शपूर्णमासादेः ᵛकेतुः केतयिता ज्ञापयिता ᵛवेः आत्मानमभिगच्छतः पुरुषस्य ᵛमन्मसाधनः मननीयस्याभिलषितस्य साधयिता ᵛअमृतत्वं स्वकीयामरणत्वं[6] ᵛरक्षमाणासः पालयन्तः ᵛदेवाः ᵛएनं धनस्य दातारम् ᵛअग्निं धारयन्ति॥ रायः। 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम्। संगमनः। नन्द्यादिलक्षणो ल्युः। वेः। वी गत्यादिषु। अस्मात् औणादिकः इप्रत्ययः टिलोपश्च॥

---

१. क्ष-स—रूपम्। २. क्ष-ट-ठ-स—नक्तोषासा। ३. क्ष-ट-ठ—सांहितिक उपधादीर्घः। ४. क्ष-ट-ठ—'उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्' नास्ति। ५. क्ष-ट-ठ-स—'निवासहेतूनाम्' नास्ति। ६. क्ष-ट-ठ—स्वकीयममरणधर्मत्वम्; न-स—'स्वकीयामरणत्वम्' नास्ति।

नू च॑ पुरा च॒ सद॑नं रयी॒णां जा॒तस्य॑ च जा॒यमानस्य च॒ क्षाम् ।
स॒तश्च॑ गो॒पां भव॑तश्च॒ भूरे॑र्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ७ ॥

नु । च॒ । पु॒रा । च॒ । सद॑नम् । र॒यी॒णाम् । जा॒तस्य॑ । च॒ । जाय॑मानस्य । च॒ । क्षाम् ।
स॒तः । च॒ । गो॒पाम् । भव॑तः । च॒ । भूरे॑ः । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥७॥

नू च इति निपातसमुदायः अद्य इत्यस्यार्थे । 'नू चिदिति निपातः पुराणनवयोर्नू च' ( निरु. ४.१७ ) इति यास्कः । ᵛनू ᵛच अद्य अस्मिन्काले ᵛपुरा[1] ᵛच ᵛरयीणां सर्वेषां धनानां ᵛसदनम् आवासस्थानं ᵛजातस्य उत्पन्नस्य कार्यजातस्य ᵛजायमानस्य उत्पद्यमानस्य ᵛच ᵛक्षां निवासयितारं ᵛसतश्च सर्वत्र[2] विद्यमानस्वभावस्य नित्यस्य चाकाशादेः ᵛभवतश्च सद्भावं प्राप्नुवतः ᵛभूरेः असंख्यातस्य अन्यस्य च भूतजातस्य ᵛगोपां गोपायितारं रक्षितारं ᵛद्रविणोदां धनप्रदं एवंगुणविशिष्टम् ᵛअग्निं ᵛदेवाः ᵛधारयन् हविर्वोढृत्वेन धारयन्ति ॥ नू च । 'ऋचि तुनुघ°' इति दीर्घः । रयीणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । क्षाम् । 'क्षि निवासगत्योः' । अस्मात् णिच् । वृद्ध्यायादेशौ । ण्यन्तात् क्विप् । 'णेरनिटि' इति णिलोपः । 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं 'लोपो व्योर्वलि' इति यलोपः । न च णिलोपस्य स्थानिवत्त्वं, 'न पदान्तद्विर्वचनवरेयलोप°' इति प्रतिषेधात् । यद्वा । 'क्षै जै षै क्षये' । अस्मात् क्विप् । 'आदेचः-' इति आत्वम् । सतः । अस्तेः शतरि अदादित्वात् शपो लुक् । 'श्नसोरल्लोपः' इति अकारलोपः । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् ॥

द्र॒वि॒णो॒दा द्रवि॑णसस्तु॒रस्य॑ द्रविणो॒दाः सन॑रस्य॒ प्र यं॑सत् ।
द्र॒वि॒णो॒दा वी॒रव॑ती॒मिषं॑ नो द्रविणो॒दा रा॑सते दी॒र्घमायु॑ः ॥ ८ ॥

द्र॒वि॒णः॒ऽदाः । द्रवि॑णसः । तु॒रस्य॑ । द्र॒वि॒णः॒ऽदाः । सन॑रस्य । प्र । यं॒स॒त् ।
द्र॒वि॒णः॒ऽदाः । वी॒रऽव॑तीम् । इष॑म् । नः॒ । द्र॒वि॒णः॒ऽदाः । रा॒स॒ते॒ । दी॒र्घम् । आयु॑ः ॥ ८ ॥

ᵛद्रविणोदाः द्रविणस्य धनस्य बलस्य वा दाता अग्निः ᵛतुरस्य त्वरमाणस्य चलतो जङ्गमस्य ᵛद्रविणसः धनस्य बलस्य वा एकदेशं ᵛप्र ᵛयंसत् अस्मभ्यं प्रयच्छतु । तथा ᵛद्रविणोदाः ᵛसनरस्य सननीयस्य संभजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु । अपि च ᵛद्रविणोदाः ᵛवीरवतीं वीरैः पुत्रादिभिः युक्तम्[3] ᵛइषम्[3] अन्नं ᵛनः अस्मभ्यं प्रयच्छतु । तथा ᵛद्रविणोदाः ᵛदीर्घमायुः अस्मभ्यं ᵛरासते प्रयच्छतु ॥ तुरस्य । 'तुर त्वरणे' । इगुपधलक्षणः कः । सनरस्य । 'वन षण संभक्तौ' । 'कृदरादयश्च' ( उ. सू. ५. ७१९ ) इति अरन्प्रत्ययः । यंसत् । 'यम उपरमे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । रासते । 'रा दाने' । पूर्ववत् लेटि सिप् । व्यत्ययेन आत्मनेपदम् ॥

---

१. क्ष-स—पुरा अतीतकाले । २. क्ष-न-स—सर्वदा । ३. क्ष—युक्ताम् इषम् ।

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९॥

व्याख्यातेयं पूर्वसूक्ते। अक्षरार्थस्तु। हे शोधक ᵛअग्ने एवमस्माभिर्दत्तेन समिदादिद्रव्येण ᵛवृधानः[१] वर्धमानः सन् ᵛनः अस्माकं धनयुक्तायान्नाय विशेषेण प्रकाशस्व । अस्माकं ᵛतत् अन्नं मित्रादयः ᵛममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः । तथा ᵛसिन्धुः अब्देवता द्यावापृथिव्यौ च ममहन्ताम् ॥४॥

'अप नः' इति अष्टर्चं चतुर्थं सूक्तं कुत्सस्यार्षं गायत्रम्। शुचिगुणकोऽग्निः[२] शुद्धोऽग्निर्वा देवता[२]। तथा चानुक्रान्तम्–'अप नोऽष्टौ शुचये गायत्रम्' इति । विनियोगो लैङ्गिकः । अत्रेदमाख्यानम् । दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवदत् अनुचितमिदं त्वया चरितं यस्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । तमृषिं शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् । तथा च ताण्डकम्–'दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञानवलिह्यचरत् तामिन्द्रः कया चन मायया हन्तुं नाशंसत् अथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीत्' (ता. १३. ६. ९) इत्यादि । तस्मादेतत्सूक्तं शुगपनयनाय विनियोज्यम् । अत एव हि सूत्रकारेण भारद्वाजेन दशमेऽहनि कर्तव्ये शान्तिकर्मणि यजुर्वेदे पठितमेतत्सूक्तं विनियुज्यते –'नव[३] च स्रुवाहुतीरप[३] नः शोशुचदघम्' इति ॥

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचदघम् ॥ १ ॥

अप । नः । शोशुचत् । अघम् । अग्ने । शुशुग्धि । आ । रयिम् ।
अप । नः । शोशुचत् । अघम् ॥ १ ॥

हे ᵛअग्ने ᵛनः अस्माकम् ᵛअघं पापम् ᵛअप ᵛशोशुचत् अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु । यद्वा । अस्मदीयं पापं शोशुचत् शोकग्रस्तं[४] सद्विनश्यतु । अपि चास्माकं ᵛरयिं धनम् ᵛआ समन्तात् ᵛशुशुग्धि प्रकाशय । उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते। अवश्यमस्माकमघं विनश्यत्विति ॥ शोशुचत् । 'शुच शोके'। अस्मात् यङ्लुगन्तात् लेटि अडागमः । 'अदादिवच्च' इति वचनात् शपो लुक् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अघं शोशुचच्च रयिं शुशुग्धि चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । शुशुग्धि । 'शुच दीप्तौ'। लोटि 'बहुलं छन्दसि' इति शपः श्लुः । 'हुझल्भ्यो हेर्धिः'। 'चोः कुः' इति कुत्वम् ॥

---

१. क्ष-ट-ठ–'वृधानः' नास्ति । २. ट-ठ–शुचिगुणयुक्तोऽग्निः शुद्धाग्निर्वा देवता; न–शुचिगुणकोऽग्निर्देवता; क्ष–शुचित्वगुणयुक्तोऽग्निः शुद्धाग्निर्वा देवता । ३. क्ष-ट-ठ–अथ चतस्र आहुतीरप । ४. क्ष-ट-ठ–शोकव्यस्तम् ।

सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ॥ २ ॥

सुऽक्षेत्रिया । सुगातुऽया । वसुऽया । च । यजामहे । अप । नः । शोशुचत् । अघम् ॥ २ ॥

सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूया च[1] धनेच्छया निमित्तभूतया च यजामहे अग्निं हविर्भिः पूजयामः । यद्वा सुक्षेत्रिया देवयजनलक्षणशोभनदेशसंबन्धिना हविषा[2] अग्निं[3] यजामहे । नः अस्माकम् अघम्[4] अप[5] शोशुचत् विनश्यतु ॥ सुक्षेत्रिया । शोभनं क्षेत्रं सुक्षेत्रम् । तद्विषयेच्छा सुक्षेत्रिया । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । व्यत्ययेन इत्वम् । क्यजन्तात् 'अ प्रत्ययात्' इति भावे अकारप्रत्ययः । ततः टाप् । 'सुपां सुलुक्' इति तृतीयाया लुक् । एवमुत्तरत्रापि । यद्वा । शोभनं क्षेत्रमस्यास्तीति सुक्षेत्रम् । 'इयाडियाजीकाराणामुपसंख्यानम्' ( पा. सू. ७. १. ३९. १ ) इति तृतीयाया डियाजादेशः[6] ॥

प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥ ३ ॥

प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघम् ॥ ३ ॥

यत् यथा एषां स्तोतॄणां मध्येऽयं कुत्सः प्र भन्दिष्ठः प्रकर्षेण स्तोतृतमः एवम् अस्माकासः आस्माकीनाः सूरयः स्तोतारः च प्रकर्षेण स्तोतृतमा भवन्ति[7] । अन्यत् समानम् ॥ भन्दिष्ठः । भन्दतिः स्तुतिकर्मा । 'भदि कल्याणे सुखे च' इति तु[8] धातुः । अस्मात् तृजन्तात् 'तुश्छन्दसि' इति इष्ठन् । 'तुरिष्ठेमेयःसु' इति तृलोपः । अस्माकासः । अस्माकं संबन्धिनः आस्माकाः । 'तस्मिन्नणि च युष्माकास्माकौ' ( पा. सू. ४. ३. २ ) इति अस्माकादेशः । छान्दसोऽण्प्रत्ययस्य[9] लोपः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः[9] । 'आज्जसेरसुक्' । स्थानिवदादेशेऽपि मकारात् परस्य आकारस्य उदात्तत्वम् । यद्वा । षष्ठीबहुवचनेऽस्माकंशब्दस्य मध्योदात्तस्य दृष्टत्वात् स एव आचार्येण[10] अतिदिश्यते ॥

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ ४ ॥

प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम् । अप । नः । शोशुचत् । अघम् ॥ ४ ॥

हे अग्ने यत् यस्मात् ते तव सूरयः स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेण बहुविधा भवन्ति ततः वयं च ते तव स्तोतारः सन्तः प्र जायेमहि पुत्रपौत्रादिभिरुपेता भवेम ॥ जायेमहि । प्रार्थनायां लिङ् । श्यनि 'ज्ञाजनोर्जा' इति जादेशः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥

---

१. क्ष-न-स–'च' नास्ति । २. क्ष-ट-ठ–'हविषा' नास्ति । ३. स–आ । ४. क्ष-ट-ठ-स–अघं पापम् । ५. क्ष-ट-ठ-स–'अप' नास्ति । ६. क्ष-ट-ठ–इयाजादेशः । ७. क्ष-ट-ठ–भवन्ति इति । ८. क्ष-स–'तु' नास्ति । ९. क्ष-ट-ठ-स–छान्दसोऽण्प्रत्ययस्य लुक् । अत एव वृद्ध्यभावः; न–छान्दसोऽण्प्रत्ययस्य लोपः । आगमानुशासनस्यानित्यत्वात् वृद्ध्यभावः । १०. क्ष-ट-ठ–प्रायेण ।

प्र यद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑ भा॒नवः॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ५ ॥

प्र । यत् । अ॒ग्नेः । सह॑स्वतः । वि॒श्वतः॑ । यन्ति॑ । भा॒नवः॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥५॥

Vसहस्वतः सहनवतः शत्रूनभिभवतः Vअग्नेः Vभानवः दीप्तयः Vविश्वतः सर्वतः सर्वस्मादपि प्रदेशात् Vप्र Vयन्ति प्रकर्षेणोद्गच्छन्ति । Vयत् यस्मादेवं तस्मात्तेनाग्नितेजसा अस्मदीयम्[1] Vअघं नश्यतु ॥ यन्ति । ' इणो यण् ' ( पा. सू. ६. ४. ८१ ) इति यणादेशः ॥

त्वं हि वि॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसि॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥

त्वम् । हि । वि॒श्व॒तः॒ऽमु॒ख॒ । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥६॥

हे[2] अग्ने Vत्वं Vहि त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे Vविश्वतोमुख अग्ने Vविश्वतः सर्वतः सर्वस्मादप्युपद्रवजातात् Vपरिभूरसि अस्माकं परिग्रहीता भव । रक्षको भवेत्यर्थः । अन्यत् समानम्[2] ॥

द्विषो॑ नो विश्वतोमु॒खाति॑ ना॒वेव॑ पारय । अप॑ नः॒ शोशु॑चद॒घम् ॥ ७ ॥

द्विषः॑ । नः॒ । वि॒श्व॒तः॒ऽमु॒ख॒ । अति॑ । ना॒वाऽइ॑व । पा॒र॒य॒ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥७॥

हे Vविश्वतोमुख सर्वतोमुखाग्ने Vनावेव नावा नदीमिव Vद्विषः शत्रून् Vनः अस्मान् Vअति Vपारय अतिक्रमय्य[3] शत्रुरहितं प्रदेशं प्रापय ॥ नावेव । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । पारय । ' पार तीर कर्मसमाप्तौ ' ॥

स नः॒ सिन्धु॑मिव ना॒वयाति॑ पर्षा स्व॒स्तये॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ८ ॥

सः । नः॒ । सिन्धु॑म्ऽइव । ना॒वया॑ । अति॑ । प॒र्ष॒ । स्व॒स्तये॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥८॥

पूर्वोक्त एवार्थः पुनरपि दार्ढ्याय प्रार्थ्यते । हे अग्ने Vसः त्वं Vनः अस्मान् Vनावया नावा Vसिन्धुमिव नदीमिव Vस्वस्तये क्षेमार्थम् Vअति Vपर्ष शत्रून् अतिक्रमय्य[4] पालय । शत्रुरहितं प्रदेशम्[5] अस्मान् प्रापयेत्यर्थः । त्वत्प्रसादात् Vनः अस्माकम् Vअघं पापं[6] च Vअप Vशोशुचत् अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु[6] ॥ नावया । ' आङ्याजयारां चोपसंख्यानम् ' ( पा. म. ७. १. ३९. १ ) इति तृतीयाया अयारादेशः । ' उपोत्तमं रिति ' ( पा. सू. ६. १. २१७ ) इति अकारस्य उदात्तत्वम् ।

---

१. क्ष-ट-ठ—अस्माकम् । २. क्ष-ट-ठ— ' हे अग्ने त्वं हि......अन्यत्समानम् ' इत्यस्य स्थाने हे विश्वतोमुख सर्वतो व्याप्तज्वालाग्ने त्वं हि त्वमेव विश्वतः सर्वतः सर्वस्मादप्युपद्रवजातात् परिभूरसि अस्माकं परिग्रहीतासि भव रक्षको भवेत्यर्थः । अन्यत् समानम् । ३. क्ष—अतिक्रम्य । ४. क्ष-ट-ठ—अतिक्रम्य । ५. क्ष-स—देशम् । ६. क्ष-ट-ठ—पापमप शोशुचत् अस्मत्तोऽतिक्रम्य शोकयुक्ते ( क्ष—अन्यत्र शोकयुक्ते ) भवतु ।

पर्ष । ' पृ पालनपूरणयोः ' । लेटि ' बहुलं छन्दसि ' इति शपः श्लोरभावः । ' सिब्बहुलं लेटि ' इति बहुलवचनात् सिप् । गुणः । ' द्व्यचोऽतस्तिङः ' इति दीर्घत्वम् ॥ ॥ ५ ॥

' वैश्वानरस्य ' इति तृचं पञ्चमं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निः[1] शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्–' वैश्वानरस्य तृचं वैश्वानरीयम् ' इति । व्यूढस्य चतुर्थेऽहन्याग्निमारुते इदं सूक्तं वैश्वानरीयनिविद्धानम् । ' व्यूळ्हश्चेत् ' इति खण्डे सूत्रितम्–' वैश्वानरस्य सुमतौ क ईं व्यक्ताः ' ( आश्व. श्रौ. ८. ८ ) इति ॥

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १ ॥

वैश्वानरस्य । सुऽमतौ । स्याम । राजा । हि । कम् । भुवनानाम् । अभिऽश्रीः ।
इतः । जातः । विश्वम् । इदम् । वि । चष्टे । वैश्वानरः । यतते । सूर्येण ॥ १ ॥

वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन[2] स्वामित्वेन वा संबन्धिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम अनुग्राह्यत्वेन वर्तमाना भवेम । हि कम् इत्येतत् हिशब्दार्थे । स हि वैश्वानरः अभिश्रीः अभिश्रयणीयः आभिमुख्येन सेवितव्यः[3] सन् भुवनानां सर्वेषां भूतजातानां राजा स्वामी भवति । यः[4] वैश्वानरः अग्निः इतः[4] अस्मादरणिद्वयात् जातमात्रः एव इदं सर्वं जगत् वि चष्टे विशेषेण पश्यति प्रातरुद्यता सूर्येण च यतते संयतते संगच्छते । ' उद्यन्तं वावादित्यमग्निरनुसमारोहति ' ( तै. ब्रा. २. १. २. १० ) इति तैत्तिरीयकम् । यद्वा । पार्थिवस्याग्नेस्तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति । तयोः संगमनं दृष्ट्वा ' वैश्वानरो यतते सूर्येण ' इति ऋषिर्ब्रूते । तथा च यास्कः–' अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसंगं दृष्ट्वैवमवक्ष्यत् ' ( निरु. ७. २३ ) इति । एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति संबन्धः ॥ वैश्वानरस्य । विश्वेषां नराणां संबन्धी । ' नरे संज्ञायाम् ' ( पा. सू. ६. ३. १२९ ) इति पूर्वपदस्य दीर्घत्वम् । ' तस्येदम् ' इति अण् । सुमतौ । शोभना मतिः सुमतिः । ' तादौ च° ' इति गतेः प्रकृतिस्वरे प्राप्ते ' मन्क्तिन्° ' इत्यादिना उत्तरपदान्तोदात्तत्वम् । ननु तत्र ' कारकात् ' इत्यनुवृत्तेर्गतेरुत्तरस्य क्तिनो न प्राप्नोति । एवं तर्हि मतिर्मननम् । भावे क्तिन् । शोभनं मननं यस्यां बुद्धौ सा सुमतिः । ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । चष्टे । ' चक्षिङ् व्यक्तायां वाचि ' । अयं पश्यतिकर्मा च । अदादित्वात् शपो लुक् । ' स्कोः संयोगाद्योः° ' इति कलोपः । यतते । ' यती प्रयत्ने ' ॥

चातुर्मास्यान्वारम्भणीया वैश्वानरपार्जन्या । तस्यां वैश्वानरस्य हविषः ' पृष्टो दिवि ' इति याज्या । ' चातुर्मास्यानि ' इति खण्डे सूत्रितं—' पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत ' ( आश्व. श्रौ. २. १५ ) इति ॥

---

१. क्ष-ट-ठ–वैश्वानरगुणविशिष्टोऽग्निः । २. क्ष-ट-ठ–लोकानां वा नेतृत्वेन । ३. क्ष-ट-ठ–सेवनीयः । ४. क्ष-ट-ठ–वैश्वानर इतः ।

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥ २ ॥

पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ।
वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥२॥

अयं वैश्वानरः ᵛअग्निः ᵛदिवि द्युलोके आदित्यात्मना ᵛपृष्टः संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते । तथा ᵛपृथिव्यां भूमौ गार्हपत्यादिरूपेण ᵛपृष्टः संस्पृष्टो निहितो वा । तथा ᵛविश्वाः सर्वाः ᵛओषधीः ᵛपृष्टः संस्पृष्टः सः अग्निः ᵛआ ᵛविवेश पाकार्थमन्तः प्रविष्टवान् । अन्तःप्रविष्टेन पार्थिवेनाग्निना[1] हि[1] सर्वा ओषधयः पच्यन्ते । ᵛसहसा परेषामसाधारणेन बलेन ᵛपृष्टः संस्पृष्टः वैश्वानरः[2] ᵛनः अस्मान् ᵛदिवा अह्नि ᵛरिषः हिंसतः शत्रोः ᵛपातु रक्षतु । तथा ᵛसः वैश्वानरः ᵛनक्तं रात्रावप्यस्मान् हिंसकात् पातु ॥ पृष्टः । 'स्पृश संस्पर्शने'। छान्दसः सकारलोपः । यद्वा । 'पृषु सेचने'। निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । दिवि । 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् । पृथिव्याम् । 'उदात्तयणः०' इति विभक्तिरुदात्ता । रिषः । 'रिष हिंसायाम्' । 'क्विप् च' इति क्विप् । 'सावेकाचः०' इति पञ्चम्या उदात्तत्वम् ॥

वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचन्ताम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ३ ॥

वैश्वानर । तव । तत् । सत्यम् । अस्तु । अस्मान् । रायः । मघऽवानः । सचन्ताम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥३॥

हे ᵛवैश्वानर ᵛतव ᵛतत् त्वदीयं तत् अस्माभिः क्रियमाणं कर्म ᵛसत्यमस्तु अवितथफलं भवतु । ततः ᵛअस्मान् ᵛमघवानः मघवन्तः[3] धनवन्तः ᵛरायः धनवद्दतिप्रियाः[4] पुत्राः ᵛसचन्तां सेवन्ताम् । एवं यदस्माभिः प्रार्थितं ᵛनः अस्मदीयं ᵛतत् ᵛमित्रः अहरभिमानी देवः ᵛवरुणः राज्यभिमानी ᵛअदितिः अदीना देवमाता ᵛसिन्धुः स्यन्दनशीलोदकाभिमानी देवः । उतशब्दः समुच्चये । एते सर्वे मित्रादयः ᵛममहन्तां पूजयन्ताम् पालयन्तामित्यर्थः ॥ ॥ ६ ॥

'जातवेदसे' इति एकर्चं षष्ठं सूक्तं मरीचिपुत्रस्य कश्यपस्यार्षं त्रैष्टुभम् । जातवेदोगुणकोऽग्निः[5] शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्–'जातवेदस एका जातवेदस्यमेतदादीन्येकभूयांसि सूक्तसहस्रमेतत्तु कश्यपार्षम्' इति । अहर्गणेषु द्वितीयादिष्वहःस्वाग्निमारुते जातवेदस्यनिविद्धानात् पूर्वमेषा शंसनीया । सूत्रितं च–'जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानाम्' ( आश्व. श्रौ. ७. १ ) इति ॥

---

१. क्ष-ट-ठ–हि पार्थिवाग्निना । २. क्ष-ट-ठ-स– स वैश्वानरः । ३. क्ष-ट-ठ-न-स–'मघवन्तः' नास्ति । ४. क्ष-ट-ठ–धनदानप्रियाः । ५. क्ष-ट-ठ–जातवेदगुणविशिष्टोऽग्निः ।

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥

जातऽवेदसे । सुनवाम । सोमम् । अरातिऽयतः । नि । दहाति । वेदः ।
सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । नावाऽइव । सिन्धुम् । दुःऽइता । अति । अग्निः ॥ १ ॥

जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वा अग्नये लतारूपं सोमं सुनवाम अभिषुणुयाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सः अग्निः अरातीयतः अरातिं शत्रुमिवास्मानाचरतः शत्रोः वेदः धनं नि दहाति नितरां दहतु भस्मीकरोतु । अपि च सः अग्निः नः अस्मान् विश्वा विश्वानि सर्वाणि दुर्गाणि दुर्गमनानि भोक्तुमशक्यानि दुःखानि अति पर्षत् अतिपारयतु अतिक्रमय्य[1] दुःखरहितं[2] सुखं प्रापयतु । तत्र दृष्टान्तः । नावेव सिन्धुम् । यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा दुरिता दुरितानि दुःखहेतुभूतानि पापानि अस्मान् अग्निः अति पारयतु । दुःखनिमित्तात् पापादपि अस्मानुत्तारयत्वित्यर्थः । अत्र निरुक्तं–'जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा जातप्रज्ञो वा यत्तज्जातःपशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणम्' ( निरु. ७. १९ ) इत्यादि ॥ जातवेदसे । जातानि वेत्तीति जातवेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् कारकपूर्वात् वेत्तेरसुन् पूर्वपदप्रकृतिस्वरत्वं च । अरातीयतः । न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः । तमिव अस्मानाचरति । 'उपमानादाचारे' ( पा. सू. ३. १. १० ) इति उपमानभूतात् कर्मणः क्यच् । क्यजन्तात् लटः शतृ । 'शतुरनुमः°' इति ङसः उदात्तत्वम् । दहाति । 'दह भस्मीकरणे' । लेटि आडागमः । विद्यते लभ्यते इति वेदः धनम् । 'विद्ऌ लाभे' । औणादिकः कर्मणि असुन् । पर्षत् । 'पॄ पालनपूरणयोः' । अस्मात् अन्तर्भावितण्यर्थात् लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । दुर्गाणि । दुःखेन गम्यते एष्विति 'सुदुरोरधिकरणे' इति गमेः डः ॥　　॥ ७ ॥

'स यो वृषा' इति एकोनविंशत्यृचं सप्तमं सूक्तम् । अत्रानुक्रम्यते–'स यो वृषैकोना वार्षागिरा ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसः' इति । वृषागिरो महाराजस्य पुत्रभूताः ऋज्राश्वादयः पञ्च राजर्षयः सह इदं सूक्तं ददृशुः । अतस्तेऽस्य[3] सूक्तस्य ऋषयः[3] । उक्तं ह्यार्षानुक्रमण्याम्–'सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः । नियुक्ता[4] नामधेयैः स्वैरपि चैतस्यदित्यृचि' इति । अनादेशपरिभाषया त्रिष्टुप् । इन्द्रो देवता । दशरात्रस्य षष्ठेऽहनि मरुत्वतीये इदं सूक्तम् । तथा च सूत्रितं–'यं त्वं रथमिन्द्र स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्' ( आश्व. श्रौ. ८. १ ) इति ॥

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥ १ ॥

सः । यः । वृषा । वृष्ण्येभिः । सम्ऽओकाः । महः । दिवः । पृथिव्याः । च । सम्ऽराट् ।
सतीनऽसत्वा । हव्यः । भरेषु । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १ ॥

---

१. क्ष-ट-ठ–अतिक्रम्य । २. ट-ठ–दुरितम् । ३. ट-ठ–' अतस्तेऽस्य सूक्तस्य ऋषयः ' नास्ति ।
४. क्ष-ट-ठ–निरुक्ता ।

vयः इन्द्रः vवृषा कामानां वर्षिता vवृष्ण्येभिः वृष्णि भवैर्वीर्यैः vसमोकाः सम्यक् समवेतः संगतः vमहः महतः vदिवः द्युलोकस्य vपृथिव्याः प्रथितायाः भूमेः vच vसम्राट् ईश्वरः vसतीनसत्वा। सतीनम् इति उदकनाम। उदकस्य सत्वा सादयिता गमयिता vभरेषु[1] संग्रामेषु vहव्यः सर्वैः स्तोतृभिराह्वातव्यः एवंभूतः vमरुत्वान् मरुद्भिर्युक्तः vसः vइन्द्रः vनः अस्माकम् vऊती ऊतये रक्षणाय vभवतु॥ वृष्ण्येभिः। वृषन्शब्दात् 'भवे छन्दसि' इति यत्। 'अल्लोपोऽनः' इति अकारलोपः। 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न भवति। महः। 'मह पूजायाम्'। क्विप्। यद्वा। महच्छब्दे अच्छब्दलोपः। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। सम्राट्। 'मो राजि समः क्वौ' (पा. सू. ८. ३. २५) इति राजतौ क्विबन्ते उत्तरपदे समो मकारस्य मकारादेशः। मकारस्य च मकारवचनमनुस्वारबाधनार्थम्। सतीनसत्वा। 'षद्लृ विशरणगत्यवसादनेषु'। मेघेषु निषीदतीति सतीनं वृष्ट्युदकम्। औणादिकः ईनप्रत्ययस्तकारान्तादेशश्च। यद्वा। सती[2] माध्यमिका वाक्। सा इना ईश्वरा यस्य तत्सतीनम्। व्यत्ययेन पुंवद्भावाभावः। तत्सत्वा[3]। सदेः अन्तर्भावितण्यर्थात् 'प्र ईरसद्योस्तुट् च' (उ. सू. ४. ५५६) इति औणादिको वनिप् तुडागमश्च। मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। मरुत्वान्। 'झयः' इति मतुपो वत्वम्। ऊती। 'ऊतियूति°' इत्यादिना क्तिनः उदात्तत्वम्। 'सुपां सुलुक्°' इति चतुर्थ्याः पूर्वसवर्णदीर्घः॥

**यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति।**
**वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती॥ २॥**

यस्य। अनाप्तः। सूर्यस्यऽइव। यामः। भरेऽभरे। वृत्रऽहा। शुष्मः। अस्ति।
वृषन्ऽतमः। सखिऽभिः। स्वेभिः। एवैः। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥ २॥

vयस्य इन्द्रस्य vयामः गतिः vअनाप्तः परैरप्राप्ता vसूर्यस्येव। यथा सूर्यस्य गतिरन्यैर्न प्राप्तुं शक्यते तद्वत्। vस्वेभिः आत्मीयैः vएवैः गमनशीलैः vसखिभिः मित्रभूतैर्मरुद्भिः सह vवृषन्तमः अतिशयेन कामानां वर्षिता vभरेभरे सर्वेषु संग्रामेषु vवृत्रहा शत्रूणां हन्ता vशुष्मः सर्वेषामसुराणां शोषकः एवंभूतो यः इन्द्रः vअस्ति विद्यते सः vमरुत्वान् vइन्द्रः vनः अस्माकं रक्षणाय vभवतु॥ यामः। 'या प्रापणे'। 'अर्तिस्तुसु°' इत्यादिना भावे मन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। शुष्मः। 'शुष शोषणे'। 'अविसिविसिशुषिभ्यः कित्' (उ. सू. १. १४१) इति मन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। अस्ति। यद्वृत्तयोगादनिघातः। वृषन्तमः। वृषन्शब्दादुत्तरस्य तमपो 'नाद्घस्य' (पा. सू. ८. २. १७) इति नुट्। एवैः। 'इण् गतौ'। "इण्शीङ्भ्यां वन्'॥

**दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः।**
**तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती॥ ३॥**

दिवः। न। यस्य। रेतसः। दुघानाः। पन्थासः। यन्ति। शवसा। अपरिऽइताः।
तरत्ऽद्वेषाः। ससहिः। पौंस्येभिः। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥ ३॥

---

१. क्ष-ट-ठ—भरेषु हवेषु। २. क्ष-ट-ठ—सती नाम। ३. क्ष-ट-ठ—तस्य सत्वा।

ᵛयस्य इन्द्रस्य ᵛपन्थासः रश्मयः ᵛरेतसः वृष्टयुदकानि ᵛदुघानाः दुहन्तः प्रवर्षन्तः ᵛयन्ति निर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति । तत्र दृष्टान्तः । ᵛदिवो ᵛन । यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तः नभःस्थलान्निर्गच्छन्ति तद्वत् । कीदृशा रश्मयः । ᵛशवसा बलेन सहिताः ᵛअपरीताः परैरनभिगताः[1] दुष्प्रापा इत्यर्थः । सोऽयम् इन्द्रः ᵛतरद्द्वेषाः द्वेषांसि शत्रूंस्तरन् जितशत्रुक इत्यर्थः । ᵛपौंस्येभिः बलैः[2] ᵛससहिः शत्रूणामभिभविता एवंभूतः ᵛमरुत्वान् ᵛइन्द्रः ᵛनः अस्माकं रक्षणाय ᵛभवतु ॥ रेतसः । रेत इति उदकनाम । रीयते गच्छतीति रेतः । 'री गतिरेषणयोः' । 'स्रुरीभ्यां तुट् च' ( उ. सू. ४. ६४१ ) इति असुन् तुडागमश्च । शसो व्यत्ययेन ङसादेशः । दुघानाः । 'दुह प्रपूरणे' । कर्तरि लटः शानच् । अदादित्वात् शपो लुक् । व्यत्ययेन घत्वम् । वृषादेराकृतिगणत्वात् आद्युदात्तत्वम् । पन्थासः । पतन्तीति पन्थानो रश्मयः । 'पतेस्थ[3] च' ( उ. सू. ४. ४५२ ) इति इनिप्रत्ययस्थकारान्तादेशश्च । जसि 'पथिमथ्यृभुक्षामात्' इति व्यत्ययेन आत्वम् । 'आज्जसेरसुक्' । यद्वा । पन्थान इत्यत्र वर्णव्यापत्त्या नकारस्य सकारः । 'पथिमथोः सर्वनामस्थाने' इति आद्युदात्तत्वम् । ससहिः । 'षह अभिभवे' । 'उत्सर्गश्छन्दसि' इति वचनात् 'आदृगमहन॰' इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनम् ॥

**सो अङ्गिरोभिरङ्गिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।**
**ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥ ४ ॥**

सः । अङ्गिरःऽभिः । अङ्गिरःऽतमः । भूत् । वृषा । वृषऽभिः । सखिऽभिः । सखा । सन् ।
ऋग्मिऽभिः । ऋग्मी । गातुऽभिः । ज्येष्ठः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ४ ॥

ᵛसः इन्द्रः ᵛअङ्गिरोभिः । अङ्गन्ति गच्छन्तीति अङ्गिरसो गन्तारः । तेभ्योऽपि ᵛअङ्गिरस्तमः ᵛभूत् अतिशयेन गन्ता भवति । ᵛवृषभिः ᵛवृषा वर्षितृभ्योऽप्यतिशयेन वर्षिता ᵛसखिभिः समानख्यानेभ्यो मित्रभूतेभ्योऽपि ᵛसखा अतिशयेन हितकारी एवंभूतः ᵛसन् ᵛऋग्मिभिः अर्चनीयेभ्योऽपि ᵛऋग्मी अर्चनीयो भवति । ᵛगातुभिः गातव्येभ्यः स्तोतव्येभ्योऽपि ᵛज्येष्ठः अतिशयेन स्तोतव्यः एवंगुणविशिष्टः ᵛमरुत्वान् ᵛइन्द्रः रक्षणाय ᵛभवतु ॥ अङ्गिरोभिः । 'अगि रगि लगि गत्यर्थाः' । अङ्गिरा अप्सराः ( उ. सू. ४. ६७५-६७६ ) इति औणादिकः असुन्प्रत्ययो निपात्यते । इदमादिषु सर्वत्र पञ्चम्यर्थे तृतीया । ऋग्मिभिः । 'ऋच स्तुतौ' । संपदादिलक्षणो भावे क्विप् । मत्वर्थीयो मिनिः । पदत्वात् कुत्वं जश्त्वं च । गातुभिः । 'गा स्तुतौ' । 'कमिमनिजनि॰' इत्यादिना कर्मणि तुप्रत्ययः ॥

**स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।**
**सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ५ ॥**

सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् ।
सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ५ ॥

---

१. क्ष-ट-ठ–परैरनभिभूताः । २. क्ष-ट-ठ–बलैः सहितः । ३. क्ष-न–पतस्थ ।

ᵛसूनुभिर्न पुत्रैरिव ᵛरुद्रेभिः रुद्रपुत्रैर्मरुद्भिर्युक्तः ᵛऋभ्वा महान् एवंभूतः ᵛसः इन्द्रः ᵛनृषाह्ये नृभिः पुरुषैः सोढव्ये संग्रामे ᵛअमित्रान् शत्रून् ᵛससह्वान् अभिभूतवान् । अपि च ᵛसनीळेभिः समाननिलयैर्मरुद्भिः सह ᵛश्रवस्यानि । श्रव इत्यन्ननाम । तद्धेतुभूतान्युदकानि ᵛतूर्वन् मेघात् प्रच्यावयन् ᵛमरुत्वान् ᵛइन्द्रः अस्माकं रक्षणाय ᵛभवतु ॥ नृषाह्ये । ‘ षह मर्षणे ’ । ‘ शकिसहोश्च ’ ( पा. सू. ३. १. ९९ ) इति कर्मणि यत् । ‘ अन्येषामपि दृश्यते ’ इति संहितायां धात्वकारस्य दीर्घत्वम् । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । ससह्वान् । ‘ षह अभिभवे ’। लिटः क्वसुः । अभ्यासदीर्घत्वं छान्दसम् । अमित्रान् । मित्राणि एषु न सन्तीति अमित्राः । ‘ नञो जरमरमित्रमृताः ’ इत्युत्तरपदाद्युदात्तत्वम् । सनीळेभिः । समानं नीळं येषां ते सनीळाः । ‘ समानस्य च्छन्दसी ’ इति सभावः ॥ ॥ ८ ॥

स म॒न्यु॒मीः स॒मद॑नस्य क॒र्ताऽस्माके॑भि॒र्नृभि॒ः सूर्यं॑ सनत् ।
अ॒स्मिन्नह॒न्त्सत्प॑तिः पुरुहू॒तो म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥ ९ ॥

सः । म॒न्यु॒ऽमीः । स॒ऽमद॑नस्य । क॒र्ता । अ॒स्माके॑भिः । नृऽभि॑ः । सूर्य॑म् । स॒न॒त् ।
अ॒स्मिन् । अह॑न् । सत्ऽप॑तिः । पु॒रु॒ऽहू॒तः । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्र॑ः । ऊ॒ती ॥९॥

शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं विनिर्गताः[1] ऋज्राश्वादयोऽनेन सूक्तेनेन्द्रमस्तुवन् । ᵛसः इन्द्रः ᵛमन्युमीः मन्योः कोपस्य निर्माता । यद्वा । अभिमन्यमानस्य शत्रोर्हिंसकः । अपि च ᵛसमदनस्य संग्रामस्य ᵛकर्ता ᵛसत्पतिः सतां पालयिता ᵛपुरुहूतः बहुभिर्यजमानैराहूतः एवंगुणविशिष्टः सः ᵛअस्मिन् ᵛअहन् अस्मिन् दिवसे ᵛअस्माकेभिः आस्माकैः[2] अस्मदीयैः ᵛनृभिः पुरुषैः ᵛसूर्यं सूर्यप्रकाशं ᵛसनत् संभक्तं करोतु । शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु । स च ᵛमरुत्वान् ᵛइन्द्रः अस्माकं रक्षणाय ᵛभवतु ॥ मन्युमीः । मन्युं मिनातीति मन्युमीः । ‘ मीञ् हिंसायाम् ’ । क्विप् । समदनस्य । सह माद्यन्त्यस्मिन्निति समदनः संग्रामः । ‘ मदी हर्षे ’ । अधिकरणे ल्युट् । ‘ सहस्य सः संज्ञायाम् ’ ( पा. सू. ६. ३. ७८ ) इति सभावः । अस्माकेभिः । ‘ तस्मिन्नणि च युष्माकास्माकौ ’ इति अणि अस्मच्छब्दस्य अस्माकादेशः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः । ‘ बहुलं छन्दसि ’ इति भिस ऐसभावः । स्वरस्तु ‘ प्रासाकासश्च सूरयः ’ ( ऋ. सं. १. ९७. ३ ) इत्यत्रोक्तः । सनत् । ‘ वन षण संभक्तौ ’ । लेटि अडागमः । अहन् । ‘ सुपां सुलुक्° ’ इति सप्तम्या लुक् । सत्पतिः । ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरत्वम् ॥

तमू॒तयो॑ रणय॒ञ्छूर॑साता॒ौ तं क्षेम॑स्य क्षि॒तय॑ः कृण्वत॒ त्राम् ।
स विश्व॑स्य क॒रुण॑स्येश॒ एको॑ म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥ १० ॥

तम् । ऊ॒तय॑ः । र॒ण॒य॒न् । शूर॑ऽसातौ । तम् । क्षेम॑स्य । क्षि॒तय॑ः । कृ॒ण्व॒त॒ । त्राम् ।
सः । विश्व॑स्य । क॒रुण॑स्य । ईशे॒ । एक॑ः । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्र॑ः । ऊ॒ती ॥ १० ॥

---

१. स–निर्गच्छन्तः । २. क्ष–ट–ठ–‘ आस्माकैः ’ नास्ति ।

तम् इन्द्रं शूरसातौ शूरैर्वीरपुरुषैः संभजनीये संग्रामे ऊतयः गन्तारो मरुतः रणयन् रमयन्ति। यद्वा। 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपं शब्दमिन्द्रमुद्दिश्य कुर्वन्ति। अपि च क्षितयः मनुष्याः तम् इन्द्रं क्षेमस्य रक्षणीयस्य[1] सर्वस्य धनस्य त्रां त्रातारं रक्षितारं कृण्वत कुर्वन्ति। देवतान्तरादस्य कोऽतिशयः इति चेत् उच्यते। सः इन्द्रः विश्वस्य सर्वस्य करुणस्य अभिमतफलनिष्पादनरूपस्य कर्मणः एकः असहाय एव ईशे ईष्टे। अन्यत् पूर्ववत्॥ ऊतयः। अवतेर्गत्यर्थात् 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिन्। 'तितुत्र॰' इति इट्प्रतिषेधः। 'ज्वरत्वर॰' इत्यादिना वकारस्योपधायाश्च ऊठ्। 'ऊतियूति॰' इत्यादिना क्तिन उदात्तत्वम्। यद्वा। कर्तरि क्तिच्। रणयन्। रमतेर्हेतुमण्णिजन्तात् वर्तमाने छान्दसो लङ्। अन्त्यविकारश्छान्दसः। यद्वा। रण शब्दार्थः। अस्मात् णिजन्तात् पूर्ववत् लङ्। त्राम्। 'त्रैङ् पालने'। त्रायते इति त्राः। 'क्विप् च' इति चशब्देन दृशिग्रहणानुकर्षणान्निरुपपदादपि क्विप्। करुणस्य। 'डुकृञ् करणे'। 'कृवृतृदारिभ्य उनन्' (उ. सू. ३. ३३३) इति भावे उनन्। व्यत्ययेन प्रत्ययाद्युदात्तत्वम्। ईशे। 'ईश ऐश्वर्ये'। 'लोपस्त आत्मनेपदेषु' इति तलोपः॥

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय।
सो अन्धे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विन्द्र ऊती॥ ८॥

तम्। अप्सन्त। शवसः। उत्ऽसवेषु। नरः। नरम्। अवसे। तम्। धनाय।
सः। अन्धे। चित्। तमसि। ज्योतिः। विदत्। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥८॥

नरः नेतारः स्तोतारः शवसः बलस्य संबन्धिषु उत्सवेषु संग्रामेषु नरं जयस्य नेतारं तम् इन्द्रम् अप्सन्त आप्नुवन्ति। किमर्थम्। अवसे अन्नार्थं[2] रक्षणार्थं[2] वा। तथा धनाय धनार्थं च तम् इन्द्रं प्राप्नुवन्ति। यस्मात् सः इन्द्रः तमसि दृष्टिप्रतिबन्धके अन्धे चित् आध्यानरहिते चित्तव्यामोहकरेऽपि संग्रामे ज्योतिः विजयलक्षणं प्रकाशं विदत् लम्भयति। तस्मात् तमेव प्राप्नुवन्तीत्यर्थः। अन्यत् समानम्॥ अप्सन्त। 'आपॢ व्याप्तौ'। लङि व्यत्ययेन आत्मनेपदम्। व्यत्ययेन क्सप्रत्ययः। व्यत्ययेन धातोर्ह्रस्वत्वम्। विदत्। 'विदॢ लाभे'। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने छान्दसो लुङ्। ऌदित्वात् च्लेः अङादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः॥

स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि।
स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊती॥ ९॥

सः। सव्येन। यमति। व्राधतः। चित्। सः। दक्षिणे। सम्ऽगृभीता। कृतानि।
सः। कीरिणा। चित्। सनिता। धनानि। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥९॥

---

१. च-छ-त-द-ध-न-फ-श–रमणीयस्य। २. क्ष-ट-ठ–अन्नाय रक्षणाय।

ᵛसः इन्द्रः ᵛसव्येन वामहस्तेन एकहस्तेन[1] ᵛबाधतश्चित् हिंसतः[2] महतः[3] शत्रूनपि ᵛयमति नियमयति। तथा ᵛसः इन्द्रः ᵛदक्षिणे दक्षिणपार्श्वस्थेन[4] हस्तेनैकेन[4] यजमानैः ᵛकृतानि हवींषि ᵛसंगृभीता[5] संगृह्णाति। अपि च ᵛसः इन्द्रः ᵛकीरिणा ᵛचित् कीर्तयित्रा स्तोत्रा च स्तुतः सन् ᵛधनानि ᵛसनिता प्रदानशीलो भवति। हविष्प्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः। शिष्टं स्पष्टम्॥ यमति। 'यम उपरमे'। णिचि अमन्तत्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम्। 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः। बाधतः। 'बृधु वृद्धौ'। अस्मात् अतिप्रत्ययः औणादिकः आमागमश्च। वृषादित्वादाद्युदात्तत्वम्। संगृभीता। 'ग्रह उपादाने'। लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'लिङः सलोपः°' इति सलोपः। ग्रहिज्यादिना संप्रसारणम्। 'हृग्रहोर्भः°' इति भत्वम्। 'अचोऽतस्तिङः' इति दीर्घः। सनिता। 'षणु दाने'। ताच्छीलिकः तृन्। धनानि। 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः॥

**स ग्राम॑भिः॒ सनि॑ता॒ स रथे॑भिर्वि॒दे विश्वा॑भिः कृ॒ष्टिभि॒र्न्व॑१॒॑द्य।**

**स पौंस्ये॑भिरभि॒भूरश॑स्तीर्म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती॥ १०॥**

सः। ग्राम॑भिः। सनि॑ता। सः। रथे॑भिः। वि॒दे। विश्वा॑भिः। कृ॒ष्टिऽभिः॑। नु। अ॒द्य।

सः। पौंस्ये॑भिः। अ॒भि॒ऽभूः। अश॑स्तीः। म॒रुत्वा॑न्। नः॒। भ॒व॒तु॒। इन्द्रः॑। ऊ॒ती॥१०॥

ᵛसः इन्द्रः ᵛग्रामेभिः मरुत्संघैः सह ᵛसनिता फलानां प्रदाता भवति। ᵛसः च ᵛअद्य अस्मिन्नहनि ᵛनु क्षिप्रं ᵛविश्वाभिः ᵛकृष्टिभिः सर्वैर्मनुष्यैः ᵛरथेभिः इन्द्रसंबन्धिभिः रथैः करणभूतैः ᵛविदे विज्ञायते। अपि च ᵛसः इन्द्रः ᵛपौंस्येभिः स्वकीयैर्बलैः ᵛअशस्तीः अशंसनीयान् शत्रून् ᵛअभिभूः अभिभवन् वर्तते। ᵛमरुत्वान् सः ᵛइन्द्रः ᵛनः अस्माकं रक्षणाय ᵛभवतु॥ ग्रामेभिः। 'बहुलं छन्दसि' इति भिस ऐसभावः। 'ग्रामादीनां च' (फि. सू. ३८) इत्याद्युदात्तत्वम्। विदे। 'विद ज्ञाने'। कर्मणि लट्। 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'लोपस्त आत्मनेपदेषु' इति तलोपः॥ ॥ ९॥

**स जा॒मिभि॒र्यत्स॒मजा॑ति मी॒ळ्हेऽजा॑मिभिर्वा पुरुहू॒त एवैः॑।**

**अ॒पां तो॒कस्य॒ तन॑यस्य जे॒षे म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती॥ ११॥**

सः। जा॒मिऽभिः॑। यत्। स॒म्ऽअजा॑ति। मी॒ळ्हे। अजा॑मिऽभिः। वा॒। पु॒रु॒ऽहू॒तः। एवैः॑।

अ॒पाम्। तो॒कस्य॑। तन॑यस्य। जे॒षे। म॒रुत्वा॑न्। नः॒। भ॒व॒तु॒। इन्द्रः॑। ऊ॒ती॥ ११॥

ᵛपुरुहूतः बहुभिर्यजमानैराहूतः ᵛसः इन्द्रः ᵛमीळ्हे संग्रामे। मीळ्हम् इति धननाम। तद्धेतुत्वात् संग्रामोऽपि मीळ्हशब्देनोच्यते। ᵛजामिभिः बन्धुभिः ᵛअजामिभिर्वा बान्धवरहितैर्वा ᵛएवैः

१. क्ष-ट-ठ-एकेन। २. न-'हिंसतः' नास्ति। ३. क्ष-ट-ठ-न 'महतः' नास्ति। ४. क्ष-ट-ठ-स- दक्षिणपार्श्वस्थे हस्ते। ५. च-न-फ-श-संगृभीता संगृहीता।

युद्धार्थं मरुद्भिः[1] सह यत् यदा समजाति संगच्छते। तेषाम्[2] उभयविधानाम् अपाम् इन्द्रं प्राप्नुवतां पुरुषाणां तोकस्य पुत्रस्य तनयस्य तत्पुत्रस्य च जेषे जयप्राप्तये सः इन्द्रः भवति। किमु[3] वक्तव्यम्[3] अस्माकं स्तोतृतमानां जयो भवतीति। अन्यत् समानम्। समजाति। ' अज गतिक्षेपणयोः '। लेटि आडागमः। जेषे। ' जि जये '। औणादिकः सप्रत्ययः। चतुर्थ्यर्थे सप्तमी। यद्वा। ' जेषृ णेषृ प्रेषृ गतौ '। ' क्विप् च ' इति क्विप्। ' सावेकाचः० ' इति विभक्तेरुदात्तत्वम्॥

स वंज्रभृद्दंस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा।
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती॥ १२॥

सः। वज्रऽभृत्। दस्युऽहा। भीमः। उग्रः। सहस्रऽचेताः। शतऽनीथः। ऋभ्वा।
चम्रीषः। न। शवसा। पाञ्चऽजन्यः। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥ १२॥

सः इन्द्रः वज्रभृत् अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता दस्युहा दस्यूनामुपक्षपयितॄणामसुराणां हन्ता भीमः सर्वेषां भयहेतुः उग्रः उद्गूर्णतेजाः सहस्रचेताः बहुविधज्ञानः सर्वज्ञ इत्यर्थः। शतनीथः बहुस्तुतिर्बहुविधप्रापणो वा ऋभ्वा उरु भासमानो महान् वा चम्रीषो न चम्वां चमसे रसात्मनावस्थितः सोम इव शवसा बलेन पाञ्चजन्यः। गन्धर्वा अप्सरसो देवा असुरा रक्षांसि पञ्च जनाः। निषादपञ्चमाश्चत्वारो वर्णा वा। तेषु रक्षकत्वेन भवः। एवंभूतः सः[4] मरुत्वान् इन्द्रः[4] नः अस्माकं रक्षणाय भवतु॥ दस्युहा। ' बहुलं छन्दसि ' इति हन्तेः क्विप्। भीमः। ' ञिभी भये '। ' भीमादयोऽपादाने ' ( पा. सू. ३. ४. ७४ ) इति अपादाने ' भियः षुग्वा ' ( उ. सू. १. १४५ ) इति मक्। शतनीथः। ' णीञ् प्रापणे '। ' हनिकुषिनीरमिकाशिभ्यः क्थन् ' ( उ. सू. २. १५९ ) इति क्थन्प्रत्ययः। चम्रीषः। ' इष गतौ '। चम्वामिष्यति गच्छतीति चम्रीषः। इगुपधलक्षणः कप्रत्ययः। वर्णव्यापत्त्या रेफो दीर्घश्च। यद्वा चमेरौणादिक ईषन्प्रत्ययः। पूर्ववत् रेफः। पाञ्चजन्यः। भवार्थे ' बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् ' ( का. ४. ३. ५८. १ ) इति ञ्यप्रत्ययः। ञित्त्वात् आद्युदात्तत्वम्॥

तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान्।
तं सचन्ते सनयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती॥ १३॥

तस्य। वज्रः। क्रन्दति। स्मत्। स्वःऽसाः। दिवः। न। त्वेषः। रवथः। शिमीऽवान्।
तम्। सचन्ते। सनयः। तम्। धनानि। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती॥ १३॥

तस्य इन्द्रस्य वज्रः कुलिशः स्मत् भृशं क्रन्दति शत्रूनाक्रन्दयति रोदयतीत्यर्थः। य इन्द्रः स्वर्षाः शोभनस्योदकस्य दाता दिवो न दिवः संबन्धी सूर्य इव त्वेषः दीप्तः रवथः शब्दस्य गर्जनलक्षणस्य कर्ता शिमीवान्। शिमी इति कर्मनाम। लोकानुग्राहकेण कर्मणा युक्तः

१. क्ष-ट-ठ-गच्छाद्भिः। २. क्ष-ट-ठ-तदा एषाम्; स-तदा तेषाम्। ३. क्ष-किमुच्यते।
४. क्ष-ट-ठ-इन्द्रो मरुत्वान्।

ᵛतम् इन्द्रं ᵛसनयः धनस्य दानानि ᵛसचन्ते सेवन्ते । तथा ᵛतं ᵛधनानि च सेवन्ते । सः ᵛमरुत्वान् ᵛइन्द्रः ᵛनः अस्माकं रक्षणाय ᵛभवतु ॥ क्रन्दति । 'कदि क्रदि क्लदि आह्वाने रोदने च' । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । स्वर्षाः । सुपूर्वात् अर्तेः विच् । सुष्ठु अर्तिं[1] गच्छतीति स्वरुदकम् । तत्सनोतीति स्वर्षाः । 'षणु दाने' । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । 'सनोतेरनः' ( पा. सू. ८. ३. १०८ ) इति षत्वम् । त्वेषः । 'त्विष दीप्तौ' । पचाद्यच् । रवथः । 'रु शब्दे' । 'शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः' ( उ. सू. ३. ३९३ ) इति अथप्रत्ययः । गुणावादेशौ । सनयः । सनोतेर्भावे औणादिक इप्रत्ययः ॥

यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीम् ।
स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥ १४ ॥

यस्य । अजस्रम् । शवसा । मानम् । उक्थम् । परिऽभुजत् । रोदसी इति । विश्वतः । सीम् ।
सः । पारिषत् । क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १४ ॥

ᵛयस्य इन्द्रस्य ᵛउक्थं प्रशस्यं ᵛशवसा ᵛमानं बलेन सर्वस्य परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा ᵛरोदसी द्यावापृथिव्यौ ᵛविश्वतः ᵛसीं सर्वतः ᵛअजस्रम् अनवरतं ᵛपरिभुजत् परितः सर्वतो भुनक्ति पालयति ᵛसः इन्द्रः ᵛक्रतुभिः अस्माभिः कृतैर्यागैः ᵛमन्दसानः मोदमानः सन् ᵛपारिषत् अस्मान् दुरितान् पारयतु ॥ उक्थम् । 'वच परिभाषणे' । 'पातॄतुदिवचि०' इत्यादिना कर्मणि थक् । 'वचिस्वपि०' इत्यादिना संप्रसारणम् । परिभुजत् । 'भुज पालनाभ्यवहारयोः' । लेटि अडागमः । व्यत्ययेन शः । पारिषत् । 'पार तीर कर्मसमाप्तौ' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । तस्य आर्धधातुकत्वात् इट् । व्यत्ययेन णिलोपः । मन्दसानः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' ( उ. सू. २. २४४ ) इति असानच्प्रत्ययः ॥

न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥ १५ ॥

न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अन्तम् । आपुः ।
सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१५॥

ᵛदेवता देवस्य दानादिगुणयुक्तस्य ᵛयस्य इन्द्रस्य ᵛशवसः बलस्य ᵛअन्तम् अवसानं ᵛदेवाः वस्वाद्या देवगणाः ᵛन ᵛआपुः न आनशिरे तथा ᵛमर्ताः मनुष्याः ᵛआपश्चन आपोऽपि ᵛन प्रापुः । ᵛसः तादृश इन्द्रः ᵛत्वक्षसा शत्रूणां तनूकर्त्रा आत्मीयेन बलेन ᵛक्ष्मः पृथिव्याः ᵛदिवश्च स्वर्गस्य च ᵛप्ररिक्वा प्रकर्षेण रेचको भवति । लोकद्वयादप्यस्य बलमतिरिच्यते इत्यर्थः । मरुद्भिर्युक्तः सः ᵛइन्द्रः

1 क्ष-ट-ठ–ऋच्छति ।

नः अस्माकम् ऊर्ती ऊतये रक्षणाय भवतु ॥ देवता । देव एव देवता । 'देवात्तल्' इति स्वार्थे तल् । 'सुपां सुलुक्' इति षष्ठ्या लुक् । सर्ताः । 'सृङ् प्राणत्यागे' । 'असिहसि' इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । प्ररिक्वा । 'रिचिर् विरेचने' । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । अन्त्यविकारश्छान्दसः । त्वक्षसा । 'तक्षू त्वक्षू तनूकरणे' । असुन् । नित्त्वादाद्युदात्तत्वम् । क्ष्मः । क्ष्मा इति पृथिवीनाम । 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागात् इष्टसिद्धिः इत्यभिधानात्[1] अमि भसंज्ञायामाकारलोपः । यद्वा । 'क्ष्मायी विधूनने' । अस्मात् 'क्विप् च' इति क्विप् । वेरपृक्तस्य लोपात् पूर्वं वलि लोपः । अन्यत् समानम् । उदात्तनिवृत्तिस्वरेण विभक्तेः उदात्तत्वम् ॥ ॥ १० ॥

**रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।**

**वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥ १६ ॥**

रोहित् । श्यावा । सुमत्ऽअंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य ।

वृषण्ऽवन्तम् । बिभ्रती । धूःऽसु । रथम् । मन्द्रा । चिकेत । नाहुषीषु । विक्षु ॥ १६ ॥

रोहित् रोहितवर्णा[2] श्यावा श्यामवर्णा । उभयोः पार्श्वयोरुभयविधवर्णयुक्तेत्यर्थः । सुमदंशुः सुमत् स्वतः[3] प्रांशुः[4] । उक्तं च यास्केन–'सुमत् स्वयमित्यर्थः' ( निरु. ६. २२ ) इति । अतिदीर्घावयवा ललामीः पुण्ड्रवती अश्वभूषणयुक्ता वा द्युक्षा दिवि द्युलोके कृतनिवासा ऋज्राश्वस्य एतत्संज्ञस्य[5] राजर्षेः राये धनार्थं वृषण्वन्तं वृष्णा सेक्त्रा इन्द्रेण युक्तं रथं धूर्षु युगसंबन्धिषु वहनप्रदेशेषु बिभ्रती वहन्ती मन्द्रा सर्वेषाम् आह्लादकरी[6] अश्वपङ्क्तिः नाहुषीषु । नहुषा मनुष्याः । तत्संबन्धिनीषु विक्षु सेनालक्षणासु प्रजासु चिकेत ज्ञायते । ईदृश्याश्वपङ्क्त्या युक्त इन्द्रः संग्रामेष्वनुग्राहकतया प्रादुर्भवतीत्यर्थः ॥ ललामीः । ललामशब्दात् 'छन्दसीवनिपौ' ( पा. सू. ५. २. १०९. २ ) इति मत्वर्थीय ईकारः । अङ्यन्तत्वात् सुलोपाभावः । द्युक्षा । 'क्षि निवासगत्योः' । औणादिको डप्रत्ययः । ततः टाप् । ऋज्राश्वस्य । 'ऋज गतिस्थानार्जनोपार्जनेषु' । 'ऋज्रेन्द्र' इत्यादिना रक्प्रत्ययान्तो निपातितः । ऋज्रा गतिमन्तोऽश्वा यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वृषण्वन्तम् । 'अनो नुट्' ( पा. सू. ८. २. १६ ) इति मतुपो नुट् । चिकेत । 'कित ज्ञाने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लिट् । व्यत्ययेन तिप् ॥

**एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।**

**ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥ १७ ॥**

एतत् । त्यत् । ते । इन्द्र । वृष्णे । उक्थम् । वार्षागिराः । अभि । गृणन्ति । राधः ।

ऋज्रऽअश्वः । प्रष्टिऽभिः । अम्बरीषः । सहऽदेवः । भयमानः । सुऽराधाः ॥ १७ ॥

---

१. क्ष-ठ–इति वचनात् । २. क्ष-ट-ठ–लोहितवर्णा । ३. क्ष-स–स्वत एव । ४. स–अंशुः । ५. क्ष-स–एतत्संज्ञकस्य । ६. स–मदकारी ।

हे ᵛइन्द्र ᵛवृष्णे कामानां वर्षितः ᵛते तव ᵛस्यत् तत् ᵛएत ᵛउक्थं स्तोत्रं ᵛराधः संराधकं त्वत्प्रीतिहेतु ᵛवार्षागिराः वृषागिरो राज्ञः पुत्रा ऋज्राश्वादयः ᵛअभि ᵛगृणन्ति आभिमुख्येन वदन्ति। वार्षागिरा इत्येतत् विवृणोति। ᵛऋज्राश्वः एतत्संज्ञो राजर्षिः ᵛप्रष्टिभिः पार्श्वस्थैः अन्यैर्ऋषिभिः[2] सहेन्द्रमस्तौत्। के ते पार्श्वस्थाः। अम्बरीषादयश्चत्वारो राजर्षयः॥ वार्षागिराः। 'तस्यापत्यम्' (पा. सू. ४. १. ९२) इति अण्प्रत्ययः। गृणन्ति। 'गॄ शब्दे'। 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्। राधः। 'राध साध संसिद्धौ'। राध्नोति समृद्धो भवत्यनेनेति राधः। करणेऽसुन्। ऋज्राश्वः। ऋज्राः गतिमन्तोऽश्वा यस्य स तथोक्तः। अम्बरीषः। 'अबि शब्दे'। औणादिक ईषन्प्रत्ययः (उ. सू. ४. ४६९)। सहदेवः। देवैः सह वर्तते इति सहदेवः। 'वोपसर्जनस्य' इति विकल्पनात् सभावाभावः। भयमानः। 'ञिभी भये'। अस्मात् अन्तर्भावितण्यर्थात् व्यत्ययेन शानच्। 'बहुलं छन्दसि' इति शपः श्लोरभावः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। सुराधाः। राधः इति धननाम। शोभनं राधो यस्य। 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम्॥

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत्।
सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः॥ १८॥

दस्यून्। शिम्यून्। च। पुरुऽहूतः। एवैः। हत्वा। पृथिव्याम्। शर्वा। नि। बर्हीत्।
सनत्। क्षेत्रम्। सखिऽभिः। श्वित्न्येभिः। सनत्। सूर्यम्। सनत्। अपः। सुऽवज्रः॥१८॥

ᵛपुरुहूतः बहुभिर्यजमानैराहूत इन्द्रः ᵛएवैः गमनशीलैर्मरुद्भिर्युक्तः सन् ᵛपृथिव्यां भूमौ वर्तमानान् ᵛदस्यून् उपक्षपयितॄन् शत्रून् ᵛशिम्यूंश्च शमयितॄन् वधकारिणो राक्षसादींश्च ᵛहत्वा प्रहृत्य तदनन्तरं ᵛशर्वा हिंसकेन वज्रेण ᵛनि ᵛबर्हीत् अवधीत्। निबर्हयतिर्वधकर्मा। एवं शत्रून्निरस्य ᵛश्वित्न्येभिः श्वेतवर्णैरलंकारेण दीप्ताङ्गैः ᵛसखिभिः मित्रभूतैर्मरुद्भिः सह ᵛक्षेत्रं शत्रूणां स्वभूतां भूमिं ᵛसनत् समभाक्षीत्। तथा वृत्रेण तिरोहितं ᵛसूर्यं तस्य वृत्रस्य हननेन ᵛसनत् अभजत प्राप्तवानित्यर्थः। तथा ᵛसुवज्रः शोभनवज्रयुक्त इन्द्रो वृत्रेण निरुद्धाः ᵛअपः वृष्ट्युदकानि ᵛसनत् समभजत॥ दस्यून्। 'दसु उपक्षये'। 'यजिमनिशुन्धिदसिजनिभ्यो युः'। वृषादित्वात् आद्युदात्तत्वम्। शिम्यून्। 'शमु उपशमे'। शमयति सर्वं तिरस्करोतीति राक्षसादिः शिम्युः। औणादिको युन्प्रत्ययः। वर्णव्यापत्त्या अकारस्य इत्वम्। शर्वा। 'शॄ हिंसायाम्'। 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्। 'सुपां सुलुक्°' इति तृतीयाया डादेशः। सनत्। 'वन षण संभक्तौ'। लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। श्वित्न्येभिः। 'श्विता वर्णे'। औणादिको नक्प्रत्ययः। श्वित्नं शुक्लवर्णमर्हन्तीति श्वित्न्याः। 'छन्दसि च' इति यः। सुवज्रः। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्॥

---

२. क्ष–राजर्षिभिः।

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९ ॥
विश्वाहा। इन्द्रः। अधिऽवक्ता। नः। अस्तु। अपरिऽह्वृताः। सनुयाम। वाजम्।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ १९ ॥

विश्वाहा सर्वकालं नः अस्माकम् इन्द्रः अधिवक्ता अस्तु। अधिवचनं पक्षपातेन वचनम्। यथोक्तं[1]–'ब्राह्मणायाधिब्रूयात्' (तै. सं. २.५.११.९) इति। सर्वदास्माकमिन्द्रः पक्षपातवचनयुक्तो भवतु। वयं च अपरिह्वृताः अकुटिलगतयः सन्तः वाजं हविर्लक्षणमन्नं सनुयाम[2] संभजामहे। यदनेन सूक्तेनास्माभिः प्रार्थितं तत् मित्रादयः ममहन्तां पूजितं कुर्वन्तु॥ विश्वाहा। विश्वान्यहानि विश्वाहानि। अत्यन्तसंयोगे द्वितीया। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। उपधादीर्घत्वं नलोपः। मस्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। अपरिह्वृताः। 'ह्वृ कौटिल्ये'। निष्ठायाम् 'अपरिह्वृताश्च' (पा. सू. ७. २. ३२) इति निपातनात्[3] इडभावाभावः[3]। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। सनुयाम। 'षणु दाने'। लिङि तनादित्वात् उप्रत्ययः। 'वन षण संभक्तौ' इत्यस्मात् वा व्यत्ययेन उप्रत्ययः॥ ॥११॥

'प्र मन्दिने' इति एकादशर्चमष्टमं सूक्तमाङ्गिरसस्य कुत्सस्यार्षम्। अष्टम्याद्याश्चतस्रस्त्रिष्टुभः शिष्टाः सप्त जगत्यः। इन्द्रो देवता। तथा चानुक्रान्तं – 'प्रमन्दिने एकादश कुत्स आद्या गर्भस्राविण्युपनिषच्चतुस्त्रिष्टुबन्तम्' इति। दशरात्रस्य नवमेऽहनि मरुत्वतीये एतत्सूक्तम्। 'विश्वजितः' इति खण्डे सूत्रितं– 'प्र मन्दिने इमा उ त्वेति मरुत्वतीयम्' (आश्व. श्रौ. ८.७.) इति॥

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥ १ ॥
प्र। मन्दिने। पितुऽमत्। अर्चत। वचः। यः। कृष्णऽगर्भाः। निःऽअहन्। ऋजिश्वना।
अवस्यवः। वृषणम्। वज्रऽदक्षिणम्। मरुत्वन्तम्। सख्याय। हवामहे ॥ १ ॥

हे ऋत्विजः मन्दिने स्तुतिमते स्तोतव्यायेन्द्राय पितुमत् हविर्लक्षणेनान्नेनोपेतं वचः स्तुतिलक्षणं वचनं प्र अर्चत प्रकर्षेणोच्चारयत। यः इन्द्रः ऋजिश्वना एतत्संज्ञकेन राज्ञा सख्या सहितः सन् कृष्णगर्भाः। कृष्णो नाम कश्चिदसुरः। तेन निषिक्तगर्भास्तदीयाः भार्याः निरहन् अवधीत्। कृष्णमसुरं हत्वा पुत्राणाम् अपि[4] अनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्याः अप्यवधीदित्यर्थः। अवस्यवः रक्षणेच्छवो वयं वृषणं कामानां वर्षितारं वज्रदक्षिणं वज्रयुक्तेन दक्षिणहस्तेनोपेतं तं मरुत्वन्तम् इन्द्रं सख्याय सख्युः कर्मणे हवामहे आह्वयामहे॥ मन्दिने। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। औणादिकः इनिप्रत्ययः। तदुक्तं यास्केन–'मन्दी मन्दतेः स्तुतिकर्मणः' (निरु. ४. २४) इति। पितुमत्।

---

१. क्ष–तथोक्तम्। २. क्ष-स–'सनुयाम' इत्यस्यानन्तरं 'प्रयच्छाम। यद्वा इन्द्रेण दत्तमन्नम्' इत्यधिकम्। ३. क्ष-ट-ठ–निपातः। ४, क्ष-ट-ठ-न-स–'अपि' नास्ति।

' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वम् । कृष्णगर्भाः कृष्णेन निषिक्ताः गर्भाः यासु तास्तथोक्ताः । ' परादिश्छन्दसि बहुलम् ' इति पूर्वपदान्तोदात्तत्वम्[1] । अवस्यवः । अवेरौणादिको भावेऽसुन् । अवः इच्छति अवस्यति । ' सुप आत्मनः क्यच् ' । ' क्याच्छन्दसि ' इति उप्रत्ययः । वृषणम् । ' वा षपूर्वस्य निगमे ' इति विकल्पनादुपधादीर्घाभावः । सख्याय । सख्युः कर्म सख्यम् । ' सख्युर्यः ' इति यप्रत्ययः । हवामहे । ह्वेञो लटि ' बहुलं छन्दसि ' इति संप्रसारणम् ॥

यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम् ।
इन्द्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वन्तं सख्याय हवामहे ॥ २ ॥

यः । विऽअंसम् । जहृषाणेन । मन्युना । यः । शम्बरम् । यः । अहन् । पिप्रुम् । अव्रतम् ।
इन्द्रः । यः । शुष्णम् । अशुषम् । नि । अवृणक् । मरुत्वन्तम् । सख्याय । हवामहे ॥२॥

यः इन्द्रः जहृषाणेन प्रवृद्धेन मन्युना क्रोधेन व्यंसं विगतभुजं वृत्रम् अहन् अवधीत्[2] । अपि च यः इन्द्रः शम्बरम् एतत्संज्ञमसुरं चावधीत् । तथा अव्रतं व्रतस्य यागादेः कर्मणो विरोधिनं पिप्रुम् एतत्संज्ञमसुरं च यः इन्द्रोऽवधीत् । किंच यः इन्द्रः अशुषं शोषकरहितं शुष्णं सर्वस्य जगतः शोषकमेतत्संज्ञमसुरं नि अवृणक् न्यवर्जयत् । समूलं हतवानित्यर्थः । तं मरुत्वन्तम् इन्द्रं सख्याय आह्वयामहे ॥ व्यंसम् । विगतः अंसो यस्मात् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणः[3] ' उदात्तस्वरितयोर्यणः० ' इति परस्यानुदात्तस्य स्वरितत्वम् । जहृषाणेन । ' हृष तुष्टौ ' । अत्र वृद्ध्यर्थः । ' छन्दसि लिट्, ' लिटः कानज्वा ' इति तस्य कानजादेशः । ' अन्येषामपि दृश्यते ' इति संहिताया-मभ्यासस्य दीर्घत्वम् । चित्त्वादन्तोदात्तत्वम् । अशुषम् । ' शुष शोषणे ' । इगुपधलक्षणः कः । शुषाः शोषका न सन्त्यस्येति अशुषः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । अवृणक् । ' वृजी वर्जने ' । रौधादिकः ॥

यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।
यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥ ३ ॥

यस्य । द्यावापृथिवी इति । पौंस्यम् । महत् । यस्य । व्रते । वरुणः । यस्य । सूर्यः ।
यस्य । इन्द्रस्य । सिन्धवः । सश्चति । व्रतम् । मरुत्वन्तम् । सख्याय । हवामहे ॥ ३ ॥

यस्य इन्द्रस्य महत् विपुलं पौंस्यं बलं द्यावापृथिवी द्यावापृथिव्यावनुवर्तेते । यस्य चेन्द्रस्य व्रते नियमरूपे[4] कर्मणि वरुणः वर्तते । वरुणोऽपीन्द्रस्य नियमनं नातिक्रामतीत्यर्थः । अपि च सूर्यः अपि यस्य इन्द्रस्य व्रते वर्तते । तथा यस्य इन्द्रस्य व्रतं कर्म सिन्धवः नद्यः सश्चति ।

---

१. ल—व्यत्ययेन पूर्वपदान्तोदात्तत्वम् । २. क्ष-स—हतवान् । ३. क्ष-ट-ठ—यणादेशः, स—यणादेशे । ४ क्ष-स—नियमनरूपे ।

वचनव्यत्ययः । गच्छन्ति । सश्चतिर्गतिकर्मा । इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः । तं मरुत्वन्तम् इन्द्रं सख्याय आह्वयामहे[1] ॥ द्यावापृथिवी । द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवो द्यावा' इति द्यावादेशः । स चाद्युदात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययान्तः अन्तोदात्तः । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥

यो अश्वा॑नां॒ यो ग॒वां गोप॑ति॒र्व॒शी य आ॑रि॒तः कर्म॑णिकर्मणि स्थि॒रः ।
वी॒ळोश्चि॒दिन्द्रो॒ यो असु॑न्वतो व॒धो म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ४ ॥

यः । अश्वा॑नाम् । यः । ग॒वाम् । गोऽप॑तिः । व॒शी । यः । आ॒रि॒तः । कर्म॑णिऽकर्मणि । स्थि॒रः ।
वी॒ळोः । चि॒त् । इन्द्रः॑ । यः । असु॑न्वतः । व॒धः । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ४ ॥

यः इन्द्रः अश्वानां पतिरधिपतिः । तथा यः इन्द्रः गोपतिः । न केवलमेकस्या गोः किंतु सर्वासामित्याह गवाम् इति । सर्वासां गवाम् अधिपतिर्भवति । वशी अपराधीनः । स्वतन्त्र इत्यर्थः । अपि च यः इन्द्रः कर्मणिकर्मणि सर्वेषु कर्मसु स्थिरः नैश्चल्येनावतिष्ठमानः आरितः स्तुतिभिः प्रत्यृतः प्राप्तो भवति । 'आरितः प्रत्यृतः स्तोमान्' ( निरु. ५. १५ ) इति निरुक्तम् । यः च इन्द्रः असुन्वतः सुन्वतां यागानुष्ठातॄणां विरोधिनः वीळोश्चित् दृढस्यापि शत्रोः वधः हन्ता तं मरुत्वन्तम् इन्द्रं सख्याय आह्वयामहे[2] ॥ गवाम् । 'न गोश्वन्साववर्ण॰' इति विभक्त्युदात्तत्वस्य प्रतिषेधः । गोपतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । आरितः । 'ऋ गतौ' । अस्मात् ण्यन्तात् निष्ठा । आगमानुशासनस्यानित्यत्वात् पुगभावः । यद्वा । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम्' ( पा. म. ३. १. २२. ३ ) इति विहितस्य यङः 'यङोऽचि च' इत्यत्र चशब्देन बहुलग्रहणानुकर्षणादनैमित्तिके लुकि प्रत्ययलक्षणेन 'सन्यङोः' इति ऋ इत्येतस्य द्विर्वचने उरदत्वहलादिशेषयोः सतोः 'रुग्रिकौ च लुकि' इति रुक् । ततो निष्ठायां छान्दस इडागमः । ऋकारस्य यणादेशः । 'रो रि' इति अभ्यासरेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम् । वधः । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् 'हनश्च वधः' इति कर्तरि अप् वधादेशश्च । स चादन्तः । अतो लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययस्य उदात्तत्वम्[3] ॥

यो विश्व॑स्य॒ जग॑तः प्राण॒तस्पति॒र्यो ब्र॒ह्मणे॑ प्रथ॒मो गा अवि॑न्दत् ।
इन्द्रो॒ यो दस्यूँ॒रध॑राँ अ॒वाति॑रन्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ५ ॥

यः । विश्व॑स्य । जग॑तः । प्रा॒ण॒तः । पतिः॑ । यः । ब्र॒ह्मणे॑ । प्र॒थ॒मः । गाः । अवि॑न्दत् ।
इन्द्रः॑ । यः । दस्यू॑न् । अध॑रान् । अ॒व॒ऽअति॑रत् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ५ ॥

---

१. क्ष-ट-ठ—हवामहे । २. क्ष-ट-ठ—हवामहे । ३. क्ष-ट-ठ-स—'उदात्तत्वम्' इत्यस्यानन्तरं 'वधेर्वा प्रकृत्यन्तरात् पचाद्यचि रूपम्' इत्याधिकम् ।

ᵛयः इन्द्रः ᵛविश्वस्य[1] ᵛजगतः गच्छतः ᵛप्राणतः प्रश्वसतः प्राणिजातस्य ᵛपतिः स्वामी ᵛयः च ᵛब्रह्मणे ब्राह्मणजातिभ्योऽङ्गिरोभ्यः ᵛप्रथमः अन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृताः ᵛगाः ᵛअविन्दत् अलभत। अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैर्युद्ध्वा गाः स्वयमलभतेत्यर्थः। अपि च ᵛयः ᵛइन्द्रः ᵛदस्यून् उपक्षपयितॄनसुरान् ᵛअधरान् निकृष्टान् कृत्वा ᵛअवातिरत् अवधीत्। अवतिरतिर्वधकर्मा। तं ᵛमरुत्वन्तम् इन्द्रं ᵛसख्याय आह्वयामहे[2] ॥ जगतः। 'गम्लृ सृप्लृ गतौ'। 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ. सू. २. २४१) इति अतिप्रत्ययान्तो निपातितो जगच्छब्द आद्युदात्तः। प्राणतः। 'श्वस प्राणने, अन च'। अस्मात् लटः शतृ। अदादित्वात् शपो लुक्। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्। 'षष्ठ्याः पतिपुत्र°' इति विसर्जनीयस्य सत्वम् ॥

यः शूरे॑भि॒र्हव्यो॒ यश्च॑ भी॒रुभि॒र्यो धाव॑द्भि॒र्हूय॒ते यश्च॑ जि॒ग्युभिः॑।

इन्द्रं॒ यं विश्वा॒ भुव॑ना॒भि सं॑द॒धुर्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ६ ॥

यः। शूरे॑भिः। हव्यः॑। यः। च॒। भी॒रुऽभिः॑। यः। धाव॑त्ऽभिः। हू॒यते॑। यः। च॒। जि॒ग्युऽभिः॑।

इन्द्र॑म्। यम्। विश्वा॑। भुव॑ना। अ॒भि। स॒म्ऽद॒धुः। म॒रुत्व॑न्तम्। स॒ख्याय॑। ह॒वा॒म॒हे॒ ॥६॥

ᵛयः इन्द्रः ᵛशूरेभिः शौर्योपेतैः पुरुषैः ᵛहव्यः योद्धुमाह्वातव्यः। ᵛयश्च ᵛभीरुभिः भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः। अपि च ᵛयः इन्द्रः ᵛधावद्भिः पराजयेन पलायमानैः ᵛहूयते रक्षार्थमाहूयते। ᵛयश्च ᵛजिग्युभिः प्राप्तजयैराहूयते। ᵛयं च ᵛइन्द्रं ᵛविश्वा ᵛभुवना सर्वाणि भूतजातानि स्वेषु स्वेषु कार्येषु ᵛअभि ᵛसंदधुः आभिमुख्येन स्थापयन्ति। तं ᵛमरुत्वन्तम् इन्द्रं ᵛसख्याय आह्वयामहे[3] ॥ शूरेभिः। 'बहुलं छन्दसि' इति भिस ऐसभावः। हव्यः। ह्वयतेः 'अचो यत्' इति यत्। 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति संप्रसारणम्। गुणे[4] 'धातोस्तन्निमित्तस्यैव' इति अवादेशः। भीरुभिः। 'भियः क्रुक्लुकनौ' (पा. सू. ३. २. १७४) इति क्रुप्रत्ययः। धावद्भिः। 'सृ गतौ'। सर्तेः वेगितायां[5] शपि 'पाघ्रा°' इत्यादिना धावादेशः। शपः पित्त्वात् अनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। जिग्युभिः। 'जि जये'। लिटः क्वसुः। द्विर्वचने 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य जकारस्य कुत्वम्। भिसि अयस्मयादित्वेन भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणम्। छान्दसोऽन्त्यलोपः ॥ ॥ १२ ॥

रु॒द्राणा॑मेति प्र॒दिशा॑ विचक्ष॒णो रु॒द्रेभि॒र्योषा॑ तनुते पृ॒थु ज्रयः॑।

इन्द्रं॑ मनी॒षा अ॒भ्य॑र्चति श्रु॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ७ ॥

रु॒द्राणा॑म्। ए॒ति॒। प्र॒ऽदिशा॑। वि॒ऽच॒क्ष॒णः। रु॒द्रेभिः॑। योषा॑। त॒नु॒ते॒। पृ॒थु। ज्रयः॑।

इन्द्र॑म्। म॒नी॒षा। अ॒भि। अ॒र्च॒ति॒। श्रु॒तम्। म॒रुत्व॑न्तम्। स॒ख्याय॑। ह॒वा॒म॒हे॒ ॥७॥

---

१ क्ष-ट-ठ-स–विश्वस्य सर्वस्य। २. क्ष-ट-ठ–हवामहे। ३. क्ष-ट-ठ-स–हवामहे। ४. क्ष–गुणः। ५. क्ष-ट-ठ-स–वेगितायां गतौ गम्यमानायाम्।

विचक्षणः सूर्यात्मना प्रकाशमान इन्द्रः रुद्राणां रुद्रपुत्राणाम् अध्यात्मं प्राणरूपेण वर्तमानानां मरुताम् । यद्वा । रोदयितॄणां प्राणानाम् । प्राणा हि शरीरात् निर्गताः[1] सन्तो बन्धुजनान् रोदयन्ति । प्रदिशा प्रदेशनेन मनुष्येभ्यः प्रदानेन सह एति अन्तरिक्षे गच्छति । तथा चाम्नायते– ' योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति ' ( तै. आ. १. १४. १ ) इति । अपि च रुद्रेभिः अधिभूतं वर्तमानैः रुद्रपुत्रैर्मरुद्भिः योषा माध्यमिका वाक् पृथु विस्तीर्णं त्रयः वेगं तनुते विस्तारयति । प्रसंगादत्र मरुतां स्तुतिः । तैर्मरुद्भिः सह वर्तमानं श्रुतं प्रख्यातं सूर्यात्मानम् इन्द्रं मनीषा स्तुति-लक्षणा वाक् अभ्यर्चति आभिमुख्येन स्तौति । तं मरुत्वन्तम् इन्द्रं सख्याय[2] आह्वयामहे[3] ॥ प्रदिशा । ' दिश अतिसर्जने ' । संपदादिलक्षणो भावे क्विप् । त्रयः । ' जि त्रि अभिभवे ' । त्रीयतेऽभि-भूयतेऽनेनेति त्रयो वेगः । करणे असुन् । मनीषा[4] । ईषाअक्षादित्वात् प्रकृतिभावः ॥

यद्वा मरुत्वः परमे सधस्थे यद्वावमे वृजने मादयासे ।

अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥ ८ ॥

यत् । वा । मरुत्वः । परमे । सधऽस्थे । यत् । वा । अवमे । वृजने । मादयासे ।

अतः । आ । याहि । अध्वरम् । नः । अच्छ । त्वाऽया । हविः । चकृम । सत्यऽराधः ॥८॥

हे मरुत्वः मरुद्भिर्युक्तेन्द्र परमे उत्कृष्टे सधस्थे सहस्थाने गृहे यद्वा यदि वा मादयासे तृप्तो वर्तसे । यद्वा यदि वा अवमे अर्वाचीने वृजने । वृज्यते रिक्तीक्रियतेऽस्मिन् धनमिति वृजनं गृहम् । तस्मिन् मादयासे । अतः अस्मादुभयविधात् स्थानात् नः अस्माकं अध्वरं यज्ञम् अच्छ आभिमुख्येन आ याहि आगच्छ । हे सत्यराधः सत्यधन[5] त्वाया त्वत्कामनया वयं हविश्चकृम कृतवन्तः ॥ मरुत्वः । ' मतुवसो रुः ' इति संबुद्धौ नकारस्य रुत्वम् । सधस्थे । ' सुपि स्थः ' इति कप्रत्ययः । ' सध मादस्थयोश्छन्दसि ' इति सहस्य सधादेशः । मादयासे । ' मद तृप्तियोगे ' । चुरादिरात्मनेपदी । लेटि आडागमः । त्वाया । त्वामात्मन इच्छति । ' सुप आत्मनः क्यच् ' । ' प्रत्ययोत्तरपदयोश्च ' इति मपर्यन्तस्य त्वादेशः । व्यत्ययेन दकारस्य आत्वम् । ' अ प्रत्ययात् ' इति अकारप्रत्ययः । ' सुपां सुलुक् ' इति तृतीयाया लुक् ॥

त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।

अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व ॥ ९ ॥

त्वाऽया । इन्द्र । सोमम् । सुसुम । सुऽदक्ष । त्वाऽया । हविः । चकृम । ब्रह्मऽवाहः ।

अध । नियुत्वः । सऽगणः । मरुत्ऽभिः । अस्मिन् । यज्ञे । बर्हिषि । मादयस्व ॥ ९ ॥

हे सुदक्ष शोभनबल इन्द्र त्वाया त्वत्कामनया सोमं सुषुम अभिषुतवन्तो वयम् । हे ब्रह्मवाहः ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान प्राप्यमाणेन्द्र त्वाया त्वत्कामनया

---

१. क्ष–निर्गच्छन्तः । २. च-छ-त-न-फ-श-स–वयं सख्याय । ३. ठ–हवामहे । ४. क्ष–मनीषा अभि । ५. क्ष-ट-ठ-स–सत्यधन इन्द्र ।

आहवनीये[1] पुरोडाशलक्षणं[1] हविश्चकृम कृतवन्तः। हे नियुत्वः। नियुतोऽश्वाः। तद्वन्निन्द्र अधा अनन्तरं मरुद्भिः सप्तगणरूपैरेतत्संज्ञैर्देवैः सगणः गणसहितः सन् अस्मिन् वर्तमाने यज्ञे बर्हिषि आस्तीर्णे दर्भे उपविश्य मादयस्व तृप्तो भव ॥ सुषुम। ‘ षुञ् अभिषवे ’। लिटि क्रादिनियमप्राप्तस्य इटः ‘ अनित्यमागमशासनम् ’ इति वचनादभावः ॥

मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने ।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व ॥ १० ॥

मादयस्व । हरिऽभिः । ये । ते । इन्द्र । वि । स्यस्व । शिप्रे इति । वि । सृजस्व । धेने इति ।
आ । त्वा । सुऽशिप्र । हरयः । वहन्तु । उशन् । हव्यानि । प्रति । नः । जुषस्व ॥१०॥

हे इन्द्र हरिभिः अश्वैः सह मादयस्व तृप्तो भव । ये ते तव स्वभूतास्तदर्थं शिप्रे हनू संहते वि ष्यस्व सोमपानार्थं विवृते कुरु। तथा धेने पानसाधनभूते जिह्वोपजिह्विके वि सृजस्व सोमपानार्थं विश्लिष्टे कुरु। हे सुशिप्र। ‘ शिप्रे हनू नासिके वा ’। शोभनशिप्रेन्द्र त्वा त्वां हरयः अश्वाः आ वहन्तु अस्मदीयं यज्ञं प्रापयन्तु। त्वं च उशन् अस्मान् कामयमानः नः अस्माकं हव्यानि हवींषि प्रति जुषस्व प्रत्येकं सेवस्व मा उदासिष्ठाः ॥ वि ष्यस्व। ‘ षो अन्तकर्मणि ’। व्यत्ययेन आत्मनेपदम्। दिवादित्वात् श्यन्। ‘ओतः श्यनि ’ ( पा. सू. ७. ३. ७१ ) इति ओकार-लोपः। ‘ उपसर्गात्सुनोति° ’ इति षत्वम् ॥

मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥

मरुत्ऽस्तोत्रस्य । वृजनस्य । गोपाः । वयम् । इन्द्रेण । सनुयाम । वाजम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥११॥

मरुत्स्तोत्रस्य। मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रः। तस्य वृजनस्य शत्रूणां क्षेप्तुरिन्द्रस्य संबन्धिनः गोपाः गोपायनीयाः रक्षणीयाः वयं तेन इन्द्रेण वाजम् अन्नं सनुयाम लभेमहि। यदेतदस्माभिः प्रार्थितं नः अस्मदीयं तत् मित्रादयो द्यावापृथिव्यौ च ममहन्तां पूजितं कुर्वन्तु ॥ वृजनस्य। ‘ वृजी वर्जने ’। ‘ कृपृवृजिमन्दिनिधाञ्भ्यः क्युः ’ इति क्युप्रत्ययः ॥ ॥ १३ ॥

‘ इमां ते ’ इति एकादशर्चं नवमं सूक्तं कुत्सस्यार्षमैन्द्रम्। अन्त्या त्रिष्टुप् शिष्टा दश जगत्यः। तथा चानुक्रान्तम्–‘ इमां तेऽन्त्या त्रिष्टुप् ’ इति। विनियोगो लैङ्गिकः ॥

---

१. च-छ-ण-न-फ-ल–सवनीये पुरोडाशलक्षणम्, क्ष-ट-ठ-स–सवनीयपुरोडाशलक्षणम्; ध–पशुपुरो-डाशलक्षणम्।

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ १ ॥

इमाम् । ते । धियम् । प्र । भरे । महः । महीम् । अस्य । स्तोत्रे । धिषणा । यत् । ते । आनजे ।
तम् । उत्ऽसवे । च । प्रऽसवे । च । ससहिम् । इन्द्रम् । देवासः । शवसा । अमदन् । अनु ॥१॥

हे इन्द्र महः महतः ते तव इमाम् इदानीं क्रियमाणां महीं महतीम् अत्यन्तोत्कृष्टां धियं स्तुतिं प्र भरे प्रकर्षेण संपादयामि । ते तव[1] धिषणा त्वदीया बुद्धिः अस्य मम स्तोतुः स्तोत्रे स्तुतौ यत् यस्मात् आनजे अक्ता संश्लिष्टासीत् । तस्मात् तव प्रियां स्तुतिं करोमीत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतः । ससहिं शत्रूणामभिभवितारं पूर्वोक्तं तम् इन्द्रं देवासः कर्मसु दीव्यन्तः ऋत्विजः शवसा स्तुतिभिः कीर्तितेन बलेन अनु अमदन् अनुक्रमेण हर्षं प्रापयन् । किमर्थम् । उत्सवे च उत्सवार्थमभिवृद्ध्यर्थं प्रसवे च धनानां वृष्ट्युदकानां वा उत्पत्त्यर्थं च ॥ आनजे । 'अञ्जू व्यक्तिम्रक्षणगतिषु' । अस्मात् कर्मणि लिट् । द्विर्वचनहलादिशेषौ । 'अत आदेः' इति अभ्यासस्य आत्वम् । 'तस्मान्नुड्द्विहलः' (पा. सू. ७. ४. ७१) इति नुट् । व्यत्ययेन उपधानकारलोपः । उत्सवे । प्रसवे । 'षू प्रेरणे' । 'ऋदोरप्' इति भावे अप् । 'निमित्तात्कर्मसंयोगे' (पा. सू. २. ३. ३६. ६) इति सप्तमी । थाथादिना उत्तरपदान्तोदात्तत्वम् । ससहिम् । 'षह अभिभवे' । 'आदृगमहन०' इत्यत्र 'उत्सर्गश्छन्दसि०' इति वचनात् किप्रत्ययः । लिड्वद्भावात् द्विर्वचनम् । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् । अमदन् । 'मदी हर्षे' । हेतुमति णिच् । 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ॥

अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।
अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥ २ ॥

अस्य । श्रवः । नद्यः । सप्त । बिभ्रति । द्यावाक्षामा । पृथिवी । दर्शतम् । वपुः ।
अस्मे इति । सूर्याचन्द्रमसा । अभिऽचक्षे । श्रद्धे । कम् । इन्द्र । चरतः । विऽतर्तुरम् ॥२॥

अस्य इन्द्रस्य श्रवः यशः कीर्तिं सप्त 'इमं मे गङ्गे' इत्यस्यामृचि प्राधान्येन प्रतिपादिता गङ्गाद्याः सप्तसंख्याकाः नद्यः बिभ्रति धारयन्ति । वृत्रहननेन इन्द्रस्य यत् वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः । अपि च द्यावाक्षामा द्यावापृथिव्यौ । पृथिवी इति अन्तरिक्षनाम । अन्तरिक्षं चास्य सूर्यात्मना वर्तमानस्येन्द्रस्य दर्शतं सर्वैः प्राणिभिर्दर्शनीयं वपुः । रूपनामैतत् । प्रकाशात्मकं रूपं धारयन्ति । किंच हे इन्द्र अस्मे अस्माकम् अभिचक्षे द्रष्टव्यानां पदार्थानामाभिमुख्येन प्रकाशनार्थं श्रद्धे कं श्रद्धार्थम् । चक्षुषा दृष्टे हि वस्तुनि इदं सत्यमिति श्रद्धोत्पद्यते । कमित्येतत् पादपूरणम्[2] । तदुभयार्थं सूर्याचन्द्रमसौ वितर्तुरं परस्परव्यतिहारेण तरणं पुनःपुनर्गमनं यथा भवति

१. क्ष-स-' तव ' नास्ति । २. क्ष-न-स-पदपूरणम् ।

तथा ᵛचरतः । वर्तेते । त्वमेव तद्रूपः सन् वर्तसे इत्यर्थः ॥ अस्य । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । द्यावाक्षामा । द्यौश्च क्षामा च । 'दिवो द्यावा' इति द्यावादेशः । 'सुपां सुलुक्°' इति विभक्तेः डादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । दर्शतम् । 'भृमृदृशि°' इत्यादिना अतच् । सूर्याचन्द्रमसा । सूर्यश्च चन्द्रमाश्च । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः । 'सुपां सुलुक्°' इति विभक्तेः आकारः । चन्द्रमःशब्दो दासीभारादित्वात् पूर्वपदप्रकृतिस्वरेण मध्योदात्तः । अतो 'देवताद्वन्द्वे च' इति प्राप्तस्य उभयपदप्रकृतिस्वरस्य[1] 'नोत्तरपदेऽनुदात्तादावपृथिवी°' इति प्रतिषेधः । अभिचक्षे । चक्षेः प्रकाशनार्थात् संपदादिलक्षणो भावे क्विप् । तादर्थ्ये चतुर्थी । श्रद्धे । दृशिग्रहणात् दधातेर्भावे विच् । चतुर्थ्येकवचने 'आतो धातोः' इति आकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । वितर्तुरम् । तरतेर्यङ्लुगन्तात् औणादिकः कुरच्[2] । 'बहुलं छन्दसि' इति उत्वम् ॥

तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनुमदाम संगमे ।
आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥ ३ ॥

तम् । स्म । रथम् । मघऽवन् । प्र । अव । सातये । जैत्रम् । यम् । ते । अनुऽमदाम । सम्ऽगमे ।
आजा । नः । इन्द्र । मनसा । पुरुऽस्तुत । त्वायत्ऽभ्यः । मघऽवन् । शर्म । यच्छ । नः ॥३॥

हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛसातये अस्माकं धनलाभाय ᵛतं ᵛस्म तमेव ᵛरथं ᵛप्राव प्रेरय वर्तय[3] । ᵛनः अस्माकं ᵛमनसा बुद्ध्या ᵛपुरुष्टुत बहुशः स्तुतेन्द्र ᵛते तव स्वभूतं ᵛजैत्रं जयशीलं ᵛयं रथं ᵛसंगमे शत्रुभिः सह संगमने ᵛआजा[4] युद्धे सति ᵛअनुमदाम वयमनुक्रमेण स्तुमः । अपि च हे ᵛमघवन् ᵛत्वायद्भ्यः त्वां कामयमानेभ्यः ᵛनः अस्मभ्यं ᵛशर्म सुखं ᵛयच्छ देहि ॥ अव । 'अव रक्षणगतिकान्ति°' इत्युक्तत्वादवतिरत्र गत्यर्थः । संगमे । 'ग्रहवृदृनिश्चिगमश्च' इति कर्मणि अप् । थाथादिना उत्तरपदान्तोदात्तत्वम् । आजा । 'सुपां सुलुक्°' इति सप्तम्या डादेशः । त्वायद्भ्यः । 'सुप आत्मनः क्यच्' । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । व्यत्ययेन दकारस्य आत्वम् । क्यजन्तात् लटः शतृ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सति क्यचा सहैकादेशे 'एकादेश उदात्तेन°' इति तस्य उदात्तत्वम् ॥

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥ ४ ॥

वयम् । जयेम । त्वया । युजा । वृतम् । अस्माकम् । अंशम् । उत् । अव । भरेऽभरे ।
अस्मभ्यम् । इन्द्र । वरिवः । सुऽगम् । कृधि । प्र । शत्रूणाम् । मघऽवन् । वृष्ण्या । रुज ॥४॥

---

१. क्ष-ट-ठ—उभयपदप्रकृतिस्वरत्वस्य । २. क्ष—कुरच्प्रत्ययः । ३. क्ष-ट-ठ-स—प्रवर्तय । ४. क्ष-ट-ठ-स—आजा आजौ ।

हे इन्द्र युजा अस्माभिर्युक्तेन सहायभूतेन त्वया वृतं आवृण्वन्तं शत्रुं वयं स्तोतारः जयेम अभिभवेम। अपि च भरेभरे संग्रामेसंग्रामे अस्माकम् अंशम् अस्मदीयं भागम् उदव शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष। तथा हे इन्द्र वरिवः धनम् अस्मभ्यं सुगं सुगमं सुप्रापं कृधि कुरु। तथा हे मघवन् शत्रूणाम् अस्मदुपद्रवकारिणां वृष्ण्या वृष्ण्यानि वीर्याणि प्र रुज प्रभङ्धि बाधस्वेत्यर्थः॥ वृतम्। 'वृञ् वरणे'। 'क्विप् च' इति क्विप्। तुगागमः। सुगम्। 'सुदुरोरधिकरणे' इति गमेः डप्रत्ययः। कृधि। 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिः। रुज। 'रुजो भङ्गे'। तौदादिकः॥

नाना॒ हि त्वा॒ हव॑माना॒ जना॑ इ॒मे धना॑नां धर्त॒रव॑सा विप॒न्यव॑: ।
अ॒स्माकं॑ स्मा॒ रथ॒मा ति॑ष्ठ सा॒तये॒ जैत्रं॒ ही॑न्द्र॒ निभृ॑तं॒ मन॒स्तव॑ ॥ ५ ॥

नाना॑ । हि । त्वा॒ । हव॑मानाः । जना॑: । इ॒मे । धना॑नाम् । ध॒र्त॒: । अव॑सा । वि॒प॒न्यव॑: ।
अ॒स्माक॑म् । स्म॒ । रथ॑म् । आ । ति॒ष्ठ॒ । सा॒तये॑ । जैत्र॑म् । हि । इ॒न्द्र॒ । निऽभृ॑तम् । मन॑: । तव॑ ॥५॥

हे धनानां धर्तः गोहिरण्यादिरूपाणां द्रव्याणां धारयितः इन्द्र विपन्यवः। स्तोतृनामैतत्। स्तोतारः इमे जनाः अवसा रक्षणेन हेतुना त्वा हवमानाः त्वामाह्वयन्तः नाना हि विभिन्नाः खलु। तेषां मध्ये अस्माकं स्म अस्माकमेव सातये धनदानाय[1] रथम् आ तिष्ठ आरोह। हे इन्द्र निभृतम् अव्याकुलं तव मनः चित्तं जैत्रं हि जयशीलं खलु। शत्रून् जित्वास्मभ्यं धनं दातुं समर्थमित्यर्थः॥ सातये। 'षणु दाने'। क्तिनि 'जनसनखनां सञ्झलोः' इति आत्वम्॥ ॥ १४ ॥

गो॒जिता॑ बा॒हू अमि॑तक्रतुः सि॒मः कर्म॑न्कर्मञ्छ॒तमू॑तिः खजंक॒रः ।
अ॒क॒ल्प इन्द्र॑: प्रति॒मान॒मोज॒साथा॒ जना॒ वि ह्व॑यन्ते सिषा॒सव॑: ॥ ६ ॥

गो॒ऽजिता॑ । बा॒हू इति॑ । अमि॑तऽक्रतुः । सि॒मः । कर्म॑न्ऽकर्मन् । श॒तम्ऽऊ॑तिः । ख॒ज॒म्ऽक॒रः ।
अ॒क॒ल्पः । इन्द्र॑: । प्र॒ति॒ऽमान॑म् । ओज॑सा । अथ॑ । जना॑: । वि । ह्व॒यन्ते॒ । सि॒सा॒सव॑: ॥६॥

हे इन्द्र तव बाहू हस्तौ गोजिता जयेन गवां लम्भयितारौ। त्वं च अमितक्रतुः अपरिच्छिन्नज्ञानः सिमः श्रेष्ठः। तथा च शाट्यायनकं—'सिम इति वै श्रेष्ठमाचक्षते' इति। यद्वा। सिमः शत्रूणां बन्धकः। कर्मन्कर्मन् स्तोतृणां कर्मणिकर्मण्युपस्थिते शतमूतिः बहुविधरक्षणोपेतः खजंकरः। खजति मथ्नाति पुरुषानिति खजः संग्रामः। तस्य कर्ता। अकल्पः कल्पेनान्येन रहितः। स्वतन्त्र इत्यर्थः। ओजसा सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण प्रतिमानं प्रतिनिधित्वेन मीयमानः। यस्मादेवंगुणविशिष्टः इन्द्रः अथ अतः कारणात् सिषासवः धनं लब्धुकामाः[2] जनाः वि ह्वयन्ते विविधमाह्वयन्ति॥ गोजिता। गा जयतः इति गोजितौ[3]। 'सुपां सुलुक्॰' इति विभक्तेः आकारः। सिमः। 'षिञ् बन्धने'। अस्मादौणादिको मक्। खजंकरः। 'खज मन्थे'। पचाद्यच्। 'क्षेमप्रियमद्रेऽण् च' (पा. सू. ३. २. ४४) इति चशब्दस्यानुक्तसमुच्चयार्थत्वात् खजशब्दोपपदादपि

१. क्ष-स—धनलाभाय। २. क्ष—लब्धुमिच्छवः। ३. क्ष-स—गोजितौ। क्विप्।

करोतेः खच्। 'अरुर्द्विषदजन्तस्य°' इति मुम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। अकल्पः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। सिषासवः। 'वन षण संभक्तौ'। सनि[1] 'सनीवन्तर्ध°' इति विकल्पनात् इडभावः। 'जनसनखनां सञ्झलोः' इति आत्वम्। द्विर्वचनादि। 'सनाशंसभिक्ष उः' (पा. सू. ३. २. १६८) इति उप्रत्ययः। सति शिष्टत्वात् तस्यैव स्वरः शिष्यते॥

उत्ते॑ श॒तान्म॑घव॒न्नुच्च॒ भूय॑स॒ उत्स॒हस्रा॑द्रिरिचे कृ॒ष्टिषु॒ श्रवः॑।
अ॒मा॒त्रं त्वा॑ धि॒षणा॑ तित्विषे म॒ह्यधा॑ वृ॒त्राणि॑ जिघ्नसे पुरंदर॥ ७॥

उत्। ते॒। श॒तात्। म॒घ॒ऽव॒न्। उत्। च॒। भूय॑सः। उत्। स॒हस्रा॑त्। रि॒रि॒चे॒। कृ॒ष्टिषु॑। श्रवः॑। अ॒मा॒त्रम्। त्वा॒। धि॒षणा॑। ति॒त्वि॒षे॒। म॒ही। अध॑। वृ॒त्राणि॑। जि॒घ्न॒से॒। पु॒र॒म्ऽद॒र॥ ७॥

हे ^v^मघवन् धनवन्निन्द्र ^v^कृष्टिषु स्तोतृषु मनुष्येषु त्वया दीयमानं ^v^श्रवः यदन्नमस्ति तत् ^v^शतात् शतसंख्याकादन्नात् ^v^उत् ^v^रिरिचे उद्रिक्तमधिकं भवति। अपि च ^v^भूयसः शतसंख्याकादपि बहुतरादन्नात् ^v^उत् रिरिचे अधिकं भवति। किं बहुना। ^v^सहस्रात् सहस्रसंख्याकादपि ^v^उत् रिरिचे। त्वया दत्तं तदन्नमक्षयमित्यर्थः। अपि च ^v^अमात्रं मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकं त्वां[2] ^v^मही महती ^v^धिषणा अस्मदीया स्तुतिलक्षणा वाक् ^v^तित्विषे दीपयति। त्वत्संबन्धिनो गुणान् प्रकाशयति। हे ^v^पुरंदर शत्रूणां पुरां दारयितरिन्द्र ^v^अध स्तुत्यनन्तरं ^v^वृत्राणि आवरकान् शत्रून् ^v^जिघ्नसे हंसि विनाशयसि॥ रिरिचे। 'रिचिर् विरेचने'। कर्मणि लिट्। तित्विषे। 'त्विष दीप्तौ'। जिघ्नसे। हन्तेर्लेटि व्यत्ययेन आत्मनेपदम्। 'लेटोऽडाटौ' इति अडागमः। 'बहुलं छन्दसि' इति शपः श्लुः। 'गमहन°' इत्यादिना उपधालोपः। स्थानिवद्भावात् द्विर्वचनादि। 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। पुरंदर। 'पूःसर्वयोर्दारिसहोः' (पा. सू. ३. २ ४१) इति खच्। 'खचि ह्रस्वः' (पा. सू. ६. ४. ९४) इति ह्रस्वत्वम्। 'वाचंयमपुरंदरौ च' (पा. सू. ६. ३. ६९) इति निपातनात् अम्॥

त्रि॒वि॒ष्टि॒धातु॑ प्रति॒मान॒मोज॑सस्ति॒स्रो भूमी॑र्नृपते॒ त्रीणि॑ रोच॒ना।
अ॒तीदं विश्वं॒ भुव॑नं ववक्षिथाश॒त्रुरि॑न्द्र ज॒नुषा॑ स॒नाद॑सि॥ ८॥

त्रि॒वि॒ष्टि॒ऽधातु॑। प्र॒ति॒ऽमान॑म्। ओज॑सः। ति॒स्रः। भूमीः॑। नृ॒ऽप॒ते॒। त्रीणि॑। रो॒च॒ना। अति॑। इ॒दम्। विश्व॑म्। भुव॑नम्। व॒व॒क्षि॒थ॒। अ॒श॒त्रुः। इ॒न्द्र॒। ज॒नुषा॑। स॒नात्। अ॒सि॒॥ ८॥

हे ^v^नृपते नृणां पालयितरिन्द्र त्वम् ^v^ओजसः सर्वेषां प्राणिनां बलस्य ^v^प्रतिमानं प्रतिनिधिरसि। कीदृशं प्रतिमानम्। ^v^त्रिविष्टिधातु। धातुशब्दो रज्जुभागवचनः। यथा 'त्रिधातु पञ्चधातु वा शुल्बं करोति' इति। यथा त्रिविष्टिस्त्रिगुणिता रज्जुः द्रढीयसी एवमिन्द्रोऽपि दृढतर इत्यर्थः। किंच त्वं ^v^तिस्रो ^v^भूमीः त्रीन् लोकान् ^v^त्रीणि ^v^रोचना त्रीणि तेजांसि दिवि आदित्याख्यम् अन्तरिक्षे वैद्युतरूपमग्निं

---

१. क्ष-स-अस्मात् सनि। २. क्ष-त्वा त्वाम्। ३. क्ष-ट-ठ-द्रढीयसी भवति।

पृथिव्याम् आहवनीयादिरूपेण वर्तमानं पार्थिवमग्निम् एवं त्रीन् लोकान् त्रीणि तेजांसि च अति ववक्षिथ अतिशयेन वोढुमिच्छसि । अपि च इदं विश्वं सर्वं भुवनं भूतजातं चातिवोढुमिच्छसि । सर्वस्य जगतः पालनेन त्वमेव सर्वेषां निर्वाहकः भवसीत्यर्थः[1] । यस्मात् हे इन्द्र त्वं सनात् चिरकालादारभ्य जनुषा जन्मना जन्मप्रभृति अशत्रुः सपत्नरहितः असि ॥ त्रिविष्टिधातु । त्रिधा त्रिप्रकारेण विष्टया प्रवेशनेन विधीयते[2] क्रियते इति त्रिविष्टिधातुः[3] त्रिगुणिता रज्जुः । विशेर्भावे क्तिन् । धातुः 'सितनि-गमिमसि॰' (उ. सू. १. ६९) इत्यादिना कर्मणि तुन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अत्र दृढरज्जुवाचकः शब्दस्तद्गतं दार्ढ्यं लक्षयित्वा तद्वति प्रतिमाने वर्तते । यथा माणवकेऽग्निशब्दः । तिस्रः । शसि 'त्रिचतुरोः स्त्रियाम्॰' इति तिस्रादेशः अन्तोदात्तः । 'अचि र ऋतः' इति रेफादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । ववक्षिथ । 'वह प्रापणे' इत्यस्मात् इच्छासनि ढत्वकत्वषत्वानि । 'सन्यतः' इति इत्वाभावश्छान्दसः । छान्दसे[4] लिटि '॰अमन्त्रे॰' इति निषेधात् आम्प्रत्ययाभावः । जनुषा । 'जनेरुसिः' ॥

त्वां दे॒वेषु॑ प्रथ॒मं ह॑वामहे॒ त्वं ब॑भूथ॒ पृत॑नासु सास॒हिः ।

सेमं नः॑ का॒रुमु॑पम॒न्युमु॒द्भिद॒मिन्द्रः॑ कृणोतु प्रस॒वे रथं॑ पु॒रः ॥ ९ ॥

त्वाम् । दे॒वेषु॑ । प्र॒थ॒मम् । ह॒वा॒म॒हे॒ । त्वम् । ब॒भू॒थ॒ । पृत॑नासु । स॒स॒हिः ।

सः । इ॒मम् । नः॒ । का॒रुम् । उ॒प॒ऽम॒न्युम् । उ॒त्ऽभिद॑म् । इन्द्रः॑ । कृ॒णोतु॑ । प्र॒ऽस॒वे । रथ॑म् । पु॒रः ॥ ९ ॥

हे इन्द्र देवेषु प्रथमं श्रेष्ठं त्वां हवामहे यागार्थमाह्वयामहे । तथा[6] त्वं पृतनासु संग्रामेषु ससहिः बभूथ शत्रूणामभिभवितासि । उत्तरार्धः[5] परोक्षकृतः । सः इन्द्रः नः अस्माकं कारुं स्तुतीनां कर्तारम् उपमन्युम् उपमन्तारं सर्वज्ञम् उद्भिदं शत्रूणामुद्भेत्तारम् इमम् एवंगुणविशिष्टं पुत्रं कृणोतु करोतु । अपि च प्रसवे युद्धोत्पत्तावस्मदीयं रथं पुरः अन्येभ्यो रथेभ्यः पुरतो वर्तमानं करोतु । यद्वा । कारुमित्यादीनि रथविशेषणानि । कारुं युद्धस्य कर्तारम् उपमन्युम् उपगतेन प्राप्तेन मन्युना क्रोधेन युक्तम् उद्भिदं मार्गेऽवस्थितानां वृक्षादीनामुद्भेत्तारमतिशयेन भङ्क्तारम् ॥ बभूथ । 'बभूथा ततन्थ जगृभ्म ववर्थेति निगमे' इति निपातनात् इडभावः । स इमम् । 'सोऽचि लोपे चेत्पाद-पूरणम्' इति सुलोपः[7] । प्रसवे । 'षूङ् प्राणिप्रसवे' । ऋदोरप् । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

त्वं जि॑गेथ॒ न धना॑ रुरोधि॒थार्भे॒ष्वाजा म॑घवन्म॒हत्सु॑ च ।

त्वामु॒ग्रमव॑से॒ सं शि॑शीम॒स्यथा॑ न इन्द्र॒ हव॑नेषु चोदय ॥ १० ॥

त्वम् । जि॒गे॒थ॒ । न । धना॑ । रु॒रो॒धि॒थ॒ । अर्भे॑षु । आ॒जा । म॒घ॒ऽव॒न् । म॒ह॒त्ऽसु॑ । च॒ ।

त्वाम् । उ॒ग्रम् । अव॑से । सम् । शि॒शी॒म॒सि॒ । अथ॑ । नः॒ । इ॒न्द्र॒ । हव॑नेषु । चो॒द॒य॒ ॥ १० ॥

---

१. क्ष–असीत्यर्थः । २. क्ष-ट-ठ-स–धीयते विधीयते । ३. क्ष-ट-ठ–त्रिविष्टिधातु । ४. क्ष-ट-ठ–'छान्दसे' नास्ति । ५. क्ष-ट-ठ–यथा । ६. क्ष–उत्तरोऽर्धर्चः । ७. क्ष-ट-ठ–सलोपः ।

हे इन्द्र त्वं जिगेथ शत्रून् जयसि । तथा धना शत्रुभ्योऽपहृतानि धनानि न रुरोधिथ नावरुणत्सि । स्तोतृभ्यः प्रयच्छसीत्यर्थः । हे मघवन् धनवन्निन्द्र अर्भेषु अल्पेषु आजा आजिषु संग्रामेषु महत्सु च प्रौढेषु संग्रामेषु च अवसे अस्माकं रक्षणार्थम् उग्रम् उद्गूर्णम् अधिकबलं त्वां सं शिशीमसि स्तोत्रैस्तीक्ष्णीकुर्मः । अथ अनन्तरं हे इन्द्र त्वं हवनेषु युद्धार्थमाह्वानेषु सत्सु आगत्य नः अस्मान् चोदय संग्रामेषु प्रेरय । जयं प्रापयेत्यर्थः ॥ जिगेथ । 'जि जये' । लिटि थलि क्रादिनियमात् प्राप्तस्य इटः 'अचस्तास्वत्थल्यनिटो नित्यम्' ( पा. सू. ७. २. ६१ ) इति प्रतिषेधः । 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य जकारस्य कुत्वम्[1] । रुरोधिथ । क्रादिनियमात् इट् । आजा । 'सुपां सुलुक्॰' इति सप्तमीबहुवचनस्य डादेशः । शिशीमसि । 'शो तनूकरणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेचः॰' इति आत्वम् । द्विर्वचने 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'ई हल्यघोः' इति ईकारान्तादेशः । इदन्तो मसिः ॥

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥

विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥

व्याख्यातेयं 'रोहिच्छ्यावा' इति वर्गे ( ऋ. सं. १. १००. १९ ) । इन्द्रः सर्वेष्वहःस्वस्माकं पक्षपातेन वक्ता भवतु । वयं चाकुटिलगतयः सन्त इन्द्रेण दत्तमन्नं लभामहे[2] । यदस्माभिः प्रार्थितम् अस्मदीयं[3] तन्मित्रादयः पूजितं कुर्वन्तु ॥ ॥ १५ ॥

'तत्ते' इति अष्टर्चं दशमं सूक्तं कुत्सस्यार्षमैन्द्रं त्रैष्टुभम् । तथा चानुक्रान्तं–'तत्तेऽष्टौ' इति । तृतीये छन्दोमे निष्केवल्ये इदं सूक्तं निविद्धानम् । 'विश्वजितः' इति खण्डे सूत्रितं–'तत्त इन्द्रियमिति निष्केवल्यम्' ( आश्व. श्रौ. ८. ७ ) इति ॥

तत्त इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम् ।
क्षमेदमन्यद्दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ॥ १ ॥

तत् । ते । इन्द्रियम् । परमम् । पराचैः । अधारयन्त । कवयः । पुरा । इदम् ।
क्षमा । इदम् । अन्यत् । दिवि । अन्यत् । अस्य । सम् । ईमिति । पृच्यते । समनाऽइव । केतुः ॥ १ ॥

हे इन्द्र ते त्वदीयं परमम् उत्कृष्टं तत् प्रसिद्धम् इदं वर्तमानम् इन्द्रियं बलं पुरा पूर्वस्मिन् काले कवयः क्रान्तदर्शिनः स्तोतारः पराचैः पराचीनं पराङ्मुखम् । यद्वा । पराचैः पराञ्चैः परागमनैर्युक्तम् । युद्धाभिमुखमेव अधारयन्त धृतवन्तः । अपि च अस्य इन्द्रस्य अन्यत् एकम्

१. क्ष-ट-ठ–गकारः । २. क्ष-ट-ठ–लभेमहि । ३. क्ष–'असदीयम्' नास्ति ।

इदम् अग्न्याख्यं ज्योतिः क्षमा क्षमायां भूमौ वर्तते । अन्यत्[1] अप्येकं सूर्याख्यं दिवि द्युलोके । ईं तदिदमुभयविधमिन्द्रस्य ज्योतिः सं पृच्यते परस्परं संयुज्यते । रात्रावादित्योऽग्निना संयुक्तो भवति । 'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' इति श्रुतेः । अहनि त्वग्निः सूर्येण संगच्छते । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे' ( तै. ब्रा. २. १.२. ९-१० ) इति श्रुतेः । अनयोः परस्परसंगमने दृष्टान्तः । समनेव केतुः । समनशब्दः संग्रामवाची । यथा समने संग्रामे युध्यमानयोः उभयोः[2] केतुर्ध्वजो ध्वजान्तरेण संयुज्यते तद्वत् ॥ इन्द्रियम् । इन्द्रस्य लिङ्गं बलम् । 'इन्द्रियमिन्द्रलिङ्गम्°' इति घच्प्रत्ययान्तो निपात्यते । पराचैः । अव्ययमेतत् उच्चैर्नीचैरिति यथा । यास्कस्त्वाह–'पराचैः पराञ्चैः' ( निरु. ११. २५ ) इति । क्षमा । 'सुपां सुलुक्°' इति सप्तम्या लुक् । ईमो मलोपः सांहितिकश्छान्दसः । समनेव । 'षम ष्टम अवैक्लव्ये' । 'अन्येभ्योऽपि दृश्यते' ( पा. सू. ३. ३. १३० ) इति युच् । 'सुपां सुलुक्°' इति सप्तम्या आकारः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति समासः ॥

**स धा॑रयत्पृथि॒वीं प॒प्रथ॑च्च॒ वज्रे॑ण ह॒त्वा निर॒पः स॑सर्ज ।**

**अह॑न्न॒हिमभि॑नद्रौहि॒णं व्यह॒न्व्यं॑सं म॒घवा॒ शची॑भिः ॥ २ ॥**

सः । धा॒र॒य॒त् । पृ॒थि॒वीम् । प॒प्रथ॑त् । च॒ । वज्रे॑ण । ह॒त्वा । निः । अ॒पः । स॒स॒र्ज॒ ।

अह॑न् । अहि॑म् । अभि॑नत् । रौ॒हि॒णम् । वि । अह॑न् । वि॒ऽअं॑सम् । म॒घऽवा॑ । शची॑भिः ॥२॥

सः इन्द्रः पृथिवीम् असुरैः पीडितां भूमिं धारयत् धृतवान् । पीडाराहित्येन स्थिताम्[3] अकरोदित्यर्थः । तदनन्तरं पप्रथच्च तां भूमिं विस्तीर्णामकरोत् । अपि च वज्रेण आयुधेन हन्तव्यान् वृत्रादीन् हत्वा अपः वृष्ट्युदकानि निः ससर्ज मेघान्निर्गमयामास । एतदेव स्पष्टीक्रियते । अहिम् अन्तरिक्षे वर्तमानं मेघम् अहन् वज्रेण वर्षणार्थमताडयत् । रौहिणम् । रौहिणो नाम कश्चिदसुरः । तं च वि अभिनत् व्यदारयत् । अपि च मघवा धनवानिन्द्रः शचीभिः आत्मीयैर्युद्धकर्मभिः व्यंसं विगतभुजं वृत्रासुरम् अहन् अवधीत् ॥ पप्रथत् । पृथुं करोति प्रथयति । 'तत्करोति°' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य कार्यम्' ( पा. सू. ६. ४. १५५. १ ) इति वचनात् 'र ऋतो हलादेर्लघोः' ( पा. सू. ६. ४. १६१ ) इति ऋकारस्य रत्वम् । 'टेः' इति टिलोपः । तस्य स्थानिवद्भावात् वृद्ध्यभावः । प्रथयतेर्लुङि[4] चङि णिलोपः । द्विर्वचने[5] 'चङ्यन्यतरस्याम्' ( पा. सू. ६. १. २१८ ) इति चङः पूर्वस्योदात्तत्वम् । न[6] णिलोपस्य स्थानिवत्त्वं, 'न पदान्त°' इत्यादिना स्वरविधिं प्रति तन्निषेधात् । पूर्वपदस्य असमानवाक्यस्थत्वात् निघाताभावः ॥

**स जा॒तूभ॑र्मा श्र॒द्दधा॑न॒ ओजः॒ पुरो॑ विभि॒न्दन्न॑चर॒द्वि दासीः॑ ।**

**वि॒द्वान्व॑ज्रि॒न्दस्य॑वे हे॒तिम॒स्यार्यं॒ सहो॑ वर्धया द्यु॒म्नमि॑न्द्र ॥ ३ ॥**

सः । जा॒तूऽभ॑र्मा । श्र॒त्ऽदधा॑नः । ओजः॑ । पुरः॑ । वि॒ऽभि॒न्दन् । अ॒च॒र॒त् । वि । दासीः॑ ।

वि॒द्वान् । व॒ज्रि॒न् । दस्य॑वे । हे॒तिम् । अ॒स्य॒ । आर्य॑म् । सहः॑ । व॒र्ध॒य॒ । द्यु॒म्नम् । इ॒न्द्र॒ ॥३॥

---

१. क्ष-ट-ठ-न-स–अन्यदेकम् । २. क्ष–उभयोः सेनयोः । ३. क्ष-स–स्थिराम् । ४. क्ष-ट-ठ-स–यद्वा प्रथयतेर्लुङि । ५. क्ष-न-स–द्विर्वचनम् । ६. क्ष–न च ।

जातूभर्मा । जातू इत्यशनिमाचक्षते । भर्म आयुधम् । अशनिरूपमायुधं यस्य स तथोक्तः । यद्वा जातानां प्रजानां भर्ता । ओजः ओजसा बलेन निष्पाद्यं कार्यं श्रद्दधानः आदरातिशयेन कामयमानः[1] एवंभूतः सः इन्द्रः दासीः दस्युसंबन्धीनि[2] पुरः पुराणि विभिन्दन् विनाशयन् वि अचरत् विविधमगच्छत् । हे वज्रिन् वज्रवन् इन्द्र विद्वान् स्तुतीः विजानंस्त्वम् अस्य स्तोतुः दस्यवे उपक्षयकारिणे शत्रवे हेतिम् आयुधं विसृजेति[3] शेषः[4] । अपि च हे इन्द्र आर्यं सहः । आर्या विद्वांसः स्तोतारः । तदीयं बलं वर्धय अतिवृद्धं[5] कुरु । तथा द्युम्नं तदीयं यशश्च प्रवर्धय ॥ जातूभर्मा । ' जनी प्रादुर्भावे ' । ' अन्येष्वपि दृश्यते ' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि डप्रत्ययः । जान् तूर्वतीति जातूः । ' तुर्वी हिंसार्थः ' । क्विपि ' राल्लोपः ' इति वलोपः । भ्रियते इति भर्म । ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । जातूः भर्म यस्य । छान्दसो रेफलोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पक्षान्तरे तु जनेर्निष्ठा । ' जनसनखनाम्° ' इति आत्वम् । जातं सर्वं भर्म भर्तव्यं येन । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्णव्यापत्त्या अकारस्य ऊकारः ॥

तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् ।
उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥ ४ ॥

तत् । ऊचुषे । मानुषा । इमा । युगानि । कीर्तेन्यम् । मघऽवा । नाम । बिभ्रत् ।
उपऽप्रयन् । दस्युऽहत्याय । वज्री । यत् । ह । सूनुः । श्रवसे । नाम । दधे ॥ ४ ॥

नाम शत्रूणां नामकं तत् इन्द्रस्य बलम् ऊचुषे उक्तवते स्तुवते[6] यजमानाय कीर्तेन्यं कीर्तनीयं स्तुत्यम् । नामकं तद्बलं बिभ्रत् धारयन् मघवा धनवानिन्द्रः मानुषा मनुष्याणां संबन्धीनि इमा इमानि दृश्यमानानि युगानि अहोरात्रसंघनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः । किं पुनस्तन्नाम । दस्युहत्याय दस्यूनां वृत्रादीनां हननाय उपप्रयन् गृहसमीपान्निर्गच्छन् वज्री वज्रवान् सूनुः शत्रूणां प्रेरयितेन्द्रः यद्ध यत् खलु नाम शत्रूणां नामकं श्रवसे जयलक्षणाय यशसे दधे धृतवान् ॥ ऊचुषे । ' ब्रूञ् व्यक्तायां वाचि ' । ' ब्रुवो वचिः ' । लिटः क्वसुः । ' वचिस्वपि° ' इत्यादिना संप्रसारणम् । चतुर्थ्येकवचने भसंज्ञायां ' वसोः संप्रसारणम् ' इति संप्रसारणम् । ' शासिवसिघसीनां च ' इति षत्वम् । क्वसुप्रत्ययाद्युदात्तत्वम् । कीर्तेन्यम् । ' कृत संशब्दने[7] ' । ' कृत्यार्थे तवैकेन्° ' इति केन्यप्रत्ययः । मघवा । मघशब्दात् ' छन्दसीवनिपौ° ' इति मत्वर्थीयो वनिप् । बिभ्रत् । ' डुभृञ् धारणपोषणयोः ' । शतरि जुहोत्यादित्वात् शपः श्लुः । ' भृञामित् ' इति अभ्यासस्य इत्वम् । ' नाभ्यस्ताच्छतुः ' इति नुमागमप्रतिषेधः । ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥

---

१. क्ष-ट-ठ–कार्यं यतमानः । २. क्ष–दस्युसंबन्धिनीः । ३. क्ष–अतिसृजेति । ४. क्ष-स–' शेषः ' इत्यस्यानन्तरं ' यद्वा अस्येति क्रियापदं क्षिप ' इत्यधिकम् । ५. क्ष-स–अभिवृद्धम् । ६. क्ष-ट-ठ–स्तुतवते । ७. क्ष-ट-ठ-स–संशब्दने । चौरादिकः ।

तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय ।
स गा अविन्दत्सो अविन्ददश्वान्त्स ओषधीः सो अपः स वनानि ॥ ५ ॥

तत् । अस्य । इदम् । पश्यत । भूरि । पुष्टम् । श्रत् । इन्द्रस्य । धत्तन । वीर्याय ।
सः । गाः । अविन्दत् । सः । अविन्दत् । अश्वान् । सः । ओषधीः । सः । अपः । सः । वनानि ॥५॥

हे ऋत्विग्यजमानलक्षणा जनाः अस्य इन्द्रस्य एतत् इदं वीर्यं पुष्टं प्रवृद्धम् । अत एव भूरि विस्तीर्णं पश्यत आलोकयत । तस्मै च वीर्याय श्रत् धत्तन बहुमानं कुरुत । किं पुनस्तद्वीर्यमिति चेत् उच्यते । सः इन्द्रः पणिभिरपहृताः गाः येन वीर्येण अविन्दत् अलभत । तथा तैरपहृतान् अश्वान् सः इन्द्रो येन अविन्दत् । अपि च सः इन्द्रः ओषधीः ओषध्युपलक्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धाः अपः वृष्ट्युदकानि सः इन्द्रो येनालभत । तथा वनानि वननीयानि संभजनीयानि धनानि सः इन्द्रो येन वीर्येण प्राप्नोत् ॥ धत्तन । ‘ तप्तनप्तनथनाश्च ’ इति तस्य तनादेशः । अविन्दत् । ‘ विद्लृ लाभे ’ । ‘ शे मुचादीनाम् ’ इति नुम् ॥  ॥ १६ ॥

भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम् ।
य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ॥ ६ ॥

भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुष्माय । सुनवाम । सोमम् ।
यः । आऽदृत्य । परिपन्थीऽइव । शूरः । अयज्वनः । विऽभजन् । एति । वेदः ॥ ६ ॥

भूरिकर्मणे बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय वृषभाय वृषभवत् सर्वेषु देवेषु श्रेष्ठाय वृष्णे सेचनसमर्थाय सत्यशुष्माय अवितथबलायेन्द्राय तदर्थं सोमं सुनवाम होमार्थं रसरूपं करवाम । शूरः शौर्योपेतः यः इन्द्रः आदृत्य धनविषयमादरं कृत्वा अयज्वनः अयजमानस्य वेदः धनं विभजन् तस्मात् अयजमानाद्विभक्तं कुर्वन्नपहरन् एति । यजमानेभ्यस्तद्धनं दातुं गच्छति । तत्र दृष्टान्तः । परिपन्थीव । यथा मार्गनिरोधकश्चोरो गच्छतां पुण्यपुरुषाणां[1] धनं बलात्कारेणापहृत्य गच्छति[2] तद्वत् ॥ आदृत्य । ‘ दृङ् आदरे ’ । ‘ समासेऽनञ्पूर्वे क्त्वो ल्यप् ’ ( पा. सू. ७. १. ३७ ) । तस्य स्थानिवद्भावेन कृत्त्वे सति ‘ ह्रस्वस्य पिति कृति० ’ इति तुक् । परिपन्थीव । ‘ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ’ ( पा. सू. ५. २. ८९ ) इति इनिप्रत्ययान्तो निपात्यते ॥

तदिन्द्र प्रेव वीर्यं चकर्थ यत्ससन्तं वज्रेणाबोधयोऽहिम् ।
अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥ ७ ॥

तत् । इन्द्र । प्रऽइव । वीर्यम् । चकर्थ । यत् । ससन्तम् । वज्रेण । अबोधयः । अहिम् ।
अनु । त्वा । पत्नीः । हृषितम् । वयः । च । विश्वे । देवासः । अमदन् । अनु । त्वा ॥ ७ ॥

---

१. क्ष-ट-ठ-स–पुरुषाणाम् ।  २. क्ष-ट-ठ–निर्गच्छति ।

हे ᵛइन्द्र ᵛतत् ᵛवीर्यं वीरकर्म ᵛप्रेव ᵛचकर्थ प्रख्यातमिवाकार्षीः । किं पुनस्तद्वीर्यम् । ᵛससन्तं स्वपन्तं मदोन्मत्तम् ᵛअहिं वृत्रं ᵛवज्रेण कुलिशेन ᵛयत् येन वीर्येण त्वम् ᵛअबोधयः । प्रबुद्धः[1] सन् मया सह युद्धं करोत्विति[2] ᵛहृषितं तादृशस्य वृत्रस्य हननेन[3] प्राप्तहर्षं त्वाम् ᵛअनु पश्चात् ᵛपत्नीः देवपत्न्यः ᵛअमदन् हर्षं प्राप्ताः । अपि च ᵛवयश्च गमनशीला मरुतोऽपि तथा ᵛविश्वे ᵛदेवासः अन्ये च सर्वे देवाः त्वाम्[4] ᵛअनु पश्चात् अमदन् अमाद्यन् ॥ ससन्तम् । ' षस स्वप्ने ' । अदादित्वात् शपो लुक् । पत्नीः । ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । अमदन् । ' मदी हर्षे ' । व्यत्ययेन शप् ॥

**शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य ।**

**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८ ॥**

शुष्णम् । पिप्रुम् । कुयवम् । वृत्रम् । इन्द्र । यदा । अवधीः । वि । पुरः । शम्बरस्य ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥८॥

हे ᵛइन्द्र त्वं शुष्णादींश्चतुरोऽसुरान् ᵛयदा ᵛअवधीः हतवानसि तदानीं ᵛशम्बरस्य असुरस्य ᵛपुरः नगराणि ᵛवि दारितवानसि । असुराणां मुख्येषु हतेष्वन्यान्यप्यसुरपुराणि विदीर्णानि आसन्नित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं ᵛतत् मित्रादयः ᵛममहन्तां पूजितं कुर्वन्तु ॥ शुष्णम् । ' शुष शोषणे ' । अन्तर्भावितण्यर्थात् ' तृषिशुषिरसिभ्यः किच्च ' ( उ. सू. ३. २९२ ) इति नप्रत्ययः । ' नित् ' इत्यनुवृत्तेराद्युदात्तत्वम् । पिप्रुम् । ' पॄ[5] पालनपूरणयोः, पृ इत्येके ' । औणादिकः[5] कुप्रत्ययः । ' छन्दस्युभयथा ' इति तस्य सार्वधातुकत्वे सति शप् । जुहोत्यादित्वात् श्लुः । ' अर्तिपिपर्त्योश्च ' इति अभ्यासस्य इत्वम् । कुयवम् । यवो यवनं मिश्रणम् । कुत्सितं यवनमस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शम्बरस्य । शमयतीति शम्ब आयुधम् । ' शमेर्बन् ' ( उ. सू. ४. ५३४ ) । ततो मत्वर्थीयो रप्रत्ययः ॥ ॥ १७ ॥

' योनिः ' इति नवर्चम् एकादशं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् ऐन्द्रम् । ' योनिर्नव ' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः ॥

**योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।**

**विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥ १ ॥**

योनिः । ते । इन्द्र । निऽसदे । अकारि । तम् । आ । नि । सीद । स्वानः । न । अर्वा ।

विऽमुच्य । वयः । अवऽसाय । अश्वान् । दोषा । वस्तोः । वहीयसः । प्रऽपित्वे ॥ १ ॥

हे ᵛइन्द्र ᵛयोनिः वेद्याख्यं स्थानं ᵛते तव ᵛनिषदे निषदनाय उपवेशनाय ᵛअकारि कृतमस्माभिः प्रकल्पितमभूत् । ᵛतं योनिम् ᵛआ ᵛनि ᵛषीद शीघ्रमागत्य तत्रोपविश । शीघ्रागमने दृष्टान्तः ।

---

१. द-ध–प्रबोधितः । २. च-त-फ-श–करोत्विति जागरितवानसि । ३. क्ष–वधेन । ४. च-फ–त्वा त्वाम् । ५. ट-ठ–' पृ ' इत्यस्मादौणादिकः; स–' पृ इत्येके ' । औणादिकः ।

ᵛस्वानो ᵛनार्वा । अर्वा इति अश्वनाम । यथाश्वः स्वानो हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत् । किं कृत्वा । ᵛवयः अश्वबन्धनार्थान् रश्मीन् ᵛविमुच्य रथाद्विश्लिष्य तथा ᵛअश्वान् रथे योजितांश्च तुरगान् ᵛअवसाय विमुच्य । अत्र निरुक्तम्–' अवसायाश्वानिति स्यतिरुपसृष्टो विमोचने ' ( निरु. १. १७ ) इति । कीदृशानश्वान् । ᵛप्रपित्वे यागकाले प्राप्ते । ' प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते ' ( निरु. ३. २० ) इति यास्कः । ᵛदोषा रात्रौ ᵛवस्तोः अहनि च ᵛवहीयसः आदरातिशयेन वोढॄन् ॥ निषदे । सदेः[1] संपदादिलक्षणो भावे क्विप् । स्वानः । ' स्यमु स्वन ध्वन शब्दे ' । बहुलवचनात् कर्तरि घञ् । ' कर्षात्वतः० ' इत्यन्तोदात्तत्वम् । वयः । वियन्ति रथेन सह संगच्छन्ते इति विशब्देन रश्मयः उच्यन्ते । वी गत्यादिषु । औणादिकः इप्रत्ययः टिलोपश्च । द्वितीयार्थे प्रथमा । अवसाय । ' षो अन्तकर्मणि ' । ' आदेचः० ' इति आत्वम् । ' समासेऽनञ्पूर्वे० ' इति क्त्वो ल्यबादेशः । वहीयसः । ' वह प्रापणे ' । तृजन्तात् वोढृशब्दात् ' तुश्छन्दसि ' इति ईयसुन् । ' तुरिष्ठेमेयःसु ' इति तृलोपे कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् तदाश्रितस्य ओत्वस्याप्यभावे तृलोप एव क्रियते ॥

ओ त्ये नर॒ इन्द्र॑मू॒तये॑ गु॒र्नू चि॒त्तान्त्स॒द्यो अध्व॑नो जग॒म्यात् ।
दे॒वासो॑ म॒न्युं दास॑स्य श्चम्न॒न्ते न॒ आ व॑क्षन्त्सुवि॒ताय॒ वर्ण॑म् ॥ २ ॥

ओ इति॑ । त्ये । नरः॑ । इन्द्र॑म् । ऊ॒तये॑ । गुः॒ । नु । चि॒त् । तान् । स॒द्यः । अध्व॑नः । ज॒ग॒म्या॒त् ।
दे॒वासः॑ । म॒न्युम् । दास॑स्य । श्च॒म्न॒न् । ते । नः॒ । आ । व॒क्ष॒न् । सु॒वि॒ताय॑ । वर्ण॑म् ॥ २ ॥

ᵛत्ये ते ᵛनरः यज्ञस्य नेतारो यजमानाः ᵛऊतये रक्षणाय ᵛइन्द्रम् ᵛओ । आ उ इत्येतन्निपातद्वयसमुदायः आकारार्थः । आ ᵛगुः आगच्छन्ति । स चेन्द्र आगतान् ᵛतान् ᵛनू ᵛचित् क्षिप्रं ᵛसद्यः तदानीमेव ᵛअध्वनः अनुष्ठानमार्गान् ᵛजगम्यात् गमयतु प्रापयतु । ᵛदेवासः सर्वे देवाः ᵛदासस्य उपक्षपयितुः असुरस्य ᵛमन्युं क्रोधं ᵛश्चम्नन् भक्षयन्तु हिंसन्त्वित्यर्थः । अपि च ᵛते देवाः ᵛनः अस्माकं ᵛसुविताय सुष्ठु प्राप्तव्याय यज्ञाय ᵛवर्णम् अनिष्टनिवारकमिन्द्रम् ᵛआ ᵛवक्षन् आवहन्तु आनयन्तु ॥ जगम्यात् । गमेः अन्तर्भावितण्यर्थात् लिङि ' बहुलं छन्दसि ' इति शपः श्लुः । श्चम्नन् । ' चमु अदने ' । लेटि व्यत्ययेन श्ना । शकारोपजनश्छान्दसः । यद्वा । श्नथातिः प्रकृत्यन्तरं हिंसार्थं द्रष्टव्यम् । वक्षन् । ' वह प्रापणे ' । लेटि ' सिब्बहुलं लेटि ' इति सिप् । ढत्वकत्वषत्वानि । सुविताय । सुपूर्वादेतेः कर्मणि निष्ठा । तन्वादित्वात् उवङ् । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । वर्णम् । 'वृञ् वरणे' । अस्मादन्तर्भावितण्यर्थात् ' कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ' ( उ. सू. ३. २९० ) इति नप्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

अव॒ त्मना॑ भरते॒ केत॑वेदा॒ अव॒ त्मना॑ भरते॒ फेन॑मु॒दन् ।
क्षी॒रेण॑ स्नातः॒ कुय॑वस्य॒ योषे॑ ह॒ते ते स्या॑तां प्रव॒णे शिफा॑याः ॥ ३ ॥

अव॑ । त्मना॑ । भ॒र॒ते॒ । केत॑ऽवेदाः । अव॑ । त्मना॑ । भ॒र॒ते॒ । फेन॑म् । उ॒दन् ।
क्षी॒रेण॑ । स्ना॒तः॒ । कुय॑वस्य । योषे॒ इति॑ । ह॒ते इति॑ । ते इति॑ । स्या॒ता॒म् । प्र॒व॒णे । शिफा॑याः ॥ ३ ॥

---

1. क्ष-स-षद्लृ विशरणगत्यवसादनेषु ।

ᵛकेतवेदाः केतं ज्ञातं वेदः परेषां धनं येन स तादृशः कुयवनामासुरः ᵛत्मना आत्मना स्वयमेव ᵛअव ᵛभरते ज्ञातं परेषां धनमपहरति । अपि च सोऽसुरः ᵛउदन् उदकेऽन्तर्वर्तमानः सन् ᵛफेनं फेनयुक्तमुदकमात्मना स्वयमेव ᵛअव ᵛभरते अपहरति । ᵛक्षीरेण क्षरणशीलेन तेनापहृतेनोदकेन ᵛकुयवस्य असुरस्य ᵛयोषे भार्ये ᵛस्नातः स्नानं कुर्वाते । तादृश्यौ[1] स्त्रियौ ᵛशिफायाः । शिफा नाम नदी । तस्याः ᵛप्रवणे निम्ने प्रवेष्टुमशक्येऽगाधप्रदेशे ᵛहते नष्टे ᵛस्यातां भवेताम् । हे इन्द्र त्वं परेषां धनमपहृत्य अन्यैर्दुरवगाहे उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बमवधीरित्यर्थः ॥ त्मना । ' मन्त्रेष्वाङ्यादेरात्मनः ' इत्याकारलोपः । भरते । ' हृञ् हरणे ' । ' हृग्रहोर्भः ° ' इति भत्वम् । केतवेदाः । ' कित ज्ञाने ' । कर्मणि घञ् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । उदन् । ' पद्दन्° ' इत्यादिनोदकशब्दस्य उदन्नादेशः । ' सुपां सुलुक्° ' इति सप्तम्या लुक् ॥

युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।
अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥ ४ ॥

युयोप । नाभिः । उपरस्य । आयोः । प्र । पूर्वाभिः । तिरते । राष्टि । शूरः ।
अञ्जसी । कुलिशी । वीरऽपत्नी । पयः । हिन्वानाः । उदऽभिः । भरन्ते ॥ ४ ॥

ᵛउपरस्य उदकमध्ये[2] उप्तस्य[3] अवस्थितस्य ᵛआयोः परेषामुपद्रवार्थमितस्ततो गच्छतः कुयवस्यासुरस्य ᵛनाभिः संनद्धम् आवसनस्थानं[4] ᵛयुयोप गूढमासीत् । यथान्यैर्न दृश्यते सोऽसुरस्तथाकरोदित्यर्थः । अपि च ᵛपूर्वाभिः पूरयित्रीभिरात्मनापहृताभिरद्भिः ᵛप्र ᵛतिरते सोऽसुरः प्रवर्धते । स च ᵛशूरः शौर्योपेतः ᵛराष्टि राजते च । आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः । तमिममसुरम् ᵛअञ्जसी आञ्जस्योपेता ᵛकुलिशी कुलं[5] शातयन्ती ᵛवीरपत्नी वीरस्य पालयित्री एतत्संज्ञिकास्तिस्रो नद्यः ᵛपयः पयसा तत्संबन्धिना सारभूतेनोदकेन ᵛहिन्वानाः प्रीणयन्त्यः ᵛउदभिः आत्मीयैरुदकैः ᵛभरन्ते धारयन्ति ॥ युयोप । ' युप विमोहने ' । नाभिः । ' नहो भश्च ' ( उ. सू. ४. ५६५ ) इति इञ्प्रत्ययः । राष्टि । ' राजृ दीप्तौ ' । ' बहुलं छन्दसि ' इति शपो लुक् । व्रश्चादिना षत्वे ष्टुत्वम् । पयः । ' सुपां सुलुक्° ' इति तृतीयाया लुक् । हिन्वानाः । हिविः प्रीणनार्थः । इदित्त्वात् नुम् । अस्मात्ताच्छीलिकश्चानश् । आगमानुशासनस्यानित्यत्वात् नुगभावः । चानशो लसार्वधातुकत्वाभावात् तत्स्वराभावे चित्स्वर एव शिष्यते ॥

प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥ ५ ॥

प्रति । यत् । स्या । नीथा । अदर्शि । दस्योः । ओकः । न । अच्छ । सदनम् । जानती । गात् ।
अध । स्म । नः । मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निष्षपी । परा । दाः ॥५॥

---

१. क्ष ट-स—ते तादृश्यौ । २. त-द-ध-स—उदकस्य मध्ये । ३. च-त-फ-श—सुप्तस्य; द-ध—उत्पन्नस्य । ४. क्ष-ट-स—आवासस्थानम् । ५. क्ष—कूलम् ।

यत् यदा नीथा नयनहेतुभूता स्या सा पदवी प्रति अदर्शि अस्माभिर्दृष्टाभूत् सा च पदवी दस्योः उपक्षपयितुः कुयवस्यासुरस्य सदनं गृहम् अच्छ आभिमुख्येन गात् गता प्राप्ता । तत्र दृष्टान्तः । जानती स्वकीयं वत्सम् अभिजानती[1] गौः ओको न निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति । तद्वन्मार्गोऽप्यसुरगृहं प्राप्त इत्यर्थः । अध स्म अथानन्तरमेव हे मघवन् धनवन्निन्द्र चर्कृतात् पुनःपुनस्तेनासुरेण कृतादुपद्रवात् नः अस्मान् रक्षेति शेषः । इत् इत्यवधारणे । अस्मान् रक्षैव नः अस्मान् मा परा दाः मा परित्याक्षीः । अस्माभिर्ज्ञातेन मार्गेण गत्वा अस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः । तत्र व्यतिरेके दृष्टान्तोऽभिधीयते । मघेव निष्पपी । यथा विनिर्गतसपो विनिर्गतशेपः[2] यथेष्टचारी दासीपतिः मघेव यथा धनान्यस्थाने परित्यजति तथास्मान् मा परित्याक्षीरित्यर्थः । अत्र निरुक्तं–'निष्पपी स्त्रीकामो भवति विनिर्गतसपः[3]। सपः सपतेः[3] स्पृशतिकर्मणः । मा नो मघेव निष्पपी परा दाः । स यथा धनानि विभजति[4] मा नस्त्वं तथा परा दाः' (निरु. ५.१६) इति ॥ नीथा । 'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति करणे क्थन्प्रत्ययः । गात् । एतेर्लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था०' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । चर्कृतात् । करोतेर्यङ्लुगन्तात् 'निष्ठा' इति क्तप्रत्ययः । मघाऽइव । 'शेश्छन्दसि०' इति शेर्लोपः । निष्पपी । 'षप समवाये' । सपति समवैति योन्या संगच्छते इति सपः शेपः । पचाद्यच् । निर्गतो नित्योद्धृतः सपः शेपो यस्य स स्त्रीव्यसनी निष्षपः । वर्णव्यापत्त्या ईकारः । दाः । 'डुदाञ् दाने' । लुङि 'गातिस्था०' इति सिचो लुक् । 'न माङ्योगे' इत्यडभावः ॥ ॥ १८ ॥

स त्वं न इन्द्र सूर्ये सो अप्स्वनागास्त्व आ भज जीवशंसे ।

मान्तरां भुजमा रीरिषो नः श्रद्धितं ते महत इन्द्रियाय ॥ ९ ॥

सः । त्वम् । नः । इन्द्र । सूर्ये । सः । अप्ऽसु । अनागाःऽत्वे । आ । भज । जीवऽशंसे ।

मा । अन्तराम् । भुजम् । आ । रिरिषः । नः । श्रद्धितम् । ते । महते । इन्द्रियाय ॥ ९ ॥

हे इन्द्र सः त्वं नः अस्मान् सूर्ये सर्वस्य प्रेरके आदित्ये आ भज आभाजय आभिमुख्येन[5] भक्तान्[6] संभक्तान् कुरु । तथा सः त्वम् अप्सु अब्देवतासु अस्मानाभाजय । अपि च जीवशंसे जीवैः प्राणिभिः शंसनीये कामयितव्ये अनागास्त्वे अपापत्वे पापराहित्येऽस्मानाभाजय । अपि च नः अस्माकम् अन्तरां गर्भरूपेण[6] अन्तर्वर्तमानां भुजं पालयित्रीं[7] प्रजाम् आ समन्तात् मा रीरिषः मा हिंसीः । ते तव महते प्रभूताय इन्द्रियाय बलाय श्रद्धितम् अस्माभिः श्रद्धानं कृतम् । त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः । तस्मात्तादृशबलयुक्तस्त्वं मा रीरिष इति पूर्वेण संबन्धः ॥ अनागास्त्वे । न विद्यते आगः पापं यस्य सोऽनागाः । तस्य भावस्तत्त्वम् । छान्दस उपधादीर्घः । जीवशंसे । 'शंसु स्तुतौ' । कर्मणि घञ् । थाथादिना उत्तरपदान्तोदात्तत्वम् । भुजम् । भुनक्ति पालयतीति भुक् प्रजा । क्विप् । रीरिषः । 'रिष हिंसायाम्' । स्वार्थे ण्यन्तात् अस्मात् लुङि चङि णिलोपे उपधाह्रस्वत्वादीनि । छान्दसं पदकालीनमभ्यासह्रस्वत्वम् । श्रद्धितम् । श्रच्छब्दस्य ऊर्यादित्वेन ( पा. सू. १. ४. ६१ ) गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

---

१. क्ष–अभिजानाना । २. क्ष–निर्गतपसो निर्गतमेढ्रः । ३. क्ष-ट-ल–निर्गतपसः । पसः सपतेः । ४. च-फ–विनाशयति । ५. क्ष-ट–आभीक्ष्ण्येन । ६. क्ष–गर्भभूताम् । ७. क्ष–पालनीयाम् ।

अधा मन्ये श्रत्ते अस्मा अधायि वृषा चोदस्व महते धनाय ।

मा नो अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय आसुतिं दाः ॥ ७ ॥

अध । मन्ये । श्रत् । ते । अस्मै । अधायि । वृषा । चोदस्व । महते । धनाय ।

मा । नः । अकृते । पुरुऽहूत । योनौ । इन्द्र । क्षुध्यत्ऽभ्यः । वयः । आऽसुतिम् । दाः ॥७॥

हे इन्द्र अध अथ अनन्तरं मन्ये त्वां मनसा जानामि । ते तव अस्मै बलाय श्रत् अधायि अस्माभिः श्रद्धा कृता । त्वदीयबलविषयमादरातिशयेन स्तोत्रं कृतमित्यर्थः । वृषा कामानां वर्षिता स त्वं महते प्रौढाय धनाय चोदस्व चोदय अस्मान् प्रेरय । हे पुरुहूत पुरुभिर्बहुभिर्यजमानैराहूत इन्द्र अकृते अनिष्पादिते धनशून्ये योनौ । गृहनामैतत् । गृहे नः अस्मान् मा धाः निधेहि[1] । धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः । अपि च हे इन्द्र क्षुध्यद्भ्यो बुभुक्षितेभ्योऽन्येभ्योऽपि स्तोतृभ्यः वयः अन्नम् आसुतिं पेयं क्षीरादिकं च दाः देहि[2] ॥ अधायि । दधातेः कर्मणि लुङि च्लेश्चिण् । 'आतो युक् चिण्कृतोः' इति युक् । क्षुध्यद्भ्यः । 'क्षुध बुभुक्षायाम्' । दिवादित्वात् श्यन् । नित्त्वादाद्युदात्तत्वम् ॥

मा नो वधीरिन्द्र मा परा दा मा नः प्रिया भोजनानि प्र मोषीः ।

आण्डा मा नो मघवञ्छक्र निर्भेन्मा नः पात्रा भेत्सहजानुषाणि ॥ ८ ॥

मा । नः । वधीः । इन्द्र । मा । परा । दाः । मा । नः । प्रिया । भोजनानि । प्र । मोषीः ।

आण्डा । मा । नः । मघऽवन् । शक्र । निः । भेत् । मा । नः । पात्रा । भेत् । सहऽजानुषाणि ॥८॥

हे इन्द्र नः अस्मान् मा वधीः मा हिंसीः । सर्वदा रक्षेत्यर्थः । अपि च मा परा दाः मा परित्याक्षीः । परादानं परित्यागः । अस्मत्कृतां पूजां सर्वदा गृहाणेत्यर्थः । अपि च नः अस्माकं प्रिया प्रियाणीप्सितानि भोजनानि उपभोग्यानि धनानि मा प्र मोषीः मापहार्षीः[3] । अस्मास्वेव धनानि यथा स्युस्तथा कुर्वित्यर्थः । तथा हे मघवन् धनवन् शक्र सर्वकार्यशक्तेन्द्र नः अस्माकम् आण्डा अण्डसंबन्धीनि गर्भरूपेण निषिक्तान्यपत्यानि मा भेत् मा भिनः । गर्भरूपेणावस्थितान् अस्मत्पुत्रान् रक्षेत्यर्थः । मा[4] च नः पात्रा । पतन्ति गच्छन्ति गमनसमर्थानि यानि तान्यपत्यानि पात्राणि । तानि च मा भेत् मा भिदः । सहजानुषाणि । जानुभ्यां यानि भूमिं सनन्ति गच्छन्तीत्यर्थः । तानि जानुषाणि । तैः सहितानि मा विनीनशः[4] ॥ वधीः । हन्तेर्माङि 'लुङि च' इति वधादेशः । स चादन्तः । सिच् । 'अतो लोपः' इत्यकारलोपः । तस्य स्थानिवद्भावात् 'अतो हलादेः' इति वृद्ध्यभावः । 'इट ईटि' इति सिचो लोपः । मोषीः । 'मुष स्तेये' । लुङि सिचः

---

१. त-द-फ-श-स—मा निधेहि । २. क्ष-ट-स—देहि प्रयच्छ । ३. क्ष-ट—मापहासीः । ४. क्ष-ट-स—'मा......विनीनशः' इत्यस्य स्थाने 'अपि च पात्रा पात्राणि रक्षणे समर्थानि सहजानुषाणि । जनुर्जन्म । तेन संबद्धाः सहजानुषाः समानजन्मानो ज्ञातय इत्यर्थः । तैः सह वर्तमानानि उत्पन्नान्यपत्यानि तानि च मा भेत् मा भिनः । उत्पन्नानप्यस्मदीयान् पुत्रान् रक्षेत्यर्थः ।

इट् । ‘ नेटि ’ इति वृद्धिप्रतिषेधः । भेत् । ‘ भिदिर् विदारणे ’ । लङि सिपि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । लघूपधगुणः ।‘ हल्ङ्याब्भ्यः० ’ इति सिपो लोपः ॥

माध्यंदिने सवने ‘ अर्वाङेहि ’ इत्येषा पोतुः प्रस्थितयाज्या । सूत्रितं च–अर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङ् ’ ( आश्व. श्रौ. ५. ५ ) इति ॥

अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।
उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ ९ ॥

अर्वाङ् । आ । इहि । सोमऽकामम् । त्वा । आहुः । अयम् । सुतः । तस्य । पिब । मदाय ।
उरुऽव्यचाः । जठरे । आ । वृषस्व । पिताऽइव । नः । शृणुहि । हूयमानः ॥ ९ ॥

हे इन्द्र त्वम् अर्वाङ् अस्मदभिमुखः सन् एहि आगच्छ । किं कारणमिति चेत् यस्मात्त्वां सोमकामं सोमविषयाभिलाषम्[1] आहुः पुराविदः कथयन्ति । अयम् अस्मदीयः सोमः सुतः ऋत्विग्भिरभिषुतः । अत आगच्छेत्यर्थः । आगत्य च मदाय हर्षार्थं तस्य तम् अस्मदीयमभिषुतं सोमं पिब । एतदेव स्पष्टीक्रियते[2] । उरुव्यचाः उरु विस्तीर्णं व्यचो व्यापनं यस्य तादृशो महावयवो भूत्वा जठरे आत्मीये उदरे आ वृषस्व सोममासिञ्च । आ समन्तात् पूरयेत्यर्थः । एवंभूतस्त्वं हूयमानः स्तुतिभिराहूयमानः सन् पितेव पुत्राणां वाक्यानि शृणोति[3] तथा नः अस्माकं वाक्यानि[4] शृणुहि शृणु ॥ सोमकामम् । सोमविषयः[5] कामः अभिलाषो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । आहुः । ‘ ब्रुवः पञ्चानामादित आहो ब्रुवः’ (पा. सू. ३. ४.८४) इति झेः उसादेशः धातोराहादेशश्च । तस्य ।‘ क्रियाग्रहणं कर्तव्यम् ’ इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । मदाय । ‘ मदी हर्षे ’ । ‘ मदोऽनुपसर्गे ’ इति भावे अप् । उरुव्यचाः । ‘ व्यच व्याजीकरणे ’ । औणादिकः असिप्रत्ययः । ‘ व्यचेः कुटादित्वमनसि ’ ( का. १. २. १. १ ) इति वचनात् ङित्त्वाभावेन[6] संप्रसारणाभावः । ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम् । यद्वा । उरु विचति व्याप्नोतीति उरुव्यचाः । कृदुत्तरपदप्रकृतिस्वरत्वम् । वृषस्व । ‘ वृष सेचने ’ । व्यत्ययेनात्मनेपदशप्रत्ययौ[7] । शृणुहि । ‘ उतश्च प्रत्ययाच्छन्दसि वावचनम् ’ इति हेर्लुगभावः ॥　॥ १९ ॥

‘ चन्द्रमाः ’ इति एकोनविंशत्यृचं द्वादशं सूक्तम् । अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वा आर्षम् । तथा चोभयोः कूपपातः आम्नायते—‘ त्रितः कूपेऽवहितः ’ ( ऋ. सं. १. १०५. १७ ) ‘ कारे निबाळ्ह ऋषिरह्वदूतये ( ऋ. सं. १. १०६. ६ ) इति च । त्रितस्य च अपां पुत्रत्वं तैत्तिरीयाः स्पष्टमामनन्ति– ‘ तत एकतोऽजायत स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयत् ततस्त्रितोऽजायत यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वम् ’ ( तै. ब्रा. ३. २. ८. १०-११ ) इति । तमेतमाप्त्यं ‘ त्रितस्तद्वेदाप्त्यः ’ ( ऋ. सं. १. १०५. ९ ) इति तकारोपजनेन वयमधीमहे इति[8] ।

---

१. क्ष-ट. ठ– सोमविषयाभिलाषवन्तम् ।　२. क्ष-ट-ठ–स्पष्टीकरोति ।　३. क्ष-ट-ठ-स—यथा शृणोति ।　४. ट-ठ-स–स्तुतिवाक्यानि ।　५. क्ष–सोमे ।　६. क्ष-स–ङित्त्वाभावे ।　७. क्ष-स–व्यत्ययेनात्मनेपदं शप्रत्ययः ।　८. क्ष- स–‘ इति ’ नास्ति ।

अन्त्या त्रिष्टुप्। 'सं मा तपन्ति' इत्येषा यवमध्या महाबृहती। आद्यौ द्वावष्टाक्षरौ पादौ द्वादशाक्षरस्तृतीयस्ततो द्वावष्टाक्षरौ सा यवमध्या महाबृहती। 'चत्वारोऽष्टका जागतश्च महाबृहती' (अनु. ९. ९) इत्युक्त्वा[1] 'मध्ये चेद्यवमध्या' (अनु. ९. १०) इत्युक्तलक्षणोपेतत्वात्[2]। शिष्टाः पङ्क्तयः। विश्वे देवाः देवता। तथा चानुक्रान्तं–'चन्द्रमा एकोनाद्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुप्[3] अष्टमी महाबृहती यवमध्या' इति। 'हि' इत्यभिधानादिदमादीनि त्रीणि सूक्तानि वैश्वदेवानि। विनियोगः[4]। अत्र शाट्यायनिन इतिहासमाचक्षते–एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः। ते कदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासया संतप्तगात्राः सन्त एकं कूपमविन्दन्। तत्र[5] त्रिताख्यः[6] एको जलपानाय कूपं प्राविशत्। स्वयं पीत्वा इतरयोश्च कूपादुदकमुद्धृत्य प्रादात्। तौ तदुदकं पीत्वा त्रितं[7] कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषाताम्। ततः कूपे पतितः स त्रितः कूपादुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार। ततस्तेषां स्तावकमिदं सूक्तं ददर्श। तत्र रात्रौ कूपस्यान्तश्चन्द्रमसो रश्मीन् पश्यन् परिदेवयते॥

चन्द्रमा अप्स्व१न्तरा सुपर्णो धावते दिवि।

न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी॥ १॥

चन्द्रमाः। अप्ऽसु। अन्तः। आ। सुऽपर्णः। धावते। दिवि।

न। वः। हिरण्यऽनेमयः। पदम्। विन्दन्ति। विऽद्युतः। वित्तम्। मे। अस्य। रोदसी इति॥१॥

अप्सु आन्तरिक्षासु[8] उदकमये मण्डले अन्तः मध्ये[9] वर्तमानः सुपर्णः शोभनपतनः। यद्वा। सुपर्ण इति रश्मिनाम। सुषुम्णाख्येन सूर्यरश्मिना युक्तः चन्द्रमाः दिवि द्युलोके आ धावते। आङ्[10] मर्यादायाम्। एकेनैव प्रकारेण धावते[10] शीघ्रं गच्छति। तादृशस्य चन्द्रमसः संबन्धिनो हे हिरण्यनेमयः सुवर्णसदृशपर्यन्ताः। यद्वा। हितरमणीयप्रान्ताः। विद्युतः विद्योतमाना रश्मयः वः युष्माकं पदं पादस्थानीयमग्रं न विन्दन्ति मदीयानीन्द्रियाणि[11] कूपेनावृतत्वात् न लभन्ते। अतः[12] इदमनुचितम्। तस्मात् कूपात् मामुत्तारयतेत्यर्थः। अपि च हे रोदसी द्यावापृथिव्यौ मे मदीयम् अस्य इदं स्तोत्रं वित्तं जानीतम्। यद्वा। मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम्। मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः॥ चन्द्रमाः। चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीते इति चन्द्रमाः। 'चन्द्रे माङो डित्[13]' (उ. सू. ४. ६६७) इति असुन्। दासीभारादिषु पाठात् पूर्वपदप्रकृतिस्वरत्वम्। धावते। 'सृ गतौ'। 'पाघ्रा०' इत्यादिना वेगितायां[14] धावादेशः। व्यत्ययेन आत्मनेपदम्। वित्तम्। 'विद ज्ञाने'। लोटि अदादित्वात् शपो लुक्। पादादित्वात् 'तिङ्ङतिङः' इति निघाताभावः। अस्य। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम्॥

---

१. क्ष-ट-ठ–'इत्युक्त्वा' नास्ति। २. क्ष-ट-ठ–इत्युक्तत्वात्। ३. क्ष–त्रिष्टुबन्तम्। ४. क्ष-ट-स–विनियोगो लैङ्गिकः। ५. त-श–ततः। ६. क्ष–त्रितः। ७. क्ष-ट-स–तं त्रितम्; ठ–तत्र तम्। ८. क्ष-स–आन्तरिक्ष्यासु ९. क्ष-ट-ठ-स–'मध्ये' इत्यस्यानन्तरं 'यद्वा आप इत्यन्तरिक्षनाम। तत्र मध्ये' इत्यधिकम्। १०. क्ष-स–'आङ् मर्यादायाम्। एकेनैव प्रकारेण धावते' नास्ति। ११. क्ष–अस्मदीयानीन्द्रियाणि। १२. क्ष–यतः। १३. क्ष-ट-ठ–डिच्च। १४. क्ष-स–वेगितायां गतौ।

अर्थमिद्वा उ अर्थिन आ जाया युवते पतिम् ।
तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ॥ २ ॥

अर्थम् । इत् । वै । ऊँ इति । अर्थिनः । आ । जाया । युवते । पतिम् ।
तुञ्जाते इति । वृष्ण्यम् । पयः । परिऽदाय । रसम् । दुहे । वित्तम् । मे । अस्य । रोदसी इति ॥२॥

अर्थिनः धनमपेक्षमाणाः पुरुषाः अर्थमिद्वै अपेक्षितं धनं प्राप्नुवन्त्येव । नाहं प्राप्नोमि । उ इत्येतत् पादपूरणम् । अपि च जाया अन्यदीया भार्या पतिं स्वपतिम् आ युवते आभिमुख्येन प्राप्नोति । मदीया तु मद्विरहात् हता आसीत् । अपि च संयुक्तौ तौ जायापती वृष्ण्यं वीर्यरूपं पयः उदकं तुञ्जाते[1] प्रजननाय अन्योन्यसंघट्टनेन[2] प्रेरयतः । तदनन्तरं रसं पुरुषस्य सारभूतं वीर्यं परिदाय गर्भाशयेनादाय गर्भरूपेण धृत्वा दुहे दुग्धे पुत्ररूपेण जनयति । मम तु पुत्रोऽपि नोत्पद्यते । अत इदं मदीयं दुःखं हे द्यावापृथिव्यौ जानीतम् ॥ उ । ' उञः ' ( पा. सू. १. १. १७ ) इति शाकल्यस्य मतेन प्रगृह्यत्वात् ' प्लुतप्रगृह्या अचि० ' इति प्रकृतिभावः । युवते । ' यु मिश्रणे ' । व्यत्ययेनात्मनेपदम् । शब्लुकि प्राप्ते व्यत्ययेन शः । तुञ्जाते । ' तुजि पिजि हिंसाबलदाननिकेतनेषु[3] ' । इदित्त्वात् नुम् । व्यत्ययेन श्नम् । श्नसोरल्लोपः । दुहे । ' दुह प्रपूरणे ' । ' लोपस्त आत्मनेपदेषु ' इति तलोपः ॥

मो षु देवा अदः स्व१रव पादि दिवस्परि ।
मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे अस्य रोदसी ॥ ३ ॥

मो इति । सु । देवाः । अदः । स्वः । अव । पादि । दिवः । परि ।
मा । सोम्यस्य । शम्ऽभुवः । शूने । भूम । कदा । चन । वित्तम् । मे । अस्य । रोदसी इति ॥३॥

हे देवाः स्वः स्वर्गे वर्तमानम् अदः तदस्मदीयं[4] पितृपितामहप्रपितामहात्मकं संतानं दिवस्परि[5] दिवश्चोपरि वर्तमानं[5] मो षु मैव अव पादि अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात् । पुत्रेण लोकान् जयति ' नापुत्रस्य लोकोऽस्ति ' ( ऐ.ब्रा. ७. १३ ) इति श्रुतेः । अतो वयं सोम्यस्य सोमपानार्हस्य पितृगणस्य शंभुवः सुखस्य भावयितुः पुत्रस्य शूने अपगमने कदा चन कदाचिदपि मा भूम । युष्मत्प्रसादात् मम पुत्रा जायन्ताम् । अतो मामस्माद्दुःखादुत्तारयतेत्यर्थः । हे द्यावापृथिव्यौ युवां च मदीयं विज्ञापनं जानीतम् ॥ मो । मा[6] उ इति निपातद्वयसमुदायः[6] मैवेत्यस्यार्थे । सु इत्येतदवधारणे । ' सुञः ' इति षत्वम् । पादि । ' पद गतौ ' । ' चिण् ते पदः ' ( पा. सू. ३. १. ६० ) इति कर्तरि लुङि च्लेः चिणादेशः । दिवः । ' ऊडिदम्० ' इति विभक्तेरुदात्तत्वम् । ' पञ्चम्याः परावध्यर्थे ' इति विसर्जनीयस्य सत्वम् । सोम्यस्य । ' सोममर्हति यः ' ( पा. सू. ४. ४. १३७ )

---

१. न–तुञ्जाते इत्यस्यानन्तरम् ' आभिमुख्येन प्राप्नोति; ' स–' आभिमुख्येन ' इत्यधिकम् । २. क्ष-ट–प्रजनान्योन्यसंयोगेन; स–प्रजननायान्योन्यसंभोगेन । ३. क्ष-न–हिंसाबलादाननिकेतनेषु । ४. ट–एतदस्मदीयम् । ५. क्ष-ट–दिवस्परि । परिः पञ्चम्यर्थानुवादी । दिवः स्वर्गात्; स–दिवस्परि दिवश्चोपरि वर्तमानम् । परिः पञ्चम्यर्थानुवादी । ६. क्ष-स–मा उ सु इति निपातसमुदायः ।

इति यप्रत्ययः । शंभुवः । भवतेरन्तर्भावितण्यर्थात् क्विप् । शूने । 'टुओश्वि गतिवृद्ध्योः' । भावे निष्ठा । 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः । 'वचिस्वपि॰' इत्यादिना संप्रसारणम् । 'ओदितश्च' (पा. सू. ८. २. ४५) इति निष्ठानत्वम् । व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः ॥

यज्ञं पृच्छाम्यवमं स तद्दूतो वि वोचति ।
क्व ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनो वित्तं मे अस्य रोदसी ॥ ४ ॥

यज्ञम् । पृच्छामि । अवमम् । सः । तत् । दूतः । वि । वोचति ।
क्व । ऋतम् । पूर्व्यम् । गतम् । कः । तत् । बिभर्ति । नूतनः । वित्तम् । मे । अस्य । रोदसी इति ॥४॥

यज्ञं यजनीयम् अवमं सर्वेषां देवानामादिभूतम् । 'अग्निर्मुखं प्रथमो देवतानाम्' (ऐ. ब्रा. १.४) इति श्रुतेः । 'अग्निर्वै देवानामवमः' (ऐ. ब्रा. १.१) इति ब्राह्मणाच्च । तमग्निं पृच्छामि । यन्मया पृष्टं तत् देवानां दूतः सः अग्निः वि वोचति विविच्य कथयतु । किं पुनस्तत् पृच्छयते इति चेत्, उच्यते । हे अग्ने त्वदीयं पूर्व्यं पूर्वकालीनम् ऋतं भद्रं स्तोतृभ्यः कृतं श्रेयः क्व गतं कुत्रेदानीं वर्तते । नूतनः नवतरस्त्वत्तोऽन्यः कः पुरुषः तत् भद्रं बिभर्ति धारयति । यदि त्वय्यवर्तिष्यत ममेदृशी दशापि नाभविष्यत् । अतस्तत् क्व गतमिति कथय ॥ वोचति । 'वच परिभाषणे' । लेटि अडागमः । 'वच उम्' इति व्यत्ययेन धातोः उमागमः । क्व । 'किमोऽत्' (पा. सू. ५. ३. १२) इति सप्तम्यर्थे अत् । 'क्वाति' (पा. सू. ७. २. १०५) इति किमः क्वादेशः । 'तित्स्वरितम्' इति स्वरितत्वम् । परेण सह 'ऋत्यकः' इति प्रकृतिभावः ॥

अमी ये देवाः स्थन त्रिष्वा रोचने दिवः ।
कद्व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी ॥ ५ ॥

अमी इति । ये । देवाः । स्थन । त्रिषु । आ । रोचने । दिवः ।
कत् । वः । ऋतम् । कत् । अनृतम् । क्व । प्रत्ना ।
वः । आऽहुतिः । वित्तम् । मे । अस्य । रोदसी इति ॥ ५ ॥

हे देवाः त्रिषु पृथिव्यादिषु स्थानेषु ये अमी यूयं स्थन वर्तमाना भवथ । यानि स्थानानि दिवः द्योतमानस्य सूर्यस्य आ रोचने दीप्तिविषये वर्तन्ते । सूर्यप्रकाश्येषु स्थानेषु[1] इत्यर्थः । तेषां वः युष्माकं संबन्धि स्तोतृविषयम् ऋतं सत्यं कत् कस्मिन् देशे वर्तते । अनृतं द्वेष्टृविषयमसत्यं च कत् कुत्र गतम् । अपि च प्रत्ना चिरकालीना वः युष्माकं संबन्धिनी आहुतिः मया पूर्वमनुष्ठितो यागः क्व कुत्रासीत् । ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे । अन्यत् पूर्ववत् ॥ स्थन । 'तप्तनप्तनथनाश्च' इति तशब्दस्य थनादेशः । कत् । क्वशब्दस्य वर्णव्यापत्त्या कद्भावः ॥ ॥ २० ॥

---

१. क्ष-न-स–तेषु स्थानेषु ।

कद्व ऋतस्य धर्णसि कद्वरुणस्य चक्षणम् ।
कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी ॥ ६ ॥

कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्षणम् ।

कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः । वित्तम् । मे । अस्य । रोदसी इति ॥६॥

हे देवाः <sup></sup>वः युष्माकं संबन्धिनः[1] ऋतस्य सत्यस्य अभिमतफलप्रापणस्य धर्णसि धारणं कत् कुत्र गतम् । वरुणस्य अनिष्टनिवारकस्य देवस्य चक्षणम् अनुग्रहदृष्ट्या दर्शनं कत् क गतम् । महः महतो महानुभावस्य अर्यम्णः अरीणां नियन्तुः एतत्संज्ञकस्य देवस्य संबन्धिना पथा शोभनमार्गेण इष्टदेशप्रापणं कत् क गतम् । एतत्सर्वं युष्मास्वेव वर्तते । न कुत्रापि गतम् । अतो वयं दूढ्यः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान् शत्रून् अति क्रामेम अतितरेम । तैः कृतादस्मात् कूपपातलक्षणात् दुःखात् वयमुत्तीर्णा भवेम । हे द्यावापृथिव्यौ मदीयमिदं जानीतम् ॥ धर्णसि । 'धृञ् धारणे' । 'सानसिधर्णसिपर्णसि॰' ( उ. सू. ४. ५४७ ) इत्यादिना असिच्प्रत्ययान्तः[2] निपात्यते । अर्यम्णः । षष्ठ्येकवचने 'अल्लोपोऽनः' इत्यकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । महः । महतः अच्छब्दलोपश्छान्दसः । यद्वा । 'मह पूजायाम्' । क्विप् । उभयथापि 'सावेकाचः॰' इति विभक्तेरुदात्तत्वम् । दूढ्यः । पृषोदरादिः । 'ध्यै च' इति तत्र पाठात् दुरो रेफस्य उत्वम् उत्तरपदादेः ष्टुत्वं च । 'उदात्तस्वरितयोर्यणः॰' इति स्वरितत्वम् ॥

अहं सो अस्मि यः पुरा सुते वदामि कानि चित् ।
तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी ॥ ७ ॥

अहम् । सः । अस्मि । यः । पुरा । सुते । वदामि । कानि । चित् ।

तम् । मा । व्यन्ति । आऽध्यः । वृकः । न । तृष्णऽजम् । मृगम् ।

वित्तम् । मे । अस्य । रोदसी इति ॥ ७ ॥

हे देवाः पुरा पूर्वस्मिन् काले सुते युष्मद्यागार्थं सोमेऽभिषुते कानि चित् कतिपयानि स्तोत्राणि यः अहं वदामि उक्तवानस्मि सः एवाहम् अस्मि न तु अन्यः कश्चित् । तस्मात् किमर्थं मां परित्यजथ । तं तादृशं माम् आध्यः अभिलषितपुत्राद्यप्राप्त्या जनिता मानस्यो व्यथाः व्यन्ति भक्षयन्ति । तत्र दृष्टान्तः । तृष्णजं जाततृष्णं पिपासन्तम् उदकं प्रति गच्छन्तं मृगं वृको न यथा अरण्यश्वा मध्येमार्गं भक्षयति तद्वत् । अन्यत् पूर्ववत् ॥ व्यन्ति । वी गत्यादिषु । अदादित्वात् शपो लुक् । 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' इति बहुलवचनात् यण् । आध्यः । आधीयते मनसि स्थाप्यते इति आधिः । 'उपसर्गे घोः किः' ( पा. सू. ३. ३. ९२ ) । 'आतो लोप इटि च' इत्याकारलोपः । 'जसादिषु च्छन्दसि वावचनम्' इति 'जसि च' इति गुणस्य विकल्पनात् अभावे यणादेशः । तृष्णजम् । 'तृष पिपासायाम्' । 'स्वपितृषोर्नजिङ्' ( पा. सू. ३. २. १७२ )

---

१. क्ष-ट-न-स-संबन्धि । २. क्ष-ट-असिप्रत्ययान्तः ।

इति नजिङ्। पदकारस्त्वेवं मन्यते–'अन्येष्वपि दृश्यते' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः। तृष्णा जाता यस्य। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वत्वम्॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः।

मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी॥ ८॥

सम्। मा। तपन्ति। अभितः। सपत्नीःऽइव। पर्शवः।

मूषः। न। शिश्ना। वि। अदन्ति। मा। आऽध्यः। स्तोतारम्।

ते। शतक्रतो इति शतऽक्रतो। वित्तम्। मे। अस्य। रोदसी इति॥ ८॥

ऐन्द्रोषा। हे इन्द्र ᐯपर्शवः पार्श्वास्थीनि अत्र सामर्थ्यात् पर्शुस्थानीयाः[1] कूपभित्तयः ᐯमा माम् ᐯअभितः सर्वतः ᐯसं ᐯतपन्ति सम्यक् पीडयन्ति। तत्र दृष्टान्तः। ᐯसपत्नीरिव। समानः एकः पतिर्यासां ताः सपत्न्यो यथैकं पतिमभितः पीडयन्ति। परस्परं[2] वा पीड्यन्ते[2]। हे ᐯशतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वा इन्द्र ᐯते तव ᐯस्तोतारं माम्[3] ᐯआध्यः असंपद्यमानैर्यागदानादिभिरुत्पादिताः मानस्यः पीडाः ᐯव्यदन्ति विविधं भक्षयन्ति। तत्र दृष्टान्तः। ᐯमूषो ᐯन यथा मूषिकाः ᐯशिश्ना शिश्नानि कुविन्देन वायितानि अन्नरसेन आलिप्तानि[4] सूत्राणि भक्षयन्ति। यद्वा। शिश्नशब्देन प्रजननमेवोच्यते। तच्चोपचारात् पुच्छे वर्तते। यथा स्वकीयानि पुच्छानि घृततैलादिभाण्डे प्रक्षिप्य ऊर्ध्वमुत्कृष्य व्यदन्ति लिहन्तीत्यर्थः। एवं माम् आधयो भक्षयन्ति। न चैतत् हे इन्द्र तव स्तोतुर्न्याय्यम्। तस्मात् कूपात् मामुत्तारय। अन्यत् समानम्। अत्र निरुक्तं–'संतपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति। स्वाङ्गाभिधानं वा स्यात्। शिश्नानि व्यदन्तीति' (निरु. ४. ६) इति॥ सपत्नीः। 'नित्यं सपत्न्यादिषु' (पा. सू. ४. १. ३५) इति पतिशब्दस्य नकारान्तादेशः। ङीप्। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। मूषः। 'मुष स्तेये'। क्विपि छान्दसो दीर्घः। तथा च यास्कः–'मूषो मूषिका इत्यर्थः। मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव' (निरु. ४. ५) इति। शिश्ना। 'ष्णा शौचे'। 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति कः। वर्णव्यापत्त्या सकारस्य शकारः। 'कृञादीनां के द्वे भवत इति वक्तव्यम्' (का. ६. १. १२. १) इति द्विर्वचनम्। 'बहुलं छन्दसि' इत्यभ्यासस्य इत्वम्॥

अमी ये सप्त रश्मयस्तत्रा मे नाभिराततां।

त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी॥ ९॥

अमी इति। ये। सप्त। रश्मयः। तत्र। मे। नाभिः। आऽतता।

त्रितः। तत्। वेद। आप्त्यः। सः। जामिऽत्वाय। रेभति। वित्तम्। मे। अस्य। रोदसी इति॥९॥

---

१. स-पार्श्वस्थानीयाः। २. क्ष-परस्परं वा पीडयन्ति तद्वत्; ठ-तद्वत्। ३. च-द-ध-मा माम्। ४. क्ष-स-लिप्तानि।

ये अमी द्युलोके वर्तमानाः सप्तसंख्याकाः रश्मयः सूर्यस्य किरणाः सन्ति तत्र तेषु सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु मे मदीया नाभिः आतता संबद्धा । ऋषिरात्मानमेव परोक्षतया निर्दिशति । त्रितः तीर्णतमस्तिरस्कृताज्ञानः आप्त्यः अपां पुत्रः ऋषिः तत् पूर्वोक्तं वृत्तान्तं वेद जानाति[1] नान्यः । सः जानन्नृषिः जामित्वाय कूपान्निर्गन्तृत्वाय रेभति तान् रश्मीन् स्तौति । अन्यत् समानम् ॥ आतता । तनोतेः कर्मणि निष्ठा । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जामित्वाय । जमतिर्गतिकर्मा । जमति गच्छतीति जामिः । औणादिक इण्प्रत्ययः । तस्य भावस्तत्त्वम् । रेभति । 'रेभृ शब्दे' । भौवादिकः ॥

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ १० ॥

अमी इति । ये । पञ्च । उक्षणः । मध्ये । तस्थुः । महः । दिवः ।
देवऽत्रा । नु । प्रऽवाच्यम् । सध्रीचीनाः । नि । ववृतुः । वित्तम् । मे । अस्य । रोदसी इति ॥ १० ॥

उक्षणः सेक्तारः कामाभिवर्षकाः पञ्च । 'तन्न इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो धात्' ( ऋ. सं. १. १०७. ३ ) इत्यर्धर्चेन प्रतिपादिताः पञ्चसंख्याका देवाः । यद्वा । अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पञ्चसंख्याकाः । तथा च शाट्यायनकम्–'एतान्येव पञ्च ज्योतींषि यान्येषु लोकेषु दीप्यन्ते । अग्निः पृथिव्यां वायुरन्तरिक्षे च[2] आदित्यो दिवि चन्द्रमा नक्षत्रे विद्युदप्सु' इति । नक्षत्रे नक्षत्रलोके । अप्सु मेघस्थोदकेषु । तैत्तिरीयेऽप्येवमाम्नातम्–'अग्निः पृथिव्यां वायुरन्तरिक्षे सूर्यो दिवि चन्द्रमा दिक्षु नक्षत्राणि स्वर्लोके' (तै. आ. १. २०. १) इति । ये अमी पञ्चसंख्याका देवाः महो दिवः महतो विस्तीर्णस्य द्युलोकस्य मध्ये तस्थुः तिष्ठन्ति आसते देवत्रा देवेषु नु क्षिप्रं प्रवाच्यं प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति सध्रीचीनाः सहाञ्चन्तो युगपदागच्छन्तस्ते देवाः मदीयं परिचरणं स्वीकुर्वन्ति[3] । तदनन्तरं नि ववृतुः तृप्ताः सन्तो निवर्तन्ते च । अन्यत् समानम् ॥ उक्षणः । 'वा षपूर्वस्य निगमे' इत्युपधादीर्घाभावः । देवत्रा । 'देवमनुष्य°' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः । प्रवाच्यम् । वाचयतेः 'अचो यत्' इति यत् । 'णेरनिटि' इति णिलोपः । 'यतोऽनावः' इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । सध्रीचीनाः । सहाञ्चन्तीति सध्र्यञ्चः । त एव सध्रीचीनाः । सहपूर्वात् अञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन् । 'अनिदिताम्°' इति नलोपः । 'सहस्य सध्रिः' ( पा. सू. ६. ३. ९५ ) इति सध्र्यादेशः । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे खप्रत्ययः । ववृतुः । 'वृतु वर्तने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । व्यत्ययेन परस्मैपदम् । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ॥ ॥ २१ ॥

सुपर्णा एत आसते मध्य आरोधने दिवः ।
ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी ॥ ११ ॥

सुऽपर्णाः । एते । आसते । मध्ये । आऽरोधने । दिवः ।
ते । सेधन्ति । पथः । वृकम् । तरन्तम् । यह्वतीः । अपः । वित्तम् । मे । अस्य । रोदसी इति ॥ ११ ॥

---

१. क्ष–विजानाति । २. क्ष-ट-न-स–'च' नास्ति । ३. क्ष-ट-ठ-स–स्वीकुर्वन्तः ।

सुपर्णाः । रश्मिनामैतत् । शोभनपतनाः एते सूर्यरश्मयः आरोधने सर्वस्यावरके व्याप्ते दिवः अन्तरिक्षस्य मध्ये आसते वर्तन्ते । ते[1] सूर्यरश्मयः पथः मार्गात् वृकम् अरण्यश्वानं सेधन्ति निषेधन्ति निवारयन्ति । कीदृशम् । यह्वतीः महतीः अपः तरन्तम् अतिक्रामन्तम् । कूपपतनात्पूर्वं त्रितं दृष्ट्वा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुः आजगाम । स च सूर्यरश्मीन् दृष्ट्वा अयमवसरो न भवतीति निववृते । अतो रश्मयो वृकं निषेधन्तीत्युच्यते । यास्कपक्षे तु आप इत्यन्तरिक्षनाम । यह्वतीरपो महदन्तरिक्षं पथः पथा द्वादशराश्यात्मना[2] मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति । अहनि हि सूर्यरश्मिभिः निरुद्धश्चन्द्रमा निष्प्रभो दृश्यते । अतो निष्प्रभं कुर्वन्तीत्यर्थः ॥ आरोधने । आरुध्यते आव्रियतेऽनेनेति आरोधनम् । करणे ल्युट् । सेधन्ति । 'षिधु गत्याम्' । अयं केवलोऽपि निपूर्वार्थे द्रष्टव्यः । पथः । पञ्चम्येकवचने 'भस्य टेर्लोपः' इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यास्कपक्षे तु तृतीयार्थे व्यत्ययेन पञ्चमी । यह्वतीः । यह्व इति महन्नाम । अस्मादाचारार्थे 'सर्वप्रातिपदिकेभ्यः॰' ( पा. म. ३. १. ११. ३ ) इति क्विप् । ततो लटः शतृ । 'उगितश्च' इति ङीप् । आगमानुशासनस्यानित्यत्वात् नुमभावः । 'शतुरनुमः॰' इति नदीस्वरो व्यत्ययेन न प्रवर्तते ॥

## नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम् ।
## ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥ १२ ॥

नव्यम् । तत् । उक्थ्यम् । हितम् । देवासः । सुऽप्रवाचनम् ।

ऋतम् । अर्षन्ति । सिन्धवः । सत्यम् । ततान । सूर्यः । वित्तम् । मे । अस्य । रोदसी इति ॥ १२ ॥

हे देवासः देवाः नव्यं नवतरम् उक्थ्यं प्रशस्यं स्तुत्यर्हं सुप्रवाचनं सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवंभूतं तत् भवदीयं बलं हितं युष्मासु निहितम् । अतो युष्मदीयेन बलेन सिन्धवः स्यन्दनशीला नद्यः ऋतम् उदकम् अर्षन्ति आलस्यराहित्येन सर्वदा प्रेरयन्ति । अशोष्याः सत्यः प्रवहन्तीत्यर्थः । तथा सूर्यः सत्यं सर्वदा विद्यमानं स्वकीयं तेजः ततान आतनोति विस्तारयति । अन्यत् समानम् ॥ सुप्रवाचनम् । 'वच परिभाषणे' । अस्मात् ण्यन्तात् 'अन्येभ्योऽपि दृश्यते' इति खलर्थे युच् । अर्षन्ति । अर्तेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । गुणः । ततान । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ॥

## अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम् ।
## स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मे अस्य रोदसी ॥ १३ ॥

अग्ने । तव । त्यत् । उक्थ्यम् । देवेषु । अस्ति । आप्यम् ।

सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि ।

विदुःऽतरः । वित्तम् । मे । अस्य । रोदसी इति ॥ १३ ॥

---

१. क्ष-स-ते अमी । २. क्ष-द्वादशराश्यात्मकेन; स-द्वादशरश्म्यात्मना ।

हे ᐯअग्ने ᐯतव ᐯउक्थ्यं प्रशस्यं ᐯत्यत्[1] श्रुतिप्रसिद्धम्[1] ᐯआप्यम् । आपिर्बन्धुः । तस्य भावः । बान्धवं ᐯदेवेषु दानादिगुणयुक्तेष्विन्द्रादिषु ᐯअस्ति विद्यते । तस्मात् ᐯसः तादृशः ᐯविदुष्टरः विद्वत्तरस्त्वं ᐯनः अस्माकं यज्ञे ᐯसत्तः निषण्णः सन् ᐯदेवान् तानिन्द्रादीन् ᐯआ शास्त्रमर्यादया ᐯयक्षि यज हविर्भिः पूजय । तत्र दृष्टान्तः । ᐯमनुष्वत् । यथा मनूनां यज्ञे तद्वत् । अन्यत् पूर्ववत् ॥ आप्यम् । 'आप्लृ व्याप्तौ' । अस्मात् ण्यन्तात् 'अच इः' इति इप्रत्ययः । ब्राह्मणादित्वात् ष्यञ् । सत्तः । 'नसत्तनिषत्त°' (पा. सू. ८. २. ६१) इति निपातनात् निष्ठानत्वाभावः । छान्दसो निशब्दलोपो द्रष्टव्यः । मनुष्वत् । मनेरौणादिक उसिप्रत्ययः । 'तत्र तस्येव' (पा सू. ५. १. ११६) इति षष्ठ्यर्थे वतिः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' (पा. सू. १. ४. १८. ३) इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । यक्षि । 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिषत्वे[2] कुत्वषत्वे । विदुष्टरः । विद्वस्शब्दात् तरपि अयस्मयादित्वेन भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥

सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः ।
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥ १४ ॥

सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ । विदुःऽतरः ।
अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः । वित्तम् । मे । अस्य । रोदसी इति ॥ १४ ॥

ᐯमनुष्वत् मनोरिवास्माकं यज्ञे ᐯसत्तः निषण्णः ᐯहोता देवानामाह्वाता ᐯविदुष्टरः विद्वत्तरः ᐯदेवः दानादिगुणयुक्तः ᐯदेवेषु सर्वेष्विन्द्रादिषु मध्ये ᐯमेधिरः मेधावी एवंभूतः ᐯअग्निः तान् ᐯदेवान् ᐯअच्छ आभिमुख्येन ᐯहव्या हव्यानि अस्मदीयानि हवींषि । मर्यादायामाकारः । शास्त्रमर्यादया यथाशास्त्रं ᐯसुषूदति प्रेरयतु । अन्यत् समानम् ॥ सुषूदति । 'षूद क्षरणे' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । मेधिरः । 'मेधारथाभ्यामिरन्निरचौ वक्तव्यौ' (पा. सू. ५. २. १०९. ३) इति मत्वर्थीय इरन् ॥

ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे ।
व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ॥ १५ ॥

ब्रह्म । कृणोति । वरुणः । गातुऽविदम् । तम् । ईमहे ।
वि । ऊर्णोति । हृदा । मतिम् । नव्यः । जायताम् ।
ऋतम् । वित्तम् । मे । अस्य । रोदसी इति ॥ १५ ॥

यः ᐯवरुणः अनिष्टस्य[3] निवारयिता देवः ᐯब्रह्म परिवृढं तद्रक्षणरूपं कर्म ᐯकृणोति करोति ᐯतं तादृशं ᐯगातुविदं गातोर्मार्गस्य दुःखनिवारकस्य[4] लम्भयितारं वरुणम् ᐯईमहे अभिमतफलं याचामहे ।

---

१. क्ष-स—त्यत् तत् श्रुतिषु प्रसिद्धम् । २. त-श-स—व्रश्चेति षत्वम् । ३. क्ष-ट-ठ—अनिष्टानाम् ।
४. क्ष-ट-ठ-स—दुःखान्निस्तारकस्य; न—दुःखान्निवारकस्य ।

ईमहे इति याच्ञाकर्मा। तस्मै वरुणाय अयमस्मदीयः स्तोता ᵛहृदा हृदयेन ᵛमतिं मननीयां स्तुतिं ᵛव्यूर्णोति विवृणोति प्रकाशयति उच्चारयतीत्यर्थः। सोऽयं ᵛनव्यः स्तुत्यो वरुणोऽस्माकम् ᵛऋतं ᵛजायतां सत्यभूतोऽस्तु ॥ ब्रह्म । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः। गातुविदम्। 'विद्लृ लाभे'। अन्तर्भावितण्यर्थात् क्विप्। ईमहे। 'ईङ् गतौ'। 'बहुलं छन्दसि' इति विकरणस्य लुक्। हृदा। 'पद्दन्०' इत्यादिना हृदयशब्दस्य हृदादेशः ॥ ॥ २२ ॥

असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः ।
न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥ १६ ॥

असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः ।
न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः ।
न । पश्यथ । वित्तम् । मे । अस्य । रोदसी इति ॥ १६ ॥

ᵛपन्थाः सततगामी। यद्वा। ब्रह्मलोकं गच्छतामुपासकानां मार्गभूतः। 'सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु. उ. १. २. ११) इति श्रुतेः। एवंभूतः ᵛयः ᵛअसौ ᵛआदित्यः ᵛदिवि द्युलोके ᵛप्रवाच्यं प्रकर्षेण वचनं यथा भवति तथा ᵛकृतः निर्मितः। यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमानः[1] इत्यर्थः। हे ᵛदेवाः ᵛसः अयमादित्यो[2] युष्माभिरपि ᵛन ᵛअतिक्रमे[2] अतिक्रमितुं न शक्यः। युष्मज्जीवनस्य तदायत्तत्वात्। सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते। कालेषु च यागाः क्रियन्ते। यागेषु च सत्सु भवतां जीवनम्। अतो युष्माभिरप्यसौ नातिक्रमितव्यः। एवं च सति हे ᵛमर्तासः पापकृतो मनुष्याः ᵛतं महानुभावं सूर्यं ᵛन ᵛपश्यथ सूर्यं[3] न जानीथ। एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम्। अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां न जानीथः इति ॥ पन्थाः। 'पत्लृ गतौ'। 'पतेस्थ च' इति इनिप्रत्ययः। 'पथिमथ्यृभुक्षामात्' इति आत्वम्। 'इतोऽत्सर्वनामस्थाने' (पा. सू. ७. १. ८६) इति अत्वम् इकारस्य। 'थो न्थः' (पा. सू. ७. १. ८७)। 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम्। प्रवाच्यम्। वक्तेर्ण्यन्तात् 'अचो यत्' इति भावे यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। अतिक्रमे। 'क्रमु पादविक्षेपे'। 'कृत्यार्थे तवैकेन्०' इति केन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम् ॥

त्रितः कूपेऽवहितो देवान्हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥ १७ ॥

त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये ।
तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् । मे । अस्य । रोदसी इति ॥ १७ ॥

---

१. क्ष-वर्तते। २. ट-ठ-अतिक्रमे युष्माभिः। ३. क्ष-ट-ठ-न-स-यूयम्।

Vकूपेऽवहितः पातितः Vत्रितः एतत्संज्ञः[1] ऋषिः Vऊतये रक्षणाय Vदेवान् Vह्वते स्तुतिभिराकारयति । यदेतत् त्रितस्याह्वानं Vबृहस्पतिः बृहतां महतां देवानां रक्षकः एतत्संज्ञो देवः Vतत् आह्वानं Vशुश्राव श्रुतवान् । किं कुर्वन् । Vअंहूरणात् अंहसः पापरूपादस्मात् कूपपातादुन्नीय Vउरु विस्तीर्णं शोभनं Vकृण्वन् कुर्वन् ॥ ह्वते । ह्वयतेर्लेटि ' बहुलं छन्दसि ' इति संप्रसारणम् । शब्गुणावादेशाः । ऊतये । ' ऊतियूति॰ ' इत्यादिना क्तिन उदात्तत्वम् । बृहस्पतिः । ' तद्बृहतोः करपत्योः॰ ' ( पा. सू. ६. १. १५७. ग. ) इति पारस्करादिषु पाठात् सुट्तलोपौ । ' उभे वनस्पत्यादिषु॰ ' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । अंहूरणात् । ' अहि गतौ ' । इदित्वात् नुम् । ' खर्जिपिञ्ज्यादिभ्य ऊरोलचौ ' ( उ. सू. ४. ५३० ) इति भावे ऊरप्रत्ययः । दुःखप्राप्तिहेतुभावा[2] गतिरस्यास्तीति पामादिलक्षणो मत्वर्थीयो नः ( पा. सू. ५. २. १०० ) । आङ्पूर्वात् हन्तेर्वा रूपमुन्नेयम् ॥

अ॒रु॒णो मा॑ स॒कृद्वृक॑ः प॒था यन्तं॑ द॒दर्श॒ हि ।
उ॒ज्जि॒हीते नि॒चाय्या॒ तष्टे॑व पृष्ट्याम॒यी वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १८ ॥

अ॒रु॒णः । मा॒ । स॒कृत् । वृक॑ः । प॒था । यन्त॑म् । द॒दर्श॑ । हि ।
उत् । जि॒हीते । नि॒ऽचाय्य॑ । तष्टा॑ऽइव । पृ॒ष्टि॒ऽआ॒म॒यी । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ १८ ॥

अरुणवर्णः[3] लोहितवर्णः Vवृकः अरण्यश्वा Vसकृत् एकवारं Vपथा Vयन्तं मार्गेण गच्छन्तं मां Vददर्श Vहि दृष्टवान् । हिः पादपूरणः । Vनिचाय्य दृष्ट्वा च मां जिघृक्षुः सन् Vउज्जिहीते उद्गच्छति स्म[4] । तत्र दृष्टान्तः । Vतष्टेव Vपृष्ट्यामयी । यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकिः तदपनोदनाय ऊर्ध्वाभिमुखो भवति तद्वत् । हे[5] द्यावापृथिव्यौ मदीयमिदं दुःखं Vवित्तं जानीतम्[5] । यद्वा । वृक इति विवृतज्योतिष्कः चन्द्रमाः उच्यते । अरुणः आरोचमानः कृत्स्नस्य जगतः प्रकाशकः मासकृत् मासार्धमासर्त्वयनसंवत्सरादीन् कालविशेषान् कुर्वन् । तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात् । स चन्द्रमाः आकाशमार्गे[6] यन्तं गच्छन्तं नक्षत्रगणं ददर्श । हिरवधारणे । नक्षत्रगणमेव ददर्श न कूपपतितं मामित्यनादरो द्योत्यते । यदि मां पश्येत् उद्धरेत् कूपात् । निचाय्य नक्षत्रगणं दृष्ट्वा चोज्जिहीते । येन नक्षत्रेण संयुज्यते तेन सहोद्गच्छति । न मामभिगच्छतीत्यर्थः । अन्यत् पूर्ववत् ॥ अत्र मासकृत् इति यास्कः एकं पदं मन्यते शाकल्यस्तु पदद्वयम् । तस्मिन्पक्षेऽयमर्थः । दक्षप्रजापतेर्दुहितृभूताः स्वभार्याः[7] अश्विन्याद्यास्तारकाः पुनःपुनर्ददर्श[8] । मां सकृदेव पश्यतीति सकृद्दृष्ट्वा चोज्जिहीते । ताराभिः सहोर्ध्वमेव गच्छति । न मां कूपादुत्तारयति । अत इदमनुचितम् । हे द्यावापृथिव्यौ मदीयमिमं वृत्तान्तं जानीतम् ॥ अत्र निरुक्तं–' वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । अरुण आरोचनः[9] मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी ' ( निरु. ५. २०–२१ ) इति ॥ सकृत् । ' एकस्य सकृच्च ' ( पा. सू. ५. ४. १९ ) इति क्रियाभ्यावृत्तिगणने निपातितः । वृकः । ' वृञ्

---

१. क्ष-स–एतत्संज्ञकः । २. क्ष–दुःखप्राप्तिहेतुभूता । ३. क्ष- स–अरुणः अरुणवर्णः । ४. क्ष–' स्म ' नास्ति । ५. क्ष-ट-ठ–' हे...जानीतम् ' नास्ति । ६. क्ष-स–पथा आकाशमार्गेण । ७. क्ष-ट-ठ–तद्भार्याः । ८. क्ष-ट-ठ– पुनःपुनर्दृश्यमानाः सकृदेव पश्यति । ९. क्ष-स–आरोचमानः ।

वरणे '। ' सृवृभूशुषिमुषिभ्यः किन् ' ( उ. सू. ३. ३२१ ) इति क्प्रत्ययः । जिहीते । ' ओहाङ् गतौ ' । जौहोत्यादिकः । ' भृञामित् ' इति अभ्यासस्य इत्वम् । निचाय्य । ' चायृ पूजानिशामनयोः ' । अत्र[1] दर्शनार्थो धातूनामनेकार्थत्वात्[1] । ' समासेऽनञ्पूर्वे क्त्वो ल्यप् ' । पृष्ट्यामयी । ' स्पृश संस्पर्शने ' । स्पृश्यतेऽनेनेति स्पृष्टिः । छान्दसो वर्णलोपः[2] । पृष्टावामयः पृष्ट्यामयः । तद्वान् पृष्ट्यामयी ॥

ए॒नाङ्गू॒षेण॑ व॒यमिन्द्र॑वन्तो॒ऽभि ष्या॑म वृ॒जने॑ स॒र्ववी॑राः ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ १९ ॥

ए॒ना । आ॒ङ्गू॒षेण॑ । व॒यम् । इन्द्र॑ऽवन्तः । अ॒भि । स्या॒म॒ । वृ॒जने॑ । स॒र्वऽवी॑राः ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥१९॥

ᵛएना अनेन ᵛआङ्गूषेण आघोषणयोग्येन स्तोत्रेण हेतुभूतेन ᵛइन्द्रवन्तः अनुग्राहकेणेन्द्रेण युक्ताः ᵛसर्ववीराः सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः ᵛवयं ᵛवृजने संग्रामे ᵛअभि ᵛष्याम शत्रूनभिभवेम । ᵛतत् इदमस्मदीयं वचनं मित्रादयः ᵛममहन्तां पूजयन्तु पालयन्त्वित्यर्थः । उतशब्दो[3] देवतासमुच्चये[3] । अत्र यास्कः—' आङ्गूषः स्तोम आघोषः । अनेन स्तोमेन वयमिन्द्रवन्तः ' ( निरु. ५.११ ) इति ॥ एना । ' द्वितीयाटौस्स्वेनः ' ( पा. सू. २. ४. ३४ ) इति तृतीयायाम् इदम एनादेशः । ' सुपां सुलुक्° ' इति विभक्तेः आजादेशः । चित्स्वरेणान्तोदात्तत्वम् । आङ्गूषेण । आङ्पूर्वात् घुषेः कर्मणि घञ् । आङो ङकारलोपाभावश्छान्दसः । घोषशब्दस्य गूषभावश्च पृषोदरादित्वात् । थाथादिना उत्तरपदान्तोदात्तत्वम् । स्याम । अस्तेः प्रार्थनायां लिङि ' श्नसोरल्लोपः ' इति अकारलोपः । ' उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ' ( पा. सू. ८. ३. ८७ ) इति षत्वम् ॥ ॥ २३ ॥ ॥ १५ ॥

षोडशेऽनुवाके दश सूक्तानि । तत्र ' इन्द्रम् ' इति सप्तर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते—' इन्द्रं मित्रं सप्त त्रिष्टुबन्तम् ' इति । अनुवर्तमानत्वात्[4] कुत्स ऋषिः । त्रितस्तु वाविशिष्टत्वात् तत्रैव विकल्पितो नानुवर्तते । अन्त्या त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विश्वे देवा देवतेत्युक्तम् । विनियोगो लैङ्गिकः ॥

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमू॒तये॒ मारु॑तं॒ शर्धो॒ अदि॑तिं हवामहे ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ १ ॥

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । ऊ॒तये॑ । मारु॑तम् । शर्धः॑ । अदि॑तिम् । ह॒वा॒म॒हे॒ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥१॥

ᵛऊतये रक्षणाय वयमिन्द्रादीन् ᵛमारुतं ᵛशर्धः मरुत्समूहरूपं बलं च ᵛहवामहे आह्वयामहे[5] । ᵛवसवः[6] निवासयितारः ᵛसुदानवः[7] शोभनदानाः[7] इन्द्रादयः ᵛविश्वस्मात् सर्वस्मात् ᵛअंहसः पापात्

१. क्ष-ट-ठ–निशामनं दर्शनम् । २. क्ष–सलोपः । ३. क्ष-ट-ठ–' उतशब्दो देवतासमुच्चये ' नास्ति । ४. क्ष-ट-ठ-स–अनुवर्तनात् । ५. क्ष–आह्वयामः । ६. क्ष–हे वसवः । ७. क्ष-ट-ठ–हे सुदानवः ।

^v^नः अस्मान् ^v^निष्पिपर्तन निर्गमय्य पालयत । तत्र दृष्टान्तः । ^v^रथं ^v^न ^v^दुर्गात् । गन्तुमशक्यान्निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् ॥ पिपर्तन । 'पृ इत्येके'। लोटि 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । पित्त्वेन ङित्त्वाभावात् गुणः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् ॥

त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये भू॒त दे॑वा वृत्र॒तूर्ये॑षु श॒म्भुव॑ः ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ २ ॥

ते । आ॒दि॒त्याः । आ । ग॒त । स॒र्वऽता॑तये । भू॒त । दे॒वाः । वृ॒त्रऽतू॑र्येषु । श॒म्ऽभुवः॑ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न ॥२॥

हे ^v^आदित्याः अदितेः पुत्राः ^v^देवाः[1] ^v^ते यूयं ^v^सर्वतातये सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय । युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः । ^v^आ ^v^गत आगच्छत । अपि च ^v^वृत्रतूर्येषु । संग्रामनामैतत् । संग्रामेषु ^v^शंभुवः सुखस्य भावयितारः ^v^भूत भवत[2] ॥ गत । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक्[3] ॥

अव॑न्तु नः पि॒तर॑ः सुप्रवाच॒ना उ॒त दे॒वी दे॒वपु॑त्रे ऋता॒वृधा॑ ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ३ ॥

अव॑न्तु । नः॒ । पि॒तरः॑ । सु॒ऽप्र॒वा॒च॒नाः । उ॒त । दे॒वी इति॑ । दे॒वपु॑त्रे इति॑ दे॒वऽपु॑त्रे । ऋ॒त॒ऽवृधा॑ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न ॥ ३ ॥

^v^नः अस्मान् ^v^पितरः अग्निष्वात्तादयः ^v^अवन्तु रक्षन्तु । कीदृशाः । ^v^सुप्रवाचनाः सुखेन प्रवक्तुं स्तोतुं शक्याः । ^v^उत अपि च ^v^देवपुत्रे देवाः सर्वे पुत्रस्थानीया ययोस्ते ^v^ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यौ ^v^देवी देवनादिगुणयुक्ते[4] द्यावापृथिव्यौ अस्मान् रक्षताम्[5] । अन्यत् समानम् ॥ देवी । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ऋतावृधा । वृधेरन्तर्भावितण्यर्थात् क्विप् । 'सुपां सुलुक्°' इति विभक्तेः आकारः ॥

न॒रा॒शंसं॑ वा॒जिनं॑ वा॒जय॑न्नि॒ह क्ष॒यद्वी॑रं पू॒षणं॑ सु॒म्नैरी॑महे ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ४ ॥

न॒रा॒शंस॑म् । वा॒जिन॑म् । वा॒जय॑न् । इ॒ह । क्ष॒यत्ऽवी॑रम् । पू॒षण॑म् । सु॒म्नैः । ई॒म॒हे॒ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न ॥४॥

---

१. क्ष-ट-ठ-'देवाः' नास्ति । २. क्ष-भवत । गतमन्यत् । ३. क्ष-ट-ठ-स-'लुक्' इत्यस्यानन्तरं 'अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः । भूत । बहुलं छन्दसि इति शपो लुक्' इत्यधिकम् । ४, क्ष-दानादिगुणयुक्ते । ५. क्ष-ट-ठ-रक्षतम् ।

ᵛनराशंसं नरैः शंसनीयं ᵛवाजिनम् अन्नवन्तमग्निं ᵛवाजयन् उपवाजयन् प्रज्वलयन् ᵛइह अस्मिन् काले स्तौमीति शेषः । तथा ᵛक्षयद्वीरम् अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते[1] एवंरूपं ᵛपूषणं पोषकं देवं ᵛसुम्नैः सुखकरैः स्तोत्रैर्हेतुभूतैः ᵛईमहे याचामहे अभीष्टं प्रार्थयामहे ॥ नराशंसम् । ‘ उभे वनस्पत्यादिषु० ’ इति युगपदुभयपदप्रकृतिस्वरत्वम् । नरशब्दः ‘ ऋदोरप् ’ इति अबन्त आद्युदात्तः । निपातनात् दीर्घः । शंसशब्दो घञन्त आद्युदात्तः । वाजयन् । ‘ वज व्रज गतौ ’ । अस्मात् णिच् । क्षयद्वीरम् । ‘ क्षि[2] क्षये[2] ’ । लटः शतृ । शपि प्राप्ते व्यत्ययेन शः । तस्य ‘ छन्दस्युभयथा ’ इति आर्धधातुकत्वेन ङित्त्वाभावात् गुणायादेशौ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । ‘ अतो गुणे ’ इति पररूपत्वे ‘ एकादेश उदात्तेन० ’ इति एकादेश उदात्तः । क्षयन्तो वीरा यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

बृह॑स्पते॒ सद॒मिन्नः॑ सु॒गं कृ॑धि॒ शं योर्यत्ते॒ मनु॑र्हितं॒ तदी॑महे ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ५ ॥

बृह॑स्पते । सद॑म् । इत् । नः॒ । सु॒ऽगम् । कृ॒धि॒ । शम् । योः । यत् । ते॒ । मनुः॑ऽहितम् । तत् । ई॒म॒हे॒ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥ ५ ॥

ᵛबृहस्पते ᵛसदमित् सदैव ᵛनः अस्माकं ᵛसुगम् सुखनामैतत् । सुखं ᵛकृधि कुरु । अपि च ᵛते तव स्वभूतं ᵛशं शमनीयानां रोगाणामुपशमनं ᵛयोः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं ᵛमनुर्हितं मनुना ब्रह्मणा हितं स्वव्यवस्थापितम् । यद्वा । मनुष्याणामनुकूलम् । एवंविधं शमनं यावनं च ᵛयत् अस्ति ᵛतदीमहे याचामहे ॥ सुगम् । सुष्ठु गम्यतेऽस्मिन्निति सुगम् । ‘ सुदुरोरधिकरणे ’ इति गमेर्डः । शं योः इत्येतत् पदद्वयं यास्केनैवं व्याख्यातं–‘ शमनं च रोगाणां यावनं च भयानाम् ’ ( निरु. ४. २१ ) इति । मनुर्हितम् । मनेरौणादिक उसिन्प्रत्ययः । ‘तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम् ॥

इन्द्रं॒ कुत्सो॑ वृत्र॒हणं॒ शची॒पतिं॑ का॒टे निबा॑ळ्ह॒ ऋषि॑रह्व॒दू॒तये॑ ।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ६ ॥

इन्द्र॑म् । कुत्सः॑ । वृ॒त्र॒ऽहन॑म् । शची॒३ऽप॑तिम् । का॒टे । नि॒ऽबा॑ळ्हः । ऋषिः॑ । अ॒ह्व॒त् । ऊ॒तये॑ ।
रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥ ६ ॥

काटः इति कूपनाम । तस्मिन् ᵛनिबाळ्हः निपातितः[3] ᵛकुत्सः ᵛऋषिः ᵛऊतये रक्षणाय ᵛइन्द्रम् ᵛअह्वत् आह्वयति[4] स्म[4] । कीदृशम् । ᵛवृत्रहणं वृत्राणां शत्रूणां हन्तारं ᵛशचीपतिम् । शचीति कर्मनाम । सर्वेषां कर्मणां पालयितारम् । यद्वा । शच्या[5] देव्याः[5] भर्तारम् ॥ शचीपतिम् । वनस्पत्यादिषु पाठादुभयपदप्रकृतिस्वरत्वम् । शचीशब्दः शार्ङ्गरवादिङीनन्त आद्युदात्तः । निबाळ्हः । ‘ बाहृ प्रयत्ने ’ ।

१. स—क्षियन्ति । २. क्ष-ट-ठ—क्षयतेः । ३. क्ष-स-निपतितः । ४. क्ष-ट-ठ—आह्वयत् । ५. क्ष-स—शचीदेव्याः ।

नीत्युपसर्गवशात् पतने वर्तते । निष्ठायाम् ‘ अनित्यमागमशासनम् ’ इति इडभावः । ढत्वधत्वादीनि । यद्वा । ‘ क्षुब्धस्वान्त° ’ ( पा. सू. ७. २. १८ ) इत्यादौ भृशार्थे इडभावो निपात्यते । अत्र च बाढशब्दो भृशत्वोपेते[1] पतने सामर्थ्याद्वर्तते । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । अह्वत् । ‘ लिपिसिचिह्वश्च ’ ( पा. सू. ३. १. ५३ ) इति लुङि च्लेरङादेशः । ‘ आतो लोप इटि च ’ इत्याकारलोपः ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ७ ॥

देवी दानादिगुणयुक्ता अदितिः अखण्डनीया अदीना वा देवमाता देवैः दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह नः अस्मान् नि पातु नितरां रक्षतु । देवः दीप्यमानः त्राता सर्वेषां रक्षकः सविता अप्रयुच्छन् अप्रमाद्यन् अस्मद्रक्षणे जागरूकः सन् त्रायताम् अस्मान् पालयतु । यदनेन सूक्तेनास्माभिः प्रार्थितं नः अस्मदीयं तत् मित्रादयः षड्देवताः ममहन्तां पूजयन्तु ॥ त्रायताम् । ‘ त्रैङ् पालने ’ । भौवादिकः । अप्रयुच्छन् । ‘ युच्छ प्रमादे ’ । अस्मात् लटः शतृ । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥　　॥ २४ ॥

‘ यज्ञो देवानाम् ’ इति तृचं द्वितीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभं वैश्वदेवम् । ‘ यज्ञस्तृचम् ’ इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥ १ ॥

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृळयन्तः ।
आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥ १ ॥

अस्मदीयः यज्ञो देवानाम् इन्द्रादीनां सुम्नं सुखं प्रत्येति[2] प्राप्नोतु । अपि च हे आदित्यासः आदित्याः मृळयन्तः अस्मान् सुखयन्तः भवत । तथा वः युष्माकं सुमतिः शोभना मतिः भद्रानुग्रहपरा[3] बुद्धिः अर्वाची अस्मदभिमुखी आ ववृत्यात् आवर्तताम् । या मतिः अंहोश्चित् दारिद्र्यं प्राप्तस्यापि पुरुषस्य वरिवोवित्तरा । वरिवः इति धननाम । अतिशयेन धनस्य लम्भयित्री असत् भवेत् । सैषा मतिरस्मान् रक्षितुं वर्ततामित्यर्थः ॥ भवत । ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ इति आदित्यास इति पादादौ वर्तमानस्य आमन्त्रितस्य अविद्यमानवत्त्वेनास्य पादादित्वात् ‘ °अपादादौ ’

---

१. क्ष-ट-ठ-न-स—भृशार्थोपेते । २. क्ष-स—‘ प्रत्येति ’ इत्यस्यानन्तरं ‘ प्रतिगच्छति । सुखं जनयितुं द्युलोकं ( क्ष—स्वर्गलोकं ) प्राप्नोतीत्यर्थः । यद्वा । देवानां संबन्धी यो ( क्ष—योऽयं ) यज्ञः सोऽस्माकं सुम्नं सुखं प्रत्येति (क्ष—प्रति ) प्राप्नोतु ( क्ष – प्राप्नोति ) इत्यधिकम् । ३. क्ष-स—भक्तानुग्रहपरा ।

इति पर्युदासात् निघाताभावः । मृळयन्तः । 'मृड सुखने' । ण्यन्तात् लटः शतृ । शप् । 'छन्दस्युभयथा' इति शतुः आर्धधातुकत्वेन अदुपदेशात् लसार्वधातुकानुदात्तत्वाभावे शतुः स्वरः शिष्यते । ववृत्यात् । 'वृतु वर्तने' । लिङि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । अंहोः । 'अहि गतौ' । इदित्वात् नुम् । औणादिक उप्रत्ययः । वरिवोवित्तरा । 'विद्लृ लाभे' । अस्मादन्तर्भावितण्यर्थात् क्विप् । तत आतिशायनिक. तरप् । असत् । 'अस भुवि' । लेटि अडागमः ॥

उप॑ नो दे॒वा अव॒सा ग॑म॒न्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः ।
इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥ २ ॥

उप॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । अङ्गि॑रसाम् । साम॑ऽभिः । स्तू॒यमा॑नाः ।
इन्द्रः॑ । इ॒न्द्रि॒यैः । म॒रुतः॑ । म॒रुत्ऽभिः॑ । आ॒दि॒त्यैः । नः॒ । अदि॑तिः । शर्म॑ । यं॒स॒त् ॥ २ ॥

ᵛदेवाः दानादिगुणयुक्ताः सर्वे देवाः ᵛअवसा रक्षणेनास्मभ्यं दातव्येनान्नेन वा युक्ताः ᵛनः अस्मान् स्तोतॄन्[1] ᵛउप ᵛआ ᵛगमन्तु उपागच्छन्तु प्राप्नुवन्तु । कथंभूताः । ᵛअङ्गिरसाम् एतत्संज्ञकानामृषीणां संबन्धिभिः ᵛसामभिः प्रगीतैर्मन्त्रैः ᵛस्तूयमानाः । अपि च ᵛइन्द्रः ᵛइन्द्रियैः । धननामैतत् । स्वसंबन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु । तथा ᵛमरुतः सप्तगणरूपा एकोनपञ्चाशत्संख्याकाः 'ईदृङ् चान्यादृङ् च' इत्येवमादिनामानो देवाः ᵛमरुद्भिः स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैः वायुभिः सहास्मानागच्छन्तु । तथा ᵛअदितिः अखण्डनीया अदीना वा देवमाता ᵛआदित्यैः स्वकीयैः पुत्रैः सह ᵛनः अस्मभ्यं ᵛशर्म सुखं ᵛयंसत् यच्छतु[2] ॥ गमन्तु । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति झेः आर्धधातुकत्वेन ङित्त्वाभावात् 'गमहन॰' इत्यादिना उपधालोपाभावः । यंसत् । 'यम उपरमे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् ॥

तन्न॒ इन्द्र॒स्तद्वरु॑ण॒स्तद॒ग्निस्तद॑र्य॒मा तत्स॑वि॒ता चनो॑ धात् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ३ ॥

तत् । नः॒ । इन्द्रः॑ । तत् । वरु॑णः । तत् । अ॒ग्निः । तत् । अ॒र्य॒मा । तत् । स॒वि॒ता । चनः॑ । धा॒त् ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ३ ॥

यदस्माभिः प्रार्थ्यमानमन्नमस्ति । चन इत्यन्ननाम । ᵛतत् तादृशं ᵛचनः अन्नं ᵛनः अस्मभ्यम् ᵛइन्द्रः ᵛधात् दधातु ददातु । एवं ᵛतद्वरुणः इत्यादावपि योज्यम् । ᵛतत् इदमिन्द्रादिभिर्दत्तमस्मदीयमन्नं मित्रादयः ᵛममहन्तां पूजयन्तु पालयन्त्वित्यर्थः ॥ चनः । 'चायृ पूजानिशामनयोः' । 'चायेरन्ने ह्रस्वश्च' ( उ. सू. ४. ६३९ ) इति असुन् नुडागमश्च धातोर्ह्रस्वत्वं च । वलि लोपः । नित्त्वादाद्युदात्तत्वम् । धात् । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङ् । 'गातिस्था॰' इति सिचो लुक् ॥ ॥ २५ ॥

---

१. क्ष-ट-ठ-'स्तोतॄन्' नास्ति । २. ट-ठ-स-प्रयच्छतु ।

' य इन्द्राग्नी ' इति त्रयोदशर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभमैन्द्राग्नम् । तथा चानुक्रान्तं– ' य इन्द्राग्नी सप्तोनैन्द्राग्नं तु ' इति । विनियोगो लैङ्गिकः ॥

य इ॑न्द्राग्नी चि॒त्रत॑मो॒ रथो॑ वाम॒भि विश्वा॑नि॒ भुव॑नानि॒ चष्टे॑ ।
तेना या॑तं स॒रथं॑ तस्थि॒वांसाथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ १ ॥

यः । इ॒न्द्रा॒ग्नी इति॑ । चि॒त्रऽत॑मः । रथः॑ । वा॒म् । अ॒भि । विश्वा॑नि । भुव॑नानि । चष्टे॑ ।
तेन॑ । आ । या॒तम् । स॒ऽरथ॑म् । त॒स्थि॒ऽवांसा॑ । अथ॑ । सोम॑स्य । पि॒ब॒तम् । सु॒तस्य॑ ॥ १ ॥

हे ᵛइन्द्राग्नी ᵛचित्रतमः अतिशयेन चायनीयः ᵛवां युवयोः संबन्धी ᵛयः ᵛरथः ᵛविश्वानि ᵛभुवनानि भूतजातानि[1] ᵛअभि ᵛचष्टे आभिमुख्येन पश्यति । सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगद्भासयतीत्यर्थः । ᵛतेन रथेन ᵛआ ᵛयातम् अस्मद्यज्ञमागच्छतम्। तत्किं पर्यायेण । नेत्याह । ᵛसरथं समानमेकं रथं ᵛतस्थिवांसा युगपदेव आस्थितवन्तौ[2] युवामागच्छतं न[3] पर्यायेणेत्यर्थः। ᵛअथ आगमनानन्तरं ᵛसुतस्य ऋत्विग्भिरभिषुतं[4] ᵛसोमस्य सोमं स्वांशलक्षणं तदेकदेशं वा ᵛपिबतम् ॥ वाम् । ' युष्मदस्मदोः षष्ठीचतुर्थी° ' ( पा. सू. ८. १. २० ) इत्यादिना षष्ठीद्विवचनस्य वामादेशः । सर्वानुदात्तत्वम् । चष्टे । ' चक्षिङ् व्यक्तायां वाचि ' । अत्र प्रकाशनार्थः । अदादित्वात् शपो लुक् । ' स्कोः संयोगाद्योः° ' इति कलोपः । ' तास्यनुदात्तेत्° ' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । ' यद्वृत्तान्नित्यम् ' इति निघातप्रतिषेधः । सरथम् । समानश्चासौ रथश्च[5] सरथः । ' समानस्य च्छन्दसि° ' इति सभावः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम्। तस्थिवांसा । ' ष्ठा गतिनिवृत्तौ ' । लिटः क्वसुः । द्विर्वचनम् । ' शर्पूर्वाः खयः ' । ' वस्वेकाजाद्घसाम् ' इति इडागमः । ' आतो लोप इटि च ' इति आकारलोपः । ' सुपां सुलुक्° ' इति आकारः । सोमस्य । ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥

याव॑दि॒दं भुव॑नं॒ विश्व॒मस्त्यु॑रु॒व्यचा॑ वरि॒मता॑ गभी॒रम् ।
तावाँ॑ अ॒यं पात॑वे॒ सोमो॑ अ॒स्त्वर॑मिन्द्राग्नी॒ मन॑से यु॒वभ्या॑म् ॥ २ ॥

याव॑त् । इ॒दम् । भुव॑नम् । विश्व॑म् । अस्ति॑ । उ॒रु॒ऽव्यचा॑ । व॒रि॒मता॑ । ग॒भी॒रम् ।
तावा॑न् । अ॒यम् । पात॑वे । सोमः॑ । अ॒स्तु॒ । अर॑म् । इ॒न्द्रा॒ग्नी॒ इति॑ । मन॑से । यु॒वऽभ्या॑म् ॥ २ ॥

ᵛविश्वं सर्वम् ᵛइदं ᵛभुवनं जगत् ᵛयावत् ᵛअस्ति यावत्प्रमाणं[6] भवति । कीदृशम् । ᵛउरुव्यचा विस्तीर्णव्यापनम् । सर्वव्यापकमित्यर्थः । तथा ᵛवरिमता वरिम्णा उरुत्वेनात्मीयेन गौरवेण ᵛगभीरं गाम्भीर्योपेतम्। हे ᵛइन्द्राग्नी ᵛपातवे युवाभ्यां पातुं ᵛसोमः[7] ᵛतावान् ᵛअस्तु तावत्प्रमाणो भवतु। तथा ᵛमनसे युवयोरन्तःकरणाय ᵛअरं स सोमः पर्याप्तो भवतु ॥ उरुव्यचा । ' व्यच व्याजीकरणे ' । असुन् ।

---

१. क्ष-ट-ठ-स–सर्वाणि भूतजातानि २. क्ष-स–अवस्थितवन्तौ। ३. क्ष-ट-ठ–न तु । ४. क्ष–ऋत्विग्भिरभिषुतस्य । ५. क्ष-ट-ठ–रथश्चेति। ६. क्ष–यावत्परिमाणम् । ७. क्ष-ट-ठ-स–अयं सोमः ।

' व्यचेः कुटादित्वमनसि ' इति वचनात् ङित्त्वाभावेन संप्रसारणाभावः । ' स्वमोर्नपुंसकात् ' (पा. सू. ७. १. २३) इति सोर्लुकि प्राप्ते ' सुपां सुलुक्° ' इति व्यत्ययेन डादेशः। वरिमता। ' पृथ्वादिभ्य इमनिज्वा ' इति उरुशब्दात् तस्य भावः इत्यर्थे इमनिच्। ' प्रियस्थिर°' इत्यादिना उरुशब्दस्य वरादेशः। पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी। ' सुपां सुलुक्° ' इति तृतीयाया लुक्। यद्वा। तृतीयायाश्छान्दसः तुडागमः। तावान्। तत्परिमाणमस्य। ' यत्तदेतेभ्यः परिमाणे वतुप् ' (पा. सू. ५. २. ३९)। ' आ सर्वनाम्नः ' इति आत्वम्। पातवे। ' पा पाने '। ' तुमर्थे सेसेन्° ' इति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। अरम्। ' बालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् ' (पा. म. ८. २. १८) इति लत्वविकल्पः। युवभ्याम्। व्यत्ययेन आत्वाभावे ' शेषे लोपः ' इति दकारलोपः ॥

**चक्राथे हि सध्र्यङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।**
**ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ॥ ३ ॥**

चक्राथे इति । हि । सध्र्यक् । नाम । भद्रम् । सध्रीचीना । वृत्रऽहनौ । उत । स्थः ।
तौ । इन्द्राग्नी इति । सध्र्यञ्चा । निऽसद्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ॥ ३ ॥

हे इन्द्राग्नी भद्रं कल्याणं नाम स्वकीयं नामधेयं सध्र्यक् सहगतमिन्द्राग्नी इत्येवं संयुक्तं चक्राथे युवां कृतवन्तौ। उत अपि च हे वृत्रहणौ वृत्रस्यासुरस्य हन्ताराविन्द्राग्नी सध्रीचीना सहाञ्चन्तौ वृत्रवधार्थं संगतौ स्थः भवथः। हि यस्मादेवं तस्मात् हे वृषणा कामानां वर्षिताराविन्द्राग्नी तौ युवां सध्र्यञ्चौ सहितावेव सन्तौ निषद्य वेद्यामुपविश्य वृष्णः सेक्तुः सोमस्य आत्मीयं भागम् आ वृषेथां स्वकीये उदरे आसिञ्चेथाम् ॥ सध्र्यक्। सहशब्दोपपदादञ्चतेः ' ऋत्विक्° ' इत्यादिना क्विन्। ' अनिदिताम्° ' इति नलोपः। ' सहस्य सध्रिः '। ' अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् ' (पा. सू. ६. ३. ९५. १) इति वचनात् सध्र्यादेशोऽन्तोदात्तः। यणादेशे ' उदात्तस्वरितयोर्यणः° ' इति स्वरितत्वम्। सध्रीचीना। ' विभाषाञ्चेरदिक्स्त्रियाम् ' इति स्वार्थे खः। ' सुपां सुलुक्° ' इति विभक्तेः आजादेशः। वृत्रहणौ। संहितायाम् आवादेशे ' लोपः शाकल्यस्य ' इति वलोपः। वृषेथाम्। ' वृष सेचने '। व्यत्ययेन शः आत्मनेपदं च ॥

**समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।**
**तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी सौमनसाय यातम् ॥ ४ ॥**

सम्ऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊँ इति । तिस्तिराणा ।
तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ॥ ४ ॥

अग्निषु गार्हपत्यादिषु अन्वाधानादिना समिद्धेषु सम्यगिद्धेषु दीप्तेषु सत्सु आनजाना हवींष्याज्येनाञ्जन्तौ यतस्रुचा तदनन्तरं यागार्थं गृहीतस्रुचौ बर्हिरु वेद्यां बर्हिरपि तिस्तिराणा आस्तीर्णं कृतवन्तौ अध्वर्युप्रतिप्रस्थातारौ एवंभूतावभूताम्। तथा सति हे इन्द्राग्नी तीव्रैः क्षिप्रं मदकरैः

ᵛपरिषिक्तेभिः परितः सर्वेषु ग्रहचमसादिष्वासिक्तैः ᵛसोमैः हेतुभूतैः ᵛअर्वाक् अस्मदभिमुखम् ᵛआ ᵛयातम् आगच्छतम्। किमर्थम्। ᵛसौमनसाय सौमनस्याय अस्माकमनुग्रहायेत्यर्थः ॥ आनजाना। 'अञ्जू व्यक्तिम्रक्षणगतिषु'। लिटः कानच्। 'अनिदिताम्°' इति नलोपः। द्विर्भावे 'अत आदेः' इति अभ्यासस्य दीर्घः। 'तस्मान्नुड्द्विहलः' इति अद्विहलोऽपि व्यत्ययेन नुट्। तिस्तिराणा। 'स्तॄञ् आच्छादने'। पूर्ववत् कानच्। 'ऋत इद्धातोः' इति इत्वम्। द्विर्वचने 'शर्पूर्वाः खयः'। 'सुपां सुलुक्°' इति सर्वत्र विभक्तेः आकारः। चित्त्वादन्तोदात्तत्वम् ॥

यानी॑न्द्राग्नी च॒क्रथु॑र्वी॒र्या॑णि॒ यानि॑ रू॒पाण्यु॒त वृष्ण्या॑नि।
या वां॑ प्र॒त्नानि॑ स॒ख्या शि॒वानि॒ तेभि॒ः सोम॑स्य पिबतं सु॒तस्य॑ ॥ ५ ॥

यानि॑। इ॒न्द्रा॒ग्नी॒ इति॑। च॒क्रथुः॑। वी॒र्या॑णि। यानि॑। रू॒पाणि॑। उ॒त। वृष्ण्या॑नि।
या। वा॒म्। प्र॒त्नानि॑। स॒ख्या। शि॒वानि॑। तेभि॑ः। सोम॑स्य। पि॒ब॒त॒म्। सु॒तस्य॑ ॥ ५ ॥

हे ᵛइन्द्राग्नी ᵛयानि ᵛवीर्याणि वृत्रवधादिरूपाणि ᵛचक्रथुः कृतवन्तौ युवां ᵛयानि च ᵛरूपाणि निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवन्तौ। इन्द्राग्निभ्यां हि सर्वं जगत् सृज्यते। इन्द्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहुतिद्वारा वृष्ट्युत्पादकः। वृष्टेः सकाशात् सर्वे प्राणिन उत्पद्यन्ते। ᵛउत अपि च यानि ᵛवृष्ण्यानि वृष्णि भवानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ। तथा ᵛवां युवयोः संबन्धीनि ᵛप्रत्नानि चिरंतनानि ᵛशिवानि शोभनानि ᵛया यानि ᵛसख्या सखित्वानि सन्ति। ᵛतेभिः तैः सर्वैः सहितौ युवां ᵛसुतस्य ᵛसोमस्य अभिषुतं सोमं ᵛपिबतम् ॥ सख्या। सख्युर्भावः सख्यम्। 'सख्युर्यः' इति यप्रत्ययः। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। तेभिः। 'बहुलं छन्दसि' इति भिस ऐसभावः। 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः ॥ ॥ २६ ॥

यदब्र॑वं प्रथ॒मं वां॑ वृणा॒नो॒३॒॑ऽयं सोमो॒ असु॑रैर्नो वि॒हव्य॑ः।
तां स॒त्यां श्र॒द्धाम॒भ्या हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ६ ॥

यत्। अब्र॑वम्। प्र॒थ॒मम्। वा॒म्। वृ॒णा॒नः। अ॒यम्। सोम॑ः। असु॑रैः। न॒ः। वि॒ऽह॒व्य॑ः।
ताम्। स॒त्याम्। श्र॒द्धाम्। अ॒भि। आ। हि। या॒त॒म्। अथ॑। सोम॑स्य। पि॒ब॒त॒म्। सु॒तस्य॑ ॥६॥

हे इन्द्राग्नी ᵛप्रथमं कर्मोपक्रमे एव ᵛवां युवां ᵛवृणानः संभजमानः ᵛयदब्रवं सोमेन प्रीणयिष्यामीति यदवोचं ᵛसत्यां यथार्थां ᵛतां ᵛश्रद्धां श्रद्धयादरातिशयेन कृतामुक्तिम्[1] ᵛअभि अभिलक्ष्य ᵛआ ᵛहि ᵛयातम् आगच्छतमेव नोदासाथाम्। ᵛअथ आगमनानन्तरमभिषुतं सोमं ᵛपिबतम्। तथा सति ᵛअसुरैः हविषां प्रक्षेपकैर्ऋत्विग्भिः ᵛअयं ᵛनः अस्माकं ᵛसोमः ᵛविहव्यः विशेषेण होतव्यो भवति इतरथा व्यर्थः स्यात्। तस्मादिन्द्राग्नी आगच्छतमित्यर्थः ॥ वृणानः। 'वृङ् संभक्तौ'। लटः शानच्।

---

1. क्ष-ट-ठ—कृतां तामुक्तिम्।

'श्नाभ्यस्तयोरातः' इति आकारलोपः । असुरैः । 'असु क्षेपणे' । 'असेरुरन्' ( उ. सू. १. ४२ ) इति उरन्प्रत्ययः । विहव्यः । 'हु दानादनयोः[1]' । 'अचो यत्' । गुणः । 'धातोस्तन्निमित्तस्यैव' इति अवादेशः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

**यदि॑न्द्राग्नी॒ मद॑थः॒ स्वे दु॑रो॒णे यद्ब्र॒ह्मणि॒ राज॑नि वा यजत्रा ।**

**अत॒ः परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ७ ॥**

यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । मद॑थः । स्वे । दु॒रो॒णे । यत् । ब्र॒ह्मणि॑ । राज॑नि । वा॒ । य॒ज॒त्रा॒ ।

अत॑ः । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ॥ ७ ॥

ᵛयजत्रा यष्टव्यौ हे ᵛइन्द्राग्नी ᵛस्वे ᵛदुरोणे स्वकीये गृहे निवासस्थाने ᵛयत् यदि ᵛमदथः हृष्यथः । ᵛयत् यदि ᵛवा ᵛब्रह्मणि ब्राह्मणे अन्यस्मिन्यजमाने हविःस्वीकरणायागत्य हृष्यथः । यदि वा ᵛराजनि क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः । ᵛअतः ᵛपरि परितोऽस्मात् सर्वस्मात् स्थानात् हे ᵛवृषणौ कामानां वर्षिताराविन्द्राग्नी ᵛआ ᵛयातं ᵛहि आगच्छतमेव । औदासीन्यं मा कार्ष्टम् । अन्यत् पूर्ववत् ॥ मदथः । 'मदी हर्षे' । व्यत्ययेन शप् । यजत्रा । 'अमिनक्षि°' इत्यादिना यजतेः कर्मणि अत्रन् । 'सुपां सुलुक्°' इति विभक्तेः आकारः ॥

**यदि॑न्द्राग्नी॒ यदु॑षु तु॒र्वशे॑षु॒ यद्द्रु॒ह्युष्वनु॑षु पू॒रुषु॒ स्थः ।**

**अत॒ः परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ८ ॥**

यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । यदु॑षु । तु॒र्वशे॑षु । यत् । द्रु॒ह्युषु॑ । अनु॑षु । पू॒रुषु॑ । स्थः ।

अत॑ः । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ॥ ८ ॥

अत्र यदुषु इत्यादीनि पञ्च मनुष्यनामानि । हे ᵛइन्द्राग्नी ᵛयत् यदि ᵛयदुषु नियतेषु परेषामहिंसकेषु मनुष्येषु ᵛस्थः भवथः वर्तेथे । यदि वा ᵛतुर्वशेषु हिंसकेषु मनुष्येषु वर्तेथे । ᵛयत् यदि वा ᵛद्रुह्युषु द्रोहं परेषामुपद्रवमिच्छत्सु मनुष्येषु वर्तेथे । यदि वा ᵛअनुषु प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृष्वनुष्ठातृषु मनुष्येषु । अन्येषां हि प्राणा निष्फला ज्ञानहीनत्वादनुष्ठानाभावाच्च । तेषु यदि भवथः । तथा ᵛपूरुषु कामैः पूरयितव्येष्वन्येषु स्तोतृजनेषु यदि भवथः । ᵛअतः सर्वस्मात् स्थानात् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम् । अनन्तरम्[2] अभिषुतं सोमं ᵛपिबतम्[3] ॥ यदुषु । 'यम उपरमे' । नियम्यन्ते इन्द्रियाण्येभिरिति यदवः । 'यमेर्दुक् च' इति कुप्रत्ययो दुगागमश्च । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । तुर्वशेषु । तुर्वी हिंसार्थः । औणादिकः अशप्रत्ययः । द्रुह्युषु । 'द्रुह जिघांसायाम्' । संपदादिलक्षणो भावे क्विप् । द्रुहं परेषामिच्छन्ति । 'छन्दसि परेच्छायामपि' इति क्यच् । 'क्याच्छन्दसि' इति उप्रत्ययः । अनुषु ।

---

१. क्ष-न—दानादानयोः । २. क्ष-ट-ठ—अथ अनन्तरम् । ३. क्ष-स—'पिबतम्' इत्यस्यानन्तरम् 'एतत् ( स-इदम् ) नैरुक्ताभिमतं व्याख्यानम् । ऐतिहासिकपक्षे तु यदुतुर्वशादयः पञ्च राजानो ययातेः पुत्राः । तत्संबन्धिनीषु प्रजासु इति योज्यम्' इत्यधिकम् ।

'अन प्राणने'। 'अणश्च' ( उ. सू. १. ८ ) इति विधीयमान उप्रत्ययो बहुलवचनादस्मादपि भवति । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम्। पूरुषु । 'पूरी आप्यायने'। पूर्यन्ते इति पूरवः। औणादिक उप्रत्ययः ॥

यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ९ ॥

यत् । इन्द्राग्नी इति । अवमस्याम् । पृथिव्याम् । मध्यमस्याम् । परमस्याम् । उत । स्थः ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ९ ॥

हे इन्द्राग्नी अवमस्यां पृथिव्यां संनिकृष्टायामस्यां भूम्यां यत् यदि स्थः वर्तमानौ भवथः । यदि वा मध्यमस्यां पृथिव्यामन्तरिक्षलोके । अत्र पृथिवीशब्दस्त्रिष्वपि लोकेषु वर्तते । यथा 'यो द्वितीयस्यां तृतीयस्यां पृथिव्यामस्यायुपा नाम्ना' ( तै. सं. १. २. १२. १ ) इति । उत अपि च परमस्याम् उत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे । अतः[1] सर्वस्मात् स्थानात् हे वृषणौ आगच्छतम् । आगमनानन्तरं सुतं सोमं पिबतम्[1] ॥ अवमस्याम् । अवमशब्दादुत्तरस्य ङेर्व्यत्ययेन स्याडागमः । एवमुत्तरत्रापि ॥

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १० ॥

यत् । इन्द्राग्नी इति । परमस्याम् । पृथिव्याम् । मध्यमस्याम् । अवमस्याम् । उत । स्थः ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १० ॥

पूर्ववद्व्याख्येयम् । एतावांस्तु विशेषः । पूर्वं भूम्यादिषु त्रिषु लोकेषु याविन्द्राग्नी तावागच्छतामित्युक्तम् । इदानीं तु द्युप्रभृतिषु अवरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु याविन्द्राग्नी वर्तेते तावागच्छतामिति प्रार्थ्यते ॥

यदिन्द्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ११ ॥

यत् । इन्द्राग्नी इति । दिवि । स्थः । यत् । पृथिव्याम् । यत् । पर्वतेषु । ओषधीषु । अप्ऽसु ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ११ ॥

---

१. क्ष-ट-ठ–सर्वस्मादित्यादि समानम् ।

हे इन्द्राग्नी दिवि द्युलोके यत् यदि स्थः भवथः । यदि वा पृथिव्यां भूलोके यदि वा पर्वतेषु मेर्वादिषु मेघेषु वा । तथा ओषधीषु तिलमाषव्रीह्यादिषु अप्सु उदकेषु चानुग्राहकतया यदि वा स्थः । हे कामाभिवर्षकौ युवाम् अतः सर्वस्मात् स्थानादागच्छतम् । आगत्य चाभिषुतं सोमं पिबतम् ॥ पृथिव्याम् । ‘ उदात्तयणः० ’ इति विभक्तेरुदात्तत्वम् । ओषधीषु । ओषः पाक आसु धीयते इति ओषधयः । ‘ कर्मण्यधिकरणे च ’ इति किप्रत्ययः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । तच्च घञन्तमाद्युदात्तम् । ‘ ओषधेश्च विभक्तावप्रथमायाम् ’ इति दीर्घः ॥

यदिन्द्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १२ ॥

यत् । इन्द्राग्नी इति । उत्ऽइता । सूर्यस्य । मध्ये । दिवः । स्वधया । मादयेथे इति ।
अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १२ ॥

हे इन्द्राग्नी उदिता उदितस्योदयं प्राप्तस्य सूर्यस्य आदित्यस्य संबन्धिनः दिवः द्योतमानस्य अन्तरिक्षस्य मध्ये मध्यभागे स्वधया आत्मीयेन तेजसा हविर्लक्षणेनान्नेन वा यत् यस्मात् कारणात् मादयेथे तृप्तौ भवथः तस्मात् कारणात् अतः सर्वस्मादन्तरिक्षभागात् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम् । आगमनानन्तरमभिषुतं सोमं पिबतम् ॥ उदिता । ‘ सुपां सुलुक्० ’ इति षष्ठ्या डादेशः । दिवः । ‘ ऊडिदम्० ’ इति विभक्तेरुदात्तत्वम् । मादयेथे । ‘ मद तृप्तियोगे ’ । चुरादिरात्मनेपदी ॥

एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १३ ॥

एव । इन्द्राग्नी इति । पपिऽवांसा । सुतस्य । विश्वा । अस्मभ्यम् । सम् । जयतम् । धनानि ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ १३ ॥

हे इन्द्राग्नी सुतस्य अभिषुतं सोमम् एव एवं पपिवांसा पीतवन्तौ युवाम् अस्मभ्यं विश्वा सर्वाणि धनानि सं जयतं प्रयच्छतम् । यदनेन सूक्तेन प्रार्थितं तत् मित्रादयः ममहन्तां पूजयन्तु[1] ॥ पपिवांसा । ‘ पा पाने ’ । लिटः क्वसुः । ‘ वस्वेकाजाद्घसाम् ’ इति इडागमः ॥ ॥ २७ ॥

‘ वि हि ’ इत्यष्टर्चं चतुर्थं सूक्तम् । अनुक्रान्तं च– ‘ वि ह्यष्टौ ’ इति । ऋष्याद्याः पूर्ववत् । सूक्तविनियोगो[2] लैङ्गिकः[2] ॥

१. क्ष-ट-ठ–रक्षन्तु । २. क्ष-ट-ठ–विनियोगो लैङ्गिकः ।

वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।
नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥ १ ॥

वि । हि । अख्यम् । मनसा । वस्यः । इच्छन् । इन्द्राग्नी इति । ज्ञासः । उत । वा । सऽजातान् ।
न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यम् । सः ।
वाम् । धियम् । वाजऽयन्तीम् । अतक्षम् ॥ १ ॥

हे ᵛइन्द्राग्नी ᵛवस्यः प्रशस्तं धनम् ᵛइच्छन् कामयमानोऽहं ᵛज्ञासः ज्ञातीन् ᵛउत ᵛवा अपि वा ᵛसजातान् । समानजन्मानो ज्ञातिव्यतिरिक्ता बान्धवाः । तांश्च ᵛमनसा बुद्ध्या ᵛवि ᵛह्यख्यं युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम् । ते हि धनस्य दातारो भवन्ति । अपि च ᵛयुवत् युवाभ्याम् ᵛअन्या अन्येन केनचित् ᵛमह्यं दत्ता ᵛप्रमतिः प्रकृष्टा बुद्धिः ᵛन ᵛअस्ति । मदीया यैषा प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता । ᵛसः तादृश्या बुद्ध्या युक्तोऽहं ᵛवां युवयोः संबन्धिनीं ᵛवाजयन्तीम् अन्नमस्मभ्यमिच्छन्तीं ᵛधियं ध्यानेन निष्पन्नां स्तुतिम् ᵛअतक्षम् अकार्षम् ॥ अख्यम् । लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । वस्यः । वसुशब्दात् ईयसुन् । 'टेः' इति टिलोपः । छान्दस ईकारलोपः । ज्ञासः । सुखदुःखादिकं साम्येन जानन्तीति ज्ञासो ज्ञातयः । 'ज्ञा अवबोधने' । औणादिकोऽसुन् । व्यत्ययेन विभक्तेरुदात्तत्वम् । युवत् । 'सुपां सुलुक्' इति विभक्तेर्लुक् । द्व्यर्थाभिधायकत्वात् 'युवावौ द्विवचने' (पा. सू. ७. २. ९२) इति युष्मदो मपर्यन्तस्य युवादेशः ॥

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥ २ ॥

अश्रवम् । हि । भूरिदावत्ऽतरा । वाम् । विऽजामातुः । उत । वा । घ । स्यालात् ।
अथ । सोमस्य । प्रऽयती । युवऽभ्याम् । इन्द्राग्नी इति । स्तोमम् । जनयामि । नव्यम् ॥ २ ॥

हे ᵛइन्द्राग्नी ᵛवां युवां ᵛभूरिदावत्तरा अतिशयेन बहुधनस्य दाताराविति ᵛअश्रवं ᵛहि अश्रौषं खलु । कस्मात् पुरुषात् । ᵛविजामातुः । श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । ᵛउत ᵛवा अपि च ᵛस्यालात् । स्यं शूर्पम् । तस्मात् लाजानावपति विवाहकाले इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहु धनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी ।ᵛघ इति पादपूरणः[१]। तथा च सति ᵛअथ अनन्तरं हे ᵛइन्द्राग्नी युवाभ्यां ᵛसोमस्य ᵛप्रयती अभिषुतस्य सोमस्य प्रदानेन सह ᵛनव्यं नवतरं प्रत्यग्रं ᵛस्तोमं स्तोत्रं ᵛजनयामि निष्पादयामि । अत्र निरुक्तम्—'अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ता-जामातुः । विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा

१. क्ष-न–पदपूरणः; स-पदपूरणार्थः ।

अपत्यं तन्निर्माता । उत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः । स्याल्लाजानावपतीति वा । लाजा लाजतेः स्यं शूर्पं स्यतेः । शूर्पमशनपवनं शृणातेः शम्नातेर्वा । अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम् ' ( निरु. ६. ९ ) इति ॥ अश्रवम् । ' श्रु श्रवणे ' । लङि उत्तमपुरुषैकवचने ' बहुलं छन्दसि ' इति विकरणस्य लुक् । भूरिदावत्तरा । ' डुदाञ् दाने[1] ' । ' आतो मनिन्° इति वनिप् । अतिशयेन भूरिदावा भूरिदावत्तरः । ' भूरिदाव्नस्तुड्वक्तव्यः ' ( पा. सू. ८. २. १७. २ ) इति तरपः तुट् । पदसंज्ञायां नलोपः । ' सुपां सुलुक्° ' इति विभक्तेराकारः । घ । ' ऋचि तुनुघ° ' इत्यादिना संहितायां दीर्घत्वम् । अथ । ' निपातस्य च ' इति[2] । यती । ' यम उपरमे ' । क्तिनि ' अनुदात्तोपदेश° ' इत्यादिनानुनासिकलोपः । ' तादौ च° ' इति गतेः प्रकृतिस्वरत्वम् । युवभ्याम् । ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' इति ' युष्मदस्मदोरनादेशे ' इत्यात्वाभावः[3] । ' शेषे लोपः ' इति दकारलोपः ॥

मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः ।
इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ॥ ३ ॥

मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितॄणाम् । शक्तीः । अनुऽयच्छमानाः ।
इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति । ता । हि । अद्री इति । धिषणायाः । उपऽस्थे ॥३॥

रश्मीन् । रश्मिशब्दो रज्जुवाची । यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति एवमविच्छिन्नान् पुत्रपौत्रादीन् मा च्छेद्म मा विच्छिन्नान् कुर्मेति बुद्ध्या नाधमानाः इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन्[4] याचमानाः । तदनन्तरं पितॄणां शक्तीः शक्त्युत्पादकान् वीर्योत्पादकन् तान्[5] पुत्रादीन् अनुयच्छमानाः अनुक्रमेण नियतान् कुर्वन्तः वृषणः सेक्तारः पुत्रोत्पादनसमर्थाः सपत्नीका इत्यर्थः । एवंभूता यजमानाः इन्द्राग्निभ्यां कं सुखं यथा भवति तथा मदन्ति स्तुवन्ति । हि यस्मात् अद्री शत्रूनादृणन्तौ हिंसन्तौ[6] विदारयन्तौ ताविन्द्राग्नी धिषणायाः स्तुत्याः उपस्थे उपस्थाने समीपे भवतः । तस्मात् तत्सांनिध्याय स्तुवन्तीति भावः । यद्वा । निपातानामनेकार्थत्वात् हिशब्दो यदेत्यर्थः[7] । यदा ताविन्द्राग्नी उद्दिश्य अद्री अभिषवसाधनभूता ग्रावाणो धिषणाया उपस्थे । धिषणा अधिषवणचर्म । तस्योपरिष्टादिन्द्राग्न्यर्थं सोममभिषुण्वन्ति । तदातदा[8] यजमानाः स्तुवन्तीति योजनीयम्[9] ॥ छेद्म । ' छिदिर् द्वैधीकरणे ' । लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' छन्दस्युभयथा ' इत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः । ' न माङ्योगे ' इत्यडभावः । रश्मीन् । ' दीर्घादटि समानपादे ' इति संहितायां नकारस्य रुत्वम् । ' अत्रानुनासिकः पूर्वस्य तु वा ' इति ईकारः सानुनासिकः । नाधमानाः । ' नाधृ याच्ञायाम् ' । पितॄणाम् । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् । मदन्ति । ' मदि स्तुतौ ' । आगमानुशासनस्यानित्यत्वात् नुमभावः । व्यत्ययेन परस्मैपदम् ॥

---

१. क्ष-न-स—भूरि ददाति इति भूरिदावा । २. क्ष—इति दीर्घत्वम्; स—इति संहितायां दीर्घः । ३. स—इत्यात्वाभावे । ४. क्ष-ट-ठ—पुत्रपौत्रादीन् । ५. ट-ठ—वा । ६. स—हिंसितारौ । ७. क्ष—यदेत्यर्थे वर्तते; स—यदेत्यर्थे । ८. क्ष-स—तदा । ९. क्ष—योज्यम् ।

युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति ।
तावश्विना भद्रहस्ता सुपाणी आ धावतं मधुना पृङ्क्तमप्सु ॥ ४ ॥

युवाभ्याम् । देवी । धिषणा । मदाय । इन्द्राग्नी इति । सोमम् । उशती । सुनोति ।
तौ । अश्विना । भद्रऽहस्ता । सुपाणी इति सुऽपाणी ।
आ । धावतम् । मधुना । पृङ्क्तम् । अप्ऽसु ॥ ४ ॥

हे ᵛइन्द्राग्नी ᵛयुवाभ्यां ᵛमदाय युवयोर्हर्षाय ᵛदेवी द्योतमाना ᵛउशती युवां कामयमाना ᵛधिषणा मन्त्ररूपा वाक् ᵛसोमम् अभिषुणोति। यद्वा। धिषणा अधिषवणचर्म। द्योतमानं तद्युवयोर्मदं कामयमानं सत् सोममभिषुणोति। ग्रावभिः तस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम्। ᵛअश्विना अश्ववन्तौ ᵛभद्रहस्ता शोभनदोर्दण्डौ[1] ᵛसुपाणी। मणिबन्धादूर्ध्वभागः पाणिः। शोभनपाणी एवंभूतौ हे इन्द्राग्नी ᵛतौ युवाम् ᵛआ ᵛधावतं शीघ्रमागच्छतम्। आगत्य च ᵛअप्सु उदकेषु वर्तमानेन ᵛमधुना माधुर्योपेतेन सारांशेन ᵛपृङ्क्तम् अस्मदीयं सोमं संयोजयतम्। यद्वा। अप्सु वसतीवरीषु मधुना माधुर्यं संयोजयतम्। विभक्ति व्यत्ययः॥ युवाभ्याम्। षष्ठ्यर्थे चतुर्थी[2]। उशती। 'वश कान्तौ'। अदादित्वात् शपो लुक्। ग्रहिज्यादिना संप्रसारणम्। 'उगितश्च' इति ङीप्। 'शतुरनुमः॰' इति नद्या उदात्तत्वम्। पृङ्क्तम्। 'पृची संपर्के'। रौधादिकः। लोटि थसस्तम्। 'श्नसोरल्लोपः'। अनुस्वारपरसवर्णौ[3]। न च 'अचः परस्मिन्॰' इत्यल्लोपस्य स्थानिवत्त्वं, 'न पदान्त॰' इत्यादिना निषेधात्॥

युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।
तावासद्या बर्हिषि यज्ञे अस्मिन्प्र चर्षणी मादयेथां सुतस्य ॥ ५ ॥

युवाम् । इन्द्राग्नी इति । वसुनः । विऽभागे । तवःऽतमा । शुश्रव । वृत्रऽहत्ये ।
तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् । प्र । चर्षणी इति । मादयेथाम् । सुतस्य ॥५॥

हे ᵛइन्द्राग्नी ᵛवसुनः धनस्य ᵛविभागे स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ ᵛयुवां ᵛवृत्रहत्ये वृत्रस्यासुरस्य हनने ᵛतवस्तमा अतिशयेन बलिनौ प्रवृद्धतमौ वा ᵛशुश्रव अश्रौषम्। हे ᵛचर्षणी सर्वस्य द्रष्टाराविन्द्राग्नी ᵛतौ युवामस्मदीये ᵛअस्मिन् ᵛयज्ञे ᵛबर्हिषि वेद्यामास्तीर्णे दर्भे ᵛआसद्य उपविश्य ᵛसुतस्य अभिषुतस्य सोमस्य पानेन ᵛप्र ᵛमादयेथां प्रकर्षेण तृप्तौ भवतम्॥ विभागे। 'भज सेवायाम्'। भावे घञ्। 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। थाथादिनोत्तरपदान्तोदात्तत्वम्। तवस्तमा। तव इति बलनाम। लुप्तमत्वर्थीयादेतस्मादातिशायनिकस्तमप्। यद्वा। तवतिर्वृद्ध्यर्थः सौत्रो धातुः। तस्मादौणादिकः कर्तरि असिप्रत्ययः। 'सुपां सुलुक्॰' इति विभक्तेः पूर्वसवर्णदीर्घत्वम्। वृत्रहत्ये। 'हनस्त च' इति हन्तेर्भावे क्यप्; तत्संनियोगेन तकारान्तादेशश्च। कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ॥ २८ ॥

---

१. क्ष-ट-ठ–शोभनदोर्द्वन्द्वौ। २. क्ष-ट-ठ-स–चतुर्थी वक्तव्येति चतुर्थी। ३. क्ष-ट-ठ–अनुनासिकपरसवर्णौ।

ऐन्द्राग्नस्य पशोर्हविषः ‘ प्र चर्षणिभ्यः ’ इत्येषा याज्या । ‘ प्रदानानाम् ’ इति खण्डे सूत्रितं– ‘ प्र चर्षणिभ्यः पृतनाहवेष्वा देवो यातु सविता सुरत्नः ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

प्र च॒र्ष॒णिभ्यः॑ पृतना॒हवे॑षु॒ प्र पृ॑थि॒व्या रि॑रिचाथे दि॒वश्च॑ ।

प्र सिन्धु॑भ्यः॒ प्र गि॒रिभ्यो॑ महि॒त्वा प्रेन्द्रा॑ग्नी॒ विश्वा॒ भुव॒नात्य॒न्या ॥ ६ ॥

प्र । च॒र्ष॒णिऽभ्यः॑ । पृ॒त॒ना॒ऽह॒वे॑षु । प्र । पृ॒थि॒व्याः । रि॒रि॒चा॒थे॒ इति॑ । दि॒वः । च॒ ।

प्र । सिन्धु॑ऽभ्यः । प्र । गि॒रिऽभ्यः॑ । म॒हि॒ऽत्वा । प्र ।

इन्द्रा॑ग्नी॒ इति॑ । विश्वा॑ । भुव॑ना । अति॑ । अ॒न्या ॥ ६ ॥

पृतनाहवेषु पृतनासु संग्रामेषु रक्षणार्थमाह्वानेषु सत्सु हे इन्द्राग्नी आगतवन्तौ युवां चर्षणिभ्यः सर्वेभ्योऽपि मनुष्येभ्यः महित्वा महत्त्वेन प्र रिरिचाथे अतिरिच्येथे सर्वाधिकौ भवथ इत्यर्थः । अत्रोपसर्गवशाद्धातुः स्वाभिधेयविपरीतमर्थमाचष्टे यथा प्रस्मरणं प्रस्थानमिति । तथा पृथिव्याः सर्वस्या भूमेश्च प्र रिरिचाथे । एवं द्युप्रभृतिभ्योऽपि । सिन्धवः स्यन्दनशीला आपः । गिरयः पर्वताः । अपि च हे इन्द्राग्नी विश्वा भुवना सर्वाणि भूतजातानि अन्या उक्तव्यतिरिक्तानि यानि[1] सन्ति तान्यतीत्य[2] प्र रिरिचाथे अधिकौ भवथः ॥ पृतनाहवेषु । पृतनासु हवः पृतनाहवः[3] । ह्वेञः ‘ भावेऽनुपसर्गस्य ’ इति अप् संप्रसारणं च । व्यत्ययेन थाथादिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम् । रिरिचाथे । ‘ रिचिर् विरेचने ’ । ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमाने लिट् । यद्वा । लट्येव ‘ बहुलं छन्दसि ’ इति विकरणस्य श्लुः । महित्वा । ‘ मह पूजायाम् ’ । औणादिक इत्वप्रत्ययः । तस्य भावो महित्वम् । ‘ सुपां सुलुक्° ’ इति तृतीयाया डादेशः ॥

पूर्वोक्त एव पशौ ‘ आ भरतम् ’ इत्येषा पुरोडाशस्यानुवाक्या । सूत्रितं च–‘ आ भरतं शिक्षतं वज्रबाहू उभा वामिन्द्राग्नी आहुवध्यै ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

आ भ॑रतं॒ शिक्ष॑तं वज्रबाहू अ॒स्माँ इ॑न्द्राग्नी अवतं॒ शची॑भिः ।

इ॒मे नु ते र॒श्मय॒ः सूर्य॑स्य॒ येभिः॑ सपि॒त्वं पि॒तरो॑ न॒ आस॑न् ॥ ७ ॥

आ । भ॒र॒त॒म् । शिक्ष॑तम् । व॒ज्र॒बा॒हू॒ इति॑ वज्र॒ऽबा॒हू॒ ।

अ॒स्मान् । इ॒न्द्रा॒ग्नी॒ इति॑ । अ॒व॒त॒म् । शची॑भिः ।

इ॒मे । नु । ते । र॒श्मयः॑ । सूर्य॑स्य । येभिः॑ । स॒ऽपि॒त्वम् । पि॒तरः॑ । नः॒ । आस॑न् ॥ ७ ॥

हे वज्रबाहू वज्रहस्तौ इन्द्राग्नी आ भरतम् अस्मदर्थं धनमाहरतम् । आहृत्य च शिक्षतं अस्मभ्यं दत्तम् । शिक्षतिर्दानकर्मा । अपि च अस्मान् अनुष्ठातॄन् शचीभिः । कर्मनामैतत् । आत्मीयैः

---

१. स–‘ यानि ’ नास्ति । २. स–तान्यपि । ३. स–‘ पृतनाहवः ’ नास्ति ।

कर्मभिः ᵛअवतं रक्षतम्। किंच सूर्यात्मन इन्द्रस्य ᵛयेभिः रश्मिभिः यैः अर्चिभिः ᵛनः अस्माकं ᵛपितरः पूर्वपुरुषाः ᵛसपित्वं सहप्राप्तव्यं स्थानम् ᵛआसन् ब्रह्मलोकमगच्छन्। अर्चिरादिमार्गेण हि ब्रह्मलोकमुपासका गच्छन्ति। तथा च श्रूयते–'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' (छा. उ. ५. १०. १) इति। यद्वा। येभी रश्मिभिः सपित्वं समवेतत्वमध्यगच्छन्[1]। ᵛते ᵛरश्मयः ᵛइमे ᵛनु इदानीमस्माभिर्दृश्यमाना एत एव खलु। सूर्यात्मन इन्द्रस्य ये रश्मयस्त एवाग्नेरपि। तथा च श्रूयते—'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' (तै. ब्रा. २. १. २. ९) इति। तस्मात सूर्यस्य रश्मीनां स्तवनेनेन्द्राग्न्योरुभयोरपि स्तुतिः सिद्धा॥ भरतम्। 'हृग्रहोर्भः०' इति भत्वम्। शिक्षतम्। 'शिक्ष विद्योपादाने'। अनुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्। धातुस्वरः शिष्यते। तिङः परत्वान्निघाताभावः। सपित्वम्। 'आप्लृ व्याप्तौ'। अस्मात् सहशब्दोपपदात् 'कृत्यार्थे तवैकेन्०' इति त्वन्प्रत्ययः। पृषोदरादित्वात् धातोः पिभावः। यद्वा। 'षप समवाये'। 'इन्सर्वधातुभ्यः' इति इन्। सपेर्भावः सपित्वम्। आसन्। 'अस गतिदीप्त्यादानेषु'। लङि आडागम उदात्तः। 'यद्वृत्तान्नित्यम्' इति निघाताभावः[2]॥

पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ८॥

पुरम्ऽदरा। शिक्षतम्। वज्रऽहस्ता। अस्मान्। इन्द्राग्नी इति। अवतम्। भरेषु।
तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥८॥

हे ᵛवज्रहस्ता हस्तेन[3] गृहीतवज्रौ ᵛपुरंदरा असुरपुराणां दारयितारौ ᵛइन्द्राग्नी ᵛशिक्षतम् अस्मदपेक्षितं धनं प्रयच्छतम्। अपि च ᵛभरेषु संग्रामेषु ᵛअस्मान् ᵛअवतं रक्षतम्। यदनेन सूक्तेन प्रार्थितं ᵛतत्[4] अस्मदीयं मित्रादयः ᵛममहन्तां पूजयन्ताम्[4]॥ पुरंदरा। 'पूःसर्वयोर्दारिसहोः' (पा. सू. ३. २. ४१) इति खच्। 'वाचंयमपुरंदरौ च' (पा. सू. ६. ३. ६९) इति निपातनात् अम्। 'सुपां सुलुक्०' इति विभक्तेः आकारः॥ ॥ २९॥

'ततं मे' इति नवर्चं पञ्चमं सूक्तं कुत्सस्यार्षं ऋभुदेवताकम्। पञ्चमीनवम्यौ त्रिष्टुभौ। शिष्टाः सप्त जगत्यः। तथा चानुक्रान्तं–'ततं नवार्भवं तु पञ्चम्यन्त्ये त्रिष्टुभौ' इति॥ अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदमार्भवं निविद्धानम्। सूत्रितं च 'तृतीयस्य' इति खण्डे–'ततं मे अप इति वैश्वदेवम्' (आश्व. श्रौ. ७. ७) इति॥

ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते।
अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः॥ १॥

ततम्। मे। अपः। तत्। ऊँ इति। तायते। पुनरिति। स्वादिष्ठा। धीतिः। उचथाय। शस्यते।
अयम्। समुद्रः। इह। विश्वऽदेव्यः। स्वाहाऽकृतस्य। सम्। ऊँ इति। तृप्णुत। ऋभवः॥१॥

---

१. क्ष-समवेतत्वमगच्छन्; स–समवे (वै) तृत्वमगच्छन् २. क्ष–निघातप्रतिषेधः। ३. क्ष-ट–हस्ते। ४. क्ष-ट–तन्मित्रादयो रक्षन्तु।

हे ऋभवः मे मया अपः अग्निष्टोमादिरूपं कर्म ततं विस्तारितं बहुशः पूर्वमनुष्ठितम् । तदु तदेव पुनः तायते विस्तार्यते अनुष्ठीयते इत्यर्थः । तत्र स्वादिष्ठा स्वादुतमा अतिशयेन प्रीतिकरी धीतिः स्तुतिश्च उचथाय स्तुत्याय[1] शस्यते पठ्यते । अपि च इह अस्मिन्यागे समुद्रः समुन्दनशीलः अयं सोमरसः विश्वदेव्यः सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा संपादितः । तस्य स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन समु तृप्णुत सम्यगेव तृप्ता भवत ॥ ततम् । 'तनु विस्तारे'। निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः। 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः । अपः । 'आपॢ व्याप्तौ' । 'आपः कर्माख्यायां ह्रस्वो नुट्च वा' इति असुन् धातोर्ह्रस्वश्च । तायते । 'तनोतेर्यकि' ( पा. सू. ६. ४. ४४ ) इति आत्वम् । स्वादिष्ठा । स्वादुशब्दादातिशायनिक इष्ठन् । 'टेः' इति टिलोपः । उचथाय । 'वच परिभाषणे'। औणादिकः अथक्प्रत्ययः। 'वचिस्वपि°' इत्यादिना संप्रसारणम्। समुद्रः। 'उन्दी क्लेदने'। 'स्फायितञ्चि°' इत्यादिना रक्[2] । 'अनिदिताम्°' इति नलोपः । विश्वदेव्यः । देवार्हो भागो देव्यः । 'छन्दसि च' इति यप्रत्ययः । विश्वे सर्वे देव्या यस्मिन्सोमे । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेनासंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । स्वाहाकृतस्य । स्वाहाशब्दस्य ऊर्यादित्वेन गतित्वात् ( पा. सू. १. ४. ६१ ) 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । तृप्णुत । 'तृप प्रीणने'। 'स्वादिभ्यः श्नुः'। ऋभव इत्यनेन संहितायाम् 'ऋत्यकः' इति प्रकृतिभावः ॥

आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम के चिदापयः ।
सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम् ॥ २ ॥

आऽभोगयम् । प्र । यत् । इच्छन्तः । ऐतन । अपाकाः । प्राञ्चः । मम । के । चित् । आपयः ।
सौधन्वनासः । चरितस्य । भूमना । अगच्छत । सवितुः । दाशुषः । गृहम् ॥ २ ॥

हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीनाः मम आपयः प्रापयितारो मदीया ज्ञातयः के चित् एवंभूता ये केचन यूयम् आभोगयम् उपभोग्यं सोमम् इच्छन्तः यत् यदा प्र ऐतन तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः। तदुक्तं यास्केन–'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' ( निरु. ११. १६ ) इति । कुत्सोऽप्याङ्गिरसः अतस्तेन मदीया ज्ञातय इत्युक्तम् । हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य संबन्धि यज्ञगृहम् अगच्छत तपसा लब्धसोमाः सन्तः कृतपानाः[3] यूयं गतवन्तः । यद्वा । दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्यः ऋभुभ्यः सोमपानं दत्तवतः सवितुः गृहं निवासस्थानं तृतीयसवनाख्यमगच्छत प्राप्ताः । एतत्सर्वम् 'आर्भवं शंसति' ( ऐ. ब्रा. ३. ३० ) इत्यादौ विस्पष्टमाम्नातम् ॥ आभोगयम् । आ समन्ताद्भोग आभोगः । तदर्हः आभोगयः । 'छन्दसि च' इति यः[4] । 'यस्य°' इति लोपाभावश्छान्दसः । व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वा । आङ्पूर्वाद्भुजेरौणादिकः कर्मणि इप्रत्ययः[5] कुत्वं च । अमि व्यत्ययेन गुणः । ऐतन । 'इण् गतौ'। लङि मध्यम-

---

क्ष-स–१. स्तुत्याय युष्मद्गुणाय । २. क्ष–रक्प्रत्ययः । ३. स–तत्पानाय । ४. क्ष–यप्रत्ययः; ट–यः प्रत्ययः । ५. क्ष-ट–अयप्रत्ययः; स–घप्रत्ययः ।

बहुवचनस्य थस्य तादेशः । 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । आडागमो वृद्धिश्च । आपयः । आप्नोतेरौणादिक इप्रत्ययः । भूमना । बहुशब्दात् पृथ्वादिलक्षण इमनिच् । 'बहोर्लोपो भू च बहोः' इति इकारलोपो बहोर्भूभावश्च । संज्ञापूर्वकस्य विधेरनित्यत्वात् अलोपाभावः[1] ॥

तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑वद॒गोह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।

त्यं चि॑च्चम॒सम॑सु॑रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणु॒ता चतु॑र्वयम् ॥ ३ ॥

तत् । स॒वि॒ता । वः॒ । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् । यत् । श्र॒वय॑न्तः । ऐत॑न ।

त्यम् । चि॒त् । च॒म॒सम् । असु॑रस्य । भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त । चतुः॑ऽवयम् ॥३॥

हे ऋभवः ᵛतत् तदानीं ᵛसविता सर्वस्य प्रेरको देवः ᵛवः युष्माकम् ᵛअमृतत्वं देवत्वम् ᵛआसुवत् आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः । ᵛयत् यदा यूयम् ᵛअगोह्यं गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं ᵛश्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ᵛऐतन आगच्छत । तदानीमिति पूर्वेणान्वयः । यस्मात् यूयं देवैराज्ञापिताः सन्तः ᵛअसुरस्य त्वष्टुः संबन्धिनम् । तेन निर्मितमित्यर्थः । ᵛभक्षणं सोमपानसाधनं ᵛत्यं तं ᵛचमसम् ᵛएकं ᵛचित् असहायमेव ᵛसन्तं ᵛचतुर्वयं चतुर्व्यूहम् ᵛअकृणुत कृतवन्तः । सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण[2] ऋभवः कृतवन्तः[2] इत्यर्थः ॥ असुवत् । 'षू प्रेरणे' । तौदादिकः । श्रवयन्तः । 'श्रु श्रवणे' । छान्दसो वृद्ध्यभावः । ऐतन । लङि मध्यमबहुवचनस्य[3] तादेशे[4] 'तप्तनप्तनथनाश्च' इति तनबादेशः । भक्षणम् । करणे ल्युट् । अकृणुत । 'कृवि हिंसाकरणयोश्च' । लङि मध्यमबहुवचने 'धिन्विकृण्व्योर च' इति उप्रत्ययः । चतुर्वयम् । वया अवयवाः । चत्वारोऽवयवा यस्य स तथोक्तः ॥

वि॒ष्ट्वी शमी॑ तरणि॒त्वेन॑ वा॒घतो॒ मर्ता॑सः॒ सन्तो॑ अमृत॒त्वमा॑नशुः ।

सौ॒ध॒न्व॒ना ऋ॒भवः॒ सूर॑चक्षसः संवत्स॒रे सम॑पृच्यन्त धी॒तिभिः॑ ॥ ४ ॥

वि॒ष्ट्वी । शमी॑ । त॒र॒णि॒ऽत्वेन॑ । वा॒घतः॑ । मर्ता॑सः । सन्तः॑ । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः॒ ।

सौध॑न्वनाः । ऋ॒भवः॑ । सूर॑ऽचक्षसः । सं॒व॒त्स॒रे । सम् । अ॒पृ॒च्य॒न्त॒ । धी॒ति॒ऽभिः॑ ॥ ४ ॥

ᵛवाघतः । ऋत्विङ्नामैतत् अत्र च सामर्थ्यात् तद्वन्तो लक्ष्यन्ते । ऋत्विग्भिरुपेता ऋभवः ᵛशमी । कर्मनामैतत् । यागदानादीनि कर्माणि अन्यान्यपि 'एकं चमसं चतुरः कृणोतन' (ऋ. सं. १.१६१.२) इत्यादिना देवैरुक्तानि कर्माणि ᵛतरणित्वेन । तरणिरिति क्षिप्रनाम । क्षिप्रत्वेन शैघ्र्येण ᵛविष्ट्वी । यद्यप्येतत्कर्मनाम तथाप्यत्र क्रियापरं व्याप्य कृत्वेत्यर्थः । एवं कर्माणि कृत्वा ᵛमर्तासः मनुष्या अपि ᵛसन्तः ᵛअमृतत्वं देवत्वम् ᵛआनशुः आनशिरे । कृतैः कर्मभिर्लेभिरे । देवत्वं प्राप्य चᵛ सौधन्वनाः सुधन्वनः पुत्राः ᵛसूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते ᵛऋभवः ᵛसंवत्सरे संवत्सरा-

१. क्ष-न-स–अल्लोपाभावः । २. क्ष–होतृचमसादिरूपेण चतुष्टयं कृतवन्तः । ३. क्ष–मध्यमपुरुषबहुवचनस्य । ४. क्ष–तादेशः तस्य; स–तादेशस्य ।

वयवभूते वसन्तादिकालेऽनुष्ठेयैः धीतिभिः अग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः । अत्र निरुक्तं –' कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः ' ( निरु. ११. १६ ) इति ॥ विष्ट्वी । ' विष्लृ व्याप्तौ '। ' स्नात्व्यादयश्च ' ( पा. सू. ७. १. ४९ ) इति क्त्वाप्रत्ययस्य ईकारान्तादेशः । शमी । ' सुपां सुलुक्° ' इति शसो लुक् । आनशुः । ' अशू व्याप्तौ ' । व्यत्ययेन परस्मैपदम् । ' अश्नोतेश्च ' इति अभ्यासादुत्तरस्य नुडागमः । अपृच्यन्त । ' पृची संपर्के ' । कर्मणि लङ् ॥

क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम् ।
उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ॥ ५ ॥

क्षेत्रम्ऽइव । वि । ममुः । तेजनेन । एकम् । पात्रम् । ऋभवः । जेहमानम् ।
उपऽस्तुताः । उपऽमम् । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमानाः ॥ ५ ॥

उपस्तुताः समीपस्थैर्ऋषिभिः स्तुताः ऋभवः जेहमानं होमक्रियां प्रति प्रयतमानम् एकम् असहायं पात्रं पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुं वि ममुः विशेषेण मानं कृतवन्तः । किमिच्छन्तः । उपमं सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं नाधमानाः याचमानाः । एतदेव विवृणोति । अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवः हविर्लक्षणमन्नम् इच्छमानाः इच्छन्तः । देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसानकार्षुरित्यर्थः ॥ ममुः । ' माङ् माने शब्दे च ' । व्यत्ययेन परस्मैपदम् । तेजनेन । ' अणोऽप्रगृह्यस्यानुनासिकः ' ( पा. सू. ८. ४. ५७ ) इति अनवसाने व्यत्ययेन अकारस्य आनुनासिक्यम् । ईषाअक्षादित्वात् प्रकृतिभावः । जेहमानम् । ' वेहृ जेहृ बाहृ प्रयत्ने ' । भौवादिकः । अनुदात्तेत्त्वात् आत्मनेपदम् । उपस्तुताः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । उपमम् । ' माङ् माने ' । ' आतश्चोपसर्गे ' इति कप्रत्ययः । इच्छमानाः । व्यत्ययेन आत्मनेपदम् ॥ ॥ ३० ॥

आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना ।
तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः ॥ ६ ॥

आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् । जुहवाम । विद्मना ।
तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥६॥

अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यः नृभ्यः यज्ञस्य नेतृभ्य ऋभुभ्यः । ऋभवो हि यज्ञस्य नेतारः । तेन हि ते देवत्वं प्राप्ताः । यद्वा । अन्तरिक्षस्य लोकस्य नेतृभ्यः । मध्यमे[1] स्थाने[1] ह्येते पठ्यन्ते । तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आ

१. क्ष–अन्तरिक्षस्थाने; स–मध्यमस्थाने ।

ᵛजुहवाम। मर्यादायामाकारः। यथाशास्त्रं प्रयच्छाम। एवमेव ᵛमनीषां स्तुतिं ᵛविद्मना वेदनेन ज्ञानेन कुर्मः इति शेषः। अपि च ᵛये ᵛऋभवः ᵛपितुः सर्वस्य जगतः पालकस्य ᵛअस्य सूर्यस्य ᵛतरणित्वा तरणित्वानि तरणकौशलानि ᵛसश्चिरे सूर्यरश्मिभूताः[1] सन्तः प्रापुः। तदुक्तम्–' आदित्यरश्मयोऽप्यृभव उच्यन्ते ' इति। ते ऋभवः ᵛदिवो ᵛरजः। रजःशब्दो लोकवाची। द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबन्धिनं ᵛवाजं सोमलक्षणमन्नम् ᵛअरुहन् यागदानादिभिः कर्मभिरन्यैश्च देवोक्तैः[2] चमसचतुष्टयकरणादिकैः प्राप्नुवन्॥ स्रुचेव[3]। ' सावेकाचः० ' इति विभक्तेरुदात्तत्वम्। जुहवाम। ' हु दानादनयोः[4] '। लोटि ' आडुत्तमस्य पिच्च ' इति आडागमः। विद्मना। ' विद ज्ञाने '। औणादिको मनिः[5]। ' न संयोगाद्वमन्तात् ' इति अल्लोपाभावः। तरणित्वा। ' तॄ प्लवनतरणयोः '। ' अर्तिसृधृधम्यश्यवितॄभ्योऽनिः ' इति कर्तरि अनिप्रत्ययः। तस्य भावस्तरणित्वम्। ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः। सश्चिरे। ' ग्लुञ्च षस्ज गतौ ' इत्यत्र सश्चिमप्येके पठन्ति। व्यत्ययेन आत्मनेपदम्। ' द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ' इति वचनात् द्विर्वचनाभावः। इरेचश्चित्त्वादन्तोदात्तत्वम्। ' यद्वृत्तान्नित्यम् ' इति निघातप्रतिषेधः। अरुहन्। ' रुह बीजजन्मनि प्रादुर्भावे च '। लुङि ' कृमृदृरुहिभ्यश्छन्दसि ' इति च्लेः अङादेशः। दिवः। ' ऊडिदम्० ' इत्यादिना विभक्तेरुदात्तत्वम्। रजः। ' रञ्ज रागे '। रजन्त्यस्मिन्निति रजो लोकः। तदुक्तं–' लोका रजांस्युच्यन्ते ' ( निरु. ४. १९ ) इति। औणादिकोऽधिकरणे असुन्। ' रजकरजनरजःसूपसंख्यानम् ' इति नलोपः। ' सुपां सुलुक्० ' इति षष्ठ्या लुक्॥

ऋ॒भुर्न॒ इन्द्रः॒ शव॑सा॒ नवी॑यानृ॒भुर्वाजे॑भि॒र्वसु॑भि॒र्वसु॑र्द॒दिः।
यु॒ष्माकं॑ देवा॒ अव॒साह॑नि प्रि॒ये॒३॒॑ऽभि ति॑ष्ठेम पृत्सु॒तीरसु॑न्वताम्॥ ७॥

ऋ॒भुः। नः॒। इन्द्रः॑। शव॑सा। नवी॑यान्। ऋ॒भुः। वाजे॑भिः। वसु॑ऽभिः। वसुः॑। द॒दिः।
यु॒ष्माक॑म्। दे॒वाः॒। अव॑सा। अह॑नि। प्रि॒ये। अ॒भि। ति॒ष्ठे॒म॒। पृ॒त्सु॒तीः। असु॑न्वताम्॥७॥

ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः। तत्र ᵛशवसा बलेन ᵛनवीयान् नवतरः प्रशस्ततरः ᵛऋभुः ᵛनः अस्माकम् ᵛइन्द्रः परमेश्वरः। अस्माकं[6] रक्षक इत्यर्थः। यद्वा। इन्द्र एव प्रसंगात् उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते। अपि च ᵛवाजेभिः वाजैरस्मभ्यं दातव्यैरन्नैः ᵛवसुभिः निवासहेतुभिर्धनैश्च ᵛऋभुः[7] ᵛवसुः अस्माकं निवासयिता अत एव ᵛददिः तेषामन्नानां धनानां च दाता भवतु। परोऽर्धर्चः प्रत्यक्षकृतः। हे ᵛदेवाः दानादिगुणयुक्ता ऋभुप्रभृतयः ᵛयुष्माकं संबन्धिना ᵛअवसा रक्षणेन युक्ते ᵛप्रिये अस्माकमनुकूले ᵛअहनि दिवसे वर्तमाना वयम् ᵛअसुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां ᵛपृत्सुतीः सेना ᵛअभि ᵛतिष्ठेम[8]॥ नवीयान्। नवशब्दात् आतिशायनिक ईयसुन्[9]। वाजेभिः। ' बहुलं छन्दसि ' इति भिस ऐसभावः। वसुः। ' वस निवासे '। अस्मात् अन्तर्भावितण्यर्थात् ' शृस्वृस्निहि० ' इत्यादिना उप्रत्ययः। ' नित् ' इत्यनुवृत्तेराद्युदात्तत्वम्। ददिः। ' डुदाञ् दाने '। ' आदृगमहन०' इति किप्रत्ययः। लिड्वद्भावात् द्विर्भावादि। 'आतो लोप इटि च' इति आकारलोपः॥

---

१. क्ष-स–सूर्यस्य रश्मिभूताः। २. स–वेदोक्तैः। ३. क्ष-न-स–स्रुचा इव। ४. क्ष–दानादानयोः। ५. क्ष-स–मनिन्। ६. क्ष-ट–' अस्माकम् ' नास्ति। ७. च-त-द-ध-फ-श-स ऋभुः। ८. क्ष-ट-स–तिष्ठेम अभिभवेम। ९. क्ष-ट-स–ईयसुन्। टेरिति टिलोपः।

निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः ।
सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ॥ ८ ॥

निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति ।
सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥ ८ ॥

पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभुं तुष्टाव । ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे ᵛऋभवः यूयं ᵛचर्मणः चर्मणा त्वचा । तृतीयार्थे षष्ठी । ᵛगां धेनुं ᵛनिः ᵛअपिंशत निःशेषेणाश्लिष्टां संयुक्तामकुरुत । तदनन्तरं ᵛमातरं तां गां ᵛपुनः ᵛवत्सेन ᵛसम् ᵛअसृजत संसृष्टामकुरुत समगमयतेति यावत् । अपि च हे ᵛसौधन्वनासः सुधन्वनः आङ्गिरसस्य पुत्राः ᵛनरः यज्ञस्य नेतारः ऋभवः ᵛस्वपस्यया शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । ᵛजिव्री जीर्णौ वृद्धौ ᵛपितरा मातापितरौ ᵛयुवाना पुनर्यौवनोपेतौ ᵛअकृणोतन यूयमकृद्वम् ॥ अपिंशत । ' पिश अवयवे ' । तौदादिकः । ' शे मुचादीनाम् ' इति नुम् । सौधन्वनासः । सुधन्वनः पुत्राः सौधन्वनाः । ' अन् ' ( पा. सू. ६. ४. १६७ ) इति प्रकृतिभावः । ' आज्जसेरसुक् ' । ' आमन्त्रितस्य च ' इत्याद्युदात्तत्वम् । स्वपस्यया । शोभनमपः स्वपः । तदिच्छा स्वपस्या । ' सुप आत्मनः क्यच् ' । ' अ प्रत्ययात् ' इति भावे अकारप्रत्ययः । जिव्री । ' जॄष् वयोहानौ ' । ' जॄशस्तॄजागृभ्यः क्विन् ' ( उ. सू. ४. ४९४ ) । ' ॠत इद्धातोः ' इति इत्वम् । रेफवकारयोः स्थानविपर्ययः । बहुलवचनात् ' हलि च ' इति दीर्घाभावः । नित्त्वादाद्युदात्तत्वम् । युवाना । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । पितरा । पिता च माता च पितरौ । ' पिता मात्रा ' ( पा. सू. १. २. ७० ) इति पिता शिष्यते । पूर्ववत् विभक्तेः आकारः । अकृणोतन । ' कृवि हिंसाकरणयोश्च ' । इदित्त्वात् नुम् । ' धिन्विकृण्व्योर च ' इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः । अतो लोपे सति तस्य स्थानिवद्भावात् लघूपधगुणाभावः । लङ्मध्यमबहुवचनस्य तशब्दस्य ' तप्तनप्तनथनाश्च ' इति तनबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ॥

वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥

वाजेभिः । नः । वाजऽसातौ । अविड्ढि । ऋभुऽमान् । इन्द्र । चित्रम् । आ । दर्षि । राधः ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९॥

हे ᵛइन्द्र ᵛऋभुमान् । ऋभुर्विभ्वा वाज इति त्रयोऽपि ऋभुशब्देनोपचारादत्रोच्यन्ते । तैर्युक्तस्त्वं ᵛवाजसातौ वाजस्यान्नस्य संभजने निमित्तभूते सति ᵛवाजेभिः अन्नैः ᵛअविड्ढि अस्मान् व्याप्नुहि । यद्वा । वाजसातिरिति संग्रामनाम । वाजसातौ[1] संग्रामे वाजेभिर्वेजनयुक्तैरश्वैरविड्ढि अस्मान् रक्ष । अपि च ᵛचित्रं चायनीयं ᵛराधः धनम् ᵛआ ᵛदर्षि अस्मभ्यं दातुमाद्रियस्व । तृतीयसवने ऋभुभिः

१. क्ष-ट-' वाजसातौ ' नास्ति ।

सहेन्द्रस्यावस्थानात् प्रसंगादत्रेन्द्रस्तुतिः । यदेतदस्माभिः प्रार्थितमस्मदीयं ᵛतत् मित्रादयः ᵛममहन्तां पूजयन्ताम् ॥ वाजसातौ । ' वन षण संभक्तौ ' । भावे क्तिन् । ' जनसनखनां सञ्झलोः ' इति आत्वम् । वाजानां सातिर्यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अविड्ढि । ' विषॢ व्याप्तौ ' । लोटो हिः । ' बहुलं छन्दसि ' इति शपो लुक् । ' हुझल्भ्यो हेर्धिः ' । ष्टुत्वजश्त्वे । ' छन्दस्यपि दृश्यते ' ( पा. सू. ६. ४. ७३ ) इति दृशिग्रहणात् लोटि[1] अडागमः । यद्वा । अवतेर्लेटि ' सिब्बहुलं लेटि ' इति बहुलवचनात् विकरणः सिप् । तस्यार्धधातुकत्वात् इट् । ' आदेशप्रत्यययोः ' इति षत्वम् । धित्वादि पूर्ववत् । ऋभुमान् । ' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वम् । दर्षि । ' दृङ् आदरे ' । लोटि व्यत्ययेन परस्मैपदम् । ' बहुलं छन्दसि ' इति विकरणस्य लुक् ॥　　॥ ३१ ॥

' तक्षन् ' इति पञ्चर्चं षष्ठं सूक्तं कुत्सस्यार्षमार्भवम् । पञ्चमी त्रिष्टुप् । शिष्टाश्चतस्रो जगत्यः । तथा चानुक्रान्तं–' तक्षन्पञ्चान्त्या त्रिष्टुप् ' इति । अग्निष्टोमे वैश्वदेवशस्त्रे इदं सूक्तमार्भवं निविद्धानम् । सूत्रितं च–' तक्षन्रथमयं वेनश्चोदयत्पृश्निगर्भाः ' ( आश्व. श्रौ. ५. १८ ) इति ॥

तक्ष॒न्रथं॑ सु॒वृतं॑ विद्म॒नाप॑स॒स्तक्ष॒न्हरी॑ इन्द्र॒वाहा॒ वृष॑ण्वसू ।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म् ॥ १ ॥

तक्ष॑न् । रथ॑म् । सु॒ऽवृत॑म् । वि॒द्म॒नाऽअ॑पसः । तक्ष॑न् ।
हरी॒ इति॑ । इ॒न्द्र॒ऽवाहा॑ । वृष॑ण्वसू॒ इति॒ वृष॑ण्ऽवसू ।
तक्ष॑न् । पि॒तृऽभ्या॑म् । ऋ॒भवः॑ । युव॑त् । वयः॑ । तक्ष॑न् । व॒त्साय॑ । मा॒तर॑म् । स॒चा॒ऽभुव॑म् ॥ १ ॥

ᵛविद्मनापसः उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणो लाभवत्कर्माणः[2] वा ऋभवः ᵛरथम् अश्विनोः आरोहणार्थं ᵛसुवृतं शोभनवर्तनं सुचक्रं वा ᵛतक्षन् अकुर्वन् । तथा ᵛइन्द्रवाहा इन्द्रस्य वाहनभूतौ ᵛहरी हरणशीलावेतत्संज्ञकावश्वौ ᵛतक्षन् कृतवन्तः । कीदृशौ । ᵛवृषण्वसू सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ । अपि च ᵛपितृभ्यां स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्यां ᵛयुवत् यौवनोपेतं ᵛवयः आयुः ᵛऋभवः ᵛतक्षन् कृतवन्तः । तथा ᵛवत्साय ᵛमातरं गां ᵛसचाभुवं सहभुवं सह वर्तमानां ᵛतक्षन् अकुर्वन् ॥ तक्षन् । ' तक्षू त्वक्षू तनूकरणे ' । लङि ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । सुवृतम् । शोभनं वर्तते इति सुवृत् । ' वृतु वर्तने ' । ' क्विप् च ' इति क्विप् । विद्मनापसः । ' विद ज्ञाने ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति दृशिग्रहणात् भावे मनिन् । संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावः । बहुलवचनात् अलुक्[3] । यद्वा । ' विदॢ लाभे ' । औणादिको भावे मक् । ततः पामादिलक्षणो नप्रत्ययः । विद्मनं लाभवत् अपः कर्म येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । छान्दसः पूर्वसवर्णदीर्घः[4] । इन्द्रवाहा । इन्द्रं वहतः इतीन्द्रवाहौ । ' वहश्च ' इति ण्विप्रत्ययः । ' अत उपधायाः ' इति वृद्धिः । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । वृषण्वसू । ' वृष सेचने ' । ' कनिन्युवृषितक्षि° ' इत्यादिना कनिन् । नित्त्वादाद्युदात्तत्वम् । ' वृषण्वस्वश्वयोरुपसंख्यानम् ' ( पा. सू. १. ४. १८. ४ ) इति वसुशब्दे उत्तरपदे वृषण्भावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

---

१. क्ष–लोट्यपि २. क्ष-ट-स–लब्धकर्माणः । ३. त-श–विभक्त्यलुक् । ४. क्ष-स–पूर्वपदस्य दीर्घः ।

युवत्। अत्र युवन्शब्दः[1] सामर्थ्यात् प्रवृत्तिनिमित्तं युवत्वमात्रमाचष्टे। 'तदस्मिन्नस्ति॰' इति युवत्। छान्दसो वर्णलोपः ॥

आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वयः॒ क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑ती॒मिष॑म्।
यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्नः॒ शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ॥ २ ॥

आ। नः॒। य॒ज्ञाय॑। त॒क्ष॒त॒। ऋ॒भु॒ऽमत्। वयः॑। क्रत्वे॑। दक्षा॑य। सु॒ऽप्र॒जाव॑तीम्। इष॑म्।
यथा॑। क्षया॑म। सर्व॑ऽवीरया। वि॒शा। तत्। नः॒। शर्धा॑य। धा॒स॒थ॒। सु। इ॒न्द्रि॒यम् ॥२॥

हे ऋभवः ᵛनः अस्माकं ᵛयज्ञाय यज्ञार्थं ᵛऋभुमत् उरुभासनयुक्तं ᵛवयः हविर्लक्षणमन्नम् ᵛआ ᵛतक्षत आ समन्तादुत्पादयत। एतदेव विव्रियते। ᵛक्रत्वे क्रतवेऽस्मदीयाय कर्मणे ᵛदक्षाय बलाय च। तादर्थ्ये चतुर्थी। एतदुभयार्थं ᵛसुप्रजावतीं शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् ᵛइषम् अन्नम् आ तक्षत इति शेषः। अपि च ᵛसर्ववीरया सर्वैर्वीरैः पुत्रादिभिरुपेतया ᵛविशा प्रजया सह ᵛयथा येन प्रकारेण ᵛक्षयाम सुखेन निवसाम[2] ᵛतत् तादृशम् ᵛइन्द्रियम्। धननामैतम्। धनं ᵛनः अस्मभ्यं ᵛशर्धाय बलार्थं ᵛसु ᵛधासथ सुष्ठु धत्त प्रयच्छतेत्यर्थः ॥ ऋभुमत्। 'उरु भाति' इति नैरुक्तव्युत्पत्त्या[3] (निरु. ११. १५) ऋभुशब्दः प्रकाशमात्रवाची। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्। क्रत्वे। 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः। क्षयाम। 'क्षि निवासगत्योः'। व्यत्ययेन शप्। धासथ। धाञो लेटि अडागमः। 'सिब्बहुलं लेटि' इति सिप्। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् ॥

आ त॑क्षत सा॒तिम॒स्मभ्य॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः।
सा॒तिं नो॒ जैत्रीं॒ सं म॑हेत वि॒श्वहा॑ जा॒मिमजा॑मिं॒ पृत॑नासु स॒क्षणि॑म् ॥ ३ ॥

आ। त॒क्ष॒त॒। सा॒तिम्। अ॒स्मभ्य॑म्। ऋ॒भ॒वः॒। सा॒तिम्। रथा॑य। सा॒तिम्। अर्व॑ते। न॒रः॒।
सा॒तिम्। नः॒। जैत्री॑म्। सम्। म॒हे॒त॒। वि॒श्वहा॑। जा॒मिम्। अजा॑मिम्। पृत॑नासु। स॒क्षणि॑म् ॥३॥

हे ᵛनरः यज्ञस्य नेतारः ᵛऋभवः ᵛअस्मभ्यम् अनुष्ठातृभ्यः ᵛसातिं संभजनीयमन्नं धनं वा ᵛआ ᵛतक्षत। आ समन्तात्कुरुत। तथा अस्मदीयाय ᵛरथाय ᵛरंहणशीलाय पुत्रादये रथायैव वा ᵛसातिं संभजनीयं धनम् आतक्षत। तथा ᵛअर्वते अश्वाय ᵛसातिं संभजनीयमन्नं धनं वा अश्वयोग्यम् आतक्षतेत्येव। किं च ᵛविश्वहा सर्वेष्वहःसु ᵛनः अस्माकं ᵛजैत्रीं जयशीलामपरिमितत्वेन सर्वाधिकां ᵛसातिं संभजनीयं धनं ᵛसं ᵛमहेत। सर्वो जनः सम्यक् पूजयतु। वयं च ᵛपृतनासु संग्रामेषु ᵛजामिं सहजातम् ᵛअजामिं सहानुत्पन्नं शत्रुं[4] वा ᵛसक्षणिम् अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ॥ सातिम्। 'ऊतियूतिजूतिसाति॰' इत्यादिना क्तिन उदात्तत्वम्। महेत। 'मह पूजायाम्'। सक्षणिम्। 'षह अभिभवे'। औणादिकः सनिप्रत्ययः। ढत्वकत्वषत्वानि ॥

---

१. क्ष-न-युवच्छब्दः। २. क्ष-ट-निवसेम। ३. श-ट-नैरुक्तप्रसिद्ध्या। ४. क्ष-अन्यं शत्रुम्।

ऋभुक्षणमिन्द्रमा हुव ऊतयं ऋभून्वाजान्मरुतः सोमपीतये ।
उभा मित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धियं जिषे ॥ ४ ॥

ऋभुक्षणम् । इन्द्रम् । आ । हुवे । ऊतये । ऋभून् । वाजान् । मरुतः । सोमऽपीतये ।
उभा । मित्रावरुणा । नूनम् । अश्विना । ते । नः । हिन्वन्तु । सातये । धिये । जिषे ॥४॥

vऋभुक्षणम् । महन्नामैतत् । महान्तम् vइन्द्रम् vआ vहुवे आह्वयामि । किमर्थम् । vऊतये रक्षणार्थम् । तथा vऋभून्वाजान् । ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । अतः शब्दद्वयेन त्रयोऽप्युच्यन्ते । तदुक्तं यास्केन—' प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन ' ( निरु. ११. १६ ) इति । एवंविधानृभून् vमरुतः च vसोमपीतये सोमपानायाह्वयामि । तथा vउभा युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणावश्विनौ च vनूनम् अवश्यं सोमपानायाह्वयामीति शेषः । अपि च आहूताश्चेन्द्रादयः[1] vनः अस्मान् vहिन्वन्तु प्रेरयन्तु गमयन्त्वित्यर्थः । किमर्थम् । vसातये संभजनीयाय धनाय vधिये धनसाध्याय कर्मणे vजिषे जेतुं शत्रूणां जयार्थं च ॥ ऋभुक्षणम् । उरुभासमाने स्थाने क्षियति निवसतीति ऋभुक्षाः । उरुपूर्वाद्भातेः ' मृगय्वादयश्च ' ( उ. सू. १. ३७ ) इति कुप्रत्ययः । ' आतो लोप इटि च ' इति आकारलोपः पूर्वपदस्य ऋभावश्च । ऋभुशब्दोपपदात् ' क्षि निवासगत्योः ' इत्यस्मात् ' पतेस्थ च ' इति विधीयमान इनिप्रत्ययो बहुलवचनात् भवति । टिलोपः । ' इतोऽत्सर्वनामस्थाने ' ( पा. सू. ७. १. ८६ ) इति अत्वम् इकारस्य । ' वा षपूर्वस्य निगमे ' इति विकल्पनात् उपधादीर्घाभावः । यद्वा । अतेः भुक्षिनक् । कित्त्वाद्गुणाभावः । अत एव न अवगृह्यते । सोमपीतये । ' पा पाने ' । ' स्थागापापचो भावे ' इति भावे क्तिन् । ' घुमास्था° ' इति ईत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हिन्वन्तु । ' हि गतौ वृद्धौ च ' । अस्मात् अन्तर्भावितण्यर्थात् लोटि स्वादित्वात् श्नुः । जिषे । ' जि जये ' । ' तुमर्थे सेसेन्° ' इति क्सेप्रत्ययः ॥

ऋभुर्भराय सं शिशातु सातिं समर्यजिद्वाजो अस्माँ अविष्टु ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥

ऋभुः । भराय । सम् । शिशातु । सातिम् । समर्यऽजित् । वाजः । अस्मान् । अविष्टु ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥५॥

vऋभुः प्रथमोऽस्माकं vसातिं संभजनीयं धनं vभराय संग्रामार्थं vसं vशिशातु सम्यक् तीक्ष्णीकरोतु । संग्रामोचितं[2] धनमस्मभ्यं प्रयच्छत्वित्यर्थः । तथा vसमर्यजित् । मर्या मनुष्याः । तैः सह वर्तते इति समर्यः संग्रामः । तत्र शत्रूणां जेता vवाजः एतत्संज्ञस्तृतीयश्च vअस्मान् स्तोतॄन् vअविष्टु अवतु संग्रामाद्रक्षत्वित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं vतत् मित्रादयः vममहन्तां पूजयन्तु ॥ शिशातु ।

---

१. क्ष—आहूतास्ते इन्द्रादयः । २. क्ष—संग्रामे वित्तम् ।

' शो तनूकरणे '। ' बहुलं छन्दसि ' इति विकरणस्य श्लुः। ' आदेचः° ' इति आत्वम्। द्विर्भावः। ह्रस्वत्वे ' बहुलं छन्दसि ' इति अभ्यासस्य इत्वम्। अविष्टु। अवतेर्लोटि ' सिब्बहुलं लेटि ' इति बहुलग्रहणात् सिप्। इडागमः। षत्वष्टुत्वे ॥ ॥ ३२ ॥

' ईळे ' इति पञ्चविंशत्यृचं सप्तमं सूक्तम्। आङ्गिरसस्य कुत्सस्यार्षम्। चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ शिष्टास्त्रयोविंशतिर्जगत्यः। आद्यः पादो द्यावापृथिव्यः। द्वितीय आग्नेयः। शिष्टं सूक्तमाश्विनम्। तथा चानुक्रान्तम्–' ईळे पञ्चाधिकाश्विनमाद्यौ पादौ लिङ्गोक्तदेवतावन्त्ये त्रिष्टुभौ ' इति। प्रवर्ग्ये अभिष्टवेऽप्येतत्सूक्तम्॥ सूत्रितं च–' ग्रावाणेवेळे द्यावापृथिवी इति ' ( आश्व. श्रौ. ४. ६ ) इति। प्रातरनुवाके चाश्विने क्रतौ जागते छन्दस्येतत्सूक्तम्। सूत्रितं च–' अगन्म महातारिष्मेळे द्यावापृथिवी इति जागतम् ' ( आश्व. श्रौ. ४. १५ ) इति। आश्विनशस्त्रेऽप्येतत् ' प्रातरनुवाकन्यायेन ' ( आश्व. श्रौ. ६. ५ ) इति अतिदेशात्। तथा अप्तोर्यामे[1] सन्ति चत्वार्यतिरिक्तोक्थानि। तत्राच्छावाकातिरिक्तोक्थे एतत्सूक्तम्। ' यस्य पशवः ' इति खण्डे सूत्रितम्–' ईळे द्यावापृथिवी उभा उ नूनम् ' ( आश्व. श्रौ. ९. ११ ) इति॥

ईळे॒ द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑।
याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ गत॑म्॥ १ ॥

ईळे॑। द्यावा॑पृथि॒वी इति॑। पू॒र्वऽचि॑त्तये। अ॒ग्निम्। घ॒र्मम्। सु॒ऽरुच॑म्। याम॑न्। इ॒ष्टये॑।
याभिः॑। भरे॑। का॒रम्। अंशा॑य। जिन्व॑थः।
ताभिः॑। ऊँ॒ इति॑। सु। ऊ॒तिऽभिः॑। अ॒श्विना॒। आ। ग॒तम्॥ १ ॥

अहं <sup></sup>द्यावापृथिवी द्यावापृथिव्यौ ईळे स्तौमि। किमर्थम्। पूर्वचित्तये पूर्वमेवाश्विनोः प्रज्ञापनाय। ते ह्यश्विनोः प्रत्यासन्ने। यद्वा। द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय। तथा चोक्तं–' तत्कावश्विनौ द्यावापृथिव्यावित्येके ' ( निरु. १२. १ ) इति। अपि च यामन् यामनि अश्विनोरागमने सति इष्टये तदीययागार्थमाहवनीयरूपेण स्थापितम् अग्निं स्तौमीति शेषः। कीदृशमग्निम्। घर्मं प्रवृञ्जनेन दीप्तं सुरुचम् अत एव शोभनकान्तियुक्तम्। हे अश्विनौ भरे। संग्रामनामैतत्। संग्रामे अंशाय युष्मदीयभागाय जयप्राप्त्यर्थं याभिः ऊतिभिः पालनैः सहागत्य कारम्। कारशब्दः शङ्खवाचीत्यभियुक्ताः संगिरन्ते। कारं शब्दकारिणं शङ्खं जिन्वथः सुखेनापूरयथः ताभिः तादृशैः ऊतिभिः पालनैः सह। उ इति समुच्चये। अस्मानपि सुष्ठु आ गतम् आगच्छतम्॥ ईळे। ' ईड स्तुतौ '। उत्तमैकवचनम् इट्। अदादित्वात् शपो लुक्। अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। द्यावापृथिवी। द्यौश्च पृथिवी च। ' दिवो द्यावा ' इति द्यावादेश आद्युदात्तो निपातितः। पृथिवीशब्दो ङीषन्तः अन्तोदात्तः। ' देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम्। ' °अपृथिवी° ' इति पर्युदासात् ' नोत्तरपदेऽनुदात्तादौ° ' इति निषेधाभावः। ' वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम्। पूर्वचित्तये। ' चिती संज्ञाने '। अस्मात् अन्तर्भावित-

[1] क्ष-ट–अप्तोर्यामेऽपि।

ण्यर्थात् भावे क्तिन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । सुरुचम् । 'रुच दीप्तावभिप्रीत्यां च' संपदादिलक्षणो भावे क्विप् । शोभना रुग्यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यामन् । 'या प्रापणे' । 'आतो मनिन्°' इति 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् भावे मनिन् । कारम् । क्रियतेऽनेनेति कारः । करणे घञ् । 'कर्षात्वतः°' इत्यन्तोदात्तत्वम् । जिन्वथः । 'जिवि प्रीणनार्थः' । अत्र प्रीणनहेतुभूतमापूरणं लक्ष्यते । धनेनापूरितो हि पुरुषः प्रीतो भवति । इदित्त्वात् नुम् । भौवादिकः । शपः पित्त्वादनुदात्तत्वम् । सिङः अदुपदेशात् लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । तत्र हि व्यवहितेऽपि कार्यमिष्यते (का. ८. १. ६६) इत्युक्तम् । ऊ षु । 'इकः सुञि' इति दीर्घत्वम् । 'सुञः' इति षत्वम् । ईषाअक्षादित्वात् सुञ उकारस्य प्रकृतिभावः । ऊतिभिः । अवतेर्भावे क्तिन् । 'ज्वरत्वर°' इत्यादिना वकारस्य उपधायाश्च ऊट् । 'ऊतियूति°' इत्यादिना निपातनात् क्तिन उदात्तत्वम् । गतम् । गमेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अनुदात्तोपदेश°' इत्यादिना अनुनासिकलोपः ॥

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥ २ ॥

युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः । वचसम् । न । मन्तवे ।
याभिः । धियः । अवथः । कर्मन् । इष्टये ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २ ॥

vसुभराः शोभनस्तोत्रभरणाः vअसश्चतः अन्यत्रानासक्ताः स्तोतारो हे अश्विनौ vयुवोः युवयोः vरथम् vआ vतस्थुः आतिष्ठन्ति प्राप्नुवन्ति । किमर्थम् । vदानाय युष्मत्कर्तृकदानार्थम् । धनलाभायेत्यर्थः । तत्र दृष्टान्तः । vवचसं vन यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं vमन्तवे बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् । अपि च vकर्मन् कर्मणि vइष्टये यागार्थं प्रवृत्तान् vधियः ध्यातॄन् विशिष्टज्ञानोपेतान् vयाभिः vऊतिभिः पालनैः vअवथः युवां रक्षथः । ताभिरित्यादि पूर्ववत् ॥ वचसम् । अर्शआदित्वात् मत्वर्थीयः अच् । मन्तवे । 'मन ज्ञाने' । 'कमिमनिजनि°' इत्यादिना तुप्रत्ययः । धियः । ध्यायन्तीति धियः स्तोतारः । 'ध्यै चिन्तायाम्' । 'क्विप् च' इति क्विप् । चशब्देन दृशिग्रहणानुकर्षणात् संप्रसारणम् । कर्मन् । 'सुपां सुलुक्°' इति सप्तम्या लुक् । 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ॥

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥ ३ ॥

युवम् । तासाम् । दिव्यस्य । प्रऽशासने । विशाम् । क्षयथः । अमृतस्य । मज्मना ।
याभिः । धेनुम् । अस्वम् । पिन्वथः । नरा ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ३ ॥

हे ^v^नरा नेतारावश्विनौ ^v^दिव्यस्य दिवि भवस्य स्वर्गसमुत्पन्नस्य[1] ^v^अमृतस्य सोमस्य पानेनोत्पन्नेन ^v^मज्मना बलेन युक्तौ ^v^युवं युवां ^v^तासां यास्विषु लोकेषु वर्तन्ते तासां सर्वासां ^v^विशां प्रजानां प्रशासने प्रकृष्टानुशासने शिक्षणे ^v^क्षयथः । ऐश्वर्यकर्मायम् । ईशाथे समर्थौ भवथः । यद्वा । मज्मना अन्येषामसाधारणेन बलेन विशां प्रजानां दिविभवस्यामृतस्य वृष्ट्युदकस्य ^v^प्रशासने प्रदाने क्षयथः ईश्वरौ भवथः । अपि च ^v^याभिः ^v^ऊतिभिः रक्षाभिः ^v^अस्वं प्रसवासमर्थां ^v^धेनुं गां शयुनाम्ने ऋषये ^v^पिन्वथः सिञ्चथः पयसा पूरितवन्तावित्यर्थः । ताभिरूतिभिरित्यादि पूर्ववत् ॥ अस्वम् । ' षूङ् प्राणिगर्भविमोचने ' । सवनं सूः । संपदादिलक्षणो भावे क्विप् । नास्ति सूः यस्याम् इति असूः । ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । अमि ' ओः सुपि ' इति यणादेशः । ' उदात्तस्वरितयोर्यणः° ' इति परस्यानुदात्तस्य स्वरितत्वम् । पिन्वथः । ' पिवि सेचने ' । इदित्त्वात् नुम् । भौवादिकः ॥

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ ४ ॥

याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ।
याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ४ ॥

^v^परिज्मा परितो गन्ता वायुः ^v^तनयस्य आत्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । तथा च श्रूयते–' अथ यः प्राणापानयोः संधिः स व्यानः। अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति ' ( छा. उ. १. ३. ३; ५ ) इति । यद्वा । सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वम् । आम्नायते च–' वायोरग्निः ' ( तै. आ. ८. १ ) इति । एवं स्वपुत्रस्याग्नेः ^v^मज्मना बलेन युक्तः सन् ^v^द्विमाता द्वयोर्लोकयोः निर्माता[2] । अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थानः । उभयोर्मिलितयोः[3] उभयनिर्मातृत्वमुपपन्नम् । यद्वा । द्विमातेति तनयस्य विशेषणम् । ' सुपां सुलुक्° ' इति षष्ठ्याः सुः[4] । द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य । एवंभूतो वायुर्हे अश्विनौ ^v^याभिः ऊतिभिः हेतुभूतैः पालनैः ^v^तूर्षु तरीतृषु धावत्सु मध्ये ^v^तरणिः अतिशयेन तरीता शीघ्रगामी ^v^विभूषति विभवति व्याप्तो भवति । यद्वा । विशेषेण सर्वमलंकरोति । अपि च ^v^त्रिमन्तुः त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेष्वासादितज्ञानः कक्षीवान् ^v^याभिः युष्मदीयाभिरूतिभिः ^v^विचक्षणः विशिष्टज्ञानयुक्तः ^v^अभवत् । ^v^ताभिः सर्वाभिः ^v^ऊतिभिः अस्मानागच्छतम् ॥ परिज्मा । परिपूर्वात् ' अज गतिक्षेपणयोः ' इत्यस्मात् ' श्वन्नुक्षन्° ' इत्यादौ निपात्यते । तूर्षु । ' तॄ प्लवनतरणयोः ' । ' बहुलं छन्दसि ' इति उत्वम् । ' हलि च ' इति दीर्घः । यद्वा । त्वरतेः क्विप् । ' ज्वरत्वर° ' इत्यादिना वकारोपधयोः ऊठ् । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । विभूषति । भवतेर्लेटि अडागमः । ' सिब्बहुलं लेटि ' इति सिप् । यद्वा । ' भूष अलंकारे ' । भौवादिकः । विचक्षणः । ' अनुदात्तेतश्च हलादेः ' इति युच् ॥

---

१. क्ष-स–स्वर्गे समुत्पन्नस्य । २. क्ष–निर्माता आदित्यः । ३. क्ष–अत उभयोर्मिलितयोः । ४. क्ष–डादेशः ।

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ५ ॥

याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे ।
याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ५ ॥

हे अश्विनौ याभिः ऊतिभिः रेभम् एतत्संज्ञम्[1] ऋषिं निवृतम् असुरैः कूपे अप्सु निवारितं सितं तदीयैः पाशैर्बद्धमेवंभूतमृषिम् अद्भ्यः सकाशात् उत् ऐरयतम् उदगमयतम् । तथा वन्दनम् एतत्संज्ञमृषिं च तथाभूतमुदैरयतम् । किमर्थम् । स्वः आदित्यं दृशे द्रष्टुम् । अपि च कण्वम् असुरैः अन्धकारे प्रक्षिप्तं सिषासन्तम् आलोकं संभक्तुमिच्छन्तं याभिः ऊतिभिः प्र आवतं प्रकर्षेण अरक्षतम् । ताभिरित्यादि समानम् ॥ रेभम् । 'रेभृ शब्दे' । रेभते स्तौतीति रेभः । पचाद्यच् । निवृतम् । 'वृञ् वरणे' । अस्मात् अन्तर्भावितण्यर्थात् कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सितम् । 'षिञ् बन्धने' । अद्भ्यः । 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् । वन्दनम् । 'वदि अभिवादनस्तुत्योः' । वन्दते स्तौतीति वन्दनः । नन्द्यादिलक्षणो ल्युः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरित्येतद्दिवश्चादित्यस्य च साधारणनामधेयम् । तदुक्तं यास्केन– 'स्वरादित्यो भवति सु अरणः सु ईरणः' (निरु. २. १४) इति । 'स्वरादिनिपातम्°' (पा. सू. १. १. ३७) इति अव्ययत्वात् सुपो लुक् । दृशे । 'दृशे विख्ये च' इति दृशेः तुमर्थे केप्रत्ययान्तो निपात्यते । सिषासन्तम् । 'वन षण संभक्तौ' । सनि 'सनीवन्तर्ध°' इत्यादिना विकल्पनात् इडभावः । 'जनसनखनां सञ्झलोः' इति आत्वम् । द्विर्भावे अभ्यासस्य ह्रस्वत्वम् । 'सन्यतः' इति इत्वम् ॥ ॥ ३३ ॥

याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।
याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ ६ ॥

याभिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । याभिः । अव्यथिऽभिः । जिजिन्वथुः ।
याभिः । कर्कन्धुम् । वय्यम् । च । जिन्वथः ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ६ ॥

आरणम् अगाधं[2] कूपादि । तत्रासुरैः प्रक्षिप्तं जसमानं तैर्हिंस्यमानम् अन्तकं शत्रूणामन्तकरम् एतत्संज्ञं राजर्षिं हे अश्विनौ याभिः ऊतिभिः अवथः रक्षथः । तथा भुज्युं सर्वस्य पालकमेतत्संज्ञं समुद्रमध्ये निमग्नं तुग्र्यं तुग्रस्य पुत्रं राजर्षिं याभिः ऊतिभिः रक्षणहेतुभूताभिः अव्यथिभिः व्यथा-

---

१. क्ष–एतत्संज्ञकम् । २. च-छ-न-फ–अगाधं तडागादि कूपादि वा ।

रहिताभिर्नौभिः ᵛजिजिन्वथुः युवामतर्पयतम् । एतच्च[1] मन्त्रान्तरे[1] 'तुग्रो ह भुज्युमश्विनोदमेघे' (ऋ. सं. १. ११६. ३) इत्यादिके[2] विस्पष्टयिष्यते[2] । अपि च ᵛकर्कन्धुं ᵛवय्यं ᵛच एतत्संज्ञकौ चासुरैः पीड्यमानौ ᵛयाभिः ऊतिभिः ᵛजिन्वथः प्रीणयथः । गतमन्यत् ॥ जसमानम् । 'जसु हिंसायाम्' । यकि प्राप्ते व्यत्ययेन शप् । आरणे । आङ्पूर्वात् अर्तेः ल्युट्[3] । जिजिन्वथुः । जिविः प्रीणनार्थः । लिटि अथुसि रूपम् ॥

याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ७ ॥

याभिः । शुचन्तिम् । धनऽसाम् । सुऽसंसदम् । तप्तम् । घर्मम् । ओम्याऽवन्तम् । अत्रये ।
याभिः । पृश्निऽगुम् । पुरुऽकुत्सम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ७ ॥

हे अश्विनौ ᵛधनसां धनस्य संभक्तारं ᵛशुचन्तिम् एतन्नामानं ᵛसुषंसदम् । संसीदन्त्यस्मिन्निति संसत् गृहम् । शोभनसंसदं ᵛयाभिः ऊतिभिरकुरुतम् । तथा ᵛअत्रये याभिश्चोतिभिः ᵛतप्तं प्रवृञ्जनेन संतप्तं ᵛघर्मं महावीरम् ᵛओम्यावन्तं सुखयुक्तं सुखेन स्प्रष्टुं शक्यमकुरुतम् । यद्वा । शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय घर्मं दीप्तं पीडासाधनमग्निं तप्तं तापकारिणम् ओम्यावन्तं सुखवन्तम्[4] अकुरुतम् । यथा अस्मै सुखं भवति तथा हिमेनोदकेन तमग्निमवारयेथाम् । यास्कपक्षे तु अत्रये हविषामत्त्रेऽग्नये हविरूपत्त्यर्थं सूर्यकिरणसंतप्तं घर्मं नैदाघम् अहः ओम्यावन्तं तृप्तिहेतुवृष्ट्युदकोपेतं कृतवन्तौ इति योज्यम् । अपि च ᵛयाभिः ऊतिभिः ᵛपृश्निगुं ᵛपुरुकुत्सं च ᵛआवतम् अरक्षतम् । ᵛताभिः सर्वाभिः ᵛऊतिभिः अस्मानागच्छतम् ॥ शुचन्तिम् । 'शुच दीप्तौ' । औणादिको झिच् । धनसाम् । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । सुषंसदम् । शोभना संसद्यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ओम्यावन्तम् । अवतेः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'ज्वरत्वर०' इत्यादिना वकारस्य उपधायाश्च ऊठ् । गुणः । 'छन्दसि च' इत्यर्हार्थे यप्रत्ययः । 'नस्तद्धिते' इति टिलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते । पृश्निगुम् । पृश्नयो नानावर्णा गावो यस्य स तथोक्तः । 'गोस्त्रियोरुपसर्जनस्य' (पा. सू. १. २. ४८) इति गोशब्दस्य ह्रस्वत्वम् ॥

याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसिताममुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ८ ॥

याभिः । शचीभिः । वृषणा । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । चक्षसे । एतवे । कृथः ।
याभिः । वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ८ ॥

---

१. क्ष–तथा च मन्त्रान्तरम् । २. क्ष–इत्यादि । ३. क्ष-स–अधिकरणे ल्युट् । ४. स–सुखयुक्तम् ।

हे ^v^वृषणा कामानां वर्षितारावश्विनौ ^v^याभिः ^v^शचीभिः कर्मभिः प्रज्ञाभिर्वा ^v^परावृजम् एतन्नामकमृषिं पङ्गुं सन्तमपङ्गुमकुरुतम्। तथा ^v^अन्धं दृष्टिरहितं सन्तमृज्राश्वमृषिं ^v^चक्षसे प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिरूतिभिः ^v^प्र ^v^कृथः प्रकर्षेण कुरुथः। याभिश्च ^v^श्रोणं विगुणजानुकमेव[1] सन्तमृषिम् ^v^एतवे गन्तुं प्र कृथः प्रकर्षेण कृतवन्तौ। अपि च ^v^याभिः ऊतिभिः ^v^वर्तिकां चटकसदृशस्य पक्षिणः स्त्रियं ^v^ग्रसितां वृकेण ग्रस्ताम् ^v^अमुञ्चतं वृकास्यान्निर्मुक्तामकुरुतम्। यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतम् इति योज्यम्। ^v^ताभिः सर्वाभिः ^v^ऊतिभिः अस्मानप्यागच्छतम्॥ वृषणा। 'वृष सेचने'। 'कनिन्युवृषि°' इत्यादिना कनिन्। परावृजम्। 'वृजी वर्जने'। परावृणक्ति तपसा पापं विनाशयतीति परावृक्। 'क्विप् च' इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। एतवे। 'तुमर्थे सेसेन्°' इत्येतेः तवेन्प्रत्ययः। कृथः। 'डुकृञ् करणे'। 'बहुलं छन्दसि' इति विकरणस्य लुक्॥

**याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम्।**
**याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥ ९॥**

याभिः। सिन्धुम्। मधुऽमन्तम्। असश्चतम्। वसिष्ठम्। याभिः। अजरौ। अजिन्वतम।
याभिः। कुत्सम्। श्रुतर्यम्। नर्यम्। आवतम्।
ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ ९॥

हे अश्विनौ ^v^सिन्धुं स्यन्दनशीलां नदीं ^v^मधुमन्तं मधुसदृशेनोदकेन पूर्णां ^v^याभिः ऊतिभिः ^v^असश्चतम् अगमयतं प्रावाहयतमित्यर्थः। हे ^v^अजरौ जरारहितावश्विनौ ^v^वसिष्ठम् ऋषिं ^v^याभिः ऊतिभिः ^v^अजिन्वतम् अप्रीणयतम्। ^v^याभिः च कुत्सादीन् त्रीन्[2] ऋषीन् ^v^आवतम् अरक्षतम्। ^v^ताभिः सर्वाभिः ^v^ऊतिभिः अस्मानपि सुष्ठ्वागच्छतम्॥ मधुमन्तम्। मधुशब्दात् भूम्नि मतुप्। लिङ्गव्यत्ययः। असश्चतम्। सश्चतिर्गतिकर्मा। अस्मात् अन्तर्भावितण्यर्थात् लुङ्॥

**याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम्।**
**याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥ १०॥**

याभिः। विश्पलाम्। धनऽसाम्। अथर्व्यम्। सहस्रऽमीळ्हे। आजौ। अजिन्वतम्।
याभिः। वशम्। अश्व्यम्। प्रेणिम्। आवतम्।
ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ १०॥

हे अश्विनौ ^v^धनसां धनं संभजमानाम् ^v^अथर्व्यम् अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम्। थर्वतिर्गतिकर्मा। ^v^विश्पलाम् एतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य[3] संबन्धिनीं ^v^सहस्रमीळ्हे।

---

१. क्ष-ट-विगतजानुकमेव। २. क्ष-'त्रीन्' नास्ति। ३. क्ष-शलस्य।

मीळ्हमिति धननाम । बहुधनोपेते आजौ संग्रामे याभिः ऊतिभिः अजिन्वतं गन्तुं समर्थामकुरुतम् । एतच्च ' चरित्रं हि वेरिवाच्छेदि पर्णम् ' ( ऋ. सं. १. ११६. १५ ) इत्यत्र विस्पष्टयिष्यते । याभिः च अश्व्यम् अश्वाख्यस्य पुत्रं प्रेणिं स्तुतेः प्रेरयितारं वशम् एतत्संज्ञम्[1] ऋषिम् आवतम् अरक्षतम् । ताभिः[2] सर्वाभिः ऊतिभिः सहास्मानप्यागच्छतम्[2] ॥ प्रेणिम् । ' प्रेणृ गतिप्रेरणश्लेषणेषु ' । औणादिक इप्रत्ययः ॥ ॥ ३४ ॥

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ११ ॥

याभिः । सुदानू इति सुऽदानू । औशिजाय । वणिजे । दीर्घऽश्रवसे । मधु । कोशः । अक्षरत् ।
कक्षीवन्तम् । स्तोतारम् । याभिः । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ११ ॥

उशिक्संज्ञा[3] दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्ट्यां जीवनार्थमकरोत् वाणिज्यम् । स च वर्षणार्थमश्विनौ तुष्टाव । तौ च अश्विनौ[4] मेघं प्रेरितवन्तौ । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे सुदानू शोभनदानावश्विनौ औशिजाय उशिक्पुत्राय वणिजे वाणिज्यं कुर्वते दीर्घश्रवसे[5] एतत्संज्ञाय ऋषये याभिः युष्मदीयाभिः ऊतिभिः हेतुभूताभिः कोशः मेघः मधु माधुर्योपेतं वृष्टिजलम् अक्षरत् असिञ्चत् युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः । अपि च उशिजः पुत्रं स्तोतारं कक्षीवन्तम् एतत्संज्ञमृषिं याभिः ऊतिभिः आवतम् अरक्षतम् । ताभिः सर्वाभिः ऊतिभिः सहास्मानप्यागच्छतम् ॥ कक्षीवन्तम् । कक्ष्या रज्जुरश्वस्य । तया युक्तः कक्षीवान् । ' आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत् ' इति निपातनात् मतुपो वत्वम् । संप्रसारणम्[6] ॥

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ॥ १२ ॥

याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वम् । याभिः । रथम् । आवतम् । जिषे ।
याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १२ ॥

' रसा नदी भवति रसतेः शब्दकर्मणः ' ( निरु. ११. २५ ) इति यास्कः । हे अश्विनौ याभिः ऊतिभिः हेतुभूताभिः रसां नदीमनावृष्ट्या जलरहितां क्षोदसा कूलानि संपिंषता उद्नः उदकेन पिपिन्वथुः युवां पूरितवन्तौ । तथा अनश्वम् अश्वैर्वियुक्तमात्मीयं रथं जिषे जेतुं याभिः

---

१. क्ष–एतत्संज्ञकम् । २. क्ष–ताभिः प्राग्वत् । ३. क्ष-ट– उशिक्संज्ञा या । ४. क्ष-ट– ' अश्विनौ ' नास्ति । ५. क्ष-ट-स–दीर्घश्रवसे प्रथितयशसे । ६. क्ष-ट-स–संप्रसारणं च ।

ऊतिभिः आवतम् अगमयतम्[1] । अपि च याभिः ऊतिभिः कण्वपुत्रः त्रिशोकः ऋषिः उस्रियाः अपहृताः[2] गाः उदाजत उदगमयत् असुरसकाशात् लेभे । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् ॥ क्षोदसा । 'क्षुदिर् संपेषणे' । औणादिकः असुन् । उद्नः । तृतीयैकवचनस्य 'सुपां सुपो भवन्ति' इति शसादेशः । 'पद्दन्॰' इत्यादिना उदकशब्दस्य उदन्भावः । भसंज्ञायाम् 'अल्लोपोऽनः' इति अकारलोपः । पिपिन्वथुः । 'पिवि सेचने' । इदित्त्वात् नुम् । जिषे । 'जि जये' । 'तुमर्थे सेसेन्॰' इति क्सेप्रत्ययः । उदाजत । 'अज गतिक्षेपणयोः' ॥

**याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।**
**याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १३ ॥**

याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धातारम् । क्षैत्रऽपत्येषु । आवतम् ।
याभिः । विप्रम् । प्र । भरत्ऽवाजम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १३ ॥

हे अश्विनौ परावति दूरदेशे स्थितं सूर्यं तमोरूपेण स्वर्भानुनावृतमादित्यं तस्मात्तमसो मोचयितुं याभिः ऊतिभिः परियाथः युवां परितो गच्छथः । तथा मन्धातारम् ऋषिं क्षैत्रपत्येषु । क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः । तत्संबन्धिषु कर्मसु आवतम् अरक्षतम् । अपि च याभिः ऊतिभिः विप्रं मेधाविनं भरद्वाजम् ऋषिमन्नप्रदानेन प्र आवतं प्रकर्षेणारक्षतम् । ताभिः सर्वाभिः ऊतिभिः सह रक्षणार्थमस्मानप्यागच्छतम् ॥ क्षैत्रपत्येषु । ब्राह्मणादेराकृतिगणत्वात् कर्मण्यर्थे ष्यञ् ॥

**याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।**
**याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १४ ॥**

याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् । दिवःऽदासम् । शम्बरऽहत्ये । आवतम् ।
याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १४ ॥

हे अश्विनौ महां महान्तम् अतिथिग्वम् अतिथिभिर्गन्तव्यं कशोजुवम् असुरभीत्या उदकं प्रवेष्टुं गन्तारम् एवंभूतं दिवोदासम् एतत्संज्ञकं राजर्षिं शम्बरहत्ये । शम्ब आयुधम् । तद्युक्तः[3] शम्बरोऽसुरः[3] । तस्य हनने[4] विषयभूते सति याभिः ऊतिभिः आवतम् अरक्षतम्[5] । अपि च याभिः ऊतिभिः पूर्भिद्ये पुराणि[6] नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः संग्रामः । तस्मिन् त्रसदस्युम् एतत्संज्ञकम् ऋषिं[7] पुरुकुत्सपुत्रम् आवतम् अरक्षतम् । ताभिरित्यादि पूर्ववत्[8] ॥ महाम् । महान्तमित्यस्य छान्दसो वर्णलोपः ।

१. क्ष-ट-स—अगमयतम् । अवतिरत्र गत्यर्थः । २. क्ष-स—असुरैः अपहृताः । ३. ट—तद्वानसुरः शम्बरः । ४. क्ष-ट—वधे । ५. क्ष-ट-स—युवां अरक्षतम् । ६. क्ष-ट—पुरः । ७. क्ष-ट—राजर्षिम् । ८. क्ष—समानम् ।

कशोजुवम् । कशः इत्युदकनाम । ‘ कश गतिशासनयोः ’ । असुन् । कशांस्युदकानि जवतीति कशोजूः । जु इति सौत्रो धातुर्गत्यर्थः । ‘ क्विब्वचि° ’ ( उ. सू. २. २१५) इत्यादिना क्विब्दीर्घौ । दिवोदासम् । ‘ दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः ’ ( का. ६. ३. २१. ५ ) इति अलुक् । ‘ दिवोदासादीनां छन्दस्युपसंख्यानम् ’ ( पा. सू. ६. २. ९१. १ ) इति पूर्वपदाद्युदात्तत्वम् । शम्बरहत्ये । ‘ हनस्त च ’ इति हन्तेर्भावे क्यप् ; तत्संनियोगेन तकारान्तादेशश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

**याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।**
**याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १५ ॥**

याभिः । वम्रम् । विऽपिपानम् । उपऽस्तुतम् । कलिम् । याभिः । वित्तऽजानिम् । दुवस्यथः ।
याभिः । विऽअश्वम् । उत । पृथिम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १५ ॥

हे अश्विनौ वम्रं विखनसः पुत्रमेतत्संज्ञमृषिं विपिपानं विशेषेण पार्थिवं रसं पिबन्तं याभिः ऊतिभिः अरक्षतम् । कीदृशम् । उपस्तुतं समीपस्थैः सम्यक् स्तुतमिति स्तूयमानम् । तथा वित्तजानिं लब्धभार्यं कलिम् एतत्संज्ञमृषिं याभिः ऊतिभिः दुवस्यथः रक्षथः । उत अपि च व्यश्वं विगताश्वं पृथिम् एतत्संज्ञं वैनं[1] राजर्षिं याभिः ऊतिभिः आवतम् अरक्षतम् । अन्यत् पूर्ववत् ॥ विपिपानम् । ‘ पा पाने ’ । ताच्छीलिकः चानश् । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । ‘ बहुलं छन्दसि ’ इति अभ्यासस्य इत्वम् । उपस्तुतम् । स्तौतेः कर्मणि निष्ठा । प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् (पा. सू. ६. २. १४७ ) । वित्तजानिम् । वित्ता लब्धा जाया येन स तथोक्तः । ‘ जायाया निङ् ’ ( पा. सू. ५. ४. १३४ ) इति समासान्तो निङादेशः । ‘ लोपो व्योर्वलि ’ इति वलि[2] लोपः[2] । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्यश्वम् । विगतोऽश्वो यस्मात्स तथोक्तः । बहुव्रीहिस्वरेण पूर्वपदस्योदात्तत्वे[3] ‘ उदात्तस्वरितयोर्यणः° ’ इति परस्यानुदात्तस्य स्वरितत्वम् ॥ ॥ ३५ ॥

**याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।**
**याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ॥ १६ ॥**

याभिः । नरा । शयवे । याभिः । अत्रये । याभिः । पुरा । मनवे । गातुम् । ईषथुः ।
याभिः । शारीः । आजतम् । स्यूमऽरश्मये ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १६ ॥

हे नरा नेतारावश्विनौ पुरा पूर्वस्मिन्काले शयवे एतत्संज्ञकाय ऋषये गातुं दुःखान्निर्गमनलक्षणं मार्गं याभिः ऊतिभिः ईषथुः युवां वाञ्छितवन्तौ कृतवन्तावित्यर्थः । किं[4] तत् । सामर्थ्यात्

---

१. क्ष-ट-स–वैन्यम् । २. त-द-श–यलोपः । ३. क्ष–पूर्वपदस्यान्तोदात्तत्वे । ४. क्ष–‘ किं ’ नास्ति । च-ट-स–सामर्थ्यम् ।

'शयवे चिन्नासत्या शचीभिः' ( ऋ. सं. १. ११६. २२ ) इत्यस्यामृचि प्रतिपादितम्। तथा ᵛअत्रये ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय संतापकारिणः अग्नेः[1] शीतेनोदकेन शीतकरणलक्षणं[2] गातुं दुःखनिर्गमनहेतुभूतं मार्गं ᵛयाभिः ऊतिभिर्युवामिष्टवन्तौ। एतच्च 'हिमेनाग्निं घ्रंसमवारयेथाम्' ( ऋ. सं. १. ११६. ८ ) इत्यादौ प्रसिद्धम्। तथा ᵛमनवे एतन्नाम्ने राजर्षये ᵛयाभिः ऊतिभिः यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं[3] मार्गं युवां कृतवन्तौ। तथा च मन्त्रान्तरं–'यवं वृकेणाश्विना वपन्ता' ( ऋ. सं. १. ११७. २१ ) इति। अपि च ᵛस्यूमरश्मये स्यूतः संबद्धः[4] रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये ᵛयाभिः ऊतिभिः ᵛशारीः। शरो नाम वेणुविशेषः। तद्विकारभूता इषूः ᵛआजतं शत्रून्प्रति प्रैरयतम्। ताभिरूतिभिरित्यादि पूर्ववत्॥ नरा। 'नॄ नये'। 'ऋदोरप्'। 'सुपां सुलुक्°' इति विभक्तेः आकारः। शयवे। 'शीङ् स्वप्ने'। 'भृमृशीतॄचरि°' ( उ. सू. १. ७. ) इत्यादिना उप्रत्ययः। ईषथुः। 'इषु इच्छायाम्'। लिटि अथुसि '°असवर्णे' ( पा. सू. ६. ४. ७८ ) इति पर्युदासात् अभ्यासस्य इयङादेशाभावे सवर्णदीर्घः। शारीः। विकारार्थे शरशब्दात् 'अनुदात्तादेश्च' इति अञ्। 'टिड्ढाणञ्°' इति ङीप्। स्यूमरश्मये। 'षिवु तन्तुसंताने'। सिवेः औणादिको मन्प्रत्ययः[5]। 'च्छ्वोः शूठ्°' इति ऊठ्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥

**याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना।**
**याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम्॥ १७॥**

याभिः। पठर्वा। जठरस्य। मज्मना। अग्निः। न। अदीदेत्। चितः। इद्धः। अज्मन्। आ।
याभिः। शर्यातम्। अवथः। महाऽधने।
ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ १७॥

हे अश्विनौ ᵛजठरस्य। 'जठरमुदरं भवति जग्धमस्मिन्ध्रियते' ( निरु. ४. ७ ) इति यास्कः। जठरोपलक्षितस्य शरीरस्य ᵛमज्मना बलेन युक्तः सन् ᵛपठर्वा एतत्संज्ञो राजर्षिः ᵛअज्मन्। संग्रामनामैतत्। अज्मनि संग्रामे युष्मदीयाभिः ᵛयाभिः ऊतिभिः ᵛआ समन्तात् ᵛअदीदेत् अदीप्यत। तत्र दृष्टान्तः। ᵛचितः काष्ठैरभिचितः[6] ᵛइद्धः यज्ञगृहे ऋत्विग्भिः प्रज्वालितः ᵛअग्निर्न। यथा अग्निः प्रकाशते तद्वदित्यर्थः। अपि च ᵛशर्यातं मानवमिन्द्रेण सह स्पर्धमानं ᵛमहाधने। संग्रामनामैतत्। महता धनेनोपेते संग्रामे ᵛयाभिः ऊतिभिः ᵛअवथः रक्षथः। ताभिरित्यादि गतम्॥ अदीदेत्। दीदेतिश्छान्दसो दीप्तिकर्मा। अज्मन्। 'अज गतिक्षेपणयोः'। अजन्ति क्षिपन्त्यस्मिन्बाणानिति अधिकरणे औणादिको मनिन्। 'वलादावार्धधातुके विकल्प इष्यते' ( का. २. ४. ५६. २ ) इति वचनात् वीभावाभावः। 'सुपां सुलुक्°' इति सप्तम्या लुक्। महाधने। 'आन्महतः°' इति आत्वम्॥

---

१. क्ष-ट–अग्नेः सकाशात्। २. क्ष-य–शीतीकरणलक्षणम्। ३. क्ष-ट–दारिद्र्यनिर्गमनहेतुभूतम्। ४. क्ष–संततः ५. क्ष-ट–मनिन्प्रत्ययः। ६. ट–काष्ठैरुपचितः।

याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १८ ॥

याभिः । अङ्गिरः । मनसा । निऽरण्यथः । अग्रम् । गच्छथः । विऽवरे । गोऽअर्णसः ॥
याभिः । मनुम् । शूरम् । इषा । सम्ऽआवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १८ ॥

अङ्गिरः इत्येतदामन्त्रितं वाक्यात् बहिर्भूतम् । तेन चात्मानं संबोध्य स्तुतावृषिं प्रेरयति । हे ᵛअङ्गिरः अङ्गिरसां[1] गोत्रज[1] त्वमश्विनौ स्तुहि । हे अश्विनौ ᵛमनसा मननीयेन स्तोत्रेण प्रीतौ सन्तौ युवां ᵛयाभिः ऊतिभिः ᵛनिरण्यथः स्तोतॄन् नितरां रमयथः । यद्वा । मनसैव करणभूतेन[2] रमयथः । तथा ᵛगोअर्णसः गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य ᵛविवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिः ऊतिभिः सह युवाम् ᵛअग्रं सर्वेभ्यो देवेभ्यः पुरस्तात् ᵛगच्छथः । अपि च ᵛशूरं वीर्यवन्तं ᵛमनुम् ᵛइषा पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन ᵛयाभिः ऊतिभिः ᵛसमावतं सम्यगरक्षतम् । ᵛताभिः सर्वाभिः ᵛऊतिभिः सहास्मानप्यागच्छतम् ॥ निरण्यथः । निरमयथ इत्यस्य वर्णव्यापत्त्या एतद्रूपम् । विवरे । 'ग्रहवृदृनिश्चिगमश्च' इति भावे अप् । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।
याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतम् ॥ १९ ॥

याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतम् ।
याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १९ ॥

हे अश्विनौ ᵛविमदाय एतन्नाम्ने ऋषये ᵛयाभिः युष्मदीयाभिः ऊतिभिः ᵛपत्नीः भार्याः[3] पुरुमित्रस्य दुहितरं ᵛन्यूहथुः नितरां युवां प्रापितवन्तौ । ᵛघ इति पादपूरणः[4] । तथा ᵛयाभिः ऊतिभिः ᵛअरुणीः अरुणवर्णाः आरोचमाना गाः ᵛआ आभिमुख्येन ᵛअशिक्षतम् अदत्तम् । तथा[5] पिजवनपुत्राय ᵛसुदासे कल्याणदानाय राज्ञे ᵛसुदेव्यं प्रशस्तं धनं ᵛयाभिः ऊतिभिः ᵛऊहथुः प्रापितवन्तौ । ताभिरित्यादि गतम् ॥ पत्नीः । अमो व्यत्ययेन शसादेशः । न्यूहथुः । 'वह प्रापणे' । अथुसि यजादित्वात् संप्रसारणम् । द्विर्वचनादि । सुदासे । शोभनं ददातीति सुदाः । असुन् । सुदेव्यम्[6] । दिगादित्वाद्यत् ( पा. सू. ४. ३. ५४ ) । 'तित्स्वरितम्' इति स्वरितत्वम् ॥

---

१. क्ष—अङ्गिरोगोत्रजात । २. ट—कारणभूतेन । ३. क्ष—भार्याम् । ४. क्ष-स—पदपूरणः । ५. क्ष-ट—अपि च । ६. क्ष-ट—सुदेव्यं शोभनो देवः सुदेवः । तत्र भवम्; स—शोभनदेवः सुदेवः । तत्र भवं सुदेव्यम् ।

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ॥ २० ॥

याभिः। शंताती इति शम्ऽताती। भवथः। ददाशुषे। भुज्युम्। याभिः। अवथः। याभिः। अध्रिऽगुम्॥ ओम्याऽवतीम्। सुऽभराम्। ऋतऽस्तुभम्।
ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ २०॥

हे अश्विनौ ᵛददाशुषे हवींषि दत्तवते यजमानाय ᵛयाभिः ऊतिभिः ᵛशंताती सुखस्य कर्तारौ ᵛभवथः। ᵛयाभिः च ऊतिभिः ᵛभुज्युं तुग्रस्य पुत्रम् ᵛअवथः। ᵛयाभिः च ᵛअध्रिगुम्। अध्रिगुर्देवानां शमिता। 'अध्रिगुश्चापापश्च उभौ देवानां शमितारौ' (तै. ब्रा. ३. ६. ६. ४) इति श्रुतेः। अपि च ᵛऋतस्तुभम्। ऋतं सत्यं स्तोभत्युच्चारयतीति ऋतस्तुप्। एतत्संज्ञमृषिम् ᵛओम्यावतीम्। ओम्या इति सुखनाम। तद्युक्तां ᵛसुभरां सुखेन भरणीयाम् इषं याभिः ऊतिभिः प्रापयथः। ᵛताभिः सर्वाभिः ᵛऊतिभिः सहास्मानप्यागच्छतम्॥ शंताती। 'शिवशमरिष्टस्य करे' (पा. सू. ४. ४. १४३) इति तातिल्प्रत्ययः। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। ददाशुषे। 'दाश्ट दाने'। लिटः क्वसुः। 'वसोः संप्रसारणम्' इति संप्रसारणम्। 'शासिवसिघसीनां च' इति षत्वम्॥　॥ ३६ ॥

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम्।
मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ २१ ॥

याभिः। कृशानुम्। असने। दुवस्यथः। जवे। याभिः। यूनः। अर्वन्तम्। आवतम्।
मधु। प्रियम्। भरथः। यत्। सरट्ऽभ्यः।
ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्॥ २१॥

स्वानादिषु सोमपालेषु[1] मध्ये कृशानुरेकः सोमपालः। तथा च तैत्तिरीयकं—'हस्त सुहस्त कृशानवेते वः सोमक्रयणाः' (तै. सं. १. २. ७) इति। तं ᵛकृशानुम् ᵛअसने। इषवोऽस्यन्तेऽस्मिन्निति असनः संग्रामः। तस्मिन् संग्रामे हे अश्विनौ ᵛयाभिः ऊतिभिः ᵛदुवस्यथः रक्षथः। तथा ᵛयाभिः च ᵛजवे वेगे प्रवृत्तं ᵛयूनः तरुणस्य पुरुकुत्सस्य ᵛअर्वन्तम् अश्वम् ᵛआवतम् अरक्षतम्। अपि च ᵛयत् ᵛमधु क्षौद्रं ᵛप्रियं सर्वेषामनुकूलवेद्यं[2] तत् ᵛसरड्भ्यः मधुमक्षिकाभ्यः याभिः च ऊतिभिः ᵛभरथः संपादयथः। ᵛताभिः सर्वाभिः ᵛऊतिभिः सहास्मानप्यागच्छतम्॥ असने। 'असु क्षेपणे'। 'करणाधिकरणयोश्च' इति अधिकरणे ल्युट्। सरड्भ्यः। 'सृ गतौ'। सर्तेरटिः॥

---

१. क्ष-ट-'सोमपालेषु' नास्ति। २. क्ष-ट-अनुकूलम्।

याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ २२ ॥

याभिः । नरम् । गोषुऽयुधम् । नृऽसह्ये । क्षेत्रस्य । साता । तनयस्य । जिन्वथः ।
याभिः । रथान् । अवथः । याभिः । अर्वतः ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २२ ॥

हे अश्विनौ ᵛगोषुयुधं गोविषयं युद्धं कुर्वन्तं ᵛनरं यज्ञस्य नेतारं यजमानं ᵛयाभिः ऊतिभिः ᵛनृषाह्ये नृभिः सोढव्ये संग्रामे ᵛजिन्वथः प्रीणयथः रक्षथः इत्यर्थः । तथा ᵛक्षेत्रस्य गृहादिरूपस्य । तनयशब्दो धनवाची । ᵛतनयस्य धनस्य च ᵛसाता सातये संभजनार्थं ᵛयाभिः ऊतिभिः यजमानं रक्षथः । ᵛयाभिः च यजमानानां ᵛरथान् रक्षथः[1] । तदीयान् ᵛअर्वतः अश्वांश्च याभिः ᵛअवथः । ᵛताभिः सर्वाभिः ᵛऊतिभिः सहास्मानप्यागच्छतम् ॥ गोषुयुधम् । 'युध संप्रहारे' । गोषु युध्यते इति गोषुयुत् । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । नृषाह्ये । 'षह मर्षणे' । 'शकिसहोश्च' इति यत् । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । साता । 'वन षण संभक्तौ' । भावे क्तिन् । 'जनसनखनां सञ्झलोः' इति आत्वम् । 'ऊतियूति॰' इत्यादिना क्तिन उदात्तत्वं निपातितम् । 'सुपां सुलुक्॰' इति चतुर्थ्या डादेशः । जिन्वथः । जिविः प्रीणनार्थः । भौवादिकः । इदित्त्वात् नुम् । रथान् । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः ॥

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ २३ ॥

याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतऽक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् ।
आवतम् ॥ याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् ।
ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २३ ॥

हे ᵛशतक्रतू बहुविधकर्माणावश्विनौ ᵛआर्जुनेयम् । अर्जुन इतीन्द्रस्य नाम । तथा च वाजसनेयकम्– 'एतद्वा इन्द्रस्य गुह्यं नाम यदर्जुनः' इति । तस्य पुत्रं ᵛकुत्सं ᵛयाभिः ऊतिभिः ᵛप्र ᵛआवतं प्रकर्षेणारक्षतम् । तथा ᵛतुर्वीतिं[2] ᵛदभीतिं ᵛच याभिः ऊतिभिः ᵛप्र आवतम्[2] । अपि च ᵛयाभिः ᵛध्वसन्तिम् एतत्संज्ञं ᵛपुरुषन्तिम् एतन्नामानं च ऋषिम् ᵛआवतम् अरक्षतम् । ᵛताभिः सर्वाभिः ᵛऊतिभिः सहास्मानपि सुष्ठ्वागच्छतम् ॥ आर्जुनेयम् । 'शुभ्रादिभ्यश्च' ( पा. सू. ४. १. १२३ ) इति चशब्दोऽनुक्तसमुच्चयार्थं इत्युक्तत्वात् ढक् । तुर्वीतिम् । 'तुर्वी हिंसार्थः' । शत्रूंस्तुर्वतीति

---

१. क्ष-ट–अवथः । २. क्ष-ट-स–तुर्वीतिं याभिरूतिभिः प्रावतम् । दभीतिम् एतत्संज्ञं च ऋषिं याभिः प्रावतम् ।

तुर्वीतिः । औणादिक ईतिप्रत्ययः । दभीतिम् । ‘ दम्भु दम्भे ’। औणादिकः कीतिप्रत्ययः । ध्वसन्तिम् । ‘ ध्वंसु गतौ च ’। औणादिको झिङ्प्रत्ययः। ‘ अनिदिताम्॰ ’ इति नलोपः । ‘ झोऽन्तः ’। पुरुषन्तिम् । पुरु सनोति ददातीति पुरुषन्तिः । ‘ क्तिच्क्तौ च संज्ञायाम् ’ इति क्तिच् । ‘ न क्तिचि दीर्घश्च ’ इति अनुनासिकलोपोपधादीर्घयोर्निषेधः ॥

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥ २४ ॥

अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।
अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ २४ ॥

हे अश्विनौ ᵛअस्मे अस्माकं ᵛवाचम् ᵛअप्नस्वतीम् । अप्न इति कर्मनाम । विहितैः कर्मभिः संयुक्तां ᵛकृतं कुरुतम् । तथा ᵛनः अस्माकं ᵛमनीषां बुद्धिं हे ᵛवृषणा कामानां वर्षकौ ᵛदस्रा शत्रूणामुपक्षपयितारावश्विनौ वेदार्थज्ञानसमर्थां कुरुतम् । अपि च यस्मात् युवामेवंगुणविशिष्टौ तस्मात् ᵛवां युवाम् ᵛअवसे रक्षणाय ᵛनि ᵛह्वये नितरामाह्वये । कदा । ᵛअद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे । तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते । आहूतौ ᵛच युवां ᵛवाजसातौ वाजस्यान्नस्य संभजने । यद्वा । संग्रामनामैतत् । संग्रामे ᵛनः अस्माकं ᵛवृधे वर्धनाय ᵛभवतम् ॥ अप्नस्वतीम् । ‘ आपः कर्माख्यायां ह्रस्वो नुट् च वा ’ इति असुन् नुडागमश्च । ‘ तदस्यास्ति॰ ’ इति मतुप् । ‘ मादुपधायाः॰ ’ इति मतुपो वत्वम् । ‘ तसौ मत्वर्थे ’ इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । अस्मे । ‘ सुपां सुलुक्॰ ’ इति षष्ठ्याः शेआदेशः । कृतम् । करोतेर्लोटि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । अद्यूत्ये । ‘ द्युत दीप्तौ ’। ‘ ऋहलोर्ण्यत् ’ इति भावे ण्यत् । वर्णव्यापत्त्या ऊकारः । द्यूत्यं प्रकाशनमस्मिन्नास्तीति बहुव्रीहौ व्यत्ययेनान्तस्वरितत्वम् । नि ह्वये । ‘ निसमुपविभ्यो ह्वः ’ इति आत्मनेपदम् । वृधे । ‘ वृधु वृद्धौ ’। संपदादिलक्षणो भावे क्विप् । ‘ सावेकाचः॰ ’ इति विभक्तेरुदात्तत्वम् ॥

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २५ ॥

द्युऽभिः । अक्तुऽभिः । परि । पातम् । अस्मान् । अरिष्टेभिः । अश्विना । सौभगेभिः ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥२५॥

हे अश्विनौ ᵛद्युभिः दिवसैः ᵛअक्तुभिः रात्रिभिश्च ᵛअस्मान् स्तोतॄन् ᵛपरि ᵛपातं परितो रक्षतं सर्वदास्मान् रक्षतमित्यर्थः । तथा ᵛअरिष्टेभिः अहिंसितैः ᵛसौभगेभिः सुभगत्वैः सुभगत्वापादकैर्धनैः अस्मान् रक्षतम् । यदस्माभिः प्रार्थितं ᵛनः अस्मदीयं ᵛतत् मित्रादयः षड्देवताः ᵛममहन्तां

पूजयन्तु । उतशब्दः समुच्चये ॥ द्युभिः । 'दिव उत्' इति उत्वम् । 'दिवो झल्' (पा. सू. ६. १. १८३) इति 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तत्वस्य प्रतिषेधः । अरिष्टेभिः । 'रिष हिंसायाम्' । 'निष्ठा' इति क्तः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्[1] । 'बहुलं छन्दसि' इति भिसः ऐसभावः । अश्विना । 'सुपां सुलुक्°' इति विभक्तेः आकारः । 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वम् । सौभगेभिः । शोभनो भगः श्रीर्यस्यासौ सुभगः । तस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धिर्न भवति, तस्य 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विकल्पितत्वात् । पूर्ववत् ऐसभावः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् ॥ ॥ ३७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्[2] । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण[3] विरचिते
माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
प्रथमाष्टके सप्तमोऽध्यायः समाप्तः ॥

---

१. क्ष-ट-समासोत्तरपदप्रकृतिस्वरत्वम् । २. क्ष-विनाशयन् । ३. क्ष-सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इत्थं[1] सप्तममध्यायं व्याख्याय अष्टमोऽध्यायो व्याख्यातुमारभ्यते[1]। प्रथमे मण्डले षोडशेऽनुवाके सप्त सूक्तानि गतानि। ‘ इदम् ’ इति विंशत्यृचमष्टमं सूक्तम् । अत्रानुक्रम्यते–‘ इदं विंशतिरुषस्यं द्वितीयोऽर्धर्चो रात्रेश्च ’ इति। ‘ ऋषिश्चान्यस्मात् ’ इति परिभाषया अनुवृत्तेः आङ्गिरसः कुत्स ऋषिः। अनादेशपरिभाषया त्रिष्टुप् छन्दः। उषा देवता। द्वितीयस्यार्धर्चस्य रात्रिरपि । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दसि एतत्सूक्तम्। सूत्रितं च–‘ इदं श्रेष्ठं पृथू रथ इति सूक्ते ’ ( आश्व. श्रौ. ४. १४ ) इति। आश्विनशस्त्रे चेदं सूक्तं प्रातरनुवाकातिदेशात्[2] ॥

**इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा।**

**यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥**

इदम्। श्रेष्ठम्। ज्योतिषाम्। ज्योतिः। आ। अगात्। चित्रः। प्रऽकेतः। अजनिष्ट। विऽभ्वा।

यथा। प्रऽसूता। सवितुः। सवाय। एव। रात्री। उषसे। योनिम्। अरैक् ॥ १ ॥

Vज्योतिषां ग्रहनक्षत्रादीनां द्योतमानानां मध्ये Vइदम् उषआख्यं Vज्योतिः Vश्रेष्ठं प्रशस्यतमम्[3]। अस्य कोऽतिशय इति चेत् उच्यते। नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत्। चन्द्रस्तु यद्यप्यन्यत् प्रकाशयति तथापि न[4] विस्पष्टप्रकाशः[4]। औषसं तु ज्योतिः युगपदेव सर्वस्य जगतः अन्धकारनिराकरणेन विशेषेण प्रकाशकम्। अतः प्रशस्यतममित्यर्थः[5]। तादृशं ज्योतिः Vआगात् पूर्वस्यां दिश्यागमत्। आगते च तस्मिन् Vचित्रः चायनीयः Vप्रकेतः अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकः[6] तदीयो रश्मिः Vविभ्वा विभुर्व्याप्तः सन्[7] Vअजनिष्ट प्रादुरभूत्। किंच Vयथा Vरात्री रात्रिः स्वयं Vसवितुः सूर्यसकाशात् Vप्रसूता उत्पन्ना। सूर्यो हि अस्तं गच्छन् रात्रिं जनयति। तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात्। एवमेव रात्रिरपि Vउषसे Vसवाय उषस उत्पत्तये तदर्थं Vयोनिं स्थानं स्वकीयापरभागलक्षणम् Vअरैक् आरेचितवती कल्पितवतीत्यर्थः। यद्वा। प्रसूता रात्रिसकाशादुत्पन्नोषाः सवितुः सूर्यस्य सवाय प्रसवाय जन्मने यथा भवति एवं रात्रिरपि उषसे उषसो यज्जन्म तदर्थं योनिं स्वापरभागलक्षणं स्थानं कृतवती। अत्र निरुक्तम्–‘ इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत्स्थानम् ’ ( निरु. २. १९ ) इति॥ श्रेष्ठम्। प्रशस्यशब्दात् आतिशायनिकः इष्ठन्। ‘ प्रशस्यस्य श्रः ’( पा. सू. ५. ३. ६० )

---

१. क्ष-ट-ठ–इत्थं सप्तमोऽध्यायो व्याख्यातः। अष्टमो व्याख्यायते; स–इत्थं सप्तममध्यायं व्याख्याय अष्टमाध्यायव्याख्यानमारभ्यते। २. क्ष-ट-ठ–प्रातरनुवाकन्यायेनेत्यतिदेशात्। ३. क्ष-ट-ठ–प्रशस्तम्। ४. क्ष-ट-ठ–न विस्पष्टः प्रकाशः; स–अस्पष्टप्रकाशः। ५. क्ष-ट-ठ–प्रशस्ततमामित्यर्थः। ६. द-ध-ल–प्रकाशकः। ७. क्ष-ट-ठ–‘ सन् ’ नास्ति।

इति आदेशः । 'प्रकृत्यैकाच्' (पा. सू. ६. ४. १६३) इति प्रकृतिभावात् टिलोपाभावः । अगात् । एतेः लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था०' इति सिचो लुक् । प्रकेतः । 'कित ज्ञाने' । अन्तर्भावितण्यर्थात् कर्मणि घञ् । थाथादिना उत्तरपदान्तोदात्तत्वम् । अजनिष्ट । 'जनी प्रादुर्भावे' । लुङि सिच इडागमः । विभ्वा । 'विप्रसंभ्यो ड्वसंज्ञायाम्' इति भवतेः डुप्रत्ययः । 'सुपां सुलुक्०' इत्यादिना सोः आकारादेशः । 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते 'छन्दस्युभयथा' इति यणादेशः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । विपूर्वात् भवतेः औणादिको डुन्प्रत्ययः[1] । नित्त्वादाद्युदात्तत्वम् । प्रसूता । 'पूङ् प्राणिप्रसवे' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सवाय । 'छन्दसि जवसवौ वक्तव्यौ' (पा. सू. ३. ३. ५६. ४) इति निपातनात् अच् । चित्त्वादन्तोदात्तत्वम् । 'अणोऽप्रगृह्यस्यानुनासिकः' इति संहितायाम् अकारः सानुनासिकः । एव । 'निपातस्य च' इति संहितायां दीर्घः । रात्री । 'रात्रेश्चाजसौ' इति ङीप् । 'यस्येति च' इति इकारलोपः । अरैक् । 'रिचिर् विरेचने' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । लघूपधगुणे 'हल्ङ्याब्भ्यः०' इति तिलोपः । वर्णव्यापत्त्या[2] व्यत्ययेन एकारस्य ऐकारः[2] ॥

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥

रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊँ इति । कृष्णा । सदनानि । अस्याः ॥ समानबन्धू इति समानऽबन्धू । अमृते इति । अनूची इति । द्यावा । वर्णम् । चरतः । आमिनाने इत्याऽमिनाने ॥ २ ॥

श्वेत्या इत्युषसो नामधेयम् । ᵛरुशती दीप्ता ᵛश्वेत्या श्वेतवर्णोषाः । ᵛरुशद्वत्सा रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता । यथा मातुः समीपे वत्सः संचरति एवमुषसः समीपे सूर्यस्य नित्यम्[3] अवस्थानात्तद्वत्सत्वम् । अथवा यथा वत्सो मातुः स्तन्यं[4] रसं[4] पिबन्[5] हरति[5] एवमुषसोऽवश्यायाख्यं रसं पिबन् वत्स इत्युच्यते । तादृशी सती ᵛआगात् आगतवती । आगतायाः ᵛअस्याः उषसः ᵛकृष्णा कृष्णवर्णा रात्रिः ᵛसदनानि स्थानानि स्वकीयान्यार्धयामलक्षणानि ᵛअरैक् आरेचितवती[6] कल्पितवती दत्तवतीत्यर्थः । ᵛउ इत्येतत् पादपूरणम्[7] । अपि चैते रात्र्युषसौ ᵛसमानबन्धू समानेनैकेन सूर्याख्येन बन्धुना सख्या युक्ते । यद्वा । सूर्येण सह संबद्धे । यथोषाः उदेष्यता सूर्येण संबद्धा एवं रात्रिरपि अस्तं यता[8] सूर्येण संबद्धा । ᵛअमृते मरणरहिते कालात्मकतया नित्यत्वात् ᵛअनूची अन्वञ्चन्त्यौ । प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ । यद्वा । सूर्यगत्यनुसारेण गच्छन्त्यौ । एवंभूते ᵛवर्णं सर्वेषां प्राणिनां रूपम् ᵛआमिनाने जरयन्त्यौ । यद्वा । स्वकीयं रूपं हिंसन्त्यौ । उषसा नैशं तमो निवर्त्यते प्रकाशात्मकमुषसो रूपं रात्र्या । एवंविधे सत्यौ ᵛद्यावा द्योतमाने ᵛचरतः प्रतिदिवसमावर्तेते ।

---

१. क्ष-ट-ड्वुन्प्रत्ययः । २. क्ष-ट-ठ-वर्णव्यापत्त्या व्यत्ययेन वा ऐकारः; स-वर्णव्यत्ययेन एकारस्य ऐकारः । ३. च-छ-ण-फ-अपि । ४. क्ष-ट-ठ-स्तन्यरसम् । ५. क्ष-ट-पिबन् विहरति; च-छ-ण-पिबति; ध-पिबन एति ६. क्ष-ट-ठ-रेचितवती । ७. क्ष-ट-ठ-पदपूरणम् । ८. क्ष-ट-आयता ।

यद्वा। द्यावा नभसा अन्तरिक्षमार्गेण चरतः प्रतिदिवसं गच्छतः। अत्र निरुक्तं–'रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा। रुशती श्वेत्यागात् श्वेत्या श्वेततेररिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची अनूच्याविति‌ीतरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे' (निरु. २. २०) इति॥ श्वेत्या। 'श्विता वर्णे'। अस्मात् ण्यन्तात् 'अचो यत्' इति भावे यत्। णिलोपः। अर्शआदित्वात् मत्वर्थीयः अच्। अमृते। मृतं मरणमनयोर्नास्तीति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। अनूची। अनुपूर्वादञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन्। 'अनिदिताम्°' इति नलोपः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः। 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम्। 'सुपां सुलुक्°' इति विभक्तेर्लुक्। आमिनाने। 'मीङ् हिंसायाम्'। क्रैयादिकः। शानचि 'मीनातेर्निगमे' इति ह्रस्वत्वम्॥

समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे॥ ३॥

समानः। अध्वा। स्वस्रोः। अनन्तः। तम्। अन्याऽअन्या। चरतः। देवशिष्टे इति देवऽशिष्टे।
न। मेथेते इति। न। तस्थतुः। सुमेके इति सुऽमेके।
नक्तोषसा। सऽमनसा। विरूपे इति विऽरूपे॥ ३॥

स्वस्रोः भगिन्योः रात्र्युषसोः अध्वा संचरणसाधनभूतो मार्गः समानः एक एव। येनैव[1] आकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपि। स च मार्गः अनन्तः अवसानरहितः। तं मार्गं देवशिष्टे देवेन द्योतमानेन सूर्येण अनुशिष्टे शिक्षिते सत्यौ अन्यान्या एकैका चरतः क्रमेण गच्छतः। अपि च सुमेके शोभनमेहने सर्वेषामुत्पादकत्वात् शोभनप्रजनने नक्तोषासा रात्रिरुषाश्च विरूपे तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते अपि[2] समनसा समानमनस्के ऐकमत्यं प्राप्ते सत्यौ न मेथेते परस्परं न हिंस्तः। तथा न तस्थतुः क्वचिदपि न तिष्ठतः। सर्वदा लोकानुग्रहार्थं गच्छतः इत्यर्थः॥ अन्यान्या। 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्' (पा. म. ८. १. १२. ११) इति अन्यशब्दस्य द्विर्भावः। 'तस्य परमाम्रेडितम्' इति आम्रेडितसंज्ञायाम् 'अनुदात्तं च' इति आम्रेडितानुदात्तत्वम्। देवशिष्टे। 'शासु अनुशिष्टौ'। अस्मात् कर्मणि निष्ठा। 'यस्य विभाषा' इति इट्प्रतिषेधः। 'शास इदङ्हलोः' (पा. सू. ६. ४. ३४) इति उपधाया इत्वम्। 'शासिवसिघसीनां च' इति षत्वम्। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। मेथेते। 'मिथृ मेथृ मेधाहिंसनयोः'। भौवादिकः। अनुदात्तेत्। सुमेके। 'मिह सेचने'। भावे घञ्। शोभनो मेहो ययोस्ते। व्यत्ययेन ककारः। उत्तरपदस्य ञित्स्वरेणाद्युदात्तत्वम्[3]। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। नक्तोषासा। 'सुपां सुलुक्°' इति विभक्तेराकारः। 'अन्येषामपि दृश्यते' इति संहितायामुपधादीर्घः॥

---

१. च-छ-फ–येन। २. ट-ठ–अपि च। ३. क्ष-ट-ठ–ञित्स्वरेणाद्युदात्तत्वात्।

भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।
प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा ॥ ४ ॥

भास्वती । नेत्री । सूनृतानाम् । अचेति । चित्रा । वि । दुरः । नः । आवरित्यावः ।
प्रऽअर्प्य । जगत् । वि । ऊँ इति । नः । रायः । अख्यत् ।
उषाः । अजीगः । भुवनानि । विश्वा ॥ ४ ॥

ᵛभास्वती विशिष्टप्रकाशनयुक्ता । सूनृतेति वाङ्नाम । ᵛसूनृतानां वाचां ᵛनेत्री उत्पादयित्री । उषसः प्रादुर्भावानन्तरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वन्ति । एवंभूता उषाः ᵛअचेति अस्माभिः अज्ञायि । ᵛचित्रा चायनीया ज्ञाता[1] सा ᵛनः अस्माकं ᵛदुरः द्वाराणि तमसा तिरोहितानि ᵛविᵛआवः व्यवृणोत् । यथास्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः[2] । अपि च ᵛजगत् सर्वं भुवनं ᵛप्रार्प्य प्रकाशं गमयित्वा ᵛनः अस्माकं ᵛरायः धनानि वि ᵛअख्यत् विशिष्टप्रकाशनयुक्तान्यकरोत् । ᵛउ इत्येतत् पादपूरणम्[3] । सैषा ᵛउषाः ᵛविश्वा ᵛभुवनानि सर्वाणि भुवनानि तमसा तिरोहितत्वेन अविद्यमानकल्पानि ᵛअजीगः उद्गिरति स्वमुखान्निर्गमयति । स्वकीयेन प्रकाशेन तमो निःसार्य पुनरुत्पन्नानीव करोतीत्यर्थः ॥ नेत्री । 'णीञ् प्रापणे' । तृच् । 'ऋन्नेभ्यो ङीप्' । 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वम् । अचेति । 'चिती संज्ञाने' । दुरः । द्वारशब्दस्य 'रयेर्मतौ बहुलम्' (पा. सू. ६. १. ३७. ६) इति बहुलवचनात् संप्रसारणम् । आवः । 'वृञ् वरणे'। लुङि 'मन्त्रे घस°' इति च्लेर्लुक् । गुणः । 'हल्ङ्याब्भ्यः°' इति तिलोपः । 'छन्दस्यपि दृश्यते' इति आडागमः । प्रार्प्य । 'ऋ गतौ' । णौ 'अर्तिह्री°' इत्यादिना पुक् । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । अख्यत् । 'ख्या प्रकथने' । लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेरङादेशः । अजीगः । 'गॄ निगरणे'। लङि तिपि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्वचनोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च, बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । छान्दसः ईकारः । यद्वा । अस्मात् ण्यन्तात् लुङि चङि द्विर्भावसन्वद्भावेत्वदीर्घाः । छान्दसः चङो लोपः ॥

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।
दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ५ ॥

जिह्मऽश्ये । चरितवे । मघोनी । आऽभोगये । इष्टये । राये । ऊँ इति । त्वम् ।
दभ्रम् । पश्यत्ऽभ्यः । उर्विया । विऽचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥ ५ ॥

मघोनी इत्युषसो नामधेयम् । ᵛमघोनी धनवती उषाः ᵛजिह्मश्ये जिह्मं वक्रं शयानाय पुरुषाय ᵛचरितवे चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गन्तुं व्युच्छन्ती भवति । त्वम् । अयमेकशब्दपर्यायः सर्वनामशब्दः । यदाह—'त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्' (निरु. १.७) इति । ᵛत्वम् एकं प्रति

---

१. क्ष-ट-ठ-'ज्ञाता' नास्ति । २. क्ष-ट-ठ—प्रकाशितवतीत्यर्थः । ३. क्ष-ट-ठ—पदपूरणम् ।

ᐯआभोगये आभोगाय शब्दादिविषयार्थं तथा अपरं प्रति ᐯइष्टये यागार्थं तथा अन्यं प्रति ᐯराये धनार्थं च व्युच्छन्तीति शेषः । उशब्दश्चार्थे । अपि च ᐯदभ्रम् अल्पं ᐯपश्यद्भ्यः अन्धकारावृतत्वेन ईषद्द्रष्टृभ्यो मनुष्येभ्यः ᐯविचक्षे विशिष्टप्रकाशाय व्युच्छन्ती ᐯउर्विया उर्वी विस्तीर्णा ᐯउषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेन[1] उद्गीर्णानीव करोति ॥ जिह्मश्ये । 'शीङ् स्वप्ने' । जिह्मं शेते इति जिह्मशीः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'एरनेकाचः°' इति यण् । 'उदात्तस्वरितयोर्यणः°' इति विभक्तेः स्वरितत्वम् । आभोगये । आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः[2] । यद्वा । आङ्पूर्वात् भुजेः बहुलवचनादौणादिकः क्विप्रत्ययः कुत्वं च । उर्विया । 'इयाडियाजीकाराणामुपसंख्यानम्' ( पा. सू. ७. १. ३९.१ ) इति उर्वीशब्दादुत्तरस्य सोः डियाजादेशः[3] । विचक्षे । 'चक्षिङ् व्यक्तायां वाचि' । विपूर्वादस्मात् संपदादिलक्षणो भावे क्विप् ॥  ॥ १ ॥

क्षत्राय॑ त्वं श्रव॑से त्वं म॑ही॒या इ॒ष्टये॑ त्व॒मर्थ॑मिव त्व॒मि॒त्यै ।
विस॑दृशा जी॒वि॒ताभि॑प्र॒चक्ष॑ उ॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑ ॥ ६ ॥

क्ष॒त्राय॑ । त्वम् । श्रव॑से । त्वम् । म॒ही॒यै । इ॒ष्टये॑ । त्वम् । अर्थ॑म्ऽइव । त्वम् । इ॒त्यै ।
वि॒ऽस॑दृशा । जी॒वि॒ता । अ॒भि॒ऽप्र॒चक्षे॑ । उ॒षाः । अ॒जी॒ग॒रिति॑ । भुव॑नानि । विश्वा॑ ॥ ६ ॥

ᐯक्षत्राय । धननामैतत् । धनार्थं ᐯत्वम् एकं प्रति उषा व्युच्छन्ती[4] इति शेषः । तथा ᐯश्रवसे अन्नार्थं ᐯत्वम् एकं प्रति ᐯमहीयै महत्यै ᐯइष्टये[5] अग्निष्टोमादिमहायज्ञार्थं[6] ᐯत्वम् एकं प्रति व्युच्छन्ती[7] । तथा ᐯअर्थमिव अपेक्षितमर्थं प्रति ᐯइत्यै गमनार्थं ᐯत्वम् एकं प्रति व्युच्छन्ती[8] । अपि च ᐯविसदृशा विलक्षणानि नानारूपाणि ᐯजीविता जीवितानि जीवनोपायभूतानि[9] कृषिवाणिज्यादीनि ᐯअभिप्रचक्षे आभिमुख्येन प्रकाशयितुं व्युच्छन्ती ᐯउषाः सर्वाणि भूतजातानि तमसा निगीर्णानि ᐯअजीगः[10] प्रकाशनेन[11] उद्गीर्णानीवाकरोत् ॥ त्वम्[12] । 'त्वसमसिमनेमेत्यनुच्चानि' ( फि. सू. ७८ ) इति सर्वानुदात्तत्वम्[12] । महीयै । मह्यै । महेः 'इन् सर्वधातुभ्यः' इति इन्प्रत्ययः । 'कृदिकारादक्तिनः' इति ङीष् । 'उदात्तयणः°' इति विभक्तेरुदात्तत्वम् । छान्दसः ईकारोपजनः । यद्वा । महीशब्दादुत्तरस्य चतुर्थ्येकवचनस्य 'याडापः' ( पा. सू. ७. ३. ११३ ) इति व्यत्ययेन याडागमः । छान्दसमन्तोदात्तत्वम् । विसदृशा । 'त्यदादिषु दृशोऽनालोचने कञ्च' इत्यत्र 'समानान्ययोश्च' ( पा. सू. ३. २. ६०. १) इति वचनात् दृशेः कञ् । 'समानस्य च्छन्दसि' इति सभावः । विगतसादृश्यानि विसदृशानि । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अभिप्रचक्षे । चक्षेः 'तुमर्थे सेसेन्°' इति सेन्प्रत्ययः । 'स्कोः संयोगाद्योः°' इति कलोपः । कत्वषत्वे ॥

---

१. क्ष-ट—प्रकाशेन; ठ—प्रकाशनेन । २. च-छ-फ—यकारोपजनः छान्दसः । ३. क्ष-ट-ठ—इयाजादेशः । ४. क्ष-ट-ठ—व्युच्छती । ५. क्ष-ट-ठ—इष्टये यागाय । ६. क्ष-ट—अग्निष्टोमादिमहायागार्थम् । ७. क्ष-ट-ठ—'व्युच्छन्ती' नास्ति । ८. क्ष-ट-ठ—'व्युच्छन्ती' नास्ति । ९. स—जीवितोपायभूतानि । १०. क्ष-ट-ठ—'अजीगः' नास्ति । ११. क्ष-ट-ठ—प्रकाशेन । १२. क्ष-ट-ठ—'त्वम्......सर्वानुदात्तत्वम्' नास्ति ।

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः ।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ ॥ ७ ॥

एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउच्छन्ती । युवतिः । शुक्रऽवासाः ।
विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उच्छ ॥ ७ ॥

दिवो दुहिता व्योम्नो दुहितृस्थानीया । तस्य हि पूर्वार्धे उषा उत्पद्यते । सा एषा व्युच्छन्ती तमो वर्जयन्ती प्रत्यदर्शि सर्वैः प्राणिभिर्दृष्टाभूत् । कीदृशी सा । युवतिः यावयित्री फलानां पुरुषैः प्रापयित्री नित्ययौवनोपेता वा । शुक्रवासाः श्वेतवस्त्रा निर्मलदीप्तिर्वा । तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिव्याः संबन्धिनः वस्वः धनस्य ईशाना ईश्वरी । हे सुभगे शोभनधने उषः तादृशी त्वम् अद्य अस्मिन् काले इह अस्मिन् देवयजनदेशे व्युच्छ तमांसि विवासय वर्जयेत्यर्थः ॥ दिवः[1] । ' ऊडिदम्° ' इति विभक्तेरुदात्तत्वम्[1] । व्युच्छन्ती । ' उछी विवासे ' । विवासो वर्जनम् । तौदादिकः[2] । युवतिः । ' यूनस्तिः ' ( पा. सू. ४. १. ७७) । शुक्रवासाः । ' वस आच्छादने ' । वस्ते सर्वमाच्छादयतीति प्रकाशो वासः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ईशाना । ' ईश ऐश्वर्ये ' । अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । पार्थिवस्य । ' पृथिव्या ञाञौ ' इति प्राग्दीव्यतीयः अञ्प्रत्ययः । वस्वः । लिङ्गव्यत्ययः । ' घेर्ङिति ' इति गुणस्य ' जसादिषु च्छन्दसि वावचनम् ' इति विकल्पितत्वादभावे यणादेशः ॥

परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् ।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ॥ ८ ॥

पराऽयतीनाम् । अनु । एति । पाथः । आऽयतीनाम् । प्रथमा । शश्वतीनाम् ।
विऽउच्छन्ती । जीवम् । उत्ऽईरयन्ती । उषाः । मृतम् । कम् । चन । बोधयन्ती ॥ ८ ॥

परायतीनां परागच्छन्तीनाम् अतीतानामुषसां संबन्धि पाथः अन्तरिक्षैकदेशलक्षणं स्थानम् । ' पाथोऽन्तरिक्षं पथा व्याख्यातम् ' ( निरु. ६. ७ ) इति यास्कः । अद्यतन्युषाः अन्वेति अनुगच्छति । अतीता उषसो यथा व्युष्टा एवमेवैषापि व्युच्छतीत्यर्थः । तथा आयतीनाम् आगच्छन्तीनां शश्वतीनां बह्वीनामुषसां प्रथमा आद्या भवति । एषा यथा वर्तते एवमेव[3] आगामिन्योऽप्युषस इत्यर्थः । तादृशी व्युच्छन्ती तमो वर्जयन्ती जीवं प्राणिनां जीवात्मानम् उदीरयन्ती शयनादूर्ध्वं प्रेरयन्ती उषाः मृतं स्वापसमये प्रलीनेन्द्रियत्वात् मृतमिव सन्तं कं चन कमपि पुरुषं बोधयन्ती पुनः इन्द्रियप्रवेशेन[4] चेतनं कुर्वती प्रवर्तते[5] इति शेषः ॥ परायतीनाम् । ' इण् गतौ ' । लटः शतृ । ' इणो यण् ' ' उगितश्च ' इति ङीप् । ' ङ्याश्छन्दसि बहुलम् ' इति नाम उदात्तत्वम् ॥

---

१. क्ष-ट-ठ–' दिवः ........उदात्तत्वम् ' नास्ति । २. क्ष-ट-ठ–भौवादिकः । ३. क्ष-ट-ठ–एवम् । ४. क्ष-ट-ठ–इन्द्रियप्रवेशनेन । ५. क्ष-ट-ठ–वर्तते ।

उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ॥ ९ ॥

उषः । यत् । अग्निम् । सम्ऽइधे । चकर्थ । वि । यत् । आवः । चक्षसा । सूर्यस्य ।
यत् । मानुषान् । यक्ष्यमाणान् । अजीगरिति । तत् । देवेषु । चकृषे । भद्रम् । अप्नः ॥९॥

हे उषः त्वम् अग्निं गार्हपत्यादिरूपं समिधे समिन्धनाय प्रज्वलनार्थं[1] यत् चकर्थ कृतवती । उषःकाले ह्यग्नयो होमार्थमुपसमिध्यन्ते । अपि च तमसा तिरोहितं जगत् सूर्यस्य चक्षसा प्रकाशेन यत् वि आवः व्यवृणोः तमसा विश्लिष्टमकरोः । तथा मानुषान् मनोः पुत्रान् मनुष्यान् यक्ष्यमाणान् यागं करिष्यतस्त्वं यत् अजीगः पूर्वं तमसा ग्रस्तान् प्रकाशेन उद्गीर्णानिवाकरोः । हे उषः देवेषु मध्ये त्वमेव भद्रं भजनीयं तत् एतत्त्रिविधम् अप्नः कर्म चकृषे कृतवती ॥ आवः । 'वृञ् वरणे' । लुङि 'मन्त्रे घस॰' इति च्लेर्लुक् । गुणे 'हल्ङ्याब्भ्यः॰' इति सिलोपः । 'छन्दस्यपि दृश्यते' इति आडागमः । मानुषान् । 'मनोर्जातावञ्यतौ षुक् च' इति अञ् षुगागमश्च ॥

कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ १० ॥

कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः । च । नूनम् । विऽउच्छान् ।
अनु । पूर्वाः । कृपते । वावशाना । प्रऽदीध्याना । जोषम् । अन्याभिः । एति ॥ १० ॥

समया इत्यव्ययं समीपवचनम् । उषाः समया भवाति समीपस्था भवतीति यत् एतत् तत् कियति काले प्रवृत्तं परिसमाप्तं वा इति आकारः प्रश्नार्थः । एतदुक्तं भवति । उषा येन कालेन संयुक्ता स कालः कियान् तस्य कालस्य किं परिमाणमिति । अनेन उषसोऽनन्तत्वमुक्तम् । तदेव स्पष्टीकरोति । पुरा याः उषसः व्यूषुः व्युष्टाः संजाताः । नूनम् अवश्यमितः परं याश्च उषसः व्युच्छान् व्युच्छन्ति व्युष्टा भविष्यन्ति । तत्र पूर्वाः व्युष्टा अतीता उषसः वावशाना कामयमाना इदानीं वर्तमाना उषाः अनु कृपते अनुकल्पते समर्था भवति । अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः । तथा प्रदीध्याना प्रकर्षेण दीप्यमाना उषाः[2] अन्याभिः आगामिनीभिः[3] उषोभिः जोषं सह एति संगच्छते । आगामिन्योऽपि एतदीयं[4] प्रकाशम् अनुकुर्वन्ति[5] इत्यर्थः ॥ कियति । किं परिमाणमस्य । 'किमिदंभ्यां वो घः' (पा. सू. ५. २. ४०) इति घत्वविधानसामर्थ्यात् किंशब्दादपि परिमाणार्थे वतुप् वकारस्य घत्वम् । 'इदंकिमोरीश्की' (पा. सू. ६. ३. ९०) इति किमः कीआदेशः । घस्य इयादेशे 'यस्य॰' इति लोपः । प्रत्ययाद्युदात्तत्वम् । छान्दसः सांहितिको दीर्घः । भवाति । लेटि आडागमः । व्यूषुः । विपूर्वो वसतिर्व्युच्छने वर्तते । लिटि उसि कित्त्वे यजादित्वात् संप्रसारणं द्विर्वचनादि । व्युच्छान् । 'उछी विवासे' । विवासो[6] वर्जनम्[6] । लेटि आडागमः । संयोगान्तस्य

---

१. स–प्रज्वालनार्थम् ।　२. क्ष-ट-ठ–एषा ।　३. क्ष-ट-ठ–'आगामिनीभिः' नास्ति ।　४. क्ष-ट-ठ–एतम् ।　५. क्ष-ट-ठ–अनुकुर्वते ।　६. क्ष-ट-ठ–'विवासो वर्जनम्' नास्ति ।

लोपः । कृपते । 'कृपू सामर्थ्ये' । व्यत्ययेन शः । वावशाना । 'वश कान्तौ' । अस्मात् यङ्लुगन्तात् ताच्छीलिकः चानश् । प्रदीध्याना । 'दीधीङ् दीप्तिदेवनयोः' । लटः शानच् । अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' इति अभ्यस्तसंज्ञायाम् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ॥ २ ॥

ई॒युष्टे ये पूर्व॑तरा॒मप॑श्यन्व्यु॒च्छन्ती॑मु॒षसं॒ मर्त्या॑सः ।
अ॒स्माभि॑रू॒ नु प्र॑ति॒चक्ष्या॑भू॒दो ते य॑न्ति॒ ये अ॑प॒रीषु॒ पश्या॑न् ॥ ११ ॥

ई॒युः । ते । ये । पूर्व॑ऽतराम् । अप॑श्यन् । वि॒ऽउ॒च्छन्ती॑म् । उ॒षस॑म् । मर्त्या॑सः ॥ अ॒स्माभि॑ः । ऊँ॒ इति॑ । नु । प्र॒ति॒ऽचक्ष्या॑ । अ॒भू॒त् । ओ इति॑ । ते । य॒न्ति॒ । ये । अ॒प॒रीषु॑ । पश्या॑न् ॥ ११ ॥

ᵛये ᵛमर्त्यासः मरणधर्माणो मनुष्याः ᵛव्युच्छन्तीं विवासयन्तीं ᵛपूर्वतराम् अतिशयेन पूर्वां विप्रकृष्टाम् ᵛउषसम् ᵛअपश्यन् दृष्टवन्तः ᵛते मनुष्याः ᵛईयुः गताः[1] । तथा ᵛअस्माभिः अपि ᵛनु इदानीं ᵛप्रतिचक्ष्या प्रकर्षेण द्रष्टव्या ᵛअभूत् जाता । तथा ᵛअपरीषु भाविनीषु रात्रिषु ᵛये मनुष्याः एतामुषसं ᵛपश्यान् पश्यन्ति ᵛते । आ उ इति निपातद्वयसमुदायः । तत्र उ इत्येतदवधारणे । एव ᵛयन्ति आगच्छन्त्येव । कालत्रयेऽप्येषा व्याप्य वर्तते इत्यर्थः ॥ ईयुः । 'इण् गतौ' । लिटि उसि 'इणो यण्' इति यणादेशः । 'द्विर्वचनेऽचि' इति तस्य स्थानिवद्भावात् द्विर्भावे 'दीर्घ इणः किति' ( पा. सू. सू. ७. ४. ६९ ) इति अभ्यासस्य दीर्घत्वम् । ते । 'युष्मत्तत्तक्षुःष्वन्तःपादम्' इति सकारस्य षत्वं ष्टुत्वं च । मर्त्यासः । 'आज्जसेरसुक्' ॥

या॒व॒यद्द्वे॑षा ऋत॒पा ऋ॑ते॒जाः सु॑म्ना॒वरी॑ सू॒नृता॑ ई॒रय॑न्ती ।
सु॒म॒ङ्ग॒लीर्बिभ्र॑ती दे॒ववी॑तिमि॒हाद्यो॑षः॒ श्रेष्ठ॑तमा॒ व्यु॑च्छ ॥ १२ ॥

य॒व॒य॒त्ऽद्वे॑षाः । ऋ॒त॒ऽपाः । ऋ॒ते॒ऽजाः । सु॒म्न॒ऽवरी॑ । सू॒नृता॑ः । ई॒रय॑न्ती ।
सु॒ऽम॒ङ्ग॒लीः । बिभ्र॑ती । दे॒व॒ऽवी॑तिम् । इ॒ह । अ॒द्य । उ॒षः॒ । श्रेष्ठ॑ऽतमा । वि । उ॒च्छ॒ ॥ १२ ॥

ᵛयावयद्द्वेषाः । यावयन्ति अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टॄणि राक्षसादीनि यया सा तथोक्ता । न ह्युष्यसि जातायां राक्षसादयोऽवतिष्ठन्ते यतस्ते निशाचराः । ᵛऋतपाः ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री ᵛऋतेजाः यज्ञार्थं प्रादुर्भूता । सत्यामुषसि अहनि[2] यागा अनुष्ठीयन्ते अतो[3] यज्ञार्थं जातेत्युच्यते[3] । ᵛसुम्नावरी । सुम्नमिति सुखनाम तद्वती । ᵛसूनृताः । वाङ्नामैतत् । पशुपक्षिमृगादीनां वचांसि ᵛईरयन्ती प्रेरयन्त्युत्पादयन्ती । ᵛसुमङ्गलीः सौमङ्गल्योपेता । पत्या कदाचिदपि न वियुक्तेत्यर्थः । ᵛदेववीतिं देवैः काम्यमानं यज्ञं ᵛबिभ्रती धारयन्ती हे ᵛउषः ᵛश्रेष्ठतमा उत्तमेन प्रकारेणातिप्रशस्ता त्वम् ᵛइह अस्मिन् देवयजनदेशे ᵛअद्य अस्मिन् यागसमये ᵛव्युच्छ विवासय ॥ यावयद्द्वेषाः । 'यु मिश्रणामिश्रणयोः' । अस्मात् ण्यन्तात् लटः शतृ । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अदुपदेशात्

---

१. क्ष-ट-ठ—मृताः । २. क्ष-ट-ठ—'अहनि' नास्ति । ३. क्ष-ट-ठ—'अतो यज्ञार्थं जातेत्युच्यते' नास्ति ।

लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययस्वर एव शिष्यते । पुनर्बहुव्रीहौ स एव स्वरः । छान्दसः पदकालीनो ह्रस्वः । ऋतपाः । ऋतं पाति रक्षतीति ऋतपाः । 'पा रक्षणे' । विच् । ऋतेजाः । ऋते निमित्तभूते[1] जायते इति ऋतेजाः । 'जनी प्रादुर्भावे' । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । 'तत्पुरुषे कृति बहुलम्' इति अलुक्[2] । सुम्नावरी । 'छन्दसीवनिपौ°' इति मत्वर्थीयो वनिप् । 'वनो र च' इति ङीप् नकारस्य रेफादेशश्च । 'अन्येषामपि दृश्यते' इति दीर्घः । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । सुमङ्गलीः । 'सुमङ्गलात् संज्ञायाम्' (पा. सू. ४.१.४१.ग.) इति गौरादिषु पाठात् ङीष् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'हल्ङ्याब्भ्यः°' इति सुलोपस्य विकल्पितत्वात् अभावे रुत्वविसर्गौ । देववीतिम् । 'वी गतिप्रजनकान्त्यशनखादनेषु' । देवैर्वीयते काम्यते इति देववीतिर्यज्ञः । कर्मणि क्तिन् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ॥

**शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी ।**
**अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥ १३ ॥**

शश्वत् । पुरा । उषाः । वि । उवास । देवी । अथो इति । अद्य । इदम् । वि । आवः । मघोनी ।
अथो इति । वि । उच्छात् । उत्ऽतरान् । अनु । द्यून् । अजरा । अमृता । चरति । स्वधाभिः ॥ १३ ॥

ᵛदेवी देवनशीला ᵛउषाः ᵛपुरा पूर्वस्मिन्काले ᵛशश्वत् नित्यं संततं ᵛव्युवास व्यौच्छत् । ᵛअथो अनन्तरम् ᵛअद्य अस्मिन् काले ᵛमघोनी धनवती उषाः तमसा तिरोहितम् ᵛइदं सर्वं जगत् ᵛव्यावः विवासितं प्रकाशनेन तमसा वियुक्तमकरोत् । ᵛअथो अनन्तरम् ᵛउत्तरान् ऊर्ध्वतरान् भाविनः ᵛद्यून् दिवसान् अनुलक्ष्य आगामिष्वपि दिवसेषु ᵛव्युच्छात् व्युच्छति विवासयति । अतः कालत्रयव्यापिनी सोषाः ᵛअजरा जरारहिता सर्वदैकरूपा ᵛअमृता मरणरहिता च सती ᵛस्वधाभिः आत्मीयैस्तेजोभिः सह ᵛचरति वर्तते ॥ उवास । 'वस निवासे' । 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासस्य संप्रसारणम् । आवः । तस्मादेव[3] धातोर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हल्ङ्याब्भ्यः°' इति तिलोपः । 'छन्दस्यपि दृश्यते' इति आडागमः । उच्छात् । लेटि आडागमः । उत्तरान् । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिकः आकारः । अनु[4] । 'अनुर्लक्षणे' (पा. सू. १. ४. ८४) इति अनोः कर्मप्रवचनीयत्वम् । अजरा अमृता । तत्र बहुव्रीहौ 'नञो जरमरमित्रमृताः' इति उत्तरपदाद्युदात्तत्वम्[4] ॥

**व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।**
**प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ॥ १४ ॥**

वि । अञ्जिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णाम् । निःऽनिजम् । देवी । आवरित्यावः ।
प्रऽबोधयन्ती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुऽयुजा । रथेन ॥ १४ ॥

---

१. क्ष-ट-ठ–निमित्ते । २. त-द-श–सप्तम्या अलुक् । ३. ठ–अस्मादेव । ४. क्ष-ट-ठ–'अनु... उत्तरपदाद्युदात्तत्वम्' नास्ति ।

ᵛदिवः नभसः संबन्धिनीषु ᵛआतासु । दिङ्नामैतत् । आततासु विस्तीर्णासु दिक्षु उषाः ᵛअञ्जिभिः व्यञ्जकैः प्रकाशकैः तेजोभिः ᵛवि ᵛअद्यौत् विद्योतते प्रकाशते । सैषा ᵛदेवी देवनशीला ᵛकृष्णां ᵛनिर्णिजम् । निर्णिगिति रूपनाम । रात्रिकृतं कृष्णं रूपम् ᵛअप ᵛआवः अपावृणोत् । प्रकाशेन तिरस्कृतवती । अपि च ᵛअरुणेभिः अरुणैः लोहितवर्णैः ᵛअश्वैः व्यापनशीलैः स्वकीयैः किरणैस्तुरगैर्वा ᵛसुयुजा सम्यग्युक्तेन ᵛरथेन ᵛउषाः ᵛआ ᵛयाति आगच्छति । किं कुर्वती । ᵛप्रबोधयन्ती सुप्तान् प्राणिनः प्रबुद्धान् कुर्वती ॥ अद्यौत् । 'द्युत दीप्तौ' । लुङ् । 'द्युद्भ्यो लुङि' (पा. सू. १. ३. ९१) इति परस्मैपदम् । व्यत्ययेन च्लेर्लुक् । गुणे प्राप्ते वृद्धिश्छान्दसी । यद्वा । 'द्यु अभिगमने' । आदादिकः । 'उतो वृद्धिर्लुकि हलि' (पा. सू. ७. ३. ८९) इति वृद्धिः ॥

देवीनां हविःषु 'आवहन्ती' इत्येषा उषसो याज्या । सूत्रितं च– 'आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि न ता अर्वा रेणुककाटो अश्नुते' (आश्व. श्रौ. ६. १४) इति ॥

आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥ १५ ॥

आऽवहन्ती । पोष्या । वार्याणि । चित्रम् । केतुम् । कृणुते । चेकिताना ।
ईयुषीणाम् । उपऽमा । शश्वतीनाम् । विऽभातीनाम् । प्रथमा । उषाः । वि । अश्वैत् ॥ १५ ॥

ᵛपोष्या यावज्जीवं पोषणसमर्थानि ᵛवार्याणि वरणीयानि धनानि ᵛआवहन्ती अस्मभ्यमानयन्ती ᵛचेकिताना सर्वं जनं[1] प्रज्ञापयन्ती ᵛउषाः ᵛचित्रं विचित्रमाश्चर्यभूतं चायनीयं वा ᵛकेतुं प्रज्ञापकं रश्मिं कृत्स्नजगत्प्रकाशनसमर्थं ᵛकृणुते स्वात्मनः प्रकाशात् कुरुते । सैषा ᵛईयुषीणां गमनवतीनां[2] पूर्वनिष्पन्नानां ᵛशश्वतीनां बह्वीनामुषसाम् ᵛउपमा[3] उप समीपे निर्मितोपमानभूता वा[3] ᵛविभातीनां विशेषेण प्रकाशमानानामागामिनीनाम् उषसां ᵛप्रथमा आद्या एवंभूतोषाः ᵛव्यश्वैत् तेजसा प्रवृद्धासीत् ॥ पोष्या । 'पुष पुष्टौ' । पोषणं पोषः । भावे घञ् । तत्र भवानि । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । वार्याणि । 'वृङ् संभक्तौ' । 'ऋहलोर्ण्यत्' । 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् । चेकिताना । 'कित ज्ञाने' । अस्मात् यङन्तात् लटः शानच् । 'छन्दस्युभयथा' इति तस्य आर्धधातुकत्वात् अतोलोपयलोपौ । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ईयुषीणाम् । 'इण् गतौ' । लिटः क्वसुः । द्विर्भावादि । 'उगितश्च' इति ङीप् । 'वसोः संप्रसारणम्' । 'इणो यण्' इति यणादेशः । 'दीर्घ इणः किति' इति अभ्यासस्य दीर्घत्वम् । 'शासिवसिघसीनां च' इति षत्वम् । ङीप्सुपौ पित्त्वादनुदात्तौ । विभातीनाम् । 'भा दीप्तौ' । अस्मात् शत्रन्तात् पूर्ववत् ङीप् । 'ङ्याश्छन्दसि बहुलम्' इति नाम उदात्तत्वम् । अश्वैत् । 'टुओश्वि गतिवृद्ध्योः' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । गुणे कृते व्यत्ययेन ऐत्वम् ॥ ॥ ३ ॥

---

१. क्ष-ट-ठ–जगत् । २. क्ष-ट–गतवतीनाम् । ३. ठ–समीपे निर्मिता उपमा उपमानभूता

**उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति ।**

**आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥ १६ ॥**

उत् । ईर्ध्वम् । जीवः । असुः । नः । आ । अगात् । अप । प्र । अगात् । तमः । आ ।

ज्योतिः । एति ॥ अरैक् । पन्थाम् । यातवे । सूर्याय । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥१६॥

हे मनुष्याः Vउदीर्ध्वं शयनं परित्यज्य उद्गच्छत। Vनः अस्माकम् Vअसुः शरीरस्य प्रेरयिता Vजीवः जीवात्मा Vआगात् आगतवान्। Vतमः[1] Vअप Vप्रागात्[1] अपक्रान्तम्। उषसः[2] प्रकाशे सति सर्वजीवनव्यापारयोगः। तस्मात् परमात्मरूपतया स च जीवस्तदेव Vज्योतिः Vआ Vएति आगच्छति। Vसूर्याय सूर्यस्य Vपन्थां मार्गम् Vआरैक् विविक्तीकरोति । Vयातवे गमनाय । तस्मिन् देशे Vअगन्म गच्छामः Vयत्र यस्मिन् देशे Vआयुः । अन्ननामैतत् । अन्नं Vप्रतिरन्ते । प्रपूर्वस्तिरतिर्वर्धनार्थः । उदारा दानेन प्रवर्धयन्ति[2] ॥ ईर्ध्वम् । ' ईर गतौ ' । आदादिकोऽनुदात्तेत् । अरैक् । ' रिचिर् विरेचने ' । लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । गुणे व्यत्ययेन ऐत्वम् । पन्थाम् । द्वितीयायामपि ' पथिमथ्यृभुक्षामात् ' इति व्यत्ययेन आत्वम् । अगन्म । गमेर्लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' म्वोश्च ' ( पा. सू. ८. २. ६५ ) इति मकारस्य नकारः ॥

**स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।**

**अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥ १७ ॥**

स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः ।

अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मे इति । आयुः । नि । दिदीहि । प्रजाऽवत् ॥ १७ ॥

Vवह्निः स्तोत्राणां[3] वोढा । Vरेभः। स्तोतृनामैतत्। स्तोता Vउषसो Vविभातीः तमसोऽपनोदनेन प्रकाशमाना उषोदेवताः Vस्तवानः स्तुवन् Vवाचः वेदरूपायाः संबन्धीनि Vस्यूमना[4] स्यूमानि अनुस्यूतानि संततानि उक्थानि Vउदियर्ति[4] उद्गमयति उच्चारयति । अतो हे Vमघोनि मघवति[5] उषः Vअद्य अस्मिन् समये Vगृणते स्तुवते तस्मै पुरुषाय Vतदुच्छ । दृष्टिनिरोधकतया प्रसिद्धं नैशं तमो विवासय वर्जय । Vअस्मे अस्मभ्यं च Vप्रजावत् प्रजाभिः पुत्रपौत्रादिभिर्युक्तम् Vआयुः अन्नं Vनि

---

१. स–तमः अज्ञानम् अप प्रागात्; क्ष-ट-ठ–तमः रात्रिकृतध्वान्तमपि अप प्रागात् प्रकर्षेण अपगतम् । २. क्ष-ट-ठ–यस्माज्ज्योतिः औषसं तेजः एति आगच्छति अपि च उषाः सूर्याय यातवे यातुं गन्तुं पन्थां पन्थानं मार्गम् अरैक् अरिचत् रेचितवती कल्पितवती। अतो हे सखायो वयम् अगन्म । तस्मिन्देशे गच्छामो यत्र यस्मिन्देशे आयुः । अन्ननामैतत् । प्र तिरन्ते प्रपूर्वस्तिरतिर्वर्धनार्थः । उदारा अन्नेन प्रवर्धयन्ति; स–उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः। तस्मात् परमात्मरूपतया स च जीवः तदेव ज्योतिः उपेति ज्योतिः आ एति आगच्छति यास्मिन्देशे गच्छामः यत्र यस्मिन्देशे सूर्याय यातवे रक्षकाय पन्थाम् अरैक् अरेचितवती । आयुः । अन्ननामैतत् । अन्नं प्र तिरन्ते । प्रपूर्वस्तिरतिर्वर्धनार्थः । उदारा दानेन प्रवर्धयन्ति । ३. क्ष-ट-ठ–स्तुतीनाम् ४. क्ष-ट-ठ–स्यूमना सामभिरनुस्यूतानि उक्थानि उदियर्ति । ५. क्ष-ट-ठ–धनवति ।

vदिदीहि नितरां प्रकाशय। दीदेतिश्छान्दसो दीप्तिकर्मा। प्रयच्छेत्यर्थः॥ स्यूमना। ‘षिवु तन्तुसंताने’। ‘अन्येभ्योऽपि दृश्यन्ते’ इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् कर्मणि मनिन्। ‘च्छ्वोः शूठ्°’ इति ऊठ्। ‘आङ्याजयारां चोपसंख्यानम्’ (पा. म. ७. १. ३९. १) इति विभक्तेः आङादेशः। यद्वा। औणादिको भावे मक्। पामादिलक्षणो मत्वर्थीयो नः। बन्धनयुक्तानि इत्यर्थः। ‘शेश्छन्दसि बहुलम्’ इति शेर्लोपः। व्यत्ययेनाद्युदात्तत्वम्। वाचः। ‘सावेकाचः°’ इति ङस उदात्तत्वम्। इयर्ति। ‘ऋ गतौ’। जौहोत्यादिकः[1]। ‘अर्तिपिपर्त्योश्च’ इति अभ्यासस्य इत्वम्। स्तवानः। ‘ष्टुञ् स्तुतौ’। शानचि अदादित्वात् शपो लुक्। तस्य ‘छन्दस्युभयथा’ इति आर्धधातुकत्वेन ङित्वाभावात् गुणावादेशौ। व्यत्ययेनाद्युदात्तत्वम्। विभातीः[2]। ‘शतुरनुमो नद्यजादी’ इति ङीप उदात्तत्वम्[2]। गृणते। ‘गॄ शब्दे’। क्रैयादिकः। ‘प्वादीनां ह्रस्वः’। पूर्वोक्तेन सूत्रेण विभक्तेरुदात्तत्वम्[3]। अस्मे। ‘सुपां सुलुक्’ इति चतुर्थ्याः शेआदेशः॥

या गोम॑तीरु॒षसः॒ सर्व॑वीरा व्यु॒च्छन्ति॑ दा॒शुषे॒ मर्त्या॑य ।
वा॒योरि॑व सू॒नृता॑नामुद॒र्के ता अ॑श्व॒दा अ॑श्नवत्सोम॒सुत्वा॑ ॥ १८ ॥

याः। गोऽम॑तीः। उ॒षसः॑। सर्व॑ऽवीराः। वि॒ऽउ॒च्छन्ति॑। दा॒शुषे॑। मर्त्या॑य।
वा॒योःऽइ॑व। सू॒नृता॑नाम्। उ॒त्ऽअ॒र्के। ताः। अ॒श्व॒ऽदाः। अ॒श्न॒व॒त्। सो॒म॒ऽसुत्वा॑ ॥ १८ ॥

vदाशुषे हवींषि दत्तवते vमर्त्याय मनुष्याय यजमानाय vगोमतीः गोमत्यो बहुभिर्गोभिर्युक्ताः vसर्ववीराः सर्वैः सरणसमर्थैः[4] वीरैः शूरैर्युक्ताः vयाः vउषसः vव्युच्छन्ति तमो वर्जयन्ति। vवायोरिव वायुवच्छीघ्रं प्रवर्तमानानां vसूनृतानां स्तुतिरूपाणां वाचाम् vउदर्के समाप्तौ vअश्वदाः अश्वानां दात्रीः vताः उषसः vसोमसुत्वा सोमानामभिषोता यजमानः vअश्नवत् व्याप्नोतु॥ दाशुषे। ‘दाशृ दाने’। ‘दाश्वान्साह्वान्°’ इति क्वसुप्रत्ययान्तो निपात्यते। चतुर्थ्येकवचने ‘वसोः संप्रसारणम्’ इति संप्रसारणम्। ‘शासिवसिघसीनां च’ इति षत्वम्। अश्नवत्। ‘अशू व्याप्तौ’। व्यत्ययेन परस्मैपदम्। लेटि अडागमः। ‘इतश्च लोपः°’ इति इकारलोपः। सोमसुत्वा। ‘षुञ् अभिषवे’। ‘अन्येभ्योऽपि दृश्यन्ते’ इति क्वनिप्। ‘ह्रस्वस्य पिति°’ इति तुक्॥

मा॒ता दे॒वाना॒मदि॑ते॒रनी॑कं य॒ज्ञस्य॑ के॒तुर्बृ॑ह॒ती वि भा॑हि ।
प्र॒श॒स्ति॒कृद्ब्रह्म॑णे नो॒ व्यु१॒॑च्छा नो॒ जने॑ जनय विश्ववारे ॥ १९ ॥

मा॒ता। दे॒वाना॑म्। अदि॑तेः। अनी॑कम्। य॒ज्ञस्य॑। के॒तुः। बृ॒ह॒ती। वि। भा॒हि॒।
प्र॒श॒स्ति॒ऽकृत्। ब्रह्म॑णे। नः॒। वि। उ॒च्छ॒। आ। नः॒। जने॑। ज॒न॒य॒। वि॒श्व॒ऽवा॒रे॒ ॥ १९ ॥

हे उषस्त्वं vदेवानां vमाता जननी। उषसि[5] सर्वे देवाः स्तुत्या प्रबोध्यन्ते अतः सा तज्जननवती इत्युच्यते। अत एव vअदितेः देवानां मातुः vअनीकं प्रत्यनीकम्। प्रतिस्पर्धिनी त्वमित्यर्थः।

---

१. स–जौहोत्यादिकः श्लुः। २. क्ष-ट-ठ–‘विभातीः......उदात्तत्वम्’ नास्ति। ३. क्ष-ट-ठ–शतुरनुमः इति विभक्तेरुदात्तत्वम्। ४. छ-द-घ-य-ल-श–शरणसमर्थैः। ५. क्ष-ट-ठ–उषसि हि।

यद्वा । दीव्यन्तीति देवा रश्मयः । तेषां निर्मात्री । अदितेरखण्डनीयाया भूमेरनीकं मुखम् । यथेन्द्रियाश्रयत्वात् मुखं प्रकाशकम् एवमुषाः भूमेः प्रकाशयित्रीत्यर्थः । ᵛयज्ञस्य ᵛकेतुः केतयित्री ज्ञापयित्री ᵛबृहती महती सती ᵛवि ᵛभाहि प्रकाशस्व । अपि च ᵛप्रशस्तिकृत् सम्यक् स्तुतमिति प्रशंसनं कुर्वती ᵛनः अस्मदीयाय ᵛब्रह्मणे मन्त्ररूपाय स्तोत्राय ᵛव्युच्छ विवासय । तदनन्तरं हे ᵛविश्ववारे सर्वैर्वरणीये उषः ᵛनः अस्मान् ᵛजने जनपदे ᵛआ ᵛजनय आभिमुख्येन प्रादुर्भावय अवस्थापयेत्यर्थः ॥ बृहती । 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम् । प्रशस्तिकृत् । 'शंसु स्तुतौ' । भावे क्तिन् । 'तितुत्र°' इति इट्प्रतिषेधः । 'अनिदिताम्°' इति नलोपः । तस्मिन्नुपपदे करोतेः 'क्विप् च' इति क्विप् । जनय । 'जनी प्रादुर्भावे' । णिचि उपधावृद्धिः । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥

यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २० ॥

यत् । चित्रम् । अप्नः । उषसः । वहन्ति । ईजानाय । शशमानाय । भद्रम् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥२०॥

ᵛचित्रं चायनीयं ᵛअप्नः आप्तव्यं ᵛयत् धनम् ᵛउषसो ᵛवहन्ति आनयन्ति ᵛईजानाय हविर्भिः इष्टवते ᵛशशमानाय स्तुतिभिः संभजमानाय पुरुषाय ᵛभद्रं भजनीयं तत् भवतीति शेषः । यदनेन सूक्तेनास्माभिः प्रार्थितं तत् मित्रादयः षड्देवताः ᵛममहन्तां पूजितं कुर्वन्तु ॥ अप्नः । 'आप्लृ व्याप्तौ' । 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' इति बहुलग्रहणात् अकर्माख्यायामपि असुन्; धातोर्ह्रस्वो नुडागमश्च । ईजानाय । यजतेश्छन्दसि लिट् । 'लिटः कानज्वा' । 'वचिस्वपि°' इत्यादिना संप्रसारणम् । द्विर्वचनादि । शशमानाय । 'शश प्लुतगतौ' । ताच्छीलिकश्चानश् । तस्य लसार्वधातुकत्वाभावात् अदुपदेशात् लसार्वधातुकस्वराभावे चित्स्वर एव शिष्यते ॥　　॥ ४ ॥

'इमा रुद्राय' इति एकादशर्चं नवमं सूक्तं कुत्सस्यार्षम् । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा नव जगत्यः । रुद्रो देवता । तथा चानुक्रान्तम्–'इमा एकादश रौद्रं द्वित्रिष्टुबन्तम्' इति ॥ शूलगवादिषु रुद्रदेवत्येषु कर्मस्वनेन सूक्तेन दिगुपस्थेया । तथा च सूत्रितं–'कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वने गिर इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' ( आश्व. गृ. ४. ९. २१ ) इति ॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ १ ॥

इमाः । रुद्राय । तवसे । कपर्दिने । क्षयत्ऽवीराय । प्र । भरामहे । मतीः ।
यथा । शम् । असत् । द्विऽपदे । चतुःऽपदे । विश्वम् । पुष्टम् । ग्रामे । अस्मिन् । अनातुरम् ॥१॥

रुद्राय । रोदयति सर्वमन्तकाले इति रुद्रः । यद्वा । रुत् संसाराख्यं दुःखम् । तत् द्रावयति अपगमयति विनाशयतीति रुद्रः । यद्वा । रुतः शब्दरूपाः उपनिषदः । ताभिर्द्रूयते गम्यते प्रतिपाद्यते

इति रुद्रः । यद्वा । रुत् शब्दात्मिका वाणी तत्प्रतिपाद्या आत्मविद्या वा । तामुपासकेभ्यो राति ददातीति रुद्रः । यद्वा । रुणद्धि आवृणोति इति रुत् अन्धकारादि । तत् द्रणाति विदारयतीति रुद्रः । यद्वा । कदाचित् देवासुरसंग्रामे अग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात् । असुरान् जित्वा देवा एनमन्विष्य दृष्ट्वा धनमपाहरन् । तदानीमरुदत् । तस्मात् रुद्र इत्याख्यायते । तथा च तैत्तिरीयकं– ' सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ' ( तै. सं. १. ५. १. १ ) इति । तस्मै रुद्राय मतीः मननीयाः इमाः स्तुतीः प्र भरामहे प्रकर्षेण निष्पादयामः । कीदृशाय । तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षयन्तो विनश्यन्तो वीरा यस्मिन् तादृशाय । यद्वा । क्षयतिरैश्वर्यकर्मा । क्षयन्तः प्राप्तैश्वर्या वीरा मरुद्गणाः पुत्रा यस्य तस्मै । यथा येन प्रकारेण शं शमनीयानां रोगाणामुपशमनं द्विपदे अस्मदीयाय मनुष्याय चतुष्पदे गवाश्वप्रभृतये च असत् भवेत् । तेन प्रकारेण स्तुतीः कुर्मः इत्यर्थः । अतः अस्मिन् अस्मदीये ग्रामे वर्तमानं विश्वं सर्वं प्राणिजातम् अनातुरम् । आतुरा रुग्णाः तैः रहितं सत् पुष्टं प्रवृद्धं भवतु ॥ रुद्राय । ' रोदेर्णिलुक् च ' ( उ. सू. २. १७९ ) इति रक् । तवसे । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । औणादिकोऽसिप्रत्ययः । क्षयद्वीराय । ' क्षि क्षये ' । लटः शतृ । ' छन्दस्युभयथा ' इति शतुः आर्धधातुकत्वेन अदुपदेशात् लसार्वधातुकानुदात्तत्वाभावात् तस्यैव स्वरः शिष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । असत् । ' अस भुवि ' । लेटि अडागमः । ' इतश्च लोपः° ' इति इकारलोपः । द्विपदे । द्वौ पादावस्य । ' संख्यासुपूर्वस्य ' इति पादशब्दस्य अन्त्यलोपः समासान्तः । चतुर्थ्येकवचने भसंज्ञायां ' पादः पत् ' इति पद्भावः । एकदेशविकृतस्य अनन्यत्वात् ( परिभा. ३७ ) ' द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ' इति उत्तरपदाद्युदात्तत्वम् । चतुष्पदे । स्वरवर्जं पूर्ववत् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदं च ' त्रः संख्यायाः ' ( फि. सू. २८ ) इत्याद्युदात्तम् ॥

रुद्रदेवत्ये पशौ वपापुरोडाशयोः ' मृळा नो रुद्र ' इत्यादिके द्वे अनुवाक्ये । तथा च सूत्रितं– ' मृळा नो रुद्रोत नो मयस्कृधि इति द्वे आ ते पितर्मरुतां सुम्नमेतु ' ( आश्व. श्रौ. ३. ८ ) इति ॥

मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ २ ॥

मृळ । नः । रुद्र । उत । नः । मयः । कृधि । क्षयत्ऽवीराय । नमसा । विधेम । ते ॥ यत् । शम् । च । योः । च । मनुः । आऽयेजे । पिता । तत् । अश्याम । तव । रुद्र । प्रऽनीतिषु ॥ २ ॥

हे रुद्र नः अस्मभ्यमस्मदर्थं मृळ त्वं सुखयिता भव । उत अपि च तदनन्तरं नः अस्माकं मयः सुखं कृधि कुरु । वयं च क्षयद्वीराय क्षपितसर्ववीरं प्राप्तैश्वर्यैर्मरुद्भिर्युक्तं वा । ते त्वां नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा विधेम परिचरेम । विधतिः परिचरणकर्मा । अपि च पिता उत्पादकः मनुः स्वकीयाभ्यः प्रजाभ्यः शं रोगाणां शमनं योश्च भयानां यावनं च यत् एतत् द्वयं आयेजे देवेभ्यः सकाशात् प्राप्य दत्तवान् हे रुद्र तव प्रणीतिषु प्रकृष्टनयनेषु सत्सु तत् वयम् अश्याम व्याप्नुयाम ॥ मृळ । ' मृड सुखने ' । तौदादिकः । ' द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घः । कृधि । करोतेर्लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' श्रुशृणुपॄकृवृभ्यश्छन्दसि ' इति हेर्धिः । ' अतः कृकमि° ' इति मयसो विसर्जनीयस्य सत्वम् । क्षयद्वीराय ।

'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थी। विधेम। 'विध विधाने'। तौदादिकः। आयेजे। 'यज देवपूजासंगतिकरणदानेषु'। लिटि संज्ञापूर्वकस्य विधेरनित्यत्वात् संप्रसारणाभावे एत्वाभ्यासलोपौ। अश्याम। 'अशू व्याप्तौ'। व्यत्ययेन परस्मैपदम्। 'बहुलं छन्दसि' इति विकरणस्य लुक्॥

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः।
सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः॥ ३॥

अश्याम। ते। सुऽमतिम्। देवऽयज्यया। क्षयत्ऽवीरस्य। तव। रुद्र। मीढ्वः।
सुम्नऽयन्। इत्। विशः। अस्माकम्। आ। चर। अरिष्टऽवीराः। जुहवाम। ते। हविः॥३॥

हे मीढ्वः सेक्तः कामाभिवर्षक नित्यतरुण वा रुद्र क्षयद्वीरस्य क्षपितप्रतिपक्षस्य मरुद्भिर्युक्तस्य वा तव सुमतिं शोभनां कल्याणीमनुग्रहात्मिकां बुद्धिं ते त्वत्संबन्धिनो वयं देवयज्यया देवयागेन त्वद्देवत्येन यज्ञेन अश्याम प्राप्नवाम[1]। त्वं च अस्माकं विशः प्रजाः अभिलक्ष्य आ चर आगच्छ। किं कुर्वन्। सुम्नायन्नित्। सुम्नमिति सुखनाम। तासां प्रजानां सुखमिच्छन्नेव सुखप्रद एव भवेत्यर्थः। ततो वयम् अरिष्टवीराः। वीर्याज्जायन्ते इति वीराः प्रजाः। अरिष्टा अहिंसिता वीरा येषां तथाभूताः सन्तः ते तुभ्यं हविः चरुपुरोडाशादिकं जुहवाम चोदिते आधारे प्रक्षिपाम॥ सुमतिम्। मतिर्मननम्। शोभनं मननं यस्यां बुद्धौ सा सुमतिः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। देवयज्यया। 'छन्दसि निष्टर्क्य°' इत्यादौ यजेः यप्प्रत्ययो निपात्यते स्त्रीलिङ्गता च। मीढ्वः। 'मिह सेचने'। 'दाश्वान्साह्वान्मीढ्वान्°[2]' इति क्वसुप्रत्ययान्तो निपातितः। संबुद्धौ 'मतुवसो रुः°' इति रुत्वम्। सुम्नायन्। सुम्नं परेषामिच्छति। 'छन्दसि परेच्छायामपि' इति क्यच्। 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः। 'देवसुम्नयोर्यजुषि काठके' (पा. सू. ७. ४. ३८) इति विधीयमानम् आत्वं व्यत्ययेन अत्रापि द्रष्टव्यम्॥

त्वेषं वयं रुद्रं यज्ञसाधं वङ्कुं कविमवसे नि ह्वयामहे।
आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे॥ ४॥

त्वेषम्। वयम्। रुद्रम्। यज्ञऽसाधम्। वङ्कुम्। कविम्। अवसे। नि। ह्वयामहे।
आरे। अस्मत्। दैव्यम्। हेळः। अस्यतु। सुऽमतिम्। इत्। वयम्। अस्य। आ। वृणीमहे॥४॥

अवसे रक्षणाय रुद्रं महादेवं नि ह्वयामहे नितरामाह्वयामः। कीदृशम्। त्वेषं दीप्तं यज्ञसाधं यज्ञस्य साधयितारम्। एष हि यज्ञं स्विष्टं करोति। तथा च तैत्तिरीयके–'देवा वै यज्ञाद्रुद्रमन्तरायन्' इत्युपक्रम्याम्नातं–'स्विष्टं वै न इदं भविष्यति यदिमं राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वम्' (तै. सं. २. ६. ८. ३) इति। वङ्कुं कुटिलगन्तारं[3] कविं क्रान्तदर्शिनम्।

---

१. क्ष-ट-ठ–प्राप्नुया। २. क्ष-ट-ठ–°मीढ्वांश्च। ३. क्ष-ट–कुटिलं गन्तारम्।

स च रुद्रो दैव्यं देवस्य[1] द्योतमानस्य[2] संबन्धिनं हेळः क्रोधं अस्मत् आरे अस्मत्तो दूरदेशे अस्यतु प्रेरयतु । अस्य महादेवस्य सुमतिमित् शोभनामनुग्रहरूपां बुद्धिमेव वयम् आ वृणीमहे आभिमुख्येन संभजामहे ॥ यज्ञसाधम् । यज्ञं साधयतीति यज्ञसात् । ' षिधू संराद्धौ ' । ' सिध्यतेरपारलौकिके ' इति आत्वम् । यद्वा । ' राध साध संसिद्धौ ' । अस्मात् ण्यन्तात् क्विप् । वङ्कुम् । ' वकि कौटिल्ये ' । औणादिक उप्रत्ययः । नि ह्वयामहे । ' निसमुपविभ्यो ह्वः ' इत्यात्मनेपदम् । दैव्यम् । ' देवाद्यञञौ ' ( पा. सू. ४. १. ८५. ३ ) इति प्राग्दीव्यतीयो यञ् । अस्यतु । ' असु क्षेपणे ' । दैवादिकः । वृणीमहे । ' वृङ् संभक्तौ ' । क्रैयादिकः ॥

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥ ५ ॥

दिवः । वराहम् । अरुषम् । कपर्दिनम् । त्वेषम् । रूपम् । नमसा । नि । ह्वयामहे ।
हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यम् । यंसत् ॥ ५ ॥

वराहं वराहारम् उत्कृष्टभोजनम् । यद्वा । वराहवत् दृढाङ्गम् । अरुषम् आरोचमानं कपर्दिनं जटाभिर्युक्तं त्वेषं तेजसा दीप्यमानं रूपं निरूपणीयं वेदान्तैरधिगम्यम् एवंभूतं रुद्रं नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा दिवः द्युलोकसकाशात् नि ह्वयामहे नितरामाह्वयामः । सः[3] आहूतो रुद्रः हस्ते स्वकीये बाहौ वार्याणि सर्वैः वरणीयानि[4] भेषजा भैषज्यानि रोगशमनहेतुभूतानि बिभ्रत् धारयन् अस्मभ्यं स्तोतृभ्यः शर्म आरोग्यलक्षणं सुखं वर्म आयुधानां निवारकं कवचं छर्दिः । गृहनामैतत् । गृहं च यंसत् प्रयच्छतु ॥ बिभ्रत् । 'डुभृञ् धारणपोषणयोः' । जौहोत्यादिकः । लटः शतृ । ' भृञामित् ' इति अभ्यासस्य इत्वम् । भेषजा । ' भिषज् चिकित्सायाम् ' । कण्ड्वादिः । पचाद्यच् । अतोलोपयलोपौ । ' °सुमङ्गलभेषजाच्च ' ( पा. सू. ४. १. ३० ) इति निपातनात् रूपसिद्धिः । ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः । वार्याणि । ' वृङ् संभक्तौ ' । ' ऋहलोर्ण्यत् ' । ' ईडवन्द° ' इत्याद्युदात्तत्वम् । छर्दिः । ' उछृदिर् दीप्तिदेवनयोः ' । छृद्यते दीप्यते सुवर्णादिभिर्धनैः प्रकाश्यते इति छर्दिर्गृहम् । ' अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ' ( उ. सू. २. २६५ ) । यंसत् । ' यम उपरमे ' । लेटि अडागमः । ' सिब्बहुलं लेटि ' इति सिप् । ' इतश्च लोपः° ' इति इकारलोपः ॥ ॥ ५ ॥

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥ ६ ॥

इदम् । पित्रे । मरुताम् । उच्यते । वचः । स्वादोः । स्वादीयः । रुद्राय । वर्धनम् ।
रास्व । च । नः । अमृत । मर्तऽभोजनम् । त्मने । तोकाय । तनयाय । मृळ ॥ ६ ॥

---

१. क्ष-ट-ठ-' देवस्य ' नास्ति । २. क्ष-ट-ठ-द्योतमानस्य स्वस्य । ३. क्ष-ट-ठ-स-स च ।
४. क्ष-ट-ठ-स-वरणीयानि संभजनीयानि ।

इदं स्तुतिलक्षणं वचः मरुताम् एकोनपञ्चाशत्संख्याकानां देवविशेषाणां[1] पित्रे जनकाय रुद्राय ईश्वराय उच्यते उच्चार्यते । कीदृशम् । स्वादोः स्वादीयः रसवतो मधुघृतादेरपि स्वादुतरम् । अतिशयेन हर्षजनकमित्यर्थः । वर्धनं स्तुत्यस्य प्रवर्धकम् । स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते[2] । रुद्रस्य च मरुतां पितृत्वम् एवम्[3] आख्यायते[3] । पुरा कदाचिदिन्द्रः असुराञ्जिगाय । तदानीं दितिः असुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः[4] सकाशाद्गर्भं लेभे । इमं वृत्तान्तमवगच्छन्निन्द्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद । पुनरप्येकैकं सप्तखण्डमकरोत् । ते सर्वे गर्भैकदेशा योनेर्निर्गत्य अरुदन्[5] । एतस्मिन्नवसरे[6] लीलार्थं गच्छन्तौ पार्वतीपरमेश्वरौ इमान् ददृशतुः । महेशं प्रति पार्वती एवमवोचत् । इमे मांसखण्डा यथा प्रत्येकं पुत्राः संपद्यन्तामेवं त्वया कार्यं मयि[8] चेत्प्रीतिरस्तीति[8] । स च महेश्वरः[9] तान् समानरूपान् समानवयसः समानालंकारान् पुत्रान् कृत्वा गौर्यै प्रददौ तवेमे पुत्राः सन्तु इति । अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते । रौद्रेषु च मरुतां पिता रुद्र इति । अपि च हे अमृत मरणरहित रुद्र मर्तभोजनं[10] मर्तानां मनुष्याणां भोगपर्याप्तमन्नं[10] नः अस्मभ्यं रास्व प्रयच्छ । तथा त्मने आत्मने[11] । द्वितीयार्थे चतुर्थी । मां तोकाय तोकं पुत्रं तनयाय तनयं तत्पुत्रं च मृळ सुखय ॥ पित्रे । 'उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । रास्व । 'रा दाने' । व्यत्ययेनात्मनेपदम् । त्मने । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्यत्र 'आङोऽन्यत्रापि छन्दसि दृश्यते' ( का. ६. ४. १४१. १ ) इति वचनादात्मनः आकारलोपः ॥

मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम् ।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥ ७ ॥

मा । न॒ः । म॒हान्त॑म् । उ॒त । मा । न॒ः । अ॒र्भ॒कम् । मा । न॒ः । उक्ष॑न्तम् । उ॒त । मा । न॒ः । उ॒क्षि॒तम् ।
मा । न॒ः । व॒धी॒ः । पि॒तर॑म् । मा । उ॒त । मा॒तर॑म् । मा । न॒ः । प्रि॒याः । त॒न्व॑ः । रु॒द्र॒ । रि॒रि॒षः॒ ॥ ७ ॥

हे रुद्र नः अस्माकं मध्ये महान्तं वृद्धं मा वधीः मा हिंसीः । उत अपि च नः अस्माकम् अर्भकं बालं मा हिंसीः । तथा नः अस्माकं मध्ये उक्षन्तं सेक्तारं मध्यवयस्कं युवानं मा वधीः[12] । उत अपि च नः अस्माकम् उक्षितं गर्भरूपेण स्त्रीषु निषिक्तमपत्यं मा वधीः । तथा नः अस्माकं पितरं जनकं मा वधीः । उत अपि च मातरं जननीं मा वधीः । तथा नः अस्माकं प्रियाः स्नेहविषयाः तन्वः शरीराणि तनूषु भवाः प्रजा वा हे रुद्र मा रिरिषः मा हिंसीः ॥ वधीः । हन्तेर्माङि 'लुङि च' इति वधादेशः । स चादन्तः । सिच इट् । अतो लोपस्य स्थानिवद्भावात्[13] वृद्ध्यभावः । रिरिषः । 'रिष हिंसायाम्' । ण्यन्तात् लुङि चङि णिलोपोपधाह्रस्वत्वादीनि । छान्दसः पदकालीनोऽभ्यासह्रस्वः ॥

---

१. क्ष-ट-ठ—देवताविशेषाणाम् । २. क्ष-ट-स—प्रवर्तते । ३. स—आम्नायते; न—एवमाम्नायते । ४. क्ष-ट-ठ—पत्युः । ५. क्ष-ट-ठ-स—भृशमरुदन् । ६. क्ष-ट-ठ—एतस्मिन्नन्तरे । ७. न-स—महेश्वरम् । ८. च-छ-ण-फ—चेत् त्वत्प्रीतिरस्ति; द-घ—अपि चेत् त्वत्प्रीतिरस्ति । ९. क्ष-ट-ठ—महेशः; न-परमेश्वरः । १०. क्ष-ट-ठ—मर्तभोजनं मर्तानां भोजनं ( ठ—' मर्तानां भोजनं ' नास्ति ) मनुष्याणां भोक्तुं पर्याप्तमन्नम् । ११. क्ष-ट-ठ— आत्मने मह्यम् । १२. क्ष-ट-ठ—हिंसीः । १३. क्ष-ट-ठ—स्थानिवत्त्वात् ।

मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ८ ॥

मा । नः । तोके । तनये । मा । नः । आयौ । मा । नः । गोषु । मा । नः । अश्वेषु । रिरिषः ।
वीरान् । मा । नः । रुद्र । भामितः । वधीः । हविष्मन्तः । सदम् । इत् । त्वा । हवामहे ॥ ८ ॥

हे रुद्र नः अस्माकं तोकादिविषये मा रिरिषः मा हिंसीः । तोकशब्दः पुत्रवाची । तनयस्तत्पुत्रः । आयुः इति अन्तोदात्तः[1] मनुष्यनाम । पुत्रपौत्रव्यतिरिक्तो योऽस्मदीयः[2] मनुष्यस्तस्मिन् गोषु पश्वादिषु अश्वेषु च मा रिरिषः हिंसां मा कृथाः[2] । तथा हे रुद्र वीरान् विक्रान्तान् शौर्योपेतान् अस्मदीयान्[3] भामितः क्रुद्धः सन् मा वधीः मा हिंसीः । वयं च हविष्मन्तः हविर्भिर्युक्ताः सन्तः सदमित् सर्वदैव त्वां हवामहे आह्वयामहे ॥ आयौ । 'इण् गतौ' । 'छन्दसीणः' इति उण्प्रत्ययः । भामितः । 'भाम क्रोधे' । 'क्तोऽधिकरणे च०' इति कर्तरि क्तः । हवामहे । ह्वेञो लटि 'बहुलं छन्दसि' इति संप्रसारणम् ॥

देवसुवां हविःषु रुद्रस्य पशुपतेर्यागे 'उप ते स्तोमान्' इत्यादिके याज्यानुवाक्ये । सूत्रितं च– 'उप ते स्तोमान्पशुपा इवाकरमिति द्वे' ( आश्व. श्रौ. ४. ११ ) इति ॥

उप ते स्तोमान्पशुपाइवाकरं रास्वा पितर्मरुतां सुम्नमस्मे ।
भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ॥ ९ ॥

उप । ते । स्तोमान् । पशुपाःऽइव । आ । अकरम् । रास्व । पितः । मरुताम् । सुम्नम् । अस्मे इति ॥ भद्रा । हि । ते । सुऽमतिः । मृळयत्ऽतमा । अथ । वयम् । अवः । इत् । ते । वृणीमहे ॥ ९ ॥

हे रुद्र स्तोमान् स्तुतिरूपान्मन्त्रान् ते तुभ्यम् उप आ अकरम् । उपाकरोमि समर्पयामि । तत्र दृष्टान्तः । पशुपाइव । यथा पशूनां पालयिता गोपः प्रातःकाले स्वस्मै समर्पितान् पशून् सायंकाले स्वामिभ्यः प्रत्यर्पयति एवं त्वत्सकाशाल्लब्धान् स्तुतिरूपान्मन्त्रान् स्तुतिसाधनतया तुभ्यं प्रत्यर्पयामीत्यर्थः । हे मरुतां पितः मरुत्संज्ञानां[4] देवानाम् उत्पादक[5] रुद्र नोऽस्मभ्यं सुम्नं सुखं रास्व देहि । अपि च ते त्वदीया सुमतिः कल्याणी[6] बुद्धिः मृळयत्तमा अतिशयेन सुखयितृतमा । अत एव भद्रा भजनीया हि । यस्मादेवं तस्मात् अथ अनन्तरं वयं ते त्वदीयम् अवः रक्षणं वृणीमहे संभजामहे ॥ अकरम् । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङ् । 'कृमृदृरुहिभ्यः०' इति च्लेरङादेशः । 'ऋदृशोऽङि गुणः' । पितर्मरुताम् । 'परमपि च्छन्दसि' इति परस्याः षष्ठ्याः पूर्वामन्त्रितानुप्रवेशे सति 'आमन्त्रितस्य च' इति पदद्वयमप्यनुदात्तम् । अस्मे । 'सुपां सुलुक्०'

---

१. क्ष-ट-ठ–अन्तोदात्तम् । २. स–योऽस्मदीयो मनुष्यस्तास्मिन् हिंसां मा कृथाः । अपि च नः अस्माकं गोषु अश्वेषु च हिंसां मा कृथाः । ३. क्ष-ट-ठ-स–अस्मदीयान् जनान् । ४. क्ष-ट-ठ–मरुत्संज्ञकानाम् । ५. क्ष-ट-ठ–जनक । ६. क्ष-ट-ठ–कल्याणा ।

इति चतुर्थीबहुवचनस्य शेआदेशः । मृळयत्तमा । 'मृड सुखने' । अस्मात् ण्यन्तात् लटः शतृ । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् लसार्वधातुकानुदात्तत्वाभावे प्रत्ययस्वरः शिष्यते ॥

**आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।**

**मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ १० ॥**

आरे । ते । गोऽघ्नम् । उत । पुरुषऽघ्नम् । क्षयत्ऽवीर । सुम्नम् । अस्मे इति । ते । अस्तु ।

मृळ । च । नः । अधि । च । ब्रूहि । देव । अध । च । नः । शर्म । यच्छ । द्विऽबर्हाः ॥ १० ॥

हे ᵛक्षयद्वीर क्षपितसर्वशत्रुजन रुद्र ᵛते त्वदीयं ᵛगोघ्नं यद्गोहननं यद्वा गोहननसाधनमायुधम् ᵛउत अपि च ᵛपुरुषघ्नं पुरुषहननं तत्साधनमायुधं वा तदुभयम् ᵛआरे दूरे अस्मत्तो विप्रकृष्टदेशे भवतु । ᵛअस्मे अस्मासु ᵛते त्वदीयं ᵛसुम्नं सुखम् ᵛअस्तु भवतु । अपि च ᵛनः अस्माकं ᵛमृळ सुखसिद्ध्यर्थं प्रसन्नो भव । हे ᵛदेव द्योतमान रुद्र ᵛनः अस्मान् ᵛअधि ᵛब्रूहि ᵛच । अधिवचनं पक्षपातेन वचनं 'ब्राह्मणायाधि ब्रूयात्' ( तै. सं. २. ५. ११. ९ ) इति यथा । ᵛअध ᵛच अथ अनन्तरं च ᵛद्विबर्हाः द्वयोः स्थानयोः पृथिव्यामन्तरिक्षे च परिवृढः । यद्वा । द्वयोर्दक्षिणोत्तरमार्गयोः ज्ञानकर्मणोर्वा परिवृढः स्वामी । स त्वं ᵛनः अस्मभ्यं ᵛशर्म सुखं ᵛयच्छ देहि ॥ गोघ्नम् । 'हन हिंसागत्योः' । अस्मात् 'घञर्थे कविधानम्' इति भावे करणे वा कप्रत्ययः । 'गमहन०' इत्युपधालोपः । 'हो हन्तेः०' इति कुत्वम् । द्विबर्हाः । 'बृह बृहि वृद्धौ' । द्वयोः स्थानयोः बर्हते प्रवर्धते इति द्विबर्हाः । असुन् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

**अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान् ।**

**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥**

अवोचाम । नमः । अस्मै । अवस्यवः । शृणोतु । नः । हवम् । रुद्रः । मरुत्वान् ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥

ᵛअवस्यवः[1] अवः अन्नं रक्षणं वा[1] इच्छन्तो वयम् ᵛअवोचाम एतत्सूक्तरूपं स्तोत्रमवादिष्म । ᵛअस्मै रुद्राय ᵛनमः नमस्कारोऽस्तु । ᵛमरुत्वान् मरुद्भिः स्वकीयैः पुत्रैर्युक्तः ᵛरुद्रः च ᵛनः अस्माकं ᵛहवम् आह्वानं ᵛशृणोतु स्वीकरोतु । यदस्माभिरुक्तं[2] ᵛनः अस्मदीयं तत् सर्वं मित्रादयः षड्देवताः ᵛममहन्तां पूजयन्तु[2] । उतशब्दोऽप्यर्थे ॥ अवोचाम । 'ब्रूञ् व्यक्तायां वाचि' । लुङि 'ब्रुवो वचिः' । 'अस्यतिवक्ति०' इत्यादिना च्लेरङादेशः । 'वच उम्' इति उमागमः । अवस्यवः । 'अव रक्षणे' । भावे असुन् । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । हवम् । 'भावेऽनुपसर्गस्य'

---

१. क्ष-ट-ठ—अवस्यवोऽवनं रक्षणम् । २. क्ष-ट-ठ—यदस्माभिरुक्तं तन्मित्रादयो ममहन्ताम् ( ठ—महयन्ताम् ) ।

इति अपू संप्रसारणं च । मरुत्वान् । ' झयः ' इति मतुपो वत्वम् । ' तसौ मत्वर्थे ' इति भत्वेन पदत्वाभावाज्जश्त्वाभावः ॥ ॥ ६ ॥

' चित्रम् ' इति षडृचं दशमं सूक्तं कुत्सस्यार्षं[1] त्रैष्टुभं सूर्यदेवताकम्[2]। तथा चानुक्रान्तं–' चित्रं षट् सौर्यम् ' इति । आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्याणि सूक्तानि शंसनीयानि। तत्रेदं सूक्तं शंसनीयम्। सूत्रितं च–' चित्रं देवानां नमो मित्रस्य ' ( आश्व. श्रौ. ६. ५ ) इति ॥ आदितस्तिस्र ऋचः सौर्यस्य पशोः वपापुरोडाशहविषां क्रमेणानुवाक्याः । ततो द्वे वपापुरोडाशयोः याज्ये । तथा च सूत्रितं–' चित्रं देवानामुदगादनीकमिति पञ्च शं नो भव चक्षसा शं नो अह्ना ' ( आश्व. श्रौ. ३. ८ ) इति । अतिमूर्तिनाम्नि एकाहे शुनासीर्ये[3] पर्वणि च सूर्यस्य हविषः ' चित्रं देवानाम् ' इत्येषा याज्या । सूत्रितं च–' तरणिर्विश्वदर्शतः चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ' ( आश्व. श्रौ. ९. ८ ) इति ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १ ॥

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ।
आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥१॥

^v^देवानाम् । दीव्यन्तीति देवा रश्मयः तेषाम् । देवजनानामेव वा । ^v^अनीकं समूहरूपं ^v^चित्रम् आश्चर्यकरं सूर्यस्य मण्डलम् ^v^उदगात् उदयाचलं प्राप्तमासीत्[4]। कीदृशम् । ^v^मित्रस्य ^v^वरुणस्य[5] ^v^अग्नेः च[5]। उपलक्षणमेतत् । तदुपलक्षितानां[6] जगतां ^v^चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा । उदयं प्राप्य च ^v^द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च ^v^अप्राः । स्वकीयेन तेजसा ^v^आ समन्तात् अपूरयत् । ईदृग्भूतमण्डलान्तर्वर्ती ^v^सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा[7] ^v^जगतः जङ्गमस्य ^v^तस्थुषः स्थावरस्य ^v^च ^v^आत्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम् । कारणाच्च कार्यं नातिरिच्यते[8] । तथा च पारमर्षं सूत्रं–' तदनन्यत्वमारम्भणशब्दादिभ्यः ' ( ब्र. सू. २. १. १४ ) इति । यद्वा । स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते । तथा च श्रूयते–' योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति ' ( तै. आ. १. १४. १ ) इति ॥ आप्राः[9] । ' प्रा पूरणे ' । लङि पुरुषव्यत्ययः । अदादित्वात् शपो लुक् । जगतः । ' गमेर्द्वे च ' ( पा. सू. ३. २. १७८. ३ ) इति क्विप् द्विर्वचनम् । ' गमः क्वौ ' इति अनुनासिकलोपः । तस्थुषः । तिष्ठतेर्लिटः क्वसुः । द्विर्वचने[10] ' शर्पूर्वाः खयः ' । षष्ठ्येकवचने ' वसोः संप्रसारणम् ' इति संप्रसारणम् । ' आतो लोप इटि च ' इति आकारलोपः । ' शासिवसि० ' इति षत्वम् ॥

---

१. क्ष-ट-ठ–' कुत्सस्यार्षम् ' नास्ति । २. क्ष-ट-ठ–सूर्यदेवत्यम् । ३. क्ष-ट-ठ–शुनासीरीये । ४. क्ष-ट-ठ–प्राप्तमभूत् । ५. क्ष-ट-ठ–वरुणस्याग्नेश्चक्षुः । ६. क्ष-ट-ठ-न-स–एतदुपलक्षितानाम् । ७. क्ष-ट-ठ–परमेश्वरः । ८. क्ष-ट-ठ–न व्यतिरिच्यते । ९. क्ष-ट–अप्राः । १०. क्ष-ट– द्विर्वचनम् ।

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ २ ॥

सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् । अभि । एति । पश्चात् ।
यत्र । नरः । देवऽयन्तः । युगानि । विऽतन्वते । प्रति । भद्राय । भद्रम् ॥ २ ॥

[v]सूर्यः [v]देवीं दानादिगुणयुक्तां [v]रोचमानां दीप्यमानाम् [v]उषसं [v]पश्चात् [v]अभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति । तत्र दृष्टान्तः । [v]मर्यो [v]न [v]योषाम् । यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततमनुगच्छति तद्वत् । [v]यत्र यस्यामुषसि जातायां [v]देवयन्तः देवं द्योतमानं सूर्यं यष्टुमिच्छन्तः [v]नरः यज्ञस्य नेतारो यजमानाः [v]युगानि । युगशब्दः कालवाची । तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते यथा दर्शपूर्णमासौ इति । अग्निहोत्रादीनि कर्माणि [v]वितन्वते विस्तारयन्ति । यद्वा । देवयन्तो देवयागार्थं धनमात्मन इच्छन्तो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयन्ति । तामुषसमनुगच्छतीत्यर्थः । एवंविधं [v]भद्रं कल्याणं सूर्यं [v]प्रति [v]भद्राय कल्याणरूपाय कर्मफलाय[1] स्तुमः इति शेषः । यद्वा । देवयन्तः[2] देवकामा यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणम्[3] अग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयन्ति ॥ मर्यः । 'मृङ् प्राणत्यागे'। 'छन्दसि निष्टर्क्य०' इत्यादौ यत्प्रत्ययान्तो निपात्यते । 'यतोऽनावः' इत्याद्युदात्तत्वम् । युगानि । युजेः कर्मणि घञ् । युगशब्दः कालविशेषे रथाद्युपकरणे च (का. ६. १. १६०) इति उञ्छादिषु पाठात् गुणाभावः अन्तोदात्तत्वं च । वितन्वते । 'तनु विस्तारे'। 'तनादिकृञ्भ्य उः'। सहेति योगविभागात् तिङोपसर्गस्य[4] समासे सति 'समासस्य' इत्यन्तोदात्तत्वम् ॥

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः ।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ३ ॥

भद्राः । अश्वाः । हरितः । सूर्यस्य । चित्राः । एतऽग्वाः । अनुऽमाद्यासः ।
नमस्यन्तः । दिवः । आ । पृष्ठम् । अस्थुः । परि । द्यावापृथिवी इति । यन्ति । सद्यः ॥३॥

[v]भद्राः कल्याणाः । अश्वाः एतग्वाः इत्येतदुभयम्[5] अश्वनाम । तत्रैकं क्रियापरं योजनीयम् । [v]अश्वाः तुरगा व्यापनशीला वा [v]हरितः हर्तारः [v]चित्राः विचित्रावयवाः [v]अनुमाद्यासः अनुक्रमेण सर्वैः स्तुत्या मादनीया एवंभूताः [v]सूर्यस्य [v]एतग्वाः अश्वाः । यद्वा । एतं[6] गन्तव्यं मार्गं[7] गन्तारोऽश्वाः । एतं शबलवर्णं वा प्राप्नुवन्तोऽश्वाः । [v]नमस्यन्तः अस्माभिः नमस्यमानाः सन्तः [v]दिवः अन्तरिक्षस्य [v]पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् [v]आ [v]अस्थुः आतिष्ठन्ति प्राप्नुवन्ति[8] । यद्वा । हरितो रसहरणशीलाः[9] रश्मयः

---

१. क्ष-ट-ठ–फलाय । २. क्ष-ट-ठ–'देवयन्तः' नास्ति । ३. क्ष-ट-ठ–'कल्याणम्' नास्ति । ४. क्ष-ट–वीत्युपसर्गस्य । ५. क्ष-ट-ठ–इत्युभयम् । ६. श–एतं एतव्यम् । ७. क्ष-ट–वा; ठ–'मार्गम्' नास्ति । ८. क्ष-ट-ठ–'प्राप्नुवन्ति' नास्ति; स–आप्नुवन्ति । ९. क्ष-ट-ठ-न-स–हरणशीलाः ।

भद्रादिलक्षणविशिष्टाः[1] दिवः पृष्ठं नभःस्थलमातिष्ठन्ति । आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव एकेनाह्ना परि यन्ति परितो गच्छन्ति व्याप्नुवन्तीत्यर्थः ॥ अश्वाः । ‘ अशू व्याप्तौ ’ । ‘ अशिप्रुषि॰ ’ इत्यादिना क्वन् । एतग्वाः । ‘ इण् गतौ ’ । ‘ असिहसि॰ ’ इत्यादिना कर्मणि तन्प्रत्ययः । गमेरौणादिको भावे ड्वप्रत्ययः । एतमेतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अनुमाद्यासः । ‘ मदि स्तुतौ ’ । अस्मात् ण्यन्तात् ‘ अचो यत् ’ । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् । नमस्यन्तः । ‘ नमोवरिवः॰ ’ इति पूजार्थे क्यच् । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अस्थुः । तिष्ठतेश्छान्दसो वर्तमाने लुङ् । ‘ गातिस्था॰ ’ इति सिचो लुक् । ‘ आतः ’ इति झेः जुस् ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ४ ॥

तत् । सूर्यस्य । देवऽत्वम् । तत् । महिऽत्वम् । मध्या । कर्तोः । विऽततम् । सम् । जभार ।
यदा । इत् । अयुक्त । हरितः । सधऽस्थात् । आत् । रात्री । वासः । तनुते । सिमस्मै ॥ ४ ॥

सूर्यस्य सर्वप्रेरकस्य[2] आदित्यस्य तत् देवत्वम् ईश्वरत्वम् । स्वातन्त्र्यमिति यावत् । महित्वं महत्त्वं माहात्म्यं च तत् एव । तच्छब्दश्रुतेः यच्छब्दाध्याहारः । यत् कर्तोः । कर्मनामैतत् । प्रारब्धापरिसमाप्तस्य[3] कृष्यादिलक्षणस्य कर्मणः मध्या मध्ये अपरिसमाप्ते एव तस्मिन् कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालम् अस्तं गच्छन् सूर्यः सं जभार अस्माल्लोकात् स्वात्मन्युपसंहरति । कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव[4] विसृजति अस्तं यन्तं सूर्यं दृष्ट्वा । ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति । न कस्यापि । सूर्य एवेदृशं स्वातन्त्र्यं महिमानं चावगाहते । अपि च इत् इत्यवधारणे । यदेत् यस्मिन्नेव काले हरितः रसहरणशीलान् स्वरश्मीन् हरिद्वर्णानश्वान् वा सधस्थात् सहस्थानात् अस्मात् पार्थिवाल्लोकादादाय अयुक्त अन्यत्र संयुक्तान् करोति । यद्वा । युजिः केवलोऽपि विपूर्वः[5] द्रष्टव्यः। यदैवासौ स्वरश्मीनश्वान् वा सधस्थात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथः। तस्मात् अयुक्त अमुञ्चत्[6]। आत् अनन्तरमेव रात्री निशा वासः आच्छादयितृ तमः सिमस्मै। सिमशब्दः सर्वशब्दपर्यायः। सप्तम्यर्थे चतुर्थी। सर्वस्मिन् लोके तनुते विस्तारयति। यद्वा। वासो वासरम् अहः। तत् सर्वस्मात् अस्माल्लोकादपनीय रात्री तमस्तनुते। अत्र निरुक्तं—‘ तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासौ अयुक्त हरणानादित्यरश्मीन् हरितोऽश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवती सर्वस्मात् ’ (निरु. ४. ११) इति ॥ महित्वम् । ‘ मह पूजायाम् ’ । औणादिक इन्प्रत्ययः । ‘ तस्य भावस्त्वतलौ ’ ( पा. सू. ५. १. ११९ ) । मध्या । मध्यशब्दात् सप्तम्येकवचनस्य ‘ सुपां सुलुक्॰ ’ इति डादेशः । कर्तोः । करोतेरौणादिकः तुन्प्रत्ययः । विततम् । विपूर्वात्तनोतेः कर्मणि निष्ठा । उदित्त्वेन क्त्वाप्रत्यये इटो विकल्पनात् ‘ यस्य विभाषा ’ इति इट्प्रतिषेधः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । जभार । ‘ हृग्रहोर्भः॰ ’ इति भत्वम् ।

---

१. क्ष-ट-ठ—भद्रादिविशेषणविशिष्टाः; स—भद्रादिविशेषणेन विशिष्टाः । २. क्ष-ट-ठ-न-स—सर्वस्य प्रेरकस्य । ३. ठ—प्रवृत्तस्यापरिसमाप्तस्य; स—प्रारब्धस्य (स्या) परिसमाप्तस्य । ४. क्ष-ट-ठ-स—प्रवृत्तं कर्म अपरिसमाप्तमेव । ५. क्ष-ट-ठ—विपूर्वार्थे । ६. क्ष-ट-ठ—अमुचत् ।

अयुक्त । युजेर्लुङि ' झलो झलि ' इति सिचो लोपः । सधस्थात् । ' घञर्थे कविधानम्° ' इति अधिकरणे कप्रत्ययः । ' सध मादस्थयोश्छन्दसि ' इति सधादेशः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । रात्री । ' रात्रेश्चाजसौ ' इति ङीप् ॥

**तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒पं कृ॑णुते॒ द्योरु॒पस्थे॑ ।**

**अ॒न॒न्तम॒न्यद्रु॒शद॑स्य॒ पाजः॑ कृ॒ष्णम॒न्यद्ध॒रितः॒ सं भ॑रन्ति ॥ ५ ॥**

तत् । मि॒त्रस्य॑ । वरु॑णस्य । अ॒भि॒ऽचक्षे॑ । सूर्यः॑ । रू॒पम् । कृ॒णु॒ते॒ । द्योः । उ॒पऽस्थे॑ ।
अ॒न॒न्तम् । अ॒न्यत् । रु॒शत् । अ॒स्य॒ । पाजः॑ । कृ॒ष्णम् । अ॒न्यत् । ह॒रितः॑ । सम् । भ॒र॒न्ति॒ ॥ ५ ॥

ᵛतत् तदानीम् उदयसमये ᵛमित्रस्य ᵛवरुणस्य एतदुभयोपलक्षितस्य सर्वस्य जगतः ᵛअभिचक्षे आभिमुख्येन प्रकाशनाय ᵛद्योः नभसः ᵛउपस्थे उपस्थाने मध्ये ᵛसूर्यः सर्वस्य प्रेरकः सविता ᵛरूपं सर्वस्य निरूपकं प्रकाशकं तेजः ᵛकृणुते करोति । अपि च ᵛअस्य सूर्यस्य ᵛहरितः रसहरणशीला रश्मयः हरिद्वर्णाः[1] अश्वा वा ᵛअनन्तम् अवसानरहितं कृत्स्नस्य जगतो व्यापकं ᵛरुशत् दीप्यमानं श्वेतवर्णं ᵛपाजः । बलनामैतत् । बलयुक्तम् अतिबलस्यापि नैशस्य तमसो निवारणे समर्थम् ᵛअन्यत् तमसो विलक्षणं तेजः ᵛसं ᵛभरन्ति अहनि स्वकीयागमनेन निष्पादयन्ति । तथा ᵛकृष्णं कृष्णवर्णम् ᵛअन्यत् तमः स्वकीयापगमनेन रात्रौ । अस्य रश्मयोऽप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः ॥ अभिचक्षे । संपदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । द्योः । ' ङसिङसोश्च ' ( पा. सू. ६. १. ११० ) इति पूर्वरूपता । उपस्थे । ' घञर्थे कविधानम्° ' इति कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । पाजः । पाति रक्षतीति पाजो बलम् । ' पातेर्बले जुट् च ' ( उ. सू. ४. ६४२) इति असुन् जुडागमश्च । छान्दसो मत्वर्थीयस्य विनो लोपः ॥

**अ॒द्या दे॑वा॒ उदि॑ता॒ सूर्य॑स्य॒ निरंह॑सः पिपृ॒ता निर॑व॒द्यात् ।**

**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ६ ॥**

अ॒द्य । दे॒वाः॒ । उत्ऽइ॑ता । सूर्य॑स्य । निः । अंह॑सः । पि॒पृ॒त । निः । अ॒व॒द्यात् ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ६ ॥

हे ᵛदेवाः द्योतमानाः सूर्यरश्मयः ᵛअद्य अस्मिन्काले ᵛसूर्यस्य आदित्यस्य ᵛउदिता उदितौ उदये सति इतस्ततः प्रसरन्तो यूयम् अस्मान् ᵛअंहसः पापात् ᵛनिः ᵛपिपृत निष्कृष्य पालयत । यदिदमस्माभिरुक्तं[2] ᵛनः अस्मदीयं ᵛतत् मित्रादयः षड्देवताः ᵛममहन्तां पूजयन्तु अनुमन्यन्ताम् । रक्षन्त्विति यावत्[2] । ᵛमित्रः प्रमीतेस्त्रायकः अहरभिमानी देवः । ᵛवरुणः अनिष्टानां निवारयिता रात्र्यभिमानी । ᵛअदितिः अखण्डनीया अदीना वा देवमाता । ᵛसिन्धुः स्यन्दनशीलोदकाभिमानिनी देवता । ᵛपृथिवी

१. क्ष-ट-ठ-हरितवर्णाः । २. क्ष-ट-ठ-यदिदमस्माभिः प्रार्थितं तान्मित्रादयः षड्देवताः पालयन्तु ( ट-पूजयन्तु ) ।

भूलोकस्याधिष्ठात्री ᵛद्यौः द्युलोकस्य । उतशब्दः समुच्चये ॥ अद्य । ‘ निपातस्य च ’ इति संहितायां दीर्घत्वम् । उदिता । उत्पूर्वात् एतेर्भावे क्तिन् । ‘ सुपां सुलुक्° ’ इति डादेशः । ‘ तादौ च° ’ इति गतेः प्रकृतिस्वरत्वम् । पिपृत । ‘ पृ पालनपूरणयोः पृ इत्येके ’ । लोटि जुहोत्यादित्वात् शपः श्लुः । द्विर्वचनोरदत्वहलादिशेषाः । ‘ अर्तिपिपर्त्योश्च ’ इति अभ्यासस्य इत्वम् । ‘ सार्वधातुकमपित् ’ इति तशब्दस्य ङित्त्वे सति ‘ ऋचि तुनुघ° ’ इत्यादिना संहितायां दीर्घः ॥ ७ ॥ ॥ १६ ॥

सप्तदशेऽनुवाके पञ्च सूक्तानि । तत्र ‘ नासत्याभ्याम् ’ इति पञ्चविंशत्यृचं प्रथमं सूक्तम् । उशिक्संज्ञायामङ्गराजस्य महिष्या दास्यां दीर्घतमसोत्पादितः कक्षीवान् अस्य सूक्तस्य ऋषिः । त्रिष्टुप् छन्दः । अश्विनौ देवता । तथा चानुक्रान्तं—‘ नासत्याभ्यां पञ्चाधिका कक्षीवान्दैर्घतमस उशिक्प्रसूत आश्विनं वै ’ इति । तुह्यादिपरिभाषया इदमादीनि पञ्च सूक्तानि अश्विदेवत्यानि । प्रातरनुवाकस्य आश्विने क्रतौ त्रैष्टुभे छन्दसि इदमादीनि त्रीणि सूक्तानि । ‘ अथाश्विनः ’ इति खण्डे सूत्रितं[1]—‘ ग्रावाणेव नासत्याभ्यामिति त्रीणि ’ ( आश्व. श्रौ. ४. १५ ) इति । आश्विनशस्त्रे[2] चैतानि शस्यानि[2] ‘ प्रातरनुवाकन्यायेन ’ ( आश्व. श्रौ. ६. ५ ) इति अतिदिष्टत्वात् ॥

**नास॑त्याभ्यां ब॒र्हिरि॑व॒ प्र वृ॑ञ्जे॒ स्तोमाँ॑ इयर्म्य॒भ्रिये॑व॒ वातः॑ ।**

**याव॑र्भ॑गाय विम॒दाय॑ जा॒यां से॑ना॒जुवा॑ न्यू॒हतू॒ रथे॑न ॥ १ ॥**

नास॑त्याभ्याम् । ब॒र्हिःऽइ॑व । प्र । वृ॒ञ्जे॒ । स्तोमा॑न् । इ॒यर्मि॑ । अ॒भ्रिया॑ऽइव । वातः॑ ।

यौ । अर्भ॑गाय । वि॒ऽम॒दाय॑ । जा॒याम् । से॒ना॒ऽजुवा॑ । नि॒ऽऊ॒हतुः॑ । रथे॑न ॥ १ ॥

ᵛबर्हिरिव यथा कश्चिद्यजमानो यागार्थं बर्हिः ᵛप्र ᵛवृञ्जे प्रकर्षेण अन्यूनानतिरिक्तं यागाय पर्याप्तं दर्भं वृङ्क्ते छिनत्ति संपादयतीति यावत् । एवमहं ᵛनासत्याभ्याम् अश्विभ्यां ᵛस्तोमान् स्तुतीः ᵛइयर्मि संपादयामि । एतदेव विशदीक्रियते । ᵛअभ्रियेव । यथा अभ्रियाणि अभ्रेषु मेघेष्ववस्थितान्युदकानि ᵛवातः वायुः वर्षणार्थं बहुशः प्रेरयति एवमहम् अश्विभ्यां स्तोत्राणि इयर्मि बहुशः प्रेरयामि । कीदृशावश्विनौ । ᵛअर्भगाय बालाय स्वयंवरलब्धभार्याय ᵛविमदाय एतत्संज्ञाय[3] राजर्षये मध्येमार्गं स्वयंवरार्थमागतैः ताम् अलभमानैरन्यैर्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै ᵛसेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिः दुष्प्रापेण ᵛरथेन ᵛयौ अश्विनौ ᵛजायां भार्यां परैरनुक्रान्तां[4] ᵛन्यूहतुः शत्रून्निहत्य तदीयं गृहं प्रापयामासतुः । ताभ्यामित्यर्थः ॥ नासत्याभ्याम् । सत्सु भवौ सत्यौ । न सत्यौ असत्यौ । न असत्यौ नासत्यौ । ‘ नभ्राण्नपात्° ’ इत्यादिना नञः प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । वृञ्जे । ‘ वृजी वर्जने ’ । आदादिकः । इदित्त्वात् नुम् । ‘ लोपस्त आत्मनेपदेषु ’ इति तलोपः । इयर्मि । ‘ ऋ गतौ ’ । जौहोत्यादिकः । ‘ अर्तिपिपर्त्योश्च ’ इति अभ्यासस्य इत्वम् । ‘ अभ्यासस्यासवर्णे ’ इति इयङ् । अभ्रियेव[5] । ‘ समुद्राभ्राद्घः ’ इति भवार्थे घः । घस्य इयादेशः । ‘ शेश्छन्दसि बहुलम् ’ इति शेर्लोपः । अर्भगाय । ‘ अर्तिगृभ्यां भन् ’ (उ. सू. ३. ४३२) इति अर्तेर्भन् । अर्भः एवार्भकः । ‘ संज्ञायां कन् ’ (पा. सू. ५. ३. ८७) । छान्दसो

---

१. क्ष-ट-ठ-सूत्रितं च । २. क्ष-ट-ठ—आश्विनशस्त्रेप्येतानि । ३. क्ष-ट-ठ—एतत्संज्ञकाय । ४. क्ष-ट-ठ-न-स—परैरनाक्रान्ताम् । ५. क्ष-ट-न-स—अभ्रिया इव; ठ—अभ्रिया ।

गकारः । अपर आह । अर्भमल्पं गायति शब्दयतीत्यर्भगः । 'कै गै शब्दे' । 'गापोष्टक्' (पा. सू. ३. २. ८) । 'आतो लोप इटि च' इति आकारलोपः । तदेतत् पदकृतः शाकल्यस्य अभिमतम्[1] । सेनाजुवा । जु इति सौत्रो धातुर्गत्यर्थः । अस्मादन्तर्भावितण्यर्थात् 'क्विब्वचिप्रच्छि°' इत्यादिना क्विब्दीर्घौ । तन्वादित्वादुवङ् (पा. सू. ६. ४. ७७. १) । न्यूहतुः । 'वह प्रापणे' लिटि अतुसि यजादित्वात् संप्रसारणम् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ॥

वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।
तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥ २ ॥

वीळुपत्मऽभिः । आशुहेमऽभिः । वा । देवानाम् । वा । जूतिऽभिः । शाशदाना ।
तत् । रासभः । नासत्या । सहस्रम् । आजा । यमस्य । प्रऽधने । जिगाय ॥ २ ॥

ᵛवीळुपत्मभिः । वीड्विति बलनाम । बलवदुत्पतनैः ᵛआशुहेमभिः शीघ्रगमनैः । वाशब्दः समुच्चये । हे ᵛनासत्या अश्विनौ एवंभूतैरश्वैश्च ᵛदेवानाम् इन्द्रादीनां ᵛजूतिभिः प्रेरणैश्च ᵛशाशदाना शाशद्यमानयोः अत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यः ᵛरासभः प्रजापतिना दत्तः सः ᵛयमस्य वैवस्वतस्य प्रीतिकरे ᵛप्रधने प्रकीर्णधनोपेते ᵛआजा आजौ संग्रामे ᵛतत् शत्रूणां ᵛसहस्रं ᵛजिगाय जितवान् । वैवस्वतो हि बहूनां मरणहेतुना संग्रामेण तुष्टो भवति । यद्वा । जेतव्यत्वेन प्रजापतिना निहितं ऋक्सहस्रं[2] शीघ्रगमनयुक्तो रासभो जिगाय जयेनालभत । अन्येभ्यः[3] देवेभ्यः पूर्वमेवाजिं प्राप्य युवां जयं प्रापयामास । तथा चास्मिन्नर्थे 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्' (ऐ. ब्रा. ४. ७) इत्यादिकं ब्राह्मणमनुसंधेयम् ॥ वीळुपत्मभिः । वीळु बलवत्पतन्तीति[4] वीळुपत्मानः । आशुहेमभिः । आशु शीघ्रं हिन्वन्ति गच्छन्तीति आशुहेमानः । तैः[5] । 'हि[6] गतौ[6] वृद्धौ च' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जूतिभिः । 'ऊतियूतिजूति°' इत्यादिना क्तिन् उदात्तत्वम् । शाशदाना । 'शद्लृ शातने' । अत्र गत्यर्थो धातूनामनेकार्थत्वात् । अस्मात् यङन्तात् लटः शानच् । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् शबभावः । अतोलोपयलोपौ । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । 'सुपां सुलुक्°' इति षष्ठ्याः पूर्वसवर्णदीर्घः । आजा । तेनैव सूत्रेण डादेशः । जिगाय । 'जि जये' । 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य कुत्वं गकारः ॥

तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ३ ॥

तुग्रः । ह । भुज्युम् । अश्विना । उदऽमेघे । रयिम् । न । कः । चित् । ममृऽवान् । अव । अहाः ।
तम् । ऊहथुः । नौभिः । आत्मन्ऽवतीभिः । अन्तरिक्षप्रुत्ऽभिः । अपऽउदकाभिः ॥ ३ ॥

---

१. ठ-स—अनभितम् । २ क्ष-ट-ठ—ऋचां सहस्रम् । ३. क्ष-ट-ठ—अन्येभ्योऽपि । ४. क्ष-ट-ठ—बलवत्पतन्ति उत्पतन्तीति । ५. क्ष-ट-ठ-स—'तैः' नास्ति । ६. क्ष-ट-ठ—पत गैता । हि गतौ ।

अत्रेयमाख्यायिका । तुग्रो नाम अश्विनोः प्रियः कश्चिद्राजर्षिः । स च द्वीपान्तरवर्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौः मध्येसमुद्रमतिदूरं गता वायुवशेन भिन्ना आसीत् । तदानीं सः भुज्युः शीघ्रम् अश्विनौ तुष्टाव । तौ च स्तुतौ सेनया सहितम् आत्मीयासु नौषु आरोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरिति । अयमर्थः इदमादिकेन तृचेन प्रतिपाद्यते । हशब्दः प्रसिद्धौ । ᵛतुग्रः खलु[1] पूर्वं शत्रुभिः पीडितः सन् तज्जयार्थम् ᵛउदमेघे । उदकैर्मिह्यते सिच्यते इति उदमेघः समुद्रः तस्मिन् ᵛभुज्युम् एतत्संज्ञं प्रियं पुत्रम् ᵛअवाहाः । नावा गन्तुं पर्यत्याक्षीत् । तत्र दृष्टान्तः । ᵛममृवान् म्रियमाणः सन् धनलोभी[2] ᵛकश्चित् मनुष्यः ᵛरयिं ᵛन यथा धनं परित्यजति तद्वत् । हे अश्विनौ ᵛतं च भुज्युं मध्येसमुद्रं निमग्नं ᵛनौभिः पितृसमीपम् ᵛऊहथुः युवां प्रापितवन्तौ । कीदृशीभिः । ᵛआत्मन्वतीभिः आत्मीयाभिः युवयोः स्वभूताभिरित्यर्थः । यद्वा । धृतिरात्मा धारणवतीभिरित्यर्थः । ᵛअन्तरिक्षप्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्य उपरिष्टादेव[3] गन्त्रीभिः ᵛअपोदकाभिः सुश्लिष्टत्वात् अपगतोदकाभिः[4] अप्रविष्टोदकाभिरित्यर्थः ॥ उदमेघे । ' मिह सेचने ' । कर्मणि घञ् । ' न्यङ्क्वादीनां च ' ( पा. सू. ७. ३. ५३ ) इति कुत्वम् । ' उदकस्योदः संज्ञायाम् ' ( पा. सू. ६. ३. ५७ ) । थाथादिना उत्तरपदान्तोदात्तत्वम् । ममृवान् । ' मृङ् प्राणत्यागे ' । लिटः क्वसुः । क्रादिनियमात् प्राप्तस्य इटः ' वस्वेकाजाद्घसाम् ' इति नियमात् अभावः । अहाः । ' ओहाक् त्यागे ' । लुङि तिपि च्लेः सिच् । आगमानुशासनस्यानित्यत्वात् सगिटौ न क्रियेते । ' बहुलं छन्दसि ' इति इडभावः । ' हल्ङ्याब्भ्यः° ' इति तिलोपः । रुत्वविसर्गौ । यद्वा । ' मन्त्रे घस° ' इति च्लेर्लुक् । च्लेर्लुप्तत्वात् इण् न क्रियते । नौभिः । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । आत्मन्वतीभिः । आत्मनो मतुप् । ' मादुपधायाः° ' इति वत्वम् । ' अनो नुट् ' ( पा. सू. ८. २. १६ ) इति नुट् । नलोपः । ' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वम् । अन्तरिक्षप्रुद्भिः । ' प्रुङ् गतौ ' । ' क्विप् च ' इति क्विप् ॥

**तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।**
**समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ ४ ॥**

तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजत्ऽभिः । नासत्या । भुज्युम् । ऊहथुः । पतङ्गैः ।
समुद्रस्य । धन्वन् । आर्द्रस्य । पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥ ४ ॥

हे नासत्यौ सेनया सह उदके निमग्नं ᵛभुज्युं ᵛतिस्रः ᵛक्षपः त्रिसंख्याका रात्रीः ᵛत्रिरहा त्रिवारमावृत्तान्यहानि च ᵛअतिव्रजद्भिः अतिक्रम्य गच्छद्भिरेतावन्तं कालमतिव्याप्य[5] वर्तमानैः ᵛपतङ्गैः पतद्भिः ᵛत्रिभिः त्रिसंख्याकैः ᵛरथैः ᵛऊहथुः युवामूढवन्तौ । क्वेति चेत् उच्यते । समुद्रस्य अम्बुराशेर्मध्ये ᵛधन्वन् धन्वनि जलवर्जिते प्रदेशे ᵛआर्द्रस्य[6] उदकेनार्द्रीभूतस्य ᵛसमुद्रस्य ᵛपारे तीरदेशे च । कथंभूतैः रथैः । ᵛशतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः ᵛषळश्वैः षड्भिरश्वैर्युक्तैः ॥ तिस्रः । ' त्रिचतुरोः स्त्रियाम्° ' इति त्रिशब्दस्य तिस्रादेशः । स चान्तोदात्तः । ' अचि र ऋतः ' इति रेफादेशे ' उदात्तयणो हल्पूर्वात् ' इति विभक्तेरुदात्तत्वम् । क्षपः । विभक्त्यन्तस्य छान्दसं ह्रस्वत्वम् ।

---

१. स-ह खलु । २. क्ष-ट-ठ-धनलोभात् । ३. क्ष-ट-ठ-उपरिष्टात् । ४. क्ष-ट-अपगतजलाभिः । ५. क्ष-ट-ठ-कालमभिव्याप्य । ६. क्ष-ट-ठ-स-तथा आर्द्रस्य ।

यद्वा[1]। शसि 'आतः' इति योगविभागादधातोरपि आकारलोपः। अह्ना। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः[1]। पतङ्गैः। 'पत्लृ गतौ'। 'पतेरङ्गच्०' (उ. सू. १. ११६)। धन्वन्। 'धवि-र्गत्यर्थः'। इदित्त्वात् नुम्। 'कनिन्युवृषि०' इत्यादिना कनिन्। 'सुपां सुलुक्०' इति सप्तम्या लुक्। शतपद्भिः। शतं पादा येषाम्। 'संख्यासुपूर्वस्य' इति पादशब्दस्यान्त्यलोपः समासान्तः। अयस्मयादित्वेन भत्वात् 'पादः पत्' इति पद्भावः। यद्वा। पादसमानार्थः[2] पच्छब्दः प्रकृत्यन्तरं द्रष्टव्यम् ॥

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥ ५ ॥

अनारम्भणे । तत् । अवीरयेथाम् । अनास्थाने । अग्रभणे । समुद्रे ।
यत् । अश्विनौ । ऊहथुः । भुज्युम् । अस्तम् । शतऽअरित्राम् । नावम् । आतस्थिऽवांसम् ॥५॥

हे vअश्विनौ vअनारम्भणे आलम्बनरहिते vसमुद्रे vतत् कर्म vअवीरयेथाम्। विक्रान्तं कृतवन्तौ युवाम्। अनारम्भणत्वमेव स्पष्टीकरोति। vअनास्थाने। आस्थीयते अस्मिन् इति आस्थानो भूप्रदेशः। तद्र-हिते स्थातुमशक्ये जले इत्यर्थः। vअग्रभणे अग्रहणे। हस्तेन ग्राह्यं शाखादिकमपि यत्र[3] नास्ति तस्मिन् इत्यर्थः[4]। किं पुनस्तत्कर्म। vभुज्युं समुद्रे मग्नं vशतारित्रां बह्वरित्राम्। यैः काष्ठैः पार्श्वतो बद्धैर्जला-लोडने सति नौः शीघ्रं गच्छति तानि अरित्राणि। ईदृशीं vनावम् vआतस्थिवांसम् आस्थितवन्तमारूढ-वन्तं कृत्वा vअस्तम्। गृहनामैतत्। पितुस्तुग्रस्य गृहं प्रति vयत् vऊहथुः[5]। तत्प्रापणमन्यैर्दुःशकं युवां समुद्रमध्ये कृतवन्तावित्यर्थः॥ अनारम्भणे। आरभ्यते इत्यारम्भणम्। 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। अवीरयेथाम्। 'शूर वीर विक्रान्तौ'। चुरादिरात्मनेपदी। अनास्थानाग्रभणयोः पूर्ववत् ल्युट्स्वरौ। अयं[6] तु विशेषः[6]। 'हृग्रहोर्भः०' इति भत्वम्। अस्तम्। अस्यते अस्मिन् सर्वमित्यस्तं गृहम्। 'असिहसि०' इत्यादिना तन्प्रत्ययः। शतारित्राम्। 'ऋ गतौ'। 'अर्तिलूधूसू०' (पा. सू. ३. २. १८४) इति करणे इत्रप्रत्ययः। बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम् ॥　　॥ ८ ॥

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ ६ ॥

यम् । अश्विना । ददथुः । श्वेतम् । अश्वम् । अघऽअश्वाय । शश्वत् । इत् । स्वस्ति ।
तत् । वाम् । दात्रम् । महि । कीर्तेन्यम् । भूत् । पैद्वः । वाजी । सदम् । इत् । हव्यः । अर्यः ॥६॥

अत्रेदमाख्यायते। पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव। तस्मै प्रीतौ कंचिच्छ्वेतवर्णमश्वं दत्त-वन्तौ। स चाश्वस्तस्य प्रौढं जयं चकारेति। एतदत्र प्रतिपाद्यते। हे अश्विनौ युवाम् vअघाश्वाय अहन्त-

---

१. क्ष-ट-ठ—'यद्वा......शेर्लोपः' नास्ति। २. क्ष-ट-ठ—पादशब्दस्य समानार्थः; स—पादशब्दसमानार्थः। ३. क्ष-ट-ठ—यस्मिन्। ४. क्ष-ट-ठ—' इत्यर्थः ' नास्ति। ५. क्ष-ट-ठ-स—ऊहथुः प्रापयामासथुः। ६. क्ष-ट-ठ—' अयं तु विशेषः ' नास्ति।

त्याश्वाय[1]। पेदुनाम्ने राजर्षये ᵛयं श्वेतवर्णम् ᵛअश्वं ᵛददथुः दत्तवन्तौ सोऽश्वस्तस्मै ᵛस्वस्ति जयलक्षणं मङ्गलं ᵛशश्वत् ᵛइत् नित्यमेव चकार। ᵛवां युवयोः ᵛतत् ᵛदात्रं दानं ᵛमहि महदतिगम्भीरम् अत एव ᵛकीर्तेन्यं सर्वैः कीर्तनीयं प्रशस्यं ᵛभूत् अभूत्। तस्मात् ᵛपैद्वः पेदोः संबन्धी पतनशीलः शीघ्रगामी वा[2] ᵛअर्यः शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा ᵛवाजी वेजनवान् सोऽश्वः ᵛसदमित् सदैव ᵛहव्यः अस्माभिरप्याह्वातव्यः॥ दात्रम्। ददातेर्भावे औणादिकः त्रप्रत्ययः। महि। 'मह पूजायाम्'। 'इन्सर्वधातुभ्यः[3]' इति इन्[3]। कीर्तेन्यम्। 'कृत संशब्दने'। 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्यप्रत्ययः। 'ॠत इद्धातोः' इति इत्वम्। भूत्। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। पैद्वः। पेदोः संबन्धी[4]। 'तस्येदम्' इति अण्। छान्दसो वर्णलोपः। हव्यः। ह्वयतेः 'अचो यत्' इति यत्। 'बहुलं छन्दसि' इति संप्रसारणम्। गुणः। 'धातोस्तन्निमित्तस्यैव' इति अवादेशः। अर्यः। 'ऋ गतौ'। 'अघ्न्यादयश्च' (उ. सू. ४. ५५१) इति औणादिको यत्। व्यत्ययेनान्तोदात्तत्वम्॥

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम्।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः॥ ७॥

युवम्। नरा। स्तुवते। पज्रियाय। कक्षीवते। अरदतम्। पुरम्ऽधिम्।
कारोतरात्। शफात्। अश्वस्य। वृष्णः। शतम्। कुम्भान्। असिञ्चतम्। सुरायाः॥ ७॥

अत्रेयमाख्यायिका। कक्षीवानृषिः पुरा तमसा तिरोहितज्ञानः[5] सन् ज्ञानार्थमश्विनौ तुष्टाव। तस्मै अश्विनौ प्रभूतां धियं दत्तवन्ताविति। तदाह। हे ᵛनरा नेतारावश्विनौ ᵛयुवं युवां ᵛपज्रियाय। पज्रा इत्यङ्गिरसाम् आख्या 'पज्रा वा अङ्गिरसः' इत्याम्नातत्वात्। तेषां कुले[6] जाताय ᵛकक्षीवते। कक्ष्या रज्जुरश्वस्य। तद्वते तत्संज्ञाय ᵛस्तुवते युवयोः स्तुतिं कुर्वते मह्यं ᵛपुरंधिं प्रभूतां धियं बुद्धिम् ᵛअरदतं व्यलिखतम्। यथा सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः। अपि च ᵛकारोतरात्। कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन् सुरायाः स्रावणं क्रियते। लुप्तोपममेतत्। कारोतरात् यथा सुरायाः संपादकाः[7] तां स्रावयन्ति[7] एवमेव युवां ᵛवृष्णः सेचनसमर्थस्य युष्मदीयस्य ᵛअश्वस्य ᵛशफात् खुरात् ᵛसुरायाः ᵛशतं ᵛकुम्भान् असंख्यातान् सुराघटान् ᵛअसिञ्चतम् अक्षारयतम्। यद्वा। सिञ्चतिः पूरणार्थः। कारोतरस्थानीयात् युष्मदीयाश्वखुरात् या सुरा प्रवहति तया असंख्यातान् घटान् असिञ्चतम् अपूरयतम्। ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचन्ते तेषामित्यर्थः॥ स्तुवते। स्तौतेर्लटः शतृ। अदादित्वात् शपो लुक्। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्। पज्रियाय। पज्रशब्दात् शैषिको घच्। कक्षीवते। 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्°' इति निपातनात् कक्ष्याशब्दस्य संप्रसारणं वत्वं च। अरदतम्। 'रद विलेखने'। पुरंधिम्। 'पुरंधिर्बहुधीः' (निरु. ६. १३) इति यास्कः। पृषोदरादित्वात् पुरंधिभावः। यद्वा। पुरं पूरयितव्यं सर्वविषयजातमस्यां धीयते अवस्थाप्यते इति पुरंधिर्बुद्धिः। 'कर्मण्यधिकरणे च' इति दधातेः किप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् अलुक्। इदं तु व्युत्पत्तिमात्रं वस्तुतः पृषोदरादिरेव। असिञ्चतम्। 'षिचिर् क्षरणे'। तौदादिकः। 'शे मुचादीनाम्' इति नुम्॥

---

१. ट-ठ–अहताश्वाय। २. क्ष-ट-ठ–'वा' नास्ति। ३. क्ष-ट-ठ–इन्। ४. क्ष-ट-ठ–अयम्। ५. क्ष-ट–निरोधितज्ञानः। ६. क्ष-ठ-ठ–कुलेषु। ७. क्ष-ट-ठ–संपादकस्तां संपादयति।

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८ ॥

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् । ऊर्जम् । अस्मै । अधत्तम् ।
ऋबीसे । अत्रिम् । अश्विना । अवऽनीतम् । उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥ ८ ॥

अत्रेदमाख्यानम् । अत्रिम् ऋषिम् असुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निना अबाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनौ अग्निमुदकेनोपशमय्य तस्मात् पीडागृहात् अविकलेन्द्रियवर्गं सन्तं निरगमयतामिति । तदेतत् प्रतिपाद्यते । हे अश्विनौ [v]हिमेन हिमवच्छीतेनोदकेन [v]घ्रंसं दीप्यमानम् अत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निम् [v]अवारयेथां युवां निवारितवन्तौ शीतीकृतवन्तावित्यर्थः । अपि च [v]अस्मै असुरपीडया कार्श्यं प्राप्ताय अत्रये [v]पितुमतीम् । पितुरित्यन्ननाम । अन्नयुक्तम् [v]ऊर्जं बलप्रदं रसात्मकं क्षीरादिकम् [v]अधत्तं पुष्ट्यर्थं प्रायच्छतम् । [v]ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहे [v]अवनीतम् अवाङ्मुखतया असुरैः प्रापितम् [v]अत्रिं [v]सर्वगणम् । गणः समूहः । सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं [v]स्वस्ति अविनाशो यथा भवति तथा [v]उन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहं प्रापितवन्तौ । यद्वा हिमेन शीतेन वृष्ट्युदकेन अग्निम् अग्निवत्तीक्ष्णं घ्रंसम् । अहर्नामैतत् । सामर्थ्यात् निदाघकालीनम् अहः अवारयेथाम् । तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपि च अस्मै अग्नये पितुमतीं चरुपुरोडाशादिलक्षणान्नोपेतमूर्जं बलकरं[1] रसात्मकम्[2] उपस्तरणाभिघारणात्मकं घृतमधत्तम् । वृष्ट्युत्पादनेनाग्नेर्यागार्थं हवींषि निष्पादितवन्तावित्यर्थः । ऋबीसे अपगततेजस्के पृथिवीद्रव्ये अवनीतमोषधीनामुत्पादनाय अवस्तान्नीतम् । पार्थिवाग्निना परिपक्वाः उदकेन क्लिन्नाः ह्योषधिवनस्पतयो विरोहन्ति । अत्रिं हविषामत्तारमोषधिवनस्पत्यादीनां वा एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशः[3] यथा भवति तथा उन्निन्यथुः । व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ । कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रवर्षणेन[4] व्यक्तीकृतवन्तावित्यर्थः । अयं पक्षो यास्केन ‘ हिमेनोदकेन ’ ( निरु. ६. ३६ ) इत्यादिना उक्तः ॥ पितुमतीम् । ‘ ह्रस्वनुड्भ्यां मतुप् ’ इति मतुप उदात्तत्वम् । ऋबीसे । अत्र यास्कः । ‘ऋबीसमपगतभासमपचितभासमपहृतभासं गतभासं वा’( निरु. ६. ३५ ) इति । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । अत्रिम् । ‘अद भक्षणे’ । ‘ अदेस्त्रिनि च ’ इति चशब्दात् त्रिः । अवनीतम् । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । स्वस्ति । ‘ अस भुवि ’ । भावे क्तिन् । ‘ छन्दस्युभयथा ’ इति सार्वधातुकत्वात् अस्तेर्भूभावाभावः ॥

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ ९ ॥

परा । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः । जिह्मऽबारम् ।
क्षरन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥ ९ ॥

---

१. क्ष-ट-ल—बलात्मकम् ।    २. क्ष-ट-ठ—‘ रसात्मकम् ’ नास्ति ।    ३. क्ष-ट-ट—अविनाशम् ।
४. न-स—प्रकर्षेण ।

अत्रेदमाख्यानम् । कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुः[1] गोतमस्य ऋषेः समीपं देशान्तरे वर्तमानं कूपमुत्खायाश्विनौ प्रापयेताम्[2] । प्रापय्य च तं कूपं स्नानपानादिसौकर्याय उपरिमूलमधोबिलमवास्थापयतामिति । तदेतदाह । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवाम् अवतम् । कूपनामैतत् । अवस्तात्तं कूपं परा अनुदेथां गोतमस्य ऋषेः समीपे प्रैरिषाथाम् । तदनन्तरं तं कूपम् उच्चाबुध्नम् उच्चैरुपरिष्टात् बुध्नो मूलं यस्य स तथोक्तः । जिह्मबारं जिह्ममधस्ताद्वर्तमानतया वक्रं[3] बारं द्वारं यस्य स तथोक्तः । एवंगुणविशिष्टं चक्रथुः युवामकृषाथाम् । तस्मात् कूपात् तृष्यते पिपासतः गोतमस्य पायनाय पानार्थम् आपो न आपश्च । अयं नशब्दश्चार्थे । क्षरन् प्रवाहरूपेण निरगमन् । कीदृशस्य । राये हवींषि दत्तवतः सहस्राय सहनशीलाय । यद्वा सहस्रसंख्याकाय राये धनाय एतत्संख्यधनलाभार्थं च अक्षरन् ॥ अनुदेथाम् । ‘ णुद प्रेरणे ’ । तौदादिकः । जिह्मबारम् । द्वारशब्दस्य पृषोदरादित्वात् बारादेशः[4] । क्षरन् । ‘ क्षर संचलने ’ । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । शपः पित्त्वादनुदात्तत्वम् । तिङो लसार्वधातुकस्वरेण धातुस्वरः । पायनाय[5] । हेतुमति णिच् । ‘ शाच्छासाह्वा° ’ इति युक् । भावे ल्युट् । राये । ‘ रा दाने ’ । राति ददातीति राः । ‘ रातेर्डैः ’ ( उ. सू. २. २२४ ) । ‘ ऊडिदम्° ’ इति विभक्तेरुदात्तत्वम् । तृष्यते । ‘ ञितृषा पिपासायाम् ’ । श्यन् । लटः शतृ । श्यनो नित्त्वादाद्युदात्तत्वम् । ‘ षष्ठ्यर्थे चतुर्थी वक्तव्या ’ ( पा. म. २. ३. ६२. १ ) इति चतुर्थी ॥

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥ १० ॥

जुजुरुषः । नासत्या । उत । वव्रिम् । प्र । अमुञ्चतम् । द्रापिम्ऽइव । च्यवानात् ।
प्र । अतिरतम् । जहितस्य । आयुः । दस्रा । आत् । इत् । पतिम् । अकृणुतम् । कनीनाम् ॥ १० ॥

अत्रेदमाख्यानम् । वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तश्च्यवनाख्यः ऋषिरश्विनौ तुष्टाव । स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति । तदेतदाह । हे नासत्या अश्विनौ जुजुरुषः जीर्णात् च्यवानात् च्यवनाख्यादृषेः सकाशात् वव्रिं कृत्स्नं शरीरमावृत्यावस्थितां जरां प्रामुञ्चतं प्रकर्षेणामोचयतम् । तत्र दृष्टान्तः । द्रापिमिव । द्रापिरिति कवचस्याख्या । यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चात् शरीरात् पृथक्करोति तद्वत् । उत अपि च हे दस्रा एतत्संज्ञौ दर्शनीयौ वा अश्विनौ जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेः आयुः जीवनं प्रातिरतं प्रावर्धयतम् । प्रपूर्वस्तिरतिर्वर्धनार्थः । आत् इत् अनन्तरमेव युवानं सन्तं कनीनां कन्यानां पतिं भर्तारम् अकृणुतम् अकुरुतम् ॥ जुजुरुषः । ‘ जॄष् वयोहानौ ’ । लिटः क्वसुः । ‘ बहुलं छन्दसि ’ इति उत्वम् । द्विर्भावः । पञ्चम्येकवचने ‘ वसोः संप्रसारणम् ’ इति संप्रसारणम् । ‘ शासिवसिघसीनां च ’ इति षत्वम् । वव्रिम् । ‘ वृञ् वरणे ’ । ‘ आदृगमहन° ’ इति किप्रत्ययः । जहितस्य । ‘ ओहाक् त्यागे ’ । कर्मणि निष्ठा । तस्य ‘ छन्दस्युभयथा ’ इति सार्वधातुकत्वात् यक् । तस्य ‘ बहुलं छन्दसि ’

---

१. क्ष-ट-ठ–स्नातुः । २. क्ष-ट-ठ–प्रापयताम् । ३. क्ष-ट-ठ–कुटिलम् । ४. क्ष-ट-ठ–बारभावः ।
५. क्ष-ट-ठ-स–पायनाय । पा पाने ।

इति श्लुः । 'जहातेश्च' (पा. सू. ६. ४. ११६) इति इत्वम् । कनीनाम् । 'रयेर्मतौ बहुलम्' इति बहुलवचनात् कन्याशब्दस्य अत्र संप्रसारणम् ॥ ॥ ९ ॥

तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥ ११ ॥

तत् । वाम् । नरा । शंस्यम् । राध्यम् । च । अभिष्टिऽमत् । नासत्या । वरूथम् ।
यत् । विद्वांसा । निधिम्ऽइव । अपऽगूळ्हम् । उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥११॥

अत्रेदमाख्यानम् । वन्दनो नाम कश्चिदृषिः । स चासुरैः कूपे निखातः[1] उत्तरीतुमशक्नुवन्नश्विनावस्तौत् । तमश्विनौ कूपादुन्निन्यतुरिति । तदाह । ᵛनरा आरोग्यस्य नेतारौ हे नासत्यौ अश्विनौ ᵛवां युवयोः संबन्धि ᵛअभिष्टिमत् अभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यं तथा ᵛवरूथं वरणीयं कामयितव्यं ᵛतत् कर्म ᵛशंस्यम् अस्माभिः प्रशंसनीयं ᵛराध्यम् आराधनीयं ᵛच । किं पुनस्तत्कर्म । ᵛविद्वांसा जानन्तौ युवां ᵛनिधिमिव निक्षिप्तं धनमिव ᵛअपगूळ्हम् अरण्ये निर्जने देशे कूपमध्ये असुरैः निगूढं[2] ᵛवन्दनाय वन्दनमृषिं ᵛदर्शतात् अध्वगैः पिपासुभिर्द्रष्टव्यात् कूपात् ᵛउत् ᵛऊपथुः उदहार्ष्टम् । एवं ᵛयत् एतत् कूपादुद्धरणं तदित्यर्थः ॥ शंस्यम् । 'शंसु स्तुतौ' । अस्मात् ण्यन्तात् 'अचो यत्' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । अभिष्टिमत् । अभिपूर्वात् 'इष गतौ' इत्यस्माद्भावे क्तिन् । 'मन्त्रे वृष°' इति क्तिन उदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । शकन्ध्वादित्वात् पररूपत्वम् । 'तादौ च°' इति तु गतिस्वरस्य सर्वविधीनां छन्दसि विकल्पितत्वादप्रवृत्तिः । ततो मतुप् । अन्तोदात्तादुत्तरस्य तस्य 'ह्रस्वनुड्भ्याम्°' इत्युदात्तत्वम् । वरूथम् । 'जॄवृञ्भ्यामूथन्' । विद्वांसा । 'सुपां सुलुक्°' इति विभक्तेराकारः । अपगूळ्हम् । 'गुहू संवरणे' । कर्मणि निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । ढत्वधत्वष्टुत्वढलोपदीर्घाः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । दर्शतात् । 'भृमृदृशि°' इत्यादिना अतच् । ऊपथुः । 'डुवप् बीजतन्तुसंताने[3]' । लिटि अथुसि यजादित्वात् संप्रसारणम् । द्विर्वचनादि । वन्दनाय । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥ १२ ॥

तत् । वाम् । नरा । सनये । दंसः । उग्रम् । आविः । कृणोमि । तन्यतुः । न । वृष्टिम् ।
दध्यङ् । ह । यत् । मधु । आथर्वणः । वाम् । अश्वस्य । शीर्ष्णा । प्र । यत् । ईम् । उवाच ॥१२॥

अत्रेयमाख्यायिका । इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदि इमाम् अन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनौ अश्वस्य शिरश्छित्त्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय

१. क्ष-ट-ठ-निपातितः । २. क्ष-ट-निगूढं तम् । ३. ठ-बीजसंताने ।

तत्राश्व्यं शिरः प्रत्यधत्ताम् । तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास । तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत् । अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति शाट्यायनवाजसनेययोः[1] प्रपञ्चेनोक्तम् । तदेतदृचाभिधीयते । हे नरा नरौ[2] अश्विनौ वां युवयोः संबन्धि उग्रम् उद्गूर्णमन्यैर्दुःशकं दंसः । कर्मनामैतत् । युवाभ्यां पुरा कृतं तत् कर्म सनये धनलाभार्थम् आविष्कृणोमि प्रकटीकरोमि । तत्र दृष्टान्तः । तन्यतुः न यथा मेघस्थः शब्दः वृष्टिं मेघान्तर्वर्तमानमुदकं प्रवर्षणेन[3] सर्वत्र प्रकटयति[4] तद्वत् । किं तत्कर्म । अथर्वणः पुत्रः दध्यङ् एतत्संज्ञः ऋषिः अश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्याम् ईम् इमां मधुविद्यां[5] यत् ह यदा खलु प्र उवाच प्रोक्तवान् । तदानीमाश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च यत् भवदीयं कर्म तत् आविष्कृणोमीत्यर्थः[6] ॥ सनये । ‘ षणु दाने ’ । ‘ खनिकषिकस्यसिवसिवसिध्वनिस्तनिवनिग्रन्थिचरिभ्यश्च ’ ( उ. सू. ४. ५७९ ) इति इप्रत्ययः । तन्यतुः । ‘ तनु विस्तारे ’ । ‘ ऋतन्यञ्जि० ’ ( उ. सू. ४. ४४२ ) इत्यादिना यतुच् । यद्वा । ‘ स्तन शब्दे ’ । बाहुलकात् यतुच् । छान्दसः सलोपः । वृष्टिम् । वृष्यते सिच्यते अनेनेति वृष्टिः । ‘ मन्त्रे वृष० ’ इत्यादिना क्तिन उदात्तत्वम् । आथर्वणः । अपत्यार्थे अणि ‘ अन् ’ ( पा. सू. ६. ४. १६७ ) इति प्रकृतिभावात् टिलोपाभावः । शीर्ष्णा । ‘ शीर्षंश्छन्दसि ’ ( पा. सू. ६. १. ६० ) इति शिरःशब्दपर्यायः[7] शीर्षन्शब्दोऽन्तोदात्तो निपात्यते[7] । अल्लोपे सति उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः ।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥ १२ ॥

अजोहवीत् । नासत्या । करा । वाम् । महे । यामन् । पुरुऽभुजा । पुरम्ऽधिः ।
श्रुतम् । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तम् । अश्विनौ । अदत्तम् ॥ १२ ॥

वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थमश्विनावाजुहाव । तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्यावश्विनौ महे महनीये पूजनीये यामन् यामनि । याति गच्छतीति याम स्तोत्रम् । तस्मिन्सति करा अभिमतफलस्य कर्तारौ वां युवां पुरंधिः बहुधीः वध्रिमती । वध्रिः पुत्रोत्पादनाशक्तः पण्डकः[8] । तद्वती एतत्संज्ञा राजपुत्री अजोहवीत् । पुनःपुनः स्तुत्या पुत्रलाभार्थम् आहूतवती । युवां च वध्रिमत्याः तत् आह्वानं श्रुतम् अशृणुतम् । तत्र दृष्टान्तः । शासुरिव । यथा शासुः[9] आचार्यस्य वचनं शिष्योऽवहितःसन् ऐकाग्र्येण शृणोति तद्वत् । श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रम् अदत्तं प्रायच्छतम् ॥ अजोहवीत् । ह्वयतेर्यङ्लुगन्तात् लङ् । ‘ यङो वा ’ इति तिप ईडागमः । करा । करोतेः पचाद्यच् । ‘ सुपां सुलुक्० ’ इति विभक्तेः आकारः । यामन् ।

---

१. क्ष-ट—शाट्यायनकवाजसनेयकयोः; ठ—शाट्यायनवाजसनेयकयोः । २. च-फ—नेतारौ । ३. न-स—प्रकर्षेण । ४. क्ष-ट-स—प्रकाशयेत् । ५. क्ष-ट—मधु मधुविद्याम् । ६. क्ष-ट-ठ—आविष्करोमीत्यर्थः । ७. क्ष-ट-ठ—शिरःशब्दस्य शीर्षन्नादेशः अन्तोदात्तः । ८. ण-य—पण्डकरज्जुः । ९. क्ष-ट-ठ-स—शासितुः ।

'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन्। 'सुपां सुलुक्°' इति सप्तम्या लुक्। श्रुतम्। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। शासुः। शास्तुः। 'शासु अनुशिष्टौ'। 'शंसिशसिशासि°' (उ. सू. २. २५०) इत्यादिना संज्ञायां तृन्। इडभावः। छान्दसस्तलोपः॥

आ॒स्नो वृक॑स्य॒ व॒र्तिका॑म॒भीके॑ यु॒वं न॑रा नासत्यामुमुक्तम्।
उ॒तो क॒विं पु॑रुभुजा यु॒वं ह॒ कृप॑माणमकृणुतं वि॒चक्षे॑॥ १४॥

आ॒स्नः। वृक॑स्य। व॒र्तिका॑म्। अ॒भीके॑। यु॒वम्। न॒रा॒। ना॒स॒त्या॒। अ॒मु॒मु॒क्त॒म्।
उ॒तो इति॑। क॒विम्। पु॒रु॒ऽभु॒जा॒। यु॒वम्। ह॒। कृप॑माणम्। अ॒कृ॒णु॒त॒म्। वि॒ऽचक्षे॑॥ १४॥

वर्तिका चटकसदृशस्य[1] पक्षिणः स्त्री। तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किल अश्विनौ अमोचयताम्। तदेतदाह। हे ^V^नरा नेतारौ नासत्यावश्विनौ ^V^युवं युवाम् ^V^अभीके अभिगते वृकवर्तिकयोः संग्रामे ^V^वृकस्य विकर्तकस्य[2] शुनः ^V^आस्नः आस्यात् ^V^वर्तिकां चटकसदृशीम्[3] ^V^अमुमुक्तम् अमोचयतम्। यास्कस्त्वाह। पुनःपुनर्वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषाः। तां वृकेण आवरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा[4] सूर्येण ग्रस्तां तदीयमुखादश्विनावमुञ्चतामिति। ^V^उतो अपि च ^V^पुरुभुजा महाबाहू प्रभूतहस्तौ वा ^V^युवं ^V^ह युवां खलु ^V^कृपमाणं स्तुवन्तं ^V^कविम् एतत्संज्ञमन्धमृषिं ^V^विचक्षे विशेषेण द्रष्टुं समर्थम् ^V^अकृणुतम् अकुरुतम्॥ आस्नः। 'पद्दन्°' इत्यादिना आस्यस्य[5] आसन्नादेशः। 'अल्लोपोऽनः' इति अकारलोपे उदात्तनिवृत्तिस्वरेण 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम्। अमुमुक्तम्। मुचेरन्तर्भावितण्यर्थात् लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। कृपमाणम्। कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः। विकरणस्वरे प्राप्ते 'वृषादीनां च' इत्याद्युदात्तत्वम्। विचक्षे। 'तुमर्थे सेसेन्°' इति सेन्प्रत्ययः। 'स्कोः संयोगाद्योः°' इति सलोपः॥

च॒रित्रं॒ हि वेरि॒वाच्छे॑दि प॒र्णमा॒जा खेल॑स्य॒ परि॑तक्म्यायाम्।
स॒द्यो जङ्घा॒माय॑सीं वि॒श्पला॑यै॒ धने॑ हि॒ते सर्त॑वे॒ प्रत्य॑धत्तम्॥ १५॥

च॒रित्र॑म्। हि। वेःऽइ॑व। अच्छे॑दि। प॒र्णम्। आ॒जा। खेल॑स्य। परि॑ऽतक्म्यायाम्।
स॒द्यः। जङ्घा॑म्। आय॑सीम्। वि॒श्पला॑यै। धने॑। हि॒ते। सर्त॑वे। प्रति॑। अ॒ध॒त्त॒म्॥ १५॥

अगस्त्यपुरोहितः खेलो नाम राजा[6]। तस्य संबन्धिनी विश्पला नाम स्त्री संग्रामे[7] शत्रुभिश्छिन्नपादा आसीत्। पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्य अयोमयं पादं समधत्ताम्[8]। तदेतदाह। ^V^आजा आजौ संग्रामे अगस्त्यपुरोहितस्य ^V^खेलस्य संबन्धिन्याः विश्पलाख्यायाः ^V^चरित्रं चरणं ^V^वेरिव वेः

---

१. क्ष-ट-ठ—चटकसंज्ञकस्य। २. स—विकर्षकस्य। ३. क्ष-ट-ठ—चटकस्त्रीम्। ४. क्ष-ट-ठ—सर्वं जगत् प्रकाशेन आच्छादयित्वा। ५. क्ष-ट-ठ-स—आस्यशब्दस्य। ६. च-ण-फ—राजर्षिः। ७. क्ष-ट-ठ-स—सा संग्रामे। ८. क्ष-ट-ठ—समधत्तामिति।

पक्षिणः vपर्णं पतत्रमिव vअच्छेदि vहि पुरा छिन्नमभूत् खलु । हे अश्विनौ युवामगस्त्येन स्तुतौ सन्तौ vपरितक्म्यायाम् । परितक्म्या रात्रिः । ‘ परित एनां तकति ( निरु. ११. २५ ) इति यास्कः । एना-मुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य vसद्यः तदानीमेव vहिते शत्रुषु निहिते vधने जेतव्ये विषयभूते सति vसर्तवे सर्तुं गन्तुं vविश्पलायै vआयसीम् अयोमयीं vजङ्घां जङ्घोपलक्षितं पादं vप्रत्यधत्तम् । संधानमेकीकरणं कृतवन्तावित्यर्थः ॥ चरित्रम् । ‘ अर्तिलूधूसूखनसहचर इत्रः ’ इति करणे इत्रः[1] । आजा । ‘ सुपां सुलुक्° ’ इति विभक्तेर्डादेशः । आयसीम् । अयःशब्दाद्विकारार्थे ‘ प्राणिरज-तादिभ्योऽञ् ’ ( पा. सू. ४. ३. १५४ ) । ‘ टिड्ढाणञ्° ’ इति ङीप् ॥ ॥ १० ॥

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।

तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ १६ ॥

शतम् । मेषान् । वृक्ये । चक्षदानम् । ऋज्रऽअश्वम् । तम् । पिता । अन्धम् । चकार ।

तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥ १६ ॥

वृषागिरः पुत्रः ऋज्राश्वो नाम राजर्षिः । तस्य समीपे अश्विनोर्वाहनभूतो रासभो वृकीभूत्वावतस्थे । स च तस्या आहारार्थमेकोत्तरशतसंख्याकान् पौरजनानां स्वभूतान्मेषान्शकलीकृत्य प्रददौ । ‘ ऋज्राश्वः शतमेकं च मेषान् ’ ( ऋ. सं. १. ११७. १८ ) इति मन्त्रान्तरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तम् अस्य आन्ध्यं जातमिति जानन्तौ तस्मै[2] अक्षिणी प्रायच्छतामिति । तदेतदाह । अत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यः ऋज्राश्वः vशतं शतसंख्याकान् vमेषान् vवृक्ये आत्मना पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् vतं vचक्षदानम् । क्षदतिः अत्तिकर्मा अत्र शकलीकरणार्थः । शकलीकृत्य दत्तवन्तम् vऋज्राश्वं vपिता शापेन vअन्धं दृष्टिहीनं vचकार कृतवान् । हे vनासत्या सत्यस्वभावौ सत्यस्य[3] नेतारौ वा[3] vभिषजौ देवानां वैद्यभूतौ । ‘ अश्विनौ वै देवानां भिषजौ ’ ( ऐ. ब्रा. १. १८; तै. सं. २. ३. ११ ) इति श्रुतेः । vदस्रा दर्शनीयौ एतत्संज्ञौ वा हे अश्विनौ vअनर्वन् अनर्वणी द्रष्टव्यं प्रति पितृशापात् गमन-रहिते vअक्षी चक्षुषी vविचक्षे विविधं द्रष्टुं समर्थे vतस्मै ऋज्राश्वाय vआधत्तम् व्यधत्तम् अकुरुतम् ॥ वृक्ये । वृकोऽरण्यश्वा । तस्य स्त्री वृकी । ‘ जातेरस्त्रीविषयात्° ’ ( पा. सू. ४. १. ६३ ) इति ङीष् । ‘ जसादिषु च्छन्दसि वावचनम् ’ इति चतुर्थ्येकवचनस्य आडभावे यणादेशे[4] ‘ उदात्त-स्वरितयोर्यणः ’ इति परस्यानुदात्तस्य स्वरितत्वम् । चक्षदानम् । क्षदेर्लिटः कानच् । चित्स्वरः । अक्षी । ‘ ई च द्विवचने ’ ( पा. सू. ७. १. ७७ ) इति परत्वात्[5] अक्षशब्दस्य[5] ईकारान्तादेशः । स चोदात्तः । तस्मिन्कृते ‘ सकृद्गतौ विप्रतिषेधे° ’ ( परिभा. ४० ) इति परिभाषया पुनः नुम् न भवति। विचक्षे । चक्षेः संपदादिलक्षणो भावे क्विप् । अनर्वन् । ‘ ऋ गतौ ’ । अस्मात् ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् भावे वनिप् । अर्वं गमनं विषयं प्रति एनयोः[6] नास्तीति बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । ‘ सुपां सुलुक्° ’ इति द्विवचनस्य लुक् । छान्दसो नलोपाभावः ॥

---

१. क्ष-ट-ठ—इत्रप्रत्ययः । २. क्ष-ट—अस्य । ३. क्ष-ट-ठ—अश्विनौ । ४. स—यणादेशः ५. क्ष-ट-ठ-‘ परत्वात् अक्षशब्दस्य ’ नास्ति । ६. क्ष-ट-ठ—अनयोः ।

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती ।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥ १७ ॥

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती ॥ विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊँ इति । श्रिया । नासत्या । सचेथे इति ॥ १७ ॥

सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासुः । ते अन्योन्यमूचुः । आदित्यमवधिं कृत्वा आजिं धावाम । योऽस्माकं मध्ये उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । सा च सूर्या जितवतोस्तयोः रथमारुरोह[1] । अत्र[2] 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्' (ऐ. ब्रा. ४. ७) इत्यादिकं ब्राह्मणम् अनुसंधेयम्[3] । इदं चाख्यानं सूर्याविवाहस्य स्तावकेन 'सत्येनोत्तभिता भूमिः' (ऋ. सं. १०. ८५. १) इति सूक्तेन विस्पष्टयिष्यते । हे अश्विनौ $^{V}$वां युवयोः $^{V}$रथं $^{V}$कार्ष्मेव । कार्ष्मशब्दः काष्ठवाची । यथा काष्ठम् आजिधावनस्य अवधितया निर्दिष्टं लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति एवमेव सर्वेभ्यो देवेभ्यः पूर्वम् $^{V}$अर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां $^{V}$जयन्ती जीयमाना[4] $^{V}$सूर्यस्य सवितुः $^{V}$दुहिता $^{V}$आ $^{V}$अतिष्ठत् आरूढवती । $^{V}$विश्वे सर्वे इतरे $^{V}$देवाः एतत् आरोहणस्थानं[5] $^{V}$हृद्भिः हृदयैः $^{V}$अन्वमन्यन्त अन्वजानन् । तदानीं हे नासत्यावश्विनौ $^{V}$श्रिया ऋक्सहस्रलाभरूपया संपदा कान्त्या वा युवां $^{V}$सं $^{V}$सचेथे संगच्छेथे ॥ जयन्ती । व्यत्ययेन कर्मणि शतृप्रत्ययः[6] । हृद्भिः । 'पद्दन्०' इत्यादिना हृदयशब्दस्य हृद्भावः । सचेथे । 'षच समवाये' । स्वरितेत्त्वादात्मनेपदम् ॥

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८ ॥

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता । रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः । च । युक्ता ॥ १८ ॥

हे अश्विनौ $^{V}$हयन्ता स्तुतिभिराहूयमानौ युवां $^{V}$भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यजमानाय $^{V}$दिवोदासाय एतत्संज्ञाय राजर्षये अभीष्टं फलं दातुं $^{V}$वर्तिः तदीयं गृहं $^{V}$यत् यदा $^{V}$अयातम् अगच्छतं तदानीं $^{V}$रेवत् धनयुक्तम् अन्नं $^{V}$वां युवयोः $^{V}$सचनः सेवनः[7] $^{V}$रथः $^{V}$उवाह । तस्मै दिवोदासाय प्रापयामास । अपि च तस्मिन् रथे $^{V}$वृषभः अनड्वान् $^{V}$शिंशुमारः ग्राहः $^{V}$च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय $^{V}$युक्ता[8] वाहनतया संयुक्तावास्ताम्[8] ॥ दिवोदासाय । 'दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः' (का. ६. ३. २१. ५) इत्यलुक् । 'दिवोदासादीनां छन्दस्युपसंख्यानम्' इति

---

१. स–रथमारुरोहेति । २. क्ष-ट-ठ–अत्र ऐतरेयके । ३. क्ष-ट-ठ–'अनुसंधेयम्' इत्यस्यानन्तरं 'कौषीतके च अथ यत्र ह तत्सविता सूर्यां प्रायच्छत् सोमाय राज्ञे इत्यादि' इत्यधिकम् । ४. क्ष-ट-ठ–विजीयमाना । ५. क्ष-ट-ठ-स–आरोहणं स्थानम् । ६. क्ष-ट-ठ-स–कर्तृप्रत्ययः । ७. क्ष-ट-ठ-न–सेवकः; स–सेचनः । ८. क्ष-ट-ठ–तथा युक्तावास्ताम् ।

पूर्वपदाद्युदात्तत्वम् । भरद्वाजाय । ‘ भृञ् भरणे ’। अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः[1]। शतुः ‘ छन्दस्युभयथा ’ इति आर्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हयन्ता । ह्वेञः कर्मणि लटो व्यत्ययेन शतृ । ‘ बहुलं छन्दसि ’ इति संप्रसारणम् । शपि गुणे छान्दसः अयादेशः । रेवत् । रयिशब्दात् मतुप् । ‘ रयेर्मतौ बहुलम् ’ इति संप्रसारणम् । ‘ छन्दसीरः ’ इति मतुपो वत्वम् । ‘ रयिशब्दाच्च ’ ( का. ६. १. १७६. १ ) इति मतुप उदात्तत्वम् । सचनः । ‘ षच सेवने[2] ’ । ‘ अनुदात्तेतश्च हलादेः ’ इति युच् । युक्ता । ‘ सुपां सुलुक् ’ इति विभक्तेः आकारः ।

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ १९ ॥

रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवीर्यम् । नासत्या । वहन्ता ।
आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः । अह्नः । भागम् । दधतीम् । अयातम् ॥ १९ ॥

हे नासत्यावश्विनौ सुक्षत्रं शोभनबलं रयिं धनं स्वपत्यं शोभनैः पुत्रादिभिरुपेतं सुवीर्यं शोभनवीर्योपेतम् आयुः । अन्ननामैतत् । एवंगुणविशिष्टमन्नं च वहन्ता धारयन्तौ युवां समनसा समानमनस्कौ सन्तौ जह्नावीं जह्नोर्महर्षेः संबन्धिनीं प्रजाम् आ अयातम् आभिमुख्येनागच्छतम् । कीदृशीं वाजैः हविर्लक्षणैरन्नैरुपेताम् । अह्नः । अत्र अहःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते । तस्य प्रातःसवनादिरूपेण त्रिः त्रिधा विभक्तं भागम् अंशं दधतीं बिभ्रतीम् । अनुसवनं हविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इति उत्तरपदान्तोदात्तत्वम् । सुवीर्यम् । ‘ वीरवीर्यौ च ’ इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । जह्नावीम् । जह्नुशब्दात् ‘ तस्येदम् ’ इत्यर्थे अण् । ‘ टिड्ढाणञ्० ’ इति ङीप् । जाह्नवी[3] । ह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात् । उक्तं च– ‘ वर्णागमो वर्णविपर्ययश्च ’ ( का. ६. ३. १०९ ) इति । अत एव मध्योदात्तत्वम् ॥

परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम् ॥ २० ॥

परिऽविष्टम् । जाहुषम् । विश्वतः । सीम् । सुऽगेभिः । नक्तम् । ऊहथुः । रजःऽभिः ।
विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातम् ॥ २० ॥

जाहुषो नाम कश्चिद्राजा । विश्वतः सर्वतः परिविष्टं शत्रुभिः परिवृतं[4] तं राजानं हे नासत्यावश्विनौ अजरयू जरारहितौ[5] नित्यतरुणौ युवां विभिन्दुना विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन नक्तं रात्रौ सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैर्मार्गैः ऊहथुः तस्मात् शत्रुसमूहान्निरगमयतम् ।

---

१. क्ष-ट-ठ–कर्तृप्रत्ययः । २. स–सेचने । ३. ठ–जह्रावीम्; न–जाह्नवीम् । ४. च-छ-ण-फ–परिवेष्टितम् । ५. क्ष-ट-ठ–जरावर्जितौ ।

vसीम् इत्येतत् पादपूरणम्[1]। निर्गतेन तेन सह vपर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् vवि vअयातं विशेषेणागच्छतम् ॥ परिविष्टम्। ‘ विश प्रवेशने ’। कर्मणि निष्ठा। ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम्। सुगेभिः। ‘सुदुरोरधिकरणे ’ इति गमेर्डः। विभिन्दुना। ‘ भिदिर् विदारणे ’। औणादिक उप्रत्ययो नुमागमश्च। अजरयू। न जरा अजरा तामात्मन इच्छतः। ‘ सुप आत्मनः क्यच् ’। ‘ न च्छन्दस्यपुत्रस्य ’ इति इत्वदीर्घयोर्निषेधः। ‘ क्याच्छान्दसि ’ इति उप्रत्ययः ॥ ॥ ११ ॥

**एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा।**
**निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥**

एकस्याः। वस्तोः। आवतम्। रणाय। वशम्। अश्विना। सनये। सहस्रा।
निः। अहतम्। दुच्छुनाः। इन्द्रऽवन्ता। पृथुऽश्रवसः। वृषणौ। अरातीः ॥ २१ ॥

हे अश्विनौ vवशम् एतत्संज्ञमृषिम् vएकस्याः vवस्तोः एकस्याह्नः vरणाय रमणीयाय vसहस्रा सहस्रसंख्याकाय[2] vसनये धनलाभाय vआवतम् अरक्षतम्। स ऋषिः प्रत्यहं यथा सहस्रसंख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः। अपि च हे vवृषणौ कामानां वर्षितारावश्विनौ vइन्द्रवन्ता इन्द्रेण संयुक्तौ युवां vदुच्छुनाः दुष्टसुखान् दुःखस्य कर्तॄन् vपृथुश्रवसः विस्तीर्णयशसः vअरातीः शत्रून् vनिरहतं निःशेषेणावधिष्टम्। यद्वा। कानीनस्य पृथुश्रवःसंज्ञस्य[3] राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा। ‘ सुपां सुलुक्° ’ इति चतुर्थ्या डादेशः। अहतम्। लङि थसस्तम्। ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपः। दुच्छुनाः। शुनमिति सुखनाम। दुष्टं सुखं यासां तास्तथोक्ताः। ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम् ॥

**शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः।**
**शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२ ॥**

शरस्य। चित्। आर्चत्ऽकस्य। अवतात्। आ। नीचात्। उच्चा। चक्रथुः। पातवे। वारिति वाः।
शयवे। चित्। नासत्या। शचीभिः। जसुरये। स्तर्यम्। पिप्यथुः। गाम् ॥ २२ ॥

vआर्चत्कस्य ऋचत्कपुत्रस्य[4] vशरस्य एतत्संज्ञस्यापि स्तोतुः पिपासितस्य vपातवे पानार्थं vनीचात् नीचीनात् vअवतात् कूपात् vउच्चा उच्चैरुपरिष्टात् vवाः उदकं हे अश्विनौ युवाम् vआ vचक्रथुः आभिमुख्येन कृतवन्तौ। तथा हे नासत्यावश्विनौ vशचीभिः युष्मदीयैः कर्मभिः परिचरणैः vजसुरये श्रान्ताय[5] vशयवे vचित् शयुनाम्ने[6] ऋषये vस्तर्यं निवृत्तप्रसवां vगाम् अग्निहोत्रार्थस्य पयसो दोग्ध्रीं vपिप्यथुः पयसा युवामापूरितवन्तौ ॥ पातवे। ‘ पा पाने ’। ‘ तुमर्थे सेसेन्° ’ इति तवेन्प्रत्ययः। जसुरये। ‘ जसु हिंसायाम् ’। ‘ जसिसहोरुरिन् ’ (उ. सू. २. २३१)। स्तर्यम्। स्तीर्यते आच्छाद्यते

---

१. क्ष-ट—पदपूरणम्; स—पदं पादपूरणम्। २. क्ष-ट-ठ-न-स—सहस्रसंख्याय। ३. क्ष-ट-ठ-न-स—पृथुश्रवःसंज्ञकस्य। ४. क्ष-ट-ठ—ऋचत्कस्य पुत्रस्य। ५. क्ष-ट-ठ—शान्ताय। ६. ण-द-फ-य-ल—शयुनाम्नेऽपि।

प्रसवसामर्थ्याभावेन इति स्तरीः । 'अवितृस्तृतन्त्रिभ्य ईः (उ. सू. ३. ४३८) इति ईकारप्रत्ययः । ':वाच्छन्दसि' इति अमि पूर्वत्वस्य[1] विकल्पितत्वात् अभावे[2] यणादेशः । 'उदात्तस्वरितयोर्यणः०' इति परस्यानुदात्तस्य स्वरितत्वम् । पिप्यथुः । 'प्यायी वृद्धौ' । लिटि व्यत्ययेन परस्मैपदम् । 'लिड्‍यङोश्च' (पा. सू. ६. १. २९) इति पीभावः ॥

**अ॒व॒स्य॒ते स्तु॑व॒ते कृ॑ष्णि॒याय॑ ऋजूय॒ते ना॑सत्या॒ शची॑भिः ।**
**प॒शुं न न॒ष्टमि॑व॒ दर्श॑नाय विष्णा॒प्वं॑ ददथु॒र्विश्व॑काय ॥ २३ ॥**

अ॒व॒स्यते । स्तु॒व॒ते । कृ॒ष्णि॒याय॑ । ऋ॒जु॒ऽयते । ना॒स॒त्या॒ । शची॑भिः ।
प॒शुम् । न । न॒ष्टम्ऽइ॑व । दर्श॑नाय । वि॒ष्णा॒प्व॑म् । द॒द॒थुः॒ । विश्व॑काय ॥ २३ ॥

ᵛअवस्यते अवनं रक्षणमात्मन इच्छते । ᵛस्तुवते स्तुतिं कुर्वते ᵛकृष्णियाय । कृष्णो नाम कश्चित् । तस्य पुत्राय ᵛऋजूयते आर्जवमिच्छते ᵛविश्वकाय एतत्संज्ञाय[3] ऋषये हे नासत्यौ युवां ᵛशचीभिः आत्मीयैः कर्मभिः ᵛविष्णाप्वं[4] नाम विनष्टं[5] पुत्रं[5] ᵛदर्शनाय दर्शनार्थं ᵛददथुः दत्तवन्तौ । तत्र दृष्टान्तः । ᵛपशुं ᵛन ᵛनष्टमिव । एक[6] उपमार्थीयः पूरकः[6] । यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् ॥ अवस्यते । अवःशब्दात् 'सुप आत्मनः क्यच्' । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । कृष्णियाय । कृष्णशब्दादपत्यार्थे छान्दसो घच् ॥

**दश॒ रात्री॒रशि॑वेना॒ नव॒ द्यूनव॑नद्धं श्नथि॒तम॒प्स्व१॒॑न्तः ।**
**विप्रु॑तं रे॒भमु॒दनि॒ प्रवृ॑क्त॒मुन्नि॑न्यथुः॒ सोम॑मिव स्रु॒वेण॑ ॥ २४ ॥**

दश॑ । रात्रीः॑ । अशि॑वेन । नव॑ । द्यून् । अव॑ऽनद्धम् । श्न॒थि॒तम् । अ॒प्ऽसु । अ॒न्तरिति॑ ।
विऽप्रु॑तम् । रे॒भम् । उ॒दनि॑ । प्रऽवृ॑क्तम् । उत् । नि॒न्य॒थुः॒ । सोम॑म्ऽइव । स्रु॒वेण॑ ॥ २४ ॥

पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः । स च अश्विनौ स्तुवन् दश रात्रीः नवाहानि च कूपमध्ये तथैवावतस्थे । दशमेऽहनि प्रातः अश्विनौ तं कूपात् उदतारयतामिति । तदाह । ᵛअप्सु कूपान्तर्वर्तमानासु ᵛअन्तः मध्ये असुरैः पातितम् ᵛअशिवेन दुःखहेतुना दाम्ना ᵛअवनद्धं बद्धं ᵛश्नथितं शत्रुभिर्हिंसितं ᵛदश ᵛरात्रीः दशसंख्याका निशाः ᵛनव ᵛद्यून् नवसंख्याकान्यहानि च । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं तत्रैव कूपेऽवस्थितम् अत एव ᵛउदनि उदके ᵛविप्रुतं विप्लुतं व्याक्षिप्तसर्वाङ्गं ᵛप्रवृक्तम् । लुप्तोपममेतत् । प्रवृञ्जनेन संतप्तं घर्ममिव व्यथया संतप्यमानम् एवंभूतं ᵛरेभं हे अश्विनौ युवाम् ᵛउन्निन्यथुः तस्मात्कूपात् उन्नीतम्[7] उत्तीर्णं कृतवन्तौ । तत्र दृष्टान्तः । ᵛसोममिव यथा अग्निहोत्रहोमार्थम् अभिषुतं[8] सोमरसं[8] कूपसदृशे अग्निहोत्र-

---

१. क्ष-ट-ठ-स—पूर्वस्य । २. क्ष-ट-ठ—तदभावे । ३. क्ष-ट—एतत्संज्ञकाय । ४. स—विष्णाप्वम् । विष्णाप्वम् । ५. क्ष-ट-ठ—विनष्टपुत्रम् । ६. क्ष-ट-ठ—एकः उपमानार्थः अपरः पूरणः । ७. क्ष-ट-ठ—'उन्नीतम्' नास्ति; स—उन्नीय । ८. क्ष-ट—अभिषुतं सोमम्; ठ—अभिषुतं होमार्थम्; स—अभिषुतसोमरसम् ।

स्थालीमध्ये वर्तमानं[1] Vस्रुवेण अध्वर्युः उन्नयति ऊर्ध्वं नयति तद्वत् ॥ अवनद्धम्। 'णह बन्धने'। कर्मणि निष्ठा। 'नहो धः' (पा. सू. ८. २. ३४)। 'झषस्तथोर्धोऽधः' इति निष्ठातकारस्य धत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। श्नथितम्। 'श्नथ हिंसार्थः'। निष्ठा। विप्रुतम्। 'प्रुङ् गतौ'। अवनद्धवत्[2] प्रत्ययस्वरौ[2]। कपिलकादित्वात् लत्वविकल्पः। उदनि। 'पद्न्°' इत्यादिना उदकशब्दस्य उदन्भावः[3] ॥

**प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।**
**उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ २५ ॥**

प्र। वाम्। दंसांसि। अश्विनौ। अवोचम्। अस्य। पतिः। स्याम्। सुऽगवः। सुऽवीरः।
उत। पश्यन्। अश्नुवन्। दीर्घम्। आयुः। अस्तम्ऽइव। इत्। जरिमाणम्। जगम्याम् ॥२५॥

एवमनेन सूक्तेन अश्विनोर्महिमानं प्रशस्य अधुना मन्त्रद्रष्टा स्वाभीष्टं प्रार्थयते। हे Vअश्विनौ Vवां युवयोः Vदंसांसि पुरा कृतानि कर्माणि Vप्र Vअवोचम् इत्थम्[4] उक्तवानस्मि। सोऽहं Vसुगवः शोभनगोयुक्तः Vसुवीरः शोभनवीरश्च भूत्वा Vअस्य राष्ट्रस्य Vपतिः अधिपतिः Vस्यां भवेयम्। Vउत अपि च Vपश्यन् अक्षिभ्यां पश्यन्। उपलक्षणमेतत्। सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः[5] दीर्घं Vवर्षशतरूपेण आयतम्[6] Vआयुः जीवितं च Vअश्नुवन् प्राप्नुवन्नहम् Vअस्तमिव यथा गृहं स्वामी[7] निष्कण्टकं प्रविशति एवं Vजरिमाणं जरां Vजगम्यां कण्टकराहित्येन प्राप्नुयाम्। वृद्धः सन् चिरकालं निवसेयमित्यर्थः ॥ स्याम्। अस्तेः प्रार्थनायां लिङ्। यासुट्। 'श्नसोरल्लोपः' इत्यकारलोपः। अश्नुवन्। 'अशू व्याप्तौ'। व्यत्ययेन शतृ। जरिमाणम्। 'जॄष् वयोहानौ'। अस्मादौणादिकः इमनिच्। जगम्याम्। गमेः प्रार्थनायां लिङि[8] 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥　　॥ १२ ॥

'मध्वः' इति पञ्चविंशत्यृचं द्वितीयं सूक्तम्। औशिजस्य कक्षीवत आर्षं त्रैष्टुभमाश्विनम्। 'मध्वः' इत्यनुक्रान्तम् ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

**मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम्।**
**बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ १ ॥**

मध्वः। सोमस्य। अश्विना। मदाय। प्रत्नः। होता। आ। विवासते। वाम्।
बर्हिष्मती। रातिः। विऽश्रिता। गीः। इषा। यातम्। नासत्या। उप। वाजैः ॥ १ ॥

हे अश्विनौ Vमध्वः मधुना माधुर्योपेतेन Vसोमस्य सोमेन Vमदाय युवयोर्मदार्थं Vप्रत्नः चिरंतनः Vहोता होमनिष्पादको यजमानः Vवां युवाम् Vआ Vविवासते। विवासतिः परिचरणकर्मा। आङ्

---

१. क्ष-ट-ठ—अवस्थितम्। २. क्ष-ट-ठ—अवनद्धमितिवन्निष्ठास्वरौ; स—अवनद्ध इतिवत् प्रत्ययस्वरौ। ३. क्ष-ट-ठ—उदन्नादेशः। ४. क्ष-ट-ठ—प्र स्पष्टम्। ५. ठ—स्वस्वविषयग्रहणसमर्थैः। ६. च-छ-ण-फ—स्थापितम्। ७. च-छ-ण—गृहस्थः। ८. क्ष-ट-ठ—लिङ्।

मर्यादायाम् । यथाशास्त्रं परिचरति । अपि च <sup>v</sup>रातिः दातव्यं हविः <sup>v</sup>बर्हिष्मती आस्तीर्णेन बर्हिषा युक्तम् । युष्मदर्थं बर्हिषि आसादितमित्यर्थः । तथा <sup>v</sup>गीः स्तुतिलक्षणा वाक् च <sup>v</sup>विश्रिता ऋत्विक्षु समवेता । तैः स्तुतिरपि क्रियते इत्यर्थः । अतो हे नासत्यावश्विनौ <sup>v</sup>इषा अस्मभ्यं दातव्येनान्नेन <sup>v</sup>वाजैः बलैश्च सह युवाम् <sup>v</sup>उप <sup>v</sup>यातम् अस्मत्समीपं प्राप्नुतम् ॥ मध्वः । ' सुपां सुपो भवन्ति ' इति तृतीयार्थे षष्ठी । ' जसादिषु च्छन्दसि वावचनम् ' इति ' घेर्ङिति ' इति गुणाभावे यणादेशः । मदाय । ' मदी हर्षे ' । ' मदोऽनुपसर्गे ' इति अप् । रातिः । ' रा दाने ' । कर्मणि क्तिन् । ' मन्त्रे वृषेष॰ ' इत्यादिना तस्योदात्तत्वम् । विश्रिता । ' श्रिञ् सेवायाम् ' । कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् ॥

**यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति ।**
**येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ॥ २ ॥**

यः । वाम् । अश्विना । मनसः । जवीयान् । रथः । सुऽअश्वः । विशः । आऽजिगाति ।
येन । गच्छथः । सुऽकृतः । दुरोणम् । तेन । नरा । वर्तिः । अस्मभ्यम् । यातम् ॥ २ ॥

हे अश्विनौ <sup>v</sup>वां युवयोः स्वभूतः <sup>v</sup>मनसो <sup>v</sup>जवीयान् मनसोऽप्यतिशयेन वेगवान् <sup>v</sup>स्वश्वः शोभनाश्वः एवंभूतः <sup>v</sup>यः <sup>v</sup>रथः <sup>v</sup>विशः प्रजाः <sup>v</sup>आजिगाति आभिमुख्येन गच्छति । <sup>v</sup>येन[1] रथेन <sup>v</sup>सुकृतः शोभनं यागं कुर्वतो यजमानस्य <sup>v</sup>दुरोणं देवयजनलक्षणं गृहं <sup>v</sup>गच्छथः । हे <sup>v</sup>नरा नेतारावश्विनौ <sup>v</sup>तेन रथेन <sup>v</sup>अस्मभ्यम् अस्माकं <sup>v</sup>वर्तिः वर्तनाधिकरणं गृहं <sup>v</sup>यातम् आगच्छतम् ॥ जवीयान् । जवोऽस्यास्तीति जववान् । ' तदस्यास्ति ' इति मतुप् । ततः आतिशायनिकः ईयसुन् । विन्मतोर्लुक् । ' टेः ' इति टिलोपः । जिगाति । ' गा स्तुतौ ' । जौहोत्यादिकः । गतिकर्मसु पाठादत्र गत्यर्थः । ' बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् ॥

**ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।**
**मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ ३ ॥**

ऋषिम् । नरौ । अंहसः । पाञ्चऽजन्यम् । ऋबीसात् । अत्रिम् । मुञ्चथः । गणेन ।
मिनन्ता । दस्योः । अशिवस्य । मायाः । अनुऽपूर्वम् । वृषणा । चोदयन्ता ॥ ३ ॥

' हिमेनाग्निम् ' ( ऋ. सं. १. ११६. ८ ) इत्यनयोक्त एवार्थः पुनः प्रकारान्तरेण अनया प्रतिपाद्यते । अतस्तत्रोक्तं सर्वमत्रापि द्रष्टव्यम् । अक्षरार्थस्तु । हे <sup>v</sup>नरौ नेतारौ <sup>v</sup>वृषणा कामानां वर्षितारौ अश्विनौ <sup>v</sup>पाञ्चजन्यम् । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तेषु भवम् । स्वर्भानुना गृहीतमसुं सूर्यं मोचयन्[2] अत्रिः सर्वेषां हिताचरणात् तत्रभवः इत्युच्यते । तादृशम् <sup>v</sup>ऋषिम्[3] <sup>v</sup>अंहसः पापरूपात् <sup>v</sup>ऋबीसात् शतद्वारे यन्त्रगृहे अत्रेः पीडार्थम् असुरैः प्रक्षिप्तात् तुषाग्नेः सकाशात् <sup>v</sup>गणेन इन्द्रियवर्गेण

१. क्ष-ट-ठ-स-येन च । २. ठ-स-रोचयन् । ३. क्ष-ट-ठ-स-अत्रिम् ।

पुत्रपौत्रादिगणेन[1] वा सह Vमुञ्चथः अमोचयतम् । किं कुर्वन्तौ । Vमिनन्ता शत्रून् हिंसन्तौ Vदस्योः उपक्षपयितुः Vअशिवस्य दुःखकारिणः असुरस्य संबन्धिनीः तस्मिन् अत्रौ प्रयुक्ताः Vमायाः च Vअनुपूर्वम् आनुपूर्व्येण[2] Vचोदयन्ता प्रेरयन्तौ निवारयन्तौ ॥ पाञ्चजन्यम् । 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' (का. ४. ३. ५८. १) इति भवार्थे ञ्यः । मिनन्ता । 'मीञ् हिंसायाम्' । क्रैयादिकः । लटः शतृ । 'मीनातेर्निगमे' इति ह्रस्वत्वम् ॥

अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु ।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥ ४ ॥

अश्वम् । न । गूळ्हम् । अश्विना । दुःऽएवैः । ऋषिम् । नरा । वृषणा । रेभम् । अप्ऽसु ।
सम् । तम् । रिणीथः । विऽप्रुतम् । दंसःऽभिः । न । वाम् । जूर्यन्ति । पूर्व्या । कृतानि ॥४॥

Vनरा नेतारौ Vवृषणा कामानां वर्षकौ हे अश्विनौ Vदुरेवैः दुष्प्रापैरसुरैः Vअप्सु कूपस्थेषूदकेषु Vगूळ्हं निगूढं निखातं Vरेभम् Vऋषिं कूपादुन्नीय Vविप्रुतं विश्लिष्टावयवं Vतम् Vअश्वं Vन व्याधितमश्वमिव Vदंसोभिः आत्मीयैः भैषज्यरूपैः कर्मभिः Vसं Vरिणीथः समधत्तम् । सर्वैरवयवैरुपेतमकुरुतमित्यर्थः । Vवां युवयोः संबन्धीनि Vपूर्व्या चिरंतनानि Vकृतानि कर्माणि Vन Vजूर्यन्ति न हि[3] जीर्णानि भवन्ति ॥ दुरेवैः । दुरुपसृष्टात् एतेः 'ईषद्दुःसुषु°' इति खल् । रिणीथः । 'री गतिरेषणयोः' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' । जूर्यन्ति । 'जॄष् वयोहानौ' । दैवादिकत्वात्[4] श्यन् । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः ॥

सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् ।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥ ५ ॥

सुसुप्वांसम् । न । निःऽऋतेः । उपऽस्थे । सूर्यम् । न । दस्रा । तमसि । क्षियन्तम् ।
शुभे । रुक्मम् । न । दर्शतम् । निऽखातम् । उत् । ऊपथुः । अश्विना । वन्दनाय ॥ ५ ॥

निर्ऋतिरिति भूनाम । Vनिर्ऋतेः पृथिव्याः Vउपस्थे उत्सङ्गे Vसुषुप्वांसं सुप्तवन्तं पुरुषमिव कूपमध्ये शयानं Vसूर्यं Vन सूर्यमिव Vतमसि कूपान्तर्गतान्धकारे[5] Vक्षियन्तं निवसन्तं सूर्यमिव[6] तेजस्विनमित्यर्थः[6] । Vशुभे शोभार्थं[7] निर्मितं Vरुक्मं Vन रोचमानं सुवर्णमयाभरणमिव Vदर्शतं दर्शनीयम् एवंगुणविशिष्टं कूपे असुरैः Vनिखातं Vवन्दनाय वन्दनमृषिं हे Vदस्रा दर्शनीयावश्विनौ युवाम् Vउदूपथुः उद्धृतवन्तौ ॥ सुषुप्वांसम् । 'ञिष्वप् शये' । लिटः क्वसुः । 'वचिस्वपि°' इत्यादिना संप्रसारणम् । द्विर्वचनादि । उपस्थे । उपपूर्वात् तिष्ठतेः 'घञर्थे कविधानम्' इत्यधिकरणे कप्रत्ययः । मरुद्वृधा-

---

१. क्ष-ट-ठ–पुत्रपौत्रादिवर्गेण । २. च-छ-ण-द-ध-ल–आनुपूर्व्येण अनुक्रमेण । ३. क्ष-ट-ठ–'हि' नास्ति । ४. क्ष-ट-ठ-स–दिवादित्वात् । ५. क्ष-ट-ठ–कूपान्तर्गते अन्धकारे । ६. क्ष-ट-ठ–सूर्यवत् तेजस्विनं स्थितमित्यर्थः । ७. क्ष-स–शोभनार्थम् ।

दिवात् पूर्वपदान्तोदात्तत्वम् । वन्दनाय । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ ॥ १३ ॥

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥ ६ ॥

तत् । वाम् । नरा । शंस्यम् । पज्रियेण । कक्षीवता । नासत्या । परिऽज्मन् ।
शफात् । अश्वस्य । वाजिनः । जनाय । शतम् । कुम्भान् । असिञ्चतम् । मधूनाम् ॥ ६ ॥

हे नरा नेतारौ नासत्यावश्विनौ परिज्मन् परिगमने अभीष्टस्य प्रापणे निमित्तभूते सति पज्रियेण पज्राणाम् अङ्गिरसां कुले जातेन कक्षीवता मया वां युवयोः संबन्धि तत् कर्म शंस्यम् प्रकर्षेण शंसनीयम् । तच्छब्दश्रुतेः यच्छब्दाध्याहारः । यत् जनाय अपेक्षमाणाय पुरुषाय वाजिनः वेगवतः त्वदीयस्य अश्वस्य शफात्[1] निर्गतैः मधूनां मधुभिः शतसंख्याकान् कुम्भान् असिञ्चतम् अपूरयतम् । सिञ्चतिरत्र पूरणार्थः । यदेतन्मधुना पूरणं तत् शंस्यम्[2] इत्यर्थः ॥

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥ ७ ॥

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः । विश्वकाय ।
घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् । जूर्यन्त्यै । अश्विनौ । अदत्तम् ॥ ७ ॥

हे नरा नेतारौ अश्विनौ युवं युवां स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णाख्यस्य पुत्राय विश्वकाय विष्णाप्वं[3] ददथुः[3] । विष्णाप्वं नाम विनष्टं पुत्रं दत्तवन्तौ[4] । घोषानाम ब्रह्मवादिनी कक्षीवतो दुहिता । सा कुष्ठिनी सती कस्मैचिद्वराय अदत्ता पितृगृहे निषण्णा जीर्णा आसीत् । सा अश्विनोरनुग्रहात् नष्टकुष्ठा सती पतिं लेभे । तदेतदाह । हे अश्विनौ पित्रा संबद्धे दुरोणे स्वकीयजनकगृहे कुष्ठरोगेण भर्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै जूर्यन्त्यै जरां प्राप्नुवत्यै घोषायै चित् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन पतिं भर्तारम् अदत्तं युवां दत्तवन्तौ ॥ पितृषदे । 'षद्लृ विशरणादिषु[5]' । 'क्विप् च' इति क्विप् । जूर्यन्त्यै । 'जॄष् वयोहानौ' । लटः शतृ । दिवादित्वात् श्यन् । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥

---

१. क्ष-ट-ठ-स–शफात् खुरात् । २. क्ष-ट-ठ–प्रशस्यम् । ३. क्ष-ट-ठ-न-स–'विष्णाप्वं ददथुः' नास्ति । ४. स–ददथुः दत्तवन्तौ । ५. क्ष-ट-ठ-स–विशरणगत्यवसादनेषु ।

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८ ॥

युवम् । श्यावाय । रुशतीम् । अदत्तम् । महः । क्षोणस्य । अश्विना । कण्वाय ।
प्रऽवाच्यम् । तत् । वृषणा । कृतम् । वाम् । यत् । नार्सदाय । श्रवः । अधिऽअधत्तम् ॥८॥

हे अश्विनौ ^युवं युवां ^श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये ^रुशतीं दीप्तत्वचं स्त्रियम्[1] ^अदत्तम् प्रायच्छतम् । अपि च ^क्षोणस्य क्षोणाय यः[2] दृष्टिराहित्येन गन्तुमशक्तः[3] सन्[3] एकस्मिन्नेव स्थाने निवसति[4] तस्मै[5] ^कण्वाय ऋषये ^महः तेजः तैजसं चक्षुरिन्द्रियम् अदत्तमिति शेषः । तथा हे ^वृषणा कामानां वर्षितारौ ^वां युवयोः ^तत् ^कृतं कर्म ^प्रवाच्यं प्रकर्षेण वाचनीयं शंसनीयम्[6] । ^नार्षदाय नृषदः पुत्राय बधिराय ऋषये ^श्रवः श्रवणेन्द्रियं ^यत् ^अध्यधत्तं दत्तवन्तौ स्थः इति यत् तदित्यर्थः । अपर आह । ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः । अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति । तमश्विनौ आगत्योचतुः । व्युष्टायां हर्म्यस्य उपरि वीणां वादयन्तौ आवाम् आगमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि[7] । तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारावश्विनौ वां युवयोः तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदः पुत्राय कण्वाय क्षोणस्य । क्षोणः शब्दकारी वीणाविशेषः । महः[8] महतः क्षोणस्य श्रवः शब्दम् अध्यधत्तम् उषसो विज्ञानार्थम् अधिकम् अकुरुतम् ॥ महः । 'मह पूजायाम्' । अस्मादौणादिकः असिप्रत्ययः । पक्षान्तरे तु महच्छब्दात् षष्ठ्येकवचने छान्दसः अल्लोपः[9] । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । यद्वा । क्विबन्तात् षष्ठ्येकवचनम् । क्षोणस्य । 'क्षि निवासगत्योः' । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । पृषोदरादित्वात् क्षोणभावः । तदुक्तं यास्केन–'क्षोणस्य क्षयणस्य' ( निरु. ६. ६ ) इति । पक्षान्तरे तु 'टुक्षु शब्दे' इत्यस्मादौणादिकः नप्रत्ययः । नार्षदाय । 'ऋष्यन्धक°' इति अण् ॥

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् ।
सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥ ९ ॥

पुरु । वर्पांसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः । आशुम् । अश्वम् ।
सहस्रऽसाम् । वाजिनम् । अप्रतिऽइतम् । अहिऽहनम् । श्रवस्यम् । तरुत्रम् ॥ ९ ॥

हे अश्विनौ ^पुरु पुरूणि बहूनि ^वर्पांसि । रूपनामैतत् । आत्मीयैः कर्मभिः कृतानि रूपाणि ^दधाना धारयन्तौ युवाम् ^आशुं शीघ्रगामिनम् ^अश्वं ^पेदवे पेदुनाम्ने स्तुवते ^नि ^ऊहथुः नितरां प्रापितवन्तौ दत्तवन्तावित्यर्थः । कीदृशमश्वम् । ^सहस्रसां सहस्रसंख्याकस्य धनस्य सनितारं दातारं ^वाजिनं बलवन्तम् अत एव ^अप्रतीतं शत्रुभिरप्रतिगतम् ^अहिहनम् अहीनाम् आगत्य हन्तॄणां

१. च-द-ध-फ–श्रियम् । २. क्ष-ट-ठ-न-स–'यः' नास्ति । ३. न–गन्तुमशक्ताय । ४. न–निवसते । ५. स–तस्मै निवसते । ६. क्ष-ट-ठ-न–'शंसनीयं' नास्ति ७. क्ष-ट-ठ-स–ब्रूहि इति । ८. क्ष-ट-ठ–तस्य महः । ९. क्ष-ट-ठ–अच्छब्दलोपः ।

शत्रूणां शत्रून्वा हन्तारम् । ᵛश्रवस्यम् । श्रवः श्रवणीयं स्तोत्रम् । तत्र भवम् । स्तुतिविषयमित्यर्थः । ᵛतरुत्रं तरितारम् ॥ वपांसि । 'वृञ् वरणे' । 'वृन्शीङ्भ्यांरूपस्वाङ्गयोः पुक्च' ( उ. सू. ४. ६४० ) इत्यसुन् पुगागमश्च । दधाना । दधातेर्लटः शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सहस्रसाम् । 'षणु दाने' । 'जनसनखन°' इति विट् । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । श्रवस्यम् । श्रवःशब्दात् 'भवे छन्दसि' इति यत् । तित्स्वरितः । तरुत्रम् । 'तॄ प्लवनतरणयोः' । 'अशित्रादिभ्य इत्रोत्रौ' ( उ. सू. ४. ६१२ ) इति उत्रप्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । 'असितस्कभित°' इत्यादौ निपातनात् तृनन्तात् तरुतृशब्दात् अमि संज्ञापूर्वकस्य विधेः अनित्यत्वात् गुणाभावे यण् । नित्स्वरेणाद्युदात्तत्वम् ॥

एतानि॑ वां श्रव॒स्या॑ सुदानू॒ ब्रह्मा॑ङ्गू॒षं सद॑नं॒ रोद॑स्योः ।
यद्वां॑ प॒ज्रासो॑ अश्विना॒ हव॑न्ते या॒तमि॒षा च॑ वि॒दुषे॑ च॒ वाज॑म् ॥ १० ॥

एतानि॑ । वा॒म् । श्र॒व॒स्या॑ । सु॒दा॒नू॒ इति॑ सु॒ऽदा॒नू॒ । ब्रह्म॑ । आ॒ङ्गू॒षम् । सद॑नम् । रोद॑स्योः ।
यत् । वा॒म् । प॒ज्रासः॑ । अ॒श्वि॒ना॒ । हव॑न्ते । या॒तम् । इ॒षा । च॒ । वि॒दुषे॑ । च॒ । वाज॑म् ॥ १० ॥

हे ᵛसुदानू शोभनदानौ अश्विनौ ᵛवां युवयोः संबन्धीनि ᵛएतानि समनन्तरोक्तानि वीर्याणि ᵛश्रवस्या श्रवणीयानि सर्वैर्ज्ञातव्यानि भवन्ति । तदर्थं ᵛरोदस्योः द्यावापृथिव्यात्मना वर्तमानयोः युवयोः । उक्तं च यास्केन—'तत्कावश्विनौ द्यावापृथिव्यावित्येके' ( निरु. १२. १ ) इति । तथा च तैत्तिरीयकम्—'इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः' ( तै. सं. ५. ६. ४. १ ) इति । तयोः युवयोः ᵛसदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वा ᵛआङ्गूषम् आघोषणीयं ᵛब्रह्म मन्त्ररूपं स्तोत्रं निष्पन्नमिति शेषः । ᵛयत् यदा ᵛपज्रासः अङ्गिरसां गोत्रोत्पन्ना यजमाना हे अश्विनौ ᵛवां युवां ᵛहवन्ते स्तुतिभिः आत्मरक्षणार्थम् आह्वयन्ति तदानीम् ᵛइषा दातव्येनान्नेन सह आ[1] ᵛयातम् आगच्छतं ᵛच ᵛविदुषे युष्मद्विषयं स्तोत्रं जानते मह्यं ᵛच ᵛवाजम् अन्नं बलं वा प्रयच्छतमिति शेषः॥ यातम् । 'चवायोगे प्रथमा' इति निघातप्रतिषेधः । विदुषे । 'विद ज्ञाने' । 'विदेः शतुर्वसुः' । 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥ ॥ १४ ॥

सू॒नोर्माने॑नाश्विना गृणा॒ना वाजं॒ विप्रा॑य भुरणा॒ रद॑न्ता ।
अ॒गस्त्ये॒ ब्रह्म॑णा वावृधा॒ना सं वि॒श्पलां॑ नासत्यारिणीतम् ॥ ११ ॥

सू॒नोः । माने॑न । अ॒श्वि॒ना॒ । गृ॒णा॒ना । वाज॑म् । विप्रा॑य । भु॒र॒णा॒ । रद॑न्ता ।
अ॒गस्त्ये॑ । ब्रह्म॑णा । व॒वृ॒धा॒ना । सम् । वि॒श्पला॑म् । ना॒स॒त्या॒ । अ॒रि॒णी॒त॒म् ॥ ११ ॥

ᵛभुरणा भर्तारौ पोषकौ ᵛनासत्या सत्यस्वभावौ हे अश्विनौ ᵛसूनोः कुम्भात् प्रसूतस्य अगस्त्यस्य खेलपुरोहितस्य संबन्धिना ᵛमानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण ᵛगृणाना स्तूयमानौ ᵛविप्राय

१. च-छ-ण-फ-य-ल-'आ' नास्ति ।

मेधाविने भरद्वाजाय ऋषये ^v^वाजम् अन्नं ^v^रदन्ता विलिखन्तौ निष्पादयन्तौ युवां ^v^विश्पलां संग्रामे छिन्नजङ्घां खेलस्य संबन्धिनीं स्त्रियं ^v^सम् ^v^अरिणीतं पुनः आयस्या जङ्घया समयोजयतम्। तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विव्रियते। ^v^अगस्त्ये ऋषौ ^v^ब्रह्मणा मन्त्ररूपेण स्तोत्रेण ^v^ववृधाना प्रवर्धितौ इति ॥ गृणाना। 'गॄ शब्दे'। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। प्वादीनां ह्रस्वः। भुरणा। 'भुरण धारणपोषणयोः'। कण्ड्वादिः। पचाद्यच्। अतोलोपयलोपौ। 'सुपां सुलुक्°' इति विभक्तेराकारः। आमन्त्रितनिघातः। विप्राय[1] इत्यस्य भुरणेत्यनेन असामर्थ्यात् न पराङ्गवत्त्वम्[1]। ववृधाना। वृधेर्लिटः कानच्। संहितायां छान्दसमभ्यासस्य दीर्घत्वम्। तुजादित्वे हि तूतुजान इतिवत् पदकालेऽपि स्यात्। अरिणीतम्। 'री गतिरेषणयोः'। क्रैयादिकः। प्वादीनां ह्रस्वः ॥

कुह॒ यान्ता॑ सुष्टु॒तिं का॒व्यस्य॒ दिवो॑ नपाता वृषणा शयु॒त्रा ।
हिर॑ण्यस्येव क॒लशं॒ निखा॑त॒मुदू॑पथुर्दश॒मे अ॑श्विना॒हन् ॥ १२ ॥

कुह॑। यान्ता॑। सु॒ऽस्तु॒तिम्। का॒व्यस्य॑। दिवः॑। न॒पा॒ता॒। वृ॒ष॒णा॒। श॒यु॒ऽत्रा।
हिर॑ण्यस्यऽइव। क॒लश॑म्। निऽखा॑तम्। उत्। ऊ॒प॒थुः॒। द॒श॒मे। अ॒श्वि॒ना॒। अह॑न् ॥ १२ ॥

पुरा खलु उपलसः स्तुतिं गच्छन्तावश्विनौ मार्गमध्ये कूपे पतितं रेभं दृष्ट्वा तं कूपादुदतारयताम्। तदानीम्[2] अश्विभ्यां गन्तव्यं काव्यस्य निवासस्थानम् अजानन् ऋषिः अश्विनौ पृच्छति[2]। हे ^v^दिवो ^v^नपाता द्योतमानस्य सूर्यस्य पुत्रौ ^v^वृषणा कामाभिवर्षकौ अश्विनौ ^v^कुह कुत्र ^v^शयुत्रा शयने निवासस्थाने वर्तमानस्य ^v^काव्यस्य भार्गवस्य ^v^सुष्टुतिं शोभनां स्तुतिं श्रोतुं ^v^यान्ता गच्छन्तौ। यद्वा। शयुत्रा इत्येतत् अश्विनोर्विशेषणम्। शयुनाम्नस्त्रायकौ युवाम्। ^v^हिरण्यस्येव ^v^कलशं यथा हिरण्यपूरितं कलशं भूम्यां निक्षिप्तं सर्वैः दुर्ज्ञातं[3] ^v^कश्चिदभिज्ञः उद्धरति एवमसुरैः कूपे ^v^निखातं दश रात्रीः नवाहानि च तत्रैव निवसन्तं रेभमवगत्य ^v^दशमे ^v^अहन् अहनि ^v^उदूपथुः कूपात् उन्नीतवन्तौ[4]। किं तन्निवासस्थानमिति प्रश्नः। रेभस्य[5] अनुक्तावपि 'दश रात्रीरशिवेन' (ऋ. सं. १. ११६. २४) इति मन्त्रान्तरसामर्थ्यात् प्रतीतिः। यद्वा। काव्यस्य स्तुतिं प्रति गच्छन्तौ युवां कुह कस्मिन् स्थाने रेभं युवाम् उन्निन्यथुः इति प्रश्नः ॥ कुह। 'वा ह च च्छन्दसि' इति सप्तम्यर्थे हप्रत्ययः। दिवो नपाता। 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति पराङ्गवद्भावेन षष्ठ्यन्तस्य आमन्त्रितानुप्रवेशात् 'आमन्त्रितस्य च' इति पदद्वयसमुदायस्य षाष्ठिकमाद्युदात्तत्वम्। पादादित्वात् आष्टमिकनिघाताभावः। नपात् इति अपत्यनाम। न पातयतीति नपात्। 'नभ्राण्नपात्°' इति नञः प्रकृतिभावः। 'सुपां सुलुक्°' इति विभक्तेराकारः। शयुत्रा। 'अशित्रादिभ्य इत्रोत्रौ' इति शीङ उत्रः। यदि अन्तोदात्तता न स्यात् तर्हि एवम्। शयुं त्रायेते इति शयुत्रौ। 'त्रैङ् पालने'। 'आदेचः°' इति आत्वम्। 'आतोऽनुपसर्गे कः'। अत एव व्युत्पत्त्यनवधारणात् अनवग्रहः। निखातम्। 'खनु अवदारणे'। अस्मात्कर्मणि निष्ठा। 'यस्य

---

१. क्ष-ट-विप्राय इत्यस्य रदन्तेत्यनेन संबन्धेन अनेनेत्यसामर्थ्यात् न पराङ्गवत्; ठ-विप्राय इत्यस्य रदन्तेत्यनेन संबन्धो न मानेनेत्यसामर्थ्यात् न पराङ्गवत्; न-विप्राय इत्यस्य रदन्तेत्यनेन सामर्थ्यात् न पराङ्गवत्त्वम्; स-विप्राय इत्यस्य रदन्तेत्यनेन संबन्धः भुरणेत्यनेन सामर्थ्यात् न पराङ्गवत्त्वम्। २. क्ष-ट-ठ-तदानीमश्विनौ आगन्तारौ काव्यस्य निवासस्थानम् अजानानः ऋषिः पृच्छति। ३. क्ष-ट-दुर्ज्ञानम्। ४. क्ष-ट-ठ-उन्नीतवन्ताविति। ५. क्ष-ट-ठ-स-अत्र रेभस्य।

विभाषा ' इति इट्प्रतिषेधः । ' जनसनखनां सञ्झलोः ' इति आत्वम् । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । अहन् । ' सुपां सुलुक्° ' इति सप्तम्या लुक् । ' न ङिसंबुद्ध्योः ' इति नलोपप्रतिषेधः ॥

युवं च्यवा॑नमश्विना॒ जर॑न्तं॒ पुन॒र्युवा॑नं चक्रथुः॒ शची॑भिः ।
युवो रथं॑ दुहि॒ता सूर्य॑स्य स॒ह श्रि॒या ना॑सत्यावृणीत ॥ १३ ॥

यु॒वम् । च्यवा॑नम् । अ॒श्वि॒ना॒ । जर॑न्तम् । पुन॑रिति॑ । यु॒वा॑नम् । च॒क्र॒थुः॒ । शची॑भिः ।
यु॒वोः । रथ॑म् । दु॒हि॒ता । सूर्य॑स्य । स॒ह । श्रि॒या । ना॒स॒त्या॒ । अ॒वृ॒णी॒त॒ ॥ १३ ॥

हे अश्विनौ युवं युवां शचीभिः आत्मीयैः भैषज्यलक्षणैः कर्मभिः जरन्तं जीर्यन्तं च्यवानं स्तुतीनां च्यावयितारम् एतत्संज्ञं[1] ऋषिं युवानं पुनर्यौवनोपेतं चक्रथुः कृतवन्तौ । अपि च हे नासत्यौ अश्विनौ युवोः युवयोः रथं सूर्यस्य दुहिता सूर्याख्या श्रिया सह ऋक्सहस्ररूपया[2] संपदा कान्त्या वा सह अवृणीत समभजत आगत्यारूढवतीत्यर्थः । ' आ वां रथं दुहिता ' ( ऋ. सं. १. ११६. १७ ) इत्यत्र लिखितमाख्यानम् अत्रापि द्रष्टव्यम् ॥ जरन्तम् । ' जॄष् वयोहानौ ' । व्यत्ययेन शप् । युवोः । युष्मच्छब्दात् षष्ठीद्विवचने व्यत्ययेन ' योऽचि ' इति यत्वाभावे सति ' शेषे लोपः ' इति दकारलोपः । ' अतो गुणे ' इति पररूपत्वम् । ' एकादेश उदात्तेनोदात्तः ' । अवृणीत । ' वृङ् संभक्तौ ' । क्रैयादिकः ॥

यु॒वं तुग्रा॑य पू॒र्व्येभि॒रेवैः॑ पुनर्म॒न्याव॑भवतं युवाना ।
यु॒वं भु॒ज्युमर्ण॑सो॒ निः स॑मु॒द्राद्विभि॑रूहथुर्ऋ॒ज्रेभि॒रश्वैः॑ ॥ १४ ॥

यु॒वम् । तुग्रा॑य । पू॒र्व्येभि॑ः । एवैः॑ । पु॒नः॒ऽम॒न्यौ । अ॒भ॒व॒त॒म् । यु॒वा॒ना॒ ।
यु॒वम् । भु॒ज्युम् । अर्ण॑सः । निः । स॒मु॒द्रात् । विऽभि॑ः । ऊ॒ह॒थुः॒ । ऋ॒ज्रेभि॑ः । अश्वैः॑ ॥ १४ ॥

हे युवाना दुःखानां यावयितारौ अश्विनौ युवं युवां पूर्व्येभिः । पुराणनामैतत् । पूर्वकालीनैः चिरंतनैः एवैः स्तुत्यं प्रति गन्तृभिः स्तोत्रैः तुग्राय भुज्योर्जनकस्य संबन्धिभिः पुनर्मन्यौ यथा भुज्योः समुद्रगमनात्पूर्वं युवां स्तोतव्यौ तथा पुनरपि इदानीं स्तोतव्यौ अभवतम् । यदा युवां समुद्रमध्ये सेनया सह निमग्नं भुज्युं तुग्रस्य पुत्रम् अर्णसः अर्णस्वतः प्रौढोदकयुक्तात् समुद्रात् अम्बुराशेः सकाशात् विभिः गन्तृभिः नौभिः ऋज्रेभिः शीघ्रगतियुक्तैः अश्वैः च निरूहथुः निर्गमय्य पितृसमीपं प्रापितवन्तौ तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः । ' तुग्रो ह भुज्युम् ' ( ऋ. सं. १.११६. ३ ) इत्यत्रोक्तमाख्यानम् अत्राप्यनुसंधेयम् ॥ एवैः । ' इण् गतौ ' । ' इण्शीङ्भ्यां वन् ' । पुनर्मन्यौ । ' मन ज्ञाने ' । अत्र स्तुत्यर्थः । मन्यते स्तौति इति मना स्तुतिः । पचाद्यच् । ' छन्दसि च ' इति अर्हार्थे यः । युवाना । ' यु मिश्रणामिश्रणयोः ' । ' कनिन्युवृषि° ' इत्यादिना कनिन् ।

---

१. क्ष-ट-ठ–एतत्संज्ञकम् । २. क्ष-ट-ठ–सुरूपया ।

'सुपां सुलुक्°' इति विभक्तेराकारः। अर्णसः। अर्णःशब्दादुत्पन्नस्य मत्वर्थीयस्य 'बहुलं छन्दसि' इति बहुलग्रहणाल्लोपः। विभिः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विभक्त्युदात्तस्य विकल्पनात् अभावः। ऋज्रेभिः। 'ऋज गतिस्थानार्जनोपार्जनेषु'। 'ऋज्रेन्द्र°' इत्यादौ रन्प्रत्ययान्तो निपातितः। 'बहुलं छन्दसि' इति भिस ऐसभावः॥

अजो॑हवीदश्विना तौ॒ग्र्यो वां॒ प्रोळ्हः॑ समु॒द्रम॑व्य॒थिर्ज॑ग॒न्वान्।
निष्टमू॑हथुः सु॒युजा॒ रथे॑न॒ मनो॑जवसा वृषणा स्व॒स्ति॥ १५॥

अजो॑हवीत्। अ॒श्वि॒ना॒। तौ॒ग्र्यः। वा॒म्। प्रऽऊ॑ळ्हः। स॒मु॒द्रम्। अ॒व्य॒थिः। ज॒ग॒न्वान्।
निः। तम्। ऊ॒ह॒थुः। सु॒ऽयुजा॑। रथे॑न। मनः॑ऽजवसा। वृ॒ष॒णा॒। स्व॒स्ति॥ १५॥

हे अश्विनौ ᵛवां युवां ᵛतौग्र्यः तुग्रपुत्रः ᵛप्रोळ्हः पित्रा प्रापितः ᵛसमुद्रम् अब्धि ᵛजगन्वान्[1] भुज्युः[2] उदके निमग्नोऽपि ᵛअव्यथिः व्यथां पीडाम् अप्राप्त एव सन् ᵛअजोहवीत् स्तुतिभिराह्वयत्। ᵛतम् आह्वातारं हे ᵛमनोजवसा मनोवद्वेगयुक्तौ ᵛवृषणा कामाभिवर्षकावश्विनौ ᵛसुयुजा सुष्ठ्वश्वैर्युक्तेन[3] ᵛरथेन ᵛस्वस्ति क्षेमं यथा भवति तथा ᵛनिरूहथुः। जलान्निर्गमय्य युवां पितृगृहं प्रापितवन्तौ॥ जगन्वान्। गमेर्लिटः क्वसुः। 'विभाषा गमहनविदविशाम्' इति विकल्पनात् इडभावः। 'म्वोश्च' इति मकारस्य नकारः। निष्टम्। 'युष्मत्तत्तक्षुःष्वन्तःपादम्' इति मूर्धन्यः। मनोजवसा। मनसो जव इव जवो ययोः तौ तथोक्तौ। 'सुपां सुलुक्°' इति विभक्तेराकारः। पादादित्वात् आमन्त्रितनिघाताभावे षाष्ठिकमाद्युदात्तत्वम्॥ ॥ १५॥

अजो॑हवीदश्विना॒ वर्ति॑का वामा॒स्नो यत्सी॒ममुं॑ञ्चतं॒ वृक॑स्य।
वि ज॒युषा॑ ययथुः॒ सान्वद्रे॑र्जा॒तं वि॒ष्वाचो॑ अहतं वि॒षेण॑॥ १६॥

अजो॑हवीत्। अ॒श्वि॒ना॒। वर्ति॑का। वा॒म्। आ॒स्नः। यत्। सी॒म्। अमु॑ञ्चतम्। वृक॑स्य।
वि। ज॒युषा॑। य॒य॒थुः॒। सानु॑। अद्रेः॑। जा॒तम्। वि॒ष्वाचः॑। अ॒ह॒त॒म्। वि॒षेण॑॥ १६॥

'आस्नो वृकस्य' (ऋ. सं. १. ११६. १४) इत्यर्धर्चे यदुक्तं तदत्र पूर्वार्धेन प्रतिपाद्यते। ᵛवर्तिका चटकसदृशस्य पक्षिणः स्त्री वृकेण अरण्यश्वना ग्रस्ता सती हे अश्विनौ ᵛवां युवां तदा ᵛअजोहवीत् आहूतवती ᵛयत्सीं यदा खलु ᵛवृकस्य ᵛआस्नः आस्यात् ᵛअमुञ्चतं वर्तिकाम् अमोचयतम्। अपि च युवां ᵛजयुषा जयशीलेन रथेन ᵛअद्रेः पर्वतस्य ᵛसानु समुच्छ्रितप्रदेशं ᵛवि ᵛययथुः शत्रुभिरावेष्टितं जाहुषाख्यं स्तोतारं शत्रुसमूहान्निर्गमय्य तेन सह अन्यैर्गन्तुमशक्यं पर्वताग्रं गन्तवन्ताविर्त्यर्थः। तदुक्तं 'परिविष्टं जाहुषम्' (ऋ. सं. १. ११६. २०) इत्यत्र। तथा ᵛविष्वाचः विविधगतियुक्तस्य एतत्संज्ञस्य असुरस्य ᵛजातम् उत्पन्नमपत्यं ᵛविषेण क्ष्वेडेन[4] ᵛअहतं युवां हतवन्तौ।

---

१. क्ष-ट-ठ-स—जगन्वान् गतवान्। २. क्ष-ट-ठ—'भुज्युः' नास्ति। ३. च-छ-ण-फ—सुष्ठु शोभनैः अश्वैर्युक्तेन। ४. स—जलेन।

यद्वा । वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषाः । वृक इति विवृतज्योतिष्कः सूर्य उच्यते । तेन ग्रस्ता सती सा हे अश्विनौ युवाम् अजोहवीत् आह्वयत् । यदा खलु युवां वृकस्य सूर्यस्य आस्नः आस्यस्थानीयान्मण्डलात् अमुञ्चतम् अमोचयतम् । सूर्येण एकीभूतामुषसं पृथक्कृत्य[1] उदयात्पूर्वं रात्रेरपरभागे स्थापितवन्तावित्यर्थः । तथा च यास्कः– ' आदित्योऽपि वृक उच्यते यदावृङ्क्ते । आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानम् ' ( निरु. ५. २१ ) इति । अपि च जयुषा जयशीलेन रथेन अद्रेर्मेघस्य सानु समुच्छ्रितप्रदेशं वृष्टिचिकीर्षया विशेषेण ययथुः युवां गतवन्तौ । गत्वा च विष्वाचो विविधगतियुक्तस्य मेघस्य संबन्धिना विषेणोदकेन जातमुत्पन्नं सर्वं भूतजातम् अहतम् अगमयतं वृष्टिं कृतवन्तावित्यर्थः ॥ अजोहवीत् । ह्वयतेर्यङ्लुगन्तात् लङि तिपि ' यङो वा ' इति ईडागमः । ' अभ्यस्तस्य च ' इति द्विर्वचनात्पूर्वमेव ह्वयतेः संप्रसारणम् । आस्नः । ' पद्दन्° ' इत्यादिना आस्यशब्दस्य आसन्नादेशः । ' अल्लोपोऽनः ' इति अकारलोपः । जयुषा । ' जि जये ' । औणादिकः उसिप्रत्ययः । विष्वाचः । विषु नाना आभिमुख्येन अञ्चति इति विग्रहः । ' ऋत्विक्° ' इत्यादिना क्विन् । ' अचः ' इत्यकारलोपः । ' चौ ' इति दीर्घः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वे प्राप्ते ' चौ ' इत्यन्तोदात्तत्वम् । अहतम् । ' हन हिंसागत्योः ' । लङि अदादित्वात् शपो लुक् । ' अनुदात्तोपदेश° ' इत्यादिना अनुनासिकलोपः ॥

**श॒तं मे॒षान्वृ॒क्ये॑ मामहा॒नं तमः॒ प्रणी॑त॒मशि॑वेन पि॒त्रा ।**
**आ॒क्षी ऋ॒ज्राश्वे॑ अश्विनावधत्तं॒ ज्योति॑र॒न्धाय॑ चक्रथुर्वि॒चक्षे॑ ॥ १७ ॥**

श॒तम् । मे॒षान् । वृ॒क्ये॑ । म॒म॒हा॒नम् । तमः॑ । प्रऽनी॑तम् । अशि॑वेन । पि॒त्रा ।
आ । अ॒क्षी इति॑ । ऋ॒ज्रऽअ॑श्वे । अ॒श्वि॒नौ॒ । अ॒ध॒त्त॒म् । ज्योतिः॑ । अ॒न्धाय॑ । च॒क्र॒थुः॒ । वि॒ऽचक्षे॑ ॥ १७ ॥

' शतं मेषान्वृक्ये चक्षदानम् ' ( ऋ. सं. १. ११६. १६ ) इत्यत्र यदाख्यानमवादिष्म तदत्राप्यनुसंधेयम् । ^v^शतं शतसंख्याकान् ^v^मेषान् ^v^वृक्ये वृकीरूपेणावस्थिताय अश्विनोर्वाहनाय रासभाय ^v^ममहानं[2] पूजितवन्तम् आहारार्थं समर्पितवन्तम् ^v^अशिवेन असुखकारिणा ^v^पित्रा स्वकीयेन जनकेन ^v^तमः दृष्टिराहित्येन कृतम् आन्ध्यं ^v^प्रणीतं[3] प्रापितम् ऋज्राश्वं चक्षुष्मन्तम् अश्विनावकुरुतामिति शेषः । एतदेव विशदयति । हे ^v^अश्विनौ ^v^अक्षी पितृशापान्नष्टे चक्षुषी ^v^ऋज्राश्वे एतत्संज्ञके राजर्षौ ^v^आ ^v^अधत्तं पुनर्दर्शनसमर्थे अकुरुतम् । एतदेवाह । ^v^अन्धाय दृष्टिहीनाय ^v^ज्योतिः प्रकाशकं चक्षुः ^v^विचक्षे विविधं जगत् द्रष्टुं ^v^चक्रथुः युवां कृतवन्तौ ॥ ममहानम् । ' मह पूजायाम् ' । लिटः कानच् । संहितायां छान्दसमभ्यासस्य दीर्घत्वम् । प्रणीतम् । प्रपूर्वान्नयतेः कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । पित्रा । ' उदात्तयणः° ' इति विभक्तेरुदात्तत्वम् । अक्षी । अक्षिशब्दात् द्विवचने नुमागमश्च प्राप्नोति ' ई च द्विवचने ' इति ईकारान्तादेशश्च । परत्वादीकारादेशः । कृते तस्मिन् सकृद्गतपरिभाषया पुनर्नुम् न भवति । ' उदात्त° ' इत्यनुवृत्तेः ईकारस्योदात्तत्वम् ॥

---

१. क्ष-ट-ठ–पुरस्कृत्य । २. क्ष-ट-ठ-स–मामहानम् । ३. क्ष-ट-ठ-न-स–' प्रणीतम् ' नास्ति ।

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।
जारः कनीनइव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥ १८ ॥

शुनम् । अन्धाय । भरम् । अह्वयत् । सा । वृकीः । अश्विना । वृषणा । नरा । इति ।
जारः । कनीनःऽइव । चक्षदानः । ऋज्रऽअश्वः । शतम् । एकम् । च । मेषान् ॥१८॥

^v^शुनम् इति सुखनाम । ^v^भरं पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यं सुखम् ^v^अन्धाय दृष्टिहीनाय तस्मै ऋज्राश्वाय इच्छन्ती ^v^सा ^v^वृकीः हे अश्विनौ अश्वयुक्तौ[1] कृत्स्नं जगत् व्याप्नुवन्तौ वा ^v^वृषणा हे वृषणौ कामानां वर्षितारौ ^v^इति एवं संबोध्य ^v^नरा नेतारौ अश्विनौ ^v^अह्वयत् आहूतवती। आह्वयन्त्यास्तस्याः कोऽभिप्राय इति चेत् तदुच्यते । ^v^कनीनइव यथा प्राप्तयौवनः कामुकः ^v^जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति एवम् ^v^ऋज्राश्वः मह्यं ^v^शतमेकं ^v^च एकोत्तरशतसंख्याकान् ^v^मेषान् पौरजनानां स्वभूतानपहृत्य ^v^चक्षदानः शकलीकुर्वन् प्रादात् । तेन ईदृशीं दुर्दशां प्राप्तः इति ॥ कनीनः । युवशब्दात् इष्ठनि 'युवाल्पयोः कनन्यतरस्याम्' ( पा. सू. ५. ३. ६४ ) इति युवशब्दस्य कनादेशः । व्यत्ययेन इष्ठनः खादेशः । यद्वा । 'कन दीप्तिकान्तिगतिषु' । अस्मादौणादिक ईनप्रत्ययः ॥

मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।
अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥ १९ ॥

मही । वाम् । ऊतिः । अश्विना । मयःऽभूः । उत । स्रामम् । धिष्ण्या । सम् । रिणीथः ।
अथ । युवाम् । इत् । अह्वयत् । पुरम्ऽधिः । आ । अगच्छतम् । सीम् । वृषणौ । अवःऽभिः ॥१९॥

हे अश्विनौ ^v^वां युवयोः ^v^मही महती ^v^ऊतिः पालनं ^v^मयोभूः मयसः सुखस्य भावयित्री । ^v^उत अपि च हे ^v^धिष्ण्या । धिषणा स्तुतिलक्षणा वाक् । तया स्तोतव्यौ ^v^स्रामं व्याधितं पुरुषं विश्लिष्टाङ्गम् अन्यादिकं ^v^सं ^v^रिणीथः संगतावयवं कुरुथः । ^v^अथ अपि च ^v^युवामित् युवामेव ^v^पुरंधिः बहुधीः घोषा विश्पला वा ^v^अह्वयत् रोगोपशमनार्थम् आहूतवती । हे ^v^वृषणौ कामानां वर्षितारौ अश्विनौ ^v^अवोभिः रक्षणैः सह ^v^आगच्छतम् आभिमुख्येन ^v^सीम् एनां प्राप्तवन्तौ ॥ मही महती । छान्दसो वर्णलोपः । यद्वा । महेरौणादिक इन् । 'कृदिकारादक्तिनः' इति ङीष् । मयोभूः । भवतेरन्तर्भावितण्यर्थात् क्विप् । रिणीथः । 'री गतिरेषणयोः' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् ॥

---

१. क्ष-ट-ठ–अश्ववन्तौ ।

अधेनुं दस्रा स्तर्यं१ विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥ २० ॥

अधेनुम् । दस्रा । स्तर्यम् । विऽसक्ताम् । अपिन्वतम् । शयवे । अश्विना । गाम् ।
युवम् । शचीभिः । विऽमदाय । जायाम् । नि । ऊहथुः । पुरुऽमित्रस्य । योषाम् ॥ २० ॥

हे “दस्रा दर्शनीयौ अश्विनौ “विषक्तां विशेषेण सक्तावयवां कृशावयवामित्यर्थः। अत एव “स्तर्यं निवृत्तप्रसवाम् अत एव “अधेनुम् अदोग्ध्रीम् एवंभूतां “गां “शयवे एतत्संज्ञाय ऋषये “अपिन्वतं पयसा अपूरयतम् । अपि च “पुरुमित्रस्य । पुरुमित्रो नाम कश्चिद्राजा । तस्य “योषां कुमारीं “शचीभिः आत्मीयैः कर्मभिः “विमदाय एतत्संज्ञाय ऋषये शत्रुभिः सह योद्धुमशक्ताय युवां “न्यूहथुः विमदस्य गृहं प्रापितवन्तौ ॥ स्तर्यम् । ‘ स्तृञ् आच्छादने ’ । ‘ अवितृस्तृतन्त्रिभ्य ईः ’ इति ईकारप्रत्ययः । ‘ वा छन्दसि ’ इति अमि पूर्वस्य विकल्पनादभावे यणादेशः । ‘ उदात्तस्वरितयोर्यणः० ’ इति परस्यानुदात्तस्य स्वरितत्वम् । विषक्ताम् । ‘ षञ्ज सङ्गे ’ । कर्मणि निष्ठा । ‘ अनिदिताम्० ’ इति नलोपः । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । अपिन्वतम् । ‘ पिवि सेचने ’ । इदित्त्वात् नुम् । भौवादिकः । पुरुमित्रस्य । पुरूणि मित्राणि यस्य । ‘ संज्ञायां मित्राजिनयोः ’ ( पा. सू. ६. २. १६५ ) इति बहुव्रीहौ उत्तरपदान्तोदात्तत्वम् ॥ ॥ १६ ॥

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ २१ ॥

यवम् । वृकेण । अश्विना । वपन्ता । इषम् । दुहन्ता । मनुषाय । दस्रा ।
अभि । दस्युम् । बकुरेण । धमन्ता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ २१ ॥

“आर्याय विदुषे। मनुषशब्दो मनुशब्दपर्यायः। “मनुषाय मनवे मनोरर्थं हे “दस्रा दर्शनीयावश्विनौ “वृकेण लाङ्गलेन कर्षकैः कृष्टदेशे[1] “यवं यवाद्युपलक्षितं सर्वं धान्यजातं “वपन्ता वापयन्तौ तथा “इषम् । अन्ननामैतत् । तत्कारणभूतं वृष्ट्युदकं च “दुहन्ता मेघात् क्षारयन्तौ तथा “दस्युम् उपक्षयकारिणमसुरपिशाचादिकं “बकुरेण । बकुरो भासमानो वज्रः । तेन “अभि “धमन्ता । धमतिर्वधकर्मा। अभिघ्नन्तौ एवं त्रिविधं कर्म कुर्वन्तौ युवाम् “उरु विस्तीर्णं “ज्योतिः स्वकीयं तेजो माहात्म्यं “चक्रथुः कृतवन्तौ दर्शितवन्तावित्यर्थः। यद्वा। त्रिविधकर्माचरणेनार्याय विदुषे मनवे विस्तीर्णं सूर्याख्यं ज्योतिश्चक्रथुः कृतवन्तौ । जीवन् हि सूर्यं पश्यति । तद्धेतुभूतानि त्रीणि कर्माणि युवाभ्यां कृतानि इति भावः । अत्र निरुक्तं–‘ बकुरो भास्करो भयंकरो भासमानो द्रवतीति वा ’ । ‘ यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं भवति विकर्तनात् ’ ( निरु. ६. २५-२६ ) इत्यादिकमनुसंधेयम् ॥ मनुषाय । मनेरौणादिक उषन्प्रत्ययः ॥

---

१. क्ष-ट-ठ-स–कृष्टे देशे ।

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥ २२ ॥

आथर्वणाय । अश्विना । दधीचे । अश्व्यम् । शिरः । प्रति । ऐरयतम् ॥ सः । वाम् । मधु । प्र । वोचत् । ऋतऽयन् । त्वाष्ट्रम् । यत् । दस्रौ । अपिऽकक्ष्यम् । वाम् ॥ २२ ॥

' तद्वां नरा सनये ' ( ऋ. सं. १. ११६. १२ ) इत्यत्रोक्तमाख्यानमिहाप्यनुसंधेयम् । हे अश्विनौ ᵛआथर्वणाय अथर्वणः पुत्राय ᵛदधीचे दध्यङ्नाम्ने महर्षये ᵛअश्व्यम् अश्वसंबन्धि ᵛशिरः ᵛप्रत्यैरयतं प्रत्यधत्तम् । तदीयं मानुषं शिरः प्रच्छिद्य अन्यत्र विधाय[1] अश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः । ᵛसः च ᵛवां युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुरा कृतां प्रतिज्ञाम् ᵛऋतायन् सत्यामात्मन इच्छन् ᵛमधु मधुविद्यां ᵛत्वाष्ट्रं त्वष्टुरिन्द्राल्लब्धं ᵛप्र ᵛवोचत् प्रोक्तवान् । हे ᵛदस्रौ दर्शनीयावश्विनौ ᵛवां युवयोः संबन्धि ᵛयत् ᵛअपिकक्ष्यं छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन पुनःसंधानभूतं प्रवर्ग्यविद्याख्यं रहस्यं[2] तदपि ᵛवां युवाभ्यां प्रावोचदित्यर्थः ॥ दधीचे । अञ्चतेः ' ऋत्विक्° ' इत्यादिना क्विन् । ' अनिदिताम्° ' इति नलोपः । चतुर्थ्येकवचने ' अचः ' इति अकारलोपे ' चौ ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वे प्राप्ते तस्यापवादत्वेन ' चौ ' इति विभक्तेः पूर्वस्योदात्तत्वं प्राप्तं तस्याप्ययमपवादः । ' अञ्चेश्छन्दस्यसर्वनामस्थानम् ' इति विभक्त्युदात्तत्वम्[3] ॥

सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥ २३ ॥

सदा । कवी इति । सुऽमतिम् । आ । चके । वाम् । विश्वाः । धियः । अश्विना । प्र । अवतम् । मे । अस्मे इति । रयिम् । नासत्या । बृहन्तम् । अपत्यऽसाचम् । श्रुत्यम् । रराथाम् ॥ २३ ॥

हे ᵛकवी क्रान्तदर्शिनौ मेधाविनावश्विनौ ᵛवां युवयोः ᵛसुमतिं कल्याणीम् अनुग्रहात्मिकां बुद्धिं ᵛसदा सर्वदा ᵛआ ᵛचके आभिमुख्येन प्रार्थये । ᵛमे मदीयानि ᵛविश्वाः ᵛधियः सर्वाणि कर्माणि युवां ᵛप्रावतं प्रकर्षेण रक्षतम् । अपि च ᵛअस्मे अस्मभ्यं हे नासत्यावश्विनौ ᵛबृहन्तं महान्तम् ᵛअपत्यसाचम् अपत्यैः पुत्रादिभिः समवेतं ᵛश्रुत्यं प्रशंसनीयम् उत्कृष्टं ᵛरयिं धनं ᵛरराथां प्रयच्छतम् ॥ चके । ' कै गै शब्दे ' । व्यत्ययेनात्मनेपदम् । लिटि उत्तमैकवचने रूपम् । अस्मे । ' सुपां सुलुक्° ' इति चतुर्थीबहुवचनस्य शेआदेशः । अपत्यसाचम् । अपत्यैः सह सचते संगच्छते इति अपत्यसाच् । छान्दसो ण्विः । श्रुत्यम् । श्रुतिः स्तुतिः । तत्र भवं श्रुत्यम् । ' भवे छन्दसि ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । रराथाम् । ' रा दाने ' । लोटि व्यत्ययेनात्मनेपदम् । ' बहुलं छन्दसि ' इति शपः श्लुः ॥

---

१. क्ष-ट-ठ-न-स–निधाय । २. क्ष-ट-ठ–यत्; स–यत् रहस्यम् । ३. क्ष-ट-ठ–' विभक्त्युदात्तत्वम् ' नास्ति ।

हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।
त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥ २४ ॥

हिरण्यऽहस्तम् । अश्विना । रराणा । पुत्रम् । नरा । वध्रिऽमत्याः । अदत्तम् ॥ त्रिधा । ह । श्यावम् । अश्विना । विऽकस्तम् । उत् । जीवसे । ऐरयतम् । सुदानू इति सुऽदानू ॥२४॥

ᵛरराणा रममाणौ दातारौ वा ᵛनरा नेतारौ हे अश्विनौ ᵛहिरण्यहस्तं नाम ᵛपुत्रं ᵛवध्रिमत्याः एतत्संज्ञायै ब्रह्मवादिन्यै ᵛअदत्तं प्रायच्छतं ᵛह । अपि च हे ᵛसुदानू शोभनदानौ अश्विनौ ᵛत्रिधा त्रेधा ᵛविकस्तं विच्छिन्नं श्यावाख्यमृषिं ᵛजीवसे जीवितुम् ᵛउत् ᵛऐरयतम् असुरैः त्रेधा खण्डितं शरीरं पुनरेकीकृत्य उदगमयतमित्यर्थः ॥ रराणा । रमतेः शानचि ‘ बहुलं छन्दसि ’ इति शपः श्लुः । व्यत्ययेन मकारस्य आत्वम् । रातेर्वा व्यत्ययेन शानच् । पूर्ववत् श्लुः । वध्रिमत्याः । चतुर्थ्यर्थे ‘ बहुलं छन्दसि ’ इति षष्ठी । जीवसे । ‘ जीव प्राणधारणे ’ । ‘ तुमर्थे सेसेन्° ’ इति असेप्रत्ययः ॥

एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।
ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥ २५ ॥

एतानि । वाम् । अश्विना । वीर्याणि । प्र । पूर्व्याणि । आयवः । अवोचन् । ब्रह्म । कृण्वन्तः । वृषणा । युवऽभ्याम् । सुऽवीरासः । विदथम् । आ । वदेम ॥ २५ ॥

ᵛअश्विना हे अश्विनौ ᵛवां युवयोः संबन्धीनि ᵛपूर्व्याणि प्रत्नानि ᵛएतानि इदानीं मयोक्तानि ᵛवीर्याणि वीरकर्माणि ᵛआयवः मनुष्याः मदीयाः पित्रादयः ᵛप्र ᵛअवोचन् उक्तवन्तः । वयं च हे ᵛवृषणा कामाभिवर्षकौ अश्विनौ युवाभ्यां ᵛब्रह्म मन्त्रात्मकं स्तोत्रं ᵛकृण्वन्तः कुर्वन्तः ᵛसुवीरासः सुवीराः शोभनैः वीरैः पुत्रादिभिरुपेताः सन्तः ᵛविदथं यज्ञम् ᵛआ ᵛवदेम आभिमुख्येन स्तुतीः उच्चारयाम[1] । यद्वा । विदथं वेदयन्तम् अतिथिं तदपेक्षितप्रदानेन आवदेम आभिमुख्येन प्रियपूर्विकां वाचमुच्चारयाम ॥ कृण्वन्तः । ‘ कृवि हिंसाकरणयोश्च ’ । इदित्त्वात् नुम् । लटः शतृ । ‘ धिन्विकृण्व्योर च ’ इति उप्रत्ययः । अकारान्तादेशश्च । अतो लोपे सति स्थानिवद्भावात् लघूपधगुणाभावः । सुवीरासः । शोभना वीरा येषां ते तथोक्ताः । ‘ आज्जसेरसुक् ’ । ‘ वीरवीर्यौ च ’ इत्युत्तरपदाद्युदात्तत्वम् । विदथम् । ‘ विद ज्ञाने ’ । ‘ रुविदिभ्यां कित् ’ इति अथप्रत्ययः ॥ ॥ १७ ॥

‘ आ वाम् ’ इत्येकादशर्चं तृतीयं सूक्तं कक्षीवत आर्षं त्रैष्टुभमाश्विनम् । तथा चानुक्रान्तम्—‘ आ वामेकादश ’ इति । पूर्वसूक्ताभ्यां सह प्रातरनुवाकाश्विनशस्त्रयोः उक्तो विनियोगः ॥

---

१. क्ष-ट—उच्चारयेम ।

आ वां रथो॑ अश्विना श्येनप॑त्वा सुमृळीकः स्ववाँ॑ यात्वर्वाङ् ।
यो मर्त्य॑स्य मन॑सो जवी॑यान्त्रिवन्धुरो वृ॑षणा वात॑रंहाः ॥ १ ॥

आ । वाम् । रथः॑ । अश्विना । श्येनऽप॑त्वा । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् ।
यः । मर्त्य॑स्य । मन॑सः । जवी॑यान् । त्रिऽवन्धुरः । वृषणा । वात॑ऽरंहाः ॥ १ ॥

हे अश्विनौ ᵛवां युवयोः स्वभूतः ᵛरथः ᵛअर्वाङ् अस्मदभिमुखम् ᵛआ ᵛयातु आगच्छतु । कीदृशो रथः । ᵛश्येनपत्वा । श्येनाः[1] इत्यश्वनाम । शंसनीयगमनैरश्वैः पतन् गच्छन् । यद्वा । श्येनः पक्षी । स इव शीघ्रं पतन् । ᵛसुमृळीकः शोभनसुखयुक्तः ᵛस्ववान् धनवान् । हे वृषणौ कामानां वर्षितारावश्विनौ ᵛयः युष्मदीयो रथः ᵛमर्त्यस्य मनुष्यस्य ᵛमनसो ᵛजवीयान् अतिशयेन वेगवान् । तद्यथा वेगेन कृत्स्नं जगत् व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत् पर्यटतीत्यर्थः । ᵛत्रिवन्धुरः । वन्धुरं वेष्टितं सारथेः स्थानम् । त्रिप्रकारेण वन्धुरेण युक्तः ᵛवातरंहाः वातस्य वायोः रंहो वेग इव वेगो यस्य स तथोक्तः । अनेन अप्रतिहतगतित्वमुच्यते । स रथ इति पूर्वत्रान्वयः ॥ श्येनपत्वा । ‘ पत्लृ गतौ ’ । ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति वनिप् । दासीभारादिः । यद्वा । दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् भावे वनिप् । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । जवीयान् । जवोऽस्यास्तीति जववान् । अतिशयेन जववान्[2] । आतिशायनिक ईयसुन् । विन्मतोर्लुक् । ‘ टेः ’ इति टिलोपः ॥

त्रिवन्धुरेण॑ त्रिवृता रथे॑न त्रिचक्रेण॑ सुवृता या॑तमर्वाक् ।
पिन्वतं गा जिन्व॑तमर्व॑तो नो वर्धय॑तमश्विना वीरमस्मे ॥ २ ॥

त्रिऽवन्धुरेण॑ । त्रिऽवृता॑ । रथे॑न । त्रिऽचक्रेण॑ । सुऽवृता॑ । आ । यातम् । अर्वाक् ।
पिन्व॑तम् । गाः । जिन्व॑तम् । अर्व॑तः । नः । वर्धय॑तम् । अश्विना । वीरम् । अस्मे इति॑ ॥२॥

ᵛत्रिवन्धुरेण । वन्धुरं सारथिस्थानम् । त्रिप्रकारवन्धुरोपेतेन ᵛत्रिवृता त्रिधा वर्तमानेन ᵛत्रिचक्रेण चक्रत्रयोपेतेन ᵛसुवृता शोभनं गच्छता ᵛरथेन ᵛअर्वाक् अस्मदभिमुखम् ᵛआ ᵛयातम् आगच्छतम् । आगत्य च अस्मदीयाः ᵛगाः ᵛपिन्वतं पयसा पूरयतम् । ᵛनः अस्माकम् ᵛअर्वतः अश्वान् ᵛजिन्वतं प्रीणयतम् । अपि च हे अश्विनौ ᵛअस्मे अस्माकं ᵛवीरं पुत्रादिकं[3] ᵛवर्धयतं प्रवृद्धं कुरुतम् ॥ त्रिचक्रेण । त्रीणि चक्राणि यस्य स तथोक्तः । ‘ त्रिचक्रादीनां छन्दस्युपसंख्यानम् ’ ( पा. सू. ६. २. १९९. १ ) इत्युत्तरपदान्तोदात्तत्वम् ॥

---

१. क्ष-ट-स–श्येनः । २. च-छ-ण-फ–जववान् जवीयान्; त–जववान् इति जवीयान् । ३. क्ष-ट-ठ–पुत्रपौत्रादिकम् ।

प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥

प्रवत्ऽयामना । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः ।
किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

हे दस्रौ दर्शनीयावश्विनौ प्रवद्यामना प्रकृष्टगमनेन शीघ्रगामिना सुवृता शोभनवर्तनेन रथेन आगत्य अद्रेः आदरं कुर्वतः स्तोतुः इमं श्लोकं स्तुतिलक्षणाम् इमां वाचं शृणुतम् । अङ्ग अश्विना हे अश्विनौ पुराजाः पूर्वजाताः चिरंतनाः विप्रासः मेधाविनः वां युवाम् अवर्तिं स्तोतॄणां दारिद्र्यं प्रति तत्परिहर्तुं गमिष्ठा गन्तृतमौ आहुः कथयन्ति । किंशब्दः प्रदर्शनफलप्रश्ने[1] वर्तते । किं न कथयन्ति । कथयन्त्येव सर्वे । तथा सति आगन्तव्यमिति ॥ प्रवद्यामना । स्वोपसृष्टे धात्वर्थे वर्तमानात् प्रशब्दात् '. उपसर्गाच्छन्दसि धात्वर्थे ' ( पा. सू. ५. १. ११८ ) इति वतिः । ' या प्रापणे ' । ' आतो मनिन्° ' इति बहुलवचनात् भावे मनिन् । ततो बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम् । अद्रेः । ' दृङ् आदरे ' । आङ्पूर्वात् अस्मादौणादिकः क्विप्रत्ययः आङो ह्रस्वश्च । गमिष्ठा । गन्तृशब्दात् ' तुश्छन्दसि ' इति इष्ठन् । ' तुरिष्ठेमेयःसु ' इति तृलोपः । ' सुपां सुलुक्° ' इति विभक्तेः आकारः । आहुः । प्रत्ययस्वरः । पादादित्वात् निघाताभावः ॥

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः ।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥ ४ ॥

आ । वाम् । श्येनासः । अश्विना । वहन्तु । रथे । युक्तासः । आशवः । पतङ्गाः ।
ये । अप्ऽतुरः । दिव्यासः । न । गृध्राः । अभि । प्रयः । नासत्या । वहन्ति ॥ ४ ॥

हे अश्विनौ रथे युक्तासः सारथिना वहनप्रदेशे योजिताः आशवः व्याप्नुवन्तः पतङ्गाः पतनसमर्थाः श्येनासः शंसनीयगमनाः अश्वाः वां युवाम् आ वहन्तु अस्मत्समीपमानयन्तु । ये अश्वाः अप्तुरः आप इव त्वरोपेताः दिव्यासो न गृध्राः अन्तरिक्षे वर्तमानाः गृध्राख्याः पक्षिण इव शीघ्रं गच्छन्तो हे नासत्यौ युवां प्रयः[2] हविर्लक्षणमन्नम् अभिलक्ष्य वहन्ति प्रापयन्ति । तादृशाः इति पूर्वत्र संबन्धः ॥ अप्तुरः । ' तुर त्वरणे ' । अप्शब्दोपपदात् अस्मात् ' क्विप् च ' इति क्विप् ॥

---

१. क्ष-ट-ठ–प्रदर्शनफले प्रश्ने; च-छ-ण-फ–गमनफलप्रश्ने । २. च-छ-फ–अभि प्रयः ।

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।
परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥ ५ ॥

आ । वाम् । रथम् । युवतिः । तिष्ठत् । अत्र । जुष्ट्वी । नरा । दुहिता । सूर्यस्य ।
परि । वाम् । अश्वाः । वपुषः । पतङ्गाः । वयः । वहन्तु । अरुषाः । अभीके ॥ ५ ॥

हे ᵛनरा नेतारावश्विनौ ᵛयुवतिः तरुणी ᵛसूर्यस्य ᵛदुहिता ᵛजुष्ट्वी प्रीता सती ᵛवां युवयोः ᵛअत्र इमं ᵛरथम् ᵛआ ᵛतिष्ठत् आरूढवती । तया सहितौ ᵛवां युवाम् ᵛअश्वाः ᵛअभीके गृहसमीपे तं रथं ᵛपरि ᵛवहन्तु परिप्रापयन्तु । कीदृशा अश्वाः । ᵛवपुषः । वपुरिति रूपस्य शरीरस्य वा नामधेयम् । तद्वन्तः । छान्दसो मत्वर्थीयस्य लोपः । ᵛपतङ्गाः उत्पतनसमर्थाः ᵛवयः गच्छन्तः ᵛअरुषाः आरोचमाना हिंसकरहिता वा ॥ अत्र । 'इतराभ्योऽपि दृश्यन्ते' (पा. सू. ५. ३. १४) इति दृशिग्रहणात् भवदाद्ययोगेऽपि इदंशब्दात् विभक्त्यर्थे[1] त्रल्प्रत्ययः । जुष्ट्वी । 'जुषी प्रीतिसेवनयोः' । औणादिकः कुप्रत्ययः । 'वोतो गुणवचनात्' इति ङीष् ॥ ॥ १८ ॥

उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः ।
निष्टौग्र्यं पारयथः समुद्रात्पुनश्च्यवानं चक्रथुर्युवानम् ॥ ६ ॥

उत् । वन्दनम् । ऐरतम् । दंसनाभिः । उत् । रेभम् । दस्रा । वृषणा । शचीभिः ।
निः । तौग्र्यम् । पारयथः । समुद्रात् । पुनरिति । च्यवानम् । चक्रथुः । युवानम् ॥ ६ ॥

हे अश्विनौ ᵛवन्दनम् एतत्संज्ञमृषिं ᵛदंसनाभिः आत्मीयैः कर्मभिः कूपात् ᵛउत् ᵛऐरतम् उदैरयतम् उद्गमयतम् । हे ᵛदस्रा दर्शनीयौ ᵛवृषणा कामानां वर्षितारावश्विनौ ᵛशचीभिः कर्मभिः रेभम् एतत्संज्ञम् ऋषिं[2] दश रात्रीः नवाहानि च कूपे निवसन्तं तस्मात् उदैरयतम् उदतारयतम्[2] । तथा ᵛतौग्र्यं तुग्रस्य पुत्रं भुज्युं समुद्रे निमग्नम् आत्मीयाभिः नौभिः अश्वैश्च ᵛसमुद्रात् ᵛनिः ᵛपारयथः तीरदेशं प्रापितवन्तौ । तथा ᵛच्यवानं च्यवनमृषिं जीर्णं ᵛपुनः ᵛयुवानं यौवनोपेतं ᵛचक्रथुः कृतवन्तौ ॥ ऐरतम् । 'ईर गतौ कम्पने च' । ण्यन्तात् लङि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ॥

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥ ७ ॥

युवम् । अत्रये । अवऽनीताय । तप्तम् । ऊर्जम् । ओमानम् । अश्विनौ । अधत्तम् ।
युवम् । कण्वाय । अपिऽरिप्ताय । चक्षुः । प्रति । अधत्तम् । सुऽस्तुतिम् । जुजुषाणा ॥७॥

---

१. क्ष-ट-ठ-स–द्वितीयार्थे । २. क्ष-ट-ठ–ऋषिं कूपात् उद्गमयतम् ।

हे अश्विनौ ᵛयुवं युवाम् ᵛअवनीताय शतद्वारे पीडायन्त्रगृहे अवस्तान्नीताय ᵛअत्रये ᵛतप्तं पीडार्थं प्रक्षिप्तं तुषाग्निं शीतेनोदकेन अवारयेथाम् । अपि च अस्मै अत्रये ᵛओमानं सुखकरम् ᵛऊर्जं रसवदन्नम् ᵛअधत्तं प्रायच्छतम्[1] । तथा ᵛसुष्टुतिं शोभनां स्तुतिं ᵛजुजुषाणा सेवमानौ युवाम् ᵛअपिरिप्ताय असुरैः ब्राह्मण्यपरीक्षार्थम् इहासीनः[2] सन् व्युष्टामुषसं जानीहि इति[2] अन्धकारवति गृहे प्रवेशिताय ᵛकण्वाय ऋषये ᵛचक्षुः व्युष्टायाः उषसः प्रकाशकं वीणाशब्दं ᵛप्रत्यधत्तं कृतवन्तौ । यद्वा । अपिरिप्ताय अपिलिप्ताय पटलेन पिहितदृष्टये एवंविधाय[3] कण्वाय[4] चक्षुरिन्द्रियं प्रत्यधत्तं प्रत्यस्थापयतम् ॥ ओमानम् । अवतेरौणादिको मनिः । ' ज्वरत्वर° ' इत्यादिना वकारस्य उपधायाश्च ऊठ् । गुणः । अपिरिप्ताय । ' लिप उपदेहे ' । अस्मात् कर्मणि निष्ठा । कपिलकादित्वात् लत्वविकल्पः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । जुजुषाणा । ' जुषी प्रीतिसेवनयोः ' । छान्दसो लिट् । ' लिटः कानज्वा ' । ' सुपां सुलुक्° ' इति विभक्तेः आकारः ॥

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।
अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ ८ ॥

युवम् । धेनुम् । शयवे । नाधिताय । अपिन्वतम् । अश्विना । पूर्व्याय ।
अमुञ्चतम् । वर्तिकाम् । अंहसः । निः । प्रति । जङ्घाम् । विश्पलायाः । अधत्तम् ॥ ८ ॥

ᵛअश्विना हे अश्विनौ ᵛयुवं युवां ᵛपूर्व्याय पुरातनाय ᵛनाधिताय याचमानाय ᵛशयवे एतत्संज्ञाय ऋषये ᵛधेनुं निवृत्तप्रसवाम् अदोग्ध्रीम्[5] ᵛअपिन्वतं पयसा असिञ्चतम् । सर्वदा पयस्विनीमकुरुतमित्यर्थः । अपि च वर्तिकां[6] वृकेण ग्रस्तां चटकसदृशीं शकुनिम् ᵛअंहसः वृकास्यलक्षणात् पापात्[6] ᵛनिः ᵛअमुञ्चतं निरमोचयतम् । यद्वा । पुनःपुनर्वर्तते इति वर्तिका उषाः । तामादित्येनाभिग्रस्तां युवाममोचयतम् । तथा विश्पलायै[7] संग्रामे छिन्नजङ्घायै अगस्त्यपुरोहितस्य खेलस्य संबन्धिन्यै एतत्संज्ञायै स्त्रियै आयसीं ᵛजङ्घां ᵛप्रति ᵛअधत्तं प्रत्यस्थापयतं समयोजयतमित्यर्थः ॥

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।
जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ ९ ॥

युवम् । श्वेतम् । पेदवे । इन्द्रऽजूतम् । अहिऽहनम् । अश्विना । अदत्तम् । अश्वम् ।
जोहूत्रम् । अर्यः । अभिऽभूतिम् । उग्रम् । सहस्रऽसाम् । वृषणम् । वीळुऽअङ्गम् ॥ ९ ॥

ᵛअश्विना हे अश्विनौ ᵛपेदवे पेदुनाम्ने राज्ञे ᵛयुवं युवां श्वेतवर्णं कंचित् ᵛअश्वम् ᵛअदत्तं प्रायच्छतम् । कीदृशम् । ᵛइन्द्रजूतम् इन्द्रेण युवाभ्यां गमितं दत्तमित्यर्थः । ᵛअहिहनम् शत्रूणां

---

१. क्ष-ट-ठ—प्रापयतम् । २. क्ष-ट-ठ—' इहासीनः......इति ' नास्ति । ३. क्ष-ट-ठ—अन्धाय । ४. स—कण्वाय ऋषये । ५. क्ष-ट-ठ-स—अदोग्ध्रीं गाम् । ६. क्ष-ट-स—वर्तिकाम् एतत्संज्ञां वृकेण ग्रस्ताम् अंहसो वृकस्य भक्षणात् । ७. क्ष-ट-ठ—विश्पलायाः ।

हन्तारं ᐯजोहूत्रम् अतिशयेन संग्रामेष्वाह्वातारम् ᐯअर्यः अरेः शत्रोः ᐯअभिभूतिम् अभिभावुकम् ᐯउग्रम् उद्गूर्णम् वीर्यवन्तमित्यर्थः। ᐯसहस्रसां सहस्रसंख्याकस्य धनस्य संभक्तारं दातारं वा ᐯवृषणं सेक्तारं युवानमित्यर्थः। ᐯवीड्वङ्गं दृढाङ्गम्॥ इन्द्रजूतम्। जु इति सौत्रो धातुर्गत्यर्थः। अस्मादन्तर्भावितण्यर्थात् कर्मणि निष्ठा। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। जोहूत्रम्। ह्वयतेर्यङ्लुगन्तात् औणादिकः त्रप्प्रत्ययः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। अर्यः। अरिशब्दात् षष्ठ्येकवचने 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणस्य विकल्पितत्वादभावे यणादेशः। 'उदात्तयणः°' इति विभक्तेरुदात्तत्वम्। अभिभूतिम्। अभिभूयतेऽनेनेत्यभिभूतिः। करणे क्तिन्। 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम्। सहस्रसाम्। सनोतेः सनतेर्वा 'जनसनखन°' इति विट्। 'विड्वनोरनुनासिकस्यात्' इति आत्वम्॥

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः।
आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम्॥ १०॥

ता। वाम्। नरा। सु। अवसे। सुऽजाता। हवामहे। अश्विना। नाधमानाः।
आ। नः। उप। वसुऽमता। रथेन। गिरः। जुषाणा। सुविताय। यातम्॥ १०॥

ᐯनरा नेतारौ हे अश्विनौ ᐯसुजाता शोभनजन्मानौ ᐯता ᐯवां तौ युवां ᐯनाधमानाः धनं याचमानाः वयं स्तोतारः ᐯअवसे रक्षणार्थं ᐯसु ᐯहवामहे शोभनमाह्वयामहे। ᐯगिरः स्तुतीः ᐯजुषाणा सेवमानौ युवां ᐯवसुमता धनयुक्तेन ᐯरथेन ᐯनः अस्मान् ᐯउप ᐯआ ᐯयातम् उपागच्छतम्। किमर्थम्। ᐯसुविताय सुष्ठु प्राप्तव्याय धनाय सुखाय वा॥ सुजाता। शोभनं जातं जन्म ययोस्तौ सुजातौ। 'सुपां सुलुक्°' इति विभक्तेराकारः। 'नञ्सुभ्याम्°' इत्युत्तरपदान्तोदात्तत्वम्। नाधमानाः। 'नाधृ याच्ञायाम्'। जुषाणा। 'जुषी प्रीतिसेवनयोः'। ताच्छीलिकः चानश्। तुदादित्वात् शः। पूर्ववद्विभक्तेराकारः। सुविताय। सुपूर्वात् एतेः कर्मणि निष्ठा। तन्वादित्वात् उवङ्। 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम्॥

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः।
हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ॥ ११॥

आ। श्येनस्य। जवसा। नूतनेन। अस्मे इति। यातम्। नासत्या। सऽजोषाः।
हवे। हि। वाम्। अश्विना। रातऽहव्यः। शश्वत्ऽतमायाः। उषसः। विऽउष्टौ॥ ११॥

हे नासत्यावश्विनौ ᐯसजोषाः सजोषसौ समानप्रीतियुक्तौ ᐯश्येनस्य शंसनीयं गच्छतः अश्वस्य ᐯनूतनेन नवतरेण प्रत्यग्रेण ᐯजवसा वेगेन सहितौ युवाम् ᐯअस्मे अस्मान् ᐯआ ᐯयातम् आगच्छतम्। ᐯअश्विना हे अश्विनौ ᐯरातहव्यः ᐯवां युवाभ्यां दातव्येन हविषा युक्तः सन् ᐯशश्वत्तमायाः कालात्मकतया नित्यायाः ᐯउषसो ᐯव्युष्टौ विवासनसमये वां युवां ᐯहवे आह्वयामि। हिः हेतौ। ᐯहि यस्मादेवं तस्मात् आयातमित्यर्थः॥ अस्मे। 'सुपां सुलुक्°' इति शसः शेआदेशः। सजोषाः।

तेनैव द्विवचनस्य सुआदेशः। हवे। ह्वेञो लडुत्तमैकवचने ‘बहुलं छन्दसि’ इति संप्रसारणम्। शब्गुणावादेशाः। शश्वत्तमायाः। ‘उत्तमशश्वत्तमौ सर्वत्र’ (पा. सू. ६. १. १६०. ग.) इति उञ्छादिषु पाठात् अन्तोदात्तत्वम्॥ ॥ १९ ॥

‘आ वां रथम्’ इति दशर्चं चतुर्थं सूक्तं दैर्घतमसस्य कक्षीवत आर्षं जागतमाश्विनम्। तथा चानुक्रान्तम्—‘आ वां रथं दश जागतम्’ इति। प्रातरनुवाकाश्विने[1] क्रतौ जागते छन्दसि इदं सूक्तम् आश्विनशस्त्रे च। तथा च सूत्रितम्—‘आ वां रथमभूदिदं यो वां परिज्मेति त्रीणि’ (आश्व. श्रौ. ४. १५) इति॥

आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः॥ १॥

आ। वाम्। रथम्। पुरुऽमायम्। मनःऽजुवम्। जीरऽअश्वम्। यज्ञियम्। जीवसे। हुवे। सहस्रऽकेतुम्। वनिनम्। शतत्ऽवसुम्। श्रुष्टीऽवानम्। वरिवःऽधाम्। अभि। प्रयः॥१॥

हे अश्विनौ ᵛवां युवयोः ᵛरथं ᵛजीवसे जीवनार्थं ᵛप्रयः हविर्लक्षणमन्नमभिलक्ष्य ᵛआ ᵛहुवे आह्वयामि। कीदृशम्। ᵛपुरुमायं बहुविधाश्चर्यं बहुविधकर्माणं वा ᵛमनोजुवं मन इव शीघ्रं गच्छन्तं ᵛजीराश्वं जववदश्वोपेतं ᵛयज्ञियं यज्ञेष्वाह्वातुमर्हं ᵛसहस्रकेतुम् अनेकध्वजं सहस्रस्य धनस्य केतयितारं ज्ञापयितारं वा ᵛवनिनम्। वनमित्युदकनाम। तद्वन्तम्। ᵛशतद्वसुं शतसंख्याकैर्धनैर्युक्तं ᵛश्रुष्टीवानम्। श्रुष्टीति क्षिप्रनाम। क्षिप्रं संभजमानं यद्वा सुखवन्तम्। ᵛवरिवोधाम्। वरिव इति धननाम। वरिवसो धनस्य दातारम्॥ पुरुमायम्। बहुव्रीहौ त्रिचक्रादित्वादन्तोदात्तत्वम्। यद्वा। तत्पूर्वात् अर्शआदित्वात् अच्। जीराश्वम्। जु इति गत्यर्थः सौत्रो धातुः। ‘जोरी च’ (उ. सू. २. १८१) इति रक् ईकारान्तादेशश्च। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। यज्ञियम्। ‘यज्ञर्त्विग्भ्यां घखञौ’ इति अर्हार्थे घप्रत्ययः। हुवे। ह्वेञो लटि ‘बहुलं छन्दसि’ इति संप्रसारणम्। ‘लुक्’ इत्यनुवृत्तौ ‘बहुलं छन्दसि’ इति शपो लुक्। उवङ्। शतद्वसुम्। शतवसुम्। छान्दसस्तकारोपजनः॥

ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत्॥ २॥

ऊर्ध्वा। धीतिः। प्रति। अस्य। प्रऽयामनि। अधायि। शस्मन्। सम्। अयन्ते। आ। दिशः। स्वदामि। घर्मम्। प्रति। यन्ति। ऊतयः। आ। वाम्। ऊर्जानी। रथम्। अश्विना। अरुहत्॥२॥

ᵛअस्य रथस्य ᵛप्रयामनि प्रयाणे प्रगमने सति ᵛशस्मन् अश्विनोः शंसने स्तवने ᵛधीतिः अस्मदीया बुद्धिः ᵛऊर्ध्वा उन्मुखा ᵛप्रति ᵛअधायि प्रत्यस्थायि। तदनन्तरं ᵛदिशः देष्टव्याः स्तुतयोऽपि

---

१. क्ष-ट—प्रातरनुवाक आश्विने; न-स—प्रातरनुवाकस्य आश्विने। २. क्ष-ट-ठ-महावीरसंस्थम्।

ᵛसमयन्ते अश्विभ्यां संगच्छन्ते । आकारः समुच्चये । अहं च स्तोता ᵛघर्मं महावीरस्थं यद्वा क्षरणशीलाज्यादिकं[1] हविः ᵛस्वदामि स्वादूकरोमि । ᵛऊतयः अवितारः रक्षका ऋत्विजश्च ᵛप्रति ᵛयन्ति । घर्मं प्रति गच्छन्ति संस्कारार्थम् । अपि च हे अश्विनौ ᵛवां युवयोः ᵛरथम् ᵛऊर्जानी सूर्यस्य दुहिता ᵛआ ᵛअरुहत् आरूढवती ॥ प्रयामनि । 'या प्रापणे' । 'आतो मनिन्°' इति 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् भावे मनिन् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । शस्मन् । 'शंसु स्तुतौ' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् उपधानकारलोपः । 'सुपां सुलुक्°' इति सप्तम्या लुक् । अयन्ते । 'अय पय गतौ' । भौवादिकः अनुदात्तेत् । ऊतयः । 'क्तिच्क्तौ च संज्ञायाम्' इति अवतेः कर्तरि क्तिच् । 'ज्वरत्वर°' इत्यादिना वकारोपधयोः ऊठ् । अरुहत् । 'कृमृदृरुहिभ्यः°' इति च्लेः अङादेशः ॥

सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे ।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम् ॥ ३ ॥

सम् । यत् । मिथः । पस्पृधानासः । अग्मत । शुभे । मखाः । अमिताः । जायवः । रणे ।
युवोः । अह । प्रवणे । चेकिते । रथः । यत् । अश्विना । वहथः । सूरिम् । आ । वरम् ॥३॥

ᵛमखाः मखवन्तो यज्ञोपेताः ᵛअमिताः अपरिमिताः ᵛजायवः जयशीलाः मनुष्याः ᵛरणे संग्रामे ᵛशुभे शोभनाय[2] धनाय तदर्थं ᵛमिथः ᵛपस्पृधानासः अन्योन्यं स्पर्धमानाः ᵛयत् यदा ᵛसम् ᵛअग्मत संगच्छन्ते तदानीं हे ᵛअश्विना अश्विनौ ᵛयुवोरह युवयोरेव ᵛरथः ᵛप्रवणे प्रकर्षेण संभजनीये[3] भूतले ᵛचेकिते ज्ञायते । देवेषु मध्ये युवामेव रक्षणार्थं शीघ्रं रथेनागच्छथः इत्यर्थः । ᵛयत् येन रथेन ᵛसूरिं स्तोतारं प्रति ᵛवरं श्रेष्ठं धनम् ᵛआ ᵛवहथः प्रापयथः स रथः इत्यर्थः ॥ पस्पृधानासः । 'स्पर्ध संघर्षे' । छान्दसो लिट् । तस्य लिटः कानजादेशः । छान्दसं रेफस्य संप्रसारणमकारलोपश्च । अग्मत । गमेश्छान्दसो लङ् । 'समो गम्यृच्छि°' इत्यादिना आत्मनेपदम् । 'बहुलं छन्दसि' इति शपो लुक् । झस्य अदादेशः । 'गमहन°' इति उपधालोपः । मखाः । मखो यज्ञः । अर्शआदित्वात् अच् । जायवः । 'जि जये' । 'कृवापाजि°' इत्यादिना उण् । चेकिते । 'कित ज्ञाने' । अस्मात् यङन्तात् छान्दसो वर्तमाने लिट् । अतोलोपयलोपौ । यत् । 'सुपां सुलुक्°' इति तृतीयाया लुक् ॥

युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं दिवोदासाय महि चेति वामवः ॥ ४ ॥

युवम् । भुज्युम् । भुरमाणम् । विऽभिः । गतम् । स्वयुक्तिऽभिः । निऽवहन्ता । पितृऽभ्यः । आ ।
यासिष्टम् । वर्तिः । वृषणा । विऽजेन्यम् । दिवःऽदासाय । महि । चेति । वाम् । अवः ॥४॥

---

१. क्ष-ट-ठ—क्षरणशीलम् आज्यादिकम् । २. क्ष-ट-ठ—शोभमानाय । ३. क्ष-ट-ठ—संभजनार्हे ।

Vवृषणा कामानां वर्षितारौ हे अश्विनौ Vयुवं युवां Vभुरमाणं Vविभिः अश्वैः ध्रियमाणं Vगतं समुद्रे निमग्नं Vभुज्युं तुग्रपुत्रं Vस्वयुक्तिभिः स्वयमेव युज्यमानैः अश्वैः नौविशेषैश्च Vनिवहन्ता नितरां वहन्तौ Vपितृभ्य Vआ । ' आङ् मर्यादायाम् ' । यत्र पितरस्तुग्रादय आसते तावत्पर्यन्तम्[1] इत्यर्थः । Vविजेन्यम् इति दूरस्थं ब्रुवते । दूरे वर्तमानं Vवर्तिः तुग्रस्य गृहं प्रति Vयासिष्टम् अगच्छतम् । अपि च Vदिवोदासाय राज्ञे कृतं युवयोः संबन्धि Vअवः रक्षणं शम्बरहननरूपं Vमहि महत्[2] गम्भीरं[2] Vचेति अस्माभिर्ज्ञायते ॥ भुरमाणम् । ' डुभृञ् धारणपोषणयोः ' । कर्मणि लटः शानच् । व्यत्ययेन शः । ' बहुलं छन्दसि ' इति उत्वम् । पितृभ्य आ । मर्यादायाम् आङः कर्मप्रवचनीयसंज्ञा[3] ( पा. सू. १. ४. ८९ ) । ' पञ्चम्यपाङ्परिभिः ' ( पा. सू. २. ३. १० ) इति पञ्चमी । यासिष्टम् । ' या प्रापणे ' । ' यमरमनमातां सक्च ' ( पा. सू. ७. २. ७३ ) इति सगागमः । सिच इडागमः । विजेन्यम् । विजनो दूरदेशः । तत्र भवं विजेन्यम् । ' भवे छन्दसि ' इति यत् । ' तित्स्वरितः ' इति स्वरितत्वम् ॥

युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥ ५ ॥

युवोः । अश्विना । वपुषे । युवाऽयुजम् । रथम् । वाणी इति । येमतुः । अस्य । शर्ध्यम् ।
आ । वाम् । पतिऽत्वम् । सख्याय । जग्मुषी । योषा । अवृणीत । जेन्या । युवाम् । पती इति ॥५॥

Vअश्विना हे अश्विनौ Vयुवोः युवयोः Vवाणी वननीयौ[4] प्रशस्यौ अश्वौ Vयुवायुजं युवाभ्यां युज्यमानं Vरथम् आजिधावनसमये Vअस्य रथस्य यत् Vशर्ध्यं प्राप्यम् आदित्याख्यम् अवधिभूतं लक्ष्यं[5] Vवपुषे शोभार्थं तत् Vयेमतुः । सर्वेभ्यो देवेभ्यः पूर्वं प्रापयामासतुः । तदनन्तरं च Vआ Vजग्मुषी आगतवती Vजेन्या आजिधावनेन जीयमाना Vयोषा सूर्या Vसख्याय सखित्वाय युवां[6] युवयोः Vपतित्वम् Vअवृणीत । कथमिति । मम Vयुवाम् एव Vपती भर्तारौ इति ॥ युवोः । षष्ठीद्विवचने ' योऽचि ' इति यत्वस्य सर्वविधीनां छन्दसि विकल्पितत्वादभावे ' शेषे लोपः ' इति दकारलोपः । ' अतो गुणे ' इति पररूपत्वम् । युवायुजम् । ' युवावौ द्विवचने ' इति द्व्यर्थाभिधायकस्य युष्मच्छब्दस्य अविभक्तावपि व्यत्ययेन युवादेशः । शर्ध्यम् । ' शृधु प्रसहने ' । अस्मात् ण्यन्तात् ' अचो यत् ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । जग्मुषी । गमेर्लिटः क्वसुः । ' उगितश्च ' इति ङीप् । ' वसोः संप्रसारणम् ' इति संप्रसारणम् । ' गमहन॰ ' इति उपधालोपः । जेन्या । ' जि जये ' । औणादिक एन्यप्रत्ययः टिलोपश्च ॥ ॥ २० ॥

युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।
युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ॥ ६ ॥

युवम् । रेभम् । परिऽसूतेः । उरुष्यथः । हिमेन । घर्मम् । परिऽतप्तम् । अत्रये ।
युवम् । शयोः । अवसम् । पिप्यथुः । गवि । प्र । दीर्घेण । वन्दनः । तारि । आयुषा ॥ ६ ॥

---

१. क्ष-ट-ठ–तावन्नयन्तौ । २. क्ष-ट-ठ–महत्वं वीर्यम् । ३. क्ष-ट-ठ–कर्मप्रवचनीयसंज्ञायाम् । ४. च-छ-त-फ-श–वर्णनीयौ । ५. क्ष-ट-ठ-स–' लक्ष्यम् ' नास्ति । ६. क्ष-च-छ-ट-ठ-फ–वाम् ।

हे अश्विनौ ᵛयुवं युवां ᵛरेभम् ऋषिं ᵛपरिषूतेः परितः प्रेरकादुपद्रवात् कूपपतनाद्वा ᵛउरुष्यथः रक्षथः । 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः । तथा ᵛअत्रये ऋषये ᵛपरितप्तं परितस्तप्तं ᵛघर्मम् असुरैः पीडार्थं प्रक्षिप्तं दीप्यमानं तुषाग्निं ᵛहिमेन शीतेनोदकेन अवारयेथाम् । यद्वा । हविषामत्रये भक्षयित्रे अग्नये परितप्तं सूर्यकिरणैः संतप्तं घर्मम् । अहर्नामैतत् । अहर्हिमेन वृष्ट्युदकेन हविःसंपादकव्रीह्याद्युत्पत्त्यर्थम् अवारयेथाम् । अपि च ᵛशयोः एतत्संज्ञस्य[1] ऋषेः ᵛगवि निवृत्तप्रसवायां धेनौ ᵛअवसं रक्षकं पयः ᵛयुवं युवां ᵛपिप्यथुः प्रवर्धितवन्तौ । तथा जीर्णाङ्गः ᵛवन्दनः ऋषिः ᵛदीर्घेण ᵛआयुषा ᵛप्र ᵛतारि युवाभ्यां प्रवर्धितः । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ अवसम् । अवतेरौणादिकः असच् । पिप्यथुः । 'प्यायी वृद्धौ' । व्यत्ययेन परस्मैपदम् । 'लिड्यङोश्च' (पा. सू. ६. १. २९) इति पीभावः ॥

**युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।**
**क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७ ॥**

युवम् । वन्दनम् । निःऽऋतम् । जरण्यया । रथम् । न । दस्रा । करणा । सम् । इन्वथः ।
क्षेत्रात् । आ । विप्रम् । जनथः । विपन्यया । प्र । वाम् । अत्र । विधते । दंसना । भुवत् ॥७॥

हे दस्रौ अश्विनौ ᵛयुवं युवां ᵛजरण्यया जरया ᵛनिर्ऋतं निःशेषेण प्राप्तं ᵛवन्दनम् ऋषिं ᵛकरणा कर्मणां कर्तारौ शिल्पकुशलौ युवां ᵛसमिन्वथः समधत्तं पुनर्युवानमकुरुतम् । तत्र दृष्टान्तः । ᵛरथं ᵛन । यथा कश्चिच्छील्पी जीर्णं रथं पुनरप्यभिनवं करोति तद्वत् । अपि च ᵛविपन्यया स्तुत्या गर्भस्थेन वामदेवेन स्तुतौ सन्तौ ᵛक्षेत्रात् ᵛआ । आकारः समुच्चये । मातुरुदरलक्षणात् जन्मस्थानात् ᵛविप्रं मेधाविनं तमृषिं ᵛजनथः जनयथः च । तथा ᵛवां युवयोः ᵛदंसना रक्षणात्मकं कर्म ᵛअत्र अस्मै ᵛविधते परिचरते यजमानाय ᵛप्र ᵛभुवत् प्रभवतु । रक्षितुं समर्थं भवतु ॥ निर्ऋतम् । 'ऋ गतौ' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जरण्यया । जरणक्रियार्हा जरण्या । 'अन्त्यावस्थाच्छन्दसि च' इति यः । करणा । करोतेः 'अन्येभ्योऽपि दृश्यते' (पा. सू. ३. ३. १३०) इति युच् । इन्वथः । 'इवि व्याप्तौ' । इदित्त्वात् नुम् । भौवादिकः । जनथः । 'जनी प्रादुर्भावे' । णिचि उपधावृद्धिः । 'जनीजॄष्क्नसुरञ्जः°' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । विपन्यया । 'पन स्तुतौ' । 'अघ्न्यादयश्च' इति भावे यत् । व्यत्ययेनान्तोदात्तत्वम् । विधते । 'विध विधाने' । तौदादिकः । लटः शतृ । 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । भुवत् । भवतेर्लेटि अडागमः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः ॥

**अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।**
**स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥ ८ ॥**

अगच्छतम् । कृपमाणम् । पराऽवति । पितुः । स्वस्य । त्यजसा । निऽबाधितम् ।
स्वःऽवतीः । इतः । ऊतीः । युवोः । अह । चित्राः । अभीके । अभवन् । अभिष्टयः ॥ ८ ॥

---

1. क्ष-ट-ठ-स–एतत्संज्ञकस्य ।

हे अश्विनौ ᐯपरावति दूरदेशे समुद्रमध्ये ᐯस्वस्य ᐯपितुः तुग्रस्य ᐯत्यजसा त्यागेन ᐯनिबाधितं पीडितं भुज्युं कृपमाणं युवां ᐯस्तुवन्तम् ᐯअगच्छतम् । युवां रक्षणार्थं गतवन्तौ । यस्मादेवं तस्मात् हे अश्विनौ ᐯस्वर्वतीः स्वर्वत्यः शोभनगमनयुक्ताः ᐯइतः इतोमुखात् ᐯचित्राः चायनीयाः ᐯयुवोरह युवयोरेव ᐯऊतीः ऊतयः रक्षाः ᐯअभीके समीपे ᐯअभिष्टयः सर्वैः प्राणिभिः अभ्येषणीयाः ᐯअभवन् भवन्ति ॥ कृपमाणम् । कृपतिः स्तुतिकर्मा । अयं च तुदादिर्द्रष्टव्यः । स्वर्वतीः । सुपूर्वात् अर्तेः भावे विच् । ततो मतुप् । 'छन्दसीरः' इति मतुपो वत्वम् । अभिष्टयः । 'इषु इच्छायाम्'। भावे क्तिन् । शकन्ध्वादित्वात् पररूपत्वम् ॥

उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ ९ ॥

उत । स्या । वाम् । मधुऽमत् । मक्षिका । अरपत् । मदे । सोमस्य । औशिजः । हुवन्यति ।
युवम् । दधीचः । मनः । आ । विवासथः । अथ । शिरः । प्रति । वाम् । अश्व्यम् । वदत् ॥९॥

ᐯउत अपि च हे अश्विनौ ᐯमधुमत् मधुमन्तौ ᐯवां युवां ᐯस्या सा ᐯमक्षिका सरघा मधुकामा सती ᐯअरपत् अस्तौत् । तथा ᐯऔशिजः उशिजः पुत्रः कक्षीवान् ᐯसोमस्य पानेन युवयोः ᐯमदे हर्षे निमित्तभूते सति ᐯहुवन्यति युवामाह्वयति । ᐯयुवं युवां च तस्यै मक्षिकायै मधु दातुं मधुविद्यार्थिनौ सन्तौ ᐯदधीचः आथर्वणस्य ऋषेः ᐯमनः चित्तं शुश्रूषया ᐯआ ᐯविवासथः पर्यचरतम् । ᐯअथ अनन्तरं तस्मिन्प्रीते सति ᐯअश्व्यं युवाभ्यां प्रतिहितम् अश्वस्य संबन्धि यत् ᐯशिरः तत् ᐯवां युवां ᐯप्रति मधुविद्यामवदत् । स ऋषिः आश्वेन शिरसा उपदिष्टवानित्यर्थः ॥ मधुमत् । 'सुपां सुलुक्०' इति विभक्तेर्लुक् । अरपत् । 'रप लप व्यक्तायां वाचि'। मदे । 'मदी हर्षे'। 'मदोऽनुपसर्गे' इति भावे अप् । हुवन्यति । 'ह्वेञ् स्पर्धायां शब्दे च'। 'ल्युट् च' इति भावे ल्युट् । 'बहुलं छन्दसि' इति संप्रसारणम् । हवनमात्मन इच्छति । 'सुप आत्मनः क्यच्'। अन्त्यलोपश्छान्दसः । वर्णव्यापत्त्या उत्वम् । अश्व्यम् । अश्वे भवम् अश्व्यम् । 'भवे छन्दसि' इति यत् ॥

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ १० ॥

युवम् । पेदवे । पुरुऽवारम् । अश्विना । स्पृधाम् । श्वेतम् । तरुतारम् । दुवस्यथः ।
शर्यैः । अभिऽद्युम् । पृतनासु । दुस्तरम् । चर्कृत्यम् । इन्द्रम्ऽइव । चर्षणिऽसहम् ॥ १० ॥

ᐯअश्विना हे अश्विनौ ᐯपेदवे पेदुनाम्ने राज्ञे ᐯपुरुवारं बहुभिर्वरणीयं ᐯस्पृधां संग्रामे स्पर्धमानानां शत्रूणां ᐯतरुतारं तारकं ᐯश्वेतं शुभ्रवर्णम् इन्द्राल्लब्धम् अश्वं ᐯयुवं युवां ᐯदुवस्यथः दत्तवन्तौ । पुनरपि कीदृशम् । ᐯशर्यैः । शीर्यन्ते इति शर्याः योद्धारः । तैः ᐯपृतनासु संग्रामेषु ᐯदुस्तरं तरीतुमशक्यम् ᐯअभिद्युम् अभिगतदीप्तिं ᐯचर्कृत्यं सर्वेषु कार्येषु पुनःपुनः प्रयोज्यम् ᐯइन्द्रमिव ᐯचर्षणीसहम् । इन्द्रो यथा शत्रूनभिभवति एवं शत्रुजनानाम् अभिभवितारमित्यर्थः ॥ स्पृधाम् । 'स्पर्ध संघर्षे'। 'क्विप् च' इति

क्विप्। चशब्देन दृशिग्रहणानुकर्षणात् तस्य च विध्यन्तरोपसंग्रहार्थत्वात् अकारस्य लोपो रेफस्य च संप्रसारणम्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। तरुत्तारम्। 'तॄ प्लवनतरणयोः'। अस्मात् तृचि 'प्रसितस्कभितस्तभित°' इत्यादौ निपातनात् रूपसिद्धिः। चर्कृत्यम्। करोतेः यङ्लुगन्तात् 'विभाषा कृवृषोः' इति क्यप्। ततस्तुक्॥ ॥ २१ ॥

'का राधत्' इति द्वादशर्चं पञ्चमं सूक्तम्। अत्रानुक्रम्यते–'का राधद्द्वादशान्त्या दुःस्वप्न-नाशन्याद्या गायत्री द्वितीया ककुप् तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पञ्चमी तनुशिरा[1] षष्ठ्यक्षरैः उष्णिग्विष्टारबृहती कृतिर्विराट् तिस्रो गायत्र्यः' इति। अस्यायमर्थः। अनुवृत्तेः औशिजो दैर्घतमसः कक्षीवान् ऋषिः आद्या गायत्री। 'विद्वांसौ' इत्येषा ककुप् मध्यमपादस्य द्वादशाक्षरत्वात्। 'मध्यमश्चेत्ककुप्' (अनु. ५. ३) इति हि तल्लक्षणम्। तृतीया 'ता विद्वांसा' इत्येषा काविराट्। 'नवकयोर्मध्ये जागतः काविराट्' (अनु. ६. ५) इत्युक्तलक्षणोपेतत्वात्। चतुर्थी 'वि पृच्छामि' इत्येषा नष्टरूपी। 'नववैराजत्रयोदशैर्नष्टरूपी' (अनु. ६. ६) इत्युक्तलक्षणोपेतत्वात्। 'प्र या घोषे' इत्येषा पञ्चमी तनुशिरा[2]। 'एकादशिनोः परः षट्कस्तनुशिरा' (अनु. ५. ५) इत्युक्तलक्षणोपे-तत्वात्। 'श्रुतं गायत्रम्' इत्येषा षष्ठी यद्यपि पादसंख्यया उष्णिक् न भवति तथापि अक्षरसंख्यया उष्णिक्। 'युवं हि' इति सप्तमी विष्टारबृहती। 'अष्टिनोर्मध्ये दशकौ विष्टारबृहती' (अनु. ७.५) इति तल्लक्षणोपेतत्वात्। 'मा कस्मै' इति अष्टमी कृतिः। 'जागतावष्टकश्च कृतिः' (अनु. ६. ३) इत्युक्तलक्षणसद्भावात्। 'दुहीयन्' इति नवमी विराट्। दशम्याद्याः तिस्रो गायत्र्यः। 'आश्विनं वै' इति वैशब्दप्रयोगात् तुह्यादिपरिभाषया इदमपि सूक्तम् आश्विनम्। 'अध स्वप्नस्य' इति अन्त्यया दुःस्वप्ननाशनं प्रतिपाद्यते। अतो 'या तेनोच्यते सा देवता' (अनु. २. ५) इति न्यायेन तदेव देवता॥ सूक्तविनियोगो लैङ्गिकः। घर्माभिष्टवे आदितो नवर्चो विनियुक्ताः। सूत्र्यते हि–'का राध-द्धोत्राश्विना वामिति नवा भात्यग्निः' (आश्व. श्रौ. ४. ६) इति। 'का राधद्धोत्राश्विना वामिति नव विच्छन्दसः' (ऐ. ब्रा. १. २१) इत्यादिकं ब्राह्मणमनुसंधेयम्॥

## का राधद्धोत्राश्विना वां को वां जोष उभयोः। कथा विधात्यप्रचेताः॥ १॥

का। राधत्। होत्रा। अश्विना। वाम्। कः। वाम्। जोषे। उभयोः।
कथा। विधाति। अप्रऽचेताः॥ १॥

ᵛअश्विना हे अश्विनौ ᵛवां युवां ᵛका ᵛहोत्रा। वाङ्नामैतत्। कीदृशी स्तुतिलक्षणा वाक् ᵛराधत् आराधयति प्रीतौ करोति। युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः। किंच ᵛवां युवयोः ᵛउभयोः ᵛजोषे जोषणे सेवने प्रीणने वा समर्थः ᵛकः स्तोता विद्यते। युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः। ᵛअप्रचेताः युवयोर्माहात्म्यमजानंश्च ᵛकथा केन प्रकारेण ᵛविधाति युवां परिचरति। युष्मद्विषयं परिचरणमपि न कर्तुं शक्यमित्यर्थः॥ राधत्। 'राध साध संसिद्धौ'। लेटि अडागमः। जोषे। 'जुषी प्रीतिसेवनयोः'। भावे घञ्। ञित्त्वादाद्युदात्तत्वम्। कथा। 'था हेतौ च च्छन्दसि' इति किंशब्दात् प्रकारवचने थाप्रत्ययः। 'किमः कः' इति कादेशः। विधाति। 'विध विधाने'। तौदा-दिकः। लेटि आडागमः। अप्रचेताः। प्रकृष्टं चेतो यस्यासौ प्रचेताः। नञ्समासे अव्ययपूर्वपदप्रकृति-स्वरत्वम्॥

---

१. क्ष-ट-ठ–तनुशिखा। २. क्ष-ट-ठ–तनुशिखा।

विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥ २ ॥

विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः । अचेताः ।

नु । चित् । नु । मर्तै । अक्रौ ॥ २ ॥

ᐯइत्था इत्थम् अनेन पूर्वोक्तप्रकारेण ᐯअविद्वान् अज्ञः स्तोता ᐯविद्वांसौ ᐯइत् सर्वज्ञौ अश्विनौ एव ᐯदुरः द्वाराणि स्तुतिपरिचरणयोः उपायभूतान् मार्गान् ᐯपृच्छेत् प्रष्टुमर्हति । ᐯअपरः अश्विभ्यामन्यः सर्वः अपि ᐯअचेताः । चेतसा ज्ञानेन रहितः । तस्मात् अश्विनावेव पृच्छेदित्यर्थः । तौ च ᐯअक्रौ शत्रुभिः अनाक्रान्तौ अश्विनौ ᐯनू ᐯचित् क्षिप्रमेव ᐯमर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया सनिं धत्तः इति वाक्यशेषः ॥ इत्था । 'था हेतौ च च्छन्दसि' इति थाप्रत्ययः । 'इदम इश्' । 'एतेतौ रथोः' (पा. सू. ५. ३. ४) इति इद्भावः । यदि 'था हेतौ च°' इत्यत्र इदंशब्दस्य नानुवृत्तिः तदानीम् 'इदमस्थमुः' । एतदन्तात् परस्या विभक्तेर्व्यत्ययेन 'सुपां सुलुक्°' इति विभक्तेर्डादेशः । अक्रौ । 'क्रमु पादविक्षेपे' । अस्मात् नञ्युपपदे 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मण्यपि 'जनसनखनक्रमगमो विट्' इति विट् । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।

प्रार्चद्दयमानो युवाकुः ॥ ३ ॥

ता । विद्वांसा । हवामहे । वाम् । ता । नः । विद्वांसा । मन्म । वोचेतम् । अद्य ।

प्र । आर्चत् । दयमानः । युवाकुः ॥ ३ ॥

हे अश्विनौ ᐯविद्वांसा सर्वज्ञौ ᐯता ᐯवां तौ युवां ᐯहवामहे आह्वयामहे । तौ आहूतौ ᐯविद्वांसा अभिज्ञौ युवां ᐯनः अस्मभ्यं ᐯमन्म मननीयं ज्ञातव्यं स्तोत्रम् ᐯअद्य अस्मिन् काले ᐯवोचेतं ब्रुवाणौ भूयास्तम् । स चाहं ᐯयुवाकुः युवां कामयमानः स्तुत्या संयोजयन् वा ᐯदयमानः युवाभ्यां हविः प्रयच्छन् ᐯप्रार्चत् प्रार्चं प्रकर्षेण स्तौमि ॥ ता । 'सुपां सुलुक्°' इति विभक्तेराकारः । वोचेतम् । 'ब्रूञ् व्यक्तायां वाचि' । 'ब्रुवो वचिः' । 'लिङ्याशिष्यङ्' । 'वच उम्' इति उमागमः । आर्चत् । 'अर्च पूजायाम्' । भौवादिकः । 'तिङां तिङो भवन्ति' इति मिपः तिबादेशः । दयमानः । 'दय दान-गतिरक्षणहिंसादानेषु' । शपः पित्त्वादनुदात्तत्वम् । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । युवाकुः । युवां कामयते इति युवाकुः । 'मितद्र्वादिभ्य उपसंख्यानम्' (पा. सू. ३. २. १८०. १) इति डुप्रत्ययः । अविभक्तावपि व्यत्ययेन 'युवावौ द्विवचने' इति युवादेशः आत्वं च । यद्वा । 'यु मिश्रणे' । औणादिकः काकुप्रत्ययः ॥

वि पृ॑च्छामि पा॒क्या॒३॑ न दे॒वान्वष॑ट्कृतस्याद्भु॒तस्य॑ दस्रा ।
पा॒तं च॒ सह्य॑सो यु॒वं च॒ रभ्य॑सो नः ॥ ४ ॥

वि । पृ॒च्छा॒मि॒ । पा॒क्या॑ । न । दे॒वान् । वष॑ट्ऽकृतस्य । अ॒द्भु॒तस्य॑ । द॒स्रा॒ ।
पा॒तम् । च॒ । सह्य॑सः । यु॒वम् । च॒ । रभ्य॑सः । न॒ः ॥ ४ ॥

हे अश्विनौ युवां ^v^वि ^v^पृच्छामि विशेषेण प्रष्टुमिच्छामि । ^v^पाक्या ^v^न पक्तव्यप्रज्ञान् स्वपरिपक्वमतीन्[1] अन्यान् ^v^देवान् ^v^न पृच्छामि । किंतु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः। हे ^v^दस्रा दर्शनीयौ तौ युवां ^v^वषट्कृतस्य वषट्कारेणाग्नौ हुतस्य ^v^अद्भुतस्य आश्चर्यभूतस्य महतः ^v^सह्यसः अतिशयेन बलवतो बलोत्पादकस्य सोमस्य स्वांशलक्षणमेकदेशं ^v^पातं[2] ^v^च[2] । ^v^नः अस्मान् ^v^च ^v^रभ्यसः अतिशयेन रभस्विनः प्रौढोद्यमान् कुरुतम् ॥ पाक्या । पचेः ' ऋहलोर्ण्यत् ' । ' चजोः कु घिण्ण्यतोः ' इति कुत्वम् । तित्स्वरः । ' सुपां सुलुक्° ' इति विभक्तेर्डादेशः । वषट्कृतस्य । वषट्शब्दस्य ऊर्यादित्वेन गतित्वात् ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । पातम् । ' पा पाने ' । ' बहुलं छन्दसि ' इति शपो लुक् । सह्यसः । सहते अभिभवत्यनेनेति सहो बलम् । असुन् । तदस्यास्तीति सहस्वी । मत्वर्थीयो विनिः । तत आतिशायनिक ईयसुन् । ' विन्मतोर्लुक् '। छान्दस ईकारलोपः । रभ्यसः । ' रभ राभस्ये '। राभस्यं कार्योपक्रमः । पूर्ववत्प्रक्रिया उन्नेया[3] ॥

प्र या घोषे॒ भृग॑वाणे॒ न शोभे॒ यया॑ वा॒चा यज॑ति पज्रि॒यो वा॑म् । प्रैषयु॒र्न वि॒द्वान् ॥ ५ ॥

प्र । या । घोषे॑ । भृग॑वाणे । न । शोभे॑ । यया॑ । वा॒चा । यज॑ति । प॒ज्रि॒यः । वा॒म् ।
प्र । इ॒ष॒ऽयुः । न । वि॒द्वान् ॥ ५ ॥

हे अश्विनौ ^v^प्र भवति समर्था भवति सा वाक् ^v^या वाक् युष्मत्स्तुतिरूपा ^v^घोषे घोषाख्यायाः पुत्रे सुहस्त्याख्ये ऋषौ ^v^भृगवाणे ^v^न भृगौ च ^v^शोभे शोभते । ^v^यया च स्तुतिलक्षणया[4] ^v^वाचा ^v^पज्रियः । पज्रा अङ्गिरसः । तेषां कुलोत्पन्नः कक्षीवान् ^v^वां युवां ^v^यजति पूजयति स्तौति। सापि शोभते इत्यर्थः । ^v^इषयुर्न इषमन्नम् आत्मनः कामयमानश्च ^v^विद्वान् स्तुत्यभिज्ञः कक्षीवानृषिः ^v^प्र भवतु युष्मदनुग्रहात् संपूर्णकामो भवत्वित्यर्थः ॥ घोषे । घोषा नाम काचिद्ब्रह्मवादिनी कक्षीवतः पुत्री । अत्रोपचारात्तद्वाचकं प्रातिपदिकं पुत्रे[5] वर्तते । भृगवाणे । चिरंतनो भृगुरिवाचरति । ' सर्वप्रातिपदिकेभ्यः° ' इति क्विप् । धातुसंज्ञायां व्यत्ययेन लटः शानच् । शबादि । आगमानुशासनस्यानित्यत्वात् मुगभावः । वृषादिः । शोभे । ' शुभ दीप्तौ ' । ' लोपस्त आत्मनेपदेषु ' इति तलोपः । इषयुः । ' इष गतौ ' । इष्यति गच्छतीति इषमन्नम् । इगुपधलक्षणः कः । यद्वा । ' इषु इच्छायाम् ' । इष्यते सर्वैः प्राणिभिरिति इषमन्नम् । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । प्रशब्देन संहितायां ' प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या ' ( पा. सू. ६. १. ८९. ४ ) इति वृद्धिः ॥　　॥ २२ ॥

---

१. क्ष-ट-ठ-न–अपरिपक्वमतीन् ।२. क्ष-ट-ठ–पातं पिबतं च; स–पातं च पिबतम् । ३. च-त-द-फ-श–ज्ञेया । ४. क्ष-ट-ठ–स्तुतिरूपया। ५. क्ष-ट-ठ–तत्पुत्रे ।

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम्। आक्षी शुभस्पती दन् ॥६॥

श्रुतम्। गायत्रम्। तकवानस्य। अहम्। चित्। हि। रिरेभ। अश्विना। वाम्।

आ। अक्षी इति। शुभः। पती इति। दन् ॥ ६ ॥

हे ᵛअश्विना अश्विनौ ᵛगायत्रं गातव्यं गायत्रीयुक्तं गायत्रसाम्ना निष्पाद्यं वा स्तोत्रं ᵛतकवानस्य स्खलद्गतेः अन्धस्य ऋज्राश्वस्य संबन्धि ᵛश्रुतम् अशृणुतम्। ᵛअहं ᵛचित् अहमिव ᵛवां युवां सः ᵛहि ᵛरिरेभ स्तुतवान्। किं कुर्वन्। हे ᵛशुभस्पती शोभनस्य कर्मणः पालयितारौ जलस्य वा स्वामिनौ ᵛअक्षी युवाभ्यां दत्ते चक्षुषी ᵛआ ᵛदन् आददानः। तस्मै इव मह्यमप्यभिमतफलं प्रयच्छतमिति भावः ॥ श्रुतम्। 'श्रु श्रवणे'। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। तकवानस्य। 'तक गतौ'। अत्र गतिसामान्यवाचिना तद्विशेषो मन्दगतिर्लक्ष्यते। औणादिक उप्रत्ययः। भृगवाणे इतिवत् प्रक्रियोन्नेया। रिरेभ। 'रेभृ शब्दे'। अक्षी। 'ई च द्विवचने' इत्यक्षिशब्दस्य ईकारान्तादेशः। स चोदात्तः। शुभस्पती। 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् पदद्वयसमुदायस्य आष्टमिकामन्त्रितानुदात्तत्वम्। दन्। आङ्पूर्वात् ददातेः 'आङो दोऽनास्यविहरणे' (पा. सू. १. ३. २०) इत्यात्मनेपदम्[१]। व्यत्ययेन शतृ। जुहोत्यादित्वात् श्लुः। 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' इति वचनात् द्विर्वचनाभावः। 'छन्दस्युभयथा' इत्युभयथाश्रयणात् शतुः सार्वधातुकत्वेन ङित्त्वम्। आर्धधातुकत्वात् 'आतो लोप इटि च' इत्याकार लोपः ॥

युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतम्।

ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥ ७ ॥

युवम्। हि। आस्तम्। महः। रन्। युवम्। वा। यत्। निःऽअततंसतम्।

ता। नः। वसू इति। सुऽगोपा। स्यातम्। पातम्। नः। वृकात्। अघऽयोः ॥ ७ ॥

हे अश्विनौ ᵛमहः महतो धनस्य ᵛरन् रातारौ दातारौ ᵛयुवं युवां कंचन[२] ᵛआस्तम्[२]।...... ᵛनिरततंसतं धनानि निरगमयतम्। रक्षकौ विनाशकावपि युवामेवेत्यर्थः। हे ᵛवसू वासयितारावश्विनौ ᵛता तादृशौ युवां ᵛनः अस्माकं ᵛसुगोपा सुष्ठु गोपायितारौ रक्षितारौ ᵛस्यातं भवतम्। अपि च ᵛनः अस्मान् ᵛअघायोः अघं पापफलमस्माकमिच्छतः ᵛवृकात् स्तेनात् ᵛपातं रक्षतम् ॥ महः। महतः। छान्दसः अच्छब्दलोपः। रन्। दन्निितिवत् प्रक्रियोन्नेया। व्यत्ययेनैकवचनम्। निरततंसतम्। 'तसि अलंकारे'। अस्मात् ण्यन्तात् लुङि 'णिश्रिद्रुस्रुभ्यः०' इति च्लेः चङ् द्विर्वचनादि च। गुरुसंज्ञया लघुसंज्ञाया बाधितत्वात् सन्वद्भावाभावः। सुगोपा। 'सुपां सुलुक्०' इति विभक्तेर्लुक्। अघायोः। अघं परेषामिच्छति। 'छन्दसि परेच्छायाम्' इति क्यच्। 'अश्वाघस्यात्' इति आत्वम्। 'क्याच्छन्दसि' इति उप्रत्ययः ॥

---

१. क्ष-ट-ठ–इत्यात्मनेपदे प्राप्ते। २. क्ष-ट–आस्तं हि अभवतम्; ठ–आस्तमभवतम्।

**मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।**
**स्तनाभुजो अशिश्वीः ॥ ८ ॥**

मा । कस्मै । धातम् । अभि । अमित्रिणे । नः । मा । अकुत्र । नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

हे अश्विनौ ᵛअमित्रिणे । अमित्रं मित्रराहित्यम् । तद्वते ᵛकस्मै चिदपि शत्रवे ᵛनः अस्मान् ᵛमा ᵛअभि ᵛधातम् आभिमुख्येन मा स्थापयतम् । अपि च ᵛनः अस्माकं ᵛगृहेभ्यः सकाशात् ᵛस्तनाभुजः स्तनैः वत्सान् मनुष्यांश्च पालयन्त्यः ᵛधेनवः गावः ᵛअशिश्वीः शिशुना वत्सेन विरहिता अस्मदीये गृहेऽशयाना वा सत्यः ᵛअकुत्र चित् अस्माभिरगम्ये प्रदेशे ᵛमा ᵛगुः मा गच्छन्तु ॥ धातम् । धाञो माङि लुङि 'गातिस्था°' इति सिचो लुक् । 'न माङ्योगे' इति अडभावः । अकुत्र । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । गुः । 'इण् गतौ' । 'इणो गा लुङि' इति गादेशः । 'गातिस्था°' इति सिचो लुक् । 'आतः' इति झेर्जुस् । स्तनाभुजः । 'भुज पालनाभ्यवहारयोः' । स्तनैर्भुञ्जन्ति पालयन्तीति स्तनाभुजः । क्विप् । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । अशिश्वीः । 'सख्यशिश्वीति भाषायाम्' (पा. सू. ४. १. ६२) इति छन्दस्यपि व्यत्ययेन निपातनं द्रष्टव्यम् । यद्वा । शिशुरस्यास्तीति शिश्वी । 'छन्दसीवनिपौ°' इति मत्वर्थीय ईकारः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । अथवा । 'शीङ् स्वप्ने' । 'उत्सर्गश्छन्दसि' इति किप्रत्ययः । द्विर्वचनह्रस्वत्वे । 'एरनेकाचः°' इति यण् । छान्दसो वकारः । पूर्ववत्समासस्वरौ[1] ॥

**दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।**
**इषे च नो मिमीतं धेनुमत्यै ॥ ९ ॥**

दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतम् । वाजऽवत्यै । इषे । च । नः । मिमीतम् । धेनुऽमत्यै ॥ ९ ॥

हे अश्विनौ ᵛयुवाकु युवां कामयमानाः स्तुतिभिर्यावयितारः संयोजयितारो वा स्तोतारः ᵛमित्रधितये मित्राणां बन्धुजनानां धारणार्थं ᵛदुहीयन् युष्मत्सकाशाद्धनानि दुहन्ति प्राप्नुवन्ति । अतः ᵛनः अस्मानपि ᵛवाजवत्यै वाजयुक्ताय[2] ᵛच ᵛराये धनाय ᵛमिमीतं कुरुतम् । तथा ᵛधेनुमत्यै धेनुभिर्युक्ताय ᵛइषे अन्नाय ᵛच ᵛनः अस्मान् ᵛमिमीतं कुरुतम् । अस्मभ्यं स्तोतृभ्यो बलयुक्तं धनं गोयुक्तमन्नं च प्रयच्छतमित्यर्थः ॥ दुहीयन् । 'दुह प्रपूरणे' । दुहिर्दोहः । 'इगुपधात्कित्' (उ. सू. ४. ५५९) इति भावे इप्रत्ययः । दुहिमात्मन इच्छति दुहीयति । 'सुप आत्मनः क्यच्' । दुहीयतेर्लेटि अडागमः । 'इतश्च लोपः°' इति इकारलोपः । यद्वा । दुहेर्लिङि 'झस्य रन्' (पा. सू. ३. ४. १०५) इति व्यत्ययेन रनादेशाभावे रूपमेतत् । छान्दसोऽन्त्यलोपः । यद्वा । रनादेशे कृते छान्दसो रेफस्य यकारः । अत एव व्युत्पत्त्यनवधारणात् नावगृह्णन्ति । युवाकु । 'सुपां सुलुक्°' इति जसो लुक् । मिमीतम् । 'माङ् माने

---

१. क्ष-ट-ठ—पूर्ववन्नञ्समासस्वरौ । २. क्ष-ट-ठ-स—बलयुक्ताय ।

शब्दे च’। जौहोत्यादिकः। व्यत्ययेन परस्मैपदम्। ‘भृञामित्’ इति अभ्यासस्य इत्वम्। ‘चवायोगे प्रथमा’ इति निघातप्रतिषेधः॥

अश्विनो॑रसनं॒ रथ॑मन॒श्वं वा॒जिनी॑वतोः। तेना॒हं भूरि॑ चाकन ॥ १० ॥

अ॒श्विनोः॑। अ॒स॒न॒म्। रथ॑म्। अ॒न॒श्वम्। वा॒जिनी॑ऽवतोः। तेन॑। अ॒हम्। भूरि॑। चा॒क॒न॒॥१०॥

ᵛवाजिनीवतोः। वाजः अन्नं बलं वा। तद्वत्क्रियावतोः ᵛअश्विनोः ᵛअनश्वम् अश्वरहितम् अश्वराहित्येऽपि सामर्थ्यातिशयेन गच्छन्तं ᵛरथम् ᵛअसनम् ᵛअहम् स्तोता समभजम्। ᵛतेन च रथेन ᵛभूरि प्रभूतं श्रेयः ᵛचाकन कामये॥ असनम्। ‘वन षण संभक्तौ’। लङ्। चाकन। ‘कन दीप्तिकान्तिगतिषु’। छान्दसो लिट्। ‘णलुत्तमो वा’ (पा. सू. ७. १. ९१) इति णित्त्वस्य विकल्पनात् वृद्ध्यभावः। तुजादित्वात् अभ्यासदीर्घत्वम्॥

अ॒यं स॑मह मा तनू॒ह्याते॒ जनाँ॒ अनु॑। सो॒म॒पेयं॑ सु॒खो रथः॑॥ ११ ॥

अ॒यम्। स॒म॒ह॒। मा॒। त॒नु॒। ऊ॒ह्याते॑। जना॑न्। अनु॑। सो॒म॒ऽपेय॑म्। सु॒ऽखः। रथः॑ ॥ ११ ॥

हे ᵛसमह धनेन सहित हे रथ ᵛअयं पुरोवर्ती त्वं ᵛमा मां ᵛतनु विस्तारय। पुत्रपौत्रधनादिभिः समृद्धं कुरु। यद्वा। अयम् अयमानं त्वां प्राप्नुवन्तं माम् इति योज्यम्। स च ᵛसुखः शोभनावकाशः सुखहेतुर्वा ᵛरथः ᵛजनान् ᵛअनु स्तोतृजनेषु ᵛसोमपेयं सोमपानं प्रति ᵛऊह्याते उह्यते अश्विभ्यां नीयते अतः अश्विभ्यां यद्दीयते तत्सर्वं रथ एव ददातीति रथं संबोध्य प्रार्थना॥ अयम्। ‘इदोऽय् पुंसि’ (पा. सू. ७. २. १११)। यद्वा। ‘अय पय गतौ’। पचाद्यच्। समह। मघमिति धननाम। मघेन सह वर्तते इति समघः। छान्दसो वर्णविकारः। यद्वा। ‘मह पूजायाम्’। महयति पूजयतीति महो धनम्। पचाद्यच्। ऊह्याते। ‘वह प्रापणे’। कर्मणि लेटि आडागमः। यजादित्वात् संप्रसारणम्। तस्य छान्दसो दीर्घः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। सोमपेयम्। ‘पा पाने’। ‘अचो यत्’ इति भावे यत्। ‘ईद्यति’ (पा. सू. ६. ४. ६५)’ इति ईकारादेशः। ‘यतोऽनावः’ इत्याद्युदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

अध॒ स्वप्न॑स्य॒ निर्वि॑दे॒ऽभुञ्ज॑तश्च रे॒वतः॑। उ॒भा ता बस्रि॑ नश्यतः॥ १२ ॥

अध॑। स्वप्न॑स्य। निः। वि॒दे॒। अभु॑ञ्जतः। च॒। रे॒वतः॑। उ॒भा। ता। बस्रि॑। न॒श्य॒तः॒॥१२॥

ᵛअध इदानीं प्रभातसमये ᵛस्वप्नस्य स्वप्नं प्रति ᵛनिर्विदे निर्विण्णोऽस्मि। तथा ᵛअभुञ्जतः परान् अरक्षतः ᵛरेवतः धनवतः ᵛच पुरुषस्य एवंभूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि। यतः तौ उभौ ᵛबस्रि क्षिप्रं ᵛनश्यतः नाशं प्राप्नुतः। स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते कदर्यस्येव[1] धनमभुक्तमदत्तं सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मां बाधते इत्यर्थः। अत्र स्वप्नमात्रस्य असत्त्वप्रतिपादनेन दुःस्वप्नस्याप्यसद्भावः प्रतिपादितः। अत एषा दुःस्वप्ननाशनीति युज्यते॥ स्वप्नस्य। ‘क्रियाग्रहणं कर्तव्यम्’ इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। विदे। ‘विद्लृ लाभे’। आगमानुशासनस्य

---

१. क्ष-ट-ठ-स—कदर्यस्य च।

अनित्यत्वात् नुमभावः । रेवतः । रयिशब्दात् मतुप् । ‘ रयेर्मतौ बहुलम् ’ इति संप्रसारणम् । ‘ छन्दसीरः ’ इति मतुपो वत्वम् । ‘ रेशब्दाच्च मतुप उदात्तत्वम् ’ इति तस्योदात्तत्वम् । उभा ता । उभयत्र ‘ सुपां सुलुक्° ’ इति आकारः ॥ २३ ॥　॥ १७ ॥

अष्टादशेऽनुवाके षट् सूक्तानि । तत्र ‘ कदित्था ’ इति पञ्चदशर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते— ‘ कदित्था पञ्चोना वैश्वदेवं वा ’ इति । अनुवर्तमानः कक्षीवानृषिः । अनादेशपरिभाषया त्रिष्टुप् । विश्वे देवा इन्द्रो वा देवता । विनियोगो लैङ्गिकः ॥

कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥

कत् । इत्था । नॄन् । पात्रम् । देवऽयताम् । श्रवत् । गिरः । अङ्गिरसाम् । तुरण्यन् ।
प्र । यत् । आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥

vनॄँः vपात्रं नॄन् पाता नृणां स्तुतेः नेतॄणां पुरुषाणां रक्षणशीलः[1] इन्द्रः vतुरण्यन् गोरूपधनं[2] प्रेरयन् vदेवयतां देवं द्योतमानं दानादिगुणयुक्तं वा इन्द्रम् आत्मन इच्छताम् vअङ्गिरसाम् ऋषीणाम् अस्माकम् vइत्था इत्थं प्रयुज्यमानाः vगिरः स्तुतीः vकत् कदा कस्मिन् काले vश्रवत् शृणुयात् । vयत् यदा स इन्द्रः vहर्म्यस्य हर्म्योपलक्षितेन गृहेण युक्तस्य यजमानस्य संबन्धिनः vविशः ऋत्विग्लक्षणान् मनुष्यान् vआ आभिमुख्येन vप्र vआनट् प्राप्नोति तदानीम् vअध्वरे अस्मदीये यज्ञे vयजत्रः यष्टव्यः सन् vउरु बहुलं vक्रंसते क्रमते स्वयमेव उत्सहते इत्यर्थः ॥ कत् । कदा । अन्त्यलोपश्छान्दसः । नॄँः पात्रम् । ‘ नॄन्पे ’ ( पा. सू. ८. ३. १० ) इति संहितायां नकारस्य रुत्वम् । ‘ अत्रानुनासिकः पूर्वस्य तु वा ’ इति ऋकारः सानुनासिकः । पात्रम् । ‘ पा रक्षणे ’ । ताच्छीलिकः तृन् । व्यत्ययेन सोः अमादेशः । संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावे यण् । देवयताम् । ‘ सुप आत्मनः क्यच् ’ । ततो लटः शतृ । ‘ शतुरनुमः° ’ इति विभक्तेरुदात्तत्वम् । श्रवत् । ‘ श्रु श्रवणे ’ । लेटि अडागमः । ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । तुरण्यन् । ‘ तुरण त्वरायाम् ’ । कण्ड्वादिः । आनट् । अश्नोतेर्लङि व्यत्ययेन परस्मैपदम् । श्नौ प्राप्ते व्यत्ययेन श्नम्विकरणः । व्रश्चादिषत्वे जश्त्वम् । आडागमः । हर्म्यस्य । हर्म्यशब्दात् अर्शआदित्वात् अच् । क्रंसते । ‘ क्रमु पादविक्षेपे ’ । ‘ वृत्तिसर्गतायनेषु क्रमः ’ ( पा. सू. १. ३. ३८ ) इत्यात्मनेपदम् । लेटि अडागमः । ‘ सिब्बहुलं लेटि ’ इति सिप् । यजत्रः । ‘ अमिनक्षि° ’ इत्यादिना यजेः अत्रन्प्रत्ययः ॥

स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः ।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ॥ २ ॥

स्तम्भीत् । ह । द्याम् । सः । धरुणम् । प्रुषायत् । ऋभुः । वाजाय । द्रविणम् । नरः । गोः ।
अनु । स्वऽजाम् । महिषः । चक्षत । व्राम् । मेनाम् । अश्वस्य । परि । मातरम् । गोः ॥ २ ॥

---

१. क्ष-ट-ठ–रक्षणफलः ।　२. क्ष-ट-ठ–धनम्, न-स–गोरूपं धनम् ।

सः इन्द्रः द्यां द्युलोकं स्तम्भीद्द स्तभ्नाति खलु । तथा गोः पणिभिरपहृतस्य गोसमूहस्य वज्रस्य उदकस्य किरणसमूहस्य वा नरः नेता स इन्द्रः ऋभुः सूर्यात्मना उरु विस्तीर्णं भासमानः सन् द्रविणं सर्वैः प्राणिभिरभिद्रवणीयं धरुणम् । उदकनामैतत् । सर्वस्य धारकं वृष्ट्युदकं वाजाय अन्नार्थं बलार्थं वा प्रुषायत् प्रुष्णाति सिञ्चति प्रवर्षतीत्यर्थः । अपि च महिषः । महन्नामैतत् । महान् सूर्यरूपी इन्द्रः स्वजां स्वसकाशादुत्पन्नां व्राम् । वृणोति तमसा सर्वमाच्छादयतीति व्रा रात्रिः । यद्वा । प्रकाशेन वृणोतीति व्रा उषाः । ताम् अनु चक्षत । चष्टिः पश्यतिकर्मा । अनु पश्चात्पश्यति प्रकाशते । स्वयं प्रौढप्रकाशोऽपि स्वगत्या निष्पादिताया रात्रेरुषसश्च पश्चादुदेति[1] इत्यर्थः । अपि च इदमपरमाश्चर्यं यदयम् अश्वस्य मेनाम् । स्त्रीनामैतत् । स्त्रियं वडवां[2] गोः मातरं जननीम्[3] । परिवैपरीत्ये[4] । विपरीतमकरोत् । कदाचिदिन्द्रो लीलया अश्वायां गामुत्पादयामास । तदत्र प्रतिपाद्यते मन्त्रान्तरे च इन्द्रवाक्यरूपे एतद्विस्पष्टमवगम्यते ॥ धरुणम् । ‘ धारेर्णिलुक्च ’ इति उनप्रत्ययः । प्रुषायत् । ‘ प्रुष प्लुष स्नेहनसेचनपूरणेषु ’ । क्रैयादिकः । लेटि अडागमः । ‘ छन्दसि शायजपि ’ इति अहावपि श्नाप्रत्ययस्य शायजादेशः । नरः । ‘ णॄ नये ’ । बहुलवचनात् ‘ ऋदोरप् ’ इति कर्तरि अप् । चक्षत । ‘ चक्षिङ् व्यक्तायां वाचि ’ । छान्दसो लङ् । ‘ बहुलं छन्दसि ’ इति शपो लुगभावः ॥

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून् ।

तक्षद्वज्रं नियुतं तस्तम्भद्द्यां चतुष्पदे नर्याय द्विपादे ॥ ३ ॥

नक्षत् । हवम् । अरुणीः । पूर्व्यम् । राट् । तुरः । विशाम् । अङ्गिरसाम् । अनु । द्यून् ।

तक्षत् । वज्रम् । निऽयुतम् । तस्तम्भत् । द्याम् । चतुःऽपदे । नर्याय । द्विऽपादे ॥ ३ ॥

अरुणीः अरुणवर्णाः आरोचमानाः वा उषसः राट् राजयन् प्रकाशयन् सूर्यात्मा[5] इन्द्रः पूर्व्यं पूर्वैर्ऋषिभिः प्रयुक्तं हवम् इदानीमस्माभिः क्रियमाणमाह्वानं नक्षत् नक्षतु[6] शृणोतु[6] । कीदृशः । अनु द्यून् अनुदिवसं विशां मनुष्याणाम् अङ्गिरसाम् ऋषीणां स्तोतॄणां तुरः धनस्य प्रेरयिता । अपि च स इन्द्रः वज्रं स्वकीयमायुधं नियुतं हन्तव्येन सह नितरां युक्तं तक्षत् अकरोत् । तथा द्यां द्युलोकं तस्तम्भत् अस्तम्भयत् । यथा अधो न पतति तथा अकरोदित्यर्थः । किमर्थम् । नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वादये द्विपादे मनुष्याय च । एतदुभयार्थमित्यर्थः ॥ नक्षत् । ‘ नक्ष गतौ ’ । लेटि अडागमः । पूर्व्यम् । ‘ पूर्वैः कृतमिनयौ च ’ ( पा. सू. ४. ४. १३३ ) इति यप्रत्ययः । राट् । ‘ राजृ दीप्तौ ’ । अस्मादन्तर्भावितण्यर्थात् क्विप् । तुरः । ‘ तुर त्वरणे ’ । इगुपधलक्षणः कः । तक्षत् । ‘ तक्षू त्वक्षू तनूकरणे ’ । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । तस्तम्भत् । ‘ ष्टभि स्कभि गतिप्रतिबन्धे ’ । अस्मात् ण्यन्तात् लुङि चङि रूपम् । ‘ चङ्यन्यतरस्याम् ’ इति उपोत्तमस्य उदात्तत्वम् । पूर्वपदस्य असमानवाक्यस्थत्वात् निघाताभावः । चतुष्पदे । चत्वारः पादाः अस्य । ‘ संख्यासुपूर्वस्य ’

---

१. क्ष-ट-ठ–अनूदेति । २. क्ष-ट-ठ–तद्रूपाम् । ३. क्ष-ट-ठ–‘ जननीम् ’ नास्ति । ४. क्ष-ट-ठ–परि परीत्य । ५. क्ष-ट-ठ–सूर्यात्मना । ६. स–‘ नक्षतु शृणोतु ’ नास्ति; न–‘ शृणोतु ’ नास्ति; क्ष-ट-ठ–नक्षतु व्याप्नोतु ।

इति पादशब्दस्य अन्त्यलोपः समासान्तः। चतुर्थ्येकवचने भसंज्ञायां 'पादः पत्' इति पद्भावः। द्विपादे। पूर्ववत्प्रक्रिया। अयं तु विशेषः। अयस्मयादित्वेन पदत्वात् भसंज्ञाया अभावे पद्भावाभावः। 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इत्युत्तरपदान्तोदात्तत्वम्॥

अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकम्।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः॥ ४॥

अस्य। मदे। स्वर्यम्। दाः। ऋताय। अपिऽवृतम्। उस्रियाणाम्। अनीकम्।
यत्। ह। प्रऽसर्गे। त्रिऽककुप्। निऽवर्तत्। अप। द्रुहः। मानुषस्य। दुरः। वरिति वः॥४॥

हे इन्द्र $^{v}$अस्य सोमस्य पानेन $^{v}$मदे हर्षे सति $^{v}$ऋताय यज्ञार्थं $^{v}$स्वर्यं स्तुत्यम् $^{v}$अपीवृतं पणिभिर्गुहासु निगूढम् $^{v}$उस्रियाणां गवाम् $^{v}$अनीकं संघं $^{v}$दाः अङ्गिरोभ्यो दत्तवानसि। उत्तरार्धः परोक्षकृतः। $^{v}$यद्ध यदा खलु $^{v}$प्रसर्गे युद्धे $^{v}$त्रिककुप् त्रिषु लोकेषु उच्छ्रितः इन्द्रः $^{v}$निवर्तत् नितरां वर्तेत[1] तदानीं स इन्द्रः $^{v}$द्रुहः द्रोग्धुः $^{v}$मानुषस्य मनोः संबन्धिनः असुरस्य पणेः संबन्धीनि $^{v}$दुरः द्वाराणि गवामनिर्गमनाय पिहितानि $^{v}$अप $^{v}$वः अपवृणोति उद्घाटयति॥ स्वर्यम्। 'स्वृ शब्दोपतापयोः'। 'ऋहलोर्ण्यत्'। संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः। अपीवृतम्। अपिपूर्वात् वृणोतेः कर्मणि निष्ठा। 'निपातस्य च' इति पूर्वपदस्य दीर्घः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। प्रसर्गे। प्रकर्षेण सृज्यन्ते विमुच्यन्ते अस्मिन् इषवः इति प्रसर्गः। अधिकरणे घञ्। कृदुत्तरपदप्रकृतिस्वरत्वम्। छान्दसः थाथादिस्वराभावः। निवर्तत्। 'वृतु वर्तने'। लेटि अडागमः। व्यत्ययेन परस्मैपदम्। वः। 'वृञ् वरणे'। छान्दसे लुङि 'मन्त्रे घस॰' इति च्लेर्लुक्। गुणे हल्ङ्यादिलोपः[2]॥

तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू।
शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः॥ ५॥

तुभ्यम्। पयः। यत्। पितरौ। अनीताम्। राधः। सुऽरेतः। तुरणे। भुरण्यू इति।
शुचि। यत्। ते। रेक्णः। आ। अयजन्त। सबःऽदुघायाः। पयः। उस्रियायाः॥ ५॥

हे इन्द्र $^{v}$तुरणे क्षिप्रकारिणे $^{v}$तुभ्यं $^{v}$भुरण्यू कृत्स्नं जगत्पोषयन्त्यौ $^{v}$पितरौ उत्पादयन्त्यौ द्यावापृथिव्यौ $^{v}$यत् यदा $^{v}$पयः सांनाय्यलक्षणं हविः $^{v}$अनीतां गोषु अनयतां न्यधिषातामित्यर्थः। कीदृशं पयः। $^{v}$राधः राधकं समृद्धिकरं $^{v}$सुरेतः शोभनरेतस्कं कृत्स्नजगदुत्पादनशक्तमित्यर्थः। हविषः सकाशात्[3] हि जगदुत्पद्यते। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( मनु. ३. ७६ ) इति। $^{v}$यत् यदा च द्यावापृथिवीभ्यां गोष्वानीतं $^{v}$शुचि

---

१. क्ष-ट-ठ-स—वर्तते। २. क्ष-ट-ठ—'हल्ङ्याभ्यः॰' इति तिलोपः। ३. क्ष-ट-ठ—सारात्; स—कारणात्।

शुद्धं Vसबर्दुघायाः क्षीरस्य दोग्ध्र्याः Vउस्रियायाः गोः Vपयः Vरेक्णः । धननामैतत् । धनवदतिप्रियम् । यद्वा । अतिरिक्तं प्रवृद्धम् । एवंविधं हविः तुभ्यम्[1] Vआयजन्त आभिमुख्येन यजमानाः प्रायच्छन् । तदानीं द्रुहो मानुषस्य द्वाराण्यपवृणोतीति पूर्वया संबन्धः ॥ अनीताम् । 'णीञ् प्रापणे'। लङि 'बहुलं छन्दसि' इति शपो लुक् । सुरेतः । 'सोमनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । तुरणे । 'तुरण त्वरायाम्' । कण्ड्वादिः । 'क्विप् च' इति क्विप् । अतोलोपयलोपौ । भुरण्यू । 'भुरण धारणपोषणयोः' । अयमपि कण्ड्वादिः । औणादिक उप्रत्ययः ॥ ॥ २४ ॥

अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः ।
इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चञ्जरणाभि धाम ॥ ६ ॥

अध । प्र । जज्ञे । तरणिः । ममत्तु । प्र । रोचि । अस्याः । उषसः । न । सूरः ।
इन्दुः । येभिः । आष्ट । स्वऽइदुहव्यैः । स्रुवेण । सिञ्चन् । जरणा । अभि । धाम ॥ ६ ॥

Vअध इदानीमयमिन्द्रः स्तुतिभिः प्रीयमाणः सन् Vप्र Vजज्ञे प्रकर्षेण प्रादुर्बभूव । सः Vतरणिः शत्रूणां तारकोऽस्मान् Vममत्तु मादयतु । स च Vप्र Vरोचि प्रकृष्टं रोचते । तत्र दृष्टान्तः । Vअस्याः अस्माभिर्दृश्यमानायाः Vउषसः समीपे वर्तमानः Vसूरः Vन सूर्य इव । Vजरणा जरणीयः स्तोतव्यः Vइन्दुः सोमः Vधाम आहवनीयलक्षणं[2] स्थानम्[2] अभिलक्ष्य Vस्रुवेण Vसिञ्चन् सिच्यमानः सन् Vस्वेदुहव्यैः स्वभूतसमृद्धहविष्कैः Vयेभिः यैरस्माभिः Vआष्ट आशितः[3] आसीत् । तानस्मान्मादयत्वित्यर्थः ॥ जज्ञे । 'जनी प्रादुर्भावे' । लिटि 'गमहन°' इति उपधालोपः । ममत्तु । 'मदी हर्षे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । रोचि । 'रुच दीप्तौ' । छान्दसो वर्तमाने लुङ् । व्यत्ययेन च्लेः चिणादेशः । आष्ट । 'अश भोजने' । कर्मणि लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । व्रश्चादिषत्वे ष्टुत्वम् । आडागमः । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । स्वेदुहव्यैः । 'इदि परमैश्वर्ये' । औणादिक उप्रत्ययः । 'अनित्यमागमशासनम्' इति नुमभावः । इदूनि प्रभूतानि च तानि हव्यानि[4] स्वभूतानि च हव्यानि[5] येषाम् । यद्वा । 'ञिइन्धी दीप्तौ' । स्वायत्तानि इन्दूनि इद्धानि हव्यानि येषाम् । अथवा[6] । स्वभूतमिदं पुरोवर्ति हव्यं हविः येषां ते तथोक्ताः[6] । पृषोदरादित्वात् अभिमतरूपसिद्धिः[7] । सिञ्चन् । 'षिचिर् क्षरणे' । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । 'शे मुचादीनाम्' इति नुम् । जरणा । जरतिः स्तुतिकर्मा । अस्मात् कर्मणि ल्युट् । 'सुपां सुलुक्°' इति विभक्तेराकारः । व्यत्ययेन लित्स्वराभावः ॥

---

१. क्ष-ट-ठ-स–ते तुभ्यम् । २. स–आहवनीयस्थानम् । ३. क्ष-ट-स–अशितः पीतः; ठ–आशितः पीतः । ४. क्ष-ट-ठ–हव्यानि इदुहव्यानि । ५. क्ष-ट-ठ–इदुहव्यानि । ६. क्ष-ट-ठ–'अथवा...तथोक्ताः' नास्ति । ७. क्ष-ट-ठ–अभिमतरूपस्वरसिद्धिः ।

स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोधना गोः ।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥ ७ ॥

सुऽइध्मा । यत् । वनऽधितिः । अपस्यात् । सूरः । अध्वरे । परि । रोधना । गोः ।
यत् । ह । प्रऽभासि । कृत्व्यान् । अनु । द्यून् । अनर्विशे । पशुऽइषे । तुराय ॥ ७ ॥

यदि ^v^स्विध्मा सुदीप्तास्या ^v^वनधितिः वने छेत्तव्ये वृक्षसमूहे[1] निधातव्या शस्त्री ^v^अपस्यात् अपः विशसनात्मकं स्वकीयं कर्म कर्तुमिच्छेत् तदानीं ^v^सूरः प्रेरकः अध्वर्युः ^v^अध्वरे यज्ञे ^v^गोः पशोः ^v^रोधना रोधनाय यूपे नियोजनाय ^v^परि भवति समर्थो भवति । यद्वा । स्विध्मा सूर्यकिरणैः सुदीप्ता वनधितिः । वनमुदकमस्यां धीयते इति वनधितिर्मेघमाला । सा यत् यदा अपस्यात् अपः प्रवर्षणलक्षणं कर्म करोति तदानीं सूरः प्रेरकः इन्द्रः अध्वरे यज्ञस्य निमित्तभूते अध्वर्तव्ये अहिंसितव्ये अन्तरिक्षे वर्तमानः सन् गोः वृष्ट्युदकस्य रोधना रोधनानि आवरणानि[2] परि परितो निवारयतीति शेषः । उत्तरार्धः प्रत्यक्षकृतः । हे इन्द्र सूर्यात्मना वर्तमानस्त्वं ^v^कृत्व्यान् । कृत्वीति कर्मनाम । कर्मसु साधून् ^v^द्यून् दिवसाननुलक्ष्य ^v^यद्ध यदा खलु ^v^प्रभासि प्रकर्षेण दीप्यसे तदानीम् ^v^अनर्विशे अनसा शकटेन इन्धनाद्याहरणाय अरण्यं प्रविशते । यद्वा । गन्तव्यं स्थलं प्रति गन्तुमशक्ताय पुरुषाय ^v^पश्विषे पशून् प्रेरयते ^v^तुराय त्वरमाणाय गोपालाय[3] च सिध्येत् अभिमतमिति वाक्यशेषः ॥ स्विध्मा । शोभनमिध्मं दीप्तमास्यं दीप्तिर्वा यस्याः सा तथोक्ता[4] । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अपस्यात् । अपःशब्दात् 'सुप आत्मनः क्यच्' । लेटि आडागमः । रोधना । 'रुधिर् आवरणे' । 'ल्युट् च' इति भावे ल्युट् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । अनर्विशे । अनसा विशति प्राप्नोतीति अनर्विट् । विशतेः क्विप् । 'अहरादीनां पत्यादिषूपसंख्यानम्' ( पा. म. ८. २. ७०. १ ) इति सकारस्य रेफादेशः । यद्वा । अर्तेः कर्मणि विच् । अरं गन्तव्यं प्रति विशति प्राप्नोतीति अर्विट् । न अर्विट् अनर्विट् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अत एव व्युत्पत्त्यनवधारणादनवग्रहः । पश्विषे । 'इष गतौ' । अस्मादन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् ॥

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम् ।
हरिं यत्ते मन्दिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥

अष्टा । महः । दिवः । आदः । हरी इति । इह । द्युम्नऽसहम् । अभि । योधानः । उत्सम् ।
हरिम् । यत् । ते । मन्दिनम् । धुक्षन् । वृधे । गोऽरभसम् । अद्रिऽभिः । वाताप्यम् ॥८॥

हे इन्द्र ^v^महः महतः ^v^दिवः मदकरस्य सोमस्य ^v^अष्टा भोक्तारौ पातारौ ^v^हरी स्वकीयौ अश्वौ ^v^इह अस्मिन्कर्मणि[5] ^v^आदः पीतशेषं सोमं पायय । तथा ^v^द्युम्नासाहं द्युम्नस्य अस्मदीयस्य धनस्य

१. क्ष-ट-ठ—तत्र मध्ये । २. क्ष-ट-ठ—आवारकाणि । ३. स—गोधनपालाय । ४. क्ष-ट-ठ—स्विध्मा । ५. क्ष-ट-ठ—अस्मिन् यज्ञे ।

अभिभवितारम् ᵛउत्सम् उत्स्रावयितारं शत्रुं ᵛयोधानः योधनशीलस्त्वम् ᵛअभि भव। ᵛयत् यदा ᵛते तव ᵛवृधे वर्धनाय ᵛहरिं मनोहरं ᵛमन्दिनं मदकरं ᵛगोरभसम्। अत्र गोशब्दः पयसि वर्तते। पयो[1] बलम्। तद्वद्वेगवन्तं[1] वीर्यवन्तमित्यर्थः। ᵛवाताप्यं वातेन प्रासव्यम्। वाततुल्येन शीघ्रकारिणा त्वया पातव्यमित्यर्थः[2]। एवंविधं सोमम् ᵛअद्रिभिः ग्रावभिः ᵛधुक्षन् दुहन्ति ऋत्विजः अभिषुण्वन्ति[3]। तदानीम् अष्टा इति पूर्वत्र संबन्धः॥ अष्टा[4]। 'अश भोजने'। तृच्। आगमानुशासनस्यानित्यत्वात् इडभावः[4]। धुक्षन्[5]। पदकालीनो भष्भावश्छान्दसः[5]॥

त्वमा॑य॒सं प्रति॑ वर्तयो॒ गोर्दि॒वो अश्मा॑न॒मुप॑नीत॒मृभ्वा॑।

कुत्सा॑य॒ यत्र॑ पुरुहूत व॒न्वञ्छुष्ण॑मन॒न्तैः प॑रि॒यासि॑ व॒धैः॥ ९॥

त्वम्। आ॒य॒सम्। प्रति॑। व॒र्त॒यः॒। गोः। दि॒वः। अश्मा॑नम्। उप॑ऽनीतम्। ऋभ्वा॑।

कुत्सा॑य। यत्र॑। पु॒रु॒ऽहू॒त॒। व॒न्वन्। शुष्ण॑म्। अ॒न॒न्तैः। प॒रि॒ऽयासि॑। व॒धैः॥ ९॥

हे इन्द्र ᵛत्वं ᵛगोः गन्तुः शुष्णस्यासुरस्य वधार्थम् ᵛआयसम् अयोमयं वज्रं ᵛप्रति ᵛवर्तयः आभिमुख्येन व्यसृजः। कीदृशं वज्रम्। ᵛदिवः द्युलोकात् ᵛऋभ्वा दीप्तेन त्वष्ट्रा ᵛउपनीतम् आनीतम् ᵛअश्मानं शीघ्रं शत्रोर्व्यापकम्। ᵛयत्र यदा हे ᵛपुरुहूत पुरुभिर्बहुभिः स्तोतृभिराहूतेन्द्र ᵛकुत्साय एतत्संज्ञाय[6] ऋषये ᵛशुष्णं शोषकमसुरम् ᵛअनन्तैः निरवधिकैः ᵛवधैः हननसाधनैरायुधैः ᵛवन्वन् हिंसन् ᵛपरियासि परितः[7] गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यवर्तयः इत्यर्थः॥ अश्मानम्। 'अशू व्याप्तौ'। 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। ऋभ्वा। 'जसादिषु च्छन्दसि वावचनम्' इति नाभावस्य विकल्पितत्वादभावे यणादेशः। वन्वन्। 'वनु याचने'। अत्र हिंसार्थः। तथा च यास्कः— 'वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति' ( निरु. ५. २ ) इति। वधैः। 'हनश्च वधः' इति हन्तेः करणे अप्; तत्संनियोगेन वधादेशश्च। स चादन्तोऽन्तोदात्तः। तस्य अतो लोपे सति उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम्॥

---

१. क्ष-ट-ठ-स—पयोवद्वेगवन्तम्। २. क्ष-ट-ठ—प्राप्तव्यमित्यर्थः। ३. क्ष-ट-ठ—अभिषुण्वन्तीत्यर्थः। ४. क्ष-ट-ठ—आदः। अद भक्षणे। अस्मादन्तर्भावितण्यर्थात् लङ्। अदः सर्वेषामित्यडागमः। योधानः। युध संप्रहारे। ताच्छीलिकश्चानश्; स—दिवः। दीव्यते मर्यादा( ? )। दिवेर्डिरिति( ? )डिविप्रत्ययः। आदः। अद भक्षणे। अस्मादन्तर्भावितण्यर्थात् लुङि सिपि अदः सर्वेषामित्यडागमः। द्युम्नासाहम्। षह अभिभवे। द्युम्नं सहते अभिभवतीति द्युम्नासाट्। छन्दसि सह इति ण्विः। योधानः। युध संप्रहारे। ताच्छीलिकश्चानश्। बहुलं छन्दसीति विकरणस्य लुक्। ५. स—धुक्षन्। दुह प्रपूरणे। छान्दसो लुङ्। अत इगुपधादनिटः क्सः। ढत्वकत्वषत्वानि। बहुलं छन्दस्यमाङ्योगेऽपि इत्यडभावः। पदकालीनो भष्भावाभावश्छान्दसः ( भष्भावश्छान्दसः )। ६. क्ष-ट-स—एतत्संज्ञकाय ७. क्ष-ट-ठ—सर्वतः।

पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य ।
शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥ १० ॥

पुरा । यत् । सूरः । तमसः । अपिऽइतेः । तम् । अद्रिऽवः । फलिऽगम् । हेतिम् । अस्य ।
शुष्णस्य । चित् । परिऽहितम् । यत् । ओजः ।
दिवः । परि । सुऽग्रथितम् । तत् । आ । अदः ॥ १० ॥

पुरा यत् यदा सूरः सूर्यः तमसः तमोरूपस्य शुष्णस्य असुरस्य अपीतेः संग्रामान्मुक्तोऽभवदिति शेषः । तदानीं हे अद्रिवः । आदृणाति अनेनेत्यद्रिर्वज्रः । तद्वन्निन्द्र तं फलिगम् । मेघनामैतत् । मेघरूपेणावृण्वन्तं हेतिं हन्तारं शुष्णमसुरम् अस्य निरसितवानसि । यद्वा । अस्य शुष्णस्यासुरस्य हेतिं हननसाधनमायुधं फलिगं मेघलक्षणं प्राभाङ्क्षीः इति शेषः । तथा शुष्णस्य चित् शोषयितुरसुरस्य च यत् ओजः आच्छादकं बलं दिवस्परि द्योतमानस्य सूर्यस्योपरि परिहितम् आच्छादितं सुग्रथितं सुष्ठु सूर्ये सक्तं तत् ओजस्तस्मात्सूर्यात् आदः आदृणाः विश्लिष्टं कृतवानसीत्यर्थः ॥ अद्रिवः । ‘ छन्दसीरः ’ इति मतुपो वत्वम् । ‘ मतुवसो रुः° ’ इति नकारस्य रुत्वम् । हेतिम् । ‘ कृत्यल्युटो बहुलम् ’ इति बहुलवचनात् हन्तेः कर्तरि क्तिन् । ‘ ऊतियूति° ’ इत्यादौ निपातनात् रूपसिद्धिः अन्तोदात्तत्वं च । अस्य । ‘ असु क्षेपणे ’ । लटः सिप् । तस्य व्यत्ययेन ह्यादेशः । ‘ अतो हेः ’ इति हेर्लुक् । दिवस्परि । ‘ पञ्चम्याः परावध्यर्थे ’ इति विसर्जनीयस्य सत्वम् । अदः । ‘ दॄ विदारणे ’ । लङि सिपि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । गुणे ‘ हल्ङ्याब्भ्यः° ’ इति सिलोपः ॥ ॥ २५ ॥

अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन् ।
त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुम् ॥ ११ ॥

अनु । त्वा । मही इति । पाजसी इति । अचक्रे इति । द्यावाक्षामा । मदताम् । इन्द्र । कर्मन् ।
त्वम् । वृत्रम् । आऽशयानम् । सिरासु । महः । वज्रेण । सिस्वपः । वराहुम् ॥ ११ ॥

हे इन्द्र मही मह्यौ महत्यौ पाजसी बलवत्यौ अचक्रे अचङ्क्रमणे सर्वत्र व्याप्य वर्तमाने द्यावाक्षामा द्यावापृथिव्यौ कर्मन् वृत्रवधादिलक्षणे कर्मणि प्रवृत्तं त्वाम् अनु मदतां हृष्टमकुरुताम् अन्वमन्येतां वा । तथा च तैत्तिरीयकं–‘ स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन् ’ (तै. सं. २. ५. २. ६) इति । तदनन्तरं त्वम् आशयानम् आ समन्ताद्व्याप्य वर्तमानं वराहुं वराहारं वृत्रम् असुरं सिरासु सरणशीलास्वप्सु महः महता वज्रेण सिष्वपः अस्वापयः । वज्रेण हत्वा पातितवानित्यर्थः ॥ मही । ‘ सुपां सुलुक्° ’ इति विभक्तेः पूर्वसवर्णदीर्घः । पाजसी । पाजःशब्दो बलवाचको

लक्षणया अत्र तद्वति वर्तते । ‘ इयाडियाजीकाराणामुपसंख्यानम् ’ इति विभक्तेः ईकारादेशः । द्यावा-क्षामा । द्यौश्च क्षामा च । ‘ दिवो द्यावा ’ इति द्यावादेशः । ‘ देवताद्वन्द्वे च ’ इत्युभयपदप्रकृति-स्वरत्वम् । ‘ सुपां सुलुक्° ’ इति विभक्तेर्लुक् । मदताम् । ‘ मदी हर्षे ’ । व्यत्ययेन शप् । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इति अडभावः । महः । महतः । करणे शेषत्वेन विवक्षिते षष्ठी । अच्छब्दलोप-श्छान्दसः । सिष्वपः । ‘ ञिष्वप् शये ’ । अस्मात् ण्यन्तात् लुङि चङि संज्ञापूर्वकस्य विधेरनित्यत्वात् ‘ स्वापेश्चङि ’ ( पा. सू. ६. १. १८ ) इति संप्रसारणं न क्रियते ॥

त्वमि॑न्द्र॒ नर्यो॑ याँ अवो॒ नॄन्तिष्ठा॒ वात॑स्य सु॒युजो॒ वहि॑ष्ठान् ।
यं ते॑ का॒व्य उ॒शना॑ म॒न्दिनं॒ दाद्वृ॑त्र॒हणं॒ पार्यं॑ ततक्ष॒ वज्र॑म् ॥ १२ ॥

त्वम् । इ॒न्द्र॒ । नर्यः॑ । यान् । अवः॑ । नॄन् । तिष्ठ॑ । वात॑स्य । सु॒ऽयुजः॑ । वहि॑ष्ठान् ।
यम् । ते॒ । का॒व्यः । उ॒शना॑ । म॒न्दिन॑म् । दात् । वृ॒त्र॒ऽहन॑म् । पार्य॑म् । त॒त॒क्ष॒ । वज्र॑म् ॥ १२ ॥

हे ᵛइन्द्र ᵛनर्यः नृभ्यो हितः ᵛत्वं ᵛयान् ᵛनॄन् नेतॄन् अश्वान् ᵛअवः अवसि रक्षसि तान् ᵛवातस्य तुल्यान् तद्वच्छीघ्रं गच्छतः ᵛसुयुजः शोभनं रथेन युज्यमानान् ᵛवहिष्ठान् अतिशयेन वोढॄनश्वान् ᵛतिष्ठ आतिष्ठ आरोहेत्यर्थः । ᵛकाव्यः कवेः पुत्रः ᵛउशना ᵛमन्दिनं मदकरं ᵛयं वज्रं ᵛते तुभ्यं ᵛदात् दत्तवान् तं ᵛवज्रं ᵛवृत्रहणं वृत्रस्यासुरस्य घातकं ᵛपार्यं शत्रूणां पारणेऽतिक्रमणे समर्थं च ᵛततक्ष कृत-वानसि[1] ॥ अवः । अवतेर्लेटि अडागमः । ‘ इतश्च लोपः ’ इति इकारलोपः । वहिष्ठान् । वोढृशब्दात् ‘ तुश्छन्दसि ’ इति इष्ठन् । ‘ तुरिष्ठेमेयःसु ’ इति तृलोपः । पार्यम् । ‘ पार तीर कर्मसमाप्तौ ’ । अस्मात् ण्यन्तात् ‘ अचो यत् ’ इति यत् । ततक्ष । ‘ तक्षू त्वक्षू तनूकरणे ’ । पुरुषव्यत्ययः ॥

त्वं सूरो॑ ह॒रितो॑ राम॒यो नॄन्भर॑च्च॒क्रमेत॑शो॒ नाय॑मिन्द्र ।
प्रास्य॑ पा॒रं न॑व॒तिं ना॒व्या॑ना॒मपि॑ क॒र्तम॑वर्त॒योऽय॑ज्यून् ॥ १३ ॥

त्वम् । सूरः॑ । ह॒रितः॑ । र॒म॒यः॒ । नॄन् । भर॑त् । च॒क्रम् । एत॑शः । न । अ॒यम् । इ॒न्द्र॒ ।
प्र॒ऽअस्य॑ । पा॒रम् । न॒व॒तिम् । ना॒व्या॑नाम् । अपि॑ । क॒र्तम् । अ॒व॒र्त॒यः॒ । अय॑ज्यून् ॥ १३ ॥

हे ᵛइन्द्र ᵛसूरः सूर्यात्मना वर्तमानः ᵛत्वं ᵛहरितः हरिद्वर्णान् ᵛनॄन् नेतॄन् अश्वान् यद्वा रसहरण-शीलान् रश्मीन् ᵛरमयः[2] उपारमयः । ᵛएतशो ᵛन । एतश इति सूर्याश्वस्याख्या । तथा च श्रूयते— ‘ एतशेन त्वा सूर्यो देवतां गमयतु ’ ( तै. सं. १. ६. ४. ६ ) इति । नशब्दश्चार्थे । एतशश्च रथस्य ᵛचक्रं ᵛभरत् प्रावहत् । अपि च त्वं ᵛनाव्यानां नावा तार्याणां नदीनां ᵛनवतिं नवतिसंख्याम् अतीत्य वर्तमानं ᵛपारं तीरदेशम् । सप्तम्यर्थे द्वितीया । तीरदेशे ᵛअयज्यून् अयजमानान् यज्ञविहीनान्

---

१. च-छ-फ—तनूकृतवानसि; द—क्षतवानसि । २. क्ष-ट-ठ-स— रामयः ।

असुरादीन् ᵛप्रास्य प्रक्षिप्य तत्र ᵛकर्तम्[1] ᵛअवर्तयः कर्तव्यमपि कृत्वा[1] तानयजमानानवर्तयः प्रापयः ॥ रमयः । लङि ' बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । ' अन्येषामपि दृश्यते ' इति सांहितिको दीर्घः । प्रास्य । ' असु क्षेपणे ' । अस्मात् ल्यपि रूपम् । नाम्यानाम् । ' नौवयोधर्म° ' इत्यादिना यत् । ' तित्स्वरितः ' इति स्वरितत्वम् ॥

त्वं नो॑ अ॒स्या इ॑न्द्र दु॒र्हणा॑याः पा॒हि व॑ज्रिवो दुरि॒ताद॒भीके॑ ।
प्र नो॒ वाजा॑न्र॒थ्यो॒३॑ अश्व॑बुध्यानि॒षे य॑न्धि॒ श्रव॑से सू॒नृता॑यै ॥ १४ ॥

त्वम् । नः॒ । अ॒स्याः । इ॒न्द्र॒ । दुः॒ऽहना॑याः । पा॒हि । व॒ज्रि॒ऽवः॒ । दुः॒ऽइ॒तात् । अ॒भीके॑ ।
प्र । नः॒ । वाजा॑न् । र॒थ्यः॑ । अश्व॑ऽबुध्यान् । इ॒षे । य॒न्धि॒ । श्रव॑से । सू॒नृता॑यै ॥ १४ ॥

हे ᵛवज्रिवः वज्रवन् ᵛइन्द्र ᵛत्वं ᵛदुर्हणायाः दुःखेन हन्तव्यायाः ᵛअस्याः अवृत्तेर्दारिद्र्यात् ᵛनः अस्मान् ᵛपाहि रक्ष । तथा ᵛदुरितात् पापात् ᵛअभीके अभिप्राप्ते समीपवर्तिनि संग्रामे अस्मान् रक्ष । अपि च ᵛनः अस्मभ्यं ᵛरथ्यः रथयुक्तान् ᵛअश्वबुध्यान् अश्वानां बोधकान् । अश्वा याव-द्भिर्लभ्यन्ते तावदित्यर्थः । यद्वा । अश्वबुध्नान् । छान्दसो वर्णविकारः । अश्वमूलान् । अश्वप्रमुखा-नित्यर्थः । सर्वं हि धनम् अश्वमूलं दासापवर्गम् । यथोक्तं—' दासप्रवर्गं रयिमश्वबुध्यम् ' ( ऋ. सं. १. ९२. ८ ) इति । एवंविधान् ᵛवाजान् धनानि ᵛप्र ᵛयन्धि प्रयच्छ । किमर्थम् । ᵛइषे अन्नार्थं ᵛश्रवसे कीर्त्यर्थं ᵛसूनृतायै । सूनृता प्रियसत्यात्मिका वाक् तदर्थं च ॥ दुर्हणायाः । ' ईषद्दुःसुषु° ' इति हन्तेः कर्मणि खल् । पाहि । पादादित्वात् निघाताभावः । वज्रिवः । वज्रोऽस्यास्तीति वज्री हस्तः । तद्वान् वज्रिवान् । ' छन्दसीरः ' इति मतुपो वत्वम् । संबुद्धौ ' मतुवसो रुः° ' इति नकारस्य रुत्वम् । रथ्यः । ' छन्दसीवनिपौ ' इति रथशब्दात् मत्वर्थीयः ईकारः । यन्धि । ' यम उपरमे ' । ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' वा छन्दसि ' इति हेः पित्त्वेन ङित्त्वाभावात् ' अङितश्च ' ( पा. सू. ६. ४. १०३ ) इति हेर्धिः ॥

मा सा ते॑ अ॒स्मत्सु॑म॒तिर्वि द॑स॒द्वाज॑प्रमहः॒ समिषो॑ वरन्त ।
आ नो॑ भज मघव॒न्गोष्व॒र्यो मंहि॑ष्ठास्ते सध॒माद॑ः स्याम ॥ १५ ॥

मा । सा । ते॒ । अ॒स्मत् । सु॒ऽम॒तिः । वि । द॒स॒त् । वाज॑ऽप्रमहः । सम् । इषः॑ । व॒र॒न्त॒ ।
आ । नः॒ । भ॒ज॒ । म॒घ॒ऽव॒न् । गोषु॑ । अ॒र्यः । मंहि॑ष्ठाः । ते॒ । स॒ध॒ऽमादः॑ । स्या॒म॒ ॥ १५ ॥

हे ᵛवाजप्रमहः वाजैर्धनैः प्रमहनीयेन्द्र ᵛते त्वदीया ᵛसा ᵛसुमतिः शोभनानुग्रहरूपा बुद्धिः ᵛअस्मत् अस्मासु ᵛमा ᵛवि ᵛदसत् मा विशुष्यतु । तथा ᵛइषः अन्नानि अस्मान् ᵛसम् ᵛवरन्त संवृतान् कुर्वन्तु । हे ᵛमघवन् धनवन्निन्द्र ᵛअर्यः धनपतिः त्वं ᵛनः अस्मान् ᵛगोषु ᵛआ ᵛभज प्रापय

---

१. क्ष-ट-ठ—कर्तमवटमपि कृत्वा ।

ᵛते तव ᵛमंहिष्ठाः अतिशयेन स्तुतिभिः प्रवर्धयितारो वयं ᵛसधमादः ᵛस्याम पुत्रपौत्रादिभिः सह माद्यन्तो भवेम ॥ अस्मत्। 'सुपां सुलुक्°' इति सप्तम्या लुक्। दसत्। 'दसु उपक्षये'। माङि लुङि पुषादित्वात् अङ्। वाजप्रमहः। वाजैर्धनैः प्रकृष्टं महस्तेजो यस्य स तथोक्तः। पादादित्वात् आष्टमिकनिघाताभावः[1]। षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। वरन्त। 'वृञ् वरणे'। व्यत्ययेन शप्। गोषु। 'सावेकाचः°' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण°' इति प्रतिषेधः। अर्यः। 'अर्यः स्वामिवैश्ययोः' इति निपात्यते। 'अर्यः स्वाम्याख्या चेत्' (फि. सू. १७) इत्यन्तोदात्तत्वम्। मंहिष्ठाः। 'महि वृद्धौ'। इदित्वात् नुम्। अस्मादन्तर्भावितण्यर्थात् तृच्। 'तुश्छन्दसि' इति इष्ठन्। 'तुरिष्ठेमेयःसु' इति तृलोपः। सधमादः। 'मद तृप्तियोगे'। चौरादिकः। सह मादयन्ते तृप्ता भवन्तीति सधमादः। 'क्विप् च' इति क्विप्। जस्। 'सध मादस्थयोश्छन्दसि' इति सहस्य सधादेशः। ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[2] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

॥ इति प्रथमाष्टकः समाप्तः ॥

---

१. क्ष-ट-ठ–आष्टमिकनिघाताभावे। २. क्ष-ट–सायणामात्येन।

ॐ

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रक्रिया प्रथमे काण्डे साकल्येनोपवर्णिता ।
अत[1] ऊर्ध्वंतनी ज्ञेया स्मर्यते[1] च कचित्कचित् ॥

अथ द्वितीयाष्टके प्रथमोऽध्यायः आरभ्यते। शतर्चिनामाद्ये मण्डले चतुर्विंशत्यनुवाकाः । तेषु 'कदित्था' इति अष्टादशानुवाके षट् सूक्तानि। तत्र 'प्र वः पान्तम्' इति द्वितीयं सूक्तम् । 'पञ्चोना' इति अनुवर्तमानात्[2] पञ्चदशर्चम् । 'ऋषिश्चान्यस्मादृषेः' इति परिभाषया कक्षीवानृषिः । अनादेशपरिभाषया त्रिष्टुप् । विश्वे देवा देवता । 'प्र वो वैश्वदेवम्' इत्यनुक्रमणिका । अस्य[3] विशेषविनियोगो लैङ्गिकः ॥

**प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मीळ्हुषे भरध्वम् ।**
**दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥ १ ॥**

प्र । वः । पान्तम् । रघुऽमन्यवः । अन्धः । यज्ञम् । रुद्राय । मीळ्हुषे । भरध्वम् ।
दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽईव । मरुतः । रोदस्योः ॥ १ ॥

हे रघुमन्यवः लघुक्रोधाः अक्रोधिनः[4] ऋत्विजः वः युष्माकं पान्तं पालनशीलं पातव्यं वा यज्ञं यागसाधनम् अन्धः अन्नम् आज्यसोमादिलक्षणं रुद्राय । रुत् दुःखं तद्धेतुभूतं दुरितं वा । तस्य द्रावयित्रे एतन्नामकाय देवाय मीळ्हुषे फलस्य वर्षित्रे तदर्थं प्र भरध्वं प्रकर्षेण संपादयत । अहं च इषुध्येव इषुध्या[5] शत्रून् यथा निरस्यति तथा वीरैः अमित्राणां विविधमीरकैः वीर्योपेतैः[6] वा तदनुचरैः मरुदादिभिः सह दिवः द्युलोकसकाशात् । उपलक्षणमेतत् । लोकत्रयादपि असुरस्य निरसितव्यानामसुराणां निरसितुः । कर्मणि षष्ठी । निरसितारं तमेव देवं रोदस्योः निरोधनवत्योः द्यावापृथिव्योर्मध्ये वर्तमानान् मरुतः च अस्तोषि स्तौमि ॥ पान्तम् । पान्तमित्यत्र पातेः शतृ पिबतेर्वा औणादिको झः । मीळ्हुषे । 'दाश्वान्साह्वान्°' इति क्वसुप्रत्ययान्तो निपातः । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसि°' इत्यादिना षत्वम् । दिवः । 'ऊडिदम्°' इत्यादिना

१. क्ष-ञ-ट–उत्तरास्मिंस्तथोज्ञेया स्मार्यते । २. क्ष-ञ-ट–अनुवर्तनात् । ३. क्ष-ञ-ट–'अस्य' नास्ति । ४. क्ष-ञ-ट–'अक्रोधिनः' इत्यस्यानन्तरं 'यद्वा मन्यतिरर्चाकर्मा । शीघ्रस्तुतयः' इत्यधिकम् । ५. क्ष-ञ-ट–इषुध्या निषङ्गेण । ६. ख-च-ज-ण-फ-व–मायोपेतैः ।

विभक्तेरुदात्तत्वम् । अस्तोषि । स्तौतेश्छान्दसो लुङ् । इषुध्येव । इषवो धीयन्ते अत्र इति इषुधिः । 'कर्मण्यधिकरणे च' इति दधातेः किः । कृत्स्वरेणान्तोदात्तः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

पत्नीव पूर्वहूतिं वावृधध्या उषासानक्ता पुरुधा विदाने ।
स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सुदृशी हिरण्यैः ॥ २ ॥

पत्नीऽइव । पूर्वऽहूतिम् । ववृधध्यै । उषसानक्ता । पुरुधा । विदाने इति ।
स्तरीः । न । अत्कम् । विऽउतम् । वसाना । सूर्यस्य । श्रिया । सुऽदृशी । हिरण्यैः ॥ २ ॥

ᵛपत्नीव पत्नी यथा ᵛपूर्वहूतिं पत्युः पूर्वाह्वानं ᵛववृधध्यै वर्धयितुं शीघ्रगतिर्भवति तद्वत् ᵛउषासानक्ता अहोरात्रे देवते अपि ᵛपुरुधा बहुप्रकारं बहुविधैः स्तोत्रैः ᵛविदाने ज्ञायमाने सत्यौ पूर्वहूतिं ववृधध्यै अस्मदीयं पूर्वाह्वानं वर्धयितुं शीघ्रमागच्छतमिति शेषः । यद्वा । ववृधध्यै अस्मद्वर्धनाय पुरुधा बहुप्रकारं विदाने वर्धनोपायान् जानत्यौ भवतमिति शेषः ॥ उषासानक्ता । 'उषासोषसः' (पा. सू. ६. ३. ३१) इति पूर्वपदस्य उषासादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् ॥ अथ केवला उषा उच्यते । ᵛस्तरीः शत्रूणां हिंसकः तेजसाच्छन्नः[1] वा आदित्यः स इव ᵛहिरण्यैः हिरण्यवर्णैः रश्मिभिः ᵛव्युतं विततं विशेषेण संबद्धम् ᵛअत्कम् अक्तं संततं वा रूपं[2] ᵛवसाना आच्छादयन्ती धारयन्ती ᵛसूर्यस्य ᵛश्रिया शोभया ᵛसुदृशी शोभनं दृश्यमाना । सूर्यस्य पुरोगामिनी[3] रश्मिभिः खल्वेषा जगद्भासयति । तादृशी उषा[4] अस्मत्पूर्वहूतिं पालयत्वित्यर्थः । यद्वा । हिरण्यैः हितरमणीयैः प्रकाशैः धनविशेषैर्वा सहागच्छतु ॥ व्युतम् । व्येञो निष्ठायां 'वचिस्वपि°' इत्यादिना संप्रसारणम् । स्तरीः । 'अवितृस्तृ°' इति ईकारप्रत्ययः ॥

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।
शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥ ३ ॥

ममत्तु । नः । परिऽज्मा । वसर्हा । ममत्तु । वातः । अपाम् । वृषण्ऽवान् ।
शिशीतम् । इन्द्रापर्वता । युवम् । नः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः ॥ ३ ॥

ᵛनः अस्मान्[5] ᵛवसर्हा वसनार्हो गार्हपत्यादिरूपेण । यद्वा । वासकानामाच्छादकानां वृक्षादीनां हन्ता अग्निः । अथवा । वसर्हा वासार्हो वासरस्य गमयिता । ᵛपरिज्मा परितो गन्ता आदित्यः ᵛममत्तु मादयतु । तथा ᵛअपां वृष्ट्युदकानां ᵛवृषण्वान् वर्षणवान् वृष्ट्युत्पादकः ᵛवातः वायुरस्मान् ᵛममत्तु । किंच हे ᵛइन्द्रापर्वता । इन्द्रः प्रसिद्धः । पर्वतः पर्ववान् वृष्ट्यादिपूरणवान् पर्जन्यः । तौ ᵛयुवं युवां ᵛनः अस्मान् अस्मद्बुद्धिं वा ᵛशिशीतं तीक्ष्णीकुरुतं शोधयतमित्यर्थः । ᵛतत् तस्मात् यस्मादहं सर्वान् देवान्

१. क्ष-ञ-ट—तेजसाच्छन्नाङ्गः । २. च-ज-फ-व-ष—सुरूपम् । ३. क्ष-ख-च-ज-ट-त-फ-व—पुरोगामिभिः । ४. क्ष-ट—उषा अपि । ५. क्ष-ञ-ट—'अस्मान्' इत्यस्यानन्तरं 'परिज्मा परितो गन्ता व्याप्तः' इत्यधिकम् ।

स्तौमि तस्मात् विश्वे सर्वेऽपि देवाः नः अस्माकं वरिवस्यन्तु प्रभूतमन्नं प्रदातुमिच्छन्तु। समृद्धान्नप्रदानेन प्रीणयन्त्वित्यर्थः॥ ममत्तु। 'मदी हर्षे'। अन्तर्भावितण्यर्थात् लोटि छान्दसो विकरणस्य श्लुः। द्विर्वचनम्[1]। शिशीतम्। 'ई हल्यघोः' इति ईत्वम्। 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। 'इन्द्रापर्वता' इत्यत्र 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः॥

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै।
प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः॥ ४॥

उत। त्या। मे। यशसा। श्वेतनायै। व्यन्ता। पान्ता। औशिजः। हुवध्यै।
प्र। वः। नपातम्। अपाम्। कृणुध्वम्। प्र। मातरा। रास्पिनस्य। आयोः॥ ४॥

औशिजः उशिजः पुत्रः कक्षीवानहं मे। तादर्थ्ये चतुर्थी। मदर्थं यशसा। यश इत्यन्नं बलं कीर्तिर्वा उच्यते। तद्वन्तौ व्यन्ता भक्षयन्तौ चरुपुरोडाशादिकं पान्ता पिबन्तौ आज्यसोमादिकं त्या। तच्छब्दसमानार्थः त्यच्छब्दः। यौ स्तुत्यत्वेन प्रसिद्धौ तावश्विनौ। अत्र यद्यपि विशेषो न श्रुतः तथापि सूक्तस्य वैश्वदेवत्वात् उषःसंबन्धात् द्विवचनलिङ्गाच्चाश्विनाविति गम्यते तादृशावश्विनौ। श्वेतनायै इति[2] षष्ठ्यर्थे चतुर्थी। विश्वं जगत् श्वेतयन्त्याः उषसः तत्संबन्धिनि काले। उषःकालीनाह्वानाय यतेयम्[3] इति शेषः। हे ऋत्विजः वः यूयम्। प्रथमार्थे द्वितीया। अपाम् उदकानां नपातं नपातयितारं तासां नप्तारं वा अग्निम्। अद्भ्यः ओषधिवनस्पतयः ताभ्यः अग्निः इत्यपां नप्तृत्वमग्नेः। तं देवं प्र कृणुध्वम्। करोतिरत्र क्रियासामान्यवाची क्रियाविशेषे स्तोत्रे पर्यवस्यति। प्रकर्षेण स्तुध्वमित्यर्थः। किंच रास्पिनस्य। रपतेः रसतेर्वा शब्दनार्थस्य घञन्तस्य कृतसकारपकारोपजनस्य रास्प इति भवति। तदस्यास्तीति रास्पि स्तोत्रम्। तद्वान् रास्पिनः स्तोता। तस्य आयोः तादृशस्य मनुष्यस्य मम[4] मह्यं मातरा मातृवद्धितकारिण्यौ अहोरात्रदेवते अपि[5] प्र कृणुध्वम्। अथवा रास्पिनस्य। एको मत्वर्थप्रत्ययश्छान्दसः। प्रवर्षणध्वनियुक्तस्य वृष्ट्युदकस्य गमनशीलस्य निर्मात्र्यौ अहोरात्रे प्र कृणुध्वम्॥ व्यन्ता पान्ता। उभयत्र 'सुपां सुलुक्०' इति आकारः॥

आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंशे।
प्र वः पूष्णे दावन आँ अच्छा वोचेय वसुतातिमग्नेः॥ ५॥

आ। वः। रुवण्युम्। औशिजः। हुवध्यै। घोषाऽइव। शंसम्। अर्जुनस्य। नंशे।
प्र। वः। पूष्णे। दावने। आ। अच्छ। वोचेय। वसुऽतातिम्। अग्नेः॥ ५॥

हे देवाः औशिजः कक्षीवानहं वः युष्माकं संबन्धिनं रुवण्युं रवणीयं[6] शब्दनीयं शंसं स्तोत्रम् आ हुवध्यै युष्मदाह्वानाय अच्छ आ वोचेय आभिमुख्येन ब्रवीमि। यद्वा। अत्रापि

---

१. क्ष-ञ-ट–'द्विर्वचनम्' इत्यस्यानन्तरं 'त्विही(भीही)त्यादिना पिति प्रत्यये पूर्वस्योदात्तत्वम्' इत्यधिकम्। २. क्ष-च-ञ-ट-न-फ–' इति ' नास्ति। ३. क्ष-ञ-ट–यतेय; न-म–यजेयम्। ४. क्ष-ञ-ट–'मम 'नास्ति; ज-व–मे। ५. क्ष-ञ-ट–अहोरात्रदेवते। ६. क्ष-ञ-ट–रवणशीलम्।

अश्विनावेव उच्येते। तस्मिन् पक्षे बहुवचनं पूजार्थम्। हे अश्विनौ ᵛवः युष्मान् ᵛघोषेव एतन्नामिका ब्रह्मवादिनीव। सा यथा ᵛअर्जुनस्य श्वेतवर्णस्य स्वशरीरगतत्वग्रोगस्य[1] ᵛनंशे नाशनाय यथाश्विनोः शंसमकार्षीत् तद्वदहमपीत्यर्थः। हे देवाः युष्मत्संबन्धिने ᵛदावने आ आभिमुख्येन फलस्य दात्रे ᵛपूष्णे पोषकाय एतन्नामकाय देवायापि[2] ॥ आकारस्य 'आङोऽनुनासिकश्छन्दसि' इति प्रकृतिभावः॥ अच्छ आभिमुख्यगमनेन वोचेय स्तौमि॥ 'वच परिभाषणे'। 'लिङ्याशिष्यङ्'। 'वच उम्' इति उम्। किंच ᵛअग्नेः ᵛवसुताति तत्संबन्धि धनमपि वोचेय स्तौमि तमेवाग्निम्॥ ॥ १ ॥

श्रुतं मे मित्रावरुणा हवेमोत श्रुतं सदने विश्वतः सीम्।
श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा सिन्धुरद्भिः ॥ ६ ॥

श्रुतम्। मे। मित्रावरुणा। हवा। इमा। उत। श्रुतम्। सदने। विश्वतः। सीम्।
श्रोतु। नः। श्रोतुऽरातिः। सुऽश्रोतुः। सुऽक्षेत्रा। सिन्धुः। अत्ऽभिः ॥ ६ ॥

हे ᵛमित्रावरुणा एतन्नामानौ अहोरात्राभिमानिदेवौ युवाम् ᵛइमा इमानि ᵛहवा[3] अस्मदाह्वानानि ᵛश्रुतं शृणुतम्। न केवलमस्मदाह्वानम् ᵛउत अपि च ᵛसदने यागगृहे ᵛविश्वतः उद्गात्रादिभिः सर्वतः क्रियमाणं ᵛसीम् एतत्स्तोत्रमपि ᵛश्रुतं शृणुतम्। किंच ᵛश्रोतुरातिः सर्वत्र श्रूयमाणधनः तादृशदानो वा ᵛसुश्रोतुः अस्मदाह्वानस्य सम्यक् श्रोता ᵛसिन्धुः जलाभिमानी देवः ᵛसुक्षेत्रा सुक्षेत्राणि ᵛअद्भिः वृष्टिजलैः क्लेदयन्निति शेषः। यद्वा। अस्मत्क्षेत्राणि अद्भिः सुक्षेत्राणि सस्यादिसमृद्धानि कुर्वन् ᵛनः हवं शृणोतु[4]। सुक्षेत्रत्वलाभाय[5] शृणोत्वित्यर्थः॥ हवा इमा। उभयत्र विभक्त्या आकारः। श्रुतमित्यत्र 'बहुलं छन्दसि' इति विकरणस्य लुक्॥

स्तुषे सा वां वरुण मित्र रातिर्गवां शता पृक्षयामेषु पज्रे।
श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन् ॥ ७ ॥

स्तुषे। सा। वाम्। वरुण। मित्र। रातिः। गवाम्। शता। पृक्षऽयामेषु। पज्रे।
श्रुतऽरथे। प्रियऽरथे। दधानाः। सद्यः। पुष्टिम्। निऽरुन्धानासः। अग्मन् ॥ ७ ॥

हे ᵛमित्र हे ᵛवरुण देव ᵛवां युवाम् अहं ᵛस्तुषे स्तुवे। व्यत्ययेन मध्यमः। युवयोः संबन्धिनी ᵛसा प्रसिद्धा ᵛरातिः दानं ᵛशता शतानां शतसंख्यानाम् अपरिमितानां ᵛगवां संबन्धिनी असंख्यातगोविषया रातिः ᵛपज्रे कक्षीवति मयि ᵛपृक्षयामेषु। पृक्ष[6] इत्यकारान्तोऽप्यस्ति[6]। पृक्षाणामन्नानां नियमनं येषु स्तोत्रेषु यज्ञेषु वा तेषु निमित्तभूतेषु भवत्विति शेषः। किंच मित्रादयो देवाः ᵛश्रुतरथे सर्वत्र प्रसिद्धरथोपेते ᵛप्रियरथे प्रीयमाणरथयुक्ते सर्वदा रथप्रिये पज्रे च मयि एव ᵛदधानाः

---

१. क्ष-ञ-ट-स्वशरीरगतश्वेतत्वरोगस्य। २. क्ष-ञ-ट- देवयापि। आकारः समुच्चये। ३. च-फ-मे हवा। ४. च-य-श्रोतु शृणोतु। ५. च-फ-सुक्षेत्रत्वादिलाभाय। ६. क्ष-ञ-ट-पृक्षेत्यकारान्तो घञि।

प्रीतिं धारयन्तः vसद्यः आगमनानन्तरमेव vपुष्टिं गवादिपोषं vनिरुन्धानासः अवरुन्धानाः[1] अस्मास्वेव स्थापयन्तः । यद्वा । मयि पुष्टिं दधानाः[2] कुर्वाणाः[2] निरुन्धानासः कृतामेव पुष्टिं मयि स्थिरां[3] कुर्वन्तः[3] vअग्मन् आगच्छन्तु ॥ रातिः । 'रा दाने' । भावे क्तिन् । 'मन्त्रे वृष°' इत्यादिना क्तिन उदात्तत्वम् । शता । 'सुपां सुलुक्°' इति षष्ठ्याः पूर्वसवर्णदीर्घत्वम् । दधानाः । जुहोत्यादित्वात् शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अग्मन् । गमेश्छान्दसे लुङि 'मन्त्रे घस°' इत्यादिना च्लेर्लुक् । 'गमहन°' इति उपधालोपः ॥

**अस्य स्तुषे महिमघस्य राधः सचा सनेम नहुषः सुवीराः ।**
**जनो यः पज्रेभ्यो वाजिनीवानश्वावतो रथिनो मह्यं सूरिः ॥ ८ ॥**

अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम । नहुषः । सुऽवीराः ।
जनः । यः । पज्रेभ्यः । वाजिनीऽवान् । अश्वऽवतः । रथिनः । मह्यम् । सूरिः ॥ ८ ॥

vमहिमघस्य । महि महत् पूज्यं मघो धनमन्नं वा यस्य देवसंघस्य स तथोक्तः । तादृशस्य vअस्य vराधः धनं vस्तुषे स्तुवे । व्यत्ययेन मध्यमः । धनलाभाय प्रभूतधनं देवसंघं स्तौमीत्यर्थः । किंच vनहुषः । मनुष्यनामैतत् । परस्परस्नेहबन्धोपेता मनुष्या वयं कक्षीवन्तः vसुवीराः शोभनपुत्राद्युपेताः सन्तः vसचा सह परस्परैकमत्येन vसनेम त्वद्दत्तं धनं संभजेम लभेमहि । देवसंघो विशेष्यते । vयः vजनः देवजनो यश्च देवसंघः vपज्रेभ्यः अङ्गिरोगोत्रोत्पन्नेभ्यः कक्षीवद्भ्यः । 'पज्रा वा अङ्गिरसः' इति श्रुतेः । तेभ्यः vवाजिनीवान् । वाजोऽन्नम् । तद्वती क्रिया वाजिनी । तया तद्वान् भवति । यद्वा । एको मत्वर्थीयप्रत्ययश्छान्दसः । अस्मभ्यं प्रदेयेन दत्तेन[4] वा अन्नेन तद्वान् भवतीत्यर्थः । यश्च देवसंघः vअश्वावतः बहुभिः तद्दत्तैरश्वैः तद्वतः vरथिनः रथवतः vमह्यं मे[5] vसूरिः प्रेरको भवति । अश्वानां रथानां[6] प्रेरयितारं देवसंघं स्तुषे[7] इत्यर्थः ॥ सुवीराः । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । अश्वावतः । अश्वशब्दस्य 'मन्त्रे सोमाश्व°' इत्यादिना मतुपि दीर्घत्वम् ॥

**जनो यो मित्रावरुणावभिध्रुगपो न वां सुनोत्यक्ष्णयाध्रुक् ।**
**स्वयं स यक्ष्मं हृदये नि धत्त आप यदीं होत्राभिर्ऋतावा ॥ ९ ॥**

जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वाम् । सुनोति । अक्ष्णयाऽध्रुक् ।
स्वयम् । सः । यक्ष्मम् । हृदये । नि । धत्ते । आप । यत् । ईम् । होत्राभिः । ऋतऽवा ॥९॥

हे vमित्रावरुणौ युष्माकं vयः vजनः vअभिध्रुक् अभितो द्रोग्धा भवति अयष्टा भवतीत्यर्थः । यश्च vअक्ष्णयाध्रुक् वक्रेण मार्गेण द्रुह्यति अन्यथाप्रकारेण द्रुह्यति । द्रोहप्रकार उच्यते । vवां युवाम्[8] vअपः सोमरसान् vन vसुनोति अभिषवं न करोति । युवाम् अतिक्रम्य अन्यदेवतार्थं सुनोतीत्यभिप्रायः ।

---

१. क्ष-ञ-ट—अवरुन्धाधा (नाः) अवरुध्य । २. क्ष-ञ-ट—तु दधानाः विदधानाः कुर्वाणाः । ३. क्ष-ञ-ट—स्थिरीकुर्वन्तः सन्तः । ४. क्ष-च-झ-ञ-ट-न—अस्मभ्यं दत्तेन । ५. क्ष-ञ-ट—मम । ६. ब-फ—'रथानाम्' नास्ति । ७. क्ष-ञ-ट—स्तुवे । ८. क्ष-ञ-ट—युवाभ्याम् ।

अयमेव अक्षणयाद्रोहः[1] । ᵛसः मूढो द्विविधो जनः ᵛस्वयं ᵛयक्ष्मं व्याधिं ᵛहृदये स्वचित्ते ᵛनि ᵛधत्ते स्थापयति । अनुष्ठातॄणां भोगान् पश्यन् व्यथितो भवतीत्यर्थः । ᵛयत् । लिङ्गव्यत्ययः । य उक्तविलक्षणः पुमान् ᵛऋतावा यज्ञवान् परिगृहीतयज्ञः ᵛहोत्राभिः । वाङ्नामैतत् । स्तुतिवाग्भिः ᵛईम् एनं सोमरसम् ᵛआप व्याप्नोति । स्तुवन् सोममभिषुणोति इति[2] यावत्[2] । स नरः पृत्सु यातीति वक्ष्यमाणेन सह संबन्धः ॥ अभिध्रुक् । द्रुहेः ' सत्सूद्विष॰ ' इति क्विप् । संहितायां[3] भष्भावश्छान्दसः[3] । ऋतावा इत्यत्र ' छन्दसीवनिपौ ' इति मत्वर्थीयो वनिप् । ' अन्येषामपि दृश्यते ' इति संहितायां दीर्घत्वम् ॥

स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः ।
विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ॥ १० ॥

सः । व्राधतः । नहुषः । दम्ऽसुजूतः । शर्धःऽतरः । नराम् । गूर्तऽश्रवाः ।
विसृष्टऽरातिः । याति । बाळ्हऽसृत्वा । विश्वासु । पृत्ऽसु । सदम् । इत् । शूरः ॥ १० ॥

हे मित्रावरुणौ युवां गतमन्त्रावसानोक्तलक्षणः[4] युष्मत्पूजको जनः ᵛदंसुजूतः दान्तैरश्वैः सुष्ठु प्रेरितः अत एव ᵛनरां नराणां ᵛशर्धस्तरः अतिशयेनाभिभविता । अथवा अतिशयेन बलवान् । नराणां स्वसमानानां मध्ये ᵛगूर्तश्रवाः उद्गूर्णदीप्तिः प्रख्यातान्नो वा ᵛविसृष्टरातिः अर्थिभ्यः प्रदत्तधनः एवं महानुभावः ᵛशूरः सन् ᵛविश्वासु ᵛपृत्सु सर्वेषु जन्येषु संग्रामेषु ᵛव्राधतः । महन्नामैतत् । हिंसकान् महतोऽपि ᵛनहुषः । मनुष्यनामैतत् । मनुष्यान् शत्रून् प्रति ᵛबाळ्हसृत्वा भृशं सर्ता[5] अशङ्कितगमनः[5] सन् ᵛसदमित् सदैव ᵛयाति गच्छति ॥ दंसुजूतः । दामेर्विच्[6] । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । गूर्तश्रवाः । ' गुरी उद्यमने ' । ' नसत्तनिषत्त॰ ' इत्यादौ निपातनात् निष्ठानत्वाभावः । विसृष्टरातिः । विपूर्वात् सृजतेः कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । पृत्सु । ' पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ' इति पृतनाशब्दस्य पृदादेशः । ' सावेकाचः॰ ' इति विभक्तेरुदात्तत्वम् । बाळ्हसृत्वा । सर्तेः ' अन्येभ्योऽपि दृश्यन्ते ' इति क्वनिप् ॥ ॥ २ ॥

अध ग्मन्ता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मन्द्राः ।
नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ॥ ११ ॥

अध । ग्मन्त । नहुषः । हवम् । सूरेः । श्रोत । राजानः । अमृतस्य । मन्द्राः ।
नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना । रथऽवते ॥ ११ ॥

---

१. क्ष-ञ-ट–द्रोहः । २. क्ष-ञ-ट–' इति यावत् ' नास्ति । ३. क्ष-ञ-ट–' संहितायां भष्भावश्छान्दसः ' नास्ति । ४. क्ष-ञ-ट–स उक्तलक्षणः । ५. क्ष-ञ-ट–सत्वा अविशङ्कितगमनः । ६. क्ष-ञ-ट–दमेर्विच् ।

हे राजानः राजमानाः सर्वस्य[1] ईश्वरा[1] वा[2] हे[3] मन्द्राः मादयितारः यूयम् अमृतस्य अमरणस्य सूरेः स्तोत्रादिप्रेरकस्य नहुषः मनुष्यस्य मम हवम् आह्वानं श्रोत शृणुत । 'बहुलं छन्दसि' इति शपो लुक् । अमृतस्य इत्यत्र बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । अध अथ श्रवणानन्तरं ग्मन्त आगच्छत । गमेश्छान्दसो लङ्[4] । मध्यमबहुवचनस्य व्यत्ययेन झः । 'बहुलं छन्दसि' इति शपो लुक् । 'गमहन°' इत्युपधालोपः । किमर्थमागमनम् । उच्यते । नभोजुवः नभसि व्याप्ता यूयं यत् यस्मात् निरवस्य निर्गतरक्षकस्य युष्मद्व्यतिरेकेण रक्षकान्तररहितस्य । अथवा । निर्गतो मुखादुच्चरितो रवः शब्दः स्तोत्ररूपो यस्य तादृशस्य रथवते रथवतो यजमानस्य । षष्ठ्यर्थे चतुर्थी । महिना महिम्ना माहात्म्येन । मकारलोपश्छान्दसः । तेन युक्तं राधः समृद्धिसाधनं[5] हविर्लक्षणं संराधकं स्तोत्रं वा प्रशस्तये प्रशंसितुं कामयध्वे । तस्मादाह्वानं शृणुत आगच्छत चेति ॥

**एतं शर्धं धाम यस्य सूरेरित्यवोचन्दशतयस्य नंशे ।**

**द्युम्नानि येषु वसुताती रारन्विश्वे सन्वन्तु प्रभृथेषु वाजम् ॥ १२ ॥**

एतम् । शर्धम् । धाम । यस्य । सूरेः । इति । अवोचन् । दशऽतयस्य । नंशे ।

द्युम्नानि । येषु । वसुऽतातिः । ररन् । विश्वे । सन्वन्तु । प्रऽभृथेषु । वाजम् ॥ १२ ॥

यस्य सूरेः हविरादिप्रेरकस्य यजमानस्य संबन्धिनः दशतयस्य दशेन्द्रियसंवर्धकत्वेन दशावयवस्यान्नस्य नंशे प्राप्तये वयम् आहूताः स्म तस्मै यजमानाय एतम् इदानीं दातव्यत्वेन वर्तमानं शर्धं परेषामभिभावकमन्नं तत्प्राप्तिहेतुं[6] बलं[6] वा धाम विदधाम करवाम इत्यवोचन् देवाः ॥ धाम । दधातेर्लुङि 'गातिस्था°' इति सिचो लुक् । वचेः अकारस्य उम् । 'अस्यतिवक्ति°' इत्यादिना च्लेः अङ् ॥ येषु[7] देवेषु द्युम्नानि द्योतमानान्यन्नानि वसुतातिः वसूनां धनानां तातिः विस्तारश्च[8] वसून्येव वा[9] रारन् रमन्ते भृशम् ॥ तातिः । तनोतेः क्तिनि व्यत्ययेन आत्वम् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । स्वार्थिकस्तातिल् । रारन्निति रमतेर्यङ्लुगन्तस्य लङि रूपम् । ते विश्वे सर्वे देवाः प्रभृथेषु प्रकृष्टभरणेषु यागेषु वाजम् अन्नं सन्वन्तु ददतु प्रयच्छन्तु ॥ 'षणु दाने' ॥ यद्वा । यस्य सूरेः स्वभूतस्य च[10] दशतयस्य दश चमसेष्ववस्थितस्य सोमस्य प्राप्तये वयमाहूताः स्म तस्मै एतं शर्धं धाम इत्यवोचन् । यस्मादेवं तस्मात् प्रभृथेषु यागेषु वाजं तादृशं सोमलक्षणमन्नं विश्वे देवाः सन्वन्तु संभजन्ताम् ॥ 'वन षण संभक्तौ' इत्यस्य व्यत्ययेन उप्रत्ययः ॥ कीदृशेषु यज्ञेषु । येषु वसुतातिः वसूनां हविर्लक्षणानां धनानां वा विस्तारयितारः ऋत्विजः । वचनव्यत्ययः । द्युम्नानि द्योतमानानि हवींषि रारन् ददति ॥ 'रा दाने' । लेटि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् 'आतो लोप इटि च' इति आकारलोपः । अत एव 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वाभावश्च ॥

---

१. क्ष-ञ-ट—सर्वे देवाः ।　२. क्ष-ञ-ट-न—'वा' नास्ति ।　३. च-फ—विश्वेदेवाः ।　४. च-फ—लुङ् ।　५. क्ष-ञ-ट—समृद्धिसाधनं धनम् ।　६. क्ष-ञ-ट—तत्प्राप्तिहेतुभूतबलम् ।　७. क्ष-ञ-ट—येषु च ।　८. क्ष-ञ-ट—विस्तारः स च ।　९. क्ष-ञ-ट—'वा' नास्ति ।　१०. क्ष-ञ-ट—'च' नास्ति ।

मन्दा॑महे॒ दश॑तयस्य धा॒सेर्द्वि॒र्यत्पञ्च॒ बिभ्र॑तो॒ यन्त्यन्ना॑ ।
किमि॒ष्टाश्व॑ इ॒ष्टर॑श्मिरे॒त ई॑शा॒नास॒स्तरु॑ष ऋञ्जते॒ नॄन् ॥ १३ ॥

मन्दा॑महे । दश॑ऽतयस्य । धा॒सेः । द्विः । यत् । पञ्च॑ । बिभ्र॑तः । यन्ति॑ । अन्ना॑ ।
किम् । इ॒ष्टऽअ॑श्वः । इ॒ष्टऽर॑श्मिः । ए॒ते । ई॑शा॒नासः॑ । तरु॑षः । ऋ॒ञ्ज॒ते॒ । नॄन् ॥ १३ ॥

ᵛमन्दामहे स्तुमो वयं देवान्।। 'मदि स्तुतौ'। इदित्त्वात् नुम्।। किमर्थम्। ᵛदशतयस्य ᵛधासेः दशेन्द्रियतृप्तिसाधनत्वेन दशावयवस्य अन्नस्य ᵛयत् यस्मात् ᵛद्विः ᵛपञ्च दशविधानि अन्नानि। दशचमसगृहीतत्वादन्नस्य दशविधत्वम्। एवंविधम् अन्नं ᵛबिभ्रतः धारयन्तो दश चमसाध्वर्यवः ᵛयन्ति होमाय गच्छन्ति आहवनीयं प्रति। यद्वा। 'आश्वमेधिकानि दशान्नानि जुहोति[1]' इत्याम्नातानि आज्यमध्वादीनि दशविधान्यन्नानि विश्वेभ्यो देवेभ्यो होतुं धारयन्तो यन्ति यदा तदा मन्दामहे इति। न च इष्टाश्वप्रभृतीन् यष्टॄन् विहाय कस्मात् अस्मान्प्रति आगमिष्यन्तीति वाच्यम्। ᵛतरुषः शत्रूणां तारकान्॥ तरतेरौणादिक उसिन्॥ ᵛनॄन् नेतॄन् कर्मणाम्[2] एवं महानुभावान् वरुणादीन् ᵛइष्टाश्वः एतन्नामको राजा ᵛकिम् ᵛऋञ्जते किं प्रसाधयति। तथा ᵛइष्टरश्मिः च किमृञ्जते। ᵛएते इदानीं वर्तमानाः ᵛईशानासः[3] पृथिव्या ईश्वरा राजानश्च किं प्रसाधयन्ति। यद्वा। येषां स्तोतॄणामस्माकमेते स्तुता देवा ईशानासः स्वामिनः किल तादृशान् तरुषः शत्रूणां तारकान् नॄन् कर्मनिर्वाहकान् अस्मान् इष्टाश्वादयः किं साधयन्ति[4] किमुपद्रवन्ति न प्रभवन्तीत्यर्थः॥

हिर॑ण्यकर्णं मणिग्री॒वमर्ण॒स्तन्नो॒ विश्वे॑ वरिवस्यन्तु दे॒वाः ।
अ॒र्यो गिरः॑ स॒द्य आ ज॒ग्मुषी॒रोस्राश्चा॑कन्तू॒भये॑ष्व॒स्मे ॥ १४ ॥

हिर॑ण्यऽकर्णम् । म॒णि॒ऽग्री॒वम् । अर्णः॑ । तत् । नः॒ । विश्वे॑ । व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ।
अ॒र्यः । गिरः॑ । स॒द्यः । आ । ज॒ग्मुषीः॑ । आ । उ॒स्राः । चा॒क॒न्तु॒ । उ॒भये॑षु । अ॒स्मे इति॑ ॥ १४ ॥

ᵛहिरण्यकर्णं हिरण्यविकारकुण्डलाद्युपेतकर्णं ᵛमणिग्रीवं रत्नाद्युपेतकण्ठम्। एतद्द्वयं सर्वावयवस्याप्युपलक्षणम्। एवं सर्वाङ्गाभरणयुक्तम् ᵛअर्णः अरणीयं रूपं तद्वन्तं पुत्रादिकमित्यर्थः। उक्तलक्षणमस्मदीयं रूपं वा ᵛनः अस्माकं ᵛविश्वे सर्वे ᵛदेवाः ᵛवरिवस्यन्तु परिचरन्तु प्रयच्छन्त्वित्यर्थः। ᵛअर्यः अरणीयो विश्वेषां देवानां संघः[5] ᵛजग्मुषीः स्तोतुर्मुखान्निर्गच्छन्तीः ᵛगिरः स्तुतीः ᵛउस्राः[6]। विकारे[7] प्रकृतिशब्दः। क्षीराज्यादीनि हवींषि च ᵛसद्यः अस्मदागमनानन्तरमेव ᵛचाकन्तु कामयन्ताम्॥ छान्दसः शपः श्लुः परस्मैपदं च। यद्वा। यङ्लुकि नुगभावः॥ आ चाकन्त्विति वा योज्यम्। पर्याप्तं कामयन्तामित्यर्थः। केष्विति तदुच्यते। ᵛअस्मे अस्माकं संबन्धिषु ᵛउभयेषु स्तोतृषु यष्टृषु च। यद्वा। अस्माकमुभयेषु ऐहिकामुष्मिकविषयेषु उभयविधेषु फलेषु॥

---

१. ज-झ-त-व—जुहुति। २. क्ष-ञ-ट—कर्मणः। ३. क्ष-ञ-ट—अन्ये ईशानासः। ४. क्ष-ञ-ट—प्रसाधयन्ति। ५. न-च-ज्ञ—सद्यः। ६. क्ष-ञ-ट—उस्राः आ। ७. ष—अत्र विकारे।

चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः ।
रथो वां मित्रावरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ॥ १५ ॥

चत्वारः । मा । मशर्शारस्य । शिश्वः । त्रयः । राज्ञः । आयवसस्य । जिष्णोः ।
रथः । वाम् । मित्रावरुणा । दीर्घऽअप्साः । स्यूमऽगभस्तिः । सूरः । न । अद्यौत् ॥ १५ ॥

मा मां कक्षीवन्तं मशर्शारस्य। मशकीकृत्य भृशं श्रृणोति[1] शारयति वा अमित्रानिति मशर्शारः। एतन्नामकस्य राज्ञः शिश्वः शिशवः शिशुवदप्रबुद्धाः चत्वारः पुत्राः बाधन्ते[2] इति शेषः॥ शिशुशब्दस्य 'जसादिषु च्छन्दसि वावचनम्' इति गुणाभावः॥ तथा आयवसस्य सर्वतः प्राप्तान्नस्य एतन्नाम्नः राज्ञः जिष्णोः जयशीलस्य पुत्राः त्रयः तेऽपि बाधन्ते इति शेषः। हे मित्रावरुणा एतन्नामानौ देवौ वां युवयोः संबन्धी रथः दीर्घाप्साः। अप्स इति रूपनाम। अतिविस्तृतरूपः स्यूमगभस्तिः। स्यूममिति सुखनाम। सुखकरदीप्तिः सन् सूरो न सूर्य इव अद्यौत् द्योतताम्। उक्तानाम् अस्मद्विरोधिनां पुरतः स्फुरन्[3] भयजनको भवत्वित्यर्थः॥ द्युतेः 'छन्दसि लुङ्लङ्लिटः' इति लुङ्। 'द्युद्भ्यो लुङि' (पा. सू. १. ३. ९१) इति परस्मैपदम्। 'सिचि[4] वृद्धिः परस्मैपदेषु' (पा. सू. ७. २. १) इति वृद्धिः[4]। 'बहुलं छन्दसि' इति इडभावे हल्ङ्यादिसंयोगान्तलोपौ। यद्वा। 'द्यु अभिगमने'। आदादिकः। छान्दसे लङि 'उतो वृद्धिर्लुकि हलि' (पा. सू. ७. ३. ८९) इति वृद्धिः॥　　॥ ३ ॥

'कदित्था' इत्यस्मिन् अष्टादशेऽनुवाके षट् सूक्तानि। तत्र 'पृथू रथः' इति तृतीयं सूक्तं त्रयोदशर्चम्। अत्रानुक्रमणिका—'पृथुः सप्तोनोषस्यं तु' इति। दीर्घतमसः पुत्रः कक्षीवानृषिः 'ऋषिश्चान्यस्माद्दषेः' इति परिभाषितत्वात्। अनादेशपरिभाषया त्रिष्टुप् छन्दः। तुशब्दप्रयोगात् इदमादिके सूक्ते[5] उषोदेवताके। प्रातरनुवाके उषस्ये क्रतावस्य चोत्तरस्य च विनियोगः। 'अथोषस्यः' इति खण्डे सूत्रितं—'पृथू रथ इति सूक्ते प्रत्यर्चिरित्यष्टौ' (आश्व. श्रौ. ४. १४) इति। तथाश्विनशस्त्रे इदमादिसूक्तद्वयस्य विनियोगः 'प्रातरनुवाकन्यायेन' (आश्व. श्रौ. ६. ५) इत्यतिदिष्टत्वात्।

पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।
कृष्णादुदस्थादर्या३ विहाया श्चिकित्सन्ती मानुषाय क्षयाय ॥ १ ॥

पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनम् । देवासः । अमृतासः । अस्थुः ।
कृष्णात् । उत् । अस्थात् । अर्या । विऽहायाः । चिकित्सन्ती । मानुषाय । क्षयाय ॥ १ ॥

दक्षिणायाः प्रवृद्धायाः स्वव्यापारकुशलायाः उषोदेवतायाः पृथुः विस्तीर्णः रथः अयोजि अश्वैर्युक्तः संनद्धोऽभूत्। अत्र यद्यपि देवताविशेषो न श्रुतः तथापि उपस्यत्वात् उषस इति गम्यते।

१. क्ष-ञ-ट—शृणाति। २. क्ष-ज्ञ-ञ-ङ-न—मां बाधन्ते। ३. क्ष-ञ-ट-न—स्फुरतु। ४. क्ष-ञ-ट—वदव्रजेति वृद्धिः। ५. क्ष-ञ-ट—द्वे सूक्ते।

एनं संनद्धं रथम् अमृतासः अमरणधर्माणः देवासः देवनशीलाः हविर्भाजो देवाः आ अस्थुः आस्थितवन्तः देवयजनं गन्तुमारूढाः इत्यर्थः । अनन्तरं सा उषाः कृष्णात् निकृष्टवर्णात् नैशात् तमसः सकाशात् उदस्थात् उत्थिता अभूत् । 'कृष्णं कृष्यतेर्निकृष्टो वर्णः' ( निरु. २. २० ) इति यास्कः । कीदृशी[1] सा[1] । अर्या अरणीया पूजनीया विहायाः विविधगमनयुक्ता महती वा । विहाया इति महन्नाम 'विहायाः यह्वः' ( नि. ३. ३. १२ ) इति तन्नामसु पाठात् । मानुषाय क्षयाय मनुष्याणां निवासाय चिकित्सन्ती अन्धकारनिवारणरूपां चिकित्सां कुर्वती तमो निवारयन्तीत्यर्थः[2]॥

पूर्वा विश्वस्माद्भुवनादबोधि जयन्ती वाजं बृहती सनुत्री ।
उच्चा व्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ॥ २ ॥

पूर्वा । विश्वस्मात् । भुवनात् । अबोधि । जयन्ती । वाजम् । बृहती । सनुत्री ।
उच्चा । वि । अख्यत् । युवतिः । पुनःऽभूः । आ । उषाः । अगन् । प्रथमा । पूर्वऽहूतौ ॥२॥

विश्वस्मात् भुवनात् सर्वस्मात् सुसान्भूतजातात् पूर्वा प्रथमा सती इयम् उषाः अबोधि बुद्धा अभूत् । उषःकालमवगत्य हि पश्चात् सर्वे प्राणिनः प्रतिबुध्यन्ते । कीदृशी सा । वाजं गमनशीलं प्रकाशं[3] निर्वर्त्यं[3] अन्धकारं जयन्ती पराभवं कुर्वती । यद्वा । वाजशब्दोऽन्ननामसु पठितत्वादन्ननाम । 'अन्नं वै वाजः' ( श. ब्रा. ९. ३. ४. १; तै. ब्रा. १. ३. ६. २ ) इति श्रुतेश्च । यजमानार्थम् अन्नं संपादयन्ती । बृहती महती सनुत्री सर्वं जगत्संभजन्ती दात्री वा प्रकाशस्य । किंच सा उषाः उच्चा उच्चैरुन्नता सती व्यख्यत् विचष्टे सर्वं जगत् पश्यति[4] इत्यर्थः । कीदृशी सा । युवतिः मिश्रणशीला नित्ययौवना वा पुनर्भूः पुनःपुनर्भवनशीला प्रतिदिनं वर्तमानत्वात्[5] । सा उषाः पूर्वहूतौ सत्यां प्रथमा मुख्या प्रकृष्टा सती आ अगन् देवयजनदेशं प्रत्यागच्छति । 'प्रथम इति मुख्यनाम प्रतमो भवति' ( निरु. २. २२ ) इति यास्कः । इतरदेवेभ्यः पूर्वमाहूता सती शीघ्रमेवागच्छतीत्यर्थः ॥

यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते ।
देवो नो अत्र सविता दमूना अनागसो वोचति सूर्याय ॥ ३ ॥

यत् । अद्य । भागम् । विऽभजासि । नृऽभ्यः । उषः । देवि । मर्त्यऽत्रा । सुऽजाते ।
देवः । नः । अत्र । सविता । दमूनाः । अनागसः । वोचति । सूर्याय ॥ ३ ॥

सुजाते शोभनजनने देवि देवनशीले हे उषः उषःकालाभिमानिदेवते[6] मर्त्यत्रा मनुष्याणां पालयित्री त्वम् अद्य अस्मिन् काले नृभ्यः मनुष्येभ्यः यत् यं भागं भजनीयं स्वकीयप्रकाशस्यांशं

---

१. क्ष-ञ-ट–किं कुर्वती । २. क्ष-ञ-ट–'निवारयन्तीत्यर्थः' इत्यस्यानन्तरं 'गुप्तिज्किद्भ्यः इति व्याधिप्रतिकारे सन्' इत्यधिकम् । ३. क्ष-ञ-ट–प्रकाशनिवर्त्यम् । ४. क्ष-ञ-ट–पश्यति । मन्त्रेघसेति च्लेर्लुक् । ५. क्ष-ञ-ट–पुनर्वर्तमानत्वात् । ६. क्ष-ञ-ट–उषःकालाभिमानिदेवि ।

vविभजासि[1] विभज्य ददासि। यद्वा। मर्त्यत्रा मर्त्येषु मध्ये नृभ्यः[2] यजमानेभ्यः[3] देवानां भागं विभज्य ददासि[4]। उषसि प्रवृत्तायां हविषो दीयमानत्वात् उषसो दातृत्वमुपचर्यते। vअत्र अस्मिन् भागविषये vदमूनाः यजमानेभ्यः अभिमतफलदानमनाः[5]। 'दमूना दममना वा दानमना वा दान्तमना वा' (निरु. ४. ४) इति निरुक्तवचनम्। तादृशः vसविता प्रेरकः vदेवः vनः अस्मान् vअनागसः vवोचति अपापान् यागयोग्यान् ब्रवीतु अनुगृह्णातु इत्यर्थः[6]। किमर्थम्। vसूर्याय अस्मद्यागदेशं प्रति सूर्यस्यागमनार्थम्॥

गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना।
सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम्॥ ४॥

गृहम्ऽगृहम्। अहना। याति। अच्छ। दिवेऽदिवे। अधि। नाम। दधाना।
सिसासन्ती। द्योतना। शश्वत्। आ। अगात्। अग्रम्ऽअग्रम्। इत्। भजते। वसूनाम्॥४॥

vअहना। उषो नामैतत्। 'अहना द्योतना' (नि. १. ८. ११) इति तन्नामसु पाठात्। सा देवी vदिवेदिवे प्रत्यहम्। 'दिवेदिवे द्यविद्यवि' (नि. १. ९. ११) इति अहर्नामसु पाठात्। vगृहंगृहं तत्तद्यज्ञगृहम् vअच्छ आभिमुख्येन vयाति गच्छति। कीदृशी[7]। vअधि अधिकं vनाम नमनं प्रह्वत्वं प्रतिगृहम्[8] उद्योगं प्रकाशनरूपं vदधाना धारयन्ती। यद्वा। अधि दधाना अधिकं धारयन्ती। किंच vसिषासन्ती संभक्तुमिच्छन्ती vद्योतना कृत्स्नं जगत् द्योतनशीला vशश्वत् प्रतिदिनम् vआगात् आगच्छति। पूर्वं यातीत्युक्तत्वात् पुनः आगादिति वचनमावश्यकत्वद्योतनार्थम्। आगत्य च vवसूनां धनानां हविर्लक्षणानाम् vअग्रमग्रमित् तत्तच्छ्रेष्ठभागं[9] vभजते सेवते स्वीकरोतीत्यर्थः॥

भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व।
पश्चा स दघ्या यो अघस्य धाता जयेम तं दक्षिणया रथेन॥ ५॥

भगस्य। स्वसा। वरुणस्य। जामिः। उषः। सूनृते। प्रथमा। जरस्व।
पश्चा। सः। दघ्याः। यः। अघस्य। धाता। जयेम। तम्। दक्षिणया। रथेन॥ ५॥

vसूनृते सुष्ठु मनुष्याणां नेत्रि vउषः हे उषोदेवते vभगस्य सर्वैर्भजनीयस्य आदित्यस्य vस्वसा असि स्वसृस्थानीयासि। तेन सहोत्पद्यमानत्वात् तद्वत्पूज्येत्यर्थः। तथा vवरुणस्य तमोवारकस्य सवितुर्देवस्य vजामिः[10] असि भगिनीस्थानीयासि[10]। एकस्मिन्नेव स्थाने उत्पद्यमानत्वात्। जनयन्त्युत्पादयन्ति

१. च-फ-विभजासि विभजसि। २. ज्ञ-नृभ्यो नेतृभ्यः; ३. क्ष-ञ-ट-नतृभ्यः। ४. क्ष-ञ-ट-'ददासि' इत्यस्यानन्तरं 'देवमनुष्येत्यादिना त्रन्' इत्यधिकम्। ५. क्ष-ञ-ट-अभिमतफलदानमनाः यद्वा दान्तमनाः। ६. क्ष-ञ-ट-इत्यर्थः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। ७. क्ष-ञ-ट-कीदृशी सा ८. क्ष-ञ-ट-अप्रातिहतम्। ९. क्ष-ञ-ट-तत्तच्छ्रेष्ठं भागम् १०. त-जामिः असि भगिनी यस्यादित्यस्य स्वसा असि स्वसृस्थानीयासि।

अस्यामपत्यम् अन्ये इति जामिः । यद्वा । जमति गच्छति स्वोत्पत्तिस्थानात् अन्यत्रेति । उक्तनिर्वचनद्वयम् अभिप्रेत्य यास्क आह–' न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति ' ( निरु. ३. ६ ) इति । तादृशी त्वं ᵛप्रथमा इतरदेवेभ्यः पूर्वा उत्कृष्टा वा सती ᵛजरस्व स्तुता भव । जरतिः स्तुत्यर्थः । ' जरा स्तुतिर्जरतेः स्तुतिकर्मणः ' ( निरु. १०. ८ ) इति यास्कः । ᵛपश्चा पश्चात् त्वत्प्रीत्यनन्तरं ᵛयः ᵛअघस्य ᵛधाता यः कश्चिद्दुःखस्य तदुत्पादकपापस्य वा धारयितास्ति ᵛसः ᵛदघ्याः गच्छतु । वचनव्यत्ययः । दघ्यतिर्गत्यर्थः । ' दघ्यति दघ्नोति ' ( नि. २. १४. ६१) इति गत्यर्थेषु पाठात् । यदि स पापी बलीयान् ᵛतं ᵛदक्षिणया प्रवृद्धया सहायभूतया त्वया ᵛरथेन अस्मदीयरथादिसाधनेन च ᵛजयेम ॥ ॥ ४ ॥

उदी॑रतां सू॒नृता॒ उत्पुरं॑धी॒रुद॒ग्नयः॑ शुशुचा॒नासो॑ अस्थुः ।
स्पा॒र्हा वसू॑नि॒ तम॒साप॑गूळ्हा॒विष्कृ॑ण्वन्त्यु॒षसो॑ विभा॒तीः ॥ ६ ॥

उत् । ईर॑ताम् । सू॒नृताः॑ । उत् । पुर॑म्ऽधीः । उत् । अ॒ग्नयः॑ । शु॒शु॒चा॒नासः॑ । अ॒स्थुः॒ ।
स्पा॒र्हा । वसू॑नि । तम॑सा । अप॑ऽगूळ्हा । आ॒विः । कृ॒ण्वन्ति॒ । उ॒षसः॑ । वि॒ऽभा॒तीः ॥ ६ ॥

ᵛसूनृताः प्रियसत्यात्मिकाः वाचः[1] ᵛउदीरताम् उद्गच्छन्तु । हे ऋत्विजः उत्कृष्टं यथा भवति तथा स्तोत्रं प्रवर्तयध्वम्[2] । तथा ᵛपुरंधीः पुरंधयः । पुरं शरीरं यासु धीयते याभिर्वा ताः पुरंधयः प्रज्ञाः प्रयोगविषयाः । ताः अपि उन्मिषन्तु । प्रज्ञोपलक्षितानि कर्माणि प्रवर्तन्तामित्यर्थः । यद्यपि प्राणवायुना शरीरं धार्यते तथापि ' यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः ' ( कौ. उ. ३. ३ ) इति श्रुतेः प्राणप्रज्ञयोरेकत्वात् प्रज्ञायाः शरीरधारणमविरुद्धम् । तथा ᵛअग्नयः आहवनीयाद्याः ᵛशुशुचानासः अत्यन्तं दीप्यमानाः ᵛउत् ᵛअस्थुः उत्तिष्ठन्तु[3] प्रज्वलयन्तु[4] इत्यर्थः । किमर्थमेवमिति तदुच्यते । यतः ᵛविभातीः विविधं भासमानाः ᵛउषसः उषोदेवताः ᵛतमसा अपगूळ्हानि[5] अन्धकारेणात्यन्तं गोपितानि ᵛस्पार्हा स्पृहणीयानि ᵛवसूनि वासयोग्यानि यज्ञसाधनभूतहविरादीनि ᵛआविष्कृण्वन्ति यथावस्तु प्रकटीकुर्वन्ति[6] तस्मात् स्तोत्रादिकं कुर्वन्त्वित्यर्थः ॥

अपा॒न्यदे॒त्य॒भ्य१॒॑न्यदे॑ति॒ विषु॑रूपे॒ अह॑नी॒ सं च॑रेते ।
परि॒क्षितो॒स्तमो॑ अ॒न्या गुहा॑क॒रद्यौ॑दु॒षाः शोशु॑चता॒ रथे॑न ॥ ७ ॥

अप॑ । अ॒न्यत् । एति॑ । अ॒भि । अ॒न्यत् । ए॒ति॒ । विषु॑रूपे॒ इति॒ विषु॑ऽरूपे । अह॑नी॒ इति॑ । सम् । च॒रे॒ते॒ इति॑ ॥ प॒रि॒ऽक्षितोः॑ । तमः॑ । अ॒न्या । गुहा॑ । अ॒क॒: । अद्यौ॑त् । उ॒षाः । शोशु॑चता । रथे॑न ॥ ७ ॥

इदानीम् अहोरात्रस्तुतिद्वारा उषाः स्तूयते । ᵛविषुरूपे वक्ष्यमाणप्रकारेण नानारूपे ᵛअहनी अहश्च रात्रिश्चोभे ᵛसं ᵛचरेते । समित्येकीभावे । सहैव अव्यवधानेन चरतः । अत्राहुः साहचर्यात्

---

१. क्ष-ञ-ट–स्तुतिरूपा वाचः । २. क्ष-ञ-ट–प्रवर्धयध्वम् । ईर गतौ । अदादिकः । ३. क्ष-ञ-ट–उद्गता भवन्तु । ४. च-फ–प्रज्वलन्तु । ५. च-फ–अपगूळ्हा अपगूळ्हानि । ६. क्ष-ञ-ट–प्रकाशीकुर्वन्ति ।

तत्प्रतियोगित्वाच्च रात्रिरपि अहः इत्युच्यते। उत्तरत्र मन्त्रान्तरे अयमेवार्थः स्पष्टः[1] आम्नातः 'अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः' (ऋ. सं. ६. ९. १) इति। तयोर्मध्ये ^v^अन्यत् रात्रिरूपमहः ^v^अप ^v^एति अपगच्छति प्रतिलोमं गच्छति वा। 'अपेत्येतस्य प्रातिलोम्यम्' (निरु. १. ३) इति यास्कः। ^v^अन्यत् च दिवसाख्यमहः ^v^अभि ^v^एति आभिमुख्येन गच्छति। 'अभीत्याभिमुख्यम्' (निरु. १. ३) इति यास्कः[2]। रात्र्यां[3] प्रतिनिवृत्तायाम् अहः अभिमुखमागच्छतीत्यर्थः। विषुरूपे सं चरेते इति यदुक्तं तदेव स्पष्टीक्रियते। ^v^परिक्षितोः पर्यायेण निवसतोः परिक्षपयतोर्वा। प्राणिनाम् अहःसु अतीतेषु आयुषः क्षयात् परिक्षपणं प्रसिद्धम्। तयोर्मध्ये ^v^अन्या रात्रिः ^v^तमः तमोरूपा ^v^गुहा[4] पदार्थानां गूहनम्[4] ^v^अकः करोति[5]। अन्या अहरेकदेशभूता च ^v^उषाः ^v^शोशुचता भृशं दीप्तेन ^v^रथेन ^v^अद्यौत्। द्योतते प्रकाशते प्रकाशयति वा सर्वम्। रात्रिः तमोरूपत्वात्[6] सर्वं जगत् आवृणोति। उषास्तु सर्वान् भावान् प्रकाशयति इत्युषसः स्तुतिः॥

स॒दृशी॑र॒द्य स॒दृशी॒रिदु॒ श्वो दी॒र्घं स॑चन्ते॒ वरु॑णस्य॒ धाम॑।

अ॒न॒व॒द्यास्त्रिं॒शतं॒ योज॑ना॒न्येकै॑का॒ क्रतुं॒ परि॑ यन्ति स॒द्यः॥ ८॥

स॒ऽदृशीः॑। अ॒द्य। स॒ऽदृशीः॑। इत्। ऊँ॒ इति॑। श्वः। दी॒र्घम्। स॒च॒न्ते॒। वरु॑णस्य। धाम॑।

अ॒न॒व॒द्याः। त्रिं॒शत॑म्। योज॑नानि। एका॑ऽएका। क्रतु॑म्। परि॑। य॒न्ति॒। स॒द्यः॥ ८॥

^v^अद्य अस्मिन्नहनि ^v^सदृशीः ^v^इत्[7] परस्परं सदृश्यः[8] एव। तथा ^v^श्वः इत् परस्मिन्नप्यहनि ^v^सदृशीः परस्परं सदृश्य[9] एव। उशब्दोऽपिशब्दार्थः। इच्छब्द एवार्थः[10]। अद्यतन्योऽपि श्वस्तनीभिः[11] सदृश्यः श्वस्तन्यश्च अद्यतनीभिः[12]। एवम् अहरन्तरेण सादृश्यम्। कथं सादृश्यमिति तदुपपाद्यते। यदा नक्षत्राणि न दृश्यन्ते सूर्यश्च नोदेति उषःकालः[13]। स चैकविंशतिघटिकाभिः पड्विंशतिपराभिश्च संमितः। सूर्यो हि प्रतिदिनम् एकोनषष्ट्यधिकपञ्चसहस्रयोजनानि मेरुं प्रादक्षिण्येन परिभ्रमति। तथा सति यत्र यत्र लङ्कादिभूप्रदेशे सूर्यो गच्छति तस्य तस्य पुरस्तात् त्रिंशद्योजनम् उषाः अपि गच्छति। सूर्यो यस्मिन् देशे गच्छति तत्र[14] त्रिंशद्योजनं पुरस्ताद्देशस्थितानामुदितो दृश्यते। एवं सर्वप्रदेशेष्वपि। तथा उषाः अपि यत्र गच्छति ततः पुरस्तात् त्रिंशद्योजनभूभागवर्तिनामुदिता दृश्यते। एवं लङ्कादिसर्वप्रदेशस्थितानामप्युषस उदयोऽवगन्तव्यः। एवं च सति एकस्मिन् भूभागे यावत्कालं यथोषाः प्रकाशयति तथा भूभागान्तरेऽपि तावन्तं कालं प्रकाशयति[15]। एवम् उक्तरीत्या[16] एकस्मिन्नेवाहनि सर्वप्रदेशवर्तिनामप्युषसः सदृश्यः। प्रदेशबाहुल्यमपेक्ष्य उषसां बहुत्वात् बहुवचनम्। एवमेकरूपाः उषसः ^v^अनवद्याः शुद्धाः। तासामुदयात्[17]

---

१. क्ष-ञ-ट–स्पष्टम्। २. क्ष-ञ-ट–इति यास्कः। एकान्याभ्यामिति प्रथमा तिङ्विभक्तिर्न निहन्यते। ३. क्ष-ञ-ट–रात्रौ। ४. ञ–गुहा गुहां गूहनम्; क्ष-ञ-ट–गुहा। गुहा गोपनीयानां गूहनम्। ५ क्ष-ञ-ट–'करोति' इत्यस्यानन्तरं 'गुहायां तमस्तमोरूपं करोति कृत्स्नं जगत्। अकः इत्यत्र एकान्याभ्यामित्यत्र विभाषेत्यनुवृत्तेर्निघाताभावाभावः' इत्यधिकम्। ६. ज-फ-व-ष–तमोभूत्वा। ७. क्ष-ञ-ट– उ। ८. क्ष-ञ-ट–सदृशाः। ९. क्ष-ञ-ट–सदृशा उ। १०. क्ष-ञ-ट–एवकारार्थः। ११. क्ष-ञ-ट–श्वस्तनाभिः। १२. क्ष-ञ-ट–अद्यतनाभिः। १३. ञ–स उषःकालः; क्ष-ञ-ट–स उषसः कालः। १४. क्ष-ञ-ट–ततः। १५. क्ष-ञ-ट–तथैव प्रकाशयति। १६. क-क्ष-ञ-ट-ण-त-व–उक्तनीत्या। १७. क्ष-ञ-ट–तासामप्युदयात्।

सर्वे भावा अनवद्या भविष्यन्ति किमु वक्तव्यं तासामनवद्यत्वे । vदीर्घम् उक्तरीत्या[1] अत्यन्तमायतं vवरुणस्य तमोनिवारकस्य सूर्यस्य vधाम स्थानं मेरुवलयं vरक्षन्ते प्रतिदिनं सेवन्ते । कियद्दूरमिति तदुच्यते । vत्रिंशतं vयोजनानि त्रिंशद्योजनानि पुरतः । सूर्यो यत्र यत्रोदेति ततस्ततस्त्रिंशद्योजनं पुरस्तादुद्यन्तीत्यर्थः । किंच आसां मध्ये vएकैका उषा लङ्कादेवैकभूभाग-वर्तिनां vक्रतुं गमनागमनादिरूपं कर्म तद्विषयां प्रज्ञां वा । तथा च निरुक्तं–' क्रतुं दधिक्राः कर्म वा प्रज्ञां वा ' ( निरु. २. २८ ) इति । vसद्यः तदानीमेव स्वोदयकाले एव vपरि[2] vयन्ति परितो गच्छन्ति । निर्वहन्तीत्यर्थः[3] । तत्तद्भूभागविशेषेण सूर्यस्योदयो ज्योतिःशास्त्रे प्रदर्शितः । ' उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे । मध्याह्नो यवकोट्यां रोमकविषयेऽर्धरात्रः स्यात् ' ( आर्य. ४. १३ ) इति ॥

जा॒न॒त्यह्नः॑ प्रथ॒मस्य॒ नाम॑ शु॒क्रा कृ॒ष्णाद॑जनिष्ट श्विती॒ची ।
ऋ॒तस्य॒ योषा॒ न मि॑नाति॒ धामाह॑रहर्निष्कृ॒तमा॒चर॑न्ती ॥ ९ ॥

जा॒न॒ती । अह्नः॑ । प्र॒थ॒मस्य॑ । नाम॑ । शु॒क्रा । कृ॒ष्णात् । अ॒ज॒नि॒ष्ट । श्वि॒ती॒ची ।
ऋ॒तस्य॑ । योषा॑ । न । मि॒ना॒ति॒ । धाम॑ । अहः॑ऽअहः । निः॒ऽकृ॒तम् । आ॒ऽचर॑न्ती ॥ ९ ॥

उषाः vप्रथमस्य मुख्यस्य प्रथमानस्य वा vअह्नः दिवसस्य vनाम नमनमागमनं vजानती अव-गच्छन्ती प्राणिनां प्रज्ञापयन्तीत्यर्थः । सा उषाः vशुक्रा स्वतो दीप्ता अत एव vश्वितीची श्वैत्यं गच्छन्ती प्रकाशं प्राप्नुवती[4] कृष्णात् निकृष्टात् तमसः सकाशात् vअजनिष्ट प्रादुर्भवति । यद्यपि तमसः सकाशान्नोत्पद्यते तथापि तदनन्तरभावित्वात् तत उत्पद्यते इत्युपचर्यते । उत्पन्ना सा[5] vऋतस्य[6] सत्यभूतस्यादित्यस्य vधाम तेजोयुक्तं स्थानं vयोषा मिश्रयन्ती[6] vन vमिनाति न हिनस्ति तदीयं तेजो न पराभवति । अपि तु vअहरहः सर्वेष्वहःसु vनिष्कृतमाचरन्ती अलंकारशोभां कुर्वती । यद्वा । ऋतस्य सत्यभूतस्य यज्ञस्य धाम देवयजनाख्यं स्थानं योषा मिश्रणशीला सती न मिनाति न हिनस्ति[7] । किंतु अहरहः सर्वेषु यागदिवसेषु निष्कृतं हविरादीनां प्रकाशनरूपमलंकारम् आचरन्ती कुर्वती तादृश्युषा अजनिष्टेति पूर्वत्रान्वयः[8] ॥

---

१. क्ष-च-ज-झ-ञ-ट-फ-व–उक्तनीत्या । २. क्ष-ञ-ट–उषसः परि । ३. क्ष-ञ-ट–' निर्वहन्तीत्यर्थः ' इत्यस्यानन्तरम् ' एकैकेत्यत्र क्रियासमभिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यमिति द्विर्भावः ' इत्यधिकम् । ४. क्ष-ञ-ट–'प्राप्नुवती' इत्यस्यानन्तरं ' वृषादिभ्यः इति ऋ ( ? ) श्वितिमञ्चतीति ऋत्विगित्यादिना क्विनि नकारा-कारयोर्लुप्तयोः पूर्वपदस्य चौ इति दीर्घः । उदात्तनिवृत्तिस्वरेण शप उदात्तत्वम् ' इत्यधिकम् । ।५. क्ष-ञ-ट–सती । ६. झ–ऋतस्य भूतयज्ञस्य धाम देवयजनाख्यं स्थानं योषा मिश्रणशीला सती । ७. क्ष-ञ-ट–' हिनस्ति ' इत्यस्यानन्तरं ' मीङ् हिंसायाम् । मीनातेर्निगमे इति ह्रस्वत्वम् ' इत्यधिकम् । ८. क्ष-ञ-ट–' पूर्वत्रान्वयः ' इत्यस्यानन्तरं ' निष्कृतम् । कर्मणि निष्ठा । प्रवृद्धादीनां च इत्युत्तरपदाद्युदात्तत्वम् ' इत्यधिकम् ।

कन्येव तन्वा३ शाशदानाँ एषि देवि देवमियक्षमाणम् ।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥ १० ॥

कन्याऽइव । तन्वा । शाशदाना । एषि । देवि । देवम् । इयक्षमाणम् ।
समुऽस्मयमाना । युवतिः । पुरस्तात् । आविः । वक्षांसि । कृणुषे । विऽभाती ॥ १० ॥

तन्वा शरीरेण शाशदाना शाशाद्यमाना स्पष्टतां प्राप्नुवती । 'शाशदानः शाशाद्यमानः' ( निरु. ६. १६ ) इति यास्कः । कन्येव कमनीया कन्यकेव । 'कन्या कमनीया भवति क्वेयं नेतव्येति वा' ( निरु. ४. १५ ) इति यास्कः । सा यथा जनान्तिके विवसना संचरति तथा हे उषस्त्वं कन्या कमनीया अप्रगल्भा सती तन्वा शरीरेण शाशदाना स्पष्टतां गच्छन्ती दृश्यसे । पश्चात् प्रगल्भा सती हे देवि देवनशीले इयक्षमाणं यष्टुमिच्छन्तम् अभिमतं[1] दातुमिच्छन्तं वा[1] देवं द्योतनस्वभावं सूर्यरूपं प्रियम् एषि गच्छसि । ततः पश्चात् युवतिः यौवनोपेता सती पुरस्तात् पत्युः सूर्यस्य पुरतः संस्मयमाना सम्[2] ईषत् हसन्ती हास्यं कुर्वती[2] विभाती अत्यन्तं भासमाना वक्षांसि वक्षसोपलक्षितानवयवान् आविः कृणुषे प्रकटीकरोषि[3] । यद्वा । युवतिरिति लुप्तोपमा । यथा लोके प्रगल्भा योषित् पुरस्तात् प्रियतमस्य पुरतः संस्मयमाना दन्तप्रदर्शनाय ईषद्धसनं कुर्वती वक्षांसि वक्षसोपलक्षितानि गोप्यानि बाहुमूलस्तनादीनि आविष्करोति तथा त्वमपीत्यर्थः । यद्वा । पुरस्तात् पूर्वस्यां दिशि संस्मयमाना स्मितोपमप्रकाशं कुर्वती युवतिः सर्वेषु भावेषु मिश्रणशीला वक्षांसि । वक्ष इति रूपनाम । दन्तस्थानीयानि नीलपीतादीनि रूपाण्याविष्करोषि ॥　　॥ ५ ॥

सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम् ।
भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥ ११ ॥

सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः । तन्वम् । कृणुषे । दृशे । कम् ।
भद्रा । त्वम् । उषः । विऽतरम् । वि । उच्छ । न । तत् । ते । अन्याः । उषसः । नशन्त ॥ ११ ॥

हे उषोदेवि मातृमृष्टा मातृभिर्जननीभिः शुद्धीकृता योषा इव सुसंकाशा अत्यर्थं प्रकाशमाना त्वं तन्वं स्वकीयां तनुं दृशे सर्वेषां दर्शनाय[4] आविः कृणुषे प्रकटयसि[5] । यथा लोके मात्रादिना स्वलंकृता अत्यन्तं शोभना[6] सती स्वकीयं लावण्योपेतं सर्वशरीरं[7] दर्शनायाविष्करोति तद्वत्त्वमपीत्यर्थः । अत्र कम् इति पादपूरणः अत्र[8] विशेषस्याभावात्[8] 'शिशिरं जीवनाय कम्' इतिवत् । तथा च यास्काचार्यः—'मिताक्षरेष्वनर्थकाः कमीमिद्विति' ( निरु. १. ९ ) इति । यद्वा । कमिति सुखवचनः । सुखं यथा भवति तथा आविष्कृणुषे इत्यर्थः । हे उषः यत एवं करोषि अतः

---

१. क्ष-ञ-ट—संगच्छन्तं वा । यजतेः सनि छान्दसं यकारस्य संप्रसारणम् । २. क्ष-ञ-ट—सम्यगीषद्धसनं कुर्वती । ३. क्ष-ञ-ट—प्रकाशीकरोषि । ४. क्ष-ञ-ट—'दर्शनाय' इत्यस्यानन्तरं 'दृशे विख्ये च इति निपात्यते' इत्यधिकम् । ५. क्ष-ञ-ट—प्रकाशयसि । ६. क्ष-ञ-ट—शोभमाना । ७. क्ष-ञ-ट—शरीरं सर्वेषाम् । ८. क्ष-ञ-ट— अर्थविशेषस्याभावात् ।

भद्रा कल्याणशीला स्तुत्या त्वं वितरं व्युच्छ आवरकमन्धकारं[1] विप्रकृष्टं यथा भवति तथा विवासय[1]। अत्र यद्यपि विशेषो न श्रुतस्तथापि प्रकाशनिवर्त्यत्वात् परिहरणीयत्वाच्च व्युदसनीयं तम एव इति गम्यते। किंच ते तव तत् व्युदसनम् अन्याः उषसः अतीताः आगामिन्यश्च न नशन्त न व्याप्नुवन्ति तथा व्युच्छेति भावः। नशिर्व्याप्तिकर्मा। 'इन्वति[2] ननक्ष' इति[2] व्याप्तिकर्मसु पाठात्॥

अश्वा॑वती॒र्गोम॑तीर्वि॒श्ववा॑रा॒ यत॑माना र॒श्मिभि॒ः सूर्य॑स्य।
परा॑ च॒ यन्ति॒ पुन॒रा च॑ यन्ति भ॒द्रा नाम॒ वह॑माना उ॒षास॑ः ॥ १२ ॥

अश्व॑ऽवतीः। गोऽम॑तीः। वि॒श्वऽवा॑राः। यत॑मानाः। र॒श्मिऽभि॒ः। सूर्य॑स्य।
परा॑। च॒। यन्ति॑। पुन॑ः। आ। च॒। य॒न्ति॒। भ॒द्रा। नाम॑। वह॑मानाः। उ॒षस॑ः ॥ १२ ॥

अश्वावतीः अश्ववत्यो बहुभिरश्वैस्तद्वत्यः तथा गोमतीः बहुभिर्गोभिस्तद्वत्यः विश्ववाराः विश्वे वाराः वरणीयाः कालाः यासां ताः तथोक्ताः। सार्वकालीना इत्यर्थः। यद्वा। विश्वे वरितारो यासु ताः विश्ववाराः। विश्वैर्वरणीया इत्यर्थः[3]। सूर्यस्य रश्मिभिः यतमानाः सूर्यरश्मिभिः साकं तमोनिवारणाय प्रयत्नं कुर्वाणाः। यद्यपि सूर्यरश्मय एव जगत्प्रकाशनाय प्रभवन्ति तथापि सूर्योदयात् पूर्वं तमोनिवारणस्यापेक्षितत्वात् तासामपि प्रयत्नमविरुद्धम्[4]। रश्मिदेवताः[5] अपि[6] प्रकाशिकाः[6] इत्यर्थः। किंच भद्रा भद्रं कल्याणं स्तुत्यं वा नाम नमनं सर्वजनानुकूल्यं वहमानाः धारयमाणाः उषासः उषोदेवताः परा च यन्ति परायन्ति[7] च[7]। तथा पुनरा च यन्ति पुनरायन्ति च। परस्परापेक्षया उभयत्र चशब्दः। या एवातीतेषु दिनेषु गताः[8] ता एव पुनःपुनर्दिनान्तरेषु अपि आयन्ति। जगन्निर्वाहाय प्रतिदिनं गतागतं कुर्वन्तीत्यर्थः॥

ऋ॒तस्य॑ र॒श्मिम॑नु॒यच्छ॑माना भ॒द्रंभ॑द्रं॒ क्रतु॑म॒स्मासु॑ धेहि।
उषो॑ नो अ॒द्य सु॒हवा॒ व्यु॑च्छा॒स्मासु॒ रायो॑ म॒घव॑त्सु च स्युः ॥ १३ ॥

ऋ॒तस्य॑। र॒श्मिम्। अ॒नु॒ऽयच्छ॑माना। भ॒द्रम्ऽभ॑द्रम्। क्रतु॑म्। अ॒स्मासु॑। धे॒हि॒।
उष॑ः। न॒ः। अ॒द्य। सु॒ऽहवा॑। वि। उ॒च्छ॒। अ॒स्मासु॑। राय॑ः। म॒घव॑त्ऽसु। च॒। स्यु॒रिति॑ स्युः ॥ १३ ॥

हे उषः ऋतस्य सत्यभूतस्यादित्यस्य रश्मिं रश्मीन् अनुयच्छमाना आनुकूल्येन प्रवर्तमाना त्वं भद्रंभद्रं क्रतुं तत्तत्कल्याणं स्तुत्यं वा लौकिकं वैदिकं कर्म तद्विषयां प्रज्ञां वा धेहि स्थापय। हे उषः नः अस्मदर्थं सुहवा सुष्ठु आहूता[9] सती व्युच्छ तमो विवासय प्रकाशं कुर्वित्यर्थः[10]। किमर्थ-

---

१. क्ष-ञ-ट–विशिष्टतरं प्रकर्षेणास्माकमन्धकारं विवासय प्रकाशस्वेत्यर्थः। २ ज-व-ष–इन्वति नक्षतीति। ३. क्ष-ञ-ट–'इत्यर्थः' इत्यस्यानन्तरम् 'बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदान्तोदात्तत्वम्' इत्यधिकम्। ४. च-फ–प्रयत्नमविरुद्धं कुर्वाणाः। ५. क्ष-ञ-ट–रश्मिवदेव ताः। ६. च–अभिप्रकाशिकाः। ७. क्ष-ञ-ट–चशब्दयोगादनिघातः। ८. क्ष-ञ-ट–याताः। ९. क्ष-ञ-ट–आह्वातव्या। १०. क्ष-ञ-ट–'कुर्वित्यर्थः' इत्यस्यानन्तरं 'ह्वयतेः बहुलं छन्दसीति प्रागेव प्रत्ययोत्पत्तेः संप्रसारणे कृते आकारान्तलक्षणस्य युवोऽप्रसक्तेः खलु कृदुत्तरपदप्रकृतिस्वरत्वेन लित्स्वरः। यद्वा। भावेऽनुपसर्गस्येति अप् संप्रसारणं च' इत्यधिकम्।

मिति तदुच्यते । ᵛमघवत्सु । मघमिति धननाम । हविर्लक्षणधनयुक्तेषु[1] ᵛअस्मासु यजमानेषु ᵛरायः ᵛच ᵛस्युः बहुविधानि धनानि संभवन्त्विति पूर्वोक्तेन क्रतुना सह समुच्चयार्थः चशब्दः ॥ ॥ ६ ॥

' उषा उच्छन्ती ' इति त्रयोदशर्चं चतुर्थं सूक्तं दैर्घतमसः कक्षीवत आर्षं त्रैष्टुभमुषस्यम् । ' उषा उच्छन्ती ' इत्यनुक्रान्तम् । विनियोगस्तु पूर्वसूक्ते एवोक्तः ॥

**उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।**
**देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥ १ ॥**

उषाः । उत्ऽछन्ती । सम्ऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः । अश्रेत् ।
देवः । नः । अत्र । सविता । नु । अर्थम् । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥१॥

एषा ᵛउषाः ᵛसमिधाने ᵛअग्नौ । अग्नित्वसामान्येन एकवचनम् । अग्निषु समिध्यमानेषु सत्सु[2] । कर्मार्थे कर्तृप्रयोगः । उषःकाले हि आहवनीयादयः प्रज्वाल्यन्ते । ᵛउच्छन्ती[3] तमो विवासयन्ती ᵛउर्विया उरु बहुलं ᵛज्योतिः प्रकाशम् ᵛअश्रेत् सेवते प्रकाशते प्रकाशयति[4] वा सर्वम्[4] । किमिव । ᵛउद्यन् ᵛसूर्यः । उपमाप्रधाननिर्देशः[5] । उदितः सूर्य इव । सूर्यो यथा प्रकाशयति तथेत्यर्थः । ᵛअत्र त्वदुदयानन्तरम् अस्मिन् कर्मणि वा ᵛसविता ᵛदेवः सर्वस्य प्रेरकः सूर्यः ᵛनः अस्मदर्थं ᵛनु क्षिप्रम् ᵛअर्थम् । अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिङ्गः । ' अयन्नर्थानि कृणवन्नपांसि ' ( ऋ. सं. ७. ६३. ४ ) इत्यादौ तथा दृष्टत्वात् । अरणीयं ᵛद्विपत् पादद्वयोपेतं मनुष्यादिरूपं धनं ᵛप्रासावीत् अनुजानातु[6] ददात्वित्यर्थः[6] । तथा ᵛचतुष्पत् पादचतुष्टयोपेतं गवादिरूपं धनं प्रासावीत्[7] । किमर्थम् । ᵛइत्यै द्विपदां चतुष्पदां च गमनाय । यद्वा । नः इत्यै इति संबन्धः । अस्मद्गमनागमनादिव्यापारायेत्यर्थः ॥

**अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।**
**ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥ २ ॥**

अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि ।
ईयुषीणाम् । उपमा । शश्वतीनाम् । आऽयतीनाम् । प्रथमा । उषाः । वि । अद्यौत् ॥ २ ॥

---

१. क्ष-ञ-ट—हविर्लक्षणविशिष्टधनयुक्तेषु । २. क्ष-ञ-ट—सत्सु कर्मार्थम् । ३. क्ष-ञ-ट—यद्वा उच्छन्ती । ४. क्ष-ञ-ट—प्रकाशयति । इयाङियाजीकाराणामुपसंख्यानमिति इयाजादेशः । सर्वम् । ५. क्ष-ञ-ट—उपमाप्रधानोऽयं निर्देशः । ६. क्ष-ञ-ट—अनुजानातु । संख्यासुपूर्वस्येत्यन्त्यलोपः । अयस्मयादित्वेन भत्वात् पादः पत् इति पद्भावः । द्वित्रिभ्यां पाद्न् इत्युत्तरपदान्तोदात्तत्वम् । ७. क्ष-ञ-ट—' प्रासावीत् ' इत्यस्यानन्तरम् ' इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वम् ' इत्यधिकम् ।

^v^दैव्यानि ^v^व्रतानि देवसंबन्धीनि अग्निहोत्रादीनि कर्माणि। व्रतमिति कर्मनाम, 'व्रतं कर्वरम्' (नि. २. १. ७) इति तन्नामसु पाठात्। तानि कर्माणि ^v^अमिनती अहिंसन्ती[1] भानप्रदानेनानुकूलं कुर्वती। तथा ^v^मनुष्या मनुष्याणां[2] ^v^युगानि युगोपलक्षितान् निमेषादिकालावयवान् ^v^प्रमिनती प्रकर्षेण हिंसन्ती[3] आयुः क्षपयन्तीत्यर्थः। यद्वा। युगानि युग्मानि परस्परसंयोगं प्रमिनती हिंसन्ती[4] वियोगं कुर्वतीत्यर्थः। उषःकाले सर्वे यथायथं स्वस्वव्यापाराय गच्छन्तीति प्रसिद्धम्। किंच ^v^ईयुषीणां गच्छन्तीनाम् अतीतानां ^v^शश्वतीनां नित्यानाम् उषसाम् ^v^उपमा। ताभिः सदृशीत्यर्थः। सादृश्यं च 'सदृशीरद्य सदृशीरिदु श्वः' (ऋ. सं. १. १२३. ८) इत्यत्रोक्तम्। तथा ^v^आयतीनां ^v^प्रथमा आगामिनीनामुषसां प्रथमभाविनी सती ^v^व्यद्यौत् विशेषेण प्रकाशते। यद्वा। ईयुषीणां गमनशीलानां पश्वादीनां शश्वतीनां संततिप्रवाहरूपेण नित्यानामुपमा। तद्वन्नित्येत्यर्थः। तथा आयतीनां रात्र्यवसान-समये उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी। उषस्यागतायां वाचो बुद्धयश्च स्फुरन्तीति प्रसिद्धम्। तादृशी देवी व्यद्यौत् प्राणिनामनुग्रहाय द्योतते ॥

**एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात्।**
**ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ३ ॥**

एषा। दिवः। दुहिता। प्रति। अदर्शि। ज्योतिः। वसाना। समना। पुरस्तात्।
ऋतस्य। पन्थाम्। अनु। एति। साधु। प्रजानतीऽइव। न। दिशः। मिनाति ॥ ३ ॥

^v^एषा उषाः ^v^दिवः द्योतमानात्मकस्य[5] द्युलोकस्य ^v^दुहिता दुहितृस्थानीया। ततः उत्पद्यमान-त्वात् दुहितेत्युपचर्यते। ^v^पुरस्तात् पूर्वस्यां दिशि ^v^प्रति प्रत्येकम् ^v^अदर्शि दृश्यते। सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशते इत्यर्थः। कीदृशी सा। ^v^ज्योतिर्वसाना तेजोरूपं वस्त्रमाच्छादयन्ती तेजसा प्रकाशयन्ती ^v^समना सम्यगानयित्री चेष्टयित्री ॥ अन्तर्भावितण्यर्थोऽयम्। यद्वा। सह युग-पदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना। व्युत्पत्त्यनवधारणादनवग्रहः ॥ सा तादृशी ^v^ऋतस्य आदित्यस्य ^v^पन्थां पन्थानं मेरोः प्रान्तप्रदेशमनुक्रमेण ^v^साधु सम्यक् ^v^एति गच्छति। सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तात् उषा अपि गच्छतीत्यर्थः। सैव विशेष्यते। ^v^प्रजानतीव प्रियभूतस्य[6] सूर्यस्य मार्गो[7] मयापि गन्तव्यः[7] इति चेतयन्तीव। यथा लोके प्रियतमे अनुरागयुक्ता[8] काचित् भर्तारं[9] सर्वास्ववस्थासु न विमुञ्चति तथेयमपीत्यर्थः। किंच ^v^दिशः प्रागादिकाः ^v^न ^v^मिनाति न हिनस्ति। किंतु उषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः ॥

**उषो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि।**
**अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥ ४ ॥**

उषो इति। अदर्शि। शुन्ध्युवः। न। वक्षः। नोधाःऽइव। आविः। अकृत। प्रियाणि।
अद्मऽसत्। न। ससतः। बोधयन्ती। शश्वत्ऽतमा। आ। अगात्। पुनः। आऽईयुषीणाम् ॥४॥

---

१. क्ष-ञ-ट-न—अहिंसती। २. क्ष-ञ-ट—मनुष्याणाम्। षष्ठ्याः आकारः। ३. क्ष-ञ-ट-न—हिंसती। ४. क्ष-ञ-ट-न—हिंसती। ५. क्ष-ञ-ट—द्योतनात्मकस्य। ६. च-फ—प्रियतमस्य। ७. क्ष-ञ-ट—मार्गे मयापि गन्तव्यम्। ८. क्ष-ञ-ट—प्रियतमानुरागयुक्ता। ९. क्ष-च-ज्ञ-ञ-ट-न-फ—तं भर्तारम्।

एषा उषाः vउपो इति निपातद्वयसमुदायात्मकः एको निपातः । सर्वैः समीपे एव vअदर्शि दृश्यते । तत्र दृष्टान्तः । vशुन्ध्युवो vन vवक्षः। अत्र नकारः उपमार्थीयः उपरिष्टात् प्रयुज्यमानत्वात् । यत्र तु प्रतिषेधो विवक्षितस्तत्र पुरस्तान्नकारः प्रयुज्यते । तथा च यास्कः—' पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति ' ( नि. १.४ ) इति । तस्योदाहरणं–' नेन्द्रं देवममंसत ' ( ऋ. सं. १०. ८६. १ ) इति उपरिष्टादुपाचारस्तस्य येनोपमिमीते ' ( निरु. १. ४) इति । तस्योदाहरणं ' दुर्मदासो न सुरायाम् ' ( ऋ. सं. ८. २. १२ ) इति । शुन्ध्युः आदित्यः सर्वेषां शोधकत्वात् । तस्य वक्षः वक्षःस्थानीयो रश्मिसमूहः । स यथा प्रकाशमानो दृश्यते तथेत्यर्थः । यद्वा । शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः । स यथा स्वकीयं वक्षः प्रकाशयन् दृश्यते तद्वदित्यर्थः । किंच vनोधाइव vप्रियाणि vआविरकृत । नवनं स्तोत्रं धारयतीति नोधाः । एतन्नामा महर्षिर्देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः प्रियाणि स्वमनीषितान्याविष्कृतवान् । तथैषापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत् । किंच vअद्मसन्न । अत्राप्युपमार्थीयो नकारः । अद्यते इति अद्म अन्नम् । तस्य पाकाय गृहे सीदति इति अद्मसत् पाचिका योषित् vससतः बोधयन्ती । सा यथा स्वपतः पुत्रादीन् भोजनाय बोधयति तद्वत् । यद्वा । अद्मेति गृहनाम, ' वरूथम् अद्म ' इति तन्नामसु पाठात् । तत्र सीदतीत्यद्मसत् जननी । सा यथा स्वपतः पुत्रादीन् उषःकाले प्रबोधयति तथा भुवनाख्ये गृहे सीदन्ती तत्रत्यान् प्राणिनः प्रबोधयन्ती इयमुषाः । vएयुषीणाम् आगमनशीलानां स्त्रीणां मध्ये vशश्वत्तमा पुनःपुनरागच्छति । प्रातर्नियतमागच्छन्तीनां वारयोषितां मध्ये स्वयमेका सती नियतम् आगच्छतीत्यभिप्रायः । अत्र निरुक्तम्–' उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासोऽध्यूळ्हमिदमपीतरद्वक्ष एतस्मादेवाध्यूळ्हं काये । शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव । नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा । ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणां स्वपतो बोधयन्ती शाश्वतिकतमागात्पुनरागामिनीनाम् ' ( निरु. ४. १६ ) इति ॥

पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।
व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ ५ ॥

पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवाम् । जनित्री । अकृत । प्र । केतुम् ।
वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । आ । उभा । पृणन्ती । पित्रोः । उपऽस्था ॥ ५ ॥

vअप्त्यस्य व्यापनशीलस्य विस्तृतस्य vरजसः रञ्जकस्यान्तरिक्षलोकस्य । रजःशब्दोऽन्तरिक्षलोकवाची ' लोका रजांस्युच्यन्ते ' ( निरु. ४. १९ ) इति यास्केनोक्तत्वात् । तस्य vपूर्वे vअर्धे पूर्वस्मिन् भागे vजनित्री उत्पन्ना सती vगवां दिशां रश्मीनां वा vकेतुं प्रज्ञानं vप्र vअकृत प्रकर्षेण करोति । यद्वा । रजसः रञ्जकस्याह्नः । रजःशब्दोऽहर्वाची ' असृगहनी रजसी उच्येते ' ( निरु. ४. १९) इति यास्केनोक्तत्वात् । तस्य पूर्वेऽर्धे पूर्वस्मिन् भागे उषःकाले गवां वाचां जनित्री जनयित्री उत्पादयित्री । उषःकाले सर्वेषां प्राणिनां वाचः स्फुरन्तीति प्रसिद्धम् । यद्वा । अप्त्यस्य कर्मसु स्थितस्य जन्तोः केतुं गमनागमनादिरूपं कर्म । केतुरिति कर्मनाम, ' केतः केतुः ' इति तन्नामसु पाठात् । प्राकृत । प्रकर्षेण करोति । किंच vपित्रोः पालयित्र्योर्द्यावापृथिव्योः vउपस्था

उपस्थे उत्सङ्गे अन्तरालप्रदेशे स्थित्वा उभा उभे द्यावापृथिव्यौ पृणन्ती स्वतेजसा पूरयन्ती। यद्वा। उभा उभयोः पित्रोरिति[1] संबन्धः। वितरं विशिष्टतरं वरीयः उरुतरमतिविस्तीर्णं यथा भवति तथा व्यु प्रथते विशेषेणैव[2] प्रख्याता भवति प्रकाशते इत्यर्थः। उशब्दः अवधारणार्थः पादपूरणो वा ‘ मिताक्षरेष्वनर्थकाः कमीमिद्विति ’ इति यास्केनोक्तत्वात् ॥ ॥ ७ ॥

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम्।
अरेपसा तन्वा शाशदाना नार्भादीषते न महो विभाती ॥ ६ ॥

एव। इत्। एषा। पुरुऽतमा। दृशे। कम्। न। अजामिम्। न। परि। वृणक्ति। जामिम्।
अरेपसा। तन्वा। शाशदाना। न। अर्भात्। ईषते। न। महः। विऽभाती ॥ ६ ॥

एषा उषाः एवेत्। इच्छब्दः एवकारार्थः। एवमेव इदानीं भासमानप्रकारेणैव पुरुतमा विपुलतमा अत्यन्तविस्तृता सती अजामिं विजातीयं मनुष्यादिजातिं न परि वृणक्ति परितः सर्वतो न वर्जयति। तथा जामिं सजातीयं देवजातिं न परि वृणक्ति न परिवर्जयति। मनुष्यादिकं देवादिकं च तदुपलक्षितं लोकद्वयं वा कार्त्स्न्येन प्रकाशयतीत्यर्थः। किमर्थमिति तदुच्यते। दृशे कं सुखेन सर्वेषां दर्शनाय। सुखं यथा भवति तथा सर्वान् दर्शयितुं वा। किंच अरेपसा अपापया निर्मलया तन्वा शरीरेण शाशदाना शाशायमाना[3]। ‘ शाशदानः शाशायमानः[4] ’ ( निरु. ६. १६ ) इति यास्कः। स्पष्टतां गच्छन्तीत्यर्थः। विभाती विशेषेण प्रकाशयन्ती सा अर्भात् अल्पात् पुत्तिकादेः सकाशात् न ईषते न गच्छति। तमपि प्रकाशयति। तथा महः महतो मेर्वादेः सकाशात् न ईषते न गच्छति तमपि प्रकाशयति[5]। पूर्वं लोकद्वयं प्रकाशते इत्युक्तम्। इदानीम् अस्मिंल्लोके[6] परमाण्वादि पर्वतपर्यन्तं कृत्स्नं प्रकाशयतीत्यर्थः ॥

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥ ७ ॥

अभ्राताऽइव। पुंसः। एति। प्रतीची। गर्तऽआरुक्ऽइव। सनये। धनानाम्।
जायाऽइव। पत्ये। उशती। सुऽवासाः। उषाः। हस्राऽइव। नि। रिणीते। अप्सः ॥ ७ ॥

अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन् प्रति प्रतीची स्वकीयस्थानात् प्रतिनिवृत्तमुखी सती एति गच्छति। यथा लोके भ्रातृरहिता योषित् स्वोचितवासोऽलंकारादिलाभाय[7] पितॄन् एति। सति भ्रातरि स एव उचितप्रदानादिना सम्यक् तोषयति। तदभावात् पितरमेव प्राप्नोति। यद्वा। सति

---

१. क्ष-ञ-ट–पित्रोरित्यनेन। २. क्ष-ञ-ट–विशेषेण। ३. क्ष-ञ-ट–शाशद्यमाना। ४. क्ष-ञ-ट–शाशद्यमानः। ५. क्ष-ञ-ट–प्रकाशयतीत्यर्थः। ६. क्ष-ञ-ट–अस्मिन्नेव लोके। ७. क्ष-ञ-ट–स्वोचितवासोऽलंकाराय।

स्वभ्रातरि स एव पितुः पिण्डदानादिकं संतानकृत्यं[1] करोति । तस्याभावात् स्वयमेव तत्कर्तुं पित्रादीन् गच्छति । तद्वदियम् उषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशदानाय[2] वा पितृभूतं[2] सूर्यम् आभिमुख्येन गच्छति । अयमेको दृष्टान्तः । तथा ᵛधनानां ᵛसनये ᵛगर्तारुगिव[3] इत्यपरो दृष्टान्तः[3] । गर्त इति गृहनाम ' कृदरो गर्तः ' ( नि. ३. ४. ३ ) इति तन्नामसु पाठात् । अत्रौचित्येन राजपुरुषैः न्यायनिर्णेतृभिश्च अधिष्ठितं[4] स्थानमुच्यते तदारोहतीति गर्तारुक् । यथा लोके काचित् गतभर्तृका योषित् धनानां स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति । तां तु सभ्याः विचार्य यदीयं रिक्थं लभते चेत् अक्षैः संताड्य तदीयं धनं वितरन्ति । तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां[5] सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति । देशविशेषाचारमपेक्ष्यैवं दृष्टान्तितम् । किंच ᵛपत्ये ᵛउशती कामयमाना ᵛसुवासाः ᵛजायेव । अयमपरः[6] दृष्टान्तः । यथा च लोके सुवासा दुकूलादिशोभनवसना स्वलंकृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणादिना शोभमाना विशेषेण पतिं भोगाय कांक्षन्ती तेन सह संक्रीडते तथा इयम्[7] ᵛउषाः[7] अतिनैशेन[8] अन्धकारेणावृतत्वात् मलिनवसनापि प्रभाते स्वतेजसावृतत्वात् सुवसना सती पतिस्थानीयेन सूर्येण साकं संक्रीडमाना ᵛहस्रेव हसनेव[9] ᵛअप्सः दन्तस्थानीयानि रूपाणि नीलपीतादीनि । यद्वा । निरूप्यमाणानि पदार्थजातानि । ᵛनि ᵛरिणीते नितरां रिणीते गमयति प्रकाशयतीत्यर्थः[10] । यथा लोके काचित् रमणीया योषित् स्मितव्याजेन दन्तान् विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः । अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः–' अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी संतानकर्मणे पिण्डदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुर्गृणातेः सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते ' इति, ' जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान्विवृणुते ' ( निरु. ३. ५ ) इति च ॥

स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।
व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगाइव व्राः ॥ ८ ॥

स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप । एति । अस्याः । प्रतिचक्ष्यऽइव ।
विऽउच्छन्ती । रश्मिऽभिः । सूर्यस्य । अञ्जि । अङ्क्ते । समनगाःऽइव । व्राः ॥ ८ ॥

एकस्मादेवान्तरिक्षादुत्पन्नत्वात् परस्परं स्वसृभावः । तथाप्यह्नः प्राथम्यात् तेजस्वित्वाच्च ज्यायस्त्वम् । स्वयमेव सरतीति वा ᵛस्वसा । रात्रिः ᵛस्वस्रे ᵛज्यायस्यै उत्करीत्या[11] ज्येष्ठायै ᵛयोनिम् उत्पत्तिस्थानम् अपररात्ररूपम् ᵛअरैक्[12] अरिचत् प्रादात् प्ररेचयतीत्यर्थः । तथा च पूर्वत्राम्नातं–'रात्र्युषसे

---

१. क्ष-ञ-ट–' संतानकृत्यम् ' नास्ति । २. क्ष-ञ-ट–स्वप्रकाशपितृभूतम् । ३. क्ष-ञ-ट–गर्तारुगिव गर्तारोहिणीवेत्यपरो दृष्टान्तः । ४. च-फ–आस्थितम् । ५. क्ष-ञ-ट–प्रकाशादीनाम् । ६. क्ष-ञ-ट–अयमप्यपरः । ७. क्ष-ञ-ट–इयमप्युषाः । ८. ज्ञ–अपि नैशेन । ९. क्ष-ट–समनेनेव । स्फायितञ्चीत्यादिना रक् । १०. क्ष-ञ-ट–' प्रकाशयतीत्यर्थः ' इत्यस्यानन्तरं ' री गतिरेषणयोः । क्रैयादिकः । व्यत्ययेनात्मनेपदम् । प्वादीनां ह्रस्वः इति ह्रस्वत्वम् । अन्तर्भावितण्यर्थोऽयम् ' इत्यधिकम् । ११. क्ष-ञ-ट–उत्कृनीत्या । १२. क्ष-ञ-ट–आरैक् ।

योनिमारैक् ' ( ऋ. सं. १. ११३. १ ) इति। दत्त्वा च ᵛअस्याः उत्पन्नाया उषसः ᵛप्रतिचक्ष्येव । ज्ञापयित्वेव स्वयमपसृत्यैव गच्छति । ज्यायस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्संनिधौ स्थातुमनुचितमिति विज्ञायैवापगच्छतीति भावः । एवमुत्पन्ना एषा ᵛसूर्यस्य ᵛरश्मिभिः ᵛव्युच्छन्ती तमो विवासयन्ती ᵛअञ्जि व्यञ्जकं तेजः । यद्वा । अञ्जि व्यक्तं जगत् । ᵛअङ्क्ते अनक्ति प्रकाशयति । किमिव । ᵛसमनगाइव । सम्यगननहेतव आपः समनाः । ता गच्छन्तीति समनगाः विद्युतः । ᵛव्राः व्राताः । विद्युत्संघा इव[1] । यद्वा । सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः । ते इव व्रा व्राताः संघीभूताः । ते यथाञ्जते जगत्प्रकाशयन्ति तथेत्यर्थः ॥ व्रात इत्यत्र तकारलोपश्छान्दसः ॥

आसां पूर्वासामहसु स्वसृणामपरा पूर्वामभ्येति पश्चात् ।
ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥ ९ ॥

आसाम् । पूर्वासाम् । अहऽसु । स्वसृणाम् । अपरा । पूर्वाम् । अभि । एति । पश्चात् ।
ताः । प्रत्नऽवत् । नव्यसीः । नूनम् । अस्मे इति । रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥९॥

ᵛस्वसृणां परस्परं स्वसृभावमापन्नानां स्वयं सरन्तीनां वा ᵛपूर्वासां पुरातनीनाम् ᵛआसाम्[2] उषसां मध्ये ᵛअहसु अहःसु[3] प्रतिदिनम् ᵛअपरा अन्या अद्यतन्युषाः ᵛपूर्वाम् अतीतदिवससंबन्धिनी-मुषसं ᵛपश्चात् अनुसृत्य ᵛअभ्येति । अभिमुखं गच्छति अव्यवधानेन गच्छतीत्यर्थः । सर्वेष्वहःसु एवमे-वाभ्येति । ᵛनव्यसीः नवीयस्यो नवतरा आगामिन्यः[4] ᵛताः ᵛउषासः उषसः अपि ᵛनूनं निश्चयं ᵛप्रत्न-वत् पुरातन्य इव ᵛसुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्यः ᵛअस्मे अस्माकं ᵛरेवत् बहुधनविशिष्टं यथा भवति तथा ᵛउच्छन्तु प्रकाशयन्तु । पूर्वतन्यो यथौच्छन् तथा आगामि-न्योऽपि उच्छन्तु इत्यर्थः ॥

प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु ।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ॥ १० ॥

प्र । बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः । ससन्तु ।
रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जरयन्ती ॥ १० ॥

हे ᵛमघोनि मघवति अस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वति ᵛउषः हे उषोदेवि ᵛपृणतः हविष्प्रदान् अस्मान् यजमानान् ᵛप्रबोधय प्रज्ञापय प्रतिबुद्धान् कुरु । किंच ᵛपणयः व्ययासहिष्णवो वणिजः ।

---

१. क्ष-ञ-ट-' इव ' इत्यस्यानन्तरं ' जनसनखनेति गमेर्विट् । विड्वनोरित्यात्वम् । कृदुत्तरपद-प्रकृतिस्वरत्वम् ' इत्यधिकम् । २. क्ष-ञ-ट-आसामिदानी वर्तमानानाम् । ३. क्ष-ञ-ट- अहःसु अन्त्यलोपश्छान्दसः । ४. क्ष-ञ-ट-' आगामिन्यः ' इत्यस्यानन्तरं ' नवशब्दात् ईयसुनि ईकारलोपश्छान्दसः' इत्यधिकम् ।

'पणिर्वणिग्भवति' ( निरु. २. १७ ) इति यास्कः । पणय इव लुब्धकाः Vअबुध्यमानाः यागादीन् अकुर्वाणा अदानशीला अस्मच्छत्रवः Vससन्तु स्वपन्तु दीर्घनिद्रा भवन्तु म्रियन्तामित्यर्थः । तथा च मन्त्रान्तरं–'ससन्तु त्या अरातयो बोधन्तु शूर रातयः' (ऋ. सं. १.२९.४) इति । किंच हे Vमघोनि अस्मद्दत्तहविर्भिस्तद्वति हे उषः Vमघवद्भ्यः हविर्लक्षणान्नवद्भ्यो यजमानेभ्यस्तेषामर्थं Vरेवत् धनवत् समृद्धिमत्[1] Vउच्छ विभाहि । किंच हे Vसूनृते सुष्ठु मनुष्याणां नेत्रि देवि Vजरयन्ती सर्वप्राणिनः क्षपयन्ती त्वं Vस्तोत्रे स्तुतिकर्त्रे यजमानाय तदर्थं Vरेवत् धनवत् समृद्ध्यर्थम् उच्छेति शेषः[2] ॥ ॥ ८ ॥

**अवेयमश्वैद्युवतिः पुरस्ताद्युङ्क्ते गवामरुणानामनीकम् ।**

**वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥ ११ ॥**

अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते । गवाम् । अरुणानाम् । अनीकम् ।

वि । नूनम् । उच्छात् । असति । प्र । केतुः । गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥ ११ ॥

Vइयम् उषाः Vयुवतिः यौवनोपेतयोषित्स्थानीया । यद्वा । सर्वेषु भावेषु मिश्रयन्ती । Vपुरस्तात् पूर्वस्यां दिशि Vअव Vअश्वैत् अत्यर्थमागच्छति वर्धते वा[3] । अत्र अवशब्दो विनिग्रहार्थीयः[4] 'न्यवेति विनिग्रहार्थीयौ' ( निरु. १. ३ ) इति यास्केनोक्तत्वात् । तत्कथमवगम्यते इति तत्राह । इयम्[5] Vअरुणानाम् अरुणवर्णानां Vगवां प्रसिद्धानाम् एतन्नामकानामश्वानां वा Vअनीकं समूहं Vयुङ्क्ते रथे योजयति[6] । 'अरुण्यो गाव उषसाम् । श्यावाः सवितुः' ( नि. १. १५. ७-८ ) इति । यथा लोके वाहनसंनाहं दृष्ट्वा प्रयाणमनुमीयते तथा अत्रापि अरुणरश्मीनामश्वानां दर्शनात् उषा आगच्छतीत्यध्यवसीयते । यद्वा । अरुणानां रश्मीनां समूहं युङ्क्ते । तथा Vनूनं निश्चयमेषा[7] Vवि Vउच्छात् तमो विवर्जयिष्यति । यत इयं गा युनक्ति अत एव कारणात् यथा लोकेऽश्वसंनाहं[8] दृष्ट्वा उदयोऽनुमीयते[8] तथात्रापीत्यर्थः । तादृशी सा Vअसति असत्प्राये नीरूपेऽन्तरिक्षे तिरोधायकत्वात् अशोभने तमसि वा Vकेतुः केतुस्थानीया ज्ञापयित्री प्रकर्षेण विविधं भासते इति शेषः । उपसर्गवशाद्योग्यक्रियाध्याहारः । यद्वा । असति तमोरूपेऽन्धकारे Vप्र केतुः प्रकर्षेण ज्ञापयित्री सती नूनं व्युच्छादिति पूर्वत्रान्वयः । तस्मिन् काले Vअग्निः आहवनीयादिरूपः Vगृहंगृहं सर्वयजमानगृहम् अग्निहोत्राद्यर्थम् Vउप Vतिष्ठाते उपतिष्ठते[9] दीप्यते इत्यर्थः ॥

---

१. क्ष-ञ-ट–'समृद्धिमत्' इत्यस्यानन्तरं 'रयेर्मतौ बहुलमिति संप्रसारणम् । रेशब्दाच्चेति मतुप उदात्तत्वम्' इत्यधिकम् । २. क्ष-ञ-ट–'शेषः' इत्यस्यानन्तरं 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च इति मित्वात् मितां ह्रस्वः इति ह्रस्वत्वम्' इत्यधिकम् । ३. क्ष-ञ-ट–'वा' इत्यस्यानन्तरं 'श्वयतेश्छान्दसे लुङि सिचि वृद्धौ इडभावे रूपम्' इत्यधिकम् । ४. क्ष-ञ-ट–विनिग्रहार्थः । ५. क्ष-ञ-ट–यत इयम् । ६. क्ष-ञ-ट–'योजयति' इत्यस्यानन्तरम् 'अरुण्यो गाव उषसां प्रतिनियतत्वात् । तथा च निरुक्तम्' इत्यधिकम् । ७. च-झ-फ-ष–निश्चितमेषा । ८. त–लोके संनाहं दृष्ट्वा जयोऽनुमीयते । ९. क्ष-ञ-ट–'उपतिष्ठते' इत्यस्यानन्तरं 'संगच्छते । आडागमः । उपाद्देवपूजासंगतिकरणेत्यात्मनेपदम्' इत्यधिकम् ।

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ १२ ॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ ।
अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥ १२ ॥

ते तव व्युष्टौ सत्यां वयश्चित् गमनवन्तः पक्षिणोऽपि । चिदित्येष अपिशब्दार्थः निपातानामनेकार्थत्वात् । 'उच्चावचेष्वर्थेषु निपतन्ति' ( निरु. १. ४ ) इति यास्केनोक्तत्वात् । वसतेः निवासस्थानान्नीडादेः उत् ऊर्ध्वम् अपप्तन् पतन्ति । पूर्ववाक्ये 'गृहं गृहमुपतिष्ठातेऽग्निः' इत्युक्तत्वात्तदपेक्षया अपिशब्दः[1] । किंच नरश्च मनुष्याश्च पितुभाजः अन्नवन्तोऽन्नार्थिनः कृषि-वाणिज्यादिकर्तारः स्वस्वव्यापारार्थम् उद्गुन्मुखा अपप्तन् गच्छन्ति । तथा[2] मन्त्रान्तरं–'पद्वदीयत उत्पातयति पक्षिणः' ( ऋ. सं. १. ४८. ५ ) इति । एवं सत्यां हे देवि देवनशीले उषोदेवते अमा गृहे देवयजनाख्ये सते तिष्ठते यजमानाय तदर्थम् । अमेति गृहनाम 'अमा दमे' ( नि. ३. ४. ११ ) इति तन्नामसु पठितत्वात् । यद्वा । अमा सह हूयमानेनाग्निना सह निवसते यजमानाय । अमा वसेतामित्यादौ सहार्थे प्रयोगात् । मर्त्याय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय भूरि[3] वामं बहु शोभनं धनं वहसि प्रापयसि[3] ॥

अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः ।
युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजम् ॥ १३ ॥

अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वम् । उशतीः । उषसः ।
युष्माकम् । देवीः । अवसा । सनेम । सहस्रिणम् । च । शतिनम् । च । वाजम् ॥ १३ ॥

एवं सूक्तद्वयोक्तरीत्या[4] बहुधा स्तुत्वा तां च स्तुतिमनया निवेदयित्वा स्वाभीष्टं प्रार्थयते । हे स्तोम्याः । स्तोमः स्तोत्रम् । तदर्हन्तीति स्तोम्याः स्तुत्यर्हा उषसः । यतो यूयं तादृश्यः अतः मे मत्स्वभूतेन ब्रह्मणा सूक्तद्वयगतमन्त्ररूपेण स्तोत्रेण अस्तोढ्वम् स्तुता भवत[5] । किंच हे उषासः उषसः उशतीः स्तोतॄन् अस्मान् अस्मत्समृद्धिं वा कामयमाना यूयम् अवीवृधध्वम् अस्मान् प्रवर्धयत । किंच हे देवीः देव्यो देवनशीलाः युष्माकम् अवसा युष्मत्संबन्धिना रक्षणेन वयं सहस्रिणं सहस्रसंख्याकम् अभीष्टं धनं सनेम लभेमहि । तथा शतिनं च वाजं शतसंख्याकम् अपरिमितं धनं सनेम । युष्मत्कृतेन शतसहस्रपरिमितधनादिरूपरक्षणेन वयमपि अर्थिभ्यः शतसहस्रपरिमितस्य धनस्य सनितारो भवेमेत्यर्थः ॥ ॥ ९ ॥

---

१. क्ष-ञ-ट–'अपिशब्दः' इत्यस्यानन्तरं 'पततेश्छान्दसे लुङि ऌदित्त्वादङि परतः पतः पुम् इति पुमागमः' इत्यधिकम् । २. क्ष-ञ-ट–तथा च । ३. क्ष-ञ-ट–भूरि । प्रभूतं वामं वननीयं धनकनकादिकं रूपं वहसि ददासि । ४. क्ष-ञ-ट—सूक्तद्वयेनोक्तनीत्या; ज-ज्ञ-झ-त-फ-ष– सूक्तद्वयोक्तनीत्या । ५. क्ष-ञ-ट–'भवत' इत्यस्यानन्तरं 'कर्मणि लुङि इणः षीध्वं इति ध्वकारस्य षत्वम्' इत्यधिकम् ।

'प्राता रत्नम्' इति सप्तर्चं पञ्चमं सूक्तं काक्षीवतम्। दानस्य स्तूयमानत्वात् दानदेवत्यं 'या तेनोच्यते सा देवता' (अनु. २. ५) इति परिभाषितत्वात्। त्रैष्टुभम्। उपेत्यादिके द्वे जगत्यौ। 'प्राता रत्नं सप्त स्वनयस्य दानस्तुतिरुपजगत्यौ' इत्यनुक्रमणिका ॥

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्या नि धत्ते ।
तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥ १ ॥

प्रातरिति । रत्नम् । प्रातःऽइत्वा । दधाति । तम् । चिकित्वान् । प्रतिऽगृह्य । नि । धत्ते ।
तेन । प्रऽजाम् । वर्धयमानः । आयुः । रायः । पोषेण । सचते । सुऽवीरः ॥ १ ॥

अत्रेतिहासमाचक्षते। दैर्घतमसः कक्षीवान्नाम ऋषिः ब्रह्मचर्यं चरिष्यन् वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा वेदान् सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः स्वगृहं प्रति प्रयास्यन् मध्ये मार्गे रात्रौ विश्रान्तः। प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजा अनुचरैः संक्रीडमानः अकस्मात् कक्षीवतः अन्तिकमाससाद। स च रभसा प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीये आसने उपवेश्य अस्य सौन्दर्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ भगवन् कस्य पुत्रः किंनामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तान्तं च आचचक्षे। स च राजा संभाव्यः इत्यवगत्य मुदितमनाः स्वगृहं प्राप्य अस्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्याः शतनिष्कानश्वशतं पुंगवानां शतं गवां षष्ट्युत्तरसहस्रं पुनरेकादशरथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत् ॥ ननु कक्ष्या नाम अश्वबन्धनी रज्जुः। तद्वान् कक्षीवान्। अश्वबन्धनं च राज्ञ एवोचितम्। अतोऽस्य राजन्यत्वात्[1] प्रतिग्रहो नोपपद्यते। 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' (मनु. १०. ७६) इत्युक्तत्वात्। तस्मात् ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति। नैष दोषः। यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तथापि तेन कलिङ्गेन[2] स्वयं वृद्धत्वात् अपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिः उशिग्नामिकाम् अपत्योत्पादनाय प्रेषितया राजमहिष्या अतिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलंकृत्य स्वप्रतिनिधित्वेन प्रेषिताम् उशिग्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं[3] कृत्वा[3] तया सह रेमे। तदुत्पन्नः कक्षीवान्नाम ऋषिः। एतत्सर्वमस्माभिः पूर्वाध्याये 'नासत्याभ्याम्' (ऋ. सं. १. ११६) इत्यत्र सूक्ते विस्तरेण प्रतिपादितम्। अतः अस्य क्षत्रियसंबन्धात् कक्षीवानिति नाम उपपन्नम्। दीर्घतमसः परमर्षेः उत्पन्नत्वेन ब्राह्मणत्वात् प्रतिग्रहोऽपि उपपन्न एव। इदमादि सूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकम्। ननु अनुक्रमण्यां 'स्वनयस्य दानस्तुतिः' इति 'दानतुष्टो भावयव्यं तुष्टाव' इति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यते इत्युच्यते। उत्तरसूक्तस्य प्रथमायाम् ऋचि 'अधिक्षियतो भाव्यस्य' इति दातुर्भावयव्यस्य श्रूयमाणत्वात् तत्प्राथम्यमुपजीव्य पृथगुपात्तम्। वस्तुतस्तु पितुर्नाम्ना पुत्रस्य[4] व्यवहर्तव्यत्वात् तथा 'आ रुद्रासः' इत्यादौ बहुशः प्रयोगदर्शनात् 'स्वनयेन दत्ता' इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्च उभयत्रापि दातृप्रतिग्रहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धम्[5] ॥ स च कक्षीवान् आनीतं सर्वं पितुर्निवेदयन्

---

१. क्ष-ज्ञ-झ-ञ-ट–राजत्वात्। २. क्ष-ञ-ट–कलिङ्गराजेन। ३. क्ष-ञ-ट–ऋषिः पवित्रीकृतया। ४. क्ष-ञ-ट–पुत्रस्यापि। ५. क्ष-ख-ज-झ-ञ-ट-फ–सिद्धम्।

परोक्षेणैव दानप्रकारं प्रशंसति । स्वनयो नाम राजा vप्रातरित्वा प्रातरेव आत्मनः सकाशमागतः सन्[1] vरत्नं रमणीयं निष्कादिकं vप्रातः प्रभातकाले vदधाति अस्मत्संनिधौ स्थापयति ददाति । vतं स्थापितं सर्वं vचिकित्वान् चेतनावान् अदुष्टमित्यवगतवान् vप्रतिगृह्य स्वीकृत्य vनि vधत्ते पितुः समीपे स्थापयति । अनन्तरं vतेन दत्तेन निष्कादिना vप्रजां पुत्रभृत्यादिरूपां vवर्धयमानः पोषयन् vआयुः जीवितं च वर्धयन् vसुवीरः शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतः सन् vरायस्पोषेण धनानां पुनःपुनर्वर्धनेन vसचते । असौ राजा संगच्छतामिति तव दातुराशिषं प्रार्थयते ॥

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥ २ ॥

सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः । बृहत् । अस्मै । वयः । इन्द्रः । दधाति ।
यः । त्वा । आऽयन्तम् । वसुना । प्रातःऽइत्वः । मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति ॥२॥

अत्र कक्षीवतः पिता आनीतेन धनेन संतुष्टः राजानं बहुप्रकारेण आशास्ते । असौ स्वनयो राजा vसुगुः vअसत् । शोभनैर्बहुभिर्गोभिस्तद्वान् भवतु । तथा vसुहिरण्यः सुष्ठु हितरमणीयैर्धनैस्तद्वान् भवतु । तथा vस्वश्वः शोभनैरश्वैस्तद्वान् सन्[2] । vअस्मै राज्ञे प्रदात्रे vबृहत् प्रभूतं vवयः अन्नम् vइन्द्रः परमेश्वरो धर्मदेवता vदधाति दधातु ददातु । यतः अयं राजा अस्मै गोहिरण्याश्वान्नानि बहुसंख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थना उचितैव । कस्यैवमाशीरिति स उच्यते । vयः यो राजा vप्रातरित्वः प्रातरागामिन्नतिथे पुत्र[3] vआयन्तं गुरुकुलात् आगतं[4] vपदिं पथिकं यदृच्छया गन्तारं vत्वा त्वां vवसुना अन्नसाधनेन गवादिधनेन vउत्सिनाति गमनतः उत्कृष्टं बध्नाति[5] गतिं निरुणद्धीत्यर्थः । प्रतिबन्धे दृष्टान्तः उच्यते । vमुक्षीजयेव vपदिम् । मुच्यमाना सती बन्धनं जनयतीति मुक्षीजा मृगपक्ष्यादिबन्धनी रज्जुः । तया पाशको यथा पदिं गन्तारं मृगपक्ष्यादिकम् उत्सिनाति बध्नाति तथा मयाननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना[6] यो राजा तोषयति स एवं भवत्विति । पदिरिति पदं व्याचक्षाणेन यास्केन तदुदाहरणमयं[7] मन्त्रः[7] व्याख्यातः ‘ सुगुर्भवति[8] ततनाच्च ’ [8] ( निरु. ५. १९ ) इति ॥

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन ।
अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः ॥ ३ ॥

आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् । इष्टेः । पुत्रम् । वसुऽमता । रथेन ।
अंशोः । सुतम् । पायय । मत्सरस्य । क्षयत्ऽवीरम् । वर्धय । सूनृताभिः ॥ ३ ॥

---

१. क्ष-ञ-ट–‘सन्’इत्यस्यानन्तरं ‘अन्येभ्योऽपि दृश्यन्ते इति क्वनिपि तुक्’ इत्यधिकम् । २. झ–असत्; क्ष-ञ-ट– असत् । बहुव्रीहावाद्युदात्तत्वम् । ३. क्ष-ञ-ट–‘ पुत्र ’ इत्यस्यानन्तरं ‘ वत ( न ) उपसंख्यानमिति संबुद्धौ नकारस्य रुत्वम् ’ इत्याधिकम् । ४. क्ष-ञ-ट–आगच्छन्तम् । ५. क्ष-ञ-ट–बध्नाति । षिञ् बन्धने । क्रैयादिकः । ६. क्ष-झ-ञ-ट–यथेष्टदानादिना । ७. क-ज-झ-ण-ट-व–तदुदाहरणतया अयं मन्त्रः; फ–तदुदाहरणतया मन्त्रः । ८. क-क्ष-ज-झ-ञ-ट-ण-व-ष- इत्यादिषु ‘ सुगुर्भवति...ततनाच्च ’ इति निरुक्तग्रन्थः पूर्णत्वेन उद्धृतः ।

vप्रातः पूर्वेद्युः प्रभातकाले अयं[1] धनं दत्तवान्[1] तस्मिन्नेव काले vसुकृतं शोभनस्य कर्तारं त्वाम् vइच्छन् प्राप्तुमिच्छन् कदा द्रक्ष्यामीति कामयमानोऽहम् vअद्य अस्मिन् दिने इदानीम् vआयं प्राप्तोऽस्मि[2]। अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथापि अद्य आयम् इत्युक्तत्वादर्थात्पूर्वेद्युः प्रातः[3] इति गम्यते। कीदृशम्[4]। vइष्टेः इष्टस्येष्टसाधनस्य यागस्य वा vपुत्रं पुरु त्रातारम्। 'पुत्रः पुरु त्रायते' ( निरु. २. ११ ) इति यास्कः। कर्तारमित्यर्थः। केन साधनेनेति तदुच्यते। vवसुमता vरथेन समृद्धधनवता रथेन साधनेन। यद्वा। तेन सहितः इति सहार्थे तृतीया। किंच मदानीतेन समृद्धेन धनेन vअंशोः अंशुमतो वल्लीरूपस्य vमत्सरस्य मादनसाधनस्य[5] सोमस्य। 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' ( निरु. २. ५ ) इति निरुक्तम्। तस्य vसुतम् अभिषुतं रसं vपायय आत्मानं पायय इष्टसाधनं सोमयागं कुर्वित्यर्थः। कृत्वा च vक्षयद्वीरं क्षियन्तो निवसन्तो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारं vसूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः vवर्धय समृद्धं कुरु। पुत्रभृत्यादिवीरैः यथा प्रवृद्धो भवति तथा कामयेत्यर्थः॥

उप॑ क्षरन्ति॒ सिन्ध॑वो मयो॒भुव॑ ईजा॒नं च॑ य॒क्ष्यमा॑णं च धे॒नवः॑ ।
पृ॒णन्तं॑ च॒ पपु॑रिं च श्रव॒स्यवो॑ घृ॒तस्य॒ धारा॒ उप॑ यन्ति वि॒श्वतः॑ ॥ ४ ॥

उप॑ । क्ष॒रन्ति॒ । सिन्ध॑वः । म॒यः॒ऽभुवः॑ । ई॒जा॒नम् । च॒ । य॒क्ष्यमा॑णम् । च॒ । धे॒नवः॑ ।
पृ॒णन्त॑म् । च॒ । पपु॑रिम् । च॒ । श्र॒व॒स्यवः॑ । घृ॒तस्य॑ । धाराः॑ । उप॑ । य॒न्ति॒ । वि॒श्वतः॑ ॥ ४ ॥

पूर्वस्यामृचि आनीतेन धनेन सोमयागं कुर्वित्युक्तम्। तमेव सोमयागं फलप्रदर्शनेन स्तौति। vसिन्धवः स्यन्दनशीलाः प्रस्तुतपयोधाराः[6]। 'सिन्धुः स्यन्दनात्' ( निरु. ९. २६ ) इति यास्कः। vमयोभुवः सुखभावयित्र्यः[7]। मय इति सुखनाम 'मयः स्यूमकम्' ( नि. ३. ६. ७ ) इति तन्नामसु पाठात्। vधेनवः प्रीणयित्र्यो गावः vईजानं सोमयागमनुतिष्ठन्तं तथा vयक्ष्यमाणं यक्ष्ये इति प्रणतिं[8] कुर्वन्तं vच। न केवलमीजानं अपि तु यक्ष्ये इति अध्यवसितवन्तमपि vउप उपेत्य vक्षरन्ति स्रवन्ति प्रीणयन्तीत्यर्थः। न च पूर्वस्यामृचि सोमं पिबेत्युक्तत्वात् सर्वेषां सोमयागानाम् अग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य[9] 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति स्वर्ग एव फलत्वेन श्रुतः न गवादिकमिति वाच्यम्। स्वर्गवत् गवादिकामनयापि सोमयागस्य कर्तुं शक्यत्वात्। न केवलं सोमयागमनुतिष्ठतामेव महत्फलम् अपि तु सुकृतसाधनानि कर्मान्तराणि अधितिष्ठतामपि[10] महत् फलमस्त्येवेति दर्शयति। vपृणन्तं पितॄन् प्रीणयन्तं[11] vपपुरिं[12] प्रीणनशीलम् इष्टदातारं[13] प्राणिनः सर्वदा प्रीणयन्तं vच पुरुषं vश्रवस्यवः अन्नमिच्छन्त्यः अन्नसमृद्धिहेतवः vघृतस्य vधाराः। यद्वा। घृतकुल्याः। vविश्वतः सर्वतः vउप उपेत्य vयन्ति प्राप्नुवन्ति प्रीणयन्तीत्यर्थः॥

---

१. क्ष-च-ज-ञ-ट-फ-व—यदा धनं दत्तवान्; ख-च-फ—यदा धनं लब्धवान् अस्मि। २. क्ष-ञ-ट—प्राप्तोऽस्मि। एतेर्लङि उत्तमैकवचने रूपम्। ३. क्ष-ञ-ट—'प्रातः' नास्ति। ४. क्ष-ञ-ट—कीदृशं त्वाम्। ५. क्ष-ञ-ट—मोदसाधनस्य। ६. क्ष-ज्ञ-ञ-ट—प्रस्नुवत्पयोधाराः; ख-च-फ—प्रस्तुतपयोध(धा)राः; क-ज—प्रस्रवत्पयोध(धा)राः। ७. क्ष-ञ-ट—सुखस्य भावयित्र्यः। ८. क्ष-ञ-ट—आकूतिम्। ९. क्ष-ञ-ट—प्रकृतित्वात् तस्य। १०. क्ष-ञ-ट—अनुतिष्ठतामपि। ११. क्ष-ञ-ट—प्रीणयन्तम्। पॄ पालनपूरणयोः। क्र्यादिकः। प्वादीनां ह्रस्वः इति ह्रस्वत्वम्। १२. क्ष-ञ-ट—पपुरिं प्रीणनशीलं प्रीणनेच्छावन्तं च। आदृगमहन इति किन्। उदोष्ठ्यपूर्वस्य इति उत्वं च। १३. क-ज्ञ—इष्टदानादिना; ख-फ—इष्टदानात्।

**नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति ।**
**तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥ ५ ॥**

नाकस्य । पृष्ठे । अधि । तिष्ठति । श्रितः । यः । पृणाति । सः । ह । देवेषु । गच्छति ।
तस्मै । आपः । घृतम् । अर्षन्ति । सिन्धवः । तस्मै । इयम् । दक्षिणा । पिन्वते । सदा ॥ ५ ॥

सोमयागप्रशंसाप्रसङ्गेन सामान्यतो दानम् एतदादिभिस्त्रिभिः प्रशंसति । यद्वा । सोमस्यैव स्तुतत्वात्[1] दक्षिणाशब्दस्य यागे एव प्रसिद्धत्वाच्च आ सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते । ᵛयः यो मर्त्यः ᵛपृणाति हविरादिदानेन देवादीन् प्रीणाति ᵛसः ᵛनाकस्य । कमिति सुखनाम । तद्विरुद्धम् अकम् । न विद्यते अकं दुःखं तत्साधनं पापं वेति नाको द्युलोकः । तथा च श्रूयते–' न वा अमुं लोकं जग्मुषे किं[2] च नाकम् ' ( निरु. २. १४; का. सं. २१. २ ) इति[2] । तस्य ᵛपृष्ठे उन्नते उपरिदेशे[3] ᵛश्रितः सन्[3] ᵛअधि अधिकमाकल्पान्तं ᵛतिष्ठति । यद्वा । अधि तिष्ठति । अधिष्ठाय प्रमुखो भूत्वा तिष्ठति । न केवलं स्वर्गाश्रयणं किंतु ᵛदेवेषु मध्ये ᵛगच्छति वर्तते स्वयमेव देवो भवतीत्यर्थः । ᵛह इति प्रसिद्धौ । ᵛतस्मै[4] प्रीणयित्रे पुरुषाय ᵛसिन्धवः स्यन्दनशीलाः ᵛआपः ᵛघृतं तेजोवत् सारम् ᵛअर्षन्ति गच्छन्ति रसवत्यो भवन्तीत्यर्थः । किंच ᵛइयं भूमिरपि ᵛदक्षिणा सस्यादिफलसंपादनदक्षा सती ᵛसदा सर्वकालं ᵛपिन्वते सेचयति तोषयतीत्यर्थः । दातुर्जीवनसाधकान्नोदकानि[5] रुचिराणि समृद्धानि भवन्तीत्यर्थः ॥

**दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।**
**दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥ ६ ॥**

दक्षिणाऽवताम् । इत् । इमानि । चित्रा । दक्षिणाऽवताम् । दिवि । सूर्यासः ।
दक्षिणाऽवन्तः । अमृतम् । भजन्ते । दक्षिणाऽवन्तः । प्र । तिरन्ते । आयुः ॥ ६ ॥

ᵛदक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणाम् । इच्छब्दः एवकारार्थः । तेषामेवार्थे ᵛइमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवन्तीति शेषः । किंच ᵛदक्षिणावताम् एव ᵛदिवि द्युलोके ᵛसूर्यासः सूर्यसंबन्धिनो लोकाः तदनुगृहीता भोगा वा समृद्धा भवन्ति । किंच ᵛदक्षिणावन्तः एव ᵛअमृतं जरामरणरहितं स्थानं ᵛभजन्ते सेवन्ते । यद्वा । दानेनापहतपाप्मानः आत्मानं विदित्वा अमृतमविनाशं मोक्षं भजन्ते प्राप्नुवन्ति । ' यज्ञेन दानेन ' ( बृ. उ. ४. ४. २२ ) इति श्रुतेः । किंच ᵛदक्षिणावन्तः एव ᵛआयुः ᵛप्र ᵛतिरन्ते अतिदीर्घमेवमायुष्यं[6] वर्धयन्ते लभन्ते[6] । प्रपूर्वस्तिरतिर्वर्धनार्थः । इत् इति सर्वत्र संबध्यते ॥

---

१. क्ष-ख-ज-झ-ञ-ट-फ-व–प्रस्तुतत्वात् । २. क्ष-ञ-ट–नभ्राण्नपात् इति प्रकृतिभावः । ३. क्ष-ञ-ट–उपरिदेशे देवेषु मध्ये श्रितः तैरेव सेवितः सन् । ४. क-झ–किंच तस्मै । ५. क्ष-ञ-ट–जीवनसाधनान्युदकादीनि । ६. क्ष-ञ-ट–अतीव दीर्घमायुष्यं वर्धयन्ते लभन्ते ।

मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।
अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥ ७ ॥

मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः ।
अन्यः । तेषाम् । परिऽधिः । अस्तु । कः । चित् । अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥ ७ ॥

अन्वयव्यतिरेकाभ्यां दानं प्रशंसितुमाह । ^v^पृणन्तः देवादीन् हविरादिना प्रीणयन्तः सन्तः ^v^दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखम् ^v^एनः तत्साधनं पापं च ^v^मा ^v^आरन् मा प्राप्नुवन्[1] । न केवलं दातार एव अपि तु ^v^सूरयः देवानां स्तोतारो विद्वांसः ^v^मा ^v^जारिषुः जरया न जीर्णा[2] भवेयुः[2] । तथा ^v^सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः । तर्हि एषाम्[3] अन्यो जनः[3] क इति स उच्यते । ^v^तेषां दातॄणां स्तोतॄणां वा ^v^अन्यः तेभ्योऽन्यो यः कोऽपि पुरुषः ^v^परिधिः पापस्य परितो धारकः ^v^अस्तु । यद्वा । अन्यो यः कश्चन पापदेवः तेषां परिधिस्थानीयो व्यवधायकोऽस्तु । यथा अग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वत् । अथवा । अन्यो धर्मविशेषः तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु । तर्हि किं[4] प्राप्नुयुरिति उच्यते । ^v^अपृणन्तं देवादीन् अप्रीणयन्तमदातारं ^v^शोकाः चित्तपीडाः तत्साधनाः पाप्मानः[5] ^v^अभि अभिमुखं ^v^सं ^v^यन्तु सम्यक् प्राप्नुवन्तु वयं सुखिनो भवेमेत्यर्थः[6] ॥ ॥ १० ॥

'अमन्दान्' इति षष्ठं सूक्तं 'सप्त' इत्यनुवर्तनात् सप्तर्चम् । आदितः पञ्चानां कक्षीवानृषिः षष्ठ्याः भावयव्यः सप्तम्याः रोमशा नाम ब्रह्मवादिनी । आदितः पञ्चानां भावयव्यस्य स्तुतिरूपत्वात् स एव देवता 'या तेनोच्यते' ( अनु. २. ५ ) इति न्यायात् । अन्ययोः षष्ठीसप्तम्योस्तु भावयव्यरोमशयोः संवादः । षष्ठ्याः भावयव्यः सप्तम्याः रोमशा । यद्यपि 'स्वनयेन दत्ता' ( ऋ. सं. १. १२६. ३ ) इति श्रूयमाणत्वात्तस्यैव स्तुत्या भाव्यं तथापि पितृपुत्रयोरभेदात् 'आ रुद्रासः' इतिवत् पितृनाम्ना व्यवहर्तुं शक्यत्वात् प्रथमायामृचि[7] 'भाव्यस्य[8]' इत्युक्तत्वाच्च 'भावयव्यं तुष्टाव' इत्येतदविरुद्धमित्युक्तं पूर्वसूक्ते एव । आदितः पञ्च त्रिष्टुभः । अन्त्ये अनुष्टुभौ । तथा चानुक्रान्तम्–'अमन्दानिति कक्षीवान्दानतुष्टः पञ्चभिर्भावयव्यं तुष्टावान्त्ये अनुष्टुभौ भावयव्यरोमशयोर्दम्पत्योः संवादः' इति । उक्तो विनियोगः ॥

अमन्दान्त्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥ १ ॥

अमन्दान् । स्तोमान् । प्र । भरे । मनीषा । सिन्धौ । अधि । क्षियतः । भाव्यस्य ।
यः । मे । सहस्रम् । अमिमीत । सवान् । अतूर्तः । राजा । श्रवः । इच्छमानः ॥ १ ॥

---

१. क्ष-ञ-ट–'प्राप्नुवन्' इत्यस्यानन्तरं 'दुरुपसृष्टस्य एतेः कर्मणि निष्ठा । गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्' इत्यधिकम् । २. क्ष-ञ-ट–हीयन्ते । ३. क्ष-ञ-ट–एनोभाजनः । ४. क्ष-ञ-ट–कम् । ५. क्ष-ञ-ट–पाप्मानो वा । ६. क-क्ष-ज-ञ-ट-ण–'भवेमेत्यर्थः' इत्यस्यानन्तरम् 'अत्र यद्यपि सामान्येन दानमात्रं स्तूयते तथाप्यस्य सूक्तस्य स्वनयदानस्तुतिरूपत्वात् ( ख-ब–दानस्तुतिरूपत्वात् ) तद्दुःखमायन्त्विति भावः ( ख-ब-इत्यर्थः )' इत्यधिकम् । ७. क्ष-ञ-ट-तत्र प्रथमायामृचि । ८. च-ज्ञ-त-फ–भावयव्यस्य ।

^v^सिन्धौ सिन्धुदेशे यद्वा लक्षणया सिन्धुतीरे समुद्रतीरे ^v^अधि ^v^क्षियतः अधिनिवसतः ^v^भाव्यस्य[1] भावयव्यस्य[2]। तत्पुत्रस्य स्वनयस्येत्यर्थः। तस्य ^v^अमन्दान् अनल्पान् ^v^स्तोमान् स्तोत्राणि तन्निष्ठबहुविधदानादीनां कीर्तनानि ^v^मनीषा मनीषया प्रियातिशयबुद्ध्या ^v^प्र ^v^भरे प्रकर्षेण[3] संपादयामि। कस्तस्य विशेष इति तत्राह। ^v^अतूर्तः केनाप्यहिंसितः ^v^यः ^v^राजा ^v^मे मदर्थं ^v^सहस्रं तत्संख्याकान् ^v^सवान्। सूयन्ते सोमाः एष्विति सवाः सोमयागाः। तान् ^v^अमिमीत संपूर्णधनप्रदानेन[4] निर्मितवान्। किमिच्छन्। ^v^श्रवः सर्वैः श्रूयमाणां कीर्तिमात्मने ^v^इच्छमानः कामयमानः। यतोऽयमार्त्विज्याद्युपाधिना विना कीर्त्यर्थमेव बहुधनं प्रादात् अतस्तं स्तौमीत्यर्थः ॥

**शतं राज्ञो नाधमानस्य निष्कान्छतमश्वान्प्रयतान्त्सद्य आदम् ।**
**शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥ २ ॥**

शतम् । राज्ञः । नाधमानस्य । निष्कान् । शतम् । अश्वान् । प्रऽयतान् । सद्यः । आदम् ।
शतम् । कक्षीवान् । असुरस्य । गोनाम् । दिवि । श्रवः । अजरम् । आ । ततान ॥ २ ॥

^v^नाधमानस्य स्वीकर्तव्यम् इत्युच्चैः याचमानस्य[5] ^v^असुरस्य धनानां निरसितुर्दानशीलस्य ^v^राज्ञः स्वतेजसा दीप्यमानस्य स्वनयस्य ^v^निष्कान् आभरणविशेषान् इयत्ताविशेषविशिष्टानि वा सुवर्णानि शतसंख्याकानि। शतं सहस्रम् इत्यपरिमितवचनः। अपरिमितान् ^v^सद्यः प्रार्थनानन्तरमेव ^v^कक्षीवान् अहम् ^v^आदम् आत्तवानस्मि स्वीकृतवानस्मीत्यर्थः[6]। तथा ^v^प्रयतान् शुद्धान् लक्षणोपेतान् ^v^अश्वान् अध्वगमनसमर्थान् हयान् आदम् आत्तवान्। तथा ^v^गोनां पुंगवानां बलीवर्दानामित्यर्थः। उत्तरमन्त्रे स्त्रीगवीनामभिधानात्। तेषां ^v^शतम् आदम्। एवं प्रदाता राजा ^v^दिवि द्युलोके ^v^श्रवः कीर्तिम् ^v^अजरं शाश्वतीम् ^v^आ ^v^ततान विस्तारितवान्। गवादिप्रतिग्रहीता अहं स्वर्गे कीर्तिमकरवमित्यर्थः ॥

**उप मा श्यावाः स्वनयेन दत्ता वधूमन्तो दश रथासो अस्थुः ।**
**षष्टिः सहस्रमनु गव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नाम् ॥ ३ ॥**

उप । मा । श्यावाः । स्वनयेन । दत्ताः । वधूऽमन्तः । दश । रथासः । अस्थुः ।
षष्टिः । सहस्रम् । अनु । गव्यम् । आ । अगात् । सनत् । कक्षीवान् । अभिऽपित्वे । अह्नाम ॥३॥

^v^स्वनयेन ^v^दत्ताः ^v^श्यावाः तद्वर्णाश्वैः[7] युक्तत्वात् श्यावाः ^v^वधूमन्तः आरूढाभिर्वधूभिस्तद्वन्तः ^v^दश एतत्संख्याकाः ^v^रथासः रथाः ^v^उप ^v^अस्थुः उपस्थिताः[8]। गव्यशब्दो गोसमूहवाची[9]। ^v^षष्टिः

---

१. च-ञ-त-फ–' भाव्यस्य ' नास्ति । २. क्ष-ञ-ट–भावयव्यस्य । वर्णलोपः । ३. ज्ञ-झ-त–विशेषेण । ४. क्ष-ञ-ट–धनप्रदानेन । ५. क्ष-ञ-ट–याचमानस्य । नाधृ शब्दे । अनुदात्तेत् । ६. क्ष-ञ-ट–'स्वीकृतवानस्मीत्यर्थः' इत्यस्यानन्तरं 'ददातेः आङ्पूर्वात् आङो दोऽनास्यविहरणे इत्यात्मनेपदाभावश्छान्दसः। लेड्याडागमः । छान्दसः शपो लुक् । इतश्चलोपः इति इकारलोपः' इत्यधिकम् । ७. ख-च-फ–श्यामवर्णाश्वैः । ८. क्ष-ञ-ट–उपस्थिताः । गातिस्थेति सिचो लुक् । ९. क्ष-ञ-ट–अत्र गोसमूहवाची । खलुरभाश्वाविति ( खलगोरथादिति ) समूहे यः । व्यत्ययात् आद्युदात्तत्वम् ।

सहस्रमनु गव्यं षष्ट्यधिकसहस्रं गवां समूहोऽनु आगात् आगतः। ततः आत्मानं परोक्षेण ब्रवीति। तत्सर्वं प्रतिगृह्य अयं कक्षीवान् अह्नां दिवसानां मध्ये अभिपित्वे संनिहितेऽहनि सनत्। स्वीकृतं[1] रथवध्वादिकं स्वपित्रे समर्पयति स्वयं वा स्वीकरोति[1]। अभिपित्वशब्दः आसन्नकालवाची प्रपित्वशब्दः[2] इतिवत्[2]। स च 'प्रपित्वेऽभीक इत्यासन्नस्य' ( निरु. ३. २० ) इति यास्केनोक्तत्वात् आसन्नवचनः। उपसर्गभेदेऽप्यर्थाभेदः॥

चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति।
मदच्युतः कृशनावतो अत्यान्कक्षीवन्त उदमृक्षन्त पज्राः॥ ४॥

चत्वारिंशत्। दशऽरथस्य। शोणाः। सहस्रस्य। अग्रे। श्रेणिम्। नयन्ति।
मदऽच्युतः। कृशनऽवतः। अत्यान्। कक्षीवन्तः। उत्। अमृक्षन्त। पज्राः॥ ४॥

दशरथस्य दशसंख्याकरथवतः सहस्रस्य सहस्रसंख्याकानुचरोपेतस्य कक्षीवतो गोयूथसहस्रस्य वा अग्रे पुरस्तात् शोणाः शोणवर्णोपेताः अश्वाः चत्वारिंशत् एकैकस्य रथस्य चतुष्टये[3] सति दशरथानां मिलित्वा चत्वारिंशदश्वा भवन्ति। तेऽपि श्रेणिं पङ्क्तिमाश्रित्य नयन्ति रथान् अभिमतदेशं प्रापयन्ति। यद्वा। अश्वनियुक्तान् रथान् श्रेणिं श्रेणीभावं नयन्ति प्रापयन्ति। एकैकं रथं चत्वारश्चत्वारः पङ्क्त्याकारेण वहन्तीत्यर्थः। अथ तान् कक्षीवन्तः। कक्ष्या अश्वसंबन्धिनी[4] रज्जुः। 'कक्ष्या रज्जुरश्वस्य' ( निरु. २. २ ) इति यास्केनोक्तत्वात्। ताभिस्तद्वन्तः। यद्वा। अङ्गिरसः पुत्राः सर्वेऽपि कक्षीवन्तः। अथवा कक्षीवदनुचराः सर्वेऽपि छत्रिन्यायेन कक्षीवन्तः। पज्राः घासाद्यन्नवन्तः सन्तः मदच्युतः मदस्राविणः उद्वृत्तान् शत्रूणां मदस्य च्यावयितॄन् वा कृशनावतः सुवर्णमयनानाभरणयुक्तान्। कृशनमिति हिरण्यनाम 'कृशनं लोहम्[5]' ( नि. १. २. ७ ) इति तन्नामसु पाठात्। सुवर्णाभरणोपेतान् अत्यान् सततगमनशीलानश्वान् उदमृक्षन्त अध्वश्रमजनितस्वेदापनयनाय उत्कृष्टं मार्जयन्ति॥

पूर्वामनु प्रयतिमा ददे वस्त्रीन्युक्ताँ अष्टावरिधायसो गाः।
सुबन्धवो ये विश्याइव व्रा अनस्वन्तः श्रव ऐषन्त पज्राः॥ ५॥

पूर्वाम्। अनु। प्रऽयतिम्। आ। ददे। वः। त्रीन्। युक्तान्। अष्टौ। अरिऽधायसः। गाः।
सुऽबन्धवः। ये। विश्याःऽइव। व्राः। अनस्वन्तः। श्रवः। ऐषन्त। पज्राः॥ ५॥

इदानीमानीतं धनं बन्धुभ्यो निवेदयन्नाह। हे सुबन्धवः[6] पूर्वां प्रयतिं पूर्वप्रदानम् अनु तमनुसृत्य वक्ष्यमाणानि रथादीनि वः युष्मदर्थम् आ ददे स्वीकृतवानस्मि। यद्वा। पूर्वां प्रयतिं

---

१. क्ष-ञ-ट–असनत् संभक्तवान्। २. क्ष-ञ-ट–प्रपित्वशब्दवत्। ३. क्ष-ञ-ट–चतुष्टये चतुष्टये। ४. क्ष-ञ-ट–अश्वबन्धनी। ५. क्ष-ञ-ट–काञ्चनम्। ६. च-फ–सहजाः सुबन्धवः।

प्रदेयं रथादिकम् अनु दानक्रमेणैव आ ददे प्रतिगृहीतवानस्मि । कानि तानीति । त्रीन् अष्टौ च युक्तान् चतुर्भिश्चतुर्भिरश्वैर्धनैर्वा युक्तान् रथानिति शेषः । अत्र संख्यापृथङ्निर्देशो न विवक्षितः । तथा अरिधायसः अरिभिरीश्वरैर्धारणीयाः बहुमूल्याः असंख्याताः गाः च आ ददे । अत्र वक्ष्यमाणानि पूर्वं प्रतिगृहीतादधिकानीति युक्तम् । पूर्वमेव पित्रे निवेदितानां पुनर्बन्धुभ्यो निवेदनासंभवात् ' वधूमन्तो दश रथासो अस्थुः ' ( ऋ. सं. १. १२६. ३ ) इति दशानां रथानामुक्तत्वात् अत्र च त्रीनष्टौ इत्येकादशानां वक्ष्यमाणत्वात् वधूविशिष्टानाम् अन्येभ्यो दातुमनुचितत्वाच्च अन्यानीति युक्तम् । उक्तानामेव अनुवदनपक्षे[1] दशवधूयुक्ता रथा एको धनपूर्ण इति विवेकः । उक्तानामेव रथादीनां पुनरभिधानं प्रकृष्टत्वज्ञापनार्थम् । सर्वे ब्राह्मणा आगता वसिष्ठश्चागत इतिवत् । इदानीं परोक्षेणाह । सुबन्धवः शोभना विद्यायोनिसंबन्धिनः येषां ते तथोक्ताः । यद्वा । शोभनबान्धवोपेताः परस्परमनुरागयुक्ता इत्यर्थः[2] । विशः प्रजाः । तत्र भवाः विश्याः । व्रियन्त इति व्राः व्राताः ॥ तकारलोपश्छान्दसः[3] ॥ विशां व्राता यथा परस्परमनुरागवन्तः तथा एतेऽपीत्यर्थः । पज्राः अन्नवन्तोऽङ्गिरसः संतानप्रभवा ये सन्ति ते सर्वे[4] सुबन्धवः अनस्वन्तः शकटवन्तः हविर्धानशकटोपलक्षितसोमयागवन्तः सन्तः श्रवः सर्वत्र श्रूयमाणां कीर्तिम् ऐषन्त इच्छन्ति इच्छन्तु वा । तदर्थम् आ ददे इति शेषः[5] ॥

आगधिता परिगधिता या कशीकेव जङ्गहे ।
दर्दाति मह्यं यादुरी याशूनां भोज्या शता ॥ ६ ॥

आऽगधिता । परिऽगधिता । या । कशीकाऽइव । जङ्गहे ।
ददाति । मह्यम् । यादुरी । याशूनाम् । भोज्या । शता ॥ ६ ॥

संभोगाय प्रार्थितो भावयव्यः स्वभार्यां रोमशामप्रौढेति बुद्ध्या परिहसन्नाह । भोज्या भोगयोग्यैषा आगधिता आ समन्तात् गृहीता स्वीकृता । तथा परिगधिता परितो गृहीता । आदरातिशयाय पुनर्वचनम् । ' गध्यं गृह्णातेः ' ( निरु. ५. १५ ) इति यास्कः । यद्वा । आगधिता आ समन्तात् मिश्रयन्ती[6] । आन्तरं प्रजननेन बाह्यं भुजादिभिरित्यर्थः । ' गध्यतिर्मिश्रीभावकर्मा ' ( निरु. ५. १५ ) इति यास्कः । पूर्वस्मिन् पक्षे पुरुषस्य प्राधान्यम् उत्तरस्मिंस्तु योषितः इति भेदः । कीदृशी[7] सा । या जङ्गहे अत्यर्थं गृह्णाति कदाचिदपि न मुञ्चति[7] । अत्यागे दृष्टान्तः । कशीकेव । कशीका नाम सूतवत्सा[8] नकुली । सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि विमुञ्चति तथैषापि । किंच भोज्यैषा यादुरी । यादुरिति उदकनाम । रेतोलक्षणमुदकं प्रभूतं ददातीति यादुरी । बहुरेतो-

---

१. क्ष-ञ-ट—अनुवादनपक्षे । २. क्ष-ञ-ट–' इत्यर्थः ' इत्यस्यानन्तरं ' बहुव्रीहौ आद्युदात्तं द्व्यच्छन्दसीति उत्तरपदाद्युदात्तत्वम् ' इत्यधिकम् । ३. क्ष-ञ-ट–' तकारलोपश्छान्दसः ' इत्यस्यानन्तरं ' यद्वा व्रियन्त इति व्राताः । घञर्थे कविधानमिति कः ' इत्यधिकम् । ४. क्ष-ञ-ट–' सर्वे ' इत्यस्यानन्तरं ' पज्रा इत्युच्यन्ते । पज्रा वा अङ्गिरस इति श्रुतेः ' इत्यधिकम् । ५. क्ष-ञ-ट-' शेषः ' इत्यस्यानन्तरम् ' इषेः छान्दसे लुङि छत्वाभावः आत्मनेपदम् ' इत्यधिकम् । ६. क्ष-ञ-ट–' मिश्रयन्ती ' इत्यस्यानन्तरं ' तथा परिगधिता परितो मिश्रयन्ती ' इत्यधिकम् । ७. क्ष-ञ-ट–कीदृशी सा । जङ्गहे अत्यर्थं गृहीत्वा न मुञ्चति । ग्रहेः ग्रहणकर्मणः यङ्लुकि छान्दसः अभ्यासस्य नुमागमः आत्मनेपदं च । ८. क्ष-ञ-ट–वशा ।

युक्तेत्यर्थः[1]। तादृशी सती ᵛयाशूनां संभोगानाम्। यश इति प्रजनननाम। तत्संबन्धीनि कर्माणि याशूनि भोगाः[2]। तेषां ᵛशता शतानि असंख्यातानि मह्यं ददाति ॥ रोमशा नाम बृहस्पतेः पुत्री ब्रह्मवादिनी परिहसन्तं स्वपतिं प्रत्याह ॥

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥ ७ ॥

उपऽउप। मे। परा। मृश। मा। मे। दभ्राणि। मन्यथाः।
सर्वा। अहम्। अस्मि। रोमशा। गन्धारीणाम्ऽइव। अविका ॥ ७ ॥

भो पते ᵛमे माम्। द्वितीयार्थे चतुर्थी। ᵛउपोप। द्वितीय उपशब्दः पादपूरणः[3]। उपेत्य ᵛपरा ᵛमृश सम्यक् स्पृश। भोगयोग्यामवगच्छेत्यर्थः। यद्वा। मे मम गोपनीयमङ्गम् उपोप परा मृश अत्यन्तमान्तरं[4] स्पृश। परामर्शाभावशङ्कां निवारयति। ᵛमे मदङ्गानि रोमाणि ᵛदभ्राणि ᵛमा ᵛमन्यथाः अल्पानि मा बुध्यस्व। 'दभ्रमर्भकमित्यल्पस्य' इति[5] 'दभ्रं दभ्नोतेः' (निरु. ३. २०) इति यास्कः। अदभ्रत्वमेव विशदयति। ᵛअहं ᵛरोमशा बहुरोमयुक्ता ᵛअस्मि। यतोऽहमीदृशी अतः ᵛसर्वा संपूर्णावयवास्मि। रोमशत्वे दृष्टान्तः। ᵛगन्धारीणाम् ᵛअविका इव। गन्धाराः देशाः। तेषां संबन्धिनी अविजातिरिव। तद्देशस्थाः अवयो मेषाः यथा रोमशाः तथा अहमस्मि। यद्वा। गन्धारीणां गर्भधारिणीनां स्त्रीणाम् अविका अत्यर्थं तर्पयन्ती योनिरिव। तासाम् आ प्रसवं रोमादिविकर्तनस्य[6] शास्त्रे निषिद्धत्वात् योनी रोमशा भवति। अतः सा उपमीयते। यतोऽहमीदृशी अतो माम् अप्रौढां मा अवबुध्यस्वेत्यर्थः ॥ ॥ ११ ॥ ॥ १८ ॥

एकोनविंशेऽनुवाके सप्त सूक्तानि। तत्र 'अग्निं होतारम्' इति प्रथमं सूक्तमेकादशर्चं दिवोदासपुत्रस्य परुच्छेपस्यार्षमाग्नेयमात्यष्टम्। 'स हि शर्धः' (ऋ. सं. १.१२७.६) इत्यस्याः षट्सप्तत्यक्षरा अतिधृतिः। उत्कृत्यभिकृतिसंकृतिविकृत्याकृतिप्रकृतिकृत्यतिधृतिधृत्यत्यष्ट्यष्टिषु चतुरुत्तरशताक्षरमारभ्य चतुर्णां[7] परित्यागे[7] एकैकमुक्तं छन्दो जायते। तथा सति अत्यष्टयतिधृती उक्तसंख्योपेते स्याताम्। एतत्सर्वं छन्दोग्रन्थे 'चतुःशतमुत्कृतिः' (पि. ४. १) इत्यादिसूत्रैः प्रतिपादितम्। तथा चानुक्रान्तम्—'अग्निमेकादश परुच्छेपो दैवोदासिराग्नेयं तु पारुच्छेपं सर्वमात्यष्टं तत्रातिधृतिः षष्ठी' इति। सूक्तस्य विशेषविनियोगो लैङ्गिकः। दशरात्रस्य षष्ठेऽहनि प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्या ऋचः कृत्वा प्राकृतीभिश्च[8] सह यष्टव्यम्। तत्राग्नीध्रस्यैषा प्रथमा। 'षष्ठस्य प्रातःसवने' इति खण्डे सूत्रितम्—'अग्निं होतारं मन्ये दास्वन्तं दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः' (आश्व. श्रौ. ८. १) इति ॥

---

१. क्ष-ज-ट–'बहुरेतोयुक्तेत्यर्थः' इत्यस्यानन्तरम् 'आतोऽनुपसर्गे कः। छान्दस ईकारस्त्रीप्रत्ययः। पृषोदरादिः' इत्यधिकम्। २. क्ष-ज-ट–भोगाः। पृषोदरादि। ३. क्ष-ज-ट–पूरणः। ४. क्ष-ज-ट–प्रसमुपोद इति द्विरुक्तिः। ५. क-ख-च-ज-झ-ञ-ण-व–इति निघण्टुः। ६. क्ष-ज-ट–रोमनखादिकर्तनस्य। ७. क्ष-ङ-ज-ट–चतुर्णां चतुर्णां परित्यागे; च-फ–चतुर्णां परित्यागेन। ८. क्ष-ज-ट–प्रकृताभिः।

अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ १ ॥

अग्निम् । होतारम् । मन्ये । दास्वन्तम् । वसुम् । सूनुम् । सहसः । जातऽवेदसम् ।
विप्रम् । न । जातऽवेदसम् ॥ यः । ऊर्ध्वया । सुऽअध्वरः । देवः । देवाच्या । कृपा ।
घृतस्य । विऽभ्राष्टिम् । अनु । वष्टि । शोचिषा । आऽजुह्वानस्य । सर्पिषः ॥ १ ॥

vअग्निं सर्वासां देवसेनानामग्रण्यं यज्ञेष्वग्रं नीयमानं वा vहोतारम् अस्मद्यागं प्रति देवानामाह्वातारम् । यद्वा । होमनिष्पादकं होतारम्[1] । 'जुहोतेर्होतेत्यौर्णवाभः' (निरु. ७. १५) इति यास्कः । 'अग्निमद्य होतारमवृणीत' (तै. ब्रा. २. ६. १५. १) इति श्रुतेः । 'अग्निमग्न आवह' (तै. ब्रा ३. ५. ३. २) इति च अग्नेराह्वातृत्वं प्रसिद्धम् । अग्निं होतारं vमन्ये । एवं प्रतिविशेषणं मन्ये इति संबन्धः । यद्वा । यागनिष्पत्तेरेवापेक्षितत्वात् एतदेव विधेयविशेषणम् । इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि । vदास्वन्तम् अतिशयेन[2] दानवन्तं[2] vवसुं सर्वेषां निवासहेतुं[3] vसहसः vसूनुं बलस्य पुत्रम् । अग्निर्मन्थनकाले बलेन मथ्यमानः उत्पद्यते इति पुत्रत्वमुपचर्यते । vजातवेदसं जातानां वेदितारं जातप्रज्ञं जातबलं वा । जातवेदःशब्दो यास्केन बहुधा निरुक्तः (निरु. ७. १९) । अग्नेर्जातवेदस्त्वे दृष्टान्तः । vविप्रं vन vजातवेदसं जातविद्यं मेधाविनं ब्राह्मणमिव । तं यथा बहु मन्यन्ते तथा त्वामपि मन्ये स्तौमीत्यर्थः । उक्तगुणविशिष्टः vयः vदेवः vस्वध्वरः शोभनयज्ञवान् यज्ञं सम्यक् निर्वहन् vऊर्ध्वया उन्नतया उत्कृष्टया vदेवाच्या देवान् पूजयन्त्या देवान् प्रत्यक्तया वा vकृपा कृपया सामर्थ्यलक्षणया । 'देवान्प्रत्यक्तया कृपा' (निरु. ६. ८) इति यास्कः । तेभ्यो हविर्वहनबुद्ध्या युक्तः सन् vआजुह्वानस्य आ समन्तात् हूयमानस्य vसर्पिषः सरणशीलस्य vघृतस्य विलापनेन दीप्तस्याज्यस्य vविभ्राष्टिं विशेषेण भ्राजमानम्[4] vअनु स्वयमपि तदाज्यं vशोचिषा ज्वालया vवष्टि कामयते स्वीकरोतीत्यर्थः ॥

यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।
परिज्मानमिव द्यां होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ २ ॥

यजिष्ठम् । त्वा । यजमानाः । हुवेम । ज्येष्ठम् । अङ्गिरसाम् । विप्र । मन्मऽभिः । विप्रेभिः । शुक्र ।
मन्मऽभिः ॥ परिज्मानम्ऽइव । द्याम् । होतारम् । चर्षणीनाम् ।
शोचिःऽकेशम् । वृषणम् । यम् । इमाः । विशः । प्र । अवन्तु । जूतये । विशः ॥ २ ॥

---

१. क्ष-ञ-ट—होतारम् आह्वातारम् । २. क्ष-ङ-ञ-ट—अतिशयितदानम् । दातेरसुनन्तान्मतुपि तसौ मत्वर्थे इति भत्वात् रुत्वाभावः (ङ—ष्टुत्वाभावः) ३. ङ—निवासभूतम् । ४. क्ष-ङ-ञ-ट—भ्राजनम् ।

हे ^v^विप्र मेधाविन् ^v^शुक्र दीप्तज्वालाग्ने ^v^यजिष्ठम् अतिशयेन यष्टृतमं ^v^त्वा त्वां ^v^यजमानाः वयं यष्टारः ^v^हुवेम आह्वयामः । यतो वयं यजमाना यतश्च त्वं यजिष्ठः अतो हुवेमेत्यभिप्रायः । कीदृशं त्वाम् । ^v^अङ्गिरसाम् अङ्गिरोगोत्रोत्पन्नानां मध्ये ^v^ज्येष्ठम्[1] । यद्वा । अङ्गाराणां[1] मध्ये ज्येष्ठं ज्वालायुक्तत्वात् । 'अङ्गिरा अङ्गाराः' (निरु. ३. १७) इति यास्कः । 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ. ब्रा. ३. ३४) इति श्रुतेः । केन साधनेनेति तदुच्यते । ^v^मन्मभिः मननसाधनैः ^v^विप्रेभिः विशेषेण प्रीणयितृभिः ^v^मन्मभिः मन्त्रैः । यद्वा । विप्रेभिर्मेधाविभिर्ऋत्विग्भिः मन्मभिर्मन्त्रैश्च[2] सहिता वयमिति संबन्धः । त्वदाह्वानानन्तरं ^v^परिज्मानं परितो गच्छन्तं ^v^द्याम् इव सूर्यमिव ^v^होतारं देवानामाह्वातारम् । केषामर्थे । ^v^चर्षणीनाम् । मनुष्यनामैतत् । मनुष्याणां यजमानानामर्थे । यद्वा । चर्षणीनां पूर्वं मनुष्याणामेव सतां पश्चात् यागादिसाधनेन देवत्वमापन्नानां देवानाम् आह्वातारम् । तथा ^v^शोचिष्केशं केशवत् अत्यन्तायतज्वालोपेतं ^v^वृषणं वर्षितारम्[3] एवं रूपं ^v^यं त्वां ^v^विशः त्वामेव निविशमानाः ^v^इमाः ^v^विशः यजमानरूपाः प्रजाः ^v^जूतये स्वर्गाद्यभिमतफलप्राप्तये ^v^प्रावन्तु प्रकर्षेण प्रीणयन्तु । तादृशं त्वां हुवेमेति संबन्धः ॥

स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहंतरः परशुर्न द्रुहंतरः ।
वीळु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥ ३ ॥

सः । हि । पुरु । चित् । ओजसा । विरुक्मता । दीद्यानः । भवति । द्रुहम्ऽतरः । परशुः । न । द्रुहम्ऽतरः ॥ वीळु । चित् । यस्य । सम्ऽऋतौ । श्रुवत् । वनाऽइव । यत् । स्थिरम् । निःऽसहमानः । यमते । न । अयते । धन्वऽसहा । न । अयते ॥ ३ ॥

^v^स ^v^हि स एव पूर्वं स्तुतः एवाग्निः ^v^विरुक्मता विशेषेण रोचनवता ^v^ओजसा ज्वालारूपेण बलेन ^v^पुरु ^v^चित् अत्यधिकमेव ^v^दीद्यानः दीप्यमानः ^v^द्रुहंतरः द्रोग्धॄणां तरिता निवारयिता[4] ^v^भवति अस्मासु द्रोहं कुर्वतां शत्रूणां हिंसको भवतीत्यर्थः । तत्र दृष्टान्तः । ^v^द्रुहंतरः द्रोग्धॄणां छेदनाय प्रयुक्तः ^v^परशुर्न परशुरिव । स यथा अमोघं हिनस्ति तथायमपि[5] । किंच ^v^यस्य अग्नेः ^v^समृतौ संगतौ संयोगे ^v^वीळु ^v^चित् दृढमपि पाषाणादिकं ^v^श्रुवत् गच्छेत् शीर्येत[6] । तथा ^v^यत्स्थिरं यच्च पर्वतादि स्थिरमचलितं तदपि श्रुवत् । वीड्विति[7] दृढनाम, 'वीळु च्यौत्नम्' (नि. २. ९. १४) इति तन्नामसु पाठात् । तत्र दृष्टान्तः । ^v^वनेव[8] उदकमिव । उदकं यथाग्निसंयोगे शुष्यति तथेत्यर्थः । अत्यन्तदृढं स्थिरमपि हिनस्ति अस्मद्द्रोग्धारं शत्रुं हिनस्तीति किमु वक्तव्यमित्यभिप्रायः । किंच अय-

---

१. क्ष-ज्ञ-झ-ञ-ट-ज्येष्ठं ज्यायांसम् । यद्वा । अङ्गिरसामङ्गाराणाम् । २. क्ष-ञ-ट-मन्त्रैश्च । ३. क्ष-ङ-ज्ञ-ञ-ट-वर्षितारं कामानाम् । ४. ज्ञ-निस्तारयिता । ५. क्ष-ङ-ञ-ट-'तथायमपि' इत्यस्यानन्तरं 'द्रुहेः इगुपधलक्षणः कः । तस्मिन्नुपपदे संज्ञायां भृतॄ(तॄ)वृजि इति खच् । अरुर्द्विषदित्यादिना मुम्' इत्यधिकम् । ६. क्ष-ङ-ञ-ट-'शीर्येत' इत्यस्यानन्तरं 'श्रु श्रू गतौ । भौवादिकः । लेट्यडागमः । संज्ञापूर्वकस्य विधेः अनित्यत्वात् गुणाभावः' इत्यधिकम् । ७. क्ष-ञ-ट-वीळ्विति । ८. क्ष-ङ-ञ-ट-वनेव । सोराकारः ।

मग्निः ᵛनिष्षहमाणः शत्रून् निःशेषेणाभिभवन् ᵛयमते उपरमते शत्रुषु मध्ये क्रीडति तानेव नाशयति। तथा कुर्वन् ᵛनायते न गच्छति शत्रोः सकाशान्न पलायते। तत्र दृष्टान्तः। ᵛधन्वसहा ᵛन। धनुषा शत्रूनभिभवति इति धन्वसहा धानुष्कः॥ सहतेरसुन् छान्दसोऽन्त्यलोपः॥ स यथा शत्रोरभिमुखं विध्यति न पलायते तद्वदित्यर्थः। यद्वा। दृढधनुर्वहनक्षमः[1] धन्वसहः॥ अस्मिन् पक्षे पचाद्यच्। 'सुपां सुलुक्°' इत्याकारः॥ दृढधन्वा सन् न ᵛअयते न चलति॥

दृळ्हा चिदस्मा अनु दुर्यथा विदे तेजिष्ठाभिरराणिभिर्दाष्टयवसेऽग्नये दाष्टयवसे।
प्र यः पुरूणि गाहते तक्षद्वनेव शोचिषा।
स्थिरा चिदन्ना नि रिणात्योजसा नि स्थिराणि चिदोजसा॥ ४॥

दृळ्हा। चित्। अस्मै। अनु। दुः। यथा। विदे।
तेजिष्ठाभिः। अरणिऽभिः। दाष्टि। अवसे। अग्नये। दाष्टि। अवसे।
प्र। यः। पुरूणि। गाहते। तक्षत्। वनाऽइव। शोचिषा।
स्थिरा। चित्। अन्ना। नि। रिणाति। ओजसा। नि। स्थिराणि। चित्। ओजसा॥ ४॥

ᵛअस्मै अग्नये ᵛदृळ्हा ᵛचित् दृळ्हान्येव सारवन्ति हवींषि अनुक्रमेण प्रतिमन्त्रं ᵛदुः ददति॥ ददातेर्लुङि[2] 'गातिस्था°' इति सिचो लुक्। 'आतः' इति झेर्जुस्॥ यजमाना ददति। दाने दृष्टान्तः। ᵛयथा ᵛविदे विदुषे परमार्थदर्शिने उत्कृष्टानि धनानि वितरन्ति दानशीलाः। यद्वा। अयमग्निर्यथा विदे विन्दते स्वातिरिक्तं हविः देवेभ्यो दातुं लभते स्वीकरोति तथा दुः इति॥ विन्दतेश्छान्दसः शपो लुक्॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः॥ किंच सोऽग्निः ᵛतेजिष्ठाभिः ᵛअरणिभिः अत्यन्ततेजोयुक्तैर्मार्गैर्यज्ञादिरूपैः ᵛदाष्टि पूजितः सन् स्वर्गादिकं ददाति॥ 'दाश्ट दाने'। शपो लुक्। किमर्थम्। ᵛअवसे तद्रक्षणाय। यद्वा। तेजिष्ठाभिः अतिशयेन तेजोवद्भिः अरणिभिर्गमनैः इतरदेवानुद्दिश्य यजमानेन दत्तं हविः अवसे तेषां स्वीकाराय दाष्टि। अयमग्निर्ददाति नयति। किंच ᵛअग्नये इतरदेवताप्रदानसमयेऽपि यजमानः अग्नये अग्निप्रीतये ᵛदाष्टि प्रथमं ददाति। किमर्थम्। ᵛअवसे रक्षणार्थम्। यदि अयमतृप्तः स्यात् इतरेभ्यो दत्तमपि स्वयं स्वीकुर्यात् तस्मादग्नये प्रयाजादिरूपेण ददातीत्यर्थः। किंच ᵛयः अग्निः ᵛपुरूणि बहूनि सामर्थ्यात् यजमानधनादीनि ᵛप्र ᵛगाहते प्रविशति प्रविश्य च वाड्यादिरूपया ज्वालया ᵛतक्षत् तनूकरोति नाशयतीत्यर्थः। तत्र दृष्टान्तः। ᵛवनेव। वृक्षादिसमूहानि[3] वनानि यथा प्रविश्य तक्षति दहति तथेत्यर्थः। किंच अयमग्निः ᵛस्थिरा स्थिराणि कठिनानि ᵛअन्ना अन्नानि व्रीह्यादीनि ᵛओजसा तेजोरूपया ज्वालया ᵛनि नितरां ᵛरिणाति गच्छति पचतीत्यर्थः॥ 'री गतिरेषणयोः'। क्रैयादिकः। 'प्वादीनां ह्रस्वः' इति ह्रस्वः॥ तथा ᵛओजसा स्वकीयेन तेजसा ᵛस्थिराणि अपरिहरणीयानि पापानि अमित्राणि वा ᵛनि रिणाति निःशेषेण गच्छति नाशयतीत्यर्थः॥

---

१. ख-फ—धनुर्वहनकुशलः; झ—दृढहननक्रमः; ञ—दृढधनुर्वहनक्रमः। २. क्ष-ङ-ञ-ट—ददातेश्छान्दसे लुङि। ३. ङ-झ-ञ—वृक्षादिसमूहानिव।

तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात् ।
आदस्यायुर्ग्रभणवद्वीळु शर्म न सूनवे ।
भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ॥ ५ ॥

तम् । अस्य । पृक्षम् । उपरासु । धीमहि । नक्तम् । यः । सुदर्शऽतरः । दिवाऽतरात् ।
अप्रऽआयुषे । दिवाऽतरात् ॥ आत् । अस्य । आयुः । ग्रभणऽवत् । वीळु । शर्म । न । सूनवे ।
भक्तम् । अभक्तम् । अवः । व्यन्तः । अजराः । अग्नयः । व्यन्तः । अजराः ॥ ५ ॥

Vअस्य अस्मै Vपृक्षं हविर्लक्षणमन्नम् Vउपरासु उपरमन्ते अस्मिन् हवींषीत्युपराः वेदिसमीपभूमयः। तासु Vधीमहि धारयामः । अस्येत्युक्तं कस्येत्याह । Vयः अग्निः Vनक्तं रात्रौ Vदिवातरात् अह्नोऽपि Vसुदर्शतरः अत्यर्थं सर्वैर्दर्शनीयो भवति । यतोऽयं रात्रौ सर्वेषु भावेषु तमसावृतत्वात् अदृश्यमानेष्वपि स्वयमत्यर्थं प्रकाशते अतोऽस्मै धीमहि। पुनः कीदृशाय । Vदिवातरात् अह्नः सकाशादेव[1] Vअप्रायुषे । प्रगतमायुर्यस्यासौ प्रायुः । न प्रायुरप्रायुः । तस्मै । 'असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति' ( तै. आ. १. १४) इति श्रुतेः रात्रौ सर्वे भावा निद्रया आवृतत्वात् प्रायुष इव भवन्ति। अयमग्निस्तु सर्वप्राणिप्राणापहर्तुः सूर्यस्य रात्रौ स्वस्मिन्नेव प्रवेशात् प्रकृष्टायुर्भवति । अतोऽपि धीमहि । किंच Vआत् अत एव कारणात् यतोऽयं सुदर्शतरो यतश्चायमप्रायुः अतः कारणात् Vअस्य अस्मै तदर्थम् Vआयुः हविर्लक्षणमन्नम् Vग्रभणवत्[2] ग्रहणयुक्तम् अभूत् । ग्रहणे दृष्टान्तः । Vसूनवे पुत्राय पित्रोः Vवीळु Vशर्म दृढं सुखसाधनं गृहं यथा ग्रहणवद्भवति तथेत्यर्थः । शर्मेति गृहनाम 'शर्म वर्म' ( नि. ३. ४. २१ ) इति तन्नामसु पाठात् । इदानीमाहवनीयादिरूपेण अग्नेर्बहुत्वमपेक्ष्याह । एते Vअग्नयः Vभक्तं सेवमानम् Vअभक्तम् असेवमानं च Vव्यन्तः एते प्राणिनः अनुग्राह्याः इति बुध्यमानाः Vअवः रक्षन्ति । यद्यपि विशेषेण प्राणिनो दाहपाकादिद्वारा रक्षन्ति तथाप्यस्ति यजमानेष्वतिशय इत्याह । Vव्यन्तः तैः प्रत्तं[3] हविरश्नन्तः Vअजराः भवन्ति । स्वयं हविषा अजराः सन्तो यजमानानप्यजरान् कुर्वन्तीत्यर्थः ॥ ॥ १२ ॥

स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः ।
आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतो विश्वे जुषन्त पन्थां नरः शुभे न पन्थाम् ॥ ६ ॥

सः । हि । शर्धः । न । मारुतम् । तुविऽस्वनिः । अप्नस्वतीषु । उर्वरासु । इष्टनिः । आर्तनासु ।
इष्टनिः ॥ आदत् । हव्यानि । आऽददिः । यज्ञस्य । केतुः । अर्हणा ।
अध । स्म । अस्य । हर्षतः । हृषीवतः । विश्वे । जुषन्त । पन्थाम् । नरः । शुभे । न । पन्थाम् ॥ ६ ॥

---

१. क्ष-ञ-सकाशादपि । उभयत्र स्वार्थिकस्तरप् । २. ङ-ग्रभणवत् ग्रहणवत् । ३. क्ष-ञ-दत्तम् ।

. ᵛस ᵛहि स एव स्तुत्यतया प्रसिद्ध एवाग्निः ᵛतुविष्वणिः । तुवि इति बहुनाम 'उरु तुवि' ( नि. ३. १. २ ) इति तन्नामसु पाठात् । बहुस्वनिः प्रभूतध्वनियुक्तो वर्तते । अत्यन्तउवलितेऽग्नौ वायुसंपर्कात् भुगिभुगिति ध्वनिरुत्पद्यते ज्वलतीत्यर्थः । ध्वनने दृष्टान्तः । ᵛमारुतं ᵛशर्धो ᵛन मरुत्संबन्धि बलमिव । मरुतां समूहो यथा ध्वनयति तथेत्यर्थः । कुत्रेति तदुच्यते । ᵛअप्नस्वतीषु खननप्रोक्षणादिकर्मोपेतासु । अप्न इति कर्मनाम, 'अप्नः दंसः' ( नि. २. १. २ ) इति तन्नामसु पाठात् । ᵛउर्वरासु उरुवरणयुक्तासु श्रेष्ठासु वेदिभूमिषु । कीदृशोऽयम् । ᵛइष्टनिः यष्टव्यः ॥ औणादिकोऽनिक् तुडागमश्च ॥ किंच ᵛआर्तनासु । आर्तान् करोत्यार्तयति । आर्तयन्तीत्यार्तनाः पृतनाः । तासु ॥ 'ण्यासश्रन्थो युच्' ( पा. सू. ३. ३. १०७ ) । वृषादित्वादाद्युदात्तत्वम् ॥ तासां जयाय ᵛइष्टनिः एष्टव्यो यष्टव्यो वा । किंच एवं स्वनयन्नग्निः ᵛहव्यानि आज्यपुरोडाशादीनि ᵛआदत् अत्ति भक्षयति ॥ छान्दसो लुङ् । यद्वा । आङ्पूर्वाद्ददातेः 'आङो यमहनः' ( पा. सू. १. ३. २८ ) इति व्यत्ययेनात्मनेपदाभावः । 'गातिस्था॰' इति सिचो लुक् । छान्दसो ह्रस्वः । केवलादेव वा 'छन्दस्यपि दृश्यते' इति अनजादेरपि आडागमः । अत एवानवग्रहः स एव शिष्यते ॥ ᵛआदृदिः सर्वत्र हविरादानशीलः तथा ᵛयज्ञस्य ᵛकेतुः प्रज्ञापकः केतुस्थानीयो वा ᵛअर्हणा पूजनीयः ॥ 'सुपां सुलुक्॰' इति सोः आकारः । प्रत्ययाद्युदात्तत्वं छान्दसम् । किंच ᵛहर्षतः हविर्भक्षणादत्यन्तहर्षयुक्तस्य । यद्वा । अभिमतफलदानेन यजमानान् हर्षयतः ᵛहृषीवतः आज्यस्वीकारेण हर्षयुक्तस्याग्नेः ᵛपन्थां पन्थानं मार्गं ᵛविश्वे सर्वे मनुष्याः ᵛजुषन्त[1] अप्रीणयन् असेवन्त वा[1] । किमर्थम् । ᵛशुभे शुभाय शोभनाय सुखप्राप्तये । पन्थानं सर्वैर्गन्तव्यम् ऐहिकामुष्मिकफलस्य अग्नेरेव मार्गं सर्वेऽनुगच्छन्ति । अग्निमेव प्रीणयित्वा साधयन्ति । मार्गश्रयणे[2] दृष्टान्तः । यथा लोके ᵛनरः मनुष्याः शुभे शोभनाय सुखप्राप्तये पन्थानं सर्वैर्गन्तव्यं निर्भयं प्रौढमार्गमिव ॥

द्विता यदीं कीस्तासो अभिद्यवो नमस्यन्त
उपवोचन्त भृगवो मथ्नन्तो दाशा भृगवः ।
अग्निरीशे वसूनां शुचिर्यो धर्णिरेषाम् ।
प्रियाँ अपिधीर्वनिषीष्ट मेधिर आ वनिषीष्ट मेधिरः ॥ ७ ॥

द्विता । यत् । ईम् । कीस्तासः । अभिऽद्यवः । नमस्यन्तः । उपऽवोचन्त । भृगवः । मथ्नन्तः । दाशा । भृगवः ॥ अग्निः । ईशे । वसूनाम् । शुचिः । यः । धर्णिः । एषाम् । प्रियान् । अपिऽधीन् । वनिषीष्ट । मेधिरः । आ । वनिषीष्ट । मेधिरः ॥ ७ ॥

ᵛयत् यं ᵛद्विता द्वित्वमापन्नं द्विप्रकारं श्रौतस्मार्तभेदेन द्वित्वमापन्नम् । यद्वा । उपलक्षणमेतत् । आहवनीयादिरूपेण नानाविधम् । यद्वा । द्विता द्विविधाय ऐहिकामुष्मिकफलाय उभयाय[3] ॥ विभक्तेः आजादेशः । ᵛईम् इममग्निं ᵛकीस्तासः कीर्तनं कुर्वन्तः स्तोतारः ॥ पचाद्यचि छान्दसं सत्वम् । ᵛअभिद्यवः अभितो द्योतमानाः ᵛनमस्यन्तः नमस्कारोपलक्षितमुपस्थानं कुर्वन्तः ᵛभृगवः भृगुगोत्रो-

---

१. क्ष-ञ—जुषन्त असेवन्त सेवन्ते वा । २. क्ष-ञ—मार्गाश्रयणे । ३. क्ष-ञ—उभयथा ।

त्वन्ना महर्षयः ᵛउपबोचन्त उपेत्य ब्रुवन्ति । किं कुर्वन्तः । ᵛदाशा दानेन निमित्तभूतेन हविर्दानार्थं ᵛमश्नन्तः अरण्याम्[1] अग्निमन्थनं कुर्वन्तः तथा ᵛभृगवः भ्रष्टारो हविषां पापानां वा । किं च ᵛयः ᵛअग्निः ᵛशुचिः दीप्तः ᵛधर्णिः धारणकुशलः अयमग्निः ᵛएषां दीयमानानां ᵛवसूनां हविर्लक्षणानाम् ᵛईशे ईष्टे समर्थो भवति ॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥ यद्वा । एषां दृश्यमानानां मणिमुक्तादीनां वसूनाम् ईशे ईष्टे समर्थो भवति प्रदातुमिति शेषः । किंच अयमग्निः ᵛमेधिरः । मेधो यज्ञः । तद्वान् स्वयं यष्टव्यत्वेन प्रधानभूतः सन् ᵛप्रियान् स्वप्रीतिहेतून् आज्यादीन् ᵛअपिधीन् पर्याप्तिपर्यन्तं दत्तान् । ᵛवनिषीष्ट संभक्तवान् संभजतां वा । तथा ᵛमेधिरः मेधावानसौ ᵛआ ᵛवनिषीष्ट । अन्यदेवताकेष्वपि यज्ञेषु स्वयम् आज्यभागप्रयाजादिरूपं हविः संभजते ॥

**विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं दम्पतिं भुजे सत्यगिर्वाहसं भुजे ।**
**अतिथिं मानुषाणां पितुर्न यस्यासया ।**
**अमी च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥ ८ ॥**

विश्वासाम् । त्वा । विशाम् । पतिम् । हवामहे । सर्वासाम् । समानम् ।
दम्ऽपतिम् । भुजे । सत्यऽगिर्वाहसम् । भुजे ।
अतिथिम् । मानुषाणाम् । पितुः । न । यस्य । आसया ।
अमी इति । च । विश्वे । अमृतासः । आ । वयः । हव्या । देवेषु । आ । वयः ॥ ८ ॥

ᵛविश्वासां सर्वासां ᵛविशां प्रजानां यजमानानां[2] ᵛपतिम् अभिमतफलदानेन पालकं ᵛहवामहे आह्वयामः । न केवलं यजमानानां किंतु ᵛसर्वासां प्रजानां ᵛसमानम् एकरूपं दहनपचनाद्युपकारस्य सर्वेषां समत्वात् । तथा ᵛदम्पतिं गार्हपत्यादिरूपेण[3] गृहस्य पालकम् । दम इति गृहनाम, 'दमे कृत्तिः' ( नि. ३. ४. १२ ) इति तन्नामसु पाठात् ॥ अकारलोपश्छान्दसः ॥ किमर्थम् । ᵛभुजे भोगाय हवामहे आह्वयामः । पुनः स एव विशेष्यते । ᵛसत्यगिर्वाहसं यथार्थभूतानाम् अविसंवादिफलानां स्तुतिरूपाणां गिरां वोढारम् । यद्वा । गिरो मन्त्ररूपा वहन्तीति गिर्वाहसः ऋत्विजः । सत्याः अविसंवादिफला गिर्वाहसो यस्य तं तादृशं हवामहे इति शेषः ॥ 'वहिहाधाञ्भ्यः०' इति असुन् । 'णित्' इत्यनुवृत्तेः उपधावृद्धिः ॥ पुनः कीदृशम् । ᵛमानुषाणां मनुष्याणाम् ᵛअतिथिम् अतिथिवत्पूज्यं दर्शादितिथिमपेक्ष्य आगन्तारं वा । किंच ᵛयस्य अग्नेः ᵛआसया समीपे । आसेत्यन्तिकनाम, 'आसा अम्बरम्' ( नि. २. १६. २ ) इति तन्नामसु पाठात् । तत्समीपे ᵛअमी ᵛविश्वे ᵛअमृतासः हविर्भोक्तृत्वेन प्रसिद्धाः सर्वे देवा अपि ᵛआ आगच्छन्ति ॥ उपसर्गवशात् योग्यक्रियाध्याहारः ॥ किमर्थम् । ᵛवयः हविर्लक्षणान्नमुद्दिश्य अग्निमुखात् एव इतरेभ्यो दीयमानत्वात् । तत्र दृष्टान्तः । ᵛपितुर्न पितुरन्तिके पुत्रादयो यथा अन्नाद्यर्थं सेवन्ते तद्वत् । किंच ᵛवयः नेतारः[4] ऋत्विजोऽपि ᵛदेवेषु इतरेषु इज्यमानेषु मध्ये ᵛहव्या हवींषि ᵛआ ददति अग्नये ॥ वेतेरौणादिको डिः । विचि वा गुणः ॥

---

१. क्ष-ञ-ज्ञ–अरणीभ्याम् । २. क्ष-ञ–यजमानरूपाणाम् । ३. क्ष-ङ-ज्ञ-ञ–गार्हपत्यरूपेण । ४. क्ष-ञ–वेतारः ।

त्वमग्ने सहसा सहन्तमः शुष्मिन्तमो जायसे देवतातये रयिर्न देवतातये ।
शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
अध स्मा ते परि चरन्त्यजर श्रुष्टीवानो नाजर ॥ ९ ॥

त्वम् । अग्ने । सहसा । सहन्ऽतमः । शुष्मिन्ऽतमः । जायसे । देवऽतातये । रयिः । न । देवऽतातये ॥ शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः । अध । स्म । ते । परि । चरन्ति । अजर । श्रुष्टीऽवानः । न । अजर ॥ ९ ॥

हे अग्ने त्वं सहसा बलेन सहन्तमः अतिशयेन शत्रूणामभिभविता तथा शुष्मिन्तमः अतिशयेन तेजस्वी जायसे ॥ सहेरौणादिकः कनिन् । 'नाद्घस्य' इति नुट् ॥ किमर्थम् । देवतातये देवानां विस्तारयुक्ताय यागाय तदर्थम् । यज्ञनामैतत् । यद्वा । उक्तगुणविशिष्टः स जायसे । अरण्योरुत्पद्यसे । यज्ञार्थत्वे दृष्टान्तः । रयिर्न देवतातये । धनं यथा यज्ञार्थमुत्पद्यते । तथा चोक्तं–' यज्ञार्थं द्रव्यमुत्पन्नम् ' इति । किंच ते तव मदः आज्यस्वीकारजनितो हर्षः । शुष्मिन्तमः अतिशयेन बलवान् । हिशब्दः प्रसिद्धौ । आज्येन अग्नेर्मदो भवतीति प्रसिद्धम् । अपि च ते क्रतुः कर्मविशेषोऽपि द्युम्निन्तमः यशोयुक्तोऽन्नयुक्तो वा खलु । ' द्युम्नं द्योततेर्यशो वान्नं वा ' ( निरु. ५. ५ ) इति यास्कः । अध अतः कारणात् अजर हे जरारहिताग्ने ते त्वां परि चरन्ति यजमानाः । तत्र दृष्टान्तः । श्रुष्टीवानो न दूता इव । ते यथा वार्ताविशेषप्रदानेन राजानं सेवन्ते तद्वत् ॥ ' छन्दसीवनिपौ ' इति वनिप् । छान्दसं प्रत्ययाद्युदात्तत्वम् ॥ अजर भक्तानामजरयितः ॥ अन्तर्भावितण्यर्थात् पचाद्यच् ॥ यद्वा । अजर अस्तोतः । जरा स्तुतिः । असौ न कस्यापि स्तोता भवति किंतु सर्वैः स्वयं स्तूयते । तादृशं त्वां परिचरन्तीत्यर्थः ॥

प्र वो महे सहसा सहस्वत उषर्बुधे पशुषे नाग्नये स्तोमो बभूत्वग्नये ।
प्रति यदीं हविष्मान्विश्वासु क्षासु जोगुवे ।
अग्रे रेभो न जरत ऋषूणां जूर्णिर्होत ऋषूणाम् ॥ १० ॥

प्र । वः । महे । सहसा । सहस्वते । उषःऽबुधे । पशुऽसे । न । अग्नये । स्तोमः । बभूतु । अग्नये । प्रति । यत् । ईम् । हविष्मान् । विश्वासु । क्षासु । जोगुवे । अग्रे । रेभः । न । जरते । ऋषूणाम् । जूर्णिः । होता । ऋषूणाम् ॥ १० ॥

हे उद्गात्रादयः स्तोतारः वः युष्माकं संबन्धि स्तोमः स्तोत्रम् अग्नये प्र बभूतु प्रीणयितुं समर्थं भवतु ॥ छान्दसः शपः श्लुः । अत्वं चाभ्यासस्य । ' भूसुवोस्तिङि ' इति गुणाभावः ॥ कीदृशायाग्नये । महे महते पूज्याय सहसा पराभिभवसामर्थ्येन[1] तद्वते उषर्बुधे उषःकाले

1. ङ-च-फ–पराभिभवसामर्थ्येन सहस्वते ।

प्रबुध्यमानाय ॥ ' अहरादीनां पत्यादिषूपसंख्यानम् ' इति रत्वम् ॥ ᵛपशुषे पशुफलप्रदाय । नशब्दोऽत्र अपिशब्दार्थः । यद्वा । पशुषे पशुप्रदात्रे प्रभवे यथा स्तुतिः क्रियते तद्वत् । किमर्थमिति तदुच्यते । ᵛईम् एनमग्निं ᵛप्रति लक्ष्यीकृत्य ᵛहविष्मान् घृतादिहविर्युक्तः[1] यजमानः ᵛविश्वासु ᵛक्षासु सर्वासु निवासभूतासु वेदिभूमिषु ᵛजोगुवे अत्यर्थं गच्छति ॥ गुवतेर्यङ्लुगन्तात् छान्दसो लिट् । व्यत्ययेनात्मनेपदम् । ' °अमन्त्रे° ' इति पर्युदासात् आमभावः ॥ क्षेति भूनाम, ' क्षा क्षामा[2] ' ( नि. १. १. ५ ) इति तन्नामसु पाठात् । ᵛऋषूणाम् आगन्तॄणां देवानां मध्ये श्रेष्ठमग्निं ᵛजूर्णिः स्तुतिकुशलः ᵛहोता अग्ने इतरदेवेभ्यः पूर्वं ᵛजरते स्तौति । तत्र दृष्टान्तः । ᵛऋषूणां महतां धनवताम् ᵛअग्रे ᵛरेभो ᵛन वन्दीव ॥ ' ऋषी गतौ ' । औणादिकः कुप्रत्ययः । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् यद्वा । ऋषूणाम् इत्येतत् होतृविशेषणम् । ऋषूणां ज्ञानवतां मध्ये श्रेष्ठोऽयं होता इत्यर्थः ॥

स नो नेदिष्ठं ददृशान आ भराग्ने देवेभिः
सचनाः सुचेतुना महो रायः सुचेतुना ।
महि शविष्ठ नस्कृधि संचक्षे भुजे अस्यै ।
महि स्तोतृभ्यो मघवन्त्सुवीर्यं मथीरुग्रो न शवसा ॥ ११ ॥

सः । नः । नेदिष्ठम् । ददृशानः । आ । भर । अग्ने । देवेभिः ।
सऽचनाः । सुऽचेतुना । महः । रायः । सुऽचेतुना ।
महि । शविष्ठ । नः । कृधि । सम्ऽचक्षे । भुजे । अस्यै ।
महि । स्तोतृऽभ्यः । मघऽवन् । सुऽवीर्यम् । मथीः । उग्रः । न । शवसा ॥ ११ ॥

हे ᵛअग्ने ᵛसः त्वं ᵛनः ᵛनेदिष्ठम् अत्यन्तसमीपे ᵛददृशानः वेद्यां ददृशानः दीप्तत्वेन दृश्यमानः ᵛदेवेभिः ᵛसचनाः इतरैर्देवैः समानान्नः । अग्निमुखेनैव इतरेषां हविःस्वीकारात् समानान्नत्वम् । ᵛसुचेतुना शोभनेन चेतनेन चेतसा वा । पुनस्तदेव विशेष्यते । ᵛसुचेतुना शोभनचेतोवता मया ॥ औणादिक उः । बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् ॥ युक्तेन । त्वदायत्ते मयि अनुग्रहयुक्तेनेत्यर्थः । तादृशस्त्वं ᵛमहः पूजनीयानि ᵛरायः धनानि ᵛआ ᵛभर अस्माकमाहर । हे अग्ने ᵛशविष्ठ बलवत्तमाग्ने ᵛनः अस्मभ्यं ᵛमहि महदन्नं महतीं कीर्तिं वा ᵛकृधि कुरु संपादय । शविष्ठेति संबोधितत्वात् तदेव प्रार्थ्यते इति गम्यते । किमर्थम् । ᵛसंचक्षे सम्यग्दर्शनीयत्वाय[3] ᵛअस्यै अस्याः पृथिव्याः संबन्धिने ᵛभुजे भोगाय । यद्वा । संचक्षे भुजे इति सामानाधिकरण्यम् । सम्यग्दर्शनीयाय भोगायेत्यर्थः । न केवलं यजमानेभ्योऽस्मभ्यमेव अपि तु ᵛस्तोतृभ्यः स्तोत्रकर्तृभ्योऽपि हे ᵛमघवन् अन्नवन्नग्ने ᵛसुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनं शोभनसामर्थ्यं वा कृधि कुरु । किंच शवसा बलेन युक्तः सन् ᵛमथीः अस्मद्विरोधिनो नाशय ॥ लुङि ' ह्यन्तक्षण° ' इति वृद्धिप्रतिषेधः । कारकपक्षे औणादिक ईकारः । आद्युदात्तश्छान्दसः ॥ यद्वा । मथीः मथनवांस्त्वम् अस्मदर्थं शवसा बलेन

१. ख-ग्र-ग्र-घृतादिप्रवृद्धहविर्युक्तः । २. क्ष-ज-क्षमा । ३. क्ष-ज-सम्यग्दर्शनाय दर्शनीयत्वाय ।

युक्तो भवेति शेषः। तत्र दृष्टान्त। उग्रो न शवसा । यथा कश्चित् क्रूरः शवसा बलेन मथीर्भवति तद्वत् ॥ ॥ १३ ॥

'अयं जायत' इति अष्टर्चं द्वितीयं सूक्तम्। 'अयं जायताष्टौ' इत्यनुक्रमणिका। परुच्छेप ऋषिः। 'सर्वमात्यष्टम्' इत्युक्तत्वात् अत्यष्टिश्छन्दः। 'आग्नेयं तु' इति तुशब्दस्योक्तत्वात् इदमप्या- ग्नेयम्। पृष्ठ्यस्य षष्ठेऽहनि एतत्सूक्तम् आज्यशस्त्रत्वेन विनियुक्तम्। सूत्रितं च 'षष्ठस्य' इति खण्डे-'अयं जायत मनुषो धरीमणीत्याज्यम्' ( आश्व. श्रौ. ८. १ ) इति ॥

अ॒यं जा॑यत॒ मनु॑षो॒ धरी॑मणि॒ होता॒ यजि॑ष्ठ उ॒शिजा॒मनु॑ व्र॒तम॒ग्निः स्वमनु॑ व्र॒तम्।
वि॒श्वश्रु॑ष्टिः सखीय॒ते र॒यिरि॑व श्रवस्य॒ते ।
अद॑ब्धो॒ होता॒ नि ष॑ददि॒ळस्प॒दे परि॑वीत इ॒ळस्प॒दे ॥ १ ॥

अ॒यम्। जा॒य॒त। मनु॑षः। धरी॑मणि। होता॑। यजि॑ष्ठः। उ॒शिजा॑म्।
अनु॑। व्र॒तम्। अ॒ग्निः। स्वम्। अनु॑। व्र॒तम्।
वि॒श्वऽश्रु॑ष्टिः। स॒खि॒ऽय॒ते। र॒यिःऽइ॑व। श्र॒व॒स्य॒ते।
अद॑ब्धः। होता॑। नि। स॒द॒त्। इ॒ळः। प॒दे। परि॑ऽवीतः। इ॒ळः। प॒दे ॥ १ ॥

अयम् अग्निः मनुषः मनुष्यस्य अध्वर्योः सकाशात् जायत अरणिमन्थनेनोत्पन्नः। कीदृशोऽ- यम्। होता देवानामाह्वाता यजिष्ठः अतिशयेन यष्टृतमः। किमर्थमुत्पन्न इति। उशिजां फलस्य कामयितॄणां यजमानानां व्रतं सोमयागादिरूपं कर्म अनु लक्षीकृत्य। न केवलं परार्थमेव अपि तु अयमर्थः। स्वं व्रतम् अनु स्वकीयं हविःस्वीकारादिरूपं कर्म अनुलक्ष्य। पुनः स एव विशेष्यते। विश्वश्रुष्टिः विश्वविषयकर्मवान्[1]। कस्मै। सखीयते सखित्वमात्मन इच्छते। तथा श्रवस्यते अति- प्रसिद्धान्नमात्मनः[2] इच्छते यजमानाय रयिरिव धनस्थानीयो भवति। धनं यथा सख्यम् अन्नसमृद्धिं च साधयति तद्वत् अयमग्निरपि तस्मै द्वयं[3] साधयतीत्यर्थः। किंच अयमग्निः इळस्पदे इडाया भूम्याः पदे ॥ अन्त्यलोपश्छान्दसः ॥ धरीमणि सारभूते स्थाने वेदिरूपे। 'वेदिमाहुः परमन्तं पृथिव्याः' (तै. सं. ७. ४. १८. २) इति श्रुतेः। 'एतावती वै पृथिवी यावती वेदिः' (तै. सं. २. ६. ४. १) इति च। पुनस्तदेव विशेष्यते। इळस्पदे इडादेवताया मनोः पुत्र्या गोरूपाया इडोपह्वानमन्त्र- प्रतिपादितायाः पदे पादन्यासप्रदेशे। 'इडा वै मानवी यज्ञानूकाशिन्यासीत्' (तै. ब्रा. १. १. ४. ४) इति 'इडायाः पदे घृतवति स्वाहा' (तै. सं. १. २. ५. १) इति च श्रुतेः। नि षदत् निषीदति। कीदृशोऽयमग्निः। अदब्धः केनाप्यहिंसितः होता होमनिष्पादकः परिवीतः ऋत्विग्भिः परिधिभिर्वा परितो वेष्टितः। एवंभूतः सन् नि षदत् ॥

---

१. क्ष-ङ-ञ-ट-विश्वाश्रयकर्मवान्। २. ख-च-फ-अन्नं अतिप्रसिद्धत्वं वा आत्मनः। ३. क्ष-ञ-ट- तत् द्वयम्।

तं य॒ज्ञ॒साध॒मपि॑ वातयामस्यृ॒तस्य॑ प॒था नम॑सा ह॒विष्म॑ता दे॒वता॑ता ह॒विष्म॑ता ।
स न॑ ऊ॒र्जामु॑प॒आभृ॑त्य॒या कृ॒पा न जू॑र्यति ।
यं मा॑त॒रिश्वा॒ मन॑वे परा॒वतो॑ दे॒वं भाः प॑रा॒वतः॑ ॥ २ ॥

तम् । य॒ज्ञ॒ऽसाध॑म् । अपि॑ । वा॒त॒या॒म॒सि॒ । ऋ॒तस्य॑ । प॒था । नम॑सा । ह॒विष्म॑ता ।
दे॒वऽता॑ता । ह॒विष्म॑ता ॥ सः । न॒ः । ऊ॒र्जाम् । उ॒प॒ऽआभृ॑ति । अ॒या । कृ॒पा । न । जू॒र्य॒ति॒ ।
यम् । मा॒त॒रिश्वा॑ । मन॑वे । प॒रा॒ऽवतः॑ । दे॒वम् । भारिति॒ भाः । प॒रा॒ऽवतः॑ ॥ २ ॥

यज्ञसाधं यज्ञस्य साधकम् ॥ साध्नोतेः क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ तम् अग्निं वेद्यां स्थापितम् अपि वातयामसि । अपिः संभावनार्थः । आ परितोषं सेवामहे ॥ ‘ वात गतिसुखसेवनयोः ’ । चौरादिकः । इदन्तो मसिः ॥ केनोपायेनेति तदुच्यते । ऋतस्य पथा यागस्य मार्गेण यागानुष्ठानेन । ‘ यज्ञेन देवेभ्यः ’ ( तै. सं. ६. ३. १०. ५ ) इति श्रुतेः । यज्ञेन देवस्य महती प्रीतिः भवति । यद्वा । ऋतस्य यज्ञस्य पथा । मार्गस्तीर्थाख्यः ‘ पूर्वेणोत्करमपरेण प्रणीताः ’ ( आश्व. श्रौ. १. १) इत्यादिसूत्रोक्तः । तेन मार्गेण गत्वा । पुनः केन । हविष्मता आज्यादिप्रदेयद्रव्यवता नमसा नमस्कारोपलक्षणेन[1] स्तोत्रेण[1] उपस्थानेन वा । तदुभयेनेत्यर्थः । कुत्रेति तदुच्यते । हविष्मता हविष्मति आज्यपुरोडाशादिबहुहविर्युक्ते देवताता देवानां विस्तारयुक्ते यज्ञे । किंच सः अग्निः नः अस्मत्संबन्धिनाम् ऊर्जां हविर्लक्षणानाम् अन्नानाम् उपाभृति उपाहरणे तत्स्वीकारविषये[2] ॥ उपाङुपसृष्टात् हरतेः क्तिन् । ‘ हृग्रहोर्भः° ’ इति भत्वम् । ‘ सुपां सुलुक्° ’ इति सप्तम्या लुक् । ‘ तादौ च° ’ इत्यनन्तरस्य गतेः प्रकृतिस्वरत्वम् ॥ अया कृपा अनया सामर्थ्यलक्षणया कल्पनया हविःस्वीकरणरूपया न जूर्यति यज्ञसमाप्तिपर्यन्तं न नश्यति । अजरो वर्तते इत्यर्थः । स इत्युक्तम् । क इत्याह । यम् अग्निं देवं द्योतनशीलं मातरिश्वा अन्तरिक्षसंचारी वायुः पूर्वं मनवे मनोरर्थाय परावतः अतिदूरं गतवतः आदित्यात् भाः अभासीत् । औचित्येन भूमौ स्थापितवानित्यर्थः । तद्वत् परावतः दूरात् देवम् अग्निम् अस्मद्देवयजनं प्रति स्थापयत्वित्यर्थः ॥

एवे॑न स॒द्यः पर्ये॑ति॒ पार्थि॑वं मु॒हु॒र्गी रेतो॑ वृ॒ष॒भः कनि॑क्रद॒द्दध॒द्रेत॒ः कनि॑क्रदत् ।
श॒तं चक्षा॑णो अ॒क्षभि॑र्दे॒वो वने॑षु तु॒र्वणिः॑ ।
सदो॑ दधा॒न उप॑रेषु॒ सानु॑ष्व॒ग्निः परे॑षु॒ सानु॑षु ॥ ३ ॥

एवे॑न । स॒द्यः । परि॑ । ए॒ति॒ । पार्थि॑वम् । मु॒हुः॒ऽगीः । रेत॑ः । वृ॒ष॒भः । कनि॑क्रदत् । दध॑त् ।
रेत॑ः । कनि॑क्रदत् ॥ श॒तम् । चक्षा॑णः । अ॒क्षऽभिः॑ । दे॒वः । वने॑षु । तु॒र्वणिः॑ ।
सद॑ः । दधा॑नः । उप॑रेषु । सानु॑षु । अ॒ग्निः । परे॑षु । सानु॑षु ॥ ३ ॥

---

१. क्ष-ञ-ट—नमस्कारोपलक्षितस्तोत्रेण । २. क्ष-ञ-ट—हविःस्वीकारविषये ।

अयमग्निः एवेन गमनसाधनेन गमनेन वा सद्यः अस्मदाह्वानानन्तरं पार्थिवं पृथिवीसंबन्धि स्थानं वेदिलक्षणमेव परि परितः। यद्वा। अनर्थकः आभिमुख्यार्थो वा परि। एति गच्छति। कीदृशोऽग्निः। मुहुर्गीः सर्वदा गीयमानः। रेतःशब्देन[1] तत्कार्यं हवीरूपमन्नमुच्यते। तद्वान्॥ मत्वर्थीयो लुप्यते॥ वृषभः कामानां वर्षिता कनिक्रदत् शब्दयन् पर्येति। पुनः स एव विशेष्यते। रेतः दधत् आज्यादिस्वीकारेण अत्यधिकं सामर्थ्यं दधानः कनिक्रदत् शब्दयन् पर्येतीति शेषः। पुनः स एव विशेष्यते। अयमग्निः देवः वनेषु संभजनेषु स्तोत्रेषु निमित्तभूतेषु अक्षभिः अक्षस्थानीयाभिः ज्वालाभिः शतं चक्षाणः सर्वतः प्रकाशमानः। यद्वा। ज्वालोत्कर्षेण यजमानेन कृतं शतगुणितं प्रख्यापयन्। तथा तुर्वणिः शीघ्रगन्ता शत्रूणां हिंसको वा। 'तुर्वणिस्तूर्णवनिः' (निरु. ६. १४) इति यास्कः। किंच सानुषु समुच्छ्रितेषु। 'सानु समुच्छ्रितं भवति' (निरु. २. २४) इति यास्कः। तेषु उपरेषु। उपरमन्ते एष्वग्नयः इत्युपरा धिष्ण्या यजमानगृहा वा। तेषु सदः दधानः स्थानं धारयमाणः अग्निः सद्यः पर्येतीति पूर्वत्रान्वयः। किमर्थम्। परेषु उत्कृष्टेषु सानुषु समुच्छ्रितेषु कर्मसु हविःषु वा निमित्तभूतेषु॥

**स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य चेतति क्रत्वा यज्ञस्य चेतति।**
**क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे।**
**यतो घृतश्रीरतिथिरजायत वह्निर्वेधा अजायत॥ ४॥**

सः। सुऽक्रतुः। पुरःऽहितः। दमेऽदमे। अग्निः। यज्ञस्य। अध्वरस्य। चेतति। क्रत्वा। यज्ञस्य।
चेतति॥ क्रत्वा। वेधाः। इषुऽयते। विश्वा। जातानि। पस्पशे।
यतः। घृतऽश्रीः। अतिथिः। अजायत। वह्निः। वेधाः। अजायत॥ ४॥

सः अग्निः सुक्रतुः शोभनकर्मा पुरोहितः पुरो धार्यमाणः। यद्वा। पुरोहितवत् यागनिर्वाहकः सन्। दमेदमे तत्तद्यजमानगृहे सर्वेषु देवयजनेषु वा अध्वरस्य नाशरहितस्य फलप्रदस्य यज्ञस्य तदर्थं चेतति जानाति प्रबुध्यते इत्यर्थः[2]। किंच अयं[2] यजमानोऽपि क्रत्वा शोभनेन कर्मणा यज्ञस्य चेतति कर्तव्यतामवजानाति। किंच अयमग्निरपि क्रत्वा प्रकृष्टेन कर्मणा वेधाः विविधानां फलानां कर्ता सन् इषूयते। इष्यते इति इषुः अन्नम् आगमनं[3] वा। तदिच्छते यजमानार्थं विश्वा जातानि सर्वाणि संपादितानि हविरादीनि पस्पशे अत्यर्थं स्पृशति स्वीकरोति। यतः अयं घृतश्रीः घृतं सेवमानः अतिथिः अतिथिवत्पूज्यश्च अजायत उत्पन्नः। यतः कारणात् घृतम् अत्यर्थं सेवमानः प्रवृद्धोऽभवत् अतः पस्पशे इत्यर्थः। एवमग्नौ प्रवृद्धे सति यजमानोऽपि वह्निः हविषां वोढा वेधाः विविधस्य फलस्य कर्ता उत्पादयिता अजायत समर्थोऽभवत्॥

---

१. क-क्ष-ज्ञ-ञ्च-अ-ट—रेतः। उदकवाचिना रेतःशब्देन। २. क्ष-अ-ट—इत्यर्थः। यद्वा यज्ञस्य दमेदमे इति संबन्धः। किंच अयम्। ३. क्ष-अ-ट—अवनम्।

क्रत्वा यदस्य तविषीषु पृञ्चतेऽग्नेरवेण मरुतां न भोज्येषिराय न भोज्या ।
स हि ष्मा दानमिन्वति वसूनां च मज्मना ।
स नस्त्रासते दुरितादभिह्रुतः शंसादघादभिह्रुतः ॥ ५ ॥

क्रत्वा । यत् । अस्य । तविषीषु । पृञ्चते । अग्नेः । अवेन । मरुताम् । न । भोज्या । इषिराय । न । भोज्या ॥ सः । हि । स्म । दानम् । इन्वति । वसूनाम् । च । मज्मना । सः । नः । त्रासते । दुःऽइतात् । अभिऽह्रुतः । शंसात् । अघात् । अभिऽह्रुतः ॥ ५ ॥

ᵛयत् यस्मात् कारणात् सर्वे यजमानाः ᵛक्रत्वा प्रकृष्टेन कर्मणा हविष्प्रदानादिरूपेण ᵛअस्य ᵛअग्नेः ᵛतविषीषु प्रबलासु ज्वालासु ᵛअवेन तृप्तिनिमित्तेन भोज्या भक्ष्याणि[1] पुरोडाशादीनि ᵛपृञ्चते मिश्रयन्ति । तविषीति बलनाम ' तविषी शुष्मम् ' ( नि. २. ९. १० ) इति तन्नामसु पाठात् । तत्र दृष्टान्तः । ᵛमरुतां ᵛन ᵛभोज्या वायूनां संबन्धीनि व्रीह्याद्यन्नानीव । वायुषु मेघं निर्भिद्य वृष्टिं जनयत्सु सत्सु सस्यादिद्वारा व्रीह्यादिभोज्यानि यथा पृञ्चते तथेत्यर्थः । दाने दृष्टान्तः । ᵛइषिराय ᵛन ᵛभोज्या । एषणयुक्ताय याचमानायार्थिने भोज्या भोग्यानि भक्ष्यादीनि यथा दीयन्ते तद्वत्[2] । इषिरशब्दो यास्केनैवं निरुक्तः–' ईषणेन वैषणेन वा ' ( निरु. ४. ७ ) इति । अतः कारणात् ᵛसः[3] खलु[3] यजमानः ᵛदानम् ᵛइन्वति हविष्प्रदानं तस्मै व्याप्नोति । यद्वा । स्वयमभिमतं दानमिन्वति । इन्वतिर्व्याप्तिकर्मा ' इन्वति ननक्ष ' ( नि. २. १८. १ ) इति तत्कर्मसु पाठात् । केन सामर्थ्येनेति । ᵛवसूनां ᵛच ᵛमज्मना निवासयोग्यानां धनानाम् अग्निना लब्धानां बलेनैव[4] । यद्वा । सोऽग्निर्वसूनां हविर्निवासयोग्यानां ज्वालारूपाणां धनानां मज्मना बलेन दानमिन्वतीति शेषः । किंच ᵛसः अग्निः ᵛअभिह्रुतः आभिमुख्येन पापैः ह्रियमाणान् ᵛनः अस्मान् ᵛदुरितात् पापात् ᵛत्रासते त्रायते । तथा ᵛशंसात् अतिप्रभूतत्वेन शंसनीयात् यद्वा हिंसकात् ᵛअभिह्रुतः अभितो ह्रियमाणात् ᵛअघात् दुःखात् तत्कारणात् पापाद्वा त्रासते त्रायते ॥　　॥ १४ ॥

विश्वो विहाया अरतिर्वसुर्दधे हस्ते दक्षिणे
तरणिर्न शिश्रथच्छ्रवस्यया न शिश्रथत् ।
विश्वस्मा इदिषुध्यते देवत्रा हव्यमोहिषे ।
विश्वस्मा इत्सुकृते वारमृण्वत्यग्निर्द्वारा व्यृण्वति ॥ ६ ॥

विश्वः । विऽहायाः । अरतिः । वसुः । दधे । हस्ते । दक्षिणे । तरणिः । न । शिश्रथत् । श्रवस्यया । न । शिश्रथत् ॥ विश्वस्मै । इत् । इषुध्यते । देवऽत्रा । हव्यम् । आ । ऊहिषे । विश्वस्मै । इत् । सुऽकृते । वारम् । ऋण्वति । अग्निः । द्वारा । वि । ऋण्वति ॥ ६ ॥

---

१. क्ष-ञ-ट–भोज्यानि । २. क्ष-ङ-ञ-ट–' तद्वत् ' इत्यस्यानन्तरं 'यद्वा इषिराय एषणाय तत्पर्याप्तये भोज्या भोग्यानि यथा संपद्यन्ते तथेत्यर्थः ' इत्यधिकम् । ३. क्ष-ञ-ट–स हि स खलु । ४. क्ष-ञ-ट–बलेन ।

अयमग्निः ᵛदक्षिणे अभिमतं प्रदातुम् उत्साहयुक्ते ᵛहस्ते वामेतरे[1] यजमानाय दातव्यं धनं ᵛदधे धारयति । कीदृशोऽयम् । ᵛविश्वः सर्वैर्गन्तव्यः यद्वा विश्वात्मकः ᵛविहायाः[2] महान्[2] । विहाया इति महन्नाम, ‘ विहायाः यह्वः ’ ( निं. ३. ३. १२ ) इति तन्नामसु पाठात् । ᵛअरतिः ईश्वरः अरममाणः[3] वा अप्रीतिः[4] ॥ अत्र ‘ वहिवस्यर्तिभ्यश्चित् ’ इति अप्रत्ययः । चित्त्वाद्वादन्तोदात्तः ॥ धृत्वा[5] च ᵛशिश्रथत् । धृतं हस्तं यजमानार्थं श्रथयति ददाति ॥ श्लथयतेर्लुङि चङि रूपम् ॥ तत्र दृष्टान्तः । ᵛतरणिर्न तरणिरिव तारकः सूर्य इव । स यथा स्वोपासकाय अभिमतं हस्ते धृत्वा वितरति तद्वत् । यद्वा । तरणिः सर्वस्य तारको न शिश्रथत् । यजमानं न श्रथयति न मुञ्चति । किंच ᵛश्रवस्यया ᵛन ᵛशिश्रथत् हवीरूपान्नेच्छयैव न शिश्रथत् न विमुञ्चति । अयमनुग्रहेणैव पालयते, हविःस्वीकारस्तु व्यपदेशमात्रेण[6] इति भावः । इदानीं प्रत्यक्षकृतः । हे अग्ने ᵛदेवत्रा देवेषु मध्ये अतिशयेन त्वं ᵛविश्वस्मै सर्वस्मै ᵛइषुध्यते हविरात्मन इच्छते इन्द्रादये ॥ इषुध्यतिः कण्ड्वादिः ॥ ᵛहव्यं तत्तद्देवतामुद्दिश्य प्रत्तं पुरोडाशादिकम् ᵛओहिषे सर्वतो वहसि ॥ वहेर्लेटि यजादित्वात् संप्रसारणम् ॥ किंच अयमग्निः ᵛविश्वस्मै[7] ᵛसुकृते शोभनयज्ञकर्त्रे यजमानाय ᵛवारं सर्वैर्वरणीयं क्षुदादिनिवारकं वा अन्नादिकम् ᵛऋण्वति गच्छति करोतीत्यर्थः । किंच अयम् ᵛअग्निः ᵛद्वारा स्वर्गाद्यभिमतद्वाराणि[8] ᵛव्यृण्वति विवृणोति । प्रतिबन्धकपापापनयनद्वारा अभिमतानि साधयतीत्यर्थः ॥ ऋण्वतिर्गतिकर्मा । यद्वा । रिविर्गत्यर्थः । इदित्वात् नुम् । छान्दसं रेफस्य संप्रसारणम् ॥

स मानु॑षे वृ॒जने॒ शंत॑मो हि॒तो॒३॑ग्निर्य॒ज्ञेषु॒ जेन्यो॒
न वि॒श्पतिः॑ प्रि॒यो य॒ज्ञेषु॑ वि॒श्पतिः॑ ।
स ह॒व्या मानु॑षाणामि॒ळा कृ॒तानि॑ पत्यते ।
स न॑स्त्रासते॒ वरु॑णस्य धू॒र्तेर्म॒हो दे॒वस्य॑ धू॒र्तेः ॥ ७ ॥

सः । मानु॑षे । वृ॒जने॑ । शम्ऽत॑मः । हि॒तः । अ॒ग्निः । य॒ज्ञेषु॑ । जेन्यः॑ । न । वि॒श्पतिः॑ । प्रि॒यः । य॒ज्ञेषु॑ । वि॒श्पतिः॑ ॥ सः । ह॒व्या । मानु॑षाणाम् । इ॒ळा । कृ॒तानि॑ । प॒त्य॒ते॒ । सः । नः॒ । त्रा॒स॒ते॒ । वरु॑णस्य । धू॒र्तेः । म॒हः । दे॒वस्य॑ । धू॒र्तेः ॥ ७ ॥

ᵛसः ᵛअग्निः ᵛमानुषे मनुष्यस्य यजमानस्य संबन्धिनि ᵛवृजने वर्जनीये पापे निमित्तभूते सति ᵛयज्ञेषु निमित्तेषु[9] ᵛशंतमः अत्यन्तं सुखतमः अरिष्टस्य निवारकत्वात् अत एव ᵛहितः स्वर्गाद्यभिमतसाधकत्वात् । किंच अयं ᵛयज्ञेषु ᵛविश्पतिः ऋत्विग्रूपाणां प्रजानाम् अतिशयेन पालकः ॥ ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरे प्राप्ते ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम् ॥ अत एव ᵛप्रियः च भवति । तत्र दृष्टान्तः । ᵛजेन्यो ᵛन ᵛविश्पतिः जयशीलो राजेव । स यथा परसेनाद्युपद्रवपरिहारेण सम्यक्परिपालनेन च प्रजानां प्रियो भवति । किंच अयमग्निः ᵛमानुषाणां मनुष्याणां

---

१. क्ष-ङ-ञ-ञ-ट—वामेतरे करे । २. क्ष-ञ-ट—विहायाः । सर्वैर्गन्तव्यः महान् इत्यर्थः । ३. क्ष-ङ-ञ-ञ-ट—अरमणः । ४. ङ—अप्रीतिः अयज्वसु । ५. ञ-ञ—दधे धृत्वा । ६. क्ष-ञ-ट—व्यपदेशमात्रमेव । ७. ङ-ञ—विश्वस्मै सर्वस्मै । ८. क्ष-ञ-ट—स्वर्गाद्यभिमतप्राप्तिद्वाराणि । ९. क्ष-ङ-ञ-ट—निमित्तभूतेषु ।

यजमानानां संबन्धीनि ᵛहव्या हवींषि ᵛइळा ᵛकृतानि इळायां वेद्यां कृतानि संपादितानि उद्दिश्य ᵛपत्यते पतति आगच्छति । किंच ᵛसः अग्निः ᵛनः अस्मान् यजमानान् ᵛवरुणस्य वारकस्य ᵛधूर्तेः हिंसकस्य भयात् ᵛत्रासते त्रायते । यद्वा । धूर्तेरिति पञ्चमी । वरुणस्य पापदेवस्य धूर्तेर्हिंसकात् । किंच ᵛमहः महतः ᵛदेवस्य ᵛधूर्तेः हिंसातः त्रासते पालयते । अयष्टारम् अग्निर्हिनस्तीति प्रसिद्धम् । यद्वा । एकमेव वाक्यम् । धूर्तेः हिंसकस्य महः महतः वरुणस्य देवस्य वरुणाख्यायाः पापदेवतायाः धूर्तेः हिंसातः नः अस्मान् सः अग्निः त्रासते त्रायते ॥

अ॒ग्निं होता॑रमीळते॒ वसु॑धितिं प्रि॒यं चेति॑ष्ठमर॒तिं न्ये॑रिरे हव्य॒वाहं॒ न्ये॑रिरे ।
वि॒श्वायुं॑ वि॒श्ववे॑दसं॒ होता॑रं यज॒तं क॒विम् ।
दे॒वासो॑ र॒ण्वमव॑से वसू॒यवो॑ गी॒र्भी र॒ण्वं व॑सू॒यवः॑ ॥ ८ ॥

अ॒ग्निम् । होता॑रम् । ई॒ळते॒ । वसु॑ऽधितिम् । प्रि॒यम् । चेति॑ष्ठम् । अ॒र॒तिम् । नि । ए॒रि॒रे॒ । ह॒व्य॒ऽवाह॑म् । नि । ए॒रि॒रे॒ ॥ वि॒श्वऽआ॑युम् । वि॒श्वऽवे॑दसम् । होता॑रम् । य॒ज॒तम् । क॒विम् । दे॒वासः॑ । र॒ण्वम् । अव॑से । व॒सु॒ऽयवः॑ । गी॒ःऽभिः । र॒ण्वम् । व॒सु॒ऽयवः॑ ॥ ८ ॥

अमुम् ᵛअग्निं ᵛहोतारम् आह्वातारं होमनिष्पादकं वा ᵛईळते ऋत्विजः स्तुवन्ति । तथा ᵛवसुधितिं धनस्य धारयितारं दातारं वा अत एव ᵛप्रियं सर्वेषां प्रियतमं ᵛचेतिष्ठम् अतिशयेन यजमानानां चेतयितारं यद्वा प्रकृष्टचेतनवन्तम् ॥ चेतृशब्दात् ‘ तुश्छन्दसि ’ इति इष्ठन् । ‘ तुरिष्ठेमेयःसु ’ इति तृलोपः ॥ ᵛअरतिम् ईश्वरं तादृशं देवं ᵛन्येरिरे नितरां प्राप्ताः । प्राप्तिरेव विशेष्यते । ᵛहव्यवाहं ᵛन्येरिरे निःशेषेण प्राप्ताः । इतरदेवेभ्यो हव्यं वोढुं यथा प्रभवति तथा नितरां प्राप्ताः । पुनः कीदृशम् । ᵛविश्वायुं सर्वत्र प्राणिजीवनं ᵛविश्ववेदसं सर्वप्रज्ञं ᵛहोतारं देवानामाह्वातारं ᵛयजतं यजनीयं ᵛकविं सर्वज्ञम् ॥ ‘ ईर प्रेरणे, ईर गतौ ’ इत्यन्यतमस्य लिटि रूपम् ॥ किंच ᵛदेवासः देवनशीला ऋत्विजः ᵛरण्वम् अतिप्रवृद्धया शब्दयन्तम् ᵛअवसे अस्य रक्षणाय ᵛवसूयवः वसुकामाः सन्तः । पुनः कीदृशाः । ᵛगीर्भिः स्तुतिभिः ᵛरण्वं रणयन्तं रमणीयं वा ᵛवसूयवः वसु हवीरूपमन्नम् अग्नये प्रदातुमात्मन इच्छन्तो न्येरिरे । प्रीतो यथा धनं प्रयच्छति तथा हविरादिना प्राप्ता इत्यर्थः ॥　　॥ १५ ॥

‘ यं त्वं रथम् ’ इत्येकादशर्चं तृतीयं सूक्तम् । ‘ पारुच्छेपं सर्वमात्यष्टम् ’ इत्युक्तत्वात् अत्यष्टिच्छन्दस्कम् । अनुक्तत्वात् ऐन्द्रम् । ‘ प्रप्रा वो अस्मे ’ इत्यादिके द्वे अतिशक्वर्यौ षष्ट्यक्षरोपेतत्वात् । ‘ पाहि नः ’ इति अन्त्या अष्टिः चतुःषष्ट्यक्षरोपेतत्वात् । ‘ प्र तद्वोचेयम् ’ इति षष्ठी इन्दुदेवत्या । तथा चानुक्रमणिका—‘ यं त्वमेकादश षष्ठ्यैन्दवी प्रप्रावोऽतिशक्वर्यावष्टिरन्त्या ’ इति ॥ दशरात्रस्य षष्ठेऽहनि मरुत्वतीये शस्त्रे एतत्सूक्तं ‘ षष्ठस्य ’ इति खण्डे सूत्रितं—‘ यं त्वं रथमिन्द्र स यो वृषा ’ ( आश्व. श्रौ. ८. १ ) इति ॥

यं त्वं रथमिन्द्र मेधसातयेऽपाका सन्तमिषिर प्रणयसि प्रानवद्य नयसि ।
सद्यश्चित्तमभिष्टये करो वशश्च वाजिनम् ।
सास्माकमनवद्य तूतुजान वेधसामिमां वाचं न वेधसाम् ॥ १ ॥

यम् । त्वम् । रथम् । इन्द्र । मेधऽसातये । अपाका । सन्तम् । इषिर । प्रऽनयसि । प्र । अनवद्य । नयसि ॥ सद्यः । चित् । तम् । अभिष्टये । करः । वशः । च । वाजिनम् । सः । अस्माकम् । अनवद्य । तूतुजान । वेधसाम् । इमाम् । वाचम् । न । वेधसाम् ॥ १ ॥

हे ᵛइन्द्र ᵛइषिर यज्ञगमनशील ᵛत्वं ᵛमेधसातये यज्ञस्य दानाय लाभाय वा ᵛयं यजमानं प्रति ᵛरथं ᵛप्रणयसि प्रापयसि ॥ द्विकर्मकोऽयम् ॥ कीदृशं यजमानम् । ᵛअपाका अपाकम् अनल्पप्रज्ञयाधिकारवन्तम्[1] । 'पाकः पक्तव्यो भवति' (निरु. ३. १२) इति यास्कः । अत एव ᵛसन्तं पण्डितं सन्तम् । किंच हे ᵛअनवद्य अनिन्दित यं यजमानं धनविद्यादिना ᵛप्र ᵛनयसि प्रकृष्टं नयसि । ᵛतं यजमानं ᵛसद्यश्चित् तदानीमेव तदनुग्रहकाले[2] एव ᵛअभिष्टये आभिमुख्येन यागाय अभिमतप्राप्तये वा ॥ अभिपूर्वात् इषेः क्तिन् । शकन्ध्वादित्वात् पररूपत्वम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ ᵛकरः समर्थं करोषि ॥ लेटि[3] व्यत्ययेन शप् ॥ एवं कृत्वा च[4] ᵛवाजिनं हविर्लक्षणमन्नं तद्वन्तं वा ᵛवशः कामयसे ᵛच ॥ वष्टेर्लेटि अडागमः । तिङः परत्वादनिघातः ॥ यजमानेनाहूतः सन् शीघ्रमेवागत्य हविः स्वीकृत्य यागं साधु निर्वर्त्य तं चाभिमतफलेन संयोज्य पुनर्हविः स्वीकरोषीत्यर्थः[5] । हे इन्द्र ᵛअनवद्य अनिन्दित सर्वैः स्तूयमान ᵛतूतुजान अस्माननुग्रहीतुं त्वरमाण ॥ तुजेः प्रेरणार्थात् लिटः कानच् । 'तुजादीनां दीर्घोऽभ्यासस्य' इत्यभ्यासस्य दीर्घत्वम् ॥ ᵛसः त्वम् ॥ 'सोऽचि लोपे चेत्°' इति संहितायां सोर्लोपः ॥ ᵛवेधसां विविधफलकर्तॄणां मध्ये श्रेष्ठतया ᵛवेधसां मेधाविनाम् ᵛअस्माकं संबन्धि हविः स्वीकुर्वित्यर्थः । तत्र दृष्टान्तः । ᵛइमां ᵛवाचं ᵛन अस्मदीयां स्तुतिरूपां वाचमिव । स्तुतिं यथा स्वीकरोषि तथा हविरपीत्यर्थः ॥

स श्रुधि यः स्मा पृतनासु कासु चिद्दक्षाय्य इन्द्र
भरहूतये नृभिरसि प्रतूर्तये नृभिः ।
यः शूरैः स्वः सनिता यो विप्रैर्वाजं तरुता ।
तमीशानास इरधन्त वाजिनं पृक्षमत्यं न वाजिनम् ॥ २ ॥

सः । श्रुधि । यः । स्म । पृतनासु । कासु । चित् । दक्षाय्यः । इन्द्र । भरऽहूतये । नृऽभिः । असि । प्रऽतूर्तये । नृऽभिः ॥ यः । शूरैः । स्वरिति स्वः । सनिता । यः । विप्रैः । वाजम् । तरुता । तम् । ईशानासः । इरधन्त । वाजिनम् । पृक्षम् । अत्यम् । न । वाजिनम् ॥ २ ॥

---

१. क्ष-ञ-ट-अनल्पप्रज्ञं यागाधिकारवन्तम् । २. ङ-त्वदनुग्रहकाले । ३. क्ष-ञ-ट-लङि । ४. ख-च-फ-त्वम् । ५. क्ष-ङ-झ-ञ-ट-स्वीकरोतीत्यर्थः ।

हे ᵛइन्द्र ᵛसः वक्ष्यमाणगुणविशिष्टस्त्वं ᵛश्रुधि अस्मदाह्वानं स्तोत्रं वा शृणु ॥ हेर्धिभावः ॥ ᵛयः ᵛस्म यः खलु त्वं ᵛनृभिः मनुष्यैरेव सद्भिः पश्चाद्देवत्वमापन्नैर्मरुद्भिः । पुनस्त एव विशेष्यन्ते । ᵛनृभिः संग्रामनयनशीलैः । इन्द्रस्य मरुतां सहाय्यम् 'इन्द्रो मरुद्भिः' (तै. सं. ६. ५. ५. १), 'मरुतो हैनं नाजहुः' (ऐ. ब्रा. ३. २०) इत्यादिषु प्रसिद्धम् । तैः सहितः सन् ᵛकासु ᵛचित् ᵛपृतनासु सर्वासु प्रौढेष्वपि संग्रामेषु ᵛभरहूतये भरणविशिष्टाह्वानयुक्ताय ᵛप्रतूर्तये प्रकृष्टहिंसनाय । यद्वा । भरहूतये 'शूरो भव प्रहर' इत्येवमादिभरणयुक्ताह्वानाय प्रतूर्तये च शूराणां[1] प्रकृष्टवधाय च । ᵛदक्षाय्यः ᵛअसि प्रवर्धनशीलोऽसि । यद्वा । नृभिः नेतृभिर्यजमानैः प्रार्थितः सन् प्रतूर्तये शत्रूणां पापानां वा प्रकृष्टहिंसनाय दक्षाय्यः असि समर्थोऽसि । किंच ᵛयः त्वं ᵛशूरैः शौर्योपेतैर्मरुद्भिः अन्यैर्भटैर्वा सहितः सन् ᵛस्वः स्वयमेव ᵛसनिता संग्राममथस्य[2] अन्यस्य वा मनीषितस्य सनिता संभक्तासि । सत्यपि तेषां साहित्ये अन्यनैरपेक्ष्येणैव ᵛतरुता असि इत्यर्थः ॥ तरतेस्तृनि 'ग्रसितस्कभित॰' इत्यादौ निपात्यते ॥ ᵛयः च त्वं ᵛविप्रैः मेधाविभिर्ऋत्विग्भिः स्तुतः सन् ᵛवाजं तरुता तेभ्योऽन्नस्य दातासि । विप्रैर्मरुद्भिः सहितः इति संबन्धः । ᵛतं तादृशं ᵛवाजिनं गमनवन्तं ᵛपृक्षं हविर्लक्षणान्नवन्तमिन्द्रम् ᵛईशानासः सम्यगभ्यर्थयितुं समर्था ऋत्विजः ᵛइरधन्त संराधन्ति[3] सेवन्ते । तत्र दृष्टान्तः । ᵛवाजिनं वेजनवन्तं गमनवन्तं पृक्षं घासाद्यन्नवन्तम् ᵛअत्यं ᵛन अश्वमिव । तं यथा समर्थाः स्वादुघासप्रदानादिना पोषयन्ति तद्वत् । अत्य इत्यश्वनाम 'अत्यः हयः' (नि. १. १४. १) इति तन्नामसु पठितत्वात् ॥

दस्मो हि ष्मा वृषणं पिन्वसि त्वचं कं चिद्यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्यम् ।
इन्द्रोत तुभ्यं तद्दिवे तद्रुद्राय स्वयशसे ।
मित्राय वोचं वरुणाय सप्रथः सुमृळीकाय सप्रथः ॥ ३ ॥

दस्मः । हि । स्म । वृषणम् । पिन्वसि । त्वचम् । कम् । चित् । यावीः । अररुम् । शूर । मर्त्यम् । परिऽवृणक्षि । मर्त्यम् ॥ इन्द्र । उत । तुभ्यम् । तत् । दिवे । तत् । रुद्राय । स्वऽयशसे । मित्राय । वोचम् । वरुणाय । सऽप्रथः । सुऽमृळीकाय । सऽप्रथः ॥ ३ ॥

हे इन्द्र त्वं ᵛदस्मो ᵛहि शत्रूणाम् उपक्षपणकर्ता[4] खलु । अत एव कारणात् ᵛवृषणं स्वतो वर्षणशीलं ᵛत्वचं संवरणवन्तं पुटबन्धनवदुदकवेष्टनवन्तं ᵛकं ᵛचित् जलधारिणं मेघं ᵛपिन्वसि निर्भिद्य सेचयसि । किंच ᵛमर्त्यं मर्त्यवत् ᵛअररुम् अरणशीलं गमनस्वभावं कंचिन्मेघं हे ᵛशूर विक्रान्त ᵛयावीः मिश्रयसि ॥ यौतेश्छान्दसे लुङि छान्दसः अडभावः ॥ अवर्षणेन गच्छन्तं बलान्निगृह्य वर्षयसीत्यर्थः । यथा शूरः कश्चित् बलवन्तं गच्छन्तं वैरिणं निगृह्य स्वीकरोति तद्वदित्यर्थः । तथा ᵛमर्त्यं मरणशीलं शीर्यमाणस्वभावं निरुदकं कंचिन्मेघं ᵛपरिवृणक्षि सर्वतो वर्जयसि[5] औदासीन्यं करोषीत्यर्थः । हे ᵛइन्द्र ᵛतत् तादृशं कर्म वर्षणरूपं ᵛसप्रथः सर्वतः पृथु यथा भवति तथा ᵛतुभ्यं ᵛवोचं ब्रवीमि । इन्द्र एव विशेष्यते । ᵛस्वयशसे स्वकीययशोयुक्ताय । तथा ᵛदिवे ᵛउत त्वदाश्रयभूतायै द्युलोकदेवतायै अपि

---

१. ङ–शत्रूणाम् । २. क्ष-ङ-ञ-ट–संग्रामजयस्य; च–संग्रामस्य । ३. क्ष-ञ-ट–संराधयन्ति; ङ–समाराधयन्तीति । ४. ङ-च-फ–उपक्षयकर्ता । ५. क्ष-ङ-ञ-ट–परि वर्जयसि ।

तत् तादृशं कर्म वोचं ब्रवीमि । उतशब्दोऽपिशब्दार्थः । वर्षणकर्मणो द्युदेवताया आनुकूल्यात् तस्या अपि वचनं युक्तम् । तथा रुद्राय जगतां दुःखद्रावयित्रे रोदनशीलाय वा अग्नये तत् वोचम् । ' रुद्रो वै क्रूरो यदग्निः ' ( तै. सं. ६. २. ३. २ ) इति श्रुतेः रुद्रत्वम् । ' सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ' ( तै. सं. १. ५. १. १ ) इति श्रुतेः रोदनस्वभावत्वं प्रसिद्धम् । तस्य च आहुतिद्वारा वृष्ट्यनुकूलत्वात्तस्यापि कथनं युक्तम् । स्वयशसे इत्यस्य रुद्रायेत्यनेन वा संबन्धः संनिहितत्वाद्योग्यत्वाच्च । स्वकीययशोयुक्तायाग्नये इत्यर्थः । तथा मित्राय अहरभिमानिदेवतायै तत् वोचम् । वरुणाय राज्यभिमानिदेवतायै तद्वोचम् । ' अहोरात्रे वै मित्रावरुणौ ' ( ता. ब्रा. २५. १०. १० ), ' अहोरात्राभ्यां खलु वै पर्जन्यो वर्षति ' ( तै. सं. २. १. ७. ३ ) इति । तथा ' मैत्रं वा अहर्वारुणी रात्रिः ' ( तै. सं. २. १. ७. ३ ) इत्यादिश्रुतिभ्यो मित्रावरुणयोरहोरात्राभिमानिदेवात्वम् । अत एव श्रुतेर्वृष्टिप्रदातृत्वात् ताभ्यामपि प्रथनं[1] युक्तम् । सुमृळीकाय शोभनसुखयित्रे प्रजानाम् । एतत्सर्वत्र संबध्यते । उक्तेभ्यो देवेभ्यः सप्रथः सर्वतः पृथु अतिविस्तीर्णं यथा भवति तथा तद्वर्षणकर्म ब्रवीमि ॥

अस्माकं व इन्द्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं युजं वाजेषु प्रासहं युजम् ।
अस्माकं ब्रह्मोतयेऽवा पृत्सुषु कासु चित् ।
नहि त्वा शत्रुः स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यम् ॥ ४ ॥

अस्माकम् । वः । इन्द्रम् । उश्मसि । इष्टये । सखायम् । विश्वऽआयुम् । प्रऽसहम् । युजम् । वाजेषु । प्रऽसहम् । युजम् ॥ अस्माकम् । ब्रह्म । ऊतये । अव । पृत्सुषु । कासु । चित् । नहि । त्वा । शत्रुः । स्तरते । स्तृणोषि । यम् । विश्वम् । शत्रुम् । स्तृणोषि । यम् ॥ ४ ॥

हे ऋत्विजः अस्माकम् अस्मदर्थं वः युष्मदर्थं च इष्टये यागाय अभिमतैषणाय वा इन्द्रम् उश्मसि अभिमतं कामयामहे ॥ 'वश कान्तौ' । आदादिकः । इदन्तो मसिः । ' ग्रहिज्या° ' इत्यादिना संप्रसारणम् ॥ यद्वा[2] । अस्माकं सखायम्[2] इति संबन्धः । कीदृशमिन्द्रम् । सखायं सखिवदत्यन्तहितकारिणं समानख्यानं वा विश्वायुं विश्वेषां यागानां गन्तारं प्रासहं प्रकर्षेण[3] शत्रूणां मर्षयितारम् ॥ सहेः क्विप्[3] । ' नहिवृति° ' इत्यादिना उपसर्गस्य दीर्घः ॥ युजं सर्वदा युक्तं सहायभूतमित्यर्थः । पुनः स एव विशेष्यते । वाजेषु हवीरूपान्नेषु तद्वत्सु यज्ञेषु वा निमित्तभूतेषु प्रासहं यज्ञविघातिनः सहमानं युजम् अभिमतफलैर्युक्तं[4] मरुद्भिर्वा[4] । किंच हे इन्द्र अस्माकम् ऊतये रक्षणाय ब्रह्म परिवृढं कर्म अव रक्ष । कस्तत्र[5] विशेष इति तत्राह । कासु चित् पृत्सु संग्रामेषु । ' पृत्सु समत्सु ' (नि. २. १७. २१) इति संग्रामनामसु पाठात् तन्नामत्वम् । तेषु त्वा त्वां[6] नहि स्तरते न हिनस्ति न विरोधमाचरति यं स्तृणोषि । यं विश्वं शत्रुं स्तृणोषि वारयसि स कश्चिदपि शत्रुः न हिनस्ति । तव महत्त्वेन सर्वे भीताः[7] विधेया भवन्ति शत्रुभावं न कोऽप्याचरति अजातशत्रुत्वादित्यर्थः ॥

१. क्ष-ङ-झ-ञ-ट—कथनम् । २. ङ—यथा अस्माकं तथा वो युष्माकं सखायम् । ३. झ—प्रकृष्टं मर्षणशीलम् । प्रासहेः क्विप् । ४. ङ—अभिमतहव्यैर्युक्तं मरुद्भिर्वा सहितं यज्ञे; क्ष-ञ-ट—अभिमतफलैर्युक्तं मरुद्भिर्वा सहितं यज्ञे । ५. क्ष-ङ-च-ञ-ट—कस्तव । ६. च-फ—त्वां शत्रुः । ७. क्ष-ञ—भावाः ।

निषू नमातिमतिं कयस्य चित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः ।
नेषि णो यथा पुरानेनाः शूर मन्यसे ।
विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥ ५ ॥

नि । सु । नम । अतिऽमतिम् । कयस्य । चित् । तेजिष्ठाभिः । अरणिऽभिः । न । ऊतिऽभिः ।
उग्राभिः । उग्र । ऊतिऽभिः ॥ नेषि । नः । यथा । पुरा । अनेनाः । शूर । मन्यसे ।
विश्वानि । पूरोः । अप । पर्षि । वह्निः । आसा । वह्निः । नः । अच्छ ॥ ५ ॥

हे इन्द्र[1] Vकयस्य कस्य Vचित् त्वद्भक्तस्य यजमानस्य Vअतिमतिम् अतिक्रान्तमननं विरुद्धमनस्कं शत्रुं Vनि Vषू Vनम नितरां सुष्ठु नामय[2] अस्मत्प्रणतं[3] कुरु ॥ अन्तर्भावितण्यर्थोऽयम् ॥ हे Vउग्र उद्गूर्णबल Vऊतिभिः रक्षणैः प्रीतिभिर्वा युक्तः सन् Vतेजिष्ठाभिः Vअरणिभिर्न अतिशयेन तेजस्विभिः युद्धादिरूपैः[4] मार्गैः[4] इव ॥ तेजस्वच्छब्दात् आतिशायनिकः इष्ठन्। विन्मतोर्लुक् । 'टेः' इति टिलोपः ॥ अतिमतिं वृत्रादिं यथा नामितवान् तथा अस्मद्विरोधिनमपीत्यर्थः । यद्वा । उत्तरत्रान्वयः । तेजिष्ठाभिः अरणिभिर्न तेजोयुक्तैः[5] गमनसाधनैर्यज्ञादिमार्गैः यथा अस्मान् योजितवानसि[6] तथा Vउग्राभिः प्रकाशिकाभिः Vऊतिभिः रक्षणैः यागफलभूतैः Vनः अस्मान् Vनेषि नयसि अभिमतस्वर्गादिफलं प्रापयसीत्यर्थः ॥ नयतेश्छान्दसः शपो लुक् ॥ तत्र दृष्टान्तः । Vपुरा पूर्वस्मिन् काले अस्मत्पित्रादीन् Vयथा ऊतिभिः नीतवानसि तथा नेषि[7] इत्यर्थः । हे Vशूर विक्रान्त त्वम् Vअनेनाः Vमन्यसे सर्वैरपापत्वेन अवबुध्यसे स्वर्गाद्यभिमतसाधकत्वादिति भावः । यद्वा । अनेनाः त्वमस्मानपि अनेनसः मन्यसे । किंच हे इन्द्र Vवह्निः वृष्ट्यादिप्रदानेन जगतां निर्वाहकः सन् Vपूरोः मनुष्यस्य यजमानस्य । पूरुरिति मनुष्यनाम, 'पूरवः जगतः' ( नि. २. ३. २० ) इति तन्नामसु पाठात्। तस्य Vविश्वानि सर्वाणि एनांसि Vअप Vपर्षि अपकृत्य पालयसि ॥ पृणातेश्छान्दसः शपो लुक् ॥ अतः Vनः अस्माकमपि Vआसा अन्तिके देवयजनदेशे Vअच्छ आभिमुख्येन आगत्य Vवह्निः अभिमतानां वोढा सन् अप अनभिमतम् अपकृत्य[8] पर्षि अभिमतफलं पूरयसि ॥     ॥ १६ ॥

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति ।
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् ।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥ ६ ॥

प्र । तत् । वोचेयम् । भव्याय । इन्दवे । हव्यः । न । यः ।
इषऽवान् । मन्म । रेजति । रक्षःऽहा । मन्म । रेजति ।
स्वयम् । सः । अस्मत् । आ । निदः । वधैः । अजेत । दुःऽमतिम् ।
अव । स्रवेत् । अघऽशंसः । अवऽतरम् । अव । क्षुद्रम्ऽइव । स्रवेत् ॥ ६ ॥

---

१. झ–इन्द्र त्वम् । २. क्ष-ङ-ञ–नमय । ३. क्ष-ञ–दासवत्प्रणतम् । ४. ङ–युद्धादिमार्गैः । ५. क्ष-ङ-ञ–अतिशयिततेजोयुक्तैः । ६. च-फ–प्रेरितवानसि । ७. क्ष-ञ–अस्मानपि । ८. क्ष-ङ-च-ज-झ-ञ-ट-त-फ–अपनुद्य ।

Vभव्याय भवनशीलाय प्रतिदिनं कलाभिवृद्ध्या वर्धनशीलाय Vइन्दवे अमृतेन सर्वस्य क्लेदयित्रे तदर्थं Vतत् वक्ष्यमाणं कर्म स्तोत्रं वा Vप्र Vवोचेयं प्रकर्षेण वक्तुं शक्तो भूयासम् । स्तुतेरतिमहत्त्वादिति भावः ॥ वचेः 'लिङ्याशिष्यङ्' । 'वच उम्' ॥ कस्य तदिति । Vयः इन्दुः Vइषवान् एषणवान् Vमन्म मननीयं स्तोत्रं कर्म वा उद्दिश्य Vरेजति गच्छति । रेजतिर्गत्यर्थः, 'रेजति दध्यति' ( नि. २.१४.६०. ) इति तन्नामसु पाठात् । आगमने दृष्टान्तः । Vहव्यो Vन होतव्यः आह्वातव्यो वा हव्यः इन्द्र इव । प्रायेण 'इन्द्र आगच्छ' इत्यादिना इन्द्र एवाहूयते । स इव । स एव विशेष्यते । Vरक्षोहा यज्ञविघातकानां रक्षसां हन्ता Vमन्म तेषामेव कर्म हननादिरूपं Vरेजति गच्छति चालयति नाशयतीत्यर्थः । Vसः एव इन्दुः Vस्वयं Vनिदः ॥ 'णिदि कुत्सायाम्' । क्विप् । 'सावेकाचः०' इति विभक्तेरुदात्तता ॥ अस्मन्निन्दितुर्वैरिणः Vवधैः हननोपायैः ॥ 'हनश्च वधः' इति भावे अप्; तत्संनियोगेन वधादेशः । स च अदन्तोऽन्तोदात्तः ॥ Vदुर्मतिं दुर्बुद्धिम् Vअस्मत् अस्मत्तः Vआ Vअजेत आक्षिपेत् अवनयेत् । किंच Vअघशंसः अघानां पापानां हिंसादीनां शंसिता स्तेनः Vअवतरम् अत्यन्तनिकृष्टम्[1] Vअव स्वस्थानादवाङ्मुखो भूत्वा Vस्रवेत् गच्छतु अधः पतत्वित्यर्थः । अघशंसः स्तेनः, 'अघशंसः वृकः' ( नि. ३. २४. १३ ) इति तन्नामसु पाठात् । अवस्रवणमेव प्रार्थ्यते । Vक्षुद्रमिव क्षेप्तुं शक्यमुदकादिकमिव । उदकं यथा तिष्ठति[2] स्रवन्नश्यति तथा असावपीत्यर्थः ॥

वनेम तद्धोत्रया चितन्त्या वनेम रयिं रयिवः सुवीर्यं रण्वं सन्तं सुवीर्यम् ।
दुर्मन्मानं सुमन्तुभिरेमिषा पृचीमहि ।
आ सत्याभिरिन्द्रं द्युम्नहूतिभिर्यजत्रं द्युम्नहूतिभिः ॥ ७ ॥

वनेम । तत् । होत्रया । चितन्त्या । वनेम । रयिम् । रयिऽवः । सुऽवीर्यम् । रण्वम् । सन्तम् । सुऽवीर्यम् ॥ दुःऽमन्मानम् । सुमन्तुऽभिः । आ । ईम् । इषा । पृचीमहि ।
आ । सत्याभिः । इन्द्रम् । द्युम्नहूतिऽभिः । यजत्रम् । द्युम्नहूतिऽभिः ॥ ७ ॥

हे इन्द्र वयं यजमानाः Vतत् तादृशं स्तुत्यं तव रूपं यद्वा तत् ते वयं Vचितन्त्या तव गुणान्[3] ज्ञापयन्त्या ॥ 'चिती संज्ञाने' । अस्मात् ण्यन्तात् शतरि व्यत्ययेन शः ॥ Vहोत्रया होमसाधनभूतया स्तुतिरूपया वाचा Vवनेम संभजेम यद्वा शब्दयेम स्तुतिं करवामेत्यर्थः । होत्रेति वाङ्नाम, 'होत्रा गीः' (नि. १.११.३५) इति तन्नामसु पाठात् । किंचैवं स्तोतारो वयमपि हे Vरयिवः विशिष्टधनवन्निन्द्र Vरयिं धनं Vवनेम संभजेम । कीदृशं रयिम् । Vसुवीर्यं शोभनसामर्थ्योपेतं Vरण्वं रमणीयं गन्तव्यं वा अर्थिभिः Vसन्तं सर्वदा वर्तमानं यज्ञादिद्वारा बहुशः दीयमानमपि प्रवर्धमानम् । पुनस्तदेव विशेष्यते । Vसुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनेन तेषां संपादयितुं शक्यत्वात् ॥ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥ किंच हे इन्द्र Vदुर्मन्मानं दुःखेन मन्तुं शक्यं त्वां तव महिम्नोऽतिमहत्त्वात् Vसुमन्तुभिः शोभनैर्मननैः[4] तत्साधनैः[4] स्तोत्रैर्वा Vइषा हवीरूपेणान्नेन च Vआ Vपृचीमहि सर्वतः संपृक्ता भूयास्म । यद्वा । इषा अन्नेन निमित्तेन । पूर्वं धनस्य प्रार्थितत्वात् इदानीमन्नं प्रार्थ्यते ॥ 'पृची संपर्के' । लिङि छान्दसो विकरणस्य लुक् ॥ किंच Vयजत्रं यागनिष्पादकम् Vइन्द्रं Vसत्याभिः अविसंवादिनीभिः यथाभिलाषमुपजाय-

---

१. क्ष-ञ-ट-' अत्यन्तनिकृष्टम् ' इत्यस्यानन्तरम् ' अश्रु ( मु ) च च्छन्दसि इत्यमुप्रत्ययः ' इत्यधिकम् ।
२. क्ष-ङ-ञ-ट–न तिष्ठति । ३. क्ष-ङ-ञ-ट–गुणादीन् । ४. ङ–शोभनमननसाधनैः ।

मानफलाभिः ᵛद्युम्नहूतिभिः[1] 'हरिव आगच्छ मेधातिथेर्मेषे' इत्याह्वानैरित्यर्थः। पुनस्ता एव विशेष्यन्ते। ᵛद्युम्नहूतिभिः हविर्लक्षणान्ननिमित्तैराह्वानैः आ पृचीमहि इति शेषः। 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु. ५. ५) इति यास्कः॥

प्रप्रा वो अस्मे स्वयंशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम्।
स्वयं सा रिषयध्यै या न उपेषे अत्रैः।
हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति॥ ८॥

प्रऽप्र। वः। अस्मे इति। स्वयंशःऽभिः। ऊती। परिऽवर्गे। इन्द्रः। दुःऽमतीनाम्। दरीमन्।
दुःऽमतीनाम्॥ स्वयम्। सा। रिषयध्यै। या। नः। उपऽईषे। अत्रैः।
हता। ईम्। असत्। न। वक्षति। क्षिप्ता। जूर्णिः। न। वक्षति॥ ८॥

हे ऋत्विजः ᵛवः युष्मदर्थम् ᵛअस्मे अस्मदर्थं च अयम् ᵛइन्द्रः ᵛस्वयशोभिः स्वकीययशोयुक्तैः ᵛऊती ऊतिभिः रक्षणैः ᵛदुर्मतीनां दुर्मननयुक्तानां विरोधिनां ᵛपरिवर्गे परितो वर्जने निमित्तभूते सति ᵛप्रप्र प्रकृष्टो भवति समर्थो भवतीत्यर्थः। द्विर्भावः पादपूरणः। यद्वा। हे ऋत्विजः वः युष्मदर्थम् अस्मे अस्माकं संबन्धिभिः स्वयशोभिः स्वयमेव अन्यनैरपेक्ष्येण स्तोतुं समर्थैः स्तोत्रैः तुष्टः सन् ऊती ऊतौ रक्षणे प्रप्र प्रकृष्टो भवति॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः[2]॥ कुत्रेति तदुच्यते। दुर्मतीनां दुष्टानां परिवर्गे परितो वर्जनवति संग्रामे यागे वा। पुनः स एव विशेष्यते। ᵛदुर्मतीनां दुष्टबहुमानवतां हननबुद्धीनां[3] ᵛदरीमन् दरीमणि अतिशयेन दारयितरि। एवमिन्द्रे सम्यक् पालयति[4] सति ᵛअत्रैः भक्षकैः अस्मद्विरोधिभिः ᵛया ᵛजूर्णिः जववती सेना। 'जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा' (निरु. ६. ४) इति यास्कः। ᵛनः अस्मान् प्रति ᵛरिषयध्यै हिंसितुम्॥ रिषेर्ण्यन्तात् तुमर्थे शध्यैप्रत्ययः॥ ᵛउपेषे उपगन्तुमस्मान् प्राप्तुम्॥ 'ईङ् गतौ'। तुमर्थे क्सेप्रत्ययः॥ ᵛक्षिप्ता प्रेरिता ᵛसा सेना ᵛस्वयं ᵛहतेमसत् हिंसितैवासीत्। ᵛन[5] ᵛवक्षति अस्मान्न वहेत् न प्राप्नोति। तथा अस्मद्धिंसकान् शत्रूनपि पुनः ᵛन ᵛवक्षति न वहति॥ वहेर्लेटि अडागमः। 'सिब्बहुलम्॰' इति सिप्॥ इन्द्रसामर्थ्येन तत्रैव नष्टाभूदित्यर्थः॥

त्वं न इन्द्र राया परीणसा याहि पथाँ अनेहसा पुरो याह्यरक्षसा।
सचस्व नः पराक आ सचस्वास्तमीक आ।
पाहि नो दूरादारादभिष्टिभिः सदा पाह्यभिष्टिभिः॥ ९॥

त्वम्। नः। इन्द्र। राया। परीणसा। याहि। पथा। अनेहसा। पुरः। याहि। अरक्षसा।
सचस्व। नः। पराके। आ। सचस्व। अस्तम्ऽईके। आ।
पाहि। नः। दूरात्। आरात्। अभिष्टिऽभिः। सदा। पाहि। अभिष्टिऽभिः॥ ९॥

---

१. क्ष-ङ-ञ-ट–यशोवदाहुतिभिः। २. क्ष-ञ-ट–उपसर्गानुसारेण योग्यक्रियाध्याहारः; ङ–उपसर्गानुसारेण द्वयोर्योग्यक्रियाध्याहारः। ३. क–हतबुद्धीनाम्। ४. ङ–पालयितरि। ५. ङ–अतो न।

हे vइन्द्र vत्वं vनः vपथा अस्मत्संबन्धिना मार्गेण vपुरो vयाहि आगच्छ ॥ भस्य टेर्लोपः । उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वम् ॥ कीदृशेन मार्गेण । vअरक्षसा रक्षोवर्जितेन vअनेहसा अपापेन । यज्ञगमनमार्गस्य स्तुतिचोदितत्वात्[1] अनेहस्त्वम् । यद्वा । नः अस्मानुद्दिश्य याहि । किंविशिष्टः इति । vपरीणसा परितो नद्धेन vराया अस्मभ्यं दातव्येन बहुविधधनेन युक्तः सन् । हे इन्द्र vनः अस्मान् vपराके अत्यन्तदूरदेशात् स्वर्गलक्षणात् vआ vसचस्व समवेतो भव । पराके इति दूरनाम, 'पराके पराचैः[2]' (नि. ३. २६. २) इति तन्नामसु पाठात् । तथा vअस्तमीके अत्यन्तान्तिके देवयजनदेशे vसचस्व अस्मत्प्रत्तं हविः सेवस्व संगच्छस्व वा । किंच vनः अस्मान् vदूरात् दूरदेशात् स्वर्गादेः सकाशात् vपाहि रक्ष । vआरात् संनिहितात् इह लोकात् vपाहि पालय । यद्वा । दूरात् अयागकाले स्वर्गे एव उषित्वा अस्मान् पाहि[3] पालय[3] । आरात् यागकाले संनिहिते देवयजनदेशे पाहि । केनेति तदुच्यते । vअभिष्टिभिः अभिमुखैर्यागैः तन्निर्वाहैः । यद्वा । अभ्यागमनैः[4] । किं बहुना । vसदा सर्वकालं[5] यागकाले[6] अयागकाले दूरेऽन्तिके[6] च vअभिष्टिभिः अभित एषणैः vपाहि सम्यक् परिपालय ॥

त्वं न इन्द्र राया तरूषसोग्रं चित्त्वा महिमा सक्षदवसे महे मित्रं नावसे ।
ओजिष्ठ त्रातरविता रथं कं चिदमर्त्य ।
अन्यमस्मद्रिरिषेः कं चिदद्रिवो रिरिक्षन्तं चिदद्रिवः ॥ १० ॥

त्वम् । नः । इन्द्र । राया । तरुषसा । उग्रम् । चित् । त्वा । महिमा । सक्षत् । अवसे । महे । मित्रम् । न । अवसे ॥ ओजिष्ठ । त्रातः । अवितरिति । रथम् । कम् । चित् । अमर्त्य । अन्यम् । अस्मत् । रिरिषेः । कम् । चित् । अद्रिऽवः । रिरिक्षन्तम् । चित् । अद्रिऽवः ॥ १० ॥

हे vइन्द्र vत्वं vनः अस्मान् vतरूषसा तरणकुशलेन अस्मानापद्भ्यः उत्तरीतुं शक्तेन vराया धनेन उद्धर्ता भवेति शेषः । हे इन्द्र vत्वा त्वाम् vउग्रं vचित् उद्गूर्णबलं सन्तं त्वामेव vमहिमा महत्त्वम् अस्मत्स्तोत्रजनितः कश्चिदतिशयः vसक्षत् सेवते संभजते उत्कर्षयतीत्यर्थः । किमर्थम् । vअवसे त्वत्प्रीतये[7] । तत्र दृष्टान्तः । vमहे महते vअवसे रक्षणाय प्रकाशारोग्यादिरूपाय vमित्रं vन सर्वजनमित्रं सूर्यमिव । तं यथा महत्त्वेन संयोजयन्ति तथेत्यर्थः । यद्वा । मित्रं न प्रियहितरूपं सखायमिव । तं यथा महत्यै प्रीतये संभजन्ते तद्वत् । किंच हे vओजिष्ठ ओजस्वितम अतिशयेन बलवन् vत्रातः रक्षितः अस्मान् पालयितर्वा vअमर्त्य अमरणधर्मन् इन्द्र vअवितः अस्मान् धनेन तर्पयितः त्वं vकं vचित् vरथं वेगवन्तमारुह्य अस्मद्देवयजनं शीघ्रमागच्छेति शेषः । तथा हे vअद्रिवः शत्रूणामतिशयेन भक्षकेन्द्र vअस्मत् vअन्यं vरिरिक्षन्तं vचित् अल्पं महान्तं वा । शत्रुमिति शेषः । vरिरिषेः बाधस्व । तथा हे vअद्रिवः अद्रेरादर्तर्भक्षक वा शत्रूणाम् । 'अद्रिवन्नद्रिरादृणात्यनेनापि वात्तेः स्यात्' (निरु. ४. ४) इति निरुक्तम् । रिरिक्षन्तं चित् अत्यन्तं कुत्सितं हिंसन्तमपि शत्रुं रिरिषेः बाधस्व ॥ 'रिष हिंसायाम्' । छान्दसः शपः श्लुः । पुनर्व्यत्ययेन शः । रिरिक्षन्तम् । अस्मादेव सनि 'हलन्ताच्च' इति

१. क्ष-ङ-ञ-ट—श्रुतिचोदितत्वात् । २. क्ष-ङ-ञ-ट—परावतः । ३. क्ष-ङ-झ-ञ-ट—परिपालय । ४. क-ज-ञ-झ-ण-त—अभ्यासशमनैः; क्ष-ङ-ञ-ट—अभ्यासगमनैः । ५. क्ष-ङ-ञ-ट—सार्वकालम् । ६. क्ष-ङ-ञ-ट—यागकाले दूरे संनिहिते । ७. क्ष-ञ-ट—त्वत्प्रीतये तृप्तये वा ।

सनः किरवात् गुणाभावः। चिदित्यवकुत्सितः[1]। 'कुल्माषांश्चिदाहरेत्यवकुत्सिते' ( निरु. १. ४ ) इति यास्केनोक्तत्वात्। यद्वा। समुच्चयार्थः। कंचित् इत्यनेन सह समुच्चीयते ॥

पाहि न इन्द्र सुष्टुत स्रिधोऽवयाता सदमिद्दुर्मतीनां देवः सन्दुर्मतीनाम्।
हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः।
अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥ ११ ॥

पाहि। नः। इन्द्र। सुऽस्तुत। स्रिधः। अवऽयाता। सदम्। इत्। दुःऽमतीनाम्। देवः। सन्। दुःऽमतीनाम्॥ हन्ता। पापस्य। रक्षसः। त्राता। विप्रस्य। माऽवतः। अध। हि। त्वा। जनिता। जीजनत्। वसो इति। रक्षःऽहनम्। त्वा। जीजनत्। वसो इति॥११॥

हे ᵛइन्द्र ᵛसुष्टुत शोभनस्तुत त्वं ᵛस्रिधः दुःखात्[2] तदुत्पादकात् पापाद्वा ᵛनः अस्मान् ᵛपाहि रक्ष। यतः त्वं ᵛदुर्मतीनां दुर्मनस्कानां रक्षःप्रभृतीनाम्॥ 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्॥ ᵛसदमित् सर्वदैव ᵛअवयाता अधोयापयिता[3] प्रापयितासि। अतः पाहि। अत एव हे इन्द्र ᵛदेवः अस्मत्स्तुत्या हृष्टः ᵛसन् ᵛदुर्मतीनां दुष्टमननवतां यागविघातकानाम् अवयाता असि। तथा ᵛरक्षसः रक्षणनिमित्तभूतस्य। 'रक्षो रक्षितव्यमस्मात्' ( निरु. ४. १८ ) इति यास्कः। तादृशस्य ᵛपापस्य फलप्रतिबन्धरूपस्य ᵛहन्ता घातकोऽसि। यद्वा। पापस्य पापिनः रक्षसः राक्षसादेः हन्तासि। तथा ᵛमावतः मत्सदृशस्य ᵛविप्रस्य मेधाविनः यजमानस्य ᵛत्राता रक्षितासि। ᵛअध अतो हेतोः हे इन्द्र ᵛवसो सर्वेषां निवासभूत ᵛत्वा त्वां ᵛजनिता सर्वस्य जनयितादिकर्ता परमेश्वरः ᵛजीजनत् अजनयत् उत्पादितवान्। तथा हे ᵛवसो वासयितः ᵛत्वा त्वां ᵛरक्षोहणं ᵛजीजनत् रक्षोहननाय उत्पादितवान्॥ जनयतेर्लुङि चङि रूपम्॥ यज्ञादिविघातिनां रक्षःप्रभृतीनां विघाताय हीन्द्रस्यावतारः। 'तमिन्द्रो देवतान्वसृज्यत' ( तै. सं. ७. १. १. ४ ) इत्यादिप्रसिद्धद्योतनार्थो हि शब्दः॥ ॥ १७ ॥

'एन्द्र याह्युप नः' इति दशर्चं चतुर्थं सूक्तं पारुच्छेपमैन्द्रम्। अन्त्या 'स नो नव्येभिः' इत्येषा त्रिष्टुप् शिष्टा अत्यष्टयः। अत्र त्रिष्टुबन्तपरिभाषा नाश्रीयते 'सर्वमात्यष्टम्' इति विशेषेण प्रतिज्ञातत्वात्। 'एन्द्र याहि दशान्त्या त्रिष्टुप्' इत्यनुक्रमणिका। पृष्ठ्यषडहस्य षष्ठेऽहनि निष्केवल्यमेतत्सूक्तम्। 'षष्ठस्य' इति खण्डे सूत्रितम्—'एन्द्र याह्युप नः प्र घान्वस्य' ( आश्व. श्रौ. ८. १ ) इति॥ महाव्रते माध्यंदिनसवने ब्राह्मणाच्छंसिनोऽनुरूपतृचे प्रथमा 'एन्द्र याहि' इत्येषा। 'महाव्रतस्य पञ्चविंशतिम्' इति खण्डे शौनकेन सूत्रितम्—'एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत' ( ऐ. आ. ५. १. १ ) इति॥

---

१. क्ष-ञ-ट—चिदित्यवकुत्सिते। २. क्ष-ञ-ट—शोषकात् दुःखात्; ङ—शोकात् दुःखात्। ३. क्ष-ञ-ट—अवयापयिता।

एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं राजेव सत्पतिः ।
हवामहे त्वा वयं प्रयस्वन्तः सुते सचा ।
पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ १ ॥

आ । इन्द्र । याहि । उप । नः । पराऽवतः । न । अयम् । अच्छ । विदथानिऽइव । सत्ऽपतिः ।
अस्तम् । राजाऽइव । सत्ऽपतिः ॥ हवामहे । त्वा । वयम् । प्रयस्वन्तः । सुते । सचा ।
पुत्रासः । न । पितरम् । वाजऽसातये । मंहिष्ठम् । वाजऽसातये ॥ १ ॥

हे vइन्द्र vपरावतः दूरदेशात् स्वर्गलक्षणात् vनः अस्मान् vउप vयाहि अस्मत्समीपं प्रत्यागच्छ । तत्र दृष्टान्तः । vअयं vन । पुरोवर्ती अग्निः अभिषुतः सोमो वा प्रस्तुतत्वान्निर्दिश्यते । स इव । यद्यपि पुरस्तादुपाचारात् निषेधार्थीयो नकारः सर्वत्र तथाप्यत्र औचित्येनोपमार्थीयो गृह्यते । यद्वा । परावतो न दूरदेशादिव । यद्यपि यज्ञे सर्वदा संनिहितः तथापि स्वर्गाख्याद्दूरदेशादिव अस्मिन् यज्ञे ॥ अयमिति विभक्तिव्यत्ययः ॥ अमुं देवयजनदेशम् vअच्छ अभिप्राप्तुम्[1] vआ याहि इति शेषः । तत्र दृष्टान्तः । vसत्पतिः सतां सर्वदा वर्तमानानामृत्विजां पालको यजमान इव ॥ 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ स यथा vविदथानि वेदनानि अनुष्ठेयज्ञानानि । यद्वा । सतां विद्यमानानां फलानां पालकोऽग्निः । स यथा विदथानि यज्ञगृहाण्यागच्छति तद्वत् त्वमपि यज्ञगृहाण्यागच्छ । यद्वा । सतां नक्षत्राणां पतिः vराजा चन्द्रमाः vअस्तमिव । स यथा स्वधामस्थानम्[2] आगच्छति तद्वत् । किंच vप्रयस्वन्तः हविर्लक्षणान्नवन्तः vवयं यजमानाः vत्वा त्वां vहवामहे आह्वयामः । किमर्थम् । vसुते अभिषुते सोमे निमित्तभूते सति । कीदृशा वयम् । vसचा ऋत्विग्भिः सहिताः । 'सचा सहेत्यर्थः' (निरु.५. ५) इति यास्कः । आह्वाने दृष्टान्तः । vपुत्रासः पुत्राः vपितरं vन पालकं जनकमिव । तं यथा vवाजसातये अन्नस्य संभजनायाह्वयन्ति तथा वयमपि त्वां तदर्थमाह्वयामः । किंच vमंहिष्ठं मंहनीयं त्वां vवाजसातये संग्रामप्राप्तये तज्जयाय हविःस्वीकाराय वा आह्वयामः ॥

षष्ठेऽहनि माध्यंदिने सवने प्रस्थितयाज्यानां पुरस्तात् अन्या ऋचः प्रक्षेपणीयाः । तत्र होतुः पुरस्तात् 'पिबा सोममिन्द्र' इत्येषा । 'षष्ठस्य प्रातःसवने' इति खण्डे सूत्रितं–'पिबा सोममिन्द्र सुवानमद्रिभिरिन्द्राय हि द्यौरसुरो अनम्नत' (आश्व. श्रौ. ८. १) इति ॥

पिबा सोममिन्द्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्तातृषाणो न वंसगः ।
मदाय हर्यताय ते तुविष्टमाय धायसे ।
आ त्वा यच्छन्तु हरितो न सूर्यमहा विश्वेव सूर्यम् ॥ २ ॥

पिब । सोमम् । इन्द्र । सुवानम् । अद्रिऽभिः । कोशेन । सिक्तम् । अवतम् । न । वंसगः ।
ततृषाणः । न । वंसगः ॥ मदाय । हर्यताय । ते । तुविःऽतमाय । धायसे ।
आ । त्वा । यच्छन्तु । हरितः । न । सूर्यम् । अहा । विश्वाऽइव । सूर्यम् ॥ २ ॥

---

१. ङ-झ–आभिमुख्येन प्राप्तुम् । २. क्ष-ज-ट–स्वप्रधानस्थानम् ।

हे ^V^इन्द्र ^V^वंसगः वननीयगमनस्त्वं ^V^सोमं ^V^पिब ॥ 'द्व्यचोऽतस्तिङः' इति दीर्घः ॥ कीदृशं तम् । ^V^अद्रिभिः अभिषवसाधनैर्ग्रावभिः ^V^सुवानं सूयमानम् ॥ कर्मणि कर्तृप्रत्ययः ॥ ^V^कोशेन ^V^सिक्तं कोशस्थानीयेन दशापवित्रेण शोधितम्। यद्वा। अवतम् इत्यनेन सह संबन्धः। कोशेनेति[1] लक्षणेन[1](?) सिक्तं स्वोचितजलेन[2] पूरितम् ^V^अवतं ^V^न आहावलक्षणम् अवटमिव[3] । तं यथा वंसगः वननीयगमनः तृषा शीघ्रगामी वृषभः पिबति तद्वत्। ^V^ततृषाणो ^V^न ^V^वंसगः। यथा अत्यन्तं तृषितो वंसगो वननीयगमनः शीघ्रगामी पुरुषः आहावादिकमागत्य पिबति तद्वत्। किमर्थं पानमिति तत्राह। ^V^ते तव ^V^मदाय तृप्तये ^V^हर्यताय विश्रान्तिहेतवे कान्त्यर्थं वा ॥ 'हर्य गतिकान्त्योः'। 'भृमृदृशि°' इत्यादिना अतच् ॥ ^V^तुविष्टमाय महत्त्वाय प्रवृद्धत्वाय ^V^धायसे यदर्थं मद उपजायते तदर्थाय ॥ धाञः 'वहिहाधाञ्भ्यः°' इत्यसुनि 'णित्' इत्यनुवृत्तेः 'आतो युक्°' इति युक्॥ यद्वा। ते तव तुविष्टमाय धायसे अतिप्रभूताय पानाय। ^V^त्वा त्वाम् ^V^आ ^V^यच्छन्तु आभिमुख्येन गमयन्तु। अश्वा इति शेषः। तत्र दृष्टान्तः। ^V^हरितो ^V^न ^V^सूर्यं हरिद्वर्णविशिष्टा एतन्नामका अश्वाः सूर्यमिव। तं यथा अतित्वरया अभिमतदेशम्[4] अभिप्रेरिताः[4] वहन्ति तद्वत्। किंच ^V^अहा ^V^विश्वा सर्वाण्यहानि ^V^सूर्यम् इव। तं यथा त एव प्रतिदिनं वहन्ति तथा अस्मद्यागदिवसेषु प्रतिदिनमावहन्तु ॥

**अविन्दद्दिवो निहितं गुहा निधिं वेर्न गर्भं परिवीतमश्मन्यनन्ते अन्तरश्मनि ।**
**व्रजं वज्री गवामिव सिषासन्नङ्गिरस्तमः ।**
**अपावृणोदिष इन्द्रः परीवृता द्वार इषः परीवृताः ॥ ३ ॥**

अविन्दत्। दिवः। निऽहितम्। गुहा। निऽधिम्। वेः। न। गर्भम्। परिऽवीतम्। अश्मनि। अनन्ते। अन्तः। अश्मनि ॥ व्रजम्। वज्री। गवाम्ऽइव। सिसासन्। अङ्गिरःऽतमः। अप। अवृणोत्। इषः। इन्द्रः। परिऽवृताः। द्वारः। इषः। परिऽवृताः ॥ ३ ॥

अयमिन्द्रः ^V^दिवः द्युलोकादानीतं सोमम् ^V^अविन्दत् अलभत लब्धवान्। द्युलोकात् गायत्र्या पक्षिरूपयापहृतं भूमावानीतं स्वीकृतवानित्यर्थः। द्युलोकादानयनं तैत्तिरीये 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्' (तै. ब्रा. ३. २. १. १) इत्यादिषु प्रसिद्धम्। स एव विशेष्यते। ^V^गुहा ^V^निहितम् अतिगोप्ये प्रदेशे पर्वतादौ स्थापितम् अत एव ^V^निधिं निधिस्थानीयम् अनाशमित्यर्थः[5]। आनयने दृष्टान्तः। ^V^वेः पक्षिणः ^V^गर्भं ^V^न शिशुमिव। यथा कपोतादिस्त्री पक्षिणी स्वशिशुं व्याधादिभयात् कस्मिंश्चिद्दुर्गमे स्थापयित्वा तत्स्थानम् अजानती[6] परिभ्रम्य विन्दते तद्वदित्यर्थः। पुनः कीदृशम्। ^V^अश्मनि पाषाणे[7] अतिमहति[7] विस्तृते ^V^अनन्ते ^V^अश्मनि अपरिमितपाषाणे पर्वतादौ ^V^परिवीतं लताकण्टकादिना परितो वेष्टितम्। सत्स्वपीतरेषु देवेषु कोऽस्यातिशयं इति तत्राह। अयम् ^V^इन्द्रः ^V^वज्री[8] वज्रवान् ^V^गवां ^V^व्रजम्[8] इव पणिना असुरेणापहृतं भूमौ खनित्वा पाषाणेन पिहितद्वारं गवां

---

१. क्ष-ङ-ञ-ट—कोशेनेति जलेन; झ—कोशेन दृतिलक्षणेन। २. क्ष-ङ-ञ-ट—स्रावितजलेन; झ—स्रावितं जलेन ३. क्ष-ञ-ट—अवतमिव। ४. ङ—अभिमतदेशम् अरुणप्रेरिताः; क्ष-ञ-ट—अभिमतदेशे अरुणप्रेरिताः। ५. क्ष-ङ-ञ-ट—अनीशमित्यर्थः; झ—अविनाशमित्यर्थः। ६. च-फ—अपश्यन्ती। ७. ङ—व्याप्तिमिति। ८. झ—वज्रवान् अङ्गिरस्तमः अतिशयेन शत्रून् प्रति गमनशीलः अङ्गारवत्तेजस्वी वा। गवां व्रजमिव।

व्रजं यथा तमसुरं जित्वा द्वारम् उद्घाट्य[1] लब्धवान्[1] तद्वत् सोमं ᵛसिषासन् संभक्तुमिच्छन् ॥ ' सनीवन्तर्ध° ' इति विकल्पनात् इडभावे ' जनसन° ' इति आत्वम् ॥ अविन्दत्। अयमर्थः ' पणिनेव गावः' ( ऋ. सं. १. ३२. ११ ) इत्यादिश्रुतिषु प्रसिद्धः। तथा अयम् ᵛइन्द्रः ᵛपरीवृताः परितो मेघेनावृताः ᵛइषः अन्नहेतुभूतस्योदकस्य ᵛद्वारः द्वाराणि ᵛअपावृणोत् अपवृतान्यकरोत्[2] उद्घाटितवानित्यर्थः। तथा कृत्वा ᵛइषः इष्यमाणानि व्रीह्याद्यन्नानि ᵛपरीवृताः भूमौ परितो व्याप्तान्यकरोत्। वज्रेण मेघं भित्त्वा जलवर्षणेन सस्यादिसमृद्धिं कृत्वा व्रीह्यादिकं भूमौ व्याप्तमकरोदित्यर्थः। यतः अयमेवं कृतवान् अतः सोमस्वीकारो युक्तः ॥

दादृहाणो वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्ममसनाय
सं श्यदहिहत्याय सं श्यत् ।
संविव्यान ओजसा शवोभिरिन्द्र मज्मना ।
तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव नि वृश्चसि ॥ ४ ॥

दद्हाणः। वज्रम्। इन्द्रः। गभस्त्योः। क्षद्मऽइव। तिग्मम्। असनाय। सम्। श्यत्। अहिऽहत्याय। सम्। श्यत् ॥ सम्ऽविव्यानः। ओजसा। शवःऽभिः। इन्द्र। मज्मना। तष्टाऽइव। वृक्षम्। वनिनः। नि। वृश्चसि। परश्वाऽइव। नि। वृश्चसि ॥ ४ ॥

अयम् ᵛइन्द्रो ᵛगभस्त्योः बाह्वोः ᵛवज्रं ᵛदद्हाणः दृढं गृह्णन् ॥ ' दृह दृहि वृद्धौ '। लिटः कानच् ॥ गभस्ती इति बाहुनाम, ' गभस्ती बाहू ' ( नि. २. ४. ६ ) इति तन्नामसु पाठात्। किमर्थम्। ᵛअसनाय शत्रोरुपरि क्षेपणाय ᵛतिग्मम् अत्यन्ततीक्ष्णं वज्रं ᵛसं ᵛश्यत् सम्यक् तीक्ष्णीकरोति ॥ ' शो तनूकरणे '। ' ओतः श्यनि ' इति ओकारलोपः। छान्दसः अडभावः। यद्वा। लेटि ' इतश्च लोपः° ' इति इकारलोपः ॥ तत्र दृष्टान्तः। ᵛक्षद्मेव उदकमिव। उदकं यथा शत्रूणां निरसनाय अभिमन्त्रणादिसंस्कारेण तीक्ष्णीक्रियते तद्वत्। क्षद्मेत्युदकनाम, ' क्षद्म नभः ' ( नि. १. १२. ३ ) इति तन्नामसु पाठात्। पुनरपि तदेव विशेष्यते। ᵛअहिहत्याय अहेर्वृत्रस्य मेघस्य वा हननाय ॥ हन्तेः ' हनस्त च ' इति क्यप् तकारान्तादेशश्च ॥ ᵛसं ᵛश्यत्। पूर्वमेव तीक्ष्णं सत् पुनरपि वधाय तीक्ष्णयति। हे ᵛइन्द्र ᵛओजसा बलेन पराभिभवनसामर्थ्येन[3] ᵛशवोभिः सेनालक्षणैर्बलैः ᵛमज्मना शारीरेण च बलेन ᵛसंविव्यानः सम्यग्युक्तः सन् ॥ विव्यान इति लिटः कानच्। ' ग्रहिज्यावयि° ' इति संप्रसारणम् ॥ ᵛतष्टा ᵛवृक्षमिव। यथा कश्चित्तष्टा वृक्षाणां तक्षणस्य साधु कर्ता ᵛवनिनः वनसंबन्धिनो वृक्षान् निवृश्चति स्वोपयोगाय नितरां छिनत्ति तक्षणेन तनूकरोति तथा त्वमपि अस्मासु वक्रमाचरन्तं शत्रुं ᵛनि ᵛवृश्चसि। किंच ᵛपरश्वेव ᵛनि ᵛवृश्चसि। यथा परशुना कश्चिच्छिनत्ति वृक्षं तथा त्वमपि उक्तैस्त्रिविधैर्बलैः नितरामस्मद्द्वेषिणं वृश्चसि ॥

---

१. क्ष-ञ-ट—उन्नाह्य (?) पुनर्लब्धवान्; ङ—उद्घाट्य पुनर्लब्धवान्। २. च-फ—अपावृतान्यकरोत्। ३. क्ष-ञ-ट—पराभिभवसामर्थ्येन।

त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँइव वाजयतो रथाँइव ।
इत ऊतीरयुञ्जत समानमर्थमक्षितम् ।
धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ॥ ५ ॥

त्वम् । वृथा । नद्यः । इन्द्र । सर्तवे । अच्छ । समुद्रम् । असृजः । रथान्ऽइव । वाजऽयतः ।
रथान्ऽइव ॥ इतः । ऊतीः । अयुञ्जत । समानम् । अर्थम् । अक्षितम् ।
धेनूःऽइव । मनवे । विश्वऽदोहसः । जनाय । विश्वऽदोहसः ॥ ५ ॥

हे इन्द्र त्वं वृथा अप्रयत्नेनैव नद्यः नदीः समुद्रम् अच्छ[1] आभिमुख्येन सर्तवे प्राप्तुम्[1] असृजः मेघं निर्भिद्य उत्पादितवानसि । तत्र दृष्टान्तः । रथानिव । यथा त्वं रथान् अस्मद्यागं प्रति अच्छ सर्तवे[2] आभिमुख्येन प्राप्तुम् असृजः सृष्टवानसि तद्वत् । किंच वाजयतो रथानिव संग्राममन्नं वा इच्छन्तो राजादयः रथानिव । ते यथा संग्रामं प्रति[3] ओषध्यादिकं वा अतिसर्तुं[4] रथान् सृजन्ति[5] तद्वत् ॥ क्यजन्तात् 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् ॥ किंच इतः अस्मत्संनिधिदेशम् ॥ द्वितीयार्थे तसिल् ॥ अस्मान् प्रति ऊतीः ऊत्यः गमनवत्यो रक्षणवत्यो वा नद्यः समानमर्थं समानप्रयोजनवत् अक्षितम् उदकम् अयुञ्जत योजितवत्यः । त्वत्प्रसादादिति भावः ॥ अर्थशब्दः उदकविशेषणः सन् नपुंसकलिङ्गः ॥ अक्षितमित्युदकनाम, 'अक्षितं बर्हिः'(नि.१.१२.७७)इति तन्नामसु पाठात् । तत्र दृष्टान्तः । मनवे मनोरर्थाय धेनूरिव धेनवो यथा विश्वदोहसः सर्वार्थं[6] दोग्ध्र्यः[6] अभवन् । यथा वा जनाय यस्मै[7] कस्मै चित्समर्थाय[7] तदर्थं विश्वदोहसः भवन्ति सर्वक्षीरप्रदा भवन्ति । यद्वा । जनाय सर्वजनार्थं सस्यादीनभिलक्ष्य नद्यः विश्वदोहसः संपूर्णदोग्ध्र्यः भवन्ति सर्वत्र प्रवहन्ति । अत्र नद्यः प्रीणनात्[8] दोहस इत्युपचर्यंते[8] । ईदृग्जगदुपकारिवृष्टिप्रदः[9] इतीन्द्रस्यैव स्तुतिः ॥ ॥ १८ ॥

इमां ते वाचं वसूयन्त आयवो रथं न धीरः
स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः ।
शुम्भन्तो जेन्यं यथा वाजेषु विप्र वाजिनम् ।
अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥ ६ ॥

इमाम् । ते । वाचम् । वसुऽयन्तः । आयवः । रथम् । न । धीरः । सुऽअपाः । अतक्षिषुः ।
सुम्नाय । त्वाम् । अतक्षिषुः ॥ शुम्भन्तः । जेन्यम् । यथा । वाजेषु । विप्र । वाजिनम् ।
अत्यम्ऽइव । शवसे । सातये । धना । विश्वा । धनानि । सातये ॥ ६ ॥

---

१. ङ-ञ-अच्छ तम् आभिमुख्येन सर्तवे सर्तुम् । २. ङ-सर्तुम् । ३. ङ-ञ-झ-'प्रति' नास्ति । ४. ङ-प्रतिसर्तुम् । ५. क्ष-ङ-झ-ञ-ट-सृजन्ति विसृजन्ति । ६. क्ष-ञ-ट-सर्वार्थदोग्ध्र्यः । ७. क्ष-ञ-ट-यस्य कस्यचन मर्त्याय; ङ-यस्य कस्यचन समर्थाय; झ-यजनसमर्थाय । ८. ङ-दोहनात् दोहस इत्युपचर्यन्ते । ९. क्ष-ञ-ट-ईदृग्जनोपकारिवृष्टिप्रदः; ङ-ईदृग्धनोपकारिवृष्टिप्रदः ।

हे इन्द्र ते त्वदर्थं वसूयन्तः धनमात्मन इच्छन्तः आयवः दातव्यहवीरूपान्नवन्त ऋत्विजः। आयव इति मनुष्यनाम, 'आयवःअनवः' (नि.२.३.१७) इति तन्नामसु पाठात्। ते इमां क्रियमाणां स्तुतिरूपां वाचम् अतक्षिषुः संपादितवन्तः[1]। स्वपाः[1] शोभनकर्मवान् कुशली॥ बहुव्रीहौ 'सोमनसी°' इत्युत्तरपदाद्युदात्तत्वम्॥ धीरः धीमान् रथं न रथमिव। तं यथा प्रयत्नेन साधु करोति तद्वत्। एवं कृत्वा त्वां सुम्नाय सुखाय अतक्षिषुः अनुकूलमुत्पादयन्ति। सुम्नमिति सुखनाम, 'सुम्नं सुग्म्यम्' ( नि. ३. ६. १६ ) इति तन्नामसु पाठात्। किंच हे विप्र मेधाविन्निन्द्र[2] वाजेषु संग्रामेषु वाजिनं वेगवन्तं त्वां शुम्भन्तः गुणैर्दीपयन्तः अतक्षिषुः[2] स्तुत्या प्रीणयन्ति। तत्र दृष्टान्तः। जेन्यं यथा। जयशीलं शूरं यथा भटाः स्तुवन्ति तद्वत्। यद्वा। जेन्यं जयशीलं वाजिनं वेगवन्तम् अश्वं[3] वाजेषु संग्रामेषु यथा उत्साहयन्ति तद्वत्। किंच शवसे बलाय धना धनानां सातये लाभाय च स्तुम इति शेषः॥ 'ऊतियूतिजूतिसाति°' इत्यादिना क्तिन उदात्तत्वम्॥ न केवलं धनमात्रं किंतु विश्वा धनानि सातये कृत्स्नानि प्रीणनसाधनानि[4] गवादिधनानि॥ षष्ठ्यर्थे द्वितीया॥ तेषां लाभाय[4]। तत्र दृष्टान्तः। धना धने संग्रामे शवसे वैरिजयसाधनबलाय सातये तेषामेव धनानां प्राप्तये च अत्यमिव सततगामिनमश्वमिव। तं यथा स्तुवन्ति तद्वत्॥

**भिनत्पुरो नवतिमिन्द्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो।**
**अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत्।**
**महो धनानि दयमान ओजसा विश्वा धनान्योजसा॥ ७॥**

भिनत्। पुरः। नवतिम्। इन्द्र। पूरवे। दिवःऽदासाय। महि। दाशुषे। नृतो इति। वज्रेण। दाशुषे। नृतो इति॥ अतिथिऽग्वाय। शम्बरम्। गिरेः। उग्रः। अव। अभरत्। महः। धनानि। दयमानः। ओजसा। विश्वा। धनानि। ओजसा॥ ७॥

हे इन्द्र नृतो रणे नर्तनशील त्वं दाशुषे हविर्दत्तवते पूरवे अभिमतपूरकाय[5]। मनुष्यनामैतत्। महि महते दिवोदासाय एतन्नामकाय राज्ञे॥ 'दिवो दासे षष्ठ्या अलुक्' (का. ६. ३. २१. ५) इति अलुक्। 'दिवोदासादीनां छन्दसि' इति पूर्वपदाद्युदात्तत्वम्॥ नवतिम् एतत्संख्याकानि पुरः शत्रूणां पुराणि भिनत् भिन्नवानसि। तथा हे नृतो गात्रविक्षेपणकुशल हस्तपादादिप्रक्षेपेण शत्रूणां हिंसक वज्रेण क्षेपणसमर्थेनायुधेन दाशुषे हविर्दत्तवते दिवोदासाय अन्यस्मै वा भिनत्। तमपि शत्रुं भिन्नवानसि। इदानीं परोक्षेणाह। अतिथिग्वाय पूजार्थमतिथिं गच्छते दिवोदासाय तदर्थम्॥ गमेरौणादिको ड्वप्रत्ययः॥ उग्रः उद्गूर्णबलः इन्द्रः पूर्वं पुरभेदनसमये विद्धमपि अम्रियमाणं गिरिमारूढं शम्बरम् एतन्नामानमसुरं गिरेः दुर्गमात् पर्वतादेः सकाशात् ओजसा स्वकीयेन बलेन अवाभरत् अवाङ्मुखमवकृष्य प्राणं हृतवान्। किं कुर्वन्। महः महान्ति धनानि तदीयगवाश्वादीनि दयमानः

---

१. क्ष-ञ-ट—संपादितवन्तः। तत्र दृष्टान्तः। स्वपाः। २. क्ष-ञ-ट—मेधाविन्निन्द्र जेन्यं जयशीलं त्वां वाजेषु संग्रामेषु वाजिनं वेगवन्तं त्वां शुम्भन्तो गुणैर्दीपयन्तः अतक्षिषुः; ङ—मेधाविन् इन्द्र जेन्यं जयशीलत्वात् वाजिनं वेगवन्तं त्वां शुम्भन्तः गुणैः भासयन्तः अतक्षिषुः। ३. झ—अत्यम् अश्वम्। ४. क्ष-ञ-ट—प्रीणनसाधनानि लब्धुं तेषां लाभाय। ५. ङ—एतदभिमतपूरकाय; झ—अभिमतपूरकाय मनुष्याय।

दिवोदासाय राज्ञे साधयन् ॥ 'दय दानगतिहिंसादानेषु'। शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेण धातुस्वरः ॥ न केवलमल्पं धनं किंतु ᵛविश्वा ᵛधनानि सर्वाण्यपि तेषां मणिमुक्तादीनि ᵛओजसा स्वकीयेन बलेन दयमानः साधयन् अवाभरत् ॥

इन्द्रः॑ स॒मत्सु॒ यज॑मान॒मार्यं॒ प्राव॒द्विश्वे॑षु श॒तमू॑तिरा॒जिषु॒ स्व॑र्मीळ्हेष्वा॒जिषु॑ ।
मन॑वे॒ शास॑दव्र॒तान्त्वचं॑ कृ॒ष्णाम॑रन्धयत् ।
दक्ष॒न्न विश्वं॑ ततृषा॒णमो॑षति॒ न्य॑र्श॒सा॒नमो॑षति ॥ ८ ॥

इन्द्रः॑ । स॒मत्ऽसु॑ । यज॑मानम् । आर्य॑म् । प्र । आ॒व॒त् । विश्वे॑षु । श॒तम्ऽऊ॑तिः । आ॒जिषु॑ । स्वः॑ऽमीळ्हेषु । आ॒जिषु॑ ॥ मन॑वे । शास॑त् । अ॒व्र॒तान् । त्वच॑म् । कृ॒ष्णाम् । अ॒र॒न्ध॒य॒त् । धक्ष॑त् । न । विश्व॑म् । त॒तृ॒षा॒णम् । ओ॒ष॒ति॒ । नि । अ॒र्श॒सा॒नम् । ओ॒ष॒ति॒ ॥ ८ ॥

अयम् ᵛइन्द्रः ᵛसमत्सु रणेषु[1] प्रहारनिमित्तेषु ᵛयजमानं यष्टारम् ᵛआर्यम् अरणीयं सर्वैर्गन्तव्यं ᵛप्रावत् रक्षति। समत्सु इति संग्रामनाम 'समत्सु समरणे' (नि. २.१७.२२) इति तन्नामसु पाठात्। किंच ᵛशतमूतिः स्वभक्तेष्वपरिमितरक्षणः इन्द्रः ᵛविश्वेषु ॥ लिङ्गव्यत्ययः ॥ ᵛआजिषु सर्वेषु स्पर्धानिमित्तेषु संग्रामेषु यजमानं प्रावत्। तथा ᵛस्वर्मीळ्हेषु स्वर्गदेशेषु सुखस्य सेचयत्सु वा ᵛआजिषु महासंग्रामेषु प्रावत् स्वर्गप्रदानेन रक्षति। रणे आभिमुख्येन हतानां वीराणां स्वर्गः पराशरेण स्मर्यते–'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे योऽभिमुखो हतः' (परा. ३. २५) इति। अत्रेतिहासमाचक्षते। अंशुमती नाम नदी। तस्यास्तीरे कृष्णनामा असुरः वर्णतश्च कृष्णः दशसहस्रैरनुचरैरुपेतः तद्देशवर्तिनः[2] पीडयन्नास्ते। तत्रेन्द्रः[3] बृहस्पतिना प्रेरितः सन् मरुद्भिः सहितः कृष्णां तदीयत्वचमुत्कृत्य सानुचरमवधीत्। अयमर्थः 'अव द्रप्सो अंशुमतीमतिष्ठत्' (ऋ. सं. ८. ९६. १३) इत्यादिना उपरिष्टात् वक्ष्यते। तदत्रोच्यते। अयमिन्द्रः ᵛमनवे मनुष्याय॥ विभक्तिव्यत्ययः॥ मनुष्याणामर्थाय। ᵛअव्रतान्। व्रतमिति कर्मनाम। तद्रहितान् यागविद्वेषिणः ᵛशासत् शिक्षितवान् हिंसितवान् ॥ शासेर्लेटि अडागमः ॥ तथा ᵛकृष्णां ᵛत्वचं कृष्णनाम्नोऽसुरस्य कृष्णवर्णां त्वचमुत्कृत्य ᵛअरन्धयत् हिंसितवान् ॥ 'रध हिंसायाम्'। 'रधिजभोरचि' इति नुम्॥ केन प्रकारेणेति तदुच्यते। ᵛधक्षत्[4] भस्मीकरोति ॥ लेट्यडागमः। 'सिब्बहुलम्०' इति सिप्॥ तथा ᵛविश्वं ᵛततृषाणमोषति। सर्वमपि हिंसकं तदनुचरसंघं दहति। यत्किंचिदवशिष्टमिति न इत्याह। ᵛअर्शसानं हिंसारुचिं हतावशिष्टं सर्वमपि ᵛनि ᵛओषति निःशेषेण दहति ॥

---

१. न–समरणेषु। २. क्ष-ञ-ङ-ञ-ट–तद्देशवर्तिनः प्राणिनः। ३. क्ष-ञ-ट–तदेन्द्रः ४. क्ष-ञ-ट–धक्षन्न। भस्मीकरोतीव।

सूरश्चक्रं प्र वृहज्जात ओजसा प्रपित्वे वाचमरुणो मुषायतीशान आ मुषायति।
उशना यत्परावतोऽजगन्नूतये कवे ।
सुम्नानि विश्वा मनुषेव तुर्वणिरहा विश्वेव तुर्वणिः ॥ ९ ॥

सूरः । चक्रम् । प्र । वृहत् । जातः । ओजसा । प्रऽपित्वे । वाचम् । अरुणः । मुषायति ।
ईशानः । आ । मुषायति ॥ उशना । यत् । पराऽवतः । अजगन् । ऊतये । कवे ।
सुम्नानि । विश्वा । मनुषाऽइव । तुर्वणिः । अहा । विश्वाऽइव । तुर्वणिः ॥ ९ ॥

अत्रापि इतिहासमाचक्षते । केचन असुराः पूर्वमिन्द्रवज्रेण वधो मा भूत् इति ब्रह्मणो वरं लब्ध्वा इन्द्रमगणयित्वा उद्वृत्ताः[१] आसन् । तान् हन्तुम् इन्द्रः सूर्यरथस्य चक्रमादाय अवधीदिति। तदिदमुच्यते। अयमिन्द्रः ᵛसूरः सूर्यस्य ॥ षष्ठ्यर्थे प्रथमा ॥ ᵛचक्रं रथस्य चक्रमादाय ᵛओजसा शारीरेण बलेन ᵛजातः समृद्धः सन् ᵛप्र ᵛवृहत् प्रक्षिप्तवान् ॥ ' वृहू उद्यमने ' । तौदादिकः ॥ किंच ᵛअरुणः अरुणवर्णः अत्यन्ततेजोयुक्तः सन् यद्वा गमनशीलः सन् ᵛप्रपित्वे तेषां समीपे तत्समीपमागत्य ᵛवाचं वागुपलक्षितं प्राणं ᵛमुषायति मुमोष[२] मुष्णाति वा[२] । प्रपित्वे इत्यासन्ननाम । यद्वा । वाचं तेषां प्रहारध्वनिं मुषायति । तेषु हतेषु ध्वनिः स्वयमेव विश्रान्तः[३] भवति अवधीदित्यर्थः । अथवा । इन्द्र एव द्युस्थानः सन् आदित्यात्मना स्तूयते । सूरः सूर्यः जातः उदितः सन् ओजसा स्वकीयेन तेजसा युक्तः चक्रं प्र वृहत् तमोनिवारणार्थमसुरजयाय वा चक्रोपलक्षितं रथं प्रकर्षेण उद्यतं[४] करोति । ततः पूर्वम् अरुणः तद्रथयन्ता प्रपित्वे मन्देहाद्यसुराणां प्रपित्वे समीपे वाचं तेषां ' जहि भिन्धि ' इत्यादिध्वनिं मुषायति मुष्णाति ॥ मुषेरुत्तरस्य श्नोऽह्रावपि ' छन्दसि शायजपि ' इति शायजादेशः ॥ तदनन्तरं सूर्यः ᵛईशानः सर्वाणि तमांसि असुरान् वा निराकर्तुं समर्थः सन् ᵛआ ᵛमुषायति समन्तात्[५] मुष्णाति । अथ प्रत्यक्षकृतः । हे ᵛकवे क्रान्तदर्शिन् ᵛयत् यस्त्वम् ᵛउशना उशनस एतन्नाम्नो महर्षेः ᵛऊतये रक्षणाय ᵛपरावतः दूरात् स्वर्गस्थानात् ᵛअजगन् गतवानसि प्राप्तवानसि ॥ गमेः सिपि छान्दसः शपः श्लुः । हल्ङ्यादिलोपे ' मो नो धातोः ' ( पा. सू. ८. २. ६४ ) इति नत्वम् ॥ यद्वा । उशना उशनसा युक्तः सन् अजगन् आगच्छ । आगत्य च ᵛविश्वा विश्वानि ᵛसुम्नानि सुखसाधनानि धनानि आदाय अस्माकं ᵛतुर्वणिः तूर्णवनिः क्षिप्रं संभक्ता भव इति शेषः। 'तुर्वणिस्तूर्णवनिः ' ( निरु. ६. १४ ) इति निरुक्तम् । तत्र दृष्टान्तः । ᵛमनुषेव मनुष्येणेव । यथा स्वोतेन[६] परिवृढाय देशान्तराद्दभिमतं धनमानीयते तद्वत् । यद्वा मनुषेव मनुष्याणामिव । इतरेषामृत्विजां विश्वा सुम्नानि सर्वाणि धनान्यादाय तुर्वणिः भवसि[७] । तद्वदस्माकमपि । न केवलमेकस्मिन्नेव यागदिने किंतु ᵛअहा ᵛविश्वेव विश्वान्यपि अहानि सर्वेष्वपि अहःसु ᵛतुर्वणिः भव । यद्वा । तुर्वणिस्त्वम् अहा विश्वेव विश्वान्यहानि अतिदीर्घमायुष्यं यथा ददासि तथा सुम्नान्यपि उभयमपि देहीत्यर्थः ॥

---

१. क्ष-ञ-ट–हृताः; ङ–हसाः । २. क्ष-ङ-ञ-ट–मुष्णाति । ३. क्ष-ङ-ञ-ट–विशीर्णः । ४. क्ष-ञ-ट–उद्युक्तम् । ५. क्ष-ङ-ञ-ट–आसमन्तात् । ६. ख-चोरेण । ७. क्ष-ङ-ञ-ट–भवति ।

स नो नव्येभिर्वृषकर्मन्नुक्थैः पुरां दर्तः पायुभिः पाहि शग्मैः ।
दिवोदासेभिरिन्द्र स्तवानो वावृधीथा अहोभिरिव द्यौः ॥ १० ॥

सः । नः । नव्येभिः । वृषऽकर्मन् । उक्थैः । पुराम् । दर्तरिति दर्तः । पायुऽभिः । पाहि । शग्मैः ।
दिवःऽदासेभिः । इन्द्र । स्तवानः । ववृधीथाः । अहोभिःऽइव । द्यौः ॥ १० ॥

हे इन्द्र वृषकर्मन् अभिमतवर्षणव्यापारवन् पुरां दर्तः असुरपुराणां दारयितः ॥ 'सुबामन्त्रिते०' इति षष्ठ्याः पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पादादित्वात् आष्टमिकमाद्युदात्तत्वम् ॥ सः तादृशो महानुभावस्त्वं नः अस्मत्संबन्धिभिः नव्येभिः नूतनैः उक्थैः[1] इदानीं प्रतिपादितप्रकारैः स्तोत्रैस्तुष्टः सन् पायुभिः पालनप्रकारैः शग्मैः सुखैश्च ऐहिकामुष्मिकरूपैः । पाहि पालय । किंच हे इन्द्र दिवोदासेभिः दिवोदासगोत्रोत्पन्नैः ॥ अर्शआदित्वात् अच् ॥ अस्माभिः परुच्छेपैः[2] । यद्वा । पूजार्थं बहुवचनम् । स्तवानः स्तूयमानः ॥ कर्मणि कर्तृप्रत्ययः ॥ ववृधीथाः प्रवृद्धो भव ॥ वृधेर्लिङि छान्दसः शपः श्लुः ॥ किमिव । अहोभिरिव द्यौः । द्योतनशीलः आदित्यः अहोभिः प्रसिद्धैर्यथा प्रवृद्धो भवति तथा अस्मत्स्तुत्या अत्यन्तं प्रवृद्धो भवेत्यर्थः ॥　　॥ १९ ॥

'इन्द्राय हि' इति सप्तर्चं पञ्चमं सूक्तम् । 'इन्द्राय सप्त' इत्यनुक्रमणिका । परुच्छेप ऋषिः । अत्यष्टिश्छन्दः । इन्द्रो देवता । पृष्ठ्यस्य षष्ठेऽहनि माध्यंदिनसवने होत्रकाः स्वस्वशस्त्रे एतत्सूक्तं तृचत्रयं कृत्वा आरम्भणीयाभ्य ऊर्ध्वमावपेयुः । अत्रायं विभागः । आद्यास्तिस्रो मैत्रावरुणस्य । तृतीयाद्यास्तिस्रो ब्राह्मणाच्छंसिनः । पञ्चम्याद्यास्तिस्रोऽच्छावाकस्य । एतत् 'चतुर्थेऽहनि' इति खण्डे सूत्रितं–'षष्ठेऽहनीन्द्राय हि द्यौरसुरो अनम्नतेत्येवमेव' ( आश्व. श्रौ. ७. ११ ) इति । तत्रैवाहनि तस्मिन्नेव सवने प्रशास्त्रादीनां प्रस्थितयाज्याभ्यः[3] पुरस्तादादितः षड्चः एकैकशः प्रक्षेपणीयाः । 'षष्ठस्य' इति खण्डे सूत्रितम्–'इन्द्राय हि द्यौरसुरो अनम्नतेति षट्' ( आश्व. श्रौ. ८. १ ) इति । महाव्रते निष्केवल्ये 'इन्द्राय हि' इति तृचो वैकल्पिकानुरूपद्वितीयः । 'महाव्रतस्य' इति खण्डे सूत्रितम्–'एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत' ( ऐ. आ. ५. १. १ ) इति ॥

इन्द्राय हि द्यौरसुरो अनम्नतेन्द्राय मही पृथिवी वरीमभिर्द्युम्नसाता वरीमभिः ।
इन्द्रं विश्वे सजोषसो देवासो दधिरे पुरः ।
इन्द्राय विश्वा सवनानि मानुषा रातानि सन्तु मानुषा ॥ १ ॥

इन्द्राय । हि । द्यौः । असुरः । अनम्नत । इन्द्राय । मही । पृथिवी । वरीमऽभिः ।
द्युम्नऽसाता । वरीमऽभिः ॥ इन्द्रम् । विश्वे । सऽजोषसः । देवासः । दधिरे । पुरः ।
इन्द्राय । विश्वा । सवनानि । मानुषा । रातानि । सन्तु । मानुषा ॥ १ ॥

---

१. क्ष-ङ-ञ-झ-अ-ट-त–हृद्यैः उक्थैः । २. च–पारुच्छेपैः । ३. क्ष-ङ-ञ-ट–प्रस्थितयाज्यानाम् ।

द्यौः द्योतनशीलो द्युलोकः तन्निवासी[1] देवसंघः[1] वा स च असुरः निरसनशीलः शत्रूणां पुण्यकृतामेव तन्निवासात् इन्द्राय हि इन्द्रायैव अनम्नत स्वयमेव प्रह्वो भवति ॥ नमेश्छान्दसे लङि कर्मकर्तरि आत्मनेपदम्। 'न दुहस्नुनमाम्॰' (पा. सू. ३. १. ८९ ) इति यगभावः। छान्दसः शपः श्लुः। हलादिशेषाभावश्च। अनुनासिकलोपः ॥ हिशब्दः प्रसिद्ध्यर्थो वा। तथा इन्द्राय इन्द्रार्थं मही महती पृथिवी भूमिः तत्रत्यः सर्वो जनो वा अनम्नत। उभयत्र आश्रयवाचिशब्देन आश्रयी लक्ष्यते ग्रामः आगतः इतिवत्। केन साधनेन इति तदुच्यते। वरीमभिः वरणीयैः स्तोत्रैर्हविर्भिर्वा। किंच द्युम्नसाता द्युम्नसातौ[2] अन्नस्य[2] यशसो वा लाभे निमित्ते सति वरीमभिः वरणीयैर्हविर्भिर्युक्ता यजमानाः प्रह्वा[3] भवन्ति[3]। किंच इन्द्रम् एव विश्वे सर्वे देवासः देवाः सजोषसः समानप्रीतियुक्ता ऐकमत्यभाजः पूर्वमसुरजयार्थं पुरः दधिरे पुरतः स्थापितवन्तः इन्द्रमुखेनैवासुरान् जितवन्तः इत्यर्थः। तथा मानुषा सवनानि मनुष्याणां संबन्धीनि अभिषवयुक्तानि प्रातरादिसवनानि इन्द्राय सन्तु इन्द्रायैव भवन्तु। तथा मानुषा मनुष्याणामृत्विजां संबन्धीनि रातानि दातव्यानि पुरोडाशादीनि इन्द्राय हि इन्द्रायैव सन्तु इन्द्रं प्रीणयितुं समर्थानि भवन्त्वित्यर्थः ॥

**विश्वे॑षु॒ हि त्वा॒ सव॑नेषु तु॒ञ्जते॑ समा॒नमेकं॒ वृष॑मण्यवः॒**

**पृथ॒क् स्वः॑ सनि॒ष्यवः॒ पृथ॑क् ।**

**तं त्वा॒ नावं॒ न प॒र्षणिं॑ शू॒षस्य॑ धु॒रि धी॑महि ।**

**इन्द्रं॒ न य॒ज्ञैश्चि॒तय॑न्त आ॒यवः॒ स्तोमे॑भि॒रिन्द्र॑मा॒यवः॑ ॥ २ ॥**

विश्वे॑षु। हि। त्वा॒। सव॑नेषु। तु॒ञ्जते॑। स॒मा॒नम्। एक॑म्। वृष॑ऽमन्यवः। पृथ॑क्। स्व१॒रिति॒ स्वः॑। स॒नि॒ष्यवः॑। पृथ॑क् ॥ तम्। त्वा॒। नाव॑म्। न। प॒र्षणि॑म्। शू॒षस्य॑। धु॒रि। धी॒म॒हि॒। इन्द्र॑म्। न। य॒ज्ञैः। चि॒तय॑न्तः। आ॒यवः॑। स्तोमे॑भिः। इन्द्र॑म्। आ॒यवः॑ ॥ २ ॥

हे इन्द्र त्वा त्वाम् एकम् एकमेव सन्तं विश्वेषु सर्वेषु सवनेषु तद्वत्सु एकाहाहीनसत्ररूपेषु सर्वेषु सोमयागेषु यजमानाः तुञ्जते त्वरयन्ति हविरादीनि ददते। कीदृशं त्वाम्। समानं सर्वेषामेकरूपम्। कीदृशा यजमानाः। वृषमण्यवः अभिमतवर्षणाय त्वामेव मन्यमानाः पृथक् विविच्य स्वस्वयागे[4]। किमिच्छन्तः[4]। स्वः स्वर्गं सुखविशेषं वा सनिष्यवः संभक्तुकामाः पृथक् तुञ्जते पृथगेव त्वरयन्ति। तुञ्जतिर्दानार्थः, 'शिक्षति तुञ्जते' ( नि. ३.२०. ८ ) इति तन्नामसु पाठात्। तं तादृशं त्वा त्वां शूषस्य बलस्य सेनारूपस्य धुरि वहने तज्जयाय धीमहि स्थापयामः। यद्वा। शूषस्य अस्मदीयशारीरबलस्य धुरि धीमहि। शूषमिति बलनाम, 'शूषं सहः' (नि.२. ९. १६) इति तन्नामसु पाठात्। तत्र दृष्टान्तः। पर्षणिं नावं न पारस्य संभक्त्रीं पूरयित्रीं वा फलस्य नावमिव। तां यथा भारवहने स्थापयन्ति॥ 'पार तीर कर्मसमाप्तौ'। 'छन्दसि वनसन॰' (पा. सू. ३. २.२७ )

---

१. ङ–तन्निवासो देवसंघातः। २. ङ–द्युम्नस्य धनस्य। ३. क्ष-ङ-ञ-ट–अनम्रत। ४. ख–स्वः स्वयागकर्म इच्छन्तः।

इति सनेः इनुप्रत्ययः। पृषोदरादिः। पिपर्तेः औणादिकः सनिप्रत्ययो वा ॥ कीदृशा वयम्। ᵛआयवः मनुष्या यजमानाः ᵛयज्ञैः साधनैः ᵛइन्द्रं ᵛन ᵛचितयन्तः परमेश्वरमिव त्वां चेतयन्तः परमेश्वरबुद्ध्या भावयन्त इत्यर्थः। यद्वा नशब्दः एवकारार्थः। इन्द्रमेव त्वां जानन्तः। तथा स्तोमेभिः स्तोत्रैः ᵛइन्द्रम्[1] इन्द्रमेव ᵛआयवः गच्छन्तो वयं धीमहि॥ दधातेर्लिङि छान्दसः शपो लुक्॥

वि त्वा॑ ततस्रे मिथुना अ॑वस्यवो॑ व्रजस्य॑ सा॒ता
गव्य॑स्य नि॒ःसृज॒ः सक्ष॑न्त इन्द्र नि॒ःसृज॑ः।
यद्ग॒व्यन्ता॒ द्वा जना॒ स्व१॒॑र्यन्ता॑ स॒मूह॑सि।
आ॒विष्करि॑क्र॒द्वृष॑णं सचा॒भुव॒ं वज्र॑मिन्द्र सचा॒भुव॑म् ॥ ३ ॥

वि। त्वा॒। त॒त॒स्रे॒। मि॒थु॒नाः। अ॒व॒स्यवः॑। व्र॒जस्य॑। सा॒ता। गव्य॑स्य। निः॒ऽसृज॑ः। सक्ष॑न्तः। इन्द्र॒। निः॒ऽसृज॑ः॥ यत्। ग॒व्यन्ता॑। द्वा। जना॑। स्वः॑। यन्ता॑। स॒म्ऽऊह॑सि। आ॒विः। करि॑क्रत्। वृष॑णम्। स॒चा॒ऽभुव॑म्। वज्र॑म्। इन्द्र॒। स॒चा॒ऽभुव॑म्॥ ३॥

हे ᵛइन्द्र ᵛत्वा त्वामुद्दिश्य ᵛमिथुनाः पत्नीसहिता यजमानाः ᵛवि ᵛततस्रे यज्ञं वितन्वते। यद्वा। यज्ञे पयोव्रतादिना आत्मानमुपक्षयन्ति॥ ‘तसु उपक्षये’। छान्दसे लिटि ‘इरयो रे’ इति रेभावः॥ किमर्थम्। ᵛगव्यस्य ᵛव्रजस्य ᵛसाता गवां संबन्धिनो यूथस्य लाभे निमित्तभूते सति। न च सर्वत्र अग्निहोत्रादिनित्यवाक्येषु कारीरीचित्रादिकाम्यवाक्येषु यस्योदयं यस्य गृहान् इत्यादिनैमित्तिकवाक्येषु पुरुषस्यैव अर्थित्वादेः सद्भावात् तस्यैवाधिकारः स्त्रियास्तु सत्यप्यर्थित्वे अध्ययनाभावेन विद्वत्ताया अभावात् अत एव सामर्थ्याभावाच्च नास्त्यधिकारः इति वाच्यम्। यद्यपि स्त्रियाः नास्ति पृथगधिकारस्तथापि पूर्वमीमांसायां षष्ठेऽधिकाराध्याये तृतीयचतुर्थाभ्यामधिकरणाभ्यां अस्त्येव स्त्रिया अधिकारः स च पत्या सहेति[2] प्रपञ्चितत्वात् ‘जायापती अग्निमादधीयाताम्’ इत्याधानविधानात् स्मृतिषु च ‘नास्ति स्त्रीणां पृथग्यज्ञो न व्रतम्’ (मनु. ५. १५५) इति पृथगधिकारस्यैव निवारितत्वात् अस्त्येव स्त्रियाः पत्या सहाधिकारः। अध्ययनाभावेऽपि ‘वेदं पत्न्यै प्रदाय वाचयेत्’ (आश्व. श्रौ. १. ११) इति सूत्रकारवचनात् ‘पत्न्यन्वास्ते’ इत्यादिविधिषु ‘सुप्रजसस्त्वा वयम्’ (तै. सं. १. १. १०. १) इत्यादिमन्त्रविधानात् यत्र वचनमस्ति तत्र अस्त्येव मन्त्रेऽधिकारः किं[3] हि वचनेन कुर्यात्[3] नास्ति वचनस्यातिभारः इति न्यायात्। तस्मात् मिथुना यज्ञं ततस्रे इत्येतत् युक्तम्। कीदृशास्ते। ᵛअवस्यवः इन्द्राय आत्मने वा तृप्तिमिच्छन्तः ᵛनिःसृजः निःशेषेण हविस्त्यजन्तः ᵛसक्षन्तः॥ सक्षतिर्गत्यर्थः॥ त्वां संभजमानाः। पुनस्त एव विशेष्यन्ते। ᵛनिःसृजः फलप्रतिबन्धकं पापं निर्गमयन्तः। कस्तव विशेष इति तदुच्यते। ᵛयत् यस्मात् कारणात् ᵛगव्यन्ता गामात्मनः

---

१. झ–इन्द्रं न। २. क्ष-ञ-ट–सहैवेति। ३. क्ष-ङ-झ-ञ-ज्ञ-ट-त–किं हि वचनं न कुर्यात्; च–किं तर्हि वचनेन कुर्यात्।

इच्छन्तौ ॥ गोशब्दात् ' सुप आत्मनः क्यच् ' । ' वान्तो यि प्रत्यये ' इति अवादेशः ^v^स्वर्यन्ता स्वर्गं यन्तौ गन्तुमुद्युक्तौ ^v^द्वा ^v^जना द्वौ जायापतिरूपौ जनौ ^v^समूहसि संयुक्तयोः एव अभिमतं स्वर्गादिकं प्रापयसि । यद्वा । सम्यगनुष्ठितवन्तौ इत्यूहसि निश्चिनोषि । अतः पत्नीसहिता अनुतिष्ठन्तीत्यर्थः । किंच हे ^v^इन्द्र त्वं ^v^वृषणं वर्षकं कामानां ^v^सचाभुवं सहैवोत्पन्नं त्वया अविना भूतं तथा ^v^सचाभुवं शत्रुवधादिव्यापारसामर्थ्येन[1] सहैवोत्पन्नं ^v^वज्रम् ^v^आविष्करिक्रत् आविष्कुर्वन् प्रकटयन्[2] वर्तसे इति शेषः ॥

विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र

शारदीरवातिरः सासहानो अवातिरः ।

शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।

महीममुष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः ॥ ४ ॥

विदुः । ते । अस्य । वीर्यस्य । पूरवः । पुरः । यत् । इन्द्र । शारदीः । अवऽअतिरः । ससहानः । अवऽअतिरः ॥ शासः । तम् । इन्द्र । मर्त्यम् । अयज्युम् । शवसः । पते । महीम् । अमुष्णाः । पृथिवीम् । इमाः । अपः । मन्दसानः । इमाः । अपः ॥ ४ ॥

हे ^v^इन्द्र ^v^ते ^v^वीर्यस्य तव संबन्धिनः ^v^अस्य वीर्यस्य ॥ कर्मणि षष्ठी ॥ वक्ष्यमाणमेतद्वीर्यं ^v^विदुः । ये ^v^पूरवः मनुष्या यजमानास्तव महत्त्वं जानानाः त्वामेव यजन्ति ^v^ते विदुः । यद्वा । अस्य वीर्यस्य माहात्म्यम् इति शेषः ॥ विदुष्टे इत्यत्र ' युष्मत्तत्तक्षुषु° ' इति विसर्जनीयस्य सत्वम् ॥ वीर्यमेव विशेष्यते । हे इन्द्र ^v^यत् यस्मात् कारणात् ^v^शारदीः संवत्सरसंबन्धिनीः संवत्सरपर्यन्तं प्राकारपरिखादिभिर्दृढीकृताः ^v^पुरः शत्रूणां पुरीः ^v^अवातिरः अनाशयः ॥ अवपूर्वस्तिरतिर्नाशनार्थः ॥ किं कुर्वन् । ^v^ससहानः तत्रत्यानभिभवन् धनाद्यपहारेण पीडयन् ॥ सहतेर्यङ्लुगन्तात् ताच्छीलिकः चानश् ॥ ^v^अवातिरः । किंच हे ^v^इन्द्र ^v^तं ^v^मर्त्यं मरणधर्माणम् ^v^अयज्युम् अयष्टारं यज्ञविघातिनं राक्षसादिं[3] ^v^शासः निगृहीतवानसि[3] । हे ^v^शवसस्पते बलस्य पालकेन्द्र त्वं ^v^महीं महतीं ^v^पृथिवीम् ^v^इमाः ^v^अपः च समुद्रनद्यात्मकान्युदकानि च ^v^अमुष्णाः बलात् अपहृतवानसि[4] । असुरैरन्यैर्वा यज्ञविद्वेषिभिः आक्रान्तां भूमिं तत्संबन्धिनीरपश्च तेषां पुराणि भित्त्वा अपहृतवानसीत्यर्थः । किं दुःखेन । नेत्याह । ^v^मन्दसानः हृष्यन्नेव[5] ^v^इमाः ^v^अपः इमानि अप्कार्याणि व्रीह्याद्यन्नानि अमुष्णाः लब्धवानसि ॥

---

१. क्ष-ङ-ञ-ट-शत्रुवधादिस्वव्यापारसामर्थ्येन । २. क्ष-ङ-ञ-ट-प्रकाशयन् । ३. ङ-राक्षसादिं हिंसितवानसि; क्ष-राक्षसादिं तनूकृतवानसि; क्ष-ञ-ज्ञ-ट-राक्षसादिं शासः निगृहीतवानसि तनूकृतवानसि वा । ४. क्ष-ञ-ट- आहृतवानसि । ५. च-तृप्यन्नेव ।

आदित्ते अस्य वीर्यस्य चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ।
चकर्थ कारमेभ्यः पृतनासु प्रवन्तवे ।
ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥ ५ ॥

आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु । वृषन् । उशिजः । यत् । आविथ ।
सखिऽयतः । यत् । आविथ ॥ चकर्थ । कारम् । एभ्यः । पृतनासु । प्रऽवन्तवे ।
ते । अन्याम्ऽअन्याम् । नद्यम् । सनिष्णत । श्रवस्यन्तः । सनिष्णत ॥ ५ ॥

हे इन्द्र ᵛआत् अत एव हेतोः ᵛते ᵛवीर्यस्य तव संबन्धिने वीर्याय तदभिवृद्धये ᵛचर्किरन् पुनःपुनः सोमं विकिरन्ति ॥ किरतेर्यङ्लुगन्तात् व्यत्ययेन शः ॥ सर्वेषु सवनेषु वितरन्ति यजमानाः । अत इत्युक्तं कुत इत्याह । ᵛमदेषु ᵛवृषन् सोमजनितमदेषु[1] सत्सु हे कामानां वर्षितः ᵛउशिजः त्वां कामयमानान् यजमानान् ᵛयत् यतः कारणात् ᵛआविथ रक्षसि । किंच ᵛसखीयतः तव सखित्वमात्मन इच्छतोऽस्मान् ᵛयत् यस्मात् ᵛआविथ तर्पयसि अभिमतेन प्रीणयसि अतश्चर्किरन् । किंच हे इन्द्र ᵛएभ्यः यजमानेभ्यः ᵛकारं शब्दं सिंहनादलक्षणं ᵛचकर्थ करोषि ॥ करोतेः कर्मणि घञ् । 'कर्षात्वतः°' इत्यन्तोदात्तत्वम् ॥ कुत्रेति तदुच्यते । ᵛपृतनासु संग्रामेषु । किमर्थम् । ᵛप्रवन्तवे प्रकर्षेण वनितुं संभक्तुम् । युद्धाय हि धीराः संभजन्ते ॥ वनतेस्तुमर्थे तवेन्प्रत्ययः । 'तादौ च°' इति गतेः प्रकृतिस्वरत्वम् ॥ किंच ᵛते तव संग्रामवासिनः त्वयि ᵛअन्यामन्याम् अन्यांश्चान्यांश्च अन्यमन्यं प्रति ॥ कर्मव्यतिहारे सर्वनाम्नो द्विर्वचनम् ॥ ᵛनद्यं नदिं सन्तोषं समृद्धिम्[2] ॥ 'टुनदि समृद्धौ' । पूर्वरूपत्वं बाधित्वा छान्दसो यणादेशः ॥ ᵛसनिष्णत संभजन्ते ॥ सनेर्लेटि 'सिब्बहुलम्°' इति सिप् । इट् । व्यत्ययेन पुनः श्नाप्रत्ययः । 'आत्मनेपदेष्वनतः' इत्यदादेशे 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । छान्दसः टेः एत्वाभावः ॥ तथा ᵛश्रवस्यन्तः अन्नमिच्छन्तो जयाल्लब्धमन्नं काङ्क्षन्तः ᵛसनिष्णत संभजन्ते ॥

उतो नो अस्या उषसो जुषेत ह्यर्कस्य
बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः ।
यदिन्द्र हन्तवे मृधो वृषा वज्रिञ्चिकेतसि ।
आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥ ६ ॥

उतो इति । नः । अस्याः । उषसः । जुषेत । हि । अर्कस्य । बोधि । हविषः । हवीमऽभिः ।
स्वःऽसाता । हवीमऽभिः ॥ यत् । इन्द्र । हन्तवे । मृधः । वृषा । वज्रिन् । चिकेतसि ।
आ । मे । अस्य । वेधसः । नवीयसः । मन्म । श्रुधि । नवीयसः ॥ ६ ॥

अयमिन्द्रः ᵛनः अस्माकं संबन्धिनीम् ᵛअस्याः ᵛउषसः ॥ कर्मणि षष्ठी ॥ एतामुषसं सुत्याहःसंबन्धिनमुषःकालम् ᵛउतो ᵛजुषेत अपि नाम सेवेत । उषस्येव अस्माकमयमिन्द्रो यज्ञं गच्छे-

---

1. क्ष-ङ-ञ-ट–सोमपानजनितमदेषु । 2. ङ–समृद्धिं वा ।

दित्यर्थः । हिः पूरणार्थः । गत्वा च ᵛअर्कस्य ᵛहविषः ॥ पूर्ववत्कर्मणि षष्ठी ॥ अर्चनसाधनं हविः ᵛहवीमभिः हवनप्रकारविशेषैः दत्तं हविः उतो ᵛबोधि अपि[1] नाम जानीहि[1] । किंच ᵛस्वर्षाता स्वर्गस्यान्यस्य सुखविशेषस्य वा संभजनस्थाने यज्ञे ᵛहवीमभिः आह्वानैः आहूतो भवेति शेषः । अस्माभिराहूतः सन् उषस्येवागत्य हविः स्वीकरोषीत्यर्थः । कस्मादिदमुच्यते । ᵛयत् यस्मात् कारणात् हे ᵛवज्रिन् वज्रयुक्त ᵛइन्द्र ᵛमृधः हिंसकाञ्छत्रून् ᵛहन्तवे हन्तुं ᵛवृषा वर्षिता सन् कामानां ᵛचिकेतसि अवबुध्यसे ॥ 'कित ज्ञाने' । जौहोत्यादिकः । लेट्यडागमः । 'नाभ्यस्तस्याचि पिति°' इत्यत्र 'छन्दसि बहुलम्' इति वचनात् लघूपधगुणप्रतिषेधाभावः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ तस्मात् ब्रूमः । हे इन्द्र ᵛमे मम ᵛमन्म मननीयं स्तोत्रम् ᵛआ ᵛश्रुधि सर्वतः शृणु । कीदृशस्य मे । ᵛवेधसः मेधाविनः ᵛनवीयसः नवतरस्य । दीक्षितसंस्कारैः संस्कृतत्वात् नवीयस्त्वम् । पुनर्विशेष्यते । ᵛनवीयसः अतिशयेन नवनवतः असाधारणस्तुतिमतः । अत्र यजमानविशेषणैः तत्कर्तृकं स्तोत्रमेव विशिष्टं भवति ॥

**त्वं तमि॑न्द्र वावृधा॒नो अ॑स्म॒युर॑मित्र॒यन्तं॑ तुविजात॒ मर्त्यं॒ वज्रे॑ण शूर॒ मर्त्य॑म् ।**
**ज॒हि यो नो॑ अघा॒यति॑ शृणु॒ष्व सु॒श्रव॑स्तमः ।**
**रि॒ष्टं न याम॒न्नप॑ भूतु दु॒र्मति॒र्विश्वाप॑ भूतु दु॒र्मतिः॑ ॥ ७ ॥**

त्वम् । तम् । इ॒न्द्र॒ । व॒वृ॒धा॒नः । अ॒स्म॒ऽयुः । अ॒मि॒त्र॒ऽयन्त॑म् । तु॒वि॒ऽजा॒त॒ । मर्त्य॑म् । वज्रे॑ण । शू॒र॒ । मर्त्य॑म् ॥ ज॒हि । यः । नः॒ । अ॒घ॒ऽयति॑ । शृ॒णु॒ष्व । सु॒श्रव॑ःऽतमः । रि॒ष्टम् । न । याम॑न् । अप॑ । भू॒तु॒ । दुः॒ऽम॒तिः । विश्वा॑ । अप॑ । भू॒तु॒ । दुः॒ऽम॒तिः ॥ ७ ॥

हे ᵛइन्द्र ᵛतुविजात अस्मत्स्तुत्या बहुभावमापन्न ᵛशूर विक्रान्त ᵛत्वं ᵛववृधानः अत्यर्थं वर्धमानः ᵛअस्मयुः अस्मान् त्वद्भक्तान् कामयमानस्त्वम् ᵛअमित्रयन्तम् अस्मासु शत्रुत्वमाचरन्तं ᵛमर्त्यं मरणस्वभावं ᵛतं ᵛमर्त्यं ᵛवज्रेण ᵛजहि ॥ 'हन्तेर्जः' इति जादेशः । तस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वात् हेर्लुगभावः ॥ तमित्युक्तं कमित्याह । ᵛयः मर्त्यः ᵛनः अस्माकम् ᵛअघायति अघं पापं दुःखं वा इच्छति तं जहि ॥ 'अश्वाघस्यात्' इति आत्वम् ॥ किंच ᵛसुश्रवस्तमः अतिशयेन शोभनश्रवणः त्वं ᵛशृणुष्व श्रावय अस्मद्वाक्यम् । कीदृशं तदिति तदुच्यते[2] । हे इन्द्र त्वत्प्रसादात् ᵛदुर्मतिः अस्मज्जिघांसाविषया[3] दुष्टा बुद्धिः ᵛअप ᵛभूतु अपगता भवतु ॥ छान्दसः शपो लुक् ॥ 'भूसुवोस्तिङि' इति गुणप्रतिषेधः ॥ न केवलं हिंसारूपा अपि तु ᵛविश्वा सर्वापि क्रोधपरिवादादिरूपा ᵛअप ᵛभूतु । तत्र दृष्टान्तः । ᵛयामन् यामनि अध्वनि ᵛरिष्टं ᵛन । अध्वनः[4] श्रमेण[4] हिंसितं परिश्रान्तं यथा दुर्मतिश्चौरादिविषया बाधते तद्वत् अस्मान् बाधमाना दुर्मतिः अपगच्छतु । यद्वा । यामनि मार्गे यज्ञादिरूपे रिष्टम् असुरकृतहिंसादिरूपं विघ्नं[5] परिहरसि[5] तद्वत् ॥ ॥ २० ॥

'त्वया वयम्' इति षडृचं षष्ठं सूक्तं पारुच्छेपमात्यष्टमैन्द्रम् । 'युवं तम्' इत्यर्धर्च ऐन्द्रापार्वतोऽर्धर्चः । 'त्वया वयं षड्युवं तमैन्द्रापार्वतोऽर्धर्चः' इत्यनुक्रमणिका ॥ विनियोगो लैङ्गिकः ॥

---

१. क्ष-अ-ट--अपि नाम तावकम् असत् (?) । २. ङ--उच्यते । ३. क्ष-अ-ट--अस्मजिजिघांसाविष्टा । ४. क्ष-अ-ट--अध्वश्रमेण । ५. क्ष-ङ-अ-ट--विघ्नं यथायथा परिहरसि ।

त्वया॑ व॒यं म॑घव॒न्पूर्व्ये॒ धन॒ इन्द्र॑त्वोताः सासह्याम पृतन्य॒तो व॑नु॒याम॑ वनु॒ष्य॒तः ।
नेदि॑ष्ठे अ॒स्मिन्नह॒न्यधि॑ वोचा॒ नु सु॑न्व॒ते ।
अ॒स्मिन्य॒ज्ञे वि च॑येमा॒ भरे॑ कृ॒तं वा॑ज॒यन्तो॒ भरे॑ कृ॒तम् ॥ १ ॥

त्वया॑ । व॒यम् । म॒घ॒ऽव॒न् । पूर्व्ये॑ । धने॑ । इन्द्र॑त्वाऽऊताः । स॒स॒ह्याम॒ । पृ॒त॒न्य॒तः ।
व॒नु॒याम॑ । व॒नु॒ष्य॒तः ॥ नेदि॑ष्ठे । अ॒स्मिन् । अह॑नि । अधि॑ । वो॒च॒ । नु॒ । सु॒न्व॒ते ।
अ॒स्मिन् । य॒ज्ञे । वि । च॒ये॒म॒ । भरे॑ । कृ॒तम् । वा॒ज॒ऽयन्त॑ः । भरे॑ । कृ॒तम् ॥ १ ॥

हे ^v^मघवन् । मघः[१] सौख्यम् । तद्वन्निन्द्र[१] ^v^त्वया साधनेन युक्ताः ^v^वयम् । अत[२] एव ^v^इन्द्रत्वोताः अतिप्रबलेनेन्द्रेण त्वया रक्षिताः सन्तः[२] ॥ ' प्रत्ययोत्तरपदयोश्च ' इति त्वादेशः । छान्दसम् आत्वम् ॥ ^v^पृतन्यतः पृतनाम् आत्मन इच्छतः प्रबलसेनायुक्तान् शत्रून् ^v^ससह्याम अभिभवेम[३] । तथा[३] ^v^वनुष्यतः अस्मत्प्रहाराय आगच्छतः शत्रून् ^v^वनुयाम तेषामागमनात्पूर्वमेव वयं संभजेम । किंच ^v^पूर्व्ये[४] ^v^धने ^v^अस्मिन्यज्ञे[४] ^v^नेदिष्ठे अत्यन्तसंनिहिते ^v^अस्मिन्नहनि अभिषवयुक्ते अद्यतने अहनि ^v^सुन्वते[५] यजमानाय तदर्थम् ^v^अधि ^v^वोच । तं हविष्प्रदं यजमानं यज्ञं वा ^v^नु क्षिप्रमधिकं ब्रूहि ॥ लोटि व्यत्ययेन अङ् । ' वच उम् ' ॥ किंच हे इन्द्र वयं यजमानाः ^v^भरे संग्रामे ^v^कृतं जयस्य कर्तारं त्वामुद्दिश्य तज्जयार्थं[६] ^v^वाजयन्तः हविर्लक्षणान्नम् उपाचरन्तः[७] ^v^वि ^v^चयेम । स्तोत्रादिकं हविरादिकं वा विचिनुयाम ॥ चिनोतेर्व्यत्ययेन शप् ॥ पुनः कीदृशं त्वाम् । ^v^भरे देवानां संग्रामे असुरजये देवानां सम्यग्भरणे वा ^v^कृतं कर्तारम्[८] । भर इति संग्रामनाम, ' भरतेर्वा हरतेर्वा ' ( निरु. ४. २४ ) इति यास्कः ॥

स्व॒र्जे॑षे॒ भर॑ आ॒प्रस्य॒ वक्म॑न्युष॒र्बुधः॑ स्वस्मि॒न्नञ्ज॑सि क्रा॒णस्य॒ स्वस्मि॒न्नञ्ज॑सि ।
अह॒न्निन्द्रो॒ यथा॑ वि॒दे शी॒र्ष्णाशी॑र्ष्णोप॒वाच्यः॑ ।
अ॒स्म॒त्रा ते॑ स॒ध्र्य॑क्सन्तु रा॒तयो॑ भ॒द्रा भ॒द्रस्य॑ रा॒तयः॑ ॥ २ ॥

स्वः॒ऽजेषे । भरे॑ । आ॒प्रस्य॑ । वक्म॑नि । उ॒षः॒ऽबुधः॑ । स्वस्मि॑न् । अञ्ज॑सि । क्रा॒णस्य॑ ।
स्वस्मि॑न् । अञ्ज॑सि ॥ अह॑न् । इन्द्र॑ः । यथा॑ । वि॒दे । शी॒र्ष्णाऽशी॑र्ष्णा । उ॒प॒ऽवाच्य॑ः ।
अ॒स्म॒ऽत्रा । ते॒ । स॒ध्र्य॑क् । सन्तु॒ । रा॒तय॑ः । भ॒द्राः । भ॒द्रस्य॑ । रा॒तय॑ः ॥ २ ॥

---

१. ङ-च-फ–धनवन्निन्द्र । २. झ–पूर्व्ये धने प्राचीनसंग्रामे त्वोताः अतिप्रबलेन त्वयेन्द्रेण रक्षिताः सन्तः । ३. क्ष-ङ-ञ-ट–अभिभवेम । सहेर्लिङि छान्दसः शपः श्लुः । यङ्लुगन्तः । तथा । ४. क्ष-झ-ञ-ज्ञ-ट– ' पूर्व्ये धने अस्मिन् यज्ञे ' नास्ति । ५. क्ष-ञ-ट–सुन्वते अभिषवं कुर्वते । ६. च-फ–त्वज्जयार्थम् । ७. क्ष-ञ-ट–उपाचरन्तः वितरन्तः; झ-ज्ञ–उपाचरन्तः विचरन्तः । ८. च-फ–जयस्य कर्तारम् ।

अयमिन्द्रः vस्वर्जेषे स्वर्गगमनसाधने vभरे संग्रामे । युद्धे आभिमुख्येन हतस्य स्वर्गो ‘ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ’ ( परा. ३. २५ ) इत्यादिस्मृतिषु प्रसिद्धः । vआप्रस्य आपनशीलस्य शत्रुवधाय इतस्ततः व्याप्तस्य ॥ औणादिको रः ॥ शूरस्य vवक्मनि मार्गभूते vस्वस्मिन् स्वभूते vअञ्जसि अभिव्यक्तिमति कपटादिरहिते । पुनः स एव विशेष्यते । vस्वस्मिन् vअञ्जसि स्वकीयेऽञ्जसि मुख्ये महति संग्रामे । यद्वा । स्वस्मिन् अञ्जसि शत्रौ स्वयमेव अप्रच्छन्नत्वेनागते सति अहन् शत्रून् हिनस्ति । कस्य संग्रामे इति तदुच्यते । आप्रस्य आपनशीलस्य आ समन्तात् इन्द्रस्य प्रीणयितुर्वा vउषर्बुधः उषःकाले अनुष्ठानाय प्रबुध्यमानस्य vक्राणस्य यागं कुर्वाणस्य ॥ करोतेः शतरि छान्दसः शपो लुक् ॥ अस्य[1] यजमानस्य शत्रून् vअहन् हिनस्ति । अतः कारणात् अयम् vइन्द्रः vशीर्ष्णाशीर्ष्णोपवाच्यः सर्वेषां शिरसा प्रणम्यः स्तुत्यः ॥ ‘ शीर्षंश्छन्दसि ’ ( पा. सू. ६. १. ६० ) इति उदात्तनिवृत्तिस्वरेण अन्तोदात्तत्वम् । ‘ नित्यवीप्सयोः ’ इति द्विर्भावः ॥ तत्र दृष्टान्तः । vयथा vविदे सर्वज्ञाय शिरसा प्रणतिः क्रियते स्तूयते च तथैनमित्यर्थः । यद्वा यथा विदे येन प्रकारेण हन्तव्यं शत्रुं जानासि तं तं प्रहंसि[2] ॥ वेत्तेर्व्यत्ययेनात्मनेपदम् । पुरुषव्यत्ययः । ‘ लोपस्त आत्मनेपदेषु ’ इति तलोपः ॥ अथवा । यथा विदे यं यं विन्दसे लभसे शत्रुं तं तं मारयसि । अतः कारणात् स्तुत्यः इत्यर्थः ॥ अस्मिन् पक्षे छान्दसो विकरणस्य लुक् । पूर्ववत् तलोपः ॥ किंच हे इन्द्र vते vरातयः तव संबन्धीनि धनानि दानानि vअस्मत्रा अस्मास्वेव vसध्र्यक् सह एकोद्योगेन vसन्तु भवन्तु ॥ सहपूर्वादञ्चतेः ‘ऋत्विक्°’ इत्यादिना क्विन् । ‘सहस्य सध्रिः’ इति सध्र्यादेशः । अद्रिसध्र्योः अन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थमिति स चान्तोदात्तः । ‘ उदात्तस्वरितयोर्यणः° ’ इति स्वरितः ॥ किंच vभद्रस्य स्तुत्यस्य[3] vरातयः अस्मासु दत्तानि दानानि vभद्राः अतिस्थिराणि सन्तु ॥

तत्तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयम् ।
वि तद्वोचेरध द्वितान्तः पश्यन्ति रश्मिभिः ।
स घा विदे अन्विन्द्रो गवेषणो बन्धुक्षिद्भ्यो गवेषणः ॥ ३ ॥

तत् । तु । प्रयः । प्रत्नऽथा । ते । शुशुक्वनम् । यस्मिन् । यज्ञे । वारम् । अकृण्वत । क्षयम् । ऋतस्य । वाः । असि । क्षयम् ॥ वि । तत् । वोचेः । अध । द्विता । अन्तः । पश्यन्ति । रश्मिऽभिः । सः । घ । विदे । अनु । इन्द्रः । गोऽएषणः । बन्धुक्षित्ऽभ्यः । गोऽएषणः ॥ ३ ॥

हे इन्द्र vतत्तु खलु प्रसिद्धं vप्रयः हविर्लक्षणमन्नं vशुशुक्वनम् आज्यादिसंयोगेन भृशं दीप्तम् ॥ शुचेर्दीप्तिकर्मणः एतद्रूपम् ॥ vते तव स्वभूतं vप्रत्नथा पूर्वम् इतःपूर्वं यथा यागकाले हविः ते तव स्वं भवति तथा अद्यतनमपि । सर्वदा[4] त्वामेव यजन्ते[5] इति भावः । ‘ प्रत्नपूर्वविश्व° ’ इत्यादिना इवार्थे थाल् । लित्स्वरः ॥ कीदृशं तदिति उच्यते । vयज्ञे यागे vयस्मिन्[6] हविषि दातव्ये सति vवारं वरणीयं vक्षयं स्थानं वेदिलक्षणम् vअकृण्वत कुर्वन्ति ऋत्विजः । कस्तव विशेष इति चेत् उच्यते । vऋतस्य सत्यफलस्य यज्ञस्य vवाः vअसि vक्षयं निवासस्थानं संभक्तोऽसि । यद्वा । ऋतमित्युदकनाम । तस्य क्षयं

---

१. क्ष-ञ-ट–मम । २. क्ष-ञ-ट–हंसि । ३. क्ष-ङ-ञ-ट–स्तुत्यर्हस्य । ४. क्ष-ञ-ट–सर्वथा । ५. क्ष-ञ-ट–यजते । ६. क्ष-ञ-ट–अस्मिन् ।

स्थानं प्राप्तोऽसि । वृष्टिप्रदोऽसीत्यर्थः । अथवा । ऋतस्यादित्यस्य क्षयं स्थानं द्युलोकाख्यं वाः असि यजमानं गमयितासि । ᵛतत् तादृशं वक्ष्यमाणं[1] कर्म ᵛवि ᵛवोचेः विब्रूहि ।ᵛअध अतः कारणात् ᵛद्वितान्तः द्विरवोपेतयोः द्यावापृथिव्योर्मध्ये अन्तरिक्षे[2] ᵛरश्मिभिः आदित्यकिरणैःᵛपश्यन्ति । मेघं निर्भिद्य रश्मिद्वारा प्रवर्षणरूपं कर्म सर्वे जनाः प्रत्यक्षतः पश्यन्ति । अस्मद्दत्तं हविः आदित्यं प्रापयित्वा तद्रश्मिद्वारा वृष्टिं जनयसीत्येतत् सर्वैर्दृश्यते इत्यर्थः । इदानीं परोक्षतया स्तौति । ᵛसः ᵛघ स खलु ᵛइन्द्रः ᵛगवेषणः उदकस्यान्वेषणशीलः । तथा ᵛबन्धुक्षिद्भ्यः हविष्प्रदानादिना बन्धुभावं प्राप्तवद्भ्यः[3] यजमानेभ्यः ᵛगवेषणः गवां प्रसिद्धानाम् एषणकर्ता ॥ इषेर्बाहुलकात् कर्तरि ल्युट् । यद्वा । 'गवेष मार्गणे' । पूर्ववत् ल्युट् ॥ यजमानफलस्य मृगयितेत्यर्थः । ᵛअनु उक्तक्रमेणैव कर्ता सन् ᵛविदे विन्दते उदकप्राप्तिप्रकारं जानाति ॥

नू इ॒त्था ते॑ पू॒र्वथा॑ च प्र॒वाच्यं॒ यदङ्गि॑रो॒भ्योऽवृ॑णो॒रप॑ व्र॒जमि॑न्द्र शि॒क्षन्नप॑ व्र॒जम् ।
ऐभ्यः॑ समा॒न्या दि॒शास्मभ्यं॑ जेषि॒ योत्सि॑ च ।
सु॒न्वद्भ्यो॒ रन्धया॒ कं चि॑दव्र॒तं हृ॑णा॒यन्तं॑ चिदव्र॒तम् ॥ ४ ॥

नु । इ॒त्था । ते॒ । पू॒र्वऽथा॑ । च॒ । प्र॒ऽवाच्य॑म् । यत् । अङ्गि॑रःऽभ्यः । अवृ॑णोः । अप॑ । व्र॒जम् । इन्द्र॑ । शिक्ष॑न् । अप॑ । व्र॒जम् ॥ आ । ए॒भ्यः॒ । स॒मा॒न्या । दि॒शा । अ॒स्मभ्य॑म् । जे॒षि॒ । योत्सि॑ । च॒ । सु॒न्वत्ऽभ्यः॑ । र॒न्धय॒ । कम् । चि॒त् । अ॒व्र॒तम् । हृ॒णा॒यन्त॑म् । चि॒त् । अ॒व्र॒तम् ॥ ४ ॥

हे ᵛइन्द्र ᵛते तव संबन्धि कर्म ᵛइत्था इत्थमुक्तप्रकारं वक्ष्यमाणरूपं वा ᵛपूर्वथा पूर्वमिव पूर्वं यथा ᵛनु क्षिप्रं ᵛप्रवाच्यं सर्वैः स्तोतव्यं तद्वत् इदानींतनमपि स्तुत्यम् ॥ नू इत्था इत्यत्र ईषाअक्षादित्वात् प्रकृतिभावः ॥ कीदृशं तदिति तदुच्यते[4] । ᵛयत् त्वम् ᵛअङ्गिरोभ्यः एतद्गोत्रोत्पन्नेभ्यो महर्षिभ्यः तेषामर्थाय ᵛव्रजम् अन्तरिक्षे गच्छन्तं मेघम् ᵛअप ᵛअवृणोःअपवृतवानसि मेघम् उत्पाट्य[5] वृष्टिमुत्पादितवानसि । व्रज इति मेघनाम, 'व्रजः वराहः' ( नि. १. १०. ११) इति तन्नामसु पाठात् । किंच हे इन्द्र ᵛव्रजं गवां समूहम् ᵛअप अयष्टृभ्योऽपहृत्य तेभ्य एवाङ्गिरोभ्यः ᵛशिक्षन् वितरन् रक्षितवानसि । यद्वा । पणिभिरपहृतं बिले स्थितं गवां व्रजम् अपहर्तुमपावृणोः अपवृतद्वारमकारोः[6] । किंच हे इन्द्र ᵛएभ्यः उक्तेभ्यः ऋषिभ्यः ᵛसमान्या ᵛदिशा समानया रीत्या तेभ्यो यथा ददासि तद्वत् ᵛअस्मभ्यम् अपि ᵛजेषि धनं संग्रामं वा जय । तदर्थं ᵛयोत्सि युध्यस्व ᵛच ॥ छान्दसो विकरणस्य लुक् । व्यत्ययेन परस्मैपदम् ॥ किंच त्वं ᵛसुन्वद्भ्यः त्वदर्थमभिषवं कुर्वद्भ्यः अस्मभ्यं[7] ᵛकं ᵛचिदव्रतं सर्वमप्ययज्वानं यागविरोधिनं ᵛरन्धय बाधय मदधीनं कुर्वित्यर्थः । न केवलमयज्वानं किंतु ᵛहृणायन्तं ᵛचिदव्रतम् ॥ चिदित्यवकुत्सिते ॥ अस्मासु रोषं कुर्वन्तं तमेव अयष्टारं स्वयं रोषवन्तं वा । यद्वा । हृणायन्तं चित् रोषं[8] कुर्वन्तम् [8] अपि अव्रतम् अकर्माणं पुनर्हननासमर्थं कुर्वन्[9] रन्धय ॥ 'हृणीङ् रोषे' । कण्ड्वादिः । व्यत्ययेन आकारः ॥

---

१. क्ष-ञ-ट—उक्तं वक्ष्यमाणम् । २. क्ष-ञ-ट—अन्तः अन्तरिक्षे । ३. क्ष-ञ-ट—प्राप्तेभ्यः । ४. क्ष-ङ-ञ-ट— उच्यते । ५. झ—उत्पाद्य । ६. क-झ-ख-च-ज्ञ-ञ-ट-ण-त-फ-व—अपवृतद्वाराण्यकरोः । ७. क्ष-ञ-ट—मह्यम् । ८. ख-च-ज-झ-ण-फ-व—रोषवन्तम् । ९. क्ष-ञ-ट—कुर्वन्तम् ।

सं यज्जनान् क्रतुभिः शूर ईक्षयद्धने हिते तरुषन्त श्रवस्यवः प्र यक्षन्त श्रवस्यवः ।
तस्मा आयुः प्रजावदिद्बाधे अर्चन्त्योजसा ।
इन्द्र ओक्यं दिधिषन्त धीतयो देवाँ अच्छा न धीतयः ॥ ५ ॥

सम् । यत् । जनान् । क्रतुऽभिः । शूरः । ईक्षयत् । धने । हिते । तरुषन्त । श्रवस्यवः । प्र । यक्षन्त । श्रवस्यवः ॥ तस्मै । आयुः । प्रजाऽवत् । इत् । बाधे । अर्चन्ति । ओजसा । इन्द्रे । ओक्यम् । दिधिषन्त । धीतयः । देवान् । अच्छ । न । धीतयः ॥ ५ ॥

यत् यः इन्द्रः शूरः विक्रान्तः सन् जनान् सर्वान् प्राणिनः क्रतुभिः प्रज्ञाभिः सम् ईक्षयत् सम्यगीक्षयति तत्तद्विषयान् । अन्तर्यामिरूपेण सर्वेषां बुद्धिषु स्थित्वा तैर्विषयानुल्लेखयतीत्यर्थः । यद्वा । क्रतुभिः कर्मभिः सुकृतदुष्कृतरूपैर्निमित्तभूतैस्तत्तत्फलैर्योजयति । एवं प्रेरयति सति श्रवस्यवः अन्नमिच्छन्तो यजमानाः धने गवादिरूपे हिते अभिमते सति । यद्वा । हिते धने अभिप्रेते सति । तरुषन्त हिंसन्ति शत्रून् ॥ तरुष्यतिर्वधकर्मा । छान्दसे लुङि व्यत्ययेन च्लेः अङ् । तरतेर्वा लङि उकारसिप्शपः त्रयो विकरणाः ॥ तरन्तीत्यर्थः । अतः कारणात् श्रवस्यवः अन्नं हविर्लक्षणम् इन्द्राय आत्मने वा इच्छन्तः सन्तः प्र यक्षन्त प्रकर्षेण यजन्ते ॥ छान्दसे लुङि व्यत्ययेन क्सः ॥ किंच तस्मै इत् तस्मै प्रसिद्धायेन्द्रायैव आयुः हविर्लक्षणमन्नं प्रजावत् पुत्रादिसहितं भवति । तैः सहितैर्दीयते इत्यर्थः । किंच यजमानाः ओजसा स्वकीयेन बलेन युक्ताः बाधे शत्रूणां बाधने निमित्तभूते सति बाधितुं वा ॥ 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्प्रत्ययः ॥ अर्चन्ति[1] पूजयन्ति । यद्वा । तस्मै इत् यजमानायैव बाधे बले निमित्तभूते सति। बाध इति बलनाम, 'बाधः तविषी' ( नि. २. ९. ८ ) इति तन्नामसु पाठात् । प्रजावत् पुत्राद्युपेतम् आयुः अन्नं लब्धुम् ओजसा बलेन युक्ताः अर्चन्ति इन्द्रं पूजयन्ति ऋत्विजः इति शेषः । किंच धीतयः कर्मवन्तो यजमानाः इन्द्रे इन्द्रसमीपे । 'गङ्गायां घोषः' इतिवत् तत्सामीप्यं लक्ष्यते । इन्द्रलोके इत्यर्थः । तत्र ओक्यम् ओको निवासस्थानम् ॥ स्वार्थे यत् ॥ दिधिषन्त धारयन्ति[2] ॥ 'धिष शब्दे' । अत्र धारणार्थः । जौहोत्यादिकः । व्यत्ययेन अन्तादेशः ॥ ते एव पुनर्विशेष्यन्ते । धीतयः स्वर्गसाधनकर्मवन्तः[3] सन्तः देवाँ अच्छा न देवान् आभिमुख्येन प्राप्तुमिव ओक्यं दिधिषन्तेत्यन्वयः ॥

अविवाक्येऽहनि मानसग्रहभक्षणानन्तरं नक्षत्रेषु दृश्यमानेषु अध्वर्युप्रमुखाः सर्वे 'युवं तम्' इत्येतां जपेयुः । 'गार्हपत्ये जुह्वति' इति खण्डे सूत्रितं–'युवं तमिन्द्रापर्वता पुरोयुधेति जपन्तः' ( आश्व. श्रौ. ८.१३ ) इति ॥

---

१. ञ-झ–पापम् अर्चन्ति । २. ङ–धारयन्ति कल्पयन्ति । ३. ङ–सर्गसाधनकर्मवन्तः ।

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम् ।
दूरे चत्ताय च्छंत्सद्गहनं यदिनक्षत् ।
अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥ ६ ॥

युवम् । तम् । इन्द्रापर्वता । पुरःऽयुधा । यः । नः । पृतन्यात् । अप ।
तम्ऽतम् । इत् । हतम् । वज्रेण । तम्ऽतम् । इत् । हतम् ।
दूरे । चत्ताय । छंत्सत् । गहनम् । यत् । इनक्षत् ।
अस्माकम् । शत्रून् । परि । शूर । विश्वतः । दर्मा । दर्षीष्ट । विश्वतः ॥ ६ ॥

हे ᵛइन्द्रापर्वता[1] । इन्द्रः प्रसिद्धः । पर्वतः पर्ववान्मेघः । तदभिमानी देवः । तौ[2] ᵛयुवं युवां[2] ᵛपुरोयुधा संग्रामे पुरतो योद्धारौ ᵛनः अस्माकं ᵛयः शत्रुः ᵛपृतन्यात् अस्मान् हन्तुं पृतनामात्मन इच्छति ᵛतंतमित् सर्वमपि शत्रुम् ᵛअप ᵛहतं नाशयतम् ॥ हन्तेर्लोटि 'अनुदात्तोपदेश°' इत्यनुनासिकलोपः ॥ केन साधनेनेति तदुच्यते । ᵛतंतमित् सर्वमपि शत्रुं हन्तुं ᵛवज्रेण साधनेन प्राप्नुतम् । ईदृक् सामर्थ्यमस्तीति दर्शयति । ᵛयत् यो वज्रः ॥ लिङ्गव्यत्ययः ॥ ᵛदूरे ᵛचत्ताय अत्यन्तदूरदेशे गताय ॥ चातयतेर्वा[3] नाशकर्मणः[3] ॥ नष्टाय अदर्शनमापन्नायेत्यर्थः ॥ 'प्रसितस्कभित°' इत्यादौ निपातनात् इडभावः ॥ तादृशं शत्रुं ᵛछंत्सत् छन्दयति कामयते हन्तुम् ॥ छन्दतेः कान्तिकर्मणः इदं रूपम् ॥ किंच ᵛगहनं दुरवगाहं स्थानम् अतिकठिनं हृदयं शत्रुसमीपं वा ᵛइनक्षत् व्याप्नोति ॥ 'नक्ष गतौ' । छान्दसः इकारोपजनः । इनक्षतिर्वा प्रकृत्यन्तरम् ॥ इदानीम् इन्द्र एव स्तूयते । हे ᵛशूर शौर्योपेतेन्द्र ᵛअस्माकं विरोधिनः ᵛशत्रून् ᵛविश्वतः विश्वान् ॥ सार्वविभक्तिकस्तसिल् ॥ ᵛपरि परितः ᵛविश्वतः विश्वैः उपायैः ᵛदर्षीष्ट दारयसि । किंच ᵛदर्मा शत्रूणां दारकः ॥ दारयतेः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । णिलोपे उदात्तनिवृत्तिस्वरेण मनिन उदात्तत्वम् । ह्रस्वश्छान्दसः । यद्वा । 'दॄ भये' । घटादित्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥ तव पूर्वोक्तो वज्रः विश्वतः सर्वान् शत्रून् सर्वैरुपायैर्वा दर्षीष्ट दारयति । यद्वा । दर्मा शत्रूणां दारकः इन्द्रः दर्षीष्ट कार्त्स्न्येन दारयति शत्रून् ॥ ॥ २१ ॥

'उभे पुनामि' इति सप्तर्चं सप्तमं सूक्तं पारुच्छेपमैन्द्रम् । आद्या त्रिष्टुप् । 'अभिव्लग्या' इत्याद्यास्तिस्रोऽनुष्टुभः । 'पिशङ्गभृष्टिम्' इत्येषा गायत्री । 'अवर्मह:' इत्येषा धृतिः । 'वनोति[4] हि' इत्यनभिधानादत्यष्टिः[4] । अत्रानुक्रमणिका—'उभे सप्तादौ त्रिष्टुप् तिस्रोऽनुष्टुभो गायत्री धृतिः' इति ॥ अस्य सूक्तस्य विनियोगमाह शौनकः । 'उभे[5] पुनामीति पुरा रिपुघ्न्यस्तु प्रकीर्तिताः[5] । ता जपन् प्रयतो नित्यमिष्टान् कामान्समश्नुते । ता जपन् हन्ति रक्षांसि सपत्नांश्च नियच्छति[6]' (ऋग्वि० १.२५) ॥

---

१. च-फ–इन्द्रापर्वता इन्द्रापर्वतौ । २. झ–तं युवं तौ युवाम् । ३. क्ष-ञ-ट–चातयतेर्विनाशकर्मणः । ४. क्ष-ञ-ट–अन्त्या विशेषानभिधानादत्यष्टिः । ५. क्ष-ञ-ट– उभे पुनामीति सूक्ते सप्तर्चस्तु प्रकीर्तिताः । ६. झ-झ–निकृन्तति ।

उभे पुनामि रोदसी ऋतेन द्रुहो दहामि सं महीरनिन्द्राः ।
अभिव्लग्य यत्र हता अमित्रा वैलस्थानं परि तृळ्हा अशेरन् ॥ १ ॥

उभे इति । पुनामि । रोदसी इति । ऋतेन । द्रुहः । दहामि । सम् । महीः । अनिन्द्राः ।
अभिऽव्लग्य । यत्र । हताः । अमित्राः । वैलऽस्थानम् । परि । तृळ्हाः । अशेरन् ॥ १ ॥

हे इन्द्र ᵛऋतेन त्वदुद्देश्येन यज्ञेन बलेन[1] ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛपुनामि लोकद्वयं हिंसकानां तव अयष्टॄणां वा अपगमनेन पावयामि। किंच भूलोके ᵛअनिन्द्राः इन्द्रविरहितानाम् आश्रयभूताः ᵛमहीः उर्वीः[2] अत एव ᵛद्रुहः द्रोहिणामाधारभूतत्वात् स्वयमपि द्रोग्ध्रीः ᵛसं ᵛदहामि संभूय एकहेलया दहामि । पुनस्ता एव विशेष्यन्ते । ᵛयत्र यासु भूमिषु ᵛअमित्राः शत्रवः ᵛअभिव्लग्य अभितो गत्वा ᵛहताः सर्वतः प्राप्ताः[3] अस्माभिर्घातिता वा ॥ व्लगतिर्गतिकर्मा छान्दसो धातुः ॥ ते सर्वे ᵛपरि[4] ᵛतृळ्हाः हिंसिताः ॥ तृहू हिंसार्थः । ऊदित्त्वात् ‘ यस्य विभाषा ’ इति इट्प्रतिषेधः ॥ हिंसिताः[5] सन्तः ᵛअशेरन् शयनं प्राप्ताः ॥ शेतेर्व्यत्ययेन परस्मैपदम् । ‘ शीङो रुट् ’ ( पा. सू. ७. १. ६ ) । शीङः सार्वधातुके गुणः ॥ ᵛवैलस्थानम् । बिलशब्दो गर्तसमानार्थः । स च गर्तः श्मशानवचनः । अतः अयमपि श्मशानवाची । अथवा बिलसंबन्धिस्थानं नागलोकः । तत्र वा अशेरन् ॥ यद्वा । ‘ विल क्षेपे ’ इति धातुः । घञर्थे कः । स्वार्थिकः अण् । तत्र शवाः क्षिप्यन्ते इति वैलस्थानं श्मशानम् ॥ तत्र त्वया हताः भूमिं श्मशानवत्कृत्वा सर्वत्र शेरते । तान् दहामीत्यर्थः[5] ॥

अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनाम् ।
छिन्धि वटूरिणा पदा महावटूरिणा पदा ॥ २ ॥

अभिऽव्लग्य । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनाम् ।
छिन्धि । वटूरिणा । पदा । महाऽवटूरिणा । पदा ॥ २ ॥

ᵛअद्रिवः[6] वैरिणां भक्षक । यद्वा अद्रेः मेघस्य आदर्तः इन्द्र त्वं ᵛयातुमतीनां हिंसावतीनां सेनानाम् । यद्वा । यातनसाधनानि[7] आयुधानि यातूनि[8] तद्वतीनाम् । अथवा । यातवो रक्षांसि तद्वतीनां सेनानाम् ॥ कर्मणि षष्ठी ॥ शत्रूणां[9] सेनाः । ᵛशीर्षा शीर्षाणि ᵛअभिव्लग्या ᵛचित् अभितः प्राप्यैव ᵛच्छिन्धि चूर्णय[9] ।

---

१. ङ–बलेन वा । २. क-ख-ज-झ-ञ-ण-व–सर्वा । ३. क्ष-ङ-ञ-ट–‘ प्राप्ताः ’ नास्ति । ४. क्ष-झ-ञ-ञ-ट–‘ परि ’ नास्ति । ५. क्ष-ञ-ट–हिंसन्तः वैलस्थानं स्मशानं परि परितः अशेरन् । यद्वा । ‘ विल क्षेपे ’ इति धातुः । घञर्थे कः । स्वार्थिकः अण् । तत्र शवाः क्षिप्यन्ते इति वैलस्थानं स्मशानम् । शेरतेर्व्यत्ययेन परस्मैपदम् । शीङो रुट् । शीङः सार्वधातुके गुणः । विलशब्दो गर्तसमानार्थः । स च गर्तः श्मशानवचनः । अतः अयमपि श्मशानवाची । अथवा बिलसंबन्धि स्थानं नरकः । तत्र वा अशेरन् इति । तत्र त्वया हता भूमिं… तान् दहामीत्यर्थः ६. क्ष-ङ-झ-ञ-ट–हे अद्रिवः । ७. क्ष-च-ञ-ट-त–यातनासाधनानि । ८. क्ष-ङ-ञ-ट–बहूनि । ९. झ–शत्रूणां सेनाः अभिव्लग्या चित् अभितः प्राप्तव्या छिन्धि चूर्णय ।

यद्वा । तासां संबन्धीनि रथादीनि छिन्धि । केन साधनेनेति तदुच्यते । ᵛवटूरिणा ᵛपदा वेष्टनशीलेन सर्वव्याप्तेन त्वदीयपादेन अतिविस्तृतेनेत्यर्थः । यद्वा । वटूरिणा पदा वेष्टनशीलेन हस्तिनः[1] संबन्धिना पादेन ऐरावतपादेनेत्यर्थः[1] । न केवलेन येन केन पादेनेत्याह । ᵛमहावटूरिणा ᵛपदा महावेष्टनवता स्वीयेन ऐरावतसंबन्धिना वा पादेन छिन्धि चूर्णय ॥ 'वट वेष्टने' । 'खर्जिपिञ्ज्यादिभ्य ऊरोलचौ' ( उ. सू. ४. ५३० ) इति ऊरप्रत्ययः । 'अत इनिठनौ' इति इनिः ॥

अवासां मघवञ्जहि शर्धो यातुमतीनाम् ।
वैलस्थानके अर्मके महावैलस्थे अर्मके ॥ ३ ॥

अव । आसाम् । मघऽवन् । जहि । शर्धः । यातुऽमतीनाम् ।
वैलऽस्थानके । अर्मके । महाऽवैलस्थे । अर्मके ॥ ३ ॥

हे इन्द्र ᵛमघवन् धनवन् ᵛआसां ᵛयातुमतीनाम् । यातनसाधनानि[2] आयुधानि यातूनि तद्वतीनां यातुधानवतां वा सेनानां ᵛशर्धः बलम् ᵛअव ᵛजहि चूर्णय । तथा कृत्वा च ᵛअर्मके कुत्सिते शवैः अरणीये ᵛवैलस्थानके कुत्सिते पूर्वोक्तलक्षणे श्मशाने क्षपय इति शेषः । यद्वा । वैलस्थानके बिलसंबन्धिनि कुत्सिते स्थाने अन्धकारावृते अधोलोके स्थापयेति शेषः । ननु यत्र क्वचित् क्षुद्रे न इत्याह । ᵛमहावैलस्थे सर्वैर्गन्तव्ये महाश्मशाने नागलोके वा । पुनः कीदृशे । ᵛअर्मके कुत्सिते गतासुभिः अरणीये ॥

यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः ।
तत्सु ते मनायति तकत्सु ते मनायति ॥ ४ ॥

यासाम् । तिस्रः । पञ्चाशतः । अभिऽव्लङ्गैः । अपऽअवपः ।
तत् । सु । ते । मनायति । तकत् । सु । ते । मनायति ॥ ४ ॥

हे इन्द्र ᵛयासां पूर्वमन्त्रोक्तलक्षणानां सेनानां ᵛतिस्रः ᵛपञ्चाशतः त्रिगुणितपञ्चाशत्संख्यां सार्धशतम्[3] ᵛअभिव्लङ्गैः अभिगमनैः ॥ व्लङ्गतिर्गतिकर्मेत्युक्तम् ॥ अभिगम्य ᵛअपावपः नाशितवानसि । हे इन्द्र ᵛतत् तादृशं सेनावधादिरूपं[4] कर्म ᵛसु[5] ᵛमनायति सुष्ठु संभावयतीत्यर्थः[5] । किंच हे इन्द्र ᵛते तव अध्यर्धशतशत्रुसेनाजयरूपं महदपि ᵛतकत् इति ᵛसु ᵛमनायति अत्यल्पमिदमिति सुष्ठु मन्यते ॥

पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो नि बर्हय ॥ ५ ॥

पिशङ्गऽभृष्टिम् । अम्भृणम् । पिशाचिम् । इन्द्र । सम् । मृण ।
सर्वम् । रक्षः । नि । बर्हय ॥ ५ ॥

---

१. क्ष-ञ-ट—हस्तिनः संबन्धि ( ना ) पादेनेत्यर्थः । २. क्ष-ञ-ट—यातनासाधनानि । ३. क्ष-ङ-ञ-ट—अध्यर्धशतम् । ४. क्ष-ङ-ञ-ट—शत्रुसेनावधादिरूपम् । ५. क्ष-ञ-ट—मनायति । परुच्छेपः सर्वो लोको वा मनायति सुष्ठु संभावयति स्तौतीत्यर्थः ।

हे vइन्द्र vपिशङ्गभृष्टिम् ईषद्रक्तवर्णम् vअम्भृणम् अतिभयंकरं शब्दायमानम् ॥ ‘ अण शब्दे ’। यङ्लुगन्तात् पचाद्यचि छान्दसो भलोपश्च[1] ॥ यद्वा। महान्तम् अतिप्रवृद्धमित्यर्थः। अम्भृण इति महन्नाम, ‘ अम्भृणः माहिनः’ ( नि. ३. ३. १६ ) इति तत्र पाठात्। उक्तविधिं[2] v पिशाचिं पिशाचविशेषं जरामित्येके। vसं vमृण सम्यग्हिंसय। न केवलं तमेकं किंतु vसर्वं vरक्षः रक्षण-निमित्तभूतं राक्षसादिकं vनि vबर्हय निषूदय ॥ ‘ बृह[3] हिंसायाम् ’। चौरादिकः ॥ नामय[3]। वधकर्मैतत्। ‘ नितोशयति[4] निबर्हयति ’ ( नि. २. १९. ३० ) इति तत्रोक्तत्वात् ॥

दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्रे ऐन्द्रतृचस्य ‘ अवर्मह इन्द्र ’ इत्यादिके प्रथमाद्वितीये। ‘ षष्ठस्य ’ इति खण्डे सूत्रितम्–‘ अवर्मह इन्द्र वृषन्निन्द्र ’ ( आश्व. श्रौ. ८. १ ) इति ॥

अवर्मह इन्द्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो
घृणान्न भीषाँ अद्रिवः ॥ शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे ।
अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥ ६ ॥

अवः । महः । इन्द्र । दद्दहि । श्रुधि । नः । शुशोच । हि ।
द्यौः । क्षाः । न । भीषा । अद्रिऽवः । घृणात् । न । भीषा । अद्रिऽवः ।
शुष्मिन्ऽतमः । हि । शुष्मिऽभिः । वधैः । उग्रेभिः । ईयसे ।
अपुरुषऽघ्नः । अप्रतिऽइत । शूर । सत्वऽभिः । त्रिऽसप्तैः । शूर । सत्वऽभिः ॥ ६ ॥

हे vइन्द्र vमहः महतो मेघस्य ॥ कर्मणि षष्ठी ॥ महान्तं जलधारिणं मेघं महान्तं वृत्रं वा vअवः अवस्तात् अवाङ्मुखम् ॥ ‘ पूर्वाधरा° ’ इत्यादिना असिप्रत्ययोऽवादेशश्च। ‘अम्नरूधरवरित्युभयथा छन्दसि ’ ( पा. सू. ८. २. ७० ) इति रेफः ॥ vदद्दहि विदारय। किंच vनः अस्मद्वाक्यं vश्रुधि शृणु। हे vअद्रिवः। अद्रिर्मेघः। तद्वन्निन्द्र vहि यस्मात् कारणात् vद्यौः द्युलोको देवानामाश्रयभूतः vशुशोच शोचति। वृष्ट्यभावेन हविराद्यभावादिति भावः। तत्र[5] दृष्टान्तः[5]। vक्षाः vन ॥ क्षेति भूनाम। क्षायन्ति निवसन्त्यस्यामिति क्षाः। ‘ क्षै जै षै क्षये ’। अधिकरणे क्विप् ॥ क्षाः न सर्व-निवासाश्रयभूमिरिव। सा यथा vभीषा वृष्ट्यभावात् सस्यादिशोषभीत्या शोचति तद्वत्। लोकद्वयमपि वृष्ट्यभावेन शोचतीत्यर्थः। असुरपक्षं[6] लोकद्वयमावृत्य प्रवर्धमानं धर्तुम् असहमाने द्यावापृथिव्यौ शोचतः इत्यर्थः। तस्माच्छ्रुधीति पूर्वत्रान्वयः[7]। भीतौ दृष्टान्तः। हे vअद्रिवः शत्रूणां भक्षक। यद्वा। अद्रिर्वज्रः तेन तद्वन्। हे इन्द्र vघृणात् vभीषा vन दीप्तात् अग्नेर्मूर्त्यन्तरात् त्वष्टुर्भीत्येव। त्वष्टुर्भीत्या पूर्वं यथा द्यावा-पृथिव्यौ शोचतः तद्वत्। अत्रेतिहासमाहुः। पूर्वं जगति महान्धकारेण[8] आवृते सति देवा विचिन्त्य अग्निं प्रार्थितवन्तः। स च त्वष्टृरूपेण द्यावापृथिवीभ्यां सकाशात् तमो व्युदस्यन् उदपद्यत। तं दृष्ट्वा द्यावा-

१. क्ष-ञ-ट–वलोपश्च (?); ङ–वर्णलोपश्च। २. ङ–उक्तविधम्। ३. ङ–बर्ह हिंसायाम्। चौरादिकः। नाशय; क्ष-ञ-ट–बर्ह...नामय। ४. ङ–निनाशयति। ५. क्ष-ङ-ज्ञ-ञ-ट–किंच। ६. क-क्ष-ख-ङ-च-ज-ज्ञ-झ-ञ-ट-त-व–असुरपक्षे। ७. क्ष-ङ-ञ-ट–पूर्वेणान्वयः। ८. क्ष-ञ-ट–महतान्धकारेण।

पृथिव्यौ बिभ्यतुरिति॥ स च ' उभे त्वष्टुर्बिभ्यतुः ' (ऋ. सं. १. ९५. ५) इत्यादिश्रुतितोऽवगन्तव्यः। यद्वा। घृणः केवलोऽग्निः। तस्माद्यथा बिभीतस्तद्वत्। सा च भीतिः ' अरेजेतां रोदसी ' ( ऋ. सं. १. ३१. ३ ) इत्यादिश्रुतितोऽवगन्तव्या। तादृशभीतिं वृष्टिप्रदानेन परिहरेत्यर्थः। हे इन्द्र त्वं Vशुष्मिभिः बलैः Vशुष्मिन्तमो Vहि अतिशयेन बलवान् खलु। अतः कारणात् Vउग्रेभिः उद्गूर्णैरतिक्रूरैः Vवधैः तदुपायैः[1] सहितः त्वम् Vईयसे शत्रून् मेघान् वा गच्छसि॥ ' ईङ् गतौ '। दैवादिकत्वात् श्यन्॥ यद्वा। शुष्मिभिर्वधैरिति संबन्धः। हे Vशूर विक्रान्त Vसत्वभिः Vअप्रतीत अवसन्नैः रक्षःप्रभृतिभिः अप्रतिगत युद्धे शत्रुभिः अनाक्रान्त[2]। यद्वा। सत्वभिः प्राणिभिः असंस्कृतमनस्कैः अनधिगत[3]। Vअपुरुषघ्नः पौरुषोपेतानां यजनसमर्थानाम् अहननः[4] त्वम्। Vत्रिसप्तैः Vसत्वभिः[5] त्रिभिः सप्तभिर्वा सत्वभिः अनुचरैरुपेतः सन् ईयसे इत्यन्वयः॥

प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्यायाः पुरस्तात् ' वनोति हि ' इत्येषा प्रक्षेपणीया। तत्रैव खण्डे सूत्रितं—' वनोति हि सुन्वन्क्षयं परीणसो मो षु वो अस्मदभि तानि पौंस्या ' ( आश्व. श्रौ. ८. १ ) इति॥

वनोति हि सुन्वन्क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो

देवानामव द्विषः॥ सुन्वान इत्सिषासति सहस्रा वाज्यवृतः।

सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम्॥ ७॥

वनोति। हि। सुन्वन्। क्षयम्। परीणसः। सुन्वानः। हि। स्म। यजति। अव। द्विषः।

देवानाम्। अव। द्विषः॥ सुन्वानः। इत्। सिसासति। सहस्रा। वाजी। अवृतः।

सुन्वानाय। इन्द्रः। ददाति। आऽभुवम्। रयिम्। ददाति। आऽभुवम्॥ ७॥

हे इन्द्र Vसुन्वन् त्वामुद्दिश्य अभिषवं कुर्वन् यजमानः Vक्षयं सर्वैर्वस्तव्यं गन्तव्यं वा गृहं Vवनोति Vहि त्वत्प्रसादात् संभजते। हिः प्रसिद्ध्यर्थः। किंच Vसुन्वानो हि सोमयागं कुर्वाणः एव Vपरीणसः परितो नद्धान् संबद्धान् Vद्विषः द्वेष्टॄन् Vअव Vयजति नाशयति। न केवलं यागद्वेषिणः Vदेवानां Vद्विषः अपि Vअव यजति। किंच Vसुन्वान Vइत् अभिषवोपलक्षितं यागं कुर्वाणो हे इन्द्र त्वत्प्रसादात् Vवाजी वाजवान् अन्नवान् Vअवृतः परैरनाक्रान्तः सन् Vसहस्रा सहस्राण्यपरिमितानि गवादिधनानि Vसिषासति साधयितुं संभक्तुं वा इच्छति॥ सनेः सनि ' सनीवन्तर्ध० ' इति विकल्पनात् इडभावे ' जनसनखन० ' इति आत्वम्॥ केनेदं लभ्यते इति तत्राह। Vसुन्वानाय इन्द्रमुद्दिश्य सोमयागं कुर्वाणाय यजमानाय वा अयम् Vइन्द्रः Vआभुवं समन्ताद्भवनशीलं तथा Vआभुवं पुनर्भवनशीलम्[6] अतिसमृद्धं Vरयिं गवादिरूपं धनं Vददाति प्रयच्छति। तस्मात् सुन्वानः सिषासतीत्यर्थः॥ ॥ २२॥ ॥ १९॥

---

१ ङ–तदुपायैश्च। २. ङ–अनायात। ३. क्ष-ङ-ञ-ट–अनभिमत ४. झ–अहन्ता। ५. क्ष-झ-ञ-ट–' सत्वभिः ' नास्ति। ६. क्ष-ञ-ट–एव। ७. ङ–पुनःपुनर्भवनशीलम्।

विंशेऽनुवाके षट् सूक्तानि । तत्र ‘ आ त्वा जुवः ’ इति षडृचं प्रथमं सूक्तं पारुच्छेपमात्यष्टम्। ‘त्वं नो वायो’ इत्यन्त्या अष्टिः चतुःषष्ट्यक्षरा। ‘ वायव्यं तु ’ इत्युच्यमानत्वात् इदमुत्तरं च वायुदेवत्यम्। अत्रानुक्रमणिका–‘ आ त्वा षड्वायव्यं त्वन्त्याष्टिः ’ इति । विनियोगो लैङ्गिकः ॥

आ त्वा जुवो रारहाणा अभि प्रयो वायो वहन्त्विह पूर्वपीतये सोमस्य पूर्वपीतये ॥ ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती । नियुत्वता रथेना याहि दावने वायो मखस्य दावने ॥ १ ॥

आ। त्वा। जुवः। ररहाणाः। अभि। प्रयः। वायो इति। वहन्तु। इह। पूर्वऽपीतये। सोमस्य। पूर्वऽपीतये ॥ ऊर्ध्वा। ते। अनु। सूनृता। मनः। तिष्ठतु। जानती। नियुत्वता। रथेन। आ। याहि। दावने। वायो इति। मखस्य। दावने ॥ १ ॥

हे ᵛवायो ᵛत्वा त्वां ᵛजुवः गमनशीलाः ᵛररहाणाः शीघ्रगामिनो बलवन्तो वा सामर्थ्यात् नियुत्संज्ञकाः अश्वाः ॥ ‘ रहि गतौ ’। लिटः कानच् । छान्दसोऽनुनासिकलोपः ॥ ᵛइह अस्मिन् यज्ञे ᵛप्रयः चरुपुरोडाशादि हविर्लक्षणमन्नं ᵛवहन्तु प्रापयन्तु । किमर्थम् । ᵛपूर्वपीतये[1] पूर्ववत्पानाय । पुनः किमर्थम् । ᵛपूर्वपीतये इतरदेवेभ्यः पुरा पानाय ॥ मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ किंच हे वायो ᵛते तव संबन्धि ᵛमनः ᵛअनु ᵛसूनृता प्रियसत्यात्मिका स्तुतिरूपा अस्मदीया वाक् ᵛतिष्ठतु आश्रित्य सर्वदा वर्ततां हर्षयत्वित्यर्थः । सूनृतेति वाङ्नाम, ‘ सूनृता ब्रह्म ’ इति तन्नामसु उक्तत्वात्। ᵛऊर्ध्वा उन्नता तथा ᵛजानती तव गुणान् विशेषेणावगच्छन्ती । सोमपानार्थं स्तुत्यर्थं च हे ᵛवायो ᵛमखस्य यज्ञस्य ᵛदावने दातव्याय हविषे तत्स्वीकाराय । पुनः किमर्थम् । ᵛदावने अस्मभ्यमभिमतदानाय ॥ उभयत्र ददातेः कर्मणि भावे च क्रमेण औणादिको वनिः। छान्दसः उपधालोपः ॥ ᵛनियुत्वता ᵛरथेन नियुद्भिर्युक्तेन रथेन ᵛआ ᵛयाहि आगच्छ ॥

मन्दन्तु त्वा मन्दिनो वायविन्दवोऽस्मत्क्राणासः सुकृता अभिद्यवो गोभिः क्राणा अभिद्यवः ॥ यद्ध क्राणा इरध्यै दक्षं सचन्त ऊतयः । सध्रीचीना नियुतो दावने धिय उप ब्रुवत ईं धियः ॥ २ ॥

मन्दन्तु। त्वा। मन्दिनः। वायो इति। इन्दवः। अस्मत्। क्राणासः। सुऽकृताः। अभिऽद्यवः। गोभिः। क्राणाः। अभिऽद्यवः ॥ यत्। ह। क्राणाः। इरध्यै। दक्षम्। सचन्ते। ऊतयः। सध्रीचीनाः। निऽयुतः। दावने। धियः। उप। ब्रुवते। ईम्। धियः ॥ २ ॥

---

१. ख-च-फ-सोमस्य पूर्वपीतये ।

हे Vवायो Vत्वा त्वाम् Vअस्मत् अस्माकं संबन्धिनः Vइन्दवः क्लेदयितारः सोमाः Vमन्दन्तु मादयन्तु ॥ व्यत्ययेन परस्मैपदम् ॥ कीदृशाः सोमाः । Vमन्दिनः मादयितारः Vक्राणासः कुर्वाणाः स्वकार्यं हर्षादिकं Vसुकृताः अभिषवदशापवित्रशोधनग्रहणादिभिः सुष्ठु कृताः Vअभिद्यवः अभितो द्योतयन्तः Vगोभिः वाग्भिर्मन्त्ररूपाभिः Vक्राणाः क्रियमाणा हूयमानाः । यद्वा । गोभिः गन्तृभिः आहवनीयं प्रति आनेतृभिः क्राणा हूयमानाः ॥ करोतेः शानच् । छान्दसः शपो लुक् ॥ तथा Vअभिद्यवः अभिगन्तारः । हे वायो[1] Vयत् यस्मात् कारणात् । हशब्दः प्रसिद्धौ । Vदक्षम् अस्मद्यागदेशं प्रति गन्तुमुत्साहवन्तं समर्धयितारम् Vईं[2] त्वां Vनियुतः एतत्संज्ञकास्तवाश्वाः Vदावने दानाय हविःस्वीकारनिमित्तं Vधियः कर्माणि उद्दिश्य Vसचन्ते त्वां संगच्छन्ते यागदेशं वा । किमर्थम् । Vइरध्यै प्रापयितुं परिचरितुं वा ॥ ' ईर गतौ ' । तुमर्थे कध्यैप्रत्ययः । ह्रस्वश्छान्दसः ॥ इरध्यतिः परिचरणकर्मा, ' इरध्यति विधेम ' ( नि. ३. ५. १ ) इति तन्नामसूक्तत्वात् । कीदृशास्ताः[3] । Vक्राणाः स्वव्यापारं रथवाहनादिकं कुर्वाणाः । ' क्राणाः कुर्वाणाः ' ( निरु. ४. १९ ) इति यास्कः । Vऊतयः रक्षणवत्यः[4] प्रीतियुक्ता वा तथा Vसध्रीचीनाः त्वया सह अञ्चन्त्यो गच्छन्त्यः ॥ ' सहस्य सध्रिः ' । 'विभाषाञ्चेः॰' इति स्वार्थे खः । व्यत्ययेनान्तोदात्तः ॥ किंच Vधियः कर्मवन्तो बुद्धिमन्तो वा ऋत्विजो यजमाना वा Vउप Vब्रुवते उपेत्य ब्रुवन्ति स्वाभिमतं विज्ञापयन्ति[5] वा[5] ॥

**वायुर्युङ्क्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥ प्र बोधया पुरंधिं जार आ ससतीमिव । प्र चक्षय रोदसी वासयोषसः श्रवसे वासयोषसः ॥ ३ ॥**

वायुः । युङ्क्ते । रोहिता । वायुः । अरुणा । वायुः । रथे । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥ प्र । बोधय । पुरम्ऽधिम् । जारः । आ । ससतीम्ऽइव । प्र । चक्षय । रोदसी इति । वासय । उषसः । श्रवसे । वासय । उषसः ॥ ३ ॥

अयं Vवायुः Vरोहिता रोहितवर्णावश्वौ Vधुरि धारणप्रदेशे रथस्याग्रभागे यद्वा भारवहने Vयुङ्क्ते क्वचिद्योजयति । तथा क्वचित् Vअरुणा अरुणवर्णौ धुरि युङ्क्ते । तथा Vअजिरा अजिरौ गमनशीलौ वर्णविशेषयुक्तौ कदाचिद्युङ्क्ते । यद्वा । एतदुभयत्र संबध्यते । किमर्थं युङ्क्ते इति तदाह[6] । Vवोळ्हवे धुरं वोढुं भारवहनाय । किंच Vवहिष्ठा वहिष्ठौ अतिशयेन वोढारावश्वौ ॥ वोढृशब्दात् इष्ठनि ' तुरिष्ठेमेयःसु ' इति तृलोपः । ढत्वादिकम् असिद्धत्वान्निवर्तते । द्विवचनस्य आकारः ॥ Vधुरि Vवोळ्हवे महद्भारं वोढुं महति भारे वोढव्ये सति । पुनःपुनर्वायुग्रहणम् अश्वयोजनवचनं च अतिशीघ्रमागच्छतीति ज्ञापनार्थम् । इदानीं प्रत्यक्षेणाह । हे वायो Vपुरंधिं बहुप्रज्ञं सामर्थ्यात् यजमानमिति गम्यते । ' पुरंधिर्बहुधीः ' (निरु. ६. १३) इति यास्कः । तं Vप्र Vबोधय । रथेन शीघ्रमागत्य प्रज्ञापय हविःस्वीकारायेति भावः । तत्र दृष्टान्तः । Vजारः पारदारिकः Vआ Vससतीम् उपपत्यागमनध्यानेन[7] ईषत् स्वपन्तीं पुरंधिमिव

---

१. क्ष-झ-ञ-ट–वायो त्वा । २. क्ष-ङ-झ-ञ-ट–वा । ३. क्ष-ञ-ट–कीदृशा अश्वाः; च-त-फ–कीदृश्यस्ताः । ४. ङ-च–रक्षणवन्तः । ५. ङ-च–' विज्ञापयन्ति वा ' इत्यस्यानन्तरम् ' ईम् अनर्थकः । पादपूरण इति पूर्वमुक्तम् ' इत्यधिकम् । ६. ङ–तत्राह । ७. क्ष-ञ-ट–पत्यागमनध्यानेन ।

प्रकृष्टशरीरधारिणीं योषितमिव। तां यथा स्वसङ्केतेन[1] स प्रबोधयति तद्वत् त्वमपि कर्मव्यग्रेण[2] ईषत्स्वपन्तं यजमानं प्र बोधय। किंच तदर्थं ^V^रोदसी द्यावापृथिव्यौ ^V^प्र ^V^चक्षय प्रकर्षेण प्रख्यापय प्रकाशयेत्यर्थः। तत्प्रकाशार्थम् ^V^उषसः ^V^वासय उषःकालानपि यथावत्स्थापय प्रभातं कुर्वित्यर्थः। पुनस्तदेव प्रार्थ्यते। ^V^श्रवसे। श्रव इत्यन्ननाम। तव हवीरूपान्नस्वीकाराय ^V^उषसः ^V^वासय॥

तुभ्य॑मु॒षासः॒ शुच॑यः परा॒वति॑ भ॒द्रा वस्त्रा॑ तन्वते॒ दंसु॑ र॒श्मिषु॑ चि॒त्रा नव्ये॑षु र॒श्मिषु॑॥ तुभ्यं॑ धे॒नुः स॑ब॒र्दुघा॒ विश्वा॒ वसू॑नि दोहते। अज॑नयो म॒रुतो॑ व॒क्षणा॑भ्यो दि॒व आ व॒क्षणा॑भ्यः॥ ४॥

तुभ्य॑म्। उ॒षसः॑। शुच॑यः। प॒रा॒ऽवति॑। भ॒द्रा। वस्त्रा॑। त॒न्व॒ते॒। दम्ऽसु॑। र॒श्मिषु॑। चि॒त्रा। नव्ये॑षु। र॒श्मिषु॑॥ तुभ्य॑म्। धे॒नुः। स॒ब॒ःऽदुघा॑। विश्वा॑। वसू॑नि। दो॒ह॒ते॒। अज॑नयः। म॒रुतः॑। व॒क्षणा॑भ्यः। दि॒वः। आ। व॒क्षणा॑भ्यः॥ ४॥

हे वायो ^V^तुभ्यं त्वदर्थम् ^V^उषासः उषसः पूर्वोक्तरीत्या त्वया प्रकाशिताः ^V^शुचयः शुद्धा दीप्ता वा ^V^परावति अत्यन्तदूरदेशे अन्तरिक्षे ^V^दंसु दंसेषु कर्मवत्सु[3]। यद्वा। गृहनामैतत्॥ अन्त्यलोपश्छान्दसः॥ गृहवत्[4] आच्छादकेषु। ^V^रश्मिषु स्वकीयेषु तैः ^V^भद्रा भन्दनीयानि[5] कल्याणानि ^V^वस्त्रा आच्छादनयोग्यानि वस्त्राणि ^V^तन्वते विस्तारयन्ति। यद्वा। उषसो दंसु यागगृहेषु देवयजनेषु[6] रश्मिषु होमाय[6] प्रदीप्ताग्निज्वालावत्सु आगताय तुभ्यं भद्रा वस्त्रा तन्वते अग्निज्वाला एव वस्त्राणि विस्तारयन्तीत्यर्थः। उषःकाले अग्नीनां प्रज्वाल्यमानत्वात् ता एव वस्त्राणीत्युपचर्यते[7]। ननु केवलं साधारणानि वस्त्राणि नेत्याह। ^V^नव्येषु नूतनेषु स्तूयमानेषु॥ 'णु स्तुतौ'। अचो यत्। 'वान्तो यि प्रत्यये' इति अवादेशः। 'यतोऽनावः' इत्याद्युदात्तत्वम्॥ ^V^रश्मिषु चित्राणि[8] नानावर्णयुक्तानि आश्चर्यभूतानि ^V^तन्वते। उषःकाले रश्मीनां नानावर्णत्वादिति भावः। अग्निद्वारेति पक्षे ज्वालानां कालीकरालीत्यादिरूपेण नानावर्णत्वाच्चित्रत्वम्॥ किंच हे वायो ^V^तुभ्यं त्वदर्थं त्वद्यागार्थमेव ^V^धेनुः घृतादिना प्रीणयित्री गौः। जातावेकवचनम्। ^V^सबर्दुघा। सबरिति अमृतनाम। तस्य दोग्ध्री॥ 'दुहः कब्घश्च' इति कप्॥ सती[9] ^V^विश्वा ^V^वसूनि सर्वाणि धनानि आज्यादिरूपाणि ^V^दोहते स्वयमेव दुग्धे[10] प्रीणयतीत्यर्थः॥ कर्मकर्तरि 'न दुहस्नुनमाम्' (पा. सू. ३. १. ८९) इति यगभावः। छान्दसः शपो लुगभावः॥ कस्तत्र[11] विशेषः इति चेत् उच्यते। हे वायो ^V^दिवः दीप्तादन्तरिक्षात् ^V^मरुतः एतन्नामकान् मेघं विशीर्य[12] वृष्ट्युत्पादकान् त्वदंशभूतान् देवान् ^V^अजनयः जनयसि उत्पादयसि। किमर्थमिति तदुच्यते। ^V^वक्षणाभ्यः प्रवहणशीलाभ्यः अद्भ्यो वृष्टिलक्षणाभ्यः। तथा ^V^वक्षणाभ्यः। नदीनामैतत्, 'वक्षणाः रुजानाः' (नि. १. १३. ९) इति तन्नामसु पाठात्। तासामर्थाय॥

---

१. क्ष-ञ-ट-सङ्केतेन। २. ङ-कर्मश्रमेण। ३. ङ-कर्मसु। ४. क्ष-ञ-ट-गृहवदेव। ५. क्ष-ङ-ञ-ट-भजनीयानि। ६. ङ-देवयजनदेशेषु हे वायो; क्ष-ञ-ट-देवयजनदेशेषु रश्मिषु होमाय। ७. क्ष-ङ-ञ-ट-वस्त्राणीत्युपचर्यन्ते। ८. ङ-चित्रा चित्राणि। ९. ङ-तादृशी सती। १०. क्ष-ङ-ट-दोग्धि। ११. क्ष-ङ-ञ-ट-कस्तत्र। १२. क्ष-ङ-ञ-ट-विदीर्य।

तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषूग्रा इषणन्त भुर्वण्यपामिषन्त भुर्वणि।
त्वां त्सारी दसमानो भगमीट्टे तक्ववीये ।
त्वं विश्वस्माद्भुवनात्पासि धर्मणासुर्यात्पासि धर्मणा ॥ ५ ॥

तुभ्यम् । शुक्रासः । शुचयः । तुरण्यवः । मदेषु । उग्राः । इषणन्त । भुर्वणि । अपाम् । इषन्त । भुर्वणि ॥ त्वाम् । त्सारी । दसमानः । भगम् । ईट्टे । तक्वऽवीये । त्वम् । विश्वस्मात् । भुवनात् । पासि । धर्मणा । असुर्यात् । पासि । धर्मणा ॥ ५ ॥

हे वायो ᵛतुभ्यं त्वदर्थं ᵛशुक्रासः दीप्ताः ᵛशुचयः शुद्धाः । सोमस्य पातारोऽत्यन्तं शुद्धा भवन्ति । किमु वक्तव्यं तेषां शुद्धत्वे । ᵛतुरण्यवः त्वरणयुक्ताः त्वां प्राप्तुं ᵛउग्राः उद्गूर्णतेजसः सोमाः ᵛमदेषु तव मदेषु निमित्तभूतेषु ᵛभुर्वणि भरणवति यागे ᵛइषणन्त आहवनीयं प्रति गच्छन्ति इच्छन्ति वा ॥ व्यत्ययेन आत्मनेपदम्[1] । शश्नमौ द्वौ विकरणौ[1] ॥ किंच ᵛअपां ᵛभुर्वणि मेघे ᵛइषन्त उदकमिच्छन्ति उत्पादयितुम् । अग्नौ हूयमानस्य[2] आहुतेरादित्यद्वारा वृष्ट्युत्पादकत्वात् । यद्वा । यजमानाः त्वामुद्दिश्य आजुह्वाना अपां वर्षणम् इषन्त इच्छन्ति । किंच हे वायो ᵛभगं भजनीयं ᵛत्वां ᵛत्सारी त्सरणवान् अत्यन्तभीतः ᵛदसमानः उपक्षीणो यज्ञविघातकैः पयोव्रतादिनियमैर्वा यजमानः ᵛतक्ववीये तस्कराणां यज्ञविघातिनाम् अन्यत्र गमनाय ᵛईट्टे स्तौति ॥ 'ईड स्तुतौ' । अदादित्वात् शपो लुक् ॥ यतः ᵛत्वं ᵛविश्वस्माद्भुवनात् सर्वस्माल्लोकात् भूतजाताद्वा लोकत्रयसंबन्धिनो भयात् ᵛधर्मणा अस्मदीयहविषां धारणेन ᵛपासि पालयसि । किंच ᵛअसुर्यात् असुरसंबन्धिनो भयात् विशेषेण ᵛपासि ᵛधर्मणा अस्मद्धारणेन[3] पोषणेन वा युक्तः सन् । यत एवं करोषि अतः स्तौमीत्यर्थः ॥

त्वं नो वायवेषामपूर्व्यः सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि ।
उतो विहुत्मतीनां विशां ववर्जुषीणाम् ।
विश्वा इत्ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरम् ॥ ६ ॥

त्वम् । नः । वायो इति । एषाम् । अपूर्व्यः । सोमानाम् । प्रथमः । पीतिम् । अर्हसि । सुतानाम् । पीतिम् । अर्हसि ॥ उतो इति । विहुत्मतीनाम् । विशाम् । ववर्जुषीणाम् । विश्वाः । इत् । ते । धेनवः । दुह्रे । आऽशिरम् । घृतम् । दुह्रते । आऽशिरम् ॥ ६ ॥

१. ङ—आत्मनेपदम् । इष गतौ । श्ना विकरणः । २. ङ—हूयमानायाः । ३. ङ—अस्मान् धारयन् ।

हे ^v^वायो ^v^त्वम् ^v^अपूर्व्यः । न विद्यते पूर्वं यस्मात् तत्पानमपूर्वम्[1] । तदर्हतीत्यपूर्व्यः । तादृशः अत एव ^v^प्रथमः इतरदेवेभ्यः पूर्वभूतः[2] सन् ^v^सोमानां[3] ^v^पीतिं पानम् ^v^अर्हसि प्राप्नोषि[4]। ^v^सुतानाम्[5] अभिषवकृतानां सोमानां ^v^पीतिं पानम् ^v^अर्हसि[5] । यत्र यत्र अभिषवोऽस्ति तत्र सर्वत्र नियमेन पिबसीत्यर्थः । पूर्वं प्राथम्याभिप्रायेण इदानीं तु सर्वत्र सोमवति यागे अस्य पानमस्तीति ज्ञापयितुं पृथगभिधानम् । न केवलं सोमपानमात्रम् ^v^उतो अपि तु ^v^विहुत्मतीनां विशेषेण होमवतीनामाह्वानवतीनां वा ॥ जुहोतेः संपदादिलक्षणो भावे क्विप् । ततो मतुब्ङीपौ ॥ ^v^ववर्जुषीणाम् अनभिमतपापं वर्जयन्तीनाम् ॥ वर्जयतेर्लिटः क्वसुङीप्संप्रसारणत्वानि ॥ ^v^विशाम् ऋत्विग्यजमानरूपाणां प्रजानां[6] संबन्धि[6] हविः स्वीकरोषीति शेषः । यद्वा । तेषां यष्टॄणां ^v^विश्वाः ^v^इत् ^v^धेनवः सर्वा अपि गावः ^v^ते त्वदर्थम् ^v^आशिरम् आश्रयणद्रव्यं क्षीरं ^v^दुह्रे दुहन्ति स्वयमेव ॥ कर्मकर्तरि 'न दुहस्नुनमाम्°' इति यगभावः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । 'बहुलं छन्दसि' इति रुट् ॥ तथा ^v^आशिरं ^v^घृतम् उपस्तरणाभिघारणाद्याश्रयणाय[7] योग्यं[7] करणं[8] द्रव्यं[8] ^v^दुह्रते ॥ ॥ २३ ॥

'स्तीर्णं बर्हिः' इति नवर्चं सूक्तं[9] पारुच्छेपमात्यष्टं पूर्वत्र तुशब्दात् वायुदेवत्यम् । 'आ वां रथः' इत्यादि ऋक्पञ्चकमैन्द्रम् । सप्तम्यष्टम्यौ अष्टी । अत्रानुक्रमणिका–'स्तीर्णं नव चतुर्थ्याद्याः पञ्चैन्द्र्यश्चोपान्त्ये अष्टी' इति ॥ सूक्तस्य विशेषविनियोगो लैङ्गिकः । दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्रे आद्यौ तृचौ प्राकृतयोः वायव्यैन्द्रवायव्ययोः[10] स्थाने[10] विनियुक्तौ । 'षष्ठस्य प्रातःसवने' इति खण्डे सूत्रितं– 'स्तीर्णं बर्हिरिति तृचौ' ( आश्व. श्रौ. ८. १ ) इति ॥

स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते
शतिनीभिर्नियुत्वते । तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे ।
प्र ते सुतासो मधुमन्तो अस्थिरन्मदाय क्रत्वे अस्थिरन् ॥ १ ॥

स्तीर्णम् । बर्हिः । उप । नः । याहि । वीतये । सहस्रेण । निऽयुता । नियुत्वते ।
शतिनीभिः । नियुत्वते ॥ तुभ्यम् । हि । पूर्वऽपीतये । देवाः । देवाय । येमिरे ।
प्र । ते । सुतासः । मधुऽमन्तः । अस्थिरन् । मदाय । क्रत्वे । अस्थिरन् ॥ १ ॥

हे वायो ^v^नः अस्मद्यज्ञार्थं ^v^स्तीर्णम् आस्तृतं ^v^बर्हिः अभिलक्ष्य ^v^उप ^v^याहि आगच्छ । किमर्थम् । ^v^वीतये हविषां भक्षणाय । केन साधनेनेति तदुच्यते । ^v^सहस्रेण सहस्रसंख्याकेन ^v^नियुता । जातावेकवच-

---

१. ङ–तदपूर्वम्; क्ष-ञ-ट–तस्मादपूर्वः । २. क्ष-ङ-ञ-ट–पूर्वमाहूतः । ३. ख-च-फ–एषां सोमानाम् । ४. क्ष-ङ-ञ-ट–'प्राप्नोषि' इत्यस्यानन्तरं 'पातुं योग्यो भवसि। ऐन्द्रवायवे गृहे ( क्ष-ञ-ट–'गृहे' नास्ति । ) द्विदेवत्ये गृहेऽपि प्रथमम् एकवारं त्वदर्थं गृह्यमाणत्वात् हूयमानात्वाचेतिभावः' इत्यधिकम् । ५. क्ष-ङ-ञ-ट–किंच सुतानां अभिषुतानां पीतिम् अर्हसि प्राप्नोषि । ६. ख-फ–प्रजानां नः अस्माकं संबन्धि । ७. क्ष-ङ-ञ-ट–°द्याश्रयणयोग्यम् । ८. क्ष-ङ-ञ-ट–क्षरणद्रव्यम् । ९. ङ-च-झ–द्वितीयं सूक्तम् १०. क्ष-ङ-ञ-ट–वायव्यैन्द्रवायवस्थाने ।

नम् ॥ नियुत इति वायोरश्वानां नामधेयं, ' नियुतो वायोः' (नि. १.१५. १०) इति निरुक्तत्वात्[1]। तथा ᵛशतिनीभिः शतसंख्योपेताभिः नियुद्भिः आगच्छेति शेषः। यद्वा। सहस्रेण नियुता शतिनीभिश्च नियुद्भिः ᵛनियुत्वते तद्वते देवाय हविर्दीयते इति शेषः। यद्वा। तुभ्यमित्यनेन संबन्धः। उक्तसंख्याकाभिर्नियुद्भिः तद्वते ᵛदेवाय द्योतमानाय ᵛतुभ्यम् ॥ ' ङयि च ' (पा. सू. ६. १. २१२) इति आद्युदात्तत्वम् ॥ ᵛपूर्वपीतये इतरदेवेभ्यः पूर्वं पानाय ᵛदेवाः ᵛयेमिरे यमितवन्तः। यद्वा। स्तोतारः ऋत्विजो देवाय तुभ्यं येमिरे। आहवनीयं प्रति सोमं नियमितवन्तः। ' अग्रं पिबा मधूनां सुतं वायो ' (ऋ. सं. ४. ४६. १) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थो हिशब्दः। किंच एते[2] त्वदर्थं ᵛसुतासः अभिषुताः[2] ᵛमधुमन्तः माधुर्योपेताः[3] सोमाः ᵛमदाय तव मोदाय ᵛअस्थिरन् तिष्ठन्ति। किंच ᵛक्रत्वे कर्मणे तत्सिद्ध्यर्थम् ᵛअस्थिरन्। ऋत्विग्भिः धृताः[4] तिष्ठन्ति। अतः त्वं पिबेति शेषः॥ तिष्ठतेश्छान्दसे लुङि व्यत्ययेन झस्य रन्। ' स्थाघ्वोरिच्च ' इति सिचः कित्त्वं धातोः इत्वं च। ' ह्रस्वादङ्गात् ' इति सिचोलोपः ॥

**तुभ्या॒यं सोमः॒ परि॑पूतो॒ अद्रि॑भिः स्पा॒र्हा वसा॑नः॒ परि॒ कोश॑मर्षति शु॒क्रा**

**वसा॑नो॒ अर्षति ॥ तवा॒यं भा॒ग आ॒युषु॒ सोमो॑ दे॒वेषु॑ हूयते ।**

**वह॑ वायो नि॒युतो॑ याह्यस्म॒युर्जु॑षा॒णो या॑ह्यस्म॒युः ॥ २ ॥**

तुभ्य॑ । अ॒यम् । सोमः॑ । परि॑ऽपूतः । अद्रि॑ऽभिः । स्पा॒र्हा । वसा॑नः । परि॑ । कोश॑म् । अ॒र्ष॒ति ।

शु॒क्रा । वसा॑नः । अ॒र्ष॒ति ॥ तव॑ । अ॒यम् । भा॒गः । आ॒युषु॑ । सोमः॑ । दे॒वेषु॑ । हू॒य॒ते ।

वह॑ । वा॒यो॒ इति॑ । नि॒ऽयुतः॑ । या॒हि॒ । अ॒स्म॒ऽयुः । जु॒षा॒णः । या॒हि॒ । अ॒स्म॒ऽयुः ॥ २ ॥

हे वायो ᵛतुभ्य तुभ्यं त्वदर्थम् ॥ ' सुपां सुलुक्° ' इति चतुर्थ्या लुक् ॥ ᵛअयं ᵛसोमः हूयमानः ᵛकोशं कोशस्थानीयं ग्रहम् ᵛअर्षति गच्छति प्राप्नोति। कीदृशः सोमः। ᵛअद्रिभिः ᵛपरिपूतः अभिषवसाधनैः अपगतर्जीषत्वेन शोधितः। यद्वा। अद्रिभिरभिषुतो दशापवित्रशोधनेन ग्रहणेन वा शोधितः। तथा ᵛस्पार्हा स्पृहणीयानि तेजांसि ᵛवसानः पिधानः। किंच ᵛशुक्रा निर्मलानि दीप्तानि वा तेजांसि ᵛवसानः सोमः ᵛअर्षति[5] त्वां प्राप्नोति ॥ ' ऋषी गतौ '। व्यत्ययेन शप्। हे वायो ᵛआयुषु मनुष्येषु यष्टव्यत्वेन स्थितः ᵛभागः भजनीयः ᵛसोमः ᵛतव त्वदर्थं ᵛदेवेषु मध्ये ᵛहूयते। सत्स्वपि इतरेषु देवेषु यतः सोमस्तव भागः अतः प्रथमं तुभ्यं हूयते इत्यर्थः। किंच हे ᵛवायो एवं तं[6] सोमम् ᵛअस्मयुः अस्माभिः तद्वान् ॥ मत्वर्थीयो युः ॥ त्वं ᵛनियुतः ᵛवह नियुत्संज्ञकानश्वान् वाहनाय प्रापय। ततः परं ᵛयाहि दिवं प्रति गच्छ। तथा कुर्वन् ᵛअस्मयुः अस्माभिर्युक्तः सन् अस्माननुगृह्णन् अस्मान् कामयमानो वा ॥ क्यचि छान्दसेऽन्त्यलोपे ' क्याच्छन्दसि ' इति उः ॥ ᵛजुषाणः प्रीयमाणः ᵛयाहि गच्छ ॥

---

१. क-ज-झ-ण-व-निरुक्ते उक्तत्वात्। २. ङ-ते सुताः अभिषुताः। ३. ङ-मधुनोपेताः। ४. ङ-वर्धिताः। ५. ङ-ञ-झ-अर्षति गच्छति। ६. क्ष-ञ-ट-हुतम्

आ नो॑ नि॒युद्भिः॑ श॒तिनी॑भिरध्व॒रं स॑ह॒स्रिणी॑भि॒रुप॑ याहि वी॒तये॑ वायो॑ ह॒व्यानि॑ वी॒तये॑ । तवा॒यं भा॒ग ऋ॒त्वियः॒ सर॑श्मिः॒ सूर्ये॒ सचा॑ । अ॒ध्व॒र्युभि॒र्भर॑माणा अयंसत वायो॑ शु॒क्रा अ॑यंसत ॥ ३ ॥

आ । नः॒ । नि॒यु॒त्ऽभिः॑ । श॒तिनी॑भिः । अ॒ध्व॒रम् । स॒ह॒स्रिणी॑भिः । उप॑ । या॒हि॒ । वी॒तये॑ । वायो॒ इति॑ । ह॒व्यानि॑ । वी॒तये॑ ॥ तव॑ । अ॒यम् । भा॒गः । ऋ॒त्वियः॑ । स॒ऽर॑श्मिः । सूर्ये॑ । सचा॑ । अ॒ध्व॒र्युऽभिः॑ । भर॑माणाः । अ॒यं॒स॒त॒ । वायो॒ इति॑ । शु॒क्राः । अ॒यं॒स॒त॒ ॥ ३ ॥

हे vवायो त्वं vनः vअध्वरम् अस्मत्संबन्धिनं यज्ञं vशतिनीभिः vनियुद्भिः vसहस्रिणीभिः च ताभिस्त्वदीयैरश्वैः नः अस्मद्यज्ञम् vउप vआ vयाहि उपागच्छ । किमर्थम् । vवीतये त्वदभिमत-कामाय तत्पूर्तये । आगत्य च vहव्यानि vवीतये सोमादिहविर्भक्षणाय । अध्वरं हव्यानि च उपलक्ष्य तेषामेव भक्षणाय शतसहस्रैरश्वैः अतिशीघ्रमागच्छेत्यर्थः । किंच vअयं vतव vभागः भजनीयः सोमः vऋत्वियः प्राप्तकालः प्रदानावसरं प्राप्तः । ऋतुशब्देन प्रदानकालो लक्ष्यते ॥ ‘ छन्दसि घस् ’ (पा. सू. ५. १. १०६), ‘ सिति च ’ (पा. सू. १. ४. १६) इति पदसंज्ञया भसंज्ञाया बाधात् ओर्गुणाभावे यण् ॥ किंच सोमः[1] vसूर्ये उदिते सति तस्य रश्मिभिः vसचा[2] सह vसरश्मिः[2] भवति समानदीप्तिर्भवति । यद्वा । तैः सहितो भवति । यतः सूर्ये उदिते सति[3] रश्मिः[3] भवति अतः प्राप्तकालः[4] इत्यर्थः । किंच सोमाः vअध्वर्युभिः चमसाध्वर्युभिः । तेषां दशत्वाद्बहुवचनम् । तैः vभरमाणाः ध्रियमाणाः vअयंसत नियता अभवन् । किंच हे vवायो ते सोमाः vशुक्राः vअयंसत अत्यन्तदीप्ताः उद्यताः । अतः तेषां भक्षणाय आयाहीत्यर्थः ॥

आ वां॒ रथो॑ नि॒युत्वा॑न्वक्ष॒दव॑से॒ऽभि प्रयां॑सि॒ सुधि॑तानि वी॒तये॒ वायो॑ ह॒व्यानि॑ वी॒तये॑ ॥ पिब॑तं॒ मध्वो॒ अन्ध॑सः पूर्व॒पेयं॒ हि वां॑ हि॒तम् । वाय॒वा च॒न्द्रेण॒ राध॒सा ग॑त॒मिन्द्र॑श्च॒ राध॒सा ग॑तम् ॥ ४ ॥

आ । वा॒म् । रथः॑ । नि॒युत्वा॑न् । व॒क्ष॒त् । अव॑से । अ॒भि । प्रयां॑सि । सु॒ऽधि॑तानि । वी॒तये॑ । वायो॒ इति॑ । ह॒व्यानि॑ । वी॒तये॑ ॥ पिब॑तम् । मध्वः॑ । अन्ध॑सः । पू॒र्व॒ऽपेय॑म् । हि । वा॒म् । हि॒तम् । वायो॒ इति॑ । आ । च॒न्द्रेण॑ । राध॑सा । आ । ग॒त॒म् । इन्द्रः॑ । च॒ । राध॑सा । आ । ग॒त॒म् ॥ ४ ॥

केवलं वायुं स्तुत्वा व्यासक्ततया इन्द्रवायू स्तौति । हे vवायो त्वामिन्द्रं च vवां युष्मान् vरथः युवयोः संबन्धी रथः vनियुत्वान् नियुद्भिरश्वैः तद्वान् सन्[5] vआ[5] vवक्षत् देवयजनं प्रति युष्मानावहतु ॥

---

१. क्ष-ङ-ञ-ट–स च सोमः । २. ङ–सहस्ररश्मिः । ३. ङ-ञ–सरश्मिः । ४. क्ष-ञ-ट–प्राप्तकालम् । ५. क्ष-ङ-ञ-ट–अवसे ।

वहेर्लेटि अडागमः । ‘ सिब्बहुलम्° ’ इति सिप् ॥ यद्यपि नियुतो वायोरेव रथस्योचिताः तथापि व्यासक्तदेवतात्वात् सहैवागमनात् इन्द्रार्थमपि वहन्ति[1] । किमर्थम् । ᵛअवसे गमनाय रक्षणाय वा । पुनश्च किमर्थम्। ᵛप्रयांसि अन्नानि सोमलक्षणानि ᵛसुधितानि सुष्ठु गृहीतानि ᵛवीतये तेषां भक्षणाय। तथा ᵛहव्यानि ᵛवीतये इतरेषां सवनीयपुरोडाशादीनां खादनाय ॥ वेतेः क्तिन् । ‘ मन्त्रे वृष° ’ इत्यादिना तस्योदात्तत्वम् ।। किंच ᵛमध्वः मधुररसस्य ᵛअन्धसः अन्नस्य सोमरूपस्य।। कर्मणि षष्ठी ।। मधुरं सोमं ᵛपिबतम् । यतः ᵛपूर्वपेयम् इतरदेवेभ्यः पूर्वपानं ᵛवां युवयोः ᵛहितम् ।। पातेः ‘ अचो यत् ’ इति यत् । ‘ ईद्यति ’ इति ईकारः ।। अभिमतम् । अतः प्रथमं पिबतमित्यर्थः । यद्यपि इन्द्रादपि वायोः पूर्वपानं ‘ त्वं हि पूर्वपा असि ’ ( ऋ. सं. ४. ४६. १ ), ‘ देव दधिषे पूर्वपेयम् ’ ( ऋ. सं. ७. ९२. १ ) इत्यादिषु सर्वत्र प्रसिद्धं तथापि इन्द्रस्य इतरदेवेभ्यः पूर्वं वायुना सह पानं च इन्द्रतुरीयार्थवादनब्राह्मणे[2] ‘ देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन् ’ ( ऐ. ब्रा. २. २५ ) इत्यत्र प्रतिपादितम् । किंच आगमनसमये हे ᵛवायो त्वम् ᵛइन्द्रश्च ᵛचन्द्रेण अस्मदाह्लादकेन हिरण्येन ᵛराधसा गवादिरूपेण धनेन च सह ᵛआ ᵛगतम् आगच्छतम्। ᵛराधसा रत्नेन धनेन सह ᵛआ ᵛगतम्॥ गमेर्लोटि छान्दसः शपो लुक् । ‘ अनुदात्तोपदेश° ’ इति अनुनासिकलोपः । लुङि च ‘ मन्त्रे घस° ’ इति च्लेर्लुक् ॥

आ वां धियो ववृत्युरध्वराँ उपेममिन्दुं मर्मृजन्त वाजिनमाशुमत्यं न वाजिनम् ॥ तेषां पिबतमस्मयू आ नो गन्तमिहोत्या ।
इन्द्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवम् ॥ ५ ॥

आ । वाम् । धियः । ववृत्युः । अध्वरान् । उप । इमम् । इन्दुम् । मर्मृजन्त । वाजिनम् । आशुम् । अत्यम् । न । वाजिनम् ॥ तेषाम् । पिबतम् । अस्मयू इत्यस्मऽयू । आ । नः । गन्तम् । इह । ऊत्या ॥ इन्द्रवायू इति । सुतानाम् । अद्रिऽभिः । युवम् । मदाय । वाजऽदा । युवम् ॥५॥

हे इन्द्रवायू ᵛवां युवां[3] ᵛधियः कर्माणि स्तोत्रादिलक्षणानि ᵛअध्वरान् ᵛउप अस्मदीयान् यज्ञान् लक्षीकृत्य ᵛववृत्युः अतिशयेन वर्तयन्ति प्रवर्तयन्ति । किंच युष्मदर्थं ᵛवाजिनं ग्रहणाय द्रोणकलशात् ग्रहान् प्रति गमनवन्तम् आमिक्षावन्तं वा ᵛइममिन्दुं पुरतो वर्तमानं सोमं ᵛमर्मृजन्त अध्वर्यवो दशापवित्रेण संमार्जयन्ति[4] । मार्जने दृष्टान्तः । ᵛआशुम् अतिशीघ्रगामिनम् ᵛअत्यं ᵛन सततं गन्तारं ᵛवाजिनं वेजनवन्तमश्वमिव । तं यथा स्वेदाद्यपनयनेन संमार्जयन्ति तद्वत् । किंच हे ᵛइन्द्रवायू ᵛतेषाम् अध्वर्यूणां संबन्धिनः शोधितान् सोमान् ᵛपिबतं पानं कुरुतम् । तदर्थं ᵛनः अस्माकं यज्ञं प्रति ᵛइह इदानीम् ᵛऊत्या अस्मद्रक्षणेन सह ᵛआ ᵛगन्तम् आगच्छतम् । किंच हे इन्द्रवायू ᵛअस्मयू अस्मद्यज्ञमिच्छन्तौ ᵛयुवं युवाम् ᵛअद्रिभिः ग्रावभिः ᵛसुतानाम् अभिषुतानाम् ।। पूर्ववत्कर्मणि षष्ठी ।। तान् पिबतमिति शेषः । किमर्थम् । ᵛमदाय तृप्तये मोदाय वा । यतः ᵛयुवं युवां ᵛवाजदा वाजस्यान्नस्य दातारौ अतः पिबतमित्यन्वयः ।। ॥ २४ ॥

---

१. ङ–वहनम् । २. क्ष-ञ-ट–इन्द्रतुरीयार्थवादब्राह्मणे । ३. क्ष-ञ-ट–युवयोः । ४. क्ष-ङ-ञ-ट–संमार्जयन्ति । मृजेर्यङ्लुगन्तात् व्यत्ययेनात्मनेपदम् ।

इमे वां सोमा अप्स्वा सुता इहाध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ॥ एते वामभ्यसृक्षत तिरः पवित्रमाशवः । युवायवोऽति रोमाण्यव्यया सोमासो अत्यव्यया ॥ ६ ॥

इमे । वाम् । सोमाः । अप्ऽसु । आ । सुताः । इह । अध्वर्युऽभिः । भरमाणाः । अयंसत वायो इति । शुक्राः । अयंसत ॥ एते । वाम् । अभि । असृक्षत । तिरः । पवित्रम् । आशवः । युवाऽयवः । अति । रोमाणि । अव्यया । सोमासः । अति । अव्यया ॥ ६ ॥

हे Vवायो Vवां युवयोः तव च इन्द्रस्य च स्वभूताः Vइमे Vसोमाः Vअप्सु अस्मदीयेषु कर्मसु ॥ 'ऊडिदम्॰' इत्यादिना विभक्तेरुदात्तत्वम् ॥ Vइह अस्मिन्[1] अभिषवस्थाने Vसुताः[2] Vअध्वर्युभिः Vभरमाणाः तैर्ध्रियमाणाः[3] गृहीता होतुं वा ह्रियमाणाः[4]॥ कर्मणि कर्तृप्रत्ययः॥सन्तः Vआ Vअयंसत आगच्छन्त युवयोर्नियता भवन्ति । किंच त एव सोमाः Vशुक्राः शुभ्रा दीप्ताः Vअयंसत नियता भवन्ति । किंच Vएते Vआशवः व्यापकाः सोमाः Vवां युवां प्रीणयितुमिति शेषः । Vतिरः Vपवित्रं तिर्यग्भूतं सोमान्तर्धायकं वा ऊर्णामयं पवित्रम् Vअभ्यसृक्षत अभिलक्ष्य असृज्यन्त सृष्टा भवन्ति ॥ सृजेः कर्मणि लुङि 'लिङ्सिचावात्मनेपदेषु' इति सिचः किर्त्वात् गुणाभावः अमागमाभावश्च ॥ किंच Vयुवायवः युवां कामयमानाःVसोमासः सोमाः Vअव्यया अव्ययानि अच्छिन्नानि Vरोमाणि पवित्रसंबन्धीनि अविरोमाणि । यद्वा । अव्यया अविमयानि ॥ मकारो लुप्यते ॥ तादृशानि रोमाणि Vअति अतिक्रम्य पात्रात्[5] गच्छन्तीति शेषः । पुनस्त एव विशेष्यन्ते । Vअति अतिशयेन Vअव्यया व्ययरहिताः सोमासः सोमाः असृक्षतेति शेषः ॥

अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतं गृहमिन्द्रश्च गच्छतम् ॥ वि सूनृता ददृशे रीयते घृतमा पूर्णया नियुता याथो अध्वरमिन्द्रश्च याथो अध्वरम् ॥ ७ ॥

अति । वायो इति । ससतः । याहि । शश्वतः । यत्र । ग्रावा । वदति । तत्र । गच्छतम् । गृहम् । इन्द्रः । च । गच्छतम् ॥ वि । सूनृता । ददृशे । रीयते । घृतम् । आ । पूर्णया । निऽयुता । याथः । अध्वरम् । इन्द्रः । च । याथः । अध्वरम् ॥ ७ ॥

हे Vवायो त्वं Vससतः[6] आलस्यादिना निद्रां कुर्वतः Vशश्वतः बहून् यजमानान् । शश्वदिति बहुनाम, 'शश्वत् विश्वम्' ( नि. ३. १. ५ ) इति तन्नामसु पाठात् । Vअति अतिक्रम्य उपेक्ष्य अस्मद्यज्ञं

---

१. ङ–अस्मिन् यज्ञे । २. क्ष-ङ-ञ-ट–सुताः अभिषुताः । ३. क्ष-ञ-ट– 'तैर्ध्रियमाणाः' नास्ति । ४. क्ष-ञ-ट–ध्रियमाणाः । ५. क्ष-ञ-ट–पातृन् । ६. क्ष-ञ-ञ-ट–ससतः स्वपतः ।

<sup>v</sup>याहि गच्छ। <sup>v</sup>इन्द्रश्च तथा करोतु। कं देशमिति तमाह। <sup>v</sup>यत्र[1] <sup>v</sup>ग्रावा <sup>v</sup>वदति यस्मिन्देशे अभिषवार्थः[2] पाषाणध्वनिः श्रूयते <sup>v</sup>तत्र <sup>v</sup>गच्छतं तं देशं प्रति आगच्छतम्। <sup>v</sup>गृहं[3] यज्ञगृहं <sup>v</sup>गच्छतम्[3]। पुनः स्थानमेव विशेष्यते। <sup>v</sup>सूनृता प्रियतथ्यात्मिका स्तुतिरूपा वाक् यत्र <sup>v</sup>वि <sup>v</sup>ददृशे विशेषेण दृश्यते श्रूयते इत्यर्थः। तत्र गच्छतम्। यत्र च <sup>v</sup>घृतम् अत्यन्तदीप्तमाज्यं होमार्थं गृहीतं <sup>v</sup>रीयते गच्छति आहवनीयं प्रति नीयते॥ ' रीङ् स्रवणे '। दिवादित्वात् श्यन्॥ तत्र गच्छतम्। गमनप्रकारः एव विशेष्यते। <sup>v</sup>पूर्णया संपूर्णया पुष्टाङ्गया <sup>v</sup>नियुता॥ जातावेकवचनम्॥ नियुज्जात्या <sup>v</sup>अध्वरम् अस्मदीयं यज्ञम्[4] <sup>v</sup>आ <sup>v</sup>याथः आभिमुख्येन प्रयाथः[4]। किंच हे वायो त्वम् <sup>v</sup>इन्द्रश्च युवाम् <sup>v</sup>अध्वरम् अस्मदीयं यागम्[5] आ <sup>v</sup>याथः[5] सहैवागच्छतम्। तथा अस्माभिरपि सहैव गच्छतमित्यर्थः॥

अत्राह॒ तद्व॑हेथे॒ मध्व॒ आहु॑तिं॒ यम॑श्व॒त्थमु॑प॒तिष्ठ॑न्त जा॒यवो॒ऽस्मे ते सन्तु जा॒यव॑ः॥ सा॒कं गाव॒ः सुव॑ते॒ पच्य॑ते॒ यवो॒ न ते॑ वाय॒ उप॑ दस्यन्ति धे॒नवो॒ नाप॑ दस्यन्ति धे॒नव॑ः॥ ८॥

अत्र॑। अह॑। तत्। व॒हे॒थे॒ इति॑। मध्व॑ः। आऽहु॑तिम्। यम्। अ॒श्व॒त्थम्। उ॒प॒ऽतिष्ठ॑न्त। जा॒यव॑ः। अ॒स्मे इति॑। ते। स॒न्तु॒। जा॒यव॑ः॥ सा॒कम्। गाव॑ः। सुव॑ते। पच्य॑ते। यव॑ः। न। ते॒। वा॒यो॒ इति॑। उप॑। द॒स्य॒न्ति॒। धे॒नव॑ः। न। अप॑। द॒स्य॒न्ति॒। धे॒नव॑ः॥ ८॥

हे इन्द्रवायू <sup>v</sup>अत्र <sup>v</sup>अह अस्मिन्नेव यज्ञे॥ अहेति विनिग्रहार्थीयः॥ <sup>v</sup>मध्वः मधुरस्य मधुसदृशस्य वा <sup>v</sup>तत् तस्य <sup>v</sup>आहुतिं प्रदेयद्रव्यं <sup>v</sup>वहेथे धारयतम्। <sup>v</sup>यं सोमम् <sup>v</sup>अश्वत्थं पर्वतादिव्याप्तिप्रदेशे[6] स्थितं <sup>v</sup>जायवः जेतारो यजमानाः <sup>v</sup>उपतिष्ठन्त उपेत्य तिष्ठन्ति क्रयाद्यर्थम्। किंच <sup>v</sup>अस्मे अस्माकं संबन्धिनः <sup>v</sup>जायवः जेतारः कर्मनिर्वहितारः <sup>v</sup>ते ऋत्विजः <sup>v</sup>सन्तु समर्था भवन्तु यज्ञं निर्वहन्त्वित्यर्थः। यद्वा। ते प्रसिद्धाः प्रयोगकुशला जायवो जेतारः ऋत्विजः अस्मे सन्तु नान्यस्य। अत्र वहेथे इत्युक्तम्। कोऽत्र विशेष इति तत्राह। हे इन्द्रवायू अस्मिन् यज्ञे <sup>v</sup>गावः धेनवः <sup>v</sup>साकं सहैव <sup>v</sup>सुवते युष्मदर्थमेव क्षीरमुत्पादयन्ति दोग्ध्र्यो भवन्तीत्यर्थः। यद्वा। गावः साकं सहैव सुवते अपत्यमुत्पादयन्ति त्वद्दोहनार्थम्[7]॥ आदादिकः। ङित्त्वात् ' तास्यनुदात्तेत्° ' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः॥ किंच <sup>v</sup>यवः। जातावेकवचनम्। उपलक्षणमेतत्। यवादिभिः पुरोडाशादिकं <sup>v</sup>पच्यते[8] इत्यर्थः। किंच हे <sup>v</sup>वायो इन्द्र च यतो गावः एवं सुवते अतः <sup>v</sup>ते त्वदर्थाः <sup>v</sup>धेनवः <sup>v</sup>न <sup>v</sup>उप <sup>v</sup>दस्यन्ति नोपक्षीणा भवन्ति रोगादिना कृशा न भवन्ति। न केवलमनुपक्षीणाः किंतु <sup>v</sup>धेनवः युष्मत्प्रीणयित्र्यः[9] गावः <sup>v</sup>नाप <sup>v</sup>दस्यन्ति चौराद्युपहारैः[10] उपक्षीणा नष्टा न भवन्ति[10]॥

---

१. क्ष-ङ-ञ-ट–युवां यत्र। २. क्ष-ञ-ट–अभिषवार्थम्। ३. क्ष-ञ-ट–' गृहं यज्ञगृहं गच्छतम् ' नास्ति। ४. क्ष-ञ-ट–यज्ञमासाद्य आभिमुख्येन प्राप्नुथः; ङ–यज्ञमासाद्य आभिमुख्येन प्राप्य याथः प्राप्नुथः। ५. ङ–यागं तस्मै यथा आयाथः। ६. क्ष-ङ-ञ-ट–पर्वतादिव्याप्तप्रदेशे। ७. क्ष-ङ-ञ-ट–त्वदुद्देशेन दोहनार्थम्। ८. ङ–सह पच्यते। ९. क्ष-ङ-ञ-ट–युष्मान् प्रीणयित्र्यः। १०. क्ष-ङ-ञ-ट–चौराद्यपहारप्रहीणा न भवन्ति।

इमे ये ते सु वायो बाह्वोजसोऽन्तर्नदी ते पतयन्त्युक्षणो महि व्राधन्त उक्षणः ।
धन्वञ्चिद्ये अनाशवो जीराश्चिदगिरौकसः ।
सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः ॥ ९ ॥

इमे । ये । ते । सु । वायो इति । बाहुऽओजसः । अन्तः । नदी इति । ते । पतयन्ति । उक्षणः । महि । व्राधन्तः । उक्षणः ॥ धन्वन् । चित् । ये । अनाशवः । जीराः । चित् । अगिराऽओकसः ॥ सूर्यस्यऽइव । रश्मयः । दुःऽनियन्तवः । हस्तयोः । दुःऽनियन्तवः ॥९॥

हे सु वायो शोभनफलप्रद वायुदेव ते तव स्वभूताः इमे पुरतो दृश्यमानाः ये अश्वाः सन्ति ते नदी नदने द्यावापृथिव्यौ अन्तः तयोरन्तराले तं[1] त्वां पतयन्ति पातयन्ति गमयन्ति । यद्वा । ते तव संबन्धिनोऽश्वाः पतयन्ति पतन्ति यज्ञदेशं गच्छन्ति ॥ ‘ पत गतौ ’ । चौरादिरदन्तः ॥ कीदृशास्ते[2] । बाह्वोजसः बाहुषु प्रकृष्टबलवन्तः । उपलक्षणमेतत् । सर्वाङ्गबला इत्यर्थः । किंच उक्षणः सेक्तारः[3] युवान इत्यर्थः । महि महदतिप्रभूतं व्राधन्तः वर्धमानाः तथा उक्षणः उक्षाणः तत्सदृशाः[4] इत्यर्थः ॥ ‘ वा षपूर्वस्य निगमे ’ इति दीर्घाभावः ॥ किंच धन्वन् चित् धन्वनि उदकनिर्गमनापादानभूतेऽन्तरिक्षेऽपि निरालम्बे अनाशवः नाशरहिता अव्याप्ता वा । आकाशे विलम्बमकुर्वाणा इत्यर्थः । अत[5] एव[5] जीराश्चित् । चिच्छब्दः पूजायाम् । अत्यन्तं क्षिप्रगतयः । यद्वा । अनाशवः इत्यनेन सह समुच्चयार्थश्चिच्छब्दः । आकाशमार्गेऽक्षीणाः शीघ्रगतयश्चेत्यर्थः । किंच अगिरौकसः । गिरा ओकः स्थानं येषां नास्ति ते तादृशाः । भर्त्सनादिना[6] स्थितिमलभमाना इत्यर्थः ॥ छान्दसः तृतीयाया अलुक् ॥ तदेव स्पष्टयति । सूर्यस्य रश्मयः इव दुर्नियन्तवः दुःखेन नियन्तव्याः । ते यथा क्षणेन दश दिशो व्याप्नुवन्ति बहवश्च तद्वदेतेऽपीत्यर्थः । पूर्वं गिरा अनिग्राह्यत्वमुक्तम् । इदानीं हस्तेनापि[7] अनिग्राह्यत्वमाह[7] । हस्तयोः दुर्नियन्तवः उभाभ्यामपि हस्ताभ्यां दुःखेन नियन्तव्याः देवयजनगमनाय शीघ्रगामिन इत्यर्थः ॥ ॥ २५ ॥

‘ प्र सु ज्येष्ठम् ’ इति सप्तर्चं तृतीयं सूक्तम् । ‘ ऋषिश्चान्यस्मात् ’ इति परिभाषया परुच्छेप[8] ऋषिः । अत्यष्टिश्छन्दः[8] । ‘ ऊती देवानाम् ’ इत्यन्त्या त्रिष्टुप् । अत्र त्रिष्टुबन्तपरिभाषा नाश्रीयते ‘ सर्वमात्यष्टम् ’ इति विशेषपरिभाषया बाधितत्वात् । मित्रावरुणौ देवता । अन्त्ययोस्तु तन्मन्त्रलिङ्गोक्तदेवता । तथा चानुक्रान्तं– ‘ प्र सु सप्त मैत्रावरुणं त्वन्त्ये लिङ्गोक्तदेवते अन्त्या त्रिष्टुप् ’ इति । तुशब्दप्रयोगात् इदमादिके द्वे सूक्ते मैत्रावरुणदेवताके । विनियोगो लैङ्गिकः ॥

---

१. क्ष-ञ-ट–ते; ङ–‘ तम् ’ नास्ति । २. क्ष-ङ-ञ-ट–कीदृशा अश्वाः । ३. क्ष-ञ-ट–निरालम्बे सेक्तारः । ४. क्ष-ङ-ञ-ट–वत्ससदृशाः । ५. क्ष-ञ-ट–तथा । ६. क्ष-ञ-ट–सेनादिषु । ७. क-ख-च-ज-ण-फ-व–हस्तेन अप्रातिग्राह्यत्वमाह । ८. क्ष-ङ-ञ-ट–पारुच्छेपमात्यष्टम् ।

**प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृळयद्भ्याम् ॥ ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता । अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे ॥ १ ॥**

प्र । सु । ज्येष्ठम् । निऽचिराभ्याम् । बृहत् । नमः । हव्यम् । मतिम् । भरत । मृळयत्ऽभ्याम् । स्वादिष्ठम् । मृळयत्ऽभ्याम् ॥ ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । यज्ञेऽयज्ञे । उपऽस्तुता ॥ अथ । एनोः । क्षत्रम् । न । कुतः । चन । आऽधृषे । देवऽत्वम् । नु । चित् । आऽधृषे ॥ १ ॥

हे ऋत्विजः मित्रावरुणाभ्यां ᵛज्येष्ठं प्रशस्यं ᵛबृहत् महदतिप्रवृद्धं ᵛनमः नमस्कारोपलक्षितं स्तोत्रं तदुपलक्षितं[1] हविर्लक्षणमन्नं वा ᵛप्र ᵛभरत संपादयत । नम इत्यन्ननाम, ‘ नमः आयुः ’ ( नि. २. ७. २२ ) इति तन्नामसु पाठात् । किंच ᵛहव्यं हव्यां ᵛमतिं तत्प्रदानविषयां बुद्धिं भरत । यद्वा मतिं पूज्यं हव्यं हविर्भरत । पूर्वत्र पुरोडाशाद्यदनीयमन्नं इदानीं तु सोमाज्यादिरूपं निपेयं[2] हविः[2] इति विवेकः । कीदृशाभ्यां ताभ्याम् । ᵛनिचिराभ्यां नितरां चिरकालाभ्यां नित्याभ्यामित्यर्थः । प्रवाहरूपेणेति भावः । किंच ᵛमृळयद्भ्यां स्तुत्या हविःस्वीकारेण स्वयं मृडित्वा यजमानमपि सुखयद्भ्यां तथा ᵛस्वादिष्ठं स्वादुतरं ᵛमृळयद्भ्यां हविः सुखयद्भ्यां भक्षयद्भ्यामित्यर्थः । कस्तयोर्विशेषः इति तत्राह । ᵛता तौ मित्रावरुणौ ᵛसम्राजा सम्यक् राजमानौ॥ राजतेः क्विप् । ‘ मो राजि समः क्वौ’ इति समो मकारस्य मकारः ॥ ᵛघृतासुती । घृतमासूयते आदीयते याभ्यां तौ तादृशौ। यद्वा । घृतमुदकं वृष्टिलक्षणं प्रसूयते सर्वत्रानुज्ञायते याभ्यां तौ । एतयोः अहोरात्राभिमानिदेवत्वात् अहोरात्रद्वारा वृष्ट्युत्पादकत्वात् ‘अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति ’ (तै. सं.२. १. ७. ३) इति श्रुतेर्वृष्ट्यनुज्ञाप्रदत्वं प्रसिद्धम् । किंच एतौ ᵛयज्ञेयज्ञे सर्वेष्वपि यज्ञेषु ᵛउपस्तुता सर्वैर्ऋत्विग्भिः स्तूयमानौ । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् ॥ ᵛअथ अपि च ᵛएनोः एनयोः ॥ संज्ञा-पूर्वकस्य विधेरनित्यत्वात् ‘ ओसि च ’ ( पा. सू. ७. ३. १०४ ) इति गुणाभावे ‘ अतो गुणे ’ इति पररूपत्वम् ॥ ᵛक्षत्रं बलं ᵛकुतश्चन कस्मादपि च शत्रोः राक्षसादेः सकाशात् कस्मादप्युपायाद्वा ᵛन ᵛआधृषे आधर्षितुं[3] शक्यं न भवति ॥ ‘ कृत्यार्थे तवैकेन्० ’ इति केन्प्रत्ययः ॥ किंच तयोः ᵛदेवत्वं ᵛनू ᵛचित् देवभावोऽपि न ᵛआधृषे आधर्षणायोग्यः । यद्वा । पूर्वमिव इदानीमपि । ‘ नू चिदिति निपातः पुराणनवयोः ’ ( निरु. ४. १७ ) इति यास्केनोक्तत्वात् । आधृषे न केनाप्याधर्षणीयो भवति । एतयोर्बलं नाधृष्यं किमु तद्देवत्वमिति भावः ॥

---

१. च-फ-‘ तदुपलक्षितम् ’ नास्ति । २. क्ष-ञ-ट–निरतिशयहविः; ङ–निरतिशयं हविः । ३. च-ज्ञ-त-फ–आधर्षितुं नाम ।

अर्दर्शि गातुरुरवे वरीयसी पन्था ऋतस्य समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः । द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य च ।
अथा दधाते बृहदुक्थ्यं वयं उपस्तुत्यं बृहद्वयः ॥ २ ॥

अर्दर्शि । गातुः । उरवे । वरीयसी । पन्थाः । ऋतस्य । सम् । अयंस्त । रश्मिऽभिः । चक्षुः । भगस्य । रश्मिऽभिः ॥ द्युक्षम् । मित्रस्य । सदनम् । अर्यम्णः । वरुणस्य । च । अथ । दधाते इति । बृहत् । उक्थ्यम् । वयः । उपऽस्तुत्यम् । बृहत् । वयः ॥ २ ॥

गातुः गमनशीला वरीयसी उरुतरा[1] उषाः उरवे विस्तीर्णाय यागाय गमनादिव्यापाराय[2] अदर्शि सर्वैर्दृष्टा अभूत् । तथा ऋतस्य गमनशीलस्यादित्यस्य पन्थाः मार्गः आकाशलक्षणः रश्मिभिः समयंस्त प्रकाशैः संगतोऽभूत् । भगस्य सर्वैर्भजनीयस्य एतन्नामकस्य देवस्य रश्मिभिः चक्षुः सर्वप्राणिनां लोचनं समयंस्त संगतमभूत् । सर्वे स्वस्वद्रष्टव्यदर्शनाय समर्था अभवन्नित्यर्थः । तदेव स्पष्टीक्रियते । मित्रस्य प्रकाशकारित्वात् सर्वजनमित्रस्य सदनं गृहमन्तरिक्षं द्युक्षं दीप्तानां निवासस्थानं रश्मिभिः समयंस्त संगतमभूत् । तथा अर्यम्णः एतन्नामकस्य देवस्य ॥ उदात्तनिवृत्तिस्वरेण विभक्तेः उदात्तत्वम् ॥ द्युक्षं सदनं रश्मिभिः समयंस्त । किंच वरुणस्य तमोनिवारकस्य एतन्नामकस्य देवस्य सदनं तथाभूत् । यद्यपि सूर्यस्य एकत्वेऽपि उपाधिभेदेन भेदात् पृथक् स्तुतिः तथा यद्यपि त्रिभिरपि प्रकाश्यमप्यन्तरिक्षमेकं तथापि प्रकाशकानां भेदात् त्रिधा स्तूयते । उदयानन्तरं कर्मानुष्ठानाय प्रकाशः अभवदित्यर्थः[3] । अथ अतः कारणात् उदितत्वादेव उक्थ्यं स्तुत्यं बृहत् प्रभूतं वयः हविर्लक्षणमन्नं दधाते धारयतः । किंच उपस्तुत्यम् उपेत्य स्तोतव्यम् ॥ 'एतिस्तुशासु°' (पा. सू. ३. १. १०९) इत्यादिना क्यप् । बृहत् स्तोमादिना महास्तोत्रं वयः हविर्लक्षणमन्नं च दधाते ॥

ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे ॥ ज्योतिष्मत्क्षत्रमाशाते आदित्या दानुनस्पती ।
मित्रस्तयोर्वरुणो यातयज्जनोऽर्यमा यातयज्जनः ॥ ३ ॥

ज्योतिष्मतीम् । अदितिम् । धारयत्ऽक्षितिम् । स्वःऽवतीम् । आ । सचेते इति । दिवेऽदिवे । जागृऽवांसा । दिवेऽदिवे ॥ ज्योतिष्मत् । क्षत्रम् । आशाते इति । आदित्या । दानुनः । पती इति । मित्रः । तयोः । वरुणः । यातयत्ऽजनः । अर्यमा । यातयत्ऽजनः ॥ ३ ॥

अयं यजमानः ज्योतिष्मतीम् आहवनीयाग्नेस्तेजोयुक्ताम् अदितिम् अदीनां संपूर्णलक्षणां क्षितिम् अग्नेर्निवासयोग्यां भूमिम् उत्तरवेदिलक्षणां धारयत् धारयति स्वयं कृतवानित्यर्थः । 'एतावती

---

१. च-प-फ-उत्तरा । २. ङ-गमनाय व्यापाराय वा । ३. ङ-भवतीत्यर्थः ।

वै पृथिवी यावती वेदिः ' ( तै. सं २. ६. ४. १ ) इति श्रुतेः । तथा ᵛस्वर्वतीं यज्ञनिष्पत्तिद्वारा स्वर्गवतीं ईदृशीं ताम् ᵛआ ᵛसचेते मित्रावरुणौ संगतौ भवतः । न केवलम् एतस्मिन्[1] एव अहनि किंतु ᵛदिवेदिवे सर्वेष्वप्यहःसु । कीदृशौ[2] तौ । ᵛदिवेदिवे प्रतिदिनं ᵛजागृवांसा प्रबोधं कुर्वाणौ । यज्ञं गन्तुम् अनलसौ इत्यर्थः । किंच वेदिमागत्य ᵛज्योतिष्मत् आज्यादिस्वीकारेण अतिशयेन तेजोयुक्तं ᵛक्षत्रं बलम् ᵛआशाते अश्नुवाते प्राप्नुतः ॥ अश्नोतेश्छान्दसे लिटि 'अनित्यमागमशासनम्' इति वचनात् नुडभावः । लटि वा छान्दसः शपः श्लुः ॥ कीदृशौ[3] इति तावाह । ᵛआदित्या अदितेः पुत्रौ ᵛदानुनस्पती दानस्य आज्यादिप्रदानस्य स्वामिनौ अभिमतदानस्य पालयितारौ वा ॥ ' षष्ठ्याः पतिपुत्र° ' इति संहितायां सत्वम् ॥ ᵛमित्रः च ᵛवरुणः च तावुभौ देवौ । अर्यमाख्यस्तु देवः ᵛतयोः मित्रावरुणयोः ᵛयातयज्जनः । तयोरेव संबन्धादुभयोर्मध्ये स्थितो यातयज्जनः स्वस्वव्यापारनियोजितसर्वजनः। मित्रावरुणौ अहोरात्रदेवौ। अर्यमा तु तयोरेव सामर्थ्यात् सर्वप्राणिनः प्रेरयतीत्यर्थः । किंच ᵛयातयज्जनः । यातयन्ति लोकं यदीया जनाः प्रेष्याः स तादृशः । यद्वा । यात्यमाना नरके निपात्यमाना जनाः प्राणिनः अयष्टारो येन स तादृशः । कर्मसाक्षित्वात् स्वस्वकर्मानुरोधेन प्राणिनः सुकृते यातयतीत्यर्थः । तादृशः अर्यमा मित्रावरुणयोरधीनो वर्तते इति शेषः ॥

अ॒यं मि॒त्राय॒ वरु॑णाय॒ शंत॑मः॒ सोमो॑ भूत्वव॒पाने॒ष्वाभ॑गो दे॒वो दे॒वेष्वाभ॑गः ।
तं दे॒वासो॑ जुषेरत॒ विश्वे॑ अ॒द्य स॒जोष॑सः ।
तथा॑ राजाना करथो॒ यदीम॑ह॒ ऋता॑वाना॒ यदीम॑हे ॥ ४ ॥

अ॒यम् । मि॒त्राय॑ । वरु॑णाय । शम्ऽत॑मः । सोम॑ः । भू॒तु । अ॒व॒ऽपाने॑षु । आऽभ॑गः । दे॒वः । दे॒वेषु॑ । आऽभ॑गः ॥ तम् । दे॒वास॑ः । जु॒षे॒र॒त॒ । विश्वे॑ । अ॒द्य । स॒ऽजोष॑सः । तथा॑ । रा॒जा॒ना॒ । क॒र॒थ॒ः । यत् । ईम॑हे । ऋत॑ऽवाना । यत् । ईम॑हे ॥ ४ ॥

ᵛअयम् अस्माभिर्हूयमानः ᵛसोमः ᵛमित्राय ᵛवरुणाय च ᵛशंतमः पीयमानः सन् सुखतमः ᵛभूतु भवतु ॥ छान्दसः शपो लुक् । ' भूसुवोस्तिङि ' इति गुणाभावः ॥ ᵛअवपानेषु अवाङ्मुखत्वमसपानेषु विषयेषु ᵛआ सर्वतः ᵛभगः भजनीयः ताभ्याम् । किंच ᵛदेवः दीप्यमानः ᵛदेवेषु मित्रावरुणानुचरेषु इतरदेवेषु तैः ᵛआभगः आभजनीयः । यद्वा । देवेषु स्तोतृषु यजमानेषु मध्ये देवो दीप्यमानः । तथा आभगस्तैरेव आ सर्वतो भजनीयः । किंच ᵛतं सोमं ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛअद्य अस्मिन्नहनि ᵛजुषेरत सेवन्ते ॥ छान्दसो झस्य रन्नादेशाभावः । ' बहुलं छन्दसि ' इति रुडागमः ॥ कीदृशास्ते । ᵛसजोषसः समानप्रीतियुक्ताः । ᵛतथा ᵛराजाना राजमाना मित्रावरुणौ युवां ᵛकरथः कुरुतं सेवेथे इत्यर्थः॥ व्यत्ययेन शप्॥ ᵛयत् यस्मात् कारणात् ᵛयत् ᵛईमहे यत् प्राप्नुमः तत् देवान् याचामहे ॥ ' ईङ् गतौ '। दैवादिकः । छान्दसो विकरणस्य लुक् ॥ तस्मात् जुषेरत । तथा ᵛऋतावाना ऋतवन्तौ सत्यवन्तौ यज्ञवन्तौ वा मित्रावरुणौ ᵛईमहे अभिमतफलं तयोः पानं वा याचामहे ॥

---

१. क्ष-ङ-ञ-ट–एकस्मिन् । २. ङ–किंच कीदृशौ । ३. क्ष-ङ-ञ-ट–कौ ।

यो मित्राय वरुणायाविधज्जनोऽनर्वाणं तं परि पातो अंहसो दाश्वांसं
मर्तमंहसः ॥ तमर्यमाभि रक्षत्यृजूयन्तमनु व्रतम् ।
उक्थैर्य एनोः परिभूषति व्रतं स्तोमैराभूषति व्रतम् ॥ ५ ॥

यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणम् । तम् । परि । पातः । अंहसः ।
दाश्वांसम् । मर्तम् । अंहसः ॥ तम् । अर्यमा । अभि । रक्षति । ऋजुऽयन्तम् । अनु । व्रतम् ।
उक्थैः । यः । एनोः । परिऽभूषति । व्रतम् । स्तोमैः । आऽभूषति । व्रतम् ॥ ५ ॥

यः जनः[1] यजमानः मित्राय वरुणाय च ॥ कर्मणः संप्रदानत्वाच्चतुर्थी ॥ मित्रं वरुणं च अविधत् परिचरति तं जनं युष्मत्परिचारकम् अनर्वाणम् अद्वेषिणम् । 'भ्रातृव्यो वा अर्वा' (तै. सं. ६. ३. ८. ४) इति श्रुतेः । अनल्पं वा[2] अनन्यसेविनं[2] परि पातः परितो रक्षताम्[3] । कस्मादिति तदुच्यते । अंहसः न्यूनातिरेकजनितात् पापात् । न केवलं सामान्यं जनम् अपि तु दाश्वांसं हविर्दत्तवन्तं मर्तं मरणधर्माणम् अंहसः सर्वस्मादपि पापात् । न केवलं भवन्तावेव अपि तु अर्यमा सर्वेषां नियन्ता देवः ऋजूयन्तं देवेष्वार्जवमाचरन्तं यजमानम् अनु व्रतं तदीयं कर्मानुलक्ष्य अभि रक्षति अभितो रक्षति । कोऽस्य जनस्य विशेषः इति तत्राह । यः यजमानः उक्थैः शस्त्रैः एनोः एनयोर्मित्रावरुणयोः व्रतं कर्म परिभूषति परिगृह्णाति तथा[4] यजमानो युष्मदीयं व्रतं कर्म स्तोमैः स्तोत्रैर्गानयुक्तमन्त्रसाध्यैः आभूषति सर्वतोऽलंकरोति ॥ 'भूष अलंकारे' । भौवादिकः ॥ तम् अभिरक्षति इत्यन्वयः ॥

नमो दिवे बृहते रोदसीभ्यां मित्राय वोचं वरुणाय मीळ्हुषे
सुमृळीकाय मीळ्हुषे ॥ इन्द्रमग्निमुप स्तुहि द्युक्षमर्यमणं भगम् ।
ज्योग्जीवन्तः प्रजया सचेमहि सोमस्योती सचेमहि ॥ ६ ॥

नमः । दिवे । बृहते । रोदसीभ्याम् । मित्राय । वोचम् । वरुणाय । मीळ्हुषे ।
सुऽमृळीकाय । मीळ्हुषे ॥ इन्द्रम् । अग्निम् । उप । स्तुहि । द्युक्षम् । अर्यमणम् । भगम् ।
ज्योक् । जीवन्तः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥ ६ ॥

दिवे द्योतमानाय सूर्याय नमः वोचं नमस्कारोपलक्षितं स्तोत्रं वोचं ब्रवीमि स्तौमीत्यर्थः । कीदृशाय तस्मै । बृहते महते ॥ 'बृहन्महतोरुपसंख्यानम्' इति विभक्तिरुदात्ता ॥ स्तुत्याय । तथा

---

१. क्ष-ञ-ट-'जनः' नास्ति । २. क्ष-ङ-ञ-ट-वाजनमसेति । ३. च-ज्ञ-झ-रक्षतम्; ङ-रक्षतः ।
४. क्ष-ञ-ट-तथा यश्च; ङ-यश्च ।

ᵛरोदसीभ्यां द्यावापृथिवीभ्यां तदभिमानिदेवाभ्यां[1] नमो वोचम् । तथा ᵛमित्राय सर्वजनहिताय अहरभिमानिदेवाय नमः वोचम् । तथा ᵛवरुणाय आवरकाय राज्यभिमानिदेवाय । तथा ᵛमीळ्हुषे अभिमतफलस्य सेक्त्रे रुद्राय । कीदृशाय तस्मै । ᵛसुमृळीकाय शोभनसुखयित्रे । पुनः स एव विशेष्यते । मीळ्हुषे सुमृळीकाय इति द्वे प्रत्येकविशेषणभूते । इदानीं यजमानः ऋत्विजं स्वात्मानं वा प्रति ब्रवीति । हे होतः हे आत्मन् वा ᵛइन्द्रम् ᵛअग्निं ᵛद्युक्षं दीप्तिमन्तम् ᵛअर्यमणं ᵛभगं च ᵛउप उपेत्य बुद्ध्या प्राप्य ᵛस्तुहि स्तुतिं कुरु । युष्मदनुग्रहात् ᵛज्योक् चिरकालं ᵛजीवन्तः जीवनोपेता वयं ᵛप्रजया पुत्रभृत्यादिना ᵛसचेमहि संगता भूयास्म । किंच ᵛसोमस्य इन्दोः ᵛऊती ऊत्या ᵛसचेमहि तमपि स्तुत्वा तत्कारितेन रक्षणेन सहिता भूयास्मेत्यर्थः ॥

ऊ॒ती दे॒वानां॑ व॒यमिन्द्र॑वन्तो मंसी॒महि॒ स्वय॑शसो म॒रुद्भिः॑ ।
अ॒ग्निर्मि॒त्रो वरु॑ण॒ः शर्म॑ यंस॒न्तद॑श्याम म॒घवा॑नो व॒यं च॑ ॥ ७ ॥

ऊ॒ती । दे॒वाना॑म् । व॒यम् । इन्द्र॑ऽवन्तः । मं॒सी॒महि॑ । स्वऽय॑शसः । म॒रुत्ऽभिः॑ ।
अ॒ग्निः । मि॒त्रः । वरु॑णः । शर्म॑ । यं॒स॒न् । तत् । अ॒श्या॒म॒ । म॒घऽवा॑नः । व॒यम् । च॒ ॥ ७ ॥

ᵛइन्द्रवन्तः प्रीतेनेन्द्रेण तद्वन्तः ᵛवयं ᵛदेवानां देवान् ॥ कर्मणि षष्ठी ॥ ᵛऊती ऊत्या तर्पणेन हविरादिना ᵛमंसीमहि मन्येमहि[2] । कीदृशा वयम् । ᵛस्वयशसः स्वायत्तकीर्तयः ᵛमरुद्भिः स्तुत्या हृष्टैर्मरुद्भिर्देवैरनुगृहीताः । यद्वा । देवानाम् ऊत्या रक्षणेन रक्षिता मंसीमहि ज्ञातारो भवेम सामर्थ्यात् तेषामेव महत्त्वस्य । किंच अग्निमित्रवरुणाः देवाः ᵛशर्म ᵛयंसन् अस्माकं सुखं प्रायच्छन् तं तं वरम् । ᵛमघवानः ᵛवयं ᵛच तैर्दत्तान्नवन्तः सन्तः ᵛतत् सुखम् ᵛअश्याम व्याप्नुयाम ॥ अश्नोतेराशिषि लिङि ‘ छन्दस्युभयथा ’ इति सार्वधातुकत्वात् सलोपः ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण[3] विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये द्वितीयाष्टके
प्रथमोऽध्यायः
समाप्तः ॥

---

१. क्ष-ङ-झ-ञ-ट—तदभिमानिदेवताभ्याम् । २. ङ—मन्येमहि पूजयामः । ३. क्ष-ङ-ञ-ट—सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ द्वितीयाष्टके द्वितीयोऽध्याय आरभ्यते। 'सुषुमा यातम्' इति तृचात्मकं चतुर्थं सूक्तं पारुच्छेपम् अतिशाक्करं षष्ट्यक्षरोपेतत्वात्। पूर्वत्र तुशब्दप्रयोगात् मैत्रावरुणम्। अत्र अत्यष्टिपरिभाषा नाश्रीयते 'अतिशाक्करम्' इति विशेषितत्वात्। अत्रानुक्रमणिका—'सुषुम तृचमतिशाक्करम्' इति॥ दशरात्रस्य षष्ठेऽहनि प्रातःसवने प्रउगशस्त्रे इदं सूक्तं मित्रावरुणदेवत्यं तृतीयतृचम्। सूत्रितं च— 'स्तीर्णं बर्हिरिति तृचौ सुषुमा यातमद्रिभिः' (आश्व. श्रौ. ८. १) इति। तथा अस्मिन्नेव मैत्रावरुणस्य प्रस्थितयाज्यायाः पुरस्तात् आद्या प्रक्षेपणीया। 'षष्ठस्य प्रातःसवने' इति खण्डे सूत्रितं— 'सुषुमा यातमद्रिभिः' (आश्व. श्रौ. ८. १) इति॥

**सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे।**
**आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः।**
**इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः॥ १॥**

सुसुम। आ। यातम्। अद्रिऽभिः। गोऽश्रीताः। मत्सराः। इमे। सोमासः। मत्सराः। इमे।
आ। राजाना। दिविऽस्पृशा। अस्मऽत्रा। गन्तम्। उप। नः।
इमे। वाम्। मित्रावरुणा। गोऽआशिरः। सोमाः। शुक्राः। गोऽआशिरः॥ १॥

हे मित्रावरुणौ ᵛआ ᵛयातम् अस्मद्यज्ञं प्रति आगच्छतम्। आगमनाय[1] किमस्तीति चेत् तत्राह[1]। ᵛअद्रिभिः अभिषवसाधनैर्ग्रावभिः ᵛसुषुम सोमं सुतवन्तो वयम्॥ सुनोतेर्लिटि रूपम्॥ अतः ᵛगोश्रीताः। विकारे प्रकृतिशब्दः। पयोभिर्मिश्रिताः। 'तस्मान्मैत्रावरुणं पयसा श्रीणाति[2]' (तै. सं. ६. ४. ८. १) इति हि ब्राह्मणम्। ᵛमत्सराः तृप्तिहेतवः सोमाः। 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' (निरु. २. ५) इति यास्कः। ᵛइमे पुरतो गृहीता वर्तन्ते। अतः आ यातम्। पुनस्त एव विशेष्यन्ते। ᵛइमे ᵛसोमासो ᵛमत्सराः मदहेतवो मादने[3] मात्सर्यवन्तो वा इतरयज्ञगतसोमेभ्यः सोमाः[4]। कीदृशौ युवाम्। ᵛराजाना राजनशीलौ ᵛदिविस्पृशा द्युलोकवासिनौ॥ 'हृद्द्युभ्यां ङेरुपसंख्यानम्' (पा. सू. ६. ३. ९. १) इति[5] अलुक्[5]॥ ईदृशौ युवाम् ᵛअस्मत्रा अस्मासु मध्ये अस्मत्पालकौ वा युवां ᵛनः अस्मत्संबन्धिनं यज्ञम् ᵛउप ᵛगन्तम् आगच्छतम्। किंच हे ᵛमित्रावरुणा एतन्नामानौ देवौ ᵛवां युवयोरर्थाय ᵛइमे ᵛसोमाः[6] ᵛगवाशिरः। पूर्ववत् विकारे प्रकृतिशब्दः। गोभिः क्षीरैः आशिरो मिश्रिताः संजाताः। किंच ᵛगवाशिरः गोभिः[7] उदकैः[7] मिश्रिताः संजाताः। यद्वा। गोभिः

---

१. झ—आगमनं किमर्थमिति चेत् उच्यते। २. क्ष-ञ-ट—श्रीणन्ति। ३. क्ष-ञ-ट—मदने। ४. क्ष-ङ-झ१-ञ-ट—साकम्; झ—सोमं वा। ५. ङ-झ१—इत्यस्य सप्तम्या अलुक्। ६. क्ष-ञ-ट—सोमासः सोमाः। ७. क्ष-ङ-झ१-ञ-ट—पयोभिः।

स्तुतिलक्षणैर्मन्त्रैः मिश्रिताः[1] । अत एव Vशुक्राः दीप्ताः संजाताः। 'आशिरमव नयति सशुक्रत्वाय' (तै. सं. ६. १. ६. ५) इति श्रुतेः ॥

**इम आ यातमिन्दवः सोमासो दध्याशिरः सुतासो दध्याशिरः ।**
**उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः ॥**
**सुतो मित्राय वरुणाय पीतये चारुर्ऋताय पीतये ॥ २ ॥**

इमे । आ । यातम् । इन्दवः । सोमासः । दधिऽआशिरः । सुतासः । दधिऽआशिरः ।
उत । वाम् । उषसः । बुधि । साकम् । सूर्यस्य । रश्मिऽभिः ।
सुतः । मित्राय । वरुणाय । पीतये । चारुः । ऋताय । पीतये ॥ २ ॥

हे मित्रावरुणौ Vआ Vयातम् आगच्छतम् । यतो युष्मदर्थम् Vइन्दवः क्लेदनसमर्थाः[2] Vसोमासः सोमाः Vदध्याशिरः दध्नाश्रयणवन्तः[3] सन्तः Vइमे पुरतो ग्रहेण गृहीता वर्तन्ते[4] अतः आ यातम्[4] । किंच Vदध्याशिरः धीयमानाशिरः सोमाः Vसुतासः मन्त्रेण ग्रावभिरभिषुताः संपन्नाः । अत आ यातमिति शेषः। आदित्यग्रहे दध्यवनयसद्भावात् तदपेक्षया दध्याशिर[5] इत्युक्तम्[5]। Vउत अपि च Vवां युवयोः प्रीतये[6] पालनाय[6] Vउषसो Vबुधि उषसः संबन्धिनि बोधे सति॥ संपदादिलक्षणो भावे क्विप्। 'सावेकाचः॰' इति विभक्तेरुदात्तत्वम् ॥ प्रकाशे संजाते सति । न केवलमुषस एव बोधे अपि तु[7] Vसूर्यस्य Vरश्मिभिः Vसाकं सूर्यकिरणैः सह प्रकाशे हविष्प्रदानाय संजाते सति Vसुतः सोमोऽभिषुतः। इदानीं वियुज्य उच्यते। Vमित्राय सर्वेहिताय एतन्नामकाय अहरभिमानिदेवाय तथा Vवरुणाय आवरकाय[8] राज्यभिमानिदेवाय च तदर्थं सोमः सुतः इति शेषः । किंच Vऋताय यज्ञाय तन्निर्वाहकाय[9] तदर्थं Vपीतये पानाय । यज्ञसिद्ध्यर्थं हि देवानां सोमपानम् । यद्वा ॥ कर्तरि क्तिच्[10] ॥ पीतये पात्रे ऋत्विगादये ऋताय यज्ञाय तन्निर्वाहकाय । Vचारुः चरणीयो भक्षणीयः सोमः सुतोऽभिषुतः ॥

**तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः ।**
**अस्मत्रा गन्तमुप नोऽर्वाञ्चा सोमपीतये ।**
**अयं वां मित्रावरुणा नृभिः सुतः सोम आ पीतये सुतः ॥ ३ ॥**

ताम् । वाम् । धेनुम् । न । वासरीम् । अंशुम् । दुहन्ति । अद्रिऽभिः । सोमम् । दुहन्ति । अद्रिऽभिः ॥ अस्मऽत्रा । गन्तम् । उप । नः । अर्वाञ्चा । सोमऽपीतये ।
अयम् । वाम् । मित्रावरुणा । नृऽभिः । सुतः । सोमः । आ । पीतये । सुतः ॥ ३ ॥

---

१. झ१–पयोभिर्मिश्रिताः । २. ङ-झ१–मादयितुमीश्वराः क्लेदनसमर्था वा । ३. क्ष-ज्ञ-झ१–ञ-ट–दध्याश्रयणवन्तः । ४. क्ष-झ१-ञ-ट–वर्तन्ते तान् स्वीकर्तुम् आयातम् इति शेषः । ५. क्ष-ञ-ट–दध्याशिर इत्युक्तम् । अवयापेक्षया (अवयवापेक्षया) बहुवचनम् । ६. क्ष-ङ-ज्ञ-झ१-ञ-ट–पीतये पानाय । ७. क्ष-ङ-झ१–ञ-ट–च । ८. झ१–वारकाय । ९. ङ-ज्ञ-ज्ञ-झ१–'तन्निर्वाहकाय' नास्ति । १०. क्ष-ञ-ट–क्तिन् ।

ᵛवां युवयोः संबन्धिनम् ᵛअंशुं वल्लीरूपं सोमं ᵛदुहन्ति संपादयन्त्यध्वर्यवः । किमिव । ᵛतां प्रसिद्धामग्निहोत्राद्यर्थां ᵛवासरीं सर्वाङ्गाच्छादितपयस्कां बहुक्षीरामित्यर्थः । यद्वा । पयआदिनाच्छादयित्रीम् ॥ ' वस आच्छादने ' । औणादिकः अरिप्रत्ययः । ' कृदिकारादक्तिनः ' इति ङीष् । यद्वा । केवलः औणादिकः अरप्रत्ययः स्वार्थिकः अण् ॥ ᵛधेनुं ᵛन प्रीणयित्रीं गामिव । केन साधनेनेति तदाह । ᵛअद्रिभिः अभिषवसाधनैर्ग्रावभिः । किंच ᵛअद्रिभिः तैरेव साधनैः ᵛसोमं युष्मदर्थमेव ᵛदुहन्ति वल्लीरूपं सोमं युष्मदर्थमेव उदकेन आप्लाव्य[1] रसं दुहन्ति । किंच ᵛअर्वाञ्चा अस्मदभिमुखौ सन्तौ ᵛसोमपीतये सोमपानाय[2] ᵛअस्मत्रा अस्मत्त्रातारौ युवां ᵛनः अस्मदीयं यज्ञम् ᵛउप ᵛगन्तम् उपागच्छतम्[3]। किंच ᵛवां युष्मदर्थम् ᵛअयं ᵛसोमः ᵛनृभिः नेतृभिर्यज्ञनिर्वाहकैर्ऋत्विग्भिः ᵛसुतः अभिषुतः । किंच ᵛआ ᵛपीतये संपूर्णपानाय ᵛसुतः अतः आगच्छतमित्यर्थः ॥ ॥ १ ॥

" " ' प्रप्र पूष्णः ' इति चतुर्ऋचं पञ्चमं सूक्तं पारुच्छेपमात्यष्टं पूषदेवताकम् । ' प्रप्र चतुष्कं पौष्णम् ' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

**प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तन्दते स्तोत्रमस्य न तन्दते ॥ अर्चामि सुम्नयन्नहमन्त्यूतिं मयोभुवम् । विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः ॥ १ ॥**

प्रऽप्र । पूष्णः । तुविऽजातस्य । शस्यते । महिऽत्वम् । अस्य । तवसः । न । तन्दते । स्तोत्रम् । अस्य । न । तन्दते ॥ अर्चामि । सुम्नऽयन् । अहम् । अन्तिऽऊतिम् । मयःऽभुवम् । विश्वस्य । यः । मनः । आऽयुयुवे । मखः । देवः । आऽयुयुवे । मखः ॥ १ ॥

ᵛतुविजातस्य[4] बहुयजमानार्थमुत्पन्नस्य ᵛअस्य ᵛपूष्णः पोषकस्य एतन्नामकस्य देवस्य ᵛतवसः ᵛमहित्वं बलस्य महत्त्वं ᵛप्रप्र ᵛशस्यते प्रस्तूयते सर्वैः ॥ वीप्सा[5] पादपूरणे[5] ॥ ᵛन ᵛतन्दते न हिनस्ति कश्चित्तदपि[6] । किंच ᵛअस्य पूष्णः ᵛस्तोत्रं ᵛन ᵛतन्दते न हिनस्ति न विरमति । सर्वोऽपि जनः एनं स्तौतीत्यर्थः । जगत्पोषकत्वादिति भावः । अतः कारणात् ᵛअहं अहमपि यजमानः ᵛसुम्नयन् सुखमिच्छन् ᵛअर्चामि स्तौमि । कीदृशं तम् । ᵛअन्त्यूतिम् आसन्नरक्षणम् ॥ ' कादिलोपो बहुलम् ' इति कलोपः ॥ स्तुत्यनन्तरमेव वरप्रदमित्यर्थः । ᵛमयोभुवं सुखस्योत्पादकं भावयितारं वा । ᵛयः पूषा ᵛमखः यज्ञवान् ॥ मत्वर्थो लुप्यते ॥ ᵛविश्वस्य सर्वस्य स्तोतुर्ऋत्विजः ᵛमनः ᵛआयुयुवे समन्तात्[7] मिश्रयति । शीघ्रवरप्रदानात्[8] इति भावः । किंच ᵛदेवः दीप्यमानः[9] एषः[9] ᵛमखः मखं यज्ञम् ᵛआयुयुवे संपूर्तिपर्यन्तं मिश्रयति । यद्वा । विश्वस्य मनोमिश्रणे यजमाने किमायातमिति चेत् उच्यते । मखो यज्ञनिर्वाहकोऽयं पूषा देवो यजमानस्य मनः आयुयुवे समन्तात् मिश्रयति । सामर्थ्यात् यजमानस्य मन इति लभ्यते ॥ यौतेश्छान्दसो लिट् ॥

---

१. क्ष-ङ-झ-ञ-ट—आप्लाव्याप्लाव्य । २. ख-फ—सोमपानाय वाम् । ३. झ१—उपलक्ष्य आगच्छतम् । ४. क्ष-ङ-झ१-ञ-ट—तुविजातस्य अस्य यष्टव्यस्य तुविजातस्य । ५. क्ष-ङ-झ१-ञ-ट—प्र इति पादपूरणे । ६. ङ-झ१—कश्चिदपि । ७. क्ष-ङ-झ१-ञ-ट—आ समन्तात् । ८. क्ष-ञ-ट—शीघ्रं वरप्रदानात् । ९. च-झ-झ-त—दीप्यमानः इति शेषः ।

प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो यथा मृध उष्ट्रो न पीपरो मृधः ॥ हुवे यत्त्वा मयोभुवं देवं सख्याय मर्त्यः । अस्माकमाङ्गूषान्द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥ २ ॥

प्र । हि । त्वा । पूषन् । अजिरम् । न । यामनि । स्तोमेभिः । कृण्वे । ऋणवः । यथा । मृधः । उष्ट्रः । न । पीपरः । मृधः ॥ हुवे । यत् । त्वा । मयःऽभुवम् । देवम् । सख्याय । मर्त्यः । अस्माकम् । आङ्गूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः । कृधि ॥ २ ॥

हे ᵛपूषन् ᵛअजिरं यज्ञदेशं प्रति गमनवन्तं ᵛत्वा त्वां ᵛयामनि गमने निमित्तभूते सति ᵛस्तोमेभिः स्तोमैः[1] ᵛप्र ᵛकृण्वे प्रकृष्टं करोमि। तत्र दृष्टान्तः। यामनि शीघ्रगमनेऽजिरं न शीघ्रगामिनमश्वमिव। स यथा प्रस्तूयते तद्वत्। किंच ᵛयथा ᵛमृधः संग्रामानुद्दिश्य ᵛऋणवः गच्छेः तथा प्र कृण्वे। यद्वा। यथा ऋणवः अस्मद्यज्ञं प्रति गच्छेः ॥ 'ऋणु गतौ'। तानादिकः। लेटि अडागमः ॥ तथा त्वां कृण्वे। किंच ᵛमृधः हिंसकान् योद्धॄन् संग्रामे ᵛपीपरः पारं नयसि[2] ॥ पारयतेर्लुङि चङि रूपम् ॥ तत्र दृष्टान्तः। ᵛउष्ट्रो[3] ᵛन। उष्ट्रो यथा[3] भारं वोढा पारयति तद्वत् ᵛमृधः संग्रामात् पीपरः पारं नयसि। अतः कारणात् ᵛत्वा त्वां ᵛमयोभुवं सुखस्य भावयितारं ᵛदेवं देवनशीलं पूषणं ᵛमर्त्यः मरणधर्मा मनुष्योऽहं ᵛहुवे आह्वयामि। किमर्थम्। ᵛसख्याय समानख्यानाय प्रियकरणाय। एवमाहूतः सन् ᵛअस्माकमाङ्गूषान् आघोषान् स्तोमान्। 'आङ्गूषः स्तोम आघोषः' इति यास्कः। ᵛद्युम्निनस्कृधि द्योतनवतः कुरु। यद्वा। स्तोमान् यशोवतोऽन्नवतो वा कृधि अस्मत्स्तुत्या प्रीतस्त्वम् एवं कुर्वित्यर्थः। किंच ᵛवाजेषु संग्रामेषु ᵛद्युम्निनः अन्नवतः ᵛकृधि अस्मद्वैरिणो जित्वा तेषामन्नं मयि कुर्वित्यर्थः ॥

यस्य ते पूषन्त्सख्ये विपन्यवः क्रत्वा चित्सन्तोऽवसा बुभुज्रिर इति क्रत्वा बुभुज्रिरे ॥ तामनु त्वा नवीयसीं नियुतं राय ईमहे । अहेळमान उरुशंस सरी भव वाजेवाजे सरी भव ॥ ३ ॥

यस्य । ते । पूषन् । सख्ये । विपन्यवः । क्रत्वा । चित् । सन्तः । अवसा । बुभुज्रिरे । इति । क्रत्वा । बुभुज्रिरे ॥ ताम् । अनु । त्वा । नवीयसीम् । निऽयुतम् । रायः । ईमहे । अहेळमानः । उरुऽशंस । सरी । भव । वाजेऽवाजे । सरी । भव ॥ ३ ॥

---

१. झ-ञ-झ१—स्तोत्रैः । २. झ—नयसि संप्रापयसि । ३. झ-ञ—उष्ट्र इव । स यथा ।

हे ᵛपूषन् देव ᵛयस्य ᵛते रक्षकत्वेन प्रसिद्धस्य तव ᵛसख्ये सखित्वे हितकरणे सति ᵛक्रत्वा ᵛचित् क्रतुना प्रकृष्टेन[1] कर्मणैव ॥ 'जसादिषु च्छन्दसि वावचनम्' इति नाभावाभावः ॥ ᵛसन्तः भवन्तं प्रीणयितारः सन्तः ᵛविपन्यवः विशेषेण स्तोत्रशीलाः । यद्वा । मेधाविनामैतत् । मेधाविनः यजमानाः ᵛअवसा त्वत्कृतेन रक्षणेन[2] रक्षिताः सन्तः ᵛबुभुज्रिरे भुञ्जते भोगान् । ᵛइति एवमेव सर्वदा ᵛक्रत्वा कर्मणा ᵛबुभुज्रिरे भुञ्जते सर्वे पाल्यन्ते इति[3] वा ॥ भुजेश्छन्दसि लिटि 'बहुलं छन्दसि' इति रुट् ॥ ᵛतां तादृशीं ᵛनवीयसीं नवतरां स्तुत्यां वा रक्षाम् ᵛअनु अनुसृत्य रक्षाया अनन्तरं त्वां[4] ᵛनियुतं ᵛरायः एतत्संख्याकान् धनानि ᵛईमहे याचामहे । किंच हे ᵛउरुशंस बहुधा स्तुत्य त्वम् ᵛअहेळमानः अक्रुध्यन् अस्मासु सुमनाः सन् ᵛसरी ᵛभव अस्माभिर्गन्तव्यो भव ॥ सर्तेः औणादिकः इनिप्रत्ययः । आद्युदात्तत्वम् ॥ किंच त्वं ᵛवाजेवाजे सर्वेष्वपि संग्रामेषु ᵛसरी ᵛभव गमनशीलो भव पुरतो गन्ता भवेत्यर्थः ॥

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ॥ ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः । नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥ ४ ॥

अस्याः । ऊँ इति । सु । नः । उप । सातये । भुवः । अहेळमानः । ररिऽवान् । अजऽअश्व । श्रवस्यताम् । अजऽअश्व ॥ ओ इति । सु । त्वा । ववृतीमहि । स्तोमेभिः । दस्म । साधुऽभिः । नहि । त्वा । पूषन् । अतिऽमन्ये । आघृणे । न । ते । सख्यम् । अपऽह्नुवे ॥ ४ ॥

हे ᵛअजाश्व पूषन् । 'अजाश्वेति पूषणमाह' ( निरु. ४. २५ ) इति यास्कः । ᵛनः अस्माकम् ᵛअस्याः अस्यै ॥ चतुर्थ्यर्थे षष्ठी ॥ ᵛसातये लाभाय[5] ᵛअहेळमानः अक्रुध्यन् अनादरमकुर्वन् ᵛररिवान् दाता च सन् ᵛसु सुष्ठु ᵛउप ᵛभुवः समीपस्थो भव ॥ रातेश्छान्दसस्य लिटः क्वसुः । पदसंज्ञाया अभावेऽपि पपिवांसं तस्थिवांसमित्यादौ छान्दसोऽवग्रहो दृश्यते । ᵛऊ इति पादपूरणः ॥ किंच ᵛश्रवस्यताम् अन्नमिच्छतामस्माकं हे ᵛअजाश्व अजा एवाश्वस्थानीया यस्य तादृश त्वम् । पूषनामेदम् । ररिवांश्च सन् उप भुवः । 'अजाः पूष्णः' ( नि. १. १५. ५ ) इति यास्कः । ओ इति निपातद्वयसमुदायात्मक एको निपातः । हे ᵛदस्म शत्रूणामुपक्षपयितः ᵛपूषन् ᵛत्वा त्वाम् ᵛओ ᵛषु ᵛववृतीमहि सर्वत एव सुतरां वर्तयेमहि ॥ वृतेः अन्तर्भावितण्यर्थात् लिङि 'बहुलं छन्दसि' इति शपः श्लुः ॥ यज्ञान्तरगमनात् निवर्तयामः इत्यर्थः । केन साधनेनेति तदुच्यते । ᵛसाधुभिः ᵛस्तोमेभिः त्वां प्रीणयितुं समर्थैः स्तोत्रैः । किंच हे पूषन् ᵛआघृणे सर्वतो वृष्टेः क्षारयितः । यद्वा । आघृणे हविषामाहर्तः स्वीकर्तः त्वां ᵛनहि ᵛअतिमन्ये अवमतिं[6] नैव करोमि[6]। न केवलमनतिक्रममात्रं किंतु ᵛते ᵛसख्यं तव सखित्वं हितकर्तृत्वं[7] नहि ᵛअपह्नुवे नैवापनयामि[8] न त्यजामि सर्वतः प्रख्यापयामि[9] इत्यर्थः ॥ ॥ २ ॥

---

१ झ–प्रकृतेन । २. ख-च-फ–रक्षणेन प्रसिद्धेन । ३. ङ-ज्ञ-झ-झ१–'इति' नास्ति । ४. क्ष-च-ञ-ट–त्वा त्वाम् । ५.ङ-झ१–संभजमानाह्वानार्थम् । ६. क्ष-झ१-ञ-ट–'अवमतिं नैव करोमि' इत्यस्यानन्तरं 'यद्वा सर्वोऽपि जनो नैवातिमन्यते' इत्यधिकम् । ७. क्ष-ञ-ट–हितं कर्तुम् । ८. क्ष-ञ-ट–नैवापलपामि । ९. ण–प्रथापयामि ।

' अस्तु श्रौषट् ' इति एकादशर्चं षष्ठं सूक्तम् । अत्रानुक्रमणिका–'अस्तु श्रौषळेकादश वैश्वदेवी मैत्रावरुण्याश्विन्यस्तिस्र ऐन्द्र्याग्नेयो मारुत्यैन्द्राग्नी बार्हस्पत्या वैश्वदेव्यन्त्या त्रिष्टुप्पञ्चमी बृहती वैश्वदेवमेतदेवमन्यासामपि सूक्तप्रयोगे वैश्वदेवत्वं सूक्तभेदप्रयोगे यल्लिङ्गं सा देवता ' इति । परुच्छेप ऋषिः । अन्त्या त्रिष्टुप् पञ्चमी बृहती । अन्या अत्यष्टयो विशेषाभावात् । कृत्स्नं सूक्तं वैश्वदेवम् । तत्र आद्याया विश्वे देवा देवता । द्वितीयाया मित्रावरुणौ । अथ तिस्रोऽश्विदेवताकाः । ऐन्द्री षष्ठी । सप्तम्याग्नेयी । अष्टमी मारुती । नवम्यैन्द्राग्नी । दशमी बार्हस्पत्या । एकादशी वैश्वदेवी । सूक्तविनियोगो लैङ्गिकः । दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्रे आद्या वैश्वदेवतृचे प्रथमा । ' षष्ठस्य ' इति खण्डे सूत्रितम्–' अस्तु श्रौषळो षू णो अग्ने ' ( आश्व. श्रौ. ८. १ ) इति ॥

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे ॥ यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी । अध प्र सू न उप यन्तु धीतयो देवाँ अच्छा न धीतयः ॥ १ ॥

अस्तु । श्रौषट् । पुरः । अग्निम् । धिया । दधे । आ । नु । तत् । शर्धः । दिव्यम् । वृणीमहे । इन्द्रवायू इति । वृणीमहे ॥ यत् । ह । क्राणा । विवस्वति । नाभा । सम्ऽदायि । नव्यसी । अध । प्र । सु । नः । उप । यन्तु । धीतयः । देवान् । अच्छ । न । धीतयः ॥ १ ॥

अहं ᵛपुरः पुरत उत्तरवेद्याम् ᵛअग्निम् आहवनीयाख्यं ᵛधिया प्रणयनादिकर्मणा ᵛदधे धारितवानस्मि । ᵛतच्छर्धः तादृशं बलवन्तं[1] वा अग्निं यद्वा तच्छर्धः तादृशं मरुतां स्वरूपं[1] बलं ᵛदिव्यं दिवि भवं ᵛनु क्षिप्रम् ᵛआ ᵛवृणीमहे आभिमुख्येन संभजामहे । किंच ᵛइन्द्रवायू ᵛवृणीमहे[2] । ᵛयत् यस्मात् कारणात् ᵛविवस्वति दीप्तिमति ᵛनाभा नाभौ भूम्या नाभिस्थाने देवयजने वेदिरूपे[3] । यद्वा । नाभौ सर्वफलस्य संबन्धके यज्ञे । ' यज्ञमाहुर्भुवनस्य नाभिम् ' (तै. सं. ७.४. १८. २) इति श्रुतेः । ᵛक्राणा[4] कुर्वाणा स्वार्थप्रकाशनं[4] ᵛनव्यसी नवतरा स्तुतिरूपा वाक् ᵛसंदायि संबध्यते॥ छान्दसः कर्मणि लुङ् ॥ अस्माभिः प्रयुज्यते इत्यर्थः। यस्मात् स्तुतिः क्रियते तस्मात् ᵛअस्तु ᵛश्रौषट् अस्याः स्तुतेः श्रवणं भवतु । श्रोता भवतु वा मरुतां गणोऽग्निर्वा । इन्द्रवायुपक्षे प्रत्येकापेक्षया एकवचनम् । ᵛअध अनन्तरं ᵛनः ᵛधीतयः अस्मदीयानि कर्माणि स्तुत्यादिरूपाणि ᵛप्र ᵛसु ᵛउप ᵛयन्तु प्रकर्षेण सुष्ठु युष्मानुपगच्छन्तु । किंच ᵛदेवाँ ᵛअच्छा ᵛन अग्न्यादिदेवान् आभिमुख्येन आप्तुमिव ᵛधीतयः अस्मदीयानि कर्माणि उप यन्तु तेषां समीपं प्राप्नुवन्तु[5] ॥

---

१. ङ-झ१–बलं बलवन्तं वा । संघभूतम्; क्ष-ञ-ट–बलं बलवन्तं वा अग्निम् ........ संघभूतम् । २. क्ष-ङ-ञ-ट–वृणीमहे प्रार्थयामहे । ३. क्ष-ञ-ट–यद्वा वेदिरूपे । ४. क्ष-ञ-ट–क्राणा कर्मणा प्रज्वालनरूपेण युक्तं त्वां स्वार्थप्रकाशनम् । ५. क्ष-झ१-ञ-ट–प्रापयन्तु ।

यद्ध त्यन्मित्रावरुणावृतादध्यादृदाथे अनृतं स्वेन मृन्युना दक्षस्य स्वेन मृन्युना ॥ युवोरित्थाधि सद्मस्वपश्याम हिरण्ययम् ।
धीभिश्चन मनसा स्वेभिरुक्षभिः सोमस्य स्वेभिरुक्षभिः ॥ २ ॥

यत् । ह । त्यत् । मित्रावरुणौ । ऋतात् । अधि । आदृदाथे इत्याऽदृदाथे । अनृतम् । स्वेन । मृन्युना । दक्षस्य । स्वेन । मृन्युना ॥ युवोः । इत्था । अधि । सद्मऽसु । अपश्याम । हिरण्ययम् । धीभिः । चन । मनसा । स्वेभिः । अक्षऽभिः । सोमस्य । स्वेभिः । अक्षऽभिः ॥ २ ॥

हे ᵛमित्रावरुणौ ᵛऋतात् आदित्यात् ᵛत्यत् तदुदकं ᵛयत् यस्मात् कारणात् ᵛअधि अधिकम् ᵛआददाथे सर्वतो ददथः । कीदृशमुदकम् । ᵛअनृतं नश्वरं शोषणस्वभावम् । केन साधनेन । ᵛस्वेन ᵛमन्युना स्वकीयेन तेजसा । अहोरात्राभिमानिदेवौ मित्रावरुणौ खलु वृष्टिं मोचयतः । 'अहोरात्रे वा' इत्यादिश्रुतिः पूर्वमेवोदाहृता । मन्युर्विशेष्यते । ᵛदक्षस्य[1] समर्थस्य ᵛस्वेन ᵛमन्युना आत्मभूतेन मननीयेन सामर्थ्येन । किंच[1] हे मित्रावरुणौ ᵛयुवोः ॥ अन्त्यलोपश्छान्दसः ॥ युवयोः संबन्धि ᵛहिरण्ययं हिरण्मयं रूपम् ॥ 'ऋत्व्यवास्त्व्यवास्त्व°' ( पा. सू. ६. ४. १७५ ) इत्यादौ मयटो मशब्दलोपो निपात्यते ॥ ᵛइत्था इत्थं वक्ष्यमाणप्रकारेण ᵛसद्मसु यज्ञसदनेषु ᵛअधि ᵛअपश्याम पश्येम । केन साधनेनेति तदुच्यते । ᵛधीभिः त्वदुद्देश्यैः कर्मभिर्यज्ञादिरूपैः ᵛमनसा ᵛचन त्वदासक्तेन चेतसा च ᵛस्वेभिरक्षभिः आत्मीयैः[2] अनन्यैश्चक्षुरादीन्द्रियैः[2]। किंच ᵛसोमस्य सोमं ᵛस्वेभिरक्षभिः अस्मदीयैरिन्द्रियैः ॥ नासाद्यपेक्षया[3] बहुवचनम् ॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रे 'युवां स्तोमेभिः' इत्याश्विनस्तृचः । 'षष्ठस्य' इति खण्डे सूत्रितं–'युवां स्तोमेभिर्देवयन्तो अश्विनावर्मह इन्द्र' ( आश्व. श्रौ. ८. १ ) इति ॥

युवां स्तोमेभिर्देवयन्तो अश्विनाश्रावयन्तइव श्लोकमायवो युवां हव्याभ्या३यवः ॥ युवोर्विश्वा अधि श्रियः पृक्षश्च विश्ववेदसा ।
पुषायन्ते वां पवयो हिरण्यये रथे दस्रा हिरण्यये ॥ ३ ॥

युवाम् । स्तोमेभिः । देवऽयन्तः । अश्विना । आश्रवयन्तःऽइव । श्लोकम् । आयवः । युवाम् । हव्या । अभि । आयवः ॥ युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा । पुषायन्ते । वाम् । पवयः । हिरण्यये । रथे । दस्रा । हिरण्यये ॥ ३ ॥

---

१. क्ष-झ१-ञ-ट–दक्षस्य दक्षेण पराभिभवसमर्थेन स्वेन मन्युना आत्मभूतेन तेजसा । यद्वा । दक्षस्य युवां स्तोतुं शक्तस्य मा ( क्ष-ञ-ट–वा ) स्वेन स्वभूतेन मन्युना मननेन सामर्थ्येन युक्तेन । किं च ।
२. फ–आत्मीयैः इन्द्रियैः । ३. क-ज-झ-ण-त-न-व-ञ–मनसाद्यपेक्षया; क्ष-न-झ१-ट–मनआद्यपेक्षया ।

हे ᵛअश्विना अश्विनौ[1] देवौ[1] ᵛयुवां ᵛस्तोमेभिः स्तोत्रैः ᵛदेवयन्तः युवाम् आत्मनः[2] इच्छन्तः ᵛआयवः। मनुष्यनामैतत्। यजमानाः ᵛश्लोकं युष्मदीयस्तुतिरूपां वाचम् ᵛआश्रावयन्तइव सर्वतः श्रवणविषयां कुर्वन्त इव स्तुवन्ति। श्लोक इति वाङ्नाम, 'श्लोकः धारा' (नि. १. ११. १) इति तन्नामसूक्तत्वात्। कीदृशास्ते। ᵛयुवां[3] ᵛहव्या हविषा आज्यादिना ᵛअभ्यायवः आभिमुख्येन गन्तारः। प्रीणयितुमिति शेषः। हवींषि[4] आभिमुख्येन प्रापयन्तो वा। किंच हे ᵛविश्ववेदसा सर्वधनौ ᵛयुवोः युवयोः संबन्धिन्यः ᵛविश्वाः ᵛश्रियः सेवनीयाः सर्वा लक्ष्मीर्धनकनकादिरूपाः ᵛअधि अधिकं भजन्ते इति शेषः। किंच ᵛपृक्षश्च अन्नमपि युष्मत्प्रसादात् अधि अधिकं लभन्ते। किंच हे ᵛदस्रा शत्रूणामुपक्षपयितारौ ᵛवां ᵛहिरण्यये ᵛरथे हिरण्मये मधुपूर्णे रथे ᵛपवयः तन्नेमयः ᵛप्रुषायन्ते क्षरन्ति स्रवन्ति॥ 'प्रुष प्लुष स्नेहनसेचनपूरणेषु'। 'छन्दसि शायजपि' इत्यहावपि श्नः शायजादेशः॥ मधुपूर्णपात्रोपेतत्वात् शीघ्रगमनेन चक्रेषु मधूनि स्रवन्तीति भावः। 'पवी रथनेमिर्भवति यद्विपुनाति भूमिम्' (निरु. ५. ५.) इति निरुक्तम्। अश्विनोः रथस्य मधुपूर्णत्वं 'त्रयः पवयो मधुवाहने रथे' (ऋ. सं. १. ३४. २) इत्यादिषु प्रसिद्धम्। किंच तादृशे ᵛहिरण्यये[5] हृदयरमणे रथे मधुरं हविर्वहत-मिति शेषः॥

**अचेति दस्रा व्युं१ नाकमृण्वथो युञ्जते वां रथयुजो दिविष्टिष्वध्वस्मानो दिविष्टिषु॥ अधि वां स्थाम वन्धुरे रथे दस्रा हिरण्यये। पथेव यन्तावनुशासता रजोऽञ्जसा शासता रजः॥ ४॥**

अचेति। दस्रा। वि। ऊँ इति। नाकम्। ऋण्वथः। युञ्जते। वाम्। रथऽयुजः। दिविष्टिषु। अध्वस्मानः। दिविष्टिषु॥ अधि। वाम्। स्थाम। वन्धुरे। रथे। दस्रा। हिरण्यये। पथाऽइव। यन्तौ। अनुऽशासता। रजः। अञ्जसा। शासता। रजः॥ ४॥

हे ᵛदस्रा दस्रावश्विनौ ᵛअचेति वक्ष्यमाणं युष्मच्चेष्टितं ज्ञायते सर्वैः। किं तदिति तदुच्यते[6]। ᵛनाकं स्वर्गं ᵛवि ᵛऋण्वथः विशेषेण गच्छथः॥ 'ऋणु गतौ'। तानादिकः। लेटि अडागमः॥ यज्ञसंपूर्त्य-नन्तरमिति यावत्। उशब्दोऽवधारणे। यद्वा। नाकम्। अकं दुःखम्। तद्रहितं यज्ञमृण्वथः। विशेषेण गच्छथ एव। तदर्थं ᵛवां ᵛरथयुजः युष्मत्संबन्धिनो रथस्य योजयितारः सारथयः ᵛदिविष्टिषु स्वर्ग-स्यैषणेषु द्योतनात्मकस्य यज्ञस्यैषणेषु गमनेषु वा निमित्तभूतेषु ᵛयुञ्जते अश्वान् योजयन्ति रथे। युक्ते रथे वा युष्मान्। ते एव विशेष्यन्ते। ᵛदिविष्टिषु दिवो गमनेषु निरालम्बाकाशगमनेषु ᵛअध्वस्मानः रथस्य तदाश्रितस्य च ध्वंसमकुर्वाणाः। किंच हे ᵛदस्रा अश्विनौ ᵛवां युवयोः ᵛवन्धुरे बन्धुरत्रययुक्ते। युगबन्धनाधारः काष्ठविशेषो बन्धुरम्। तादृशत्रययुक्तत्वं 'रथो यो वां त्रिवन्धुरः' (ऋ. सं. ८. २२. ५) इत्यादिषु प्रसिद्धम्। ᵛहिरण्यये हिरण्मये ᵛरथे ᵛअधि तादृशस्य रथस्योपरि ᵛस्थाम अस्थापयाम[7]॥

---

१. क्ष-ङ-ज्ञ१-ञ-ट-अश्विदेवौ। २. क्ष-ङ-ज्ञ१-ञ-ट-आत्मानम् आत्मनः। ३. क्ष-ञ-ट-युवां युष्मान्। ४. ङ-ज्ञ-ज्ञ१-ञ-ट-हवींषि युष्मान्। ५. क्ष-ज्ञ-ञ-ट-हिरण्यये हिरण्यमये। ६. ङ-ज्ञ-ज्ञ१-उच्यते। ७. क्ष-ञ-ट-अवस्थापयामः; ज्ञ१-अवस्थापयाम।

छान्दसे लङि ‘ बहुलं छन्दसि ’ इति अडभावः[१] । आद्युदात्तश्छान्दसः[१] ॥ कीदृशौ[२] । पथेव सुपथेन मार्गेण[२] निरालम्बे आकाशे[३] रजः रञ्जनात्मकं स्वर्गं प्रति यन्तौ गच्छन्तौ । ‘ लोका रजांस्युच्यन्ते ’ इत्युक्तत्वात् । अनुशासता अननुकूलाञ्छत्रून् अनुशासतौ विधेयीकुर्वन्तौ ॥ शासेः शतरि ‘ जक्षित्यादयः° ’ इति अभ्यस्तत्वात् ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् ॥ किंच अञ्जसा मुख्यत्वेन प्रकृष्टं रजः उदकं वृष्टिलक्षणं शासता शासतौ बलाद्विधेयीकुर्वन्तौ ॥

**शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।**
**मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥ ५ ॥**

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् । दशस्यतम् ।
मा । वाम् । रातिः । उप । दसत् । कदा । चन । अस्मत् । रातिः । कदा । चन ॥ ५ ॥

हे शचीवसू । शचीति कर्मनाम । अस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ[४] युवां[४] शचीभिः अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः दिवा नक्तं अहनि रात्रौ च दशस्यतम् अभिमतं ददेथाम्[५] ॥ ‘दाश्व दाने’ इत्यस्येदं छान्दसं रूपम् । यद्वा । दशस्यतिर्दानार्थः कण्ड्वादिषु द्रष्टव्यः[६] ॥ वां युवयोः रातिः दानं कदा चन सर्वदा यागकाले अयागकालेऽपि मा उप दसत् मा उपक्षीणं भूत् ॥ ‘ दसु उपक्षये ’ । लुङि ‘ पुषादिद्युताद्° ’ इति च्लेः अङ् ॥ न केवलं युष्मदीयम् अपि त्वस्माकमपि रातिः दानं हविरादिप्रदानं सर्वविषयदानं वा अर्थिभ्यः कदा चन सर्वावस्थायामपि[७] मा उप दसत् उपक्षीणं मा भूत् सर्वदा वर्तताम् । अहमपि सर्वदा युष्मानुद्दिश्य दद्यां युवामपि मदभिमतं सर्वदा दत्तमित्यर्थः[८] ॥ ॥ ३ ॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रस्यैन्द्रे तृचे तृतीया ‘ वृषन्निन्द्र ’ इत्येपा । ‘ वृषन्निन्द्र वृषपाणास इन्दवः सुषुमा यातमद्रिभिः ’ ( आश्व. श्रौ. ८. १ ) इति ॥ तत्रैव सवने प्रस्थितयाज्यानां पुरस्तादन्या ऋचः प्रक्षिप्य उभयीभिर्यष्टव्यम् । तत्र होतुः प्रस्थितयाज्यायाः पुरस्तादेषा प्रक्षेपणीया । सूत्रितं च–‘ षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति ’ ( आश्व. श्रौ. ८. १ ) इति ॥

---

१. क्ष-झ१-ञ-ट–शपो लुक् । तत्र तिष्ठतः । २. क्ष-झ१-ञ-ट–कीदृशौ युवाम् । पथेव सुपथेनेति ( झ १-सुपथेनेव ) मार्गेण; ङ-झ–कीदृशौ युवाम् । सुपथेनेव ( झ-सुपथेन ) मार्गेण । ३. क्ष-ञ-ट–आकाशेऽपि । ४. च-प-फ–°ज्योतिष्टोमादिकर्मधनो युवा नः; झ–°ज्योतिष्टोमादिकर्मधनो नः । ५. क्ष-झ१-ञ-ट–ददतम् । ६. क्ष-ञ-ट-ङ-झ१–‘द्रष्टव्यः’ इत्यस्यानन्तरम् ‘अस्मत्प्रत्तव्यं हविः सर्वदा भक्षयतं (ङ-झ१–भक्षयतं वा )’ इत्यधिकम् । ७. झ–सर्वास्ववस्थायास्वपि । ८. क्ष-ञ-ट–ददतमित्यर्थः ।

वृषन्निन्द्र वृषपाणास इन्दव इमे सुता अद्रिषुतास उद्भिदस्तुभ्यं सुतास उद्भिदः ॥ ते त्वा मन्दन्तु दावने महे चित्राय राधसे ।
गीर्भिर्गिर्वाहः स्तवमान आ गहि सुमृळीको न आ गहि ॥ ६ ॥

वृषन् । इन्द्र । वृषऽपानासः । इन्दवः । इमे । सुताः । अद्रिऽसुतासः । उत्ऽभिदः । तुभ्यम् । सुतासः । उत्ऽभिदः ॥ ते । त्वा । मन्दन्तु । दावने । महे । चित्राय । राधसे । गीःऽभिः । गिर्वाहः । स्तवमानः । आ । गहि । सुऽमृळीकः । नः । आ । गहि ॥ ६ ॥

हे इन्द्र वृषन् वर्षितः कामानाम् इमे पुरतो दृश्यमानाः इन्दवः सोमाः सुताः त्वदर्थमभिषुताः । कीदृशास्ते । वृषपानासः अभिमतवर्षकेण त्वया पातव्याः अद्रिसुतासः अद्रिभिर्दृढैः पाषाणैरभिषवसाधनैः सुताः उद्भिदः उद्भेदका वर्षस्य[1] । त एव पुनर्विशेष्यन्ते । उद्भिदः बलस्य[2] उद्भेदका उद्भिन्ना वा पर्वतादौ तादृशाः सोमाः तुभ्यं सुतासः त्वदर्थमेवाभिषुताः । किंच ते तादृशाः सोमाः त्वा त्वां मन्दन्तु तर्पयन्तु । कुत्रेति तदुच्यते । दावने दानवति यागे । अभिमतदानाय वा । तथा महे महते चित्राय चायमानाय विचित्राय नानाविधाय वा राधसे धनाय । किंच हे गिर्वाहः गिरां स्तुतीनामस्मदीयानां वोढः[3] ॥ 'वहिहाधाञ्भ्यः०' इति असुन् ॥ गीर्भिः अस्मत्स्तुतिभिः स्तवमानः सन् आ गहि[3] आगच्छ । नः अस्मान् सुमृळीकः सुष्ठु मृडयिता सन् आ गहि आगच्छ[4] ॥

दशरात्रस्य षष्ठेऽहनि प्रातःसवने नेष्टुः प्रस्थितयाज्यायाः पुरस्तात् 'ओ षू णो अग्ने' इत्येषा आवपनीयैकीकृत्योभाभ्यां[5] यागः[5] । 'षष्ठस्य' इति खण्डे सूत्रितम्–'ओ षु णो अग्ने शृणुहि त्वमीळितोऽग्निं होतारम्' (आश्व. श्रौ. ८. १) इति ॥ तस्मिन्नेव सवने प्रउगशस्त्रे द्वितीया । सूत्रितं च–'अस्तु श्रौषळो षू णो अग्ने' (आश्व. श्रौ. ८. १) इति ।

ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः ॥ यद्ध त्यामङ्गिरोभ्यो धेनुं देवा अदत्तन ।
वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥ ७ ॥

ओ इति । सु । नः । अग्ने । शृणुहि । त्वम् । ईळितः । देवेभ्यः । ब्रवसि । यज्ञियेभ्यः । राजऽभ्यः । यज्ञियेभ्यः ॥ यत् । ह । त्याम् । अङ्गिरःऽभ्यः । धेनुम् । देवाः । अदत्तन । वि । ताम् । दुह्रे । अर्यमा । कर्तरि । सचा । एषः । ताम् । वेद । मे । सचा ॥ ७ ॥

---

१. क्ष-ङ-ञ१-ञ-ट–हर्षस्य । २. क्ष-ङ-ञ१–ञ-ट–फलस्य । ३. क्ष-ञ-ट–वोढः सन् स्तवमानः अस्माभिः स्तूयमानः सन् आ गहि । ४. क्ष-ञ१-ञ-ट–आगन्तुमर्हसि । ५. क्ष-ञ-ट–प्राकृतयैकीकृत्य उभाभ्यां यागः ।

हे ᵛअग्ने ᵛत्वं ᵛनः अस्मदीयमावाहनं स्तुतिं वा ᵛईळितः अस्माभिः स्तुतः सन् ᵛओ ᵛषु ᵛश्रुणुहि। ओ इति निपातद्वयसमुदायात्मकः एको निपातः। आभिमुख्येनैव सुष्ठु श्रृणु ॥ 'उतश्च प्रत्ययात्°' इति 'छन्दसि वावचनम्' इति हेर्लुगभावः ॥ श्रुत्वा च ᵛदेवेभ्यः देवनशीलेभ्यः ᵛयज्ञियेभ्यः यज्ञार्हेभ्यो हविर्भाग्भ्यः स्तुतिभाग्भ्यश्चेत्यर्थः ॥ 'यज्ञर्त्विग्भ्याम्°' इति घः ॥ तेभ्यः ᵛयज्ञियेभ्यः यज्ञार्हेभ्यो यजमानेभ्यः संबन्धि कर्म ᵛब्रवसि ब्रूहि ॥ ब्रवीतेर्लेटि अडागमः ॥ कीदृशेभ्यः। ᵛराजभ्यः राजमानेभ्यः। इदानीं देवाः प्रत्यक्षेणोच्यन्ते। अत्रेतिहासमाहुः—अङ्गिरसो नाम महर्षयः पूर्वं यज्ञार्थं देवान् स्तुत्या[1] प्रीणयित्वा गा अयाचन्त। ते प्रीताः कामदुघां प्रादुः। लब्धां च तां धेनुं क्षीरं दोग्धुमशक्नुवाना अर्यमणं देवं प्रार्थयन्। स च प्रार्थितोऽग्निहोत्राद्यर्थं क्षीरं दुदोहेति। तदिदमत्रोच्यते। ᵛयत् यां ᵛत्यां तां प्रसिद्धां ᵛधेनुं क्षीरादिना प्रीणयित्रीं गां ᵛह[2] ᵛदेवाः ᵛअङ्गिरोभ्यः तदर्थम् ᵛअदत्तन दत्तवन्तः ॥ 'तप्तनप्तनथनाश्च°' इति तनादेशः[3] ॥ ᵛतां धेनुम् ᵛअर्यमा सर्वस्य नियमिता देवः ᵛकर्तरि सर्वस्योत्पादके त्वय्यग्नौ ᵛसचा इतरदेवेभ्यः साकं ᵛवि ᵛदुह्रे विविधं दुग्धवान् ॥ दुहेर्लिटि 'बहुलं छन्दसि' इति रुट्। 'छन्दसि वा' इति वचनात् द्विर्वचनाभावः। लटि एव वा 'लोपस्त°' इति तलोपः ॥ ᵛएषः एष एव अर्यमा ᵛतां धेनुं ᵛमे ᵛसचा मत्समवायेन ᵛवेद जानाति अर्यमा[4] अहमपि[4] जानामीत्यर्थः। ईदृशी धेनुस्त्वदर्थमेव दुह्यते इत्यग्नेः स्तुतिः ॥

'मो षु वो अस्मत्' इति प्रस्थितयाज्या[5]। सूत्रितं च—'मो षु वो अस्मदभि तानि पौंस्यौ षू णो अग्ने' (आश्व. श्रौ. ८. १) इति ॥

**मो षु वो अस्मदभि तानि पौंस्या सना भूवन्द्युम्नानि मोत जारिषुरस्मत्पुरोत जारिषुः ॥ यद्वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यम् ।**
**अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरम् ॥ ८ ॥**

मो इति। सु। वः। अस्मत्। अभि। तानि। पौंस्या। सना। भूवन्। द्युम्नानि। मा। उत। जारिषुः। अस्मत्। पुरा। उत। जारिषुः ॥ यत्। वः। चित्रम्। युगेऽयुगे। नव्यम्। घोषात्। अमर्त्यम् ॥ अस्मासु। तत्। मरुतः। यत्। च। दुस्तरम्। दिधृत। यत्। च। दुस्तरम् ॥८॥

हे मरुतः ᵛवः युष्मत्संबन्धीनि ᵛतानि प्रसिद्धानि ᵛपौंस्या पौंस्यानि बलानि ᵛसना सदातनानि नित्यानि ᵛद्युम्नानि प्रकाशयुक्तानि। यद्वा। सना संभजनीयानि द्युम्नानि धनवन्ति[6] यशोवन्ति वा ॥ मत्वर्थीयो लुप्यते। मो इति निपातद्वयसमुदाये उशब्दोऽवधारणे ॥ ᵛअस्मत् अस्मान् ᵛमो ᵛषु ᵛअभि ᵛभूवन् सुष्ठु मैवाभिभवन्। यद्वा। अस्मत्तोऽपगतानि मा भूवन्। ᵛउत अपि च। यद्वा। द्युम्नानीत्येतदुत्तरत्र संबध्यते। द्युम्नानि धनानि यशांसि वा अस्मदीयानि ᵛमा ᵛजारिषुः क्षीणानि मा भूवन्। ᵛउत अपि च ᵛअस्मत् ᵛपुरा पुराणि लक्षणया तत्रस्थाः प्राणिनः मा ᵛजारिषुः जीर्णा नष्टा मा भूवन्। किंच ᵛवः युष्मत्संबन्धि ᵛचित्रं चायनीयं

---

१. च-फ-यागे स्तुत्या। २. च-ञ-त-फ-ह्रे। ३. क्ष-ज-ट-तस्य तनादेशः। ४. क्ष-ज्ञ१-ज-ट-अर्यमावदहमपि। ५. क्ष-ज-ट-पोतुः प्रस्थितयाज्या। ६. ज्ञ१-धनानि यशांसि वा धनवन्ति।

नानाविधं vनव्यं नूतनं स्तोतव्यं वा vअमर्त्यम् अमरणधर्मकं मर्त्येषु दुर्लभं वा vयत् अस्ति vघोषात् घोषाः ॥ व्यत्ययेन पञ्चमी ॥ शब्दोपेता गवादयो घोषोपलक्षिता ग्रामनगरादयो वा ये सन्ति vतत् सर्वं vयुगेयुगे युगशब्दोपलक्षिते तत्तत्काले vअस्मासु अस्मास्वेव भवत्विति शेषः नान्यस्य । किंच हे vमरुतः vयच्च vदुस्तरं दुःखेन तरणीयं संपादनीयं धनं vदिधृत धारयत[1] तदस्मासु । किंच vदुस्तरं[2] शत्रुभिरहिंसितं तत्सर्वमपि विशेषेणास्मासु स्थापयत ॥

पृष्ठ्यस्य षष्ठेऽहनि अच्छावाकस्य प्रस्थितयाज्यायाः पुरस्तात् ‘ दध्यङ् ह मे ’ इत्येषा । सूत्रितं च–‘ दध्यङ् ह मे जनुषं पूर्वो अङ्गिरा इत्येवमेव माध्यंदिने’ ( आश्व. श्रौ. ८. १ ) इति ॥

दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे

पूर्वे मनुर्विदुः ॥ तेषां देवेष्वायतिरस्माकं तेषु नाभयः ।

तेषां पदेन मह्या नमे गिरेन्द्राग्नी आ नमे गिरा ॥ ९ ॥

दध्यङ् । ह । मे । जनुषम् । पूर्वः । अङ्गिराः । प्रियऽमेधः । कण्वः । अत्रिः । मनुः । विदुः । ते । मे । पूर्वे । मनुः । विदुः ॥ तेषाम् । देवेषु । आऽयतिः । अस्माकम् । तेषु । नाभयः । तेषाम् । पदेन । महि । आ । नमे । गिरा । इन्द्राग्नी इति । आ । नमे । गिरा ॥ ९ ॥

vदध्यङ् अथर्वगोत्रोत्पन्नः एतन्नामको महर्षिः स च vपूर्वः पूरकः सर्वस्य पुरातनो वा vअङ्गिराः अङ्गारः तद्वत्तेजस्वीत्यर्थः । यद्वा । अङ्गारा एवाङ्गिरसोऽभवन् ‘ येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ’ ( ऐ. ब्रा. ३. ३४ ) इति श्रुतेः । ‘ अङ्गिरा अङ्गारा अङ्कना अञ्चनाः ’ ( निरु. ३. १७. ) इति निरुक्तम् । एतन्नामा महर्षिश्च vप्रियमेधः मेधाप्रियः । ‘ प्रियमेधः प्रिया अस्य मेधाः ’ (निरु. ३.१७) इति यास्कः । स च vकण्वः मेधावी स च vअत्रिः दुःखत्रयरहितः । ‘ अत्रिर्न त्रयः ’ (निरु.३.१७) इति निरुक्तम् । vमनुः मननवान् एतन्नामा महर्षिः । एते सर्वे महात्मानो महर्षयः vमे vजनुषं दिवोदासपुत्रस्य परुच्छेपस्य जन्म vविदुः जानन्ति ॥ वेत्तेः ‘ विदो लटो वा ’ इति झेः उसादेशः ॥ किंच vते पूर्वोक्ताः vपूर्वे पूर्वकालीनाः vमे अस्मत्पित्रादीन् जानन्त इत्यर्थः । vमनुः मनवो ज्ञानवन्तो यतस्ते पूर्वे मनवश्च अतो vविदुः इति भावः ॥ ‘ सुपां सुलुक्° ’ इति जसो लुक् ॥ तेषां ज्ञाने उपपत्तिमाह । vतेषां दध्यङ्ङादीनां vदेवेषु इतरेषु देवनशीलेषु महर्षिषु मध्ये vआयतिः दीर्घकालसंबन्धोऽस्ति । अतो विदुरित्यर्थः । ततश्च किमित्याह । vअस्माकं vनाभयः जीवेन सह बन्धवन्तः[3] प्राणाः फलेन संबद्धा यागा वा vतेषु तेष्वेव वर्तन्ते । असौ विशिष्टजन्मा अतो यज्ञयोग्यः इति तैर्वक्तव्यत्वेन तदधीनत्वम् । vतेषां दध्यङ्ङादीनां vपदेन आस्पदेन महत्त्वेन निमित्तेन vगिरा स्तुतिरूपया वाचा vमहि महदत्यधिकं[4] vनमे नमति सर्वो जनः । किंच तेषामनुग्रहात् यज्ञयोग्यः सन् vइन्द्राग्नी vगिरा स्तुतिरूपया वाचा युक्तः सन् vआ vनमे आभिमुख्येन नमामि स्तौमि नमामि चेत्यर्थः ॥ नमेर्व्यत्ययेन आत्मनेपदम् ॥ यद्वा । कर्मकर्तरि ‘ न दुहस्नुनमाम्° ’ इति यकः प्रतिषेधः ॥ स्वयमेव नतोऽस्मि[5] ॥

---

१. क्ष-ङ-झ१-ञ-ट–‘ धारयत ’ इत्यस्यानन्तरं ‘ धारयथ । धृञ् धारणे । बहुलं छन्दसीति शपः श्लुः । उदिभ्य ( क्ष-ञ-ट–इदिद्भ्यः ? ) इत्यनुवृत्तौ बहुलं छन्दसीति अभ्यासस्य इत्त्वं ’ इत्यधिकम् । २. च-फ–यच्च दुस्तरम् । ३. क्ष-ञ-ट–बन्धनवन्तः । ४. झ१–महत् आ अधिकम् । ५. ङ-झ१–आनतोऽस्मि ।

होता यक्षद्वनिनो वन्त वार्यं बृहस्पतिर्यजति वेन उक्षभिः पुरुवारेभिरुक्षभिः ॥ जगृभ्मा दूरआदिशं श्लोकमद्रेरध त्मना । अधारयदररिन्दानि सुक्रतुः पुरू सद्मानि सुक्रतुः ॥ १० ॥

होता । यक्षत् । वनिनः । वन्त । वार्यम् । बृहस्पतिः । यजति । वेनः । उक्षऽभिः । पुरुऽवारेभिः । उक्षऽभिः ॥ जगृभ्म । दूरेऽआदिशम् । श्लोकम् । अद्रेः । अध । त्मना । अधारयत् । अररिन्दानि । सुऽक्रतुः । पुरु । सद्मानि । सुऽक्रतुः ॥ १० ॥

अयं होता दैव्योऽग्निर्मानुषो वा देवानामाह्वाता यक्षत् याज्यां पठतु[1] ॥ यजेर्लेटि अडागमः । 'सिब्बहुलम्°' इति सिप् ॥ वनिनः वननवन्तः हविः कामयमाना वा देवाः वार्यं वरणीयं सोमं वन्त संभजन्ताम् ॥ वनतेश्छान्दसे लङि व्यत्ययेन आत्मनेपदम् । 'बहुलं छन्दसि' इति शपो लुक् । छान्दसोऽन्त्यलोपः ॥ तदर्थं बृहस्पतिः बृहतो मन्त्रस्य हविषो वा पालकोऽध्वर्युर्दैव्यो बृहस्पतिर्वा स्वयमेव यजति यागं करोति । कीदृशः सः । वेनः कामयमानः । केन साधनेनेति तदुच्यते । उक्षभिः सेचकैः सोमैः पुरुवारेभिः बहुभिर्वरणीयैः तथा उक्षभिः सेचनसमर्थैरुदकैः तन्निमित्तभूतैर्हूयमानैराहुतिभिरादित्यद्वारा वृष्ट्युत्पन्नैः । वयं यजमानाः दूरआदिशं दूरदेश आदिक्[2] आदेशो यस्य[2] तादृशम् ॥ 'हलदन्तात्सप्तम्याः°' (पा. सू. ६.३.९) इति अलुक् ॥ अद्रेः । जातावेकवचनम् । अभिषवसाधनस्य ग्राव्णः श्लोकं वाचं[3] ध्वनिं[3] जगृभ्म गृह्णीमः[3] श्रोत्राभ्याम् । पूजार्थं बहुवचनम् । इदानीं परोक्षकृतः । सुक्रतुः शोभनकर्मा अयं यजमानः अध अथ यागसंपूर्त्यनन्तरम् अररिन्दानि । उदकनामैतत्, 'अररिन्दानि ध्वस्मन्वत्' (नि. १. १२. २६) इति तन्नामसु पाठात् । वृष्टिलक्षणान्युदकानि त्मना आत्मना अधारयत् धारयति ॥ ररिर्दाता । नास्त्यन्यो ररिरस्य पिपासोपशमनस्य तादृशं पिपासोपशमनं ददतीत्यररिन्दानि । यद्वा । अररिः इतश्चेतश्च गमनम् । औणादिकः अरिप्रत्ययः[4] । 'आतोऽनुपसर्गे कः' । पृषोदरादित्वात् अभिमतस्वरूपस्वरसिद्धिः[5] । तद्ददतीत्यररिन्दानि उदकानि । चेष्टाप्रदानीत्यर्थः । 'आपोमयः प्राणः' (छा. उ. ६. ५. ४) इति श्रुतेः । यद्वा । ररिर्दानम् । न विद्यते तादृशं दानमितरभूतेषु तत् अररि । तद्ददतीत्यररिन्दानि । अन्यैरदेयं लोकोपकारिभोगं[6] ददतीत्यर्थः ॥ तादृशान्युदकानि यागेनोत्पादितवानित्यर्थः । किंच सुक्रतुः शोभनकर्मा अयं पुरु पुरूणि बहूनि सद्मानि सदनानि सुखनिवासयोग्यानि गृहाणि अधारयत् । यद्वा । बृहस्पतिः सुक्रतुश्च[7] अयमध्वर्युः अररिन्दानि उक्तलक्षणानि अभिषवसाधनान्युदकानि अधारयत् । धारितवान् । तथा सुक्रतुः शोभनप्रज्ञः पुरु सद्मानि सदनानि हविरासादनस्थानान्यधारयत् ॥

दशरात्रे षष्ठेऽहनि प्रउगशस्त्रे वैश्वदेवतृचस्य द्वितीया 'ये देवासः' इत्येषा । सूत्रितं च–'ये देवासो दिव्येकादश स्थेयमददाद्रभसम्' (आश्व. श्रौ. ८. १) इति ॥

---

१. क्ष-झ१-ञ-ट–पठति । २. क्ष-ङ-ञ-ट–आदिशमादेश्यं यत् । ३. क्ष-ङ-झ१-ञ-ट– वाचं ध्वनिम् होत्रादीनां स्तोत्रशस्त्रध्वनिं वा जगृभ्म गृह्णीमः । °ततन्थ जगृभ्मेति इडभावो निपात्यते । हृग्रहोर्भः । ४. ङ-झ१–'अरिप्रत्ययः' इत्यस्यानन्तरं 'स्वकीयेनोपकारेण ददतीत्यररिन्दानि उदकानि' इत्यधिकम् । ५. क्ष-ङ-ञ-ट–अभिमतरूपस्वरासिद्धिः । ६. क्ष-ञ-ट–जीवनलोकोपकारिभोगम्; झ१–जीवलोकोपकारिभोगम् । ७. क्ष-ङ-झ१-ञ-ट–सुक्रतुर्वा ।

**ये दे॑वासो दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ ।**
**अ॒प्सु॒क्षितो॑ महि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ॥ ११ ॥**

ये । दे॒वा॒सः॒ । दि॒वि । एका॑दश । स्थ । पृ॒थि॒व्याम् । अधि॑ । एका॑दश । स्थ ।
अ॒प्सु॒ऽक्षितः॑ । म॒हि॒ना । एका॑दश । स्थ । ते । दे॒वा॒सः॒ । य॒ज्ञम् । इ॒मम् । जु॒ष॒ध्व॒म् ॥११॥

हे देवासः देवा द्योतनशीलाः ये यूयं दिवि द्युलोके एकादश स्थ एकं च दश चेत्येतत्संख्याका भवथ तथा पृथिव्यामधि उपरि एकादश स्थ एतत्संख्याका भवथ किंच अप्सुक्षितः[1]। तद्धेतुत्वात् ताच्छब्द्यम् । अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीत्यप्सुक्षितः ॥ क्षियतेः क्विप् । 'तत्पुरुषे कृति॰' इति अलुक् ॥ अन्तरिक्षवासिनो देवाः[2] एकादश स्थ तत्संख्याका भवथ[3] । यद्वा । अन्तरिक्षस्येयं संज्ञा । 'आपः पृथिवी' ( नि. १. ३. ८ ) इति अन्तरिक्षनामसु पाठात् । यद्यपि 'तिस्रः एव देवताः' ( निरु.७. ५ ) इत्युक्तत्वात् क्षित्याद्यभिमानिन्यो देवतास्तिस्र एव तथापि महिना महत्त्वेन स्वस्वविभूत्या त्रयस्त्रिंशत्संख्याका भवन्ति । तत्तत्स्थाना अन्यास्तद्विभूतयः इत्युक्तत्वात् । महिना देवासः इत्येते सर्वत्र संबध्येते । ते यूयं हे देवासः मिलित्वा उक्तसंख्याका देवाः इमम् अस्मदीयं यज्ञं जुषध्वं संभजध्वम् । तत्संबन्धि हविर्वा सेवित्वा प्रीणयध्वम् ॥ एकं च दश चैकादश । 'प्रागेकादशभ्यः॰' ( पा. सू. ५. ३. ४९ ) इति निपातनात् दीर्घः । 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥ ॥ २० ॥

एकविंशेऽनुवाके सप्तदश सूक्तानि । तत्र 'वेदिषदे' इति प्रथमं सूक्तं त्रयोदशर्चम् । उचथ्यपुत्रस्य दीर्घतमस आर्षम् आग्नेयम् । अन्त्ये[4] त्रिष्टुभौ । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । दशमी त्रिष्टुब्जगती वा । अत्यष्टिपरिभाषा निवृत्ता । अत्रानुक्रमणिका–' वेदिषदे सप्तोना दीर्घतमा औचथ्य आग्नेयं तु द्वित्रिष्टुबन्तं तु त्रिष्टुब्दशमी वा ' इति । प्रातरनुवाकस्याग्नेये क्रतौ जागते छन्दसि इदमादीनि तृतीयवर्जितानि षट् सूक्तानि विनियुक्तानि । तथाश्विनशस्त्रे षण्णां तृतीयवर्जितानां[5] सूक्तानां विनियोगः ॥ सूत्रितं च–' वेदिषद इति षण्णां तृतीयमुद्धरेत् ' ( आश्व. श्रौ. ४. १३ ) इति ॥

**वे॒दि॒षदे॑ प्रि॒यधा॑माय सु॒द्युते॑ धा॒सिमि॑व॒ प्र भ॑रा॒ योनि॑म॒ग्नये॑ ।**
**वस्त्रे॑णेव वासया॒ मन्म॑ना॒ शुचिं॑ ज्यो॒तीर॑थं शु॒क्रव॑र्णं तमो॒हन॑म् ॥ १ ॥**

वे॒दि॒ऽसदे॑ । प्रि॒यऽधा॑माय । सु॒ऽद्युते॑ । धा॒सिम्ऽइ॑व । प्र । भ॒र॒ । योनि॑म् । अ॒ग्नये॑ ।
वस्त्रे॑णऽइव । वा॒स॒य॒ । मन्म॑ना । शुचि॑म् । ज्यो॒तिःऽर॑थम् । शु॒क्रऽव॑र्णम् । त॒मः॒ऽहन॑म् ॥१॥

हे अध्वर्यो वेदिषदे वेद्यां सीदते नित्यं प्रियधामाय प्रियधाम्ने प्रियस्थानाय उत्तरवेदिलक्षणप्रियाय[7] सुद्युते शोभनद्योतनाय अग्नये अग्रनयनादिगुणविशिष्टाय योनिं स्थानं वेद्याख्यं धासिमिव

---

१. ङ-ञ१–हे अप्सुक्षितः । २. ञ१–देवासो देवाः । ३. क्ष-ङ-ञ१-ञ-ट–भवथ । प्रदेशबाहुल्यमपेक्ष्य बहुवचनम् । ४. क्ष-ङ-ञ-ट–अन्त्ये द्वे । ५. क्ष-ञ-ट–तृतीयावर्जितानाम् । ६. त-फ–धाम्ने । ७. क्ष-ञ-ट-ञ१–उत्तरवेदिलक्षणस्थानाप्रियाय; च-फ–उत्तरवेदिलक्षणप्रियस्थानाय । ८. क-ज-ज्ञ-झ-ण-न-व–अन्नादिना गुणविशिष्टाय; क्ष-ख-ङ-च-ञ-ट-फ–अञ्जनादिगुणविशिष्टाय ।

हवीरूपमन्नमिव ^v^प्र ^v^भर प्रहर प्रकर्षेण संपादयेत्यर्थः । तच्च स्थानं ^v^वस्त्रेणेव तेन यथा मार्देवाय आस्तृणाति तद्वत् ^v^मन्मना मननीयेन संभारेण बर्हिषा वा वेदिस्थानं ^v^वासय आच्छादय । कीदृशं तत्स्थानमिति तदुच्यते। ^v^शुचिम् उत्पवनप्रोक्षणादिना अमेध्यासुरादीनाम् अपगतत्वात् शुद्धं ^v^ज्योतीरथं ज्योतिषः आज्यादेरग्नेर्वा रथस्थानीयम् आधारभूतत्वात् ^v^शुक्रवर्णम् अग्न्युपेतत्वाद्दीप्तवर्णम् अत एव ^v^तमोहनं तमसोऽन्धकारस्य हन्तारमज्ञानस्य वा । अग्निसाध्ययज्ञादिद्वारा ज्ञानविचारकत्वादिति[1] भावः । यद्वा । तस्यां योनौ स्थाने वस्त्रेण यथा गोपनीयं वस्तु गोपयन्ति[2] तद्वत्तमग्निं वासय निवासय स्थापय । मन्मना मननीयेन हृद्येन वस्त्रसदृशेन मृदुकाष्ठादिना आच्छादय वा । कीदृशम्[3] । ज्योतीरथं दीप्तिरथोपेतम्[4] । शेषं पूर्ववत् ॥

अभि द्विजन्मा त्रिवृदन्नमृज्यते संवत्सरे वावृधे जग्धमी पुनः ।
अन्यस्यासा जिह्वया जेन्यो वृषा न्य१न्येन वनिनो मृष्ट वारणः ॥ २ ॥

अभि । द्विऽजन्मा । त्रिऽवृत् । अन्नम् । ऋज्यते । संवत्सरे । ववृधे । जग्धम् । ईमिति । पुनरिति ।
अन्यस्य । आसा । जिह्वया । जेन्यः । वृषा । नि । अन्येन । वनिनः । मृष्ट । वारणः ॥२॥

^v^द्विजन्मा[5] द्वाभ्यामरणीभ्यां जायमानः । यद्वा । मथनेन आधानसंस्कारेण च उत्पन्नत्वात् द्विजन्मत्वम् ॥ 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् ॥ अयमग्निः ^v^त्रिवृदन्नम् आज्यपुरोडाशसोमरूपेण त्रिप्रकारमन्नमदनीयम् ^v^अभि ^v^ऋज्यते प्राप्नोति अभितः[6] आभिमुख्येन नयति भक्षयति[6] ॥ 'ऋज गतिस्थानार्जनोपार्जनेषु' । व्यत्ययेन श्यन् ॥ यद्वा[7] । भृज्यते ॥ 'भ्रस्जो पाके' ॥ पक्कं करोति वा[7] । किंच ^v^ईं इदम् ॥ ईमित्यत्र सांहितिको मलोपश्छान्दसः॥ ^v^जग्धं भक्षितं ^v^संवत्सरे[8] पूर्णे ^v^पुनः ^v^ववृधे अग्निर्वर्धयति । जीर्णस्य पुनर्वृद्ध्यभावात् यजमानं हविर्वृद्ध्या प्रतिसंवत्सरं यागसमर्थं करोतीत्यर्थः[8] । यद्वा । एकवारं भक्षितं हविः पुनः संवत्सरे पूर्णे संवत्सरे उदरस्थं वर्धते वर्धयति वा भक्षितारम्[9] । किंचायमग्निः ^v^वृषा वर्षकः सन् ^v^अन्यस्य हविषः ^v^आसा[10] आस्येन ^v^जिह्वया[10] ^v^जेन्यः प्रभूतो भवतीति शेषः । यद्वा । वर्षिता सन् एकेन रूपेणान्यस्य यज्ञे होत्रादेर्जिह्वया तदुपलक्षितया स्रुचा[11] जेन्यः प्रवृद्धो भवति । तथा ^v^अन्येन दावाग्निरूपेण ^v^वारणः सर्वेषां वारकः सन् ^v^वनिनः वनसंबन्धिनो वृक्षान् ^v^नि ^v^मृष्ट निमार्ष्टि दहतीत्यर्थः ॥ मृजेश्छान्दसे लङि व्यत्ययेन आत्मनेपदम् ॥

---

१. क्ष-ञ१-ञ-ट–अज्ञाननिवारकत्वादिति । २. क्ष-ङ-ञ१-ञ-ट–गोपायन्ति । ३. क्ष-ङ-ञ१-ञ-ट–कीदृशं तं । ४. क्ष-ङ-ञ१-ञ-ट–दीप्तरथोपेतम् । ५. क्ष-ङ-ञ-ञ-ट–अयमग्निः द्विजन्मा । ६. क्ष-ञ१-ञ-ट–अभि आभिमुख्येन याति आभिमुख्येन भक्षयति । ७. क्ष-ङ-ञ१-ञ-ट–यद्वा ऋज्यते । ऋजो पाके । पक्कं करोति ( क्ष-ञ-ट–पक्कं करोति वा )। ८. क्ष-ङ-ञ१-ञ-ट–संवत्सरे संवत्सरे पूर्णे ववृधे ( क्ष-ञ-ट–पुनर्ववृधे ) । अयमग्निर्वर्धयति । क्षीणस्य पुनर्वृद्ध्यभावाद्यजमाने हविर्वृद्ध्या प्रतिसंवत्सरं यागसामर्थ्यं करोतीत्यर्थः । ९. क्ष-ञ-ट–भक्षयितारम् । १०. क्ष-ञ-ट–आसा आस्वादयित्र्या स्वीकुर्वत्या जिह्वया; ङ-ञ१–आसा आस्वादयन्त्या स्वीकुर्वत्यः ( ञ१–स्वीकुर्वत्या ) जिह्वया । ११. क्ष-ङ-ञ-ञ१-ञ-ट–स्तुत्या ।

कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा शिशुम् ।
प्राचाजिह्वं ध्वसयन्तं तृषुच्युतमा साच्यं कुपयं वर्धनं पितुः ॥ ३ ॥

कृष्णऽप्रुतौ । वेविजे इति । अस्य । सऽक्षितौ । उभा । तरेते इति । अभि । मातरा । शिशुम् ।
प्राचाऽजिह्वम् । ध्वसयन्तम् । तृषुऽच्युतम् । आ । साच्यम् । कुपयम् । वर्धनम् । पितुः ॥३॥

ᐯअस्य अग्नेः ᐯमातरा मातृस्थानीये उत्पादयित्र्यौ ᐯउभा उभे अरण्याख्ये मातरौ ᐯवेविजे चलतः ॥ 'ओविजी भयचलनयोः'। अस्मात् यङ्लुगन्तात् व्यत्ययेन आत्मनेपदमेकवचनं च। 'लोपस्त आत्मनेपदेषु' इति तलोपः। 'चादिलोपे विभाषा' इति निघाताभावः ॥ मथनोपक्रमे ᐯकृष्णप्रुतौ अग्निसंपर्कात् कृष्णवर्णतां प्राप्नुवत्यौ प्रापयन्त्यौ वा भूमिं तथा ᐯसक्षितौ समानकार्यमग्न्युत्पादनं गच्छन्त्यौ एवंभूते मातरौ ᐯशिशुं शिशुवदुत्पत्तिसमये अत्यल्पमग्निम् ᐯअभि ᐯतरेते आभिमुख्येन प्राप्नुतश्च । कीदृशं शिशुम् । ᐯप्राचाजिह्वं प्राग्देशस्थितजिह्वास्थानीयज्वालं ᐯध्वसयन्तं[1] तमो नाशयन्तं ᐯतृषुच्युतम् अरणीभ्यां क्षिप्रं निर्गच्छन्तम् अक्लेशेन योनेः[2] सकाशात् शीघ्रमुत्पद्यमानम् । ᐯआ ईषत् ᐯसाच्यं समवेतव्यं[3] मृदुकाष्ठचूर्णादिना ᐯकुपयं गोपनीयं ᐯपितुः पालकस्य यजमानस्य ᐯवर्धनं प्रवर्धनं प्रवर्धयितारम् । उक्तप्रकारैः लौकिकशिशुसाधारणैः[4] उपेतं शिशुमग्निं मातरावुत्पादयतः इत्यर्थः ॥

मुमुक्ष्वो३ मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवः ।
असमना अजिरासो रघुष्यदो वातजूता उप युज्यन्त आशवः ॥ ४ ॥

मुमुक्ष्वः । मनवे । मानवस्यते । रघुऽद्रुवः । कृष्णऽसीतासः । ऊँ इति । जुवः ।
असमनाः । अजिरासः । रघुऽस्यदः । वातऽजूताः । उप । युज्यन्ते । आशवः ॥ ४ ॥

ᐯमनवे मननवते ᐯमानवस्यते मानवान् ऋत्विजः कर्मार्थमिच्छते यजमानाय तदर्थमध्वर्य्वादिभिः अग्नेर्ज्वालाः ᐯउप ᐯयुज्यन्ते यज्ञेषु । सूक्तस्याग्नेयत्वात् औचित्यात् ज्वाला इति गम्यते । कीदृश्यस्ताः । ᐯमुमुक्ष्वः मुमुक्षव आहुतिद्वारा यजमानं मोक्तुमिच्छन्त्यः ब्रह्मलोकं प्रापयन्त्यः ॥ 'जसादिषु च्छन्दसि वावचनम्' इति गुणाभावः। ज्वालानामाहुतिद्वारा ब्रह्मलोकप्राप्तिसाधनत्वं 'काली कराली' इत्युपक्रम्य श्रूयते–'एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' (मु. उ. १. २. ४–५) इति । ᐯरघुद्रुवः क्षिप्रं गच्छन्त्यः ᐯकृष्णसीतासः कृष्णमार्गाः । उकारः समुच्चयार्थः । ᐯजुवः जवनशीलाः शीघ्रकारिण्यः स्वव्यापारेषु ᐯअसमनाः असमानमनस्काः । काश्चन[5] प्राङ्मुख्यो गच्छन्ति काश्चन प्रत्यङ्मुख्यः इति विविधमनस्काः ॥ व्यत्ययेनैकवचनम् ॥ यद्वा । असमना भिन्नवर्णाः । भिन्नवर्णत्वं च तत्रैव श्रूयते–'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' इति ।

---

१. क्ष-ञ-ट–ध्वसयन्तम् । स्वतेजसा तमो ध्वंसयन्तम्; ङ-झ१–ध्वसयन्तम् । स्वतेजसा तमो ध्वसयन्तम् । २. क्ष-ङ-झ१-ञ-ट–तयोः । ३. क्ष-झ१-ञ-ट–उपरीतव्यम् ( ? ) । ४. क्ष-ङ-ज्ञ-झ-झ१-ञ-ट–लौकिकशिशुसाधारणधर्मैः । ५. झ–अन्याः ।

vअजिरासः गमनशीलाः vरघुस्यदः शीघ्रं स्यन्दमानाः vवातजूताः वातप्रेरिताः । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । vआशवः व्यापनशीलाः ॥

**आदस्य ते ध्वसयन्तो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः ।**
**यत्सीं महीमवनिं प्राभि मर्मृशदभिश्वसन्त्स्तनयन्नेति नानदत् ॥ ५ ॥**

आत् । अस्य । ते । ध्वसयन्तः । वृथा । ईरते । कृष्णम् । अभ्वम् । महि । वर्पः । करिक्रतः ।
यत् । सीम् । महीम् । अवनिम् । प्र । अभि । मर्मृशत् ।
अभिऽश्वसन् । स्तनयन् । एति । नानदत् ॥ ५ ॥

vआत् अनन्तरम् vअस्य स्तूयमानस्याग्नेः vते प्रसिद्धा विस्फुलिङ्गाः vवृथा[1] सहैव vईरते सर्वतो गच्छन्ति । कीदृशास्ते । vध्वसयन्तः तमांसि ध्वंसयन्तः तथा vकृष्णवर्णम्[2] vअभ्वं महान्तमभिभवद्गमनमार्गं[3] vमहि महत् vवर्पः रूपं प्रकाशं vकरिक्रतः अत्यर्थं कुर्वन्तः । कस्मिन् काले इति तदुच्यते । vयत् यदा vमहीं महतीम् vअवनिं भूमिं vसीं सर्वतः vमर्मृशत् पुनःपुनरामृशत् ॥ मृशेर्यङ्लुगन्तात् शतरि ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥ vअभिश्वसन्[4] सर्वतश्चेष्टमानः vस्तनयन् शब्दं कुर्वन् vनानदत् अत्यर्थं शब्दयन् ॥ पूर्ववत् प्रत्ययस्वरौ ॥ अभितः प्रकर्षेण vएति गच्छति । यदा इतस्ततो जिह्वाभिर्लेलिहानो भुगुभुगुध्वनिं कुर्वन् ज्वलति तदैव[5] विस्फुलिङ्गा उद्भवन्तीत्यर्थः ॥ ॥ ५ ॥

**भूषन्न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत् ।**
**ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविधाव दुर्गृभिः ॥ ६ ॥**

भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः । अभि । एति । रोरुवत् ।
ओजायमानः । तन्वः । च । शुम्भते । भीमः । न । शृङ्गा । दविधाव । दुःऽगृभिः ॥६॥

vयः अग्निः vबभ्रूषु बभ्रुवर्णास्वोषधीषु भरणकुशलासु वा जगताम् vअधि अधिकं vनम्नते नमति काष्ठानि प्रविशति ॥ नमतेर्लेटि अडागमः । व्यत्ययेन श्ना[6] । यद्वा । लटि छान्दसः शपः श्लुः । व्यत्ययेन हलादिशेषाभावः ॥ vभूषन्न[7] भूतान्येव[7] स्वतेजसा भूषयन्निव । किंचायं प्रविशन्[8] vवृषेव सेक्ता वृषभ इव vपत्नीः तमेव पालयित्रीः समर्धयित्रीः ओषधीः vरोरुवत् । रौतेर्यङ्लुगन्तात् शतरि ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥ अत्यर्थं शब्दयन् vअभ्येति अभितो गच्छति । प्रथमम् ओषधीः प्रविश्य पश्चात् प्रबुद्धः सन् ता एव दहतीत्यर्थः । किंचैवं कृत्वा vओजायमानः । ओज इति बलनाम । स्वयं बलमिवाचरन् ॥ ' कर्तुः क्यङ् सलोपश्च ' इति क्यङ्सलोपौ ॥ धूमादिभिर्विना केवलं तेजोरूप एव सन् vतन्वश्च vशुम्भते स्वशरीरभूता ज्वाला अपि दीपयति पोषयतीत्यर्थः । किंच प्रवृद्धज्वालः vदुर्गृभिः

---

१. ङ-झ१–तव वृथा । २. क्ष-ञ-ट–कृष्णं कृष्णवर्णम् । ३. क्ष-ङ-ञ-ट–तमसां मार्गम् । ४. क्ष-ङ-झ१-ञ-ट–तृणादिषु संलग्नं अभिश्वसन् । ५. क-क्ष-ख-झ१-ञ-ट-ण-न-व–तदैवम् । ६. क्ष-झ१-ञ-ट–आत्मनेपदम् । ७. क्ष-ङ-झ१-ञ-ट–किं कुर्वन् । भूषन्न तान्येव । ८. क्ष-ङ-झ१-ञ-ट–प्रविष्टः सन् ।

केनचिदपि ग्रहीतुमशक्यः सन् ᵛभीमो ᵛन भयंकरो मृग इव स यथा दुर्ग्रहः सन् शृङ्गं चालयति तद्वद्द्वयमपि शृङ्गाणि[1] शृङ्गवदुन्नता ज्वालाः ᵛदविधाव अत्यर्थं चालयति ॥ धुनोतेर्यङ्लुगन्तात् लिटि रूपम् । अस्य च दाधर्त्यादौ इति शब्देन संग्रहो द्रष्टव्यः[2] ॥

**स संस्तिरो विष्टिरः सं गृभायति जानन्नेव जानतीर्नित्य आ शये ।**
**पुनर्वर्धन्ते अपि यन्ति देव्यमन्यद्वर्पः पित्रोः कृण्वते सचा ॥ ७ ॥**

सः । सम्ऽस्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये । पुनः । वर्धन्ते । अपि । यन्ति । देव्यम् । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ॥ ७ ॥

ᵛसः अग्निः ᵛसंस्तिरः आच्छन्नः[3] ॥ संपूर्वात् स्तृणातेर्मूलविभुजादित्वात् कप्रत्ययः (पा. सू. ३. २. ५. २.) । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ॥ तथा ᵛविस्तिरः कदाचित् विस्तीर्णः सन् ᵛसं ᵛगृभायति संगृह्णात्योषधीः । किंचायं ᵛजानन्नेव यजमानार्थं प्रवृद्धेन भवितव्यम् अतो ज्वालाभिः संयोज्यः इत्यधिगच्छन्नेव ᵛजानतीः यजमानार्थं प्रवृद्धाभिर्भवितव्यम् इत्यवगच्छन्तीर्ज्वालाः ᵛनित्यः अविच्छिन्नः सन् ᵛआ ᵛशये आशेते आश्रयतीत्यर्थः ॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥ एवंभूतज्वालाः ᵛपुनः पूर्वं प्रवृद्धा एव पुनरपि यागयोग्या यथा भवन्ति तथा ᵛवर्धन्ते । ᵛदेव्यं यागादिव्यवहारयोग्यं स्तुत्यं वा अग्निम् ᵛअपि ᵛयन्ति प्राप्नुवन्ति । यद्यप्यग्निज्वालयोरेकत्वं तथापि 'राहोः शिरः' इतिवदौपचारिको गन्तृगन्तव्यभावः । किंचैवं प्रवृद्धा ज्वाला ओषधयो वा ᵛसचा अग्निना सह ᵛपित्रोः जगत्पालयित्रोस्ताभ्यां संभूय द्यावापृथिव्योः ᵛअन्यत् पूर्वमविद्यमानं तेजोमयं ᵛवर्पः रूपं ᵛकृण्वते कुर्वन्ति लोकद्वयं स्पृशन्तीत्यर्थः ॥

**तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।**
**तासां जरां प्रमुञ्चन्नेति नानददसुं परं जनयञ्जीवमस्तृतम् ॥ ८ ॥**

तम् । अग्रुवः । केशिनीः । सम् । हि । रेभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति । तासाम् । जराम् । प्रऽमुञ्चन् । एति । नानदत् । असुम् । परम् । जनयन् । जीवम् । अस्तृतम् ॥ ८ ॥

ᵛतम् अग्निम् ᵛअग्रुवः अग्रतः स्थिताः । यद्वा । अङ्गुलिनामैतत् । अङ्गुलय इव अकुटिलाः । ᵛकेशिनीः केशस्थानीयोर्ध्वभाविकाष्र्ण्योपेताः[4] ज्वालाः ᵛसं ᵛरेभिरे ᵛहि परिरम्भं कुर्वन्ति खलु आलिङ्गन्ति । किंचैवं कुर्वत्यः ᵛमम्रुषीः मृता अङ्गारभावमापन्ना अपि ॥ म्रियतेः क्वसुप्रत्ययान्तात् ङीपि रूपम् ॥ ᵛआयवे आगच्छतेऽग्नये भर्त्रे ᵛपुनः स्वोपद्रवमजानत्यः ᵛऊर्ध्वाः ᵛप्र ᵛतस्थुः ऊर्ध्वमुखा उन्नताः प्रतस्थिरे मृतप्राया अपि प्रत्युत्थानं कृतवत्य इत्यर्थः । एवं कृतवतीषु सतीषु स भर्ताग्निः ᵛतासां

---

१. क्ष-झ-झ१-ज-ट—शृङ्गा शृङ्गाणि । २. क्ष-झ१-ज-ट—ग्राह्यः द्रष्टव्यः । ३. क्ष-ङ-झ१-ज-ट—कदाचित् संच्छन्नः । ४. क्ष-ङ-झ१-ज-ट—केशस्थानीयोर्ध्वतावैशिष्ट्योपेताः ।

ज्वालानां जरां वयोहानिं प्रमुञ्चन् प्रकर्षेण मोचयन् नानदत् जरापरिहाराय मन्त्रयन्निव अत्यर्थं शब्दयन् । न केवलं जराहानिरेव अपि तु परं निरतिशयम् असुं प्राणम् अस्तृतं काष्ठोदकादिप्रक्षेपेणाप्यहिंसितं जीवं प्राणधारणसामर्थ्यं जनयन् उत्पादयन् एति गच्छति । तासां ज्वालानां संनिधिं प्राप्नोति । यथा लोके काश्चन रमण्यो रमणेन सह निर्भरं क्रीडित्वा पश्चात् प्रोषिते तस्मिन् विरहेण जीर्णा म्रियमाणाः पश्चात् तस्मिन्नागते सति स्वदौर्बल्यमगणयित्वा संतोषेण परिष्वङ्गाय चेष्टन्ते । स भर्ता मन्त्रोच्चारणेन जराम् अपनीय उचितप्रदानेन प्राणयन्[1] रक्षति[1] इत्ययं भावोऽत्रानुसंधेयः ॥

अधीवासं परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः ।
वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह ॥ ९ ॥

अधिऽवासम् । परि । मातुः । रिहन् । अह । तुविऽग्रेभिः । सत्वऽभिः । याति । वि । ज्रयः ।
वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्तनिः । अह ॥९॥

दावाग्निः स्तूयते । अयमग्निः मातुः भूतानां निर्मातुर्भूमेः अधीवासम् उपर्याच्छादनस्थानीयं तृणगुल्मौषध्यादिकं परि परितः रिहन् लिहन् । अह इति प्रसिद्धौ । यद्वा । मातुर्भूमेरधीवासम् उपरि धार्यमाणं वस्त्रं परि परितो रिहन् संपादयन् । तुविग्रेभिः प्रभूतं शब्दयद्भिः प्रभूतगमनैर्वा सत्वभिः प्राणिभिः सहितः ज्रयः ज्रयसा जवेन वि याति विविधं गच्छति । किंच पद्वते पादवते द्विपदे चतुष्पदे च वयः अन्नं तत्तदुचितं दधत् ददत् । विवने[2] दावानले भीत्या पलायमानान्[2] प्राणिनो व्याघ्रादयो भक्षयन्तीति प्रसिद्धम् । किं कुर्वन् । सदा सर्वदा तृणादिकं रेरिहत्[3] दहन्[3] । किंच श्येनी श्यामवर्णः[4] वर्तनिः मार्गो वियान्तम् अनु अनुक्रमेण सचते सेवते । यत्र यत्राग्निर्गच्छति तत्र तत्र मार्गोऽपि कृष्णो भवति । अह इति प्रसिद्धौ ॥

अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान्वृषभो दमूनाः ।
अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥ १० ॥

अस्माकम् । अग्ने । मघवत्ऽसु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ।
अवऽअस्य । शिशुऽमतीः । अदीदेः । वर्मऽइव । युत्ऽसु । परिऽजर्भुराणः ॥ १० ॥

हे अग्ने अस्माकं मघवत्सु अस्मत्संबन्धिषु अन्नवत्सु यागेषु गृहेषु वा दीदिहि दीप्यस्व । अध अथानन्तरं श्वसीवान् श्वसनवान् ज्वालाभिश्चेष्टावान् अस्मत्प्राणनवान् वा वृषभः वर्षिता अभिमतानां दमूनाः दानमना दममना दान्तमना वा सर्वत्र भवेति शेषः । स[5] उक्तलक्षणस्त्वं[5] शिशुमतीः अवास्य । शिशुशब्देन तदवस्था लक्ष्यते । शैशववतीर्ज्वाला अपक्षेप्य[6] विहाय अदीदेः भृशं

१. ख-च-फ–प्राणान् रक्षति; क्ष-झ१-ञ-ट–प्रीणयन् । २. झ–विवरेषु दावानलभीत्या पलायमानान्; क्ष-ञ-ट–चिरतरदावानलेन भीत्या प्रलीयमानान्; ङ-झ१–चिरतरदावानले(न) प्रलीयमानान् । ३. क्ष-झ-झ१ ञ-ट–रेरिहत् अत्यर्थं लिहन् दहन् । ४. क्ष-ङ-ज्ञ-झ-झ१-ञ-ट–श्यामवर्णा । ५. क्ष-ञ-ट–यद्वा उक्तगुणस्त्वम् । ६. क्ष-ञ-ट–अपक्षिप्य; ङ-झ१–अविक्षिप्य ।

दीप्यस्व । कीदृशस्त्वम् । <sup>v</sup>युत्सु संग्रामेषु <sup>v</sup>वर्मेव कवचमिव <sup>v</sup>परिजर्भुराणः अस्मद्द्वेष्टॄन् पुनःपुनः परिहरन् । यद्वा । युत्सु संग्रामेषु वर्मेव परिजर्भुराणो भव ॥ हरतेर्यङ्लुगन्तात् व्यत्ययेन शानच् । ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥ उक्तगुणको भव मघवत्सु यज्ञेषु दीप्यस्व ॥　　॥ ६ ॥

इदमग्ने सुधितं दुर्धितादधि प्रियादु चिन्मन्मनः प्रेयो अस्तु ते ।
यत्ते शुक्रं तन्वो३ रोचते शुचि तेनास्मभ्यं वनसे रत्नमा त्वम् ॥ ११ ॥

इदम् । अग्ने । सुऽधितम् । दुःऽधितात् । अधि । प्रियात् ।
ऊँ इति । चित् । मन्मनः । प्रेयः । अस्तु । ते ॥ यत् । ते । शुक्रम् ।
तन्वः । रोचते । शुचि । तेन । अस्मभ्यम् । वनसे । रत्नम् । आ । त्वम् ॥ ११ ॥

हे <sup>v</sup>अग्ने <sup>v</sup>इदम् अस्मदीयं सोमादिरूपं हविः । कीदृशं तत् । <sup>v</sup>दुर्धितात् दुष्टं स्थापितात् कठिनात् काष्ठादेः <sup>v</sup>अधि उपरि <sup>v</sup>सुधितं सुहितं सुष्ठु दत्तम् । <sup>v</sup>मन्मनः मननीयात् <sup>v</sup>प्रियादु <sup>v</sup>चित् तव हृद्यादपि । उशब्दोऽवधारणे । चिच्छब्दोऽपिशब्दार्थः । <sup>v</sup>ते तव <sup>v</sup>प्रेयः अतिप्रियतमम् <sup>v</sup>अस्तु । तत्किमित्याह । हे अग्ने <sup>v</sup>ते तव <sup>v</sup>तन्वः शरीरस्य घृतेनोज्ज्वलिताया ज्वालायाः <sup>v</sup>शुचि निर्मलं <sup>v</sup>शुक्रं दीप्तं <sup>v</sup>यत् तेजः <sup>v</sup>रोचते <sup>v</sup>तेन सह <sup>v</sup>रत्नं रमणीयं मणिमुक्तादिकं वितरन् <sup>v</sup>अस्मभ्यं <sup>v</sup>वनसे अस्मान् संभजस्व ॥ वनतेर्व्यत्ययेनात्मनेपदम् ॥

रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने ।
अस्माकं वीराँ उत नो मघोनो जनाँश्च या पारयाच्छर्म या च ॥ १२ ॥

रथाय । नावम् । उत । नः । गृहाय । नित्यऽअरित्राम् । पत्ऽवतीम् । रासि । अग्ने ।
अस्माकम् । वीरान् । उत । नः । मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥१२॥

हे <sup>v</sup>अग्ने <sup>v</sup>उत अपि च <sup>v</sup>रथाय रंहणाय <sup>v</sup>गृहाय सर्वस्यायतनभूताय <sup>v</sup>नः अस्माकं यजमानाय <sup>v</sup>नावं संसारोत्तारिकां सोमयागात्मिकां नावम् । ' यज्ञो वै सुतर्मा नौः ' ( ऐ. ब्रा. १. १३ ) इत्यादिषु श्रुतिषु नौरूपत्वेन स्तुतत्वात्[1] । कीदृशीं ताम्[1] । <sup>v</sup>नित्यारित्रां नियतर्त्विग्रूपोदकाकर्षणकाष्ठसाधनोपेतां <sup>v</sup>पद्वतीम् ॥ ' ह्रस्वनुड्भ्याम्० ' इति मतुप उदात्तत्वम् ॥ द्रव्यदेवतामन्त्रादिरूपपादोपेताम् । ईदृशीं यज्ञात्मिकां नावं <sup>v</sup>रासि देहि संपादय । रातिर्दानकर्मा ' दासति राति ' ( नि. ३. २०. ४ ) इति तन्नामसु पाठात् । सैव विशेष्यते । <sup>v</sup>उत अपि च <sup>v</sup>या नौः <sup>v</sup>अस्माकं <sup>v</sup>वीरान् अस्मत्संबन्धिनः पुत्रादीन् <sup>v</sup>मघोनः हविर्लक्षणान्नवतः करोति । <sup>v</sup>जनांश्च यजमानानस्मानपि या नौः <sup>v</sup>पारयात् पारयेत् उत्तारयेत् ॥ पारयतेर्लेटि आडागमः ॥ जननमरणादिबहुदुःखात्मकस्य

---

१. क्ष-ज्ञ१-ञ-ट–स्तुतत्वात् तां गृभाय गृहाण । छन्दसि शायजपीति ह्रोश्नः शायजादेशः । साधयास्माकम् ।

पारं निरतिशयसुखास्पदं ब्रह्मलोकं प्रापयेत् । ' एष वः पुण्यः सुकृतो ब्रह्मलोकः ' ( मु. उ. १.२.६ ) इति यागाद्यनुष्ठानवतां श्रूयमाणत्वात्[1] । एवं प्रापय्य च या नौः शर्म सुखं निरतिशयं ब्रह्म प्रापयेत् ' परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ' इत्युक्तत्वात् । चित्तशुद्ध्युत्पादनद्वारा[2] ' विविदिषन्ति यज्ञेन दानेन ' ( बृ. उ. ४. ४. २२ ) इति श्रुतेः ॥

अभी नो अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिन्धवश्च स्वगूर्ताः ।
गव्यं यव्यं यन्तो दीर्घाहेषं वरमरुण्यो वरन्त ॥ १३ ॥

अभि । नः । अग्ने । उक्थम् । इत् । जुगुर्याः । द्यावाक्षामा । सिन्धवः । च । स्वऽगूर्ताः ।
गव्यम् । यव्यम् । यन्तः । दीर्घा । अहा । इषम् । वरम् । अरुण्यः । वरन्त ॥ १३ ॥

हे अग्ने नः उक्थं शस्त्रम् अभि जुगुर्याः आभिमुख्येन स्तुहि प्रोत्साहय सम्यक् शस्तमित्यङ्गीकुरु ॥ ' गॄ शब्दे ' । लिङि ' बहुलं छन्दसि ' इति विकरणस्य श्लुः । ' बहुलं छन्दसि ' इति उत्वम् ॥ तथा द्यावाक्षामा द्यावापृथिव्यावपि यज्ञसाधनसंपादनेन प्रोत्साहयताम्[3] । तथा सिन्धवः स्यन्दनशीला नद्यः च स्वगूर्ताः स्वयमेव गामिन्यः गव्यं गोसंभवं क्षीरादिकं गवां तृणाद्युत्पादनद्वारा यव्यम् । उपलक्षणमेतत् । यवव्रीह्यादिजन्यं पुरोडाशादिकं यन्तः प्रापयन्तः प्रोत्साहयन्तु । तथा अरुण्यः अरुणवर्णगोयुक्ताः ॥ मत्वर्थीयो लुप्यते ॥ आरुण्यसाधनभूताः उषसः । तद्धेतुत्वात् ताच्छब्द्यम् । दीर्घाहा सर्वाण्यहानि सर्वकालम्[4] इषम् इष्यमाणमन्नरसादिकं वरं वरणीयं श्रेष्ठम् अन्यदपि यागसाधनं वरन्त प्रापयन्तु ॥ ' वृङ् संभक्तौ ' । अन्तर्भावितण्यर्थात् छान्दसो लङ् । व्यत्ययेन शप् ॥ साधयन्तु । एतत्सर्वमग्नेः प्रसादात् इत्यग्नेरेव स्तुतित्वात्[5] आग्नेयत्वमविरुद्धम् ॥ ॥७॥

' बळित्था ' इति त्रयोदशर्चं द्वितीयं सूक्तं दैर्घतमसं जागतम् । अन्त्ये त्रिष्टुभौ । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ १ ॥

बट् । इत्था । तत् । वपुषे । धायि । दर्शतम् । देवस्य । भर्गः । सहसः । यतः । जनि ।
यत् । ईम् । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयन्त । सऽस्रुतः ॥१॥

देवस्य द्योतनशीलस्यादित्यस्य दर्शतं सर्वैर्दर्शनीयं तत् प्रसिद्धं भर्गः तेजः इत्था इत्थं सर्वैर्दृश्यमानप्रकारेण वपुषे शरीरव्यवहाराय दार्ढ्याय धायि धार्यते सर्वैः । बट् इत्था इत्युभे अपि सत्यनामनी, ' बट् श्रत् सत्रा इत्था ' ( नि. ३. १०. १. ५ ) इति तन्नामसु पाठात् । जाठराग्निना

---

१. क्ष-ङ-झ१-ञ-ट—स्तूयमानत्वात् । २. ङ-झ१—धीशुद्ध्युत्पादनद्वारा । ३. क्ष-ञ-ट—अगूणीतां प्रोत्साहयताम् । ४. क्ष-ञ-ट—सार्वकालम् । ५. क्ष-ङ-झ१-ञ-ट—स्तुतत्वात् ।

भुक्तानां जरणेन शरीरधारणं प्रसिद्धम्। तत्रोपपत्तिमाह । ᵛयतः ᵛसहसः ᵛजनि । यतः कारणात् मथनकाले बलेनोत्पन्नः अतो बलाय धार्यते इत्यर्थः। ᵛयदीं यदेतत् प्रसिद्धं लोकोपकारि अग्नेस्तेजः ᵛमतिः मदीया बुद्धिः ᵛउप ᵛह्वरते उपगच्छति उपगम्य वर्तते[1] वा॥ 'ह्वृ कौटिल्ये'॥ ᵛसाधते च तेनैव तेजसा साधयति स्वाभीष्टम्। किंच ᵛऋतस्य यज्ञसाधकस्याग्नेस्तेजसा ᵛधेनाः सर्वप्राणिनां वाचः ᵛसस्रुतः समानं गच्छन्त्यः सहैव प्रवर्तमानाः ॥ स्रवतेः कर्तरि क्विप् ॥ ᵛअनयन्त नयन्ति निर्वहन्ति जगद्व्यवहारम् ॥ व्यत्ययेनात्मनेपदम् ॥ यद्वा । ऋतस्य धेना यज्ञस्य संबन्धिन्यो मन्त्ररूपा वाचः सस्रुतो होत्रादिमुखेन सहैव प्रवर्तमाना अनयन्त नयन्ति । अग्नेः स्तोत्रं निर्वहन्ति । अग्नेस्तेजसा वा यज्ञं निर्वहन्ति । 'तेजोमयी वाक्' ( छा. उ. ६. ५. ४ ) इति श्रुतेः । अतः कारणात् मतिरुपह्वरते इत्यर्थः । धेनेति वाङ्नाम, 'धेना ग्नाः' ( नि. १. ११. ३९ ) इति तन्नामसु पाठात् ॥

**पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ २ ॥**

पृक्षः । वपुः । पितुऽमान् । नित्यः । आ । शये । द्वितीयम् । आ । सप्तऽशिवासु । मातृषु । तृतीयम् । अस्य । वृषभस्य । दोहसे । दशऽप्रमतिम् । जनयन्त । योषणः ॥ २ ॥

अयमग्निः ᵛपृक्षः अन्नसाधकः पाकादिना ᵛवपुः वपुष्मान् शरीराभिवृद्धिहेतुः ᵛपितुमान् हविर्लक्षणान्नयुक्तः ᵛनित्यः शाश्वतः । ईदृशः सन् प्रथमं पृथिवीस्थानः सन् ᵛआ ᵛशये आशेते । दाहपाकादि लौकिकं कर्म यज्ञादि वैदिकं कर्म च निर्वर्तयन् ध्रुवो भूमौ वर्तते इत्यर्थः । तथा ᵛसप्तशिवासु ᵛमातृषु सप्तलोकशिवकरीषु मातृस्थानीयासु हितकरीषु वृष्टिषु ᵛद्वितीयम् ᵛआ शेते । मध्यमस्थानो विद्युद्रूपो वा वर्तते । ᵛअस्य ᵛवृषभस्य वर्षितुरस्यैव वैद्युताग्नेः सहायत्वेन संबन्धिने ᵛदोहसे दोग्ध्रे आदित्यस्थोदकस्य वर्षयित्रे आदित्यरश्मये ॥ दुहेः कर्तरि असुप्रत्ययः ॥ तत्प्रवृत्तये ᵛतृतीयम् आशेते । द्युस्थानो वर्तते । यद्वा । अस्य वृषभस्य वर्षितुः प्रसिद्धस्यादित्यस्य संबन्धिने दोग्ध्रे रश्मये तत्प्रवृत्त्यर्थम् । आदित्यरश्मयो घर्मकाले भूमिस्थमुदकमाकृष्य सूर्यं प्रापय्य तत्र चिरकालं धृत्वा पुनरन्तरिक्षं प्राप्य मेघेषु स्थित्वा वर्षकाले[2] प्रवर्षन्तीति प्रसिद्धम् । अतो रश्मेर्दोग्धृत्वम् । ईदृशं त्रिस्थानमग्निं महाभागं ᵛयोषणः मिश्रणशीलाः सर्वा दिशः ᵛजनयन्त उत्पादयन्ति । सर्वासु दिक्षु प्रसृत इत्यर्थः । कीदृशं तम्। ᵛदशप्रमतिम्। दशसु दिक्षु प्रकृष्टमननवन्तं पूज्यत्वाय । यद्वा । मथनकाले दशभिरङ्गुलीभिरुत्पन्नं लोकत्रये दशदिक्षु च व्याप्तमित्यर्थः ॥

**निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः**
**यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ ३ ॥**

निः । यत् । ईम् । बुध्नात् । महिषस्य । वर्पसः । ईशानासः । शवसा । क्रन्त । सूरयः । यत् । ईम् । अनु । प्रऽदिवः । मध्वः । आऽधवे । गुहा । सन्तम् । मातरिश्वा । मथायति ॥ ३ ॥

---

१. क-ख-ज-ज्ञ-ञ१-ण-न-प्रवर्तते । २. ख-ज-ज्ञ-ण-न-प-फ-व-वर्षाकाले ।

ᵛईम् एनमग्निं ᵛयत् यस्मात्[1] कारणात् ᵛमहिषस्य[1]। महन्नामैतत्, 'महिषः अम्वः ऋभुक्षाः' (नि. ३. ३. ८) इति तन्नामसु पाठात्। महतो यज्ञस्य ᵛबुध्नात् मूलात् आधानादारभ्य ᵛवर्पसः। रूपनामैतत्। रूपस्य उपक्रमोपसंहारात्मकस्य सिद्धये ᵛईशानासः स्वकीयव्यापारसमर्थाः ᵛसूरयः मेधाविन ऋत्विजः ᵛशवसा बलेन मन्त्रादिरूपेण शारीरेण वा ᵛनिः ᵛक्रन्त निष्कुर्वन्ति साधयन्ति उत्पादयन्ति काष्ठात्। यद्वा। एनमग्निं बुध्नात् आदितो मथनादारभ्य महिषस्य वर्पसो महतो रूपस्य आहुतिस्वीकारसमर्थस्य सिद्धये निष्कुर्वन्ति॥ करोतेश्छान्दसे लुङि 'मन्त्रे घस°' इति च्लेर्लुक्। व्यत्ययेन अन्तादेशः॥ किंच ᵛयदीम्[2] एनमेवाग्निं ᵛप्रदिवः पुराणात्। अनादिकालमारभ्य न केवलमिदानीमेवेत्यर्थः। पूर्ववत् इदानीं ᵛमध्वः मधुनो मधुसदृशस्य ᵛआधवे आधवने प्रक्षेपे निमित्ते सति ᵛगुहा ᵛसन्तं गुहायां वेद्यां काष्ठेषु निगूढं सन्तं ᵛमातरिश्वा अन्तरिक्षे चेष्टमानो वायुः अनुक्रमेण ᵛमथायति चालयति। उद्बोधयतीत्यर्थः। यद्वा। मातरि फलस्य मातरि[3] यागे श्वसिति चेष्टते इति मातरिश्वा यजमानो गुहा सन्तम् अरण्योर्निगूढं सन्तं प्रादुर्भावाय अनुक्रमेण मथायति मथ्नाति उत्पादयतीत्यर्थः। यस्मादेवंरूपस्तस्मात् स्तोतव्य इत्यर्थः॥

प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति।
उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः॥ ४॥

प्र। यत्। पितुः। परमात्। नीयते। परि। आ। पृक्षुधः। वीरुधः। दम्ऽसु। रोहति।
उभा। यत्। अस्य। जनुषम्। यत्। इन्वतः। आत्। इत्। यविष्ठः। अभवत्। घृणा। शुचिः॥ ४॥

ᵛयत् यस्मात् ᵛपितुः अन्नस्य पशुलक्षणस्य॥ षष्ठीस्थाने प्रथमा॥ तस्य ᵛपरमात् परमत्वाद्धेतोः। उत्कृष्टत्वायेत्यर्थः। तदर्थं ᵛप्र ᵛपरि ᵛनीयते प्रकर्षेण परितो नीयते पर्यग्निक्रियते इत्यर्थः। यद्वा। पितुरुत्पादकात् परमात् उत्कृष्टात् गार्हपत्यलक्षणस्याग्नेः सकाशात् आहवनीयं प्रति प्र परि नीयते प्रकर्षेण नीयते। परि अनर्थकः। किंच ᵛपृक्षुधः पशुपुरोडाशादिषु दाहमध्ये धीयमानाः। यद्वा॥ प्रशब्दस्य संप्रसारणम्। 'क्षुध बुभुक्षायाम्'। क्विप्॥ प्रक्षोध्याः प्रकर्षेण बुभुक्षिता भोक्तुमिष्यमाणाः। ᵛवीरुधो ᵛदंसु दन्तेषु मध्ये ᵛआ ᵛरोहति आरोहन्ति प्रविशन्तीत्यर्थः। ᵛयत् यस्मात् ᵛउभा उभौ अध्वर्युयजमानौ उभे अरणी वा ᵛअस्य अग्नेः ᵛजनुषं जन्म उत्पत्तिम् ᵛइन्वतः व्याप्नुतः स्वीकुरुत इत्यर्थः॥ 'इवि व्याप्तौ'। इदित्त्वात् नुम्॥ ᵛआदित् अत एव कारणात् ᵛशुचिः शुद्धोऽयमग्निः ᵛघृणा यजमानेष्वनुग्रहेण। यद्वा। घृणा घृणी दीप्तिमान्॥ मत्वर्थो लुप्यते॥ दीप्त्या वा ᵛयविष्ठः युवतमः ᵛअभवत् संपन्नः। स्वीकारसमर्थोऽभवदित्यर्थः॥

आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे।
अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते॥ ५॥

आत्। इत्। मातॄः। आ। अविशत्। यासु। आ। शुचिः। अहिंस्यमानः। उर्विया। वि। ववृधे।
अनु। यत्। पूर्वाः। अरुहत्। सनाऽजुवः। नि। नव्यसीषु। अवरासु। धावते॥ ५॥

१. ङ-झ-झ१–यस्मात् कारणात् यद्वा यम् एनम् अग्निं माहिषस्य। २. झ१–यस्मात् ईम्। ३. ङ-ञ-झ-झ१–निर्मातरि।

अयमग्निः ᵛआ ᵛशुचिः दीप्तः सन् ᵛआदित् पूर्वमन्त्रे यविष्ठोऽभवदित्युक्तत्वात् तदनन्तरमेव ᵛमातॄः उत्पादयित्रीर्मातृस्थानीया दश दिशः ᵛआ ᵛअविशत् सर्वतः प्रविशति। पूर्वत्र 'दशप्रमतिं जनयन्त योषणः' (ऋ. सं. १. १४१. २) इत्युक्तत्वात् दिशां मातृत्वम्। दिक्षु प्रकाशेन व्याप्त इत्यर्थः। मातरो विशेष्यन्ते। ᵛयासु मातृषु ᵛअहिंस्यमानः परैरपीड्यमानः ᵛउर्विया उरु अतिप्रभूतं ᵛवि ᵛववृधे विविधं प्रवृद्धोऽभवत् तास्वाविशत्। यथा लोके कश्चित्तेजस्वी जनन्याः स्तनपानपरिपीडादिभिः[1] सम्यक् पोषितो लोके प्रकाश्य[2] पुनरागत्य मातरमालिङ्गति तद्वदिति भावः। कस्मिन् काले इति तत्राह। ᵛयत् यदा ᵛसनाजुवः दीर्घकालवियोगिन्यः स्थापनकाल एव प्रक्षिप्ताः अत एव ᵛपूर्वाः प्रथमभाविनीरोषधीरनुक्रमेण ᵛअरुहत् आरोहति॥ रुहेश्छान्दसो लुङ्। 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः॥ उपरि प्रज्वलति। तथा ᵛनव्यसीषु नवतरासु अत एव ᵛअवरासु अत एव पूर्वापेक्षया निकृष्टासु पश्चाद्भाविनीष्वोषधीषु ᵛनि ᵛधावते नितरां नीचैर्वा गच्छति। अन्तःप्रविशतीत्यर्थः। यदा काष्ठानाम् अधस्तादुपरिष्टाच्च प्रविश्य ज्वलति तदा दिक्षु प्रकाशितोऽभवत्[4] इत्यर्थः॥　　॥ ८ ॥

**आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋञ्जते।**
**देवान्यत्क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे॥ ६॥**

आत्। इत्। होतारम्। वृणते। दिविष्टिषु। भगम्ऽइव। पपृचानासः। ऋञ्जते।
देवान्। यत्। क्रत्वा। मज्मना। पुरुऽस्तुतः। मर्तम्। शंसम्। विश्वधा। वेति। धायसे॥६॥

ᵛहोतारं होमनिष्पादकम् आह्वातारं वा देवानां ईदृशमग्निं[5] ᵛदिविष्टिषु दिवसैषणेषु[6] निमित्तभूतेषु ᵛवृणते संभजते। ᵛआदित् अनन्तरमेव तथा ᵛपपृचानासः हविषा स्तुत्या च संपृचाना ऋत्विजो यजमानाः॥ पृचेश्छान्दसस्य लिटः कानच्॥ ᵛऋञ्जते प्रसाधयन्ति। किमिव। ᵛभगमिव[7]। तं यथा जनाः प्रसाधयन्ति तद्वत्। यद्वा। महान्तं राजानमिव सूर्यदीप्तिवत्[8] पूज्यमित्यर्थः। 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः। ᵛयत् यस्मात् अयमग्निः ᵛपुरुष्टुतः बहुभिर्बहुधा वा स्तूयमानः ᵛक्रत्वा क्रतुना कर्मणा यागादिरूपेण ᵛमज्मना शारीरेण बलेन च युक्तान् ᵛदेवान् व्यवहर्तॄनृत्विजो यज्ञभुजो देवान् वा क्रत्वा मज्मना च योजयितुं तथा ᵛमर्तं यजमानं ᵛशंसं स्तुतिं च स्तुत्यं वा तं ᵛविश्वधा विश्वधनो यद्वा विश्वात्मकोऽयं ᵛवेति पूर्वोक्तान् कामयते। किमर्थम्। ᵛधायसे हविर्लक्षणान्नाय। तस्मात् होतारमग्निं वृणते ऋञ्जते च॥

---

१. ज-ण—स्तनपानपरिपारापरिपीडादिभिः; त—स्तनपानपरिपापरिपीडादिभिः; ख-फ—स्तनपरिपारापरिपीडादिभिः; क—स्तनपानपरिपीडापक्ष्छिद्वारादिभिः; ङ-ञ-झ१—स्तनपानपरिपीडापरिहारादिभिः; झ—स्तनपानपरपीडापरहारादिभिः। २. ङ—स्वत्वं प्रकाश्य। ४. च-फ—प्रकाशः; झ—प्रकाशितो भवति। ५. क्ष-झ१-ञ-ट—ईदृशामिममग्निम्। ६. क्ष-ङ-झ१-ञ-ट—दिवसेषु पूर्णेषु। ७. झ—भगमिव सूर्यमिव। ८. क्ष-ङ-ञ-झ-झ१-ञ-ट—दीप्तसूर्यवत्।

**वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।**
**तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥**

वि । यत् । अस्थात् । यजतः । वातऽचोदितः । ह्वारः । न । वक्वा । जरणाः । अनाकृतः ।
तस्य । पत्मन् । धक्षुषः । कृष्णऽजंहसः । शुचिऽजन्मनः । रजः । आ । विऽअध्वनः ॥७॥

यत् यदा अयमग्निः वातचोदितः वायुना प्रेरितः ॥ ‘ तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम् ॥ यजतः सर्वैः यष्टव्यः[1] यष्टुं योग्यः सन् वि अस्थात् वितिष्ठते सर्वतो व्याप्तो भवति ॥ तत्र दृष्टान्तः । अनाकृतः अनिवारितोऽप्रतिहतप्रसरः वक्वा बहुवक्ता ॥ वचेः ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति वनिप् । दृशिग्रहणात् कुत्वम् ॥ ह्वारो न कुटिल इव विदूषणकादिरिव[2] ॥ ह्वरतेर्ण्यन्तात् पचाद्यच् ॥ स यथा जरणाः स्तुतीर्वितिष्ठते[3] विविधं कुर्वन् वर्तते तद्वदयमप्यनाकृतः अप्रतिबद्धप्रसरो व्यवस्थितः[4] । तदा तस्य अग्नेः पत्मन् पतने मार्गे यज्ञरूपे रजः रञ्जनात्मको लोकः आ अस्थात् आतिष्ठति सर्वतः आश्रयति अग्नौ बहुधा यजतीत्यर्थः । कीदृशस्य तस्य । धक्षुषः दहतः ॥ दहेर्लिटः क्सुः ॥ कृष्णजंहसः कृष्णमार्गस्य ॥ पुनःपुनर्गम्यते इति जंहा मार्गः । हन्तेर्यङ्लुगन्तात् कर्मणि असुन् । कुत्वाभावश्छान्दसः ॥ शुचिजन्मनः मन्त्रसहितारण्योरुत्पन्नत्वात् व्यध्वनः विविधज्वालस्य अनियतमार्गस्य ॥

**रथो न यातः शिक्वभिः कृतो द्यामङ्गेभिररुषेभिरीयते ।**
**आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥**

रथः । न । यातः । शिक्वऽभिः । कृतः । द्याम् । अङ्गेभिः । अरुषेभिः । ईयते ।
आत् । अस्य । ते । कृष्णासः । धक्षि । सूरयः । शूरस्यऽइव । त्वेषथात् । ईषते । वयः ॥८॥

अयमग्निः शिक्वभिः रज्जुभिः कृतः बद्धः रथो न रथ इव । स यथा स्वीयैश्चक्रादिभिः अङ्गैः ईयते तद्वत् यातः स्थापितः सन् अरुषेभिः गमनशीलैः अङ्गेभिः ज्वालादिरूपैः अवयवैः द्याम् अन्तरिक्षम् आज्येन हृष्टः सन् ईयते गच्छति ॥ ‘ ईङ् गतौ ’ ॥ आत् प्रवृद्ध्यनन्तरम् अस्य अग्नेः ते सूरयः सरणयो मार्गाः कृष्णासः कृष्णवर्णा भवन्ति । यत एवं भवन्ति तदर्थं दक्षि दहति काष्ठान् ॥ पुरुषव्यत्ययः । छान्दसः शपो लुक् ॥ किंच ज्वलितस्याग्नेः त्वेषथात् दीप्तात् तेजसः सकाशात् वयः गमनवन्तः पक्षिमृगादयः ईषते गच्छन्ति ॥ ईष गत्यादौ । ‘ बहुलं छन्दसि ’ इति शपो लुक् ॥ पलायन्ते । तत्र दृष्टान्तः । शूरस्य[5] त्वेषथात् वय इव । कस्यचित् विक्रान्तस्य दीप्तात्तेजसः सकाशात् भीत्या पलायमाना[6] इव[6] । एवमन्तरिक्षं स्पृशन् सर्वतो दहतीति सर्वदा[7] दावाग्निरूपेण स्तूयते ॥

---

१. क्ष-झ१-ञ-ट–यष्टव्यः सन् । २. क-ङ-झ-झ१–विदूषकादिरिव । ३. क्ष-ङ-ञ-ट–स्तुतीर्व्यस्थात् वितिष्ठते । ४. क्ष-ञ-ट–व्यवस्थात् । ५. झ–शूरस्येव त्वेषथात् वय इव । यथा कस्यचित् । ६. क्ष-ङ-झ१-ञ-ट–पलायमाना शीघ्रगामिनः इव । ७. क्ष-ज्ञ-झ-झ१–ञ-ट–‘ सर्वदा ’ नास्ति ।

त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥

त्वया । हि । अग्ने । वरुणः । धृतऽव्रतः । मित्रः । शाशद्रे । अर्यमा । सुऽदानवः ।
यत् । सीम् । अनु । क्रतुना । विश्वऽथा । विऽभुः । अरान् । न । नेमिः । परिऽभूः । अजायथाः॥९॥

हे ᵛअग्ने ᵛत्वया[1] खलु ᵛवरुणः राज्यभिमानी देवः ᵛधृतव्रतः स्वीकृतवर्षणादिकर्मा भवति । तथा ᵛमित्रः अहरभिमानी देवः ᵛशाशद्रे शातयति[2] तमः[2] ॥ 'शद्लृ शातने' । छान्दसो लिट् । 'बहुलं छन्दसि' इति रुट् । तुजादित्वात् अभ्यासदीर्घः । तथा ᵛअर्यमा उभयोर्मध्यवर्ती देवः ᵛसुदानवः शोभनदानो भवति ॥ व्यत्ययेन बहुवचनम् ॥ यद्वा । एते वरुणादयः सुदानवः शोभनदानाः स्वस्वकार्यकर्तारस्त्वया हि शाशद्रे तीक्ष्णीक्रियन्ते । हिशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः । 'त्वमग्ने वरुणो जायसे' ( ऋ. सं. ५. ३. १ ) इति हि मन्त्रान्तरम् ॥ शदेः कर्मणि छान्दसो लिट् । 'इरयो रे' इति रेभावः । 'हि च' इति निघाताभावः ॥ वरुणादीनामग्न्यायत्तत्वे उपपत्तिमाह । ᵛयत् यस्मात् कारणात् हे अग्ने ᵛसीं सर्वतः ᵛक्रतुना कर्मणा ᵛविश्वथा विश्व इव विश्वात्मक इव ᵛविभुः मित्रार्यमात्मना सर्वव्यापी ᵛपरिभूः स्वतेजसा सर्वतः परिभाविता सन् अनुक्रमेण ᵛअजायथाः जायसे प्रादुर्भवसि । तत्र दृष्टान्तः । ᵛअरान् रथस्य शङ्कून् ᵛनेमिः ᵛन बाह्यवलय इव । स यथा व्याप्य तिष्ठति तद्वदयमग्निर्वरुणादीन् व्याप्य तिष्ठति ॥

त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि ।
तं त्वा नु नव्यं सहसो युवन्वयं भगं न कारे महिरत्न धीमहि ॥ १० ॥

त्वम् । अग्ने । शशमानाय । सुन्वते । रत्नम् । यविष्ठ । देवऽतातिम् । इन्वसि ॥ तम् ।
त्वा । नु । नव्यम् । सहसः । युवन् । वयम् । भगम् । न । कारे । महिऽरत्न । धीमहि॥१०॥

हे ᵛअग्ने ᵛयविष्ठ युवतम ᵛत्वं ᵛशशमानाय त्वां स्तुवते । 'शशमानः शंसमानः' ( निरु. ६. ८ ) इति यास्कः । ᵛसुन्वते त्वदर्थमभिषवं कुर्वते यजमानाय तद्यागार्थं ᵛरत्नं रमणीयं हविः ᵛदेवतातिं देवेषु तायमानं विस्तार्यमाणम्[3] ᵛइन्वसि व्याप्नोषि । अस्मत्प्रत्तं हविः देवान् आपयसीत्यर्थः । इन्वतिः व्याप्तिकर्मा, 'इन्वति ननक्ष' ( नि. २. १८. १ ) इति तन्नामसु पाठात् । हे ᵛसहसो ᵛयुवन् । युवशब्देनोत्पत्तिर्लक्ष्यते । मथनकाले बलेनोत्पन्न बलस्य मिश्रयितर्वा । यद्वा । सहसस्पुत्र युवन् नित्यतरुण ᵛमहिरत्न अस्मत्प्रदेयमहद्रमणीयधन ᵛनव्यं नवतरं स्तुत्यं वा ᵛतं तादृशं हविर्भुजं ᵛत्वा त्वां ᵛवयं यजमानाः ᵛकारे शब्दे स्तोत्रलक्षणे ᵛनु क्षिप्रं ᵛधीमहि स्थापयामः । हविष्प्रदानसमये क्षिप्रमेव स्तुम इत्यर्थः । तत्र दृष्टान्तः । ᵛभगं ᵛन आदित्यमिव । यद्वा । महान्तं राजानमिव । तं यथा स्तुवन्ति तद्वत् ॥

---

१. क्ष-ङ-झ१-ञ-ट—त्वया हि । २. क्ष-ञ-ट—शातयति तमः गच्छतीत्यर्थः । ३.क्ष-झ१-ञ-ट—विस्तीर्यमाणम् ।

अस्मे र॒यिं न स्वर्थं॒ दमू॑नसं॒ भगं॒ दक्षं॒ न प॑पृचासि धर्ण॒सिम् ।
र॒श्मीँरि॑व॒ यो यम॑ति॒ जन्म॑नी उ॒भे दे॒वानां॒ शंस॑मृ॒त आ च॑ सु॒क्रतुः॑ ॥ ११ ॥

अ॒स्मे इति॑ । र॒यिम् । न । सु॒ऽअर्थ॑म् । दमू॑नसम् । भग॑म् । दक्ष॑म् । न । प॒पृ॒चा॒सि॒ । ध॒र्ण॒सिम् ।
र॒श्मीन्ऽइ॑व । यः । यम॑ति । जन्म॑नी॒ इति॑ । उ॒भे इति॑ ।
दे॒वाना॑म् । शंस॑म् । ऋ॒ते । आ । च॒ । सु॒ऽक्रतुः॑ ॥ ११ ॥

हे अग्ने त्वम् ^v^अस्मे अस्मासु ^v^स्वर्थं सुष्ठु अरणीयं ^v^दमूनसं दमनीयम् उपार्ज्यम्[1] ॥ ' दमेरूनसिः ' ( उ. सू. ४. ६७४ ) इति ऊनसिप्रत्ययः ॥ ^v^रयिं ^v^न ^v^पपृचासि धनं यथा संपृणक्षि । तथा ^v^भगं सर्वैर्भजनीयं ^v^दक्षं ^v^न उत्साहवन्तं प्रबुद्धं वा ^v^धर्णसिं विद्यादिधारणकुशलं पुत्रं यथा पपृचासि संपृणक्षि उभयमपि ददासीत्यर्थः ॥ ' पृची संपर्के '। लेटि आडागमः । ' बहुलं छन्दसि ' इति विकरणस्य श्लुः ॥ इदानीं परोक्षेणाह । ^v^यः अग्निः ^v^रश्मीँरिव स्वकीयान् रश्मीन् यथा ^v^यमति नियमयति विस्तारयति तद्वत् सः ^v^उभे ^v^जन्मनी जननाधारभूतौ उभौ लोकौ इहलोकपरलोकौ यमति नियच्छति । तथा ^v^सुक्रतुः शोभनकर्मा अयम् ^v^ऋते अस्मदीययज्ञे ^v^देवानां देवसंबन्धिनं ^v^शंसं स्तवं[2] ^v^च ^v^आ यमति आयच्छति सर्वदा ददाति । यद्वा । पूर्वार्धे पपृचासीत्यपि परोक्षत्वाय प्रथमपुरुषतया योज्यम् ॥

उ॒त नः॑ सु॒द्योत्मा॑ जी॒राश्वो॒ होता॑ म॒न्द्रः शृ॑णव॒च्चन्द्र॑रथः ।
स नो॑ नेष॒न्नेष॑तमै॒रमू॑रो॒ऽग्निर्वा॒मं सु॑वि॒तं वस्यो॒ अच्छ॑ ॥ १२ ॥

उ॒त । नः॒ । सु॒ऽद्योत्मा॑ । जी॒रऽअ॑श्वः । होता॑ । म॒न्द्रः । शृ॒ण॒व॒त् । च॒न्द्रऽर॑थः ।
सः । नः॒ । ने॒ष॒त् । नेष॑ऽतमैः । अमू॑रः । अ॒ग्निः । वा॒मम् । सु॒वि॒तम् । वस्यः॑ । अच्छ॑ ॥ १२ ॥

उतशब्दोऽप्यर्थः । स च संभावनायाम् । सोऽग्निः ^v^नः अस्मदीयमाह्वानम् ^v^उत ^v^शृणवत् । अपि नाम शृणुयात् । यद्वा । नः अस्मान् श्रावयेत् देवेषु मध्ये प्रख्यापयेत् ॥ शृणोतेर्लेटि अडागमः॥ कीदृशोऽयम् । ^v^सुद्योत्मा सुद्योतमानः ॥ ' द्युत दीप्तौ ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् ॥ ^v^जीराश्वः शीघ्रगमनाश्वः ^v^होता देवानामाह्वाता ^v^मन्द्रः मदनशीलः ^v^चन्द्ररथः सुवर्णमयरथोपेतः । किंच अयम् ^v^अमूरः अमूढबलः ^v^वस्यः वसनीयः ^v^सः प्रसिद्धः ^v^अग्निः ^v^नेषतमैः अत्यर्थं नेतृभिः कर्मभिः स्तोत्रैर्वा ^v^नः अस्मान् उत ^v^नेषत् अपि नाम नयेत् । यज्ञस्य पारं प्रापयेत् ॥ नयतेर्लेटि अडागमः । ' सिब्बहुलम्° ' इति सिप् ॥ किमर्थम् । ^v^वामं वननीयं ^v^सुवितं सुष्ठु प्राप्यं सर्वैः काङ्क्षणीयं स्वर्गम् ^v^अच्छ आभिमुख्येन प्राप्तुं नेषत् ॥

---

१. क्ष-ङ-ञ-ञ१-ञ-ट–उपेक्ष्यम् । २. ञ१–स्तोत्रम् ।

अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः ।
अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ १३ ॥

अस्तावि । अग्निः । शिमीवत्ऽभिः । अर्कैः । साम्ऽराज्याय । प्रऽतरम् । दधानः ।
अमी इति । च । ये । मघऽवानः । वयम् । च । मिहम् । न । सूरः । अति । निः । ततन्युः ॥ १३ ॥

अयम् ᵛअग्निः ᵛशिमीवद्भिः हविष्प्रदानादिकर्मवद्भिः ᵛअर्कैः अर्चनसाधनैर्मन्त्रैः ᵛअस्तावि स्तुतोऽस्माभिर्यजमानैः । शिमीति कर्मनाम, 'शिमी शक्तिः' (नि. २. १. २४) इति तन्नामसु पाठात् । कीदृशोऽयम् । ᵛसाम्राज्याय साम्राज्यस्येति[1] कर्मणि षष्ठीस्थाने चतुर्थी । सम्यक् राजमानत्वं ᵛप्रतरं प्रकृष्टतरमस्यर्थं ᵛदधानः ॥ 'अमु च च्छन्दसि' इति अमुप्रत्ययः ॥ किंच इममग्निम् ᵛअमी ᵛच पुरोवर्तमाना ऋत्विजः पुत्रादयो वा ᵛये ᵛवयं ᵛच पूर्वं स्तोतृत्वेन प्रसिद्धा वयमपि ᵛअति अत्यर्थं ᵛनिष्टतन्युः शब्दयन्तु ॥ निष्पूर्वः स्तनतिः[2] शब्दकर्मा ॥ इतः परमपि अस्मत्पुत्रपौत्रादयो वयं च अग्निं स्तुम इत्यर्थः । तत्र दृष्टान्तः । ᵛमिहं ᵛन ᵛसूरः । मिहं मेहनशीलं मेघं यथा सूरः सूर्यो वृष्ट्यर्थं शब्दयति तद्वत् ॥ लिङि छान्दसो विकरणस्य श्लुः । 'अभिनिसः स्तनः शब्दसंज्ञायाम्' (पा. सू. ८. ३. ८६) इति षत्वम् ॥ ॥ ९ ॥

'समिद्धः[3]' इति त्रयोदशर्चं तृतीयं सूक्तमानुष्टुभम् । प्रथमायाः समिन्नामकोऽग्निर्देवता समिद्धोऽग्निः । द्वितीयादीनां तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतिरित्येताः क्रमेण देवताः । अन्त्याया इन्द्रः । तिस्रो देव्य इत्यस्य विवरणं सरस्वतीळाभारत्य इति । अत्रानुक्रमणिका–'समिद्ध आप्रिय आनुष्टुभमन्त्यैन्द्री' इति ॥ अत्र इध्मतनूनपादादिभिर्यज्ञावयववाचिभिर्यज्ञ एवोच्यते । अतः स एव देवतेति कात्थक्यस्य मतम् । अग्निरेव समिदादिभिरुच्यते । अतः स एव देवतेति शाकपूणेर्मतम् । निरुक्ते किंदेवताः प्रयाजानुयाजा इति छन्दोदेवता[4] इत्यादिपक्षान्तरं बहुधा प्रदर्श्य तदर्थं ब्राह्मणादि[5] चोदाहृत्य इतरे पक्षा अर्थवादा आग्नेया एवेति सिद्धान्तितम्, 'अथ किंदेवताः प्रयाजानुयाजाः' (निरु. ८. २१) इत्यादिना ॥ पशौ अङ्गिरोगोत्रोत्पन्नानाम् एतदाप्रीसूक्तम् । 'एकादश प्रयाजाः' इति खण्डे सूत्रितं–'समिद्धो अद्येति सर्वेषां यथऋषि वा' (आश्व. श्रौ. ३. २) इति । अत्र यथऋषि-ग्रहणात् ॥ आप्रीसूक्तानि त्रिविधानि । तत्र वासिष्ठात्रेयवाध्र्यश्वगात्सैमदानि चत्वारि नराशंसवन्ति । मैधातिथदैर्घतमसप्रैषिकाणि[6] नराशंसतनूनपादुभयवन्ति । इतराणि तनूनपात्वन्तीति । तत्रैतत्सूक्तं दैर्घतमसत्वादुभयवत् ॥

समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे । तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे ॥ १ ॥

सम्ऽइद्धः । अग्ने । आ । वह । देवान् । अद्य । यतऽस्रुचे ।
तन्तुम् । तनुष्व । पूर्व्यम् । सुतऽसोमाय । दाशुषे ॥ १ ॥

---

१. क्ष-ञ-ट–साम्राज्यम् । २. क्ष-झ१-ञ-ट–तनोतिः । ३. क्ष-ञ-ट–समिद्धोऽग्निर्वा । ४. क्ष-ञ-ट–छन्दोदेवता ऋतुदेवताः; ङ-ग्ञ-झ१–छन्दोदेवता ऋतुदेवता वा । ५. क्ष-झ१-ञ-ट–ब्राह्मणानि । ६. क्ष-ङ-ञ-ञ-ट–°प्रैषिकाणि च ।

हे ᵛअग्ने ᵛसमिद्धः सम्यग्दीपितः एतन्नामकस्त्वम् ᵛअद्य अस्मिन् यागदिने ᵛदेवान् हविषां भोक्तॄन् अग्न्यादीन् ᵛआ ᵛवह अस्मद्यज्ञं प्रति प्रापय । ᵛयतस्रुचे यागायोद्यतस्रुचे यजमानाय तदर्थम् । आवाह्य च ᵛसुतसोमाय यागार्थमभिषुतसोमाय ᵛदाशुषे हविर्दत्तवते । यद्यपि इदानीमेवाहूयन्ते देवाः तथापि पूर्वानुष्ठानापेक्षया भाव्यपेक्षया वा दाशुषे इत्युच्यते । हविर्दात्रे वा यजमानाय तदर्थं ᵛपूर्व्यं पूर्वेभ्यो देवेभ्यो हितं पूर्वकालीनं वा ᵛतन्तुं यज्ञं ᵛतनुष्व विस्तारय ॥

घृतवन्तमुप मासि मधुमन्तं तनूनपात् ।
यज्ञं विप्रस्य मावतः शशमानस्य दाशुषः ॥ २ ॥
घृतऽवन्तम् । उप । मासि । मधुऽमन्तम् । तनूऽनपात् ।
यज्ञम् । विप्रस्य । माऽवतः । शशमानस्य । दाशुषः ॥ २ ॥

हे ᵛतनूनपात् । 'तनूनपात् आज्यम्' इति कात्थक्यपक्षे तन्वो गावो भोगानां तासु जायमानत्वात्[1] । ताभ्यः उत्पन्नं क्षीरं क्षीरात् सर्पिः इति आज्यस्य नप्तृत्वम् । तद्वान् यज्ञः । अग्निपक्षे आपस्तन्व उच्यन्ते । ताभ्यः ओषधिवनस्पतयः । तेभ्योऽग्निरिति नप्तृत्वम् । अरणीभ्यामिति भावः । एतन्नामक हे अग्ने ᵛविप्रस्य मेधाविनः ᵛशशमानस्य शंसमानस्य त्वां स्तुवतः ᵛदाशुषः हविर्दत्तवतः ᵛमावतः मत्सदृशस्य यजमानस्य ॥ 'युष्मदस्मद्भ्यां छन्दसि सादृश्ये' इति वतुप् । 'आ सर्वनाम्नः' इति आत्वम् ॥ ᵛघृतवन्तं क्षरदाज्योपेतं ᵛमधुमन्तं माधुर्योपेतं[2] सोमादिमधुरद्रव्येण तद्वन्तं ᵛयज्ञम् ᵛउप उपेत्य ᵛमासि निर्मिमीषे मितो भवसि वा । संपूर्तिपर्यन्तं तिष्ठसीत्यर्थः ॥ 'मा माने' । आदादिकः ॥

शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति ।
नराशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥ ३ ॥
शुचिः । पावकः । अद्भुतः । मध्वा । यज्ञम् । मिमिक्षति ।
नराशंसः । त्रिः । आ । दिवः । देवः । देवेषु । यज्ञियः ॥ ३ ॥

ᵛदेवेषु मध्ये ᵛशुचिः शुद्धो दीप्तो वा ᵛपावकः अन्नस्य अपूतस्य शोधयिता ᵛअद्भुतः अभूत इव अद्यक्षणे[3] भविता[3] । आश्चर्यभूत इत्यर्थः । ᵛदेवः द्योतनशीलः ᵛयज्ञियः यज्ञसंपादनार्हः ईदृशः ᵛनराशंसः नरैः कर्मनेतृभिर्ऋत्विग्भिः शंसनीयोऽग्निः ᵛदिवः द्युलोकादागत्य ᵛमध्वा मधुरेण रसेन ᵛयज्ञम् अस्मदीयं ᵛत्रिः ᵛआ ᵛमिमिक्षति त्रिवारं समन्तात्[4] सिञ्चति स्वदयतीत्यर्थः । यद्वा । मधुरेण फलेन त्रिः आ मिमिक्षति योजयतीत्यर्थः । 'नराशंसो यज्ञः' इति कात्थक्यपक्षे यज्ञाभिमानी देवो द्योतमानो द्युलोकादागत्य अनुष्ठीयमानं यज्ञं त्रिः आ मिमिक्षति । अयं नराशंसो देवस्त्रिरा ॥ उपसर्गवशात् योग्यक्रियाध्याहारः ॥ त्रिवारमागच्छति । त्रिः आहरति वा फलम् । अवशिष्टं पूर्ववज्ज्ञेयम् ॥

---

१. ङ-झ१–तायमानत्वात् । २. ङ-झ१–मधुनोपेतम् । ३. क्ष-ङ-झ१-ञ-ट–आद्यक्षणे भविता; झ–आज्याद्युक्षणेनाभावात् ( आज्याद्युक्षणेनाविर्भावात् ) । ४. क्ष-ङ-झ१-ञ-ट–आ समन्तात् ।

ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् ।
इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥ ४ ॥

ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् ।
इयम् । हि । त्वा । मतिः । मम । अच्छ । सुऽजिह्व । वच्यते ॥ ४ ॥

हे Vअग्ने Vईळितः सर्वैः स्तुत्यः इध्मनामकस्त्वम् Vइह अस्मिन् यज्ञे Vचित्रं चायनीयं प्रियं प्रीणयितारम् अस्मान्[१] हविःस्वीकर्तुं[१] वा प्रीतियुक्तम् Vइन्द्रम् Vआ Vवह आह्वय । हे Vसुजिह्व घृतपानेन शोभनज्वाल Vइयं Vमम Vमतिः मननसाधना स्तुतिरूपा वाक् Vत्वा त्वाम् Vअच्छ आभिमुख्येन प्राप्तुं Vवच्यते[२] मतिरेवास्मदीयोच्यते[२] ॥ हिः पूरणार्थः । वचेर्यकि 'संप्रसारणाच्च' इति पूर्वरूपस्य 'वा छन्दसि' इति विकल्पितत्वात् अभावे यण् ॥ अत्र पुरोडाशादीडभिमानियज्ञपरतया वा व्याख्येयम् । एवमुत्तरत्र यज्ञाङ्गैर्यज्ञसंबन्धिदेवताभिश्च यज्ञः एवोच्यते इति तत्परत्वेन व्याख्येयम् ॥

स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे ।
वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथः ॥ ५ ॥

स्तृणानासः । यतऽस्रुचः । बर्हिः । यज्ञे । सुऽअध्वरे ।
वृञ्जे । देवव्यचःऽतमम् । इन्द्राय । शर्म । सऽप्रथः ॥ ५ ॥

Vस्वध्वरे शोभनप्रायणीयाद्यवान्तरयागवति Vयज्ञे सोमयागे Vबर्हिः दर्भान् Vस्तृणानासः आस्तरन्तः Vयतस्रुचः नियमितजुह्वादिपात्रा ऋत्विजः[३] Vदेवव्यचस्तमम् अतिशयेन देवगामिनं Vसप्रथः सर्वतो विस्तीर्णं Vशर्म सुखसाधनं गृहम् Vइन्द्राय Vवृञ्जे विवर्जयन्ति संपादयन्तीत्यर्थः ॥

वि श्रयन्तामृतावृधः प्रयै देवेभ्यो महीः ।
पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥ ६ ॥

वि । श्रयन्ताम् । ऋतऽवृधः । प्रऽयै । देवेभ्यः । महीः ।
पावकासः । पुरुऽस्पृहः । द्वारः । देवीः । असश्चतः ॥ ६ ॥

Vद्वारो Vदेवीः यज्ञस्य द्वाराभिमानिन्यो देवताः Vवि Vश्रयन्तां विविधं श्रयन्तु विवृता भवन्तु । किमर्थम् । Vदेवेभ्यः Vप्रयै प्रयातुं देवानां प्रापणाय ॥ 'प्रयै रोहिष्यै अव्यथिष्यै' (पा. सू. ३. ४. १०)

---

१. क्ष-ज्ञ१-ञ-ट—अस्मद्धविः स्वीकर्तुम् । २. क्ष-ञ-ट—वच्यते उच्यते । ३. क्ष-ञ-ट—'ऋत्विजः' इत्यस्यानन्तरं 'वृञ्जे वर्जयन्ति विविक्तं संपादयन्ति । एवं कृत्वा देवव्यचस्तमः' इत्यधिकम् ।

इति निपातितः ॥ कीदृश्यस्ताः । ^V^ऋतवृधः[1] यज्ञस्य वर्धयित्र्यः पूज्याः ^V^मही: महत्यः ^V^पावकासः शोधयित्र्यः ^V^पुरुस्पृहः बहुस्पृहणीयाः ^V^असश्चतः असज्यमानाः । परस्परविप्रकृष्टा इत्यर्थः ॥ ॥ १० ॥

आ भन्दमाने उपाके नक्तोषासा सुपेशसा ।
यह्वी ऋतस्य मातरा सीदतां बर्हिरा सुमत् ॥ ७ ॥

आ । भन्दमाने इति । उपाके इति । नक्तोषसा । सुऽपेशसा ।
यह्वी इति । ऋतस्य । मातरा । सीदताम् । बर्हिः । आ । सुऽमत् ॥ ७ ॥

^V^भन्दमाने सर्वैः स्तूयमाने ^V^उपाके परस्परं संनिहिते ^V^सुपेशसा शोभनरूपे। पेश इति रूपनाम। ^V^यह्वी महत्यौ अपत्यरूपे वा प्रतिदिनं जायमानत्वात् । यह्वुरित्यपत्यनाम, 'यह्वः सूनुः' (नि. २. २. ११) इति तन्नामसु पाठात्। ^V^ऋतस्य ^V^मातरा यज्ञस्य निर्मात्र्यौ । ताभ्यामागमनात् यज्ञस्य संपूर्तेर्यज्ञमातृत्वम्[2] उपचर्यते। यद्वा । अतिरात्रादीनाम् अहोरात्रसाध्यत्वात्। ^V^नक्तोषासा उक्तगुणविशिष्टे अहोरात्रदेवते ^V^सुमत् स्वयमेव । अस्माभिरप्रार्थिते इत्यर्थः । यद्वा । सुमत् ^V^बर्हिः आस्तृतं दर्भम् ^V^आ समन्तात् ^V^आ ^V^सीदताम् उपविशताम्। यद्वा । ऋतस्य इति कर्मणि षष्ठी। यज्ञमासीदताम्। आसाद्य च बर्हिरास्तृतं दर्भं स्वयमेवा सीदताम् ॥

मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी ।
यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशम् ॥ ८ ॥

मन्द्रऽजिह्वा । जुगुर्वणी इति । होतारा । दैव्या । कवी इति ।
यज्ञम् । नः । यक्षताम् । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ॥ ८ ॥

^V^मन्द्रजिह्वा देवानां मादनज्वालौ ^V^जुगुर्वणी भृशं गृणतां स्तुवतां यजमानानां संभक्तारौ ॥ गृणतेर्यङ्लुगन्तात् क्विपि छान्दसी रूपसिद्धिः । तस्मिन्नुपपदे वनतेः 'छन्दसि वनसनरक्षिमथाम्' इति इन्प्रत्ययः ॥ ^V^कवी मेधाविनौ क्रान्तदर्शिनौ ^V^दैव्या ^V^होतारा देवसंबन्धिनौ होतारौ अयं च मध्यमस्थानश्चेत्युभौ ^V^सिध्रं फलसाधनभूतम् ॥ सिधेः 'स्फायितञ्चि°' इत्यादिना रक् ॥ ^V^दिविस्पृशं द्युलोकवासिदेवान् स्पृशन्तम् तैर्हविषः स्वीक्रियमाणत्वादिति भावः । ईदृशं ^V^नः अस्मदीयम् ^V^इमं ^V^यज्ञम् ^V^अद्य ^V^यक्षताम् अनुतिष्ठतां पूजयतां वा सम्यक् निर्वाहयतामित्यर्थः ॥

---

१. क्ष-ञ-ट-ऋतावृधः । २. ज्ञ-संपूर्तिर्निर्मातृत्वम्; क्ष-ज्ञ१-ञ-ट-संपूर्तेर्निमा ( र्मा ) तृत्वम् ।

शुचि॑र्दे॒वेष्वर्पि॑ता॒ होत्रा॑ म॒रुत्सु॒ भार॑ती ।
इळा॒ सर॑स्वती म॒ही ब॒र्हिः सी॑दन्तु य॒ज्ञियाः॑ ॥ ९ ॥
शुचि॑ः । दे॒वेषु॑ । अर्पि॑ता । होत्रा॑ । म॒रुत्ऽसु॑ । भार॑ती ।
इळा॑ । सर॑स्वती । म॒ही । ब॒र्हिः । सी॒द॒न्तु॒ । य॒ज्ञियाः॑ ॥ ९ ॥

Vशुचिः शुद्धा Vमरुत्सु विरुद्धलक्षणया अमरणेषु Vदेवेषु द्योतनशीलेषु स्तोतृषु मरुत्सु ऋत्विक्षु वा Vअर्पिता नियता Vहोत्रा होमनिष्पादिका भारती भरतस्यादित्यस्य संबन्धिनी द्युस्थाना वाक् । तथा Vइळा पार्थिवी प्रैषादिरूपा Vमही महती Vसरस्वती । सर इत्युदकनाम । तद्वती स्तनितादिरूपा माध्यमिका च वाक् एतास्तिस्रः त्रिस्थानवागभिमानिदेवताः[1] Vयज्ञियाः यज्ञार्हाः सत्यः Vबर्हिः स्तीर्णं Vसीदन्तु उपविशन्तु[2] ॥

तन्न॑स्तु॒रीप॒मद्भु॑तं पु॒रु वार॒ं पु॒रु त्मना॑ ।
त्वष्टा॒ पोषा॑य॒ वि ष्य॑तु रा॒ये नाभा॑ नो अस्म॒युः ॥ १० ॥
तत् । न॒ः । तु॒रीप॑म् । अद्भु॑तम् । पु॒रु । वा॒ । अर॑म् । पु॒रु । त्मना॑ ।
त्वष्टा॑ । पोषा॑य । वि । स्य॒तु॒ । रा॒ये । नाभा॑ । न॒ः । अ॒स्म॒ऽयुः ॥ १० ॥

Vनः अस्मदर्थं Vतत् तादृशं Vतुरीपं तूर्णं[3] व्यापि[3] Vअद्भुतं सद्य आविर्भवत् अभूतमिव सत् । यद्वा । महन्नामैतत् । सारतो महत् । Vपुरु Vवारं बहूनां प्राणिनामर्थाय एव[4] Vअरम् अलं समर्थम् । यद्वा । पुरु वारं बहु प्रभूतं च । वाशब्दश्चार्थे । अरम् अलम् । Vत्मना आत्मना Vपुरु । बहुक्रियाविशेषणमेतत् । ईदृशमुदकं Vत्वष्टा वृष्ट्यादेः कर्ता । त्वष्टृशब्दो यास्केनैवं व्याख्यातः—' त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोतिकर्मणः ' ( निरु. ८. १३ ) इति । तन्नामको वैद्युतोऽग्निः Vअस्मयुः अस्मान् कामयमानो देवः Vनः Vपोषाय अस्मत्पुष्ट्यै Vराये समृद्धये च Vनाभा नाभौ वृष्टेर्बन्धके मेघस्य[5] नाभिस्थाने अवस्थितम्[6] उक्तलक्षणमुदकं Vवि Vष्यतु विविधं गमयतु ॥ ' षोऽन्तकर्मणि ' । ' ओतः श्यनि ' इति ओकारलोपः । ' उपसर्गात्सुनोति॰ ' इति षत्वम् ॥ यद्वा । नः[7] नाभा अस्मत्संबन्धियज्ञनाभौ उत्तरवेद्यां राये ॥ षष्ठ्यर्थे चतुर्थी ॥ रायो गवादिधनस्य पोषाय पुष्टये ॥ स्यतिरुपसृष्टो विमोचनार्थः ॥ उक्तलक्षणां वृष्टिं मुञ्चतु ॥

---

१. क्ष-ञ-ट–त्रिस्थानाः वागभिमानिनीर्देवताः । २. क्ष-ङ-ञ-ज्ञ-झ१-ञ-ट–' उपविशन्तु ' इत्यस्यानन्तरं ' तिस्रः इत्यत्र तिसृभ्यो जस इति जस उदात्तत्वम् ' इत्यधिकम् । ३. ङ-झ–तूर्णव्यापि ४. क्ष-ञ-ट– ' एव ' नास्ति । ५. क्ष-ञ-ट–मेघे मेघस्य । ६. क्ष-ञ-ट–वा स्थितम् । ७. क्ष-ङ-झ१-ञ-ट–नः अस्मान् ।

अवसृजन्नुप त्मना देवान्यक्षि वनस्पते ।
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः ॥ ११ ॥

अवऽसृजन् । उप । त्मना । देवान् । यक्षि । वनस्पते ।
अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः ॥ ११ ॥

हे ᵛवनस्पते वनानां पालक यूपाभिमानिदेव अग्ने ᵛअवसृजन् स्वैरं वर्तयन् ऋत्विजः स्वस्वकर्मसु व्यापारयन् ᵛत्मना आत्मना ᵛदेवान् हविर्भुजः ᵛउप ᵛयक्षि उपेत्य यज ॥ 'बहुलं छन्दसि' इति शपो लुक् ॥ ᵛदेवः द्योतमानः ᵛमेधिरः मेधावान् ᵛअग्निः आहवनीयः ᵛदेवेषु उभयेषां मध्ये ᵛहव्या हवींषि ᵛसुसूदति[1] प्रेरयति स्वीकरोति[2] ॥ 'षूद क्षरणे'। 'बहुलं छन्दसि' इति शपः श्लुः । 'लेटोऽडाटौ' इति अडागमः ॥ यद्वा । यूपाग्निरेव परोक्षेणोच्यते । सोऽग्निर्हवींषि सुष्ठु स्वीकरोति ॥

पूषण्वते मरुत्वते विश्वदेवाय वायवे ।
स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन ॥ १२ ॥

पूषण्ऽवते । मरुत्वते । विश्वऽदेवाय । वायवे ।
स्वाहा । गायत्रऽवेपसे । हव्यम् । इन्द्राय । कर्तन ॥ १२ ॥

ᵛपूषण्वते पूष्णा तद्वते ॥ 'अनो नुट्' इति नुट् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥ ᵛमरुत्वते मरुद्भिस्तद्वते ᵛविश्वदेवाय सर्वदेवसंघाय ᵛवायवे गमनशीलाय वायुदेवाय च तथा ᵛगायत्रवेपसे । वेप इति रूपनाम । गायत्रशब्दः इतरसामोपलक्षणः[3]। गायत्रं वेपो रूपं यस्य तादृशाय ᵛइन्द्राय ᵛहव्यं हविः प्रदातुं ᵛस्वाहा ᵛकर्तन स्वाहाकारं कुरुत ऋत्विजः ॥ करोतेर्लोटि 'तप्तनप्तनथनाश्च' इति तनबादेशः ॥

स्वाहाकृतान्या गह्युप हव्यानि वीतये ।
इन्द्रा गहि श्रुधी हवं त्वां हवन्ते अध्वरे ॥ १३ ॥

स्वाहाऽकृतानि । आ । गहि । उप । हव्यानि । वीतये ।
इन्द्र । आ । गहि । श्रुधि । हवम् । त्वाम् । हवन्ते । अध्वरे ॥ १३ ॥

हे इन्द्र ᵛस्वाहाकृतानि । स्वाहा इत्येवंपूर्वा कृतिः करणमुच्चारणं यक्ष्यमाणदेवतानां ताः स्वाहाकृतयः । तद्वन्ति ᵛहव्यानि हवींषि । अत्र प्रयाजेषु वषट्कारप्रदानात् स्वाहाकृतं[4] हविरित्यर्थः ।

---

१. क्ष-ञ-ट—सुषूदति । २. क्ष-ञ-ट—स्वीकरोति वा । ३. क्ष-झ-झ१-ञ-ट—इतरसामोपलक्षकः ।
४. क्ष-ङ-झ१-ञ-ट—स्वाहान्तम्; ज्ञ-झ—स्वाहुतम् ।

तद्धविः उपेत्य[1] ᵛवीतये भक्षणाय ᵛआ ᵛगहि आगच्छ ॥ गमेश्छान्दसः शपो लुक् । 'अनुदात्तोपदेश०' इत्यादिना अनुनासिकलोपः ॥ तथा हे ᵛइन्द्र ᵛआ ᵛगहि स्तोत्राण्यभिलक्ष्य आगच्छ । आगत्य ᵛहवम् अस्मदीयमाह्वानं ᵛश्रुधि श्रृणु । यतः ᵛत्वाम् ᵛअध्वरे अहिंसात्मके यागे ᵛहवन्ते आह्वयन्ति ऋत्विजः अतः श्रुधि ॥ ह्वयतेः ' बहुलं छन्दसि ' इति संप्रसारणम्[2] ॥ ॥ ११ ॥

' प्र तव्यसीम् ' इति अष्टर्चं चतुर्थं सूक्तं दैर्घतमसम् । तथा चानुक्रान्तं–' प्र तव्यसीमष्टावाग्नेयं तु तत् त्रिष्टुबन्तम् ' इति । ' तु तत् ' इत्युक्तत्वात् इदमादिसूक्ताष्टकस्य अग्निर्देवता । अन्त्या त्रिष्टुप् शिष्टाः त्रिष्टुबन्तपरिभाषया जगत्यः । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । अग्निष्टोमे आग्निमारुते शस्त्रे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । 'अथ यथेतम् ' इति खण्डे सूत्रितं–'प्र तव्यसीं नव्यसीमापो हि ष्ठेति तिस्रः ' ( आश्व. श्रौ. ५. २० ) इति । दशरात्रस्य प्रथमेऽप्यहनि[3] जातवेदस्यनिविद्धानम् आश्वमेधिके मध्यमेऽहनि च निविद्धानम् । तथा च आचार्यातिदेशः–' ऐकाहिकान्युपसंशास्य तेषु निविदो दध्यादेवमेवाग्निमारुते ' ( आश्व. श्रौ. १०. १० ) इति ॥

**प्र तव्य॑सीं॒ नव्य॑सीं धी॒तिम॒ग्नये॑ वा॒चो म॒तिं सह॑सः सू॒नवे॑ भरे ।**

**अ॒पां नपा॒द्यो वसु॑भिः स॒ह प्रि॒यो होता॑ पृथि॒व्यां न्यसी॑दद्वृ॒त्विय॑ः ॥ १ ॥**

प्र । तव्य॑सीम् । नव्य॑सीम् । धी॒तिम् । अ॒ग्नये॑ । वा॒चः । म॒तिम् । सह॑सः । सू॒नवे॑ । भ॒रे ।

अ॒पाम् । नपा॑त् । यः । वसु॑ऽभिः । स॒ह । प्रि॒यः ।

होता॑ । पृ॒थि॒व्याम् । नि । असी॑दत् । ऋ॒त्विय॑ः ॥ १ ॥

अहम् ᵛअग्नये ᵛतव्यसीं तवीयसीम् अतिशयेन वर्धयित्रीम् ॥ तवतिर्वृद्ध्यर्थः सौत्रो धातुः । अस्मात् तृजन्तात् ' तुश्छन्दसि ' इति ईयसुन् । ' तुरिष्ठेमेयःसु ' इति तृलोपः । छान्दस ईकारलोपः॥ ᵛनव्यसीं नवतरामपूर्वां ᵛधीतिं यागलक्षणाम्[4] उक्तगुणकं कर्म ᵛप्र ᵛभरे प्रकर्षेण करोमि । तथा उक्तलक्षणां ᵛवाचो ᵛमतिं स्तुतिरूपं कर्म भरे । कीदृशायाग्नये । ᵛसहसः बलस्य ᵛसूनवे पुत्राय । किंच ᵛयः अग्निः ᵛअपां ᵛनपात् तासां नप्ता । ' अद्भ्यः ओषधयः ओषधीभ्योऽग्निः ' इति अग्नेर्नप्तृत्वम् । अथवा अपां न पातयिता वैद्युताग्निरूपेण प्रवर्षकत्वादिति भावः । तथा ᵛप्रियः यजमानस्य प्रीणयिता प्रियतमो वा तस्य ᵛहोता होमनिष्पादकः सोऽग्निः ᵛऋत्वियः प्राप्तकालः प्राप्तप्रदानसमयः सन् ᵛपृथिव्यां वेदिलक्षणायां ᵛवसुभिः निवासयोग्यैर्गवादिधनैः सहितः ᵛन्यसीदत् नितरां सीदति ॥

**स जाय॑मानः पर॒मे व्यो॑मन्या॒विर॒ग्निर॑भवन्मात॒रिश्व॑ने ।**

**अ॒स्य क्रत्वा॑ समिधा॒नस्य॑ म॒ज्मना॒ प्र द्यावा॑ शो॒चिः पृ॑थि॒वी अ॑रोचयत् ॥ २ ॥**

सः । जाय॑मानः । प॒र॒मे । विऽओ॑मनि । आ॒विः । अ॒ग्निः । अ॒भ॒व॒त् । मा॒त॒रिश्व॑ने ।

अ॒स्य । क्रत्वा॑ । स॒म्ऽइ॒धा॒नस्य॑ । म॒ज्मना॑ । प्र । द्यावा॑ । शो॒चिः । पृ॒थि॒वी इति॑ । अ॒रो॒च॒य॒त् ॥ २ ॥

---

१. क्ष-ज्ञ१-ञ-ट-उप उपेत्य । २. क्ष-ञ-ट-शपि संप्रसारणम् । ३. च-प्रथमेऽहनि । ४. च-ज्ञ-फ-यागलक्षणम् ।

vसः पूर्वोक्तः vअग्निः vजायमानः अरणीभ्यामुत्पद्यमानः काष्ठेषु वा प्रादुर्भूतः सन् तदानीमेव vपरमे उत्कृष्टे vव्योमनि विविधरक्षणवति वेदिदेशे vमातरिश्वने अन्तरिक्षसंचारिणे वायवे प्रथमम् vआविः vअभवत् प्रत्यक्षोऽभूत् । 'त्वमग्ने प्रथमो मातरिश्वन आविर्भव' ( ऋ. सं. १. ३१.३ ) इत्यादिश्रुत्यन्तरप्रसिद्धेः । वायुसंयोगात् प्रज्वलित इत्यर्थः । अथवा मातरि फलस्य निर्मातरि यज्ञे श्वसिति चेष्टते इति मातरिश्वा यजमानः । तदर्थम् । किंच vसमिधानस्य[1] इन्धनैः सम्यग्वर्धमानस्य अग्नेः[2] vमज्मना । बलनामैतत् । बलवता vक्रत्वा क्रतुना कर्मणा ज्वालनादिव्यापारेण[3] vशोचिः[4] vद्यावा vपृथिवी द्यां च पृथिवीं च vप्र vअरोचयत् प्रकर्षेणादीपयत् ॥ मध्ये शोचिःशब्दश्छान्दसः ॥ मज्मना क्रत्वा समिधानस्येति वा योज्यम् । प्रबलेन समिन्धनादिव्यापारेण समिध्यमानस्येत्यर्थः ॥

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः ।

भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते असंसन्तो अजराः ॥ ३ ॥

अस्य । त्वेषाः । अजराः । अस्य । भानवः । सुऽसंदृशः । सुऽप्रतीकस्य । सुऽद्युतः ।

भाऽत्वक्षसः । अति । अक्तुः । न । सिन्धवः । अग्नेः । रेजन्ते । असंसन्तः । अजराः ॥३॥

vअस्य स्तूयमानस्याग्नेः vत्वेषाः दीप्तयः vअजराः जरारहिताः अजीर्णाः[5] अविरता इत्यर्थः ॥ 'नञो जरमर°' इत्यादिना उत्तरपदाद्युदात्तत्वम् ॥ तथा vसुप्रतीकस्य शोभनमुखस्य vअस्य अग्नेः vभानवः रश्मयः । दीप्तेरुक्तत्वादत्र विस्फुलिङ्गा अवगन्तव्याः । ते च vसुसंदृशः सुष्ठु सम्यक् द्रष्टारः । सर्वतो व्याप्ता इत्यर्थः । vसुद्युतः सुष्ठु सर्वतो द्योतमानाः । तथा अस्य vअग्नेः vभात्वक्षसः । त्वक्ष इति बलनाम, 'त्वक्षः शर्धः' ( नि. २. ९. ६ ) इति बलनामसु पाठात् । भासमानबलाः । vअक्तुः इति रात्रिनामैतत्, 'अक्तुः ऊर्म्या' ( नि. १. ७. ४ ) इति तन्नामसूक्तत्वात् । द्वितीयार्थे प्रथमा । अक्तुं जगदञ्जकं नैशं तमः vअति अतिक्रम्य vसिन्धवः स्यन्दमानाः सर्वत्र व्याप्नुवन्तः vअससन्तः स्वव्यापारेषु अस्वपन्तोऽविरताः अत एव vअजराः vन vरेजन्ते न कम्पन्ते । दाहपाकादिषु[6] न चलन्ति न चाल्यन्ते वा अन्यैः । यद्वा । नशब्दो दृष्टान्तवचनः । भात्वक्षसो भा एव त्वक्षो बलं यस्य तादृशस्यादित्यस्य सिन्धवो न रश्मय इव । ते यथा स्यन्दनशीला व्याप्तिमन्तः अक्तुरति[7] अञ्जकं तमः अतिक्रम्य[8] अससन्तो रेजन्ते तद्वत् भात्वक्षसोऽस्याग्नेरुक्तलक्षणा दीप्तयोऽपि सर्वत्र रेजन्ते कम्पन्ते व्याप्नुवन्तीत्यर्थः ॥

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना ।

अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥४॥

यम् । आऽईरिरे । भृगवः । विश्वऽवेदसम् । नाभा । पृथिव्याः । भुवनस्य । मज्मना ।

अग्निम् । तम् । गीःऽभिः । हिनुहि । स्वे । आ । दमे । यः । एकः । वस्वः । वरुणः । न । राजति ॥४॥

---

१. त—यजमानस्य । २. ख-ज-ञ-फ—अस्य अग्नेः । ३. क्ष-ङ-ञ-झ-ञ-ट-त—ज्वालाचालनादिव्यापारेण । ४. क्ष-ङ-झ१-ञ-ट—शोचिः उत्पादितं तेजः । ५. ञ—अक्षीणाः ६. क्ष-ङ-झ१-ञ-ट—दाहपाकादिष्वपि । ७. क्ष-झ-ञ-ट—अक्तुरिति । ८. क्ष-ञ-ट—अतिक्रम्य अजराः ।

ᵛविश्ववेदसं सर्वधनम्। वेद इति धननाम, 'वेदः वरिवा' (नि. २. १०. ४) इति तन्नामसु पाठात्। तादृशं ᵛयम् अग्निं ᵛभृगवः भृगुगोत्रोत्पन्नाः पापस्य भर्जकाः ᵛपृथिव्याः वेद्याः। एकदेशे कृत्स्नशब्दः। यद्वा। 'एतावती वै पृथिवी' (तै. सं. २. ६. ४. ३) इत्यादिश्रुतेर्वेद्याः पृथिवीत्वम्। तस्या नाभौ उत्तरवेद्यां ᵛभुवनस्य भूतजातस्य ᵛमज्मना बलेन निमित्तेन ᵛआ आभिमुख्येन ᵛईरिरे ईरितवन्तः स्थापितवन्तः[1] ᵛतम् ᵛअग्निं ᵛस्वे स्वकीये ᵛदमे गृहे उत्तरवेद्यां ᵛगीर्भिः स्तुतिभिः ᵛआ ᵛहिनुहि प्रापुहि॥ 'हि गतौ वृद्धौ च'। 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' इति हेर्लुगभावः॥ ᵛयः अग्निः ᵛएकः मुख्यः सन् एक एव वा ᵛवस्वः वसुनो गवादिधनस्य ᵛराजति ईश्वरो भवति। प्रदातुमिति शेषः। राजति इत्यैश्वर्यकर्मा, 'क्षियति राजति' (नि. २. २१. ४) इति तन्नामसु पाठात्। तत्र दृष्टान्तः। ᵛवरुणो ᵛन वारक आदित्य इव। स यथा सर्वस्य[2] ईष्टे तद्वत्॥

**न यो वरा॑य म॒रुता॑मिव स्व॒नः सेने॑व सृ॒ष्टा दि॒व्या यथा॒शनिः॑।**
**अ॒ग्निर्जम्भै॑स्तिगि॒तैर॑त्ति॒ भर्व॑ति यो॒धो न शत्रू॒न्त्स वना॒ न्यृ॑ञ्जते॥ ५॥**

न। यः। वरा॑य। म॒रुता॑म्ऽइव। स्व॒नः। सेना॑ऽइव। सृ॒ष्टा। दि॒व्या। यथा॑। अ॒शनिः॑। अ॒ग्निः। जम्भैः॑। ति॒गि॒तैः। अ॒त्ति॒। भर्व॑ति। यो॒धः। न। शत्रू॑न्। सः। वना॑। नि। ऋ॒ञ्ज॒ते॥५॥

ᵛयः अग्निः ᵛवराय वरणाय निग्रहाय ᵛन[3] शक्यो न भवति[3]। तत्र दृष्टान्तत्रयमुच्यते। ᵛमरुतां ᵛस्वनः ᵛइव। स यथा अग्राह्यः[4] तद्वत्। तथा ᵛसृष्टा वैरिक्षयार्थं[5] प्रबलेन अतिसृष्टा ᵛसेनेव। सा यथा अन्यैः अनिरोध्या तद्वत्। तथा ᵛदिव्या दिवि भवा ᵛअशनिः ᵛयथा पतत्येव न निवार्यते तद्वत्। ईदृक् सामर्थ्यमस्तीति दर्शयति। अयम् ᵛअग्निः ᵛतिगितैः निशितैस्तीक्ष्णीभूतैः॥ अग्न्यविकारश्छान्दसः। ᵛजम्भैः दन्तैर्दन्तस्थानीयाभिर्ज्वालाभिः ᵛअत्ति अस्मद्विरोधिनो भक्षयति। तथा ᵛभर्वति हिनस्ति॥ 'भर्व हिंसायाम्'॥ यास्कस्त्वाह-'भर्वतिरत्तिकर्मा' (निरु. ९. २३) इति। यद्यपि अत्तिभर्वत्योः अदनमेवार्थः तथापि तदवान्तरभेदोऽवगन्तव्यः। तत्र दृष्टान्तः। ᵛयोधो ᵛन संप्रहर्ता शूर इव। स यथा ᵛशत्रून् भर्वति भक्षयति[6] तद्वत्। किंच ᵛसः अग्निः ᵛवना वनानि वृक्षादिसमूहान् ᵛन्यृञ्जते नितरां प्रसाधयति दहतीत्यर्थः। 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः॥

**कु॒विन्नो॑ अ॒ग्निरु॒चथ॑स्य॒ वीरस॒द्वसु॑ष्कु॒विद्वसु॑भिः॒ काम॑मा॒वर॑त्।**
**चोदः॑ कु॒वित्तु॑तु॒ज्यात्सा॒तये॒ धियः॒ शुचि॑प्रतीकं॒ तम॒या धि॒या गृ॑णे॥ ६॥**

कु॒वित्। नः॒। अ॒ग्निः। उ॒चथ॑स्य। वीः। अस॑त्। वसुः॑। कु॒वित्। वसु॑ऽभिः। काम॑म्। आ॒ऽवर॑त्। चोदः॑। कु॒वित्। तु॒तु॒ज्यात्। सा॒तये॑। धियः॑। शुचि॑ऽप्रतीकम्। तम्। अ॒या। धि॒या। गृ॒णे॥६॥

---

१. क्ष-ज-ट-स्थापितवन्तः। ईर गतौ। २. झ१-सर्वस्य वसुनः। ३. ङ-झ१-न शक्यो न भवति; च-फ-न शक्तो भवति; झ-त-शक्तो न भवति। ४. क्ष-ज-ट-अनिग्राह्यः; झ-सर्वैः अग्राह्यः। ५. क्ष-ङ-झ१-ज-ट-वैरिजयार्थम्। ६. क्ष-ङ-झ-झ-झ१-ज-ट-भक्षयति नाशयति।

अयम् अग्निः नः अस्माकम् उचथस्य उक्थस्य स्तोत्रस्य कुवित् बहुवारं वीः कामयिता असत् भवतु ॥ अस्तेर्लेटि अडागमः ॥ यद्वा । उचथस्य[1] एतन्नामकस्य महर्षेर्गोत्रप्रभवस्य नः इति संबन्धः । तथा वसुः वासयिता सर्वेषां वसुस्थानीयो वा वसुभिः वासयितृभिर्धनैः कामम् अत्यर्थमभिमतं वा कुवित् अतिप्रभूतम् आवरत् आवृणोतु । अभिमतप्रदानेन कामं निवर्तयत्वित्यर्थः ॥ वृणोतेर्लेटि अडागमः । छान्दसो विकरणस्य लुक् ॥ अयमग्निः चोदः अस्माकं कर्मसु प्रेरकः सन् धियः कर्माणि सातये लाभाय कुवित् बहु[2] तुतुज्यात् त्वरयतु प्रेरयतु[3] इत्यर्थः ॥ तुजिः प्रेरणार्थः । छान्दसः शपः श्लुः ॥ शुचिप्रतीकं शोभनावयवं शोभनज्वालं तम् अग्निम् अया धिया अनया स्तुतिरूपया प्रज्ञया गृणे उच्चारयामि स्तौमीत्यर्थः ॥

घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते ।
इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥ ७ ॥

घृतऽप्रतीकम् । वः । ऋतस्य । धूःऽसदम् । अग्निम् । मित्रम् । न । सम्ऽइधानः । ऋञ्जते ।
इन्धानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णाम् । उत् । ऊँ इति । नः । यंसते । धियम् ॥७॥

घृतप्रतीकं घृतोपक्रमं प्रयाजादिषु आज्यैर्हूयमानत्वात् । यद्वा । प्रतीकमङ्गम् । दीप्तज्वालमित्यर्थः । किंच वः युष्मत्संबन्धिनः ऋतस्य यज्ञस्य धूर्षदं धुरि निर्वहणे सीदन्तं यज्ञनिर्वाहकम् अग्निं मित्रं न मित्रमिव समिधानः इध्मैर्दीपयमानः ऋञ्जते प्रसाधयति । ऋञ्जतिः प्रसाधनकर्मा । एवम् इन्धानः सम्यग्दीप्यमानः अक्रः ज्वालासमिदादिभिराक्रान्तः अन्यैः अनाक्रान्तः[4] वा ॥ क्रमेश्छान्दसो डः ॥ विदथेषु[5] यज्ञेषु वेदयत्सु स्तोत्रेषु निमित्तभूतेषु दीद्यत् स्वयं दीप्यमानः अस्मदीयां धियं प्रज्ञां यागादिविषयां शुक्रवर्णां शुभ्रवर्णां निर्मलां ज्योतिष्टोमादि कर्म वा उदु यंसते उद्योजयत्येव[6] ॥ यमेर्लेटि अडागमः । सिप् ॥ उशब्दोऽवधारणे । धीरिति कर्मनाम, 'धीः शमी' (नि. २. १. २१) इति तन्नामसु पाठात् ॥

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः ।
अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥ ८ ॥

अप्रऽयुच्छन् । अप्रयुच्छत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः ।
अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥ ८ ॥

हे अग्ने अप्रयुच्छन् अस्मासु अप्रमाद्यन् ॥ 'युच्छ प्रमादे' । अविच्छिन्नप्रवृत्तिः सन् अप्रयुच्छद्भिः अप्रमाद्यद्भिः अनवधानरहितैः शिवेभिः मन्त्रकल्याणैः शग्मैः सुखकरैः पायुभिः रक्षणप्रकारैः नः

---

१. ख-च-ज-झ-त-फ-व—उचथस्य नः । २. झ—वहु यथा तथा । ३. झ१—कारयतु । ४. ख-च-ज-ण-त-न-व—अनुक्रान्तः । ५. ङ-च-झ१-ञ-ट—विदथेषु दुष्क्रान्तो वा । ६. क-क्ष—ख-फ—उद्योतयत्येव ।

अस्मान् ᵛपाहि रक्ष । किंच हे ᵛइष्टे सर्वैः एषणीयाग्ने ᵛजाः जायमानोऽस्माभिर्दीप्यमानः सन् ᵛअदब्धेभिः अहिंसितैः ᵛअदृपितेभिः केनचिदप्यपरिभूतैः ॥ 'दृप दृम्फ उत्क्लेशे'। तौदादिकः ॥ ᵛअनिमिषद्भिः निमेषरहितैः अनलसस्वभावैः ईदृशैः लक्षणैः[1] ᵛनः अस्मान् ᵛपरि परितः ᵛपाहि पालय । यद्वा । उपर्युपरि जायन्ते इति जाः । नो जाः अस्मत्संबन्धिनीः पुत्रपौत्रादिरूपाः प्रजाः परि पाहि परितो रक्ष । न केवलमस्मान् किंतु अस्मत्पुत्रपौत्रादीनपि रक्ष ॥　　॥ १२ ॥

'एति प्र होता' इति सप्तर्चं पञ्चमं सूक्तं दैर्घतमसं जागतम् । पूर्वत्र 'आग्नेयं तु तत्' इत्युक्तत्वात् इदमप्याग्नेयम् । तथा चानुक्रमणिका–'एति प्र सप्त जागतम्' इति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

**एति॒ प्र होता॑ व्र॒तम॑स्य मा॒यमो॒र्ध्वां॑ दधा॑नः॒ शुचि॑पेशस॒ं धिय॑म् ।**
**अ॒भि स्रुचः॑ क्रमते दक्षिणा॒वृतो॒ या अ॑स्य॒ धाम॑ प्रथ॒मं ह॒ निंस॑ते ॥ १ ॥**

एति॑ । प्र । होता॑ । व्र॒तम् । अ॒स्य॒ । मा॒यया॑ । ऊ॒र्ध्वाम् । दधा॑नः । शुचि॑ऽपेशसम् । धिय॑म् ।
अ॒भि । स्रुचः॑ । क्र॒म॒ते॒ । द॒क्षि॒णा॒ऽआ॒वृतः॑ । याः । अ॒स्य॒ । धाम॑ । प्र॒थ॒मम् । ह॒ । निंस॑ते ॥ १ ॥

अयं ᵛहोता होमनिष्पादकोऽध्वर्युः ᵛअस्य अग्नेः ᵛव्रतं हविष्प्रदानादिरूपं कर्म कर्तुं ᵛमायया कर्तव्यविशेषप्रज्ञया युक्तः सन् ᵛप्र ᵛएति प्रकर्षेण गच्छति होतुम् । मायेति प्रज्ञानाम, 'माया वयुनम्' ( नि. ३. ९. ९ ) इति तन्नामसु पाठात् । कीदृशोऽयम् । ᵛऊर्ध्वाम् उपर्यारूढां ᵛशुचिपेशसं शोभनरूपोपेताम् । पेश इति रूपनाम । ᵛधियं प्रज्ञां ᵛदधानः । 'आ[2] चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यति' इत्युक्तत्वात्[2] । आगत्य च ᵛदक्षिणावृतः प्रादक्षिण्येन वर्तमानाः ᵛस्रुचः जुह्वादीः ᵛक्रमते गृह्णाति । कीदृश्यः स्रुचः । ᵛयाः ᵛप्रथमं पात्रासादनकाले ᵛअस्य अग्नेः ᵛधाम स्थानं ᵛनिंसते ॥ 'निंस[3] चुम्बने इति धातुः ॥ चुम्बन्ति भजन्ते इत्यर्थः । प्रथममनुष्ठेयक्रमं बुद्ध्या प्रैति पश्चात् स्रुचः क्रमते इत्यर्थः । हशब्दः प्रसिद्धौ । यद्वा । होता देवानामाह्वाता अयमग्निः अस्य यजमानस्य व्रतं कर्म ज्योतिष्टोमादि प्रज्ञाविशेषेण युक्तः सन् एति । यज्ञदेशं प्रत्यागच्छति । कीदृशोऽयम् । ऊर्ध्वामूर्ध्ववर्ति शुचिपेशसं शोभनरूपोपेतं[4] धियं ज्वालाचलनादिरूपं[5] कर्म दधानः धारयमाणः । आगत्य च दक्षिणावृतः उक्तलक्षणाः स्रुचो घृतपूर्णा जुहूपभृदादिका अभि क्रमते आक्रमते। घृतं स्वीकर्तुं ज्वालाः प्रसर्पन्ति इत्यर्थः । याः स्रुचः प्रथमं पूर्वं हविरासादनकाले अस्याग्नेर्धाम स्थानं वेदिलक्षणं निंसते चुम्बन्ति प्राप्ताः । हशब्दः प्रसिद्धौ ॥ 'णिसि चुम्बने' । अदादित्वात् शपो लुक् । इदित्त्वात् नुम् ॥

---

१. क्ष-झ१-ञ-ट–रक्षणैः । २. क्ष-ङ-झ१-ञ-ट–आ चतुर्थात् कर्मणः त्वं नो अभि समीक्ष्य इदं करिष्ये इदं करिष्ये इत्युक्तत्वात् । ३. ख-च–णिसि; ४. क्ष-ङ-ञ-ट–शोभनरूपोपेताम् । ५. क्ष-ङ-झ१-ञ-ट–ज्वालाचालनादिरूपम् ।

**अभी मृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।**
**अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥ २ ॥**

अभि । ईम् । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य । सदने । परिऽवृताः ।
अपाम् । उपऽस्थे । विऽभृतः । यत् । आ । अवसत् ।
अध । स्वधाः । अधयत् । याभिः । ईयते ॥ २ ॥

ऋतस्य उदकस्य दोहनाः धाराः योनौ उत्पत्तिस्थाने देवस्य सदने द्योतमानस्य आदित्यस्य स्थाने परीवृताः तद्रश्मिभिः परितो व्याप्ताः सत्यः अभि अनूषत अभिनवा भवन्ति । आभवन्त्येव[1] स्तूयन्ते वा[1] । कदेत्यत आह । यत् यदा अपामुपस्थे उदकानामुत्सङ्गे अन्तः विभृतः विशेषेण ताभिर्धार्यमाणः सन् आवसत् आक्रम्य निवसत्ययमग्निः तदानीमित्यर्थः । अध अधुना स्वधाः अमृतोपमाः अपः अधयत् पिबति सर्वो लोकः । ता विशेष्यन्ते । याभिः सह ईयते अयमग्निः संगच्छते[2] वा भूमिं ता अधयत् । विद्युदात्मना उदकानि जगत् पाययते[3] इत्यग्नेः स्तुतिः ॥

**युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः ।**
**आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्त्समयंस्त सारथिः ॥ ३ ॥**

युयूषतः । सऽवयसा । तत् । इत् । वपुः । समानम् । अर्थम् । विऽतरित्रता । मिथः ।
आत् । ईम् । भगः । न । हव्यः । सम् । अस्मत् । आ ।
वोळ्हुः । न । रश्मीन् । सम् । अयंस्त । सारथिः ॥ ३ ॥

सवयसा समानवयस्कौ । वयःशब्देन सामर्थ्यं लक्ष्यते । समानसामर्थ्यौ तदित् तदानीमेव यदा प्रवृद्धो भवति तदानीमेव समानमर्थं समानप्रयोजनं[4] निष्पत्तिं[4] मिथः प्रत्येकं वितरित्रता भृशं तरन्तौ[5] होत्रध्वर्यू वपुः अग्नेः शरीरं युयूषतः स्वस्वव्यापारेण मिश्रयितुमिच्छतः । प्रैषानन्तरं याज्यादिपाठो होतुर्व्यापारः वषट्कारानन्तरं होमोऽध्वर्योरिति विभागः । अत्रेदमनुसंधेयम् । सवयसा समानवयस्कौ मिथः प्रत्येकं समानप्रयोजनं[6] सुखप्राप्तिं वितरित्रता विशेषेण तरितुमिच्छन्तौ ॥ तरतेर्यङ्लुगन्तात् शतरि दाधर्त्यादौ ( पा. सू. ७. ४. ६५ ) निपात्यते । द्विवचनस्य आकारः ॥ जायापती तद्वपुस्तदेव परस्परं[7] शरीरं[7] युयूषतः मिश्रयितुमिच्छतः परस्परमालिङ्गतः । तद्वदग्निं[8] साकं[8] होत्रध्वर्यू युयूषतः । आदीम् अनन्तरमेव हव्यः आहवनीयोऽग्निः सारथिः सरणशीलः सारथिवत् यज्ञात्मकस्य

---

१. क्ष-ङ-झ१-ञ-ट—आविर्भवन्ति आभिमुख्येन स्तूयन्ते वा । २. क्ष-ज्ञ-झ-झ१-ञ-ट—संगच्छते गच्छति । ३. क्ष-ञ-ट—पालयते । ४. क्ष-ञ-ट—समानप्रयोजनं यज्ञनिष्पत्तिम्; ङ-झ१—समानप्रयोजनयज्ञनिष्पत्तिम्; झ—समानप्रयोजननिष्पात्तिम् । ५. क्ष-ञ-ट—वितरन्तौ । ६. क्ष-ञ-ट—समानमर्थं समानप्रयोजनम् । ७. झ१—परस्परशरीरम् । ८. क्ष-ख-ङ-ज-ज्ञ-झ-झ१-ञ-ट-फ—तद्वदग्नेः साकम् ।

रथस्य निर्वाहको वा सन् vअस्मत् अस्माकं संबन्धिनः vरश्मीन् रश्मिवदायता घृतधाराः vआ सर्वतः vसमयंस्त सम्यक् स्वीकरोति । तत्र दृष्टान्तद्वयमुच्यते । vभगो[1] vन सर्वैः सेवनीय आदित्यः[1] स यथा सर्वतः पूजामादत्ते तद्वत् । vसारथिः[2] रथस्य यन्ता वोढुर्वाहकस्याश्वादेः रश्मीन् प्रग्रहानिव । तान् यथा स्वीकरोति तद्वदयमग्निरपि हवींषि समयंस्त ॥

यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा ।
दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा ॥ ४ ॥

यम् । ईम् । द्वा । सऽवयसा । सपर्यतः । समाने । योना । मिथुना । सम्ऽओकसा ।
दिवा । न । नक्तम् । पलितः । युवा । अजनि । पुरु । चरन् । अजरः । मानुषा । युगा ॥ ४ ॥

vयमीम् एनमग्निं vद्वा द्वौ vसवयसा समानवयस्कौ समानसामर्थ्यौ वा vसमाने vयोना योनौ फलस्योत्पत्तिस्थाने यज्ञे वर्तमानौ vमिथुना दम्पती इव एककार्योद्युक्तौ vसमोकसा समाननिवासौ देवयजनस्थानौ ईदृशौ होत्रध्वर्यू vसपर्यतः पूजयतः स्तुत्या हविष्प्रदानेन च प्रीणयतः[3] । कदेत्याह । vदिवा vन अहनीव vनक्तं रात्रावपि । सर्वदेत्यर्थः । एवं पूज्यमानोऽग्निः vपलितः पूर्वम् अङ्गारावस्थायां जीर्णोऽपि[4] समिन्धनानन्तरं vयुवा तरुणः तेजसा सर्वस्य मिश्रयिता वा vअजनि जायते । एवं जातोऽयं vमानुषा vयुगा मनोः संबन्धीनि युगानि जायापतिरूपाणि होत्रध्वर्युरूपाणि वा उद्दिश्य vपुरु vचरन् बह्वाज्यादिकं भक्षयन् vअजरः अजीर्णो जरारहितो वर्तते ॥

तमीं हिन्वन्ति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे ।
धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥ ५ ॥

तम् । ईम् । हिन्वन्ति । धीतयः । दश । व्रिशः । देवम् । मर्तासः । ऊतये । हवामहे ।
धनोः । अधि । प्रऽवतः । आ । सः । ऋण्वति । अभिव्रजत्ऽभिः । वयुना । नवा । अधित ॥ ५ ॥

vदेवं द्योतमानं vतम्[5] एनमग्निं[5] vदश vधीतयः दशसंख्याका अङ्गुलयः vव्रिशः विशः परस्परविश्लिष्टाः vहिन्वन्ति प्रीणयन्ति मथनकाले । तथा vमर्तासः मनुष्या वयं यजमानाः vऊतये रक्षणाय vहवामहे आह्वयामः । कोऽस्य विशेष इत्युच्यते । अयमग्निः vधनोः धनुषः सकाशात् vप्रवत vआ प्रकर्षेण गच्छतो बाणानिव । तान् यथा शत्रोरुपरि मुञ्चन्ति[6] ॥ आ इत्युपमार्थे ॥ तद्वत् vसः अग्निः धनुस्थानीयात् निजशरीरसकाशात् प्रवतः प्रकृष्टवेगवतो रश्मीन् vऋण्वति गमयति ॥ रिविर्गत्यर्थः । अत्र अन्तर्भावितण्यर्थोऽयम् । इदित्त्वात् नुम् । छान्दसं रेफस्य संप्रसारणम् । अधिशब्दोऽनर्थको धात्वर्थमात्रानुवादी ॥ किंच एवं प्रवृद्धोऽग्निः vअभिव्रजद्भिः अनुष्ठानार्थमभितः संचरद्भिः ज्ञेयम्[7] अर्थम्

१ क्ष-झ१-ञ-ट–भगो न सर्वैः सेवनीयः उपस्थ इव । स यथा रेतआदिकं स्वीकरोति तद्वत् । यद्वा भगो न आदित्य इव । २. क्ष-झ१-ञ-ट–किंच सारथिः । ३. क्ष-झ१-ञ-ट–प्रीणयतः मिथुनौ जायापती वा पूजयतः । ४. क्ष-ङ-झ-१-ञ-ट–शीर्णोऽपि । ५. झ१–तमीम् तमेनम् अग्निम् । ६. क्ष-झ१-ञ-ट–मुञ्चति । ७. क्ष-झ१-ञ-ट–आग्नेयम् ।

अभिगच्छद्भिर्वा तदर्थं ᵛनवा नवानि नूतनानि ᵛवयुना वयुनानि प्रज्ञानानि अनुष्ठानविषयाणि ᵛअधित धारयति ज्ञापयतीत्यर्थः । यद्वा । अभिव्रजद्भिराभिमुख्येन गच्छद्भिर्होत्रादिभिः क्रियमाणानि नवानि[1] वयुनानि प्रज्ञाविशिष्टानि स्तोत्रादीन्यधित धत्ते ॥ धाञश्छान्दसे लुङि ‘ स्थाघ्वोरिच ’ इति इत्वम् । उत्तरस्य सिचः कित्त्वम् । ‘ ह्रस्वादङ्गात् ’ इति सलोपः ॥

**त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपाइव त्मना ।**
**एनी त एते बृहती अभिश्रिया हिरण्ययी वक्करी बर्हिराशाते ॥ ६ ॥**

त्वम् । हि । अग्ने । दिव्यस्य । राजसि । त्वम् । पार्थिवस्य । पशुपाःऽइव । त्मना ।
एनी इति । ते । एते इति । बृहती इति । अभिऽश्रिया ।
हिरण्ययी इति । वक्करी इति । बर्हिः । आशाते इति ॥ ६ ॥

हे ᵛअग्ने ᵛत्वं ᵛदिव्यस्य दिवि भवस्य देवादेः विद्युदात्मना वृष्ट्यादेर्वा ᵛराजसि ईशिषे । ऐश्वर्यनामैतत् । तथा ᵛपार्थिवस्य पृथिवीसंबन्धिनो मनुष्यादेः राजसि ईश्वरो भवसि । किम् अन्यतन्त्रत्वेन नेत्याह । ᵛत्मना आत्मनैव स्वसामर्थ्येनैव । तत्र दृष्टान्तः ᵛपशुपाइव । पशुपालको यथा स्वसामर्थ्येनैव पशूनां निरोधनिर्गमनादिव्यापारेषु समर्थो भवति तद्वत् । एतद्दृष्टान्तेन अत्यन्तस्वातन्त्र्यमुक्तं भवति । किंच यस्मादेवं तस्मात् ᵛते तव ᵛबर्हिः यज्ञम् ᵛएते प्रसिद्धे ᵛएनी एतवर्णे शुभ्रे द्यावापृथिव्यौ ᵛआशाते अश्नुवाते व्याप्नुतः ॥ ‘ वर्णादनुदात्तात्॰ ’ ( पा. सू. ४. १. ३९) इति ङीप् तकारस्य नकारश्च ॥ कीदृश्यौ ते । ᵛबृहती महत्यौ अतिविस्तृते ᵛअभिश्रिया प्राप्तैश्वर्ये अभितः सेव्ये वा ᵛहिरण्ययी हितरमणीये ᵛवक्करी अतिकुशलं शब्दयन्त्यौ ॥ वचेर्वनिपि ‘ वनो र च ’ इति ङीब्रेफौ । छान्दसं कुत्वम् । ‘ वकि कौटिल्ये ’ इत्यस्मात् वा छान्दसो नुमभावः ॥ ईदृश्यौ द्यावापृथिव्यौ बर्हिः अश्नुवाते[2] ॥

**अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो ।**
**यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँइव क्षयः ॥ ७ ॥**

अग्ने । जुषस्व । प्रति । हर्य । तत् । वचः । मन्द्र । स्वधाऽवः । ऋतऽजात । सुक्रतो इति सुऽक्रतो ।
यः । विश्वतः । प्रत्यङ् । असि । दर्शतः । रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः ॥७॥

हे ᵛअग्ने ᵛजुषस्व सेवस्व हविः । प्रीतो भव वा स्तुत्या । किंच ᵛतत् तादृशं प्रियकरं[3] ᵛवचः वाग्रूपं स्तोत्रं ᵛप्रति ᵛहर्य पुनः कामयस्व । हे ᵛमन्द्र मादनशील स्तुत्य वा हे ᵛस्वधावः हविर्लक्षणान्नवन् हे ᵛऋतजात यज्ञार्थमुत्पन्न हे ᵛसुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा । ᵛयः ईदृशस्त्वं ᵛविश्वतः सर्वस्य स्थावरजङ्गमस्य जगतः ᵛप्रत्यङ्ङसि अभिमतः अनुकूलोऽसि न पराङ्मुखः इत्यर्थः । तथा ᵛदर्शतः दर्शनीयः सर्वैः । किंच ᵛसंदृष्टौ सम्यग्दर्शने ᵛरण्वः रमणशीलो रमयिता वा भवसि सर्वस्य ।

---

१. क्ष-ञ१-ञ-ट–नवा नवानि । २. क्ष-ङ-ञ१-ञ-ट–आशाते । ३. क्ष-ङ-ञ१-ञ-ट–तव प्रियकरम् ।

यद्वा । तव संदृष्टौ सत्यां सर्वो जनः ᵛक्षयः निवासवान् भवति । तत्र दृष्टान्तः । ᵛपितुमानिव । अतिप्रभूतान्नस्वामी यथा सर्वैः वस्तव्यः[1] गन्तव्यश्च भवति तद्वत् ॥ ॥ १३ ॥

'तं पृच्छत' इति पञ्चर्चं पञ्चमं सूक्तम् । अत्रानुक्रमणिका—'तं पृच्छत पञ्चान्त्या त्रिष्टुप्' इति । दीर्घतमा ऋषिः । पूर्वत्र 'आग्नेयं तु तत्' इत्युक्तत्वात् इदमप्याग्नेयम् । अन्त्या त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । प्रातरनुवाकाश्विनशस्त्रयोरस्य विनियोग उक्तः ॥

**तं पृच्छता स जंगामा स वेद स चिंकित्वाँ ईयते सा न्वीयते ।**

**तस्मिन्त्सन्ति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शुष्मिणस्पतिः ॥ १ ॥**

तम् । पृच्छत । सः । जगाम । सः । वेद । सः । चिकित्वान् । ईयते । सः । नु । ईयते ।

तस्मिन् । सन्ति । प्रऽशिषः । तस्मिन् । इष्टयः । सः । वाजस्य । शवसः । शुष्मिणः । पतिः ॥ १ ॥

हे यजमानाः ᵛतम् अग्निं ᵛपृच्छत । यत्स्वर्गादिविषयं प्रष्टव्यमस्ति तत् । तस्यैव प्रष्टव्यत्वे अतिशयमाह । ᵛस ᵛजगाम स सर्वत्र गच्छति । अत एव ᵛस ᵛवेद स च प्रष्टव्यं जानाति । किमितरसाधारण्येन नेत्याह । ᵛस ᵛचिकित्वान् स एव चेतनावान् । स विशेषज्ञ इत्यर्थः । सः[2] एव ᵛईयते ज्ञेयसकाशं गच्छति । पुनर्गतिरेव विशेष्यते । ᵛसः सोऽग्निरेव ᵛनु क्षिप्रम् ᵛईयते । यत्[3] यजमानस्य ज्ञेयमस्ति तमर्थं ज्ञातुं शीघ्रमेव गच्छतीत्यर्थः[3] । यद्वा । ज्ञानार्थम्[4] ईयते[4] सेव्यते । तथा[5] शीघ्रमनुसेव्यते[5] । यस्मादयमुक्तरूपः तस्मात्तमेव पृच्छतेत्यर्थः । तत्र अपेक्षिताः[6] कामाः सन्तीत्याह । ᵛतस्मिन् अग्नौ ᵛप्रशिषः प्रशासनानि नियमनसामर्थ्यानि ᵛसन्ति । असाध्यं नियम्यापि साधयितुं शक्त इत्यर्थः । किंच ᵛतस्मिन् एवाग्नौ ᵛइष्टयः एष्टव्या भोगाः सर्वफलसाधका यागा वा सन्ति । किंच ᵛसः अग्निः ᵛवाजस्य अन्नस्य ᵛशवसः बलस्य च ᵛपतिः पालयिता दाता । किंच ᵛशुष्मिणः बलवतो राजादेरपि पतिः स्वामी । यस्मादयं महानुभावस्तस्मात्तमेव पृष्ट्वा पुरुषार्थं साधयतेति ॥

**तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत् ।**

**न मृष्यते प्रथमं नापरं वचोऽस्य क्रत्वा सचते अप्रदृपितः ॥ २ ॥**

तम् । इत् । पृच्छन्ति । न । सिमः । वि । पृच्छति । स्वेनऽइव । धीरः । मनसा । यत् । अग्रभीत् ।

न । मृष्यते । प्रथमम् । न । अपरम् । वचः । अस्य । क्रत्वा । सचते । अप्रऽदृपितः ॥ २ ॥

पूर्वमन्त्रेऽग्निं पृच्छतेत्युक्तम् । अत्र तु सोऽनुनयेन प्रष्टव्यः इत्याह । ᵛतमित् तमेवाग्निं ᵛपृच्छन्ति स तु नान्यं पृच्छति प्रश्नसमयेऽपि । ᵛसिमः सर्वजनः ᵛन ᵛवि ᵛपृच्छति विपरीतं न पृच्छति ।

---

१. झ१–स्तव्यः । २. क्ष-ङ-झ१-ञ-ट–किंच सः । ३. क्ष-ङ-ज्ञ-झ-झ१-ञ-ट–यजमानस्य जिज्ञासितमर्थं ज्ञातुं शीघ्रमेव गच्छतीत्यर्थः । ४. झ–ज्ञानार्थिभिरीयते । ५. झ–नु शीघ्रम् । ६. क्ष-ङ-झ१-ञ-ट–अस्मदपेक्षिताः ।

पृष्टोऽपि <sup>v</sup>धीरः धीमानयं <sup>v</sup>स्वेनेव <sup>v</sup>मनसा । इवशब्दः एवार्थे । स्वकीयैव बुद्ध्या <sup>v</sup>यत् यत्कार्यम् <sup>v</sup>अग्रभीत् वदामीत्यादत्ते[1] तदेव प्रतिब्रूते न तु प्रश्नानुकूलम् । स्वतन्त्रेश्वर इत्युक्तं भवति । यद्वा । प्रष्टा धीमान्[2] स्वेन[3] मनसा वाचा वाच्यं[3] विचार्य यदग्रभीत् यद्वाक्यं वक्तव्यत्वेन स्वीकुर्यात् तदेवाग्निं पृच्छति न तु बहु भाषते इत्यर्थः । परवाक्यासह्यत्वमाह । अयमग्निः <sup>v</sup>प्रथमं <sup>v</sup>वचः स्ववाक्यात्पूर्वभावि वचनं <sup>v</sup>न <sup>v</sup>मृष्यते न सहते । तथा <sup>v</sup>अपरं वचः स्वोक्त्यनन्तरभावि प्रतिवचनं <sup>v</sup>न मृष्यते । यस्मादयमेवंविधस्तस्मात् <sup>v</sup>अप्रदृपितः अप्रदृप्तः यद्वा तेन शिक्षितोऽनुद्दण्डः सर्वो लोकः <sup>v</sup>अस्य महानुभावस्याग्नेः <sup>v</sup>क्रत्वा क्रतुना रक्षणादिकर्मणा सह <sup>v</sup>सचते संगच्छते जीवतीत्यर्थः ॥

तमिद्गच्छन्ति जुह्व१स्तमर्वतीर्विश्वान्येकः शृणवद्वचांसि मे ।
पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरादत्त सं रभः ॥ ३ ॥

तम् । इत् । गच्छन्ति । जुह्वः । तम् । अर्वतीः । विश्वानि । एकः । शृणवत् । वचांसि । मे ।
पुरुऽप्रैषः । ततुरिः । यज्ञऽसाधनः । अच्छिद्रऽऊतिः । शिशुः । आ । अदत्त । सम् । रभः ॥ ३ ॥

<sup>v</sup>जुह्वः अस्मदीया जुहूपभृदादयः <sup>v</sup>तमित् तमेवोद्दिश्य आज्यपूर्णाः सत्यः <sup>v</sup>गच्छन्ति प्रीणयितुम् । यद्वा । हूयन्ते इति जुह्वः आहुतयः सोमादिरूपाः । अथवा जुह्वादिषु स्थितानि आज्यानि अपि आश्रयाश्रयिणोः[4] अभेदेन जुह्वः इत्युच्यन्ते ' मञ्चाः क्रोशन्ति ' इतिवत् । ता अपि तमेव गच्छन्ति अस्य सर्वदेवतात्मकत्वात् । अत्रैव इतरदेवतार्थमपि हूयमानं[5] च[5] इति भावः । किंच <sup>v</sup>अर्वतीः प्राप्तिमत्यः स्तुतयः <sup>v</sup>तम् इत् तमेवाग्निं गच्छन्ति सर्वदेवतात्मकत्वादेव । सः[6] एव <sup>v</sup>एकः अयमग्निः <sup>v</sup>विश्वानि <sup>v</sup>मे मदीयानि <sup>v</sup>वचांसि स्तोत्ररूपाणि <sup>v</sup>शृणवत् शृणोति । अग्नेः सर्वदेवतात्मकत्वं तैत्तिरीया आहुः—' ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः ' ( तै. सं. ६. २. २. ६ ) इति । तथा अत्रैव पुरस्तादाम्नास्यते—' त्वमग्ने वरुणो जायसे यत्त्वं मित्रः ' ( ऋ. सं. ५. ३. १ ) इत्यादि[7] । कोऽस्य विशेषः इत्युच्यते । <sup>v</sup>पुरुप्रैषः बहुप्रैषभाक् । यद्वा । बहुप्रेषणः । सर्वस्याज्ञापयितेत्यर्थः । <sup>v</sup>ततुरिः तारयिता ॥ तरतेः अन्तर्भावितण्यर्थात् ' आदृगमहनः० ' इति किन्प्रत्ययः । ' बहुलं छन्दसि ' इति उत्वम् ॥ <sup>v</sup>यज्ञसाधनः यज्ञसाधकः अग्न्यधीनत्वाद्यज्ञस्य । <sup>v</sup>अच्छिद्रोतिः अविच्छिन्नरक्षणः <sup>v</sup>शिशुः शिशुवत्प्रियकारी शोचयिता वा शत्रूणाम् । एवंभूतोऽग्निः <sup>v</sup>सं <sup>v</sup>रभः यज्ञादिसंरम्भवान् सन् <sup>v</sup>आदत्त आदत्ते हविरादिकं स्वीकरोति ॥

उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः ।
अभि श्वान्तं मृशते नान्द्ये मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥ ४ ॥

उपऽस्थायम् । चरति । यत् । सम्ऽआरत । सद्यः । जातः । तत्सार । युज्येभिः ।
अभि । श्वान्तम् । मृशते । नान्द्ये । मुदे । यत् । ईम् । गच्छन्ति । उशतीः । अपिऽस्थितम् ॥ ४ ॥

---

१. क्ष-ज्ञ१-ञ-ट—तदेवादत्ते । २. क्ष-ङ-ज्ञ-झ-ञ-ट—धीरो धीमान् । ३. क्ष-झ-ञ-ट—स्वेनेव मनसा वाच्याऽवाच्यम् । ४. क्ष-ञ-ट—आश्रयाश्रितयोः । ५. क्ष-ङ-झ-ज्ञ१-ञ-ट—हूयमानत्वात् । ६. क्ष-ञ-ट—अतः । ७. क्ष-ज्ञ१-ञ-ट—इति ।

ᵛयत् यदा अध्वर्युः ᵛउपस्थायं ᵛचरति उपस्थायोपस्थाय अनुतिष्ठति उत्पत्त्यनुकूलव्यापारं करोति। कदेत्याह। यत्[1] ᵛसमारत समागच्छत मथनेन आविरभवत् ॥ ‘समो गम्यृच्छि०’ इति अर्तेः आत्मनेपदम् ॥ ᵛसद्यः तदानीमेव ᵛजातः उत्पन्नः सन् ᵛयुज्येभिः योक्तुं संबद्धुं समर्थैः फलैः मिश्रयितुमर्हैस्तेजोभिर्वा युक्तः सन् ᵛतत्सार अरण्योर्गूढः सन् चचार। यद्वा। युज्येभिरश्वैर्जातमात्र एव सर्वत्र संचचार ॥ ‘त्सर छद्मगतौ’। लिटि णलि रूपम् ॥ ०एवं प्रवृद्धोऽयं ᵛश्रान्तं श्रान्तं शान्तं वा यजमानं ᵛनान्द्ये नन्दनीये कर्मणि निमित्तभूते सति ᵛमुदे तस्य संतोषाय ᵛअभि ᵛमृशते अभिमर्शनं करोति। फलप्रदानेनेति भावः। यथा लोके गुर्वादिः श्रान्तं[2] शिष्यादिकं स्पृशति तद्वत्। कदेति चेत् उच्यते। ᵛयत् यदा ᵛअपिष्ठितं व्याप्य वर्तमानम् ᵛईम् एनमग्निम् ᵛउशतीः कामयमाना आज्यधाराः स्तुतयो वा ᵛगच्छन्ति प्राप्नुवन्ति तदा अभि मृशते ॥

**स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि।**
**व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥ ५ ॥**

सः। ईम्। मृगः। अप्यः। वनर्गुः। उप। त्वचि। उपऽमस्याम्। नि। धायि।
वि। अब्रवीत्। वयुना। मर्त्येभ्यः। अग्निः। विद्वान्। ऋतऽचित्। हि। सत्यः ॥ ५ ॥

ᵛस ᵛईं स एवाग्निः ᵛउपमस्याम् उपमायामुपमास्पदायां ᵛत्वचि ओषध्यादिभिराच्छादितायां वेद्याम् ᵛउप ᵛनि ᵛधायि उपस्थाप्यते[3] उत्तरत्रोपभोगाय। कीदृशः सः। ᵛमृगः मार्जयिता अन्वेषणशीलो वा। ‘मृगो मार्ष्टेर्गतिकर्मणः’ ( निरु. १.२० ) इति यास्कः। ᵛअप्यः आप्यो गन्तव्यः। अपः कर्म तत्र साधुर्वा। ᵛवनर्गुः वनगामी॥ ऋच्छतेर्गमेः च[4] इदं रूपम्। यद्वा। गमेरेव। उपपदस्य रुडागमश्छान्दसः॥ एवंभूतः अग्निः ᵛमर्त्येभ्यः मरणधर्मभ्यो यजमानादिरूपेभ्यः वयुनानि[5] प्रज्ञानानि अनुष्ठेयज्ञानानि ᵛव्यब्रवीत् विशेषेण ब्रवीति उपदिशति। वयुनमिति प्रज्ञानाम, ‘वयुनम् अभिख्या’ (नि. ३. ९. १०) इति तन्नामसु पाठात्। ईदृक् सामर्थ्यमस्तीति दर्शयति। अयम् ᵛअग्निर्विद्वान् सर्वज्ञः ᵛऋतचित् यज्ञस्योदकस्य वा चेतिता[6] ज्ञाता ᵛसत्यः। सत् क्रियमाणं कर्म। तत्र साधुः। सत्सु[7] भवो वा। सत् फलं तदर्हतीति वा। सम्यक्फलप्रद इत्यर्थः। यस्मादयमुक्तसामर्थ्योपेतः तस्मात् प्रज्ञोपदेशो युक्तः। हिशब्दः प्रसिद्धौ ॥ ॥ १४ ॥

‘त्रिमूर्धानम्’ इति पञ्चर्चं षष्ठं सूक्तं दैर्घतमसम् आग्नेयम्, पूर्वत्र ‘आग्नेयं तु तत्’ इत्युक्तत्वात्। ‘त्रिमूर्धानम्’ इत्यनुक्रमणिका। प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि इदमादिसूक्तत्रयस्य विनियोगः ‘अथैतस्याः’ इति खण्डे सूत्रितं–‘त्रिमूर्धानमिति त्रीणि’ ( आश्व. श्रौ. ४. १३ ) इति॥

---

१. क्ष-ङ-ञ-ट–यत् यदा । २. क्ष-ञ-ट–शान्तम् । ३. क्ष-झ१-ञ-ट–निधिवत् उपस्थाप्यते । ४. क्ष-ङ-झ१-ञ-ट– वा । ५ क्ष-ङ-झ-झ१-ञ-ञ-ट–वयुना वयुनानि । ६. झ–चेतयिता । ७. क्ष-झ१-ञ-ट–तत्र ।

त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥ १ ॥

त्रिऽमूर्धानम् । सप्तऽरश्मिम् । गृणीषे । अनूनम् । अग्निम् । पित्रोः । उपऽस्थे ।
निऽसत्तम् । अस्य । चरतः । ध्रुवस्य । विश्वा । दिवः । रोचना । आपप्रिऽवांसम् ॥ १ ॥

अनया अग्निर्यज्ञरूपेण स्तूयते । ^v^त्रिमूर्धानं सवनत्रयरूपमूर्धत्रयोपेतम् ॥ ' द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ' इत्युत्तरपदान्तोदात्तत्वम् ॥ किंच ^v^सप्तरश्मिं नियामकसप्तच्छन्दोयुक्तम् ^v^अनूनम् अविकलं संपूर्णफलम् ^v^अग्निम् अग्निसाध्यम् अङ्गनादिगुणयुक्तं वा ^v^पित्रोरुपस्थे द्यावापृथिव्योरुत्सङ्गे ^v^निषत्तं निषण्णम् । मध्ये वर्तमानमित्यर्थः । भूमिस्थद्रव्येण द्युलोकस्थदेवताभिश्च साध्यत्वादिति यावत् । किंच ^v^ध्रुवस्य निश्चलस्य[1] ^v^चरतः हविर्भक्षयतः ^v^अस्य अग्नेः संबन्धिनं यज्ञं ^v^दिवः द्युलोकादागतानि विश्वानि[2] रोचनानि[2] देवविमानानि ^v^आपप्रिवांसं सर्वतः पूरयितारं ^v^गृणीषे गृणीहि स्तुहि । यद्वा अयमग्निरेवोच्यते । त्रिमूर्धवदत्र[3] क्षित्यन्तरिक्षद्युलोकाख्यस्थानत्रयोपेतम् । लोकत्रयव्याप्तमित्यर्थः । गार्हपत्यादिस्थानत्रयवर्तिनं[4] वा । सप्तरश्मिं सप्तज्वालम् अनूनम् अन्यूनं पित्रोः द्यावापृथिव्योरुपस्थे उत्सङ्गे निषत्तम् ॥ ' नसत्तनिषत्त° ' इति निपातनात् निष्ठानत्वाभावः ॥ निषण्णम् आपप्रिवांसं सर्वतः पूरयन्तं कामानाम् उक्तलक्षणविशिष्टमग्निं[5] गृणीषे गृणीहि स्तुहि । किंच चरतः सर्वत्र ज्वालाभिर्गच्छतो ध्रुवस्य धृतत्वात्[6] अविचलितस्य दिवो द्योतमानस्य अस्य अग्नेः विश्वा सर्वाणि रोचना रोचमानानि तेजांसि सर्वत्र व्याप्नुवन्तीति शेषः । ईदृशमग्निं स्तुहि इति अन्तरात्मनः[7] प्रैषः ॥

उक्षा महाँ अभि ववक्ष एने अजरस्तथावितऊतिर्ऋष्वः ।
उर्व्याः पदो नि दधाति सानौ रिहन्त्यूधो अरुषासो अस्य ॥ २ ॥

उक्षा । महान् । अभि । ववक्षे । एने इति । अजरः । तस्थौ । इतःऽऊतिः । ऋष्वः ।
उर्व्याः । पदः । नि । दधाति । सानौ । रिहन्ति । ऊधः । अरुषासः । अस्य ॥ २ ॥

^v^उक्षा सेक्ता । फलप्रदानसमर्थः[8] इत्यर्थः । अत एव ^v^महान् महिम्ना स्वरूपेण उद्धृत्तवृषभसदृशः अयमग्निः ^v^एने द्यावापृथिव्यौ ^v^अभि अभिक्रम्य व्याप्य ^v^ववक्षे वहति व्याप्नोतीत्यर्थः ॥ वहतेर्लेटि छान्दसः शपः श्लुः । ' लोपस्त आत्मनेपदेषु ' इति तलोपः । ' सिब्बहुलम्° ' इति सिप् ॥ वृष्ट्यादिप्रदानेन हविर्वहनेन च लोकद्वयस्य वासिनः[9] देवान् मनुष्यांश्च रक्षतीत्यर्थः । किंच अयम् ^v^अजरः जरारहितः ^v^ऋष्वः महान् पूज्यः । महन्नामैतत् । ' ऋष्वः उक्षः ' ( नि. ३. ३. ३ ) इति

---

१. क्ष-झ१-ञ-ट—निश्चलस्य नियतस्य । २. झ—विश्वा रोचना विश्वानि रोचनानि; झ१—विश्वा रोचनानि । ३. क्ष-ङ-ज्ञ-झ-ञ-ट—त्रिमूर्धानं मूर्धवत् उन्नतक्षित्यन्तरिक्ष°; क-ज-ण-न—त्रिमूर्धानं मूर्धवदत्र । ४. क्ष-ङ-ञ-ट—उत्तमगार्हपत्यादिस्थानत्रयवर्तिनम् । ५. क्ष-ङ-ञ-ट—उक्तगुणविशिष्टमग्निम् । ६. क्ष-ञ-ट—नित्यं धृतत्वात् । ७. क्ष-ङ-ञ-ट—अन्तरात्मानं प्रति । ८. ख-च-फ—फलप्रदाता । ९. क-ज-झ-ण-न—लोकद्वयनिवासिनः ।

तन्नामसु पाठात्। तथा ᵛइतऊतिः प्राप्तरक्षणः सन् ᵛतस्थौ स्थितो वर्तते। यद्वा। उक्तगुणोऽयम् इतऊतिः इत एव गमनवान् अस्मद्देवयजनाभिमुखगमनवान् तस्थौ वर्तते। तदनन्तरम् ᵛउर्व्याः विस्तृताया भूम्याः ᵛसानौ समुच्छ्रिते प्रदेशे वेदिलक्षणे ᵛपदो ᵛनि ᵛदधाति पदानि स्थापयति करोति। किंच ᵛअस्य अग्नेः ᵛअरुषासः[1] अरुषा आरोचनाः[1] ᵛऊधः ऊधःस्थानीयमन्तरिक्षं ᵛरिहन्ति लिहन्ति। यद्वा। अस्य ऊधः ऊधःस्थानीयं यज्ञमरुषास आरोचनाः[2] ब्रह्मवर्चसेन यजमाना रिहन्ति अभिमतस्वर्गादीनि लिहन्ति॥

समानं वत्समभि संचरन्ती विष्वग्धेनू वि चरतः सुमेके।
अनपवृज्याँ अध्वनो मिमाने विश्वान्केताँ अधि महो दधाने॥ ३॥

समानम्। वत्सम्। अभि। संचरन्ती इति सम्ऽचरन्ती। विष्वक्।
धेनू इति। वि। चरतः। सुमेके इति सुऽमेके॥
अनपऽवृज्यान्। अध्वनः। मिमाने इति। विश्वान्। केतान्। अधि। महः। दधाने इति॥३॥

ᵛसमानम् एकमेव ᵛवत्सं वत्सस्थानीयं पुत्रवत् हर्षहेतुम् अग्निम् अभिमुखं[3] ᵛसंचरन्ती संचरन्त्यौ[3] द्वे ᵛधेनू अग्निहितकरणेन[4] प्रीणयित्र्यौ[5] पत्नीयजमानलक्षणे धेनू ᵛविष्वक् ᵛवि ᵛचरतः संचरतः। स्तनपानादिसदृशेन्धनप्रक्षेपसंमार्जनादिना सम्यग्वर्धयतः इत्यर्थः। कीदृश्यौ ते ᵛसुमेके शोभनकर्माणौ शोभनमेहने वा परिचरणकुशले इत्यर्थः। किंच ᵛअनपवृज्यान् अपवर्जनीयरहितान्॥ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्॥ ᵛअध्वनः मार्गान् अग्नेः प्रान्तप्रदेशान् केशाद्यमेध्यरहितान् ᵛमिमाने संपादयित्र्यौ। किंच ᵛविश्वान्केतान् सर्वाणि प्रज्ञानानि प्रवर्धनविषयाणि ᵛमहः महान्ति ᵛअधि अधिकं ᵛदधाने धारयन्त्यौ। ईदृश्यौ अध्वर्युयजमानरूपे जायापतिरूपे वा धेनू विष्वग्विचरतः॥

धीरासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम्।
सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन्॥ ४॥

धीरासः। पदम्। कवयः। नयन्ति। नाना। हृदा। रक्षमाणाः। अजुर्यम्।
सिसासन्तः। परि। अपश्यन्त। सिन्धुम्। आविः। एभ्यः। अभवत्। सूर्यः। नॄन्॥ ४॥

ᵛधीरासः धीरा धीमन्तः प्रयोगज्ञा अध्वर्य्वादयः ᵛअजुर्यम् अजर्यम् अजीर्णम्[6] एनमग्निं ᵛपदं स्थानं वेदिलक्षणं ᵛनयन्ति प्रापयन्ति मथनदेशात्[7] गार्हपत्याद्वा। अथवा वक्ष्यमाणलक्षणा यजमानादयः पदमास्पदं सर्वकामानाम् आस्पदम् एनं गमयन्ति। कीदृशास्ते। ᵛकवयः क्रान्तदर्शिनो मेधाविनः

---

१. क्ष-ङ-झ१-ञ-ट—अरुषासः आरोचमानाः। २. क्ष-ङ-ञ-ट—आरोचमानाः। ३. क्ष-झ१-ञ-ट—अभि संचरन्ती अभि अभिमुखं संचरन्त्यौ सम्यक् तोषयन्त्यौ। ४. क्ष-झ१-ञ-ट—अग्निं हुतकरणेन। ५. झ१—प्रीणयन्त्यौ। ६. क्ष-ङ-झ१-ञ-ट—अक्षीणम्। ७. झ—मन्थनदेशात्।

अनूचाना वा । 'ये वा अनूचानास्ते कवयः' (ऐ. ब्रा. २. २) इति श्रुतेः । किंच नाना हृदा बहुप्रकारया बुद्ध्या रक्षमाणाः धारयमाणाः । किंच एवंरूपास्ते सिन्धुं स्यन्दमानं यज्ञद्वारा फलानि स्रवन्तम् अग्निं[1] सिषासन्तः संभक्तुमिच्छन्तः।। सनतेः सनि 'सनीवन्तर्ध°' इति विकल्पनात् इडभावः। 'जनसनखनाम्°' इति आत्वम् ॥ पर्यपश्यन्त परितः पश्यन्ति । शुश्रूषन्त इत्यर्थः । किंच सूर्यः सर्वस्य प्रसविता अयमग्निः एभ्यः एवं कुर्वद्भ्यः नॄन् नृभ्यो नेतृभ्यः आविः अभवत् तेषामनुग्रहेण प्रत्यक्षोऽभवत् ॥ नॄनित्यत्र वचनव्यत्ययः[2] ।। नॄन् प्राणिनोऽनुग्रहीतुमिति वा योज्यम् ।।

दि॒दृ॒क्षेण्यः॒ परि॑ का॒ष्ठासु॒ जेन्य॑ ई॒ळेन्यो॑ म॒हो अर्भा॑य जी॒वसे॑ ।
पु॒रु॒त्रा यदभ॑व॒त्सूरहै॑भ्यो॒ गर्भे॑भ्यो म॒घवा॑ वि॒श्वद॑र्शतः ॥ ५ ॥

दि॒दृ॒क्षेण्यः॑ । परि॑ । काष्ठा॑सु । जेन्यः॑ । ई॒ळेन्यः॑ । म॒हः । अर्भा॑य । जी॒वसे॑ ।
पु॒रु॒ऽत्रा । यत् । अभ॑वत् । सूः । अह॑ । ए॒भ्यः॒ । गर्भे॑भ्यः । म॒घऽवा॑ । वि॒श्वऽद॑र्शतः ॥५॥

अयमग्निः काष्ठासु परस्परं क्रान्त्वा वर्तमानासु दशसु दिक्षु दिदृक्षेण्यः। अनुग्रहयुक्त्या दर्शनयुक्तः[3] भवति । यद्वा । द्रष्टुमेष्टव्यो दर्शनेच्छाविषयभूतः ॥ दृशेः सनन्तात् 'कृत्यार्थे तवैकेन्केन्य°' इति केन्यप्रत्ययः ॥ अत एव जेन्यः सर्वत्र प्रादुर्भवनशीलो भवति जयशीलो वा । किंच प्रदानसमये ईळेन्यः स्तुत्यो भवति । किमर्थमेवम् । महः महतो देवादेः अर्भाय अर्भकस्याल्पस्य यजमानादेर्वा जीवसे जीवनाय । हविर्वहनेन धनप्रदानेन[4] इति विवेकः । तत्रोपपत्तिमाह । यत् अह यस्मात् खलु पुरुत्रा[5] बहुषु देशेषु ॥ 'देवमनुष्य°' इत्यादिना त्राप्रत्ययः ॥ मघवा हविर्लक्षणान्नवान् विश्वदर्शतः सर्वविषयद्रष्टव्यवानयमग्निः एभ्यो गर्भेभ्यः ॥ षष्ठ्यर्थे चतुर्थी ।। एषामृत्विजां गर्भवच्छिशुवदत्यन्तरक्षणीयानां सूः अभवत् प्रसविता उत्पादयिता अभवत् भवति । तस्मात् नाना हृदा रक्षमाणाः कवयः पदं नयन्तीति पूर्वत्र संबन्धः ॥ ॥ १५ ॥

'कथा ते' इति पञ्चर्चं सप्तमं सूक्तं दैर्घतमसमाग्नेयं त्रैष्टुभम् । 'कथा' इत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोरस्य सूक्तस्य विनियोगः 'त्रिमूर्धानमिति त्रीणि' इत्यनेनोक्तः ॥

क॒था ते॑ अग्ने शु॒चय॑न्त आ॒योर्द॑दा॒शुर्वाजे॑भिराशुषा॒णाः ।
उ॒भे यत्तो॒के तन॑ये॒ दधा॑ना ऋ॒तस्य॒ साम॑न्र॒णय॑न्त दे॒वाः ॥ १ ॥

क॒था । ते॒ । अ॒ग्ने॒ । शु॒चय॑न्तः । आ॒योः । द॒दा॒शुः । वाजे॑भिः । आ॒शु॒षा॒णाः ।
उ॒भे इति॑ । यत् । तो॒के इति॑ । तन॑ये । दधा॑नाः । ऋ॒तस्य॑ । साम॑न् । र॒णय॑न्त । दे॒वाः ॥१॥

हे अग्ने ते तव संबन्धिनो रश्मयः शुचयन्तः दीप्तिं सर्वत्र चक्षाणाः प्रकटयन्तः आशुषाणाः आशु शीघ्रं संभक्तारः आशून् संभक्तारो वा । वाय्वादेरपि शीघ्रं संभक्तार इत्यर्थः । यद्वा । समन्तात्

---

1. क्ष-ञ-ट—इममग्निम् । 2. क—विभक्तिव्यत्ययः । 3. क्ष-झ१-ञ-ट—दर्शनशीलः । 4. क्ष-ङ-झ१-ञ-ट—वरप्रदानेन । 5. क्ष-ञ-ट—अयं पुरुत्रा ।

शोषयितारः । यद्वा । सर्वं व्याप्नुवन्तः ॥ अश्नोतेर्लिटः कानच् । व्यत्ययेन उप्रत्ययः सिच् च इति द्विविकरणता । आङ्पूर्वात् अन्तर्भावितण्यर्थात् शुषेः शानचि छान्दसः शपो लुक् । आशुशब्दोपपदात् सनतेः कर्मणि अण् ॥ ईदृशा रश्मयः ᵛवाजेभिः अन्नैः सहितम् ᵛआयोः आयुरायुष्यम् ॥ कर्मणि षष्ठी ॥ ᵛकथा केनोपायेन ᵛददाशुः ददति ॥ 'दाशृ दाने'। छान्दसो लिट् ॥ तमुपायमनुगृहाणेत्यर्थः । रश्मीनां वरप्रदानं कुत्र दृष्टमिति चेत् उच्यते । ᵛयत् यस्मात् ᵛउभे उक्ते अन्नायुषी ᵛतोके पुत्रे ᵛतनये अनवच्छेदेन[1] कुटुम्बस्य[2] विस्तारके। यद्वा। तोके पुत्रे तनये तत्पुत्रादौ च। ᵛदधानाः धारयन्तः ᵛदेवाः व्यवहर्तारो यजमानाः ᵛऋतस्य यज्ञस्य संबन्धिनि ᵛसामन् साम्नि रथन्तरादौ ᵛरणयन्त रमन्ते रमयन्ति शब्दयन्त्येव वा । यस्मात् अन्नायुष्पुत्रादिसहिताः सोमेनेष्ट्वा साम्नि रमन्ते तस्मात् रश्मयो ददतीत्यवगम्यते इत्यर्थः । तादृशांस्त्वदीयान् रश्मीन् मामपि[3] अनुगृहाणेत्यर्थः ॥

**बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।**

**पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥ २ ॥**

बोध । मे । अस्य । वचसः । यविष्ठ । मंहिष्ठस्य । प्रऽभृतस्य । स्वधाऽवः ।

पीयति । त्वः । अनु । त्वः । गृणाति । वन्दारुः । ते । तन्वम् । वन्दे । अग्ने ॥ २ ॥

हे ᵛयविष्ठ युवतम हे ᵛस्वधावः हविर्लक्षणान्नेन तद्वन्नग्ने ᵛमे मदीयस्य ᵛमंहिष्ठस्य अतिशयेन पूजनीयस्य ᵛप्रभृतस्य प्रकर्षेण संपादितस्य ᵛअस्य इदानीं क्रियमाणस्य ᵛवचसः स्तुतिरूपस्य वचनस्य ॥ कर्मणि षष्ठी ॥ उक्तलक्षणं वचः ᵛबोध बुध्यस्व स्तुतो भवेत्यर्थः । हे अग्ने लोके ᵛत्वः । अत्र यास्कः[4] 'त्वो नेम इत्यर्धस्य' (निरु. ३. २०) इत्युक्त्वा एतदेवोदाजहार । एको जनः ᵛपीयति। वधकर्मैतत् । हिनस्ति। यज्ञादिना न पूजयतीत्यर्थः । ᵛत्वः एकः ᵛअनु ᵛगृणाति अनुकूलम् उच्चारयति[5]। तयोर्मध्ये हे ᵛअग्ने ᵛवन्दारुः वन्दनशीलोऽहं ᵛते तव ᵛतन्वं तनुं तव मूर्तिं ᵛवन्दे स्तौमि ॥

**ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।**

**ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ ३ ॥**

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् ।

ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥३॥

अत्रेतिहासमाचक्षते। उचथ्यबृहस्पतिनामानौ द्वौ ऋषी आस्ताम्। तत्र उचथ्यस्य ममता नाम भार्या[6]। सा च गर्भिणी। तां[6] बृहस्पतिर्गृहीत्वा अरमयत्। शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्रावादीत् हे मुने रेतो मा त्याक्षीः पूर्वमहं वसामि रेतःसंकरं[7] मा कार्षीः इति। एवमुक्तो बृहस्पतिः बलात् प्रतिरुद्ध-

---

१. ञ–अविच्छेदेन । २. क्ष-ङ-च-ञ-ञ१-ज-ट-फ–कुलस्य । ३. क्ष-ङ-ञ१-ज-ट–ममापि । ४. ञ–यास्कस्तु । ५. क्ष-ङ-ञ१-ज-ट–उच्चारयति स्तौति । ६. क्ष-ङ-ञ१-ज-ट-भार्या आसीत् । गर्भिणीं ताम् । ७. ञ१–रेतःसेकम् ।

रेतस्कः सन् शशाप[1]। हे गर्भ त्वं यतो रेतोनिरोधमकरोः अतस्त्वं दीर्घं तमः प्राप्नुहि जात्यन्धो भवेति। एवं शप्तो ममतायां दीर्घतमा अजायत। स चोत्पन्नः तमोव्यथया अग्निमस्तौषीत्। स च स्तुत्या प्रीतः आन्ध्यं पर्यहरदिति। तदिदमत्रोच्यते। हे ᵛअग्ने ᵛते तव संबन्धिनः ᵛये ᵛपायवः प्रसिद्धाः पालयितारो रश्मयः ᵛमामतेयं ममतायाः पुत्रं दीर्घतमसम् ᵛअन्धं ᵛपश्यन्तः अन्धोऽयम् अतोऽस्माभिः रक्षणीयः इति अवगच्छन्तः सन्तः ᵛदुरितात् दुष्टं प्राप्ताद्दुःखात् ᵛअरक्षन् ᵛतान्[2] ᵛसुकृतः सुखकर्तॄन् ᵛविश्ववेदाः विश्वप्रज्ञः ᵛररक्ष[3] रक्षति[3]। अस्मत्पालनायेति भावः। तैः[4] अस्मानपि रक्षिष्यतीत्यर्थः। एवं रक्षितानस्मान् ᵛदिप्सन्तः दम्भितुमिच्छन्तः ᵛरिपवः कामादयः ᵛनाह ᵛदेभुः। अहेति विनिग्रहार्थीयः। न खलु दम्भितुं शक्नुवन्ति॥ 'दम्भु दम्भे'। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति[5] वक्तव्यम्' (का. १. २. ६. १) इति लिटः कित्त्वात् 'अनिदिताम्°' इति नलोपः। तस्य असिद्धत्वात् एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्चेति वक्तव्यम्' (पा. सू. ६. ४. १२०. ४) इति तौ विधीयेते॥ यद्वा। सूक्तद्रष्टा दीर्घतमाः स्वयमेव आत्मानं परोक्षतया ब्रवीति॥

**यो नो॑ अग्ने॒ अर॑रिवाँ अघा॒युर॑राती॒वा म॒र्चय॑ति द्व॒येन॑।**
**मन्त्रो॑ गु॒रुः पुन॑रस्तु॒ सो अ॑स्मा॒ अनु॑ मृक्षीष्ट त॒न्वं॑ दुरु॒क्तैः॥ ४॥**

यः। नः। अग्ने। अर॑रिऽवान्। अघऽयुः। अरातिऽवा। मर्चय॑ति। द्वयेन॑।
मन्त्रः॑। गुरुः। पुन॑ः। अस्तु। सः। अस्मै। अनु॑। मृक्षीष्ट। तन्व॑म्। दुःऽउक्तैः॥ ४॥

हे ᵛअग्ने ᵛनः अस्मान् युष्मद्रक्षितान् ᵛयः ᵛअघायुः मारणादिरूपपापेच्छावान्[6] ᵛअररिवान् अदाता अस्मद्दानप्रतिबन्धकः इत्यर्थः॥ रातेश्छान्दसस्य लिटः क्वसुः॥ ᵛअरातीवा स्वयमदानवान्॥ 'छन्दसि वनिपमिच्छन्ति' इति मत्वर्थीयो वनिप्॥ शत्रुत्वमाचरन् यः शत्रुः ᵛद्वयेन मानसवाचिकभेदेन द्विविधेन मन्त्रेण। न ददामीति मानसो मन्त्रः। निन्दाद्यारोपेण दाननिवारणं वाचिको मन्त्रः। यद्वा। मायाहेतुकेन विरुद्धरूपेण द्विविधेन मन्त्रेण। यो विरुद्धमाचरति तन्न संकीर्तयति यच्च प्रियं ब्रूते तन्न करोति अन्यत् करोत्यन्यद्वदतीत्येवं मन्त्रस्वरूपद्वैविध्यम्। पूर्वं मानसवाचिकभेदेन इदानीं वाचिककायिक-भेदेनेति विवेकः। ईदृशेन मन्त्रेण यः शत्रुः ᵛमर्चयति भर्त्सयति विधेयीकरोति[7] वा अस्मान्। ᵛसः मन्त्रैकदेशो मानसरूपः ᵛअस्मै ᵛपुनः ᵛगुरुः ᵛअस्तु॥ षष्ठ्यर्थे चतुर्थी॥ प्रयोक्तुरेव पुनः गरितास्तु[8]। तथा ᵛदुरुक्तैः दुर्वाक्यैर्निन्दारूपैर्वाचिकैः ᵛतन्वं स्वकीयां तनुम् ᵛअनु ᵛमृक्षीष्ट अनुमार्ष्टु अनुक्रमेण लुम्पतु। यद्वा। स द्विविधो मन्त्रः अस्मै प्रयोक्तुरेव[9] गुरुर्गरितास्तु। अन्यान्यपि अस्मत्क्षयकाराय प्रयुक्तानि निष्ठुरभाषणानि सन्ति। तैर्दुरुक्तैः सोऽरातिः स्वतनुमेवावलुम्पतु। स्वात्मानमेवावृत्य दहत्वित्यर्थः॥

---

१. ङ-झ१–तं शशाप। २. क्ष-ङ-ज्ञ-झ-झ१-ञ-ट–तान् रश्मीन्। ३. क्ष-झ१-ञ-ट–त्वं ररक्ष रक्ष। ४. झ–तेन। ५. क्ष-ञ-ट–°दम्भिस्वञ्जामिति। ६. क्ष-ञ-ट–°पापेच्छया। ७. क–विषयीकरोति। ८. ङ-झ-झ१–गरितास्तु भक्षकोऽस्तु। ९. ङ-झ१–प्रयोक्त्रे।

उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चयति द्वयेन ।
अतः पाहि स्तवमान स्तुवन्तमग्ने माकिर्नो दुरिताय धायीः ॥ ५ ॥

उत । वा । यः । सहस्य । प्रऽविद्वान् । मर्तः । मर्तम् । मर्चयति । द्वयेन ।
अतः । पाहि । स्तवमान । स्तुवन्तम् । अग्ने । माकिः । नः । दुःऽइताय । धायीः ॥ ५ ॥

पूर्वमन्त्रे द्विविधकुटिलमन्त्रेण[1] कर्तारं[1] तन्मन्त्रणं प्राप्नोतु मा अस्मान् इत्युक्तम् । अत्र तु तन्मन्त्रणात् पाहि इत्यग्निः प्रार्थ्यते । ᵛउत ᵛवा[2] हे ᵛसहस्य । सह इति बलनाम । तत्र भवाग्ने ᵛयः ᵛमर्त्यः मरणधर्मा मनुष्यः ᵛप्रविद्वान् मायामन्त्रणं प्रकर्षेण जानन् ᵛद्वयेन पूर्वोक्तरीत्या द्विविधमन्त्रेण ᵛमर्तं मनुष्यं ᵛमर्चयति विधेयीकरोति भर्त्सयति वा ᵛअतः तादृशात् भर्त्सनात् तत्कर्तुः सकाशाद्वा हे ᵛस्तवमान स्तूयमान ᵛअग्ने ᵛस्तुवन्तं स्तुतिं कुर्वन्तं मां ᵛपाहि रक्ष । किंच ᵛनः अस्मान् ᵛदुरिताय तत्कृताय दुर्मन्त्रणप्रयुक्तदुःखाय समर्थं ᵛमाकिः ᵛधायीः मा स्थापय । दुरितभाजनं मा कार्षीः इत्यर्थः ॥ 'धि धारणे' । व्यत्ययेन इट् । सिचि वृद्धिः । 'न माङ्योगे' इति अडभावः ॥ ॥ १६ ॥

'मथीद्यत्' इति पञ्चर्चमष्टमं सूक्तं दैर्घतमसं त्रैष्टुभमाग्नेयम् । 'मथीद्यत्' इत्यनुक्रमणिका । सूक्तत्रयमध्यस्य[3] तृतीयत्वेन पूर्वं विनियोग उक्तः ॥

मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।
नि यं दधुर्मनुष्यासु विक्षु स्वर्णं चित्रं वपुषे विभावम् ॥ १ ॥

मथीत् । यत् । ईम् । विष्टः । मातरिश्वा । होतारम् । विश्वऽअप्सुम् । विश्वऽदेव्यम् ।
नि । यम् । दधुः । मनुष्यासु । विक्षु । स्वः । न । चित्रम् । वपुषे । विभाऽवम् ॥ १ ॥

ᵛहोतारं देवानामाह्वातारं ᵛविश्वाप्सुम् । अप्स्विति रूपनाम । नानारूपं पार्थिववैद्युतजाठरादिभेदेन आहवनीयादिभेदेन वा । यद्वा । कालीकराल्यादिरूपेण ज्वालानां वैरूप्याद्विश्वरूपत्वम् । ᵛविश्वदेव्यं सर्वदेवयोग्यक्रियासाधुं ᵛयदीं यम् एनमग्निं ᵛमातरिश्वा वृष्ट्यादिनिर्मात्रन्तरिक्षश्वसनो वायुः ᵛविष्टः काष्ठेष्वन्तःप्रविष्टः सन् ᵛमथीत् अमश्नात् प्रावर्धयदित्यर्थः ॥ 'मथे विलोडने' । 'ह्मयन्तक्षण°' इति वृद्धिप्रतिषेधः ॥ पुनः स एव विशेष्यते । ᵛयम् अग्निं ᵛमनुष्यासु मत्वा कर्म कुर्वतीषु ᵛविक्षु ऋत्विग्रूपासु प्रजासु पूर्वं ᵛवपुषे यज्ञशरीरसिद्धये ᵛनि ᵛदधुः धारयन्ति यजमानाः । मनुष्यशब्दो निरुक्ते बहुधा निरुक्तः–'मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टा[4] मनोरपत्यं[4] मनुषो वा' ( निरु. ३. ७ ) इति । यद्वा । पूर्वं देवा मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासु प्राणिषु वपुषे स्वरूपाय[5] यागादिस्वरूपप्रकाशाय शरीरधारणाय वा जाठराग्निरूपेण नि दधुः स्थापितवन्तः । तत्र दृष्टान्तः । ᵛस्वर्णं स्वरणं[6] स्वीरणं[6] वा । आदित्यमिव ᵛचित्रं चायनीयं ᵛविभावं

---

१. झ१-°मन्त्रणकर्तारम् ।	२. क्ष-झ१-ञ-ट–वा अथवा ।	३. क्ष-ञ-ट–सूक्तत्रयमध्येऽस्य ।
४. ख–मनस्यतिः पुनर्मनस्वीभावे मनोरपत्यम् ।	५. झ-झ१–रूपाय ।	६. झ–स्वरणं सु अरणं वा ।

विविधप्रकाशवन्तं यथा प्रकाशादिसाधनाय धारयन्ति तद्वत् । स्वःशब्दं यास्कः एवं निरुवाच— ' स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान्स्वृतो भासं ज्योतिषां स्वृतो भासेति वा ' ( निरु. २. १४ ) इति । ईदृशं यं नि दधुस्तं मथीदिति पूर्वत्रान्वयः ॥

ददानमिन्न ददभन्त मन्माग्निर्वरूथं मम तस्य चाकन् ।
जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः ॥ २ ॥

ददानम् । इत् । न । ददभन्त । मन्म । अग्निः । वरूथम् । मम । तस्य । चाकन् ।
जुषन्त । विश्वानि । अस्य । कर्म । उपऽस्तुतिम् । भरमाणस्य । कारोः ॥ २ ॥

ᵛमन्म मननीयं स्तोत्रं हविरादिकं वा ᵛददानमित् अग्नये कुर्वाणमेव मां दम्भितारो वैरिणः ᵛन ᵛददभन्त दम्भितुं हिंसितुं न प्रभवन्ति ॥ दम्भेः ' बहुलं छन्दसि ' इति विकरणस्य श्लुः । व्यत्ययेन अन्तादेशः ॥ मम कोऽतिशय इति उच्यते । ᵛतस्य तादृशस्य प्रदातुः ᵛमम ᵛवरूथं वरणीयं स्तोत्रादिकम् अयम् ᵛअग्निः ᵛचाकन् अत्यर्थं कामयते ॥ कनतिः कान्तिकर्मा । अस्मात् यङ्लुगन्तात् लङि छान्दसः अडभावः । बहुलादेव[1] वा छान्दसः[2] तुजादित्वात् अभ्यासदीर्घः ॥ यस्मादेवं तस्मात् न दभ्नुवन्तीत्यर्थः । न केवलमग्निरेव कामयते किंतु सर्वे देवाः कामयन्त इत्याह । ᵛउपस्तुतिं[3] ᵛभरमाणस्य कुर्वाणस्य ᵛकारोः स्तोतुः ᵛअस्य यजमानस्य मम ᵛविश्वानि सर्वाणि[4] हविष्प्रदानादिरूपाणि ᵛजुषन्त[5] सर्वे देवाः । अतो न ददभन्तेत्यर्थः ॥

नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः ।
प्र सू नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥ ३ ॥

नित्ये । चित् । नु । यम् । सदने । जगृभ्रे । प्रशस्तिऽभिः । दधिरे । यज्ञियासः ।
प्र । सु । नयन्त । गृभयन्तः । इष्टौ । अश्वासः । न । रथ्यः । ररहाणाः ॥ ३ ॥

ᵛयज्ञियासः यज्ञयोग्या यजमाना ऋत्विजो वा ᵛयं मथनेनोत्पन्नमग्निं ᵛनित्ये ᵛचित् ᵛसदने नित्ये एव गार्हपत्यलक्षणे अग्न्यासादनस्थाने ᵛनु क्षिप्रं ᵛजगृभ्रे गृह्णन्ति ॥ ग्रहेर्लिटि ' इरयो रे ' इति रेभावः । ' हृग्रहोर्भः॰ ' इति भत्वम् ॥ ' नित्यं गतश्रियः[6] श्रियते नित्यं गार्हपत्यम् ' इति सूत्रात् गार्हपत्यो नित्यः । तदाश्रयत्वात्[7] सदनमपि नित्यमुच्यते । गृहीत्वा ᵛप्रशस्तिभिः प्रशंसाभिः स्तुतिभिः ᵛदधिरे धारयन्ति आहवनीयार्थम् । धृत्वा[8]च ᵛइष्टौ एषणसाधने[8] यज्ञे निमित्तभूते सति ᵛगृभयन्तः[9] ऋत्विजः ᵛप्र ᵛसू ᵛनयन्त सुष्ठु प्रणयन्ति । तत्र दृष्टान्तः । ᵛररहाणाः रंहसा गच्छन्तः ॥ ' रहि गतौ ' । छान्दसस्य लिटः कानच् ।

---

१. क्ष-ङ-झ१-ञ-ट–केवलादेव । २. क्ष-ञ-ट–छान्दसः शपः श्लुः । ३. क्ष-ञ-ट–उपस्तुतिं ततं ( तं तं ) देवमुपेत्य क्रियमाणां स्तुतिम्; झ– उपस्तुतिं तं देवमुपेत्य स्तोत्रम् । ४. क्ष-ङ-झ१-ञ-ट–सर्वाणि कर्माणि । ५. क्ष-ङ-ज-ञ-झ-झ१-ञ-ट–जुषन्त सेवन्ते । ६. झ–गावश्रियः । ७. क्ष-झ१-ञ-ट–तदायतनत्वात् । ८. झ–धृत्वा च सदनमपि इष्टो ( इष्टौ ) एषणे साधने । ९. क्ष-ञ-ट–गृह्णन्तः ।

'अनित्यमागमशासनम्' इति नुमभावः ॥ रथ्यः रथवन्तस्तत्र नियुक्ताः ॥ 'छन्दसीवनिपौ' इति रथशब्दात् मत्वर्थीय ईकारः ॥ अश्वासो न अश्वा इव । ते यथा धृत्वा रथस्वामिनम् अभिमतदेशं नयन्ति तद्वत् ॥

पुरूणि दस्मो नि रिणाति जम्भैराद्रोचते वन आ विभावा ।
आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥ ४ ॥

पुरूणि । दस्मः । नि । रिणाति । जम्भैः । आत् । रोचते । वने । आ । विभाऽवा ।
आत् । अस्य । वातः । अनु । वाति । शोचिः । अस्तुः । न । शर्याम् । असनाम् । अनु । द्यून् ॥ ४ ॥

अत्र दावाग्निरूपेण अयं स्तूयते । दस्मः उपक्षपयिता अयमग्निः पुरूणि बहूनि वृक्षादीनि नि रिणाति नितरां हिनस्ति ॥ 'री गतिरेषणयोः' । प्वादित्वात् ह्रस्वः ॥ केन साधनेनेति तदुच्यते । जम्भैः दन्तस्थानीयाभिर्ज्वालाभिः । आत् दाहानन्तरं वने वृक्षादिसमूहात्मके विभावा विविधप्रकाशयुक्तः सन् रोचते दीप्तो भवति । आत् अनन्तरम् अस्य शोचिः ज्वालानुकूलं वातः अग्निसखिभूतो वायुः अनु द्यून् । अन्विति वीप्सार्थे । प्रतिदिनमनुकूलं वाति । ज्वालाः आदाय गच्छति । तत्र दृष्टान्तः । अस्तुः क्षेप्तुः सकाशात् असनां गच्छन्तीं शर्यां न । शरो नाम हिंसासाधनलोहमयम् इषुमुखं तत्प्रचुराम् । यद्वा । शरो नाम वंशावान्तरजातीयः काष्ठविशेषः । तद्विकाराम्[1] इषुमिव[1] । 'शर्या इषवः शरमय्यः' ( निरु. ५. ४ ) इति यास्कः । यद्वा । शर एव शर्या । अथवा । शरो हिंसा । तत्करोति[2] इति शर्या इषुः । तां यथा वायुः नोदकजन्यः[3] वेगो वा अनुकूलं प्रेरयति तद्वत् ॥

न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति ।
अन्धा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥ ५ ॥

न । यम् । रिपवः । न । रिषण्यवः । गर्भे । सन्तम् । रेषणाः । रेषयन्ति ।
अन्धाः । अपश्याः । न । दभन् । अभिऽख्या । नित्यासः । ईम् । प्रेतारः । अरक्षन् ॥ ५ ॥

यम् अग्निं गर्भे गर्भवद्रक्षके अरणिमध्ये सन्तं वर्तमानं रिपवः नराः न रेषयन्ति न दुःखयन्ति । तथा रिषण्यवः अन्ये हिंसकाः ॥ 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' ( पा. सू. ७. ४. ३६ ) इति क्यचि निपात्यते । 'क्याच्छन्दसि' इति उः ॥ न हिंसन्ति । कीदृशास्ते । रेषणाः हिंसनस्वभावाः । यद्वा । तैः क्रियमाणा हिंसनप्रकारा न हिंसन्ति ॥ किंच अस्य अभिख्या अभितः ख्यातिं[4] माहात्म्यम् अन्धाः ज्ञानशक्तिरहिता अविद्वांसः अत एव अपश्याः अद्रष्टारः । यद्वा । विद्वांसोऽप्यभावयितारः अनुपासका इत्यर्थः । ईदृग्रूपा उभयेऽपि न दभन् न दभ्नुवन्ति न हिंसन्ति ।

१. झ१–तद्विकारमिव । २. झ–तां करोति । ३. क्ष-झ१-ज-ट–नोदनजन्यः । ४. ङ-झ१–ख्यातिः ।

लौकिकोपकारेणापि प्रयोजकत्वादिति भावः । तर्ह्यस्य पारमार्थिकं रूपं के जानन्तीति चेत् उच्यते । नित्यासः नित्या अविचलितभक्तयः अग्निहोत्रादिनित्यकर्मरता वा । अग्न्यनुग्रहात् स्वयमपि नित्या भविष्यन्तीति भावि नित्यत्वमाश्रित्य नित्या उपचर्यन्ते[1] । तादृशा यजमानाः प्रेतारः यज्ञादिना तमेव तर्पयितारः सन्तः ईम् एनम् अरक्षन् रक्षन्ति यज्ञादिरूपेण भजन्ते इत्यर्थः ॥ ॥ १७ ॥

‘ महः सः ’ इति पञ्चर्चं नवमं सूक्तं दैर्घतमसं वैराजमाग्नेयम् । ‘ दशकास्त्रयो विराळेकादशका वा ’ ( अनु. ६. ७–८ ) इत्युक्तलक्षणसद्भावात्[2] । तथा चानुक्रान्तं–‘ महः स वैराजम् ’ इति । विनियोगो लैङ्गिकः ॥

महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ ।
उप ध्रजन्तमद्रयो विधन्नित् ॥ १ ॥

महः । सः । रायः । आ । ईषते । पतिः । दन् । इनः । इनस्य । वसुनः । पदे । आ ।
उप । ध्रजन्तम् । अद्रयः । विधन् । इत् ॥ १ ॥

महः महतः पूज्यस्य रायः गवादिरूपस्य धनस्य पतिः पालकः स्वामी सः अग्निः दन् ददत् अभिमतं प्रयच्छन् ॥ ददातेः शतरि छान्दसः शपो लुक् । तस्य ‘ छन्दस्युभयथा ’ इति आर्धधातुकत्वात् ‘ आतो लोप इटि च ’ इति आकारलोपः ॥ आ आभिमुख्येन अस्मद्देवयजनं प्रति ईषते गच्छति । किंच इनस्य स्वामिनोऽपि इनः स्वामी सर्वस्य पतिरित्यर्थः । ईदृशोऽयं वसुनः धनस्य पदे आस्पदभूते वेदिस्थाने आ आश्रयति ॥ उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ यद्वा । वसुनो निवासयोग्यस्य धनस्यापि इनः इति संबन्धः । यद्वा[3] । वसुप्राप्तिः प्रसिद्धा । किंच उप ध्रजन्तम् उपगच्छन्तम् एनम् अभिषवार्थम् अद्रयः ग्राववन्तो यजमानाः विधन्नित् परिचरन्त्येव[4] ॥ ‘ विध विधाने ’ । तौदादिकः । लङि ‘ बहुलं छन्दसि ’ इति अडभावः । निघाताभावश्छान्दसः । यद्वा । पूर्वत्र तच्छब्दश्रुतेः अत्र यच्छब्दाध्याहारेण अस्य संबन्धात् अनिघातः ॥ यद्वा । अद्रयोऽभिषवग्रावाणः स्वशब्दैः उप उपेत्य विधन्नित् पूजयन्त्येव । आह्लादं[5] जनयन्तीत्यर्थः ॥

स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः ।
प्र यः सस्राणः शिश्रीत योनौ ॥ २ ॥

सः । यः । वृषा । नराम् । न । रोदस्योः । श्रवःऽभिः । अस्ति । जीवपीतऽसर्गः ।
प्र । यः । सस्राणः । शिश्रीत । योनौ ॥ २ ॥

सः[6] तादृशः[6] यः अग्निः नरां न मनुष्याणामिव रोदस्योः द्यावापृथिव्योरपि वृषा सेक्ता उत्पादक इत्यर्थः । एवं सर्वोत्पादकः[7] श्रवोभिः सर्वत्र श्रूयमाणैर्यशोभिर्युक्तः सन् अस्ति

१. क्ष-ङ-झ१-ञ-ट–इत्युपचर्यन्ते । २. ङ-झ१–इत्युक्तलक्षणसंभवात् । ३. क्ष-झ१-ञ-ट–यज्ञाय । ४. क्ष-ङ-झ१-ञ-ट–उपचरन्त्येव । मत्वर्थो लुप्यते । ५. क्ष-ञ-ट–आह्वानम् । ६. क्ष-ञ-ट–‘ सः तादृशः ’ नास्ति । ७. क्ष-झ१-ञ-ट–सर्वोत्पादकः सोऽग्निः ।

वर्तते । सर्वोत्पादकः इत्युक्तं तत्रोपपत्तिमाह । यतोऽयं ᵛजीवपीतसर्गः । जीवैर्नानाविधैः पीतः आस्वादितः सर्गः सृष्टिक्रमो यस्य स तथोक्तः ॥ 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । पुनर्बहुव्रीहौ स एव स्वरः ॥ अत्रायं सृष्टिक्रमः । अयमग्निः स्वदत्तं[1] हविः आदित्यं प्रापय्य तद्रश्मिभिः सह वैद्युतरूपेण मेघद्वारा उदकेन[2] प्रवर्ष्य सर्वान् प्राणिनः प्रापयति[3] इत्यतो वृष्ट्युत्पादनद्वारा उत्पादयिता । इदानीं साक्षादुत्पादकत्वमाह । ᵛयः अग्निः ᵛयोनौ गर्भाशये ᵛसस्राणः प्रविष्टः सन् ᵛशिश्रीत निषिक्तं रेतः पारयति[4] । नृपश्वादिदेहाकारेण परिणमयतीत्यर्थः । यद्यग्निर्न पचेत् पूरयेदेव[5] नोत्पद्यते[6] । तस्मादयं साक्षादेवोत्पादकः । स तादृशोऽग्निर्यशस्वी वर्तते इत्यर्थः । यद्वा । योऽग्निर्नरां न नराणां कर्मसु उत्साहयुक्तानां यजमानानामिव । 'नरा मनुष्या नृत्यन्ति कर्मसु' (निरु. ५. १) इति यास्कः । तेषां यथा स्वर्गाद्यभिमतवर्षकः तद्वद्रोदस्योरपि । आश्रयवाचिना शब्देन आश्रयिणो लक्ष्यन्ते । भूलोकवर्तिनां वृष्टिप्रदानेन द्युलोकवर्तिनां हविष्प्रापणेनेति भावः । स तादृशोऽग्निः श्रवोभिः हविर्लक्षणैः सोमाज्यादिभिः अन्नैर्निमित्तभूतैः जीवपीतसर्गो जीवविशेषैर्यजमानैः अविशेषेण सर्वैर्वा आस्वादितस्वभावः सन् अस्ति प्रकृष्टो वर्तते । अमुमग्निं हविर्भिः प्रीणयित्वा स्वाभिमतान् भोगान् भुञ्जते इत्यर्थः । किंच यः अग्निर्योनौ स्वकीयस्थाने वेदिलक्षणे सस्राणः प्रविष्टः सन् शिश्रीत स्वस्मिन् प्राप्तं पुरोडाशादिकं पचति सोऽयमग्निरस्ति महानुभावो वर्तते ॥

आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।

सूरो न रुरुक्वाञ्छतात्मा ॥ ३ ॥

आ । यः । पुरम् । नार्मिणीम् । अदीदेत् । अत्यः । कविः । नभन्यः । न । अर्वा ।

सूरः । न । रुरुक्वान् । शतऽआत्मा ॥ ३ ॥

ᵛयः अग्निः ᵛनार्मिणीं नर्मवतीं यजमानानां संबन्धिनीम् उत्तरवेदिम् । यद्वा । नृणां मनसि स्थितां यजमानानां यज्ञार्थं[7] यां भूमिं प्रति अग्न्यागमनमनीषा विद्यते ताम् । ᵛपुरं तत्स्थानम् ᵛआ ᵛअदीदेत् दीपयति । कीदृशोऽयम् । ᵛअत्यः अपेक्षितदेशं प्रति अतनशीलः ᵛकविः क्रान्तदर्शी । तत्र दृष्टान्तः । ᵛअर्वा अरणकुशलः ᵛनभन्यो ᵛन नभस्याकाशे भवो नभस्वान् वायुरिव । किंच ᵛशतात्मा । शतं सहस्रम् इत्यपरिमितवचनः । तत्तद्यजमानगृहापेक्षया आहवनीयगार्हपत्याद्यपेक्षया वा नानारूपत्वम् । अथवा मित्रवरुणभेदेन[8] अग्नेः मित्रादिरूपं[9] 'त्वमग्ने वरुणो जायसे यत्' (ऋ. सं. ५.३.१), 'इन्द्रं मित्रं वरुणमग्निमाहुः' (ऋ. सं. १.१६४.४६) इत्यादिश्रुतिषु प्रसिद्धम् । अग्नेरेव इन्द्राद्यात्मकत्वमाहुरिति द्वितीयमन्त्रस्यार्थः । तादृशोऽयं ᵛसूरो ᵛन सूर्य इव ᵛरुरुक्वान् दीप्यमानः ॥ 'रुच दीप्तौ' । छान्दसस्य लिटः क्वसुः ॥ अतः स तादृशोऽग्निरस्ति उत्कृष्टं वर्तते इति पूर्वत्रान्वयः ॥

---

१. क्ष-ञ-ट-स्वादत्तम् । २. क्ष-ङ-ञ-ट-उदकानि । ३. क्ष-झ-ञ-ट-पाययति. ४. क्ष-झ१-ञ-ट-प्रापयति; क-झ-पाचयति । ५. क्ष-ङ-झ१-ञ-ट-पूर्यंदेव । ६.झ- नोत्पद्येत । ७. क्ष-ञ-ट-यज्ञाद्यर्थम् । ८. क्ष-ङ-झ१-ञ-ट-मित्रवरुणादिरूपभेदेन । ९. क्ष-झ१-ञ-ट-मित्रादिरूपत्वम् ।

अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपां सधस्थे ॥ ४ ॥

अभि । द्विऽजन्मा । त्री । रोचनानि । विश्वा । रजांसि । शुशुचानः । अस्थात् ।
होता । यजिष्ठः । अपाम् । सधऽस्थे ॥ ४ ॥

अयमग्निः ᵛद्विजन्मा द्वाभ्यामरणीभ्यां जायमानः । यद्वा । मथनात् प्रथमं जन्म । उत्पत्त्यनन्तरं पवमानेष्ट्यादिसंस्काररूपं[1] द्वितीयं जन्मेव[2] । एवं द्विजन्मत्वम् । अथवा द्यावापृथिवीभ्यामुत्पन्नत्वात् । तादृशः[3] अग्निः ᵛत्री ᵛरोचनानि त्रीणि रोचनानि क्षित्यादिस्थानानि गार्हपत्यादीनि वा ᵛअभि ᵛशुशुचानः अभितः प्रकाशयन् । न केवलं त्रीण्येव किंतु ᵛविश्वा ᵛरजांसि सर्वाण्यपि रञ्जनात्मकानि क्षित्यादिलोकान् शुशुचानः अभितः[4] प्रकाशयन्[4] दीपयन् ᵛहोता देवानामाह्वाता ᵛयजिष्ठः यष्टृतमः सन् ᵛअपां प्रोक्षण्याद्युदकानां ᵛसधस्थे सहस्थाने यागदेशे ᵛअस्थात् तिष्ठति ॥

अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥ ५ ॥

अयम् । सः । होता । यः । द्विऽजन्मा । विश्वा । दधे । वार्याणि । श्रवस्या ।
मर्तः । यः । अस्मै । सुऽतुकः । ददाश ॥ ५ ॥

ᵛयो ᵛद्विजन्मा ᵛसः एव ᵛहोता होमनिष्पादकः अरणीभ्यामुत्पन्नस्यैव गार्हपत्यद्वारा आहवनीयत्वात् आह्वाता वा देवानां सः ᵛअयं ᵛविश्वा विश्वानि ᵛवार्याणि वरणीयानि[5] ॥ 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् ॥ ᵛश्रवस्या श्रवस्यया । श्रवोऽन्नं हविर्लक्षणं तदिच्छया ॥ श्रवःशब्दात् क्यजन्तात् 'अ प्रत्ययात्' इति भावे अप्रत्ययः ॥ ᵛदधे[6] धारयति । ᵛअस्मै उक्तस्वरूपाय[7] अग्नये ᵛयः ᵛमर्तः मर्त्यः ᵛददाश ददाति सः ᵛसुतुकः शोभनपुत्रो भवति ॥ ॥ १८ ॥

'पुरु त्वा' इति तृचात्मकं दशमं सूक्तं दैर्घतमसमाग्नेयमौष्णिहम् । 'पुरु तृचमौष्णिहम्' इत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छन्दसि अस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितं–'पुरु त्वा त्वामग्ने' ( आश्व. श्रौ. ४. १३ ) इति ॥

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥ १ ॥

पुरु । त्वा । दाश्वान् । वोचे । अरिः । अग्ने । तव । स्वित् । आ ।
तोदस्यऽइव । शरणे । आ । महस्य ॥ १ ॥

---

१. क्ष-ङ-झ१-ञ-ट–आधानपवमानेष्ट्यादिसंस्काररूपम् । २. क्ष-ङ-च-झ-ञ-ट–जन्म । ३. क्ष-ञ-ट–स तादृशः । ४. क्ष-ङ-च-झ-झ१-ञ-ट–'अभितः प्रकाशयन्' नास्ति । ५. क-झ–वरणीयानि धनानि; क्ष-झ१-ञ-ट–वरणीयानि कर्माणि । ६. क्ष-झ१-ञ-ट–अन्नानि यशो वा दधे । ७. च–उत्कृष्टस्वरूपाय ।

हे अग्ने ^V^त्वा त्वां ^V^पुरु बहु ^V^वोचे । यद्वा । बहु दाश्वानिति संबन्धः । पुत्रं देहि वित्तं देहि इत्याद्याशासनानि ब्रवीमीत्यर्थः । किं तूष्णीं नेत्याह । यतः ^V^दाश्वान् अभिमतं हविः दत्तवानस्मि अतः वोचे । इतरसाधारण्येन ब्रुवतः कथं दातव्यमिति न मन्तव्यम् । यतोऽहं हे ^V^अग्ने ^V^तव ^V^स्वित् तवैव ^V^आ आभिमुख्येन ^V^अरिः अर्ता हविरादिप्रापणेन सेवकोऽहम् । तत्र दृष्टान्तः । ^V^महस्य महतः ^V^तोदस्येव शिक्षकस्य स्वामिनः ^V^शरणे अस्य[1] गृहे यथा गर्भदासादिः ^V^आ समन्तात् नियतो वर्तते तद्वदहमपि । यस्मादेवं तस्मात् अभिमतं बहु वोचे त्वमपि तत्सर्वं देहीत्यर्थः । अत्र निरुक्तं–'बहु दाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेः । ईश्वरोऽप्यरिरेतस्मादेव । यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद्दृष्ट्वैवमवक्ष्यत् तोदस्येव शरण आ महस्य तुदस्येव शरणेऽधि महतः' ( निरु. ५. ७ ) इति ॥

व्यनिनस्य धनिनः प्रहोषे चिदररुषः । कदा चन प्रजिगतो अदेवयोः ॥ २ ॥

वि । अनिनस्य । धनिनः । प्रऽहोषे । चित् । अररुषः ।

कदा । चन । प्रऽजिगतः । अदेवऽयोः ॥ २ ॥

पूर्वमन्त्रे स्वाभीष्टं बहु विज्ञापयामीत्युक्तम् । अत्र तु स्वविलक्षणेभ्यो दानादिरहितेभ्यो दानं न दातव्यमिति प्रार्थयते । हे अग्ने त्वां विशेषेण[2] ब्रवीमि[2] । उपसर्गश्रुतेः[3] योग्यक्रियाध्याहारः । अथवा संनिहितत्वात् वोचे इत्यनुषज्यते । अस्मदर्थं यत् व्यजिज्ञपन्[4] तद्विरुद्धं वोचे । वक्ष्यमाणस्वरूपस्य न दातव्यम् इति[5] ब्रवीमि[5] इत्यर्थः । तेषां स्वरूपमाह । ^V^अनिनस्य अस्वामिनः त्वाम्[6] अस्वामिनं कुर्वाणस्य[6] तथा ^V^धनिनः समग्रधनवतः । पूर्वमेव धनवतो दानस्य निरर्थकत्वात् तन्निवार्यते । यद्वा । यागाद्यनुपयोगिधनवतः[7] इत्यर्थः । किंच ^V^प्रहोषे[8] प्रकर्षेण होतुम् ^V^अररुषः अददतो दक्षिणारूपेण[9] । यद्वा । प्रहोषेऽनिनस्येति संबन्धः । प्रकर्षेण होतुमसमर्थस्येत्यर्थः । अत्र इनशब्देन तत्स्थं सामर्थ्यं लक्ष्यते । चिच्छब्दः समुच्चयार्थः । किंच[10] ^V^कदा ^V^चन ^V^प्रजिगतः कदाचिदपि प्रकर्षेण देवान् अस्तुवतः । अत्र चन इति निपातद्वयसमुदायः । तत्र चशब्दः समुच्चये नशब्दो निषेधे । किंच ^V^अदेवयोः देवानात्मनोऽनिच्छतः । एतेषां न दातव्यमिति विवोचे इत्यर्थः । निन्दितानां स्वरूपनिरूपणेन स्वस्य अतादृशत्वात् बहु वोचे इत्येतत् युक्तमेवेत्युक्तं भवति । यद्वा । चन इति चिच्छब्दपर्यायः । उक्तप्रकारेण दुष्टस्यापि कदाचित् प्रजिगतो यदाकदाचित् त्वां स्तुवतो विवोचे । तादृशस्य दातव्यमिति विशेषेण ब्रवीमि । किमु वक्तव्यमस्मदर्थमिति भावः ॥

---

१. क्ष-ङ-झ-झ१-ञ-ट–'अस्य' नास्ति । २. क्ष-ञ-ट–विवोचे । ३. क्ष-ङ-ञ-ट–उपसर्गवशात् । ४. क्ष-झ१-ञ-ट–व्यज्ञापयन् । ५. क्ष-ञ-ट–'इति ब्रवीमि' नास्ति । ६. क्ष-झ१-ञ-ट–त्वाम् इनम् अकुर्वाणस्य विवोचे । सर्वत्र एवं संबन्धनीयम्; ङ–त्वाम् अस्वामिनं कुर्वाणस्य विवोचे । सर्वत्र एवं संबोधनीयम्; झ–त्वाम् अग्निं स्वामिन(म्) अकुर्वाणस्य । ७. क्ष-ञ-ट–यागाद्यनुपभोगधनवतः; झ–यागाद्यनुष्ठानोपयोगिधनवतः । ८. क्ष-झ१-ञ-ट–प्रहोषे चित् । ९. क्ष-ञ-ट–दक्षिणादिरूपेण । १०. झ–किंच । अररुषः । अहिंसकस्य परद्रोहम् अकुर्वतः किंच ।

स चन्द्रो विप्र मर्त्यो महो व्राधन्तमो दिवि ।
प्रप्रेत्ते अग्ने वनुषः स्याम ॥ ३ ॥

सः । चन्द्रः । विप्र । मर्त्यः । महः । व्राधन्ऽतमः । दिवि ।
प्रऽप्र । इत् । ते । अग्ने । वनुषः । स्याम ॥ ३ ॥

हे अग्ने ᵛविप्र मेधाविन् यः ᵛमर्त्यः त्वां यजते ᵛसः मर्त्यो यजमानः ᵛदिवि द्युलोके ᵛचन्द्रः सर्वेषाम् आह्लादकश्चन्द्रसदृशो भवति । यद्वा । चन्द्र एव भवति । यजमानानां चन्द्रत्वप्राप्तिं छन्दोगा आमनन्ति—'पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' (छा. उ. ५. १०. ४) इति। 'सोमलोके विभूतिमनुभूय' (प्र. उ. ५.४) इति च। तथा मुण्डकेऽपि द्युलोकप्राप्तिराम्नायते—'एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' इति, 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' (मु. उ. १. २. ५–६) इति च । पुनः स एव विशेष्यते। ᵛमहः महतोऽपि ᵛव्राधन्तमः प्रवृद्धतमः। इतरदेवानामपि श्रेष्ठ इत्यर्थः। अतः[1] ᵛअग्ने[1] ᵛते तव ᵛप्रप्रेत् प्रकर्षेणैव ᵛवनुषः संभक्तारः ᵛस्याम । यद्वा । प्रीणयित्वा प्रप्रेत् स्याम । प्रकृष्टा एव भवेम ॥ ॥ १९ ॥

'मित्रं न यम्' इति नवर्चमेकादशं सूक्तं दैर्घतमसं जागतं मैत्रावरुणम्। आद्या मैत्र्येव। अत्रानुक्रमणिका–'मित्रं नव मैत्रावरुणं हि जागतं मैत्र्याद्या' इति । विनियोगो लैङ्गिकः ॥

मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन् ।
अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥ १ ॥

मित्रम् । न । यम् । शिम्या । गोषु । गव्यवः । सुऽआध्यः । विदथे । अप्ऽसु । जीजनन् ।
अरेजेताम् । रोदसी इति । पाजसा । गिरा । प्रति । प्रियम् । यजतम् । जनुषाम् । अवः ॥ १ ॥

ᵛयम् अग्निं ᵛशिम्या । कर्मनामैतत्, 'शिमी शक्तिः' (नि. २.१.२४) इति तन्नामसूक्तत्वात् । प्रकाशवृष्ट्युत्पादनादिकर्मणा ᵛमित्रं ᵛन मित्रमिव स्थितम् । यद्वा । शिम्या इत्येतत् क्रियया सह संबध्यते । ᵛगोषु बह्वीषु निमित्तभूतासु ᵛगव्यवः गा आत्मन इच्छन्तः । अत्र यद्यपि गव्यवः इत्येवालं न गोष्विति, तथापि गव्यव इत्यत्र गोस्वामित्वं प्रतिपाद्यते। तच्चैकया द्वित्राभिरपि[2] स्यात् । अतः स्पृहणीया बह्व्य इत्यवगमयितुं गोष्विति पदम् । यथा 'गवामसि गोपतिः' (ऋ. सं. ७. ९८. ६), 'गणानां त्वा गणपतिम्' (ऋ. सं. २.२३.१)। तथा ᵛस्वाध्यः सुष्ठु आध्यातारः फलस्योत्पादयितारः शोभनध्याना वा ᵛविदथे यागे ᵛअप्सु अन्तरिक्षे वैद्युतरूपेण वर्तमानम् । आप इत्यन्तरिक्षनाम, 'आपः पृथिवी' (नि. १. ३. ८) इति तन्नामसूक्तत्वात्। अग्नेरन्तरिक्षोत्पत्तिः 'यदग्ने दिविजा अस्यप्सुजा वा' (ऋ. सं. ८. ४३. २८), 'अप्स्वग्ने सधिष्टव' (ऋ. सं. ८. ४३. ९) इत्यादिमन्त्रान्तरेषु

१. क्ष-ञ-ट–अतो वयं हे अग्ने; झ१–अतो वयम् अग्ने । २. झ–द्वित्रादिभिः ।

प्रसिद्धा। ᵛप्रियं सर्वेषां प्रियतमं प्रीणयितारं वा ᵛयजतं यष्टव्यमग्निं ᵛजनुषां जन्मवतां प्राणिनाम् ᵛअवः ᵛप्रति रक्षणं निमित्तीकृत्य शिम्या मथनादिकर्मणा ᵛजीजनन् जनयन्ति[1] यजमानाः। यद्वा। अप्सु निमित्तभूतासु जीजनन् सर्वप्राणिनामुपकाराय वृष्ट्यर्थं चेत्यर्थः। एवमुत्पन्नस्याग्नेः ᵛपाजसा बलेन ᵛगिरा भयंकरशब्देन च ᵛरोदसी द्यावापृथिव्यौ ᵛअरेजेताम् अकम्पेताम्। अग्नेः सकाशात् कम्पनम् 'अरेजेतां रोदसी होतृवूर्ये' (ऋ. सं. १.३१.३) इत्यादिश्रुतिषु प्रसिद्धम्। न च सर्वरक्षणार्थम् उत्पादितोऽग्निः लोकद्वयस्य भीतिमजनयत् किमेतदिति वाच्यं निन्दास्तुतित्वात्। यथा लोकौ बिभीतस्तथा प्रवृद्धोऽभवत् इति स्तुतौ पर्यवसानात्। यद्यप्यत्राग्निरेव प्रतिपाद्यते मित्रस्तु परं दृष्टान्तित एव तथापि द्युस्थानस्याग्नेरेव मित्रत्वात् मन्त्रस्य मैत्रत्वमविरुद्धम्। यद्वा। मित्रं न सखायमिव स्थितं मित्रनामकं देवं यज्ञेऽन्तरिक्षे च ऋत्विजः प्रादुर्भावयन्ति। शिष्टम् एतद्विशेषेण तथैव योजनीयम्॥

यद्ध त्यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः।
अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः॥ २॥

यत्। ह। त्यत्। वाम्। पुरुऽमीळ्हस्य। सोमिनः। प्र। मित्रासः। न। दधिरे। सुऽआभुवः।
अध। क्रतुम्। विदतम्। गातुम्। अर्चते। उत। श्रुतम्। वृषणा। पस्त्यऽवतः॥ २॥

हे मित्रावरुणौ ᵛयत् यस्मात् कारणात् ᵛवां युवां ᵛपुरुमीळ्हस्य बहुलाभीष्टसेचनस्य ᵛसोमिनः ᵛस्वाभुवः सोमवतः स्वाभवनशीलस्य॥ कर्मणि षष्ठी॥ ᵛत्यत्[2] उक्तलक्षणं कर्म ᵛप्र ᵛमित्रासो ᵛन मित्राणीव मित्रभूता ऋत्विजः प्र ᵛदधिरे प्रकर्षेण धारयन्ति। ᵛह इति पूरणः। ᵛअध अतः कारणात् ᵛगातुं युष्मद्गमनम् ᵛअर्चते॥ षष्ठ्यर्थे चतुर्थी॥ अर्चतः पूजयतो यजमानस्य ᵛक्रतुं कर्म ᵛविदतं जानीतम्॥ विदेर्लोटि व्यत्ययेन शः॥ ᵛउत अपि च हे ᵛवृषणा कामानां वर्षितारौ युवां ᵛपस्त्यावतः। पस्त्या इति गृहनाम, 'पस्त्या दुरोणे' (नि. ३.४.६) इति तन्नामसूक्तत्वात्। सदःप्राचीनवंशादिगृहवतो यजमानस्याह्वानं स्तोत्रं वा ᵛश्रुतं शृणुतम्॥ छान्दसो विकरणस्य लुक्॥ यद्वा। यद्यस्मात् सोमिनः सोमवतः पुरुमीळ्हस्यैतन्नामकस्य राज्ञो मित्रासो न मित्राणीव स्थिताः स्वाभुवः स्वाभवनशीलाः स्वस्वव्यापारसमर्था दधिरे अध अतः कारणात् तस्य अर्चते अर्चतः क्रतुं विदतमित्यादि पूर्ववत्॥

आ वां भूषन्क्षितयो जन्म रोदस्योः प्रवाच्यं वृषणा दक्षसे महे।
यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरम्॥ ३॥

आ। वाम्। भूषन्। क्षितयः। जन्म। रोदस्योः। प्रऽवाच्यम्। वृषणा। दक्षसे। महे।
यत्। ईम्। ऋताय। भरथः। यत्। अर्वते। प्र। होत्रया। शिम्या। वीथः। अध्वरम्॥ ३॥

---

१. क्ष-झ-ञ-ट–अजनयन्। २. ङ-झ१–त्यत् तत्।

हे वृषणा कामानां वर्षितारौ हे मित्रावरुणौ वां युवयोः संबन्धि जन्म जननम् उत्पत्तिम्[1] रोदस्योः द्यावापृथिव्योः सकाशात्। द्यावापृथिवीभ्यामेव सर्वेषामुत्पत्तेः। यद्वा। मित्र इति सर्वोपकारी अग्निरुच्यते वरुण इति तमोनिवारक आदित्यः उभयोः पृथिवीद्युस्थानत्वात्। ततः पूर्वमन्त्रे मित्रदृष्टान्तत्वेन अग्निः स्तुतः। अत इदमधिगम्यते अग्निरेव मित्र इति। तथान्यत्रापि। ' अग्निं मित्रं न क्षितिषु प्रशंस्यम् ' ( ऋ. सं. २. २. ३ ), ' मित्रं न यं सुधितं भृगवो दधुः ' ( ऋ. सं. ६. १५. २ ) इति च। प्रवाच्यं स्तुत्यं तादृशयुवयोः जन्म महे महते दक्षसे सर्वविषयबलाय क्षितयः मनुष्या यजमानाः आ भूषन् सर्वतोऽलंकुर्वन्ति श्लाघन्ते इत्यर्थः। जन्मनः प्रवाच्यत्वमाह। यदीं यस्मादेव कारणात्। अथवा। ईम् इत्यनर्थकः। ' मिताक्षरेष्वनर्थकाः कमीमिद्विति ' इत्युक्तत्वात्। ऋताय यज्ञाय भरथः सामर्थ्यम्। यत् यस्माच्च कारणात् अर्वते युष्मान् प्राप्तवते यजमानाय च भरथोऽभिमतं फलम्। अथवा। उभयत्र कर्मणः संप्रदानत्वात् चतुर्थी। यज्ञं यजमानं च भरथ इत्यर्थः। यस्माच्च होत्रया स्तुतिरूपया वाचा शिम्या हविष्प्रदानादिकर्मणा च प्र वीथः प्रकर्षेण प्राप्नुथः। तस्मात् प्रवाच्यं जन्म भूषयन्तीत्यर्थः। होत्रा इति वाङ्नाम, ' होत्रा गीः ' ( नि. १. ११. ३५ ) इति तन्नामसु पाठात्॥

प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत्।
युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः॥ ४॥

प्र। सा। क्षितिः। असुरा। या। महि। प्रिया। ऋतऽवानौ। ऋतम्। आ। घोषथः। बृहत्। युवम्। दिवः। बृहतः। दक्षम्। आऽभुवम्। गाम्। न। धुरि। उप। युञ्जाथे इति। अपः॥४॥

हे असुरा[2] असुरौ बलवन्तौ[2] मित्रावरुणौ युवयोः या क्षितिः देवयजनरूपा महि महदत्यधिकं प्रिया प्रियतरा प्रीणयित्री वा सा क्षितिः प्र प्रकर्षेण संपादिता। उपसर्गश्रुतेः[3] योग्यक्रियाध्याहारः। तामासीदतमिति शेषः। यागभूमिर्देवानां प्रियेति प्रसिद्धम्। आसाद्य च हे ऋतावानौ ऋतवन्तौ युवां बृहत् प्रवृद्धम् ऋतम् अस्मदीयं यज्ञम् आ[4] घोषथः[4] अवैकल्येन संपादितः इति स्तुतमित्यर्थः। यतः युवं युवां बृहतः महतः दिवः द्युलोकस्य धुरि दक्षं तर्पणवहने[5] समर्थम्[5]। अथवा बृहतो दिवो महतो द्युलोकस्थदेवान् दक्षं प्रीणयितुमिति शेषः। यद्वा। कर्मणि षष्ठी। दिवो द्योतनात्मकं बृहतः प्रभूतं दक्षम् अभिमतसाधनसमर्थम्। आभुवं सर्वतो भवनशीलम् अपः कर्म सोमयागरूपम् उप युञ्जाथे सेवेथे तत्रत्यं हविः स्वीकुरुथ इत्यर्थः। उपयोगे दृष्टान्तः। धुरि शारीरबलस्य निर्वाहे तदर्थं गां न धेनुमिव। तां यथोपयुञ्जते तद्वत्। यद्वा। विकारे प्रकृतिशब्दः। क्षीरादिकमिव। तस्मात् ऋतम् आघोषथः॥

---

१. ज्ञ-ज्ञ–उत्पत्तिः। २. क्ष-ञ-ट–असुरा असोर्दातारौ। ३. क्ष-ङ-ज्ञ१-ञ-ट–उपसर्गवशात्। ४. क्ष-ङ-ज्ञ१-ञ-ट–आघोषथः सर्वतः शब्दयथः। ५. क्ष-ञ-ट–तर्पणवहनसमर्थम्; ज्ञ-तर्पणहवने समर्थम्; ज्ञ१-तर्पणहवनसमर्थम्।

मही अत्र॑ महि॒ना वार॑मृण्वथोऽरे॒णव॒स्तुज॒ आ सद्म॑न्धे॒नव॑ः ।
स्वर॑न्ति॒ ता उ॑प॒रता॑ति॒ सूर्य॒मा नि॒म्रुच॑ उ॒षस॑स्तक्व॒वीरि॑व ॥ ५ ॥

मही इति॑ । अत्र॑ । म॒हि॒ना । वार॑म् । ऋ॒ण्व॒थ॒ः । अ॒रे॒णव॑ः । तु॒ज॑ः । आ । सद्म॑न् । धे॒नव॑ः ।
स्वर॑न्ति । ताः । उ॒प॒र॒ऽता॑ति । सूर्य॑म् । आ । नि॒ऽम्रुच॑ः । उ॒षस॑ः । त॒क्ववीः॑ऽइ॑व ॥ ५ ॥

हे मित्रावरुणौ युवां[1] ^मही महत्याम् ॥ सप्तम्येकवचने पूर्वसवर्णदीर्घः । 'ईदूतौ च सप्तम्यर्थे' (पा. सू. १. १. १९) इति प्रगृह्यता ॥ ^अत्र अस्यां पृथिव्यां ^महिना* महत्त्वेन या धेनूः ^वारं वरणीयं प्रदेशम् ^ऋण्वथः[1] गमयथः ॥ अन्तर्भावितण्यर्थोऽयम् ॥ गमनादिव्यवहारस्य तयोरधीनत्वात् द्यावापृथिव्योः अभिमानिदेवत्वाच्च मित्रावरुणयोः । ता एताः ^धेनवः गावः सायंकाले युष्मन्महत्त्वेन ^अरेणवः अनवद्याः तस्कराद्यनपहारेण अनष्टा वा ^तुजः क्षीराणां प्रदात्र्यः ॥ तुजतिः[2] दानकर्मा ॥ ^सद्मन्[3] सद्मनि गोष्ठे ^आ आश्रिता आगच्छन्ति वा ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ ^ताः एवंकारिता धेनवः ^उपरताति उपरतातौ ॥ सप्तम्या लुक् ॥ मेघानां विस्तारवति अन्तरिक्षे मेघाच्छन्ने सति ^सूर्यं सर्वस्य प्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा । 'सुवीर्यो मर्या यथा गोपायत इति तत्सूर्यस्य सूर्यत्वम्' (तै. ब्रा. २. २. १०) इति श्रुत्यन्तरात् । आदित्यमभिलक्ष्य ^स्वरन्ति शब्दयन्ति सुखसंचाराय ॥ 'स्वृ शब्दोपतापयोः' । भौवादिकः ॥ कस्मिन् काले इति तदुच्यते । ^निम्रुचः ^उषसः । सर्वेष्वपि सायंकालेषु उषःकालेषु च । तत्र दृष्टान्तः । ^तक्ववीरिव । तक्वा स्तेनः । तस्य वेता गन्ता मनुष्यः । स यथा क्रोशति तद्वत् । एवं निरुद्धानां गवां सुखचारः[4] युष्मदायत्तः इति तयोः स्तुतिः ॥  ॥ २० ॥

आ वा॑मृ॒ताय॑ के॒शिनी॑रनूषत॒ मित्र॒ यत्र॒ वरु॑ण गा॒तुमर्च॑थः ।
अव॒ त्मना॑ सृ॒जतं॒ पिन्व॑तं॒ धियो॑ यु॒वं विप्र॑स्य॒ मन्म॑नामिरज्यथः ॥ ६ ॥

आ । वा॒म् । ऋ॒ताय॑ । के॒शिनीः॑ । अ॒नू॒ष॒त॒ । मित्र॑ । यत्र॑ । वरु॑ण । गा॒तुम् । अर्च॑थः ।
अव॑ । त्मना॑ । सृ॒जत॑म् । पिन्व॑तम् । धिय॑ः । यु॒वम् । विप्र॑स्य । मन्म॑नाम् । इ॒र॒ज्य॒थ॒ः ॥ ६ ॥

हे मित्रावरुणौ[5] ^केशिनीः केशवत्योऽग्नेर्ज्वालाः ^वां युवाम् ^ऋताय यज्ञार्थम् ^आ ^अनूषत । हविःसमर्पणेनाभिपूजयन्तीत्यर्थः । कुत्रेति तदुच्यते । हे ^मित्र हे ^वरुण युवामुभौ ^यत्र यागे ^गातुं गमनं देवयजनदेशं वा । गातुरिति पृथिवीनाम, 'गातुः पूषा' (नि. १. १. २०) इत्युक्तत्वात् । ^अर्चथः पूजयथः स्वीकुरुथ इत्यर्थः । आगत्य च ^त्मना आत्मनैव[6] ^अव ^सृजतं वृष्टिम् अवाङ्मुखं विसृजतम् । तथा कृत्वा ^धियः अस्मदीयानि कर्माणि ^पिन्वतं[7] वर्धयतम् इत्यर्थः । एवं कृत्वा ^विप्रस्य मेधाविनः यजमानस्य ^मन्मनां मननवतीनां स्तुतीनां ^युवं युवाम् ^इरज्यथः

---

१. ङ-झ१-मही महान्तौ युवां महिना महिम्ना महत्त्वेन अत्र अस्यां पृथिव्यां या धेनुः वारं वरणीयं प्रदेशम् ऋण्वथः । *क-महिना महिम्ना । २. ख-तुञ्जतिः । ३. क्ष-ङ-झ१-ञ-ट-संबन्धिन्यः । यद्वा क्षिप्रं सद्मन् । ४. क्ष-ङ-झ१-ञ-ट-सुखसंचारः । ५. क्ष-ङ-झ१-ञ-ट- मित्रावरुणौ वां युवयोः । ६. क्ष-ञ-ट-आत्मना । ७. झ-पिन्वतं सेचयतम्; झ१-सेवयन्तम् ।

ईश्वरौ स्वामिनौ भवथः । इरज्यतिरैश्वर्यकर्मा, 'इरज्यति पत्यते' ( नि. २. २१. १ ) इति तन्नामसु उक्तत्वात् ॥

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥ ७ ॥

यः । वाम् । यज्ञैः । शशमानः । ह । दाशति । कविः । होता । यजति । मन्मऽसाधनः ।
उप । अह । तम् । गच्छथः । वीथः । अध्वरम् । अच्छ । गिरः ।
सुऽमतिम् । गन्तम् । अस्मयू इत्यस्मऽयू ॥ ७ ॥

यः ह यः खलु यजमानः वां युवामुद्दिश्य युवाभ्यां वा यज्ञैः यागैर्निमित्तभूतैः शशमानः शंसमानः दाशति हविरादिकं स्वस्वत्वं निवर्त्य युष्मत्स्वत्वापादनं करोति । य एव कविः अनूचानः 'येऽनूचानास्ते[1] कवयः' (ऐ. ब्रा. २.२) इति श्रुतेः । अथवा कविर्मेधावी होता सम्यग्घोमनिष्पादको यजमानः मन्मसाधनः मननीयद्रव्यदक्षिणादिसाधनोपेतः सन् यजति सोमयागादिकं करोति[2] । तम् एव[3] यजमानं सुमतिं शोभनप्रज्ञम् उप उपलक्ष्य गच्छथः प्राप्नुथः[4] खलु । अध्वरं तदीयं यज्ञं वीथः कामयेथे । किंच[4] अस्मयू अस्मान् कामयमानौ युवां गिरः स्तुतीः अच्छ अभिलक्ष्य गन्तं गच्छतम् । तादृशं मां प्राप्य स्तुतीः स्वीकुरुतमित्यर्थः । अत्र यद्यपि तम् इति सामान्यनिर्देशः प्रतिभाति तथापि अस्मयू इत्युक्तत्वात् दीर्घतमाः स्वात्मानमेव परोक्षतया उक्तवानिति गम्यते[5] । यद्वा । यो दाशति यश्च यजते तमुपेत्य तदीयं यज्ञं कामयेथे[6] । अतोऽस्मयू युवां सुमतिं मां मदीया गिरः स्तुतीः[7] अच्छ अभिलक्ष्य गच्छतम् ॥

युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु ।
भरन्ति वां मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे ॥ ८ ॥

युवाम् । यज्ञैः । प्रथमा । गोभिः । अञ्जते । ऋतऽवाना । मनसः । न । प्रऽयुक्तिषु ।
भरन्ति । वाम् । मन्मना । समऽयता । गिरः । अदृप्यता । मनसा । रेवत् । आशाथे इति ॥ ८ ॥

हे ऋतावाना यज्ञवन्तौ वृष्ट्युदकवन्तौ वा मित्रावरुणौ युवां प्रथमा प्रथमौ यज्ञैः यजनसाधनैः गोभिः गोविकारैः पयआदिभिः अञ्जते व्यञ्जयन्ति यजमानाः । देवभागं यागेषु क्षीरादिभिः

१. क्ष-ख-च-ज-ट—ये वा अनूचानास्ते । २. क्ष-ञ-ट—करोति च । ३. क्ष-ञ-ट—तमेव । ४. क्ष-ङ-झ१-ञ-ट—प्राप्नुथः कामयथः । अहेति यजमानविशेषणम् । अहिंसकं युष्मान् स्तुवन्तमित्यर्थः । किंच । ५. क्ष-ङ-झ१-ञ-ट—अवगम्यते । ६. क्ष-ञ-ट—कामयथः । ७. क्ष-ञ-ट—स्तुतीश्च ।

यजन्ते इत्यर्थः । यद्वा । गोभिः[१] अञ्जते स्तुवन्ति[१] तत्र दृष्टान्तः । vप्रयुक्तिषु प्रयोगेषु vमनसो vन ॥ कर्मणि षष्ठी ॥ मन इव । तद्यथा प्रथमं व्यञ्जयन्ति मुख्यं कुर्वन्ति तत्पूर्वकत्वात् सर्वव्यवहारस्य । किंच vवां युवां vमन्मना मननवता vसंयता युवामेव सम्यग्गच्छता चित्तेन vगिरः स्तुतीः vभरन्ति संपादयन्ति । यस्मादेवं तस्मात् vअदृप्यता अनभिभववता vमनसा प्रकृष्टेन चेतसा युक्तौ सन्तौ vरेवत्[२] धनवत् कर्म अस्मदीयम् vआशाथे अश्नुवाथे[३] व्याप्नुथः ददाथे इत्यर्थः[३] ॥ अश्नोतेर्लिटि 'अनित्यमागमशासनम्' इति वचनात् इडभावः ॥

**रेवद्वयो दधाथे रेवदाशाथे नरा मायाभिरितऊति माहिनम् ।**
**न वां द्यावोऽहभिर्नोत सिन्धवो न देवत्वं पणयो नानशुर्मघम् ॥ ९ ॥**

रेवत् । वयः । दधाथे इति । रेवत् । आशाथे इति । नरा । मायाभिः । इतःऽऊति । माहिनम् ।
न । वाम् । द्यावः । अहऽभिः । न । उत । सिन्धवः । न । देवऽत्वम् ।
पणयः । न । आनशुः । मघम् ॥ ९ ॥

हे मित्रावरुणौ युवां vरेवत्[४] धनवत् vवयः अन्नं vदधाथे उभयं च धारयथः । यस्मादेवं तस्मात् vरेवत् धनवत् । सहदृष्टत्वात् वयः इति गम्यते । धनविशिष्टमन्नं हे vनरा नेतारौ युवाम् vआशाथे अश्नुवाथे अस्मभ्यं ददाथे इत्यर्थः । कीदृशम्[५] । vमायाभिः युवयोः[६] प्रज्ञाभिः vइतऊति इतोऽस्मदभिमुखं गमनवत् इतो रक्षणवद्वा vमाहिनम् । महन्नामैतत् । अतिमहत्[७] । ईदृशोर्युवयोः[८] एतादृशं सामर्थ्यं कुत इत्यत आह । vवां युवयोः देवत्वम् vअहभिः अहोभिः रात्रिभिः । अत्र अहःशब्देन रात्रिरभिधीयते द्योशब्देन अहःपृथगभिधानात् । ताभिः सहिताः vद्यावः दिवसाः vन vआनशुः न प्राप्नुवन्ति । अहश्च रात्रिश्चोभे न तरतः* इत्यर्थः । vउत अपि च सिन्धवः स्यन्दनशीला नद्यः vन चैव आनशुः तथा युवयोः vदेवत्वं vपणयः असुरा अपि vन आनशुः[८] । vमघं धनं च vन आनशिरे । लोकत्रये युवयोः पराभवितारो न केऽपि सन्तीत्यर्थः ॥      ॥ २१ ॥

'युवं वस्त्राणि' इति सप्तर्चं द्वादशं सूक्तं दैर्घतमसम् । अनादेशपरिभाषया त्रैष्टुभम् । मैत्रावरुणं पूर्वत्र 'मैत्रावरुणं हि' इत्युक्तत्वात् । सूक्तविनियोगो लैङ्गिकः । मैत्रावरुणे पशावाद्या वपायाज्या । 'प्रदानानाम्' इति खण्डे सूत्रितं-'युवं वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसे नः'

---

१. क्ष-ञ-ट—गोभिः स्तुतिभिः वाग्भिः अञ्जते स्तुवन्ति; झ—गोभिः स्तुतिवाग्भिः यजन्ते स्तुवन्ति । २. क-क्ष-ङ-ज-झ-झ१-ञ-ट-ण—रेवत् रयिवत् । ३. क्ष-ङ-झ१-ञ-ट—अश्नुवाथे । यद्वा । विशिष्टमन्नम् आशाथे व्याप्नुथः ददथः इत्यर्थः(ङ-दत्थः इत्यर्थः ) । ४. क-क्ष-ङ-ज-झ१-ञ-ट-ण—रेवत् रयिवत् । ५.क्ष-ञ-ट—किंच हे नरा नेतारौ युवाम् । ६. क्ष-ञ-ट—'युवयोः' नास्ति । ७. क्ष-ञ-ट—अतिमहत् महं धनमाशाथे इति शेषः । ८. क्ष-ङ-झ१-ञ-ट—ईदृशौ युवां अहोभिः रात्रिभिः सहितौ द्यावः दिवसाः नानशुः न व्याप्नुवन् । अत्र अहःशब्देन रात्रिरभिधीयते । द्योशब्देन अहः पृथगभिधानात् । अहश्च रात्रिश्च उभे तरत इत्यर्थः । उतापि च सिन्धवः स्यन्दनशीला नद्यो न नैवानशुः । तथा देवत्वं युवयोर्देवभावं च नानशुः तथा पणयोऽसुरा अपि नानशुः । *. व—चरतः ।

( आश्व. श्रौ. ३. ८ ) इति । सैव समावर्तने नववस्त्रधारणे विनियुक्ता । सूत्रितं च–' युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्य ' ( आश्व. गृ. ३. ८. ९ ) इति ॥

युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।
अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥ १ ॥

युवम् । वस्त्राणि । पीवसा । वसाथे इति । युवोः । अच्छिद्राः । मन्तवः । ह । सर्गाः ।
अव । अतिरतम् । अनृतानि । विश्वा । ऋतेन । मित्रावरुणा । सचेथे इति ॥ १ ॥

हे मित्रावरुणौ पीवसा पीनौ युवं युवाम् । यद्वा । पीवसा पीनानि अच्छिन्नानि वस्त्राणि आच्छादनयोग्यानि वासांसि वसाथे आच्छादयथः । यद्वा । पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणि दधाथे अविच्छिन्नानि वस्त्रस्थानीयानि तेजांसि धारयथ इत्यर्थः । किंच युवयोः सर्गाः सृष्टयः अच्छिद्राः अच्छिन्नाः मन्तवो ह मननीयाश्च । ईदृशौ युवां विश्वा विश्वानि सर्वाणि अनृतानि असत्यानि अप्रियाणि पापानि अवातिरतं नाशयतम् ॥ विश्व इत्यत्र संहितायाम् ' ऋत्यकः ' इति प्रकृतिभावो ह्रस्वत्वं च ॥ ऋतेन फलेन तत्साधनेन यज्ञेन वा सचेथे संगच्छेथे । अस्मभ्यं योजयथ इत्यर्थः ॥

एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।
त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥ २ ॥

एतत् । चन । त्वः । वि । चिकेतत् । एषाम् । सत्यः । मन्त्रः । कविऽशस्तः । ऋघावान् ।
त्रिःऽअश्रिम् । हन्ति । चतुःऽअश्रिः । उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥ २ ॥

एषाम् एतयोर्मध्ये ॥ बहुवचनं पूजार्थम् । यद्वा । तदनुचरापेक्षया बहुवचनम् ॥ एतयोर्मध्ये त्वः चन एक एव एतत् वक्ष्यमाणं सामर्थ्यरूपं कर्म वि चिकेतत् विशेषेण चेतति[1] अनुतिष्ठतीत्यर्थः । सः[2] विशेष्यते । स एकः सत्यः अबाध्यः सत्सु भवो वा मन्त्रः मननवान् कविशस्तः कविभिर्मेधाविभिः शंसनीयः ऋघावान् हिंसावान् । अनेन वक्ष्यमाणस्य सामर्थ्यस्य संभाविता[3] प्रतिपादिता[4] अभवदित्युक्तम्[4] । किं तत् इत्याशङ्क्याह । त्रिरश्रिम् । अश्रित्रयोपेतमायुधं त्रिरश्रि । तद्वन्तम् ॥ मत्वर्थो लुप्यते ॥ उपलक्षणमेतत् । सर्वायुधसंपन्नमित्यर्थः । एतन्नामानं वा । चतुरश्रिः ततोऽप्यधिकायुधवान् । न केवलमायुधसामर्थ्यं किंतु उग्रः स्वयमुद्गूर्णबलः हन्ति हिनस्ति अतिबलं शत्रुम् । किंच युवयोः एकस्यैव सामर्थ्येन देवनिदो ह देवनिन्दकास्तु प्रथमाः समर्थाः सन्तोऽपि अजूर्यन् स्वयमेव जीर्णा भवन्ति ॥ जीर्यतेः श्यनि ' बहुलं छन्दसि ' इति उत्वम् ॥ युवयोर्मध्ये एकोऽपि महाबलः । मिलितयोस्तु सामर्थ्ये किमु वक्तव्यमिति भावः । अथवा । एषां युवयोः एतत् उत्तरत्र वक्ष्यमाणं सामर्थ्यम् एकः सत्यादिलक्षणो वि चिकेतत् विशेषेण जानाति । शेषं पूर्ववत् ॥

---

१. क्ष-ञ-ट–चेतयति । २. ङ-क्ष-ञ-ट–सः एव ३. क्ष-झ-झ१-ञ-ट–संभावना । ४. क्ष-ख-ङ-झ१-ञ-ट-फ–प्रतिपादिता भवति एतदित्युक्तम्; च-झ–प्रतिपादिता भवति तदित्युक्तम् ।

अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत ।
गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत् ॥ ३ ॥

अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् । मित्रावरुणा । आ । चिकेत ।
गर्भः । भारम् । भरति । आ । चित् । अस्य । ऋतम् । पिपर्ति । अनृतम् । नि । तारीत् ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ पद्वतीनां पादवतीनां मनुष्यादीनां प्रजानां प्रथमा प्रथमभाविनी[1] अपात् पादरहिता[2] उषाः[2] । प्रतिदिनं सूर्यचन्द्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनात् अपात् इति च एति इति च उपचर्यते । तत् तादृशं वां युवयोः प्रसिद्धं कर्म कः आ चिकेत कः आभिमुख्येन जानाति ॥ ' कित[3] ज्ञाने[3] ' ॥ तत्स्तुत्यमित्यर्थः[4] । मित्रावरुणयोः अहोरात्रदेवत्वात् अहोरात्रयोः अन्तरालस्यैव[5] उषस्त्वात् एतत्कर्मत्वम् । किंच अस्य लोकस्य भारं निर्वाहं गर्भः युवयोर्गर्भस्थानीयः शिशुरादित्यः । अहोरात्रयोर्मध्यकाले उत्पत्तेः ताभ्यामेव मित्रावरुणत्वात् ' अहोरात्रे वै मित्रावरुणौ ' ( तै. सं. २. ४. १०. १ ) इति श्रुतेः । स आहरति चित् । समन्तान्निर्वहत्येव । हरति वा अस्य भारं जाड्यम् । चित् इत्यवधारणे । तत्कथमिति तदुच्यते । ऋतं सत्यं जगतः प्रकाशगमनादिरूपं पिपर्ति पूरयति । अनृतम् उक्तविलक्षणमन्धकारं गमनादिनिरोधं च नि तारीत् नितरति[6] निमज्जयति नाशयतीत्यर्थः । शिशोर्जगद्भारवहनरूपं कर्म युष्मत्सामर्थ्यादिति ॥

प्रयन्तमित्परि जारं कनीनां पश्यामसि नोपनिपद्यमानम् ।
अनवपृग्णा वितता वसानं प्रियं मित्रस्य वरुणस्य धाम ॥ ४ ॥

प्रऽयन्तम् । इत् । परि । जारम् । कनीनाम् । पश्यामसि । न । उपऽनिपद्यमानम् ।
अनवऽपृग्णा । विऽतता । वसानम् । प्रियम् । मित्रस्य । वरुणस्य । धाम ॥ ४ ॥

कनीनां कमनीयानां दीप्तानां कन्यकास्थानीयानामुषसाम् ॥ कनतेः कान्तिकर्मण इन्[7] । ' कृदिकारादक्तिनः ' इति ङीष् । आमि कन्याशब्दस्य वा छान्दसं संप्रसारणम् ॥ तासां जारम् आदित्यं प्रयन्तमित् प्रगच्छन्तमेव[8] परि पश्यामसि वयं परिपश्यामः उपनिपद्यमानं* क्षणमात्रमपि निषीदन्तं न पश्यामः[8]। एतदपि तयोः सामर्थ्यम् । पुनस्तदेव[9] विशेष्यते । अनवपृग्णा अनवपृग्णानि अत एव विततानि[10] तेजांसि वसानम् आच्छादयन्तं प्रियं सर्वेषां प्रियभूतं मित्रस्य वरुणस्य च

---

१. क्ष-ङ-झ-झ१-ञ-ट–प्रथमभाविनी सती । २. क्ष-ञ-ट–पादरहिता एव उदेति गच्छति । ३. क्ष-झ१-ञ-ट–क्रित ज्ञाने । जुहोत्यादिकः । लेट्यडागमः । ४. क्ष-झ१-ञ-ट–अतिस्तुत्यमित्यर्थः; झ-झ–अतः स्तुत्यमित्यर्थः । ५. क्ष-झ१-ञ-ट–अन्तरालकालस्यैव । ६. ङ–वितारयति । ७. क-क्ष-ञ-ट–इन् सर्वधातुभ्यः इति इन्; ख-च-ज-फ–इन् । ८. क्ष-ञ-ट–गच्छन्तमेव नोपनिपद्यमानं क्षणमात्रमपि अनिषीदन्तं विहरन्तं तासामप्रगल्भत्वादिति भावः । तादृशं जारं जारसदृशं रात्रेर्जरयितारमादित्यं न पश्यामसि न पश्यामः । सर्वेऽपि पश्यन्तीत्यर्थः; झ१–नोपनिपद्यमानं क्षणमात्रमप्यनिषीदन्तं विहरन्तं तासामप्रगल्भादिति भावः । तादृशं जारं जारसदृशं आदित्यं न पश्यामः । सर्वेपि पश्यन्ति इत्यर्थः । एतदपि तयोः सामर्थ्यम् ।
* झ–नोपनिपद्यमानम् । ९. क्ष-ञ-ट–पुनः स एव । १०. झ–वितता विततानि ।

ᵛधाम तेजःस्थानभूतम् । यद्वा । प्रियं धामेति संबध्यते । तयोः प्रेमस्थानम्[1] । ईदृशमादित्यं युष्मदनुज्ञया संचरन्तं पश्यामसि[2] ॥

अनश्वो जातो अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः ।
अचित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणन्तः ॥ ५ ॥

अनश्वः । जातः । अनभीशुः । अर्वा । कनिक्रदत् । पतयत् । ऊर्ध्वऽसानुः ।
अचित्तम् । ब्रह्म । जुजुषुः । युवानः । प्र । मित्रे । धाम । वरुणे । गृणन्तः ॥ ५ ॥

स एवादित्यः ᵛअनश्वः यद्यपि शीघ्रगाम्यश्वरहितः तथा[3] ᵛअनभीशुः आलम्बनाधारप्रग्रहस्थानीयरश्मिरहितः तथापि ᵛअर्वा ᵛजातः शीघ्रगमनवान् संपन्नः । तथाविधोऽयमादित्यः ᵛकनिक्रदत् अत्यर्थं क्रन्दयन् ॥ क्रन्देर्यङ्लुगन्तात् शतरि दाधर्त्यादौ निपात्यते ॥ ᵛऊर्ध्वसानुः उपर्युपरि समुच्छ्रयणः सन् ᵛपतयत् गच्छति । ᵛअचित्तं चित्ताविषयं ᵛब्रह्म परिवृढम् उक्तरूपं कर्म ᵛमित्रे ᵛवरुणे च उभयोः ᵛधाम तेजःस्थानं ᵛयुवानः मिश्रयन्तः तयोर्धाम्नि आरोपयन्तः तथा ᵛप्र ᵛगृणन्तः[4] युवयोः तेजःप्रभवमिति[5] प्रकर्षेण[6] स्तुवन्तः ᵛजुजुषुः सेवन्ते । मनुष्याः सूर्यस्य निरालम्बान्तरिक्षसंचारात्मकं कर्म वरुणमित्रयोरधीनम्[7] इति स्तुवन्तीत्यर्थः ॥

आ धेनवो मामतेयमवन्तीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन् ।
पित्वो भिक्षेत वयुनानि विद्वानासाविवासन्नदितिमुरुष्येत् ॥ ६ ॥

आ । धेनवः । मामतेयम् । अवन्तीः । ब्रह्मऽप्रियम् । पीपयन् । सस्मिन् । ऊधन् ।
पित्वः । भिक्षेत । वयुनानि । विद्वान् । आसा । आऽविवासन् । अदितिम् । उरुष्येत् ॥६॥

ᵛमामतेयं ममतायाः पुत्रं दीर्घतमसं मां ᵛब्रह्मप्रियं परिवृढस्य कर्मणः प्रियतमं परिवृढस्याग्नेः प्रीणयितारं वा ᵛअवन्तीः अवन्त्यः प्रीणयन्त्यः ᵛधेनवः गावः ᵛसस्मिन्[8] स्वकीये ᵛऊधन् ऊधसि ᵛआ ᵛपीपयन् सर्वत आप्याययन्तु ॥ प्यायतेर्णिचि छान्दसः पीभावः ॥ ऊधोगतेन क्षीरेण युवाभ्यां प्रदेयेन नोऽस्मान् रक्षन्ति इत्यर्थः । ' मित्रावरुणाभ्यां पयस्या ' (तै.सं.७.५.२२.१) इति श्रुतेः । एवं प्रदत्तहविः ᵛवयुनानि अनुष्ठानविषयज्ञानानि ᵛविद्वान् जानन् हुतशेषो भक्षणीय इत्यवगच्छन् दीर्घतमाः ᵛपित्वः[9] पितोर्हुतशिष्टस्य[9] अन्नस्य तादृगन्नम् ᵛआसा आस्येन भक्षयितुं ᵛभिक्षेत याचेत युष्मान् । किंच ᵛविवासन् युवां परिचरन् ᵛअदितिम् अखण्डितम् अन्यूनमेतत्कर्म[10] ᵛउरुष्येत्[10] । यथा शिष्टं भिक्षेत यथा च कर्म समापनेन रक्षेत् तथा अपीपयन्नित्यर्थः ॥

---

१. ङ-ञ१-धाम स्थानम् । २. ङ-च- न पश्यामसि । ३. ञ-झ-तथापि । ४. क्ष-ङ-ञ-ट-गृणन्तः प्रकर्षेण शब्दयन्तः । ५. ञ-तेजःप्रभावमिति । ६. क्ष-ञ१-ञ-ट-'प्रकर्षेण ' नास्ति ७. क्ष-झ-ञ१-ञ-ट-मित्रावरुणयोरधीनम् । ८. ञ-स्वस्मिन्; झ-सस्मिन् स्वस्मिन् । ९. ञ-पित्वः ततः पितुः हुतशिष्टस्य । १०. क्ष-ङ-ञ१-ञ-ट-अन्यूनमेतत्कर्म उरुष्येत् रक्षेत्; झ-अन्येनैतत्कर्म उरुष्येत् रक्षेत् ।

मैत्रावरुणपशौ वपाया एषानुवाक्या । सूत्रितं च–' आ वां मित्रावरुणा हव्यजुष्टिमा यातं मित्रावरुणा ' ( आश्व. श्रौ. ३. ८ ) इति ॥

आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम् ।
अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥ ७ ॥

आ । वाम् । मित्रावरुणा । हव्यऽजुष्टिम् । नमसा । देवौ । अवसा । ववृत्याम् ।
अस्माकम् । ब्रह्म । पृतनासु । सह्याः । अस्माकम् । वृष्टिः । दिव्या । सुऽपारा ॥ ७ ॥

हे ^v^देवौ देवनशीलौ ^v^मित्रावरुणा मित्रावरुणौ ^v^वां युवां ^v^हव्यजुष्टिं हविःसेवां ^v^नमसा नमस्कारोपलक्षितेन स्तोत्रेण ^v^अवसा रक्षणेन निमित्तभूतेन ^v^आ ^v^ववृत्याम् आवर्तयेयम् । यद्वा । नमस्कारेण अवसा अन्नेन च आ ववृत्याम् । किंच हे मित्रावरुणौ ^v^अस्माकं संबन्धि ^v^ब्रह्म इदानीं क्रियमाणं परिवृढं कर्म ^v^पृतनासु संग्रामेषु ^v^सह्याः सह्यात् शत्रून् अभिभूयात् । अनेन कर्मणा शत्रून् अभिभवेयमित्यर्थः । किंच ^v^अस्माकं ^v^दिव्या दिवि भवा ^v^वृष्टिः ^v^सुपारा सुष्ठु पारयित्री[1] भवत्विति शेषः । वृष्टौ सत्यां व्रीह्यादिद्वारा कर्मसमाप्तेरिति भावः ॥　　॥ २२ ॥

' यजामहे वाम् ' इति चतुर्ऋचं चतुर्दशं सूक्तं दैर्घतमसं त्रैष्टुभं मैत्रावरुणम् । ' यजामहे चतुष्कम् ' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा नमोभिः ।
घृतैर्घृतस्नू अध यद्वामस्मे अध्वर्यवो न धीतिभिर्भरन्ति ॥ १ ॥

यजामहे । वाम् । महः । सऽजोषाः । हव्येभिः । मित्रावरुणा । नमःऽभिः ॥
घृतैः । घृतस्नू इति घृतऽस्नू । अध । यत् । वाम् ।
अस्मे इति । अध्वर्यवः । न । धीतिऽभिः । भरन्ति ॥ १ ॥

हे ^v^घृतस्नू घृतस्य[2] स्रावयितारौ[2] मित्रावरुणौ ^v^महः महान्तौ ^v^वां ^v^यजामहे पूजयामो यजमानाः ऋत्विजश्च । कीदृशाः । ^v^सजोषाः समानप्रीतियुक्ताः । केन साधनेनेति तदुच्यते । ^v^हव्येभिः पुरोडाशादिभिः ^v^नमोभिः नमस्कारोपलक्षितैः[3] । ^v^अध अपि च ^v^यत् यस्मात् कारणात्

---

१. क्ष-ङ-झ-झ१-ञ-ट–पारयित्री कर्मणः समापयित्री । २. क्ष-ञ-ट–घृतस्य आज्यस्य स्नावयितारौ; झ१–आज्यस्य स्नपयितारौ ३. क्ष-ङ-झ१-ञ-ट–नमस्कारोपलक्षितैः स्तोत्रैः । घृतैः क्षरणद्रव्यैः क्षीराज्यसोमादिभिश्च ( क्ष-ञ-ट–क्षीराज्यसोमादिरूपैभिश्च ? ) युवां सम्यक् यजामहे पूजयामः; झ-नमस्कारोपलक्षितैः स्तोत्रैः ।

^v^वां युवाम्[1] ^v^अध्वर्यवः अस्मदीया अध्वर्यवोऽपि[1]। अत्र नशब्दोऽप्यर्थे। तेऽपि[2] ^v^धीतिभिः कर्मभिः स्वकीयैः ^v^भरन्ति पोषयन्ति तस्मात् यजामहे[3]॥

**प्रस्तु॒तिर्वां॒ धाम॒ न प्रयु॑क्ति॒रया॑मि मित्रावरुणा सुवृ॒क्तिः।**
**अ॒नक्ति॒ यद्वां॑ वि॒दथे॑षु॒ होता॑ सु॒म्नं वां॑ सू॒रिर्वृ॑षणा॒विय॑क्षन्॥ २॥**

प्रऽस्तु॑तिः। वा॒म्। धाम॑। न। प्रऽयु॑क्तिः। अया॑मि। मि॒त्रा॒व॒रु॒णा॒। सु॒ऽवृ॒क्तिः।
अ॒नक्ति॑। यत्। वा॒म्। वि॒दथे॑षु। होता॑। सु॒म्नम्। वा॒म्। सू॒रिः। वृ॒ष॒णौ॒। इय॑क्षन्॥ २॥

हे मित्रावरुणौ ^v^वां युवयोः संबन्धिनो यागस्य ^v^प्रस्तुतिः प्रस्तावना करोमीति संकल्प एव ^v^न ^v^प्रयुक्तिः कृत्स्नप्रयोगो न संपन्नः। तावतैव युवयोः ^v^धाम तेजःस्थानम् ^v^अयामि प्राप्नोमि। ^v^सुवृक्तिः युवयोः शोभनावर्जकश्च युष्मत्परिग्रहादस्मि[4]। ^v^यत् यदा तु ^v^विदथेषु यज्ञेषु ^v^वां युवां ^v^होता होमनिष्पादकोऽयमध्वर्युः ^v^अनक्ति हविषा आगच्छति होमं करोतीत्यर्थः। यद्वा। होता देवानामाह्वाता एतन्नामकः ऋत्विक् शस्त्रादिना वाम् अनक्ति व्यञ्जयति। तदा ^v^सूरिः युष्मन्माहात्म्यवित् ^v^इयक्षन् यागं कर्तुमिच्छन् अहं हे ^v^वृषणौ कामानां वर्षितारौ ^v^वां युवयोः ^v^सुम्नं युष्मत्संबन्धि सुखं देवत्वलक्षणम् अयामीति शेषः॥

**पी॒पाय॑ धे॒नुरदि॑तिर्ऋ॒ताय॒ जना॑य मित्रावरुणा ह॒विर्दे।**
**हि॒नोति॒ यद्वां॑ वि॒दथे॑ सप॒र्यन्त्स रा॒तह॑व्यो॒ मानु॑षो॒ न होता॑॥ ३॥**

पी॒पाय॑। धे॒नुः। अदि॑तिः। ऋ॒ताय॑। जना॑य। मि॒त्रा॒व॒रु॒णा॒। ह॒विः॒ऽदे।
हि॒नोति॑। यत्। वा॒म्। वि॒दथे॑। स॒प॒र्यन्। सः। रा॒तऽह॑व्यः। मानु॑षः। न। होता॑॥ ३॥

हे ^v^मित्रावरुणा मित्रावरुणौ ^v^ऋताय युष्मत्संबन्धियज्ञाय ^v^हविर्दे हविषो दात्रे॥ 'आतो मनिन्°' इति विच्। भत्वे 'आतो धातोः' इति आकारलोपः॥ ^v^जनाय यजमानाय च ^v^धेनुः प्रीणयित्री गौः ^v^अदितिः अदीना बहुक्षीरा सती ^v^पीपाय क्षीरेण पुनःपुनः आप्यायताम्॥ प्यायतेश्छान्दसः प्रार्थनायां लिट्। 'लिड्यङोश्च' इति पीभावः॥ पयस्यादिहविष्कं यज्ञं पयोव्रतादिषु यजमानं चेत्यर्थः। कस्मिन् काले इति चेत् तत्राह। ^v^यत् यदा ^v^सः प्रसिद्धः ^v^रातहव्यः एतन्नामा राजा ^v^सपर्यन् स्तुत्या पूजयन् ^v^मानुषः ^v^होता ^v^न मनुष्यस्य यजमानस्य संबन्धी एतन्नामक ऋत्विगिव ^v^विदथे यज्ञे ^v^वां ^v^हिनोति हविरादिना प्रीणयति। तदा पीपायेत्याह॥

---

१. क्ष-ङ-ज्ञ-झ-ञ-ट—युवां अस्मे अस्मदीया अध्वर्यवो न अध्वर्यवोऽपि। २. झ—तेऽपि घृतैः आज्यादिभिः अस्मे यजमानाय। ३. क्ष-ङ-झ१-ञ-ट—यजामहे। यद्वा। यत् येन प्रकारेण वां युवां अध्वर्यवो न अध्वर्यव इव धीतिभिः युष्मदीयैः कर्मभिः अस्मे अस्मान् अस्मदीयं यागं वा भरन्ति भरथः। बहुवचनं पूजार्थम्। तथा यजामहे इत्यर्थः (झ१—भरन्ति ......इत्यर्थः एतावान् ग्रन्थो नास्ति.)। ४. क्ष-ङ-झ१-ञ-ट—युष्मान् (ङ-झ१-युष्मत्) परिगृहीता सन्।

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।
उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥ ४ ॥

उत । वाम् । विक्षु । मद्यासु । अन्धः । गावः । आपः । च । पीपयन्त । देवीः ।
उतो इति । नः । अस्य । पूर्व्यः । पतिः । दन् । वीतम् । पातम् । पयसः । उस्रियायाः ॥४॥

ᵛउत अपि च हे मित्रावरुणौ ᵛवां युवाम् ᵛअन्धः अदनीयमन्नं पयोरूपं पुरोडाशादिरूपं वा ᵛदेवीः द्योतनशीलाः ᵛगावः[1] ᵛआपश्च[1] व्रीह्यादिप्रवर्धकान्युदकानि च ᵛमद्यासु युष्माभिर्मदनीयासु ᵛविक्षु प्रजासु यजमानलक्षणासु तासामभिवृद्ध्यर्थं ᵛपीपयन्त आप्याययन्तु । ᵛउतो अपि च ᵛनः अस्मत्संबन्धिनः ᵛअस्य यज्ञस्य ᵛपूर्व्यः पूर्वकालीनः ᵛपतिः पालकोऽग्निः ᵛदन् दाता भवत्विति शेषः । अग्नौ हूयमानत्वात् सर्वेषामपि हविषाम् । यस्मादेवं तस्मात् हे मित्रावरुणौ ᵛवीतं भक्षयतं पुरोडाशादिकम् । ᵛउस्रियायाः[2] क्षीराद्युस्राविण्या गोः ᵛपयसः पयः ᵛपातम्[3] । यद्वा । घनीभूतं पयस्याया वीतं स्रवद्रूपं पातम् ॥ ॥ २३ ॥

'विष्णोर्नु कम्' इति षड्टर्चं पञ्चदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवम् । अत्रानुक्रमणिका—'विष्णोः षड्वैष्णवं हि' इति । अभिप्लवषडहेपृक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थम् इदमादिसूक्तद्वयं विनियुक्तम् । 'स्तोमे वर्धमाने' इति खण्डे सूत्रितं—'विष्णोर्नु कमिति सूक्ते परो मात्रयेत्यच्छावाकः' (आश्व. श्रौ. ७. ९) इति । तथा तृतीयसवने सोमातिरेके उत्तरोत्तरसंस्थोपगन्तव्या आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम् । तत्रैतदेव सूक्तम् । 'सोमातिरेके' इति खण्डे सूत्रितं—'महाँ इन्द्रो नृवद्विष्णोर्नु कम्' (आश्व. श्रौ. ६. ७) इति॥ आग्निमारुतशस्त्रे आद्या विनियुक्ता । 'अथ यथेतम्' इति खण्डे सूत्रितं—'विष्णोर्नु कं वीर्याणि प्र वोचं तन्तुं तन्वन्रजसो भानुमन्विहि' (आश्व. श्रौ. ५. २०) इति ॥

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥

विष्णोः । नु । कम् । वीर्याणि । प्र । वोचम् । यः । पार्थिवानि । विऽममे । रजांसि ।
यः । अस्कभायत् । उत्ऽतरम् । सधऽस्थम् । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥ १ ॥

हे नराः ᵛविष्णोः व्यापनशीलस्य देवस्य ᵛवीर्याणि वीरकर्माणि ᵛनु ᵛकम् अतिशीघ्रं ᵛप्र ᵛवोचम् प्रब्रवीमि । अत्र यद्यपि नु कम् इति पदद्वयं तथापि यास्केन 'नवोत्तराणि पदानि' (नि. ३. १३) इत्युक्तत्वात् शाखान्तरे एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कम् इति पदद्वयम् । कानि तानीति तत्राह । ᵛयः विष्णुः ᵛपार्थिवानि पृथिवीसंबन्धीनि ᵛरजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि[4] रजांसि[5] ᵛविममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवी-

---

१. क्ष-झ१-ञ-ट—गावः दोग्ध्र्यो धेनवः आपः आपश्च । २. क्ष-ङ-झ-झ१-ञ-ट—तथा उस्रियायाः । ३. क्ष-ङ-झ१-ञ-ट—पातम् पिबतम् । ४. झ-झ१—अग्निवाय्वादित्यात्मकानि । ५. क्ष-ङ-झ-झ१-ञ-ट—तेजांसि ।

शब्दवाच्याः । तथा च मन्त्रान्तरं–‘ यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ’ ( ऋ. सं. १. १०८. ९) इति। तैत्तिरीयेऽपि–‘ योऽस्यां पृथिव्यामस्यायुषा ’ इत्युपक्रम्य ‘ यो द्वितीयस्यां तृतीयस्यां पृथिव्याम् ’ ( तै. सं. १. २. १२. १ ) इति । तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् । किंच ᵛयः च विष्णुः ᵛउत्तरम् उद्गततरमतिविस्तीर्णं ᵛसधस्थं सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षम् ᵛअस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः । अनेन अन्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा । यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान् । रजःशब्दो लोकवाची, ‘ लोका रजांस्युच्यन्ते ’ इति यास्केनोक्तत्वात् । किंच यश्चोत्तरम् उद्गततरम् उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकम् अस्कभायत् स्कम्भितवान् सृष्टवानित्यर्थः ॥ स्कम्भेः ‘ स्तम्भुस्तुम्भु° ’ इति विहितस्य श्नः ‘ छन्दसि शायजपि ’ इति व्यत्ययेन शायजादेशः ॥ अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे । भूरादिलोकत्रयमित्यर्थः । भूम्याम् उपार्जितकर्मभोगार्थत्वात् इतरलोकानां तत्कारणत्वम्। किंच यश्चोत्तरम् उत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेः तस्योत्कृष्टत्वम् । सधस्थम् उपासकानां सहस्थानं सत्यलोकमस्कभायत् स्कम्भितवान् ध्रुवं स्थापितवानित्यर्थः । किं कुर्वन् । ᵛत्रेधा ᵛविचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान्विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणम् ‘ इदं विष्णुर्वि चक्रमे ’ ( ऋ. सं. १. २२. १७ ) इत्यादिश्रुतिषु प्रसिद्धम्। अत एव ᵛउरुगायः उरुभिः महद्भिः[1] गीयमानः अतिप्रभूतं गीयमानो वा । य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम् ॥

तृतीयसवने सोमातिरेके एव[2] शस्त्रमुपजनयितव्यम् । तत्र ‘ प्र तत् ’ इत्ययमनुरूपस्तृचः । ‘ सोमातिरेके ’ इति खण्डे सूत्रितं–‘ प्र तद्विष्णुः स्तवते वीर्येणेति स्तोत्रियानुरूपौ ’ ( आश्व. श्रौ. ६. ७ ) इति । ‘ वाजपेयेनाधिपत्यकामः[3] ’ इति खण्डे सूत्रितं–‘प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुः स्तवते वीर्येण ’ ( आश्व. श्रौ. ९. ९ ) इति[3] ॥

**प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।**

**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥**

प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ।

यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ॥ २ ॥

यस्येति[4] वक्ष्यमाणत्वात् स इति अवगम्यते । स महानुभावः ᵛवीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण[5] ᵛस्तवते स्तूयते सर्वैः ॥ कर्मणि व्यत्ययेन शप् ॥ वीर्येण स्तूयमानत्वे दृष्टान्तः । ᵛमृगो ᵛन सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहः ᵛभीमः भीतिजनकः ᵛकुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा ᵛगिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते । अस्मिन्नर्थे निरुक्तं–‘ मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्मा-

---

१. क्ष-ङ-झ-ञ-झ१-ञ-ट–महात्मभिः। २. क्ष-ङ-झ१-ञ-ट–एवम्। ३. क्ष-ञ-ट–‘ वाजपेयेनाधिपत्यकामः ......वीर्येण इति ’ इति नास्ति । ४. क्ष-झ१-ञ-ट–तद्विष्णुः यस्येति। ५. ङ-झ-झ१–पूर्वमन्त्रोक्तरूपेण ।

भीष्मोऽप्येतस्मादेव । कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति वा । गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा ' ( निरु. १. २० ) इति ॥ तद्वद्यमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः। परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते ' ( तै. आ. ८. ८. १ ) इत्यादिश्रुतिषु प्रसिद्धा । किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठाः गिरिवत् उच्छ्रितलोकस्थायी[1] । यद्वा । गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईदृशोऽयं स्वमहिम्ना स्तूयते । किंच ᵛयस्य विष्णोः ᵛउरुषु विस्तीर्णेषु त्रिसंख्याकेषु[2] ᵛविक्रमणेषु पादप्रक्षेपेषु ᵛविश्वा[3] सर्वाणि ᵛभुवनानि भूतजातानि ᵛअधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते ॥

**प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।**

**य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥**

प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे ।

यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेभिः ॥३॥

ᵛविष्णवे सर्वव्यापकाय ᵛशूषम् अस्मत्कृत्यादिजन्यं बलं महत्त्वं ᵛमन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुम् ᵛएतु प्राप्नोतु ॥ कर्मणः संप्रदानत्वात् चतुर्थी ॥ कीदृशाय । ᵛगिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते ᵛउरुगायाय बहुभिर्गीयमानाय ᵛवृष्णे वर्षित्रे[4] कामानाम् । एवंमहानुभावं शूषं[5] प्राप्नोतु[5] । कोऽस्य विशेष इति उच्यते । ᵛयः विष्णुः ᵛइदं प्रसिद्धं दृश्यमानं ᵛदीर्घम् अतिविस्तृतं ᵛप्रयतं नियतं ᵛसधस्थं सहस्थानं लोकत्रयम् ᵛएकः ᵛइत् एक एवाद्वितीयः सन् ᵛत्रिभिः ᵛपदेभिः पादैः ᵛविममे विशेषेण निर्मितवान् ॥

**यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।**

**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥**

यस्य । त्री । पूर्णा । मधुना । पदानि । अक्षीयमाणा । स्वधया । मदन्ति ।

यः । ऊँ इति । त्रिऽधातु । पृथिवीम् । उत । द्याम् । एकः । दाधार । भुवनानि । विश्वा ॥४॥

ᵛयस्य विष्णोः ᵛमधुना मधुरेण दिव्येनामृतेन ᵛपूर्णा पूर्णानि त्रीणि ᵛपदानि पादप्रक्षेपणानि ᵛअक्षीयमाणा अक्षीयमाणानि[6] ᵛस्वधया अन्नेन ᵛमदन्ति मादयन्ति तदाश्रितजनान् । ᵛय ᵛउ य[7] एव[7] ᵛपृथिवीं प्रख्यातां भूमिं ᵛद्याम् ᵛउत द्योतनात्मकमन्तरिक्षं च ᵛविश्वा ᵛभुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि।

---

१. क्ष-ङ-झ-झ१-ञ-ट—उच्छ्रितद्युलोकस्थायी । २. क्ष-ङ-झ१-ञ-ट—त्रिषु संख्याकेषु । ३. च—विश्वानि । ४. क्ष-ञ-ट—वर्षकाय । ५. क्ष-झ१-ञ-ट—शूषं बलं प्राप्नोति । ६. क्ष-ञ-ट—अक्षीणानि । ७. क्ष-ञ-ट—यो विष्णुश्च ।

द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि । $^{V}$त्रिधातु । त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा $^{V}$दाधार धृतवान् ॥ तुजादित्वात् अभ्यासस्य दीर्घत्वम् ॥ उत्पादितवानित्यर्थः । छन्दोगारण्यके–' तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्त ' इति भूतत्रयसृष्टिमुक्त्वा ' हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ' ( छा. उ. ६. ३. २–३. ) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु[1] कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ॥

आतिथ्यायां ' तदस्य ' इत्येषा प्रधानस्य याज्या । ' अथातिथ्या ' इति खण्डे सूत्रितम्–' इदं विष्णुर्वि चक्रमे तदस्य प्रियमभि पाथो अश्याम् ' ( आश्व. श्रौ. ४. ५ ) इति ॥

तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां॒ नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था विष्णोः॑ प॒दे प॑र॒मे मध्व॒ उत्सः॑ ॥ ५ ॥

तत् । अ॒स्य॒ । प्रि॒यम् । अ॒भि । पाथः॑ । अ॒श्या॒म् । नरः॑ । यत्र॑ । दे॒व॒ऽयवः॑ । मद॑न्ति ।
उ॒रु॒ऽक्र॒मस्य॑ । सः । हि । बन्धुः॑ । इ॒त्था । विष्णोः॑ । प॒दे । प॒र॒मे । मध्वः॑ । उत्सः॑ ॥ ५ ॥

$^{V}$अस्य महतो विष्णोः $^{V}$प्रियं प्रियभूतं $^{V}$तत् सर्वैः सेव्यत्वेन प्रसिद्धं $^{V}$पाथः । अन्तरिक्षनामैतत्, ' पाथोऽन्तरिक्षं पथा व्याख्यातम् ' ( निरु. ६. ७ ) इति यास्केनोक्तत्वात् । अविनश्वरं ब्रह्मलोकमित्यर्थः[2] । $^{V}$अश्याम् व्याप्नुयाम् । तदेव विशेष्यते । $^{V}$यत्र स्थाने $^{V}$देवयवः देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः $^{V}$नरः $^{V}$मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । $^{V}$उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एव $^{V}$विष्णोः व्यापकस्य परमेश्वरस्य $^{V}$परमे उत्कृष्टे निरतिशये केवलसुखात्मके $^{V}$पदे स्थाने $^{V}$मध्वः मधुरस्य[3] $^{V}$उत्सः निष्यन्दो वर्तते । तदश्याम् । यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेण अमृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिकं नास्तीत्याह । $^{V}$इत्था इत्थमुक्तप्रकारेण $^{V}$स $^{V}$हि $^{V}$बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरः[4] वा तस्य[5] पदं प्राप्तवतां न पुनरावृत्तेः[5] । ' न च पुनरावर्तते ' इति श्रुतेस्तस्य बन्धुत्वम्[6] । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ॥

ता वां॒ वास्तू॑न्युश्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृङ्गा अ॒यासः॑ ।
अत्राह॒ तदु॑रुगा॒यस्य॒ वृष्णः॑ पर॒मं प॒दमव॑ भाति॒ भूरि॑ ॥ ६ ॥

ता । वा॒म् । वास्तू॑नि । उ॒श्म॒सि॒ । गम॑ध्यै । यत्र॑ । गावः॑ । भूरि॑ऽशृङ्गाः । अ॒यासः॑ ।
अत्र॑ । अह॑ । तत् । उ॒रु॒ऽगा॒यस्य॑ । वृष्णः॑ । प॒र॒मम् । प॒दम् । अव॑ । भा॒ति॒ । भूरि॑ ॥ ६ ॥

---

१. च–त्रिधातु मूर्तित्रयम् । २. क्ष-ङ-ज्ञ१-ञ-ट–ब्रह्मलोकमित्यर्थः । यद्वा दुरुपपालनम् (क्ष-ञ-ट–दुरुपां पालनम्?) । ३. क्ष-ज्ञ१-ञ-ट–मधुरस्य परमानन्दरसस्य सुधारूपस्य । ४. क्ष-ज्ञ१-ञ-ट–हितकरो बन्धकः । ५. क्ष-ञ-ट– तत्प्राप्तवतामपुनरावृत्तेः; ज्ञ–तस्य पदं प्राप्तानामपुनरावृत्तेः । ६. क्ष-ज्ञ१-ञ-ट–बन्धकत्वम् ।

हे पत्नीयजमानौ[1] Vवां युष्मदर्थं Vता तानि गन्तव्यत्वेन[2] प्रसिद्धानि Vवास्तूनि सुखनिवासयोग्यानि स्थानानि Vगमध्यै युवयोः[3] गमनाय Vउश्मसि कामयामहे। तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तं कानीत्याह। Vयत्र येषु वास्तुषु Vगावः रश्मयः Vभूरिशृङ्गाः अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वा Vअयासः अयना गन्तारोऽतिविस्तृताः। यद्वा। यासो गन्तारः। अतादृशाः। अत्यन्तप्रकाशयुक्ता इत्यर्थः। Vअत्राह अत्र खलु वास्त्वाधारभूते द्युलोके Vउरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य Vवृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र[4] पुराणादिषु[4] गन्तव्यत्वेन प्रसिद्धं Vपरमं निरतिशयं Vपदं स्थानं Vभूरि अतिप्रभूतम् Vअव Vभाति स्वमहिम्ना स्फुरति। अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः–‘तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः’ ( निरु. २. ७ ) इति॥ ॥ २४ ॥

‘प्र वः पान्तम्’ इति षडृचं षोडशं सूक्तं दैर्घतमसं जागतम्। पूर्वत्र ‘वैष्णवं हि’ इत्युक्तत्वात् वैष्णवम्। आद्यस्तृच इन्द्रदेवताकश्च। ‘प्र वो जागतं त्वैन्द्रश्चाद्यस्तृचः’ इत्यनुक्रमणिका। आभिप्लविकेषूक्थ्येषु स्तोमातिशंसने उक्तो विनियोगः॥

**प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत।**
**या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना॥ १ ॥**

प्र। वः। पान्तम्। अन्धसः। धियाऽयते। महे। शूराय। विष्णवे। च। अर्चत।
या। सानुनि। पर्वतानाम्। अदाभ्या। महः। तस्थतुः। अर्वताऽइव। साधुना॥ १ ॥

हे अध्वर्य्वादयः Vवः युष्माकं संबन्धि[5] Vपान्तं पालनस्वभावं पातव्यं वा Vअन्धसः अन्धः सोमरूपमन्नं Vप्र Vअर्चत प्रकर्षेण संपादयत। कस्मै। Vधियायते स्तुतीरिच्छते Vमहे महते Vशूराय विक्रान्तायेन्द्राय Vविष्णवे व्यापकायैतन्नामकाय देवाय Vच। कस्तयोरतिशय इति उच्यते। Vया यौ इन्द्राविष्णू Vपर्वतानां प्रीणनवतां पूरणवतां वा। पर्वतशब्दो यास्केनैवं निरुक्तः–‘पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा’ इति। उक्तलक्षणानां लोकानां Vसानुनि समुच्छ्रितप्रदेशे। सर्वलोके[6] इत्यर्थः। अथवा मेघानां समुच्छ्रितप्रदेशे। पर्वतशब्दः मेघनामसु[7] उक्तत्वात्। तत्र Vतस्थतुः तिष्ठतः। कीदृशौ तौ। Vअदाभ्या अदम्भनीयौ परैरनभिभाव्यौ अत एव Vमहः महान्तौ। यद्वा। महो महसि स्वतेजसि सानुनीत्यनेन संबन्धः। तत्र दृष्टान्तः। Vसाधुना अभिमतदेशप्रापणसमर्थेन Vअर्वता[8] वेगवताश्वेन Vइव। तेन यथा अत्युच्छ्रितं प्रदेशमारोहति तद्वदुच्चं पदमारूढौ। तस्मात्ताभ्यामर्चत॥

सोमातिरेके तृतीयसवने एषा वैकल्पिकी याज्या। तथा च सूत्रितं—‘त्वेषमित्था समरणं शिमीवतोरिति वा याज्या’ ( आश्व. श्रौ. ६. ७ ) इति॥

---

१. झ–दम्पती पत्नीयजमानौ। २. च–तरणित्वेन; झ–मन्तव्यत्वेन। ३. च–वां युवयोः। ४. क्ष-ञ-ट–सर्वेतिहासपुराणादिषु। ५. क-ख-ज-ण-त-फ-व–संबन्धिनाम्। ६. क्ष-ङ-ञ-ट–सत्यलोके। ७. क्ष-ङ-ञ-ट–मेघनामा। पर्वतो गिरिरिति तन्नामसु (ङ–नामसु)। ८. क्ष-ङ-झ१-ञ-ट–अर्वता पवनवता।

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ २ ॥

त्वेषम् । इत्था । सम्ऽअरणम् । शिमीऽवतोः । इन्द्राविष्णू इति । सुतऽपाः । वाम् । उरुष्यति ।
या । मर्त्याय । प्रतिऽधीयमानम् । इत् । कृशानोः । अस्तुः । असनाम् । उरुष्यथः ॥ २ ॥

हे इन्द्राविष्णू शिमीवतोः इष्टप्रदानादिकर्मवतोः वां युवयोः इत्था इत्थं त्वेषं प्रदीप्तं समरणं सम्यग्यागदेशगमनं सुतपाः हुतशिष्टसोमपीतयजमानः उरुष्यति रक्षति यागेन पूजयति । यद्वा । शिमीवतोः प्रहरणादिकर्मवतोः वां युवयोः त्वेषं दीप्तं शौर्योपेतं समरणं सम्यक्परस्परगमनोपेतं वृष्टिप्रदानाय मेघविदारणरूपं यजमान उरुष्यति रक्षति स्तौतीत्यर्थः । कस्तयोरतिशय इति उच्यते । या यौ इन्द्राविष्णू मर्त्याय मनुष्याय हविर्दात्रे यजमानाय प्रतिधीयमानमित् प्रतिधातव्यं फलरूपम् असनाम् असनं चलनशीलं प्रदानशीलमन्नादिकम् अस्तुः अभिमतक्षेप्तुर्निरसितुर्वा शत्रूणां कृशानोः[1] अग्नेः सकाशात् उरुष्यथः अविच्छेदेन प्रवर्तयथः । वह्नौ हुतं हविः स्वीकृत्य तन्मुखादेव फलमपि दास्यथ इत्यर्थः ॥

ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ।
दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ ३ ॥

ताः । ईम् । वर्धन्ति । महि । अस्य । पौंस्यम् । नि । मातरा । नयति । रेतसे । भुजे ।
दधाति । पुत्रः । अवरम् । परम् । पितुः । नाम । तृतीयम् । अधि । रोचने । दिवः ॥३॥

ताः सोमरूपाः प्रसिद्धा आहुतयो यजमानेन हुताः ईम् एतत् अस्य इन्द्रस्य महि महत् पौंस्यं पुंसः कर्म वक्ष्यमाणरूपं बलं वर्धन्ति वर्धयन्ति । ईमित्यनर्थको वा । स चेन्द्रः सोमपानजनितं सामर्थ्यं मातरा द्यावापृथिव्यौ नि नयति नितरां प्रापयति । किमर्थम् । रेतसे प्राणिनां पुत्राद्युत्पादनसामर्थ्याय भुजे तेषां भोगाय रक्षणाय वा । कुत्रेति तदुच्यते । दिवः द्योतमानस्यादित्यस्य अधि अधिकं रोचने रोचमाने मण्डले । नाम नमनं द्यावापृथिव्योः स्थापितं सामर्थ्यं पुत्रः पुरुत्राता सर्वो जनः पितुः पालकाद्विष्णोरनुग्रहात् । यद्वा । पितुः स्वोत्पादकात् स्वयमुत्पन्नं सत् अवरं निकृष्टं नाम पौत्रसंज्ञं परं तदुत्कृष्टं पुत्र इति नाम तदुभयापेक्षया तृतीयं पितेति नाम दधाति धारयति । 'त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः' (तै. सं. ५. ६. ८. ४) इति श्रुतेः । अस्यायमर्थः । अग्नौ हुताः सोमाहुतयः आदित्यमण्डलं प्राप्य द्वादशात्मनः सवितुर्मूर्त्यन्तरौ इन्द्राविष्णू पोषयन्ति तुष्टौ तौ मेघद्वारा वर्षतः । तया वृष्ट्या सस्यादिद्वारा प्रजाः पुत्रपौत्रादिरूपेण वर्धयत इत्येवं महानुभावौ इन्द्राविष्णू इति ॥

---

१. क्ष-ङ-झ१-ञ-ट–तादृशात् कृशानोः; झ–तादृशकृशानोः ।

**तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः ।**
**यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥ ४ ॥**

तत्ऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । इनस्य । त्रातुः । अवृकस्य । मीळ्हुषः ।
यः । पार्थिवानि । त्रिऽभिः । इत् । विगामऽभिः । उरु । क्रमिष्ट । उरुऽगायाय । जीवसे ॥४॥

vअस्य महानुभावस्य vतत्तत् vपौंस्यं पुंस्त्वं पराक्रमातिशयं vगृणीमसि गृणीमः स्तुमः । कीदृशस्यास्य । vइनस्य सर्वस्य स्वामिनः vत्रातुः पालकस्य vअवृकस्य । वृको हिंसकः शत्र्वादिः । तद्रहितस्य vमीळ्हुषः सेक्तुर्नित्यतरुणस्य । स्तुत्येषु पराक्रमेषु मध्ये एकमुदाहरति । vयः विष्णुः[1] vपार्थिवानि पृथिव्यादीनि प्रथनवन्ति वा सामर्थ्यात् रजांसीति गम्यते । लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतम् । तानि vत्रिभिरिद्विगामभिः त्रिभिरेव विविधगमनैः vउरु विस्तीर्णं यथा भवति तथा vक्रमिष्ट क्रान्तवान् विचक्रमे इत्यर्थः । vउरुगायाय उरुगातव्याय vजीवसे लोकत्रयरक्षणाय । यद्वा । उरुगायाय ॥ षष्ठ्यर्थे चतुर्थी ॥ उरुगायस्य विष्णोरीदृशं पराक्रमं गृणीमसि । किमर्थम् । जीवसे जीवनाय रक्षणाय ॥

**द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ।**
**तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥ ५ ॥**

द्वे इति । इत् । अस्य । क्रमणे इति । स्वःऽदृशः । अभिऽख्याय । मर्त्यः । भुरण्यति ।
तृतीयम् । अस्य । नकिः । आ । दधर्षति । वयः । चन । पतयन्तः । पतत्रिणः ॥ ५ ॥

vअस्य vस्वर्दृशः स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोः vद्वे vइत् vक्रमणे द्वे एव पदे vमर्त्यः मनुष्यः vअभिख्याय सर्वंभूम्यादिना[2] प्रख्याय[3] vभुरण्यति गच्छति भजते। भुरण्यतिः कण्ड्वादिर्गतिकर्मा, 'भुरण्यति शवति ' (नि. २. १४. १६) इति तत्कर्मसु पाठात् । प्रसिद्धत्वात् भूलोकं वृष्ट्यागमनादन्तरिक्षं चेत्युभे क्रमणे जानाति । vअस्य विष्णोः vतृतीयं क्रमणं द्युलोकाख्यं कोऽपि मर्त्यः vनकिः नैव vआ vदधर्षति बुद्ध्या नाभिभवति ज्ञातुं न शक्नोतीत्यर्थः । न केवलं मनुष्य एव अपि तु vवयश्चन वेतारो मरुतोऽपि। कीदृशास्ते । vपतयन्तः सर्वत्र गमनसमर्थाः तथा vपतत्रिणः पतनशीला गरुडादयो वायवो वा नकिरा दधर्षति नैव शक्नुवन्ति ॥ धृषेर्लेटि अडागमः ॥ सत्यलोकस्य अत्यन्तविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः ॥

---

१. क्ष-ञ-ट–यो विष्णुः ।　२. ङ–सर्वस्तुत्यादिना ।　३. क्ष-ञ-ट–प्रख्याप्य ।

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।
बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥ ६ ॥

चतुर्भिः । साकम् । नवतिम् । च । नामऽभिः । चक्रम् । न । वृत्तम् । व्यतीन् । अवीविपत् ।
बृहत्ऽशरीरः । विऽमिमानः । ऋक्वऽभिः । युवा । अकुमारः । प्रति । एति । आऽहवम् ॥६॥

अयमादित्यात्मा विष्णुः ᵛचतुर्भिः ᵛसाकं सहितां ᵛनवतिं ᵛच । चतुर्नवतिमित्यर्थः[1] । एतत्संख्याकान् कालावयवान् ᵛनामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः ᵛवृत्तं यथा भवति तथा ᵛव्यतीन् विविधातनस्वभावान् वृत्तं ᵛचक्रं ᵛन बह्वरोपेतं चक्रमिव तं यथा शत्रोरुपरि प्रक्षेपेण[2] भ्रमयति[2] तद्वदुक्तसंख्याकान् कालावयवान् ᵛअवीविपत् कम्पयति भ्रमयति[3] ॥ 'टुवेपृ कम्पने' । ण्यन्तात् लुङि चङि रूपम् ॥ के पुनस्ते उच्यते । संवत्सर एकः । अयने द्वे । पञ्चर्तवः । द्वादश मासाः । चतुर्विंशत्यर्धमासाः । त्रिंशदहोरात्राः । अष्टौ यामाः । एकस्मिन् दिने पर्यावर्तमानानि मेषादीनि द्वादश लग्नानीति मिलित्वा चतुरधिकनवतिसंख्याकानवीविपत् । नन्वादित्यः स्वयमपि इतरवत्परिभ्रमति कथं[4] भ्रमयति[4] इत्युच्यते । नैष दोषः । एतेषां भ्रामकस्य ध्रुवस्य विष्णोः सूर्यन्तरत्वात्[5] । अथवा स्वभ्रमणाधीनत्वादितरेषां परिभ्रमणस्य अतः स्वयं भ्रमयति[6] इत्युच्यते । एवं कालात्मकः[7] विष्णुः ᵛबृहच्छरीरः विराडात्मना सर्वदेवमनुष्यादिशरीराणां स्वशरीरत्वात् । बृहच्छरीरत्वमेवोपपादयति । ᵛविमिमानः विविधमात्मानं मिमानो देवतिर्यगात्मना विभज्य स्थापयन् । यद्वा । ᵛऋक्वभिः स्तुतिमद्भिः मन्त्रवद्भिः[8] वा विमिमानः[9] । यद्यपि विभुस्तथापि भक्त्याधीनत्वात्[10] स्तुत्या मीयते । ᵛयुवा सर्वत्र मिश्रणशीलो नित्यतरुणो वा अत एव ᵛअकुमारः अनल्पः एवंभूतो महाविष्णुः ᵛआहवम् आह्वानं ᵛप्रत्येति गच्छति यज्ञदेशम् ॥ ॥ २५ ॥

'भवा मित्रः' इति पञ्चर्चं सप्तदशं सूक्तं दैर्घतमसम् । 'जागतं तु' इत्युक्तत्वादिदमपि जागतम् । 'वैष्णवं हि' इत्युक्तत्वाद्वैष्णवम् । 'भव पञ्च' इत्यनुक्रान्तम् ॥ उक्थ्ये तृतीयसवने अच्छावाकशस्त्रे एतत् सूक्तं विनियुक्तम् । 'उक्थ्ये तु होत्रकाणाम्' इति खण्डे सूत्रितं—'भवा मित्रः सं वां कर्मणा' ( आश्व. श्रौ. ६. १ ) इति । सौम्यचरोरुभयतो घृतेन यष्टव्यं तत्रोपरितने घृतयागे 'उरु विष्णो वि क्रमस्व' इति प्राकृता[11] याज्या[11] । दशमेऽहनि तु तस्याः स्थाने 'भवा मित्रः' इत्येषा प्रयोक्तव्या । 'दशमेऽहनि' इति खण्डे सूत्रितम्—'उरु विष्णो वि क्रमस्वेति घृतयाज्यास्थाने भवा मित्रः' ( आश्व. श्रौ. ८. १२ ) इति ॥

---

१. क्ष-ञ-ट–चतुरुत्तरां नवतिमित्यर्थः २. क्ष-ङ-झ१-ञ-ट–क्षेपणाय भ्रामयति; च-फ–प्रक्षेपणाय भ्रामयति । ३. क्ष-ञ-ट–भ्रामयति । ४. क्ष-झ१-ञ-ट–कथमेतत् भ्रामयति; ज-झ-कथमेतान् भ्रामयति; ङ-कथमेतत् भ्रमयति । ५. क्ष-ङ-झ१-ञ-ट–सूर्यवतारत्वात् । ६. क्ष-ञ-ट–भ्रामयति । ७. ख-च-फ–कालात्मकोऽपि । ८. झ१–मन्त्रविद्भिः । ९. क्ष-ख-ङ-झ१-ञ-ट–विमिमानः विविधं मीयमानः । १०. क्ष-ङ-झ१-ञ-ट–भक्त्यधीनत्वात् । ११. क्ष-ख-च-ज-ञ-ण-ट-फ–प्राकृती घृतयाज्या ।

भवा॑ मि॒त्रो न शेव्यो॑ घृ॒तासु॑ति॒र्विभू॑तद्युम्न एव॒या उ॑ स॒प्रथा॑: ।
अधा॑ ते विष्णो वि॒दुषा॑ चि॒दर्ध्य॒: स्तोमो॑ य॒ज्ञश्च॒ राध्यो॑ ह॒विष्म॑ता ॥ १ ॥

भव॑ । मि॒त्रः । न । शेव्यः॑ । घृ॒तऽआ॑सुतिः । विभू॑तऽद्युम्नः । ए॒व॒ऽयाः । ऊँ॒ इति॑ । स॒ऽप्रथा॑ः ।
अध॑ । ते॒ । वि॒ष्णो॒ इति॑ । वि॒दुषा॑ । चि॒त् । अर्ध्यः॑ । स्तोम॑ः । य॒ज्ञः । च॒ । राध्यः॑ । ह॒विष्म॑ता ॥ १ ॥

हे विष्णो ᵛमित्रो ᵛन । मितेर्दुःखात् त्राता सखा आदित्यो वा मित्रः । 'प्रमीतेस्त्रायते' ( निरु. १०. २१ ) इति निरुक्तम् । तद्वत् ᵛशेव्यः सुखे साधुः सुखकर्ता ᵛघृतासुतिः । घृतमुदकम् आसूयते[1] येन स तादृशः । यद्वा । घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः । ᵛविभूतद्युम्नः प्रभूतयशाः प्रभूतान्नो वा ᵛएवयाः रक्षणस्य मिश्रयिता प्रापयिता । ᵛसप्रथाः सर्वतः पृथुः । प्रतिविशेषणं नः ᵛभव इति संबन्धः ॥ 'द्व्यचोऽतस्तिङः' इति दीर्घः । ᵛउ इति पादपूरणः ॥ हे ᵛविष्णो त्वं यस्मादीदृशो भवसि ᵛअध अस्मात् ᵛते तव ᵛस्तोमः स्तोत्रविशेषः ᵛविदुषा त्वन्माहात्म्यवेदित्रा यजमानेन ᵛअर्ध्यः पुनःपुनः प्रवर्धनार्हः । एकवारकरणे न संपूर्यते इत्यर्थः । तथा ते ᵛयज्ञश्च ᵛहविष्मता तेन यजमानेन ᵛराध्यः समाराधनीयः । यद्वा । विदुषा होत्रा स्तोमो राध्यो हविष्मता यज्ञश्च राध्यः ॥

यः पू॒र्व्याय॑ वे॒धसे॒ नवी॑यसे सु॒मज्जा॑नये॒ विष्ण॑वे॒ ददा॑शति ।
यो जा॒तम॑स्य मह॒तो महि॒ ब्रव॒त्सेदु॒ श्रवो॑भि॒र्युज्यं॑ चिद॒भ्य॑सत् ॥ २ ॥

यः । पू॒र्व्याय॑ । वे॒धसे॑ । नवी॑यसे । सु॒मत्ऽजा॑नये । विष्ण॑वे । ददा॑शति ।
यः । जा॒तम् । अ॒स्य । म॒ह॒तः । महि॑ । ब्रव॑त् । सः । इत् ।
ऊँ॒ इति॑ । श्रव॑ःऽभिः । युज्य॑म् । चि॒त् । अ॒भि । अ॒स॒त् ॥ २ ॥

ᵛयः यो मर्त्यः ᵛपूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः । ᵛवेधसे विविधजगत्कर्त्रे ᵛनवीयसे नित्यनूतनाय अत्यन्तरमणीयायेत्यर्थः । स्तुत्याय वा ᵛसुमज्जानये स्वयमेवोत्पन्नाय ॥ जनेरौणादिकः इण् ॥ 'सुमत्स्वयमित्यर्थः' ( निरु. ६. २२ ) इति यास्कः । यद्वा । सुतरां मादयतीति सुमत् । तादृशी जाया यस्य स तथोक्तः । तस्मै सर्वजगन्मादनशीलश्रीपतये इत्यर्थः ॥ बहुव्रीहौ 'जायाया निङ्' ( पा. सू. ५. ४. १३४ ) इति निङादेशः समासान्तः । वलि लोपः ॥ उक्तगुणकाय ᵛविष्णवे व्यापकाय[2] ᵛददाशति हविरादिकं ददाति । किंच ᵛअस्य विष्णोः ᵛमहतः महानुभावस्य ᵛमहि महत् पूज्यं ᵛजातं जन्म उत्पत्तिं हिरण्यगर्भादिरूपं जन्म ᵛब्रवत् ब्रूयात् ॥ ब्रवीतेर्लेटि अडागमः ॥ संकीर्तयेत् । ᵛसेदु । उशब्दोऽपिशब्दार्थः । सोऽपि दाता स्तोता च ᵛ श्रवोभिः अन्नैः कीर्तिभिर्वा युक्तः सन् ᵛयुज्यं ᵛचित् सर्वैर्गन्तव्यमेव तत्पदम् ᵛअभि आभिमुख्येन ᵛअसत् गच्छति प्राप्नोति ॥

---

१. क्ष-ङ-च-झ१-ञ-ट-फ–आसूयते आभिमुख्येन नीयते । २. क्ष-ञ-ट–व्यापकाय देवाय ।

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥ ३ ॥

तम् । ॐ इति । स्तोतारः । पूर्व्यम् । यथा । विद । ऋतस्य । गर्भम् । जनुषा । पिपर्तन ।
आ । अस्य । जानन्तः । नाम । चित् । विवक्तन ।
महः । ते । विष्णो इति । सुऽमतिम् । भजामहे ॥ ३ ॥

हे स्तोतारः तमु तमेव विष्णुं पूर्व्यं पूर्वार्हम् अनादिसंसिद्धम् ऋतस्य गर्भं यज्ञस्य गर्भभूतं यज्ञात्मनोत्पन्नमित्यर्थः । ‘ यज्ञो वै विष्णुः ’ ( श. ब्रा. १. १. २. १३ ) इति श्रुतेः । यद्वा । ऋतस्योदकस्य गर्भं गर्भकारणम् उदकोत्पादकमित्यर्थः । ‘ अप एव ससर्जादौ ’ ( मनु. १. ८ ) इति स्मृतेः । एवंभूतं विष्णुं यथा विद जानीथ तथा जनुषा जन्मना स्वत एव न केनचिद्वरलाभादिना पिपर्तन स्तोत्रादिना प्रीणयत यावदस्य माहात्म्यं जानीथ तावदित्यर्थः ॥ विदेर्लटि मध्यमबहुवचनम् । ‘ विद ऋतस्य ’ इत्यत्र संहितायाम् ‘ ऋत्यकः ’ इति प्रकृतिभावः ॥ किंच अस्य महानुभावस्य विष्णोः नाम चित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम जानन्तः पुरुषार्थप्रदमित्यधिगच्छन्तः आ समन्तात् विवक्तन वदत[1] संकीर्तयत । यद्वा । नाम यज्ञात्मना नमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनाय इष्ट्याद्यात्मना द्रव्यदेवतात्मना वा परिणामम् आ जानन्तो यूयं विवक्तन ब्रूत स्तुत ॥ वचेर्लोटि छान्दसः शपः श्लुः । ‘ बहुलं छन्दसि ’ इति अभ्यासस्य इत्वम् । पूर्ववत् तनादेशः ॥ इदानीं साक्षात्कृत्याह । हे विष्णो सर्वात्मक देव[2] महः महतः ते तव[2] सुमतिं सुष्टुतिं[3] शोभात्मिकां बुद्धिं वा भजामहे[3] सेवामहे वयं यजमानाः ॥

अग्नीषोमप्रणयने ‘ तमस्य राजा ’ इत्येषा प्रयोक्तव्या । ‘ अग्नीषोमौ प्रणेष्यत्सु ’ इति खण्डे सूत्रितं–‘ तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत् ’ ( आश्व. श्रौ. ४. १० ) इति ॥

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।
दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥ ४ ॥

तम् । अस्य । राजा । वरुणः । तम् । अश्विना । क्रतुम् । सचन्त । मारुतस्य । वेधसः ।
दाधार । दक्षम् । उत्ऽतमम् । अहःऽविदम् । व्रजम् । च । विष्णुः । सखिऽवान् । अपऽऊर्णुते ॥ ४ ॥

मारुतस्य । मरुतामृत्विजां संघातः मारुतम् । तद्वतः ॥ मत्वर्थो लुप्यते ॥ मरुतां देवानां संबन्धिनो वा वेधसः मेधाविनः अस्य यजमानस्य तं प्रसिद्धं क्रतुं यागं यज्ञात्मकं विष्णुम् । ‘ यज्ञो वै विष्णुः ’ इति श्रुतेः । राजा राजमानः वरुणः सचन्त सेवते । तम् एव क्रतुं यागम् अश्विना अश्विनौ सचेते । अन्येऽपि देवाः सचन्ते सेवन्ते । किंच विष्णुः

---

१. क्ष-अ-ट–विशेषेण वदत । २. क्ष-झ१-अ-ट–ते तव महः तन्नाम । ३. क्ष-ङ-झ१-अ-ट–शोभनमननवन्तं त्वां च यद्वा महो महान्तं सुमतिं त्वां भजामहे ।

सवनत्रयात्मना व्याप्तो[1] विष्णुः ^v^सखिवान् यजमानादिसखिभिर्युक्तः सन् ^v^उत्तमम् उत्कृष्टतमम् ^v^अहर्विदम् अहर्वेत्तारं स्वर्गोत्पादकमित्यर्थः । ^v^दक्षं बलं फलप्रदानसामर्थ्यरूपं ^v^दाधार धृतवान् । किंच ^v^व्रजं ^v^च मेघं च । व्रज इति मेघनाम, 'व्रजः चरुः' ( नि. १. १०. ११ ) इति तन्नामसु पाठात् । तं वृष्ट्युदकाय ^v^अपोर्णुते अपगतावरणं करोति । आहुतिद्वारा यज्ञस्यैव वृष्ट्युत्पादकत्वात् । यद्वा । मारुतस्य मरुत्संघातस्य देवगणस्य वेधसो विधातुः स्रष्टुर्विष्णोः क्रतुं कर्म पालनादिरूपं वरुणादयः सचन्ते[2] । तदधीनत्वात् पालनस्य । स च सखिवान् इन्द्रमरुदादिसहायोपेतः सन् उक्तलक्षणं दक्षं वृष्ट्युत्पादनादिसामर्थ्यरूपं बलं दाधार । तथा व्रजं चापोर्णुते ॥

**आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।**
**वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥ ५ ॥**

आ । यः । विवाय । सचथाय । दैव्यः । इन्द्राय । विष्णुः । सुऽकृते । सुकृत्ऽतरः ।
वेधाः । अजिन्वत् । त्रिऽसधस्थः । आर्यम् । ऋतस्य । भागे । यजमानम् । आ । अभजत् ॥५॥

^v^यः ^v^विष्णुः ^v^दैव्यः दिवि भवः ^v^सुकृत्तरः शोभनफलप्रदानां मध्ये श्रेष्ठः ^v^आ ^v^विवाय आगच्छति ॥ वेतेर्लिटि रूपम् ॥ किमर्थम् । ^v^सचथाय सङ्गमाय यागसहायकरणाय[3] । कस्मै । ^v^इन्द्राय । इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः[4] । 'इन्द्र इरां दृणातीति इदंकरणादित्याग्रायणः' ( निरु. १०. ८ ) इति यास्केनोक्तनिर्वचनस्यात्रापि सद्भावात् ॥ तस्मै उक्तरूपाय यजमानाय ^v^सुकृते शोभनस्तुतिकर्त्रे । आगत्य च ^v^वेधाः अभिमतफलविधाता ^v^त्रिषधस्थः त्रिसंख्योपेतसहस्थानवान् । सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः । ^v^आर्यम् आगन्तव्यं[5] यजमानम् ^v^अजिन्वत् प्रीणयति ॥ जिवि प्रीणनार्थः । इदित्त्वात् नुम् ॥ तदर्थम् ^v^ऋतस्य यज्ञस्य ^v^भागे हुतशेषरूपे तं ^v^यजमानम् आभजत् भजति समीपयतीत्यर्थः[6] । यद्वा । ऋतस्य यज्ञस्य भागे फले यजमानम् आभजत् स्वामित्वेन स्थापयति ॥ ॥ २६ ॥ ॥ २१ ॥

द्वाविंशेऽनुवाके अष्टौ सूक्तानि । तत्र 'अबोध्यग्निर्ज्मः' इति प्रथमं सूक्तं षडृचं दैर्घतमसमाश्विनम् । पूर्वत्र 'जागतं तु' इति तुशब्दादिदमपि जागतम् । अन्त्ये द्वे त्रिष्टुभौ । 'अबोधि षळाश्विनं त्वन्त्ये त्रिष्टुभौ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दस्यस्य विनियोगः । 'अथाश्विनः' इति खण्डे सूत्रितम्–'अबोध्यग्निर्ज्म एष स्य भानुः' ( आश्व. श्रौ. ४. १५ ) इति ॥

**अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा मह्यावो अर्चिषा ।**
**आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १ ॥**

अबोधि । अग्निः । ज्मः । उत् । एति । सूर्यः । वि । उषाः । चन्द्रा । मही । आवः । अर्चिषा ।
अयुक्षाताम् । अश्विना । यातवे । रथम् । प्र । असावीत् । देवः । सविता । जगत् । पृथक् ॥१॥

---

१. ख-च-फ–व्यापनात् । २. क्ष-ञ-ट–सेवन्ते । ३. क्ष-ङ-झ१-ञ-ट–यागसाहाय्यकरणाय । ४. झ१–यजमानः । इदं कर्म करोति वा इन्द्रो यजमानः । ५. क्ष-ङ-ज्ञ-झ१-ञ-ट–आगत्य तर्पयितव्यम् । ६. क्ष-ञ-ट–समापयतीत्यर्थः ।

अयम् ᵛअग्निः विहितः[1] सन् ᵛज्मः ज्मायाः पृथिव्या वेदिलक्षणायाः संबन्धी सन् ᵛअबोधि प्रतिबोधितः । ज्मेति पृथिवीनाम, 'ग्मा ज्मा' ( नि. १.१.३ ) इति तन्नामसूक्तत्वात् । किंच ᵛसूर्यः ᵛउदेति । ᵛमही महती ᵛउषाः ᵛअर्चिषा प्रकृष्टेन तेजसा ᵛचन्द्रा प्राणिनाम्[2] आह्लादिनी सती ᵛवि[3] ᵛआवः तमांसि विवासयति[3]॥ वसेर्लुङि' छान्दसः च्लेर्लुक्[4] । 'छन्दस्यपि दृश्यते' इति आडागमः ॥ यतः इयमुषा उदेति यतश्च सूर्यो यतश्चायमग्निः प्रबुद्धो भवति अतः कारणात् हे अश्विनौ[5] युष्मत्संबन्धिनं[6] ᵛरथं ᵛयातवे देवयजनगमनाय रासभाभ्याम् ᵛआयुक्षाताम्[7] आभिमुख्येन युञ्जाथाम् । तथा ᵛसविता सर्वकर्मणोऽनुज्ञाता ᵛदेवः ᵛजगत् जङ्गमं प्राणिजातं ᵛपृथक् स्वस्वकर्मानुरोधेन ᵛप्रासावीत् प्रसौतु अनुजानातु ॥

**यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।**
**अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ २ ॥**

यत् । युञ्जाथे इति । वृषणम् । अश्विना । रथम् । घृतेन । नः । मधुना । क्षत्रम् । उक्षतम् ।
अस्माकम् । ब्रह्म । पृतनासु । जिन्वतम् । वयम् । धना । शूरऽसाता । भजेमहि ॥ २ ॥

हे ᵛअश्विना अश्विनौ ᵛयत् यदा ᵛवृषणं वृष्ट्यादिवर्षकं ᵛरथं ᵛयुञ्जाथे योजयथः तदा ᵛनः ᵛक्षत्रम् अस्मदीयं बलं क्षत्रियजातं वा ᵛघृतेन उदकेन ᵛमधुना मधुरेण ᵛउक्षतं[8] प्रवर्धयतमित्यर्थः। यद्वा। घृतेन क्षरणरूपेण मधुना मधुरेण[9] अमृतेनोक्षतं युष्मद्रथस्थेन मधुना अस्मदीयं बलं प्रवर्धयतमित्यर्थः । अश्विनोः रथस्य मधुपूर्णत्वं 'मधुवाहनो रथः' इत्यादिषु प्रसिद्धम् । किंच ᵛअस्माकं ᵛपृतनासु अस्मदीयासु पुत्रभृत्यादिमनुष्यरूपासु प्रजासु ᵛब्रह्म ब्राह्मं तेजः ᵛजिन्वतम् । पृतना इति मनुष्यनाम, 'विवस्वन्तः पृतनाः' ( नि. २. ३. २५ ) इति तन्नामसूक्तत्वात् । यद्वा । पृतनासु परकीयासु प्रजासु ब्रह्म तासां परिवृढमन्नमस्माकं जिन्वतं प्रीणयतम् । ब्रह्म इति अन्ननाम, 'ब्रह्म वर्चः' (नि. २. ७. २५ ) इति तन्नामसूक्तत्वात् । ᵛवयं च ᵛशूरसाता शूरसातौ शूराणां प्रहारादिना युक्ते संग्रामे ᵛधना तदीयानि धनानि बहुविधानि[10] ᵛभजेमहि लभेमहि ॥

**अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।**
**त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥ ३ ॥**

अर्वाङ् । त्रिऽचक्रः । मधुऽवाहनः । रथः । जीरऽअश्वः । अश्विनोः । यातु । सुऽस्तुतः ।
त्रिऽवन्धुरः । मघऽवा । विश्वऽसौभगः । शम् । नः । आ । वक्षत् । द्विऽपदे । चतुःऽपदे ॥३॥

---

१. क्ष-झ१-ञ-ट—विहृतः । २. क्ष-ञ-ट—सर्वप्राणिनाम् । ३. ङ-झ१—व्यावृणोत् । तमांसि विवारयति । ४. क्ष-झ१-ञ-ट—वृणोतेर्लुङि मन्त्रे घसेति च्लेर्लुक् । ५. ङ-अश्विना अश्विनौ । ६. क्ष-ङ-झ१-ञ-ट—वः युष्मत्संबन्धिनम्; ख-च-फ—स्वसंबन्धिनम् । ७. क्ष-झ१-ञ-ट—अयुक्षाताम् । ८. क्ष-ङ-झ-झ१-ञ-ट—उक्षतं सेचयतम् । ९. क्ष-ञ-ट—मधुररूपेण; झ१—मधुरूपेण । १०. क्ष-ञ-ट—बहूनि बहुविधानि ।

ᵛअश्विनोः ᵛरथः ᵛअर्वाङ् अस्मदभिमुखः ᵛयातु गच्छतु । कीदृशः । ᵛत्रिचक्रः चक्रत्रययुक्तः ᵛमधुवाहनः मधुवोढा ᵛजीराश्वः शीघ्रगाम्यश्वोपेतः ᵛसुष्टुतः अत एवास्माभिः स्तूयमानः ᵛत्रिवन्धुरः निम्नोन्नतकाष्ठत्रयोपेतः । सारथ्याश्रयस्थानं वन्धुरम् । ᵛमघवा धनवान् अत एव ᵛविश्वसौभगः सर्वसौभाग्योपेतः । ईदृशोऽश्विनोः रथः ᵛनः अस्माकं ᵛद्विपदे पुत्रादिप्रजायै ᵛचतुष्पदे पशवे च ᵛशं सुखम् ᵛआ ᵛवक्षत् आवहतु ॥ वहेर्लेटि अडागमः । सिप् ॥

आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ४ ॥

आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् । मधुऽमत्या । नः । कशया । मिमिक्षतम् ।
प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥४॥

हे ᵛअश्विना अश्विनौ ᵛयुवं युवां ᵛनः अस्माकम् ᵛऊर्जं बलं प्राणनसमर्थमन्नं वा ᵛआ ᵛवहतं प्रापयतम् । किंच ᵛनः अस्मान् ᵛमधुमत्या माधुर्योपेतया ᵛकशया वाचा इष्टप्रदानरूपया ᵛमिमिक्षतं सिञ्चतं प्रीणयतम् । कशा इति वाङ्नाम, 'कशा धिषणा' (नि. १.११.४३) इति तन्नामसूक्तत्वात् । यद्वा । मधुमत्या मधुरवृष्टिमत्या[1] माधुर्योपेतया कशया अश्वताडन्या[2] नोऽस्मान् मिमिक्षतम् । मधु इति उदकनाम, 'मधु पुरीषम्' ( नि. १. १२. ११ ) इति तन्नामसूक्तत्वात् । कशया अश्वताडनेन शीघ्रमागत्य वृष्टिरूपं फलं दास्यतः इति कशाया मधुमत्त्वम् । किंच ᵛआयुः आयुष्यं ᵛप्र ᵛतारिष्टं प्रवर्धयतम् ॥ प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ तथा ᵛरपांसि ᵛमृक्षतं[3] पापानि निःशेषेण शोधयतम् । 'रपो रिप्रमिति पापनामनी भवतः' ( निरु. ४.२१ ) इति यास्कः । किंच ᵛद्वेषः द्वेष्यममित्रादिकं ᵛसेधतं नाशयतम् । इदं[4] च भाव्यम्[4] । ᵛसचाभुवा सहभुवौ अस्मत्कार्येषु सहभवनवन्तौ ᵛभवतं भवन्तौ ऐकमत्यं भजत[5] इत्यर्थः[5] ॥ वाक्यभेदादनिघातः ॥

युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।
युवमग्निं च वृषणावपश्च वनस्पतीँरश्विनावैरयेथाम् ॥ ५ ॥

युवम् । ह । गर्भम् । जगतीषु । धत्थः । युवम् । विश्वेषु । भुवनेषु । अन्तरिति ।
युवम् । अग्निम् । च । वृषणौ । अपः । च । वनस्पतीन् । अश्विनौ । ऐरयेथाम् ॥ ५ ॥

हे ᵛअश्विनौ ᵛयुवं ᵛह युवां खलु ᵛजगतीषु ᵛअन्तः गमनशीलासु गोषु मध्ये ᵛगर्भं ᵛधत्थः धारयथः । न केवलं गोष्वेव अपि तु ᵛयुवं युवां ᵛविश्वेषु सर्वेषु ᵛभुवनेषु भूतजातेष्वन्तर्मध्ये गर्भं धत्थः । वृष्टिद्वारा आमिषरूपत्वेन[6] गर्भस्थरेतसः पोषकत्वात् । किंच हे ᵛवृषणौ कामानां वर्षितारौ

---

1. क्ष-ञ-ट-माधुर्यवृष्टिमत्या । २. क्ष-ञ-ट-अश्वतोदिन्या; झ१-तोदिन्या । ३. क्ष-ञ-ट-निमृक्षतम् । ४. क्ष-ञ-ट-भाव्याम्(?) झ१-किंच । ५. क्ष-झ१-ञ-ट-भजतमित्यर्थः । ६. क्ष-च-ज-झ-ञ-ट-भिषग्रूपत्वेन; ङ-झ१-भिषग्रूपेण ।

ᵛयुवं युवाम् ᵛअग्निं ᵛच ᵛअपश्च ᵛवनस्पतीन् च ᵛऐरयेथां प्रवर्तयेथाम् । आहुतिभोगायाग्निं स्वीकृत्य च वृष्ट्युदकानि उदकैः ओषधिवनस्पत्यादिकम् एतान्यस्मदर्थं प्रेरयेथाम् ॥

युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३ राथ्येभिः ।
अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान्मनसा ददाश ॥ ६ ॥

युवम् । ह । स्थः । भिषजा । भेषजेभिः । अथो इति । ह । स्थः । रथ्या । रथ्येभिरिति रथ्येभिः ।
अथो इति । ह । क्षत्रम् । अधि । धत्थः । उग्रा । यः । वाम् । हविष्मान् । मनसा । ददाश ॥ ६ ॥

हे अश्विनौ ᵛयुवं युवां ᵛह खलु ᵛभेषजेभिः भेषजैरौषधैः । ' भेषजौषधभैषज्यान्यगदो जायुः ' ' अगदं तन्त्रौषधम्[1] ' इति चाभिधानात् । तैः ᵛभिषजा भिषजौ ᵛस्थः । हशब्दः ' अश्विनौ हि देवानां भिषजौ ' इत्यादिप्रसिद्धिद्योतनार्थः । ᵛअथो अपि च ᵛरथ्येभिः रथवोढृभिरश्वैः ᵛरथ्या रथवन्तौ ᵛस्थः । ' आ वां रथो अश्विना ' ( ऋ. सं. १. ११८. १ ) इत्यादिप्रसिद्धिद्योतनार्थो हशब्दः । अनयोः[2] रथेन विशेषसंबन्धः[2] ' युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ' ( ऋ. सं. १. ३४. १० ) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । ᵛअथो अपि च युवयोः ᵛक्षत्रं बलम् ᵛअधि ᵛह अधिकं खलु । हशब्दः प्रसिद्धौ । यस्मादेवं तस्मात् हे ᵛउग्रा उद्गूर्णसामर्थ्यावश्विनौ ᵛवां युवाभ्यां ᵛयः ᵛहविष्मान् आज्यपुरोडाशादिहविर्युक्तो यजमानः ᵛमनसा युष्मदायत्तेन चेतसा ᵛददाश ददाति हविरादिकं तं ᵛधत्थः धारयथः अत्यधिकमनुगृह्णीथ इत्यर्थः । प्रभूतबलौ युवां रथमारुह्य अस्मद्देवयजनमागत्य हविष्प्रदं मां धृत्वा अस्मद्यज्ञे[3] अस्मान्विचिकित्सतमिति[3] तात्पर्यार्थः ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण[4] विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये द्वितीयाष्टके
द्वितीयोऽध्यायः
समाप्तः ॥

१. क्ष-झ१-ञ-ट–तन्त्रमौषधम् । २. झ१–अनयोर्हि रथविशेषसंबन्धः । ३. झ१–अस्मदायत्तानस्मान् वा विचिकित्सितमिति । ४. क्ष-ङ-ञ-ट–सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ तृतीयाध्याय आरभ्यते[1] । ‘ वसू रुद्रा ’ इत्येतत् अनुवाकापेक्षया द्वितीयं सूक्तं षड्‌चं दैर्घतमसम् । पूर्वत्र ‘ आश्विनं तु ’ इत्युक्तत्वात् इदमप्याश्विनम् । अनादेशपरिभाषया त्रैष्टुभम् । ‘ दीर्घतमा मामतेयः ’ इत्यन्त्या अनुष्टुप् । तथा चानुक्रान्तं–‘ वसू अन्त्यानुष्टुप् ’ इति ॥ अस्य विशेषविनियोगो लैङ्गिकः ॥

**वसू रुद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ ।**

**दस्रा ह यद्रेक्णं औचथ्यो वां प्र यत्सस्राथे अक्वाभिरूती ॥ १ ॥**

वसू इति । रुद्रा । पुरुमन्तू इति पुरुऽमन्तू । वृधन्ता । दशस्यतम् । नः । वृषणौ । अभिष्टौ ।

दस्रा । ह । यत् । रेक्णः । औचथ्यः । वाम् । प्र । यत् । सस्राथे इति । अक्वाभिः । ऊती ॥ १ ॥

हे वृषणौ कामानां वर्षितारौ दस्रा अस्मद्विरोध्युपक्षपयितारौ हे अश्विनौ युवां नः अस्मभ्यं दशस्यतं दत्तं दित्सितं फलम् । कीदृशौ युवाम् । वसू वासयितारौ प्रजानाम् । वसुना धनेन तद्वन्तौ वा ॥ मत्वर्थो लुप्यते ॥ रुद्रा रुद्रौ । रुदुःखं तद्धेतुभूतं पापं वा । तस्य द्रावयितारौ । संग्रामे भयंकरं शब्दयन्तौ वा । ‘ रुद्रो रौतीति सतः ’ ( निरु. १०. ५ ) इति यास्कः । पुरुमन्तू बहूनां ज्ञातारौ ॥ मनेरौणादिकः तुन्प्रत्ययः ॥ वृधन्ता वर्धमानौ स्तोत्रादिना अभिष्टौ आभिमुख्येन पूजितौ अभीष्टसाधकौ वा । हशब्दः उक्तगुणप्रसिद्धिद्योतनार्थः । किमर्थं दीयते इति चेत् । यत् यस्मात् औचथ्यः उचथ्यस्य पुत्रो दीर्घतमाः वां युवां रेक्णः धनं स्तुतिव्याजेन प्रार्थयते तदर्थम् । यद्वा । अयं यजमानो यद्यस्मात् रेक्णो हविर्लक्षणमन्नं वां युवाभ्यां दास्यति ददातीति शेषः । यस्माच्च अक्वाभिः अकुत्सितैः ऊती ऊतिभिः रक्षणैः ॥ ‘ सुपां सुलुक्° ’ इति तृतीयायाः पूर्वसवर्णदीर्घः ॥ प्र सस्राथे प्रसारयथः प्रकर्षेण दत्थः तस्माद्दशस्यतम् । यस्मादभिमतप्रदौ यस्माच्चायं प्रार्थयते ददाति वा हविः तस्माद्दशस्यतमित्यर्थः ॥

**को वां दाशत्सुमतये चिदस्यै वसू यद्धेथे नमसा पदे गोः ।**

**जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव मनसा चरन्ता ॥ २ ॥**

कः । वाम् । दाशत् । सुऽमतये । चित् । अस्यै । वसू इति । यत् । धेथे इति । नमसा । पदे । गोः ।

जिगृतम् । अस्मे इति । रेवतीः । पुरम्ऽधीः । कामप्रेणऽइव । मनसा । चरन्ता ॥ २ ॥

---

1. क्ष-झ-झ१-ञ-ट–आरभ्यते । तत्र ।

हे vवसू वासयितारावश्विनौ vवां युवयोः संबन्धिन्यै vअस्यै वक्ष्यमाणरूपायै vसुमतये vचित् शोभनबुद्ध्यै । चित् पूजायामप्यर्थे वा । स्वल्पेनैव हविषा महत्फलप्रदानरूपायै ईदृश्यै अपि बुद्ध्यै प्रीणनाय vकः vदाशत् को दद्यात् दातुं शक्नुयात् । युवयोः प्रभावस्यातिमहत्त्वादिति भावः ॥ दाशतेर्लेट्यडागमः ॥ कथं मतेः सौष्ठवमिति तदुच्यते । vयत् यस्मात्कारणात् vगोः vपदे भूम्याः सर्वैर्गन्तव्यायाः स्तुत्यायाः वा वेदिरूपायाः स्थाने । ‘ एतावती वै पृथिवी यावती वेदिः ’ ( तै. सं. २. ६. ४. ३ ) इति श्रुतेः । गौरिति भूमिनाम । तथा च निरुक्तं–‘ गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति गातेर्वौकारो नामकरणः ’ ( निरु. २. ५ ) इति । तादृशे स्थाने अस्माभिः प्रार्थितौ सन्तौ vनमसा हविर्लक्षणेन यवमात्रप्रकारेणान्नेन[1] vधेथे धारयथो बहुप्रदानविषयां[2] बुद्धिम् ॥ दधातेर्लेटि ‘ बहुलं छन्दसि ’ इति विकरणस्य[3] लुक् । धातोर्ह्रस्वत्वम् । ‘आतो ङितः ’ ( पा. सू. ७. २. ८१ ) इति इयादेशः ॥ यस्मादेवं तस्मात् vअस्मे अस्मभ्यं vरेवतीः क्षीरादिधनवतीः vपुरंधीः शरीरधारिकाः शरीराभिवृद्धिहेतूः गाः vजिगृतं शब्दयतं दत्तमित्यर्थः[4] ॥ ‘ गॄ शब्दे ’ । छान्दसः शपः श्लुः । अभ्यासस्येत्वं ह्रस्वत्वं च ॥ पुनस्तावेव विशेष्येते । vकामप्रेणेव । इवशब्दः एवकारार्थः । कामपूरकेणैव[5] vमनसा सह vचरन्ता चरन्तौ । यजमानस्य कामाः पूरणीया इति कृतसंकल्पावित्यर्थः ॥ ‘ प्रा पूरणे ’ । कामं प्रातीति कामप्रः । ‘ आतोऽनुपसर्गे कः ’ ॥

युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः ।
उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥ ३ ॥

युक्तः । ह । यत् । वाम् । तौग्र्याय । पेरुः । वि । मध्ये । अर्णसः । धायि । पज्रः ।

उप । वाम् । अवः । शरणम् । गमेयम् । शूरः । न । अज्म । पतयत्ऽभिः । एवैः ॥ ३ ॥

अत्रेतिहासमाहुः । तौग्र्यनामकं राजानं युद्धे शत्रवः पराभाव्य पाशैर्दृढं बद्ध्वा समुद्रमध्ये प्रचिक्षिपुः । स च उत्तरीतुमशक्तः सन् अश्विनौ तुष्टाव । तौ च तुष्टौ शीघ्रमेव रथमश्वैर्योजयित्वा समुद्रमागत्य तमुत्तार्य अपालयतामिति । अयमर्थः ‘ अजोहवीदश्विना तौग्र्यः ’ ( ऋ. सं १. ११७. १५) इत्यादिमन्त्रान्तरे प्रसिद्धः । सोऽत्रोच्यते । हे अश्विनौ vवां युवयोः संबन्धी vपेरुः पारणकुशलो रथः vयुक्तो vह अश्वैर्युक्तः[6] खलु । हशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः । स च उदाहृतः । कस्मै । vतौग्र्याय एतन्नाम्ने राज्ञे तद्बन्धमोचनार्थम् । कुत्रेति तदुच्यते । vअर्णसः अम्भसः vमध्ये समुद्रस्य मध्ये । स च vपज्रः पाजसा बलेन तीर्णः[7] सन् vवि vधायि[7] धारितः स्थापितः[8] । यस्मादेवं तस्मात् vवां युवयोः vअवः रक्षणं vशरणम् vउप vगमेयं संप्राप्नुयाम् ऐहिकदुःखाद्विमुक्तो युष्मत्स्थानं संभजेयम् । गतौ दृष्टान्तः । vपतयद्भिरेवैः[9] अश्वैः vशूरो vन शूर इव । स यथा vअज्म[10] जित्वा[10] निर्भयं स्वगृहं प्राप्नोति तद्वत् ॥

---

१. क्ष-झ१-ञ-ट–यवमात्रप्रमाणेनान्नेन । २. क्ष-झ१-ञ-ट–बहुफलप्रदानविषयाम् । ३. क्ष-झ१-ञ-ट–विकरणस्य शपः । ४. क्ष-झ-ञ-ट–ददतमित्यर्थः । ५. क्ष-ञ-ट–कामपूरणेनैव । ६. क्ष-ञ-ट–अश्वयुक्तोऽभूत् । ७. क्ष-ञ-ट–जीर्णः सन् धायि । ८. क्ष-ञ-ट–स्थापितः तदर्थम् । ९. क्ष-झ१-ञ-ट–पतयद्भिः गमनकुशलैः एवैः; झ–पतयाद्भिः गमयाद्भिः एवैः । १०. क्ष-ङ-झ१-ञ-ट–जित्वा वैरिणः ।

**उपस्तुतिरौचथ्यमुरुष्येन्मा मामिमे पतत्रिणी वि दुग्धाम् ।**
**मा मामेधो दशतयश्चितो धाक् प्र यद्वां बद्धस्त्मनि खादति क्षाम् ॥ ४ ॥**

उपऽस्तुतिः । औचथ्यम् । उरुष्येत् । मा । माम् । इमे इति । पतत्रिणी इति । वि । दुग्धाम् ।
मा । माम् । एधः । दशऽतयः । चितः । धाक् ।
प्र । यत् । वाम् । बद्धः । त्मनि । खादति । क्षाम् ॥ ४ ॥

अत्राख्यानमाहुः । जराझर्झरितगात्रं[1] जात्यन्धं दीर्घतमसं मामतेयं वरिवसितुमशक्नुवानाः स्वगर्भदासा अग्नौ प्रदाहाय प्रचिक्षिपुः । तत्र क्षिप्तोऽश्विनावस्तावीत् । तौ चैनमरक्षताम् । ततोऽप्यम्रियमाणमुदकेषु अपातयन्[2] । तत्र निमग्नः पुनरश्विनौ तुष्टाव । तुष्टौ सन्तौ तौ जलादुदहार्ष्टाम् । एवमवध्यं तं त्रैतनो[3] नामकः[3] कश्चिद्दासः अस्य शिरो वक्षश्च व्यतक्षत्[4] । ततोऽप्यपालयतामिति । तदिदम् ऋग्द्वयाभ्यामुच्यते । हे अश्विनौ उपस्तुतिः युवां बुद्ध्योपेत्य[5] क्रियमाणा स्तुतिः औचथ्यम् उचथस्य पुत्रं दीर्घतमसं माम् उरुष्येत् रक्षेत् दाहाद्युपद्रवात् । ‘ उरुष्यती रक्षाकर्मा ’ ( निरु. ५. २३ ) इति यास्कः । एवं सामान्येनोक्त्वा विशेषेण प्रत्युपद्रवपरिहारं[6] प्रार्थयते । इमे प्रसिद्धे पतत्रिणी पतनशीले पुनरावर्तनशीले अहोरात्रे मां मा वि दुग्धां विशेषेण दोहगतसारं[7] मा कार्ष्टां प्राणनिर्गमनानुकूल्यं मा कुरुतामित्यर्थः । किंच मां दशतयः दशवारः[8] चितः संचितः संपादितः[9] एधः प्रज्वालितेन्धनसंघः[10] मा धाक् मा धाक्षीत्[11] ॥ दहतेर्लुङि सिचि हलन्तलक्षणा वृद्धिः । ‘ बहुलं छन्दसि ’ इति इडभावः । हल्ङ्यादिसंयोगान्तलोपौ ॥ दुःसहदुःखप्राप्तिं दर्शयति । यत् यस्मात् वां युवयोः संबन्धी अयं जनः बद्धः पाशैः गाढं[12] वेष्टितः सन् त्मनि आत्मनि आत्मना क्षां भूमिं खादति भक्षयति गन्तुमशक्तः सन् भूमौ परिलुठतीत्यर्थः । तस्मादुपस्तुतिरौचथ्यमुरुष्येत् इति[13] ॥

अस्याः पञ्चम्या विनियोगमाह शौनकः—‘ आततायिनमायान्तं दृष्ट्वा व्याघ्रमथो वृकं । न मा गरन्निति जपंस्तेभ्य एव प्रमुच्यते । त्रिरात्रोपोषितो रात्रौ जपेदा सूर्यदर्शनात् । आप्लुत्य प्रयतः सूर्यमुपतिष्ठेद्दिवाकरं । पश्यन्ति तस्करा नैनं तथान्ये पापबुद्धयः । एकः शतानि त्रायेत तस्करेभ्यश्चरन् पथि[14] ’ ( ऋग्वि. १. १४१ ) इति ॥

**न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः ।**
**शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसावपि ग्ध ॥ ५ ॥**

न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईम् । सुऽसमुब्धम् । अवऽअधुः ।
शिरः । यत् । अस्य । त्रैतनः । विऽतक्षत् । स्वयम् । दासः । उरः । अंसौ । अपि । ग्धेति ग्ध ॥५॥

---

१. ख-च-फ—जराजरितगात्रम् ; क-ञ—जराजर्जरीकृतगात्रम् ; क्ष-ङ-ञ-ट — जराजर्जरिताङ्गम् ; झ१—जराजर्झरिताङ्गम् । २. क्ष-ङ-झ१-ञ-ट—प्रापातयन् । ३. क्ष-ञ-ट—त्रैतननाम (मा) । ४. क्ष-झ-ञ-ट—अविध्यत् । ५. क्ष-ङ-झ१-ञ-ट—बुद्धा उपेत्य प्राप्य । ६. क्ष-झ१-ञ-ट—प्रत्युपद्रवं परिहारम् । ७. क्ष-ञ-ट—विशेषेण दोहतं गतसारम् ; झ—विशेषेणादाहं गतसारम् । ८. क्ष-ङ-झ१-ञ-ट—अपरिमितकाष्ठावयवः ९. क्ष-ङ-च-झ-झ१-ञ-ट—सम्यक् संपादितः । १०. झ१—प्रज्वलितेन्धनसंघः । ११. क्ष-ङ-झ-ञ-ट—दहतु । १२. ङ-झ१—दृढम् । १३. क्ष-ञ-ट—‘ इति ’ नास्ति । १४. क्ष-झ१-ञ-ट—यथा ।

vनद्यः नदनशीलाः vमातृतमाः मातृवज्जगतां हितकारिण्य आपः vमा मां दीर्घतमसं vगारन्[1] न गिरेयुः निमग्नं मा कुर्युः ॥ ‘ गॄ निगरणे ’। लेटि व्यत्ययेन शप् ॥ गिरणप्राप्तिं दर्शयति । vयत् यस्मात् vदासाः अस्मदुपक्षपयितारो मदीयगर्भदासाः vईम् एनं दीर्घतमसं मां vसुसमुब्धं सुष्ठु संकुचितसर्वाङ्गम् ॥ ‘ स्वती पूजायाम् ’ ( पा. म . २. २. १८. ४ ) इति प्रादिसमासे अव्ययपूर्वपद-प्रकृतिस्वरत्वम् ॥ vअवाधुः अवाङ्मुखमपातयन् । किंच vअस्य मम vशिरः सः vत्रैतनः एतन्नामकः vदासः अत्यन्तनिर्घृणः सन् vयत् यस्मात् vवितक्षत् विविधं तष्टवान् तस्मात् स दासः vस्वयं स्वकीयमेव शिरस्तक्षतु । न केवलं शिर एव अपि तु मदीयम् vउरः वक्षःस्थलम्[2] vअंसौ च vअध हतवान् विदारितवानित्यर्थः ॥ हन्तेर्लुङि छान्दसमेतद्रूपम् ॥ ततः स्वकीयमुरः अंसावपि स्वशस्त्रेणैव तथा कृतवान् । तद्युवयोर्माहात्म्यमिति भावः ॥

दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥ ६ ॥

दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे ।
अपाम् । अर्थम् । यतीनाम् । ब्रह्मा । भवति । सारथिः ॥ ६ ॥

vदीर्घतमाः एतन्नामा महर्षिः स च vमामतेयः ममतायाः पुत्रः vदशमे[3] vयुगे दशयुगपर्यन्तं[3] महानुभावयोरश्विनोः प्रभावात् पूर्वोक्ताद्दुःखाद्विमुक्तोऽत्यन्तसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान् । दशमे युगे अतीते सति vजुजुर्वान् जीर्णः[4] वलीपलितगात्रो बभूव । एवंभूतः सन् vअर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं vयतीनां प्राप्नुवतीनाम् vअपाम् अप्कार्याणां प्रजानाम् । यद्वा । अपाम् अपसां कर्मणाम् अर्थं प्रयोजनं यतीनां तासां प्रजानाम् । vब्रह्मा ब्रह्मसदृशः[5] परिवृढः vभवति । किंच vसारथिः तद्वन्निर्वाहको भवति[5] देवो भवतीत्यर्थः[6] । एवमस्य वृत्तान्तं मन्त्रोऽनुवदति । स्वयं वा स्वात्मानं पारोक्ष्येण[7] अश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति ॥ ॥ १ ॥

‘ प्र द्यावा ’ इति पञ्चर्चं तृतीयं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यम् । अनुक्रान्तं च–‘ प्र द्यावा पञ्च द्यावापृथिव्यं तु जागतं तु ’ इति ॥ अग्निष्टोमे पृष्ठ्यस्य षष्ठेऽहनि च द्यावापृथिव्यनिविद्धानमेतत् सूक्तम् । तथा च सूत्रं[8]–‘ प्र द्यावेति दैर्घतमसम् ’ ( आश्व. श्रौ. ५. १८ ) इति ॥ आद्या द्यावा-पृथिव्ये पशौ हविषो याज्या । तथा च सूत्रितं–‘ प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही नो द्यावापृथिवी इति द्वे ’ ( आश्व. श्रौ. ३. ८ ) इति ॥

---

१. क्ष-ङ-झ१-ञ-ट–न गरन् । २. क्ष-ञ-ट–वक्षःस्थानम् । ३. क्ष-ञ-ट–दशमे युगपर्यन्ते । ४. क्ष-ञ-ट–जूर्णः । ५. क्ष-झ१-ञ-ट–ब्रह्मसदृशो भवति यद्वा परिवृढः सारथिर्भवति सारथिवन्निर्वाहको भवति । ६. क्ष-ङ-ञ-ट–भवतीत्यर्थः यद्वा दशयुगपर्यन्तं जीवन् उक्तरूपेण पुरुषार्थसाधकोऽभवत्; झ१–यद्वा जीवन् उत्तररूपेण पुरुषार्थसाधकोऽभवत् । ७. क्ष-ञ-ट–परोक्षेण । ८. क्ष-झ-झ१-ञ-ट–सूत्रितम् ।

प्र द्यावा॑ य॒ज्ञैः पृ॑थि॒वी ऋ॑ता॒वृधा॑ म॒ही स्तु॑षे वि॒दथे॑षु॒ प्रचे॑तसा ।
दे॒वेभि॒र्ये दे॒वपु॑त्रे सु॒दंस॑से॒त्था धि॒या वार्या॑णि प्र॒भूष॑तः ॥ १ ॥

प्र । द्यावा॑ । य॒ज्ञैः । पृ॒थि॒वी इति॑ । ऋ॒त॒ऽवृधा॑ । म॒ही इति॑ । स्तु॒षे॒ । वि॒दथे॑षु । प्रऽचे॑तसा ।
दे॒वेभिः॑ । ये इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । सु॒ऽदंस॑सा । इ॒त्था । धि॒या । वार्या॑णि । प्र॒ऽभूष॑तः ॥ १ ॥

ᵛद्यावा ᵛपृथिवी द्यावापृथिव्यौ ॥ ‘ दिवो द्यावा ’ इति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । ‘ देवताद्वन्द्वे च ’ इति उभयपदप्रकृतिस्वरत्वम् । समासमध्ये पदान्तरपाठश्छान्दसः ॥ अहं यजमानः ᵛयज्ञैः यागैस्तत्प्रदानैः निमित्तभूतैः हविष्प्रदानार्थं ᵛप्र ᵛस्तुषे प्रकर्षेण स्तौमि ॥ पुरुषव्यत्ययः ॥ कीदृश्यौ ते । ᵛऋतावृधा यज्ञस्य[1] वर्धयित्र्यौ ᵛमही महत्यौ ᵛविदथेषु यागेषु ᵛप्रचेतसा प्रकर्षेण अस्मांश्चेतयित्र्यौ अस्माभिश्चेतयितव्ये वा । ईदृश्यौ स्तुषे । अनयोः कोऽतिशय इति उच्यते । ᵛये द्यावापृथिव्यौ ᵛदेवेभिः यजमानैः ᵛदेवपुत्रे देवा यजमानाः पुत्रस्थानीयाः शुश्रूषका ययोस्ते तादृश्यौ । यद्वा । देवेभिर्विशिष्टे । ᵛसुदंससा । दंस इति कर्मनाम । शोभनकर्मोपेते । ᵛइत्था सत्यम् । इत्थेति सत्यनाम, ‘ सत्रा इत्था ’ (नि. ३. १०. ५) इति तन्नामसु पाठात् । सत्यं ᵛधिया अस्मदनुग्रहबुद्ध्या ᵛवार्याणि वरणीयानि धनानि अस्मभ्यं ᵛप्रभूषतः अलंकुरुतः दत्त इत्यर्थः । यद्वा । वार्याणि हवींषि धिया कर्मणा निमित्तेन कर्मसमाप्त्यर्थं प्रभूषतः प्रकर्षेण स्वीकुरुतः ॥

उ॒त म॑न्ये पि॒तुर॒द्रुहो॒ मनो॑ मा॒तुर्महि॒ स्वत॑व॒स्तद्धवी॑मभिः ।
सु॒रेत॑सा पि॒तरा॒ भूम॑ चक्रतुरु॒रु प्र॒जाया॑ अ॒मृतं॒ वरी॑मभिः ॥ २ ॥

उ॒त । म॒न्ये॒ । पि॒तुः । अ॒द्रुहः॑ । मनः॑ । मा॒तुः । महि॑ । स्वऽत॑वः । तत् । हवी॑मऽभिः ।
सु॒ऽरेत॑सा । पि॒तरा॑ । भूम॑ । च॒क्र॒तुः॒ । उ॒रु । प्र॒ऽजायाः॑ । अ॒मृत॑म् । वरी॑मऽभिः ॥ २ ॥

ᵛउत अपि च ᵛपितुः पितृस्थानीयायाः पत्न्याः ᵛअद्रुहः अद्रोग्धुः । न हि कदाचित् पिता स्वपुत्रादये द्रुह्यति । तादृश्याः पृथिव्याः ᵛस्वतवः स्वायत्तं बलं स्वयमेवास्मदनुग्रहाय त्वरमाणम् अत एव ᵛमहि महत् ᵛतत् तादृशमनुग्रहयुक्तं ᵛमनः चित्तं ᵛहवीमभिः हवनैराह्वानैः ᵛमन्ये जानामि प्रसादयामीत्यर्थः । यद्वा । तत्तादृशमुक्तलक्षणं मनो हवीमभिर्हवनैर्महि मन्ये अतिमहत् प्रवृद्धं मन्ये । तथा ᵛमातुः सर्वस्योत्पादयितुरन्तरिक्षस्य द्युलोकस्य । ‘ मातान्तरिक्षं निर्मीयन्तेऽस्मिन्भूतानि ’ ( निरु. २. ८ ) इति निरुक्तम् । यद्वा । पितुर्द्युलोकस्य मातुर्भूम्याः । ‘ द्यौर्वः पिता पृथिवी माता ’ ( ऋ. सं. १. १९१. ६ ) इति श्रुतेः । तत्तादृशमुक्तलक्षणं मनो मन्ये । द्यावापृथिव्योर्मनोऽस्मदाह्वानैः प्रीणयामीत्यर्थः । किंच ᵛपितरा माता च पिता च पितरौ द्यावापृथिव्यौ ᵛसुरेतसा शोभनसामर्थ्येन ᵛप्रजायाः यजमानादिरूपायाः ᵛवरीमभिः वरिष्ठैः रक्षणविशेषैः ᵛभूम बहुतरम् ᵛउरु विस्तीर्णम् ᵛअमृतम् अमरणभूतम्[2] अभिलषितं ᵛचक्रतुः कुरुतः ॥

---

१. झ१–ऋतस्य । २. क्ष-झ१-म-ट–अमरणरूपम् ।

**ते सूनवः स्वपसः सुदंससो मही जज्ञुर्मातरा पूर्वचित्तये ।**
**स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥ ३ ॥**

ते । सूनवः । सुऽअपसः । सुऽदंससः । मही इति । जज्ञुः । मातरा । पूर्वऽचित्तये ।
स्थातुः । च । सत्यम् । जगतः । च । धर्मणि । पुत्रस्य । पाथः । पदम् । अद्वयाविनः ॥३॥

vते प्रसिद्धाः vसूनवः युवाभ्यामुत्पन्नाः पुत्रस्थानीयाः प्रजाः vस्वपसः शोभनकर्माणः vसुदंससः शोभनदर्शनाः युवां vमही महत्यौ vमातरा मातृवद्धितकारिण्यौ vजज्ञुः जानन्ति महानुभावतामवगच्छन्ति । किमर्थम् । vपूर्वचित्तये प्रथमबुद्ध्ये अनुग्रहरूपायै । किंच ते द्यावापृथिव्यौ vस्थातुः स्थावरस्य vजगतः जङ्गमस्य vपुत्रस्य पुत्रस्थानीयस्य उभयविधस्य जगतः vअद्वयाविनः न विद्यते द्वयं यस्य तादृशस्य । स्वजीवनाय युष्मद्व्यतिरिक्तमजानतः इत्यर्थः । ईदृशस्य vधर्मणि धारणे रक्षणे निमित्तभूते सति vपदं[1] स्थानं vसत्यम् अबाध्यं vपाथः रक्षथः दत्थ इत्यर्थः । यद्वा । ते प्रसिद्धाः सूनवः उत्पाद्यमानाः[2] स्वपसः शोभनप्रकाशादिकर्माणः सुदंससः शोभनदर्शनाः सुष्ठु उपक्षयन्तः[3] वा आत्मानं स्वव्यापाराय ईदृशा रश्मयो मही महत्यौ द्यावापृथिव्यौ पूर्वचित्तये प्राणिनां पूर्वज्ञानाय जज्ञुः जातवन्तः[4] द्यावापृथिव्योरन्तराले व्याप्ता इत्यर्थः । किंच स्थातुर्जगतश्च[5] धर्मणि धारणे तदर्थम् अद्वयाविनो मार्गद्वयरहितस्य ॥ 'बहुलं छन्दसि' इति द्वयशब्दात् मत्वर्थीयो विनिः । 'अन्येषामपि दृश्यते' इति दीर्घः ॥ पुत्रस्य युष्मत्पुत्रस्थानीयस्यादित्यस्य पदं मार्गं सत्यं पाथः अवश्यं रक्षथः ॥

**ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा ।**
**नव्यंनव्यं तन्तुमा तन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः ॥ ४ ॥**

ते । मायिनः । ममिरे । सुऽप्रचेतसः । जामी इति ।
सयोनी इति सऽयोनी । मिथुना । समऽओकसा ।
नव्यम्ऽनव्यम् । तन्तुम् । आ । तन्वते । दिवि । समुद्रे । अन्तरिति । कवयः । सुऽदीतयः ॥४॥

vते प्रसिद्धे द्यावापृथिव्यौ vमायिनः । माया प्रज्ञा । स्वविषयप्रज्ञावन्तः[6] प्रज्ञोपलक्षितकर्मवन्तो वा vसुप्रचेतसः सुष्ठु प्रकर्षेण चेतितुं शक्ताः रश्मयः vममिरे मिमते प्रमाणेन परिच्छिन्दन्ति । कीदृश्यौ ते । vजामी परस्परं भगिनी[7] । एतत्कुतः[8] इति चेत् उच्यते । vसयोनी समानोत्पत्तिस्थाने vमिथुना प्राण्युत्पत्तये मिथुनभूते परस्परमवियुक्ते इत्यर्थः । vसमोकसा समानस्थाने । द्युपृथिव्योः एकस्मिन्नेव अवकाशरूपे आकाशेऽवस्थानात् । समीचीनस्थाने वा । किंच vकवयः मेधाविनः स्वव्यापारविषयज्ञानवन्तः vसुदीतयः सुष्ठुद्योतना रश्मयः vदिवि द्योतमाने vसमुद्रे अन्तरिक्षे vअन्तः मध्ये । समुद्रशब्दः

---

१. क्ष-ञ-ट—पदम् आस्पदम् । २. क्ष-ञ-ट—उत्पद्यमानाः । ३. क्ष-ङ-ञ-ट—उपक्षपयन्तः । ४. क्ष-ज्ञ-ञ-ट—ज्ञातवन्तः । ५. क्ष-ञ-ट—स्थातुश्च जगतश्च । ६. क्ष-ङ-ज्ञ-ज्ञ१-ञ-ट—स्वविषयप्रज्ञानवन्तः । ७. क्ष-ङ-ज्ञ-ज्ञ१-ञ-ट—भगिनीस्थानीये । ८. क्ष-ञ-ट—तत्कुतः ।

अन्तरिक्षनामसु पाठात् तद्वचनः । स चैवं यास्केन निरुक्तः—'समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा' ( निरु. २. १० ) इति । ᵛनव्यंनव्यं[1] ᵛतन्तुं तननीयं विस्तारणीयम् । जात्येकवचनम् । रश्मीन् ᵛआ ᵛतन्वते समन्ताद्विस्तारयन्ति ॥

तद्राधो॑ अ॒द्य स॑वि॒तुर्वरे॑ण्यं व॒यं दे॒वस्य॑ प्रस॒वे म॑नामहे ।
अ॒स्मभ्यं॑ द्यावापृथिवी सु॒चे॒तुना॑ र॒यिं ध॑त्तं॒ वसु॑मन्तं शत॒ग्विन॑म् ॥ ५ ॥

तत् । राधः॑ । अ॒द्य । स॒वि॒तुः । वरे॑ण्यम् । व॒यम् । दे॒वस्य॑ । प्र॒ऽस॒वे । म॒ना॒म॒हे॒ ।
अ॒स्मभ्य॑म् । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । सु॒ऽचे॒तुना॑ । र॒यिम् । ध॒त्त॒म् । वसु॑ऽमन्तम् । श॒त॒ऽग्विन॑म् ॥५॥

ᵛवयं यजमानाः ᵛसवितुः सर्वस्य प्रसवितुः ᵛदेवस्य आदित्यस्य अन्तर्यामिरूपिणः ᵛप्रसवे अनुज्ञायां सत्यां ᵛतत् तादृशं ᵛवरेण्यं वरणीयं ᵛराधः पुरुषार्थसाधनसमर्थं गवादि धनं ᵛमनामहे याचामहे ॥ मन्यतिर्याच्ञाकर्मा । छान्दसः शप् ॥ यद्वा । पुनःपुनरभ्यस्यामः । लप्सीमहीति[2] यावत् ॥ 'म्ना अभ्यासे' । व्यत्ययेनात्मनेपदम् । शपि पाघ्रादिना मनादेशः ॥ किंच ᵛअस्मभ्यं ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛसुचेतुना शोभनचेतनेन अस्मदनुग्रहबुद्ध्या ᵛरयिं धनं ᵛधत्तं दत्तम् । कीदृशम् । ᵛवसुमन्तं निवासयोग्यगृहादिविशिष्टं ᵛशतग्विनं शतसंख्याकगवादिविशिष्टम् ॥    ॥ २ ॥

'ते हि' इति पञ्चर्चं चतुर्थं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यम् । 'ते हि' इत्यनुक्रान्तम् ॥ चतुर्विंशेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमेतत्सूक्तं—'ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवम्' ( आश्व. श्रौ. ७ ४ ) इति सूत्रितत्वात् । तथा पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि वैश्वदेवे द्यावापृथिव्यं निविद्धानीयं[3], 'चातुर्विंशिकं तृतीयसवनम्' ( आश्व. श्रौ. ७. ६ ) इति आभिप्लविके द्वितीयेऽहनि अतिदिष्टत्वात् । आभिप्लविकात् द्वितीयादह्नः पृष्ठ्यस्य द्वितीयेऽहनि एतत्सूक्तमतिदेशतः प्राप्तं, 'पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम्' ( आश्व. श्रौ. ७. १० ) इति सूत्रितत्वात् । प्रथमा आश्विनशस्त्रे विनियुक्ता । 'संस्थितेष्वाश्विनाय[4]' इत्यत्र सूत्रितं—'ते हि द्यावापृथिवी विश्वशंभुवा विश्वस्य देवीमृचयस्य' ( आश्व. श्रौ. ६. ५ ) इति ॥

ते हि द्यावा॑पृथि॒वी वि॒श्वशं॑भुव ऋ॒ताव॑री॒ रज॑सो धार॒यत्क॑वी ।
सु॒जन्म॑नी धि॒षणे॑ अ॒न्तरी॑यते दे॒वो दे॒वी धर्म॑णा॒ सूर्यः॒ शुचिः॑ ॥ १ ॥

ते इति॑ । हि । द्यावा॑पृथि॒वी इति॑ । वि॒श्वऽशं॑भुवा । ऋ॒तव॑री॒ इत्यृ॒तऽव॑री ।
रज॑सः । धा॒र॒यत्क॑वी॒ इति॑ धा॒र॒यत्ऽक॑वी ॥ सु॒जन्म॑नी॒ इति॑ सु॒ऽजन्म॑नी ।
धि॒षणे॒ इति॑ । अ॒न्तः । ई॒यते॒ । दे॒वः । दे॒वी इति॑ । धर्म॑णा । सूर्यः॑ । शुचिः॑ ॥ १ ॥

---

१. क्ष-ञ-ट—नव्यंनव्यं नवंनवम् ।    २. क्ष-ञ-ट—लभेमहीति ।    ३. क्ष-ञ-ट—निविद्धानम् ।
४. क्ष-ञ-ट—संस्थितेष्वाश्विनाय स्तुवते ।

ᵛते ᵛहि ते खलु प्रसिद्धे ᵛद्यावापृथिवी ᵛअन्तः तयोरन्तराले ᵛशुचिः शुद्धो विश्वस्य शोचयिता वा ᵛदेवः दीप्यमानः ᵛसूर्यः ᵛधर्मणा प्रकाशोदकदानादिधारणेन युक्तः सन् ᵛईयते सर्वदा गच्छति ॥ 'ईङ् गतौ'। दैवादिकः ॥ तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः। कीदृश्यौ ते। ᵛविश्वशंभुवा। विश्वं सुखभावयितृ ययोः ते विश्वशंभुवा। विश्वस्य सुखयित्र्यावित्यर्थः। ᵛऋतावरी ऋतवत्यौ ॥ ऋतशब्दात् 'छन्दसीवनिपौ०' इति वनिप्। 'वनो र च' इति ङीब्रेफौ ॥ ᵛरजसः उदकस्य उदकोत्पत्तौ। 'उदकं रज उच्यते' (निरु. ४. १९) इति निरुक्तम्। ᵛधारयत्कवी अकृच्छ्रेण धारकं[1] कवि[1] ययोस्ते तादृश्यौ। उदकोत्पादनाय अप्रयत्नवत्यौ[2] इत्यर्थः। यद्वा। धारयत्कविर्मनीषी आदित्यो ययोस्ते तादृश्यौ। वृष्ट्युदकधारयत्सूर्योपेते[3] इत्यर्थः। ᵛसुजन्मनी शोभनजन्मवत्यौ ᵛधिषणे धर्षणोपेते स्वव्यापारेषु प्रगल्भे इत्यर्थः। ᵛदेवी द्योतमाने। अत्र यद्यपि धिषणे इत्येतत् 'धिषणे रोदसी' (नि. ३. ३०. ३) इति तन्नामसु उक्तत्वात् द्यावापृथिवीनाम, तथापि द्यावापृथिवी इत्यस्य विद्यमानत्वात् यौगिकं[4] द्रष्टव्यम् ॥

उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः।
सुधृष्टमे वपुष्येे न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥ २ ॥

उरुऽव्यचसा। महिनी इति। असश्चता। पिता। माता। च। भुवनानि। रक्षतः।
सुधृष्टमे इति सुऽधृष्टमे। वपुष्येे इति। न। रोदसी इति।
पिता। यत्। सीम्। अभि। रूपैः। अवासयत् ॥ २ ॥

ᵛउरुव्यचसा प्रभूतव्यचनवत्यौ अतिविस्तीर्णे ᵛमहिनी अत एव महत्यौ ᵛअसश्चता असज्जमाने परस्परवियुक्ते इत्यर्थः। ᵛपिता पालयित्री द्यौः ᵛमाता निर्मात्री पृथिवी ᵛच इत्युभे ᵛभुवनानि भूतजातानि ᵛरक्षतः पालयतः। 'द्यौष्पितः पृथिवि मातः' (ऋ. सं. ६. ५१. ५) इत्यादिश्रुतेर्मातापितृरूपत्वम्। किंच ᵛसुधृष्टमे अतिशयेन धृष्टे ॥ छान्दसस्तकारलोपः ॥ प्रगल्भे ᵛरोदसी द्यावापृथिव्यौ ᵛवपुष्ये ᵛन वपुषो हिते इव। प्राणिनां पितराविव शरीररक्षके इत्यर्थः। तदेवोपपादयति। ᵛयत् यस्मात् ᵛसीं सर्वतः ᵛपिता पितृस्थानीया द्यौः ᵛरूपैः निरूपणसाधनैः प्रशस्तैः प्रकाशैः निरूप्यमाणैर्वृष्ट्यादिभिर्वा ᵛअभि ᵛअवासयत् अभिवासयति अधितिष्ठति तस्मात् पिता माता च भुवनानि रक्षतः ॥

स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया।
धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य धुक्षत ॥ ३ ॥

सः। वह्निः। पुत्रः। पित्रोः। पवित्रऽवान्। पुनाति। धीरः। भुवनानि। मायया।
धेनुम्। च। पृश्निम्। वृषभम्। सुऽरेतसम्। विश्वाहा। शुक्रम्। पयः। अस्य। धुक्षत ॥ ३ ॥

---

१. क्ष-ङ-झ१-ञ-ट–धारकः कविः। २. क्ष-ञ-ट–अप्रयत्नवती; ङ-प्रयत्नवत्यौ; झ१–प्रयत्नवती।
३. क्ष-ञ-ट–वृष्ट्युदकयाचित्सूर्योपेते; ङ-झ१–वृष्ट्युदकयोचितसूर्योपेते; झ-झ–वृष्ट्युदकधारिचितसूर्योपेते।
४. क्ष-ङ-झ१-ञ-ट– यौगिकं पदम्।

ᵛपित्रोः मातापित्रोर्द्यावापृथिव्योः ॥ 'पिता मात्रा' इति पिता शिष्यते। 'उदात्तयणः°' इति पितुर्विभक्तिरुदात्ता ॥ ᵛपुत्रः पुरुत्राता पुत्रस्थानीयः आदित्यः[1] ᵛपवित्रवान् पावनरश्मियुक्तः ᵛधीरः[2] धीमान् ᵛसः ᵛवह्निः फलस्य वोढा धारकः सन् ᵛमायया प्रज्ञया स्वकीयया ᵛभुवनानि भूतजातानि ᵛपुनाति पावयति प्रकाशयतीत्यर्थः। किंच स एव पुत्रः ᵛपृश्निं शुक्लवर्णां ᵛधेनुं प्रीणयित्रीं भूमिं ᵛसुरेतसं शोभनसामर्थ्यं शोभनोदकं वा ᵛवृषभं सेक्तारं द्युलोकं ᵛच मायया पुनाति प्रकाशयतीत्यर्थः। कदा। ᵛविश्वाहा सर्वाण्यप्यहानि सर्वकालमित्यर्थः। किंच ᵛअस्य द्युलोकस्य। यद्वा ॥ कर्मणि षष्ठी ॥ इमं[3] द्युलोकम्। ᵛशुक्रं ᵛपयः दीप्तं पयःसदृशमुदकं ᵛधुक्षत दोग्धि ॥ दुहेश्छान्दसे लुङि 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः ॥ ईदृशो महानुभावः आदित्यस्तयोः पुत्रः इति द्यावापृथिव्योः स्तुतिः ॥

अ॒यं दे॒वाना॑म॒पसा॑म॒पस्त॑मो॒ यो ज॒जान॒ रोद॑सी वि॒श्वशं॑भुवा।
वि यो म॒मे रज॑सी सु॒क्रतू॒यया॒जरे॑भि॒ः स्कम्भ॑नेभि॒ः समा॑नृचे ॥ ४ ॥

अ॒यम्। दे॒वाना॑म्। अ॒पसा॑म्। अ॒पःऽत॑मः। यः। ज॒जान॑। रोद॑सी॒ इति॑। वि॒श्वऽशं॑भुवा।
वि। यः। म॒मे। रज॑सी॒ इति॑। सु॒क्र॒तु॒ऽयया॑। अ॒जरे॑भिः। स्कम्भ॑नेभिः। सम्। आ॒नृ॒चे ॥४॥

पूर्वं पुत्रमाहात्म्येनैते प्रशस्य इदानीं स्वोत्पादकस्तुत्या प्रशंसति। ᵛअयं ᵛदेवानां मध्ये देवतमः ᵛअपसामपस्तमः। अप इति कर्मनाम। तेन तद्वान् लक्ष्यते। कर्मवतां मध्ये प्रकृष्टकर्मा। अयमित्युक्तं क इत्याह। ᵛयः देवः ᵛविश्वशंभुवा सर्वप्रकारेण भूतानां सुखस्य भावयित्र्यौ ᵛरोदसी द्यावापृथिव्यौ महानुभावे ᵛजजान उत्पादितवान्। न केवलमुत्पादनमात्रं अपि तु ᵛयः देवः ᵛरजसी रञ्जनात्मिके द्यावापृथिव्यौ। रजसी इति द्यावापृथिव्योर्नाम, 'रजसी सदसी' (नि. ३. ३०. ८) इति तन्नामसु पाठात्। उरुरूपे[4] ᵛवि ᵛममे विशेषेण[5] परिच्छिनत्ति। किं स्वोपभोगाय नेत्याह। ᵛसुक्रतूयया शोभनकर्मेच्छया। येन कर्मणा प्राणिनां सुखं संभवति तादृक्कर्मेच्छया। अथवा एतदुत्तरत्र संबध्यते। सुक्रतूयया उक्तेन निमित्तेन इमे द्यावापृथिव्यौ ᵛअजरेभिः अजीर्णैर्दृढतरैः ᵛस्कम्भनेभिः गतिप्रतिबन्धसाधनैः शङ्कुभिः ᵛसमानृचे सम्यक् सर्वतः पूजितवान् स्थापितवानित्यर्थः ॥ 'ऋच स्तुतौ'। लिटि रेफसामान्यात्[6] द्विहल्त्वमस्तीति 'तस्मान्नुड्द्विहलः' इत्यभ्यासस्य नुट्। यस्मादेवं तस्मादयमेव देवः अयमेव अपस्तमः[7] इत्येवंमहानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः ॥

ते नो॑ गृणा॒ने म॑हिनी॒ महि॒ श्रव॑ः क्ष॒त्रं द्या॑वापृथिवी धासथो बृ॒हत्।
येना॒भि कृ॒ष्टीस्त॒तना॑म वि॒श्वहा॑ प॒नाय्य॒मोजो॑ अ॒स्मे समि॑न्वतम् ॥ ५ ॥

ते इति॑। नः॒। गृ॒णा॒ने इति॑। म॒हि॒नी॒ इति॑। महि॑।
श्रवः॑। क्ष॒त्रम्। द्या॒वा॒पृ॒थि॒वी॒ इति॑। धा॒स॒थः॒। बृ॒हत् ॥ येन॑। अ॒भि।
कृ॒ष्टीः। त॒तना॑म। वि॒श्वहा॑। प॒नाय्य॑म्। ओज॑ः। अ॒स्मे इति॑। सम्। इ॒न्व॒त॒म् ॥ ५ ॥

---

१. क्ष-झ१-ञ-ट—आदित्यः वायुर्वा। २. क्ष-ङ-झ१-ञ-ट—अथवा वृष्टिलक्षणैः धीरः। ३. ङ-झ१-अमुम्। ४. ख-ज-झ-त-व—उरुरूपे। ५. ङ-झ१—विशेषेण प्रमाणेन। ६. क्ष-ञ-ट—रश्रुतिसामान्यात्। ७. क्ष-ङ-झ१-ञ-ट—उपास्यः।

vते प्रसिद्धे हे vद्यावापृथिवी द्यावापृथिव्यौ vगृणाने अस्माभिः स्तूयमाने सत्यौ ॥ कर्मणि कर्तृप्रत्ययः ॥ vमहि महदतिप्रभूतं vश्रवः[1] सर्वत्र प्रसिद्धमन्नं सर्वत्र श्रूयमाणां कीर्तिं वा vनः अस्मभ्यं vधासथः धत्तम् ॥ दधातेर्लेटयडागमः । 'सिब्बहुलम्°' इति सिप् ॥ तथा vबृहत्[2] अतिप्रभूतं vक्षत्रं बलं धासथः । तदेव विशेष्यते । vयेन अन्नबलेन[3] vविश्वहा सर्वेष्वपि अहःसु vकृष्टीः पुत्रादिरूपाः प्रजाः vअभि vततनाम अभितो विस्तारयाम ॥ तनोतेर्लोटि छान्दसो विकरणस्य श्लुः । 'आडुत्तमस्य°' इति आडागमः । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अभ्यस्ताद्युदात्तत्वाभावे धातुस्वरः ॥ कृष्टय इति मनुष्यनाम, 'कृष्टयः चर्षणयः' ( नि. २. ३. ७ ) इति तन्नामसु पाठात् । किंच vपनाय्यं स्तुत्यम् vओजः शरीरबलम् vअस्मे अस्मासु सम्यक् vइन्वतं व्याप्नुतं प्रवर्धयतमित्यर्थः । इन्वतिर्व्याप्तिवचनः, 'इन्वति ननक्ष' ( नि. २. १८. १ ) इति तन्नामसु पाठात् ॥ ॥ ३ ॥

'किमु श्रेष्ठः' इति चतुर्दशर्चं पञ्चमं सूक्तं दैर्घतमसमार्भवम् । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्त-परिभाषया जगत्यः । अनुक्रान्तं च–'किमु श्रेष्ठः पञ्चनार्भवं त्रिष्टुबन्तम्' इति । व्यूळहे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे आर्भवं निविद्धानं द्विप्रतीकम् । तत्र 'किमु श्रेष्ठः' इत्येतदन्त्यवर्जं प्रतीकम् । 'व्यूळहश्चेत्' इति खण्डे सूत्रितं–'किमु श्रेष्ठ उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च' ( आश्व. श्रौ. ८. ८ ) इति ॥

**किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं१ कद्यदूचिम ।**
**न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥ १ ॥**

किम् । ऊँ इति । श्रेष्ठः । किम् । यविष्ठः । नः । आ । अजगन् ।
किम् । ईयते । दूत्यम् । कत् । यत् । ऊचिम ॥ न । निन्दिम ।
चमसम् । यः । महाऽकुलः । अग्ने । भ्रातः । द्रुणः । इत् । भूतिम् । ऊदिम ॥ १ ॥

ऋभवो नाम सुधन्वनस्त्रयः पुत्रा ऋभुर्विभ्वा वाज इति । ते च मनुष्याः सन्तः सुकर्मणा देवत्वं प्राप्य कदाचित् कर्मकाले सोमपानाय प्रवृत्ताः । तान् प्रति देवैः प्रेरितोऽग्निः परस्परसमानरूपान् दृष्ट्वा स्वयमपि तदाकारं[4] धृत्वा[4] तेषु मध्ये स्वयं चतुर्थः सन् पातुं प्रवृत्तः । ते च ऋभवः आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं संदिहते । अयं vकिमु vश्रेष्ठः किं नु खलु अस्मत्तोऽयं प्रशस्यतमो वयसा श्रेष्ठः[5] सोऽस्मान् vआजगन् आगमत् प्राप्तः ॥ गमेर्लङि छान्दसः शपः श्लुः । हल्ङ्यादिलोपे 'मो नो धातोः' इति नत्वम् । अजगन्निति गतिकर्मा, 'अगन् अजगन्' ( नि. २. १४.११२) इति तन्नामसु पाठात् ॥ vकिं vयविष्ठः किं वा अस्माकं युवतमोऽस्मत्तः कनीयान् आजगन्[6] प्राप्तः । vकिं वा vदूत्यं दूतकर्म देवसंबन्धि vईयते गच्छति । देवैः प्रेरितः[7] दूतोऽस्मानागतो वा ॥ 'दूतस्य भागकर्मणी' इति यत् ॥ vयदूचिम यदेतत् ब्रूमः तत् vकत् । कथं निश्चेतव्यमित्यर्थः । वयं तावत् त्रय एव इदानीं[8] चत्वारः समानरूपा वर्तामहे तस्मादयमधिकः किमु श्रेष्ठ इति विचिकित्सा ।

---

१. क्ष-ञ-ट–श्रेष्ठम् । २. क्ष-ङ-च-झ-झ१-ञ-ट–बृहत् महत् । ३. क्ष-ङ-झ१-ञ-ट–अन्नेन बलेन । ४. ङ-झ१–तदाकारो भूत्वा । ५. क्ष-ञ-ट–ज्येष्ठः । ६. क्ष-ञ-ट–नः आजगन् । ७. झ१–प्रेषितः । ८. ङ–इदानीं तु ।

एवं संदिह्य कथंचित् स्वतोऽन्यं[1] निश्चित्य तं प्रति आपरोक्ष्येण ब्रुवते । हे ^अग्ने ^भ्रातः भ्रातृवद्भागार्ह । भ्राता यथा बलात् स्वकीयभागं स्वीकरोति तद्वत् समानरूपमाश्रित्य बलात्[2] चमसपानाय[2] प्रवृत्त इति भ्रातरित्युक्तम् । हे तादृशाग्ने ^चमसं ^न ^निन्दिम । अधिकः समागत इति पानमकृत्वा चमसं न दूषयामः ॥ ' णिदि कुत्सायाम् ' । ' छन्दसि वेति वक्तव्यम् ' इति द्विर्वचनाभावः ॥ अदूष्यत्वे कारणमाह । ^यः चमसः ^महाकुलः महाकुलोत्पन्नः त्वष्ट्रा निर्मितत्वात् । वक्ष्यति च ' त्वष्टा ग्नास्वन्तर्न्यानजे ' ( ऋ. सं १. १६१. ४ ) इति । अतः कारणात्[3] ^द्रुणः । विकारे प्रकृतिशब्दः । ततश्च तत्स्थे तच्छब्दः । इच्छब्दोऽवधारणे । दारुविकारश्चमसस्य ^भूतिं प्राप्तिम् ^ऊदिम ब्रूमः ॥ वदेश्छान्दसे लिटि ' वचिस्वपि° ' इति संप्रसारणम् । क्रादिनियमात् इट् ॥

एकं॑ चम॒सं च॒तुरः॑ कृणोतन॒ तद्वो॑ दे॒वा अ॑ब्रुव॒न्तद्व॒ आग॑मम् ।
सौध॑न्वना॒ यद्ये॒वा क॑रि॒ष्यथ॑ सा॒कं दे॒वैर्य॒ज्ञिया॑सो भविष्यथ ॥ २ ॥

एक॑म् । च॒म॒सम् । च॒तुरः॑ । कृ॒णो॒त॒न॒ । तत् । वः॒ । दे॒वाः । अ॒ब्रु॒व॒न् । तत् । वः॒ । आ । अ॒ग॒म॒म् ।
सौध॑न्वनाः । यदि॑ । ए॒व । क॒रि॒ष्यथ॑ । सा॒कम् । दे॒वैः । य॒ज्ञिया॑सः । भ॒वि॒ष्य॒थ॒ ॥ २ ॥

एवं पृष्टोऽग्निस्तान् प्रत्युवाच । हे ^सौधन्वनाः सुधन्वनः पुत्राः यूयम् ^एकं ^चमसं त्वष्ट्रा संपादितं पूर्वमेकमेव[4] सन्तं चमसं[4] ^चतुरः ^कृणोतन चतुःसंख्याकान् कुरुत ॥ ' चतुरः शसि ' ( पा. सू. ६. १. १६७ ) इत्यन्तोदात्तत्वम् । पूर्ववत् तनप् ॥ यथा उपरितने ' ज्येष्ठ आह चमसा द्वा करेति ' इत्युपक्रम्य ' कनिष्ठ आह चतुरस्करेति ' ( ऋ. सं. ४. ३३. ५ ) इति चतुष्कं[5] निर्धारितम् । न केवलमहमेव ब्रवीमि किंतु ^वः युष्मान् प्रति ^तत् उक्तं चतुर्धाकरणरूपं कर्म उत्तरत्र वक्ष्यमाणम् अश्वरथादिकरणरूपं च कर्म ^देवाः इन्द्रादयः ^अब्रुवन् । देवत्वप्राप्त्युपायत्वेन ^तत् तादृशं कर्म ^वः युष्माकं वक्तुम् अहम् ^आगमम् प्राप्तोऽस्मि । यस्मादेवं तस्माद्यूयं ^यद्येवा ^करिष्यथ यद्येवं मदुक्तप्रकारेण[6] कर्तुं शक्नुथ तथा चेत् ^देवैः ^साकं सह ^यज्ञियासो ^भविष्यथ[7] । इति तैरुक्तमित्यर्थः ॥

अ॒ग्निं दू॒तं प्रति॒ यदब्र॑वीतनाश्वः॑ कर्त्वो॒ रथ॑ उ॒तेह कर्त्वः॑ ।
धे॒नुः क॒र्त्वा यु॑व॒शा क॒र्त्वा द्वा तानि॑ भ्रात॒रनु॑ वः कृ॒त्व्येम॑सि ॥ ३ ॥

अ॒ग्निम् । दू॒तम् । प्रति॑ । यत् । अब्र॑वीतन । अश्वः॑ । क॒र्त्वः॑ । रथः॑ । उ॒त । इ॒ह । क॒र्त्वः॑ ।
धे॒नुः । क॒र्त्वा॑ । यु॒व॒शा । क॒र्त्वा॑ । द्वा । तानि॑ । भ्रा॒तः॒ । अनु॑ । वः॒ । कृ॒त्वी । आ । इ॒म॒सि॒ ॥ ३ ॥

हे आगत देव[8] ^अग्निम् अङ्गनादिगुणविशिष्टं ^दूतं दूतकर्म प्राप्तवन्तं त्वां ^प्रति ^यत् यत्कार्यम् ^अब्रवीतन अब्रुवन् ॥ व्यत्ययेन मध्यमः । पूर्ववत् तनप् ॥ किमिति ^अश्वः ^कर्त्वः[9] ।

---

१. क्ष-ञ-ट—स्वान्यम् । २. झ१—बलाच्च सोमपानाय । ३. क्ष-ङ-ञ-ट—कारणात् हे अग्ने । ४. क्ष-झ१ ञ-ट—अपूर्वम् एकमेव चमसम् । ५. क्ष-झ१-ञ-ट—चतुष्टयम् । ६. क्ष-ञ-ट—मदुक्तप्रकारम् । ७. क्ष-ङ-झ१-ञ-ट—भविष्यथ । यज्ञभागयोग्या भविष्यथ । ८. झ१—देवाः । ९. क्ष-ङ-झ१-ञ-ट—' कर्त्वः ' इत्यस्यानन्तरं ' जातावेकवचनम् । अश्वाः कर्तव्याः । कृत्यार्थे तवैकेन् इति त्वन्प्रत्ययः । यद्वा । उत्तरत्र इन्द्रो हरी युयुज इति इन्द्राय वचोयुजा ततक्षुरिति च विनियोगदर्शनात् ' इत्यधिकम् ।

एकस्मादश्वादश्वान्तरं कर्तव्यमित्यर्थः । ' अश्वादश्वमतक्षत ' ( ऋ. सं. १. १६१. ७ ) इति वक्ष्यमाणत्वात् ॥ ' कृत्यार्थे[1] तवैकेन्०' इति त्वन्प्रत्ययः[1] ॥ ᵛउत अपि च ᵛरथः ᵛकर्त्वः कर्तव्यः । ᵛधेनुः ᵛकर्त्वा । चर्मरहिता मृता गौः नित्यदोग्ध्री पुनर्नूतना कार्या । तदुत्तरत्र ' निश्चर्मणो गामरिणीत धीतिभिः ' ( ऋ. सं. १. १६१. ७ ) इति वक्ष्यमाणत्वात् । तथा ᵛद्वा द्वौ पितरौ जीर्णौ सन्तौ पुनः ᵛयुवशा युवानौ शयानौ प्रकृष्टयौवनोपेतौ ᵛकर्त्वा कर्तव्यौ । हे ᵛभ्रातः अग्ने युष्माकं देवानां तैरुक्तानि[2] कर्माणि कृत्वा ᵛअनु पश्चात् ᵛकृत्वी कृत्व्या कर्मणा ᵛएमसि एमः आभिमुख्येन प्राप्नुमः ॥ ' इण् गतौ ' । इदन्तो मसिः[3] ॥ यद्वा । ऋषेरिदं वाक्यम् । हे ऋभवः यूयमागतमग्निं दूतं प्रति यदब्रवीतन यत्कार्यं वक्ष्यमाणरूपं कर्तव्यत्वेन वदथ अङ्गीकुरुथ तानि सर्वाणि संपाद्य हे भ्रातरग्ने कृत्व्या कर्मणैमसीति ब्रूथेत्यृषिराह ॥

चकृवांसं ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् ।
यदावाख्यच्चमसाञ्चतुरः कृतानादित्त्वष्टा ग्नास्वन्तर्न्यानजे ॥ ४ ॥

चकृऽवांसः । ऋभवः । तत् । अपृच्छत । क्व । इत् । अभूत् । यः । स्यः । दूतः । नः । आ । अजगन् ॥ यदा । अवऽअख्यत् । चमसान् । चतुरः । कृतान् । आत् । इत् । त्वष्टा । ग्नासु । अन्तः । नि । आनजे ॥ ४ ॥

हे ᵛऋभवः ᵛतत् कार्यं यथा ᵛचकृवांसः कृतवन्तो यूयम् ᵛअपृच्छत प्रश्नं कुरुत ॥ करोतेर्लिटः क्वसुः ॥ अत्र यद्यपि ऋभुरिति त्रयाणां मध्ये एकस्य नाम तथापि तस्य प्राथम्यात् ' छत्रिणो गच्छन्ति ' इतिवत् सर्वेऽपि ऋभवः[4] उच्यन्ते । किमिति । ᵛस्यः सः ᵛदूतः ᵛक्वेदभूत् कुत्र गतः । स इत्युक्ते क इत्याह । ᵛयः यो दूतः ᵛनः अस्मान् ᵛआजगन् आगमत् प्राप्तः । एवंभूते सति ᵛयदा अयं त्वष्टा ᵛचतुरः ᵛकृतान् ᵛचमसान् ᵛअवाख्यत्[5] अभिपश्यति[5] ॥ ख्यातेर्लुङि ' अस्यतिवक्तिख्यातिº ' इति च्लेः अङादेशः ॥ ᵛआदित् अनन्तरमेव ᵛत्वष्टा तस्य चमसस्योत्पादकः एतन्नामको[6] देवः ᵛग्नासु स्त्रीषु[6] । ' मेना ग्ना इति स्त्रीणाम् ' ( निरु. ३. २१ ) इति निरुक्तम् । ᵛअन्तः मध्ये ᵛन्यानजे न्यक्तोऽभूत् । स्त्रियम् आत्मानम् अमन्यत इत्यर्थः ॥ अञ्जेर्लिटि ' तस्मान्नुड्द्विहलः ' इति नुट् । छान्दसोऽनुनासिकलोपः ॥

हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये देवपानमनिन्दिषुः ।
अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान्कन्या३ नामभिः स्परत् ॥ ५ ॥

हनाम । एनान् । इति । त्वष्टा । यत् । अब्रवीत् । चमसम् । ये । देवऽपानम् । अनिन्दिषुः । अन्या । नामानि । कृण्वते । सुते । सचा । अन्यैः । एनान् । कन्या । नामऽभिः । स्परत् ॥ ५ ॥

---

१. क्ष-ङ-झ१-ञ-ट-' कृत्यार्थे...... प्रत्ययः ' नास्ति. २. क्ष-ञ-ट-तानि तैरुक्तानि । ३. क्ष-ञ-ट-मसि । ४. ङ-झ१-ऋभवः इति । ५. क्ष-झ१-ञ-ट-अवख्यानम् अवमतिमकरोत् । ६. क्ष-झ१-ञ-ट-तं चमसस्थं सोमं मासु छन्दोभिमानिनीषु गायत्र्यादिषु स्त्रीषु ।

ᐯएनान् वक्ष्यमाणान् ᐯहनाम ᐯइति ᐯयन् यदा ᐯअब्रवीत् ᐯत्वष्टा । पूजार्थं बहुवचनम् । एतच्छब्दस्य प्रकृतपरामर्शकत्वात् ऋभूणां प्रकृतत्वात् तेषां हननप्रसक्तिं दर्शयति[1] । ᐯये[2] ᐯदेवपानं देवैः पातव्यं ᐯचमसं ये[3] ऋभवः ᐯअनिन्दिषुः निन्दामकुर्वन्[3] । देवयोग्यं त्वाष्ट्रचमसं[4] मनुष्याः ऋभवः स्वीकृत्य चतुर्धा व्यभजन् तान् हनामेति यदा अब्रवीदित्यर्थः[4] । तदाप्रभृति मनुष्याः ᐯसुते अभिषुते सोमे पानाय प्रस्तुते सति ᐯसचा सह परस्परम् ᐯअन्या ᐯनामानि अन्यानि होत्रध्वर्यूद्गात्रादीनि ᐯकृण्वते कुर्वन्ति । पूर्वनाम[5] प्रच्छाद्य उपहवकाले 'अध्वर्य उपह्वयस्व होतरुपह्वयस्व[6]' इत्येवम् अन्यैरेव[7] नामभिः आत्मानं त्वष्टृवधभीत्या प्रख्यापयन्तीत्यर्थः । पूर्वम् अन्यानि[8] कथं प्रसक्तानीत्यत आह । ᐯएनान् नरान् ᐯकन्या स्वोत्पादयित्री[9] माता ᐯअन्यैः एव ᐯनामभिः[10] ᐯस्परत् प्रीणयति ॥ 'स्पृ प्रीतिबलयोः' । लेटयडागमः ॥     ॥ ५ ॥

इन्द्रो॒ हरी॑ युयु॒जे अ॒श्विना॒ रथं॑ बृह॒स्पति॑र्वि॒श्वरू॑पा॒मुपा॑जत ।
ऋ॒भुर्वि॒भ्वा वाजो॑ दे॒वाँ अ॑गच्छत॒ स्वप॑सो य॒ज्ञियं॑ भा॒गमै॑तन ॥ ६ ॥

इन्द्रः॑ । हरी॒ इति॑ । यु॒यु॒जे । अ॒श्विना॑ । रथ॑म् । बृ॒ह॒स्पतिः॑ । वि॒श्वऽरू॑पाम् । उप॑ । आ॒ज॒त ।
ऋ॒भुः । वि॒ऽभ्वा॑ । वाजः॑ । दे॒वान् । अ॒ग॒च्छ॒त॒ । सु॒ऽअप॑सः । य॒ज्ञिय॑म् । भा॒गम् । ऐ॒त॒न॒ ॥६॥

पूर्वं सृष्टानां क्रमेण विनियोगमाह । ᐯइन्द्रो ᐯहरी ᐯयुयुजे । एतन्नामानावश्वौ रथे योजितवान् । तथा ᐯअश्विना अश्विनौ ᐯरथं[11] योजितवन्तौ । तथा ᐯबृहस्पतिः[11] बृहतो मन्त्रस्य पालयिता एतन्नामको देवः ᐯविश्वरूपां नानारूपोपेतां गाम् ᐯउपाजत उपागमत् स्वीकृतवानित्यर्थः । यद्यप्यत्र गौरिति विशेषो न श्रुतः तथापि पूर्वं[12] धेनुः कर्त्वेत्युक्तत्वात् पुरस्ताच्च 'ये धेनुं विश्वजुवं विश्वरूपाम्' (ऋ. सं. ४. ३३. ८) इति वक्ष्यमाणत्वाच्च विश्वरूपा गौरित्येवाध्यवसीयते । अत एव विश्वरूपाम् इत्यस्याश्वपङ्क्तिरिति[13] केचन व्याचक्षते तदसत् । युष्मत्संपादितानि रथादीनि इन्द्रादयः स्वभागत्वेनाकल्पयन् । तस्मात् ᐯऋभुर्विभ्वा ᐯवाजः च यूयं ᐯदेवान् इन्द्रादीन् ᐯअगच्छत[14] । गत्वा च हे ᐯस्वपसः शोभनाश्वरथादिकर्मवन्तो यूयं ᐯयज्ञियं यज्ञार्हं यज्ञसंबन्धिनं ᐯभागं सोमरूपं[15] देवत्वं प्राप्तैः सेवनीयम् ᐯऐतन प्राप्नुत । कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः । इत्येवमृषिराह ॥

---

१. क्ष-ङ-झ१-ञ-ट—वारयति । २. क्ष-ञ-ट—'ये' नास्ति । ३. क्ष-ङ-झ१-ञ-ट—ये नरा अद्यप्रभृति अनिन्दिषुः निन्दां कुर्वन्ति । ४. क्ष-ङ-झ१-ञ-ट—चमसं मनुष्याः ऋभवः स्वीकृतवन्तः । अतोऽस्माभिः शेषो न पातव्य इति निन्दां कुर्युः तान् हनामेति यदा अब्रवीत् इत्यर्थः । ५. क्ष-ङ-झ१-ञ-ट—स्वपूर्वनाम । ६. क्ष-ञ-ट—उद्गात्ररुपह्वयस्व । ७. ङ-झ१—आद्यैरेव । ८. क्ष-ञ-ट—अन्यानि नामानि । ९. क्ष-झ१-ञ-ट—स्वस्वोत्पादयित्री । १०. क्ष-ङ-क्ष१-ञ-ट—नामभिः देवदत्तविष्णुमित्रादिरूपैः । ११. क्ष-ञ-ट—रथम् उपाजत उपागमत् प्राप्तवान् । तथा बृहस्पतिः; झ१—रथ उपाजत रथ उपागमत् प्राप्तवान् तथा च बृहस्पतिः । १२. क्ष-ङ-झ१-ञ-ट—पूर्वत्र । १३. ङ-झ१—इत्यस्याश्वपत्तिरिति । १४. क्ष-ङ-झ१-ञ-ट—गन्तुमर्हथ । एतेर्लोङि ( ङ-झ१—लिङि ) तप्तनप्तनथनाश्च इति तादेशः । १५. क्ष-ङ-झ१-ञ-ट—सोमाज्यादिरूपम् ।

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।
सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥ ७ ॥

निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । या । जरन्ता । युवशा । ता । अकृणोतन ।
सौधन्वनाः । अश्वात् । अश्वम् । अतक्षत । युक्त्वा । रथम् । उप । देवान् । अयातन ॥७॥

हे ᵛसौधन्वनाः यूयं ᵛनिश्चर्मणः मृतायाः गोः सकाशात् उत्कृत्ताच्चर्मणः ᵛगां नूतनां निः ᵛअरिणीत निरगमयत उत्पादितवन्त इत्यर्थः । तेनैव[1] चर्मणा संवीतां तत्सदृशीमन्यां धेनुं कृतवन्त इत्यर्थः । यद्यपि पूर्वमेव अश्वादीनां विनियोगः उक्तः तथापि तेषामत्यन्तदुःखसंपादत्वज्ञापनाय पुनराह । न केवलं गोकरणमेव अपि[2] च[2] ᵛया ᵛजरन्ता यौ जीर्णौ पितरौ ᵛता तौ ᵛयुवशा युवानौ ᵛअकृणोतन अकुरुत । किंच ᵛअश्वादश्वम् एकेन विद्यमानेनाश्वेन अश्वान्तरम् ᵛअतक्षत प्रयत्नेन संपादितवन्तः । यस्मादेवं कृतवन्तस्तस्मात् ᵛरथं युष्मदीयं ᵛयुक्त्वा अश्वैर्योजयित्वा ᵛदेवान् इन्द्रादीन् ᵛउप ᵛअयातन देवसमीपं प्राप्नुत ॥

इदमुदकं पिबतेत्यब्रवीतनेदं वा घा पिबता मुञ्जनेजनम् ।
सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥ ८ ॥

इदम् । उदकम् । पिबत । इति । अब्रवीतन । इदम् । वा । घ । पिबत । मुञ्जऽनेजनम् ।
सौधन्वनाः । यदि । तत् । नऽइव । हर्यथ । तृतीये । घ । सवने । मादयाध्वै ॥ ८ ॥

इदानीमृषिः देवैरुक्तमर्थं तान् संबोध्य यूयम् ऋभून् एवमुक्तवन्तः स्थ इति अनुवाचयति[3] । हे ᵛसौधन्वनाः सुधन्वनः पुत्राः यूयम् ᵛइदमुदकं सोमलक्षणं ᵛपिबतेत्यब्रवीतन इत्युक्तवन्तः ॥ ब्रवीतेर्लङि मध्यमबहुवचनस्य तस्य तनबादेशे पित्त्वात् ‘ ब्रुव ईट् ’ ( पा. सू. ७. ३. ९३ ) ॥ एतत् प्रातःसवनिकाभिप्रायम् । ᵛवा अथवा । ᵛघ इत्यनर्थकः प्रसिद्ध्यर्थो वा । ᵛइदं ᵛमुञ्जनेजनम् । मुञ्जवान्नाम पर्वतः सोमोत्पत्तिस्थानम् । तत आहृतत्वात् तेन मुञ्जतृणेन शोधितं अपगततृणमित्यर्थः । इदं सोमरसरूपमुदकं ᵛपिबत इत्यब्रवीतन । एतत् माध्यंदिनसवनाभिप्रायम् । हे ऋभवः यूयं ᵛतत् उभयसवनसंबन्धि[4] सोमपानकार्यं[4] ᵛनेव ᵛहर्यथ नैव कामयथ । हर्यतिः कान्तिकर्मा, ‘ हर्यति उशिक् ’ ( नि. २. ६. १० ) इति तत्कर्मसु पाठात् । ᵛतृतीये ᵛसवने तु ᵛमादयाध्वै अत्यर्थं तृप्ताः भवथ । ‘ ऋभवो देवाः सोमस्य मत्सन् ’ इति तृतीयसवने तेषां सोमपानसद्भावात् । एवं यूयमृभूनुक्तवन्तः । अथवा ऋभून्प्रति तस्यैव[5] इदं वाक्यम् । हे सौधन्वनाः यूयं देवत्वं प्राप्य देवयजनं प्रति सोमपानाय रथेनागत्य श्रान्तानश्वान् प्रातःसवने इदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन । तत्र यदि नेच्छथ[6] इदं वा मुञ्जनेजनं मुञ्जेन दूषितं[7] वाजिनं पिबतेत्यब्रवीतन पश्चात् तत् द्वयं यदि नेव हर्यथ हे अश्वा यूयं तृतीये सवने मादयाध्वै । तत्रापि वाजिनप्रचारात्[8] ॥

---

१. क्ष-ञ-ट–तेन; झ१–स्फीतेन । २. क्ष-ञ-ट–अपि तु; ङ-झ१-किंतु । ३. क्ष-ङ-झ१-ञ-ट–अनुवदति । ४. क्ष-ञ-ट–उभयसवनसंबन्धिनं सोमम् । ५. ङ-झ१–मन्त्रस्यैव । ६. क्ष-ञ-ट–नेच्छा । ७. ङ–शोधितम् । ८. क्ष-ङ-झ१-ञ-ट–‘ वाजिनप्रचारात् ’ इत्यस्यानन्तरं ‘ वाजिभ्यो वाजिनमित्यादिना अन्यत्र एषां वाजिनसंबन्धात् ’ इत्यधिकम् ।

**आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् ।**
**वधर्यन्तीं बहुभ्यः प्रैको अब्रवीदृता वदन्तश्चमसाँ अपिंशत ॥ ९ ॥**

आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः । भूयिष्ठः । इति । अन्यः । अब्रवीत् ।
वधःऽयन्तीम् । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता । वदन्तः । चमसान् । अपिंशत ॥९॥

चमसचतुर्धाकरणकाले किमिति सत्यं वदन्तो व्यभजन्निति तदाह । ^vएकः त्रयाणामन्यतमः[1] ^vआपो ^vभूयिष्ठाः ^vइति ^vअब्रवीत्[1] नहि उदकात् प्रशस्तं लोकोपकारकं तत्त्वान्तरमस्ति । आपो[2] भूयिष्ठाः[2] इति ऋतम्[3] अवादीत् । अपामेव श्रेष्ठत्वम् ' अप एव ससर्जादौ ' ( मनु. १. ८ ) इत्यादि-शास्त्रात् । तथा ^vअन्यः ^vअग्निर्भूयिष्ठ ^vइति ^vअब्रवीत् । आन्तरं[4] बाह्यं च[4] दाहपाकभुक्तजरणा-दिव्यापारेण अग्नेरेव जगन्निर्वाहकत्वादग्नेरेव भूयिष्ठत्वम् इत्येव[5] मन्यते । तथा ^vवधर्यन्तीम् । वध-रिति रेफान्तः अपि[6] वज्रनाम, ' वधः अर्कः ' ( नि. २. २०. ७ ) इति तन्नामसु पाठात् । तदिच्छति वृष्ट्युदकायेति वधर्यन्ती मेघपङ्क्तिरुच्यते । यद्यपीयं स्ववधार्थं वज्रं स्वयमेव नापेक्षते तथापि वृष्ट्यर्थम् इन्द्रवज्रेण[7] हन्यमानत्वात् तदिच्छतीत्युपचर्यते । यद्वा । बहुभ्यः तेषामर्थाय वधर्यन्तीं वधमात्मन इच्छन्तीं भूमिम् ॥ छान्दसो रेफोपजनः ॥ तामेव[8] ^vएकः ^vबहुभ्यः संवादिभ्यः[8] श्रेष्ठतमाम् ^vअब्रवीत् । उदकस्यापि मेघकारणत्वात् । एवम् ^vऋता ऋतानि उक्तरूपाणि यथार्थानि वाक्यानि ^vवदन्तः परस्परं ब्रुवन्तः ^vचमसान् ^vअपिंशत अवयविनोऽकुरुत[9] चतुर्धा व्यभजत इत्यर्थः[9] ॥ ' पिश अवयवे ' । ' शे मुचादीनाम् ' इति नुम् ॥ इदमेव ऋतवदनम् अपेक्ष्य ऋभुशब्दं व्याचक्षाणो यास्कः– ' ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा ' ( निरु. ११. १५ ) इत्युक्तत्वात् ॥

**श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतम् ।**
**आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥ १० ॥**

श्रोणाम् । एकः । उदकम् । गाम् । अव । अजति । मांसम् ।
एकः । पिंशति । सूनया । आऽभृतम् ॥ आ । निऽम्रुचः । शकृत् ।
एकः । अप । अभरत् । किम् । स्वित् । पुत्रेभ्यः । पितरौ । उप । आवतुः ॥ १० ॥

अत्र ऋभव एव ऋत्विग्रूपेण स्थित्वा सर्वत्र यज्ञं निर्वहन्तीत्याह । ^vश्रोणां शोणम्[10] ॥ ' वा छन्दसि ' इति पररूपाभावः[10] ॥ शोणवर्णम् ^vउदकं रुधिरम् ^vएकः ऋभुषु मध्ये ऋत्विक् ^vगाम्

---

१. क्ष-झ१-ञ-ट–त्रयाणां मध्ये एकः आपोभूयिष्ठा इत्येकोऽब्रवीत् । २. झ१-अत एव आपो भूयिष्ठाः । ३. क्ष-झ१-ञ-ट–एवम्; च-ज्ञ-त–ऋचम् । ४. क्ष-ञ-ट–आन्तरं बाह्यं च अग्निरेव । ५. क्ष-ञ-ट–इत्येवम् । ६. ङ-झ१–'अपि' नास्ति । ७. ङ-ज्ञ-वज्रेण । ८. ङ–तामेव एकं ( ? ) बहुभ्यः अबादिभ्यः; क्ष-ञ-ट–तामेव एकः बहुभ्यः अबादिभ्यः । ९. क्ष-ञ-ट–अवयविनोऽकरोत् । चतुर्धा व्यभजन् । १०. क्ष-ञ-ट–' शोणम् । वा छन्दसि इति पररूपाभावः ' नास्ति ।

अवाजति बाह्यभूमिं प्रतिगमयति रक्षोभागत्वेन स्थापयति। तथा एकः मांसं सूनया छेदनसाधनेन स्वधितिना आभृतं संपादितं पिंशति हृदयजिह्वावक्षआद्याकारेण आहृतं संपादितं मांसं पिंशति अवयवीकरोति स्वधितिना तत्तदवयवान् विभजतीत्यर्थः। अथ एकः निम्रुचः निःशेषेण छिन्नात् मांसात् शकृत् कुक्षिस्थं जरत्तृणम् ऊवध्यनामकम् अपाभरत् अपाहरन्निरसनाय। एवमृत्विग्रूपेण स्थितेभ्यः पुत्रेभ्यः पुरुत्रातृभ्यः पुत्रस्थानीयेभ्य ऋभुभ्यः सर्वेष्वनुष्ठितेषु पितरा यज्ञस्य पालयितारौ जायापती किं स्वित् उपावतुः किं नु खलु प्राप्नुतः॥ अवतेः प्राप्त्यर्थाच्छान्दसो लिट्॥ सर्वं तैरेवानुष्ठितमिति तयोर्न किंचित्कृत्यमस्तीत्यर्थः। अथवायमर्थः। एकस्तेषामन्यतमः श्रोणां पङ्गुकां गामुदकं प्रत्यवगमयति। अपरः सूनया मांसविक्रयिण्या आभृतं संपादितं मांसं पिंशति[1]। अपर आ निम्रुचः अस्तमयादर्वागेव शकृत् गोपुरीषं हरति। एवम् ऋभुभिरनुष्ठिते सति किं स्विदेतस्मात् परिचरणात् अन्यत् पुत्रेभ्यः सकाशात् उपावतुः उपगच्छेतामिति॥ ॥ ५॥

**उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः।**
**अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ॥ ११॥**

उद्वत्ऽसु। अस्मै। अकृणोतन। तृणम्। निवत्ऽसु। अपः। सुऽअपस्यया। नरः।
अगोह्यस्य। यत्। असस्तन। गृहे। तत्। अद्य। इदम्। ऋभवः। न। अनु। गच्छथ॥ ११॥

पुराणप्रसिद्धान्[2] सुधन्वनः पुत्रान् कर्मणा देवत्वं प्राप्तवतः ऋभून् स्तुत्वा वेदप्रसिद्ध्या सूर्यरश्मिरूपान् ऋभून् इदानीं स्तौति। तथा च यास्को निरुक्ते पुराणप्रक्रियासिद्धानृभून् बहुधा निरुच्य तदुदाहरणत्वेन[3] 'विष्ट्वी शमी' इत्येतामुदाहृत्य 'आदित्यरश्मयोऽप्यृभव उच्यन्ते' (निरु. ११. १६) इत्युक्त्वा तस्मिन्नर्थे एतामृचमुदाजहार। हे ऋभवः उरु प्रभूतं भासमानाः ऋतेन आदित्येन भासमाना वा ऋतेनोदकेन उदकार्थमुत्पन्ना वा। रश्मीनामुरुभासमानत्वं प्रसिद्धम्। तथा आदित्यादुत्पत्तिरपि। उदकार्थं भवनमपि रश्मीनां घर्मकाले भूमिगतं सारमादाय पुनः वर्षकाले[4] प्रवर्षन्तीति प्रसिद्धम्। 'आदित्याज्जायते वृष्टिः' (मनु. ३. ७६) इति शास्त्रात्। तथाविधाः नरः प्रकाशवृष्ट्युदकादेर्नेतारः यूयम् उद्वत्सु उन्नतेषु प्रदेशेषु मेर्वादिषु तृणं व्रीहियवादिरूपम् अस्मै प्राणिजाताय तदुपकारार्थम् अकृणोतन कृतवन्तः स्थ॥ 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः॥ तथा निवत्सु प्रवणदेशेषु अस्मै एव अपः उदकानि अकृणोतन अकुरुत। किं स्वभोगार्थं नेत्याह। स्वपस्यया शोभनकर्मेच्छया। शोभनं कर्म एभिः कृतमिति यथा[5] यजमानाः स्तुवन्ति तदिच्छयेत्यर्थः। किंच यूयम् अगोह्यस्य अग्राह्यस्यादित्यस्य गृहे मण्डले यत् यावत्कालम् असस्तन सुसवन्तः स्थ रात्रौ निर्व्यापारास्तिष्ठथ॥ 'षस स्वप्ने'। अस्माल्लुङि पूर्ववत्तस्य तनबादेशः। अदादित्वात् शपो लुक्॥ तत् तावन्तं कालम् अद्य अहनि इदम् इदानीं नानु गच्छथ अनुसृत्य न गच्छथ। यावन्तं कालं रात्रौ सूर्ये निगूढा वर्तध्वे तावन्तमेव कालम् अहन्यपि नानुगच्छथेत्यर्थः। यद्वा। अगोपनीयस्य तस्य गृहे अन्तरिक्षे यत् यावन्तं कालम् असस्तन वृष्टिम् अदत्त्वा स्वापमकुरुत तत्तावन्तं कालम् अद्येदानीं वर्षसमये इदं सस्याभिवर्धनवृष्टिप्रवाहरूपं कर्म नानु गच्छथ अनुसृत्य न प्राप्नुथ। यावन्तं कालं विवर्षथ तावन्तमेव कालं प्रवर्षथेत्यर्थः॥

---

१. ख-च-ज-फ-पिंशति पित्रोः; क-पिंशति पित्रोरर्थे। २. क्ष-ज-ट-पुराणप्रसिद्ध्या। ३. ख-फ-तत्रोदाहरणत्वेन; ङ-झ१-एतदुदाहरणत्वेन; त-उदाहरणत्वेन। ४. ङ-झ-झ१-वर्षाकाले। ५. च-त-'यथा' नास्ति।

संमील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः ।
अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥ १२ ॥

सम्ऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व । स्वित् । तात्या । पितरा । वः । आसतुः ।
अशपत । यः । करस्नम् । वः । आऽददे । यः । प्र । अब्रवीत् । प्रो इति । तस्मै । अब्रवीतन ॥१२॥

हे ऋभवः रश्मयः यूयं ᵛयत् यदा ᵛभुवना भूतजातानि ᵛसंमील्य संमीलनं कृत्वा जलधरपटलैराच्छाद्य ᵛपर्यसर्पत परितः सर्पणं कुरुथ वर्षथेत्यर्थः । ᵛतात्या तातौ तायमाने वृष्ट्युदके । यद्वा । तात्या तासु वर्षासु ॥ छान्दसस्त्यप्रत्ययो दकारस्यात्वं च ॥ अथवा पितृविशेषणम् । तात्या तत्कालीनौ ᵛपितरा जगतः पालकौ सूर्याचन्द्रमसौ ᵛक्व ᵛस्वित् ᵛआसतुः कुत्र खलु तिष्ठतः ॥ अस्तेर्लिटि व्यत्ययेन भूभावाभावः । यद्वा । असतेर्गत्यर्थस्य लिटि एतद्रूपम् ॥ अहोरात्रविभागेन प्रवर्षयथेत्यर्थः । किंच ईदृशान् ᵛवः युष्मान् ᵛयः कोऽपि वृष्टिप्रतिबन्धकारी राक्षसादिः ᵛकरस्नम् । बाहुनामैतत्, 'करस्नौ बाहू' (नि. २. ४. ७) इत्युक्तत्वात् । अत्र तु अकारान्तम् । युष्मदीयं हस्तम् ᵛआददे गृह्णाति प्रतिरोधं करोति तम् ᵛअशपत नाशयथ । ᵛयः च ᵛप्राब्रवीत् प्रकर्षेण वाचा[1] निरुन्द्धे ᵛतस्मै ᵛप्रो प्रैव ᵛअब्रवीतन प्रकर्षेण भर्त्सनादिशब्दं कुरुथ । यद्वा । यो नूनं स्तौति तं प्रकर्षेण स्तुतेत्यर्थः ॥

सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ।
श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥ १३ ॥

सुसुप्वांसः । ऋभवः । तत् । अपृच्छत । अगोह्य । कः । इदम् । नः । अबूबुधत् ।
श्वानम् । बस्तः । बोधयितारम् । अब्रवीत् । संवत्सरे । इदम् । अद्य । वि । अख्यत ॥१३॥

हे ᵛऋभवः रश्म्यात्मकाः यूयं ᵛसुषुप्वांसः आदित्यमण्डले स्वपन्तो वर्षणाय ॥ स्वपेर्लिटः क्वसुः ॥ तमादित्यं[2] ᵛतत् वाक्यम् ᵛअपृच्छत प्रश्नं कुरुथ । किं तदिति चेत् उच्यते । हे ᵛअगोह्य केनचिदगोपनीयादित्य स्वामिन् ᵛनः अस्मदीयम् ᵛइदं कर्म वर्षणरूपं ᵛकः ᵛअबूबुधत् बोधयति प्रेरयति साहाय्यं करोति ॥ बुधेर्ण्यन्तात् लुङि चङि रूपम् ॥ ᵛबस्तः सर्वस्य वासयिता आदित्यः ॥ वसेरौणादिकस्तप्रत्ययः । बवयोरभेदात् बत्वम् ॥ ᵛबोधयितारं प्रेरयितारं ᵛश्वानम् ᵛअब्रवीत् अन्तरिक्षे श्वसन्तं वायुं प्रावादीत् । असौ युष्मान् प्रेरयतीति । अथ[3] वायुसहायेन वर्षन्तो यूयं ᵛसंवत्सरे पूर्णे ᵛअद्य इदानीम् ᵛइदं जगत् ᵛव्यख्यत विविधं प्रकाशितवन्तः । पूर्वं सूर्याचन्द्रमसौ यथा न दृश्येते तथा वर्षित्वा इदानीं वर्षकालेऽतीते विश्वं जगत् व्यक्तं कुरुथेत्यर्थः ॥ ख्यातेर्लुङि 'अस्यतिवक्तिख्याति°' इति अङ् ॥

---

१. क्ष-ञ-ट—त्वाम् । २. क्ष-ङ-ञ-ट—तत् तमादित्यम् । ३. ङ—अथ वा ।

दिवा यान्ति मरुतो भूम्याग्निरयं वातो अन्तरिक्षेण याति ।
अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥ १४ ॥

दिवा । यान्ति । मरुतः । भूम्या । अग्निः । अयम् । वातः । अन्तरिक्षेण । याति ।
अत्ऽभिः । याति । वरुणः । समुद्रैः । युष्मान् । इच्छन्तः । शवसः । नपातः ॥ १४ ॥

हे शवसः वृष्टिकार्यस्य बलस्य नपातः नपातयितारः ऋभवः युष्मान् इच्छन्तः वृष्ट्यनुकूलचिकीर्षया युष्मानेवेच्छन्तः सर्वे देवा आयान्ति । कस्मादिति तदुच्यते । मरुतः वृष्ट्यनुकूलाः देवाः दिवा द्युलोकात्[1] यान्ति आगच्छन्ति ॥ 'सावेकाचः°' इति तृतीयाविभक्तेरुदात्तत्वम् ॥ भूम्या भूमेः सकाशात् अग्निः याति आगच्छति । अयं वातः[2] सर्वदा संचारी वायुः अन्तरिक्षेण याति अन्तरिक्षादायाति । तथा वरुणः आवरको जलाभिमानी देवः समुद्रैः समुन्दनस्वभावैः अद्भिः ताभ्य आयाति । यद्वा पूर्वं वृष्टिसाहाय्याय[3] आगता एते देवाः कृतकार्याः सन्तः पुनर्युष्मान् कामयमानाः स्वस्वदेशं प्रति यान्तीत्यर्थः ॥ ॥ ६ ॥

'मा नो मित्रः' इति द्वाविंशत्यृचं पष्ठं सूक्तं दैर्घतमसम् । तृतीयाषष्ठ्यौ जगत्यौ । शिष्टास्त्रिष्टुभः । अश्वस्य स्तूयमानत्वात् 'या तेनोच्यते सा देवता' इति न्यायेन अश्वो देवता । अत्रानुक्रमणिका—'मानो व्यधिकाश्वस्तुतिस्तु तृतीयाषष्ठ्यौ जगत्यौ' इति । अश्वमेधस्य मध्यमेऽहनि अध्रिगुप्रैषे 'अध्रिगो शमीध्वम्' इति शिष्ट्वा 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्मात्पुरस्तात् वा एतत्सूक्तमावपेत् । 'त्रीणि सुत्यानि भवन्ति' इति खण्डे सूत्रितम्—'अध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वङ्क्रय इति वा मा नो मित्र इत्यावपेत' ( आश्व. श्रौ. १०. ८ ) इति ॥

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥ १ ॥

मा । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः । मरुतः । परि । ख्यन् ।
यत् । वाजिनः । देवऽजातस्य । सप्तेः । प्रऽवक्ष्यामः । विदथे । वीर्याणि ॥ १ ॥

नः अस्मान् अश्वं स्तोतुं प्रवृत्तान् मित्रादयो देवाः मा परि ख्यन् परिख्यानं मा कुर्वन्तु । परिख्यानं नाम निन्दा । महानुभावं देवजातम् अश्वं तुच्छा नराः स्तुवन्तीति[4] मा कुर्वन्तु ॥ ख्यातेर्माङि लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेः अङ् ॥ अहरभिमानी देवः मित्रः रात्र्यभिमानी वरुणः । अर्यमा तयोः अन्तरालाभिमानी[5] आदित्यः । आयुः सततगन्ता वायुः ॥ वकारलोपो वा ॥

---

१. ख-च-ज-त-फ-व—द्युलोकात् अन्तरिक्षात् । २. क्ष-झ१-ञ-ट—वातः प्रत्यक्षतया । ३. क्ष-ञ-ट—वृष्टिसाहाय्यत्वेन । ४. क्ष-ञ-ट—स्तुवन्तीति ताम्; ङ-झ१-स्तुवन्तीति निन्दाम् । ५. क्ष-ङ-झ१-ञ-ट—अन्तरालकालाभिमानी ।

ᵛइन्द्रः प्रसिद्धः। ᵛऋभुक्षाः देवानां निवासभूतः प्रजापतिः। यद्वा। एतन्महन्नाम[1] इन्द्रविशेषणं 'ऋभुक्षाः उक्षा' (नि. ३. ३. १०) इति तन्नामसु पाठात्। निन्दायाः प्रसक्तिं दर्शयति। ᵛयत् यस्मात् ᵛवाजिनः वेजनवतो बहन्नवतो वा ᵛदेवजातस्य बहुदेवतास्वरूपेणोत्पन्नस्य। उषआदीनाम् अस्य शिरआद्यवयवत्वादिति भावः। 'उषा वा अश्वस्य मेध्यस्य शिरः' (बृ. उ. १. १. १) इत्यादिश्रुतेः। यद्वा। देवेभ्यो जातस्य, गन्धर्वकुले उत्पन्नत्वात्। ᵛसप्तेः सर्पणशीलस्य। अश्वनामैतत्। एवंविधस्याश्वस्य महानुभावस्य ᵛवीर्याणि वीरकर्माणि सामर्थ्यानि ᵛविदथे वेदनसाधने यज्ञे ᵛप्रवक्ष्यामः प्रकर्षेण ब्रूमः। अतो मा परि ख्यन् प्रत्युत अनुगृह्णन्त्वित्यर्थः॥

**यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति।**
**सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः॥ २॥**

यत्। निःऽनिजा। रेक्णसा। प्रावृतस्य। रातिम्। गृभीताम्। मुखतः। नयन्ति।
सुऽप्राङ्। अजः। मेम्यत्। विश्वऽरूपः। इन्द्रापूष्णोः। प्रियम्। अपि। एति। पाथः॥२॥

ᵛयत् यस्मात् ᵛनिर्णिजा। निर्णिगिति रूपनाम। ᵛरेक्णसा। रेक्ण इति धननाम। 'निर्णिक् वव्रिः' (नि. ३. ७. १) इति, 'रेक्णः रिक्थम्' (नि. २. १०. २) इति च तन्नामसूक्तत्वात्॥ उभयत्र मत्वर्थो लुप्यते॥ रूपवता हिरण्यवताभरणेन ᵛप्रावृतस्य सर्वतो वेष्टितस्य अश्वस्य ᵛमुखतः पुरस्तात् ᵛगृभीतां गृहीतां ᵛरातिं दातव्यां दातव्यत्वेन गृहीताम् अजां[2] ᵛनयन्ति ऋत्विजः। स तादृशः ᵛअजः[3] ᵛसुप्राङ् सुष्ठु प्रशस्यागमनः[4] ᵛमेम्यत् हन्यमानः॥ 'मीञ् हिंसायाम्'। अस्मात् यङ्लुगन्तात् कर्मणि व्यत्ययेन शतृ॥ यद्वा। तस्य शब्दानुकरणं मेमेशब्दं कुर्वन्। ᵛविश्वरूपः बहुवर्णोपेतः कृष्णग्रीवः कृष्णललामो वा नैकवर्णः[5] इत्यर्थः। एवंरूपः अयम्[6] ᵛइन्द्रापूष्णोः। इन्द्रः प्रसिद्धः। पूषा पोषको देवोऽग्निः। तयोः ᵛप्रियम्। 'आग्नेयः कृष्णग्रीवः' (तै. सं. ५. ५. २२) इत्युक्तत्वादग्नेः प्रियत्वम्। सर्वेऽपीन्द्रस्येतीन्द्रप्रियत्वम्। एवंरूपं ᵛपाथः अन्नम् ᵛअप्येति प्राप्नोतु॥

**एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः।**
**अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति॥ ३॥**

एषः। छागः। पुरः। अश्वेन। वाजिना। पूष्णः। भागः। नीयते। विश्वऽदेव्यः।
अभिऽप्रियम्। यत्। पुरोळाशम्। अर्वता। त्वष्टा। इत्। एनम्। सौश्रवसाय। जिन्वति॥३॥

ᵛएषः ᵛछागः शृङ्गरहितोऽजः ᵛअश्वेन ᵛवाजिना शीघ्रव्यापकेनाश्वेन सह ᵛपूष्णः पोषकस्याग्नेः ᵛभागः भजनीयः ᵛविश्वदेव्यः सर्वदेवार्हः। अग्नेः सर्वदेवात्मकत्वात् तदर्हत्वेन सर्वदेवप्रियत्वम्। एवंविधः अजः ᵛपुरः पुरस्तात् ᵛनीयते प्राप्यते। ᵛयत् यस्मात् एवं क्रियते तस्मात् ᵛप्रियं प्रीणयितारं

---

१. क्ष-ञ-ट-एतन्नाम। २. झ१-अजम्। ३. क्ष-ञ-ट-अजः ऋतुशः ऋतावृतौ। ४. ङ-झ१-प्रशस्यगमनः। ५. झ-झ१-अनेकवर्णः। ६. ख-च-फ-अश्वः।

पुरोडाशं पुरस्ताद्दातव्यम् ᵛएनम् अजं ᵛत्वष्टा सर्वस्योत्पादको देवः । ‘ त्वष्टा रूपाणि विकरोति ’ ( तै. सं. १. ५. ९. २ ) इति श्रुतेः । तूर्णव्यापकोऽग्निर्वा । ‘ उभे त्वष्टुर्बिभ्यतुः ’ ( ऋ. सं. १. ९५. ५ ) इत्युक्तत्वात् ‘ अहोरात्रे इति वारणी इति वा ’ ( निरु. ८. १५ ) इति यास्केन अरणी बिभ्यतुरित्युक्तत्वात् अरणिसंबन्धः अग्नेरेवेति गम्यते । ᵛअर्वता अरणवता अश्वेन सह ᵛसौश्रवसाय देवानां शोभनान्ननिमित्तम् ᵛअभि ᵛजिन्वति प्रीतिहेतुकं[1] करोति[1] ॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ ४ ॥

यत् । हविष्यम् । ऋतुऽशः । देवऽयानम् । त्रिः । मानुषाः । परि । अश्वम् । नयन्ति ।
अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञम् । देवेभ्यः । प्रतिऽवेदयन् । अजः ॥ ४ ॥

ᵛहविष्यं हविर्योग्यं ᵛदेवयानं देवानां प्रापणीयम् ᵛअश्वं ᵛयत् यदा ᵛमानुषाः ऋत्विजः ᵛऋतुशः ऋतौ ऋतौ काले काले[2] ᵛत्रिः ᵛपरि ᵛनयन्ति[2] पर्यग्निकुर्वन्तीत्यर्थः । ᵛअत्र अस्मिन् समये ॥ ‘ ऋचि तुनुघ० ’ इति दीर्घः ॥ ᵛपूष्णः पोषकस्याग्नेः ᵛभागः ᵛअजः ᵛप्रथमः ᵛएति पुरोगामी सन् गच्छति । किं कुर्वन् । ᵛयज्ञं ᵛदेवेभ्यः ᵛप्रतिवेदयन् प्रख्यापयन् ॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥ ५ ॥

होता । अध्वर्युः । आऽवयाः । अग्निम्ऽइन्धः । ग्रावऽग्राभः । उत । शंस्ता । सुऽविप्रः ।
तेन । यज्ञेन । सुऽअरंकृतेन । सुऽइष्टेन । वक्षणाः । आ । पृणध्वम् ॥ ५ ॥

ᵛहोता देवानामाह्वाता एतन्नामकः ऋत्विक् ᵛअध्वर्युः अध्वरयुः अध्वरस्य नेता सोऽपि ᵛआवयाः आभिमुख्येन हविषां गमयिता । अध्वर्योर्विशेषणमेतत् ॥ आङ्पूर्वात् वेतेः असुन् पूर्वपदप्रकृतिस्वरत्वं च ॥ यद्वा । आभिमुख्येन अवयष्टा प्रतिप्रस्थाता उच्यते ॥ ‘ अवे यजः ’ ( पा. सू. ३. २. ७२ ) इति ण्विन् । ‘ अवाप्योरुपसर्गयोः ’ इति अल्लोपः ॥ ᵛअग्निमिन्धः अग्नीत् ॥ ‘ भ्राष्ट्राग्न्योरिन्धे ’ ( पा. सू. ६. ३. ७०. ६ ) इति मुम् ॥ ᵛग्रावग्राभः । ग्राव्णः स्तुत्या गृह्णातीति ग्रावस्तुत् ॥ कर्मण्यण् ॥ ᵛउत अपि च ᵛशंस्ता प्रशास्ता[3] । ᵛसुविप्रः इति मेधाविनाम । शोभनमेधोपेतो ब्रह्मोच्यते । ‘ब्रह्मा त्वो वदति जातविद्याम्’ (ऋ. सं. १०. ७१. ११) इत्यत्र ‘ ब्रह्मैको जातेजाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ’ ( निरु. १. ८ ) इत्युक्तत्वात् ब्रह्मा एव

---

१. क्ष-ञ-ट—प्रीणाति हेतुं करोति । २. क्ष-ङ-झ१-ञ-ट—काले काले तत्तदुत्पादनकाले अश्वम् । त्रिः परिणयन्ति । यद्वा । त्रिः मानुषाः पत्नी यजमानः ऋत्विजश्च यागाश्वं ( क्ष-ञ-ट—यद्वाश्वम्; झ१—यजाश्वम् ) नयन्ति । ३. क्ष-ञ-ट—प्रशंस्ता ।

सुविप्रशब्देनाभिधेयः । स चानुक्तर्त्विगुपलक्षकः । एते सर्वे तेन प्रसिद्धेन स्वरंकृतेन सुष्ठुरणीयं कृतेन स्वलंकृतेन वा उच्चारसौष्ठवादिना सुष्ठु संपादितेन स्विष्टेन सुष्ठु इष्टेन यज्ञेन वक्षणाः अभितो घृतकुल्यादीन्[1] प्रवहणस्वभावाः[1] प्रसिद्धा नदीर्वा आ पृणध्वं सर्वतः पूरयत यज्ञं सम्यङ्निर्वर्त्य फलं साधयतेत्यर्थः ॥ ॥ ७ ॥

**यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।**
**ये चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ६ ॥**

यूपऽव्रस्काः । उत । ये । यूपऽवाहाः । चषालम् । ये । अश्वऽयूपाय । तक्षति ।
ये । च । अर्वते । पचनम् । सम्ऽभरन्ति । उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥६॥

यूपव्रस्काः यूपार्हवृक्षस्य व्रश्चनकर्तारश्छेत्तारः । उत ये च यूपवाहाः छिन्नस्य वोढारः । ये च चषालम् । यूपस्योपरिस्थाप्यं यूपाग्रभागं चपालमाहुः । तत् ये अश्वयूपाय अश्वबन्धनयूपाय तक्षति ॥ तक्षतीति वचनव्यत्ययः ॥ साधु संपादयन्ति । ये च अर्वते अरणवते अश्वाय पचनं पाकसाधनं काष्ठभाण्डादिकं संभरन्ति । उतो अपि च नः अस्मत्संबन्धिनां तेषाम् ऋत्विजाम् अभिगूर्तिः संकल्पः सर्वथा करणीयमिति[2] बुद्धिः इन्वतु व्याप्नोतु ॥ इन्वतिर्व्याप्तिवचनः ' इन्वति ननक्ष ' इति तद्वचनेषु पाठात् ॥ यद्वा । तेषामभिगूर्तिः नः अस्मानिन्वतु । यागं साधुपारं प्रापय्य फलेन[3] योजयत्विव्यर्थः ।

**उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।**
**अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ७ ॥**

उप । प्र । अगात् । सुऽमत् । मे । अधायि । मन्म । देवानाम् । आशाः । उप । वीतऽपृष्ठः ।
अनु । एनम् । विप्राः । ऋषयः । मदन्ति । देवानाम् । पुष्टे । चकृम । सुऽबन्धुम् ॥ ७ ॥

मन्म मननीयं फलं सुमत् उप प्रागात् उपप्रैतु । ' सुमत्स्वयमित्यर्थः ' ( निरु. ६.२२ ) इति यास्कः । यद्वा । स्वयमेव मादयितृतमे मयि अधायि धीयते[4] । फलभूतः अश्वः आगतः स च मया[5] धृतः[5] इत्यर्थः । किमर्थम् । वीतपृष्ठः साधुपोषणेन प्राप्तपश्चाद्भागः[6] कान्तपृष्ठो वा । अत्यन्तं हृष्टः इत्यर्थः । तादृशोऽयं देवानामाशाः पूरयितुम् उप गच्छतु । यागार्थमागतम् एनं सुबन्धुं शोभनबन्धनमश्वं देवानाम् आशास्यमानानां पुष्टे पोषणाय चकृम कुर्मः । तं च विप्राः मेधाविन ऋत्विजः ऋषयः अतीन्द्रियद्रष्टारोऽन्ये वा विप्रा ऋषयश्च अनु मदन्ति अनुमोदन्ताम् । सम्यक् कृतमिति परितुष्यन्तु[7] ॥

---

१. क्ष-ञ-ट–अमृतकुल्यादीन् द्रवणस्वभावाः । २. क्ष-ञ-ट–करणीय इति । ३. क्ष-ख-च-ज-झ-छ-ञ-ट-त-फ-व–बलेन । ४. क्ष-ञ-ट–धार्यते । ५. क्ष-झ१-ञ-ट–मयि श्रितः । ६. झ–प्राप्तपार्श्वाद्भागः । ७. क्ष-झ१-ञ-ट–परितोषयन्तु ।

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु ॥ ८ ॥

यत् । वाजिनः । दाम । सम्ऽदानम् । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ।
यत् । वा । घ । अस्य । प्रऽभृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥८॥

ᵛवाजिनः गमनवतोऽश्वस्य ᵛयत् ᵛदाम ग्रीवाबद्धा रज्जुः । यच्च ᵛसंदानं सम्यगवच्छेदकं बन्धकं पादबन्धनं दाम अस्ति । ᵛया च ᵛअस्य ᵛशीर्षण्या शिरसि बद्धा खलीनरज्जुः[1] अस्ति ॥ शिरःशब्दात् 'भवे छन्दसि' इति यत् । 'ये च तद्धिते' (पा. सू. ६. १. ६१) इति शीर्षन्भावः । तित्स्वरितः ॥ ᵛयद्वा ᵛघ[2] ᵛअस्य अश्वस्य ᵛआस्ये मुखे ᵛप्रभृतं प्रहृतं प्रक्षिप्तं ᵛतृणम् अस्ति । घशब्दो हार्थे स च प्रसिद्ध्यर्थः ॥ ᵛसर्वा सर्वाणि ᵛता तानि[3] सर्वाणि ᵛअपि हे अश्व ᵛते तव संबन्धीनि ᵛदेवेष्वस्तु सन्तु देवेषु मध्ये भवन्तु । देवत्वं प्राप्नुवन्तु वा ॥ वचनव्यत्ययः ॥ अत्रोपयुक्तानां सर्वेषां देवत्वं किल[4] अश्वस्य तत्प्राप्तिः न[5] आशासनीया ॥

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ ९ ॥

यत् । अश्वस्य । क्रविषः । मक्षिका । आश । यत् । वा । स्वरौ । स्वऽधितौ । रिप्तम् । अस्ति ।
यत् । हस्तयोः । शमितुः । यत् । नखेषु । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ ९ ॥

ᵛअश्वस्य तदवयवभूतस्य ᵛक्रविषः आममांसस्य ᵛयत् यदङ्गं ᵛमक्षिका ᵛआश अभक्षयत् ॥ 'अश भोजने' । यद्वा । कर्मणि षष्ठी ॥ अश्वस्य यन्मांसं भक्षयति । ᵛवा अथवा ᵛस्वरौ पश्वञ्जनकाले[6] ᵛयत् ᵛरिप्तं लिप्तम् ᵛअस्ति । 'स्वरुणा पशुमनक्ति' इति श्रुतेः । अथवा ᵛस्वधितौ छेदनकाले च अवदानकाले यत्[7] रिप्तमस्ति ᵛशमितुः ᵛहस्तयोः लिप्तमस्ति । विशसनकाले ᵛयत् च ᵛनखेषु लिप्तम् ᵛता ᵛसर्वा तानि सर्वाणि हे अश्व ᵛते तव संबन्धीनि ᵛदेवेष्वस्तु देवेषु संतोषार्थाय[8] भवन्तु[8] ॥

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु ॥ १० ॥

यत् । ऊवध्यम् । उदरस्य । अपऽवाति । यः । आमस्य । क्रविषः । गन्धः । अस्ति ।
सुऽकृता । तत् । शमितारः । कृण्वन्तु । उत । मेधम् । शृतऽपाकम् । पचन्तु ॥ १० ॥

---

१. झ-रस (श) ना खलीनरज्जुः । २. क्ष-ज-ट-'घ' नास्ति । ३. क्ष-ङ-ज-ट-तानि । अपि शब्दश्चार्थे । ४. ङ-झ१-किम् । ५. ङ-झ१-'न' नास्ति । ६. ङ-झ१-व्रश्चनकाले । ७. च-च । ८. च-संतोषार्थी संभवन्तु; क्ष-ङ-झ-झ१-ञ-ट-सन्तु तेषामर्थाय भवन्तु ।

vउदरस्य संबन्धि vयत् vऊवध्यम् ईषज्जीर्णं तृणं पुरीषम् vअपवाति अपगच्छति । vयः च vआमस्य अपक्वस्य vक्रविषः मांसस्य vगन्धः vअस्ति लेशोऽस्ति । पाकस्य समये यत्किंचिदूवध्यमपक्वस्य च लेशोऽस्ति आमगन्धोऽस्ति । vतत् सर्वं vशमितारः विशसनकर्तारः vसुकृता vकृण्वन्तु सुकृतम्[1] उक्तदोषरहितं कुर्वन्तु । vउत अपि च vमेधं मेध्यं यज्ञार्हं पश्ववयवंv शृतपाकं देवयोग्यपाकोपेतं यथा भवति तथा vपचन्तु पितृमनुष्यादियोग्यम् अतिपक्वम् ईषत्पक्वं च मा कुर्वन्त्वित्यर्थः ॥ ॥ ८ ॥

यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।

मा तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ११ ॥

यत् । ते । गात्रात् । अग्निना । पच्यमानात् । अभि । शूलम् । निऽहतस्य । अवऽधावति ।

मा । तत् । भूम्याम् । आ । श्रिषत् । मा । तृणेषु ।

देवेभ्यः । तत् । उशत्ऽभ्यः । रातम् । अस्तु ॥ ११ ॥

हे अश्व vते तव vअग्निना vपच्यमानात् vगात्रात् vयत् ऊष्मरूपं रसो वा यत्किंचित् vअवधावति । तथा vनिहतस्य निःशेषेण हतस्य तव यदङ्गं रसरूपं vशूलम् अभिलक्ष्य अवधावति निर्गच्छति । vतत् तदङ्गं vभूम्यां vमा vआ vश्रिषत् आश्लिष्टं मा भूत् ॥ श्रिषेः पुषादित्वात् अङ् ॥ पाकसमये तथा vमा vतृणेषु विशसनसमये दर्भेषु[2] मा अपगच्छतु । तर्हि तत्पतितं कुत्र गच्छत्विति चेत् उच्यते । vतत् तादृशम् vउशद्भ्यः कृत्स्नं हविः कामयमानेभ्यः vदेवेभ्यः vरातं दत्तम् vअस्तु ॥

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।

ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥ १२ ॥

ये । वाजिनम् । परिऽपश्यन्ति । पक्वम् । ये । ईम् । आहुः । सुरभिः । निः । हर । इति ।

ये । च । अर्वतः । मांसऽभिक्षाम् । उपऽआसते ।

उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥ १२ ॥

vये vपक्वं vवाजिनम् अश्वम् अश्वावयवं vपरिपश्यन्ति परितः पावनबुद्ध्या[3] ईक्षन्ते । vय vईं ये चैनं vसुरभिः शोभनगन्धः[4] अतः vनिर्हर किंचिदप्यस्मभ्यं देहि vइति vआहुः । यद्वा । निःशेषेण देवेभ्यो हरेत्याहुः । यतः सुरभिः अतो देवयोग्यमिति । किंच vये vचार्वतो vमांसभिक्षामुपासते ये[5] नराः[5] अस्य अर्वतः अश्वस्य हुतशिष्टमांसयाचनामुपासते कांक्षन्ते । vउतो अपि च vतेषाम् उक्तविधानाम् vअभिगूर्तिः अभितः उद्यमनं[6] vनः अस्मान् vइन्वतु व्याप्नोतु । यथा[7] अस्माभिः अश्वे

१. क्ष-ञ-ट—सुष्ठु कृतम् । २. च-झ—दर्भेषु मा श्रिषत् । ३. ङ—पावनबुद्ध्या एव; झ—पाचनं बुध्वा । ४. ङ—शोभनगन्धोऽयम् । ५. क्ष-ञ-ट—येन राक्षसाः; ङ-झ १—ये च राक्षसाः । ६. क्ष-ङ-झ१-ञ-ट—संकल्पः । ७. झ१-ते यथा ।

उपालब्धे एवं स्पृहयन्ति तथा यज्ञो निर्वाहयतु[1] इत्यर्थः । यद्वा । मन्त्रः[2] देवपरो व्याख्येयः । ये देवाः वाजिनं पक्वं परिपश्यन्ति कदा होष्यतीति विलम्बं दृष्ट्वा ये च सुरभिरिमेनं निर्हर निःशेषेणास्मभ्यं देहीत्याहुः ये चार्वतोऽश्वस्य मांसभिक्षामुपासते तेषामभिगूर्तिर्न इन्वतु[3] तेषाम् उद्यमः[4] सफलो भवत्वित्यर्थः ॥

यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥ १३ ॥

यत् । निऽईक्षणम् । मांस्पचन्याः । उखायाः । या । पात्राणि । यूष्णः । आऽसेचनानि ।
ऊष्मण्या । अपिऽधाना । चरूणाम् । अङ्काः । सूनाः । परि । भूषन्ति । अश्वम् ॥ १३ ॥

मांस्पचन्याः मांसपचन्याः ॥ पचतेः अधिकरणे ल्युट् । ' मांसस्य पचि युड्घञोः ' ( का. ६. १. १४४ ) इत्यन्तलोपः ॥ उखायाः स्थाल्याः नीक्षणं पाकपरीक्षासाधनं काष्ठं तथा या यानि पात्राणि यूष्णः रसस्य क्वथितस्य आसेचनानि आसेचनसाधनानि तथा ऊष्मण्या ऊष्मनिवारणार्हाणि पात्राणि तथा चरूणां पात्राणां मांसपूर्णानाम् अपिधाना अपिधानानि तत्साधनानि तथा अङ्काः हृदयाद्यवयवाङ्कनसाधनाः[5] वेतसशाखाः सूनाः अवदानसाधनाः स्वधित्यादयः एतम्[6] अश्वम् अश्वावयवं परि भूषन्ति परितो भूषयन्ति स्वस्वव्यापारेण साधयन्तीत्यर्थः ॥ ' भूष अलंकारे ' । भौवादिकः ॥

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ १४ ॥

निऽक्रमणम् । निऽसदनम् । विऽवर्तनम् । यत् । च । पड्बीशम् । अर्वतः ।
यत् । च । पपौ । यत् । च । घासिम् । जघास । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ १४ ॥

यत् निक्रमणम् । नितरां क्रमते यत्र तन्निक्रमणं स्थानम् । नितरां सीदत्यत्रेति निषदनम् । विवर्तनं विविधवर्तनम् इतस्ततो लुण्ठनं[7] यत्र तत् ॥ सर्वत्राधिकरणे ल्युट् ॥ यच्च अर्वतः अश्वस्य पड्बीशं पादबन्धनम् । यद्वा । बन्धनं पट् तद्वान्[8] प्रदेशः[8] । अत्र सर्वत्र देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वाभावाय तत्स्थानमपि स्वीक्रियते । यद्वा । क्रियापरावगन्तव्या । आलम्भसमये[9] निग्रहेण या निक्रमणादयश्चेष्टाः सन्ति ता इत्यर्थः । यच्च पपौ यदुदकमपिबत् । यच्च घासिम् अदनीयं तृणादिकं जघास अभक्षयत् । हे अश्व ते तव ता तानि सर्वाणि निक्रमणादीनि देवेष्वस्तु सन्तु देवेषु व्याप्नोतु[10] तान्यपि निरर्थकानि मा भूवन्नित्यर्थः ॥

---

1. ङ-ञ-झ-झ१–निर्वहतु । २. ङ-च-झ-झ१–अयं मन्त्रः । ३. च-झ१–इन्वतु इति । ४. ङ-झ१–संकल्पः । ५. झ१-हृदयाद्यवयवाङ्कनसाधनानि । ६. क्ष-ञ-ट–एनम् । ७. क्ष-ङ-झ१-ञ-ट–लुठनं वर्तनं वा । ८. झ-झ१– तद्वन्तं प्रदेशम् । ९. झ१–अश्वालम्भसमये । १०. च-ज–प्राप्नोतु ।

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥ १५ ॥

मा । त्वा । अग्निः । ध्वनयीत् । धूमऽगन्धिः । मा । उखा । भ्राजन्ती । अभि । विक्त । जघ्रिः ।
इष्टम् । वीतम् । अभिऽगूर्तम् । वषट्ऽकृतम् । तम् । देवासः । प्रति । गृभ्णन्ति । अश्वम् ॥ १५ ॥

हे अश्व ᵛत्वा त्वां ᵛधूमगन्धिः धूमेन व्याप्तः[1] ᵛअग्निः[1] ᵛमा ᵛध्वनयीत् मा ध्वनयत्[2] । धूमं दृष्ट्वा शब्दं मा कुर्वित्यर्थः । अश्वस्य शब्दने प्रायश्चित्तविधानात् । यद्वा । हे पच्यमानाश्वावयव त्वा त्वां धूमगन्धिरग्निर्मा ध्वनयीत् । ध्वना सति भाण्डभङ्गः स्यात् । 'नोनयति॰' (पा. सू. ३. १. ५१) इत्यादिना चङ्प्रतिषेधः । 'ह्म्यन्तक्षण॰' इति वृद्ध्यभावः ॥ किंच ᵛभ्राजन्ती अत्यन्ताग्निसंयोगेन दीप्ता[3] ᵛउखा स्थाली ᵛमा ᵛअभि ᵛविक्त अभितो मा चीचलत् तापातिशयेन मा नीनशदित्यर्थः ॥ 'ओविजी भयचलनयोः' । छान्दसो विकरणस्य लुक् । लुङि वा 'झलो झलि' इति सलोपः ॥ स्थाली विशेष्यते । ᵛजघ्रिः जिघ्रन्ती तापेन ॥ 'घ्रा गन्धोपादाने' । 'आदृगमहन॰' इति किन्प्रत्ययः ॥ ᵛतं तादृशम् ᵛअश्वम् ᵛइष्टं होतुमिषितं ᵛवीतं होमाय आनीतम् ᵛअभिगूर्तम् आभिमुख्येन प्रदानाय उद्यतम्[4] । यद्वा । इष्टं प्रयाजैराप्रीतं वीतं पर्यग्निकृतमभिगूर्तं 'ये यजामहे' इत्यागूर्युक्तम् । ᵛवषट्कृतं वषट्कारेण देवसंस्कृतम्[5] एवंभूतं तं ᵛदेवासः देवाः ᵛप्रति ᵛगृभ्णन्ति प्रतिगृह्णन्ति ॥　॥ ९ ॥

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।
संदानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति ॥ १६ ॥

यत् । अश्वाय । वासः । उपऽस्तृणन्ति । अधीवासम् । या । हिरण्यानि । अस्मै ।
सम्ऽदानम् । अर्वन्तम् । पड्बीशम् । प्रिया । देवेषु । आ । यमयन्ति ॥ १६ ॥

ᵛअश्वाय संज्ञप्यमानाय ᵛअधीवासम् उपर्याच्छादनयोग्यं ᵛयत् ᵛवासः ᵛउपस्तृणन्ति सर्वतः आच्छादयन्ति ॥ 'स्तृञ् आच्छादने' । क्रैयादिकः ॥ तथा ᵛअस्मै अश्वाय ᵛया यानि ᵛहिरण्यानि सौवर्णराजतकांस्यानि कल्पयन्ति । तथा ᵛअर्वन्तम् ॥ षष्ठ्यर्थे द्वितीया ॥ अर्वतोऽश्वस्य ᵛसंदानं शिरोबन्धनं ᵛपड्बीशं पादेषु प्रविष्टं पादबन्धनम् । एतानि ᵛप्रिया देवानां प्रियतराणि चात्वाले बद्ध्वा स्थापितानि ᵛदेवेषु ᵛआ ᵛयामयन्ति प्रापयन्ति ॥

---

१. क्ष-ङ-ञ-ट—व्याप्तः धूमगन्धो वा अग्निः; झ—व्याप्तः धूमगन्धो वह्निः । २. क्ष-झ१-ञ-ट—ध्वनयतु । ३. क्ष-ङ-झ१-ञ-ट—दीप्यमाना । ४. क्ष-ङ-झ१-ञ-ट—संकल्पितम् । ५. झ१—देयम् ।

यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद ।
स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥ १७ ॥

यत् । ते । सादे । महसा । शूकृतस्य । पार्ष्ण्या । वा । कशया । वा । तुतोद ।
स्रुचाऽइव । ता । हविषः । अध्वरेषु । सर्वा । ता । ते । ब्रह्मणा । सूदयामि ॥ १७ ॥

Vमहसा बलेन Vशूकृतस्य । शब्दानुकरणमेतत् । शूत्कारं कुर्वतः Vते तव Vसादे सदने अगमने[1] निमित्तभूते सति ॥ सदेर्भावे घञ् । ' कर्षात्वतः० ' इत्यन्तोदात्तत्वम् ॥ अर्थतो[2] गमनं कुर्वन् शूत्कारं कुर्वतः ते[2] त्वां Vपार्ष्ण्या Vवा Vकशया Vवा Vतुतोद व्यथयति Vयत् यस्मात् तस्मात् Vते तव Vता तानि Vसर्वा सर्वाणि Vअध्वरेषु यागेषु Vब्रह्मणा मन्त्रेण Vसूदयामि क्षरामि आहुतित्वेन कल्पयामीत्यर्थः । तत्र दृष्टान्तः । अध्वरेषु यागेषु Vहविषः हविः आज्यादिकं Vस्रुचेव स्रुचा यथा सूदयन्ति[3] तद्वत् ॥

चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति ।
अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥ १८ ॥

चतुःऽत्रिंशत् । वाजिनः । देवऽबन्धोः । वङ्क्रीः । अश्वस्य । स्वऽधितिः । सम् । एति ।
अच्छिद्रा । गात्रा । वयुना । कृणोत । परुःऽपरुः। अनुऽघुष्य । वि । शस्त ॥ १८ ॥

Vवाजिनः Vअश्वस्य Vदेवबन्धोः देवानां प्रियस्य Vचतुस्त्रिंशत् Vवङ्क्रीः एतत्संख्यानि उभयपार्श्वास्थीनि Vस्वधितिः छेदनसाधनोऽसिः Vसमेति सम्यग्गच्छति छेदनाय। इतरेषामजादीनां षड्विंशतिरेव, ' षड्विंशतिरस्य वङ्क्रयः ' ( ऐ. ब्रा. २. ६ ) इति प्रैषात् । हे विशसनस्य कर्तारः अस्याश्वस्य गात्राणि शरीरावयवान् Vअच्छिद्रा अच्छिद्राणि यथा भवन्ति तथा Vवयुना वयुनानि प्रज्ञानानि । वयुनमिति प्रज्ञानाम, ' वयुनम् अभिख्या ' ( नि. ३. ९. १० ) इति तन्नामसूक्तत्वात् । Vकृणोत कुरुत ॥ ' तप्तनप्तनथनाश्च ' इति तबादेशः ॥ हृदयजिह्वावक्षःप्रभृतीनि प्रज्ञाय मध्ये छिन्नानि मा कुरुतेत्यर्थः । तदर्थं Vपरुःपरुः प्रतिपर्व प्रतिहृदयाद्यवयवम् Vअनुघुष्य इदमवद्यमिति संशब्द्यैव Vवि Vशस्त विशसनं कुरुत ॥ ' शसु हिंसायाम् ' । छान्दसः शपो लुक् ॥ ' गात्रंगात्रमस्यानूनं कृणुतात् ' ( ऐ. ब्रा. २. ६ ) इति प्रैषात् ॥

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथ ऋतुः ।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ ॥ १९ ॥

एकः । त्वष्टुः । अश्वस्य । विऽशस्ता । द्वा । यन्तारा । भवतः । तथा । ऋतुः ।
या । ते । गात्राणाम् । ऋतुऽथा । कृणोमि । ताऽता । पिण्डानाम् । प्र । जुहोमि । अग्नौ ॥१९॥

---

१. क्ष-झ१-ञ-ट-गमने । २. क्ष-ञ-ट-अर्वतो गमनं कुर्वन् शूत्कारं कुर्वतः ते; ङ-अर्वतो गमनं कुर्वतः ते; झ१-सर्वतो गमनं कुर्वतः ते । ३. क्ष-झ१-ञ-ट-सूदयति ।

ᵛत्वष्टुः अस्य[1] दीप्तस्य ᵛअश्वस्य ᵛविशस्ता विशसनस्य कर्ता ᵛएकः। एक एव। स कः। ᵛऋतुः एतदुपलक्षितः कालात्मा तस्यैव सर्वेषामपि पर्यवसितत्वात्। यद्वा। ऋतुः निःशङ्कविशसनाय गन्ता शमिता। ᵛतथा ᵛद्वा ᵛयन्तारा नियमयितारौ अहोरात्रे देवौ द्यावापृथिव्यौ वा ऋत्विक्षु ᵛभवतः॥ तथ ऋतुः इत्यत्र ' ऋत्यकः ' इति प्रकृतिभावो ह्रस्वत्वं च॥ हे अश्व ᵛते तव ᵛगात्राणां[2] मध्ये ᵛया यानि हृदयाद्यवयवानि ᵛऋतुथा[2] काले[3] ᵛकृणोमि छिनद्मि संपादयामि ᵛपिण्डानां मध्ये ᵛताता तानि तानि प्रज्ञानानुरोधेन[4] ᵛअग्नौ ᵛप्र ᵛजुहोमि प्रकर्षेण हुतं करोमि॥

**मा त्वा॑ तपत्प्रि॒य आ॒त्माऽपि॒यन्तं॒ मा स्वधि॑तिस्त॒न्व१॒॑ आ ति॑ष्ठिपत्ते।**
**मा ते॑ गृ॒ध्नुर॑विश॒स्ताति॒हाय॑ छि॒द्रा गात्रा॑ण्य॒सिना॒ मिथू॑ कः॥ २०॥**

मा। त्वा॒। त॒प॒त्। प्रि॒यः। आ॒त्मा। अ॒पि॒ऽयन्त॑म्। मा।
स्वऽधि॑तिः। त॒न्वः॑। आ। ति॒स्थि॒प॒त्। ते॒॥ मा। ते॒। गृ॒ध्नुः।
अ॒वि॒ऽश॒स्ता। अ॒ति॒ऽहाय॑। छि॒द्रा। गात्रा॑णि। अ॒सिना॑। मिथु॑। कु॒रिति॑ कः॥ २०॥

हे अश्व ᵛत्वा त्वाम् ᵛअपियन्तं देवान् प्रति गच्छन्तं ᵛप्रियः ᵛआत्मा भोगायतनत्वात् तव प्रियतरो देहः ᵛमा ᵛतपत् तप्तं मा कार्षीत् वियोगजनिता व्यथा मा भूदित्यर्थः। ᵛस्वधितिः शस्त्रं ᵛते तव ᵛतन्वः तनूः अङ्गानि ᵛमा ᵛआ ᵛतिष्ठिपत् त्वयि चिरमास्थितानि मा कार्षीत्॥ स्थापयतेर्लुङि ' तिष्ठतेरित् ' ( पा. सू. ७. ४. ५ ) इति इत्वम्॥ तथा ᵛते तव ᵛगात्राणि ᵛगृध्नुः केवलमांसग्रहणेप्सुः ᵛअविशस्ता विशसने अकुशलः शमिता ᵛअतिहाय न्यूनातिरेकभावेन तत्तदङ्गमतिक्रम्य मध्ये ᵛमिथु मिथ्या व्यर्थम् ᵛअसिना ᵛछिद्रा छिद्राणि तिर्यक्छिन्नानि ᵛमा ᵛकः मा कार्षीत्॥ करोतेर्लुङि ' मन्त्रे घस॰ ' इति च्लेर्लुक्। गुणः। ' हल्ङ्याब्भ्यः॰ ' इति तलोपः[5]॥

**न वा उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ इदे॑षि प॒थिभि॑ः सु॒गेभि॑ः।**
**हरी॑ ते॒ युञ्जा॒ पृष॑ती अभूता॒मुपा॑स्थाद्वा॒जी धु॒रि रास॑भस्य॥ २१॥**

न। वै। ऊँ इति॑। ए॒तत्। म्रि॒य॒से॒। न। रि॒ष्य॒सि॒। दे॒वान्। इत्। ए॒षि॒। प॒थिऽभि॑ः। सु॒ऽगेभि॑ः।
हरी॒ इति॑। ते॒। युञ्जा॑। पृष॑ती॒ इति॑। अ॒भू॒ताम्। उप॑। अ॒स्था॒त्। वा॒जी। धु॒रि। रास॑भस्य॥२१॥

ᵛन ᵛवा ᵛउ नैव खलु ᵛएतन्म्रियसे। वैशब्दः एवकारार्थः। उ इत्यवधारणे। नैव इदानीम् इतराश्ववत् मृतो भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात्। अत एव ᵛन ᵛरिष्यसि न हिंस्यसे[6]। व्यर्थहिंसायाः[6] अभावात्। ननु प्रत्यक्ष्यतो मृतिः अवयवनाशश्च दृश्यते कथमेवमुच्यते इति। उच्यते। ᵛसुगेभिः

---

१. ङ-झ१–अश्वस्य। २. क्ष-ञ-ट–गात्राणां अवयवानां हृदयाद्यवयवानि। कर्मणि षष्ठी। ऋतुथा। ३. क्ष-ङ-झ-ञ-ट–काले काले। ४. क्ष-ञ-ट–प्रजातानुरोधे वा; ङ–प्रज्ञानानुसारेण; झ१–प्रजातानुरोधे। ५. क्ष-ञ-ट–तिलोपः। ६. झ–हिंस्यसे इत्यर्थः। हिंसायाः।

ᵛपथिभिः शोभनगमनसाधनैर्मार्गैः देवयानलक्षणैः ᵛदेवान् ᵛइत् ᵛएषि देवानेव प्राप्नोषि। अतो युक्तैपोक्तिः। कैः साधनैरिति तत्राह। ᵛते त्वां वोढुं ᵛहरी एतन्नामानौ इन्द्रस्याश्वौ ते तव ᵛयुञ्जा रथे युक्तौ ᵛअभूतां भविष्यतः। आशंसारूपत्वात् भूतार्थनिर्देशः। 'हरी इन्द्रस्य' ( नि. १. १५. १ ) इति निरुक्तम्। तथा ᵛपृषती पृषत्यौ मरुतां वाहनभूतौ युञ्जा[1] अभूतां[1] युक्तौ भविष्यतः। 'पृषत्यो मरुताम्' ( नि. १. १५. ६ ) इति च निरुक्तम्॥ युजेः 'ऋत्विक्°' इत्यादिना क्विन्। 'युजेरसमासे' ( पा. सू. ७. १. ७१ ) इति नुम्। 'सुपां सुलुक्°' इति आकारः॥ तथा ᵛरासभस्य अश्विवाहनस्य एतन्नामकस्याश्वस्य ᵛधुरि स्थाने वर्तमानः कश्चित् ᵛवाजी ᵛउपास्थात् उपस्थास्यति वहतीत्यर्थः। यद्वा। रासभस्य भानोः धुरि वर्त्मनि युक्तो वाजी अश्वः उपस्थास्यति देवत्वं गच्छतस्तव गमनाय इन्द्रादयः स्वस्ववाहनानि प्रेषयन्तीत्यर्थः। यद्वा। तत्तद्देवभावमापन्नं त्वां तानि तानि वाहनानि वहन्ति॥

उपाकरणकाले अवघ्राणावर्तने[2] यद्यश्वो न कुर्यात् तदैषा नैमित्तिकी यजमानवाचनार्था भवति। तथा च सूत्रितं–'सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत्' ( आश्व. श्रौ. १०. ८ ) इति॥

सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिम्।
अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान्॥२२॥

सुऽगव्यम्। नः। वाजी। सुऽअश्व्यम्। पुंसः। पुत्रान्। उत। विश्वऽपुषम्। रयिम्।
अनागाःऽत्वम्। नः। अदितिः। कृणोतु। क्षत्रम्। नः। अश्वः। वनताम्। हविष्मान्॥२२॥

ᵛवाजी अश्वः आलभ्यमानः ᵛनः अस्माकं ᵛसुगव्यं शोभनेन गोसमूहेन युक्तं ᵛविश्वापुषं ᵛरयिं विश्वस्य पोषकं धनं ᵛकृणोतु करोतु॥ 'खलगोरथात्' ( पा. सू. ४. २. ५० ) इति समूहार्थे यत्। छान्दसमुत्तरपदाद्युदात्तत्वम्। यद्वा। सामूहिकस्याणः प्रसङ्गे 'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे' ( का. ४. ३. १६० ) इति यत्। तदन्तस्य 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्॥ तथा ᵛस्वश्व्यं शोभनाश्वसमूहयुक्तम्। तथा ᵛपुंसः ᵛपुत्रान्। पुत्रशब्दः स्त्रीपुमपत्यसाधारणः। अतः पुमपत्यानीत्यर्थः। यद्वा। पुंसो वध्वादीन्[3] पुत्रान्[3] पुरुरक्षकान् आत्मजान्[4]। रूयपत्यानि[5] पुमपत्यानि[5] च इत्यर्थः। ᵛउत अपि च विश्वापुषं रयिं विश्वपोषणसमर्थं धनम्। किंच ᵛनः अस्मान् ᵛअदितिः अदीनः अश्वः ᵛअनागास्त्वं कृणोतु सर्वतो निष्पापत्वं करोतु। उक्तानां फलानां न्यूनातिरेकजनितपापक्षयाभावे असंभवात् अपापत्वं प्रार्थ्यते। किंच ᵛहविष्मान् हविर्भूतावयवोपेतः ᵛअश्वः ᵛनः अस्माकं ᵛक्षत्रं बलं क्षात्रं तेजः ᵛवनतां संभजतां कुरुताम्॥ ॥ १० ॥

'यदक्रन्दः' इति त्रयोदशर्चं सप्तमं सूक्तं दैर्घतमसं त्रैष्टुभम्। अश्वस्य स्तूयमानत्वात्तद्देवत्यम्। 'यदक्रन्दः सप्तोना' इत्यनुक्रमणिका। आश्वमेधिके मध्यमेऽहनि उपाकरणाय अवस्थितम् अश्वम् आद्याभिरेकादशभिः स्तौति। तथा च 'त्रीणि सुत्यानि' इति खण्डे सूत्रितं–'तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तौत्यप्रणुवन्' ( आश्व. श्रौ. १०. ८ ) इति॥

---

१. क्ष-ञ-ट–युञ्जावभूताम्। २. क्ष-ञ-ट–अवघ्राणोपवर्तने। ३. क्ष-ञ-ट–बन्धुपुत्रादीन्; ङ-झ१–बन्धून् पुत्रादीन्; ड-झ१–बन्ध्वादीन् पुत्रान्। ४. ङ-झ१–आत्मरक्षकान्। ५. ङ-झ१–रूयपत्यम्।

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ १ ॥

यत् । अक्रन्दः । प्रथमम् । जायमानः । उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् ।
श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपऽस्तुत्यम् । महि । जातम् । ते । अर्वन् ॥१॥

हे vअर्वन् अरणकुशलाश्व vते तव vजातं जन्म जननम् vउपस्तुत्यम् उपेत्य सर्वैः स्तोतव्यम् ॥ स्तौतेः 'एतिस्तुशास्वृ°' इति क्यप् । ततः तुक् ॥ कथं स्तुत्यत्वमिति उच्यते । vयत् यस्मात् vसमुद्रात् । अन्तरिक्षनामैतत् । उदकसमुन्दनापादानात्[1] यक्षगन्धर्वादिसंमोदनाधिकरणात् वा अन्तरिक्षात् vप्रथमं पूर्वं vजायमानः उत्पन्नः । यद्वा । समुद्रः आदित्यः समुन्दमात् वृष्टया । तस्माद्वा जायमानः । 'सूरादश्वं वसवो निरतष्ट' ( ऋ. सं. १. १६३. २ ) इति वक्ष्यमाणत्वात् । vउत vवा अथवा vपुरीषात् सर्वकामानां पूरकात् उदकात् प्रथमम् vउद्यन् जायमानः । स तादृशस्त्वं यत् यस्मात् vअक्रन्दः महाशब्दमकरोः यजमानमनुग्रहीतुम् । किंच ते vपक्षा पतनसाधनौ पक्षौ vश्येनस्य[2] पक्षाविव[2] । तौ यथा शीघ्रपतनसाधनौ तादृशावित्यर्थः । तव vबाहू vहरिणस्य बाहू इव । तौ यथा वेगवन्तौ तादृशावित्यर्थः । यस्मादेवं तस्मात्ते जन्म स्तुत्यमित्यर्थः ॥

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥ २ ॥

यमेन । दत्तम् । त्रितः । एनम् । अयुनक् । इन्द्रः । एनम् । प्रथमः । अधि । अतिष्ठत् ।
गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥ २ ॥

vयमेन नियामकेनाग्निना vदत्तम् vएनम् अश्वं vत्रितः पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुः vअयुनक् रथे योजितवान् । किंच vएनम् अश्वम् vइन्द्रः vप्रथमः प्रतमः प्रकृष्टतमः । प्रथम इति मुख्यनाम । vअध्यतिष्ठत् अधिष्ठितवान् । vअस्य vगन्धर्वः सोमः । 'सोमेन समया विपृक्तः' ( ऋ. सं. १. १६३. ३ ) इति वक्ष्यमाणत्वात् । स च अस्य अश्वस्य vरशनां नियमनरज्जुम् vअगृभ्णात् अग्रहीत् । ईदृशोऽश्वः कुतः समुत्पन्नः इति चेत् उच्यते । हे vवसवः रश्मयः यूयं vसूरात् आदित्यात् vअश्वम् एवंमहानुभावं[3] vनिरतष्ट निःशेषेण साधु संपादितवन्तः । यद्वा । वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते । हे वसवः स्वस्वव्यापारेण सर्वस्याच्छादयितारः यूयं सूरादादित्यात् अश्वम्[4] एनं निरतष्ट अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । स च क्रियासामान्यवचनः । अत्रौचित्यात् धारणे वर्तते । सम्यग्धारितवन्त इत्यर्थः ॥ तक्षेर्लङि छान्दसः शपो लुक् । 'स्कोः संयोगाद्योः°' इति कलोपः ॥

---

१. ङ-झ१–उदकसमुन्दनात् । २. ङ-झ१–श्येनपक्ष्याविव । ३. क्ष-ठ-झ१-ञ-ट–एनं महानुभावम् ।
४. क्ष-ङ-झ१-ञ-ट–अश्वं व्याप्तम् ।

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ ३ ॥

असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन ।
असि । सोमेन । समया । विऽपृक्तः । आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥ ३ ॥

हे Vअर्वन् त्वं Vयमः Vअसि नियमिता अग्निरसि । तेन दत्तत्वात् तच्छब्दव्यपदेशः । तथा Vआदित्यः Vअसि । ' सूराग्निरतष्ट ' इत्युक्तत्वात् । तथा Vगुह्येन Vव्रतेन गोपनीयेन दुर्निरूपेण वा कर्मणा । सर्वत्र व्याप्तिरूपेणेत्यर्थः । तेन Vत्रितः त्रिषु स्थानेषु तायमानो वायुः Vअसि । ' त्रित एनमायुनक् ' इत्युक्तत्वात्तद्रूपत्वम् । अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण[1] त्रितः एतन्नामकः ऋषिरसि । किंच हे अश्व त्वं Vसोमेन Vसमया[2] सह Vविपृक्तः[2] । वि इत्येष समित्येतस्मिन्नर्थे । संपृक्तः Vअसि तेन गृहीतत्वात्[3] । हे अश्व एवंरूप Vते तव Vदिवि द्युलोके आदित्ये वा वर्तमानस्य Vत्रीणि[4] Vबन्धनानि उत्पत्तिकारणानि Vआहुः पुराविदः । वसवः आदित्यो द्युस्थानं चेति त्रीणि ॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥ ४ ॥

त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्ऽसु । त्रीणि । अन्तरिति । समुद्रे ।
उतऽइव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥ ४ ॥

पूर्वं[5] दिवि[5] त्रीणि बन्धनानि इत्युक्तम् । इदानीं स्थानत्रयेष्वपि[6] त्रीणि बन्धनानि इत्याह । हे अर्वन् Vते तव Vदिवि Vबन्धनानि Vत्रीणि Vआहुः तानि पूर्वमुक्तानि । Vअप्सु । अब्उपजीवितत्वात्[7] भूलोकोऽपि अप्शब्देनाभिधीयते । पृथिव्यां Vत्रीणि बन्धनान्याहुः । अन्नं स्थानं बीजमिति त्रीणि । तथा Vसमुद्रे Vअन्तः समुद्रमध्ये । समुद्द्रवणादपादानात्[8] समुद्रमन्तरिक्षम् । तस्मिन् Vत्रीणि वृष्ट्युत्पत्तिनिमित्तानि[9] मेघो विद्युत् स्तनितमिति । Vउतेव । इवशब्दश्चार्थे । अपि च हे Vअर्वन् अश्व Vवरुणः पापस्य वारकः फलस्यावर्जयिता वा त्वं Vमे मह्यं Vछन्त्सि कथयसि । किं कथयसीति चेत् उच्यते । Vते तव Vपरमं Vजनित्रं निरतिशयं जन्म ॥ जनेरौणादिकः इत्रप्रत्ययः ॥ Vयत्र येषु त्रिषूक्तेषु स्थानेषु Vआहुः कथयन्ति । यद्वा । यत्र यस्मिन् आदित्ये परमं जनित्रमाहुः । ' सूरादश्वं वसवो निरतष्ट ' इत्युक्तत्वात् । तादृशं प्रशस्यं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः ॥

---

१. क्ष-ङ-झ-ञ-ट–यागादिसाधनरूपेण । २. क्ष-ङ-झ१-ञ-ट–समयः कालः । मत्वर्थो लुप्यते । चन्द्रगत्यधीनत्वात् कालस्य । तेन विपृक्तः; झ–समया सन् विपृक्तः । ३. क्ष-ङ-झ१-ञ-ट–' गृहीतत्वात् ' इत्यस्यानन्तरं ' यद्वा आदित्यादश्वोत्पत्तेरुक्तत्वात् तादभेदेन अश्वोऽप्यादित्य उच्यते । तादृशस्त्वं चन्द्रेण सह समया कालेन व्यवधायकेन विपृक्तोऽपि ( क्ष-ञ-ट– विपृक्तो वियोजितोऽसि ) ' इत्यधिकम् । ४. क्ष-झ१-ञ-ट–त्रीणि स्थानानि । ५. क्ष-ञ-ट–पूर्वमन्त्रे । ६. ङ-झ१-स्थानत्रयेऽपि । ७. ङ-झ१–अबुपजीवित्वात् । ८. क्ष-ङ-झ१-ञ-ट–समुद्रेण अपामुपादानात् । ९. क्ष-ञ-ट–उत्पत्तिस्थानानि ।

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।
अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥ ५ ॥

इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानाम् । सनितुः । निऽधाना ।
अत्र । ते । भद्राः । रशनाः । अपश्यम् । ऋतस्य । याः । अभिऽरक्षन्ति । गोपाः ॥ ५ ॥

हे ᵛवाजिन् अश्व ᵛते संबन्धीनि ᵛअवमार्जनानि अङ्गसंशोधकानि स्थानानि ᵛइमा इमान्युक्तानि द्युलोकादीनि किंच ᵛसनितुः यागसंभक्तुः तव[1] ᵛइमा इमानि ᵛशफानां निधानानि स्थानानि[2] संचारप्रदेशा इत्यर्थः । किंच ᵛअत्र एव ᵛते तव ᵛभद्राः भन्दनीयाः कल्याणाः[3] ᵛरशनाः ग्रीवादिषु संयुक्ताः रज्जूः अत्र ᵛअपश्यम् एषूक्तेषु स्थानेषु अपश्यम् । रशनाः विशेष्यन्ते । ᵛयाः ᵛगोपाः गोपयित्र्यः[4] रशनाः ᵛऋतस्य सत्यभूतस्य यज्ञसाधनस्य वाश्वस्य ॥ कर्मणि षष्ठी ॥ ऋतम् ᵛअभिरक्षन्ति अभितः पालयन्ति ताः अपश्यं दृष्टवानस्मि । यद्वा । इमा ते तव अवमार्जनानि अङ्गप्रक्षालनसाधनान्युदकानि । इमानि सनितुः तव शफानां निधानानि देवयजनभूमयः संचारप्रदेशा वा । अत्रास्मिन् देवयजनस्थाने या रशनाः गोपाः तव पालयितारो राजपुरुषाः ऋत्विजो वा ऋतस्य[5] संबन्धिन्योऽभिरक्षन्ति ता अपश्यम् ॥  ॥ ११ ॥

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥ ६ ॥

आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् ।
शिरः । अपश्यम् । पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानम् । पतत्रि ॥ ६ ॥

हे अश्व ᵛते तव ᵛआत्मानं शरीरं ᵛमनसा अस्मदीयेन प्रकृष्टगमनवता चेतसा ᵛआरात् अतिदूरे स्थितम् ᵛअजानां जानामि अतिव्याप्तं भावयामीत्यर्थः । कथम् । ᵛअवः अवस्तात् सामर्थ्यात् भूमेः । भूमिमारभ्य ᵛदिवा अन्तरिक्षेण मार्गेण ᵛपतङ्गम् आदित्यं ᵛपतयन्तं गच्छन्तं व्याप्नुवन्तम् । यद्वा । यतो दिवा अन्तरिक्षेण मार्गेण दिवि वा पतयन्तं गच्छन्तं पतङ्गमादित्यम् अवः आवः व्याप्नोषि अतो व्याप्तं जानामि । किंच ᵛशिरः ᵛअपश्यम् । तव शिरः एवं पश्यामि । कथम् । ᵛसुगेभिः शोभनगमनसाधनैः ᵛअरेणुभिः अपापैः ᵛपथिभिः मार्गैः । आदित्यमण्डलादपि उपरिभूतैः सत्यलोकमार्गैरित्यर्थः । तत्र प्रतिबन्धाभावात् मार्गाणामुक्तरूपत्वम् । तथाविधैस्तैः ᵛजेहमानम् उपर्युपरि व्याप्नुवत् ᵛपतत्रि पतनवच्छिरोऽपश्यं भावयामि । एवं लोकत्रयव्याप्तं भावयामीत्यर्थः । यद्वा । ते आत्मानम् एवं[6] भावयामि मनसा दिवा द्योतनात्मकेन अन्तरिक्षमार्गेण दिवः सकाशाद्वा अवः अवस्तादवाङ्मुखं पतयन्तं यागदेशं प्रति व्याप्नुवत् अत एव पतङ्गं पतनशीलम् अधःपतदादित्यसदृशं वा । एवं तव शिरो भावयामीत्यर्थः । शिरश्चैवमपश्यम् । उक्तरूपैर्देवयजनमार्गैर्जेहमानं यज्ञदेशं व्याप्नुवत् पतत्रि शीघ्रगामि शिरः पश्यामि । यद्यप्यात्मशब्देन सशिरस्कं शरीरमुक्तं तथापि देहात् पूर्वं शिरसो दृश्यमानत्वात् पृथगभिधीयते[7] ॥

---

१. झ१–ते तव । २. झ१–निधानस्थानानि । ३. क्ष-झ१-ज-ट–कल्याणीः । ४. ङ-झ१–गोपायित्र्यः
५. झ१–ऋतस्य तव । ६. क्ष-ङ-झ१-ज-ट–एनम् । ७. क्ष-झ१-ज-ट–पृथगभिधानम् ।

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥ ७ ॥

अत्र । ते । रूपम् । उत्ऽतमम् । अपश्यम् । जिगीषमाणम् । इषः । आ । पदे । गोः ।
यदा । ते । मर्तः । अनु । भोगम् । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति ॥७॥

एवं गमनानन्तरं हे अश्व ^ते तव ^उत्तमम् उत्कृष्टरूपेणोत्कृष्टतमं ^रूपम् ^अत्र अस्मिन् यागदेशे ^अपश्यं पश्यामि । कीदृशम् । ^गोः भूम्याः ^पदे स्थाने देवस्थाने[1] देवयजनप्रदेशे आजिधावनस्थाने वा ^इषः ॥ कर्मणि षष्ठी ॥ इषम् इष्यमाणम् अन्नम् अन्नानि वा ^आ सर्वतः ^जिगीषमाणं गन्तुमिच्छन्तम् । हे अश्व ^ते तव ^यदा ^मर्तः मनुष्यः ^भोगं भोक्तव्यमन्नम् ^अनु ^आनट् ॥ नशतिर्गतिकर्मा ॥ अनुक्रमेण समीपं गमयति । ^आदित् अनन्तरं तदानीमेव तदनुग्रहात् विलम्बमकृत्वा ^ग्रसिष्ठः महातृष्णयेव ग्रसितृतमो भक्षयितृतमः सन् ^ओषधीः अन्नानि ^अजीगः गिरसि भक्षयसि । महानुभावोऽपि त्वं लौकिकाश्ववत् तुच्छेन पुरुषेण दीयमानं स्वल्पं भक्ष्यम् अनुग्रहात् स्वीकरोषीत्यर्थः ॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ ८ ॥

अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु । भगः । कनीनाम् ।
अनु । व्रातासः । तव । सख्यम् । ईयुः । अनु । देवाः । ममिरे । वीर्यम् । ते ॥ ८ ॥

इदानीं कृत्स्नस्य लोकस्यापि मुख्यः इति प्रतिपादयति । हे ^अर्वन् गमनशीलाश्व ^त्वा त्वाम् ^अनु अनुसृत्य ^रथः गच्छति । ततः पुरतोऽश्वस्य गमनात् । तथा ^मर्यः मर्त्यः त्वा त्वाम् ^अनु ॥ जात्येकवचनम् ॥ ^अनु ^गावः । गावोऽपि त्वामनुगच्छन्ति । तथा ^कनीनां कन्यकानां स्त्रीणां ^भगः भाग्यं सौन्दर्यं त्वद्गम् ^अनु । तथा ^व्रातासः व्राताः संघात्मकाः अन्ये अश्वसमूहाः वस्वादिदेवगणाः वा त्वाम् ^अनु अनुसृत्य ^तव ^सख्यम् ^ईयुः सखिभावं गच्छन्ति । ^देवाः ऋत्विजो द्योतमाना देवा वा त्वामनुसृत्य ^ते ^वीर्यं वीरकर्म ^ममिरे स्तुत्या मान्ति । अतः सर्वोऽपि त्वाम् अनुसरः[2] त्वं तु सर्वस्य श्रेष्ठ इत्यर्थः ॥

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥ ९ ॥

हिरण्यऽशृङ्गः । अयः । अस्य । पादाः । मनःऽजवाः । अवरः । इन्द्रः । आसीत् ।
देवाः । इत् । अस्य । हविःऽअद्यम् । आयन् । यः । अर्वन्तम् । प्रथमः । अधिऽअतिष्ठत् ॥९॥

---

१. ङ-ञ१–'देवस्थाने' नास्ति । २. क्ष-ङ-ञ१-ञ-ट–अनुसरति; ञ–अनुसरतु ।

अयमश्वः ^v^हिरण्यशृङ्गः हितरमणीयशृङ्गो वा उन्नतशिरस्को हृदयरमणशृङ्गस्थानीयशिरोरुहो वा ^v^अस्य ^v^पादाः ^v^अयः अयोमयाः अयःपिण्डसदृशा इत्यर्थः । तथा ^v^मनोजवाः मनोवेगाः । अथवा एतदिन्द्रविशेषणम् । ईदृशस्याश्वस्य सामर्थ्यं प्रति मनोवेगः ^v^इन्द्रः अपि ^v^अवरः निकृष्टः ^v^आसीत् । किंच ^v^अस्य अश्वस्य ^v^हविरद्यं हविषः अदनं भक्षणम् ॥ स्वार्थिको यत् ॥ अदनयोग्यं हविर्वा अपेक्ष्य ^v^देवा ^v^इत् सर्वेऽपि देवाः ^v^आयन् प्राप्ताः । ^v^यः इन्द्रः ^v^अर्वन्तं[1] ^v^प्रथमः प्रथमभावी सन् ^v^अध्यतिष्ठत् अधिष्ठितवान् स्वहविष्ट्वेन[2] स्वकीयत्वेन वा आश्रितवानित्यर्थः । 'इन्द्र एणं प्रथमो अध्यतिष्ठत्' इति ह्युक्तम् ॥

ई॒र्मान्ता॑सः॒ सिलि॑कमध्यमासः॒ सं शूर॑णासो दि॒व्यासो॒ अत्याः॑ ।
हं॒साइ॑व श्रे॒णि॒शो य॑तन्ते॒ यदाक्षि॑षुर्दि॒व्यमज्म॒मश्वाः॑ ॥ १० ॥

ई॒र्मऽअ॑न्तासः । सिलि॑कऽमध्यमासः । सम् । शूर॑णासः । दि॒व्यासः॑ । अत्याः॑ ।
हं॒साःऽइ॑व । श्रे॒णि॒ऽशः । य॒त॒न्ते॒ । यत् । आक्षि॑षुः । दि॒व्यम् । अज्म॑म् । अश्वाः॑ ॥ १० ॥

अत्र अश्वसमूहस्तुतिद्वारेण अयं स्तूयते । ^v^ईर्मान्तासः ईरिताः प्रेरिताः अन्ताः येषां ते तथोक्ताः । विरलान्ता इत्यर्थः । ^v^सिलिकमध्यमासः संसृताः संगताः मध्यप्रदेशाः येषां ते तथोक्ताः । मध्ये निबिडा इत्यर्थः । अथवा शरीरस्यैते विशेषणे । ईर्म ईरितः पुरतो नुन्नः इत्यर्थः । तादृशः पृथुः अन्तो जघनप्रदेशो येषां ते तादृशाः । तथा सिलिकमध्यमासः । संसृतः संगतः संलग्नो मध्यभागो येषां ते तादृशाः । पुष्टत्वात् प्रौढपृष्ठाः संलग्नमध्याश्चेत्यर्थः । जघनपुरोभागावपेक्ष्य सिलिकमध्यमाः[3] इत्युक्तम् । सम् इत्ययमुपसर्गो यतन्ते इत्याख्यातेन संबन्धयितव्यः । ^v^शूरणासः विक्रमशीलाः ^v^दिव्यासः दिवि भवाः ^v^अत्याः अतनशीलाः । यद्यप्ययमश्वनाम तथाप्यश्वशब्दस्य वक्ष्यमाणत्वात् अयं यौगिकोऽवगन्तव्यः । ईदृशा अश्वाः ^v^श्रेणिशः । एकव्यापाराणां बहूनां समूहः श्रेणिरित्युच्यते । शीघ्रधावनाय श्रेणिशः पङ्क्तीभूय ^v^सं ^v^यतन्ते सम्यक् यत्नं कुर्वन्ति । तत्र दृष्टान्तः । ^v^हंसाइव । ते यथा श्रेणीभूताः ईर्मान्तासः इत्याद्युक्तरूपाः सन्तः अन्तरिक्षे गमनाय यतन्ते तद्वत् । कदा । उच्यते । ^v^यत् यदा ^v^अश्वाः ^v^दिव्यम् ^v^अज्मं गमनं गन्तव्यं वा मार्गम् ^v^आक्षिषुः व्याप्नुवन्ति तदा । अयं मन्त्रो यास्केनैवं व्याख्यातः—'ईर्मान्ताः समीरितान्ताः पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । सं शूरणासो दिव्यासो अत्याः । शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानम् । श्रेणिशः इति श्रेणिः श्रयतेः समाश्रिता भवन्ति । यदाक्षिषुर्यदापुर्दिव्यमज्ममजनिमाजिमश्वाः' ( निरु. ४. १३ ) इति ॥ ॥ १२ ॥

---

१. क्ष-ङ-ञ-ट-अर्वन्तम् अरणवन्तम् । २. ङ-स्वहविष्यत्वेन; ३. क्ष-ञ-ट-सिलिकमध्यमासः ।

**तव॒ शरी॑रं पतयि॒ष्ण्व॑र्व॒न्तव॑ चि॒त्तं वात॑इव॒ ध्रजी॑मान् ।**

**तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥ ११ ॥**

तव॑ । शरी॑रम् । प॒त॒यि॒ष्णु । अ॒र्व॒न् । तव॑ । चि॒त्तम् । वात॑ःऽइव । ध्रजी॑मान् ।

तव॑ । शृङ्गा॑णि । विऽस्थि॑ता । पु॒रु॒ऽत्रा । अर॑ण्येषु । जर्भु॑राणा । च॒र॒न्ति॒ ॥ ११ ॥

हे ᵛअर्वन् ᵛतव ᵛशरीरं ᵛपतयिष्णु पतनशीलं व्याप्तमित्यर्थः । तथा ᵛतव ᵛचित्तं मनः ᵛवात-इव ᵛध्रजीमान् शीघ्रगमनवायुरिव तद्वच्छीघ्रगमनानुकूलमित्यर्थः । किंच ᵛतव ᵛशृङ्गाणि शिरसो निर्गताः शृङ्गस्थानीयाः केशाः ᵛपुरुत्रा पुरुषु बहुषु प्रदेशेषु ᵛविष्ठिता विष्ठितानि विविधं स्थिताः । किंच त एव ᵛअरण्येषु ᵛजर्भुराणा मनोहराणि पूर्यमाणानि वा एवंभूताः केशाः ᵛचरन्ति । यद्वा । अत्र अश्वस्य शृङ्गाभावात् तद्वदुन्नतानि तेजांसि परिगृह्यन्ते ॥

आश्वमेधिके मध्यमेऽहनि अध्रिगुप्रैषे ' मा नो मित्रः ' इति सूक्तानन्तरम् ' उप प्रागाच्छसनम् ' इति द्वे ऋचौ शंसनीये । सूत्रितं च–' उप प्रागाच्छसनमिति द्वे ' ( आश्व. श्रौ. १०. ८ ) इति ॥

**उप॒ प्रागा॒च्छस॑नं वा॒ज्यर्वा॑ देव॒द्रीचा॒ मन॑सा॒ दीध्या॑नः ।**

**अ॒जः पु॒रो नी॑यते॒ नाभि॑र॒स्यानु॑ प॒श्चात्क॒वयो॑ यन्ति॒ रे॒भाः ॥ १२ ॥**

उप॑ । प्र । अ॒गा॒त् । शस॑नम् । वा॒जी । अर्वा॑ । दे॒व॒द्रीचा॑ । मन॑सा । दीध्या॑नः ।

अ॒जः । पु॒रः । नी॒य॒ते॒ । नाभि॑ः । अ॒स्य॒ । अनु॑ । प॒श्चात् । क॒वय॑ः । य॒न्ति॒ । रे॒भाः ॥ १२ ॥

अयम् ᵛअर्वा अरणकुशलः ᵛवाजी अश्वः ᵛशसनं विशसनस्थानम् ᵛउप ᵛप्रागात् उपप्रैति । किं कुर्वन् । ᵛदेवद्रीचा ᵛमनसा देवान् गच्छता मनसा ᵛदीध्यानः ध्यायन् । कदा । देवान् अस्मदवयवेन अर्चामि देवत्वं प्राप्नोमीति वा मनसि ध्यायन् । किंच अस्य पुरः पुरस्तात् ᵛनाभिः नहनं बन्धुभूत इत्यर्थः । यद्वा । अस्य बन्धनस्थानीयः अविमुक्तत्वात्[1] । एवंभूतः ᵛअजः ᵛपुरः ᵛनीयते पुरतः प्राप्यते ᵛअनु अनुसृत्य ᵛपश्चात् अनन्तरम् । अत्र यद्यप्युभयोः पर्यवसितोऽर्थः एक एव तथापि अजाश्वोभयानन्तर्यत्वप्रकटनाय[2] पदद्वयम् । यद्वा । अन्विति क्रियया संबध्यते । ᵛकवयः अनूचानाः ᵛरेभाः स्तोतारः ऋत्विजः ᵛयन्ति गच्छन्ति । ' ये वा अनूचानास्ते कवयः ' इति श्रुतेः । यद्वा । कवय इति मेधाविनाम, ' कविः मनीषी ' ( नि. ३. १५. १० ) इति तन्नामसु पठितत्वात् । रेभः इति स्तोतृनाम, ' रेभः जरिता ' ( नि. ३. १६. १ ) इति तत्र[3] पाठात् ॥

---

१. क्ष-ञ-ट–अवियुक्तत्वात् । २. क्ष-ङ-ञ-ट–अजाश्वयोः उभयानुवर्तित्वप्रकटनाय । ३. क–तन्नामसु ।

उप॒ प्रागा॑त्पर॒मं यत्स॒धस्थ॒मर्वाँ॒ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च ।
अ॒द्या दे॒वाञ्जुष्ट॑तमो॒ हि ग॒म्या अथा शास्ते॑ दा॒शुषे॒ वार्या॑णि ॥ १३ ॥

उप॑ । प्र । अ॒गा॒त् । प॒र॒मम् । यत् । स॒धऽस्थ॑म् । अर्वा॑न् । अच्छ॑ । पि॒तर॑म् । मा॒तर॑म् । च॒ ।
अ॒द्य । दे॒वान् । जुष्ट॑ऽतमः । हि । ग॒म्याः । अथ॑ । आ । शा॒स्ते॒ । दा॒शुषे॑ । वार्या॑णि ॥१३॥

vअर्वान् अरणकुशलोऽयमश्वः vउप vप्रागात् उपगच्छति । किम् । vयत् vपरमम् उत्कृष्टं vसधस्थं सहस्थानं सुकृतिभिरेकत्रनिवासयोग्यं स्वर्गाख्यं यदस्ति तत् । किमर्थम् । vपितरं vमातरं vच vअच्छ आभिमुख्येन प्राप्तुम् । हे अश्व vअद्य अस्मिन् काले vजुष्टतमः प्रीततमः स्वर्गं[1] प्राप्नोमीति[1] हर्षयुक्तः इत्यर्थः । एवंभूतः vदेवान् vगम्याः गच्छेर्देवान् । हिशब्दो यज्ञे उपयुक्तस्य पशोः स्वर्गप्राप्तेः 'सगर्भ्योऽनु सखा सयूथ्यः' ( तै. सं. १. २. ४. २ ) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः । vअथ अनन्तरं यजमानः vआ vशास्ते । कस्मै । vदाशुषे हविर्दत्तवते स्वस्मै । कानि । vवार्याणि वरणीयानि धनानि । यद्वा ॥ पुरुषस्य[2] व्यत्ययः[2] ॥ आ शास्ते प्रार्थये यजमानार्थम् ॥  ॥ १३ ॥

'अस्य वामस्य' इति द्विपञ्चाशदृचमष्टमं सूक्तं दैर्घतमसम् । अत्रेयमनुक्रमणिका—'अस्य द्विपञ्चाशदल्पस्तवं त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पञ्चपादं साकंजानां यद्वायत्रेऽयं स शिङ्क्ते सप्तार्धगर्भा गौरीरिति जगत्यः । एतदन्तं तु वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपङ्क्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमः । त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारि वाग्वाच इन्द्रं मित्रं सौर्यो द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः परानुष्टुप् सौरी पर्जन्याग्निदेवता वान्त्या सरस्वते सूर्याय वा' इति । अत्र स्तुत्याबहुत्वेन स्तुतिभागस्याल्पीयस्त्वादिदं सूक्तमल्पस्तवनम्[3] । न सूक्तान्तरवत् बहुस्तवम्[4] । इदमेव वैलक्षण्यं तुशब्देन द्योत्यते । अस्मिन् सूक्ते प्रायेण संशयोत्थापनादयो बहवोऽर्थाः प्रतिपाद्यन्ते । 'अचिकित्वाञ्चिकितुषः' इत्यनया संशयः उत्थाप्यते । 'पृच्छामि त्वा' इत्यत्र प्रश्नः प्रतीयते । 'इयं वेदिः' इत्यत्र प्रतिवचनम् । 'य ईं चकार' इत्यादिना ज्ञानप्रशंसा प्रतिपाद्यते । 'अपश्यं गोपाम्' इत्यादिना ब्रह्मसाक्षात्काररूपस्य[5] प्रशंसा । न क्षरति इत्यक्षरं ब्रह्म । 'द्वा सुपर्णा' इत्यादिना तस्य प्रशंसा । 'पञ्चपादं पितरं', 'साकंजानां सप्तथं', 'यद्गायत्रे अधि', 'अयं स शिङ्क्ते', 'सप्तार्धगर्भाः', 'गौरीर्मिमाय' इति षड्जगत्यः । 'समानमेतत्' इत्यनुष्टुप् । 'तस्याः समुद्राः' इति प्रस्तारपङ्क्तिः । तल्लक्षणं छन्दोग्रन्थे सूत्रितं—'प्रस्तारपङ्क्तिः पुरतः' ( पि. ३. ४. १ ) इति । पुरतः पूर्वार्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपङ्क्तिः इति सूत्रार्थः । अनुक्रमण्यामप्युक्तम्—'आद्यौ चेत्प्रस्तारपङ्क्तिः' ( अनु. ८. ६ ) इति । शिष्टा अनादेशपरिभाषया त्रिष्टुभः । 'गौरीर्मिमाय' इत्येतदन्तानां विश्वे देवा देवता । 'तस्याः समुद्राः' इत्यस्याः पूर्वार्धस्य वाग्देवता । उत्तरार्धस्य आपः । 'शकमयम्' इत्यस्याः पूर्वार्धस्य शकधूमः । 'उक्षाणं पृश्निम्' इत्युत्तरार्धस्य सोमो देवता । 'त्रयः केशिनः' इत्यस्या अग्निसूर्यवायवः । 'चत्वारि वाक्' इत्येषा वाग्देवताका । 'इन्द्रं मित्रं वरुणं', 'कृष्णं नियानम्' इत्येते सूर्यदेवत्ये । 'द्वादश प्रधयः' इत्यस्याः

१. क्ष-ञ-ट—स्वर्गप्राप्तौ ।  २. क्ष-ञ-ट—पुरुषव्यत्ययः ।  ३. क्ष-ङ-झ१-ञ-ट—सूक्तमल्पस्तवम् ।
४. च-बहुस्तवनम् ।  ५. झ१—ब्रह्मसाक्षात्काररूपमोक्षस्य ।

संवत्सरात्मा कालो देवता । ‘ यस्ते स्तनः ’ इत्यस्याः सरस्वती । ‘ यज्ञेन ’ इत्यस्याः साध्या देवता । ‘ समानमेतत् ’ इत्यस्याः सूर्यः पर्जन्यो वाग्नयो वा देवता । ‘ दिव्यं सुपर्णम् ’ इत्यस्याः सरस्वान् सूर्यो वा देवता । कृत्स्नसूक्तस्य विनियोगं शौनक आह—‘ स्तेयं कृत्वा द्विजो मोहात् त्रिरात्रोपोषितः शुचिः । सूक्तं जह्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषात् ’ ( ऋग्वि. १. १४४ ) इति ॥ महाव्रते वैश्वदेव-शस्त्रे वैश्वदेवं निविद्धानं द्विप्रतीकम् । तत्र ‘ अस्य वामस्य ’ इत्यादिकमेकचत्वारिंशदृचं प्रथमं प्रतीकम् । पञ्चमारण्यके सूत्रितम्—‘ अस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतम् ( ऐ. आ. ५. ३. २ ) इति ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥

अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ।
तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥ १ ॥

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसंबद्धो यच्छब्दोऽध्याहार्यः । योऽयं दिवि द्योतते तस्य [v]अस्य [v]वामस्य वननीयस्य संभजनीयस्य आरोग्यार्थिभिः सर्वैः सेवनीयस्य[1] [v]पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथा योऽयं दिवि द्योतते [v]तस्य अस्य [v]होतुः ह्वातव्यस्य आह्वानार्हस्यादित्यस्य [v]मध्यमः मध्यमस्थानः । मध्ये भवो वायुरुच्यते । आदित्याग्नी अपेक्ष्य अस्य मध्यमत्वम् । स च [v]अश्नः सर्वत्र व्याप्तः । न हि वायुरहितः कश्चित्प्रदेशोऽस्ति । तादृशः [v]भ्राता [v]अस्ति भ्रातृस्थानीयो भवति । यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत् । मध्यस्थानम्[2] अन्तरिक्षलोकं[2] हरतीति वा । वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते । पित्र्येण धनेन स्वार्जितेन वा भर्तव्यः[3] भवतीति भ्राता । मध्यमो वायुरपि वृष्ट्यर्थं रसैः भक्तव्यः[4] भवति । किंच [v]घृतपृष्ठः घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशः [v]भ्राता तस्य [v]तृतीयः अस्ति भवति । त्रयाणां पूरणस्तृतीयः । उक्तोभयापेक्षया तृतीयत्वम् । भ्रातृत्वं प्रतिपादितप्रकारेण अत्रापि द्रष्टव्यम् । रात्रौ सवितुस्तेजोभागस्य हरणात् दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तव्यत्वात्[5] वा भ्रातृत्वम् । [v]अत्र एषु भ्रातृषु मध्ये पुरोदेशे वा [v]विश्पतिं विशां प्रजानां पालयितारं [v]सप्तपुत्रं सर्पणरश्मिपुत्रोपेतम्[6]। ऐतिहासिकपक्षे ‘ अदितिः पुत्रकामा ’ इति प्रस्तुते मित्रावरुणादिषु अदितिपुत्रेषु अस्य आदित्यस्य सप्तमपुत्रत्वम् । ईदृशं महानुभावमादित्यम् [v]अपश्यम् अद्राक्षम् भावनया आत्मत्वेन साक्षात्करो-मीत्यर्थः । ‘ यद्योऽहं सोऽसौ योऽसौ सोऽहम् ’ इति श्रुतिः । एवं वा । अस्य वामस्य विश्व-स्योद्गरितुः स्रष्टुरित्यर्थः । पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तु-रित्यर्थः । परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति जगद्धारकत्वेन वर्तते । स

---

१. क्ष-झ१-ञ-ट—सेवनीयस्य योऽयं दिवि द्योतते तस्यास्य । २. क्ष-ञ-ट—मध्यमम् अन्तारिक्षम् । ३. क्ष-ख-च-ञ-ट-फ-व—भक्तव्यः । ४. ङ-ज-झ१—भर्तव्यः । ५. ङ-ज-झ१—भर्तव्यत्वात् । ६. क्ष-ञ-ट—सर्पणस्वभावरश्मिरूपपुत्रोपेतम्; झ१—सर्पणस्वभावं रश्मिपुत्रोपेतम् ।

च अश्वः व्यापनशीलः । ' वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि ' ( बृ. उ. ३. ७. २ ) इति श्रुतेः । वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम् । किंच अस्य परमेश्वरस्य तृतीयो घृतपृष्ठः । घृतमित्युदकनाम । तेन तत्कार्यं शरीरमुच्यते । तदेव पृष्ठं स्पर्शकं[1] वा यस्य स तादृशः । 'पृष्ठं स्पृशतेः' ( निरु. ४. ३ ) इति निरुक्तम् । यद्वा प्रदीप्तपृष्ठः । पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः । प्रकाशितशरीराभिमानीत्यर्थः[2] । न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत् स्पर्शनाविषयो भवति । अत्र एषु मध्ये विश्पतिं विशां प्रजानां पतिम् । उपलक्षणमेतत् । सर्वस्य पतिमित्यर्थः । 'सर्वस्य पतिः सर्वस्येशानः' इति श्रुतेः । सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम् । स्वमायया सृष्टसर्वलोकमित्यर्थः । अपश्यं पश्येयं साक्षात्करोमीत्यर्थः । अयमर्थः । स्वाधीनमायो जगत्कारणभूतः परमेश्वर एकः । तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ । तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः । एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यम् । तथापि स्वरसत्वाभावात् ग्रन्थविस्तरभयाच्च न लिख्यते । यत्र 'द्वा सुपर्णा' इत्यादौ स्फुटम् आध्यात्मिको[3] ह्यर्थः[3] प्रतीयते तत्र तत्र[4] प्रतिपादयामः । अयं मन्त्रो यास्केन व्याख्यातः ' अस्य वामस्य वननीयस्य पलितस्य पालयितुः ' ( निरु. ४. २६ ) इत्यादिना । तच्च व्याख्यानमत्रानुसंधेयम् ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥२॥

एकचक्रम् एकरथाङ्गोपेतम् । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वात् एकचक्रमित्युच्यते । रथं रंहणस्वभावं सूर्यस्य संबन्धिनं सप्त एतत्संख्याका अश्वाः युञ्जन्ति अनुबध्नन्ति वहन्ति अहोरात्रनिर्वाहाय । किं वस्तुतः सप्त नेत्याह । एकः अश्वः सप्तनामा एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा । एक एव वायुः सप्तरूपं धृत्वा वहतीत्यर्थः । वाय्वधीनत्वात् अन्तरिक्षसंचारस्य । एकचक्रमित्युक्तं कीदृशं तदित्यत आह । त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतम्[5] अजरम् अमरणधर्मकम् अनर्वम् अशिथिलम् । पुनस्तदेव विशेष्यते । यत्र यस्मिन् चक्रे इमा विश्वा भुवना इमानि प्रसिद्धानि सर्वाणि भूतजातानि अधि आश्रित्य तस्थुः तिष्ठन्ति । यद्वा । एकचक्रम् एकचारिणम् असाहाय्येन[6] संचरन्तं रथम् आदित्यमण्डलं सप्त युञ्जन्ति । सर्पणस्वभावाः सप्तसंख्या[7] वा[7] रश्मयः सप्तप्रकारकार्याः असाधारणाः परस्परविलक्षणाः षडृतवः । एकः साधारणः इत्येवम् । अथवा मासद्वयात्मकाः षट् अपरः अधिकमासात्मकः इत्येवं सप्तर्तवो युञ्जन्ति । एतस्य कार्यं निर्वहन्तीत्यर्थः । स चैकः असहायः अश्वो व्यापनशीलः आदित्यः सप्तनामा

---

१. क्ष-ङ-ज्ञ-ज्ञ१-ञ-ट—स्पर्शनीयं सर्वस्य स्पर्शकम् । २. क्ष-ज्ञ-ज्ञ१-ञ-ट—प्रकाशितशरीर इत्यर्थः । स्थूलशरीराभिमानीत्यर्थः । ३. ज्ञ—आध्यात्मिकोऽप्यर्थः । ४. क्ष-ज्ञ१-ञ-ट—तथा । ५. क्ष-ञ-ट—वलित्रयमध्यस्थितनाभिस्थानयिच्छिद्रत्रयोपेतम् । ६. क्ष-ख-च-ज-ज्ञ-ज्ञ-ञ-ट-त-फ-व—असहायेन । ७. ज्ञ—सप्तसंख्याकाः ।

सप्त रसानां संनमयितारो रश्मयो यस्य तादृशः सप्तर्षिभिः स्तूयमानो वा आदित्यो वहति धारयति भ्रमयतीत्यर्थः[1] । किम् । त्रिनाभि चक्रम् । तिस्रो नाभिस्थानीयाः संध्याः संबद्धा वा त्रय ऋतवो यस्य तत्तादृशम् । के ते । ग्रीष्मवर्षाहेमन्ताख्याः । यद्वा । भूतभविष्यद्वर्तमानाख्यास्त्रयः कालाः त्रिनाभयः । तद्विशिष्टं चक्रं चक्रवत् पुनःपुनः परिभ्रममाणं संवत्सराख्यं चक्रम् अजरं मरणरहितम्[2] । न हि कदाचिदपि कालो म्रियते 'अनादिनिधनः कालः' इति स्मृतेः । अनर्वम् अप्रतिहतम् । ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतम् अयमादित्यः पुनरावर्तयति[3] । संवत्सराद्यर्वाचीनानां तत्रैवान्तर्भावात् ततः युगादीनां[4] तदावृत्तिसाध्यत्वात् संवत्सरस्य चक्रत्वेन निरूपणम् । पुनः कीदृशं तत् । यत्र यस्मिन् चक्रे इमा विश्वा भुवना इमानि सर्वाणि भूतानि[5] अधितस्थुः आश्रित्य तिष्ठन्ति कालाधीनत्वात् सर्वस्य स्थितेः । ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् 'ज्ञानमोक्षाक्षरप्रशंसा च' इत्यनुक्रमण्यामुक्तम् । अयमपि मन्त्रो यास्केन 'सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम्' (निरु. ४. २७) इत्यादिना व्याख्यातः । तदत्राप्यनुसंधेयम् ॥

इ॒मं रथ॒मधि॒ ये स॒प्त त॒स्थुः स॒प्तच॑क्रं स॒प्त व॑ह॒न्त्यश्वाः॑ ।
स॒प्त स्वसा॑रो अ॒भि सं न॑वन्ते॒ यत्र॒ गवां॒ निहि॑ता स॒प्त नाम॑ ॥ ३ ॥

इ॒मम् । रथ॑म् । अधि॑ । ये । स॒प्त । त॒स्थुः । स॒प्तऽच॑क्रम् । स॒प्त । व॒ह॒न्ति॒ । अश्वाः॑ ।
स॒प्त । स्वसा॑रः । अ॒भि । सम् । न॒व॒न्ते॒ । यत्र॑ । गवा॑म् । नि॒ऽहि॑ता । स॒प्त । नाम॑ ॥ ३ ॥

इमम् उक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा रथं ये सप्त रश्मयः अधि तस्थुः अधिष्ठिताः । संवत्सरपक्षे अयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवाः अधितिष्ठन्ति । कीदृशं रथम् । सप्तचक्रम् । चकनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ताः अधिष्ठिताः अश्वाः व्यापनशीलाः सप्त वहन्ति निर्वहन्ति च । तादृशं रथं सप्त स्वसारः स्वयंसरणाः । स्वरादित्यः । तेन सारिताः परस्परं स्वसृभूता वा सप्तसंख्याकाः[6] रश्मय ऋतवश्च अभि सं नवन्ते आभिमुख्येन संगच्छन्ते[7] । असाधारणाः परस्परविलक्षणकार्याः[8] षडृतवः सर्वसाधारणः[9] एकः इति सप्तत्वम्[10] । यद्वा उक्तरूपाः मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तमः इति सप्तत्वम् । कीदृशो रथ इति तदुच्यते । यत्र यस्मिन् रथे उभयविधे गवां वाचां स्तुतिरूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वररूपाणि निहितानि । सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः । यद्वा । गवामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि । यत्र यासु स्वसृषु निहिता[11] स्वसारः परस्परस्वसृभूता देवनद्योऽभि सं नवन्ते[12] ॥

---

१. क्ष-ङ-ज्ञ-झ-झ१-ञ-ट–भ्रामयतीत्यर्थः । २. क्ष-ङ-झ१-ञ-ट–अमरणधर्मकम् । ३. झ१–पुनःपुनरावर्तयति । ४. क्ष-ङ-झ-ञ-ट–अधिकयुगादीनाम् । ५. क्ष-ङ-झ१-ञ-ट–भूतजातानि । ६. झ–सप्त सप्तसंख्याकाः । ७. क्ष-ङ-झ१-ञ-ट–सम्यक् नवीकुर्वन्ती । ८. ङ-झ१–परस्परविलक्षणाः । ९. ख-ज-फ-ब–सर्वधारणाः; ज्ञ-सर्वधारणः । १०. क्ष-ङ-झ१-ञ-ट–सप्तत्वम् । ते खलु पुनः पुनरावृत्ता अपि तं नवीकुर्वन्ति । ११. क्ष-ङ-झ१-ञ-ट–निहितानि ताः सप्त । १२. क्ष-ङ-झ१-ञ-ट–नवन्ते सम्यक् नवीकुर्वन्ति ।

**को द॑दर्श प्रथ॒मं जाय॑मानमस्थ॒न्वन्तं॒ यद॑न॒स्था बिभ॑र्ति ।**

**भूम्या॒ असु॒रसृ॑गा॒त्मा क्व॑ स्वि॒त्को वि॒द्वांस॒मुप॑ गा॒त्प्रष्टु॑मे॒तत् ॥ ४ ॥**

कः । द॒द॒र्श॒ । प्र॒थ॒मम् । जाय॑मानम् । अ॒स्थ॒न्ऽवन्त॑म् । यत् । अ॒न॒स्था । बिभ॑र्ति ।

भूम्याः॑ । असुः॑ । असृ॑क् । आ॒त्मा । क्व॑ । स्वि॒त् । कः । वि॒द्वांस॑म् । उप॑ । गा॒त् । प्रष्टु॑म् । ए॒तत् ॥ ४ ॥

एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्य अविषयत्वमाह । ᵛकः ᵛददर्श को द्रष्टुं शक्नुयात् । कदा । ᵛप्रथमं सृष्टेः पूर्वम् । अव्याकृतावस्थायामित्यर्थः । किम् । ᵛजायमानं प्रथमभावविकारमापन्नम् । उत्पद्यमानं प्रपञ्चमित्यर्थः । दुर्ज्ञेयत्वे हेतुमाह । ᵛयत् यस्मात् ᵛअस्थन्वन्तम् अस्थिमन्तं सशरीरम्[1] । उपलक्षणमेतत् । कार्यभावमापन्नमित्यर्थः । ᵛअनस्था अस्थि-रहिता अशरीरा सांख्यप्रसिद्धा प्रकृतिः वेदान्तप्रसिद्धा ईश्वरायत्ता माया ᵛबिभर्ति गर्भवदन्तर्धारयति । अव्याकृतावस्थायाम् अनस्थः अशरीरः परमेश्वरो बिभर्ति । यदा केवलः परमेश्वरो मायाशबलितः सन्निदं जगन्निर्मितवान् उत्पत्तिसमये[2] देहादिसहितस्य कस्यचिदभावात् को ददर्श । तदानीं मनो नित्यमात्मा च नित्यः तत्संयोगात् कश्चिदात्मा जानातीति चेत् सोऽपि न संभवतीत्यत आह । ᵛभूम्याः संबन्धि पार्थिवं स्थूलशरीरं ᵛअसुः प्राणः तदुपलक्षितं सूक्ष्मशरीरं ᵛअसृक् शोणितम् । एतत्सप्तधातूपलक्षकम्[3] । यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्[4] तदपेक्षयोक्तम् । ᵛआत्मा तैः संबद्धश्चेतनः ᵛक्व ᵛस्वित् कुत्रास्ते । न कश्चिदस्तीत्यर्थः । 'नान्यत्किंचन मिषत्' ( ऐ. आ. २. ४. १ ) इति श्रुतेः । ᵛविद्वांसं जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिकम् ᵛएतत् कारणं ᵛप्रष्टुं ᵛकः शिष्योऽल्पमतिः ᵛउप ᵛगात् उपगच्छति । तादृशो देहेन्द्रियसंघातरूपः आत्मा तस्मिन् समये कुत्रास्ति । प्रष्टा प्रतिवक्ता च उभावपि नास्तीत्यर्थः, 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतेः । यद्वा । प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श कः साक्षात्करोति । जायमानमस्थन्वन्तं मनुष्यम् अनस्थिकः परमेश्वरः सशरीरमशरीरः[5] यत् यस्मात् बिभर्ति । द्रष्टुरपि तत्कार्यत्वात् इति भावः । शिष्टं समानम् ॥

**पाकः॑ पृच्छामि॒ मन॒साऽवि॑जानन्दे॒वाना॑मे॒ना निहि॑ता प॒दानि॑ ।**

**व॒त्से ब॒ष्कये॑ऽधि स॒प्त तन्तू॒न्वि त॑त्निरे क॒वय॒ ओत॒वा उ॑ ॥ ५ ॥**

पाकः॑ । पृ॒च्छा॒मि॒ । मन॑सा । अवि॑ऽजानन् । दे॒वाना॑म् । ए॒ना । निऽहि॑ता । प॒दानि॑ ।

व॒त्से । ब॒ष्कये॑ । अधि॑ । स॒प्त । तन्तू॑न् । वि । त॒त्नि॒रे॒ । क॒वयः॑ । ओत॒वै । ऊँ इति॑ ॥ ५ ॥

---

१. झ१–शरीरम् । २. क्ष-ज्ञ-ञ-ट–तस्मिन् समये; झ१–अस्मिन् समये । ३. झ१–एतत्सप्तधातू-पलक्षणकम् । ४. क्ष-ङ-झ१ञ-ट–भूतत्रयप्रत्यक्षत्वात् । ५. ङ-ज्ञ-झ–शरीरमशरीरः ।

^v^पाकः पक्तव्यः अपक्वमतिः अहं ^v^मनसा असंस्कृतेन[1] ^v^अविजानन् अतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन् ^v^पृच्छामि प्रश्नं करोमि । अज्ञाने कारणमाह । ^v^एना एनानि ^v^पदानि संदेहास्पदानि तत्त्वानि ^v^देवानां ^v^निहितानि देवानामपि गूढानीत्यर्थः । यद्वा । देवानां पदानि तत्त्वानि[2] निधिवद्गोपयित्वा स्थापितानि । अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः । तानि कानीति उच्यते । ^v^वत्से सर्वस्य निवासभूते ^v^बष्कये । बडिति सत्यनाम । तत् कषतीति[3] बष्कयः[4] आदित्यः । यद्वा । बष्कयो नाम एकहायनो वत्सः । पुनरपि वत्सशब्दस्य पृथङ्निर्देशात् बष्कयशब्देन तत्कालमात्रं लक्ष्यते । तस्मिन्नादित्ये ^v^अधि अधिकं ^v^सप्त ^v^तन्तून् तायमानान् सप्त सोमसंस्थान् ^v^कवयः मेधाविनो यजमानाः ^v^ओतवै जगद्रूपतिर्यक्तन्तून् वेतुं ^v^वि ^v^तत्निरे वितन्वन्ति । यद्वा । सप्त तन्तवः सप्त छन्दांसि । तानि वितन्वन्ति । किमर्थम् । ओतवै सप्तसोमसंस्थारूपतिर्यक्तन्तुसंतानाय[4] । यज्ञनिर्माणायेत्यर्थः । यज्ञानां स्थितेः सूर्याधीनत्वात् इति भावः । ईदृशं तत्त्वं पृच्छामीत्यर्थः ॥ ॥ १४ ॥

अचि॑कित्वाञ्चि॒कितु॑षश्चि॒दत्र॑ क॒वीन्पृ॑च्छामि वि॒द्मने॒ न वि॒द्वान् ।
वि यस्त॒स्तम्भ॒ षळि॒मा रजां॑स्य॒जस्य॑ रू॒पे किमपि॑ स्वि॒देक॑म् ॥ ६ ॥

अचि॑कित्वान् । चि॒कि॒तुषः॑ । चि॒त् । अत्र॑ । क॒वीन् । पृ॒च्छा॒मि॒ । वि॒द्मने॑ । न । वि॒द्वान् ।
वि । यः । त॒स्तम्भ॑ । षट् । इ॒मा । रजां॑सि । अ॒जस्य॑ । रू॒पे । किम् । अपि॑ । स्वि॒त् । एक॑म् ॥ ६ ॥

^v^अचिकित्वान् देवतातत्त्वमजानन्नहं ^v^चिकितुषः विशेषेण तत्त्वं जानतः ^v^कवीन् क्रान्तदर्शिनः अधिगतपरमार्थान् ^v^अत्र अस्मिन् तत्त्वविषये[5] ^v^पृच्छामि । किमर्थम् । ^v^विद्मने वेदनाय परमार्थज्ञानाय । किं जानन्नेव पराभवाद्यर्थं नेत्याह । ^v^विद्वान् ^v^न पृच्छामि अपि तु अज्ञानादेव । ^v^यः परमेश्वरः ^v^तस्तम्भ स्तम्भितवान् नियमितवान् । ' अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय ' ( छा. उ. ८. ४. १ ) इति श्रुतेः । किम् । ^v^इमा इमानि ^v^षट् ^v^रजांसि लोकान्[6] रञ्जनात्मकान् । ' लोका रजांस्युच्यन्ते ' ( निरु. ४. १९ ) इति निरुक्तम् । यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावात् षडित्युक्तम् । ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्टः इति । उच्यते । ^v^अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणः ^v^रूपे स्वरूपे ^v^एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं ^v^किमपि ^v^स्वित् किं स्विदेव । तत्र केनाप्यधिगन्तुं शक्यमित्यर्थः । कैश्चिद्देवोपासकैः अर्चिरादिमार्गेण गन्तव्यत्वात् इति भावः । यद्वा । षड्रजांसि विलक्षणाः षड्ऋतवः । तान्यस्तम्भयत्त्वम् । अजस्य गमनशीलस्य जन्मरहितस्य वा आदित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डले

---

१. ख-फ-व–संहृतेन । २. क्ष-ञ-ट–तत्त्वानि निहितानि; ङ-झ१–तत्त्वानि विहितानि । ३. क्ष-झ१-ञ-ट–करोतीति । ४. क्ष-झ१-ञ-ट–बष्कयः आदित्यः तस्मिन्नप्यधिकं सप्ततन्तून् तायमानान् सप्तसोमसंस्थाः कवयो मेधाविनो यजमानाः ओतवै जगल्लक्षणवस्त्रनिर्माणाय वितत्निरे वितन्वन्ति चित्तशुद्धिद्वारा तत्त्वज्ञानोपयोगायेति शेषः । यद्वा । यस्मिन् बष्कयो नाम एकहायनो वत्सः पुनरपि वत्सशब्दस्य पृथङ्निर्देशात् । संवत्सरधारकभूते बष्कशब्देन तत्कालमात्रं लक्ष्यते । वत्से सर्वस्य निवासयोग्ये आदित्ये कवयः सप्ततन्तून् सप्तसंस्थारूपान् यागान् वितन्वन्ति आय (त) तन्तुस्थानीयान् ( झ१–आयन् तन्तून् स्थानीयान् ) कुर्वन्ति । किमर्थम् । ओतवै जगद्रूपतिर्यक्तन्तून् छेत्तुम् । ५. क्ष-ङ-झ१-ञ-ट–तत्त्वविशेषे । ६. क्ष-ञ-ट–षड्लोकान् ।

एकमद्वितीयं किमपि स्वित्[1]। यत्किंचिद्वाङ्मनसागम्यं तत्त्वमस्ति तत्पृच्छामि । 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' ( छा. उ. १.६.६ ) इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः। अथवा षडिमानि रजांसि त्रिविधान् भूलोकांश्च यस्तस्तम्भ । 'तिस्रो भूमीर्धारयन् त्रीरुत द्यून्' ( ऋ. सं. २ २७. ८) इति निगमः । तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि[2] जगति किमपि स्विदेकम् एकात्मकमस्तीति प्रश्नः । अविशेषमस्तिनाममात्रम् एकरूपमस्तीत्युत्तरविवक्षया प्रश्नः । 'अस्तीत्येवोपलब्धव्यम्' ( क. उ. २. ६. १३ ) इति श्रुतेः ॥

**इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।**

**शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ७ ॥**

इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहितम् । पदम् । वेरिति वेः ।

शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥७॥

ᵛइह इदानीम् ᵛईम् एतद्वक्ष्यमाणं तत्त्वम् ᵛअङ्ग क्षिप्रमविचारेण ᵛब्रवीतु। कः। ᵛयः ᵛवेद सः। कीदृशं तत् । ᵛअस्य पुरतो दृश्यमानस्य ᵛवामस्य वननीयस्य ᵛवेः गन्तुः[3] आदित्यस्य ᵛपदं सर्वैः गन्तव्यं स्वरूपं ᵛनिहितं गूढं वर्तते। किंच अस्य आदित्यस्य ᵛशीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा ᵛगावः केचन वर्षकालीनाः[4] रश्मयः ᵛक्षीरम् उदकं ᵛदुह्रते क्षरन्ति । ᵛवव्रिम्। रूपनामैतत् । रूपं ᵛवसानाः आच्छादयन्तः अतिविस्तरेण तेजसा तपन्तः केचन ᵛअस्य गावो रश्मयः ᵛउदकं स्वसृष्टं ᵛपदा सृष्टेनैव मार्गेण ᵛअपुः पिबन्ति भूमिं निरुदकां कुर्वन्तीत्यर्थः । तस्य स्वरूपं ब्रवीतु इत्यन्वयः ॥

**माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।**

**सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥**

माता । पितरम् । ऋते । आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे ।

सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा । नमस्वन्तः । इत् । उपऽवाकम् । ईयुः ॥ ८ ॥

ᵛमाता सर्वस्य निर्मात्री पृथिवी ᵛपितरं पालकं द्युलोकं तत्स्थं[5] द्युलोकस्थमादित्यमित्यर्थः । तम् ᵛआ ᵛबभाज आभजते । किमर्थम् । ᵛऋते उदके यज्ञे वा निमित्तभूते सति । केन द्वारेण । ᵛधीती धीत्या कर्मणा यागादिरूपेण । स्वकीयेन आज्यसोमादिहविषा तर्पयतीत्यर्थः । ᵛअग्रे ततः पूर्वं पिता च ᵛमनसा अस्याम् अभिप्रायवता चेतसा ᵛसं ᵛजग्मे ᵛहि संश्लिष्टो वर्तते खलु वृष्टिमकरोदित्यर्थः । अनन्तरं ᵛसा माता ᵛबीभत्सुः गर्भबन्धनेच्छावती ᵛगर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन ᵛनिविद्धा नितरां विद्धा[6] आसीत् । यद्वा । गर्भे रसः औषध्याद्युत्पादनसमर्थमुदकं यस्याः सा तादृशी उदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता[7] भवति

---

१. ख-च-ज-फ-व—स्वित् किंस्वित् । २. क-फ—नानाविधाकारभाजि । ३. क्ष-ञ-ट—मन्तुः । ४. क्ष-ञ-ट—वर्षकाले; झ—वर्षाकालीनाः । ५. च—तत्स्थे तच्छब्दः; क्ष-झ१-ञ-ट—तत्रस्थे तच्छब्दः । ६. च—युक्ता । ७. क्ष-ञ-ट—विद्धा दारिता ।

बीजावापार्थम् । अत्रायं समाधिः । या काचन योषिदपत्यार्थं स्वपतिं युवानं यौति स च तस्यामनुरागयुक्तः संगतो भवति सा चान्तर्वत्नी सती पुत्रान् जनयतीति तद्वदत्रापि । अनन्तरं ᵛनमस्वन्तः ᵛइत् भाविव्रीहिप्रियङ्ग्वाद्यन्नवन्तः एव ᵛउपवाकम् उपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनम् ᵛईयुः प्राप्नुवन्ति । यद्वा । हविर्लक्षणान्नवन्तः उपेत्य वचनं प्रैषादिरूपमीयुः । वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुरित्यर्थः ॥

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तरिति । अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥

ᵛमाता । निर्मीयन्ते अस्मिन् भूतानीति माता द्यौः । ᵛदक्षिणायाः अभिमतपूरणसमर्थायाः पृथिव्याः ᵛधुरि निर्वहणे ᵛयुक्ता ᵛआसीत् वर्षणाय[1] समर्थाभूदित्यर्थः । कथमिति तदुच्यते । ᵛगर्भः गर्भस्थानीयः उदकसंघः ᵛवृजनीषु उदकवत्सु मेघपङ्क्तिषु ᵛअन्तः मध्ये ᵛअतिष्ठत् तिष्ठति । अनन्तरं ᵛवत्सः पुत्रस्थानीयः उदकसंघः ᵛत्रिषु ᵛयोजनेषु मेघरश्मिवायुषु संयुक्तेषु सत्सु ᵛअमीमेत् वर्षणसमये शब्दयति । अनन्तरं ᵛविश्वरूप्यं विश्वरूपवतीं ᵛगाम् ᵛअनु ᵛअपश्यत् अनुक्रमेण पश्यति वर्षतीत्यर्थः । यद्वा । त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रति अमीमेत् । अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिम् अपश्यत् पश्यति ॥

तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥

तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति । मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदम् । वाचम् । अविश्वऽमिन्वाम् ॥ १० ॥

ᵛएकः प्रधानभूतः असहायो वा पुत्रस्थानीयः आदित्यः संवत्सराख्यः कालो वा ᵛतिस्रः ᵛमातॄः सस्यवृष्ट्याद्युत्पादयित्रीः । क्षित्यादिलोकत्रयमित्यर्थः । तथा ᵛत्रीन् ᵛपितॄन् जगतां पालयितॄन् लोकत्रयाभिमानिनः अग्निवायुसूर्याख्यान् ᵛबिभ्रत् सन्[2] ᵛऊर्ध्वः ᵛतस्थौ उन्नतः अत्यन्तदीर्घस्तिष्ठति भूतभविष्यदाद्यात्मना । सूर्यपक्षे सर्वेभ्य उन्नतः । ᵛईम् एनं ᵛन ᵛअव ᵛग्लपयन्ति ग्लानिं नैव कुर्वन्ति । न हि कालः आदित्यो वा अन्येन पराभूयते । ᵛदिवः ᵛपृष्ठे द्युलोकस्य उपरि अन्तरिक्षे ᵛमन्त्रयन्ते गुप्तं परस्परं भाषन्ते देवाः । किम् । ᵛविश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां वा ᵛअविश्वमिन्वाम् असर्वव्यापिनीं ᵛवाचं गर्जितलक्षणाम् ᵛअमुष्य आदित्यस्य संबन्धिनीं मन्त्रयन्ते इत्यर्थः ॥ ॥ १५ ॥

---

१. क्ष-ज्ञ१-ञ-ट—प्रवर्षणाय । २. क्ष-ज्ञ१-ञ-ट—धारयन् ।

द्वाद॑शारं न॒हि तज्जरा॑य॒ वर्व॑र्ति च॒क्रं परि॒ द्यामृ॒तस्य॑ ।
आ पु॒त्रा अ॑ग्ने मिथु॒नासो॒ अत्र॑ स॒प्त श॒तानि॑ विं॒शति॑श्च तस्थुः ॥ ११ ॥

द्वाद॑शऽअरम् । न॒हि । तत् । जरा॑य । वर्व॑र्ति । च॒क्रम् । परि॑ । द्याम् । ऋ॒तस्य॑ ।
आ । पु॒त्राः । अ॒ग्ने॒ । मि॒थु॒नासः॑ । अत्र॑ । स॒प्त । श॒तानि॑ । विं॒शतिः । च॒ । त॒स्थुः॒ ॥ ११ ॥

ᵛऋतस्य उदकस्य सत्यात्मकस्य वा आदित्यस्य ᵛचक्रं पुनःपुनःक्रमणशीलं मण्डलाख्यं रथचक्रं[1] वा ᵛवर्वर्ति पुनःपुनर्वर्तते संचरति । कुत्र । ᵛद्यां ᵛपरि द्युलोकस्यान्तरिक्षस्य परितः । कीदृशं तत् । ᵛद्वादशारं द्वादशसंख्याकमेषादिराश्यात्मकैः मासात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तम् । किंच ᵛतत् चक्रं ᵛनहि ᵛजराय नैव खलु जरायै[2] भवति[2] । हे ᵛअग्ने सर्वदा गमनयुक्त[3] आदित्य । यद्वा । अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वात् असावप्यग्निरित्युच्यते । ᵛअत्र अस्मिन् त्वदीये[4] चक्रे ᵛमिथुनासः स्त्रीपुंसरूपेण परस्परं मिथुनभूताः ᵛसप्त ᵛशतानि ᵛविंशतिश्च विंशत्युत्तरसप्तशतसंख्याकाः ᵛपुत्राः पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात् त्रातारो वा अहोरात्ररूपाः ᵛतस्थुः तिष्ठन्ति निष्पद्यन्ते । षष्ठ्यधिकशतत्रयसंख्याकानि अहानि तावत्यः एव रात्रयः इत्येवं तद्विभागः । ' सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानः ' ( ऐ. आ. ३. २. १ ) इत्यारण्यकम् ॥

पञ्च॑पादं पि॒तरं॒ द्वाद॑शाकृतिं दि॒व आ॑हुः॒ परे॒ अर्धे॑ पुरी॒षिण॑म् ।
अथे॒मे अ॒न्य उप॑रे विचक्ष॒णं स॒प्तच॑क्रे॒ षळ॑र आहु॒रर्पि॑तम् ॥ १२ ॥

पञ्च॑ऽपादम् । पि॒तर॑म् । द्वाद॑शऽआकृतिम् । दि॒वः । आ॒हुः॒ । परे॑ । अर्धे॑ । पु॒री॒षिण॑म् ।
अथ॑ । इ॒मे । अ॒न्ये । उप॑रे । वि॒ऽच॒क्ष॒णम् । स॒प्तऽच॑क्रे । षट्ऽअ॑रे । आ॒हुः॒ । अर्पि॑तम् ॥ १२ ॥

ᵛपञ्चपादं पञ्चसंख्याकर्त्वात्मकपादोपेतम् । एतत् हेमन्तशिशिरयोः एकत्वाभिप्रायम् । ᵛपितरं सर्वस्य प्रीणयितारं[5] ᵛद्वादशाकृतिं द्वादश मासा एवाकृतयो यस्य तादृशं ᵛपुरीषिणं वृष्ट्युदकेन तद्वन्तं प्रीणयितारं[6] वा । पुरीषमित्युदकनाम । उक्तलक्षणं संवत्सरचक्रं ᵛदिवः द्युलोकस्य ᵛपरे ᵛअर्धे । तात्स्थ्यात्ताच्छब्द्यम् । परस्मिन्नर्धे अन्तरिक्षलक्षणे अवस्थितः आदित्यः इत्यर्थः । तस्मिन् अर्पितम् ᵛआहुः । एतदुत्तरत्र स्थितमत्राप्यनुषज्यते । यद्यत्रार्पितं तत्तदधीनम् अतः संवत्सरं सूर्यायत्तमाहुरित्यर्थः । ᵛअथ ᵛइमे अपि च ᵛअन्ये केचन वेदवादिन एवमाहुः । किमिति । ᵛउपरे । उपरमन्ते अस्मिन् उपरताः प्राणिनः अत्र इति वा उपरः संवत्सरः तस्मिन् । कीदृशे । ᵛसप्तचक्रे । सप्त आदित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः । यद्वा । अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त सप्त चक्राणि पुनःपुनःक्रममाणानि[7] यस्य तादृशे । ᵛषळरे षडृतवः एव अरा नाभौ प्रत्यृताः संबद्धाः यस्य तथोक्तलक्षणे संवत्सरे रथे ᵛविचक्षणं विविधदर्शनकरमादित्यम् ᵛअर्पितम् ᵛआहुः ।

---

१. क्ष-झ१-अ-ट—चक्रं रथचक्रम् । २. क्ष-झ१-अ-ट—जरते जीर्यते वा । ३. क्ष-ङ-झ१-अ-ट—गमनशील । ४. क्ष-झ१-अ-ट—युष्मदीये । ५. झ—पालयितारम् । ६. झ१-प्रणयितारम् । ७. क्ष-ङ-अ-ट—पुनःपुनःक्रमणानि ।

एतदुक्तं भवति। अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेः तीव्रमन्दादिभावस्य च कालाधीनत्वात्तद्धीनमाहुः। अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात् तदायत्तत्वमाहुः इति[1] ॥

पञ्चा॑रे च॒क्रे प॑रि॒वर्त॑माने॒ तस्मि॒न्ना त॑स्थु॒र्भुव॑नानि॒ विश्वा॑ ।
तस्य॒ नाक्ष॑स्तप्यते॒ भूरि॑भारः स॒नादे॒व न शी॑र्यते॒ सना॑भिः ॥ १३ ॥

पञ्च॑ऽअरे । च॒क्रे । प॒रि॒ऽवर्त॑माने । तस्मि॑न् । आ । त॒स्थुः । भुव॑नानि । विश्वा॑ ।
तस्य॑ । न । अक्षः॑ । त॒प्य॒ते॒ । भूरि॑ऽभारः । स॒नात् । ए॒व । न । शी॒र्य॒ते॒ । सऽना॑भिः ॥१३॥

पञ्चारे पञ्चर्तुरूपैः अरैर्युक्ते चक्रे संवत्सरात्मके परिवर्तमाने संवत्सरपरिवत्सरादिरूपेण पुनःपुनः[2] आवर्तमाने[3] सति तस्मिन् कालचक्रे विश्वा भुवनानि सर्वाणि भूतजातानि[4] वर्तन्ते इत्यर्थः। किंच तस्य चक्रस्य मध्ये वर्तमानः अक्षः भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते न पीड्यते। किंच सनादेव सनातनः एव सनाभिः समाननाभिकः सर्वदा एकरूपनाभिरसौ न शीर्यते न भिद्यते। यथा लौकिकरथाक्षः भारेण भग्नो भवति अक्षघातेन च नाभिर्विवृता भवति तद्वदत्रापि[5] नास्तीत्यर्थः ॥

सने॑मि च॒क्रम॒जरं॒ वि वा॑वृत उत्ता॒नायां॒ दश॑ यु॒क्ता व॑हन्ति ।
सूर्य॑स्य॒ चक्षू॒ रज॑सै॒त्यावृ॑तं॒ तस्मि॒न्नार्पि॑ता॒ भुव॑नानि॒ विश्वा॑ ॥ १४ ॥

सऽने॑मि । च॒क्रम् । अ॒जर॑म् । वि । व॒वृ॒ते॒ । उ॒त्ता॒नाया॑म् । दश॑ । यु॒क्ताः । व॒ह॒न्ति॒ ।
सूर्य॑स्य । चक्षुः॑ । रज॑सा । ए॒ति॒ । आऽवृ॑तम् । तस्मि॑न् । आर्पि॑ता । भुव॑नानि । विश्वा॑ ॥१४॥

सनेमि समाननेमि एकप्रकारबहिर्वलयमक्षीणनेमि चक्रं संवत्सराख्यम् अजरं सदातनमपि[6] जरारहितं वि ववृते पुनःपुनर्विशेषेण वर्तते। उत्तानायाम् ऊर्ध्वतनायाम् ईषायाम् उपरिविस्तृतभूम्यां[7] वा दश इन्द्रादयः पञ्च लोकपालाः निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णाः मिलित्वा दशसंख्याकाः युक्ताः स्वस्वव्यापारयुक्ताः वहन्ति निर्वहन्ति[8]। कृत्स्नं जगन्निर्वहन्तीत्यर्थः। तन्निर्वाहार्थत्वात् कालस्य। किंच सूर्यस्य आदित्यस्य चक्षुः ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम्। 'चक्षुः ख्यातेर्वा चष्टेर्वा' ( निरु. ४. ३ ) इति निरुक्तम्। रजसा वृष्ट्युदकेन आवृतं व्याप्तम् एति गच्छति। 'उदकं रज उच्यते' ( निरु. ४. १९ ) इति यास्कः। तादृशे[9] मण्डले विश्वा भुवनानि सर्वाणि भूतजातानि आर्पिता अर्पितानि तदधीनत्वात्तेषाम् ॥

---

१. क्ष-ञ-ट–'इति' नास्ति। २. झ१–'पुनःपुनः' नास्ति; ३. क्ष-ङ-ञ-ट–परिवर्तमाने। ४. क्ष-ञ-ट–भूतजातानि अर्पिता अर्पितानि; ङ-झ१–भूतजातानि आवित तदधीनानि। ५. क्ष-ङ-झ१-ञ-ट–'तद्वदत्र'। ६. च–सनातनमपि। ७. क्ष-ञ-ट–उपरि विस्तृतायां भूम्याम्। ८. ङ-झ१–निर्वाहयन्ति। ९. क्ष-ङ-झ१-ञ-ट–तदेतस्मिन् तादृशे।

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।
तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥ १५ ॥

vसाकंजानाम् एकस्मादादित्यात् सहोत्पन्नानां सप्तानामृतूनां मध्ये vसप्तथं सप्तममृतुम् ॥ 'थट् च च्छन्दसि' (पा. सू. ५. २. ५०) इति थट् ॥ vएकजम्[1] एकेनोत्पन्नम् vआहुः कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन[2] वसन्ताद्याः षडृतवो भवन्ति । अधिकमासेन एकः[3] उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मन्तव्यम् । 'अस्ति त्रयोदशो मास इत्याहुः' (तै. सं. ६. ५. ३. ४) इति श्रुतेः । तदेवोच्यते । vषळिद्यमाः । इच्छब्द एवकारार्थः । षडेव ऋतवः मासद्वयरूपाः vऋषयः गन्तारः । ते च vदेवजाः देवादादित्यात्[4] जाताः vइति एवमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः[5] । 'निःसूर्योऽधिकमासो मण्डलं तपते रवेः' इत्यादिस्मृतेः । तस्मात् षडेव देवजाः अदेवजः एकः । vतेषाम्[6] ऋतूनां स्वरूपाणि vइष्टानि सर्वलोकाभिमतानि vधामशः तत्तत्स्थाने vविहितानि पृथक् पृथक् स्थापितानि vरूपशः रूपभेदेन vविकृतानि विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः– 'स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्माय' (तै. सं. ७. २. १०. १) इत्यादि[6] । vस्थात्रे अधिष्ठात्रे तदर्थाय vरेजन्ते चलन्ति । जगद्व्यवहाराय पुनःपुनरावर्तन्ते इत्यर्थः ॥ ॥ १६ ॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥ १६ ॥

स्त्रियः । सतीः । तान् । ऊँ इति । मे । पुंसः । आहुः । पश्यत् ।
अक्षण्ऽवान् । न । वि । चेतत् । अन्धः ॥ कविः । यः । पुत्रः । सः । ईम् ।
आ । चिकेत । यः । ता । विऽजानात् । सः । पितुः । पिता । असत् ॥ १६ ॥

vमे मदीया या दीधितयः[7] vस्त्रियः संस्त्यानवत्यः योषितः vसतीः सत्यः । योषिद्वदुदकरूपगर्भधारणात् स्त्रीत्वम् । एषां रश्मीनाम् आविष्टलिङ्गत्वात् स्त्रीलिङ्गता । vतान् vउ तान् रश्मीनेव vपुंसः vआहुः प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः । प्रतिनिर्देशापेक्षया पुंलिङ्गता । अमुमर्थम् अत्यन्तनिगूढम् vअक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चिन्महान् vपश्यत्[8] जानाति । vअन्धः अतथारूपः स्थूलदृष्टिः

---

१. क्ष-ञ-ट–इममेकजम् । २. क्ष-ङ-ञ-ट–द्वयद्वयमेलनेन । ३. क्ष-ञ-ट–एकेन । ४. क्ष-ङ-झ१-ञ-ट–देवेन आदित्येन । ५. क्ष-झ१-ञ-ट–देवजत्वाभावात् । ६. क्ष-ङ-झ१-ञ-ट–तेषाम् ऋतूनां संबन्धीनि इष्टानि सर्वलोकाभिमतानि अहोरात्राणि धामशः तत्तत्स्थाने वृष्ट्युदकानि ( क्ष-ञ-ट–प्रत्यृतु तानि ) विहितानि पृथक् पृथक् स्थापितानि ( क्ष-ञ-ट–पृथकुस्थानि तानि तानि ) च रूपशः स्वरूपेण शुक्लकृष्णरूपभेदेन । ७. क्ष-ङ-झ१-ञ-ट–रश्मयः । ८. क्ष-ङ-झ१-ञ-ट–पश्यत पश्येत ।

vन vवि vचेतत् न विचेतयति न[1] जानाति[1]। किंच vयः vकविः क्रान्तदर्शी vपुत्रः स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति vसः vईं स एव पुत्रः। यद्वा। ईम् एनमर्थम्। स्त्रीणां सतीनां पश्चात् पुरुषभावम् vआ vचिकेत सर्वतो जानाति। पित्रोः स्थितिं पुत्र एव जानाति नान्यः। vयः कश्चित् vता तानि vविजानात् स्त्रीपुरुषपुत्ररूपाणि जानीयात् vसः vपितुः vपिता vअसत्। पिता वृष्ट्या जगत्पालको रश्मिसमूहः। तस्यापि पिता आदित्यः स[2] भवति[2]। आदित्य एव भवतीत्यर्थः। यद्वा। लौकिकोक्तिरियम्। यस्तानि जानाति स एवं भवति। स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति। पुत्रपौत्रादिसहितः चिरकालं[3] जीवी[3] भवति। इत्यधिदैवतम्॥ अथाध्यात्मम्। याः इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आहुर्लौकिकाः तान् उ तानेव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः। कथमन्यस्य अन्यभावः उच्यते। एकस्यैव निरस्तसमस्तोपाधिकस्य आत्मनः तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः। श्रूयते हि– 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' (श्वे. उ. ४. ३) इत्यादि। स्त्रीत्वं पुंस्त्वं च उभयमपि वस्तुतो नास्तीत्युक्तं भवति। श्रुतिरपि तदभावं बोधयति – 'नैव स्त्री न पुमानेष नैव चायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स चोद्यते' (श्वे. उ. ५. १०) इति। द्वितीयः पादः पूर्ववत्। किंच पुत्रो वयसाल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात् ईम् इममर्थं स विचिकेत जानाति। एवमुक्तलक्षणस्य परमात्मनः ता तानि स्त्रीत्वपुंस्त्वादीनि यो विजानात् औपाधिकानि जानीयात् स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पिता असत् पितृवत् पूज्यो भवति। उक्तमर्थमभिप्रेत्य ताण्डकब्राह्मणं— 'शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत' इत्युपक्रम्य 'ते देवानपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृत्' (ता. ब्रा. १३. ३. २४) इति। मन्त्रद्रष्टुरेव किल पितृत्वं तत्त्ववित् पितुः पितासदिति किमाश्चर्यम् इत्यभिप्रायः॥

**अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात्।**

**सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे अन्तः॥ १७॥**

अवः। परेण। परः। एना। अवरेण। पदा। वत्सम्। बिभ्रती। गौः। उत्। अस्थात्।

सा। कद्रीची। कम्। स्वित्। अर्धम्। परा। अगात्।

क्व। स्वित्। सूते। नहि। यूथे। अन्तरिति॥ १७॥

अत्र अग्नौ हूयमानाहुतिर्गोरूपेण स्तूयते। vगौः गोरूपा गमनशीला एषा आहुतिसंघेन[4] पोष्यं vवत्सं[4] वत्सस्थानीयमग्निम् vअवः अवस्तात् अधोदेशे vपरेण vपदा पादद्वयेन स्वावयवेन आकृष्य vबिभ्रती धारयन्ती तथा vपरः परस्तात् उपरिदेशे vएना अनेन vअवरेण च पदा पादद्वयेन आकृष्य तमेव वत्सं बिभ्रती vउदस्थात् सूर्यं प्रति उत्तिष्ठति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' (मनु. ३. ७६) इति स्मृतेः। अथैवं कृतवती vसा आहुतिः vकद्रीची क्व गतेत्यनिश्चयगमना। आदित्यं प्राप्तवतीत्यर्थः। vकं vस्वित् कं[5] फलभाजं पुरुषं प्रति vअर्धम् अर्धमार्गम् आगत्य[6]। यद्वा।

---

१. क्ष-ञ-ट–ज्ञातुमर्हति। २. क्ष-ञ-ट–असत् भवति। ३. क्ष-ङ-च-ज्ञ-झ-झ१-ञ-ट–चिरकालजीवी। ४. क-ख-ज-फ-व–आहुतिसंस्थेन पोष्यं वत्सम्; क्ष-ङ-झ१-ञ-ट–आहुतिवत्सं (?) स्तनपोष्यम्। ५. क्ष-ञ-ट–एकम्। ६. ङ-झ१–आदित्यम्।

अर्धमृद्धम्। ᵛपरागात् परागच्छति। आगत्य च ᵛक ᵛस्वित् ᵛसूते कुत्र प्रदेशे फलमुत्पादयति। ᵛनहि इतरगोवत् इयं ᵛयूथे ᵛअन्तः सजातीयगोमध्ये सूते। साधारण्येन यत्र क्वचिन्न सूते अपि तु कस्मिंश्चिदनुष्ठातरि। अतः स महान् को नु खल्विति। यद्वा। आदित्यरश्मिसमूहः एव गोरूपेण स्तूयते। गौः उक्तलक्षणा रश्मिरूपा गौः वत्सं वत्सवद्रक्षणीयं यजमानम् उक्तक्रमेण बिभ्रती उदस्थात्। अथ तथा कृत्वा सा कद्रीची अदृश्यगमना सती कं स्वित् अर्धम् ऋद्धम् अर्धस्थानभाजं[1] वा कं स्वित् पुरुषम् आदित्यं परागात् अप्रतिनिवृत्ता गता। 'तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' (मु. उ. १. २. ५) इति श्रुतेः। तथा कृत्वा च क्व स्वित्सूते कस्मिन् इन्द्रादिलोके जनयति न सर्वत्र। शिष्टं समानम्॥

अवः परेण पितरं यो अस्यानुवेद पर एनावरेण।
कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम्॥ १८॥

अवः। परेण। पितरम्। यः। अस्य। अनुऽवेद। परः। एना। अवरेण।
कविऽयमानः। कः। इह। प्र। वोचत्। देवम्। मनः। कुतः। अधि। प्रऽजातम्॥१८॥

ᵛअवः अवस्तात् स्थितम् ᵛअस्य ᵛपितरम् एतल्लोकपालकम् अग्निं ᵛपरेण आदित्येन सह ᵛयः ᵛअनुवेद अनुक्रमेण जानाति तथा ᵛपरः परस्तात् स्थितम् आदित्यम् अस्य पितरं पालकम्। सोऽपि[2] इममेव[2] लोकं वृष्ट्यादिना पालयति। तादृशमादित्यम् ᵛएना अनेन ᵛअवरेण अग्निना सह यः अनुवेद अग्न्यादित्यौ व्यतिहारेण उपास्ते। यद्वा। अभिभूतरजस्तमस्कौ उद्बुद्धसत्त्वौ अत एव स्वाधीनमायौ एतौ एकत्वेन वा अधिगच्छति। स तादृशः पुरुषः ᵛकवीयमानः कविवदाचरन् क्रान्तदर्शित्वम् आत्मनः ख्यापयन् ᵛक ᵛइह अस्मिँल्लोके ᵛप्र ᵛवोचत् प्रब्रवीति। किंच ᵛदेवं द्योतमानं देवविषयम्[3] अलौकिकं वा ᵛमनः ᵛकुतः कस्मात् अदृष्टविशेषात् ᵛअधि आधिक्येन ᵛप्रजातम् उत्पन्नम्। उभयमपि दुर्लभमित्यर्थः॥

ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति॥ १९॥

ये। अर्वाञ्चः। तान्। ऊँ इति। पराचः। आहुः। ये।
पराञ्चः। तान्। ऊँ इति। अर्वाचः। आहुः।
इन्द्रः। च। या। चक्रथुः। सोम। तानि। धुरा। न। युक्ताः। रजसः। वहन्ति॥ १९॥

ᵛये सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परिभ्रमणवशेन ᵛअर्वाञ्चः अर्वागञ्चनाः अधोमुखाः सन्ति ᵛताँ ᵛउ तानेव ᵛपराचः ᵛआहुः पराङ्मुखाञ्चनान् ऊर्ध्वान् आहुः कालविदः।

---

१. क्ष-ञ-ट–ऋद्धस्थानभाजम्। २. क्ष-ञ-ट–सोऽमुमेव। ३. च–देवब्रह्मविषयम्।

तथा प्रथमं vये vपराञ्चः परागञ्चनाः vताँ vउ तानेव vअर्वाचः vआहुः। हे vसोम त्वम् vइन्द्रः परमेश्वरः इरां भूमिं वृष्टया धारकः आदित्यः। यद्वा। द्वादशादित्यानां मध्ये इन्द्रोऽप्येकः। ‘ विवस्वदिन्द्रयुताः ’ इत्युक्तत्वात् अयमपीन्द्रः। सः vच युवां vया यानि मण्डलपरिभ्रमणानि vचक्रथुः कृतवन्तौ vतानि vरजसः रञ्जनात्मकस्य लोकस्य ॥ कर्मणि षष्ठी ॥ लोकं vवहन्ति निर्वहन्ति। तत्र दृष्टान्तः vधुरा[1] शकटादौ धुरि vयुक्ताः संबद्धाः अश्वादयो यथा धुरं वहन्ति तद्वत्। यद्वा। एतत् पूर्वार्धे दृष्टान्तितम्। धुरा युक्ताः। धुरि स्थितं चक्रमपि धुर्शब्देनोच्यते। तत्र युक्ताः समर्पिताः पुरुषाः तत्परिभ्रमणवशेन अर्वाञ्चोऽपि पराञ्चः पराञ्चोऽपि अर्वाञ्चो भवन्ति तद्वत् ॥

द्वा सु॒प॒र्णा स॒युजा॒ सखा॑या समा॒नं वृ॒क्षं परि॑ षस्वजाते ।
तयो॑र॒न्यः पिप्प॑लं स्वा॒द्वत्त्यन॑श्नन्न॒न्यो अ॒भि चा॑कशीति ॥ २० ॥

द्वा । सु॒ऽप॒र्णा । स॒ऽयुजा॑ । सखा॑या । स॒मा॒नम् । वृ॒क्षम् । परि॑ । स॒स्व॒जा॒ते॒ इति॑ ।
तयोः॑ । अ॒न्यः । पिप्प॑लम् । स्वा॒दु । अत्ति॑ । अन॑श्नन् । अ॒न्यः । अ॒भि । चा॒क॒शी॒ति॒ ॥२०॥

अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ[2] स्तूयेते। यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ vसयुजा समानयोगौ vसखाया समानख्यानौ vसमानं vवृक्षं vपरि vषस्वजाते एकमेव वृक्षं परिषस्वजाते आश्रयतः vतयोः vअन्यः एकः vपिप्पलं पक्कं[3] स्वादुतरम् vअत्ति अपरः vअनश्नन्[4] vअभि vचाकशीति अभिपश्यति तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ। योगो नाम संबन्धः स च तादात्म्यलक्षणः। स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा। एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः[5]। एवमेकस्वरूपौ इत्यर्थः। अनेन भास्करमतानुसारिणः अतिरेकिनाम्नो जीवात्मा परमात्मनो नान्यः स च परमात्मा जीवादन्यो नानाजीवाश्रयणादिति मतं निरस्तं भवति। ननु संबन्धो द्विष्ठः स च पक्षिणोरेव[6] भेदमपेक्षते अतः कथमैकात्म्यमिति। न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अत एव सखायौ समानख्यानौ नान्यख्यानौ। ननु एकस्य यादृशं ख्यानं तादृशमेव[7] अन्यस्य[7] इति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति कथं तादात्म्यमुच्यते इति न वक्तव्यम्। नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनः तदेव ख्यानमितरस्यापि जीवात्मनः इति सखायौ इत्युच्यते। एकरूपप्रकाशावित्यर्थः। अतः उपपन्नमैकात्म्यम्। अनेन वास्तवभेदोऽपि निरस्तः। ‘ समानं वृक्षं परि षस्वजाते ’ इत्यत्र यथा आश्रयान्तराभावात् उभयोरेकाश्रयत्वम् अभ्युपगन्तव्यं[8] तद्वत् सयुजा सखाया इत्युभयत्रापि एकयोगख्याने आश्रयणीये। वृश्च्यते इति वृक्षो देहः। स च उभयोः समानः एक एव। जीवस्य भोगार्थत्वात् परमात्मना[9] सृष्टैः[9] महाभूतैः आरब्धत्वात् तस्योपलब्धिस्थानत्वाच्च उभयोरपि समानः। तादृशं समानं वृक्षं परि षस्वजाते परिष्वजतः आश्रयतः। न च जीवस्य वस्तुतः ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकौ इति वाच्यं तयोर्मोहकृतत्वात्। तथा च आथर्वणिकाः अमुं मन्त्रम् . आम्नाय अस्य सन्देहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति। ‘ समाने वृक्षे

१. ख-च-फ–धुरा न। २. क्ष-ङ-झ१-ञ-ट–जीवपरमेश्वरौ। ३. क्ष-ङ-ञ-झ१-ञ-ट–पक्कं फलम्। ४. ङ-झ१–अनश्नन्नपि। ५. ङ–जीवात्मनः स तदात्मा। ६. क्ष-ङ-ञ-ट–पक्षिणोरिव। ७. झ१–तत्समानाख्यानं यस्य। ८. क्ष-ञ-ट–इत्युपगन्तव्यम्। ९. क्ष-ङ-झ१-ञ-ट–परमेश्वरस्य।

पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ’ ( मु. उ. ३. १. २ ) इति । अस्यायमर्थः । एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयम् अपि[1] ईश्वरोऽपि अनीशत्वबुद्ध्या[2] मुह्यमानो मूढः सन् शोचति । संसारे अहं कर्ता सुखी दुःखीति जननमरणे अनुभवति । यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतम् ईशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति । तदा वीतशोको देहाद्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन् अस्य महिमानमिति । निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमिति एति प्राप्नोति । न च तद्भावनाप्तौ[3] तन्महिमा प्राप्यते । अतस्तद्रूपो भवतीत्यर्थः । तस्मात् वस्तुतः एक एव । भेदस्तु मोहकृतः इति सिद्धम् । अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्य उच्यते । तयोः अन्यः जीवात्मा पिप्पलं कर्मफलं स्वादुभूतम् अत्ति भुङ्क्ते । यस्य यदुपार्जितं तत्तस्य स्वादु भवति । अन्यः परमात्मा अनश्नन् आप्तकामत्वेन अभुञ्जानः स्पृहायाः अभावात् । ‘ आप्तकामस्य[4] का स्पृहा[4] ’ ( मा. उ. का. १. ९ ) इति स्मृतेः[5] । तस्मात् अवास्तवभेदमुपजीव्य तयोरन्यः इत्युक्तम् । वस्तुतस्तु ‘ अनीशया शोचति मुह्यमानः ’ इत्युक्तत्वात् अभेद एव । तादृशः परमात्मा स्वात्मनि अध्यस्तं जगत् साक्षित्वेन ईक्षते । अत्र ‘ द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ ’ ( निरु. १४. ३० ) इत्यादि निरुक्ते[6] गतम्[6] अस्य मन्त्रस्य व्याख्यानमनुसंधेयम् ॥ ॥ १७ ॥

**यत्रा॑ सुप॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति ।**
**इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥ २१ ॥**

यत्र॑ । सु॒ऽप॒र्णाः । अ॒मृत॑स्य । भा॒गम् । अनि॑ऽमेषम् । वि॒दथा॑ । अ॒भि॒ऽस्वर॑न्ति ।
इ॒नः । विश्व॑स्य । भुव॑नस्य । गो॒पाः । सः । मा॒ । धीरः॑ । पाक॑म् । अत्र॑ । आ । वि॒वे॒श ॥२१॥

Vयत्र आदित्यमण्डले Vसुपर्णाः सुपतनाः शोभनगमना रश्मयः Vअमृतस्य उदकस्य Vभागं भजनीयम् अंशम् आदाय Vअनिमेषम् अनवरतं Vविदथा वेदनेन ज्ञानेन अस्माभिरेवं कर्तव्यमिति बुद्ध्या Vअभिस्वरन्ति अभिप्रापयन्ति[7] । यश्च Vविश्वस्य Vभुवनस्य भूतजातस्य Vइनः स्वामी तथा तस्यैव Vगोपाः गोपायिता रक्षिता । अयम्[8] आदित्यः Vसः परमेश्वरः Vधीरः धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् Vमा मां Vपाकं पक्तव्यम् अपक्वप्रज्ञम् Vअत्र अस्मिन् स्वकीयमण्डले[9] Vआ Vविवेश प्रवेशयति । अत्र अस्मदीये देहे वा नियामकतया प्रविष्टः इत्यधिदैवतपक्षे । अथाध्यात्मपक्षे । यत्र यस्मिन्नात्मनि[10] सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीनि अमृतस्य भागम् । अत्र विषयावच्छिन्नचैतन्यम् अमृतमित्युच्यते । तस्य भागं भजनीयं स्वस्वांशम् अनिमेषं निमेषरहितम् अनारतं विदथा[11] वेदनेन वृत्त्यवच्छिन्नचैतन्येन अवरुद्धानि अभिस्वरन्ति अभिप्रयन्ति आवरणापगमनेन स्फोरयन्ति[12] । किंच यस्तु[13] इनः स्वामी अस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता । यद्वा । विश्वस्य भुवनस्य भूतजातस्य स्वामी अस्य देहस्य गोपाः । अनेन तत्त्वंपदार्थयोः[14] एकत्वं प्रतिपादितं

---

१. क्ष-ङ-झ१-ञ-ट-‘ अपि ’ नास्ति । २. क्ष-ञ-ट-अनीश्वरबुद्ध्या । ३. क्ष-ञ-ट-तद्भावानाप्तौ । ४. ङ-आत्मकामोऽस्पृहः । ५. क्ष-ङ-ञ-ट-श्रुतेः । ६. क्ष-ञ-ट-निरुक्तगतम्; च-निरुक्ते निगदितम् । ७. क्ष-ङ-झ१-ञ-ट-अभिप्रयन्ति । ८. ङ-झ१-यः । ९. ङ-स्वकीयबले; झ१-स्वकीये बले । १०. क्ष-ङ-झ१-ञ-ट-यस्मिन् अमृते परमात्मनि । ११. क्ष-ञ-ट-विदथा विदथेन । १२. ख-ज-ण-स्फारयन्ति । १३. क्ष-ञ-ट-यश्च । १४. झ१-तत्त्वं पदयोः ।

भवति । स परमेश्वरो धीरः समाधिनिष्ठः सर्वदा अविक्रियो मा मां पाकं परिपक्वमनस्कं यागदानादिना अपगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं माम् आ विवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा । अपरिपक्वमनाः[1] अहं पूर्वम् अज्ञानदशायां मदन्यः[2] ईश्वरोऽस्तीति[2] अविद्वान् ततः परमस्ति कश्चित्सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षणः इति निश्चित्य पश्चात् गुरुशास्त्राभ्यां स एव अहमस्मीति मत्वा एवं पारंपर्येण अवगत्य असंभावनाविपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्मा अभूवमित्यर्थः । अयमेव ' स मा धीरः पाकमत्रा विवेश ' इत्यनेनोच्यते । ननु अनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात् प्राप्तिरेव नोपपद्यते । संप्रति[3] अत्र प्राप्तिर्द्विविधा प्राप्तप्राप्तिः अप्राप्तप्राप्तिश्चेति । प्राप्तस्यापि कण्ठे चामीकरन्यायेन आवरणाज्ञानहानद्वारेण प्राप्तिः उपपद्यते । अस्य मन्त्रस्य यन्निरुक्तं ' यत्र सुपर्णाः सुपतना आदित्यरश्मयः ' ( निरु. ३. १२ ) इत्यादिकं तदत्र द्रष्टव्यम् ॥

यस्मि॑न्वृ॒क्षे म॒ध्वद॑ः सुप॒र्णा नि॑वि॒शन्ते॒ सुव॑ते॒ चाधि॒ विश्वे॑ ।
तस्येदा॑हु॒ः पिप्प॑लं स्वा॒द्वग्रे॒ तन्नोन्न॑श॒द्यः पि॒तरं॒ न वेद॑ ॥ २२ ॥

यस्मि॑न् । वृ॒क्षे । म॒धु॒ऽअद॑ः । सु॒ऽप॒र्णाः । नि॒ऽवि॒शन्ते॑ । सुव॑ते । च॒ । अधि॑ । विश्वे॑ ।
तस्य॑ । इत् । आ॒हुः॒ । पिप्प॑लम् । स्वा॒दु । अग्रे॑ । तत् ।
न । उत् । न॒श॒त् । यः । पि॒तर॑म् । न । वेद॑ ॥ २२ ॥

अत्र वृक्षस्वरूपकल्पना । अधिदैवम् आदित्यम् अध्यात्मम्[4] आत्मानं च प्रशंसति । यस्मिन् आदित्ये वृक्षे वृक्षवत् सर्वफलाश्रयभूते मध्वदः । मध्वित्युदकनाम । तत् अदन्तीति मध्वदः उदकस्य अत्तारः । सुपर्णाः सुपतना रश्मयः निविशन्ते प्रविशन्ति रात्रौ सुवते च पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात् । कुत्र । अधि विश्वे विश्वस्योपरि । तस्य आदित्यवृक्षस्य पिप्पलं पालकं फलं स्वादु रसवत् अग्रे उपरि उपासनानन्तरम् आहुः कथयन्ति तत्त्वविदः । यद्वा । सर्वस्य अधि[5] उपरि वर्तमानमाहुः । ईदृशं[6] पितरं जगतः पालयितारं यः नरः न वेद नोपास्ते सः तन्नोनशत् । नशतिर्गतिकर्मा । तत्फलं न प्राप्नोति । वेदितुस्तु[7] अग्रे पिप्पलमाहुरित्यर्थः । इत्यधिदैवपक्षे ॥ अथाध्यात्मपक्षे । यस्मिन् परमात्मनि वृक्षे वृक्षवत् गमनादिरहिते[8] अविक्रिये सुपर्णाः शोभनगमनानीन्द्रियाणि मध्वदो मधुनो ज्ञानस्यात्तॄणि तज्ज्ञानेन ज्ञानभाञ्जीत्यर्थः । निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तानि आत्मनिवृत्त्या लीयन्ते पुनः प्रबोधकाले अधि विश्वे विश्वस्योपरि सुवते च उद्यन्ति[9] स्वस्वविषयान् लभन्ते[10] इत्यर्थः । तस्य परमात्मनः पिप्पलं पालकं संसारतः उद्धारकं स्वादु आस्वादनीयम् अमृतत्वलक्षणं ज्ञानम् । यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धि[11] स्वादुतमम् । इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वात्

---

१. झ१—परिपक्वमनाः । २. क-च-फ—अहमीश्वरोऽस्तीति; ख—अहमीश्वरोऽस्मीति । ३. क्ष-ङ-झ१-ञ-ट—सत्यम् । ४. क्ष-ङ-ञ-झ१-ञ—अधियज्ञम् । ५. च—' अधि ' नास्ति । ६. क्ष-ञ-ट—कीदृशम् । ७. ङ-झ१-१—वेदितारस्तु । ८. क्ष-ङ-झ१-ञ-ट—गमनागमनादिरहिते । ९. क्ष-ङ-झ१-ञ-ट—उत्पादयन्ति । १०. क्ष-झ-ञ-ट—उपलभन्ते । ११. क्ष-ञ-ट—तादृशं तद्धि ।

आपातस्वादूनि । तत्फलम् अग्रे स्वरूपज्ञानोत्तरकालमाहुः । यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारम् आत्मानं वा न वेद न जानाति गुरुशास्त्रात् स तत्फलं नोन्नशत् न प्राप्नोति अतः आत्मानं यो वेद स एव तत् मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा । 'चर्मवदाकाशम्' (श्वे. उ. ६. २०) इत्यादिश्रुतिः ज्ञानादन्योपायस्य अमृतत्वप्राप्तिं निवारयति । 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३. २. ९) इत्यादिका तु ज्ञानात् प्राप्तिमाह । तस्मात् ईदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः ॥

यद्गा॑यत्रे अधि॑ गाय॒त्रमाहि॑तं॒ त्रैष्टु॑भाद्वा॒ त्रैष्टु॑भं॒ नि॒रत॑क्षत ।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत्तद्वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥ २३ ॥

यत् । गा॒य॒त्रे । अधि॑ । गा॒य॒त्रम् । आऽहि॑तम् । त्रैस्तु॑भात् । वा॒ । त्रैस्तु॑भम् । निः॒ऽअत॑क्षत ।
यत् । वा॒ । जग॑त् । जग॑ति । आऽहि॑तम् । प॒दम् ।
ये । इत् । तत् । वि॒दुः । ते । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः ॥ २३ ॥

$^{v}$गायत्रे $^{v}$अधि $^{v}$गायत्रमाहितम् प्राथम्यात् सर्वैः स्तुत्यत्वाच्च गायत्री भूः । तदीयं स्थानं गायत्रम् । अधि उपरि तत्र गायत्रम् आग्नेयं पदम् आहितम् । प्रथमसृष्टत्वात् गायति त्रायते च इति व्युत्पत्त्या च प्रजापतेर्मुखात् गायत्र्या सह उत्पन्नत्वात् भक्त्या अग्निरपि गायत्रः । 'गायत्रोऽग्निः' (तै. सं. २. २. ५. ५) इति श्रुतेः । भूम्यामग्निः स्थापितः इति $^{v}$यत् अस्ति । तथा $^{v}$त्रैष्टुभात् द्वितीयत्वात् वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभयुक्तात् अन्तरिक्षात् $^{v}$त्रैष्टुभं स्तोभयुक्तम्[1] ऊर्ध्वाधस्तिर्यग्लक्षण-स्तोभत्रयोपेतं वायुं $^{v}$निरतक्षत साधु संपादितवन्तो देवाः इति यदस्ति । $^{v}$वा अथवा $^{v}$जगति सर्वैर्गन्तव्ये उद्गततमे वा तृतीयभूते द्युलोके $^{v}$जगत् गमनशीलम् आदित्याख्यं $^{v}$पदम् $^{v}$आहितम् इति $^{v}$यत् अस्ति । $^{v}$तत् इदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानं[2] $^{v}$य $^{v}$इत् ये एव नराः $^{v}$विदुः जानन्ति $^{v}$ते एव $^{v}$अमृतत्वमानशुः अमरणरूपं पदमाप्नुवन्ति । इत्यधिलोकम्[3]। अथाधियज्ञम्[3] । गायत्रे प्रातःसवने अधि उपरि गायत्रं छन्दः पदमाहितमिति यत् । तथा त्रैष्टुभात् माध्यंदिनात् सवनात् त्रैष्टुभं छन्दो निरतक्षत तत्र आहितमिति यत् । वा[4] किंचेत्यर्थः । जगति तृतीयसवने जगत् जागतं पदमाहितमिति यत् । तत्तादृशं सवनत्रयेषु छन्दस्त्रयसंस्थानं ये नरा विदुः यजमाना विदुः जानन्ति ते अमृतत्वं ज्ञानानुष्ठानद्वारेण[5] मोक्षम् आनशुः आप्नुवन्ति । अथवा गायत्रे प्रातःसवने । त्रिषु सवनेषु छन्दस्त्रयपरिमाणात् सवनान्यपि तत्तच्छन्दःशब्देनोच्यन्ते । 'गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम्' (तै. सं. २. २. ९. ५–६) इति श्रुतेः । तादृशे प्रातःसवने अधि उपरि गायत्रम् अष्टाक्षरात्मकम् आहावप्रतिगररूपं गायत्रं पदमाहितम् । तद्यथा होता 'शोंसावोम्' इति त्र्यक्षरेण तथा 'शंसामोदैवोम्' इति पञ्चाक्षरेण अध्वर्युः प्रतिगृणाति । तन्मिलित्वा अष्टाक्षरं संपद्यते । तच्च अष्टाक्षरं गायत्रीसदृशं तस्याः अपि पादस्य अष्टाक्षरत्वात् । इदमेकं प्रातः-सवनरूपे गायत्रपदप्रतिष्ठापनम् । तथा सवनान्ते[6] अपि शंसनानन्तरम्[6] 'उक्थं वाचि' इति

१. ङ-झ१–त्रिष्टोभयुक्तम्; क्ष-ञ-ट त्रिस्तोभयुक्तम् । २. क्ष-ञ-ट–पदाधीनम् । ३. च–इत्यधि-लोकं लोकप्रतिपादकम् । अथाधियज्ञं यज्ञप्रतिपादकम् । ४. झ१– अथवा । ५. क्ष-ङे-झ १-ञ-ट–ज्ञात्वा अनुष्ठानद्वारेण । ६. क्ष-झ१-ञ-ट–सवनान्तरेऽपि होता स्वशंसनानन्तरम् ।

चतुरक्षरमाह। 'ओमुक्थशाः' इति चतुरक्षरम् अध्वर्युः[1]। तदष्टाक्षरं संपद्यते। एतदेकं परं गायत्रे गायत्रस्थापनम्। तथा त्रैष्टुभात् माध्यंदिनसवनात् त्रैष्टुभम् आहावप्रतिगरणरूपं[2] पदं निरतक्षत ऋत्विजः। तद्यथा माध्यंदिनसवने होता 'अध्वर्यो शोंसावोम्' इति आह्वयते षडक्षरेण अध्वर्युश्च 'शंसामोदैवोम्' इति पञ्चाक्षरेण प्रतिगृणाति। तन्मिलित्वा एकादशाक्षरं संपद्यते। इदमेकं माध्यंदिनसवनादौ त्रैष्टुभे त्रैष्टुभाधानम्। तथा सवनान्तेऽपि[3] शंसनानन्तरम् 'उक्थं वाचि इन्द्राय' इति सप्ताक्षरमाह। अध्वर्युश्च 'ओमुक्थशाः' इति चतुरक्षरेण प्रतिगृणाति। तन्मिलित्वा एकादशाक्षरं संपद्यते। इदमपरं त्रैष्टुभे त्रैष्टुभस्थापनम्। तथा तृतीयसवने होता 'अध्वर्यो शोंशोंसावोम्' इति सप्ताक्षरेण आह्वयते 'शंसामोदैवोम्' इति पञ्चाक्षरेण अध्वर्युः प्रतिगृणाति। द्वादशाक्षरं[4] भवति। तदिदं प्रथमं जागते[5] जागतोत्पादनम्[5]। तथा पश्चादपि शंसनानन्तरमाह 'उक्थं वाचि इन्द्राय देवेभ्यः' इति। एतदेवैकादशाक्षरं भवति। अध्वर्युश्च 'ओम्' इत्येकाक्षरेण प्रतिगृणाति। तदुभयं मिलित्वा द्वादशाक्षरं भवति। तदिदमपरं जागते जागतपदस्थापनम्। एवं त्रिषु छन्दःसु त्रिषु गायत्र्यादिसवनेषु गायत्रादिच्छन्दस्त्रयपदप्रतिष्ठापनम्। एतत्सर्वम् ऐतरेयब्राह्मणे 'देवविशः कल्पयितव्याः' (ऐ. ब्रा. ३. १२) इति खण्डे विस्पष्टमाम्नातम्। तत्तादृशं छन्दसि छन्दःस्थापनं य इत्तद्विदुः ये एव जानन्ति ते एव अमृतत्वम् आनशुः प्राप्नुवन्ति अनुष्ठानद्वारा। एवम् अजानन्तः अनुष्ठानेनापि फलं न प्राप्नुवन्तीत्यर्थः। तस्य साकल्याभावादिति भावः॥

**गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम्।**
**वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः॥ २४॥**

गायत्रेण। प्रति। मिमीते। अर्कम्। अर्केण। साम। त्रैस्तुभेन। वाकम्।
वाकेन। वाकम्। द्विऽपदा। चतुःऽपदा। अक्षरेण। मिमते। सप्त। वाणीः॥ २४॥

ᵛगायत्रेण गायत्रच्छन्दसा ᵛअर्कम् अर्चनसाधनं मन्त्रं ᵛप्रति ᵛमिमीते प्रत्येकं परिच्छिनत्ति। 'अर्को मन्त्रो भवति यदेनेनार्चन्ति' (निरु. ५. ४) इति निरुक्तम्। प्रतिमन्त्रं गायत्रेण छन्दसा उपनिबद्धं करोति। उपलक्षणमेतदन्येषां छन्दसाम्। यद्वा[6]। इतरेषां छन्दसाम् अस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः[6] प्रतिमिमीते इत्यर्थः। यद्वा। प्रतिशब्दः सम् इत्येतस्मिन्नर्थे। छन्दोभिर्मन्त्रान् संमितं करोतीत्यर्थः। ᵛअर्केण ᵛसाम। उक्तलक्षणेन मन्त्रेण साम गायत्ररथंतरसंज्ञकं[7] साम प्रति मिमीते। ननु 'एकं साम तृचे क्रियते' इति तिसृषु एकं साम विहितम् अतः अर्कैः साम इति वक्तव्यं कथमुच्यते अर्केण इति। न। वस्तुतः एकं साम एकस्याम् ऋचि आरूढम्[8]। पश्चादन्योन्यां तदुत्तरयोर्गायति इत्यतिदेशतः प्राप्तं तिसृषु गानम्। अतः एकवचनमविरुद्धम्। ᵛत्रैष्टुभेन ᵛवाकम्। अत्र त्रिष्टुबुपादानम् इतरच्छन्दःप्रदर्शनार्थम्[9]। अथवा अनादेशे सर्वत्र

---

१. क्ष-ङ-झ१-ञ-ट—अध्वर्युः प्रतिगृणाति। २. झ१—आहावप्रतिहरणरूपेण त्रैष्टुभम्। ३. क्ष-झ१-ञ-ट—सवनान्तरेऽपि। ४. क्ष-ङ-झ१-ञ-ट—तन्मिलिते द्वादशाक्षरम्। ५. क्ष-झ१-ञ-ट—जागते जगति संपादनम्। ६. क्ष-झ१-ञ-ट—अस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोनिष्पत्तेरस्य प्रकृतित्वात् प्राधान्येनेदमुक्तम्। अर्कशब्दो जात्यभिप्रायः सर्वान् मन्त्रान् गायत्र्यादिभिः छन्दोभिः। ७. क्ष-ङ-झ१ञ-ट—गायत्ररथंतरादिसंज्ञकम्। ८. क्ष-झ१-ञ-ट—अध्यूढम्। ९. क्ष-ङ-झ१-ञ-ट—इतरच्छन्दः प्रदर्शनार्थम्। पूर्वं गायत्रेणेति गायत्र्या एव उपादानात्।

त्रिष्टुभो ग्रहणात् प्राचुर्याभिप्रायेण इदमुक्तम् । त्रैष्टुभेन द्विवारत्रिवारावृत्तेन द्वृचतृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रति मिमीते । अथवा वाकं सूक्तम् एतावद्भिस्त्रिष्टुब्भिः उपनिबद्धमिदं सूक्तमिति । तादृशेन ᵛवाकेन ᵛवाकं वर्गमनुवाकं वा मिमीते । कीदृशेन वाकेनेति स विशेष्यते । ᵛद्विपदा ᵛचतुष्पदा । पादद्वयबद्धविराडादिच्छन्दोनिबद्धमन्त्ररूपेण चतुष्पदा पादचतुष्टयोपेतेन अनुष्टुबादिमन्त्र-रूपेणेति । इयतीभिर्द्विपदाभिर्वर्गः इयतीभिश्चतुष्पदाभिरुपेतो वर्गः । इयद्भिर्द्विपदरूपैर्वाकैः इयच्चतुष्पद-रूपैर्वाकैश्च परिमितोऽनुवाक इति । सूक्तपक्षे एतावद्भिः सूक्तैः अयमनुवाकः इति । किंच ᵛअक्षरेण अक्षरेणैव ᵛसप्त ᵛवाणीः वागधिष्ठितानि सप्त छन्दांसि ᵛमिमते निर्माणं[1] कुर्वन्ति[1] । अष्टाक्षरा गायत्री एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगतीति । अक्षरैः पादाः परिमीयन्ते परिमितैः पादैश्छन्दांसि । ततः पादानां छन्दसाम् अक्षरं मूलमिति । तथा ऋग्वर्गसूक्तानुवाकादीनां च अक्षरं मूलमित्यक्षरप्रशंसा ॥

जग॑ता॒ सिन्धुं॑ दि॒व्य॑स्तभायद्रथंत॒रे सूर्यं॒ पर्य॑पश्यत् ।
गा॒य॒त्रस्य॑ स॒मिध॑स्ति॒स्र आ॑हु॒स्ततो॑ म॒ह्ना प्र रि॑रिचे महि॒त्वा ॥ २५ ॥

जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्त॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒त् ।
गा॒य॒त्रस्य॑ । स॒म्ऽइध॑ः । ति॒स्रः । आ॒हु॒ः । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥ २५ ॥

जगतीच्छन्दस्कायाम् ऋचि उत्पन्नं साम जगत् । तेन ब्रह्मा सृष्टिकाले ᵛसिन्धुं स्यन्दनशील-मुदकस्य स्यन्दकं वा आदित्यं ᵛदिवि द्युलोके ᵛअस्तभायत् स्तम्भितवान् । 'जागतो वा एष य एष तपति' इति श्रुतिः । ᵛरथंतरे एतन्नामके साम्नि[2] स्तम्भितं ᵛसूर्यं ᵛपर्यपश्यत्[3] परिदृष्टवान् प्रजापतिः । तदाधारभूतायामृचि 'स्वर्दृशम्' ( ऋ. सं. ७. ३२. २२ ) इति सूर्य-प्रतिपादकशब्ददर्शनात् । 'असौ वाव स्वर्दृक्' ( ऐ. ब्रा. ४. १० ) इति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते[3] । 'रथंतरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेत' ( ता. ब्रा. ७. ७. १५ ) इति सामब्राह्मणेन । ᵛगायत्रस्य गायत्र्यामुत्पन्नस्य साम्नः ᵛसमिधः समिन्धनाः ᵛतिस्रः विभक्तीः ᵛआहुः पादत्रयमाहुरित्यर्थः । अथवा तिस्र ऋच आहुः । ᵛततः हेतोः ᵛमह्ना बलेन ᵛमहित्वा महत्त्वेन ᵛप्र ᵛरिरिचे प्ररिच्यते । अन्यानि सामानि पृथक्पृथक् निर्मितवान् । यद्वा । गायत्रशब्दश्छन्दोवाची । तस्य तिस्रो मूर्तीः आहुः क्रमेण अष्टाक्षरैकादशाक्षरद्वादशाक्षरैः गायत्रीत्रिष्टुब्जगत्यात्मिकाः । यस्मा-देवं ततस्तस्माद्गायत्री छन्दसां कनिष्ठा सती मह्ना बलेन महत्त्वेन प्र रिरिचे सर्वाणि छन्दांस्यति-क्रामति येनैव बलेन सोममाहृतवती तादृशेनैवं[4] भवति ॥   ॥ १८ ॥

प्रवर्ग्ये घर्मधुगाह्वानकाले 'उप ह्वये' इत्यादिके द्वे ऋचौ । 'उप ह्वये सुदुघां धेनुमेतामिति द्वे' ( आश्व. श्रौ. ४. ७ ) इति सूत्रितत्वात् ॥

---

१. क्ष-ङ-झ१-ञ-ट—मान्ति मातारः । २. क्ष-ङ-झ१-ञ-ट—साम्नि त्रिष्टुप्प्रभवो (ङ-झ१—त्रिष्टुप्प्रभवे) निमित्तभूता सति ( ङ—सती ) । ३. क्ष-ङ-झ१-ञ-ट—पर्यपश्यत् परिपश्यन्ति । रथंतरसाम माध्यंदिने सवने । स च मध्याह्नकालीनः तस्मिन्काले सूर्यः तेजस्वी दृश्यते । तं च कर्मकाले सर्वदा वा जनः (ङ—जनाः) परिपश्यति ( ङ—परिपश्यन्ति ) । ४. क्ष-झ१-ञ-ट—तादृशेनैव बलेनैवम् ।

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥ २६ ॥

उप । ह्वये । सुऽदुघाम् । धेनुम् । एताम् । सुऽहस्तः । गोऽधुक् । उत । दोहत् । एनाम् ।
श्रेष्ठम् । सवम् । सविता । साविषत् । नः । अभिऽइद्धः ।
घर्मः । तत् । ऊँ इति । सु । प्र । वोचम् ॥ २६ ॥

अहं होता vउप vह्वये उपेत्याह्वयामि । किम् । vएतां vधेनुम् आगच्छन्तीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थाम्[1] । पुनः कीदृशीम् । vसुदुघां सुष्ठु दोग्ध्रीम् । vउत अपि च vएनाम् उक्तलक्षणां गां vसुहस्तः शोभनहस्तो दोहनकुशलः vगोधुक् गोदोग्धा अध्वर्युः vदोहत् दोग्धि यस्मादेवं तस्मादुप ह्वये इत्यर्थः । तदर्थं vसविता सर्वस्यानुज्ञाता परमेश्वरः vनः अस्मदीयं vश्रेष्ठं प्रशस्यं vसवं सोमयागं क्षीरं वा vसाविषत् अनुजानातु । कथमेवम् । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्मात् vघर्मः प्रवर्ग्यः । ‘यद्घ्राँ इत्यपतत्तद्घर्मस्य घर्मत्वम्’ ( तै. आ. ५. १. ५ ) इति तैत्तिरीयकम् । तत्तादृशः vअभीद्धः अभिदीप्तः[2] । तदुशब्द एवकारार्थः । तस्मादेव कारणात् vसु vप्र vवोचं सुष्ठु ब्रवीमि उपह्वये इति । यद्वा । एतां पुरतः दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुम् उपह्वये आह्वयामि वर्षदोहाय[3] । किंच एनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुक् गोदोग्धा आदित्यो वा वायुर्वा दोहत् दोग्धि । तदधीनत्वात् वर्षणस्य । किंच तदर्थं सविता प्रेरकः परमेश्वरोऽस्मदर्थमस्मदुपभोगादृष्टमपेक्ष्य साविषत् अनुजानातु । प्रतिबन्धं मा करोत्वित्यर्थः । किमितीदमुच्यते इति उच्यते । घर्मो ग्रीष्मः अवर्षणजनितः सस्यशोषः अभीद्धः प्रवृद्धः । तदु षु प्र वोचं तस्मादेव कारणात् ब्रवीमि ॥ ब्रवीतेर्लुङि वच्यादेशे ‘अस्यतिवक्ति°’ इत्यादिना च्लेः अङ् । छान्दसः अडभावः ॥

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ २७ ॥

हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् । वत्सम् । इच्छन्ती । मनसा । अभि । आ । अगात् ।
दुहाम् । अश्विऽभ्याम् । पयः । अघ्न्या । इयम् । सा । वर्धताम् । महते । सौभगाय ॥ २७ ॥

यथा आहूता गौः vहिङ्कृण्वती वत्सं प्रति हिङ्कारं कुर्वती vवसूनां vवसुपत्नी क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री । वृत्त्यवृत्तिभ्यां वसुनः पालयितृत्वं तस्यैवाधिक्यं च प्रतिपाद्यते[4] । पुनः कीदृशी । vमनसा vवत्सम् vइच्छन्ती । ईदृशी सा vअभ्यागात् अभ्यागमत् । vइयम् आगता vअघ्न्या । गोनामैतत् । अहननीया गौः vअश्विभ्यां ताभ्यामर्थाय vपयः क्षीरं vदुहां दुग्धाम् । vसा तादृशी vमहते vसौभगाय प्रवृद्धाय सौभाग्याय vवर्धतां प्रवृद्धा भवतु । यद्वा । अस्मै[5] सौभगाय[5] क्षीरं

---

१. क्ष-झ१-ञ-ट–प्रवर्ग्याख्याम् । २. क्ष-झ१-ञ-ट–समृद्धः । ३. क्ष-झ१-ञ-ट–वर्षदानाय । ४. क्ष-झ१-झ१ ट–प्रतिपाद्यते अन्यथैकेन वसुनापि भवति । ५. क्ष-ङ-झ१-ञ-ट–अस्मत्सौभगाय ।

वर्धयताम् । अत्रापि वृष्टिपरत्वेन यथायोगं योज्यम् । हिङ्कृण्वती वर्षणाय शब्दयन्ती वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत्पोषणीयं मनसा इच्छन्ती प्रीणयितुम् अभ्यागात् अभिगच्छति मेघरूपा । सा च अघ्न्या अहन्तव्या । प्रस्तुत्या[1] इत्यर्थः । पयः उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय । यद्वा । अश्विनौ वाय्वादित्यौ । ताभ्यां सकाशात् दुहां दुग्धाम् । तौ हि वृष्टेर्मोचयितारौ । शिष्टमविशिष्टम् ॥

प्रवर्ग्येऽभिष्टवे दोहनसमये वत्से मातुः सकाशादपनीयमाने 'गौरमीमेत्' इत्येषा । सूत्रितं च–'गौरमीमेदनु वत्सं मिषन्तं नमसेदुप सीदत' ( आश्व. श्रौ. ४. ७ ) इति ॥

**गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उं ।**

**सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ २८ ॥**

गौः । अमीमेत् । अनु । वत्सम् । मिषन्तम् । मूर्धानम् । हिङ् । अकृणोत् । मातवै । ऊँ इति ।

सृक्वाणम् । घर्मम् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ २८ ॥

गौः धेनुः मिषन्तं निमीलिताक्षं वत्सम् अनु प्राप्य अमीमेत् शब्दं करोति । मीमयतिः शब्दकर्मा । यद्वा । उक्तं वत्सं अन्वात्मानं प्रक्षिपति । किंच तस्य वत्सस्य मूर्धानं मातवै मातुं निर्मातुं लेहनेन शोधयितुम् । उशब्दोऽवधारणे । हिङ्ङकृणोत् हिङ्कारमकरोत् करोति । किंच सृक्वाणं वत्सस्य शब्दवदनप्रान्तं[2] फेनस्य स्रष्टारं घर्मं क्षीरस्य क्षरणशीलं वत्सम् अभि अभिलक्ष्य वावशाना भृशं कामयमाना मायुं शब्दं मिमाति निर्माति करोति । तादृशी सती पयोभिः प्रभूतैः क्षीरैः पयते प्यायते आप्यायनं[3] करोति वत्सम् । अत्रापि मेघपरतया योजनीयम् । एवमाहूता मेघरूपा गौर्धेनुः मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रम् अनु अनुसृत्य अमीमेत् गर्जनशब्दं वर्षणचिह्नरूपं[4] करोति । मूर्धस्थानीयां[5] भूमिं मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङकृणोत् हिङ्काररूपं शब्दमकरोत् । प्रतिपादनभेदादपुनरुक्तिः । किंच सृक्वाणं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभि वावशाना आभिमुख्येन कामयमाना पयोभिः[6] उदकैः पयते प्यायते आप्यायनं करोति ॥

**अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।**

**सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥**

अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता ।

सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यम् । विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥२९॥

---

१. क्ष-ङ-झ१-ज-ट–प्रत्युतस्तुत्या । २. क्ष-ङ-झ१. म-ट–अधवदनप्रान्तम् । ३. झ१–आप्यायितम् । ४. क्ष-झ१ ज-ट–वर्षणचिह्नभूतम् । ५. क्ष-झ१-म-ट–मूर्धानं मूर्धस्थानीयाम् । ६. क्ष-झ१-ज-ट–पयोभिः क्षीरसदृशैः ।

सः अयं वत्सः शिङ्क्ते अव्यक्तध्वनिं करोति। येन[1] वत्सेन गौः माता अभीवृता आगत्याभितो वेष्टिता भवति। किंच सा गौः मायुं शब्दं मिमाति निर्मिमाति। कुत्र स्थिता[1]। ध्वसनावधि श्रिता ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता। सा तादृशी चित्तिभिः ज्ञानैः तत्पूर्वकैः कर्मभिर्वा मर्त्यं नि चकार हि नीचैः करोति। ज्ञानविशिष्टाः मनुष्याः यथा बालकस्य[2] अदनस्तनपानादिस्नेहं[2] कुर्वन्ति ततोऽप्यतिशयमियं करोतीत्यर्थः। किंच विद्युद्भवन्ती बहुक्षीरतया[3] विद्योतमाना वव्रिं स्वकीयं रूपम्। वव्रिरिति रूपनाम। रूपं प्रति औहत प्रकाशयति। यद्वा। वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शना[4] औहत। अयमेकोऽर्थः। अर्थान्तरं च। शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामीति अभिमानितवान्[5]। दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किल एनं व्यामोहयामीति मनसि कृत्वा संदिग्धोभयलिङ्गा देवता प्रादुरासीत् अथ[6] तस्य पुरतः। स च तां न बुबुधे। बुभुत्सया च तां स्वरूपं प्रदर्शय इति पप्रच्छ। सा च 'अयं स शिङ्क्ते' इत्येषा[7] मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश[7] (निरु. २. ८)। कथमत्रोभयलिङ्गत्वं वस्तुतः उभयलिङ्गत्वे कथं देवतैक्यमिति। उच्यते। अत्रोभयलिङ्गत्वमुभयथा संभवति स्त्रीपुंलिङ्गद्वयेन मध्यमोत्तमलिङ्गद्वयेन च। तत्कथम्। 'अयं स येन' इति पुंलिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते। 'अधि श्रिता सा' इत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक्। अत उभयलिङ्गत्वम्। तथा विद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः। तथा सति 'वव्रिमौहत' इत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्याः रसं प्रत्यादत्ते इत्ययमर्थो विवक्षितः। स च आदित्यव्यापारः इत्युत्तमलिङ्गत्वम्। तर्हि वस्तुतः उभयलिङ्गत्वप्रतीतेः उभे अपि देवते 'यल्लिङ्गं सा देवता' (ऋ. अनु. १. १२९) इति न्यायात्। अतः कथम् एकदेवतासिद्धिः[8] इति। 'अयं स येन' इत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानाम् अधिष्ठात्मिकायाः[10] एकत्वाश्रयणेन[11] वा सर्वफलदात्रात्मन एकत्वाश्रयणेन[12] वा देवतैक्योपपत्तेः। अनेन मध्यमोत्तमभेदेन उभयलिङ्गत्वपक्षेऽपि देवतैक्यमुक्तं भवति। अतः 'एकैव वा महानात्मा देवता' इत्युक्तत्वात् वस्तुतो देवतैक्यं अधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुध्यते॥ अयं स शिङ्क्ते। इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिङ्क्ते अव्यक्तध्वनिं करोति। येन गौरभीवृता। गौरिति वाङ्नाम। माध्यमिका वाक् ययाभिवृता अभितो व्याप्ता अधिष्ठितेत्यर्थः। सेयं शिङ्क्ते। अथवा 'अयं स शिङ्क्ते' इति नैव माध्यमिका वाक् निर्दिश्यते अपि तु मेघः। तस्यां वाचि शिञ्जानायां स एव शिङ्क्ते इत्युपचर्यते मञ्चाः क्रोशन्ति इतिवत्। अयं स मेघः शब्दं करोति येन माध्यमिका वाक् अभिव्याप्ता। शब्दने प्रकार एवोच्यते। मिमाति[13] मायुं स्तनितलक्षणं शब्दं करोति। अथवा अयम्। लुप्तोपमा[13]। मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुरादित्यः। तमिव अतिदीप्तं[14] करोतीत्यर्थः। अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते। कुत्र स्थिता। ध्वसनावधि श्रिता।

---

१. क्ष-झ१-ञ-ट—कथम्। येन ध्वनिना गौर्माता अभीवृता आगत्य अभितः शिशुमावेष्ट्य मायुं शब्दं मिमाति निर्मिमीते। या शिङ्क्ते इत्यर्थः। कुत्र स्थिता। २. क्ष-झ१-ञ-ट—बालकस्याह्वानस्तनपानादिस्नेहम्; ङ-झ१—आह्वानस्तनपानादिस्नेहं बालस्य। ३. ङ-झ१—बहुतया। ४. ख-फ-म—शीघ्रप्रदर्शना। ५. क्ष-झ१-ञ-ट—अभिगीतवान्। ६. क्ष-झ१-ञ-ट—इयम्। ७. क्ष-ङ-झ१-ञ-ट—इत्यत्र प्रतीयमाना मद्देवता इत्युपदिदेश। ८. क्ष-झ१-ञ-ट—एकदेवतात्वासिद्धिः। ९. क्ष-ङ-झ१-ञ-ट—इयं सा यया इति व्यत्ययाश्रयणेन। १०. क्ष-झ१-ञ-ट—अधिष्ठानात्मिकायाः। ११. क्ष-ज्ञ-झ-झ१-ञ-ट—एकत्वश्रवणेन। १२. क्ष-झ१-ञ-ट-एकत्वश्रवणेन। १३. क्ष-झ१-ञ-ट—मिमाति मायुम्। अनुकरणशब्दोऽयम्। मायुरिति शब्दं करोति। अथवेयं लुप्तोपमा। १४. क्ष-झ१-ञ-ट—अतिदीप्तं शब्दम्।

ध्वंसने मेघेऽधिश्रिता । सा ईदृशी चित्तिभिः । कर्मनामैतत् । स्वकर्मभिः वृष्टिरूपैर्मर्त्यं मरणधर्माणं[१] स्थावरजङ्गमरूपं कृत्स्नं जगत् नि हि चकार नीचैः करोति । मनुष्यान् प्रणतान् करोति । ओषध्यादिकं फलेनावनतं करोति । अथवा चित्तिभिः द्योतनलक्षणैः कर्मभिः । विद्युति[२] विद्योतमापद्यमाना* प्रति वव्रिमौहत[२] । वव्रिरिति रूपनाम । ऊहतिरत्र सामर्थ्यात् उपसंहारवाची । प्रत्युपसंहरति । उदकलक्षणं[३] रूपं पुनरादत्ते[४] । रश्मिद्वारा वृष्टमुदकं[४] पुनर्घर्मकाले आदत्ते । एकस्यैव ज्योतिषः त्रेधाकरणाद्विद्युतः सूर्यरश्मिभावः उपपद्यते 'तमू अकृण्वन्त्रेधा भुवे कम्' (ऋ. सं. १०. ८८. १०) इति वक्ष्यमाणत्वात् । स्तनितस्य विद्युद्भावो मेघविद्युत्स्तनितानामभेदाभिप्रायेण ॥

इदं शरीरं जीवावस्थायाम् । अनेन देहस्य असारता जीवस्य[५] नित्यत्वं[५] च प्रतिपाद्यते ॥

अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥

अनत् । शये । तुरऽगातु । जीवम् । एजत् । ध्रुवम् । मध्ये । आ । पस्त्यानाम् ।
जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ३० ॥

ᵛअनत् प्राणनं[६] कुर्वत्[६] ᵛजीवं जीवनवत् ᵛतुरगातु स्वव्यापाराय तूर्णगमनं सत् ᵛएजत्[७] तत् ᵛशये शेते वर्तते[७] । पश्चात् प्राणापगमनानन्तरम् उक्तविलक्षणं सत् ᵛध्रुवम् अविचलितं सत् ᵛपस्त्यानां गृहाणां ᵛमध्ये ᵛआ शेते च स्थाणुवत्तिष्ठति । आकारः पूरणो वा । अथ जीवस्य वैलक्षण्यमाह । ᵛमृतस्य शरीरस्य संबन्धी ᵛजीवः ᵛमर्त्येन मरणधर्मकेण शरीरेण ᵛसयोनिः पूर्वं समानोत्पत्तिस्थानः । यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भावात् तत्संबन्धेनोपचर्यते । तदेवाह । ᵛअमर्त्यः अमरणस्वभावः । 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' ( छा. उ. ६. ११. ३ ) इति श्रुतेः । उक्तस्वभावो जीवः ᵛस्वधाभिः ᵛचरति पुत्रकृतैः स्वधाकारपूर्वकदत्तैः अन्नैश्चरति वर्तते इत्यर्थः ॥ ॥ १९ ॥

प्रवर्ग्येऽभिष्टवे 'अपश्यं गोपाम्' इत्येका[८] विनियुक्ता । सूत्रितं च—'अपश्यं गोपामनिपद्यमानं स्वके द्रप्सस्य' ( आश्व. श्रौ. ४. ६ ) इति ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ३१ ॥

अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥३१॥

१. क्ष-झ१-ञ-ट–मरणधर्मकम् । २. क्ष-ज्ञ-झ१-ञ-ट–विद्युति विद्योतमानायां भीत्या सर्वे शिरांसि नतानि कुर्वन्ति । कथं भूतानि नीचैः करोतीति उच्यते । विद्युद्भवन्ती विद्युद्रूपतामापद्यमाना प्रति वव्रिमौहत । * ङ–विद्योतमानायाम् । ३. क्ष-ङ-झ१-ञ-ट–उक्तलक्षणम् । ४. क्ष-झ१-ञ-ट–पुनरादत्ते । वृष्टिलिङ्गस्य मेघस्तनितस्य च उक्तत्वात् रश्मिभिः वर्षितमुदकम् । ५. क-ख-च-झ-फ–देहस्यानित्यत्वम् । ६. क्ष-ञ-ट–चेष्टत् प्राणधारणयुक्तं तु ; ङ-झ१–चेष्टाप्राणधारणयुक्तम् । ७. क्ष-झ१-ञ-ट–एजत् चेष्टते । ८. क्ष-झ१-ञ-ट–इत्येषा ।

अहं ᵛगोपां सर्वस्य लोकस्य वृष्टिप्रकाशादिना गोपायितारम् ᵛअनिपद्यमानं कदाचिदपि अविषण्णं[1] तथा ᵛपथिभिः विचित्रैर्मार्गैः अन्तरिक्षरूपैः ᵛआ ᵛचरन्तं ᵛच ᵛपरा चरन्तं ᵛच उदयप्रभृति आ मध्याह्नमागच्छन्तं मध्याह्नप्रभृति[2] आ सायं पराङ्मुखं गच्छन्तं एवंमहानुभावमादित्यम् ᵛअपश्यं याथात्म्येन[3] पश्येयम्। किंच ᵛसः आदित्यः ᵛसध्रीचीः सहाञ्चन्तीः ᵛविषूचीः विष्वगञ्चन्तीः रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीः त्विषः ᵛवसानः आच्छादयन् ᵛभुवनेषु भुवनैकदेशेषु लङ्कादिप्रदेशेषु ᵛअन्तः मध्ये ᵛआ ᵛवरीवर्ति उदयास्तमयं कुर्वन् पुनःपुनरावर्तते। तमपश्यमित्यर्थः। 'एष वै गोपा एष हीदं सर्वं गोपायति' इत्यादयस्तद्ब्राह्मणम्। 'अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायति ( तै. आ. ५. ६. ४ ) इत्यादि तैत्तिरीयकं च द्रष्टव्यम्॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश॥ ३२॥

यः। ईम्। चकार। न। सः। अस्य। वेद। यः। ईम्। ददर्श। हिरुक्। इत्। नु। तस्मात्।
सः। मातुः। योना। परिऽवीतः। अन्तः। बहुऽप्रजाः। निःऽऋतिम्। आ। विवेश॥३२॥

अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहाराय आत्मा ज्ञातव्यः इत्यर्थात् प्रतिपाद्यते। ᵛयः पुमान् पुत्रार्थी ᵛईम् एनं गर्भं ᵛचकार करोति विक्षिपति वा तत्कारणभूतस्य विक्षेपद्वारेण ᵛन ᵛसः पुमान्[4] ᵛअस्य तत्त्वं ᵛवेद॥ कर्मणि षष्ठी वा॥ एनं गर्भं न जानाति। कथंभूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानातीत्यर्थः। ᵛयः च मातुरुदरस्थं ᵛददर्श[5] उदरवृद्ध्यन्यथानुपपत्त्या[6] अनुमानेन वा दर्शयति[7] ᵛतस्मात्[8] द्रष्टुः सकाशात् सः ᵛहिरुगिन्नु। हिरुगित्यन्तर्हितनाम। इच्छब्दः एवकारार्थः। नु निश्चये। अत्यन्तमन्तर्हित एव खलु। यद्वा। यः संसारावस्थायाम् ईम् एनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्य एतन्न[9] वेद लोकान्तरे[9] जन्मान्तरे वा। तथा यः ईमेनं ददर्श गिरिनदीसमुद्रबन्ध्वादिकं[10] ददर्श जीवनसमये तस्मात् दृष्टात्[11] हिरुगिन्नु पृथगेव। अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वा अनुभवतीत्यर्थः। ᵛसः तादृशः ᵛमातुः जनन्याः ᵛयोना योनौ ᵛअन्तः ᵛपरिवीतः उल्बजरायुभ्यां परितो वेष्टितः सन् ᵛबहुप्रजाः बहुजन्मभाक्। अथवा। उत्पन्नः सन् स्वयमपि अपत्योत्पादनेन बहुप्रजाः। एवं गर्भदुःखमनुभवन् निर्ऋत्यभिधानं प्रदुःखमनुभवति यावत् स्वरूपभूतात्मज्ञानम्। अतस्तत्परिहाराय आत्मा ज्ञातव्यः इत्युक्तं भवति। एवमात्मविद्यामभिप्रेतोऽर्थः। नैरुक्तानां तु मते य ईं चकार मध्यस्थानो वायुर्मेघो वा एतद्वृष्ट्युदकं करोति सोऽस्य। तत्त्वमिति शेषः। अथवा एतत्कर्म न जानाति। तयोरचेतनत्वादिति भावः। यस्तु ईम् एतद्ददर्श पश्यति तस्मादपि हिरुक् अन्तर्हितः। प्राणिकर्मवशेन काले वर्षिता परमेश्वरः आदित्यात्मनि[12] गूढः[12] इत्यर्थः। य ईं हिरुगन्तर्हितम् ईम् एतद्ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुर्निर्मातुरन्तरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे। उभयोरप्यन्तरिक्षनामत्वात् सामान्यविशेषभावो द्रष्टव्यः। अन्तरिक्षैकदेशे योन्यामन्तर्मध्ये बहुप्रजाः

---

१. क्ष-ञ-ञ१-ञ-ट—अनिषण्णम्। २. क्ष-ञ१-ञ-ट—तथा अपराह्णप्रभृति। ३. क्ष-ञ१-ञ-ट—परमात्मानम्। ४. क्ष-ञ१-ञ-ट—पुनः। ५. क्ष-ञ १-ञ-ट—' ददर्श ' नास्ति। ६. क्ष-ञ-ञ१-ञ-ट—उदरवृद्ध्यन्यथानुपपत्त्या। ७. क्ष-ञ-ञ-ट—ददर्श। ८. ञ— स तस्मात्। ९. क्ष-ञ-ञ१-ञ-ट—तत्त्वं न वेद कालान्तरे। १०. क्ष-ञ१-ञ-ट—गिरिनदीसमुद्रबध्वादिकम् ११. क्ष-ञ-ञ-ट—द्रष्टुः सकाशात्; ञ१—दृष्टः सकाशात्। १२. क्ष-ञ१-ञ-ट—आत्मा निगूढः।

बहुप्रजातात्रो बहुप्राण्युपकारी । अथवा । जनिः अत्र अन्तर्भावितण्यर्थः । बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन् । ᵛनिर्ऋतिं निरमणसाधनां[1] भूमिम् ᵛआ ᵛविवेश प्रविशति प्राप्नोतीत्यर्थः ॥

**द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।**
**उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ ३३ ॥**

द्यौः । मे । पिता । जनिता । नाभिः । अत्र । बन्धुः । मे । माता । पृथिवी । मही । इयम् ।
उत्तानयोः । चम्वोः । योनिः । अन्तः । अत्र । पिता । दुहितुः । गर्भम् । आ । अधात् ॥३३॥

दीर्घतमा ब्रवीति । ᵛमे मम ᵛद्यौः द्युलोकः ᵛपिता पालकः । न केवलं पालकत्वमात्रं अपि तु ᵛजनिता जनयितोत्पादयिता । तत्रोपपत्तिमाह । ᵛनाभिरत्र नाभिभूतो भौमो रसोऽत्र तिष्ठतीति शेषः । ततश्चान्नं जायते अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारंपर्येण जननसंबन्धिनो हेतोः रसस्यात्र सद्भावात् । अनेनैवाभिप्रायेण जनितेत्युच्यते । अत एव ᵛबन्धुः बन्धिका । तथा ᵛइयं ᵛमही महती ᵛपृथिवी ᵛमे ᵛमाता मातृस्थानीया स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः । किंच ᵛउत्तानयोः ऊर्ध्वतानयोः ᵛचम्वोः सर्वस्य अत्र्योः भोगसाधनयोर्द्यावापृथिव्योः ᵛअन्तः मध्ये ᵛयोनिः सर्वभूतनिर्माणाश्रयमन्तरिक्षं वर्तते इति शेषः । ᵛअत्र अस्मिन्नन्तरिक्षे ᵛपिता द्युलोकः । अधिष्ठात्रधिष्ठानयोः अभेदेन आदित्यो द्यौरुच्यते । स स्वरश्मिभिः । अथवा इन्द्रः पर्जन्यो वा । ᵛदुहितुः दूरे निहितायाः भूम्याः ᵛगर्भं सर्वोत्पादनसमर्थं[2] वृष्ट्युदकलक्षणम् ᵛआधात् सर्वतः करोति ॥

आश्वमेधिके मध्यमेऽहनि ब्रह्मोद्ये[3] होत्रादयः ‘ पृच्छामि त्वा ’ इत्यनया यजमानं पृच्छेयुः । तथा च सूत्रितम्—‘ एकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्याः ’ ( आश्व. श्रौ. १०. ९ ) इति ॥

**पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।**
**पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥ ३४ ॥**

पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । यत्र । भुवनस्य । नाभिः ।
पृच्छामि । त्वा । वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमम् । विऽओम ॥३४॥

हे यजमान ᵛत्वा त्वां ᵛपृच्छामि प्रश्नं करोमि । किम् । ᵛपृथिव्याः ᵛपरमन्तम् उत्कृष्टां काष्ठाम् । यत्र सर्वा पृथिवी समाप्यते तत्पृच्छामि । तथा त्वामन्यत् ᵛपृच्छामि । किं तदिति उच्यते ।

---

१. क-ज-ञ-ण-त-भ—निरमाणसाधनाम्; ङ-ञ-व—निर्माणसाधनाम्; फ—निमरणसाधनाम् । २. क्ष-ङ-ञ१-ञ-ट—गर्भोत्पादनसामर्थ्यम् । ३. क्ष-ञ१-ञ-ट—‘ ब्रह्मोद्ये ’ नास्ति ।

<sup>v</sup>यत्र <sup>v</sup>भुवनस्य भूतजातस्य <sup>v</sup>नाभिः संनाहो बन्धनम् । यत्र सर्वं संनद्धं भवति तमित्यर्थः । किंच <sup>v</sup>त्वा त्वां <sup>v</sup>वृष्णः वर्षकस्य <sup>v</sup>अश्वस्य व्यापस्यादित्यस्य । ‘ असौ वा आदित्यो वृषाश्वः ’ (तै. आ. ५. ३. ५ ) इति तैत्तिरीयकम् । तस्य <sup>v</sup>रेतः रेतोवत्कारणं तत्किमिति <sup>v</sup>पृच्छामि । तथा <sup>v</sup>वाचः सर्वस्य वाग्जातस्य <sup>v</sup>परमं निरतिशयं <sup>v</sup>व्योम स्थानं सर्वस्य वचसः कारणम् । एतत् प्रश्नचतुष्टयं पृच्छामि ॥

अथैवं पृष्टो यजमानः ‘ इयं वेदिः ’ इत्यनया प्रतिब्रूयात् । ‘ इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह ’ ( आश्व. श्रौ. १०. ९ ) इति सूत्रितत्वात् ॥

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥

इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । यज्ञः । भुवनस्य । नाभिः ।
अयम् । सोमः । वृष्णः । अश्वस्य । रेतः । ब्रह्मा । अयम् । वाचः । परमम् । विऽओम ॥३५॥

<sup>v</sup>पृथिव्याः प्रथनवत्या भूम्याः <sup>v</sup>परो <sup>v</sup>अन्तः परमन्तं[1] पर्यवसानम् <sup>v</sup>इयं <sup>v</sup>वेदिः । न हि वेद्यतिरिक्ता भूमिरस्ति । ‘ एतावती वै पृथिवी यावती वेदिः ’ ( तै. सं. २. ६. ४ ) इति श्रुतेः । तथा <sup>v</sup>अयं <sup>v</sup>यज्ञः <sup>v</sup>भुवनस्य भूतजातस्य <sup>v</sup>नाभिः संनहनम् । तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात् । अथ[2] <sup>v</sup>वृष्णः वर्षकस्यादित्यस्य <sup>v</sup>रेतः <sup>v</sup>अयं <sup>v</sup>सोमः रसात्मकः । अग्नौ हुतः सोमरसः आदित्यं प्राप्य वृष्ट्यादिफलं[3] जनयति । <sup>v</sup>अयं <sup>v</sup>ब्रह्मा प्रजापतिरेव <sup>v</sup>वाचः मन्त्रादिरूपायाः <sup>v</sup>परमं <sup>v</sup>व्योम उत्कृष्टं रक्षकं स्थानम् । तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च ॥ ॥ २० ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥

सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि ।
ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥३६॥

<sup>v</sup>सप्त सर्पणस्वभावाः सप्तसंख्या वा रश्मयः[4] <sup>v</sup>अर्धगर्भाः संवत्सरस्यार्धे गर्भं गर्भस्थानीयमुदकं धारयमाणाः । यद्वा । ब्रह्माण्डस्यार्धे मध्येऽन्तरिक्षे गर्भवद्वर्तमानाः । <sup>v</sup>भुवनस्य लोकस्य <sup>v</sup>रेतः सारं वृष्टिप्रदत्वेन रेतोभूताः तादृशा रश्मयः <sup>v</sup>विष्णोः व्यापकस्यादित्यस्य <sup>v</sup>विधर्मणि जगद्धारणव्यापारे <sup>v</sup>प्रदिशा प्रदेशेन <sup>v</sup>तिष्ठन्ति वर्तन्ते । किंच <sup>v</sup>ते <sup>v</sup>धीतिभिः प्रज्ञाभिः <sup>v</sup>मनसा जगदुपकारः कर्तव्यः इति बुद्ध्या च <sup>v</sup>विश्वतः सर्वतः ॥ द्वितीयार्थे तसिः ॥ विश्वं <sup>v</sup>परि <sup>v</sup>भवन्ति परितो भावयन्ति कृत्स्नं

---

१. क्ष-झ१-ञ-ट-परमम् । २. क्ष-ङ-झ१-ञ-ट-तथा । ३. ख-च-फ-भ-वृष्ट्यादिकालम् ।
४. झ१-आदित्यरश्मयः ।

जगद्व्याप्नुवन्तीत्यर्थः । यस्मादेवं तस्मात् ᵛते त एव ᵛविपश्चितः बुद्धियुक्ताः ᵛपरिभुवः सर्वत्र व्याप्ताश्च[1] यद्वा । सप्तार्धगर्भाः । सप्त महदहंकारौ पञ्च तन्मात्राणीति मिलित्वा सप्तसंख्यानि तत्त्वानि । अर्धगर्भा अविकृतिरूपाः । विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेन प्रपञ्चाकारेण परिणामादर्धगर्भाः । पुरुषांशस्य[2] अविक्रियत्वादित्यभिप्रायः । अत एव तेषां प्रकृतिविकृतित्वम् । यस्मादेवं तस्माद्भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत्समानम् ॥

न वि जा॑नामि॒ यदि॑वे॒दमस्मि॑ नि॒ण्यः संन॑द्धो॒ मन॑सा चरामि ।
यदा॒ माग॑न्प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः ॥ ३७ ॥

न । वि । जा॒ना॒मि॒ । यत्ऽइ॑व । इ॒दम् । अस्मि॑ । नि॒ण्यः । सम्ऽन॑द्धः । मन॑सा । च॒रा॒मि॒ ।
य॒दा । मा॒ । आ । अग॑न् । प्र॒थ॒म॒ऽजाः । ऋ॒तस्य॑ । आत् ।
इत् । वा॒चः । अ॒श्नु॒वे॒ । भा॒गम् । अ॒स्याः ॥ ३७ ॥

अहं ᵛयदिवेदं यदपीदं विश्वम् ᵛअस्मि कृत्स्नः प्रपञ्चोऽप्यहमेवास्मि । नामरूपांशम् अपरमार्थं त्यक्त्वा सर्वत्र अनुगतोऽस्ति भाति प्रियमिति योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति ᵛन ᵛवि ᵛजानामि । विविच्य नाज्ञासिषम् । परं शास्त्रजनितमिदमहमस्मीति[3] ज्ञानं जातम् । अविवेक्यहमित्यर्थः[4] । कार्यकारणयोरभेदात् कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव[5] भवति । 'इदं सर्वं यदयमात्मा', 'ब्रह्मैवेदं सर्वं', 'आत्मैवेदं सर्वं', 'स ईक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र. सू. २. १. १४) इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् । यद्वा । इवशब्दः उपमार्थः । यदिव[6] यदापरोक्ष्यज्ञानं सर्वैकात्म्यरूपमानुभविकमस्ति तदिव[7] तद्वदेवाहमस्मि । इदं सर्वमहमस्मीति ज्ञानं मे जातम् । अपि तु एतद्दार्ष्टान्तिकभूतम् । आनुभविकं सार्वात्म्यं यदस्ति तन्न वि जानामि न प्राप्तोऽस्मि । शास्त्रजनितं सार्वात्म्यं जातं न तु आनुभविकमित्यर्थः । तत्र कारणमाह । यतोऽहं ᵛनिण्यः । अन्तर्हितनामैतत् । अन्तर्हितो मूढचित्तः । चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्नः इत्यर्थः । तत्रोपपत्तिमाह । ᵛसंनद्धः अविद्याकामकर्मभिः सम्यग्बद्धो वेष्टितः अत एव ᵛमनसा युक्तो भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः संचरामि संसारे । अथवा मनसा संनद्धश्चरामि । इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि । न सार्वात्म्यं जानामीति परिदेवते । यास्कोऽपि इमं परिदेवनार्थत्वेनोदाजहार 'अथापि परिदेवना कस्माच्चिद्भावात् न वि जानामि यदिवेदमस्मि' (निरु. ७. ३) इति । बहिर्मुखचेतसः[8] स्वरूपापरिज्ञानजनितं[8] दुःखमन्यत्र श्रूयते 'पराञ्चि खानि

---

१. ङ-झ१-व्याप्ता रश्मयः । २. क्ष-ङ-झ१-ञ-ट-पुरुषस्य । ३. क्ष-ञ-ट-शास्त्रजनितमिदमस्मीति; झ१-शास्त्रजनितमहमस्मीति ४. ख-च-फ-भ-अविवेकजमित्यर्थः । ५. क्ष-झ१-ञ-ट-स्वस्य रूपमेव । ६. ज्ञ-झ-झ१-त-फ-यदि वा । ७. ज्ञ-ण-त-भ-व-तदित् ८. क्ष-झ१-ञ-ट-बहिर्मुखचेतसा स्वरूपापरिज्ञानजनितम्; ख-च-फ-भ-बहिर्मुखचेतसा स्वस्वरूपापरिज्ञानजनितम् ।

व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ’ ( क. उ. २. ४. १ ) इति । तर्हि कदैतद्भवतीत्याह । ᵛयदा ᵛमागन् आगमिष्यति तदा । किं तदिति उच्यते । ᵛऋतस्य परमार्थस्य परस्य ब्रह्मणः ᵛप्रथमजाः प्रथमोन्मेषः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितः अनुभवः । स यत्र मा मां प्राप्नोति ᵛआदित् अनन्तरमेव अव्यवधानेन ᵛअस्याः ᵛवाचः ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा ᵛभागं भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदम् ᵛअश्नुवे प्राप्नोमि । चित्तस्य बहिर्मुखतां परित्यज्य अन्तर्मुखतैव अदुःसंपादा[1] । सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति पश्चाद्विलम्बाभावात् । यथा गिरिशिखरात् पतन् पाषाणोऽविलम्बेन पतति तद्वत् । चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते– ‘ कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ’ ( क. उ. २. ४. १ ) इति ॥

अपा॒ङ् प्राङे॑ति स्व॒धया॑ गृभी॒तोऽम॑र्त्यो॒ मर्त्ये॑ना॒ सयो॑निः ।

ता शश्व॑न्ता विषू॒चीना॑ वि॒यन्ता॒ न्य१॒॑न्यं चि॒क्युर्न नि चि॑क्युर॒न्यम् ॥३८॥

अपा॑ङ् । प्राङ् । ए॒ति॒ । स्व॒धया॑ । गृ॒भी॒तः । अम॑र्त्यः । मर्त्ये॑न । सऽयो॑निः ।

ता । शश्व॑न्ता । वि॒षू॒चीना॑ । वि॒ऽयन्ता॑ । नि । अ॒न्यम् । चि॒क्युः । न । नि । चि॒क्युः॒ । अ॒न्यम् ॥३८॥

ᵛअमर्त्यः अमरणधर्मा अयमात्मा ᵛमर्त्येन मरणधर्मणा भूतात्मना देहेन ᵛसयोनिः समानस्थानः । यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः[2] । यद्वा । समानोत्पत्तिः । सहवासेन[3] स्वस्मिन्नपि उत्पत्तिरुपचर्यते । एवंभूतः सन् ᵛस्वधया अन्नोपलक्षिततद्भोगेन ᵛगृभीतः[4] । यद्वा । स्वधाशब्देन अन्नमयं शरीरं[5] लक्ष्यते । तेन गृहीतः सन् ᵛअपाङ् एति अशुक्लं कर्म कृत्वा अधो गच्छति । ᵛप्राङेति ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति । परमात्मैव सूक्ष्मशरीरोपाधिकः सन् नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण संबद्धो लोकान्तरेषु संचरति स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके[6] गुणत्रयान्वितः सन् परिभ्रमति । तथा च श्रूयते– ‘गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः ’ (श्वे. उ. ५. ७) इति । इदानीमुभयप्राधान्येनाह । ᵛता तौ भूतात्मकर्त्रात्मानौ[7] ᵛशश्वन्ता अविभागेन सर्वदा वर्तमानौ । यद्वा । सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते। स्थूलशरीरपक्षेऽपि सात्त्विकजातेः[8] तत्कारणानां भूतसूक्ष्माणां सद्भावात् तत्र शरीरसंबन्ध उपपद्यते । ᵛविषूचीना इह लोके सर्वत्रगमनौ ᵛवियन्ता तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते । तत्र नराः ᵛअन्यं[9] भूतात्मानं ᵛनि ᵛचिक्युः नितरां[10] विशेषेण पश्यन्ति जानन्ति[11]। ᵛअन्यम् अपरं देहवच्छायातिरिक्तं ᵛन ᵛनि ᵛचिक्युः न जानन्ति । केचन पामरा देहव्यतिरिक्तं न जानन्ति । केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्ति इत्यनुमिमते । न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति । अतो दुर्लभमात्मज्ञानमित्यर्थः ॥

---

१. ङ-झ१–दुःसंपादा । २. क्ष-झ१-ञ-ट–तिष्ठतीत्यर्थः । ३. क्ष-झ१ ञ-ट–उत्पत्तिमत्सहवासेन । ४. क्ष-झ१-ञ-ट–गृभीतो गृहीत उच्यते । ५. क्ष-झ१-ञ-ट–स्थूलं शरीरम् । ६. क्ष-झ१-ञ-ट–इह लोके । ७. ङ-झ१–भूतात्मपरमात्मानौ । ८. क्ष-ञ-ट–समित्वजातेः सहवासः; झ१–समात्विजातेः सहवासः । ९. ङ-झ१–आद्यम् । १०. क्ष-ञ-ट–निःशेषेण; झ१–निःशेषेण नितराम् । ११. क्ष-झ१-ञ-ट–जानन्ति वा ।

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥

ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ।
यः । तत् । न । वेद । किम् । ऋचा । करिष्यति ।
ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥ ३९ ॥

पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ । तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति[1] तदत्रोच्यते । ᵛऋचः ᵛअक्षरे । अत्र ऋक्शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाश्चत्वारो[2] वेदा उच्यन्ते[2] । ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते–'द्वे विद्ये वेदितव्ये' इति प्रतिज्ञाय 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः' (मु. उ. १. १. ५) इत्यादिना । तस्याः संबन्धिनि अक्षरे अदृश्यादिगुणके[3] क्षरणरहितेऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि । अक्षरशब्दस्य ब्रह्मवाचकत्वम् 'एतद्वै तदक्षरस्य प्रशासने गार्गि' (बृ. उ. ३. ८), 'यया तदक्षरमधिगम्यते' (मु. उ. १ १. ५), 'येनाक्षरं पुरुषं वेद सत्यम्' (मु. उ. १. २. १३) इत्यादिश्रुतिषु प्रसिद्धम् । ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः । सर्ववेदैः[4] खलु ब्रह्म अधिगम्यते 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ. उ. ३. ९. २६) इत्यादिश्रुतेः । ननु उपनिषद्भागानां तथास्तु । इतरेषां तु कथं ब्रह्मविषयत्वमिति[5] उच्यते । यद्यपि इतरभागानां यागादिविषयत्वं तथापि बुद्धिशुद्ध्युत्पादनद्वारा[6] वेदनसाधनत्वेन ब्रह्मविषयत्वं[7] भविष्यति 'वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ. उ. ४. ४. २२) इत्यादिश्रुतेः । तदेव विशेष्यते । ᵛपरमे उत्कृष्टे निरतिशये ᵛव्योमन् व्योमनि व्योमसदृशे । अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन[8] व्योमेत्युक्तम् । यद्वा । विशेषेण सर्वस्य रक्षके । निरधिष्ठा न कस्यचिदस्ति स्वाध्यस्तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात् । तादृशे तत्त्वे सर्वम् अध्यस्तमित्यर्थः । पुनस्तदेव विशेष्यते । ᵛयस्मिन् परमात्मनि ᵛविश्वे सर्वे ᵛदेवाः ᵛअधि ᵛनिषेदुः निषीदन्ति आश्रित्य तिष्ठन्ति तस्मिन् । यद्वा । उक्तलक्षणे वस्तुनि ऋगुपलक्षिताः सर्वे साङ्गा वेदाः पर्यवसिता इत्यर्थः । ᵛयः यो मर्त्यः ᵛतत् तादृशं देवादीनां[9] स्वरूपलाभास्पदं कृत्स्नवेदतात्पर्यप्रतिपाद्यं यद्वस्तु ᵛन ᵛवेद न जानाति स मर्त्यः ᵛऋचा पूर्वोक्तेन ऋगादिशब्दजालेन ᵛकिं ᵛकरिष्यति । वेदनसाधनेन वेदेन वेद्यम् अविदित्वा किं साधयतीत्यर्थः । प्रयोजनाभावात् सर्वस्यापि वेदस्य नैष्फल्यात् इति भावः । अथवा योऽक्षरमविदित्वा कर्मणां कर्ता भवति यागादीननुतिष्ठति तेन किंचिदपि कर्म कृतं न भवतीत्यर्थः । ᵛय ᵛइत् ये एव ᵛतत् तत्त्वं ᵛविदुः जानन्ति ᵛत ᵛइमे ᵛसमासते ते एव इमे ज्ञातारः समासते सम्यक्तिष्ठन्ति । अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम् । यद्वा । ये विदुः इत् ये जानन्त्येव नानुतिष्ठन्ति । इच्छब्दोऽवधारणे । त इमे ते एव समासते । गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति ।

---

१. क्ष-ङ-झ१-ञ-ट–यद्रूपमस्ति । २. क्ष-झ१-ञ-ट–साङ्गापरविद्यासंज्ञिकी त्रयी उच्यते । ३. क्ष-झ१-ञ-ट–अद्रेश्यादिगुणके । ४. क्ष-ङ-झ१-ञ-ट–ऋगाद्यैर्वेदैः । ५. क्ष-झ१-ञ-ट–ब्रह्मपरत्वमिति । ६. ङ-झ१–बुद्धिशुद्ध्यापादनद्वारा । ७. झ१-ब्रह्मविषयम् । ८. क्ष-झ१-ञ-ट–अस्पर्शत्वनीरूपत्वव्यापित्वादिसादृश्येन । ९. क्ष-ङ-झ१-ञ-ट–देवानाम् ।

सहार्थे संशब्दः । सत्रादधिकानां यागानामभावात् तेषामपि फलम् एतज्ज्ञानेनैव प्राप्तं[1] भवतीत्यर्थः । कर्तॄणां बहुत्वात् बहुवचननिर्देशः ॥ अन्ये तु अन्यथा वर्णयन्ति । ऋचः । ऋक् अर्चनीयमादित्यमण्डलम् ऋगादिमयं वा । 'ऋग्भिः पूर्वाह्णे दिवि देवः', 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचः' इत्यादिश्रुतेः । तस्य संबन्धिनि अक्षरे परमे व्योमन् इत्युक्तलक्षणे ब्रह्मणि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादिश्रुत्युक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः वर्तन्ते । य[2] एतन्न वेद सः[2] केवलया ऋचा किं करिष्यति[3] । ये जानन्ति भावयन्ति त एव विद्वांसः समासते। भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति । अपरे प्रकारान्तरेण प्रतिपादयन्ति । ऋचोऽक्षरे ऋगुपलक्षितसर्ववेदसंबन्धिनि अक्षरे प्रणवरूपे ओंकारे अविनाशिनि सर्ववेदेषु व्याप्ते वा । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते–'तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत् तदेतदोमिति' ( ऐ. ब्रा. ५. ३२ ) इति । परमे निरतिशये । न हि प्रणवादधिकं किंचिन्मन्त्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात् । 'यच्चान्यत् त्रिकालातीतं तदप्योंकार एव' (मा. उ. १), 'ओमिति ब्रह्म'( तै. आ. ७. ८ ) इत्यादिश्रुतेः। वेदानां प्रणवस्य स्थानप्रतिनिधिभावः संबन्धः 'य ऋचोऽधीते' इत्याद्युपक्रम्य 'यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्' ( तै. आ. २. ११. ४ ) इत्यादिश्रुतेः । यस्मिन् विश्वे सर्वे देवा अधि निषेदुः । प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवतानां निवासात् सर्वदेवनिवासत्वम् । ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासात् । शिष्टमविशिष्टम् । अयं मन्त्रो निरुक्ते ( निरु. १३. १० ) व्याख्यातः । अपरे तु अपरथा वर्णयन्ति। ऋचः । ऋक् अर्चनीयो जीवः । तस्य संबन्धिन्यक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः[4] । अत एव जीवापेक्षया परमे उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके व्योमसदृशे वा । यस्मिन् परमात्मनि देवा गमनवन्तो व्यवहरन्तः[5] वा इन्द्रियसंज्ञका विश्वे सर्वेऽपि अधि निषेदुः निषीदन्ति आश्रित्य वर्तन्ते । यस्तन्न वेद न जानाति उपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलः[6] जनः किमृचा करिष्यति । केवलेन जीवेन[7] जीवभावेन[7] किं फलं प्राप्स्यति । जननमरणादिक्लेशस्य अत्यागादिति भावः । ये तत्तत्त्वं विदुस्त इत्यादि सिद्धम् ॥

अग्निहोत्रार्था धेनुर्यदि कुत्सितं शब्दं कुर्यात् तदानीं 'सूयवसात्' इत्यनया यवसादिकं प्रयच्छेत् । तथा च सूत्रितं–'वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूयाः' ( आश्व. श्रौ. ३. ११ ) इति । प्रवर्ग्येऽभिष्टवे एषैव परिधानीया । सूत्रितं च–'सूयवसाद्भगवती हि भूया इति परिदध्यात्' ( आश्व. श्रौ. ४. ७ ) इति ॥

---

१. क्ष-झ१-ञ-ट–नान्तरीया। २. क्ष-झ१-ञ-ट–ये एतत्तत्वं न विदुः ते। ३. क्ष-झ१-ञ-ट–करिष्यन्ति । ४. क्ष-झ-झ१-ञ-ट–जीवपरमेश्वरयोः औपाधिकांशांश्यवच्छिन्नानवच्छिन्नाभासनिवासादिभावः ( झ–औपाधिकस्यवच्छिन्नावच्छिन्नाभासबिम्बादिभावः) संबन्धः सोपाधिकस्य जीवस्य संबन्धिनि परमात्मनीत्यर्थः। ५. झ१–व्यवहारवन्तः । ६. क्ष-झ१-ञ-ट–स स्थूलः । ७. क्ष-झ१-ञ-ट–जीवनभावेन ।

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥

सुयवसऽअत् । भगऽवती । हि । भूयाः । अथो इति । वयम् । भगऽवन्तः । स्याम ।
अद्धि । तृणम् । अघ्न्ये । विश्वऽदानीम् । पिब । शुद्धम् । उदकम् । आऽचरन्ती ॥ ४० ॥

हे ᵛअघ्न्ये । गोनामैतत् । अहननीये हे गौः त्वं ᵛसूयवसात् शोभनयवसस्य तृणादिकस्य अत्त्री सती ᵛभगवती । भग इति धननाम । सर्वैर्भजनीयप्रभूतक्षीरादिधनवती ᵛभूयाः भव । हिः पूरणः प्रसिद्धौ वा । लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा । ᵛअथो अनन्तरमेव ᵛवयं यजमाना अपि ᵛभगवन्तः[1] प्रभूतेन धनेन तद्वन्तः ᵛस्याम[2] । अथ एकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थयते । ᵛविश्वदानीं विश्वकालं सर्वदा ᵛतृणम् ᵛअद्धि भक्षय । ᵛआचरन्ती सर्वतो[3] निर्गच्छन्ती[3] ᵛशुद्धं निर्मलम् ᵛउदकं ᵛपिब । अयं मन्त्रो यास्केनैवं व्याख्यातः–' सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती ' ( निरु. ११. ४४ ) इति ॥  ॥ २१ ॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥

गौरीः । मिमाय । सलिलानि । तक्षती । एकऽपदी । द्विऽपदी । सा । चतुःऽपदी ।
अष्टाऽपदी । नवऽपदी । बभूवुषी । सहस्रऽअक्षरा । परमे । विऽओमन् ॥ ४१ ॥

ᵛगौरीः गरणशीला माध्यमिका वाक् ॥ सुलोपाभावश्छान्दसः ॥ ᵛमिमाय शब्दयति । किं कुर्वती । ᵛसलिलानि वृष्ट्युदकानि ᵛतक्षती सम्यक्संपादयित्री । ᵛएकपदी एकपादोपेता एकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुना एकपदी वा ᵛद्विपदी मेघान्तरिक्षाख्यद्व्यधिष्ठाना । आदित्यो वा द्वितीयः । तथा ᵛसा ᵛचतुष्पदी पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना । अथ ᵛअष्टापदी विदिगपेक्षया अष्टपादोपेता अष्टाधिष्ठाना ᵛनवपदी उपरिदिगपेक्षया सूर्येण[4] वा[4] नवदिगधिष्ठाना ᵛबभूवुषी एवंभूता ॥ भवेश्छान्दसः क्वसुः । ततो ङीपि वसोः संप्रसारणम् ॥ किमनया परिगणनया । ᵛसहस्राक्षरा । अपरिमितवचनोऽयम् । अपरिमितव्याप्तियुक्ता बहुव्यापनशीलोदकवतीत्यर्थः । कुत्रेति तदुच्यते । ᵛपरमे ᵛव्योमन् उदकाश्रयत्वेनोत्कृष्टेऽन्तरिक्षे । केचिदेवमाहुः । गौरीर्गरणशीला शब्दब्रह्मात्मिका वाक् मिमाय माति ॥ प्रसिद्धार्थे धातुः ॥ प्रतिष्ठितानि[5] घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती एकपदी अव्याकृतत्वेन एकप्रतिष्ठाना[6] एकरूपा वा आत्मना[7] द्विपदी सुप्तिङ्भेदेन पादद्वयवती चतुष्पदी

---

१. झ१–भगवन्तः स्याम । २. क्ष-झ१-ञ-ट–स्याम । आदरातिशयाय पुनः प्रार्थ्यते । ३. क्ष-ङ-झ१-ञ-ट–शनैः शनैः गच्छन्ती । ४. क्ष-ङ-झ१-ञ-ट–'सूर्येण वा' नास्ति । ५. क्ष-झ१-ञ-ट–सलिलप्रतिष्ठितो धातुप्रतिष्ठितानि । ६. क्ष-झ१-ञ-ट–एकप्रतिष्ठा । ७. क्ष-ङ-झ१-ञ-ट–प्रणवात्मना ।

नामाख्यातोपसर्गनिपातभेदेन अष्टापदी आमन्त्रितसहिताष्टभेदेन[1] अष्टपदी[2] नवपदी बभूवुषी साव्ययैरुक्तै-रष्टभिः[3] नवपदी। अथवा सनाभिकेषु उरःकण्ठादिषु नवसु पदेषु भवन्ती पश्चाद्बहुविधाभिव्यक्तिमुपेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरा अनेकाकारेण व्याप्ता अनेकध्वनिप्रकारा भवती-त्यर्थः । अयं मन्त्रः आचार्येणैवं व्याख्यातः–' गौरीर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तर-दिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने ' ( निरु. ११. ४० ) इति ॥

**तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।**
**ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ४२ ॥**

तस्याः । समुद्राः । अधि । वि । क्षरन्ति । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ।
ततः । क्षरति । अक्षरम् । तत् । विश्वम् । उप । जीवति ॥ ४२ ॥

√तस्याः उक्ताया गोः सकाशात् √समुद्राः वृष्ट्युदकसमुन्दनाधिकरणभूता मेघाः √अधि अधिकं प्रभूतमुदकं √वि √क्षरन्ति विविधं क्षरन्ति । √तेन उदकेन √प्रदिशश्चतस्रः । प्रशब्दो वीत्यर्थः[4] । विदिशश्चतस्रो दिशश्च । अथवा प्रकृष्टा दिशो मुख्याश्चतस्रः । तत्स्थेषु ताच्छब्द्यम् । तत्स्थाः पुरुषाः √जीवन्ति । √ततः पश्चात् तत् √अक्षरम् उदकं √क्षरति सस्यादिकमुत्पादयतीत्यर्थः । √तत् सस्यादिकं √विश्वं जगत् √उप √जीवति । अयमपि यास्केन व्याख्यातः–' तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति ' ( निरु. ११. ४१ ) इति ॥

**शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।**
**उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ ४३ ॥**

शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण ।
उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ ४३ ॥

√शकमयं शकृन्मयं शुष्कगोमयसंभूतं √धूमम् √आरात् नातिदूरे √अपश्यम् दृष्टवानस्मि । दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनविषयतया उक्तः । √विषुवता व्याप्तिमता √एना अनेन √अवरेण निकृष्टेन धूमेन √परः परस्तात् तत्कारणभूतमग्निमपश्यम् । अहं यजमान इत्यर्थः । किंच √उक्षाणं फलस्य सेक्तारं √पृश्निं शुक्लवर्णम् । प्राश्नुते तेन[5] फलमिति स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमः । तं √वीराः विविधेरणकुशला ऋत्विजः √अपचन्त । अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः । स च क्रियासामान्यवचनः अत्र औचित्यात् अभिषवेण संपादितवन्त इत्यर्थः । √तानि

---

१. क्ष-ङ-झ१-ञ-ट–आमन्त्रितसहिताष्टविभक्तिभेदेन । २. क्ष-ञ-ट–अष्टपदा; झ१–अष्टापदी । ३. क्ष-ञ-ट–अव्ययैरुक्ताष्टभिश्च; झ १–अव्ययैरुक्ताभिश्च । ४. क्ष-झ१-ञ-ट– वीत्यर्थे । ५. क्ष-झ१-ञ-ट–अनेन ।

तत्साधनानि धर्माणि अनुष्ठानानि प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसायीनि आसन् संपादितान्यभवन् । यद्वा । सोम उक्षाभवत् पूर्वं तं देवाः शकृतापचन् । यज्ञार्थे तद्भवो धूमो मेघ आसीत् तदुच्यते । तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः ॥

**त्रयः केशिनं ऋतुथा वि चक्षते संवत्सरे वपत एकं एषाम् ।**
**विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ ४४ ॥**

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । संवत्सरे । वपते । एकः । एषाम् ।
विश्वम् । एकः । अभि । चष्टे । शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥ ४४ ॥

केशस्थानीयप्रकृष्टरश्मियुक्ताः[1] त्रयः अग्न्यादित्यवायवः । ते च ऋतुथा कालेकाले वि चक्षते विविधलक्षणां भूमिं पश्यन्ति । तेषां पृथक्पृथक्कार्यमाह । एषां मध्ये एकः अग्निः संवत्सरे अतीते सति संवत्सरं[2] वपते दाहेन केशस्थानीयौषधिवनस्पत्यादिके[3] छेदनं[3] नापितकार्यं करोति । एकः अन्यः आदित्यः विश्वं सर्वं जगत् शचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिः अभि चष्टे सर्वतः पश्यति । एकस्य वायोः ध्राजिः गतिः ददृशे दृश्यते सर्वैः न रूपम् अप्रत्यक्षत्वात् । स्पर्शशब्दधृतिकम्पलिङ्गैः[4] गम्यते[4] इति हि न्यायविदो वदन्ति । अयमपि मन्त्रो यास्केन एवं व्याख्यातः–' त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ' ( निरु. १२. २७ ) इति ॥

वाग्देवत्ये पशौ ' चत्वारि वाक् ' इति हविषोऽनुवाक्या । ' चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन् ' ( आश्व. श्रौ. ३. ८ ) इति सूत्रितत्वात् ॥

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥**

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ।
गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥ ४५ ॥

वाक् वाचः कृत्स्नायाः पदानि चत्वारि परिमिता परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः । तानि पदानि ब्राह्मणाः वेदविदः मनीषिणः मनस ईषिणो मेधाविनः विदुः जानन्ति । तेषां[5] मध्ये त्रीणि गुहा गुहायां निहिता[6] स्थापितानि नेङ्गयन्ति न चेष्टन्ते न प्रकाशन्ते इत्यर्थः । वाचः तुरीयं पदं मनुष्याः अज्ञास्तज्ज्ञाश्च वदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति ।

---

१. क्ष-झ१-ञ-ट–केशिनः केशस्थानीयप्रकृष्टरश्मियुक्ताः; झ–त्रयः केशस्थानीयप्रकृष्टरश्मियुक्ताः । २. क्ष-झ१-ञ-ट–यद्वा प्रतिसंवत्सरम् । ३. ङ-झ१–केशस्थानीयौषधिवनस्पत्यादिकेशच्छेदनम् । ४. क्ष-ङ-झ१-ञ-ट–स्पर्शशब्दधृतिकम्पनलिङ्गगम्यः । ५. क्ष-ञ-ट-अथ तेषाम् । ६. क्ष-झ-झ१-ञ-ट–निहिता निहितानि ।

कानि तानि चत्वारि इत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति । सर्ववैदिकवाग्जालस्य संग्रहरूपाः भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात् तासां व्याहृतीनामेव सारसंग्रहभूतत्वात् अकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति । अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन । क्रियाप्रधानमाख्यातम् । द्रव्यप्रधानं नाम । प्रागुपसृज्यते आख्यातपदस्येत्युपसर्गः प्रादिः । उच्चावचेष्वर्थेषु निपतनान्निपातः अपि तु च इत्यादिः । एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात् । 'वाग्वै पराच्यव्याकृतावदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते ' ( तै. सं. ६. ४. ७. ३ ) इति श्रुतेः । अन्ये तु याज्ञिकाः मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति । याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः । मन्त्रविधानप्रतिपादको वेदभागः 'इति मन्त्राः कल्पोऽत ऊर्ध्वम् ' ( तै. आ. १. ३१. २ ) इत्यादिनोक्तः कल्पः । मन्त्रतात्पर्यार्थप्रकाशको[1] वेदभागो ब्राह्मणम्[1] । भोगविषया[2] गामानय इत्यादिरूपा व्यावहारिकी । एष्वेव सर्वा वाक् नियमितेति याज्ञिकाः । ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः । सर्पाणां[3] वाग्वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः । अपरे मातृकाः[3] प्रकारान्तरेण प्रतिपादयन्ति । परा पश्यन्ती मध्यमा वैखरीति चत्वारीति[4] । एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते । मध्ये हृदयाख्ये उदीयमानत्वात्[5] मध्यमायाः । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते । एवं चत्वारि वाचः पदानि परिमितानि । मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणाः रवाख्यस्य[6] शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति । तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात् । तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति । व्याकरणप्रसिद्धनामाख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति । अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति अर्थप्रकाशनाय प्रयुञ्जते । अयं मन्त्रो निरुक्ते व्याख्यातः सोऽत्राप्यनुसंधेयः–' अथापि[7] ब्राह्मणं भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम् । या पृथिव्यां साग्नौ सा रथंतरे । यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् ' ( निरु. १३. ९ ) इति[7]

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ ४६ ॥**

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति । दिव्यः । सः । सुऽपर्णः । गरुत्मान् ।
एकम् । सत् । विप्राः । बहुधा । वदन्ति । अग्निम् । यमम् । मातरिश्वानम् । आहुः ॥४६॥

---

१. क्ष-झ१-ञ-ट–विविच्य समन्तादर्थप्रकाशको वेदभागो ब्राह्मणम् । २. क्ष-ञ-ट– भाष्यविषया; ङ-झ-झ१–भाषाविषया । ३. क्ष-झ१-ञ-ट–अन्ये तु सर्पपक्ष्यादिभेदेन चातुर्विध्यमाहुः । अपरे मान्त्रिकाः । ४. झ१–तेषु मध्ये त्रीणि परादीनि; क्ष-ञ-ट–' चत्वारीति ' नास्ति । ५. क्ष-झ१-ञ-ट-मीयमानत्वात् । ६. ङ-झ१–गवाख्यस्य । ७. क्ष-ङ-झ१-ञ-ट–' अथापि ब्राह्मणं भवति... इति ' इति नास्ति ।

अमुममदित्यम् ऐश्वर्यविशिष्टम्[1] ^v^इन्द्रम् ^v^आहुः । तथा ^v^मित्रं प्रमीतेर्मरणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः । ^v^वरुणं पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः । तथा ^v^अग्निम् अङ्गनादिगुणविशिष्टम् एतन्नामकमाहुः । ^v^अथो अपि च अयमेव ^v^दिव्यः दिवि भवः ^v^सुपर्णः सुपतनः ^v^गरुत्मान् गरणवान् पक्षवान्वा । एतन्नामको यः पक्ष्यस्ति ^v^सः अप्ययमेव। कथमेकस्य नानात्वमिति उच्यते। अमुमेवादित्यम् ^v^एकम् एव वस्तुतः सन्तं ^v^विप्राः मेधाविनो देवतातत्त्वविदः ^v^बहुधा ^v^वदन्ति। तत्तत्कार्यकारणेन[2] इन्द्राद्यात्मानं[3] वदन्ति । 'एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते' इत्युक्तत्वात् । किंच तमेव वृष्ट्यादिकारणं वैद्युताग्निं ^v^यमं नियन्तारं ^v^मातरिश्वानम् अन्तरिक्षे श्वसन्तं[4] वायुम्[5] ^v^आहुः । सूर्यस्य[6] ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति[6]। अत्र ये[7] केचित् 'अग्निः सर्वा देवताः' (ऐ. ब्रा. २. ३) इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा अग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति । तत्पक्षे प्रथमोऽग्निशब्दः उद्देश्यः । तमग्निमुद्दिश्य इन्द्राद्यात्मकत्वकथनम्। अयं मन्त्रो निरुक्ते एवं व्याख्यातः-'इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् । दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा' (निरु. ७. १८) इति ॥ ॥ २२ ॥

वर्षकामेष्ट्यां तिस्रः पिण्ड्यो होतव्याः । तत्र 'कृष्णं नियानम्' इति तृतीयस्यानुवाक्या । 'कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः' (आश्व. श्रौ. २. १३) इति[8] ॥

## कृ॒ष्णं नि॒यानं॒ हर॑यः सुप॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्प॑तन्ति ।
## त आव॑वृत्र॒न्त्सद॑नादृ॒तस्यादिद्घृ॒तेन॑ पृथि॒वी व्यु॑द्यते ॥ ४७ ॥

कृ॒ष्णम् । नि॒ऽयान॑म् । हर॑यः । सु॒ऽप॒र्णाः । अ॒पः । वसा॑नाः । दिव॑म् । उत् । प॒त॒न्ति॒ ।
ते । आ । अ॒व॒वृ॒त्र॒न् । सद॑नात् । ऋ॒तस्य॑ । आत् । इत् । घृ॒तेन॑ । पृ॒थि॒वी । वि । उ॒द्य॒ते ॥ ४७ ॥

^v^कृष्णं कृष्णवर्णं ^v^नियानं नियमेन गच्छन्तं मेघं ^v^हरयः उदकस्य हर्तारः ^v^सुपर्णाः शोभनपतना रश्मयः ^v^अपः ^v^वसानाः उदकानि वासयन्तो मेघेषु। अद्भिर्मेघान्पूरयन्त इत्यर्थः॥ अन्तर्भावितण्यर्थत्वात् द्विकर्मकत्वम् ॥ यद्वा । कृष्णं नियानं नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् । तत्प्रति । तस्मिन्वर्षकाले इत्यर्थः । एवं कुर्वन्तः ^v^दिवं द्युलोकं तदाश्रितमादित्यं वा उद्दिश्य ^v^उत्पतन्ति ऊर्ध्वं गच्छन्ति । ^v^ते रश्मयः ^v^ऋतस्य ^v^सदनात् उदकस्य स्थानात् आदित्यमण्डलात् ^v^आववृत्रन् आवर्तन्ते[9] अर्वाञ्च आगच्छन्ति । ^v^आदित् अनन्तरमेव यदा अर्वाग्गच्छन्ति तदानीमेव ^v^घृतेन उदकेन ^v^पृथिवी ^v^व्युद्यते विविधं क्लिद्यते । 'कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः' (निरु. ७. २४) इत्यादि निरुक्तं द्रष्टव्यम् ॥

---

१. क्ष-ङ-झ१-ञ-ट-ऐश्वर्ययोगात् । २. क्ष-झ१-ञ-ट-तत्तत्कार्यकरणेन । ३. क्ष-झ१-ञ-ट-अग्न्याद्यात्मानम् । ४. क्ष-ञ-ट-श्वसनात् । ५. क्ष-ञ-ट-वायुं च । ६. क्ष-झ१-ञ-ट-'सूर्यस्य...... भवति' नास्ति । ७. क्ष-झ१-ञ-ट-'ये' नास्ति । ८. क्ष-ङ-झ१-ञ-ट-इति सूत्रितत्वात् । ९. क्ष-ञ-ट-आवर्तयन्ति ।

द्वा॒द॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत ।
तस्मि॑न्त्सा॒कं त्रि॑श॒ता न श॒ङ्कवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥ ४८ ॥

द्वाद॑श । प्र॒ऽधयः॑ । च॒क्रम् । एक॑म् । त्रीणि॑ । नभ्या॑नि । कः । ऊँ इति॑ । तत् । चि॒के॒त ।
तस्मि॑न् । सा॒कम् । त्रि॒ऽश॒ताः । न । श॒ङ्कवः॑ । अ॒र्पि॒ताः । ष॒ष्टिः । न । च॒ला॒च॒लासः॑ ॥ ४८ ॥

द्वादश एतत्संख्याकाः[1] प्रधयः परिधयः प्रहिता वर्तन्ते । तत्स्थानीया द्वादश मासाः एकम् अद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः । तथा त्रीणि त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि[2] फलकानि तत्स्थानीयानि[2] ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि । यथा सूर्यरथचक्रस्य द्वादश परिधयः[3] नाभ्यर्हाणि त्रीणि फलकानि सन्ति तद्वत्कालचक्रस्यापि । क उ कोऽपि महान्[4] एतत् चक्रं चिकेत जानाति । तस्मिन् चक्रे साकं सह शङ्कवः न शङ्कवः[5] इव । अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि संवत्सरचक्रे त्रिशताः एतत्संख्याकाः षष्टिर्न । नशब्दः चार्थे । षष्टिश्च अरा अरस्थानीयान्यहानि अर्पिताः अर्पितानि । कीदृशानि तानि । चलाचलासः । एकश्चलशब्दो द्विर्भावप्रासः । चलाः । चलनस्वभावानीत्यर्थः ॥ ‘ चरिचलिपतिवदीनामच्याक्चाभ्यासस्य ’ ( पा. सू. ६. १. १२. ६ ) इति द्विर्वचनमागागमश्च । ततोऽसुक् ॥ ‘ षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि ’ (श. ब्रा. ९. १. १. ४३) इति ब्राह्मणम् । ‘ द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् ’ ( निरु. ४. २७ ) इत्यादि निरुक्तम् ॥

प्रवर्ग्येऽभिष्टवे ‘ यस्ते स्तनः ’ इत्येका[6] । सूत्रितं च– ‘ यस्ते स्तनः शशयो यो मयोभूर्गौरमीमेदनु वत्सं मिषन्तम् ’ ( आश्व. श्रौ. ४. ७ ) इति । एषैव सारस्वते पशौ हविषो याज्या । सूत्रितं च– ‘ यस्ते स्तनः शशयो यो मयोभूस्त्वं सोम प्र चिकितो मनीषेति द्वे ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि ।
यो र॑त्न॒धा व॑सु॒विद्यः सु॒दत्रः॒ सर॑स्वति॒ तमि॒ह धात॑वे कः ॥ ४९ ॥

यः । ते॒ । स्तनः॑ । श॒श॒यः । यः । म॒यः॒ऽभूः । येन॑ । विश्वा॑ । पुष्य॑सि । वार्या॑णि ।
यः । र॒त्न॒ऽधाः । व॒सु॒ऽवित् । यः । सु॒ऽदत्रः॑ । सर॑स्वति । तम् । इ॒ह । धात॑वे । क॒रिति॑ कः ॥ ४९ ॥

हे सरस्वति ते तव संबन्धी यः स्तनः स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः शशयः शयानः तव देहे वर्तमानः । यः च स्तनः मयोभूः रसास्वादिनां सुखस्य भावयिता । येन स्तनेन विश्वा सर्वाणि वार्याणि वरणीयान्यभिमतरूपाणि धनानि पुष्यसि भोक्तृभ्यः । यः च[7] स्तनः रत्नधाः बहुविधरमणीयरसानां धारयिता

---

१. क्ष-झ१-ञ-ट–द्वादशसंख्याकाः । २. क्ष-झ१-ञ-ट–नाभिस्थानीयानि । ३. क्ष-झ१-ञ-ट–संबन्धनाः रश्मयः । ४. क्ष-ङ-झ१–ञ-ट–महत् । ५. क्ष-ञ-ट–रथचक्रस्य शङ्कवः । ६. क्ष-ञ-ट–इत्येषा । ७. क्ष-ङ-ञ-ट–ते ।

ᵛवसुवित्[1] वसूनां वासयितॄणां[2] धनानां वेत्ता लब्धा वेदयिता वा । किंच ᵛयः स्तनः ᵛसुदत्रः शोभनदानः । 'सुदत्रः कल्याणदानः' ( निरु. ६. १४ ) इति निरुक्तम् । अत्र असकृत् यच्छब्दश्रवणं स्तनस्य अतिप्रशस्तत्वज्ञापनार्थम् । हे देवि ᵛतं तादृशं सर्वप्राण्युपकारकं सूक्ष्मयं स्तनम् ᵛइह अस्मिन्कर्मणि इदानीं वा ᵛधातवे अस्माभिर्धातुं पातुं पानाय ᵛकः कुरु ॥

अग्निमन्थने 'यज्ञेन यज्ञम्' इत्येषा परिधानीया । 'यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात्' ( आश्व. श्रौ. २. १६ ) इति सूत्रितत्वात् ॥

यज्ञेन॑ यज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् ।
ते ह॒ नाकं॑ महि॒मान॑: सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥ ५० ॥

य॒ज्ञेन॑ । य॒ज्ञम् । अ॒य॒ज॒न्त॒ । दे॒वाः । तानि॑ । धर्मा॑णि । प्र॒थ॒मानि॑ । आ॒स॒न् ।
ते । ह॒ । नाक॑म् । म॒हि॒मान॑: । स॒च॒न्त॒ । यत्र॑ । पूर्वे॑ । सा॒ध्याः । सन्ति॑ । दे॒वाः ॥ ५० ॥

ᵛदेवाः व्यवहर्तारो यजमानाः ᵛयज्ञेन निर्मथ्याग्निना[3] ᵛयज्ञं होमसाधनमाहवनीयम् ᵛअयजन्त पूजितवन्तः अनुष्ठानाय संयोजितवन्त इत्यर्थः । 'अग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते' ( तै. सं. ६. २. १.७ ) इति हि तैत्तिरीयकम् । ᵛतानि ᵛधर्माणि अग्निसाधनानि कर्माणि ᵛप्रथमानि । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि ᵛआसन् फलप्रसवसमर्थान्यभवन्नित्यर्थः । ᵛते ᵛह ते च यजमानाः ᵛनाकम् । नास्मिन्नकमस्तीति नाकः स्वर्गः । तं ᵛमहिमानः माहात्म्ययुक्ताः ᵛसचन्त संगताः । कीदृशं नाकम् । ᵛयत्र यस्मिन्नाके ᵛपूर्वे पूर्वतनाः ᵛसाध्याः साधनाः[4] यज्ञादिसाधनवन्तः । कर्मदेवा इत्यर्थः । ते ᵛसन्ति निवसन्ति तं सचन्त । तस्मादिदानीमपि मनुष्यैः एवं कर्तव्यमित्यर्थः । यद्वा । देवा इदानीं देवभागमापन्नाः[5] पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यमग्निमयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम् । 'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' इति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाश्छन्दोऽभिमानिनः । आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते । 'छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्नादित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्' ( ऐ. ब्रा. १. १६ ) इति ब्राह्मणम् । एते देवाः स्वर्गे सन्ति भवन्ति स्वर्गप्राप्ताः[6] इत्यर्थः । यद्वा । यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुमयजन्त पूजयन्ति । ते नाकं विष्णुलोकं महानुभावाः सचन्त संगच्छन्ते । यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम् । 'अग्निनाग्निमयजन्त देवाः' ( निरु. १२. ४१ ) इत्यादि निरुक्तमनुसंधेयम् ॥

---

१. क्ष-ङ-ज्ञ-ज्ञ१-ञ-ट–यश्च वसुवित् । २. क्ष-ञ-ट–निवासयितॄणाम् । ३. क्ष-ज्ञ-ञ-ट–निर्मन्थ्याग्निना । ४. ङ-ज्ञ१–' साधनाः ' नास्ति । ५. क्ष-ङ-ज्ञ-ज्ञ१-ञ-ट–देवभावमापन्नाः । ६. क्ष-ज्ञ१-ञ-ट–स्वर्गं प्राप्ताः ।

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥

समानम् । एतत् । उदकम् । उत् । च । एति । अव । च । अहऽभिः ।
भूमिम् । पर्जन्याः । जिन्वन्ति । दिवम् । जिन्वन्ति । अग्नयः ॥ ५१ ॥

एतत् प्रसिद्धम् उदकं समानम् एकरूपमित्यर्थः । अहभिः कैश्चिदहोभिः ग्रीष्मकालीनैः उच्चैति ऊर्ध्वं गच्छति । तथा अहभिः[1] वर्षकालीनैरेव तदुदकम्[1] अव च एति अवाङ्मुखं च गच्छति ॥ 'चवायोगे प्रथमा' इति प्रथमा विभक्तिर्न निहन्यते ॥ रश्मिमार्गेणैव भूमिं प्राप्नोति । तदेवोच्यते । पर्जन्याः प्रीणयितारो मेघाः भूमिं जिन्वन्ति उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान् प्रीणयन्ति । तथा अग्नयः आहवनीयाद्याः स्वे हुते आहुत्या दिवं द्युलोकस्थान् देवान् जिन्वन्ति प्रीणयन्ति ॥

सरस्वद्देवताके पशौ 'दिव्यं सुपर्णम्' इति वपायाज्या । 'दिव्यं सुपर्णं वायसं बृहन्तं स वावृधे नर्यो योपणासु' ( आश्व. श्रौ. ३. ८ ) इति सूत्रितत्वात् । अन्वारम्भणीयायां सरस्वद्यागे एषैव याज्या । सूत्रितं च—'दिव्यं सुपर्णं वायसं बृहन्तमा सर्वं सवितुर्यथा' ( आश्व. श्रौ २.८ ) इति ॥

दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् ।
अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ ५२ ॥

दिव्यम् । सुऽपर्णम् । वायसम् । बृहन्तम् । अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् ।
अभीपतः । वृष्टिऽभिः । तर्पयन्तम् । सरस्वन्तम् । अवसे । जोहवीमि ॥ ५२ ॥

दिव्यं दिवि भवं सुपर्णं शोभनगमनं वायसं गमनशीलं बृहन्तं महान्तम् अपां गर्भं वृष्ट्युदकानां गर्भवदुत्पादकम् । ओषधीनाम् ओषधीः[2] दर्शतं दर्शनाय । दर्शयन्तमित्यर्थः । यद्वा । ओषधीनां गर्भं दर्शतमिति पृथग्विशेषणम् । किंच अभीपतः आनुकूल्येन वृष्टिभिस्तर्पयन्तं जगत्प्रीणयन्तम् । यद्वा । अभीपतोऽभिगमनवतः सलिलाधारांस्तटाकादींस्तर्पयन्तम् अथवा अभिगन्ताहम् । सरस्वन्तम् उदकवन्तम् । सर इत्युदकनाम । देवं सूर्यं वा अवसे रक्षणाय जोहवीमि पुनःपुनः आह्वयामि ॥ ॥ २३ ॥ ॥ २२ ॥

त्रयोविंशेऽनुवाके पञ्चदश सूक्तानि । तत्र 'कया शुभा' इति पञ्चदशर्चं प्रथमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका—'कया पञ्चोना संवादस्तृतीयाद्ययुजो मरुतां वाक्यमन्त्यस्तृचोऽगस्त्यस्य शिष्टा इन्द्रस्यैकादशी च मरुत्वांस्त्विन्द्रो देवता' इति । अत्र इन्द्रागस्त्यमरुतां संवादः प्रतिपाद्यते । तत्र तृतीयापञ्चमीसप्तमीनवमीनां मरुद्वाक्यरूपत्वात् ते एव ऋषयः । 'यस्य वाक्यं स ऋषिः' (अनु. २.४) इति न्यायात् । अन्त्यतृचस्यागस्त्यवाक्यत्वात् स एव ऋषिः । शिष्टा युज आद्या च एकादशी च इन्द्रस्य वाक्यम् । अतः स एव ऋषिः । अत्र 'या तेनोच्यते सा देवता' (अनु. २.५) इति सामान्या-

---

१. क्ष-झ१-ञ-ट—कैश्चिदहोभिः वर्षकालीनैरेतदुदकम् । २. क्ष-झ१-ञ-ट—'ओषधीः' नास्ति ।

पवादेन कृत्स्नस्य मरुत्वद्गुणक इन्द्रो देवता। संसवचातुर्विंशकयोर्मरुत्वतीयशस्त्रे निविद्धानीयात्पूर्वमेतत्सूक्तम्। 'यदि पर्यायान्', 'मरुत्वतीये' इति खण्डयोः सूत्रितं-'कया शुभेति च मरुत्वतीये पुरस्तात्सूक्तस्य शंसेत्' ( आश्व. श्रौ. ६. ६; ७. ३ ) इति। आभिप्लविके पञ्चमेऽहनि मरुत्वतीये एतदेव सूक्तम्। 'पञ्चमस्य कया शुभा यस्तिग्मशृङ्ग इति मध्यंदिनः' (आश्व. श्रौ. ७.७ ) इति सूत्रितत्वात्। महाव्रते[1] मरुत्वतीयशस्त्रे एतत्सूक्तम्। पञ्चमारण्यके-'कया शुभा सवयसः सनीळा मरुत्वाँ इन्द्र वृषभो रणाय' ( ऐ. आ. ५.१.१ ) इत्युक्तत्वात्। विषुवति मरुत्वतीये एतदेव निविद्धानीयम्। 'त्यं सु मेषं कया शुभेति च मरुत्वतीयम्' ( आश्व. श्रौ. ८. ६ ) इति सूत्रितत्वात्। अस्य विनियोगं शौनक आह—'ज्ञातिपुत्रसुहृन्मित्रैर्यश्च राज्यं चिकीर्षति। नित्यं स नियतो भूत्वा सूक्तं तु मनसा जपेत्। कया शुभेति पैशुन्यं कृत्वाचार्यनृपद्विजैः। श्रुत्वा परहस्यं तु गुरोरप्याह शौनकः' ( ऋग्वि. १. १४५-१४६ ) इति॥

**कया॑ शु॒भा सव॑यसः॒ सनी॑ळाः समा॒न्या म॒रुतः॒ सं मि॑मिक्षुः।**
**कया॑ म॒ती कुत॒ एता॑स ए॒तेऽर्च॑न्ति॒ शुष्मं॒ वृष॑णो वसू॒या॥ १॥**

कया॑। शु॒भा। सऽव॑यसः। सऽनी॑ळाः। स॒मा॒न्या। म॒रुतः॑। सम्। मि॒मि॒क्षुः।
कया॑। म॒ती। कुतः॑। आऽइ॑तासः। ए॒ते। अर्च॑न्ति। शुष्म॑म्। वृष॑णः। व॒सु॒ऽया॥ १॥

इन्द्रवाक्यम्। सवयसः समानवयस्काः सनीळाः समानस्थानाः एते मरुतः कया शुभा कैरपि[2] दुर्ज्ञेयया[2] शोभया समान्या सर्वेषामेकरूपया महत्या युक्ताः। यद्वा। शुबित्युदकनाम। उक्तरूपया शुभा उदकेन। सं मिमिक्षुः लोकं सम्यक्[3] सिञ्चन्ति[3]॥ मिहिसमानार्थः[4] मिमिक्षतिधातुः॥ यद्वा। मां युद्धादिषु प्रवर्तमानं सं मिमिक्षुः। तदर्थम् एते मरुतः कया अनिश्रेयया[5] मती मत्या कुतः देशात् एतासः आगताः। आगत्य च एते वृषणः वर्षितारः[6] वसूया वसूयया॥ 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः॥ धनेच्छया[7]। यद्वा। वसवो वासयितारो वा॥ तेनैव जसो याजादेशः॥ शुष्मं बलं वृष्टिप्रदानजनितं लोके अर्चन्ति पूजयन्ति जगति[8] कुर्वन्ति। यद्वा। मम[9] बलं[9] वर्धयन्तीत्यर्थः। 'मरुतो हैनं नाजहुः' ( ऐ. ब्रा. ३.२० ) इति श्रुतेः। अत्र इन्द्रमरुत्संवादरूपे सर्वत्र प्राणजीवात्मपरतयापि योजनीयम्। अत्रापि इन्द्रो ब्रूते॥

**कस्य॒ ब्रह्मा॑णि जुजुषु॒र्युवा॑नः॒ को अ॑ध्व॒रे म॒रुत॒ आ व॑वर्त।**
**श्ये॒नाँ इ॑व॒ ध्रज॑तो अ॒न्तरि॑क्षे॒ केन॑ म॒हा मन॑सा रीरमाम॥ २॥**

कस्य॑। ब्रह्मा॑णि। जु॒जु॒षुः॒। युवा॑नः। कः। अ॒ध्व॒रे। म॒रुतः॑। आ। व॒व॒र्त॒।
श्ये॒नान्ऽइ॑व। ध्रज॑तः। अ॒न्तरि॑क्षे। केन॑। म॒हा। मन॑सा। री॒र॒मा॒म॥ २॥

---

१. क्ष-झ१-ञ-ट—महाव्रतेऽपि। २. क्ष-ङ-झ१-ञ-ट—कयापि दुर्निरूपया। ३. क्ष-झ१-ञ-ट—वृष्ट्युदकेन सम्यक् सेचयन्ति। ४. क्ष-ज्ञ-झ-ञ-ट—मिहि सेचनार्थः; झ१—मिहिः सेचनार्थः। ५. क्ष-ङ-झ१-ञ-ट—अतिश्रेष्ठया। ६. क-क्ष-च-झ१-ञ-ट—वर्षितारो युवान इत्यर्थः। ७. क्ष-झ१-ञ-ट—वस्वादिधनेच्छया। ८. क्ष-ङ-ज्ञ-झ१-ञ-ट—जगतः पूजाम् ( ङ-झ१—पूजनम् )। ९. क्ष-ङ-झ१-ञ-ट—गमनबलम्।

ᵛयुवानः नित्यतरुणाः महानुभावाः मरुतः ᵛकस्य महाभागस्य ᵛब्रह्माणि परिवृढानि हवींषि ᵛजुजुषुः सेवन्ते । ᵛकः च महान् ᵛअध्वरे स्वकीये यागे ᵛमरुतः एतान् ᵛआ ᵛववर्त यागान्तरेभ्यो निवर्तयति । दुर्निग्रहत्वे दृष्टान्तमाह । ᵛअन्तरिक्षे ᵛध्रजतः गच्छतः ᵛश्येनान् शंसनीयगमनान् एतन्नामकान् पक्षिणः ᵛइव । ᵛकेन तत्प्रीतिसाधनेन ᵛमहा महता ᵛमनसा मननवता स्तोत्रेण ᵛवीरमाम रमेमहि[1] ॥

अथ मरुत इन्द्रेणोक्तास्तृतीययानया प्रतिब्रुवते ॥

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥ ३ ॥

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः । यासि । सत्ऽपते । किम् । ते । इत्था ।
सम् । पृच्छसे । सम्ऽअराणः । शुभानैः । वोचेः । तत् । नः । हरिऽवः । यत् । ते । अस्मे इति ॥ ३ ॥

हे ᵛइन्द्र ᵛसत्पते सतां पालक ᵛत्वं ᵛमाहिनः महनीयः पूजनीयः अनुचरैरनुगन्तव्य इत्यर्थः । तथाभूतः ᵛसन् अपि ᵛएकः असहायः सन् ᵛकुतः ᵛयासि कुतः कारणाद्यासि । यद्वा । कुत्र यासि । ᵛते तव ᵛइत्था इत्थं ᵛकिम् । किं त्वमेवमेव[2] किं न कोऽप्यनुचरोऽस्ति । किंच त्वं ᵛसमराणः[3] अस्माभिः संगच्छमानः ᵛसं ᵛपृच्छसे समीचीनं पृच्छसि । हे ᵛहरिवः हरिभ्यां तद्वन्निन्द्र ᵛते तव ᵛअस्मे अस्मासु ᵛयत् वक्तुमिष्टतममस्ति ᵛतत् ᵛनः अस्मभ्यं ᵛशुभानैः शोभमानैर्वचनैः ᵛवोचेः ब्रूहि ॥

ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ ४ ॥

ब्रह्माणि । मे । मतयः । शम् । सुतासः । शुष्मः । इयर्ति । प्रऽभृतः । मे । अद्रिः ।
आ । शासते । प्रति । हर्यन्ति । उक्था । इमा । हरी इति । वहतः । ता । नः । अच्छ ॥ ४ ॥

अथैवं तैः पृष्टोऽनया चतुर्थ्या इन्द्रः प्रत्याह । हे मरुतः ᵛब्रह्माणि सर्वाणि कर्माणि हवींषि वा ᵛमे मम स्वभूतानि । तथा ᵛमतयः च मननयुक्ताः स्तुतयश्च मे मम ᵛशं सुखकार्याः । यद्वा । मे मतयो बुद्धयः तेष्वेव वर्तन्ते इति शेषः । तथा ᵛसुतासः अभिषुताः सोमाः मे मदीया मदर्था एव । अतो यज्ञं प्रति गन्तव्यमित्यर्थः । किंच मध्ये राक्षसादिबाधपरिहाराय ᵛशुष्मः । बलनामैतत् । बलवान् ᵛमे मदीयः ᵛअद्रिः शत्रूणां भक्षको वज्रः ᵛप्रभृतः सन् ᵛइयर्ति गच्छत्येव लक्ष्यं प्रति न च निवर्तते । न केवलं हविरादीनां मदीयत्वमेव अपि तु यजमानाः ᵛआ ᵛशासते मामेव प्रार्थयन्ते । किंच ᵛउक्था उक्थानि शस्त्राणि मां ᵛप्रति ᵛहर्यन्ति कामयन्ते मामेव शंसन्तीत्यर्थः । किंच ᵛनः अस्मदीयौ ᵛइमा ᵛहरी इमौ

---

१. क्ष-ञ-ट-रमयामः । २. क्ष-ञ-ट-स एवमेव; ञ१-सरूपमेव । ३. क्ष-ञ१-ञ-ट-समराणः समरणः सम्यक् ।

अश्वौ ᵛता तानि गन्तव्यानि हविरादीनि ᵛअच्छ अभिप्राप्तुं मां ᵛवहतः अभिमतदेशं प्रापयतः। अत एव शीघ्रं गच्छामि। युष्माभिरपि तत्प्राप्तुं गन्तव्यमित्यर्थः। अतोऽसहाय इति मन्तव्यमिति भावः॥

**अतो॑ व॒यम॑न्त॒मेभि॑र्युजा॒नाः स्वक्ष॑त्रेभिस्त॒न्व१॑ः शुम्भ॑मानाः।**

**महो॑भि॒रेताँ॒ उप॑ युज्महे॒ न्विन्द्र॑ स्व॒धामनु॒ हि नो॑ ब॒भूथ॑ ॥ ५ ॥**

अत॑ः। व॒यम्। अ॒न्त॒मेभि॑ः। यु॒जा॒नाः। स्वऽक्ष॑त्रेभिः। त॒न्व॑ः। शुम्भ॑मानाः।

मह॑ःऽभिः। ए॒ता॑न्। उप॑। यु॒ज्म॒हे॒। नु। इन्द्र॑। स्व॒धाम्। अनु॑। हि। न॒ः। ब॒भूथ॑॥ ५॥

एवमुक्ता मरुतः तमेवं ब्रुवते। हे इन्द्र त्वं यस्मात् एवं करोषि ᵛअतः कारणात् ᵛवयम् अपि ᵛअन्तमेभिः अन्तिकतमैः अश्वैः[1] ᵛयुजानाः युक्ताः सन्तः। कीदृशैः। ᵛस्वक्षत्रेभिः स्वायत्तबलैः[2]। किंच ᵛमहोभिः तेजोभिः ᵛतन्वः आत्मशरीराणि ᵛशुम्भमानाः दीपयन्तः हर्षं प्राप्नुवाना इत्यर्थः। यद्वा। महोभिः स्वमहत्त्वेन युक्ता वयम् ᵛएतान् गन्तून्[3] ᵛनु क्षिप्रम् ᵛउप ᵛयुज्महे[4] तत्र साकं हविरादि स्वीकुर्महे इत्यर्थः। हे ᵛइन्द्र त्वमपि ᵛनः अस्मत्संबन्धि ᵛस्वधाम् उदकं बलं वा ᵛअनु ᵛबभूथ ᵛहि अस्मत्सृष्टोदकजन्यं हविः अनुभवसि खलु। हिशब्दः परस्परोपकार्योपकारिभावप्रसिद्धिद्योतनार्थः॥ ॥ २४ ॥

**क्व१॑ स्या वो॑ मरुतः स्व॒धासी॒द्यन्मामेकं॑ स॒मध॑त्ताहि॒हत्ये॑।**

**अ॒हं ह्यु१॒ग्रस्त॑वि॒षस्तुवि॑ष्मा॒न्विश्व॑स्य शत्रो॒रन॑मं वध॒स्नैः ॥ ६ ॥**

क्व॑। स्या। व॒ः। म॒रु॒तः॒। स्व॒धा। आ॒सी॒त्। यत्। माम्। एक॑म्। सम्ऽअध॑त्त। अ॒हि॒ऽहत्ये॑।

अ॒हम्। हि। उ॒ग्रः। त॒वि॒षः। तुवि॑ष्मान्। विश्व॑स्य। शत्रो॑ः। अन॑मम्। व॒ध॒ऽस्नैः॥ ६॥

ᵛस्या सा ᵛस्वधा तदुदकं बलं वा ᵛवः युष्माकं संबन्धि ᵛक्व ᵛआसीत् नैवासीदित्यर्थः[5]। अस्माकमुदकं त्वमनुभवसीति ब्रूथ[6]। ᵛयत् या स्वधा ᵛएकम् असहायं ᵛमाम् ᵛअहिहत्ये वृष्ट्यर्थं मेघहननकर्मणि वृत्रवधे वा ᵛसमधत्त सहितमभूत्। समासीदिति संबन्धः[6]। असहायस्य कथमिति मतं सेत्स्यतीति अतः आह। ᵛअहं ᵛहि अहं खलु ᵛउग्रः उद्गूर्णबलः ᵛतविषः बलवान् ᵛतुविष्मान् महत्त्वोपेतोऽस्मि। यस्मात् अतिबलोऽहं तस्मात् ᵛविश्वस्य कृत्स्नस्य ᵛशत्रोः मेघस्य। शत्रुरेवायम्[7]॥ कर्मणि षष्ठी॥ सर्वं शत्रुसंघं ᵛवधस्नैः वधरूपैः शोधनैः[8] वधकौशलैरित्यर्थः। यद्वा। वध इति वज्रनाम। वधस्नैर्वज्रस्यासनैः क्षेपणप्रकारैः। ᵛअनमम् अनमयम्[9]॥ अन्तर्भावितण्यर्थोऽयम्॥ वशीकरोमीत्यर्थः॥

---

१. क्ष-झ१-ञ-ट—अश्वादिभिः। २. क्ष-झ१-ञ-ट—स्वकीयबलैः। ३. क—गतॄ (न्तॄ)न्; क्ष-ञ-ट—महानुभावान्। ४. क्ष-ञ-ट—युज्महे। बहुवचनं पूजार्थम्। ५. क्ष-ञ-ट—कुत्रासीत्। ६. क्ष-झ१-ञ-ट—ब्रूत। कथं नासीत् इत्याशङ्क्याह। यत् यस्मात् एकमसहायं मामहिहत्ये वृष्ट्यर्थं मेघहननं कर्तुं समधत्त सहितं कृतवन्तो यूयं न कृतवन्त इत्यस्वरेणावगम्यते। ७. क्ष-झ१-ञ-ट—विश्वस्य शत्रोरिति। ८. क्ष-झ१-ञ-ट—शोभनैः। ९. क्ष-झ१-ञ-ट—अनामयम्।

भूरि॑ चकर्थ॒ युज्ये॑भिर॒स्मे स॑मा॒नेभि॑र्वृषभ॒ पौंस्ये॑भिः ।
भूरी॑णि॒ हि कृ॒णवा॑मा शविष्ठेन्द्र॒ क्रत्वा॑ मरुतो॒ यद्वशा॑म ॥ ७ ॥

भूरि॑ । च॒क॒र्थ॒ । युज्ये॑भिः । अ॒स्मे इति॑ । स॒मा॒नेभिः॑ । वृ॒ष॒भ॒ । पौंस्ये॑भिः ।
भूरी॑णि । हि । कृ॒णवा॑म । श॒वि॒ष्ठ॒ । इन्द्र॑ । क्रत्वा॑ । म॒रु॒तः॒ । यत् । वशा॑म ॥ ७ ॥

अथैवमुक्ताः[1] इन्द्रं[1] पुनराहुः । हे इन्द्र vवृषभ वर्षितः त्वं vभूरि vचकर्थ प्रभूतं कृतवानसि सत्यमेव । तथापि vअस्मे अस्माकं vसमानेभिः समानैः vयुज्येभिः अस्माभिर्युक्तैः vपौंस्येभिः पुंसः कर्मभिः सामर्थ्यैरेव चकर्थ । न तु एक एवेत्यर्थः । हे vशविष्ठ । शव इति बलनाम । हे इन्द्र बलवत्तम वयं vभूरीणि vहि त्वत्कृतादपि प्रभूतानि कर्माणि vकृणवाम कृतवन्तः स्म । हे vइन्द्र vक्रत्वा क्रतुना कर्मणा vयत् यद्वृष्ट्यादिकं vवशाम कामयामहे । तानि त्वत्तोऽप्यधिकानीत्यर्थः । यतो वयं vमरुतः ॥ छान्दसमनुदात्तत्वम् ॥ एतेन स्वमहत्त्वं स्थापितं[2] भवति । स्वरो व्यस्तः । अथवा इन्द्रस्येदं वाक्यम् । हे मरुतः यत्[3] यस्यैव तत् तस्यैव भवतु[3] । तर्हि अहं च यूयं च सहैव क्रत्वा कर्मणा यद्वशाम यत् वृष्टिकर्म कामयामहे तस्मादुदकं समानमेवेत्यर्थः । एवं मरुत इति निघातस्वरस्य[4] व्याख्यानम्[4] ॥

वधीं॑ वृ॒त्रं म॑रुत इन्द्रि॒येण॒ स्वेन॒ भामे॑न तवि॒षो ब॑भू॒वान् ।
अ॒हमे॒ता मन॑वे वि॒श्वश्च॑न्द्राः सु॒गा अ॒पश्च॑कर॒ वज्र॑बाहुः ॥ ८ ॥

वधी॑म् । वृ॒त्रम् । म॒रु॒तः॒ । इ॒न्द्रि॒येण॑ । स्वेन॑ । भामे॑न । त॒वि॒षः । ब॒भू॒वान् ।
अ॒हम् । ए॒ताः । मन॑वे । वि॒श्वऽच॑न्द्राः । सु॒ऽगाः । अ॒पः । च॒क॒र॒ । वज्र॑ऽबाहुः ॥ ८ ॥

इदानीम् इन्द्रः आह[5] । हे vमरुतः vअहम्[6] इन्द्रः vइन्द्रियेण vस्वेन vभामेन कोपेन vतविषः बलवान् vबभूवान् भूतः संपन्नः । कस्मै कमिति तदुच्यते[6] । vमनवे मनोरर्थाय vएताः vविश्वश्चन्द्राः सर्वाह्लादकाः vसुगाः सुगमनाः सर्वत्र नद्यादिषु गमनशीलाः vअपः वृष्ट्युदकानि vचकर चकार कृतवानस्मि । यतोऽहं vवज्रबाहुः । अनेन सहायनैरपेक्ष्यमुक्तं भवति ॥

---

१. क्ष-ञ१-ञ-ट—अथैवमिन्द्रेणोक्ताः मरुतः । २. क्ष-ञ१-ञ-ट—ख्यापितम् । ३. क्ष-ञ१-ञ-ट—यद्येवम् । ४. क्ष-ञ१-ञ-ट—निघातस्वारस्येन व्याख्यातम् ( ञ१—व्याख्यानम् ) । ५. क्ष-ङ-ञ१-ञ-ट—समानकर्तृत्वमनङ्गीकुर्वन्नाह । ६. क्ष-ङ-ञ१-ञ-ट—अहमेव वृत्रं मेघमसुरं वावधीं घातितोऽस्मि । केन साधनेनेति तदुच्यते । इन्द्रियेण स्वसामर्थ्येन । तच्च कथं प्राप्तमिति तदुच्यते । स्वेन भामेन उदकावर्षणजातकोपेन ( ङ-ञ१—उदकवर्षणजातकोपेन ) तविषो बलवान् बभूवान् । कस्मिन्निति तदुभयमुच्यते ।

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ९ ॥

अनुत्तम् । आ । ते । मघऽवन् । नकिः । नु । न । त्वाऽवान् । अस्ति । देवता । विदानः ।
न । जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध ॥ ९ ॥

इदानीं ते मरुतो हर्षेण प्रत्याहुः । आ इति स्मरणे । स्मृतवन्तो वयम् इदानीं हे मघवन् ते त्वया अनुत्तम् अप्रेरितं नकिर्नु नैवास्ति । नु निश्चये । त्वया यदुक्तं तत्सत्यमित्यर्थः । हे देव त्वावान् त्वत्सदृशः विदानः विद्वान् ॥ व्यत्ययेन शानच् ॥ जयोपायवेदिता देवता देवः न अस्ति । किंच हे प्रवृद्ध अतिबल जायमानः जातः वा कश्चिद्देवो मर्त्यो वा त्वं यानि वृत्रवधादीनि करिष्या कर्तव्यानि कृणुहि कुरुषे तानि न नशते न व्याप्नोति । नशतिर्व्याप्तिकर्मा । नान्यः त्वच्चेष्टितानुकार्येवेत्यर्थः ॥

एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्यु१ग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ १० ॥

एकस्य । चित् । मे । विऽभु । अस्तु । ओजः । या । नु । दधृष्वान् । कृणवै । मनीषा ।
अहम् । हि । उग्रः । मरुतः । विदानः । यानि । च्यवम् । इन्द्रः । इत् । ईशे । एषाम् ॥ १० ॥

इदानीम् इन्द्र आह । मे मम एकस्य चित् एकस्यैव विभु सर्वत्रगमनशीलम्[1] ओजः बलम् अस्तु । यद्वा । बलम् एकस्यैवास्तु किमर्थमिति चेत् उच्यते । या यानि कर्माणि मनीषा मनीषया मनसः ईषया[2] दधृष्वान् धर्षितवानहं नु क्षिप्रं कृणवै कर्तुं शक्नुवानि । हे मरुतः अहं हि अहं खलु उग्रः उद्गूर्णबलः विदानः वेदनावान् । यानि यानि वसूनि च्यवं अवगच्छामि एषाम् अहमेव इन्द्र इत् ईश्वर एव सन् ईशे ईश्वरो भवामि । अथवा विदानोऽहं यानि च्यवं यान्युद्दिश्य गच्छेयं एषामीशे । यतोऽहमिन्द्रः अतः शक्त इत्यर्थः ॥ ॥ २५ ॥

अमन्दन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥ ११ ॥

अमन्दत् । मा । मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यम् । ब्रह्म । चक्र ।
इन्द्राय । वृष्णे । सुऽमखाय । मह्यम् । सख्ये । सखायः । तन्वे । तनूभिः ॥ ११ ॥

---

१. क्ष-झ१-ञ-ट—सर्वत्रभवनशीलम् । २. क्ष-ञ-ट—ईषया प्रज्ञया; ङ-झ-झ१—ईषया प्रज्ञया वा ।

इदमपि इन्द्रवाक्यम् । हे ˇमरुतः ˇमा माम् ˇअत्र अस्मिन् उदकोत्पादनविषये ˇस्तोमः स्तोत्रम् ˇअमन्दत् मादयति मोदयते वा । हे ˇनरः ˇसखायः यूयं ˇमे मम ˇयत् ˇश्रुत्यं सर्वैः श्रोतव्यं ˇब्रह्म परिवृढमेघधारणादिरूपं ˇचक्र[1] कृतवन्तः[1]। ' स्वप्रभूतं स्तोत्रं वानुत्तमा ते ' इत्यादिकम् । ˇइन्द्राय परमैश्वर्यगुणकाय ˇवृष्णे अभिमतवर्षित्रे ˇसुमखाय शोभनयागाय ˇसख्ये युष्माभिः समानख्यानाय ˇतनूभिः अनेकशरीरैरुपेताय ˇमह्यं मम ˇतन्वे मदीयशरीरपोषाय भवतु । यद्वा । तनूभिरस्मच्छरीरभूतैर्युष्माभिः कृतं मह्यमेवास्त्वित्यर्थः ॥

**एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।**

**संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ १२ ॥**

एव । इत् । एते । प्रति । मा । रोचमानाः । अनेद्यः । श्रवः । आ । इषः । दधानाः ।

सम्ऽचक्ष्य । मरुतः । चन्द्रऽवर्णाः । अच्छान्त । मे । छदयाथ । च । नूनम् ॥ १२ ॥

हे ˇमरुतः ˇएवेत् एवमेव ˇएते यूयं ˇमा मां ˇप्रति ˇरोचमानाः मद्विषये संप्रीयमाणा मां ख्यापयन्तो वा ˇअनेद्यः अनन्तिकस्थं ˇश्रवः कीर्तिम् ˇइषः च ˇदधानाः । ˇआ इति चार्थे । यद्वा । अनेद्य इति प्रशस्यनाम । प्रशस्यं यशोऽस्मत्तो दधाना अस्माभिर्वा धार्यमाणाः । ˇचन्द्रवर्णाः । चन्द्रमिति हिरण्यनाम । सुवर्णवर्णा यूयं ˇमे मां ˇसंचक्ष्य सम्यक्प्रकाश्य ˇनूनं निश्चयम् ˇअच्छान्त यशोभिराच्छादितवन्तः ˇछदयाथ आच्छादयथ ˇच । मां प्रति सर्वदा रोचमाना मय्येव कीर्तिमन्नं च दधाना मत्कृतैः कर्मभिर्मामेव स्तुतेत्यर्थः ॥

**को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः ।**

**मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥ १३ ॥**

कः । नु । अत्र । मरुतः । ममहे । वः । प्र । यातन । सखीन् । अच्छ । सखायः ।

मन्मानि । चित्राः । अपिऽवातयन्तः । एषाम् । भूत । नवेदाः । मे । ऋतानाम् ॥ १३ ॥

हे ˇमरुतः युष्मान् ˇअत्र लोके ˇको ˇनु खलु मर्त्यः ˇममहे पूजयति । हे ˇसखायः सर्वस्य सखिवत्प्रियकारिणः सन्तः ˇसखीन् हविष्प्रदानेन सखिभूतान् यजमानान् ˇअच्छ आभिमुख्येन प्राप्तुं ˇप्र ˇयातन गच्छत । हे ˇचित्राः चायनीयाः यूयं ˇमन्मानि मननीयानि धनानि ˇअपिवातयन्तः संपूर्णं प्रापयन्तः ˇभूत भवत । किंच ˇमे मदीयानाम् ˇएषाम् ˇऋतानाम् अवितथानां ˇनवेदाः भूत ज्ञातारो भवत ॥

---

१. ख-च-ञ-फ-कर्म च कृतवन्तः स्थ; त-चक्र कृतवन्तः स्थ ।

**आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।**
**ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ १४ ॥**

आ । यत् । दुवस्यात् । दुवसे । न । कारुः । अस्मान् । चक्रे । मान्यस्य । मेधा ।
ओ इति । सु । वर्त्त । मरुतः । विप्रम् । अच्छ । इमा । ब्रह्माणि । जरिता । वः । अर्चत् ॥ १४ ॥

हे मरुतः दुवस्यात् युष्मत्परिचरणार्हात् स्तोत्रात् तेन स्तोत्रेण दुवसे परिचरणाय पर्याप्ता कारुः कर्त्री स्तुतिकुशला मान्यस्य माननीयस्य विदुषः मेधा बुद्धिः अस्मान् । न इति संप्रत्यर्थे । इदानींतनान् आ चक्रे आभिमुख्येन करोति प्राप्नोतीत्यर्थः । यद्वा । षष्ठीबहुवचने[1] इदं रूपम् । दुवस्यानां परिचरणार्हाणां दुवसे परिचरणायेत्यर्थः[2] । अतो हे मरुतः[2] यूयं विप्रं मेधाविनं यजमानं माम् अगस्त्यम् अच्छ आभिमुख्येन प्राप्तुं सु सुष्ठु ओ वर्त्त । ओ इति निपातद्वयसमुदायरूपः एको निपातः । आङित्याभिमुख्येन[3] । उकारोऽवधारणे । आवर्तध्वमेव । किमर्थमेवमिति उच्यते । इमा ब्रह्माणि इमानि परिवृढानि कर्माण्युद्दिश्य जरिता[4] स्तोता वः युष्मान् अर्चत् अर्चति । यस्मादेवं तस्मादावर्तध्वमित्यर्थः ॥

अथ पञ्चदश्यां[5] सूक्तोपक्रममारभ्य कृतां स्तुतिं मरुद्भ्यो निवेद्य अभिमतमाशास्ते ॥

**एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।**
**एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १५ ॥**

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १५ ॥

हे मरुतः एषः स्तोमः इदानींक्रियमाणप्रकारं स्तोत्रं वः युष्मदर्थं युष्मत्प्रीणनाय भवत्वित्यर्थः । तथा इयं गीः स्तुतिरूपा वागपि वो युष्मदर्थाय । यस्मात् एवं तस्मात् मान्दार्यस्य स्तुतिविशेषैर्मन्दयितुः स्तुतिभिर्मदस्य प्रेरयितुर्वा मान्यस्य वरप्रदानादिना माननीयस्य[6] कारोः स्तोतुः इषा इच्छया आ यासीष्ट आगच्छत । किमर्थम् । तन्वे शरीराय तत्पोषायेत्यर्थः[7] । वयां वयमपि इषम् अन्नं वृजनं बलं जीरदानुं जयशीलदानम्[8] एतत्सर्वं विद्याम । युष्मास्वागतेषु यज्ञसंपूर्त्यैर्वृष्ट्यादिद्वारा[9] लभेमहि ॥　॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्[10] । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[11] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके तृतीयोऽध्यायः समाप्तः ॥

---

१. क्ष-झ१-ञ-ट—षष्ठीबहुवचनस्थाने । २. क्ष-ङ-झ१-ञ-ट—परिचरणाय । युष्मत्स्तुतियोग्या मतिर्नास्ति तथापि कृपया हे मरुतः। ३. क्ष-ञ-ट—आ इत्याभिमुख्येन । ४. ङ-ज्ञ-झ-झ१—जरिता गरिता । ५. क्ष-झ१-ञ-ट—पञ्चदश्याः । ६. क्ष-झ१-ञ-ट—मननीयस्य । ७. क्ष-ङ-झ१-ञ-ट—पोषणाय हविर्भक्षणेन शरीरं वर्धयत । ८. क्ष-झ१-ञ-ट—जयशीलं दानं जीवनं वा । ९. क्ष-ङ-झ१-ञ-ट—यज्ञसंपूर्तेः वृष्ट्यादिद्वारा । १०. क्ष-झ१-ञ-ट—विदारयन् । ११. क्ष-ञ-ट—सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
इत्थं द्वितीयाष्टकगस्तृतीयोऽध्याय आदरात् ।
व्याख्यातः सायणार्येण पुरुषार्थप्रदर्शकः ॥

अथ चतुर्थोऽध्याय आरभ्यते[1] । 'कया शुभा' इत्यस्मिंस्त्रयोविंशेऽनुवाके पञ्चदश सूक्तानि । तत्र 'तन्नु' इत्येतत् द्वितीयं सूक्तं पञ्चदशर्चम् । अत्रानुक्रमणिका– 'तन्वगस्त्यो मारुतं हि द्वित्रिष्टुबन्तं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुम्भे रेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेताम्' इति । 'सूक्तसंख्यानुवर्तेत आन्यस्याः सूक्तसंख्यायाः' (अनु. १२. १) इति परिभाषितत्वात पञ्चदशर्चम् । उक्तलक्षणेनागस्त्येन दृष्टत्वात्तस्यार्षम् । 'मारुतं हि' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमादिसूक्तत्रयं मरुद्देवताकम् । अन्त्ये द्वे त्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विनियोगो लैङ्गिकः ॥

**तन्नु वो॑चाम रभ॒साय॒ जन्म॑ने॒ पूर्वं॑ महि॒त्वं वृ॑ष॒भस्य॑ के॒तवे॑ ।**
**ऐ॒धेव॒ याम॑न्मरुतस्तुविष्वणो यु॒धेव॑ शक्रास्तवि॒षाणि॑ कर्तन ॥ १ ॥**

तत् । नु । वो॒चा॒म॒ । र॒भ॒साय॑ । जन्म॑ने । पूर्व॑म् । म॒हि॒ऽत्वम् । वृ॒ष॒भस्य॑ । के॒तवे॑ ।
ऐ॒धाऽइ॑व । याम॑न् । म॒रु॒तः॒ । तु॒वि॒ऽस्व॒नः॒ । यु॒धाऽइ॑व । श॒क्राः॒ । त॒वि॒षाणि॑ । क॒र्त॒न॒ ॥ १ ॥

हे ᵛमरुतः वयं युष्मदीयं ᵛतत् तादृशं प्रसिद्धं ᵛपूर्वं पूरकं पूर्वतनं वा ᵛमहित्वं[2] माहात्म्यं ᵛनु क्षिप्रं ᵛवोचाम ब्रूमः । किमर्थम् । ᵛरभसाय राभस्ययुक्ताय ᵛजन्मने वेद्यां प्रादुर्भावाय वेद्यां संनिधानाय इत्यर्थः । तदपि किमर्थमित्यत आह । ᵛवृषभस्य फलस्य वर्षितुर्यज्ञस्य ᵛकेतवे प्रज्ञानाय[3] । वायुप्रेरणेन मेवागमनं प्रसिद्धम् । हे ᵛतुविष्वणः गमनसंरम्भेण प्रभूतध्वनियुक्ता हे ᵛशक्राः सर्वमपि कर्तुं शक्ताः यूयं ᵛयामन् यामनि यागगमने प्रस्तुते सति ᵛऐधेव ऐधानि एधःसंबन्धीनि तेजांसीव प्राप्येण महत्त्वेन ᵛतविषाणि बलानि सामर्थ्यानि ᵛकर्तन कुरुत तत्स्तुम इत्यर्थः । तत्र दृष्टान्तः । ᵛयुधेव युद्धेन तत्तद्युद्धनिमित्तं यथा तविषाणि कुरुथ तद्वत् ॥

**नित्यं॒ न सू॒नुं मधु॒ बिभ्र॑त॒ उप॒ क्रीळ॑न्ति क्री॒ळा वि॒दथे॑षु॒ घृष्व॑यः ।**
**नक्ष॑न्ति रु॒द्रा अव॑सा नम॒स्विनं॒ न म॑र्धन्ति॒ स्वत॑वसो हवि॒ष्कृत॑म् ॥ २ ॥**

नित्य॑म् । न । सू॒नुम् । मधु॑ । बिभ्र॑तः । उप॑ । क्रीळ॑न्ति । क्री॒ळाः । वि॒दथे॑षु । घृष्व॑यः ।
नक्ष॑न्ति । रु॒द्राः । अव॑सा । न॒म॒स्विन॑म् । न । म॒र्ध॒न्ति॒ । स्वऽत॑वसः । ह॒विः॒ऽकृत॑म् ॥ २ ॥

---

१. झ१–व्याख्यातुमारभ्यते । २. झ१–महित्वं महत्त्वम् । ३. झ-झ१–'प्रज्ञानाय' इत्यस्यानन्तरं 'तत्सिद्ध्यर्थमित्यर्थः । अथवा वृषभस्य वृष्ट्युत्पादकस्य वर्षितुः मेघस्य केतवे प्रज्ञानाय' इत्यधिकम् ।

नित्यं न सूनुम् औरसं[1] प्रियं पुत्रमिव[1] मधु मधुरं हविः बिभ्रतः धारयन्तो मरुतः विदथेषु यागेषु वृष्वयः रक्षःप्रभृतीनां वर्धकाः सन्तः क्रीळाः क्रीडनशीलाः उप उपेत्य क्रीळन्ति विहरन्ति । किंच रुद्राः । रुद्रपुत्रा मरुतोऽपि रुद्रा उच्यन्ते जन्यजनकयोरभेदात् । मरुतां रुद्रपुत्रत्वं पुराणेषु तपसा तुष्टौ पार्वतीपरमेश्वरौ मरुतः पुत्रत्वेन स्वीचक्रतुरिति प्रसिद्धम् । नमस्विनं नमस्कारोपलक्षितस्तोत्रोपेतं हविष्कृतं हविषः कर्तारं प्रदातारं यजमानम् अवसा रक्षणेन तर्पणेन वा निमित्तभूतेन नक्षन्ति व्याप्नुवन्ति । किंच स्वतवसः स्वायत्तबला मरुतो यजमानं न मर्धन्ति न संग्रामयन्ति न क्लेशयन्तीत्यर्थः ॥

**यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे ।**
**उक्षन्त्यस्मै मरुतो हिताइव पुरू रजांसि पयसा मयोभुवः ॥ ३ ॥**

यस्मै । ऊमासः । अमृताः । अरासत । रायः । पोषम् । च । हविषा । ददाशुषे ।
उक्षन्ति । अस्मै । मरुतः । हिताःऽइव । पुरु । रजांसि । पयसा । मयःऽभुवः ॥ ३ ॥

यस्मै यजमानाय हविषा ददाशुषे सोमादिहविर्दत्तवते हविषा प्रीताः ऊमासः अवितारः अमृताः अमरणधर्माणो मरुतः रायस्पोषं धनस्य पुष्टिम्[2] । चशब्दात् पश्वादिपुष्टिम् । अरासत प्रायच्छन् । रासतिर्दानार्थः । अस्मै यजमानाय हिताइव हिताचरणाः सखाय इव सन्तः मयोभुवः सुखस्य भावयितारः मरुतः रजांसि लोकान् पुरु प्रभूतं यथा भवति तथा पयसा उदकेन सस्याद्युत्पत्त्यर्थम् उक्षन्ति सिञ्चन्ति ॥

**आ ये रजांसि तविषीभिरव्यत प्र व एवासः स्वयतासो अध्रजन् ।**
**भयन्ते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥ ४ ॥**

आ । ये । रजांसि । तविषीभिः । अव्यत । प्र । वः । एवासः । स्वऽयतासः । अध्रजन् ।
भयन्ते । विश्वा । भुवनानि । हर्म्या । चित्रः । वः । यामः । प्रऽयतासु । ऋष्टिषु ॥ ४ ॥

हे मरुतः युष्मत्संबन्धिनः ये एवासः एवाः अश्वविशेषाः[3] तविषीभिः स्वकीयैर्बलैर्वृष्टिप्रदानादिरूपैः रजांसि लोकान् आ अव्यत सर्वत आवृण्वन्ति ते[4] वः युष्माकम् एवासः अश्वाः स्वयतासः स्वयमेव सारथिना विनैव युक्ताः प्र अध्रजन् प्रकर्षेण गच्छन्ति व्याप्नुवन्ति । किंच युष्मदागमनात् विश्वा भुवनानि सर्वाणि भूतजातानि विश्वा हर्म्या सर्वाणि हर्म्याणि च भयन्ते बिभ्यति पतनात् । यस्मादेवं तस्मात् वो यामः चित्रः चायनीयः । आश्चर्यभूत इत्यर्थः । भीतेः कारणमाह । ऋष्टिषु युद्धस्थासु[5] हेतिषु प्रयतासु प्रकर्षेणोद्यतासु सतीषु । अथवा भीतौ दृष्टान्तः । ऋष्टिषु प्रयतासु सतीषु । लुप्तोपमेयम् । आयुधेषूद्यतेषु यथा जना बिभ्यति तद्वद्युष्मदागमनात् बिभ्यतीत्यर्थः ॥

---

१. झ१–अवियुक्तं पुरतो वर्तमानं तनुजं प्रियपुत्रमिव । २. ज-झ–पुष्टिं च । ३. झ१–रक्षाविशेषाः । ४. ज-झ–तेषाम् । ५. क-ज-झ–युष्मद्धस्तस्थासु; झ–युद्धस्तस्थासु; त–युद्धस्तथासु ।

यत्त्वेषयामा नदयन्त पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः ।
विश्वो वो अज्मन्भयते वनस्पती रथीयन्तीव प्र जिहीत ओषधिः ॥ ५ ॥

यत् । त्वेषऽयामाः । नदयन्त । पर्वतान् । दिवः । वा । पृष्ठम् । नर्याः । अचुच्यवुः ।
विश्वः । वः । अज्मन् । भयते । वनस्पतिः । रथियन्तीऽइव । प्र । जिहीते । ओषधिः ॥ ५ ॥

मरुतः ᵛत्वेषयामाः प्रदीप्तगमनाः ᵛयत् यदा ᵛपर्वतान् पर्ववतो गिरेर्गह्वराणि पूरकान् मेघान् वा ᵛनदयन्त नादयन्ति[1] ᵛवा अथवा ᵛदिवः विद्योतनात्मकस्यान्तरिक्षस्य ᵛपृष्ठम् उपरिभागं ᵛनर्याः नरेभ्यो हिताः ᵛअचुच्यवुः गच्छन्ति तदा ᵛवः युष्मत्संबन्धिनि ᵛअज्मन् गमने निमित्तभूते सति ᵛविश्वः ᵛवनस्पतिः वनस्य पालयिता वृक्षसमूहः ᵛभयते बिभेति । तथा ᵛओषधिः प्रियङ्गुव्रीह्यादिः ᵛप्र ᵛजिहीते प्रकर्षेण गच्छति स्वस्थानात् इतस्ततश्चलतीत्यर्थः । तत्र दृष्टान्तः । ᵛरथीयन्तीव रथमात्मन इच्छन्ती स्त्री । रथारूढेत्यर्थः । तादृशी स्त्रीव । सा यथा चलति तद्वत् ॥ ॥ १ ॥

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥ ६ ॥

यूयम् । नः । उग्राः । मरुतः । सुऽचेतुना । अरिष्टऽग्रामाः । सुऽमतिम् । पिपर्तन ।
यत्र । वः । दिद्युत् । रदति । क्रिविःऽदती । रिणाति । पश्वः । सुधिताऽइव । बर्हणा ॥६॥

हे ᵛउग्राः उद्गूर्णबलाः ᵛमरुतः ᵛयूयं ᵛसुचेतुना शोभनचेतसा ᵛअरिष्टग्रामाः अहिंसितसंघाः सन्तः ᵛनः अस्माकं ᵛसुमतिं शोभनबुद्धिं ᵛपिपर्तन पूरयत । कस्मिन्काले इति तदुच्यते। ᵛयत्र यस्मिन् काले ᵛवः युष्मत्संबन्धिनी ᵛक्रिविर्दती विक्षेपणशीलदन्तो[2] ᵛदिद्युत् हेतिः ᵛरदति विलिखति मेघसंस्थायं ᵛपश्वः पशूंश्च ᵛरिणाति रेषति हिनस्ति । वायौ वाति सति पशवः शीर्यन्ते इति प्रसिद्धम् । हिंसायां दृष्टान्तः । ᵛसुधिता सुहिता सुष्ठु प्रेरिता ᵛबर्हणा हतिः तत्साधना हेतिर्वा यथा रिणाति तद्वत् ॥

प्र स्कुम्भदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः ।
अर्चन्त्यर्कं मदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥ ७ ॥

प्र । स्कुम्भऽदेष्णाः । अनवभ्रऽराधसः । अलातृणासः । विदथेषु । सुऽस्तुताः ।
अर्चन्ति । अर्कम् । मदिरस्य । पीतये । विदुः । वीरस्य । प्रथमानि । पौंस्या ॥ ७ ॥

ᵛप्र ᵛस्कम्भदेष्णाः प्रकर्षेण स्तम्भितदानाः । अविरतदाना इत्यर्थः । ᵛअनवभ्रराधसः अभ्रष्टहविरादिधनाः । राध इति धननाम । ᵛअलातृणासः । नकारस्य स्थाने लकारः ॥ अनातृणासः

---

१. झ-झ१–शब्दयन्ति । २. झ१–विक्षेपणशीलदन्ती रूपारूपा ।

आतर्दनरहिताः। अथवा। अलं पर्याप्तम् आतर्दनाः शत्रूणाम्। यद्वा। अलम् अत्यर्थं दातारः फलानाम्। एवंरूपा मरुतः विदथेषु यागेषु अर्कम् अर्चनीयमिन्द्रं स्वसखीभूतम् अर्चन्ति पूजयन्ति स्तुत्यादिना संभावयन्तीत्यर्थः। किमर्थं मदिरस्य मादनसाधनस्य सोमस्य पीतये पानाय। तस्येन्द्रस्य महत्त्वं कथं जानन्तीत्यत आह। ते मरुतः वीरस्य विविधं शत्रूणामीरकस्य इन्द्रस्य प्रथमानि प्रतमानि मुख्यानि पौंस्या पुंस्त्वानि वृत्रवधादिरूपाणि विदुः जानन्ति ॥

शतभुजिभिस्तमभिह्रुतेरघात्पूर्भी रक्षता मरुतो यमावत ।
जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात्तनयस्य पुष्टिषु ॥ ८ ॥

शतभुजिऽभिः । तम् । अभिऽह्रुतेः । अघात् । पूःऽभिः । रक्षत । मरुतः । यम् । आवत ।
जनम् । यम् । उग्राः । तवसः । विऽरप्शिनः । पाथन । शंसात् । तनयस्य । पुष्टिषु ॥ ८ ॥

हे मरुतः यूयं शतभुजिभिः। शतमित्यपरिमितनाम। असंख्यातभोगवद्भिः पूर्भिः पालनैः[1] जेतव्यैः शत्रूणां नगरैर्वा तं[2] रक्षत पालयत। तमित्युक्तं कमित्याह। यम् जनम् अभिह्रुतेः अभिभवकारणात् कुटिलस्वभावात् अघात् पापात् आवत अरक्षत। किंच हे उग्राः उद्गूर्णतेजसो हे तवसः बलवन्तो वेगवन्तो वा हे विरप्शिनः। सहस्रनामैतत्। महान्तः। रपणीयाः शब्दाः रपाः। ते येषां ते रप्शिनः। विविधा रप्शिनः शब्दोपेता येषां ते तथोक्ता हे तादृशा यूयं यं च जनं पाथन पाथ रक्षथ। कस्मान्निमित्तादिति उच्यते। तनयस्य। उपलक्षणमेतत्। पुत्रादीनां पुष्टिषु पोषेषु निमित्तभूतेषु शंसात् अभिशंसनात्। यमेवं कुरुथ तं रक्षतेति शेषः। पापक्षयाद्यनिष्टपरिहारेण पुत्रादिपोषरूपेष्टप्राप्त्या च रक्षथेत्यर्थः ॥

विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता ।
अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥ ९ ॥

विश्वानि । भद्रा । मरुतः । रथेषु । वः । मिथस्पृध्याऽइव । तविषाणि । आऽहिता ।
अंसेषु । आ । वः । प्रऽपथेषु । खादयः । अक्षः । वः । चक्रा । समया । वि । ववृते ॥ ९ ॥

हे मरुतः वः रथेषु युष्मत्संबन्धिरथेषु रंहणसाधनेषु विश्वानि भद्रा सर्वाणि कल्याणानि भोगयोग्यानि द्रव्याण्यस्मभ्यं प्रदेयानि फलानि वा आहितानि। तथा वः अंसेष्वा तदुपलक्षित-भुजेष्वपि। आकारोऽप्यर्थे। मिथस्पृध्येव बलाधिक्यात् परस्परस्पर्धाविषयाणि तविषाणि बलानि अंसेषूक्तलक्षणान्यायुधानि वा आहितानि। किंच वः प्रपथेषु। प्रगताः पन्थानो येषु विश्राम-स्थानेषु तानि प्रपथानि। तेषु खादयः खाद्यानि भक्ष्याण्याहितानि। यद्वा। प्रगतः पन्था यैस्तेषु पादाग्रेषु खादयः स्थिरा आभरणविशेषा आहिताः। किंच अक्षो वः युष्मत्संबन्धी रथ्यः अक्षः चक्रा तत्रोपनिबद्धानि चक्राणि समया समीपे तेषां परिसरे वि ववृते विशेषेण वर्तते। न

1. झ१-पुष्टिभिः। 2. ज-झ-आवत।

कदाचिदपि चक्रेषु संलग्नो भवतीत्यर्थः । यस्मादेवं देवयजनगमनसाधनानि सन्ति तस्मात् शीघ्र-मागच्छध्वमित्यभिप्रायः ॥

**भूरी॑णि भ॒द्रा नर्ये॑षु बा॒हुषु॒ वक्षः॑सु रु॒क्मा र॑भ॒सासो॑ अ॒ञ्जयः॑ ।**

**अंसे॒ष्वेताः॑ प॒विषु॑ क्षु॒रा अधि॒ वयो॒ न प॒क्षान्व्यनु॒ श्रियो॑ धिरे ॥ १० ॥**

भूरी॑णि । भ॒द्रा । नर्ये॑षु । बा॒हुषु॑ । वक्षः॑ऽसु । रु॒क्माः । र॒भ॒सासः॑ । अ॒ञ्जयः॑ ।

अंसे॑षु । एताः॑ । प॒विषु॑ । क्षु॒राः । अधि॑ । वयः॑ । न । प॒क्षान् । वि । अनु॑ । श्रियः॑ । धि॒रे॒ ॥ १० ॥

ते मरुतः ᵛनर्येषु नरेभ्यो हितेषु ᵛबाहुषु भुजेषु ᵛभूरीणि प्रभूतानि ᵛभद्रा भद्राणि कल्याणानि धनानि स्तोतृभ्यो दातुं ᵛधिरे दधिरे धारयन्ति । तथा ᵛवक्षःसु उरःस्थलेषु ᵛरुक्माः सुवर्णरत्नादि-निर्मितान्याभरणानि धारयन्ति । कीदृशानि । ᵛरभसासः राभस्ययुक्तानि कान्तिमन्ति वा । तथा ᵛअञ्जयः व्यक्तानि । ᵛअंसेषु भुजमूलेषु ᵛएताः शुक्लवर्णा मालाः । ᵛपविषु वज्रसदृशेष्वायुधेषु ᵛक्षुराः क्षुरधाराः । ᵛअधि सप्तम्यर्थानुवादी । एवमेते मरुतः सर्वाङ्गेषु ᵛश्रियः लक्ष्मीः अनुक्रमेण ᵛवि धिरे विविधं धारयन्ति । तत्र दृष्टान्तः । ᵛवयो ᵛन ᵛपक्षान् पक्षिणः पक्षानिव ॥ ॥ २ ॥

**म॒हान्तो॑ म॒ह्ना वि॒भ्वो॒३॑ विभू॑तयो दूरे॒दृशो॒ ये दि॒व्या इ॑व॒ स्तृभिः॑ ।**

**म॒न्द्राः सु॑जि॒ह्वाः स्वरि॑तार आ॒सभिः॒ संमि॑श्ला॒ इन्द्रे॑ म॒रुतः॑ परि॒ष्टुभः॑ ॥ ११ ॥**

म॒हान्तः॑ । म॒ह्ना । वि॒ऽभ्वः॑ । विऽभू॑तयः । दू॒रे॒ऽदृशः॑ । ये । दि॒व्याःऽइ॑व । स्तृऽभिः॑ ।

म॒न्द्राः । सु॒ऽजि॒ह्वाः । स्वरि॑तारः । आ॒सऽभिः॑ । सम्ऽमि॑श्लाः । इन्द्रे॑ । म॒रुतः॑ । प॒रि॒ऽस्तुभः॑ ॥ ११ ॥

ᵛये ᵛमरुतः ᵛमहान्तः माहात्म्योपेताः । केन । ᵛमह्ना महत्त्वेन प्रभावातिशयेन । तथा ᵛविभ्वः विभवो व्याप्ताः तथा ᵛविभूतयः विविधैश्वर्यवन्तः ᵛदूरेदृशः दूरे दृश्यमानाः प्रकाशमानाः । दूरदर्शने दृष्टान्तः । ᵛदिव्याः ᵛस्तृभिः ᵛइव । स्तृ इति नक्षत्रनाम 'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' ( निरु. ३. २० ) इति निरुक्तत्वात् । दिवि भवा देवाः स्तृभिः स्वपुष्पकभूतैस्तेजःपुञ्जैर्नक्षत्रैर्यथा दूरे दृश्य-माना भवन्ति तद्वत् । किंच ᵛमन्द्राः मादनाः ᵛसुजिह्वाः शोभनजिह्वाः ᵛआसभिः आस्यैः ᵛस्वरि-तारः शब्दयितारः । प्रियवचना इत्यर्थः । अत एव सुजिह्वा इत्युक्तम् । किंच ᵛइन्द्रे ᵛसंमिश्लाः सम्यग्मिश्रयितारः । इन्द्रसहायिन इत्यर्थः । 'मरुतो हैनं नाजहुः' ( ऐ. ब्रा. ३. २० ) इति श्रुतेः । तथा ᵛपरिष्टुभः परिस्तोभयुक्ताः स्तुतिभिर्युक्ताः । एवं महाभागा ये मरुतः सन्ति तेऽस्मद्यज्ञम् आगच्छन्तीति शेषः ॥

**तद्वः॑ सुजाता मरुतो महित्व॒नं दी॒र्घं वो॑ दा॒त्रमदि॑तेरिव व्र॒तम् ।**

**इन्द्र॑श्च॒न त्यज॑सा॒ वि ह्रु॑णाति॒ तज्जना॑य॒ यस्मै॑ सु॒कृते॒ अरा॑ध्वम् ॥ १२ ॥**

तत् । वः॒ । सु॒ऽजा॒ताः॒ । म॒रु॒तः॒ । म॒हि॒ऽत्व॒नम् । दी॒र्घम् । वः॒ । दा॒त्रम् । अदि॑तेःऽइव । व्र॒तम् ।

इन्द्रः॑ । च॒न । त्यज॑सा । वि । ह्रु॒णा॒ति॒ । तत् । जना॑य । यस्मै॑ । सु॒ऽकृते॑ । अरा॑ध्वम् ॥ १२ ॥

हे <sup>v</sup>सुजाताः शोभनजननाः हे <sup>v</sup>मरुतः <sup>v</sup>वः युष्मदीयं <sup>v</sup>महित्वनं महत्त्वं <sup>v</sup>तत् तादृक् खलु। तदित्युक्तं किमित्याह । <sup>v</sup>वः युष्माकं <sup>v</sup>दात्रं दानं वृष्ट्यादिरूपं <sup>v</sup>दीर्घम् अत्यायतमविच्छिन्नम् । प्रकृष्टोपकारीत्यर्थः । दीर्घत्वे दृष्टान्तः । <sup>v</sup>अदितेः <sup>v</sup>व्रतम् <sup>v</sup>इव । अदीनाया देवमातुर्भूम्या वा । व्रतमिति कर्मनाम । तद्यथा दीर्घम् अतिविस्तृतं तद्वत् । 'अदितिर्द्यौरदितिरन्तरिक्षम्' ( ऋ. सं. १. ८९. १० ) इत्यादिमन्त्रवर्णात् । किंच हे मरुतः यूयं <sup>v</sup>यस्मै <sup>v</sup>सुकृते शोभनयागादिकर्त्रे यजमानाय यदभिमतं धनम् <sup>v</sup>अराध्वं[1] <sup>v</sup>तत् <sup>v</sup>इन्द्रः च इन्द्रोऽपि <sup>v</sup>त्यजसा त्यागेन न <sup>v</sup>वि <sup>v</sup>ह्रुणाति न विह्वरति कौटिल्यं न करोति ॥ चन इत्ययं यद्यपि निपातद्वयसमुदायरूप एको निपातः तथाप्यवयवविभागेन चशब्दः समुच्चये नशब्दो निषेधेऽधिगन्तव्यः ॥ युष्मद्धनादित्यागम् इन्द्रत्यागोऽपि नातिक्रामतीत्यर्थः । यद्वा । यस्मै तद्धनमराध्वं तमिन्द्रोऽपि न कुटिलयति । न निषेधयति किंत्वनुमोदयतीत्यर्थः ॥

**तद्वो॑ जामि॒त्वं म॑रुत॒ः परे॑ यु॒गे पु॒रू यच्छंस॑ममृता॒स आव॑त ।**
**अ॒या धि॒या मन॑वे श्रु॒ष्टिमाव्या॑ सा॒कं नरो॑ दं॒सनै॒रा चि॑कित्रिरे ॥ १३ ॥**

तत् । वः । जा॒मि॒ऽत्वम् । म॒रु॒तः । परे॑ । यु॒गे । पु॒रु । यत् । शंस॑म् । अ॒मृ॒ता॒सः । आव॑त ।
अ॒या । धि॒या । मन॑वे । श्रु॒ष्टिम् । आव्य॑ । सा॒कम् । नरः॑ । दं॒सनैः॑ । आ । चि॒कि॒त्रि॒रे ॥ १३ ॥

हे <sup>v</sup>मरुतः <sup>v</sup>वो <sup>v</sup>जामित्वं बन्धुत्वमस्मद्विषयप्रेमाधिक्यं <sup>v</sup>तत् खलु प्रसिद्धमित्यर्थः । कियत्पर्यन्तमिति तदुच्यते । <sup>v</sup>परे <sup>v</sup>युगे । युगशब्दः कालोपलक्षकः । उत्कृष्टे महति कालेऽतीतेऽपि वर्तत इति शेषः । तत्कथमधिगतमित्यत आह । <sup>v</sup>अमृतासः अमरणधर्माणो हे मरुतः यूयं <sup>v</sup>यत् यस्मात् <sup>v</sup>शंसम् अस्माभिः क्रियमाणां स्तुतिं <sup>v</sup>पुरु प्रभूतं यथा भवति तथा <sup>v</sup>आवत रक्षथ । तस्माद्युष्मत्कृतं जामित्वमविनाशीत्यर्थः । किंच यूयम् <sup>v</sup>अया <sup>v</sup>धिया अनयानुग्रहात्मिकया बुद्ध्या <sup>v</sup>मनवे मनुष्याय स्तोत्रे यष्ट्रे वा अस्मदाद्यर्थे <sup>v</sup>श्रुष्टिमाव्य कीर्तिं स्तुतिं वा रक्षित्वा <sup>v</sup>साकं संभूय <sup>v</sup>नरः नेतारः सन्तः <sup>v</sup>दंसनैः कर्मभिरित्थंभूताः <sup>v</sup>आ <sup>v</sup>चिकित्रिरे सर्वतो जानीथ ॥

**येन॑ दी॒र्घं म॑रुतः शूशवा॑म यु॒ष्माके॑न॒ परी॑णसा तुरासः ।**
**आ यत्त॒तन॑न्वृ॒जने॒ जना॑स ए॒भिर्य॒ज्ञेभि॒स्तद॒भीष्टि॑मश्याम् ॥ १४ ॥**

येन॑ । दी॒र्घम् । म॒रु॒तः॒ । शू॒श॒वा॑म । यु॒ष्माके॑न । परी॑णसा । तु॒रा॒सः॒ ।
आ । यत् । त॒तन॑न् । वृ॒जने॑ । जना॑सः । ए॒भिः । य॒ज्ञेभिः॑ । तत् । अ॒भि । इ॒ष्टिम् । अ॒श्या॒म् ॥ १४ ॥

हे <sup>v</sup>तुरासः वेगवन्तः <sup>v</sup>मरुतः <sup>v</sup>युष्माकेन युष्मत्संबन्धिना <sup>v</sup>येन <sup>v</sup>परीणसा । यद्यप्येतद्बहुनामसु पठितं तथापि यत् बहु तन्महदपि भवतीत्यत्र महदित्यर्थे गृह्यते । महता युष्मदभिगमनेनैषणेन वा <sup>v</sup>दीर्घम् आयतं सत्त्रादिरूपं कर्म <sup>v</sup>शूशवाम प्रवर्धयामः । किंच <sup>v</sup>यत् येन चाभिगमनेनैषणेन वा <sup>v</sup>जनासः जना अस्मदीयाः <sup>v</sup>वृजने संग्रामे <sup>v</sup>आ <sup>v</sup>ततनन् सर्वतो विस्तारयन्ति । स्वसामर्थ्यैः संग्रामं जयन्तीत्यर्थः ।

---

१. ख–अराध्वं दद्ध्वम् ।

तत् इष्टिम् एषणं गमनम् एभिर्यज्ञेभिः इदानीं क्रियमाणैः स्तोत्रादिरूपैः पूजनैः अभि आभिमुख्येन अश्यां व्याप्नुयाम् ॥

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १५ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १५ ॥

अयं मन्त्रस्तृतीयाध्यायान्ते व्याख्यातः । सूक्तोपक्रमप्रभृति क्रियमाणां स्तुतिं मरुद्भ्यः समर्प्य स्वाभीष्टमाशास्ते । हे मरुतः एषः स्तोमः इदानीं कृतं स्तोत्रं वः युष्माकं युष्मदर्थमित्यर्थः । तथा इयं गीः स्तुतिरूपा वागपि वः युष्माकम् । कस्य संबन्धीदमिति तदुच्यते । मान्दार्यस्य ॥ मन्दतेरीयतेश्च मान्दार्यः ॥ स्तुतिं प्रेरयतः मान्यस्य माननार्हस्य कारोः । स्तोतॄनामैतत् । स्तोतुः संबन्धि । यद्वा । एतत्पदत्रयमुत्तरत्र संबध्यते । उक्तलक्षणस्तोतुः इषा इच्छया कामनया तन्वे युष्मच्छरीरवृद्ध्यै । स्तुत्या हि शरीरं वर्धते । आ यासीष्ट अभिगच्छतु स्तुतिः । वयां वयं च इषम् अन्नं वृजनं बलं जीरदानुं चिरकालजीवनं च विद्याम लभेमहि ॥ ॥ ३ ॥

'सहस्रं ते' इत्येकादशर्चं तृतीयं सूक्तमागस्त्यं त्रैष्टुभम् । आद्यैन्द्री शिष्टा मरुद्देवताकाः पूर्वत्र हिशब्दात् । 'सहस्रमेकादशाद्यैन्द्री' इत्यनुक्रमणिका । विशेषविनियोगो लैङ्गिकः ॥

सहस्रं त इन्द्रोतयो नः सहस्रमिषो हरिवो गूर्ततमाः ।
सहस्रं रायो मादयध्यै सहस्रिण उप नो यन्तु वाजाः ॥ १ ॥

सहस्रम् । ते । इन्द्र । ऊतयः । नः । सहस्रम् । इषः । हरिऽवः । गूर्तऽतमाः ।
सहस्रम् । रायः । मादयध्यै । सहस्रिणः । उप । नः । यन्तु । वाजाः ॥ १ ॥

हे इन्द्र ते तव ऊतयः रक्षाप्रकाराः सहस्रम् । अपरिमिता इत्यर्थः । नः अस्मभ्यम् उप यन्तु इति सर्वत्र योज्यम् । तथा हे हरिवः । हरी इन्द्रस्याश्वौ । ताभ्यां तद्वन्निन्द्र गूर्ततमाः अत्यन्तं गूर्णानि इषः एषणीयाः अन्नानि सहस्रं बहूनि त्वदीयानि । तथा सहस्रं रायः अपरिमितानि धनानि मणिमुक्तादीनि मादयध्यै अस्मान् मादयितुं यानि सन्ति तानि अस्मान् उप यन्तु । तथा सहस्रिणः वाजाः गमनवन्तश्चतुष्पाद्रूपाः पशवोऽपि नः अस्मान् उप यन्तु समीपं प्राप्नुवन्तु ॥

आ नोऽवोभिर्मरुतो यान्त्वच्छा ज्येष्ठेभिर्वा बृहद्दिवैः सुमायाः ।
अध यदेषां नियुतः परमाः समुद्रस्य चिद्धनयन्त पारे ॥ २ ॥

आ । नः । अवःऽभिः । मरुतः । यान्तु । अच्छ । ज्येष्ठेभिः । वा । बृहत्ऽदिवैः । सुऽमायाः ।
अध । यत् । एषाम् । निऽयुतः । परमाः । समुद्रस्य । चित् । धनयन्त । पारे ॥ २ ॥

ते[1] ᵛमरुतः ᵛअवोभिः रक्षणैः सहिताः ᵛनः अस्मान् ᵛअच्छ आभिमुख्येन ᵛआ ᵛयान्तु आगच्छन्तु। ᵛसुमायाः। मायेति प्रज्ञानाम। शोभनप्रज्ञा एव मरुतः ᵛज्येष्ठेभिः ᵛबृहद्भिः ᵛवा ज्येष्ठैः प्रशस्यतमैः[2] मणिमुक्तादिधनैश्च सहिता आ यान्तु। वाशब्दः समुच्चये। आगमने कथमेषां सामर्थ्यमिति अत आह। ᵛअध अथ ᵛएषां मरुतां ᵛयत् यस्मात् ᵛनियुतः एतन्नामकाः ᵛपरमाः उत्कृष्टा अश्वाः ᵛसमुद्रस्य ᵛचित्। चिच्छन्दोऽप्यर्थे। समुद्रस्यापि ᵛपारे परस्मिंस्तीरे ᵛधनयन्त धनधारणं वहनं कुर्वन्ति। तस्मात् रक्षणैर्धनैश्चायान्त्वित्यर्थः॥

**मि॒म्यक्ष॒ येषु॑ सु॒धि॑ता घृ॒ताची॒ हिर॑ण्यनिर्णि॒गुप॑रा॒ न ऋ॒ष्टिः।**
**गुहा॒ चर॑न्ती॒ मनु॑षो॒ न योषा॑ स॒भाव॑ती विद॒थ्ये॑व॒ सं वाक्॥ ३॥**

मि॒म्यक्ष॑। येषु॑। सु॒ऽधि॑ता। घृ॒ताची॑। हिर॑ण्यऽनिर्निक्। उप॑रा। न। ऋ॒ष्टिः।
गुहा॑। चर॑न्ती। मनु॑षः। न। योषा॑। स॒भाऽव॑ती। वि॒द॒थ्या॑ऽइव। सम्। वाक्॥ ३॥

ᵛसुधिता सुष्ठु निहिता सुष्ठु हिता वा लोके ᵛघृताची घृतं क्षरणशीलमुदकमञ्चन्ती ᵛहिरण्यनिर्णिक् हितरमणीयरूपा। निर्णिगिति रूपनाम। एवंरूपा ᵛऋष्टिः विद्युदाख्यायुधविशेषो वा ᵛउपरा ᵛन मेघमालेव ᵛयेषु मरुत्सु ᵛसं ᵛमिम्यक्ष। म्यक्षतिर्गतिकर्मा। संगताभूत्। मेघपङ्क्तिविद्युतौ इमे[3] अपि संगते इत्यर्थः। मेघपङ्क्तिर्विद्युच्चोभे दृष्टान्तेन[4] विशेष्येते। ᵛगुहा निगूढा गुहायां वा अन्तरिक्षे[5] ᵛचरन्ती। तत्र दृष्टान्तः। ᵛमनुषो ᵛन ᵛयोषा मनुष्यस्य परिवृढादेर्महिषीवत्। सा यथा सुवेषा अन्तःपुरे एव मध्ये चरति तद्वत्। किं सर्वदैवमिति नेत्याह। ᵛसभावती[6]। सभा जनसंघः। तद्वती। वर्षकाले आविर्भवन्तीत्यर्थः। तत्र दृष्टान्तः[6]। ᵛविदथ्या ᵛवाक् ᵛइव। विदथो यज्ञः। तदर्हतीति विदथ्या प्रैषस्तोत्रादिरूपा वाक्। सा यथा यज्ञसभां प्राप्याविर्भवति तद्वत्। यद्वा। विदथ्या वेदनार्हा विवदमानयोर्वाक्। सा यथा सभावती तद्वत्। सैवंरूपा येषु मिम्यक्ष ते मरुतो देवयजनमागच्छन्त्वित्यर्थः॥

**परा॑ शु॒भ्रा अ॒यासो॑ य॒व्या सा॑धार॒ण्येव॑ म॒रुतो॑ मिमिक्षुः।**
**न रो॑द॒सी अप॑ नुदन्त घो॒रा जु॒षन्त॒ वृधं॑ स॒ख्याय॑ दे॒वाः॥ ४॥**

परा॑। शु॒भ्राः। अ॒यास॑ः। य॒व्या। सा॒धा॒र॒ण्याऽइ॑व। म॒रुत॑ः। मि॒मि॒क्षुः।
न। रो॒दसी इति॑। अप॑। नु॒द॒न्त॒। घो॒राः। जु॒षन्त॑। वृध॑म्। स॒ख्याय॑। दे॒वाः॥ ४॥

ᵛशुभ्राः शोभनालंकाराः[7] ᵛअयासः अभिगन्तारः ᵛमरुतः ᵛयव्या मिश्रणशीलया विद्युता ᵛपरा ᵛमिमिक्षुः। प्रकर्षेण सिञ्चन्त्युदकसंस्त्यायम्। ᵛसाधारण्येव। यथा लोके साधारण्या स्त्रिया संगता युवानो रेतो मुञ्चन्ति तद्वत्। एवं कुर्वन्तः ᵛघोराः अतिवृष्टिप्रदानेन भयंकरास्ते ᵛरोदसी द्यावापृथिव्यौ ᵛन ᵛअप ᵛनुदन्त। अपनोदनं वर्षणरूपं तिरस्कारं न कुर्वन्ति। द्यावापृथिवीवचनो रोदसीशब्दः

१. क-ख-झ-फ-एते। २. झ१-प्रभूतद्योतमानैः। ३. झ१-उमे। ४. झ१-दृष्टान्तत्वेन। ५. झ१-अन्तरिक्षे वा। ६. झ१-सभावती जनसंघसमीपं गच्छन्ती वर्षाकाले। आविर्भावे दृष्टान्तः। ७. झ१-शोभनालंकारादिना दीप्ताः।

सर्वत्राद्युदात्तः । अत्र तु व्यत्ययेनान्तोदात्तत्वमिति द्रष्टव्यम् । यद्वा । रोदसा शब्देन रोदनस्वभावो रुद्रः । तस्य स्त्री रोदसीति केचिदाहुः । अपरे तु मरुतां स्त्रियो रोदसीति नामधेयमित्याहुः । अयमेव पक्षो युक्त उत्तरत्रैवं व्यवहारात् । तत्पक्षे रोदसी रोदस्याम् ॥ ङीपन्तात् सप्तम्या ईकारो लुक् वा । 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञा ॥ तस्यां प्रियं धनं मुञ्चन्ति । किंतु देवाः मोदयितारो मादयितारो वा मरुतः सख्याय वृधं वृद्धिं जुषन्त सेवन्ते । द्यावापृथिवीपक्षे सख्याय जगतां सखिभावाय तयोर्वृद्धिं कुर्वन्तीत्यर्थः ॥

जोषद्यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः ।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ॥ ५ ॥

जोषत् । यत् । ईम् । असुर्या । सचध्यै । विसितऽस्तुका । रोदसी । नृऽमनाः ।
आ । सूर्याऽइव । विधतः । रथम् । गात् । त्वेषऽप्रतीका । नभसः । न । इत्या ॥ ५ ॥

रोदसी मरुत्पत्नी विद्युत् वा एतन्नामिकेयमपि ईम् एनं मरुत्संघं जोषत् सेवते ॥ जुषेर्लेटि अडागमः ॥ किमर्थम् । सचध्यै संगमनार्थम् । कीदृशी सा । असुर्या । असुराः क्षेप्तारो मरुतः । तेषां स्वभूता विषितस्तुका विशिष्टकेशसंघा विप्रकीर्णकेशसंघा वा संभोगवशेन तथा नृमणाः नृषु नेतृषु मरुत्सु मननवती मनुष्येषु वा वृष्टिप्रदानमनोयुक्ता त्वेषप्रतीका दीप्तोपक्रमा दीप्तावयवा । ईदृशी देवी विधतः परिचरतो मरुत्संघस्य रथम् आ गात् आगच्छति व्याप्नोति । यागदेशं गन्तुं रथमारुह्य वा यज्ञमागच्छति । केव । विधतः सूर्यस्य रथं त्वेषप्रतीका सूर्येव सूर्यपत्नीव । यद्वा । सूर्यस्य दुहिता अश्विनोः रथमिव सा यथा आरोहति तद्वत् । आगमने दृष्टान्तः । नभसः इत्या न । अन्तरिक्षादित्ययोः साधारणोऽयं नभःशब्दः 'नभ इति षट् साधारणानि' ( नि. १. ४. ६ ) इत्युक्तत्वात् । अत्र आदित्यवचनः । तस्य गतिरिव । सा यथा शीघ्रा तद्वत् ॥ ॥ ४ ॥

आस्थापयन्त युवतिं युवानः शुभे निमिश्लां विदथेषु पज्राम् ।
अर्को यद्वो मरुतो हविष्मान्गायद्गाथं सुतसोमो दुवस्यन् ॥ ६ ॥

आ । अस्थापयन्त । युवतिम् । युवानः । शुभे । निऽमिश्लाम् । विदथेषु । पज्राम् ।
अर्कः । यत् । वः । मरुतः । हविष्मान् । गायत् । गाथम् । सुतऽसोमः । दुवस्यन् ॥ ६ ॥

युवानः मिश्रयन्तो नित्यतरुणा वा मरुतः युवतिं मिश्रयन्तीं नित्यतरुणीं वा विद्युद्रूपां रोदस्यां स्त्रियम् आस्थापयन्त आस्थापयन्ति । देवतात्वेन रथे धारयन्ति । कीदृशीं ताम् । निमिश्लां नियमेन मिश्रयन्तीं पज्राम् । पज्रो बलम् । तद्वतीम् । शुभे । शोभते दीप्यते इति शुभुदकम् । वृष्ट्युदकार्थम् । शुभे रथ इति वा योज्यम् । किंनिमित्तम् । विदथेषु यागेषु निमित्तभूतेषु । कदा । यत् यदा हे मरुतः वः युष्मान् अर्कः ॥ मत्वर्थो लुप्यते ॥ अर्चनसाधनमन्त्रोपेतः स्तोता वा हविष्मान् प्रदेयाज्यादिहविर्युक्तः सुतसोमः होमाय अभिषुतसोमोऽयं यजमानः दुवस्यन् परिचरन् गाथं गातव्यं स्तोत्रं गायत् गायति । तदेत्यर्थः ॥

**प्र तं विवक्मि वक्म्यो य एषां मरुतां महिमा सत्यो अस्ति ।**
**सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः ॥ ७ ॥**

प्र । तम् । विवक्मि । वक्म्यः । यः । एषाम् । मरुताम् । महिमा । सत्यः । अस्ति ।
सचा । यत् । ईम् । वृषऽमनाः । अहम्ऽयुः । स्थिरा । चित् । जनीः । वहते । सुऽभागाः ॥७॥

एषां मरुतां यः महिमा महत्त्वातिशयः वक्म्यः सर्वैः स्तुत्यः सत्यः अबाध्योऽमोघः अस्ति तं प्र विवक्मि प्रवच्मि वर्णयामि । कथमेषां महिमा प्राप्त इति उच्यते । यत् यस्मात् ईम् एतेषां संबन्धिनी रोदसी वृषमणाः वृष्ट्यादिवर्षणमनस्का अहंयुः अहंकारवती । जगदुपकारकर्त्री न कदाचिदस्तीत्यहंकारः । स्थिरा चित् । चिदिति पूजायाम् । अत्यन्तमविनश्वरा ईदृशी देवी सुभागाः शोभनभाग्योपेताः जनीः जननशीलाः प्रजाः वृष्ट्युत्पत्तीर्वा वहते धारयति । वृष्टौ सत्यां सर्वे प्राणिन उत्पद्यन्ते । यस्मादेवं तस्मात् महिमास्ति । तं महिमानं स्तौमीत्यर्थः ॥

**पान्ति मित्रावरुणाववद्याच्चयत ईमर्यमो अप्रशस्तान् ।**
**उत च्यवन्ते अच्युता ध्रुवाणि वावृध ईं मरुतो दातिवारः ॥ ८ ॥**

पान्ति । मित्रावरुणौ । अवद्यात् । चयते । ईम् । अर्यमो इति । अप्रऽशस्तान् ।
उत । च्यवन्ते । अच्युता । ध्रुवाणि । ववृधे । ईम् । मरुतः । दातिऽवारः ॥ ८ ॥

हे मरुतः युष्मत्संबन्धिनो देवाः मित्रावरुणौ अहोरात्र्यभिमानिदेवौ अर्यमो । अर्यमा उ इति निपातसमुदायात्मकम् एकं पदम् । उ शब्दोऽपिशब्दार्थे । अर्यमापि । एते त्रयोऽपि ईम् अमुं लोकं यज्ञं वा अवद्यात् गर्ह्यात् अयथानुष्ठानात् जगत्पक्षे व्यवहारप्रतिबन्धरूपात् पान्ति रक्षन्ति । तथा एतेषाम् अप्रशस्तान् क्षीणानपि पदार्थान् चयते चातयन्ति[1] नाशयन्ति[1] । उत अपि च एतैः प्रेरितानि अच्युता अच्युतान्यस्रावीणि अत एव ध्रुवाणि अविचलानि मेघस्थोदकानि च्यवन्ते च्यावयन्ति वा एते । ' अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति ' इति श्रुतेः । यद्वा । अच्युतानि ध्रुवाणि धनानि च्यवन्ते । कदेति उच्यते । हे मरुतः युष्मदीयः ईम् अयं कालः दातिवारः प्रदेयजलः खण्डितमेघो वा यदा ववृधे वर्धते । तदा मित्रादयो देवा युष्मदनुकूलव्यापारेण जगत् रक्षन्तीत्यर्थः । यद्वा । दातिवारो दत्तवरणीयहविर्लक्षणधनो यजमानः हे मरुतः ईम् एनान्युष्मान्ववृधे वर्धयति यदा तदेत्यर्थः ॥

**नही नु वो मरुतो अन्त्यस्मे आरात्ताच्चिच्छवसो अन्तमापुः ।**
**ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्ठुः ॥ ९ ॥**

नहि । नु । वः । मरुतः । अन्ति । अस्मे इति । आरात्तात् । चित् । शवसः । अन्तम् । आपुः ।
ते । धृष्णुना । शवसा । शूशुऽवांसः । अर्णः । न । द्वेषः । धृषता । परि । स्थुः ॥ ९ ॥

---

१. झ१–चाययन्ति वा निन्दितान्पदार्थान्पाचयन्तीत्यर्थः ।

हे मरुतः वः शवसः युष्माकं संबन्धिनो बलस्य अन्तम् अवसानम् अन्ति अन्तिके आरात्ताच्चित् दूरादपि । यद्वा । चिदिति कुत्सायाम् । अत्यन्तदूरात् । अस्मे अस्मासु मध्ये एकेऽपि नु क्षिप्रं नहि आपुः नैव खलु प्राप्नुवन्ति । संनिधावसंनिधौ च न प्राप्नुवन्तीत्यर्थः । अथ परोक्षे प्राप्तबलत्वमाह । ते खलु मरुतः धृष्णुना धर्षकेण शवसा बलेन शुशुवांसः वर्धमानाः अत एव धृषता पराभिभावकेन सामर्थ्येन द्वेषः द्वेष्टॄन् परि षुः परिभवन्ति वशीकुर्वन्ति । तत्र दृष्टान्तः । अर्णो न उदकमिव । यथोदकं स्वविरोधि रजआदिकमभिभवति तद्वत् । यस्मादेवं तस्मात् शत्रवोऽन्तं नापुः ॥

'वयमद्य' इत्येतां दशमीमभिजिति आदित्ये शंसेत् । तथा च सूत्रं—'वयमद्येन्द्रस्य प्रेष्ठा इत्यसनं चाग्नादित्ये' ( आश्व. श्रौ. २. ६. १४ ) इति ॥

वयमद्येन्द्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये ।

वयं पुरा महि च नो अनु द्यून्तन्न ऋभुक्षा नरामनु ष्यात् ॥ १० ॥

वयम् । अद्य । इन्द्रस्य । प्रेष्ठाः । वयम् । श्वः । वोचेमहि । सऽमर्ये ।

वयम् । पुरा । महि । च । नः । अनु । द्यून् । तत् । नः । ऋभुक्षाः । नराम् । अनु । स्यात् ॥ १० ॥

अद्य अस्मिन् दिने वयं यष्टारः इन्द्रस्य देवस्य प्रेष्ठाः प्रियतमाः सन्तः । यद्वा । प्रियतमा वयम् इन्द्रस्य महत्त्वं वोचेमहि स्तोतुं समर्था भूयास्म । किंच वयं श्वः परस्मिन्नपि दिने समर्ये । सह मर्याः मर्त्याः ऋत्विजो यस्मिन् स समर्यो यज्ञः तस्मिन् । संग्रामे वा । इन्द्रस्य महत्त्वं वोचेमहि । किंच वयं पुरा पूर्वस्मिन्नतीतेऽपि काले महि महत्त्वं नः अस्मदर्थं वोचेमहि । तथा द्यून् दिवसान् अनु प्रतिदिवसमित्यर्थः । अतीते आगामिनि च दिवसे सर्वदा वोचेमहि । तत् तस्मात् ऋभुक्षाः । महन्नामैतत् । 'ऋभुक्षाः उक्षा' ( नि. ३. ३. १० ) इति तन्नामसु पाठात् । महानिन्द्रः नरां मनुष्याणां मध्ये नः अस्मान् अनु स्यात् अनु भवतु अनुकूलमभिगन्ता वा भवतु ॥

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।

एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।

आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

'एषः' इत्येकादशी व्याख्याता ॥ ॥ ५ ॥

'यज्ञायज्ञा' इति दशर्चं चतुर्थं सूक्तमागस्त्यं मारुतम् । अन्त्यास्तिस्रस्त्रिष्टुभः । शिष्टाः सप्त त्रिष्टुबन्तपरिभाषया जगत्यः । 'यज्ञायज्ञा दश त्रिस्त्रिष्टुबन्तम्' इत्यनुक्रान्तम् । विशेषविनियोगो लैङ्गिकः ॥

यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो देवया उ दधिध्वे ।
आ वोऽर्वाचः सुविताय रोदस्योर्महे ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥

यज्ञाऽयज्ञा । वः । समना । तुतुर्वणिः । धियम्ऽधियम् । वः । देवऽयाः । ऊँ इति । दधिध्वे ।
आ । वः । अर्वाचः । सुविताय । रोदस्योः । महे । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

हे मरुतः वः समना समीकृतिर्न्यूनाधिकाभावलक्षणा यज्ञायज्ञा सर्वेष्वपि यज्ञेषु तुर्वणिः तूर्णवनिस्त्वरमाणा संभजमाना भवति । ' तुर्वणिस्तूर्णवनिः ' ( निरु. ६. १४ ) इति यास्कः । तत्तद्यागावसरे आगत्य हविः स्वीकृत्य वैकल्यपरिहारेण समं कुरुथेत्यर्थः । किंच वः यूयं धियंधियं युष्मत्संबन्धिवृष्टिप्रदानादिरूपं सर्वं कर्म देवयाः देवान् प्रापयितार एव सन्तः दधिध्वे धारयथ धारयध्वे वा । देवार्थहविरादुत्पादनाय वृष्टिं कुरुथेत्यर्थः । यस्मादेवं कुरुथ तस्मात् वः युष्मान् अर्वाचः अस्मदभिमुखान् आ ववृत्याम् आवर्तयामि । किमर्थम् । रोदस्योः द्यावापृथिव्योः महे महते अवसे रक्षणाय प्रीणनाय वा । तदपि किमर्थमिति । सुविताय सुष्ठु व्याप्ताय । कैः साधनैः । सुवृक्तिभिः शोभनावर्जनैः स्तोत्रैः ॥

वव्रासो न ये स्वजाः स्वतवस इषं स्वरभिजायन्त धूतयः ।
सहस्रियासो अपां नोर्मय आसा गावो वन्द्यासो नोक्षणः ॥ २ ॥

वव्रासः । न । ये । स्वऽजाः । स्वऽतवसः । इषम् । स्वः । अभिऽजायन्त । धूतयः ।
सहस्रियासः । अपाम् । न । ऊर्मयः । आसा । गावः । वन्द्यासः । न । उक्षणः ॥ २ ॥

ये मरुतः वव्रासो न । वव्रिरिति रूपनाम । रूपवन्त इव । ते यथा प्रकृष्टा लक्ष्यन्ते तद्वत् । यद्वा । अरूपा अपि सरूपा इव । स्वजाः स्वयमेव स्वस्मात् वा जायमानाः । अनन्यहेतुकाः इत्यर्थः[1] । धूतयः कम्पनशीलाः सन्ति ते इषम् अन्नं हविर्लक्षणमन्नसाधनं सस्यादिकं वा स्वः स्वर्गं च अभिजायन्त अभिलक्ष्य प्रादुर्भवन्ति । ते दृष्टान्तमुखेन श्रूयन्ते । अपां नोर्मयः उदकानामूर्मय इव सहस्रियासः सहस्रसंमिताः तथा वन्द्यासः बहुक्षीरादिप्रदत्वेन स्तुत्याः गावः न गाव इव आसा समीपे एव उक्षणः वृष्ट्युदकस्य सेक्तारः । तादृशा मरुतः प्रादुर्भवन्तीत्यन्वयः ॥

सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो दुवसो नासते ।
ऐषामंसेषु रम्भिणीव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे ॥ ३ ॥

सोमासः । न । ये । सुताः । तृप्तऽअंशवः । हृत्ऽसु । पीतासः । दुवसः । न । आसते ।
आ । एषाम् । अंसेषु । रम्भिणीऽइव । ररभे । हस्तेषु । खादिः । च । कृतिः । च । सम् । दधे ॥ ३ ॥

---

१. ञ१–' इत्यर्थः ' इत्यस्यानन्तरं ' स्वतवसः स्वयंताविलाः ( स्वायत्तबलाः ) अवहायं ( असहायाः ) इत्यर्थः ' इत्यधिकम् ।

vये मरुतः vसुताः अभिषुताः vतृप्तांशवः तर्पितावयवाः vसोमासो vन सोमा इव । यथा वल्ली-रूपाः सोमा अभिषवात्पूर्वमाप्यायनेन तृप्तावयवाः सन्तः पश्चात् सुताः अभिषुताः रसभूताः vपीतासः पीताः सन्तः vहृत्सु पातॄणां हृदयेषु vदुवसो vन vआसते परिचरन्त इवासते तद्वत् ये मरुतो यज्ञे आहूता-स्तृप्तावयवा भवन्ति ध्यायमानाः सन्तो हृत्सु हृदयेषु दुवसो न परिचरन्त इवासते । यद्वा । प्राणादि-रूपेण शरीरे स्थिताः दुवसः परिचरन्त इव गमनादिचेष्टाः कुर्वन्त आसते । vएषामंसेषु vरम्भिणीव युवतमांसालम्बिनी योषिदिव vआ vरारभे आरेभे आश्लिष्यति । अवलम्बने सामर्थ्यात् शक्त्याख्या-युधविशेषो भुजलक्ष्मीर्वा । किंच vहस्तेषु vखादिः हस्तत्राणकः vच vकृतिः कर्तनी vच खड्गलताद्विश्च[1] vसं vदधे संधीयते सम्यग्धृता भवति । परस्परसमुच्चयार्थाश्चकाराः[2] । ये मरुतः उक्तरूपाः ते आविर्भवन्तीत्यर्थः ॥

अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशया चोदत त्मना ।
अरेणवस्तुविजाता अचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः ॥ ४ ॥

अव । स्वऽयुक्ताः । दिवः । आ । वृथा । ययुः । अमर्त्याः । कशया । चोदत । त्मना ।
अरेणवः । तुविऽजाताः । अचुच्यवुः । दृळ्हानि । चित् । मरुतः । भ्राजत्ऽऋष्टयः ॥ ४ ॥

एते मरुतः vस्वयुक्ताः स्वैर्युक्ताः परस्परं संयुक्ताः स्वेन धनेन वा युक्ताः सन्तः vदिवः द्युलोकात् vवृथा अनायासेन vअव vआ vययुः अवाङ्मुखमागच्छन्ति । हे vअमर्त्याः मरुतः यूयं vत्मना आत्मना स्वयमेव vकशया । वाङ्नामैतत् । वाचा स्तुतिरूपया vचोदत प्रेरयत । स्तोतुमिति शेषः । ते च vमरुतः vअरेणवः अपापाः[3] vतुविजाताः बहुयज्ञेषु प्रादुर्भूताः vभ्राजदृष्टयः दीप्ताः एवंभूताः सन्तः vदृळ्हानि vचित् दृढान्यपि पर्वतानि[4] vअचुच्यवुः च्यावयन्ति चालयन्ति ॥

को वोऽन्तर्मरुत ऋष्टिविद्युतो रेजति त्मना हन्वेव जिह्वया ।
धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो नैतशः ॥ ५ ॥

कः । वः । अन्तः । मरुतः । ऋष्टिऽविद्युतः । रेजति । त्मना । हन्वाऽइव । जिह्वया ।
धन्वऽच्युतः । इषाम् । न । यामनि । पुरुऽप्रैषाः । अहन्यः । न । एतशः ॥ ५ ॥

हे vमरुतः हे vऋष्टिविद्युतः मेघभेदनायुधविशेषेण विद्योतमानाः[5] युष्माकम् vअन्तः युष्मासु मध्ये स्थित्वा vकः पुमान् vरेजति चालयति प्रेरयति । तर्हि कथं चालनमिति उच्यते । vत्मना आत्मनैव । चालने दृष्टान्तः । vजिह्वया vहन्वेव ॥ द्विवचनस्य आकारः ॥ हनू इव । तौ यथा रसनया चाल्येते तद्वत् । यद्यप्येवं तथापि vइषाम् अन्नानां तत्साधनानां सस्यानां vयामनि प्राप्तौ समृद्ध्यर्थं vधन्वच्युतः vन । धन्वन्छब्दोऽन्तरिक्षस्य वचनः । तेन तत्स्थमुदकं लक्ष्यते । उदक-

१. ख–खड्गलता च; । २. क-ज्ञ-झ–परस्परसमुच्चयार्थश्चकारः । ३. ज्ञ-झ१–अपापाः समुन्दनेन पांसुविरोधिनो वा । ४. झ१–सर्वस्य । ५. झ१–विद्योतमानाः वृष्ट्या वा तादृशाः ।

स्राविणो मेघा इव । ते यथा आकाङ्क्ष्यन्ते तथा युष्मान् अन्नादिप्राप्तये ᵛपुरुप्रैषाः बहुविधं फलमिच्छन् यजमानः स्तोत्रैर्बहुप्रकारमाकारयतीत्यर्थः । तत्र दृष्टान्तः । ᵛअह्न्यः अह्नि भवः ᵛएतशः ᵛन अश्व इव । स यथा शिक्षकेण नानाप्रकारं प्राप्यते तद्वत् ॥  ॥ ५ ॥

क्व॑ स्वि॑दस्य॒ रज॑सो म॒हस्परं॒ क्वाव॑रं मरुतो॒ यस्मि॑न्नाय॒य ।
यच्च्या॒वय॑थ विथु॒रेव॒ संहि॑तं॒ व्यद्रि॑णा पतथ त्वे॒षम॑र्ण॒वम् ॥ ६ ॥

क्व॑ । स्वि॒त् । अ॒स्य । रज॑सः । म॒हः । पर॑म् । क्व॑ । अव॑रम् । म॒रु॒तः । यस्मि॑न् । आ॒ऽय॒य ।
यत् । च्य॒वय॑थ । वि॒थु॒राऽइ॑व । सम्ऽहि॑तम् । वि । अद्रि॑णा । प॒तथ । त्वे॒षम् । अ॒र्ण॒वम् ॥ ६ ॥

हे ᵛमरुतः यूयं ᵛयस्मिन् उदके निमित्तभूते सति ᵛआयय आगच्छत ᵛअस्य ᵛरजसः वृष्ट्युदकस्य लोकस्य वा ᵛमहः महतः ᵛपरं पारमन्तं ᵛक्व ᵛस्वित् । कुत्रास्तीति । नास्तीत्यर्थः । तथा ᵛअवरम् अवाङ्भागः आदिश्च ᵛक्व स्वित् । कुत्रास्ति । आद्यन्तं न कोऽपि जानातीत्यर्थः । ᵛयत् यदा यूयं ᵛविथुरेव विथुराणि शिथिलानि तृणानीव ᵛसंहितम् एकभूतमुदकं ᵛच्यावयथ स्वस्थानात् चालयथ तदा ᵛअद्रिणा वज्रेण ᵛत्वेषं दीप्तम् ᵛअर्णवम् उदकवन्तं मेघं ᵛवि ᵛपतथ विशीर्णं पातयथ ॥

सा॒तिर्न वो॑ऽमव॑ती॒ स्व॑र्वती त्वे॒षा विपा॑का मरु॒तः पिपि॑ष्वती ।
भ॒द्रा वो॑ रा॒तिः पृ॑ण॒तो न दक्षि॑णा पृथु॒ज्रयी॑ असु॒र्ये॑व॒ जञ्ज॑ती ॥ ७ ॥

सा॒तिः । न । व॒ः । अम॑ऽवती । स्वः॑ऽवती । त्वे॒षा । विऽपा॑का । म॒रु॒तः । पिपि॑ष्वती ।
भ॒द्रा । व॒ः । रा॒तिः । पृ॒ण॒तः । न । दक्षि॑णा । पृ॒थु॒ऽज्रयी॑ । अ॒सु॒र्या॑ऽइव । जञ्ज॑ती ॥ ७ ॥

हे ᵛमरुतः ᵛवः युष्माकं संबन्धिनी ᵛसातिर्न संभक्तिरिव युष्मत्संभजनं यथा प्रशस्तगुणं तद्वत् ᵛवः ᵛरातिः वृष्ट्यादिविषया ᵛअमवती अमात्यवती इन्द्रादिसहायवती । यथा 'राजेवामवान्' ( ऋ. सं. ४. ४. १ ) इत्यत्र अमशब्दोऽमात्यवचनस्तद्वत् । यद्वा । वः सातिः संविभक्तिः न अमवती रोगवती न भवति किंतु ᵛस्वर्वती सुखवती ᵛत्वेषा दीप्ता ᵛविपाका परिपक्वफला ᵛपिपिष्वती पेषणवती कृषीवलैः कर्षणवती । वृष्टौ सत्यां कर्षन्तीति प्रसिद्धम् । स्वविरोधिपेषणवती वा । ᵛभद्रा भन्दनीया स्तुत्या । किंच ᵛपृणतः दातुर्धनिकस्य ᵛदक्षिणा ᵛन दक्षिणेव तद्वत् समृद्धकरी[1] ᵛपृथुज्रयी पृथुजवा शीघ्रगामिनी । किंच ᵛअसुर्येव असुरस्य स्वभूता ᵛजञ्जती सर्वानभिभवन्ती शक्तिरिव । सा यथा अन्येभ्योऽपहृत्य अन्यस्मै दातुं समर्था तद्वदियमपि मेघस्थमुदकमपहृत्य जगतो दातुं शक्तेत्यर्थः । ईदृशी रातिः अस्मभ्यमस्त्विति भावः ॥

---

१. झ—समृद्धिकरी ।

प्रति ष्टोभन्ति सिन्धवः पविभ्यो यदभ्रियां वाचमुदीरयन्ति ।
अव स्मयन्त विद्युतः पृथिव्यां यदी घृतं मरुतः प्रुष्णुवन्ति ॥ ८ ॥

प्रति । स्तोभन्ति । सिन्धवः । पविऽभ्यः । यत् । अभ्रियाम् । वाचम् । उत्ऽईरयन्ति ।
अव । स्मयन्त । विऽद्युतः । पृथिव्याम् । यदि । घृतम् । मरुतः । प्रुष्णुवन्ति ॥ ८ ॥

ᵛपविभ्यः मरुत्संबन्धिवज्रेभ्यः ᵛसिन्धवः स्यन्दनशीला आपः ᵛप्रति ᵛष्टोभन्ति प्रतिचलन्ति । कदा । ᵛयत् यदा ᵛअभ्रियाम् अभ्रभवां ᵛवाचं शब्दं स्तनितलक्षणम् ᵛउदीरयन्ति उच्चारयन्ति वज्राणि । किंच ᵛविद्युतः विद्योतमानास्तडितः ᵛपृथिव्याम् अन्तरिक्षे । पृथिवीत्यन्तरिक्षनाम, 'पृथिवी भूः' ( नि. १. ३. ९ ) इति तन्नामसूक्तत्वात् । तत्र ᵛअव ᵛस्मयन्त स्मयन्ते अवाङ्मुखं प्रकाशन्ते । पृथिव्याम् इत्येतदुत्तरत्र वा योज्यम् । ᵛयदि यदा पृथिव्यां भूम्यां ᵛघृतं क्षरदुदकं ᵛमरुतः ᵛप्रुष्णुवन्ति प्रुष्णन्ति सिञ्चन्ति ॥ प्रुषेः क्र्यादिकस्य व्यत्ययेन श्नुः ॥ यदीयं तदेत्यर्थः ॥

असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकम् ।
ते सप्सरासोऽजनयन्ताभ्वमादित्स्वधामिषिरां पर्यपश्यन् ॥ ९ ॥

असूत । पृश्निः । महते । रणाय । त्वेषम् । अयासाम् । मरुताम् । अनीकम् ।
ते । सप्सरासः । अजनयन्त । अभ्वम् । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन् ॥९॥

ᵛपृश्निः मरुन्माता नानावर्णा । 'पृश्न्यै वै पयसो मरुतो जाताः' ( तै. सं. २. २. ११. ४ ), 'पृश्नेः पुत्रा उपमासः' ( ऋ. सं. ५. ५८. ५ ) इत्यादिश्रुतेः । तामेवान्तरिक्षदेवतां केचिदाहुः । सा देवी ᵛत्वेषं दीप्तम् ᵛअयासां गन्तॄणां ᵛमरुतामनीकं समूहम् एकोनपञ्चाशत्संख्याकम् ᵛअसूत उत्पादितवती । किमर्थम् । ᵛमहते ᵛरणाय संग्रामाय । मेघजयायेत्यर्थः । ᵛते च मरुतः ᵛसप्सरासः समानरूपा हिंसका वा मेघानाम् ᵛअभ्वं मेघं जनयन्ति उत्पादितवन्तः । ᵛआदित् अनन्तरमेव ᵛइषिरां सर्वैरेष्टव्यां ᵛस्वधाम् अन्नं सस्यादिसमृद्धिलक्षणं ᵛपर्यपश्यन् परिपश्यन्ति सर्वे जनाः ॥

एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥

'एष वः' इति दशमी व्याख्याता ॥ ॥ ७ ॥

' महश्चित्त्वम् ' इत्यष्टर्चं पञ्चमं सूक्तमैन्द्रमागस्त्यं त्रैष्टुभम्। द्वितीया चतुष्पदा विराट् ' अथ चतुष्पदा ', ' विराड्दशकैः ' इत्युक्तत्वात्, ' विराजो दिशः ' (पि. सू. ३. ५) इति पिङ्गलनागेन सूत्रितत्वाच्च। ' महोऽष्टौ द्वितीया विराट् ' इत्यनुक्रमणिका। समूळ्हे दशरात्रे द्वितीये छन्दोमे मरुत्वतीये इदं ' विश्वजितोऽग्निं नरः ' इति खण्डे सूत्रितं–' द्वितीयस्य शंसा महां महश्चित्त्वमिन्द्र ' ( आश्व. श्रौ. ८. ७ ) इति ॥

**म॒हश्चि॒त्त्वमि॑न्द्र य॒त ए॒तान्म॒हश्चि॑दसि॒ त्यज॑सो वरू॒ता ।**
**स नो॑ वेधो म॒रुतां॑ चिकि॒त्वान्त्सु॒म्ना व॑नुष्व॒ तव॒ हि प्रेष्ठा॑ ॥ १ ॥**

म॒हः । चि॒त् । त्वम् । इ॒न्द्र॒ । य॒तः । ए॒तान् । म॒हः । चि॒त् । अ॒सि॒ । त्यज॑सः । व॒रू॒ता ।
सः । न॒ः । वे॒ध॒ः । म॒रुता॑म् । चि॒कि॒त्वान् । सु॒म्ना । व॒नु॒ष्व॒ । तव॑ । हि । प्रेष्ठा॑ ॥ १ ॥

हे इन्द्र त्वं यतः कारणात् एतान् मरुतः महश्चित् महतोऽपि सामर्थ्यातिशयवत्त्वात् त्वं निरपेक्षेणापि स्नेहात् न त्यजसीति शेषः। अतः कारणात् महश्चिदसि। चित् इति पादपूरणः। महतोऽपि त्यजसः त्यागात्। यद्वा। एतत् क्रोधनाम। क्रोधाद्वा। वरूता वरिता रक्षिता असि भवसि। यद्वा। मरुतोऽपि त्यागात् वृष्ट्यादिविषयात् वारयितासि। यस्मादेवं तस्मात् हे मरुतां वेधः विधातः सः तादृशस्त्वं चिकित्वान् चेतनावान् अस्मदनुग्रहविषयज्ञानोपेतः सन् नः अस्मभ्यं सुम्ना सुखानि मरुदायत्तानि वृष्ट्यादिरूपाणि वनुष्व देहि। तानि सुम्नानि तव हि प्रेष्ठा तव खलु प्रियतमानि। हिशब्दः ' अयमिन्द्रो मरुत्सखा ' ( ऋ. सं. ८. ७६. २ ) इत्यादिश्रुतिषु प्रसिद्ध्यर्थः ॥

**अयु॑ज्रन्त इन्द्र वि॒श्वकृ॑ष्टीर्विदा॒नासो॑ नि॒ष्षिधो॑ मर्त्य॒त्रा ।**
**म॒रुतां॑ पृत्सु॒तिर्हास॑माना॒ स्व॑र्मीळ्हस्य प्र॒धन॑स्य सा॒तौ ॥ २ ॥**

अयु॑ज्रन् । ते । इ॒न्द्र॒ । वि॒श्वऽकृ॑ष्टीः । वि॒दा॒नास॑ः । निः॒ऽसिध॑ः । म॒र्त्य॒ऽत्रा ।
म॒रुता॑म् । पृ॒त्सु॒तिः । हास॑माना । स्व॑ःऽमीळ्हस्य । प्र॒ऽधन॑स्य । सा॒तौ ॥ २ ॥

पूर्वमन्त्रे मरुतामिन्द्रसाहाय्यमुक्तम्। अत्रेन्द्रस्य मरुत्साहाय्यमुच्यते। हे इन्द्र ते मरुतः अयुज्रन् युज्यन्ते त्वया युक्ता भवन्तीत्यर्थः। कीदृशास्ते। विश्वकृष्टीः विश्वकृष्टयो राज्यत्वेन[1] सर्वजनवन्तः किंच मर्त्यत्रा मर्त्येषु मर्त्यार्थं निष्षिधः निःशेषेणोदकस्य सेक्तृन्[2] मेघान् विदानासः जानानाः। किंच येषां मरुतां पृत्सुतिः सेना स्वर्मीळ्हस्य प्रधनस्य सुखसेक्तुः प्रकृष्टधनवतो वृत्रादिसंग्रामस्य सातौ लाभे जये निमित्तभूते सति सेना हासमाना, हासं कुर्वती हर्षयुक्ता भवति। यद्वा। सुखेन मिह्यते जलं यस्मिन् तादृशस्य प्रधनस्य प्रकृष्टोदकाख्यधनसाधनस्य संग्रामस्य सातौ। मेघभेदनायेति यावत्। येषामीदृशी सेनास्ति ते मरुतोऽयुज्रन्निति संबन्धः ॥

---

१. झ१–रक्षेत्वेन ( रक्ष्यत्वेन ); २. क-झ–सेक्तॄन्।

अभ्यक्सा त॑ इन्द्र ऋष्टिर॒स्मे सने॑म्यभ्वं॑ म॒रुतो॑ जुनन्ति ।
अ॒ग्निश्चि॒द्धि ष्मा॑त॒से शु॑शु॒क्वाना॒पो न द्वी॒पं दध॑ति॒ प्रयां॑सि ॥ ३ ॥

अभ्य॑क् । सा । ते॒ । इन्द्र॒ । ऋष्टिः॑ । अ॒स्मे इति॑ । सने॑मि । अभ्व॑म् । म॒रुतः॑ । जु॒न॒न्ति॒ ।
अ॒ग्निः । चि॒त् । हि । स्म॒ । अ॒त॒से । शु॒शु॒क्वान् । आपः॑ । न । द्वी॒पम् । दध॑ति । प्रयां॑सि ॥३॥

हे ᵛइन्द्र ᵛते तव ᵛसा प्रसिद्धा ᵛऋष्टिः वज्राख्यायुधविशेषः ᵛअस्मे अस्मद्वृष्ट्यर्थम् ᵛअभ्यक् प्राप्नोति मेघसमीपे । एवं च सति ᵛमरुतः अपि । ' सनेमि अह्नाय[1] ' ( नि. ३. २७. ४ ) इति षट् पुराणनामानि इत्युक्तत्वात् ᵛसनेमि इति पुराणनाम[1] । पुराणं चिरकालं संगृहीतम् ᵛअभ्वम् उदकं ᵛजुनन्ति क्षिपन्ति वर्षन्तीत्यर्थः । वृष्ट्या सस्यादिसमृद्धौ सत्याम् ᵛअग्निश्चिद्धि ᵛष्म । हि स्म इति पूरणे । अग्निरपि ᵛअतसे संतते कर्मणि निमित्तभूते सति ᵛशुशुक्वान् दीप्यमानो वर्तते । पश्चात् ᵛप्रयांसि चरुपुरोडाशादिहवींषि ᵛदधति धारयन्ति ददति वा यजमानाः । किमिव । ᵛआपो ᵛन ᵛद्वीपम् । द्विपार्श्वस्थोदकवान्पर्वतादिर्द्वीपः । तं यथा आपो धारयन्ति तद्वत् । यद्वा । आयुधमेवोच्यते । वज्राख्यायुधविशेषोऽतसे काष्ठसमूहे शुशुक्वान् दीपयन्नग्निश्चित् । चिच्छब्दः उपमार्थे ' दधि चिदित्युपमार्थे ' ( निरु. १. ४ ) इति यास्केनोपमार्थस्योक्तत्वात् । काष्ठे ज्वलन्नग्निरिव तद्वद्दीप्तो वर्तते । एतदेव दीप्तत्वमपेक्ष्य सेत्युक्तम् । एवं च सति आपो द्वीपमिव वृष्ट्युदकानि प्रयांसि सस्याद्यन्नानि दधति धारयन्ति । एतत्सर्वं महानुभावस्येन्द्रस्य ऋष्टेः सामर्थ्यमितीन्द्रस्य स्तुतिः ॥

त्वं तू न॑ इन्द्र॒ तं र॒यिं दा॒ ओजि॑ष्ठया॒ दक्षि॑णयेव रा॒तिम् ।
स्तुत॑श्च॒ यास्ते॑ च॒कन॑न्त वा॒योः स्तनं॒ न मध्वः॑ पीपयन्त॒ वाजैः॑ ॥ ४ ॥

त्वम् । तु । नः॒ । इन्द्र॒ । तम् । र॒यिम् । दाः॒ । ओजि॑ष्ठया । दक्षि॑णयाऽइव । रा॒तिम् ।
स्तुतः॑ । च॒ । याः । ते॒ । च॒कन॑न्त । वा॒योः । स्तन॑म् । न । मध्वः॑ । पी॒प॒य॒न्त॒ । वाजैः॑ ॥४॥

हे ᵛइन्द्र ᵛत्वं ᵛतु । तुः अवधारणे । त्वमेव ᵛतं ᵛरयिं त्वद्दानयोग्यं गवादिधनं ᵛदाः देहि । यस्मादितरेभ्योऽपि त्वमेव बहुप्रदः अतोऽतिमहद्धनं देहीत्यर्थः । वयं तु ᵛओजिष्ठया ओजस्वितमया परिक्रमणार्हया ᵛदक्षिणया समृद्धिसाधनया गवादिलक्षणया ऋत्विजम् ᵛइव ᵛरातिं दातारं त्वां प्रीणयाम इति शेषः । यद्वा । दक्षिणाशब्दो देयद्रव्यसामान्यवचनः । रातिशब्दो बन्धुवचनः । हिरण्यादिसारवद्द्रव्यप्रदानेन बन्धुं यथा वशीकुर्वन्ति तद्वत् त्वां वशीकुर्म इत्यर्थः । किंच ᵛवायोः धौतयुवक्षेपिष्ठस्य शीघ्रवरप्रदस्य ᵛते ॥ कर्मणि षष्ठी ॥ वायुं त्वां ᵛस्तुतः येऽस्मदीयाः स्तोतारः ᵛचकनन्त कामयन्ते अस्तवन् । ᵛयाः स्तुतयः त्वामेव अकामयन्तेति वा योजना ॥ कनतेर्ण्यन्तात् लुङि चङि रूपम् । ' चङ्यन्यतरस्याम् ' इति चङः पूर्वमक्षरमुदात्तम् ॥ त्वां होत्रादयः ᵛवाजैः हविर्लक्षणैरन्नैः ᵛपीपयन्त

१. अ१-पुराणनामैतत् । सनेमि अह्नायेति षट्पुराणनामानीत्युक्तत्वात् ।

आप्याययन्ति । तत्र दृष्टान्तः । ᵛमध्वः मधुरस्य स्तन्यस्य लाभाय वाजैः सारवद्भिरन्नविशेषैः ᵛस्तनं ᵛन । तं यथा आप्याययन्ति तद्वद्वयं त्वां बहुकृतप्रदानाय स्तुत्या हविषा आप्याययामः । त्वं तु दातव्यत्वेन प्रसिद्धं धनं सर्वदा देहीत्यर्थः ॥

त्वे राय॑ इन्द्र तो॒शत॑माः प्रणे॒तार॒: कस्य॑ चिदृता॒योः ।
ते षु णो॑ म॒रुतो॑ मृळयन्तु॒ ये स्मा॑ पु॒रा गा॑तू॒यन्ती॑व दे॒वाः ॥ ५ ॥

त्वे इति॑ । राय॑: । इन्द्र॒ । तो॒शऽत॑माः । प्र॒ऽने॒तार॑: । कस्य॑ । चि॒त् । ऋ॒त॒ऽयोः ।
ते । सु । न॒: । म॒रुत॑: । मृ॒ळय॑न्तु । ये । स्म॒ । पु॒रा । गा॒तु॒यन्ति॑ऽइव । दे॒वाः ॥ ५ ॥

हे ᵛइन्द्र ᵛत्वे तव ᵛरायः धनविशेषाः ᵛतोशतमाः अतिशयेन प्रीणयितारः ॥ तुष्यतेस्तोषः । छान्दसं शत्वम् ॥ यद्वा । ते रायो रातयो बन्धवो बन्धुभूताः सखिभूता मरुतः तोशतमाः । तोशतिर्वधकर्मा, 'नितोशयति निबर्हयति' (नि. २. १९. २९) इति तन्नामसु पाठात् । तोशतमा हिंसितृतमा अवर्षकाणां मेघानाम् । ᵛकस्य ᵛचिदृतायोः । ऋतमिति यज्ञनाम । कस्यापि यज्ञेच्छोर्यजमानस्य ᵛप्रणेतारः प्रकर्षेण निर्वोढारः । ᵛते ᵛमरुतः ᵛनः अस्मान् सुष्ठु ᵛमृळयन्तु । के ते । ᵛये ᵛस्म ये खलु ᵛदेवाः द्योतनशीला मरुतः ᵛपुरा पूर्वं ᵛगातुयन्तीव यज्ञगमनमिच्छन्तीव ते आगत्य मृळयन्तु ॥　　॥ ८ ॥

प्रति॒ प्र या॑हीन्द्र मी॒ळ्हुषो॒ नॄन्म॒हः पार्थि॑वे॒ सद॑ने यतस्व ।
अध॒ यदे॑षां पृथुबु॒ध्नास॒ एता॑स्ती॒र्थे नार्यः पौंस्या॑नि त॒स्थुः ॥ ६ ॥

प्रति॑ । प्र । या॒हि॒ । इन्द्र॒ । मी॒ळ्हुष॑: । नॄन् । म॒हः । पार्थि॑वे । सद॑ने । य॒त॒स्व॒ ।
अध॑ । यत् । ए॒षाम् । पृ॒थु॒ऽबु॒ध्नास॑: । एता॑: । ती॒र्थे । न । अ॒र्यः । पौंस्या॑नि । त॒स्थुः ॥ ६ ॥

हे ᵛइन्द्र त्वं ᵛमीळ्हुषः उदकसेक्तॄन् ᵛनॄन् जगन्नेतॄन् नराकारान् वा ᵛमहः महतः मेघान् ᵛप्रति ᵛप्र ᵛयाहि अभिगच्छ । मेघानां वृत्ररूपेण नराकारत्वं युक्तम् । गत्वा च ᵛपार्थिवे ᵛसदने । पृथिवीत्यन्तरिक्षनाम । तत्संबन्धिनि स्थाने ᵛयतस्व प्रयत्नं कुरु । तैः सह युध्यस्वेत्यर्थः । यद्वा । हविष्प्रदातॄन् कर्मनिर्वाहकान् महतो यजमानान् प्रति गच्छ । गत्वा च पार्थिवे सदने देवयजने यतस्व । यत्नं कुरु हविर्भोजनाय । ᵛअध अपि ᵛयत् यदा ᵛएषां स्वत्साहाय्यकारिणां मरुतां संबन्धिनः ᵛपृथुबुध्नासः विस्तीर्णमूलाः ᵛएताः पृषद्वर्णा गन्तारो वा अश्वाः ᵛअर्यः अरेः शत्रोः ᵛपौंस्यानि ᵛतीर्थे ᵛन युद्धमार्ग इव ᵛतस्थुः तिष्ठन्ति मेघानाक्रमन्ते । यद्वा । एषां मरुतां पृथुबुध्नासो बृहन्मूला एताः कृष्णवर्णा मेघास्तिष्ठन्ति । तत्र दृष्टान्तः । अर्यः अरणीयस्य स्वामिनः पौंस्यानि बलानि तीर्थे न राजवीथ्यां यथा तिष्ठन्ति तद्वत् ॥

प्रति घोराणामेतानामयासां मरुतां शृण्व आयतामुपब्दिः ।
ये मर्त्यं पृतनायन्तमूमैर्ऋणावानं न पतयन्त सर्गैः ॥ ७ ॥

प्रति । घोराणाम् । एतानाम् । अयासाम् । मरुताम् । शृण्वे । आऽयताम् । उपब्दिः ।
ये । मर्त्यम् । पृतनाऽयन्तम् । ऊमैः । ऋणऽवानम् । न । पतयन्त । सर्गैः ॥ ७ ॥

हे इन्द्र ते संबन्धिनां घोराणां भयानकानां शब्दाभिमानानां[1] वा एतानाम् एतवर्णानाम् अयासाम् अयमानानां गमनशीलानां मरुताम् आयताम् आगन्तॄणां मरुताम् उपब्दिः उप गुर्वादिसमीपे गम्यते ज्ञायते उपपद्यते इति वा उपब्दिर्वाक् । शृण्वे श्रूयते ॥ कर्मणि कर्तृप्रत्ययः ॥ ते एव विशिष्यन्ते[2] । ये मरुतः मर्त्यं मरणधर्माणम् ऊमैः स्वरक्षणैरुदकनिगमनसाधनैर्वा पृतनायन्तं पृतनामात्मन इच्छन्तं वैरिणं मेघं वा सर्गैः सृष्टैः स्वकीयप्रहारविशेषैः पतयन्त पातयन्ति तेषामेव ध्वनिः श्रूयते इत्यर्थः । पातने दृष्टान्तः । सर्गैः ऋणवानं न ॥ 'छन्दसीवनिपौ' इति वनिप् ॥ ऋणवन्तम् अधमवैरिणमिव[3] । तं यथा पीडयित्वा तदीयं धनमपहरन्ति तद्वत् । एवंमहानुभावा मरुतस्तवानुगा इतीन्द्रस्य स्तुतिः ॥

त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः ।
स्तवानेभिः स्तवसे देव देवैर्विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥

त्वम् । मानेभ्यः । इन्द्र । विश्वऽजन्या । रद । मरुत्ऽभिः । शुरुधः । गोऽअग्राः ।
स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

हे इन्द्र त्वं मानेभ्यः मानार्थम् । चित्तेनेत्यर्थः ॥ तादर्थ्ये चतुर्थी ॥ विश्वजन्या विश्वजन्यः ॥ सोः आकारः ॥ विश्वे प्राणिनः उत्पादनीया यस्य तादृशस्त्वं सर्वजनहितशक्त्या वा मरुद्भिः सह शुरुधः शोकस्य रोधयित्रीः[4] शोषिकाः[4] गोअग्राः गर्जितमुदकं वा अग्रे पुरतो यासां ता मेघपङ्क्तीः रद विलिख विदारय । हे देव द्योतमान त्वं स्तवानेभिः स्तूयमानैः देवैः अन्यैर्मरुदादिभिर्ऋत्विग्भिर्वा स्तवसे स्तूयसे ॥ उभयत्र कर्मणि कर्तृप्रत्ययः ॥ विद्यामेत्ययं व्याख्यातः ॥ ॥ ९ ॥

'न नूनमस्ति' इति पञ्चर्चं षष्ठं सूक्तमागस्त्यमैन्द्रम् । अत्रानुक्रमणिका—'न नूनं पञ्चागस्त्येनैन्द्रे हविषि मरुतामुद्यत इन्द्रागस्त्ययोः संवादः ऐन्द्रस्तत्राद्या तृतीया चेन्द्रवाक्यं चतुर्थी चादौ बृहती तिस्रोऽनुष्टुभः' इति । सूक्तस्येन्द्रागस्त्यसंवादरूपत्वादाद्या तृतीया चतुर्थी चेन्द्रवाक्यम् । अतस्तासां यस्यवाक्यन्यायेन स ऋषिः । शिष्टे अगस्त्यवाक्ये । अतस्तयोः स एवर्षिः । आद्या च बृहती ततस्तिस्रोऽनुष्टुभः । अन्त्या अविशेषात् त्रिष्टुप् ॥ विशेषविनियोगो लैङ्गिकः ॥ अत्र यास्कः—'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे' (निरु. १.५) इति ॥

---

१. झ१–शब्दायमानानाम् । २. झ-झ१–विशेष्यन्ते । ३. झ१–ऋणिकमिव वैरिणमिव वा । ४. झ१–रोषस्य वा शोषकाः ।

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥ १ ॥

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतम् ।
अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत । आऽधीतम् । वि । नश्यति ॥ १ ॥

परिदेवनप्रकारः प्रतिपाद्यते । इन्द्र आह । अद्यतनं यदस्ति तत् नूनम् अद्य न अस्ति । नूनमत्र विचिकित्सार्थे । अत्र अद्य इति यद्यपि नास्ति तथापि उत्तरवाक्ये श्वः इति दर्शनादत्र अद्येति गम्यते । तथा श्वः अपि नूनं नो । उशब्दः अवधारणे । श्वस्तनमपि नैव नास्ति । अद्य यथा अस्मदर्थं-निरुप्तम् अस्मभ्यं नास्ति किल श्वः कथं लप्स्यते इति भावः । यदद्भुतम् अन्यस्मै निरुप्य अन्यस्मै दत्तमिति यदस्ति वैपरीत्यं तत् कः वेद । यद्वा । यदद्भुतं भावि कार्यं यदस्ति तत्को वेद । अद्य श्वो वा लभ्यते इत्याशा न कार्येत्युक्तं भवति । तदेवाह । अभि संचरेण्यं सर्वतः संचारि अन्यस्य चित्तं मानसं जानातीति[1] शेषः । उत अपि च आधीतम् आध्यातं चिन्तितमपि न दृश्यं किमु सकृत्स्मृतं वि नश्यति इति ॥

किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।
तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥ २ ॥

किम् । नः । इन्द्र । जिघांससि । भ्रातरः । मरुतः । तव ।
तेभिः । कल्पस्व । साधुऽया । मा । नः । सम्ऽअरणे । वधीः ॥ २ ॥

इदमगस्त्यवाक्यम् । हे इन्द्र नः अस्मान् अनपराधिनः किं जिघांससि हन्तुमिच्छसि । कथमवध्यत्वमिति अत आह । मरुतः तव भ्रातरः । त्वया भोगप्रदानेन[2] भरणीया इत्यर्थः । अतो वयमवध्या इत्युक्तं भवति । मरुतामिन्द्रभ्रातृत्वम् एकस्मिन्नेवादितिगर्भे उत्पन्नत्वात् । सा चोत्पत्तिः पुराणेषु प्रसिद्धा । सन्तु भ्रातरस्ततश्च किमिति अत आह । तेभिः तैर्मरुद्भिः सह साधुया साधुत्वं कल्पस्व कल्पय हविर्भागं तैः सह युद्धं वा । नः अस्मान् समरणे संग्रामे मा वधीः मा हिंसीः । यद्वा । लुप्तो दृष्टान्तः । संग्रामे यथा विरोधिनं हंसि न तथास्मानिति ॥

किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे ।
विद्मा हि ते तथा मनोऽस्मभ्यमिन्न दित्ससि ॥ ३ ॥

किम् । नः । भ्रातः । अगस्त्य । सखा । सन् । अति । मन्यसे ।
विद्म । हि । ते । यथा । मनः । अस्मभ्यम् । इत् । न । दित्ससि ॥ ३ ॥

---

१. क-ज्ञ१-को जानातीति । २. ज्ञ१-भागप्रदानेन ।

इदमिन्द्रवाक्यम् । हे ᵛभ्रातः हे ᵛअगस्त्य । हविष्प्रदानवरप्रदानाभ्यां परस्परोपकारत्वात् भ्रातृत्वम् । तादृशस्त्वं ᵛसखा ᵛसन् अस्मद्धितकार्यपि सन् ᵛनः अस्मान् ᵛकिम् ᵛअति ᵛमन्यसे । कस्मादपराधादतिक्रम्य मनुषे । अपलपसि । नायमपलापः किंतु तथ्यमेवेति चेत् उच्यते । मन्तव्यं[1] ᵛते तव ᵛमनः मानसं ᵛयथा यथावस्तु ᵛविद्म जानीमः । कथं जानीथेति[2] उच्यते । ᵛअस्मभ्यमिन्न ᵛदित्ससि । अस्मदर्थं निरुप्तमस्मभ्यं दातुं नेच्छस्येव । इत् एवार्थे ॥

**अरं॑ कृण्वन्तु॒ वेदिं॒ सम॒ग्निमि॑न्धतां पु॒रः । तत्रा॒मृत॑स्य॒ चेत॑नं य॒ज्ञं ते॑ तनवावहै ॥४॥**

अ॒र॑म् । कृ॒ण्व॒न्तु॒ । वेदि॑म् । सम् । अ॒ग्निम् । इ॒न्ध॒ता॒म् । पु॒रः ।

तत्र॑ । अ॒मृत॑स्य । चेत॑नम् । य॒ज्ञम् । ते॒ । त॒न॒वा॒व॒है॒ ॥ ४ ॥

इदमिन्द्रवाक्यम् । अपरे अगस्त्यवाक्यमाहुः । हे ऋत्विजो यूयं अगस्त्योऽभ्युक्तवान् तस्मात् ᵛवेदिम् ᵛअरं ᵛकृण्वन्तु । संमार्जनपर्युक्षणादिना परिचरन्तु । तथा ᵛपुरः पुरस्तात् ᵛअग्निम् आहवनीयादिकं ᵛसम् ᵛइन्धताम् इध्मप्रक्षेपेण प्रज्वालयन्तु । ᵛतत्र अग्नौ ᵛअमृतस्य अमरणलक्षणस्य देवत्वस्य[3] ᵛचेतनं प्रज्ञापकं ᵛयज्ञं हे अगस्त्य ᵛते त्वदीयं त्वं चाहं च ᵛतनवावहै । अगस्त्यवाक्यपक्षे शिष्टम-विशिष्टम् । तत्र वेद्याममृतस्य तत्साधनस्य हविषो वा चेतनं प्रज्ञापनमासीदनं कुरुत । आवां पत्नी-यजमानौ अध्वर्युयजमानौ वा हे इन्द्र ते त्वदर्थं यज्ञं तनवावहै ॥

**त्वमी॑शिषे वसुपते॒ वसू॑नां॒ त्वं मि॒त्राणां॑ मित्रपते॒ धेष्ठः॑ ।**
**इन्द्र॒ त्वं म॒रुद्भिः॒ सं व॑दस्वाध॒ प्राशा॑न ऋतु॒था ह॒वींषि॑ ॥ ५ ॥**

त्वम् । ई॒शि॒षे॒ । व॒सु॒ऽप॒ते॒ । वसू॑नाम् । त्वम् । मि॒त्राणा॑म् । मि॒त्र॒ऽप॒ते॒ । धेष्ठः॑ ।

इन्द्र॑ । त्वम् । म॒रुत्ऽभिः॑ । सम् । व॒द॒स्व॒ । अध॑ । प्र । अ॒शा॒न॒ । ऋ॒तु॒ऽथा । ह॒वींषि॑ ॥५॥

इदमगस्त्यवाक्यम् । हे ᵛवसूनां ᵛवसुपते अतिप्रभूतानां पुरोडाशाज्यादिधनानां स्वामिन् हे इन्द्र ᵛत्वमीशिषे ईश्वरो भवसि सर्वस्य । वृत्त्यवृत्तिभ्यां बहुत्वं नित्यं[4] संबन्धश्च[4] प्रतिपद्यते । यद्वा । हे वसुपते वसूनामीशिषे इति योजना । द्वितीयो वसुशब्दोऽनुवादो वा । तथा हे ᵛमित्राणां ᵛमित्रपते अस्मदादिमित्रस्य नित्यं पालकेन्द्र ᵛत्वं ᵛधेष्ठः सर्वस्यातिशयेन धारकोऽसि । हे ᵛइन्द्र ᵛत्वम् उक्त-महिमस्त्वं ᵛमरुद्भिः ᵛसं ᵛवदस्व तैः साकं सम्यकृतमिति वदस्व । ᵛअध अपि च त्वम् ᵛऋतुथा ऋतावृतौ । उपलक्षणमेतत्कालस्य । तत्तद्यागकाले ᵛहवींषि आज्यचर्वादीनि ᵛप्राशान प्रकर्षेण भुङ्क्ष्व ॥ ॥ १० ॥

' प्रति वः ' इति षड्ऋचं सप्तमं सूक्तमागस्त्यं त्रैष्टुभं मारुतम् । आद्ये द्वे केवलमारुते । शिष्टा-श्चतस्रो मरुत्वदिन्द्रदेवताकाः । ' प्रति वः षण्मारुतं तु चतस्रोऽन्त्या मरुत्वतीयाः ' इत्यनुक्रमणिका । विशेषविनियोगो लैङ्गिकः ॥

---

१. झ१–मन्तव्यम् । २. झ१–जानीम इति । ३. झ-झ१–देवत्वस्य । ४. झ १–नित्यसंबन्धश्च ।

प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम् ।
रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥ १ ॥

प्रति । वः । एना । नमसा । अहम् । एमि । सुऽउक्तेन । भिक्षे । सुऽमतिम् । तुराणाम् ।
रराणता । मरुतः । वेद्याभिः । नि । हेळः । धत्त । वि । मुचध्वम् । अश्वान् ॥ १ ॥

हे मरुतः ᐯवः युष्मान् ᐯअहं ᐯप्रति ᐯएमि अभिगच्छामि । केन साधनेन । ᐯनमसा नमस्कारेण हविषा वा । नम इत्यन्ननाम । तथा ᐯसूक्तेन शोभनवचनेन स्तुतिरूपेण । ᐯतुराणां त्वरमाणानां शत्रूणां हिंसकानां वा युष्माकं ᐯसुमतिं शोभनमतिम् अनुग्रहबुद्धिं ᐯभिक्षे याचे । इन्द्रस्यैव पुनर्हविष्प्रदानादिदं याच्यते । किंच हे ᐯमरुतः यूयं ᐯवेद्याभिः वेदितव्याभिः स्तुतिभिः ᐯरराणता रममाणेन मनसा इत्थंभूताः सन्तः ᐯहेळः । क्रोधनामैतत् । क्रोधं युष्मदभिक्रमजनितं ᐯनि ᐯधत्त निकृष्टं धारयत त्यजतेत्यर्थः । तथा ᐯअश्वान् ᐯवि ᐯमुचध्वम् रथेभ्यो वियोजयत । क्रोधात् पुनर्गमनं मा कुरुतेत्यर्थः ॥

एष वः स्तोमो मरुतो नमस्वान्हृदा तष्टो मनसा धायि देवाः ।
उपेमा यात मनसा जुषाणा यूयं हि ष्ठा नमस इद्वृधासः ॥ २ ॥

एषः । वः । स्तोमः । मरुतः । नमस्वान् । हृदा । तष्टः । मनसा । धायि । देवाः ।
उप । ईम् । आ । यात । मनसा । जुषाणाः । यूयम् । हि । स्थ । नमसः । इत् । वृधासः ॥२॥

हे ᐯमरुतः ᐯएष ᐯवः ᐯस्तोमः इदानीं क्रियमाणप्रकारो वो युष्माकम् । युष्मदर्थ इत्यर्थः । कीदृशोऽयम् । ᐯनमस्वान् । नम इत्यन्ननाम । हविर्लक्षणान्नवान् । न केवलं स्तुतिमात्रं भक्षणाय हविरपि युष्माकमित्यर्थः । किंच ᐯहृदा ᐯतष्टः युष्मन्निवेदनबुद्ध्या संपादितः । तादृशः स्तोमो हे ᐯदेवाः देवनशीलाः ᐯमनसा अस्मदनुग्रहवता चित्तेन ᐯधायि धार्यताम् । तदर्थं ᐯमनसा आदरया बुद्ध्या ᐯजुषाणाः ᐯईम् एनां स्तुतिं तद्धविश्च सेवमानाः ᐯउप ᐯआ ᐯयात उपागच्छतैव । मा विलम्बं कुरुत । ᐯयूयं ᐯनमसः अन्नस्य हवीरूपस्य ᐯवृधासः ᐯस्थ ᐯहि वर्धयितारो भवथ खलु । अतो गन्तव्यमेव । ᐯइत् पूरणः ॥

स्तुतासो नो मरुतो मृळयन्तूत स्तुतो मघवा शंभविष्ठः ।
ऊर्ध्वा नः सन्तु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥ ३ ॥

स्तुतासः । नः । मरुतः । मृळयन्तु । उत । स्तुतः । मघऽवा । शम्ऽभविष्ठः ।
ऊर्ध्वा । नः । सन्तु । कोम्या । वनानि । अहानि । विश्वा । मरुतः । जिगीषा ॥ ३ ॥

ते ᵛमरुतः ᵛस्तुतासः स्तुताः सन्तः ᵛनः अस्मान् ᵛमृळयन्तु सुखयन्तु । ᵛउत अपि च ᵛमघवा । मघमिति धननाम । अस्मद्दातव्यबहुधनेन तद्वानिन्द्रः ᵛस्तुतः ᵛशंभविष्ठः सुखस्य भावयितृतमः सन् अस्मान् मृळयतु । किंच हे ᵛमरुतः ᵛनः अस्माकं ᵛजिगीषा ॥ जिगातेर्गतिकर्मणो जिगीषा ॥ जिगीषितव्यानि प्राप्तव्यानि उत्तरत्रानुभूयमानानि ᵛविश्वा सर्वाणि ᵛअहानि दिवसानि ᵛऊर्ध्वा उन्नतान्युपर्युपरि श्रिया यशसा वा उत्कृष्टानि ᵛकोम्या काम्यानि[1] स्पृहणीयानि ᵛवनानि सर्वैः संभजनीयानि ᵛसन्तु । जिगीषा जेतुमिष्टानि जेतव्यानि च सन्त्विति वा योज्यम् । एवं कृत्वा मरुत इन्द्रश्च सुखयन्त्वित्यर्थः ॥

अस्मादहं तविषादीषमाण इन्द्राद्भिया मरुतो रेजमानः ।
युष्मभ्यं हव्या निशितान्यासन्तान्यारे चकृमा मृळता नः ॥ ४ ॥

अस्मात् । अहम् । तविषात् । ईषमाणः । इन्द्रात् । भिया । मरुतः । रेजमानः ।
युष्मभ्यम् । हव्या । निऽशितानि । आसन् । तानि । आरे । चकृम । मृळत । नः ॥ ४ ॥

हे ᵛमरुतः श्रृणुत । ᵛअहम् ᵛअस्मात् प्रसिद्धात् ᵛतविषात् बलवतः ᵛइन्द्रात् तत्सकाशात् ᵛभिया भीत्या ᵛईषमाणः पलायमानः पुरतः स्थातुमशक्तः तथा ᵛरेजमानः वेपमानश्चाभवम् । ततश्च किमायातमिति अत आह । यानि ᵛयुष्मभ्यं ᵛहव्या हवींषि ᵛनिशितानि संस्कृतानि ᵛआसन् ᵛतानि तान्येव ᵛआरे ᵛचकृम । दूरे कृतवन्तो वयमिन्द्रभयात् । अतः ᵛनः अस्मान् अनपराधिनः ᵛमृळत मृळयत सुखयत ॥

येन मानासश्चितयन्त उस्रा व्युष्टिषु शवसा शश्वतीनाम् ।
स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः ॥ ५ ॥

येन । मानासः । चितयन्ते । उस्राः । विऽउष्टिषु । शवसा । शश्वतीनाम् ।
सः । नः । मरुत्ऽभिः । वृषभ । श्रवः । धाः । उग्रः । उग्रेभिः । स्थविरः । सहःऽदाः ॥५॥

हे इन्द्र ᵛयेन ᵛशवसा बलभूतेन त्वयानुगृहीताः ᵛमानासः मान्यास्त्वयाभिमानिताः वा ᵛउस्राः रश्मयः ᵛशश्वतीनां[2] नित्यानां बह्वीनामुषसां ᵛव्युष्टिषु सतीषु प्रकाशेषु सत्सु ᵛचितयन्ते चेतयन्ते प्राणिनां[2] स्वस्वव्यवहाराय प्रज्ञापयन्ति । ऐन्द्र्यां दिशि तेनैवानुगृहीता उषसो रश्मय उद्गच्छन्तीति प्रसिद्धम् । हे ᵛवृषभ वर्षितरिन्द्र ᵛसः तादृशस्त्वं ᵛमरुद्भिः सहितः ᵛश्रवः ᵛधाः सर्वत्र श्रूयमाणमन्नं धेहि स्थापय देहीत्यर्थः । कीदृशस्त्वम् । ᵛउग्रः उद्गूर्णबलः ᵛसहोदाः । पराभिभवसामर्थ्यं बलं सहः । तस्य दाता ᵛस्थविरः पुरातनः । कीदृशैर्मरुद्भिः । ᵛउग्रेभिः क्रूरबलैः । एवंमहानुभावः अन्नं देहि ॥

---

१. झ१–कोम्यानि । २. झ१–शश्वतीनां मध्ये । यद्वा । तादृशानां उषसां व्युष्टिषु सतीषु प्रकाशेषु सत्सु चितयन्ते प्राणिनः ।

त्वं पाहीन्द्र सहीयसो नॄन्भवा मरुद्भिरवयातहेळाः ।
सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

त्वम् । पाहि । इन्द्र । सहीयसः । नॄन् । भव । मरुत्ऽभिः । अवयातऽहेळाः ।
सुऽप्रकेतेभिः । ससहिः । दधानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

हे इन्द्र त्वं पाहि रक्ष । कान् । सहीयसो नॄन् सहस्वितमान् त्वदनुग्रहेण अतिप्रवृद्ध-बलान् नेतॄन् मनुष्यानस्मान् मरुतो वा । किंच मरुद्भिः साकम् अस्मासु अवयातहेळाः भव । अपगतमन्युर्भव । मरुत्सु वा तथा भव । किंच सुप्रकेतेभिः शोभनप्रज्ञानैर्मरुद्भिः सह सासहिः शत्रूणामभिभविता सन् दधानः अस्मदभिमतस्य धारयिता भवेति शेषः । शिष्टो व्याख्यातः ॥ ॥११॥

'चित्रो वः' इति तृचात्मकमष्टमं सूक्तमागस्त्यं मारुतं गायत्रम् । 'चित्रस्तृचं गायत्रम्' इत्यनुक्रमणिका । लैङ्गिको विशेषविनियोगः ॥

चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः । मरुतो अहिभानवः ॥ १ ॥

चित्रः । वः । अस्तु । यामः । चित्रः । ऊती । सुऽदानवः । मरुतः । अहिऽभानवः ॥१॥

हे मरुतः वः युष्माकं यामः अस्मद्यज्ञागमः चित्रः चायनीयः पूज्यः आश्चर्यभूतो वा अस्तु भवतु । न केवलमागमनमेव चित्रं किंतु हे सुदानवः शोभनदानाः हे अहिभानवः अहीयमान-प्रकाशाः युष्माकं संबन्धी चित्रः स आगमः ऊती ऊत्यै रक्षणाय इष्टतर्पणाय वा युक्तश्च भवतु । तदागमनं[1] शीघ्रमस्तु अभिमतप्रदं चास्त्वित्यर्थः ॥

आरे सा वः सुदानवो मरुत ऋञ्जती शरुः । आरे अश्मा यमस्यथ ॥ २ ॥

आरे । सा । वः । सुऽदानवः । मरुतः । ऋञ्जती । शरुः । आरे । अश्मा । यम् । अस्यथ ॥२॥

हे सुदानवः शोभनदानाः मरुतः वः युष्माकं संबन्धिनी ऋञ्जती प्रसाधयन्ती स्वतेजसा स्वात्मानमलंकुर्वती[2] प्रसिद्धिं प्राप्नुवाना वा सा प्रसिद्धा शरुः हिंसका ऋष्टिः आरे दूरे भवतु । तथा यम् अस्यथ क्षिपथ सः अश्मा व्यापकः आयुधविशेषः आरे । दूरनामैतत् । दूरे भवतु मां न प्राप्नोतु । यद्वा । आरेशब्दः आराच्छब्दपर्यायः । स च दूरे समीपे च वर्तते । अत्र समीपवचनः । यम् अस्मत्तोऽन्यम् अस्यथ तं वैरिणमस्माकमुपलोपमः कठिन आयुधविशेषः आरे समीपं प्राप्नोतु ॥

तृणस्कन्दस्य नु विशः परि वृङ्क्त सुदानवः । ऊर्ध्वान्नः कर्त जीवसे ॥ ३ ॥

तृणऽस्कन्दस्य । नु । विशः । परि । वृङ्क्त । सुऽदानवः । ऊर्ध्वान् । नः । कर्त । जीवसे ॥३॥

---

१. क-ख-ज-ञ-झ१-त-फ-त्वदागमनम् । २. ख-फ--आत्मानमलंकुर्वन्ति ।

हे मरुतः ᵛसुदानवः शोभनदानाः यूयं ᵛतृणस्कन्दस्य तृणवत् चलनस्वभावस्य शुष्यमाणस्य वा मम ᵛविशः पुत्रभृत्यादिरूपाः प्रजाः ᵛनु क्षिप्रं ᵛपरि ᵛवृङ्क्त परिवर्जयत बाधापरिहारेण रक्षत। यद्वा। उक्तलक्षणकालस्यासुरविशेषस्य वा प्रजाः परिवर्जयत। किंच ᵛनः अस्मान् ᵛऊर्ध्वान् ᵛकर्त कुरुत ᵛजीवसे चिरजीवनाय॥ ॥ १२॥

'गायत्साम' इति त्रयोदशर्चं नवमं सूक्तमागस्त्यं त्रैष्टुभमैन्द्रम्। 'गायत्सप्तोना' इत्यनुक्रान्तम्। समूळ्हे दशरात्रे तृतीये छन्दोमे मरुत्वतीयशस्त्र एतत्सूक्तम्। 'विश्वजितोऽग्निं नरः' इति खण्डे सूत्रितं– 'तृतीयस्येन्द्रः स्वाहा गायत्साम' (आश्व. श्रौ. ८. ७) इति॥

**गायत्साम नभन्यं१ यथा वेरर्चाम तद्वावृधानं स्वर्वत्।**
**गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान्॥ १॥**

गायत्। साम। नभन्यम्। यथा। वेः। अर्चाम। तत्। ववृधानम्। स्वःऽवत्।
गावः। धेनवः। बर्हिषि। अदब्धाः। आ। यत्। सद्मानम्। दिव्यम्। विवासान्॥ १॥

हे इन्द्र ᵛनभन्यं नभस्यं नभसि भवं नभोव्यापिनं हिंसकं वा राक्षसादिकस्य। नभतिर्वधकर्मा, 'नभति अर्दति' (नि. २. १९. १०) इति वधकर्मसु गणनात्। तादृशं ᵛसाम हे इन्द्र ᵛयथा ᵛवेः येन प्रकारेण वेत्सि तथा ᵛगायत् गायत्युद्गाता। ᵛतत् तस्मात् यतः स्तौति ततः कारणात् ᵛववृधानं वर्धमानं ᵛस्वर्वत् फलभूतेन स्वर्गेण तद्वच्छस्त्रं यथा वेः तथा ᵛअर्चाम पूजयाम शंसामेत्यर्थः। स्तुतमनु शंसतीति न्यायात्। यद्वा। तदुक्तलक्षणं साम ववृधानं सर्वत्र यथा भवति तथा अर्चाम। किंच[1] ᵛधेनवः दोग्ध्र्यः ᵛअदब्धाः अहिंसिताः ᵛगावः ᵛयत् ᵛबर्हिषि ᵛसद्मानं सीदन्तं ᵛदिव्यं दिवि भवमिन्द्रं त्वाम् ᵛआ ᵛविवासान्[1]। विवासतिः परिचरणकर्मा। आगत्य परिचरन्ति क्षीरं दुहन्ति तथा अर्चाम॥

**अर्चद्वृषा वृषभिः स्वेदुहव्यैर्मृगो नाश्नो अति यज्जुगुर्यात्।**
**प्र मन्दयुर्मनां गूर्त होता भरते मर्यो मिथुना यजत्रः॥ २॥**

अर्चत्। वृषा। वृषऽभिः। स्वऽइदुहव्यैः। मृगः। न। अश्नः। अति। यत्। जुगुर्यात्।
प्र। मन्दयुः। मनाम्। गूर्त। होता। भरते। मर्यः। मिथुना। यजत्रः॥ २॥

ᵛवृषा हविषां वर्षिता अयं यजमानः ᵛस्वेदुहव्यैः स्वायत्तेन्द्रहविष्कैः। यद्वा। स्वयंप्रासेन्धकं हव्यं येषां तादृशैः। ᵛवृषभिः वर्षकैर्हविष्प्रदातृभिः अध्वर्य्वादिभिर्विशिष्टः सन् ᵛअर्चत् अर्चयतीन्द्रम्। यद्वा। वृषा फलस्य वर्षितायमिन्द्रः उक्तलक्षणैरध्वर्य्वादिभिरर्च्यते। ᵛयत् यस्मात् ᵛअश्नः व्यापकः पानार्थं धावन् ᵛमृगो ᵛन हरिणादिरिवार्धमिन्द्रः अश्नोऽशनशीलः सन् ᵛअति ᵛजुगुर्यात् अत्यर्थमुद्युङ्क्ते हविर्भक्षणाय। यथा मृगः क्षुत्पिपासार्दितः शीघ्रमुद्युङ्क्ते तथायमिन्द्रोऽपि। यस्मादेवं तस्मादर्चति।

---

१. झ१–किंच यद्यस्मात् अदब्धा अहिंसिता धेनवो नूतनप्रसवा गावो बर्हिषि यज्ञे तदर्थं दिव्यं सद्मानं देवयजनसाधनम्। यद्वा मत्वर्थो लुप्यते। सद्मवन्तं दिव्यं दिविभवम् आविवासान्।

यद्वा । अयमिन्द्रो यत् यथा अश्वो मृग इव अति जुगुर्यात् भक्षयेत् तथा अर्चतीत्यर्थः । किंच हे ᵛगूर्त उद्गूर्णेन्द्र ᵛमनां मननं स्तोत्रमिच्छतां देवानां ᵛमन्दयुः स्तुतियुक्तः ᵛमर्यः ᵛहोता मानुषः एतन्नामकः ऋत्विक् ᵛयजत्रः यागनिष्पादकः सन् ᵛमिथुना मिथुनानि युग्मरूपाणि याज्यापुरोनुवाक्यादीनि मिथुनौ वा जायापतिरूपः सन् ᵛप्र ᵛभरते प्रकर्षेण संपादयति तस्मादर्चतीत्यर्थः ॥

नक्षद्धोता परि सद्म मिता यन्भरद्गर्भमा शरदः पृथिव्याः ।
क्रन्ददश्वो नयमानो रुवद्गौरन्तर्दूतो न रोदसी चरद्वाक् ॥ ३ ॥

नक्षत् । होता । परि । सद्म । मिता । यन् । भरत् । गर्भम् । आ । शरदः । पृथिव्याः ।
क्रन्दत् । अश्वः । नयमानः । रुवत् । गौः । अन्तः । दूतः । न । रोदसी इति । चरत् । वाक् ॥३॥

ᵛहोता होमनिष्पादकोऽयमग्निः ᵛमिता परिमिता[1] ᵛसद्म सदनानि गार्हपत्यादिस्थानानि ᵛपरि ᵛयन् परितो गच्छन् ᵛनक्षत् व्याप्नोति । व्याप्य च ᵛशरदः संवत्सरसंबन्धिनं ᵛपृथिव्याः भूम्याश्च संबन्धिनं ᵛगर्भं गर्भस्थानीयमन्नं हविर्लक्षणम् ᵛआ ᵛभरत् आहरति स्वीकरोति । संभरति वा । संवत्सरपर्यन्तं वर्धितं भूम्यामुत्पन्नमित्यर्थः । यद्वा । संवत्सरसंबन्धिनं वसन्तादिकाले ज्योतिष्टोमादिषु दीयमानं पार्थिवं हविर्भरत् । ' वसन्ते वसन्ते ज्योतिषा यजेत ' इति श्रुतेः । तथा कृत्वा ᵛक्रन्ददश्वः । लुप्तोपममेतत् । अश्व इव क्रन्दति हर्षातिशयात्[2] । किं कुर्वन् । ᵛनयमानः नयन्निन्द्राय हविर्भारम्[2] । किंच ᵛगौः गन्ता उद्वृत्तो वृष इव ᵛरुवत् रौति शब्दायते । किं कुर्वन् । ᵛदूतो ᵛन वार्ताहरो दूत इव ᵛरोदसी रोदस्योर्द्यावापृथिव्योः ᵛअन्तः मध्ये रोदस्योरन्तरा ᵛवाक् स्तूयमानः स्तुवन् वा देवान् ᵛचरत् चरति गच्छति । हविःस्वीकाराय पृथिवीं तत्प्रापणाय द्युलोकं च परिभ्रमतीत्यर्थः ॥ वक्तेः कर्तरि कर्मणि वा ' क्विब्वचि॰ ' इत्यादिना क्विब्दीर्घौ संप्रसारणाभावश्च ॥

ता कर्मार्षतरास्मै प्र च्यौत्नानि देवयन्तो भरन्ते ।
जुजोषदिन्द्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः ॥ ४ ॥

ता । कर्म । अर्षऽतरा । अस्मै । प्र । च्यौत्नानि । देवऽयन्तः । भरन्ते ।
जुजोषत् । इन्द्रः । दस्मऽवर्चाः । नासत्याऽइव । सुग्म्यः । रथेऽस्थाः ॥ ४ ॥

ᵛता तानि ᵛअषतरा अर्षतराणि व्याप्ततराणि वा[3] हवींषि ᵛअस्मै इन्द्राय तदर्थं ᵛकर्म कुर्मः संपादयामः ॥ कृञश्छान्दसे वर्तमानार्थे लुङि ' मन्त्रे घस॰ ' इति च्लेर्लुक् । ' छन्दस्युभयथा ' इति आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः ॥ ᵛच्यौत्नानि च्यावयितॄणि दृढानि स्तोत्राणि कर्माणि स्वकीयानि सामर्थ्यानि वा ᵛदेवयन्तः देवानात्मन इच्छन्तो यजमानाः ᵛप्र ᵛभरन्ते प्रकर्षेण संपादयन्ति । तद्द्वयमपि संपादयाम इत्यर्थः । ᵛदस्मवर्चाः दर्शनीयतेजाः शत्रूपक्षयणबलो वा ᵛनासत्येव नासत्याविव

---

१. क–परिमिता परिमितानि; ज्ञ–परिमितानि । २. ज्ञ१–हर्षातिशयात् तदा नयमानः नयन् देवेषु हविर्धारम् ( हविर्भारम् ) । ३. ज–त–' वा ' नास्ति ।

अश्विनाविव । तौ हि द्यावापृथिव्यात्मानौ । ताविव सुगम्यः सुगन्यः सुखेन गन्तुं शक्यः रथेष्ठाः रथे वर्तमान एवंभूतः सन् जुजोषत् अस्मत्कृतं स्तोत्रादि कर्म सेवताम् ॥

**तमु ष्टुहीन्द्रं यो ह सत्वा यः शूरो मघवा यो रथेष्ठाः ।**
**प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसो विहन्ता ॥ ५ ॥**

तम् । ऊँ इति । स्तुहि । इन्द्रम् । यः । ह । सत्वा । यः । शूरः । मघऽवा । यः । रथेऽस्थाः ।
प्रतीचः । चित् । योधीयान् । वृषण्ऽवान् । ववव्रुषः । चित् । तमसः । विऽहन्ता ॥ ५ ॥

तमु तमेव इन्द्रं स्तुहि हे होतः स्तुतिं कुरु । किमस्याधिक्यमिति उच्यते[1] । यो ह यः खलु सत्वा अतिप्रभूतबलः । यद्वा । सत्वा सादकः शत्रूणाम् । यः च शूरः शौर्योपेतः मघवा बलवानन्नवान् वा । यः च रथेष्ठाः रथे वर्तमानः । किंच प्रतीचश्चित् प्रत्यभिमुखं योद्धुरपि योधीयान् योद्धृतमः ॥ प्रतिपूर्वादञ्चतेः क्विनन्तात् लुप्तनकारात् शसि 'अचः' इति अकारलोपे 'चौ' इति दीर्घः । 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इति विभक्तिरुदात्ता ॥ वृषण्वान् । वृषाणो वर्षितारो वज्रादयः । तद्वान् । 'वृषा ते वज्र उत ते वृषा रथः' ( ऋ. सं. २. १६. ६ ) इति हि निगमः । तथा ववव्रुषश्चित्तमसः आवरकस्यापि तमसो मेघादेः विहन्ता विशेषेण घातकः । यस्मादेवं-महानुभावः तस्मात् स्तुहि ॥ ॥ १३ ॥

**प्र यदित्था महिना नृभ्यो अस्त्यरं रोदसी कक्ष्ये३ नास्मै ।**
**सं विव्य इन्द्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशमिव द्याम् ॥ ६ ॥**

प्र । यत् । इत्था । महिना । नृऽभ्यः । अस्ति । अरम् । रोदसी इति । कक्ष्ये३ इति । न । अस्मै ।
सम् । विव्ये । इन्द्रः । वृजनम् । न । भूम । भर्ति । स्वधाऽवान् । ओपशम्ऽइव । द्याम् ॥ ६ ॥

यत् यः इन्द्रः महिना महत्त्वेन स्वैश्वर्येण नृभ्यः नेतृभ्यः कर्मनिर्वाहकेभ्यो यजमानेभ्यः प्र अस्ति प्रभवति ईष्टे स्वर्गादिप्रदाने[2] रक्षितुम् अस्मै रक्षकायेन्द्राय रोदसी द्यावापृथिव्यौ कक्ष्ये कक्ष्यय्यते सती संचाराय न अरं नालं न पर्याप्ते । जगतोऽधीशस्येन्द्रस्य संचारायाल्पत्वात् द्यावापृथिव्यौ न पर्याप्ते इत्यर्थः । सृष्टादपि स्रष्टुर्महिम्नोऽधिकत्वादिति भावः । अयम् इन्द्रो वृजनं न भूम भूमिं भूतानि वा वृजनं न वृजनमिव ॥ वृजेः कर्तनार्थस्येदं रूपम् ॥ तदिव तद्यथा आवृणोति तथायमपि स्वतेजसा सं विव्ये सम्यगावृणोति लोकत्रयम् । किंचायं स्वधावान् अन्नवान् वृष्टिलक्षणोदकवान् वा द्यां दिवं भर्ति बिभर्ति । धारणे दृष्टान्तः । ओपशमिव । ईषदुपशेते इत्योपशं शृङ्गं तद्रूपभ इव । यद्वा । परस्परं समीपे वर्तमानं क्षित्यन्तरिक्षाख्यं लोकद्वयम् ओपशम् । तदिव द्यां बिभर्ति । लोकत्रयमपि बिभर्तीत्यर्थः ॥ भृञो लटि छान्दसः शपो लुक् ॥

---

१. झ१–उच्यते विशिष्टेन सर्वेण । २. ख-झ-फ–स्वर्गादिप्रदानेन ।

समत्सु त्वा शूर सतामुराणं प्रपथिन्तमं परितंसयध्यै ।
सजोषस इन्द्रं मदे क्षोणीः सूरिं चिद्ये अनुमदन्ति वाजैः ॥ ७ ॥

समत्ऽसु । त्वा । शूर । सताम् । उराणम् । प्रपथिन्ऽतमम् । परिऽतंसयध्यै ।
सऽजोषसः । इन्द्रम् । मदे । क्षोणीः । सूरिम् । चित् । ये । अनुऽमदन्ति । वाजैः ॥ ७ ॥

हे ᵛशूर शौर्योपेतेन्द्र ᵛसमत्सु संग्रामेषु ᵛसतां त्वामेवाश्रित्य वर्तमानानां प्राणिनाम् ᵛउराणम् उरूण्यतिप्रभूतानि बलादीनि कुर्वाणं ᵛप्रपथिन्तमं प्रकृष्टमार्गतमं सुकृतिनामुत्तममार्गभूतम् ᵛइन्द्रं शत्रूणां दारकं ᵛत्वा त्वां ᵛपरितंसयध्यै अवतंसीकर्तुं भूषणीकर्तुम् । भूषयितुं वा निमित्तेऽर्थे । ᵛमदे तव मदार्थं च ᵛसजोषसः सह सेवमानाः समानप्रीतयो वा ᵛक्षोणीः क्षोण्यो विशः परिजना मरुतः प्रयतन्ते । कीदृशास्ते । ᵛये ᵛवाजैः बलैः ᵛअनुमदन्ति अनुकूलं मादयन्ति संग्रामे मरुतस्तमेव स्वामिनं कृत्वा मादयन्ति हर्षयन्तीत्यर्थः । यद्वा । ये यजमाना वाजैर्हविर्भिर्मोदयन्ति ते समानप्रीतियुक्तास्तव मनुष्यभूता ऋत्विजो यजमानभूताः प्रजाः समत्सु सहमादनस्थानेषु यागेषूक्तलक्षणविशिष्टं त्वामेव पूजयितुं तव मादाय च प्रयतन्ते ॥

एवा हि ते शं सवना समुद्र आपो यत्त आसु मदन्ति देवीः ।
विश्वा ते अनु जोष्या भूद्गौः सूरींश्चिद्यदि धिषा वेषि जनान् ॥ ८ ॥

एव । हि । ते । शम् । सवना । समुद्रे । आपः । यत् । ते । आसु । मदन्ति । देवीः ।
विश्वा । ते । अनु । जोष्या । भूत् । गौः । सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥ ८ ॥

हे इन्द्र ᵛएवा ᵛहि एवं हि सति ᵛते तव संबन्धीनि सवनानि । सूयते सोमोऽत्रेति सवनानि सोमयागाः । ते ᵛशं सुखकरा भवन्ति । कथं सति । ᵛयत् यदि ᵛदेवीः देव्यः द्योतमानाः ᵛआपः ᵛसमुद्रे उदकसमुद्रवणापादानभूतेऽन्तरिक्षे ᵛआसु प्रजासु निमित्तभूतासु ᵛते त्वां ᵛमदन्ति मादयन्ति ॥ अन्तर्भावितण्यर्थोऽयम् ॥ यदा प्राण्युपकारार्थं वर्षणाय त्वां प्रेरयन्ति वृष्ट्युदकानि तदा खलु तव सोमयागाः सुखकरा भवन्ति । यज्ञसाधनवृष्टिप्रदानेन यागान्निर्वर्तयेत्यर्थः । किंच हे इन्द्र ᵛविश्वा ᵛगौः सर्वापि स्तोत्रशस्त्ररूपा वाक् ᵛते त्वाम् अनुक्रमेण ᵛजोष्या जोषणार्हा प्रीणयित्री ᵛभूत् भवति । कदा । ᵛयदि ᵛसूरींश्चित् स्तोत्रादिप्रेरयितॄन् स्तोतृजनानपि ᵛधिषा धिषणया प्रज्ञया वृष्टिप्रदानरूपेण कर्मणा वा ᵛवेषि कामयसे तदा सर्वापि स्तुतिस्त्वदर्था भवति ॥

असाम यथा सुषखाय एन स्वभिष्टयो नरां न शंसैः ।
असद्यथा न इन्द्रो वन्दनेष्ठास्तुरो न कर्म नयमान उक्था ॥ ९ ॥

असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः । नराम् । न । शंसैः ।
असत् । यथा । नः । इन्द्रः । वन्दनेऽस्थाः । तुरः । न । कर्म । नयमानः । उक्था ॥ ९ ॥

हे ᵛएन इन ईश्वर इन्द्र ᵛयथा ᵛसुसखायः शोभनत्वद्रूपसहायवन्तः ᵛअसाम भूयास्म किंच[1] ᵛस्वभिष्टयः शोभनाभ्येषणाः शोभनाभीष्टाश्चासाम । किमिव । ᵛनरां ᵛन ᵛशंसैः । नराणां राजादीनां शंसैः शंसनैरिव । स्तुतिभिर्यथा मनुष्याः शोभनाभीष्टा भवन्ति तद्वत् । इदानीं परोक्षेणाह । ᵛनः अस्मभ्यम् ᵛइन्द्रः ᵛवन्दनेष्ठाः अस्मत्स्तुतौ वर्तमानः सन् ᵛतुरो ᵛन त्वरमाण इव नः अस्माकं ᵛकर्म ᵛउक्था उक्थैः शस्त्रैः ᵛनयमानः फलं प्रापयन् स्तुत्या तुष्टः सन् अस्मदीयेन कर्मणा फलप्रापयिता ᵛयथा ᵛअसत् भवेत् । हे ऋत्विजः तथा कुरुतेति शेषः ॥

विष्पर्धसो नरां न शंसैरस्माकासदिन्द्रो वज्रहस्तः ।
मित्रायुवो न पूर्पतिं सुशिष्टौ मध्यायुव उप शिक्षन्ति यज्ञैः ॥ १० ॥

विऽस्पर्धसः । नराम् । न । शंसैः । अस्माक । असत् । इन्द्रः । वज्रऽहस्तः ।
मित्रऽयुवः । न । पूःऽपतिम् । सुऽशिष्टौ । मध्यऽयुवः । उप । शिक्षन्ति । यज्ञैः ॥ १० ॥

ᵛनरां नेतॄणां मध्ये सस्पर्धान् नरान् यथा ᵛविस्पर्धसः कुर्वन्ति सखिभूताः तद्वद्वयमपीन्द्रं ᵛशंसैः स्तुतिभिः सखायो वयं तं तथा कुर्मः । स च ᵛवज्रहस्तः विरोधिशिक्षणाय सर्वदा वज्रधारी ᵛइन्द्रः अस्माकम् ᵛअसत् । विस्पर्धमनुकूलो भवतु । किंच ᵛमित्रायुवो ᵛन मित्रेच्छवो हितैषिण इव ᵛसुशिष्टौ सुशासने वर्तमानं ᵛपूर्पतिं पुरः स्वामिनं यथा अभिमतदानेन पूजयन्ति तथा ᵛमध्यायुवः अस्माकं श्रियां यशसां च मध्येऽवस्थितिं कामयमाना अध्वर्य्वादयः ᵛयज्ञैः यज्ञसाधनैर्हविःस्तोत्रादिभिः ᵛउप ᵛशिक्षन्ति उपेत्य यजन्ते । शिक्षतिर्दानकर्मा ॥ ॥ १४ ॥

यज्ञो हि ष्मेन्द्रं कश्चिदृन्धञ्जुहुराणश्चिन्मनसा परियन् ।
तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥ ११ ॥

यज्ञः । हि । स्म । इन्द्रम् । कः । चित् । ऋन्धन् । जुहुराणः । चित् । मनसा । परिऽयन् ।
तीर्थे । न । अच्छ । ततृषाणम् । ओकः । दीर्घः । न । सिध्रम् । आ । कृणोति । अध्वा ॥ ११ ॥

ᵛकश्चित् ᵛयज्ञः यज्ञवान् यज्ञानुष्ठायी ᵛऋन्धन् वर्धयन् भवति । इन्द्रं यज्ञेन वर्धयतीत्यर्थः । ᵛजुहुराणश्चित् कुटिलगतिस्तु कश्चित् ᵛमनसा केवलेन ᵛपरियन् परितो गच्छन् लौकिकविषयादिकं ध्यायन् वर्तते । यद्वा । परि वर्जनार्थः । वर्जयित्वा गच्छन्नेदं प्राप्नोति । तत्र दृष्टान्तः । ᵛतीर्थे प्रसिद्धे मार्गे ᵛअच्छ आभिमुख्येन समीपे वर्तमानम् ᵛओकः पानीयादिकं सदनं ᵛततृषाणं पिपासायुक्तं यथा अविलम्बेन प्रीणाति । स यथा तत्सदनमागच्छतीत्यर्थः । तद्वत् यज्ञेन कश्चित् पुमानिन्द्रमभिगच्छतीति । कुटिलस्य दृष्टान्तः । ᵛदीर्घो ᵛन वक्रत्वेनातिदूरः ᵛअध्वा मार्ग इव । स यथा ᵛसिध्रं फलं पानीयादिरूपं फलार्थिनं वा पुरुषम् ᵛआ ᵛकृणोति अर्वाक्करोति नीचैः करोति वर्जयतीत्यर्थः । तस्माद्यज्ञमार्गमजानानो वक्रो दूरे परिभ्रमति नेन्द्रं तर्पयति । तद्विलक्षणस्तु वर्जयत्येव ॥

---

1. क्ष१–तथा ।

मो षू णं इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥ १२ ॥

मो इति । सु । नः । इन्द्र । अत्र । पृत्ऽसु । देवैः । अस्ति । हि । स्म । ते । शुष्मिन् । अवऽयाः ।
महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः ॥ १२ ॥

हे ᵛइन्द्र ᵛअत्र ᵛपृत्सु एषु उपस्थितेषु संग्रामेषु वृष्ट्यर्थं मेघजयेषु ᵛदेवैः मरुदादिभिः सह ᵛनः अस्मान् ᵛमो ᵛषु मैव स्याक्षीरिति शेषः । मरुत्सहितो युध्यस्वेत्यर्थः । हे ᵛशुष्मिन् बलवन्निन्द्र ᵛअस्ति ᵛहि ᵛस्म ᵛते अस्ति हि स्म तव खलु । तव किमस्तीति उच्यते । ᵛअवयाः अवयजनम् अवयुज्य पृथक्कृत्य यजनं हविर्भागोऽस्ति । मरुद्भ्यः पृथगप्यस्ति हविर्भागः । केवलं मरुद्भ्य एव दीयते नास्मभ्यम् अतः कथं योत्स्यामीति न मन्तव्यमित्यर्थः । यद्वा । अवयाः शत्रूणां वर्जनाय गन्ता वज्रोऽस्ति ते । किंच ᵛहविष्मतः प्रदेयहविर्युक्तस्य ᵛमीळ्हुषः हविष्प्रदातुः । यद्वा । एतत्पदद्वयं मरुतां विशेषणम् । ᵛयस्य मम ᵛयव्या फलेनेन्द्रेण वा सह मिश्रयन्ती ᵛगीः स्तुतिशस्त्रादिरूपा वाक् ᵛमहश्चित् महतोऽपि मीळ्हुषः सेक्तॄन्[1] हविष्मतो दत्तहविषा तद्वतः ᵛमरुतो ᵛवन्दते स्तौति ॥

अथ त्रयोदश्या सूक्तादिमारभ्य कृतां स्तुतिं निगमय्य फलं प्रार्थयते ॥

एष स्तोम इन्द्र तुभ्यमस्मे एतेन गातुं हरिवो विदो नः ।
आ नो ववृत्याः सुवितायं देव विद्यामेषं वृजनं जीरदानुम् ॥ १३ ॥

एषः । स्तोमः । इन्द्र । तुभ्यम् । अस्मे इति । एतेन । गातुम् । हरिऽवः । विदः । नः ।
आ । नः । ववृत्याः । सुवितायं । देव । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १३ ॥

हे ᵛइन्द्र ᵛएष ᵛस्तोमः इदानींकारितप्रकारः स्तोत्रविशेषः ᵛतुभ्यं त्वदर्थम् । हे ᵛहरिवः हरिभ्यां तद्वन्निन्द्र ᵛएतेन स्तोत्रेण[2] गमनेन वा ᵛनः अस्मदीयं ᵛगातुं देवयजनमार्गं ᵛविदः विदस्व । विदित्वा च हे ᵛदेव ᵛसुविताय सुहिताय शोभनगमनाय वा ᵛनः अस्मान् ᵛआ ᵛववृत्याः आवर्तस्व अस्मद्यागं प्रत्यागच्छ । विद्याम इत्यादि व्याख्यातम् ॥ ॥ १५ ॥

' त्वं राजा ' इति दशर्चं दशमं सूक्तमागस्त्यमैन्द्रं त्रैष्टुभम् । ' त्वं राजा दश ' इत्यनुक्रान्तम् । पृष्ठ्ये षळहे स्तोमवृद्धौ स्तोमातिशंसनार्थं होत्रकैरेतच्छस्तव्यम् । ' ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन् ' ( आश्व. श्रौ. ७. १२ ) इति सूत्रम् ॥

---

१. ख-च-फ—कामान् सेक्तॄन् । २. ख-च-फ—स्तोमेन स्तोत्रेण ।

त्वं राजेन्द्र ये च देवा रक्षा नॄन्पाह्यसुर त्वमस्मान् ।
त्वं सत्पतिर्मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहोदाः ॥ १ ॥

त्वम् । राजा । इन्द्र । ये । च । देवाः । रक्ष । नॄन् । पाहि । असुर । त्वम् । अस्मान् ।
त्वम् । सत्ऽपतिः । मघऽवा । नः । तरुत्रः । त्वम् । सत्यः । वसवानः । सहःऽदाः ॥ १ ॥

हे इन्द्र त्वं राजा अधिपतिः सर्वस्य जगतः । किंच ये देवाः मरुदादयः सन्ति तेषामपि विशेषेण । अतो हे असुर शत्रूणां निरसितः त्वं नॄन् अस्मान् कर्मनेतॄन् यजमानान् रक्ष पालय[1] । विशेषतोऽस्मानपि रक्ष । त्वं च सत्पतिः सतां सतः कर्मफलस्य वा पाता मघवा धनवान् नः अस्माकं तरुत्रः तारयिता पापात् किंच त्वं सत्यः अबाध्यः सत्यफलो वा वसवानः स्वतेजसा सर्वं छादयन् वसूनि वा कुर्वन् स्तोतृभ्यः सहोदाः सहसो बलस्य दाता भवेति शेषः ॥

दनो विश इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त् ।
ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥ २ ॥

दनः । विशः । इन्द्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् ।
ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रम् । पुरुऽकुत्साय । रन्धीः ॥ २ ॥

हे इन्द्र त्वं वृत्रसंबन्ध्यसुराणां पुरभेदनसमये मृध्रवाचः मर्षणवचनाः विशः तदीयाः प्रजाः शर्म सुखं यथा भवति तथा दनः अदमयः ॥ दमेरिदं रूपम् । यद्वा । वर्णव्यत्ययः ॥ नदः । अनदः अशब्दयः असुरप्रजाः । अतिभयंकरशब्दमकरोः । कदेति आह । यत् यदा शारदीः प्रत्यग्राः । यद्वा । एतत्संवत्सरलक्षकः[2] । संवत्सरपर्यन्तं दृढीकृता अपि । सप्त पुरः एतत्संख्याकाः पुरीः दर्त् अदारयः ॥ पुरुषव्यत्ययः । दृणातेर्लङि छान्दसो विकरणस्य लुक् । 'रात्सस्य' ( पा. सू. ८. २. २४ ) इति नियमात् तलोपाभावः ॥ तथा कृत्वा हे[3] अनवद्य कातरत्वानिन्दावन् हे इन्द्र[3] अर्णाः अरणशीलाः अपः तदीयदुर्गस्थानानि उदकाश्रयाणि तटाकादीन् ऋणोः । अगमयः प्रावर्तयः । भग्नान्यकरोः । एवमुपद्रुत्य पुरुकुत्साय एतन्नाम्ने राज्ञे यूने नित्यतरुणाय तदर्थं वृत्रम् एतन्नामकमसुरं रन्धीः असाधयः अहनः । अयमैतिहासिकपक्षः । निरुक्तरूढ्या तु हे इन्द्र मृध्रवाचो विशो मर्षणध्वनियुक्ता वृष्टिरूपाः प्रजा दनः अदमयः । अशब्दयो वा । अवर्षय इत्यर्थः । कदा । यद्यदा सप्त पुरः शारदीर्दर्त् सर्पणस्वभावान् प्रत्यग्रान् वृष्ट्या जगत्पूरकान् मेघानदारयः तदेत्यर्थः । तथा कृत्वा हे अनवद्य अर्णा अरणस्वभावा अपः ऋणोः अगमयः प्रावर्तयः कुल्यादिरूपेण । अनन्तरं यूने पुरुकुत्साय वृत्रं मुख्यं मेघं रन्धीः असाधयः अहनः । अयमर्थः 'त्वं ह त्यदिन्द्र सप्त युध्यन्' ( ऋ. सं. १. ६३. ७ ) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । यास्कस्त्वेवं व्याख्यात्[4]– 'दनो दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु' ( निरु. ६. ३१ ) इति ॥

---

१. झ१– पालय । अथवा नॄन् रक्ष । २. क-ख–एतत्संवत्सरपर्यन्तम्; ज–एतत्संवत्सरलक्षणकः । ३. ञ–हे अनवद्य कातरत्वानिन्दान; झ–हे अवनद्य कातरतयत्वानिदते । ४. फ–व्याख्यत् ।

अजा॒ वृत॑ इन्द्र॒ शूर॑पत्नी॒र्द्यां च॒ येभि॑: पुरुहूत नू॒नम् ।
रक्षो॑ अ॒ग्निम॒शुषं॒ तूर्व॑याणं सिं॒हो न दमे॒ अपां॑सि॒ वस्तो॑: ॥ ३ ॥

अज॑ । वृत॑: । इन्द्र॒ । शूर॑ऽपत्नीः । द्याम् । च॒ । येभि॑: । पु॒रु॒ऽहू॒त॒ । नू॒नम् ।
रक्षो॒ इति॑ । अ॒ग्निम् । अ॒शुष॑म् । तूर्व॑याणम् । सिं॒हः । न । दमे॑ । अपां॑सि । वस्तो॑: ॥ ३ ॥

हे इन्द्र शूरपत्नीः शूरैः रक्षोभिः पालिताः वृतः । वर्तन्ते आस्विति वृतोऽसुरपुरीः । यद्वा । शूरा यजमानाः । तैः पालिताः वृतो वेदिभूमीः । अज गच्छ जेतुम् । तथा कृत्वा द्यां च नूनम् अवश्यम् अज । किं त्वमेक एव न । हे पुरुहूत बहुभिर्बहुधा वा आहूतेन्द्र येभिः मरुदादिभिरनुगतोऽसि तैः सहितः सन् । तथा कृत्वा अशुषम् आशोषयितारमशान्तं वा तूर्वयाणं तूर्णगमनम् अग्निं वैद्युतं होमाधारं वा अग्निं रक्षो रक्षस्वैव । किमर्थं रक्षणमिति उच्यते । दमे गृहे अपांसि कर्माणि कुर्वन् वस्तोः वस्तुम् । यद्वा । वासयितुं स्थापयितुम् । कारयितुमित्यर्थः । यज्ञछिद्रसु हतेष्वग्नौ सुस्थिरे सति यागाद्यनुष्ठानपरः स्थास्यामीत्यर्थः । रक्षणे दृष्टान्तः । सिंहः इव । स यथा स्वाश्रयभूतं वनं गजाद्युपद्रवपरिहारेण रक्षति तद्वत् । असुरपुरभङ्गगमने वा दृष्टान्तः । सिंहो यथा निर्भयो विरोधिमृगान् हन्तुं धावति तद्वत् ॥

शेष॒न्नु त इ॑न्द्र॒ सस्मि॒न्योनौ॒ प्रश॑स्तये प॒वीर॑वस्य म॒ह्ना ।
सृ॒जदर्णां॒स्यव॒ यद्यु॒धा गास्तिष्ठ॒द्धरी॑ धृष॒ता मृ॒ष्ट वाजा॑न् ॥ ४ ॥

शेष॑न् । नु । ते । इन्द्र॒ । सस्मि॑न् । योनौ॑ । प्रऽश॑स्तये । प॒वीर॑वस्य । म॒ह्ना ।
सृ॒जत् । अर्णां॑सि । अव॑ । यत् । यु॒धा । गाः । तिष्ठ॑त् । हरी॒ इति॑ । धृ॒ष॒ता । मृ॒ष्ट । वाजा॑न् ॥ ४ ॥

हे इन्द्र ते शत्रवः सस्मिन् सर्वस्मिन् समाने वा योनौ स्वकीये स्थाने अन्तरिक्षे वा । योनिरन्तरिक्षम् । नु क्षिप्रं शेषन् शेरताम् ॥ शीङो लेटि अडागमः । व्यत्ययेन परस्मैपदम् । ‘ सिब्बहुलम्° ’ इति सिप् ॥ किमर्थम् । प्रशस्तये प्रशंसनाय त्वत्स्तुतये । त्वन्महिमज्ञापनाय[1] इत्यर्थः । किं[2] सेवनादिसाधनेनेत्याह[2] । पवीरवस्य कुलिशस्य कुलिशशब्दस्य वा मह्ना महिम्ना । त्वद्वज्रप्रहारेण हता मेघाः शत्रवो वा तत्रैव शेरते निपातेन[3] पलायन्ते[3] इत्यर्थः । किंच यत् यदा युधा प्रहरणसाधनेनायुधेन युद्धेन वा गाः गच्छसि तदा अर्णांसि उदकानि अव सृजत् अवासृजः । अवाङ्मुखम् अपातयः ॥ पुरुषव्यत्ययः ॥ तदर्थं हरी अश्वौ तिष्ठत् अध्यतिष्ठः ॥ अत्रापि पुरुषव्यत्ययः ॥ यद्वा । यदा हरी अधितिष्ठसि तदावासृजः । अथैवं कृत्वा वाजान् अन्नानि सस्यादिलक्षणानि धृषता धर्षकेण सामर्थ्येन मृष्ट शोधय प्रवर्धयेत्यर्थः ॥

---

१. झ–त्वन्महिमाख्यापनाय । २. झ–किं सेनादिसाधनो नेत्याह; झ१–किंच यद् यदा युध्यसे वादिसाधनेनेत्याह । ३. झ१–अनुपालयन्त ।

**वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा ।**
**प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधो यासिषद्वज्रबाहुः ॥ ५ ॥**

वह । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । स्यूमन्यू इति । ऋज्रा । वातस्य । अश्वा ।
प्र । सूरः । चक्रम् । वृहतात् । अभीके । अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥ ५ ॥

हे इन्द्र कुत्सम् एतन्नामानमृषिं प्राप्तं स्यूमन्यू । 'स्यूमकम्' (नि. ३. ६. ५) इति सुखनाम । तदिच्छन्तौ सततगामिनौ वा ऋज्रा ऋजुगामिनौ वातस्य वायोः समानवेगौ अश्वा त्वदीयावश्वौ वह प्रस्थापय । यस्मिन् हविषि निमित्तभूते सति कुत्सं चाकन् कामयसे तर्पयसे वा हविरादिकम्। तदर्थं सूरः प्रेरकः सूर्यः चक्रं स्वमण्डलं स्वरथचक्रं वा अभीके आसन्ने देशे वृहतात् ऊर्ध्वं गमयतु प्रकाशयतु । अथ परोक्षेणाह । वज्रबाहुः अयमिन्द्रः स्पृधः संग्रामं कुर्वतः शत्रून् अभि यासिषत् अभियातु ॥ ॥ १६ ॥

**जघन्वाँ इन्द्र मित्रेरूञ्चोदप्रवृद्धो हरिवो अदाशून् ।**
**प्र ये पश्यन्नर्यमणं सचायोस्त्वया शूर्ता वहमाना अपत्यम् ॥ ६ ॥**

जघन्वान् । इन्द्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् ।
प्र । ये । पश्यन् । अर्यमणम् । सचा । आयोः । त्वया । शूर्ताः । वहमानाः । अपत्यम् ॥ ६ ॥

हे इन्द्र हरिवः हरिभ्यां तद्वन् त्वं चोदप्रवृद्धः चोदनैः स्तोत्रैः प्रवृद्धः सन् अदाशून् अदातॄन् मित्रेरून् मित्राणां यजमानानाम् ईरयितॄन् बाधकान् तद्वैरिणां मित्रत्वं गच्छतो वा जघन्वान् हतवानसि। किंच ये अर्यमणं दातारं त्वां प्र पश्यन् पश्यन्ति ते नराः आयोः मनुष्यस्याध्वर्य्वादेः हविर्लक्षणान्नस्य वा सचा सह शूर्ताः क्षिप्रा हविष्प्रदानेन[1] त्वया अपत्यं कुलस्यापातयितारं पुत्रं वहमानाः ये सन्ति ते प्र पश्यन् । यद्वा । ये अर्यमणं त्वां पश्यन्ति ते एवं भवन्ति । यद्वा । ये नरा अर्यमणं यं कंचिद्दातारं पश्यन् पश्यन्तस्त्वामयजन्त आयोर्मनुष्यस्य सचा सहायभूतास्त्वया शूर्ताः क्षिप्ता वर्जिता अपत्यं पुत्रं वहमाना ये सन्ति तान् जघन्वान् भवेत्यर्थः ॥

**रपत्कविरिन्द्रार्कसातौ क्षां दासायोपबर्हणीं कः ।**
**करत्तिस्रो मघवा दानुचित्रा नि दुर्योणे कुयवाचं मृधि श्रेत् ॥ ७ ॥**

रपत् । कविः । इन्द्र । अर्कऽसातौ । क्षाम् । दासाय । उपऽबर्हणीम् । करिति कः ।
करत् । तिस्रः । मघऽवा । दानुऽचित्राः । नि । दुर्योणे । कुयवाचम् । मृधि । श्रेत् ॥ ७ ॥

---

१. ञ-झ-झ१–हविःप्रदाने ।

हे इन्द्र त्वां कविः क्रान्तदर्शी अनूचानो वा होता अर्कसातौ अर्चनीयस्यान्नस्य लाभे निमित्तभूते सति रपत् स्तौति । यद्वा । एतन्नामर्षी रपत् अस्तौत् अन्नार्थम् । तस्यातिप्रभूतमन्नं प्रादाः इत्यर्थः । तथा च दासाय प्राण्युपक्षपयित्रेऽसुराय क्षां भूमिम् उपबर्हणीं शय्यां कः अकरोः । हत्वा भूमावपातय इत्यर्थः ॥ करोतेर्लुङि ' मन्त्रे घस० ' इति च्लेर्लुक् ॥ अथ परोक्षकृतः । मघवा धनवान् अयमिन्द्रः तिस्रः भूमीः । दार्शिकपाशुकसौमिकरूपा भूमीः क्षित्यन्तरिक्षद्युरूपा वा भूमीः दानुचित्राः दानेन देयैर्धनैर्वा चायनीयाः करत् करोति । यद्वा । तिस्रः अयोरजतहिरण्यमयाः पुरीर्दानुचित्राः खण्डनेन चित्रा अकरोत् । तथा दुर्योणे दुष्टयोनौ स्थाने एतन्नामकस्य राज्ञः प्रीत्यर्थं वा कुयवाचं कुत्सितं शब्दायन्तमेतन्नामानमसुरं मृधि संग्रामे नि श्नेत् हिंसितवान् ॥

सना ता त इन्द्र नव्या आगुः सहो नभोऽविरणाय पूर्वीः ।
भिनत्पुरो न भिदो अदेवीर्ननमो वधरदेवस्य पीयोः ॥ ८ ॥

सना । ता । ते । इन्द्र । नव्याः । आ । अगुः । सहः । नभः । अविऽरणाय । पूर्वीः ।
भिनत् । पुरः । न । भिदः । अदेवीः । ननमः । वधः । अदेवस्य । पीयोः ॥ ८ ॥

हे इन्द्र ते तव संबन्धीनि सना सदातनानि नित्यानि तानि शौर्याणि नव्याः नवतराः इदानींतना ऋषयः आगुः आगच्छन्ति स्तुतिव्याजेन प्राप्नुवन्तीत्यर्थः । कानि तानीति उच्यते । पूर्वीः बह्वीः नभः हिंसाः ॥ नभेर्हिंसार्थात् क्विप् । तदन्तस्येदं रूपम् ॥ ता हिंसाः अविरणाय अविगतरणाय संग्रामनाशनाय सहः अभ्यभवः । तदर्थं भिदः भेत्तृर्घातिकाः अदेवीः आसुरीः पुरो न पुरीरपि भिनत् विदारितवानसि ॥ पुरुषव्यत्ययः । नशब्दश्चार्थे ॥ तथा अदेवस्य अस्तुत्यस्य पीयोः हिंसकस्यासुरस्य वधः वज्रं ननमः अनमयः अनुकूलमकरोः ॥ यद्वा । हे इन्द्र सना नित्यं तत्तत्काले ते तव संबन्धिन्यः ता तानि ॥ लिङ्गव्यत्ययः ॥ ताः पूर्वीः पुरातन्य आपो नव्या नूतनाः स्तुत्याः सत्यः आगुः आगच्छन्ति । किमर्थम् । अविरणाय अविरमणाय प्राणिनामविनाशाय । तदर्थं नभो हिंसकान् बन्धकान् वा मेघान् सहः मर्षणमकरोः । किंच अदेवीः पुरः अवर्षणेनादेवनशीलानुदकपुटबन्धान् भिनत् भिन्नानकरोः । तथा अदेवस्य अदेवनशीलस्य पीयोः प्रतिकूलस्य वृत्रस्य वधर्वज्रं ननमः अनमयः ॥

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः ।
प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥ ९ ॥

त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवन्तीः ।
प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय । तुर्वशम् । यदुम् । स्वस्ति ॥ ९ ॥

हे इन्द्र त्वं धुनिः कम्पयिता शत्रूणामसि । अतः धुनिमतीः कम्पनोपेततरङ्गवतीः । अथवा । धुनिर्नाम जलप्रतिरोधकारी असुरः । स एव प्रतिबन्धकतया यासां तादृशीः । अपः ऋणोः अगमयः भूमावपातयः । तत्र दृष्टान्तः । स्रवन्तीः प्रवहन्तीः सीरा न । नदीनामैतत् । सरणवतीर्नदीरिव ।

तद्वत्संतता इत्यर्थः। एवं कृत्वा हे ᵛशूर ᵛयत् यदा ᵛसमुद्रम् ᵛअति ᵛपर्षि अतिक्रम्य पूरयस्युदकं तदानीं ᵛतुर्वशं ᵛयदुम् उभावपि राजर्षी ᵛस्वस्ति अविनाशं ᵛपारय अपालयः संपूर्णजलवर्षणेन। तथा च मन्त्रान्तरं–' त्वमपो यदवे तुर्वशायारमयः ' ( ऋ. सं. ५. ३१. ८ ) इति ॥

त्वमस्माकमिन्द्र विश्वधं स्या अवृकतमो नरां नृपाता ।
स नो विश्वासां स्पृधां सहोदा विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥

त्वम्। अस्माकम्। इन्द्र। विश्वधं। स्याः। अवृकऽतमः। नराम्। नृऽपाता।
सः। नः। विश्वासाम्। स्पृधाम्। सहःऽदाः। विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥१०॥

हे ᵛइन्द्र ᵛत्वमस्माकं ᵛविश्वध विश्वस्मिन्नपि काले विश्वप्रकारैर्वा ᵛअवृकतमः। यद्वा। दातृतम इत्यर्थः। ᵛस्याः भव। तथा ᵛनरां ᵛनृपाता अस्मदीयानां पुत्रभृत्यादिरूपाणां बहूनां मनुष्याणां सर्वदा रक्षको भव। अपरो नृशब्दोऽनुवादः। किंच ᵛसः त्वं ᵛविश्वासां ᵛस्पृधां सर्वासां स्पर्धानिमित्तानाम् अस्मत्सेनानां ᵛसहोदाः तासामर्थाय बलस्य दाता भव। विद्यामेति गतम् ॥ ॥ १७ ॥

' मत्स्यपायि ' इति षडृचमेकादशं सूक्तमागस्त्यमैन्द्रम्। आद्या स्कन्धोग्रीवी बृहती द्वितीयपादस्य द्वादशाक्षरत्वादितरेषां त्रयाणामष्टाक्षरत्वाच्च। ' द्वितीयश्चेच्चङ्कुसारिण्युरोबृहती वा स्कन्धोग्रीवी वा ' ( अनु. ७.३ ) इत्युक्तलक्षणसद्भावात्। अन्त्या त्रिष्टुप्। शिष्टास्त्रिष्टुबन्तपरिभाषायाः ' आनुष्टुभं तु ' इति विशेषवचनेनापोदितत्वादनुष्टुभः। ' मत्सि षळानुष्टुभं तु त्रिष्टुबन्तं त्वाद्या स्कन्धोग्रीवी ' इत्यनुक्रान्तम्। द्वितीये स्वरसाम्नि आद्यस्तृचः स्तोत्रियः। ' अभिजिद्बृहत्पृष्ठः ' इति खण्डे सूत्रितं–' मत्स्यपायि ते मह एमेनं प्रत्येतन ' ( आश्व. श्रौ. ८. ५ ) इति ॥

मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥ १ ॥

मत्सि। अपायि। ते। महः। पात्रस्यऽइव। हरिऽवः। मत्सरः। मदः।
वृषा। ते। वृष्णे। इन्दुः। वाजी। सहस्रऽसातमः ॥ १ ॥

हे ᵛहरिवः हरिभ्यां तद्वन्निन्द्र ᵛमहः महान् पूज्योऽयं सोमः ᵛपात्रस्येव तत्पात्रेणेव सोमपात्रेण यथा धार्यते सोमस्तत्सदृशेन ᵛते त्वया। तृतीयार्थे षष्ठी। यद्वा। पात्रस्येव ते तव स्वभूतो महो महान् सोम इति वा योजना। ᵛअपायि पीयते॥ आशंसायां विवक्षितत्वाद्भूतवत्प्रयोगः ॥ यतः पिबसि अतः ᵛमत्सि माद्यसि मादयस्व वा। पात्रे यथा सोमः पूर्यते तथा अत्यधिकं पिब पीत्वा च मादयस्वेत्यर्थः। किंच ᵛवृष्णे ᵛते अभिमतवर्षित्रे तुभ्यम्। चतुर्थ्यर्थे षष्ठी। ᵛमत्सरः मदसाधनः ᵛमदः तर्पयिता ᵛवृषा वर्षिता ᵛइन्दुः क्लेदयिता आह्लादकारीत्यर्थः। ᵛवाजी अन्नवान्। अन्नवा(का)र्यतृप्ति-[1] सद्भावादन्नवानित्युच्यते। ᵛसहस्रसातमः अपरिमितदातृतमः सहस्रपुरुषसंभजनपर्याप्तशक्त्यतिशयो वा एवंमहानुभावः सोमः संपादितः। तं पिबेत्यर्थः ॥

१. ख–अन्नकार्य°।

आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः ।
सहावाँ इन्द्र सानसिः पृतनाषाळमर्त्यः ॥ २ ॥

आ । नः । ते । गन्तु । मत्सरः । वृषा । मदः । वरेण्यः ।
सहऽवान् । इन्द्र । सानसिः । पृतनाषाट् । अमर्त्यः ॥ २ ॥

हे ᵛइन्द्र ᵛते त्वां ᵛनः अस्मदीयः ᵛमत्सरः मर्षणसाधनः सोमः ᵛआ ᵛगन्तु आगच्छतु । कीदृशोऽयम् । ᵛवृषा वर्षकः ᵛमदः तर्पयिता ᵛवरेण्यः वरणीयः ᵛसहावान् सहायवान् सहसा बलेन तद्वान् वा ᵛसानसिः संभजनीयः ᵛपृतनाषाट् शत्रुसेनायाः अभिभविता ᵛअमर्त्यः अविनाशी । ईदृशः सोमस्त्वामागच्छतु । यद्वा । उत्तरार्धं इन्द्रपरतया व्याख्येयः । हे इन्द्र सहावान् अस्मद्दत्तसोमसहायवान् बलवान् वा सानसिरस्माभिः संभजनीयः पृतनाषाडमर्त्यश्च भवसि ॥

त्वं हि शूरः सनिता चोदयो मनुषो रथम् ।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ ३ ॥

त्वम् । हि । शूरः । सनिता । चोदयः । मनुषः । रथम् ।
सहऽवान् । दस्युम् । अव्रतम् । ओषः । पात्रम् । न । शोचिषा ॥ ३ ॥

हे इन्द्र ᵛत्वं खलु ᵛशूरः शौर्योपेतः ᵛसनिता दातासि । अतः ᵛमनुषः मनुष्यस्य मे ᵛरथं रंहणं स्पन्दनं मनोरथं वा स्वर्गगमनसाधनं यज्ञाख्यं रथं वा ᵛचोदयः प्रेरय । किंच त्वं ᵛसहावान् सोमसहायवान् बलवान् वा भूत्वा ᵛदस्युम् उपक्षपयितारम् ᵛअव्रतम् अकर्माणमननुष्ठायिनम् ᵛओषः दह । किमिव ᵛशोचिषा दीप्त्या ज्वालया अग्निः ᵛपात्रं ᵛन स्वाधारं पात्रविशेषमिव । यागाधिकारी सन् यो न यजते तं दहेत्यर्थः ॥

मुषाय सूर्यं कवे चक्रमीशान ओजसा । वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥४॥

मुषाय । सूर्यम् । कवे । चक्रम् । ईशानः । ओजसा ।
वह । शुष्णाय । वधम् । कुत्सम् । वातस्य । अश्वैः ॥ ४ ॥

हे ᵛकवे क्रान्तदर्शिन्निन्द्र ᵛईशानः समर्थः सन् ᵛसूर्यं सूर्यस्य ॥ 'सुपां सुपो भवन्ति' इति षष्ठ्येकवचनस्य द्वितीयैकवचनादेशः ॥ तत्संबन्धि ᵛचक्रम् एकम् ᵛओजसा बलेन सामर्थ्यातिशयेन ᵛमुषाय अमुष्णाः ॥ 'छन्दसि शायजपि०' इति शायजादेशः ॥ पूर्वं सूर्यरथस्य चक्रद्वयमस्ति एकमिन्द्रो मुमुष इतीतिहासः । तथा च मन्त्रान्तरं—'प्रान्यच्चक्रमवृहः सूर्यस्य

कुत्सायान्यत् ' ( ऋ. सं. ५. २९. १० ) इति । किंच ᵛशुष्णाय एतन्नामकायासुराय तद्वधार्थम् । द्वितीयार्थे वा चतुर्थी । शुष्णं हन्तुमित्यर्थः । ᵛकुत्सं कर्तनसाधनं ᵛवधं वज्रं ᵛवातस्य वायोः ᵛअश्वैः वायुवेगैर्वाश्वैर्युक्तः सन् ᵛवह अवहः शुष्णं हन्तुं वज्रमधारयः । यद्वा । शुष्णवधाय वज्रमवहः । तं च हत्वा तदीयैर्वायुवेगैरश्वैस्तदुपलक्षितैस्तदीयैर्धनैः कुत्सं महर्षिमगमः शुष्णासुरधनं कुत्सायादा इत्यर्थः । तथा चान्यत्र ' त्वं कुत्सं शुष्णहत्येष्वाविथ ' ( ऋ. सं. १. ५१. ६ ), ' कुत्साय शुष्णमशुषम् ' ( ऋ. सं. ४. १६. १२ ) इत्यादीति ॥

शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥ ५ ॥
शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः ।
वृत्रऽघ्ना । वरिवःऽविदा । मंसीष्ठाः । अश्वऽसातमः ॥ ५ ॥

हे इन्द्र ᵛते तव ᵛमदः सोमपानजनितः ᵛशुष्मिन्तमः बलवत्तमः । ᵛउत अपि च ते ᵛक्रतुः कर्म व्यापारोऽस्मदर्थः ᵛद्युम्निन्तमः अतिशयेनान्नवान् यशोवान् वा ॥ उभयत्र ' अयस्मयादीनि च्छन्दसि ' इति भसंज्ञया बाधितत्वात् न लोपः ॥ हे इन्द्र ᵛअश्वसातमः अश्वोपलक्षितबहुधनदातस्त्वं ᵛवृत्रघ्ना वृत्रघातिनौ ᵛवरिवोविदा धनस्य परिचरणस्य वा वेदयितारौ लम्भयितारौ तव मदक्रतू ᵛमंसीष्ठाः अनुज्ञातवानसि । शत्रुघातिनौ धनदातारौ च स्यातामित्यनुग्रहमकरोरित्यर्थः ॥

यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥
यथा । पूर्वेभ्यः । जरितृऽभ्यः । इन्द्र । मयःऽइव । आपः । न । तृष्यते । बभूथ ।
ताम् । अनु । त्वा । निऽविदम् । जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

हे ᵛइन्द्र ᵛपूर्वेभ्यो ᵛजरितृभ्यः पुरातनेभ्यो गरितृभ्यः स्तोतृभ्यः ᵛमयइव ᵛबभूथ । मयः सुखम् । सुखस्वरूपमिवाभवः । तद्वत् स्तोतृभ्योऽस्मभ्यं सुखो भव । तत्र दृष्टान्तः । ᵛतृष्यते ᵛआपो ᵛन तृषार्तस्योदकानि यथा सुखकराणीति तद्वत् । तस्मात् ᵛतां ᵛनिविदं स्वत्प्रीतिकरीं प्रसिद्धां स्तुतिं ᵛत्वा तुभ्यम् ᵛअनु ᵛजोहवीमि पुनःपुनः करोमि । यद्वा । तां निविदमनु ॥ ' तृतीयार्थे ' ( पा. सू. १. ४. ८५ ) इत्यनोः कर्मप्रवचनीयत्वम् ॥ तया स्तुत्या त्वां जोहवीमि । पुनःपुनराह्वयामि । विद्याम इति व्याख्यातम् ॥ ॥ १८ ॥

' महिं नः ' इति षडृचं द्वादशं सूक्तमागस्त्यमैन्द्रमानुष्टुभम् । पूर्वत्र तुशब्दात् ' त्रिष्टुबन्तं तु ' इत्युक्तत्वात् अन्त्या त्रिष्टुप् । ' महिं नः ' इत्यनुक्रान्तम् । विशेषविनियोगो लैङ्गिकः ॥

मत्सि नो वस्यइष्टय इन्द्रमिन्दो वृषा विश ।

ऋघायमाण इन्वसि शत्रुमन्ति न विन्दसि ॥ १ ॥

मत्सि । नः । वस्यःऽइष्टये । इन्द्रम् । इन्दो इति । वृषा । आ । विश ।

ऋघायमाणः । इन्वसि । शत्रुम् । अन्ति । न । विन्दसि ॥ १ ॥

हे ᵛइन्दो क्लेदयितः सोम त्वं ᵛनो ᵛवस्यइष्टये वसीयसो धनस्य प्राप्तये उक्तलक्षणाय यागाय वा ᵛइन्द्रं ᵛमत्सि मादयस्व । तदर्थं त्वमेवेन्द्रं ᵛवृषा कामानां वर्षिता ᵛआ ᵛविश । अथ तथा पीतः सन् ᵛऋघायमाणः शत्रून् हिंसयन् ᵛइन्वसि व्याप्नोषि । अतः ᵛअन्ति अन्तिके ᵛशत्रुं ᵛन ᵛविन्दसि न लभसे । यतः शत्रवस्त्वत्सामर्थ्येन पलायिताः अतो न विन्दसि । यद्वा । उत्तरार्धं इन्द्रपरतया व्याख्येयः । हे इन्द्र त्वं तं सोमं पीत्वा ऋघायमाणः सन् इन्वसि । अन्तिके शत्रुं न विन्दसि ॥

तस्मिन्ना वेशया गिरो य एकश्चर्षणीनाम् ।

अनु स्वधा यमुप्यते यवं न चर्कृषद्वृषा ॥ २ ॥

तस्मिन् । आ । वेशय । गिरः । यः । एकः । चर्षणीनाम् ।

अनु । स्वधा । यम् । उप्यते । यवम् । न । चर्कृषत् । वृषा ॥ २ ॥

हे अन्तरात्मन् होतर्वा ᵛतस्मिन् प्रसिद्धे इन्द्रे ᵛगिरः स्तुतिरूपाः वाचः ᵛआ ᵛवेशय स्थापय तं स्तुहीत्यर्थः । ᵛय इन्द्रः ᵛचर्षणीनां ज्ञानवतां मनुष्याणाम् ᵛएकः एक एव स्थानीयः । ᵛयम् ᵛअनु यमेवेन्द्रमनु ᵛस्वधा हविर्लक्षणमन्नम् ᵛउप्यते दीयत इत्यर्थः । स चेन्द्रः ᵛवृषा वर्षकः सन् ᵛयवं ᵛन यवमिव पक्वं यवं यथा ᵛचर्कृषत् क्रमेण आददते कर्षकाः तद्वदादत्ते । यद्वा । अनु स्वधा अन्नसाधनं व्रीह्यादिकमुप्यते भूमौ । यस्येन्द्रस्य वृष्टिरूपमनुग्रहमपेक्ष्योप्यते इत्यर्थः । स च वृषा वृष्टेर्वर्षिता स इन्द्रो यवं न यवमिव सर्वबीजमपि चर्कृषत् पुनःपुनः करोति अङ्कुरयति । हविःसाधनत्वप्राशस्त्यमपेक्ष्य यवशब्दः प्रयुक्तः । एवंमहानुभावे इन्द्रे गिर आ वेशयेति ॥

यस्य विश्वानि हस्तयोः पञ्च क्षितीनां वसु ।

स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥ ३ ॥

यस्य । विश्वानि । हस्तयोः । पञ्च । क्षितीनाम् । वसु ।

स्पाशयस्व । यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥ ३ ॥

ᵛयस्य इन्द्रस्य ᵛहस्तयोः ᵛपञ्च ᵛक्षितीनाम् । क्षियन्ति निवसन्ति गच्छन्ति वा क्षितयो मनुष्याः । पञ्चानां मनुष्याणां प्रीणयितॄणि ᵛविश्वानि सर्वाणि ᵛवसु वसूनि धृतानि भवन्ति । देवा मनुष्याः पितरः पशवः पक्षिणश्चेति पञ्च जनाः । चत्वारो वर्णाः निषादपञ्चमाः पञ्च जना इत्यन्ये । स

तादृशेन्द्र त्वं ᵛस्पाशयस्व बाधस्व । ᵛयो ᵛअस्मध्रुक् अस्मभ्यं द्रुह्यति तम् । केन प्रकारेणेति स उच्यते । ᵛदिव्या दिवि भवा ᵛअशनिः ᵛइव अशनिर्भूत्वा अस्मद्द्वेष्टॄन् ᵛजहि ॥

**असुन्वन्तं समं जहि दूणाशं यो न ते मयः ।**

**अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥ ४ ॥**

असुन्वन्तम् । समम् । जहि । दुःऽनशम् । यः । न । ते । मयः ।

अस्मभ्यम् । अस्य । वेदनम् । दद्धि । सूरिः । चित् । ओहते ॥ ४ ॥

हे इन्द्र ᵛअसुन्वन्तं सोमाभिषवमकुर्वाणम् । त्वामयजन्तमित्यर्थः । ᵛदूणाशं दुःखेन नाशनीयं ᵛसमम् । अयं सर्वानुदात्तः सर्वशब्दपर्यायः । अयष्टॄन् सर्वान् । यद्वा । सममेकोद्योगेनाविशेषेण वा ᵛजहि । तेन किमपराद्धमिति अत आह । ᵛयः ᵛते तव ᵛमयः । मय इति सुखनाम । तव सुखहेतुः ᵛन भवति । यो होमेन स्तुत्या वा न प्रीणाति तं जहि । किंच ᵛअस्य ᵛवेदनं धनम् ᵛअस्मभ्यं ᵛदद्धि देहि ॥ 'दद दाने' इत्यस्मात् व्यत्ययेन परस्मैपदम् । छान्दसः शपो लुक् ॥ ᵛसूरिश्चिदोहते । चित् एवार्थे । सूरिस्तव स्तोता एव ओहते । वहति प्राप्नोति धनम् ॥

**आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत् ।**

**आजाविन्द्रस्येन्दो प्रावो वाजेषु वाजिनम् ॥ ५ ॥**

आवः । यस्य । द्विऽबर्हसः । अर्केषु । सानुषक् । असत् ।

आजौ । इन्द्रस्य । इन्दो इति । प्र । आवः । वाजेषु । वाजिनम् ॥ ५ ॥

हे ᵛइन्दो सोम तव ᵛयस्य ᵛद्विबर्हसः स्तोत्रहविरूपद्विविधपरिवृढकर्मवतो यजमानस्य ᵛअर्केषु मन्त्रेषु ᵛसानुषक् सानुषङ्गः सातत्यम् ᵛअसत् भवेत् तम् ᵛआवः । तं यजमानं रक्षसि तर्पयसि वा । यद्वा ॥ कर्मणि षष्ठी ॥ यं द्वयोः स्थानयोः परिवृढं यमिन्द्रं हे इन्दो यदार्केषु सानुषगसत् भवेः तदावः अरक्षः अतर्पयो वा । तस्यैव ᵛइन्द्रस्य ᵛआजौ संग्रामे हे सोम ᵛवाजिनं तथाऽन्नवन्तं तमिन्द्रं ᵛवाजेषु बलेष्वन्नेषु वा निमित्तभूतेषु ᵛप्रावः प्रकर्षेण अरक्षयः[1] । पानसमये तर्पयित्वा संग्रामसमये बलवर्धनेन जयप्राप्तशत्रुधनतर्पणेन वा अरक्षः इत्यर्थः ॥

**यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ ।**

**तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥**

यथा । पूर्वेभ्यः । जरितृऽभ्यः । इन्द्र । मयःऽइव । आपः । न । तृष्यते । बभूथ ।

ताम् । अनु । त्वा । निऽविदम् । जोहवीमि । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

---

१. क-ख-अरक्षः ।

'यथा पूर्वेभ्यः' इति षष्ठी व्याख्याता ॥ ॥ १९ ॥

'आ चर्षणिप्राः' इति पञ्चर्चं त्रयोदशं सूक्तमागस्त्यमैन्द्रं त्रैष्टुभम्। 'आ चर्षणिप्राः पञ्च' इत्यनुक्रमणिका। होत्रकशस्त्रेषु स्तोमवृद्धावस्य विशेषविनियोगः। 'ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन्' (आश्व. श्रौ. ७. १२) इति सूत्रितत्वात् ॥

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः ।
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥ १ ॥

आ । चर्षणिऽप्राः । वृषभः । जनानाम् । राजा । कृष्टीनाम् । पुरुऽहूतः । इन्द्रः ।
स्तुतः । श्रवस्यन् । अवसा । उप । मद्रिक् । युक्त्वा ।
हरी इति । वृषणा । आ । याहि । अर्वाङ् ॥ १ ॥

अयम् ᵛइन्द्रः ᵛचर्षणिप्राः। चर्षणयो मनुष्याः। तेषां धनादिना प्रीणयिता। ᵛजनानां सर्वेषां ᵛवृषभः कामानां वर्षिता। तथा ᵛकृष्टीनाम्। मनुष्यनामैतत्। मनुष्याणां ᵛराजा स्वामी ᵛपुरुहूतः बहुभिराहूतः। ईदृश इन्द्रोऽस्मानाजानातु आगच्छतु वा। उत्तरार्धः परोक्षवादः। हे इन्द्र ᵛस्तुतः अस्माभिः ᵛश्रवस्यन् हविर्लक्षणान्नमिच्छन् ᵛअवसा अस्मद्रक्षणेन तर्पणेन वा युक्तः सन् ᵛमद्रिक् मदभिमुखमञ्चन् ᵛवृषणा वर्षकौ युवानौ ᵛहरी अश्वौ ᵛयुक्त्वा रथे योजयित्वा ᵛअर्वाङ् अस्मदभिमुखम् ᵛआ ᵛयाहि आगच्छ ॥

ये ते वृषणो वृषभास इन्द्र ब्रह्मयुजो वृषरथासो अत्याः ।
ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इन्द्र सोमे ॥ २ ॥

ये । ते । वृषणः । वृषभासः । इन्द्र । ब्रह्मऽयुजः । वृषऽरथासः । अत्याः ।
तान् । आ । तिष्ठ । तेभिः । आ । याहि । अर्वाङ् । हवामहे । त्वा । सुते । इन्द्र । सोमे ॥ २ ॥

हे ᵛइन्द्र ᵛते तव संबन्धिनः ᵛवृषणः वर्षका युवानो वर्षणवन्तो वा ᵛवृषभासः श्रेष्ठाः ᵛब्रह्मयुजः परिवृढेन मन्त्रेण युज्यमानाः ᵛवृषरथासः वर्षणरथवन्तः। तत्र नियुक्ता इत्यर्थः। ईदृशाः ᵛअत्याः अश्वा ᵛये सन्ति ᵛतान् ᵛआ ᵛतिष्ठ आश्रय आरोह। ᵛतेभिः तैः ᵛअर्वाङ् अस्मदभिमुखम् ᵛआ ᵛयाहि आगच्छ। वयं च हे ᵛइन्द्र ᵛसोमे ᵛसुते सति ᵛत्वा त्वां ᵛहवामहे आह्वयामः ॥

आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि ।
युक्त्वा वृषभ्यां वृषभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक् ॥ ३ ॥

आ । तिष्ठ । रथम् । वृषणम् । वृषा । ते । सुतः । सोमः । परिऽसिक्ता । मधूनि ।
युक्त्वा । वृषऽभ्याम् । वृषभ । क्षितीनाम् । हरिऽभ्याम् । याहि । प्रऽवता । उप । मद्रिक् ॥ ३ ॥

हे इन्द्र त्वं ᵛरथम् ᵛआ ᵛतिष्ठ आश्रय यज्ञगमनार्थम्। कीदृशं रथम्। ᵛवृषणं वर्षकं कामानाम्। किमर्थमिति चेत्। उच्यते। ᵛते त्वदर्थं ᵛवृषा वर्षकः ᵛसोमः ᵛसुतः अभिषुतः। तथा ᵛमधूनि मधुराणि घृतक्षीरादीनि ᵛपरिषिक्ता परितः सिक्तानि संपादितानि। यद्वा। मधूनि मधुराः सोमरसाश्चमसेषु पूरिताः। आगमनप्रकार उच्यते। हे ᵛवृषभ वर्षकेन्द्र ᵛवृषभ्यां वर्षकाभ्यां ᵛहरिभ्यां ᵛयुक्त्वा रथं योजयित्वा ᵛक्षितीनां कर्मसु निवसतां यजमानानां अस्माकमनुग्रहाय। क्षितीनां वृषभेति वा योज्यम्। ᵛप्रवता वेगवता रथेन ᵛमद्रिक् मदभिमुखमञ्चन् मदाभिमुख्येन ᵛउप ᵛयाहि ॥

अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिन्द्र सोमः।
स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह ॥ ४ ॥

अयम्। यज्ञः। देवऽयाः। अयम्। मियेधः। इमा। ब्रह्माणि। अयम्। इन्द्र। सोमः।
स्तीर्णम्। बर्हिः। आ। तु। शक्र। प्र। याहि। पिब।
निऽसद्य। वि। मुच। हरी इति। इह ॥ ४ ॥

अहर्गणेषु मध्येष्वहःसु हारियोजनग्रहस्य याज्या। 'अग्निष्टोमोऽत्यग्निष्टोमः' इति खण्डे सूत्रितम्—'अयं यज्ञो देवया अयं मियेध इतीतरेषु' (आश्व. श्रौ. ६. ११) इति ॥ हे ᵛइन्द्र ᵛअयं ᵛयज्ञो ᵛदेवयाः देवान् गच्छन् भवति। तथा ᵛअयं यज्ञः ᵛमियेधः। मेधः पशुः। 'पशुर्वै मेधः' इति हि श्रुतिः। ᵛइमा इमानि ᵛब्रह्माणि मन्त्राः। ᵛअयं सुतः ᵛसोमः। ᵛस्तीर्णं ᵛबर्हिः आसनायास्तृता दर्भाः। एते पदार्थास्त्वदुचिता एवं[1] संपादिताः[1]। हे ᵛशक्र इन्द्र ᵛतु पुनः किमित्युच्यते ᵛआ ᵛप्र ᵛयाहि प्रकर्षेण शीघ्रमागच्छ। आगत्य च ᵛनिषद्य बर्हिष्युपविश्य ᵛपिब सोमम्। तदर्थम् ᵛइह अस्मिन् देवयजने ᵛहरी अश्वौ ᵛवि ᵛमुच वियोजय ॥ छान्दसो नुमभावः॥

ओ सुष्टुत इन्द्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः।
विद्याम वस्तोरवसा गृणन्तो विद्यामेषं वृजनं जीरदानुम् ॥ ५ ॥

ओ इति। सुऽस्तुतः। इन्द्र। याहि। अर्वाङ्। उप। ब्रह्माणि। मान्यस्य। कारोः।
विद्याम। वस्तोः। अवसा। गृणन्तः। विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ ५ ॥

हे ᵛइन्द्र ᵛसुष्टुतः अस्माभिः सम्यक्स्तुतः सन् ᵛअर्वाङ् अस्मदभिमुखम् आ ᵛयाहि आगच्छैव। मा विलम्बय। किमुद्दिश्य। ᵛमान्यस्य माननीयस्य ᵛकारोः स्तोतुर्होतुः कर्तुर्यजमानस्य वा ᵛब्रह्माणि मन्त्रान् ᵛउप उपलक्ष्य। ᵛगृणन्तः स्तुवन्तोऽभिमतं शब्दयन्तो वा वयम् ᵛअवसा त्वद्रक्षणेन रक्षिताः सन्तः ᵛवस्तोः वस्तुं सुखेन संस्थातुमहनि वा सर्वेष्वहःसु अन्नादिकं ᵛविद्याम लभेमहि। विद्याम इत्यादि व्याख्यातम् ॥ ॥ २० ॥

---

1. क-ख-फ—एव संपादिता।

'यद्ध स्या' इति पञ्चर्चं चतुर्दशं सूक्तमागस्त्यमैन्द्रं त्रैष्टुभम्। 'यद्ध स्या' इत्यनुक्रमणिका। विशेषविनियोगः पूर्ववत् ॥

**यद्ध स्या त इन्द्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती।**

**मा नः कामं महयन्तमा धग्विश्वा ते अश्यां पर्याप आयोः ॥ १ ॥**

यत्। ह। स्या। ते। इन्द्र। श्रुष्टिः। अस्ति। यया। बभूथ। जरितृऽभ्यः। ऊती।

मा। नः। कामम्। महयन्तम्। आ। धक्। विश्वाः। ते। अश्याम्। परि। आपः। आयोः ॥१॥

हे इन्द्र यत् या स्या असौ प्रसिद्धा श्रुष्टिः सर्वत्र श्रूयमाणा समृद्धिः ते तव अस्ति यया जरितृभ्यः स्तोतृभ्यः ऊती ऊत्यै रक्षणाय बभूथ समर्थो भवसि नः अस्माकं महयन्तम् अस्मान् महतः कुर्वाणं कामम् अभीष्टं मा धक् मा धाक्षीः। ते तव संबन्धीनि विश्वा सर्वाणि भोगजातानि आपः आप्तव्यानि। यद्वा। विश्वा सर्वा आपः आप्ताः श्रुतयः आयोः मनुष्यस्योचिताः परि अश्यां परितो व्याप्नुयाम् ॥

**न घा राजेन्द्र आ दभन्नो या नु स्वसारा कृणवन्त योनौ।**

**आपश्चिदस्मै सुतुका अवेषन्गमन्न इन्द्रः सख्या वयश्च ॥ २ ॥**

न। घ। राजा। इन्द्रः। आ। दभत्। नः। या। नु। स्वसारा। कृणवन्त। योनौ।

आपः। चित्। अस्मै। सुऽतुकाः। अवेषन्। गमत्। नः। इन्द्रः। सख्या। वयः। च ॥२॥

अयं राजा राजमान ईश्वरो वा इन्द्रः नः अस्मदीयानि कर्माणि न आ दभत् सर्वतो न हिंस्यात्। कानीति उच्यते। या यानि कर्माणि वृष्ट्यादिरूपाणि स्वसारा परस्परं स्वसृभूते स्वयंसरणभूते अहोरात्रे। नु पूरणः। योनौ स्वकीये स्थाने कृणवन्त ॥ द्विवचनस्थाने बहुवचनम् ॥ कुरुतः ॥ कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' इति उप्रत्ययः। बहुलग्रहणात् शप् ॥ तानीन्द्रोऽप्यनुजानात्वित्यर्थः। स्वसृभूतावध्वर्युयजमानौ वा कुरुतः। यद्वा। स्वसारोऽङ्गुल्यो योनौ फलोत्पादनस्थाने यज्ञे यानि कृतवन्तस्तानीति योज्यम्। किंच अस्मै इन्द्राय सुतुकाः शोभनबलहेतूनि आपः अप्कार्याणि हवींषि अवेषन् व्याप्नुवन्ति। नः अस्मभ्यम् इन्द्रः सख्या सख्यानि वयश्च प्रभूतमन्नं च गमत् गमयतु ॥

**जेता नृभिरिन्द्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः।**

**प्रभर्ता रथं दाशुष उपाक उद्यन्ता गिरो यदि च त्मना भूत् ॥ ३ ॥**

जेता। नृऽभिः। इन्द्रः। पृत्ऽसु। शूरः। श्रोता। हवम्। नाधमानस्य। कारोः।

प्रऽभर्ता। रथम्। दाशुषः। उपाके। उत्ऽयन्ता। गिरः। यदि। च। त्मना। भूत् ॥३॥

अयम् इन्द्रः शूरः विक्रान्तः सन् नृभिः संग्रामनेतृभिर्मरुद्भिः सहितः सन् पृत्सु संग्रामेषु जेता जयशीलः शत्रूणां तथा नाधमानस्य त्वदनुग्रहं याचमानस्य कारोः स्तोतुः हवम् आह्वानं श्रोता भवति । किंच यदि च यदा च स्मना आत्मना अनन्यप्रेरित एव गिरः स्तुतिरूपाणि वचांसि स्तोतॄन् वा उद्यन्ता उच्छ्रयिता भूत् भवेत् तदा दाशुषः हविर्दत्तवतो यजमानस्य उपाके । समीपनामैतत् । समीपे एव यागदेशे रथं प्रभर्ता सम्यक् प्रभरन् भवति ॥ जेतेत्यादिषु तृन्नन्तेषु ' न लोकाव्यय° ' इत्यादिना कर्मणि षष्ठीप्रतिषेधः ॥ यदा स्तुतिं श्रोतुमिच्छति तदा स्वयमेव शीघ्रं रथं धावयित्वा यागं प्राप्नोतीत्यर्थः ॥

. एवा नृभिरिन्द्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत् ।

समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः ॥ ४ ॥

एव । नृऽभिः । इन्द्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि । मित्रिणः । भूत् ।

सऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः । यजमानस्य । शंसः ॥ ४ ॥

अयम् इन्द्रः नृभिः कर्मनिर्वाहकैर्यजमानैर्दत्तं पृक्षः हविर्लक्षणमन्नं सुश्रवस्या शोभनान्नेच्छया अन्नेच्छुर्वा प्रखादः प्रकर्षेण खादिता[1] एव एवम् एवमेव पूर्वं यथा तथैव मित्रिणः सहायवतोऽपि यजमानस्य शत्रून् अभि भूत् अभिभवति । यद्वा । नृभिर्वृष्टिनेतृभिर्मरुद्भिः सहितोऽयमिन्द्रः सुश्रवस्या प्रखादः सन् एवमेव मित्रिण ऋत्विग्रूपमित्रवतो यजमानस्यार्थे तदभिमताय अभि भूत । अभीत्यनर्थकः । भवति । आभिमुख्येन वा भवति । तस्य हविः स्वीकृत्य तदभिमताय भवतीत्यर्थः । अथ तथाभूः[2] सन् विवाचि विविधपरस्पराह्वानध्वनियुक्ते समर्ये संग्रामे विविधस्तोत्रशस्त्रध्वनियुक्ते समर्ये मर्त्ययुक्ते यज्ञे वा तन्निमित्तं यजमानस्य शंसः शंसकः सन् सत्राकरः फलानां सत्यकारी अयमिन्द्रः इषः हविर्लक्षणमन्नं स्तवते स्तौति ॥

त्वया वयं मघवन्निन्द्र शत्रूनभि ष्याम महतो मन्यमानान् ।

त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुम् ॥ ५ ॥

त्वया । वयम् । मघऽवन् । इन्द्र । शत्रून् । अभि । स्याम । महतः । मन्यमानान् ।

त्वम् । त्राता । त्वम् । ऊँ इति । नः । वृधे । भूः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ५ ॥

हे मघवन् धनवन् इन्द्र त्वया सहायेन वयं यजमानाः महतो मन्यमानान् अतिबलानवध्यान् मन्यमानान् शत्रून् अभि स्याम अभिभवितारो भवेम । हे इन्द्र त्वं त्राता त्वमेवास्माकं रक्षकः । अतः त्वमु त्वमेव नः अस्माकं वृधे धनादिवर्धनाय भूः भव । विद्याम इत्यादि गतम् ॥ ॥ २१ ॥

---

1. क-ख-ज-ञ-त-फ-खादित्वा । २. क-ञ-ञ१-तथाभूतः ।

'पूर्वीरहम्' इति षडृचं पञ्चदशं सूक्तं त्रैष्टुभम्। उपान्त्या बृहती। अत्र त्रयाणां द्वृचानां लोपामुद्रागस्त्यतच्छिष्यैर्दृष्टत्वात्त एवर्षयः। सूक्तप्रतिपाद्योऽर्थो रतिर्देवता। अत्रानुक्रमणिका–'पूर्वीः षड्जायापत्योर्लोपामुद्राया अगस्त्यस्य च द्वृचाभ्यां रत्यर्थं संवादं श्रुत्वान्तेवासी ब्रह्मचार्यन्त्ये बृहत्यादी अपश्यत्' इति। विशेषविनियोगो लैङ्गिकः ॥

लोपामुद्रा आह—

पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः ।
मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥ १ ॥

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयन्तीः ।

मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि । ऊँ इति । नु । पत्नीः । वृषणः । जगम्युः ॥१॥

हे अगस्त्य अहं लोपामुद्रा पूर्वीः शरदः पुरातनानसंख्यातान् संवत्सरान् दोषाः रात्रीः वस्तोः अहानि तथा देहं जरयन्तीः उषसः उषःकालांश्च ॥ सर्वत्र अत्यन्तकालसंयोगे[1] द्वितीया ॥ अद्यतनकालपर्यन्तं बहुसंवत्सरं कार्त्स्न्येन त्वच्छुश्रूषया शश्रमाणा श्रान्ताभूवम्। इदानीं तु जरिमा जरा तनूनाम् अङ्गानां श्रियं सौन्दर्यं मिनाति हिनस्ति। एवमपि नानुगृह्णासीत्यर्थः। अप्यू नु। अपिः संभावनायाम्। उ इत्यवधारणे। नु इति वितर्के। इदानीमपि किं संभावनीयम्। लोके हि पत्नीः स्त्रियः वृषणः सेक्तारः पुरुषाः जगम्युः गच्छेयुः संभोगं कुर्युः। अतो मां किमित्यवमन्यसे। इदानीमपि वा संभावयेत्यर्थः ॥

सा तमेव आह—

ये चिद्धि पूर्व ऋतसाप आसन्त्साकं देवेभिरवदन्नृतानि ।
ते चिदवासुर्नह्यन्तमापुः समू नु पत्नीर्वृषभिर्जगम्युः ॥ २ ॥

ये । चित् । हि । पूर्वे । ऋतऽसापः । आसन् । साकम् । देवेभिः । अवदन् । ऋतानि ।

ते । चित् । अव । असुः । नहि । अन्तम् । आपुः । सम् । ऊँ इति । नु । पत्नीः । वृषऽभिः । जगम्युः ॥२॥

हे पते अगस्त्य ये चिद्धि येऽपि तु पूर्वे पुरातनाः ऋतसापः सत्यस्य आपयितारो व्याप्नुवाना महर्षयः आसन् ते देवेभिः देवैः साकं सह ऋतानि सत्यवाक्यानि अवदन् वदन्ति। ये महत्तपो यज्ञं वा अनुतिष्ठन्ति ये च देववाक्यानि[2] देवस्मृतिरूपाणि[3] वदन्ति ते चित्। चिदप्यर्थे। ते चित् अवासुः अवक्षिपन्ति रेतः ॥ स्यतिरुपसृष्टो विमोचने वर्तते ॥ ते नह्यन्तमापुः नहि ब्रह्मचर्यादेरन्तं प्राप्नुवन्। ब्रह्मचर्यमनिषिद्धर्तुकालगमनमपि कुर्वन्तीत्यर्थः। तथा पत्नीः पत्न्यश्च तपस्यमानाः वृषभिः

---

१. क-झ–अत्यन्तसंयोगे। २. क-झ-झ१–वेदवाक्यानि। ३. क-ख-झ-झ१-फ–वेदस्मृतिरूपाणि।

भोगवर्षकैः पतिभिः सह ᵛसमू ᵛनु ᵛजगम्युः। उ नु इति पूरणौ। संगच्छेरन्। अतस्त्वं कथं मां नानुभवसीत्यर्थः ॥

अगस्त्यस्तामाह—

**न मृषा॑ श्रा॒न्तं यद॑वन्ति दे॒वा विश्वा॒ इत्स्पृधो॑ अ॒भ्य॑श्नवाव ।**
**जया॒वेदत्र॑ श॒तनी॑थमा॒जिं यत्स॒म्यञ्चा॑ मिथु॒नाव॒भ्यजा॑व ॥ ३ ॥**

न । मृषा॑ । श्रा॒न्तम् । यत् । अव॑न्ति । दे॒वाः । विश्वाः॑ । इत् । स्पृधः॑ । अ॒भि । अ॒श्नवा॒व ।
जया॑व । इत् । अत्र॑ । श॒तऽनी॑थम् । आ॒जिम् । यत् । स॒म्यञ्चा॑ । मि॒थु॒नौ । अ॒भि । अजा॑व ॥३॥

भोः पत्नि त्वया मया ᵛन ᵛमृषा ᵛश्रान्तम्। व्यर्थं नैव खिन्नमावाभ्याम्। ᵛयत् यस्मात् ᵛदेवाः ᵛअवन्ति रक्षन्ति तपोभिः प्रीता देवाः[1]। ᵛविश्वाः सर्वाः ᵛस्पृधः ᵛअभ्यश्नवाव[1] अभितो व्याप्नुयाव। ᵛअत्र अस्मिन् संसारे ᵛशतनीथम् अपरिमितभोगप्राप्तिसाधनम् ᵛआजिं प्राप्तिं परस्परं ᵛजयाव जयलक्षणं सुरतसंग्रामं वा जयाव। ᵛयत् यस्मात् ᵛसम्यञ्चा सम्यक् परस्परं गच्छन्तौ अजयन्तौ[2] वा मिथुना ᵛमिथुनौ स्त्रीपुरुषरूपौ सन्तौ ᵛअभ्यजाव त्वं चाहमपि परस्परमभिजयावेत्येवं तयोक्तं संभोगं संभावयामास ॥

अथ चतुर्थ्याप्यगस्त्य आह—

**न॒दस्य॑ मा रुध॒तः काम॒ आग॑न्नि॒त आजा॑तो अ॒मुतः॒ कुत॑श्चित् ।**
**लोपा॑मु॒द्रा वृष॑णं॒ नी रि॑णाति॒ धीर॒मधी॑रा धयति श्व॒सन्त॑म् ॥ ४ ॥**

न॒दस्य॑ । मा॒ । रु॒ध॒तः । काम॑ः । आ । अ॒ग॒न् । इ॒तः । आऽजा॑तः । अ॒मुत॑ः । कुत॑ः । चि॒त् ।
लोपा॑मुद्रा । वृष॑णम् । निः । रि॒णा॒ति॒ । धीर॑म् । अधी॑रा । ध॒य॒ति॒ । श्व॒सन्त॑म् ॥ ४ ॥

हे जाये ᵛनदस्य नदनस्य जपशब्दयितुर्जपाध्ययनकर्तुः ᵛरुधतः रेतोनिरोद्धुर्ब्रह्मचर्यमास्थितस्य ॥ उभे कर्मणि षष्ठ्यौ ॥ उक्तलक्षणं मां ᵛकामः ᵛआगन् आगमत्। 'नदनस्य मा रुधतः काम आगमत्' (निरु. ५.२) इति निरुक्तम्। कस्य हेतोरिति उच्यते। ᵛइतः त्वत्संगमनिमित्तात् तथा ᵛअमुतः वसन्तादिकालात् ᵛकुतश्चित् कारणात् ᵛआजातः सर्वतः उत्पन्नः। यद्वा। इत एतल्लोकजनितादमुतो लोकान्तरजनिताद्वा कुतश्चिन्निमित्तात् कामात्। कथमिति उच्यते। इयं ᵛलोपामुद्रा ᵛवृषणं रेतसः प्रवर्तकं मां ᵛनी ᵛरिणाति नितरां गच्छतु। किंच ᵛधीरं धीमन्तं नियमादविचालिनं ᵛश्वसन्तं महाप्राणं महाबलम् ᵛअधीरा कातरैषा योषित् ᵛधयति उपभुङ्क्ताम् ॥

---

१. ज्ञ१–देवाः अभिमतमायु(यु)रादिकं वितरन्ति । अतो वयं विश्वा इत् सर्वा अपि स्पृधः स्पर्धमान्या याजया अभ्यश्नवाव। २. ज–पूजयन्तौ।

अथानयोर्दम्पत्योः संभोगसंलापं श्रुत्वा तत्प्रायश्चित्तं चिकीर्षुरुत्तराभ्यामाह । अनयोर्विनियोगः शौनकेनोक्तः—' इमं नु सोममित्येते द्वे ऋचौ प्रयतो जपन् । सर्वान् कामानवाप्नोति पापेभ्यश्च प्रमुच्यते ' ( ऋग्वि. १. १४७ ) इति ॥

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे ।
यत्सीमागश्चकृमा तत्सु मृळतु पुलुकामो हि मर्त्यः ॥ ५ ॥

इमम् । नु । सोमम् । अन्तितः । हृत्ऽसु । पीतम् । उप । ब्रुवे ।
यत् । सीम् । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥ ५ ॥

......उपेत्य[1] मनसा प्राप्य प्रार्थयते[2] । किं ब्रवीति[3] उच्यते । ᵛयत् ᵛआगः गुर्वोः कामप्रलापश्रवणविषयं[4] पापं ᵛचकृम कृतवन्तो वयं ᵛतत् तस्मादागसः स सोमः ᵛसु सम्यक् ᵛमृळतु सुखयतु पापजनितदुःखं मा करोत्वित्यर्थः । महत्पापमनुभुज्यमानं प्रार्थनया कथं लुप्यते इति अत आह । ᵛहि यस्मात् ᵛमर्त्यः मनुष्यः ᵛपुलुकामः बहुकामनावान् । अल्पेनैव कर्मणा बहुकामानाकलयति । यस्मादेवं तस्मात् परिहरेत्यर्थः[5] । यद्वा । अयमपवर्जनीयतया[6] प्राप्यत इवेत्याह । पुरुकामो हि खलु मर्त्यः कामहतः सन् कामेन निरुद्ध एव वर्तते । अतस्तयोरुत्सेकोऽयुक्तः । तच्छब्दश्रवणदोषोऽपि प्रामादिकः अस्माकं प्राप्तेन सोमेन परिहर्तव्य इत्यर्थः । यद्वा । अयं मन्त्रश्चन्द्रपरो व्याख्येयो मनसोऽभिमानित्वाच्च तस्य पापस्यापि मनस्येव संभावितत्वात् । अस्मिन् पक्षे हृत्सु पीतं हृदयस्थितमित्यर्थः । शिष्टं स्पष्टम् ॥

अथ विनियुक्तयोर्मध्ये द्वितीयया सूक्ते षष्ठ्या अन्तेवास्याह ॥

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।
उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ ६ ॥

अगस्त्यः । खनमानः । खनित्रैः । प्रऽजाम् । अपत्यम् । बलम् । इच्छमानः ।
उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ ६ ॥

अयम् ᵛअगस्त्यः मद्गुरुः ᵛखनित्रैः फलस्योत्पादनसाधनैर्यज्ञस्तोत्रादिभिः ᵛखनमानः फलमभिमतमुत्पादयन् ᵛप्रजां प्रकर्षेण पुनःपुनर्जायमानम् ᵛअपत्यं कुलस्यापतनसाधनं पुत्रादिकं ᵛबलं च ᵛइच्छमानः सन् । यद्वा । प्रजां भृत्यादिरूपां च इच्छन् । ᵛऋषिः अतीन्द्रियद्रष्टा महानुभावः ᵛउग्रः उद्गूर्णः संसारे संचरन्नप्यपापः सन् ᵛउभौ ᵛवर्णौ वर्णनीयावाकारौ कामं च तपश्च ᵛपुपोष । ᵛसत्याः

---

१. झ१–अहं अन्तेवासी नु क्षिप्रं एतत् संभाषप्रणवा ( श्रवणा ) नंतरमेवान्तितोऽप्यूसन्नः एवंकारौ वे हृत्सु हृदयेषु आश्मी (त्मी) येषु ऐतं ( पीतं ) स्वीकृतं सोममुष ( प ) ब्रुवे उपेत्य । २. झ-झ१–प्रार्थये । ३. झ१–ब्रवीमि । ४. झ१–रतिप्रलापविषयम् । ५. ख–परिहरेदित्यर्थः । ६. क-झ–पापमवर्जनीयतया; त–यामयवर्जनीयतया; ञ–यामपवर्जनीयतया; झ१–हिपमवर्जनीतया; झ–पापमर्वजनीयतया ।

ᵛआशिषः ᵛदेवेषु देवेभ्यः ᵛजगाम प्राप्तवान् । यतोऽयं महानुभावस्तस्मादस्मान् पातीत्यर्थः ॥ ॥ २२ ॥ ॥ २३ ॥

अथ चतुर्विंशेऽनुवाके द्वादश सूक्तानि । तत्र 'युवो रजांसि' इति दशर्चं प्रथमं सूक्तमागस्त्यं त्रैष्टुभम् । तुह्यादिपरिभाषया इदमादिसूक्तपञ्चकमाश्विनम् । 'युवोर्दशाश्विनं वै' इत्यनुक्रमणिका । एतदादीनि तृतीयवर्जितानि पञ्च सूक्तानि प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियुक्तानि । 'अथाश्विनः' इति खण्डे सूत्रितं–'युवो रजांसीति पञ्चानां तृतीयमुद्धरेत्' ( आश्व. श्रौ. ४. १५ ) इति ॥

युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्ययां वां पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ॥ १ ॥

युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वाम् । परि । अर्णांसि । दीयत् ।
हिरण्ययाः । वाम् । पवयः । प्रुषायन् । मध्वः । पिबन्तौ । उषसः । सचेथे इति ॥१ ॥

हे अश्विनौ ᵛयुवोः युवयोः ᵛअश्वाः रथवोढारः ᵛरजांसि रञ्जकान् लोकान् ᵛसुयमासः शोभननियमनाः । लोकत्रयसंचारिण इत्यर्थः । कदेति आह । ᵛयत् यदा ᵛवां ᵛरथः ᵛअर्णांसि अरणीयान् अभिमतदेशान् ᵛपरि ᵛदीयत् परिगच्छेत् परितो गच्छति वा । तदेत्यर्थः । दीयतिर्गतिकर्मा, 'दीयति लकति' ( नि. २. १४. ६९ ) इति तत्कर्मसु पाठात् । किंच रथागमनकाले ᵛवां युवयोः ᵛपवयः वज्रा रथनेमयो वा ᵛहिरण्ययाः हिरण्मयाः ᵛप्रुषायन् प्रुष्णन्त्यभिमतम् । यद्वा । हिरण्ययानि पवयो मधुपात्राणि वां युवाभ्यामर्थाय । यस्मादेवं तस्मात् युवां ᵛमध्वः मधुनो मधुसदृशस्य सोमरसस्य ॥ कर्मणि षष्ठी ॥ सोमरसं ᵛपिबन्तौ आस्वादयन्तौ ᵛउषसः उषःसंबन्धिनि काले ᵛसचेथे यज्ञं संगच्छेथे । अत्र क्रमो न विवक्षितः । उषःकाले एवागत्य मधुरं सोमरसं पिबतमित्यर्थः ॥

युवमत्यस्यावं नक्षथो यद्विपत्मनो नर्यस्य प्रयज्योः ।
स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे च ॥ २ ॥

युवम् । अत्यस्य । अव । नक्षथः । यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः ।
स्वसा । यत् । वाम् । विश्वगूर्ती इति विश्वऽगूर्ती । भराति । वाजाय । ईट्टे । मधुऽपौ । इषे । च ॥२॥

हे अश्विनौ ᵛयुवं युवां ᵛयत् ᵛअत्यस्य अतनशीलस्य सततसंचारिणः ᵛविपत्मनः विविधगमनस्य विचित्रगमनस्य वा ᵛनर्यस्य मनुष्याणां हितस्य ᵛप्रयज्योः प्रकर्षेण पूज्यस्य ॥ एतानि कर्मणि षष्ठ्यन्तानि ॥ उक्तरूपं रथम् ᵛअव अवस्तात् तदुदयात् पूर्वं ᵛनक्षथः व्याप्नुथो देवयजनं गन्तुम् । किंच ᵛयत् यदा हे ᵛविश्वगूर्ती सर्वस्तुत्यौ सर्वदा उद्गूर्णौ वा ᵛवां युवयोः ᵛस्वसा स्वसृस्थानीया स्वयंसारिणी वा उषाः ᵛभराति पोषते त्वदागमनाय प्रभातं करोति । यदा हे ᵛमधुपौ मधुरस्य सोमरसस्य पातारौ युवां यजमानः ᵛवाजाय बलाय गमनाय वा ᵛइषे प्रभूतान्नाय ᵛईट्टे स्तौति । तदा रथं प्राप्नुथ इत्यर्थः ॥

युवं पर्य उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अन्तर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥ ३ ॥

युवम् । पयः । उस्रियायाम् । अधत्तम् । पक्वम् । आमायाम् । अव । पूर्व्यम् । गोः ।
अन्तः । यत् । वनिनः । वाम् । ऋतप्सू इत्यृतऽप्सू । ह्वारः । न । शुचिः । यजते । हविष्मान् ॥३॥

हे अश्विनौ ᵛयुवं युवाम् ᵛउस्रियायाम् । गोनामैतत् । भोगोत्स्राविण्यां गवि ᵛपयः ᵛअधत्तम् अधारयतं स्थापितवन्तौ । तथा ᵛआमायाम् अपक्वायां ᵛपक्वं परिपक्वं भोगयोग्यं गोसंबन्धि दुग्धं ᵛपूर्व्यं पूर्वभवं तत्रैवोत्पन्नम् ᵛअव अवस्तादधारयतम् । गवि क्षीरमुत्पाद्य पुनर्भोगाय पृथक्कृतवन्तावित्यर्थः । ᵛयत् यस्मात् हे ᵛऋतप्सू सत्यस्वरूपौ यज्ञियहविर्भक्षयितारौ वा हे अश्विनौ ᵛवां ᵛवनिनः उदकवतः उदकोपलक्षितहविष्मतो यज्ञस्य ᵛअन्तः मध्ये ᵛहविष्मान् प्रदेयहविषा तद्वान् ᵛशुचिः शुद्धो यजमानः ᵛयजते पूजयति युवां तस्मादेवमकुरुतम् । यद्वा । यदैवं यजमानः करोति तदेत्यर्थः । तत्र[1] दृष्टान्तः[1] । वनिनः वनसंबन्धिवृक्षसमूहस्य अन्तः मध्ये ᵛह्वारो ᵛन चोर इव । स यथा जागरूको वर्तते तथा यजमानोऽपीत्यर्थः ॥

युवं ह घर्मं मधुमन्तमत्रयेऽपो न क्षोदोऽवृणीतमेषे ।
तद्वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यन्ति मध्वः ॥ ४ ॥

युवम् । ह । घर्मम् । मधुऽमन्तम् । अत्रये । अपः । न । क्षोदः । अवृणीतम् । एषे ।
तत् । वाम् । नरौ । अश्विना । पश्वःऽइष्टिः । रथ्याऽइव । चक्रा । प्रति । यन्ति । मध्वः ॥४॥

अत्रेतिहासमाहुः । प्रवर्ग्येण प्रचरन्तमत्रिं राक्षसास्तप्ते घर्मेऽपातयन् । स च तप्यमानोऽश्विनौ तुष्टाव । तौ च स्तुत्या हृष्टमनसावरक्षतामिति । अपरेऽग्नौ क्षिप्तमपालयतामित्याहुरिति । हे अश्विनौ ᵛयुवं युवां ᵛमधुमन्तं पयोघृतरूपाभ्यां मधुभ्यां तद्वन्तं ᵛघर्मं दीप्तं प्रवर्ग्यम् ᵛएषे सौख्यमिच्छते ᵛअत्रये एतन्नाम्ने महर्षये ᵛक्षोदः क्षोदांसि क्षोद्यमानानि ᵛअपो ᵛन उदकानीव ᵛअवृणीतम् अवारयतम् । औष्ण्यं शैत्यसुखं कृतवन्तौ । तप्तघर्मसकाशात् भ(र)क्षितवान्[2](वन्तौ) इत्यर्थः[2] । यद्वा । अत्रये क्षोदः । उदकनामैतत् । तत्स्थं शैत्यं लक्ष्यते । अपः क्षोदो न । अप इति षष्ठ्यर्थे द्वितीया । उदकानां शैत्यं यथा भवति तद्वत् । पक्षान्तरे तु घर्मं दीप्तमग्निं मधुमन्तं कृत्वा अवृणीतं सुखयतमित्यर्थः । तथा च मन्त्रान्तरं–'तप्तं घर्ममोम्यावन्तमत्रये' ( ऋ. सं. १. ११२. ७ ) इति । ᵛतत् तस्मात् यस्मादेवं तस्मात् हे ᵛनरौ नेतारौ नराकारौ वा ᵛअश्विना अश्विनौ ᵛवां युवाभ्यां ᵛपश्वइष्टिः । पशुरित्यग्नेर्नाम । 'अग्निः पशुरासीत्' ( तै. सं. ५. ७. २६ ) इत्यादिश्रुतेः । यद्वा पशुप्रियत्वात् पशुरित्युच्यते । तस्याग्नेः इष्टिर्भवति । अग्नौ यागः सर्वो युष्मदर्थं प्रवर्तते इत्यर्थः । यद्वा । पशुसाध्यो यागो युवाभ्यां प्रवर्तते इति शेषः । 'आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेत्' ( तै. सं. २. १. १०. १ )

१. ज्ञ१–यागे दृष्टान्तः । ह्वारो न तृषित इव । यद्वा । २. ज्ञ-१–रक्षितवन्तावित्यर्थः ।

इत्यादिनाप्यश्विभ्यां पशुर्विहितः । तथा मध्वः मधुसदृशाः सोमरसा अपि युवाभ्यां प्रति यन्ति अभिगच्छन्ति । तत्र दृष्टान्तः । रथ्येव चक्रा रथसंबन्धीनि चक्रा चक्राणीव । तानि यथा प्रवणदेशमभिगच्छन्ति तद्वत् ॥

**आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।**
**अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥ ५ ॥**

आ । वाम् । दानाय । ववृतीय । दस्रा । गोः । ओहेन । तौग्र्यः । न । जिव्रिः ।
अपः । क्षोणी इति । सचते । माहिना । वाम् । जूर्णः । वाम् । अक्षुः । अंहसः । यजत्रा ॥५॥

हे दस्रा शत्रूणामुपक्षपयितारावश्विनौ वां युवयोः दानाय अस्मदभिमताय युवाभ्यां वाहयितुम् आ ववृतीय आवर्तयामि यागदेशम् ॥ वृतेरन्तर्भावितण्यर्थस्येदम् ॥ केन साधनेनेति तदुच्यते । गोः स्तुतिरूपाया वाचः ओहेन वहनेन साधनेन । यद्वा । आवर्तनकाल उच्यते । गोर्गन्त्याः उषसो वहनेन । जिव्रिः जीर्णो जयशीलो वा तौग्र्यो न तुग्राख्यस्य राज्ञः पुत्रो भुज्युरिव । स यथा शत्रुभिः संताड्य समुद्रे पातितो युवां परितोष्य स्वोद्धाराय स्वसमीपमानयत तद्वदित्यर्थः । इयमाख्यायिका ‘ तुग्रो ह ’ (ऋ. सं. १. ११६. ३), ‘ भुज्युमंहसः पिपृथः ’ (ऋ. सं. १०. ६५. १२), ‘ नासत्या भुज्युम् ’ (ऋ. सं. १. ११६. ४ ) इत्यादिषु प्रसिद्धा च । किमाश्चर्यमहमावर्तयामीति । किंतु अपः क्षोणी । अप इत्यन्तरिक्षनाम (नि. १. ३. ८ )। क्षोणीति पृथिवीनाम (नि. १. १. ७)। द्यावापृथिव्यावपि वां युवयोः माहिना माहात्म्येन युवयोः प्रसादेन सर्वोपकारिण्याविति ख्याति सर्वप्रदेशव्यापित्वं वा सचते सेवते प्रत्येकम् । यद्वा । वां माहिना यजमानो द्यावापृथिव्यौ सचते । किंच हे यजत्रा यष्टव्यौ प्रसादादयमृषिः जूर्णः जरया जीर्णाङ्गः सन् अंहसः पापात् जरालक्षणात् प्रमुच्य अक्षुः चिरकालव्याप्तो दीर्घजीवी भूयात् । यद्वा । हे यजत्रा वां प्रसादात् जूर्णो जीर्णो यजमानः अंहसो दुरितस्य हन्त्रीरप उक्तलक्षणानि सोमरसरूपाण्युदकानि क्षोणी क्षोण्याम् ॥ सप्तम्यर्थे प्रगृह्यम् ॥ भूम्यां चिरकालमक्षुर्व्याप्तः सन् माहिना माहात्म्येन सचते । द्वितीयो वामित्ययमादरार्थः ॥ ॥ २३ ॥

**नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम् ।**
**प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजम् ॥ ६ ॥**

नि । यत् । युवेथे इति । निऽयुतः । सुदानू इति सुऽदानू । उप । स्वधाभिः । सृजथः । पुरम्ऽधिम् ।
प्रेषत् । वेषत् । वातः । न । सूरिः । आ । महे । ददे । सुऽव्रतः । न । वाजम् ॥ ६ ॥

हे सुदानू शोभनदानावश्विनौ यत् यदा नियुतः अश्वान् नि युवेथे नियुङ्क्थो नियोजयथः ताभिरस्मद्यज्ञगमनाय संयुक्तौ भवथः तदा स्वधाभिः अन्नैः तत्कारणैरुदकैर्वा पुरंधिं बहूनां धात्रीं पृथिवीम् उप सृजथः[1] । एवं च सति सूरिः स्तोता अयं यजमानः वातो न वायुरिव तद्वत् क्षिप्रं

---

1. झ१-सृजथः उपसृष्टां कुरुथः ।

युवां ᵛप्रेषत् तर्पयतु । ᵛवेषत् व्याप्नोतु । कामयतां वा ॥ प्रीणातेर्वेतेश्च लेटि रूपे ॥ अनन्तरं ᵛसुव्रतो ᵛन अतिप्रशस्तोऽग्निष्टोमादिकर्मवानिव ᵛवाजम् अन्नं ᵛमहे महत्त्वाय अयं यजमानः ᵛआ ᵛदद्दे आदत्ते स्वीकरोति ॥ ' आङो दोऽनास्यविहरणे ' (पा. सू. १. ३. २०) इत्यात्मनेपदम् । ' लोपस्त आत्मनेपदेषु ' इति तलोपः । यद्वा । छान्दसे लिटि रूपम् ॥ स्वीकृत्य स्वमहत्त्वाय युवामेव तर्पयत्वित्यर्थः ॥

वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।
अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ॥ ७ ॥

वयम् । चित् । हि । वाम् । जरितारः । सत्याः । विपन्यामहे । वि । पणिः । हितऽवान् ।
अध । चित् । हि । स्म । अश्विनौ । अनिन्द्या । पाथः । हि । स्म । वृषणौ । अन्तिऽदेवम् ॥७॥

ᵛवयं ᵛचिद्धि वयमपि ᵛजरितारः तव स्तोतारः ᵛसत्याः सत्यफलाः सन्तः ᵛविपन्यामहे विविधं स्तुमः । ᵛपणिः पणाधारो द्रोणकलशः ᵛवि ᵛहितवान् स्थापितरसवानासीत् । यद्वा । पणिर्वणिग्लुब्धकोऽयष्टा हितवान्नियतधनो धनाढ्योऽप्ययष्टा वि वियुज्यताम् ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ ᵛअध अपि च ᵛचिद्धि ᵛष्म । एते त्रयः पूरणाः । हे ᵛअश्विनौ ᵛअनिन्द्या । प्रशस्यनामैतत् । हे प्रशस्यौ ᵛवृषणौ हे कामानां वर्षितारौ युवाम् ᵛअन्तिदेवं देवानामन्तिके ᵛपाथः सोमं पिबथः । यद्वा । अन्तिके वर्तमानं देवान् प्राप्नुवानं सोममिति योज्यम् ॥

युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ ।
अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥ ८ ॥

युवाम् । चित् । हि । स्म । अश्विनौ । अनु । द्यून् । विऽरुद्रस्य । प्रऽस्रवणस्य । सातौ ।
अगस्त्यः । नराम् । नृषु । प्रऽशस्तः । काराधुनीऽइव । चितयत् । सहस्रैः ॥ ८ ॥

हे ᵛअश्विनौ ᵛयुवां । ᵛचिद्धि ᵛष्म इति त्रयः पूरणाः । ᵛअनु ᵛद्यून् प्रतिदिनं ᵛविरुद्रस्य विशिष्टोष्णरूपदुःखद्रावणस्य विविधरोरूयमाणद्रवणवतो वा ᵛप्रस्रवणस्य वृष्ट्युदकसंस्त्यायस्य ᵛसातौ लाभे निमित्तभूते सति ᵛअगस्त्यः एतन्नामा महर्षिः ᵛनरां नेतॄणां कर्मनिर्वाहकानां मनुष्याणां ᵛनृषु येषु तादृशाः मनुष्याः सन्ति तेषु ᵛप्रशस्तः प्रशस्यतरोऽयं ᵛसहस्रैः अपरिमितैः स्तोत्रैः ᵛचितयत् चेतयति स्तुत्या प्रबोधयति । तत्र दृष्टान्तः । ᵛकाराधुनीव । कारा शब्दः । तस्य धूनयितोत्पादयिता शङ्खादिः स इव । यद्वा । एतदप्यगस्त्यविशेषणम् । कारः शब्दयिता होत्रादिः । तस्य धुनिः कम्पयिता प्रेरकः इव । इवेति संप्रत्यर्थे । ' अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ' ( निरु. ७. ३१ ) इति निरुक्तम् ॥

प्र यद्वहेथे महिना रथस्य प्र स्यन्द्रा याथो मनुषो न होता ।
धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥ ९ ॥

प्र । यत् । वहेथे इति । महिना । रथस्य । प्र । स्यन्द्रा । याथः । मनुषः । न । होता ।
धत्तम् । सूरिऽभ्यः । उत । वा । सुऽअश्व्यम् । नासत्या । रयिऽसाचः । स्याम ॥ ९ ॥

हे अश्विनौ युवां रथस्य गमनसाधनस्य महिना महत्त्वेन यत् यस्मात् प्र वहेथे धारयथो यज्ञम् । यद्वा । रथस्य स्वर्गगमनसाधनस्य आगस्त्य धुरं वहत[1] । तथा हे स्यन्द्रा स्यन्दनशीलौ युवां याथः गच्छथः । स्वस्थानं यज्ञारम्भे आगच्छथः यज्ञसमाप्तौ पुनर्गच्छथश्च । तत्र दृष्टान्तः । मनुषः होता मनुष्यस्य यजमानस्य होता यथा यज्ञप्रारम्भे आगच्छति कर्मणि निर्वृत्ते पुनरपगच्छति तद्वत् । आगमनसमये सूरिभ्यः स्तोतृभ्यः धत्तं धारयतं फलम् । उत वा स्वश्व्यं शोभनाश्वसमूहं धत्तम् । नासत्या । सत्सु भवौ सत्यौ । न असत्यौ नासत्यौ । हे तादृशौ त्वदनुग्रहात् रयिसाचः धनसमवायिनः स्याम भवेम ॥

तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यम् ।
अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । स्तोमैः । अश्विना । सुविताय । नव्यम् ।
अरिष्टऽनेमिम् । परि । द्याम् । इयानम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥

हे अश्विना हे अश्विनौ वां युवयोः संबन्धिनं[2] शीघ्रगमनेन स्तुत्यं रथं वयम् अगस्त्याः अद्य अस्मिन्सुत्येऽहनि हुवेम आह्वयेम । केन साधनेनेति उच्यते । स्तोमैः स्तोत्रैः । किमर्थम् । सुविताय सुष्ठु प्राप्तये । कीदृशम् । नव्यं स्तुत्यं नूतनं वा तथा अरिष्टनेमिम् अहिंसितचक्रवलयं द्यां परि इयानं द्युलोकस्य परितो गच्छन्तम् । विद्याम इत्यादि गतम् ॥ ॥ २४ ॥

'कदु प्रेष्ठौ' इति नवर्चं द्वितीयं सूक्तमागस्त्यं त्रैष्टुभमाश्विनम् । 'कदु नव' इत्यनुक्रान्तम् ॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः पूर्वसूक्त एव उक्तः ॥

कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।
अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥ १ ॥

कत् । ऊँ इति । प्रेष्ठौ । इषाम् । रयीणाम् । अध्वर्यन्ता । यत् । उत्ऽनिनीथः । अपाम् ।
अयम् । वाम् । यज्ञः । अकृत । प्रऽशस्तिम् । वसुधिती इति वसुऽधिती । अवितारा । जनानाम् ॥ १ ॥

---

१. झ१–वहथः । २. झ१–संबन्धिनं तम् ।

हे अश्विनौ ᵛप्रेष्ठौ प्रियतमौ वां युवां ᵛकत् कदा भविष्यति[1] ᵛइषाम् इष्यमाणानामन्नानां ᵛरयीणां धनानाम्।। कर्मणि षष्ठ्यौ ।। अन्नानि धनानि च ᵛउन्निनीथः ऊर्ध्वं प्रापयथः ᵛअध्वर्यन्ता अध्वरं पारयितुमिच्छन्तौ युवाम्[2] ᵛअपां वृष्ट्युदकानां वृष्ट्युदकानि च उन्निनीथः उत्कृष्टम् अधः प्रापयथ इति ᵛयत् तत्कदा । कस्मादेवमुच्यते इति उच्यते । ᵛअयं ᵛयज्ञः अस्माभिरनुष्ठीयमानः ᵛवां युवयोरेव ᵛप्रशस्तिं प्रशंसां स्तुतिम् ᵛअकृत करोति । यज्ञे शंसनीयानि शस्त्राणि युवामेव प्रशंसन्तीत्यर्थः । यस्मादेवं तस्मात् हे ᵛवसुधिती वसुनो धनस्य धातारौ वस्तव्यकर्माणौ तथा हे ᵛजनानाम् ᵛअवितारौ उक्तलक्षणौ युवां कदा अन्नानां धनानां च दातारौ भवथ इति ।।

आ वामश्वा॑सः॒ शुच॑यः पय॒स्पा वात॑रंहसो दि॒व्यासो॒ अत्याः॑ ।

म॒नो॒जुवो॒ वृष॑णो वी॒तपृ॑ष्ठा॒ एह स्व॒राजो॑ अ॒श्विना॑ वहन्तु ॥ २ ॥

आ । वा॒म् । अश्वा॑सः । शुच॑यः । प॒यः॒ऽपाः । वात॑ऽरंहसः । दि॒व्यास॑ः । अत्या॑ः ।

म॒नः॒ऽजुव॑ः । वृष॑णः । वी॒तऽपृ॑ष्ठाः । आ । इ॒ह । स्व॒ऽराज॑ः । अ॒श्विना॑ । व॒ह॒न्तु॒ ॥ २ ॥

अश्विनौ शोभनाश्वयुक्तौ ᵛवां युवाम् ᵛअश्वासः युष्मदीयाः ᵛइह अस्मिन् यज्ञे ᵛआ ᵛवहन्तु प्रापयन्तु । अवशिष्टानि अश्वविशेषणानि । कीदृशास्ते । ᵛशुचयः शुद्धा दीप्ता वा ᵛपयस्पाः वृष्ट्युदकस्य पातारः ᵛवातरंहसः वायुवेगाः दिव्याः[3] दिविभवाः ᵛअत्याः अतनशीलाः ᵛमनोजुवः मनोजवाः ᵛवृषणः वर्षकाः युवान इत्यर्थः । ᵛवीतपृष्ठाः कान्तपृष्ठाः वपुष्मन्त इत्यर्थः । ᵛस्वराजः स्वयमेव राजमानाः । ईदृशा भवन्तु[4] ।।

आ वां॒ रथो॒ऽव॒निर्न प्र॒वत्वा॑न्त्सृ॒प्रव॑न्धुरः सुवि॒ताय॑ गम्याः ।

वृष्ण॑ः स्थातारा॒ मन॑सो॒ जवी॑यानहंपू॒र्वो य॑ज॒तो धि॑ष्ण्या॒ यः ॥ ३ ॥

आ । वा॒म् । रथ॑ः । अ॒वनि॑ः । न । प्र॒वत्वा॑न् । सृ॒प्रऽव॑न्धुरः । सु॒वि॒ताय॑ । ग॒म्याः॒ ।

वृष्ण॑ः । स्था॒ता॒रा॒ । मन॑सः । जवी॑यान् । अ॒ह॒म्ऽपू॒र्वः । य॒ज॒तः । धि॒ष्ण्या॒ । यः ॥ ३ ॥

पूर्वमन्त्रेऽश्वव्याजेन अश्विनोरागमनमुक्तम् । अनेन रथव्याजेनोच्यते । हे ᵛधिष्ण्या उन्नतस्थानार्हौ ᵛस्थातारा स्वरथाधिष्ठानौ ᵛवां युवयोः ᵛयः ᵛरथः अस्ति सः ᵛसुविताय शोभनफलाय ᵛआ ᵛगम्याः अस्मद्यज्ञमागच्छतु ।। पुरुषव्यत्ययः ।। कीदृशो रथ इति स विशेष्यते । ᵛअवनिर्न ᵛप्रवत्वान् भूमिरिवात्यन्तविस्तारवान् ᵛसृप्रवन्धुरः विस्तीर्णपुरोभागः ᵛवृष्णः वर्षकस्याश्वस्य ᵛमनसः अपि ᵛजवीयान् मनोवेगवानित्यर्थः । ᵛअहंपूर्वः अहंकारपूर्वो मनस्वी वा अत्युदारः ᵛयजतः यष्टव्यः । ईदृशो रथ आगच्छतु ।।

---

१. झ१–' भविष्यति ' नास्ति ।। २. झ१–युवां यत् यदा । ३. झ-झ१–दिव्यासः । ४. झ-झ१–वहन्तु ।

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥ ४ ॥

इहऽइह । जाता । सम् । अवावशीताम् । अरेपसा । तन्वा । नामऽभिः । स्वैः ।
जिष्णुः । वाम् । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः । ऊहे ॥४॥

हे अश्विनौ युवां ᵛसमवावशीताम् । सह सम्यग्वा पुनःपुनः स्तूयेथे कामयेथां वा यज्ञम् ॥ पुरुषव्यत्ययः ॥ कीदृशौ युवाम् । ᵛइहेह ᵛजाता । उभाभ्यामिहशब्दाभ्यां मध्यमोत्तमस्थाने उच्येते । तयोः संभूतौ । चन्द्रसूर्येण[1] इति यावत् । ' सूर्याचन्द्रमसावित्येके ' ( निरु. १२. १ ) इति निरुक्तम् । ᵛअरेपसा अपापौ । आथर्वणस्य गुरोः शिरश्छेदनादिना पापलेपरहिताविति भावः । ' आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ' ( ऋ. सं. १. ११७. २२ ) इत्यादिमन्त्रवर्णात् । केन हेतुनेति उच्यते । ᵛतन्वा शरीरेण शरीरसौन्दर्येण निमित्तेन ᵛस्वैः ᵛनामभिः स्वीयैर्माहात्म्यविशिष्टैरश्विनौ नासत्यावित्यादिभिरपि । रमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्च हेतोः संस्तूयेथे इत्यर्थः । यद्वा । अरेपसा तन्वेति योज्यम् । उक्तप्रकारेण गुरुशिरश्छेदादप्यपापेन शीर्षेण[2] तादृङ्महत्त्वख्यापनेनेति यावत् । किंच ᵛवां युवयोः ᵛअन्यः एको मध्यमस्यान्तरिक्षस्य पुत्रस्थानीयः सोमः ᵛजिष्णुः जयशीलः ᵛसुमखस्य शोभनयज्ञस्य ᵛसूरिः प्रेरयिता सन् ᵛऊहे वहति विश्वं जगद्धारयति । चन्द्रात्मनस्तस्योदये सति ह्योषधिवनस्पत्यादयो वर्धन्ते । ᵛअन्यः अपरः उत्तमस्थानः ᵛदिवः द्युलोकस्य ᵛपुत्रः पुत्रस्थानीय आदित्यः ᵛसुभगः शोभनरश्मिरूपधनः ऊहे वहति । कृत्स्नमेवं पृथग्जगन्निर्वाहकौ महानुभावौ युवां सह स्तूयेथे । अत्र निरुक्तम्–' इहेह जातौ संस्तूयेथे पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र उह्यत आदित्यः ' ( निरु. १२. ३ ) इति ॥

प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयन्त वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥ ५ ॥

प्र । वाम् । निऽचेरुः । ककुहः । वशान् । अनु । पिशङ्गऽरूपः । सदनानि । गम्याः ।
हरी इति । अन्यस्य । पीपयन्त । वाजैः । मथ्रा । रजांसि । अश्विना । वि । घोषैः ॥ ५ ॥

हे ᵛअश्विना अश्विनौ ᵛवां युवयोर्मध्ये अन्यस्य एकस्य ᵛककुहः श्रेष्ठः ᵛपिशङ्गरूपः हिरण्यरूपः पीतवर्णो वा बहुभिरक्षाद्यवयवैर्निरूप्यमाणो वा रथः ᵛवशान् ᵛअनु कामाननुलक्ष्य यथाकामम् । अस्मद्यज्ञागमनेच्छयेत्यर्थः । यद्वा । वशान्स्वाधीनाः ककुहो दिशो दिगन्तरालानुक्रमेण नीचैरश्चरन् स्वस्थानाद्देवयजनमुखं गच्छन् । ᵛसदनानि अस्मद्यागगृहाणि ᵛप्र ᵛगम्याः प्रकर्षेण गच्छतु ॥ पुरुषव्यत्ययः ॥ अत्र यद्यप्यन्यस्येति नोक्तं तथाप्युत्तरवाक्ये तथोक्तत्वादत्रापि लभ्यते । ᵛअन्यस्य युवयोरन्यतमस्य ᵛहरी अश्वौ ᵛरजांसि लोकाः । अत्र लोकशब्दो जनवाचकः । ते यजमानरूपा जनाः

१. छ१–चन्द्रसूर्यरूपेण । २. छ१–शरीरेण ।

इत्यर्थः । ते च मझा प्रमथनेनालोडनेन निष्पादितैः वाजैः अन्नैरामिक्षादिरूपैः घोषैः स्तुतिभिश्च आह्वानादिशब्दविशिष्टैर्वा पीपयन्त आप्याययन्ति ॥ ॥ २५ ॥

प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥ ६ ॥

प्र । वाम् । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति । मध्वः । इष्णन् ।
एवैः । अन्यस्य । पीपयन्त । वाजैः । वेषन्तीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥ ६ ॥

हे अश्विनौ युवयोरन्यतमो मध्यमस्थानः शरद्वान् शरणवान् मेघवृक्षपर्णादीनां विशरणवान् । अथवा बहुसंवत्सरः पूर्वतनो नित्य इत्यर्थः । वृषभो न वर्षितेवेन्द्रः[1] । स इव शत्रूणां निष्षाट् निःसारयिता सन् पूर्वीः बह्वीः पुरातनीर्वा इषः अन्नानि सस्यादीन्युद्दिश्य प्र चरति प्रकर्षेण गच्छति। मध्यमस्थानश्चन्द्रः इति पक्षे शरद्वाञ्छरत्कालवान् । तस्मिन् ऋतौ हि चन्द्रः संमद्धः[2] भवति । तेन च तृणगुल्मौषध्यादीनि वर्धन्ते । स किमर्थमेवं करोतीति उच्यते । मध्व इष्णन् मधुनो मधुसदृशस्य हविषः ॥ कर्मणि षष्ठी ॥ हविरिच्छन् । तदर्थमेवं करोति । तथा अन्यस्य उत्तमादित्यस्य एवैः कामैर्गमनैर्वा निमित्तभूतैः पीपयन्त आप्याययन्ति हविर्भिर्यजमानाः । तुष्टेन तेन प्रेरिताः वेषन्तीः व्यापयन्तीः ऊर्ध्वाः उन्नताः उत्तीराः[3] नद्यः न नदनशीला यथा नः अस्मदर्थम् आगुः आगच्छन्ति ॥

असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती ।
उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥ ७ ॥

असर्जि । वाम् । स्थविरा । वेधसा । गीः । बाळ्हे । अश्विना । त्रेधा । क्षरन्ती ।
उपऽस्तुतौ । अवतम् । नाधमानम् । यामन् । अयामन् । शृणुतम् । हवम् । मे ॥ ७ ॥

हे[4] वेधसा विधातारावश्विनौ[4] वां युवयोः बाळ्हे दृढे स्थैर्ये निमित्तभूते सति गीः स्तुतिरूपा वाक् असर्जि सृज्यते[5] । कीदृशी सा । स्थविरा अत्यन्तं स्थिरा नित्या वेदमयी त्रेधा मन्त्रादिभेदेन त्रिप्रकारा क्षरन्ती युवां गच्छन्ती । ईदृशी स्तुतिः कृतेत्यर्थः । तथा उपस्तुतौ सन्तौ नाधमानम् अभिमतफलं याचमानम् अवतं रक्षतं तर्पयतं वा । किंच यामन् गमने अयामन् अगमने च हवम् आह्वानं शृणुतम् ॥

---

१. क-ख-ज-झ-ञ-त-फ—वर्षिता देवेन्द्रः; झ१—वृषभो वर्षिता देवेन्द्रः । २. क-झ-झ१—प्रसन्नः । ३. ख-फ—उन्नीराः । ४. झ१—अश्विनौ । ५. झ-१—सृज्यते उच्चार्यते ।

उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।
वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥ ८ ॥

उत । स्या । वाम् । रुशतः । वप्ससः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् ।
वृषा । वाम् । मेघः । वृषणा । पीपाय । गोः । न । सेके । मनुषः । दशस्यन् ॥ ८ ॥

हे अश्विनौ वां युवयोः रुशतः दीप्तस्य वप्ससः रूपस्यैव वपुषो वा ख्यापयित्री गीः स्तुतिवाक् त्रिबर्हिषि त्रिधात्वास्तीर्णबर्हिष्के[1] सदसि यागसदने नॄन् कर्मनेतॄनस्मान् पिन्वते आप्याययति आप्याययतु वा उचितप्रदानादिना । केन प्रकारेण उच्यते । हे वृषणा वर्षितारौ कामानां वां युवयोः स्वभूतः मेघः सेक्ता जलदः प्रदानविशेषो वा वृषा वर्षकः सन् मनुषः मनुष्यान् प्रति दशस्यन् प्रयच्छन् पीपाय आप्याययति । आप्यायने दृष्टान्तः । गोर्न सेके उदकसेके इव शांतनात् सेके उदकस्येव । तद्यथा आप्याययति तद्वदित्यर्थः । यद्वा । नेति संप्रत्यर्थे । गोः उदकस्य सेके निमित्तभूते सति पीपायेति संबन्धः ॥

युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।
हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुम् ॥ ९ ॥

युवाम् । पूषाऽइव । अश्विना । पुरम्ऽधिः । अग्निम् । उषाम् । न । जरते । हविष्मान् ।
हुवे । यत् । वाम् । वरिवस्या । गृणानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥९॥

हे अश्विनौ युवां पुरंधिः बहुप्रज्ञः पूषेव पोषक इव हविष्मान् हविर्युक्तः जरते स्तौति । यद्वा । पुरंधिर्बहूनां धारयित्री पूषेव पृथिवीव ॥ द्वितीयार्थे प्रथमा[2] ॥ तां यथा स्तौति तद्वत् । किमिव अग्निमुषां न । अग्निमुषसं च यथा तथा युवामपि । प्रातरनुवाकाश्विनशस्त्रयोः आश्विनक्रतुवत् आग्नेयोषस्ययोरपि सद्भावादिति भावः । कदेति आह । यत् यदा वरिवस्या वरिवस्यया परिचर्यया युक्तः गृणानः स्तोता स्तौति तदा यजमानोऽपि जरते इत्यर्थः । विद्यामेत्यादि गतम् ॥ ॥२६॥

'अभूदिदम्' इत्यष्टर्चं तृतीयं सूक्तम् आश्विनं[3] जागतम् । 'अवविद्धम्' इति षष्ठी 'तद्वां नरा नासत्यौ' इत्यष्टमी च उभे त्रिष्टुभौ । 'अभूदिदमष्टौ षष्ठ्यन्त्ये त्रिष्टुभौ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दस्यस्य विनियोगः । तथा च सूत्रितम्– 'अभूदिदं यो वां परिज्मेति त्रीणि' ( आश्व. श्रौ. ४. १५ ) इति ॥

अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।
धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ १ ॥

अभूत् । इदम् । वयुनम् । ओ इति । सु । भूषत । रथः । वृषण्ऽवान् । मदत । मनीषिणः ।
धियम्ऽजिन्वा । धिष्ण्या । विश्पलावसू इति । दिवः । नपाता । सुऽकृते । शुचिऽव्रता ॥१॥

---

१. ख-ज-झ-त–त्रिधान्वास्तीर्णबर्हिष्के । २. ख-फ–प्रथमा छान्दसो वा । ३. क-झ–आगस्त्यमाश्विनम् ।

हे ᵛमनीषिणः मनस्विनो मेधाविन ऋत्विजः अस्माकम् ᵛइदं ᵛवयुनं प्रज्ञानम् ᵛअभूत् उत्पन्नम् । कीदृशं तदिति । उच्यते । ᵛवृषण्वान् अभिमतवर्षणवान् ᵛरथः अश्विनोः संबन्धी गमनसाधनो रथ आगत इति शेषः । तत्स्थावश्विनौ ᵛओ ᵛषु ᵛभूषत । ओ इति निपातद्वयसमुदायात्मकः एको निपातः । सुष्ठु आभूषत । अभिमुखा भवत स्तोतुम् । तादृशौ महानुभावावश्विनौ ᵛमदत ॥ अन्तर्भावितण्यर्थोऽयम् ॥ मदयत संभावयत । अश्विनौ विशेष्येते । ᵛसुकृते सुष्ठु कृतवते मह्यं ᵛधियंजिन्वा कर्मणो बुद्धेर्वा प्रीणयितारौ ᵛधिष्ण्या धिषणार्हौ स्तुत्यौ ᵛविश्पलावसू विशां प्रजानाम् अस्माकं पालयितृधनौ विश्पलाख्यायाश्छिन्नजङ्घाया हिरण्मयजङ्घाप्रदानेन तथाभूतौ । ' सद्यो जङ्घामायसीं विश्पलायै ' ( ऋ. सं. १. ११६. १५ ) इत्यादिनिगमः । ᵛदिवः आदित्यस्य ᵛनपाता नप्तारौ नपातयितारौ वा ᵛशुचिव्रता दीप्तकर्माणौ । ईदृशावश्विनौ मदत ॥

**इन्द्र॑तमा॒ हि धिष्ण्या॑ म॒रुत्त॑मा द॒स्रा दंसि॑ष्ठा र॒थ्या॑ र॒थीत॑मा ।**

**पू॒र्णं रथं॑ वहे॒थे॒ मध्व॒ आचि॑त॒ं तेन॑ दा॒श्वांस॒मुप॑ याथो अश्विना ॥ २ ॥**

इन्द्र॑ऽतमा । हि । धिष्ण्या॑ । म॒रुत्ऽत॑मा । द॒स्रा । दंसि॑ष्ठा । र॒थ्या॑ । र॒थिऽत॑मा ।

पू॒र्णम् । रथ॑म् । व॒हे॒थे॒ इति॑ । मध्वः॑ । आऽचि॑तम् । तेन॑ । दा॒श्वांस॑म् । उप॑ । या॒थः॒ । अ॒श्वि॒ना॒ ॥२॥

हे अश्विनौ युवाम् ᵛइन्द्रतमा ᵛहि ईश्वरतमौ खलु । एवं प्रतिविशेषणं हिः संबन्ध्यः । तथा ᵛधिष्ण्या स्तुत्यर्हौ ᵛमरुत्तमा मरुद्वद्वेगगामिनौ मितरागिणौ मितराविणौ वा ᵛदस्रा उपक्षपयितारौ शत्रूणां ᵛदंसिष्ठा अतिशयकर्माणौ ᵛरथ्या रथार्हौ रथवन्तौ ᵛरथितमा । रथिनो नेतारः । तेषां श्रेष्ठौ । ' रथीरध्वराणाम् ' ( ऋ. सं. ८. ११. २ ) इति नेतृपरतया व्याख्यातत्वात् । ईदृशौ युवां ᵛमध्वः मधुसदृशस्य उदकस्यामृतस्य वा ᵛपूर्णं पूरितम् ᵛआचितं सर्वतः संनद्धं ᵛरथं ᵛवहेथे नयथः । ᵛतेन उक्तगुणविशिष्टेन रथेन हे ᵛअश्विना अश्विनौ उक्तगुणविशिष्टौ सन्तौ ᵛउप ᵛयाथः यज्ञमभिप्राप्नुथः ॥

**किमत्र॑ दस्रा कृणुथः॒ किमा॑साथे॒ जनो॒ यः कश्चि॒दह॑विर्म॒ही॒यते॑ ।**

**अति॑ क्रमिष्टं जु॒रतं॑ प॒णेरसुं॒ ज्योति॒र्विप्रा॑य कृणु॒तं व॑च॒स्यवे॑ ॥ ३ ॥**

किम् । अत्र॑ । द॒स्रा॒ । कृ॒णु॒थः॒ । किम् । आ॒सा॒थे॒ इति॑ ।

जनः॑ । यः । कः । चि॒त् । अह॑विः । म॒ही॒यते॑ ।

अति॑ । क्र॒मि॒ष्ट॒म् । जु॒रत॑म् । प॒णेः । असु॑म् । ज्योतिः॑ । विप्रा॑य । कृ॒णु॒तम् । व॒च॒स्यवे॑ ॥३॥

हे ᵛदस्रा उपक्षपयितारौ युवाम् ᵛअत्र अस्मिन् मनुष्ये ᵛकिं ᵛकृणुथः कुरुथः । हविषोऽभावादिति भावः । तत्रैव ᵛकिमासाथे किं तिष्ठथः । अत्रेत्युक्तं कुत्रेत्याह । ᵛयः ᵛकश्चित् ᵛजनः जन्मवान् ᵛअहविः यज्ञार्थहवीरहितः ᵛमहीयते पूज्यते स्वयं न युष्मान् पूजयति । तं जनम् ᵛअति ᵛक्रमिष्टं पराभूय तिष्ठतम् । न केवलमतिक्रममात्रं किंतु ᵛपणेः वणिग्भूतस्य लुब्धकस्यायष्टुः तस्य ᵛअसुं प्राणं

जुरतम् अहिंसिष्टम् अनीनशतम् । विप्राय मेधाविने वचस्यवे वचसः स्तोत्ररूपस्य युवाभ्यामिच्छते मह्यं ज्योतिः कृणुतं युष्मद्यजनविषयज्ञानं कुरुतम् ॥

जम्भयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥ ४ ॥

जम्भयतम् । अभितः । रायतः । शुनः । हतम् । मृधः । विदथुः । तानि । अश्विना ।
वाचम्ऽवाचम् । जरितुः । रत्निनीम् । कृतम् । उभा । शंसम् । नासत्या । अवतम् । मम ॥४॥

हे अश्विनौ रायतः निन्दितं शब्दयतः अस्मान् हन्तुमागच्छतो वा शुनः श्वसदृशान् अभितः जम्भयतं नाशयतम् । तथा मृधः तेषां संग्रामान् संग्रामं कुर्वतो वा हतं मारयतम् । तानि हननोपायान् विदथुः जानीथः । किंच जरितुः युष्मान् स्तोतुः वाचंवाचं तां तां स्तुतिलक्षणां वाचं रत्निनीं कृतं सर्वामपि स्तुतिं रमणीयफलवतीं कुरुतम् । हे नासत्या सत्यभूतौ युवाम् उभा उभौ मम मदीयां शंसं स्तुतिम् अवतं रक्षतम् ॥

युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥ ५ ॥

युवम् । एतम् । चक्रथुः । सिन्धुषु । प्लवम् । आत्मन्ऽवन्तम् । पक्षिणम् । तौग्र्याय । कम् ।
येन । देवऽत्रा । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥ ५ ॥

हे अश्विनौ युवं युवां सिन्धुषु समुद्रोदकेषु एतं प्लवं प्रसिद्धं प्लुतिसाधनं प्लवं नावम् आत्मन्वन्तं दार्ढ्यवन्तं पक्षिणं पक्षवद्गतिसाधनरथवन्तं तौग्र्याय तुग्रनाम्नो राज्ञः पुत्राय भुज्युनाम्ने राज्ञे कं सुखकरं चक्रथुः । तौग्र्यो भुज्यू राजा समुद्रवर्ती ससेनः परचक्रं प्रमथितुं प्रस्थितः । तं प्रतीपवल्गानि आगत्यापासयन् स च प्रसादफलकराश्विनौ स्तुत्वा स्वात्मानं ररक्ष इत्ययमितिहासो बहुधा पूर्वं प्रपञ्चितः । यद्वा । कमिति पूरणः । तस्य जलसंचारिरथस्य सहायभूतान् बहून् रथादीनकुरुतमित्यर्थः । अयमर्थस्तु ‘ तमूहथुर्नौभिः ’ ( ऋ. सं. १. ११६. ३ ), ‘ चतस्रो नावः ’ ( ऋ. सं. १. १८२. ६ ), ‘ त्रिभी रथैः ’ ( ऋ. सं. १. ११६. ४ ) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । येन युष्मद्दत्तेन प्लवेन देवत्रा देवेषु मध्ये मनसा अनुग्रहयुक्तया बुद्ध्या । येन मनसेति वा योज्यम् । निरूहथुः निर्गमनं कुरुथः । तथा सुपप्तनि शोभनपतनं यथा भवति सुपतनौ वा युवां महः महतः क्षोदसः । उदकमासैतत् । उदकात् पेतथुः तदथः पतथः उत्तरीतुम् ॥ ॥ २७ ॥

अवविद्धं तौग्र्यमप्स्वन्तरनारम्भणे तमसि प्रविद्धम् ।
चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति ॥ ६ ॥

अवऽविद्धम् । तौग्र्यम् । अप्ऽसु । अन्तः । अनारम्भणे । तमसि । प्रऽविद्धम् ।
चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्याम् । इषिताः । पारयन्ति ॥ ६ ॥

vअप्स्वन्तः मध्ये vअवविद्धम् अवस्ताच्छत्रुभिः पातितम् vअनारम्भणे अनालम्बने आलम्बन-रहिते vतमसि । तमोवत्तमः । दृष्टिश्वासादिप्रतिबन्धके जलमध्ये vप्रविद्धं प्रकर्षेण पीडितं vतौग्र्यं भुज्युं vजठलस्य[1] जठरवदुदकधारकस्य मध्ये vजुष्टाः सेविताः । यद्वा ॥ कर्मणि षष्ठी ॥ जठरं प्राप्ताः अन्तर्जलं प्रविष्टाः । vअश्विभ्यामिषिताः vचतस्रो vनावः vउत् vपारयन्ति उत्तारयन्ति प्रापयन्ति ॥

**कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।**
**पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥ ७ ॥**

कः । स्वित् । वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यम् । तौग्र्यः । नाधितः । परिऽअसस्वजत् ।
पर्णा । मृगस्य । पतरोःऽइव । आऽरभे । उत् । अश्विनौ । ऊहथुः । श्रोमताय । कम् ॥ ७ ॥

vकः vस्वित् कश्चिदनुग्राहकः vवृक्षः वृक्षविकारो रथः । विकारे प्रकृतिशब्दः । यद्वा । संस्तवा-भिप्रायमेतत् । स्तोत्राख्यो वृक्ष इत्यर्थः । कीदृशो रथः । vनिष्ठितः निश्चलं वर्तमानः । कुत्रेति उच्यते । vअर्णसः उदकस्य vमध्ये । vयं वृक्षं vतौग्र्यः तुग्रपुत्रो भुज्युः vनाधितः याचमानः vपर्यषस्वजत् परिष्वक्तमकरोत् । आलम्बने दृष्टान्तः । vपतरोः पतनशीलस्य vमृगस्य मार्जयितुः शोधयितुर्हिंसादेः vआरभे आलम्बनाय पर्णानीव[2] । तानि यथा आलम्बनाय प्रभवन्ति तद्वत् । हे vअश्विनौ vश्रोमताय कीर्तिमत्त्वाय vउत् vऊहथुः ऊर्ध्वं प्रापयथः । स्तुतिपक्षे स्तोत्राख्यं वृक्षमाश्रितवन्तं तमूहथुरित्यर्थः ॥

**तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन् ।**
**अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥**

तत् । वाम् । नरा । नासत्यौ । अनु । स्यात् । यत् । वाम् । मानासः । उचथम् । अवोचन् ।
अस्मात् । अद्य । सदसः । सोम्यात् । आ । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

हे vनरा नेतारौ कर्मणो नराकारौ वा हे vनासत्यौ असत्यरहितौ सत्यफलौ वा vवां युवां vतत् तादृशं स्तोत्रम् vअनु vस्यात् अनुकूलं भवतु अनुभवतु वा वाम् । तदित्युक्तं यदित्याह । vवां प्रति vमानासः पूजावन्तोऽस्मदीया होत्रादयः vयत् vउचथं स्तोत्रम् vअवोचन् अकुर्वन् तद्वाम् अनु ष्यात् । हे अश्विनौ vअद्य अस्मिन् प्रधानयागदिने vअस्मात् अस्माभिः क्रियमाणात् vसदसः संबन्धिनः vसोम्यात् सोमयागसंपादकात् । vआ इति अप्यर्थे । अस्माभिर्यजमानैः अद्य क्रियमाणादपि स्तोत्रात् प्रीणयतमिति । विद्यामेति गतम् ॥     ॥ २८ ॥

‘ तं युञ्जाथाम् ’ इति षड्टचं चतुर्थं सूक्तं त्रैष्टुभमागस्त्यमाश्विनम् ॥

---

१. क-ञ-त–जठलस्य जठरस्य । २. क–पर्णा पर्णानीव ।

तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ १ ॥

तम् । युञ्जाथाम् । मनसः । यः । जवीयान् । त्रिऽवन्धुरः । वृषणा । यः । त्रिऽचक्रः ।
येन । उपऽयाथः । सुऽकृतः । दुरोणम् । त्रिऽधातुना । पतथः । विः । न । पर्णैः ॥ १ ॥

हे वृषणा वर्षकौ कामानां युवां तं वक्ष्यमाणगुणविशिष्टं रथं युञ्जाथां योजयतम् । तमित्युक्तं कमित्याह । यः रथः त्रिवन्धुरः त्रिप्रकारसारथिस्थानः । वन्धुरं रथिनः स्थानमित्याहुः । 'आ याह्यर्वाङुप वन्धुरेष्ठाः' ( ऋ. सं. ३. ४३. १ ) इत्यादिमन्त्रान्तरात् । यः च त्रिचक्रः चक्रत्रितयोपेतः । पुनः स एव विशेष्यते । येन रथेन उपयाथः उपगच्छथः[1] । किम् । सुकृतः शोभनसोमाख्यकर्मवतो यजमानस्य दुरोणम् । गृहनामैतत् । यागगृहम् । येनेत्युक्तं केनेत्याह । त्रिधातुना त्रिप्रकारस्थानोपेतेन सुवर्णरजतताम्रधातुत्रयोपेतेन वा रथेन । गमने दृष्टान्तः । विर्न पर्णैः पक्षी पक्षैर्यथा शीघ्रमप्रयत्नेन गच्छति तद्वदुक्तलक्षणेन रथेन पतथः गच्छथः ॥

सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतुमन्तानु पृक्षे ।
वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥ २ ॥

सुऽवृत् । रथः । वर्तते । यन् । अभि । क्षाम् । यत् । तिष्ठथः । क्रतुऽमन्ता । अनु । पृक्षे ।
वपुः । वपुष्या । सचताम् । इयम् । गीः । दिवः । दुहित्रा । उषसा । सचेथे इति ॥ २ ॥

हे अश्विनौ युवयोः रथः सुवृत् शोभनवर्तनः शोभनचक्रपरिभ्रमणः यन् गच्छन् क्षाम् अभि वर्तते देवयजनभूमिं प्रति गच्छति । यत् यं रथं क्रतुमन्ता संकल्पवन्तौ कर्मवन्तौ वा पृक्षे । अन्ननामैतत् । हविषि निमित्तभूते सति । अनु अधीत्यर्थे । अधि तिष्ठथः आश्रयथः । तादृशो रथो देवयजनं प्रत्यागत इत्यर्थः । अनन्तरं वपुष्या युष्मद्वपुषि हिता शरीरवर्धनी इयं गीः इदानीं क्रियमाणप्रकारा स्तुतिरूपा वाक् वपुः सचताम् । युवां च दिवः द्युलोकस्य आदित्यस्य वा दुहित्रा दुहितृस्थानीयया उषसा उषोदेवतया सचेथे यज्ञं संगच्छेथे । उषस्याश्विनयोः समानकालत्वादिति भावः ॥

आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ३ ॥

आ । तिष्ठतम् । सुऽवृतम् । यः । रथः । वाम् । अनु । व्रतानि । वर्तते । हविष्मान् ।
येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥ ३ ॥

---

1. क-ख-ज-त-फ—उपागच्छथः ।

हे अश्विनौ ᵛवां युवां ᵛसुवृतं शोभनवर्तनं रथम् ᵛआ ᵛतिष्ठतम् आश्रयतम्। ᵛयो ᵛरथः ᵛहविष्मान्। षष्ठ्यर्थे प्रथमा। हविष्मतो यजमानस्य ᵛव्रतानि कर्माणि ᵛअनु ᵛवर्तते। यद्वा। यजमानाय दत्तहविषा तद्वान्। ᵛयेन च रथेन हे ᵛनरा नेतारौ वा हे ᵛनासत्या असत्यरहितौ युवाम् ᵛइषयध्यै यज्ञं प्राप्तुमिच्छतमिति शेषः। तेन रथेन ᵛवर्तिः। गृहनामैतत्। यजमानस्य यज्ञगृहं ᵛतनयाय पुत्रलाभाय ᵛत्मने आत्मने आत्महिताय ᵛच ᵛयाथः॥

मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तम्।
अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम्॥ ४॥

मा। वाम्। वृकः। मा। वृकीः। आ। दधर्षीत्। मा। परि। वर्क्तम्। उत। मा। अति। धक्तम्।
अयम्। वाम्। भागः। निऽहितः। इयम्। गीः। दस्रौ। इमे। वाम्। निऽधयः। मधूनाम्॥४॥

हे ᵛदस्रौ शत्रूणामुपक्षपयितारावश्विनौ ᵛवां युवयोः अनुग्रहादिति शेषः। ᵛवृकः हिंसकः अरण्यश्वादिः ᵛमा ᵛदधर्षीत् माम्। तथा ᵛवृकीः वृक्यो हिंसिका अन्या अपि ᵛमा दधर्षीत्॥ वचनव्यत्ययः॥ धर्षणं मा कार्षुः। युवामेव वा मा दधर्षीदिति योज्यम्। तथा युवां ᵛमा ᵛपरि ᵛवर्क्तं परितो मा वर्जयतं माम्। ᵛउत अपि च ᵛमाति ᵛधक्तम् अस्मानतिक्रम्य अन्यस्मै मा दत्तम्। किमर्थमेवमिति उच्यते। ᵛवां युवयोरर्थाय ᵛअयं ᵛभागः भजनीयो हविरंशः ᵛनिहितः। तथा ᵛइयं च ᵛगीः स्तुतिरूपा वागपि निहितेति शेषः। हे दस्रावश्विनौ ᵛवां युवाभ्याम् ᵛइमे इमानि ᵛमधूनां सोमरसानां ᵛनिधयः निधानानि स्थापितानि॥

युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान्।
दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम्॥ ५॥

युवाम्। गोतमः। पुरुऽमीळ्हः। अत्रिः। दस्रा। हवते। अवसे। हविष्मान्।
दिशम्। न। दिष्टाम्। ऋजुयाऽइव। यन्ता। आ। मे। हवम्। नासत्या। उप। यातम्॥५॥

हे ᵛदस्रा दस्रावश्विनौ ᵛयुवां ᵛगोतमः च ᵛपुरुमीळ्हः च ᵛअत्रिः च महर्षयश्च एतेषु एकैकः ᵛहविष्मान् सन् ᵛअवसे रक्षणाय युष्मत्तर्पणाय वा ᵛहवते आह्वयति। एवमहमप्याह्वयामि। फलसाधनाह्वाने दृष्टान्तः। ᵛयन्ता उपगन्ता उपगन्तुकामः ᵛऋजूयेव॥ द्वितीयाया आकारः॥ ऋजुगामिनं मार्गज्ञं ᵛदिष्टां ᵛदिशं ᵛन गन्तव्यामभिमतां दिशं प्रति यथा तथा वामपि। यथा अध्वगामी स्वगन्तव्यस्य शीघ्रगमनाय मार्गज्ञमृजुगामिनमाह्वयति तद्वत्। यद्वा। ऋजूयेव। इवशब्द एवार्थे। गन्ता ऋजुनैव मार्गेण इष्टां दिशमिव तथा युष्मद्दीणनेन मार्गेण स्वाभिमतं फलं प्राप्नोति। हे नासत्यावश्विनौ ᵛमे मम ᵛहवम् आह्वानमालक्ष्य ᵛउप ᵛयातम् उपगच्छतम्॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

हे अश्विनौ युवयोः प्रसादात् अस्य तमसः तमनहेतोः श्रेयःप्रतिबन्धरूपस्य दुःखस्य पारं पर्यन्तभूमिम् अतारिष्म उत्तीर्णाः स्मः । हे अश्विनौ वां प्रति स्तोमः स्तोत्रम् अधायि अकारीत्यर्थः । युवां देवयानैः देवगन्तव्यैर्मार्गैः इह अस्मद्यज्ञे आ यातम् आगच्छतम् । शिष्टो व्याख्यातः ॥ ॥ २९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण[1] विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये द्वितीयाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

1. अ १—सायणामात्येन

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
द्वितीयाष्टकस्याथ चतुर्थोऽध्याय आदरात् ।
व्याख्यातः सायणार्येण पञ्चमो व्याकरिष्यते ॥

तत्र ' ता वाम् ' इतीदं प्रथममण्डलस्य चतुर्विंशेऽनुवाके पञ्चमं सूक्तम् । पूर्वसूक्ते ' षट् ' इत्युक्तत्वात् ' सूक्तसंख्यानुवर्तते ' इति परिभाषितत्वात् षड्चम् । ' ऋषिश्चान्यस्मात् ' इति परिभाषया आगस्त्यम् । तथा ' आश्विनं वै ' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमप्याश्विनम् । अनादेशपरिभाषया त्रैष्टुभम् । ' ता वाम् ' इत्यनुक्रान्तम् । ' युवो रजांसि ' इत्यादीनां पञ्च सूक्तानां तृतीयवर्जितानां प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः । तत्रेदं पञ्चमम् ॥

**ता वा॒म॒द्य ताव॑प॒रं हु॑वेमो॒च्छन्त्या॑मु॒षसि॒ वह्नि॑रु॒क्थैः ।**
**नास॑त्या॒ कुह॑ चि॒त्सन्ता॑व॒र्यो दि॒वो नपा॑ता सु॒दास्त॑राय ॥ १ ॥**

ता । वा॒म् । अ॒द्य । तौ । अ॒प॒रम् । हु॒वे॒म॒ । उ॒च्छन्त्या॑म् । उ॒षसि॑ । वह्नि॑ः । उ॒क्थैः ।
नास॑त्या । कुह॑ । चि॒त् । सन्तौ॑ । अ॒र्यः । दि॒वः । नपा॑ता । सु॒दाः॑ऽतराय ॥ १ ॥

ᵛता तौ रक्षकत्वेन प्रसिद्धौ ᵛवां युवाम् ᵛअद्य अस्मिन् यागदिने ᵛहुवेम आह्वयामः इति आशीः । तथा ᵛअपरम् अपरस्मिन्नपि दिने ᵛतौ युवां हुवेम । अपरमित्येतत् अपरस्मिन्नित्यर्थे समभिव्याहारात्, ' अद्या च नो मृळयतापरं च ' ( ऋ. सं. २. २९. २ ) इत्यादिमन्त्रान्तरे तथा दर्शनाच्च । अपरयागं प्रत्यपि इति वा । कस्मिन् काले । ᵛउषसि उषोदेवतायाम् ᵛउच्छन्त्यां तमो विवासयन्त्यां सत्याम् । उषःकाले हि प्रातरनुवाकाश्विनशस्त्रे प्रयुज्येते । उक्ते काले हे ᵛनासत्या असत्यरहितौ ᵛदिवो ᵛनपाता द्युलोकस्य नपातयितारौ नप्तृस्थानीयौ वा ᵛकुह ᵛचित् ᵛसन्तौ कुत्रचिद्देशे वर्तमानौ युवां ᵛवह्निः स्तुतेर्वोढा ᵛअर्यः ईरयिता स्तुतेरीश्वरो वा ईदृशोऽहं होता ᵛसुदास्तराय अत्यर्थं शोभनहविर्दात्रे यजमानाय तदर्थं तौ युवाम् ᵛउक्थैः शस्त्रैर्हुवेमेति संबन्धः । अत्र आख्यातं पदमेकवचनतया नेतव्यम् । वह्निरर्यशब्दौ वा बहुवचनत्वेन नेतव्यौ । अथवा वाक्यद्वयम् । यस्माद्वह्निरर्यो होता उक्तगुणकौ युवां शंसति तस्माद्वयं यजमानाः तौ युवामाह्वयामः इति ॥

**अ॒स्मे ऊ॒ षु वृ॑षणा मादयेथा॒मुत्प॒णीँर्ह॑तमू॒र्म्या मद॑न्ता ।**
**श्रु॒तं मे॒ अच्छो॑क्तिभिर्मती॒नामेष्टा॑ नरा॒ निचे॑तारा च॒ कर्णैः॑ ॥ २ ॥**

अ॒स्मे इति॑ । ऊँ इति॑ । सु । वृ॒षणा॒ । मा॒दये॑थाम् । उत् । प॒णीन् । ह॒तम् । ऊ॒र्म्या । मद॑न्ता ।
श्रु॒तम् । मे॒ । अच्छो॑क्तिऽभिः । म॒तीना॑म् । एष्टा॑ । न॒रा॒ । निऽचे॑तारा । च॒ । कर्णैः॑ ॥ २ ॥

हे ᵛवृषणा कामानां वर्षकौ अश्विनौ युवाम् ᵛअस्मे ᵛउ अस्मास्वेव ᵛसु ᵛमादयेथां सुष्ठु तृप्यतम्। अस्मभ्यं तर्पयतमभिमतम्। तथा ᵛपणीन् वणिजो लुब्धकानयष्टॄन् ᵛउत् उन्मूल्य ᵛहतं नाशयतम्। कीदृशौ युवाम्। ᵛऊर्म्या। रात्रिनामैतत्। रात्रौ ᵛमदन्ता माद्यन्तौ। यद्वा। ऊर्मिरिति सोमनाम। 'ऊर्मिर्यस्ते पवित्र आ' ( ऋ. सं. ९. ६४. ११ ) इत्यादिषु तथा प्रयोगात्। अस्मदीयेन सोमेन मदन्तौ। तादृशौ युवां ᵛमे मम ᵛअच्छोक्तिभिः आभिमुख्यकरैर्निर्मलवेदवाक्यैः रचिताः ᵛमतीनाम्॥ कर्मणि षष्ठी॥ मननसाधनाः स्तुतीः ᵛकर्णैः आकर्णनसाधनैः श्रोत्रैः ᵛश्रुतम् शृणुतम्। हे ᵛनरा नेतारौ युवां खलु ᵛएष्टा अन्वेष्टारौ अस्मत्स्तुतीनां तथा ᵛनिचेतारा लब्धानां तासां संचयकर्तारौ। निरित्येष समित्येतस्य स्थाने। यस्मादेवंविधौ तस्माच्छृणुतमिति॥

श्रि॒ये पू॑षन्निषु॒कृते॑व दे॒वा नास॑त्या वह॒तुं सू॒र्याया॑: ।
व॒च्यन्ते॑ वां ककु॒हा अ॒प्सु जा॒ता यु॒गा जू॒र्णेव॒ वरु॑णस्य॒ भूरे॑: ॥ ३ ॥

श्रि॒ये। पू॒ष॒न्। इ॒षु॒कृता॑ऽइव। दे॒वा। नास॑त्या। व॒ह॒तुम्। सू॒र्याया॑:।
व॒च्यन्ते॑। वा॒म्। क॒कु॒हा॑:। अ॒प्ऽसु। जा॒ता॑:। यु॒गा। जू॒र्णाऽइ॑व। वरु॑णस्य। भूरे॑: ॥ ३ ॥

सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमनाः देवानाहूय सामर्थ्यसमीक्षणाय आजिं परिकल्प्य यः इमं जेष्यति स एषां[1] कन्यकामृक्सहस्रक्लृप्तं स्तोत्रं च लभते इत्यकल्पयत्। तमग्निः प्रथममजयत् तमनु अश्विनावपि जित्वा अग्निं प्रतृप्य ऋक्सहस्रं कन्यकां च अलभेताम्। तत इन्द्रः उषाश्च अजयताम्। तौ च तैरग्न्यादिभिः प्रार्थितौ स्वशस्त्रस्य कंचित्कंचिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽधारयतामिति। अयमितिहासो ब्राह्मणे 'प्रजापतिर्वै सोमाय राज्ञे' ( ऐ. ब्रा. ४. ७ ) इत्यत्राम्नातोऽस्माभिः प्रथमाष्टमे 'आ वां पतित्वं सख्याय' ( ऋ. सं. १. ११९. ५ ) इत्यत्र प्रपञ्चितः। अत्राह। हे ᵛपूषन् पोषक सूर्य। एतच्चन्द्रस्याप्युपलक्षणं सूर्याचन्द्रमसोरेवाश्वित्वात्। 'सूर्याचन्द्रमसावित्येके' ( निरु. १२. १ ) इति यास्केनोक्तत्वात्। अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति। हे पोषकौ हे ᵛनासत्या असत्यरहितौ ᵛदेवा देवौ युवां ᵛश्रिये श्रेयसे शस्त्रस्य कन्यायाश्च लाभायेत्यर्थः। ᵛइषुकृतेव। इवशब्दः एवार्थे। आजिधावनाय इषुवच्छीघ्रमृजुगामिनौ कृतावेव सन्तौ ᵛसूर्यायाः एतन्नामिकायाः सवितुः पुत्र्याः॥ कर्मणि षष्ठी॥ सूर्यां ᵛवहतुं रथे धारयितुम्। आजिमुदजयतामित्यर्थः। यस्मादेवं तस्मात् ᵛअप्सु ᵛजाताः कर्मसु संपादिताः ᵛककुहाः शस्त्ररूपाः स्तुतयः ᵛभूरेः अविच्छिन्नप्रवाहस्य ᵛवरुणस्य फलप्रतिबन्धकपापनिवारकस्य यागस्य सिद्ध्यर्थं तत्संबन्धिन्यः ᵛवां प्रति ᵛवच्यन्ते होत्रादिभिः। युवामेव शस्त्रगतमन्त्रैः यागकाले च स्तुवन्तीत्यर्थः। ᵛयुगा ᵛजूर्णेव जीर्णानि युगानीव। इवशब्दः संप्रत्यर्थः। पुरातना यागकालाः यथा तद्वत् अद्यतनाः अपि इत्यर्थः। पूर्वकाले यथा युवामेव स्तुवन्ति तद्वत् इदानीमपीति तात्पर्यम्॥

---

१. क-म१-एताम्।

अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः ।
अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदन्ति ॥ ४ ॥

अस्मे इति । सा । वाम् । माध्वी इति । रातिः । अस्तु । स्तोमम् । हिनोतम् । मान्यस्य । कारोः ।
अनु । यत् । वाम् । श्रवस्या । सुदानू इति सुऽदानू । सुऽवीर्याय । चर्षणयः । मदन्ति ॥४॥

हे माध्वी मधुपूर्णपात्रयुक्तावश्विनौ वां युवयोः संबन्धिनी सा प्रसिद्धा रातिः दानम् अस्मे अस्माकम् अस्तु भवतु । तदर्थं मान्यस्य मननीयस्य[1] कारोः स्तोतुरगस्त्यस्य स्तोमं स्तुतिं हिनोतं प्रीणयतम् । हे सुदानू शोभनफलदानौ वां युवां श्रवस्या कीर्तेरन्नस्य वा इच्छया यत् यस्मात् सुवीर्याय यजमानाय शोभनबलाय वा चर्षणयः मनुष्या ऋत्विग्रूपाः अनु मदन्ति अनुक्रमेण माद्यन्ति युवाभ्यां सह स्वयं वा ॥

एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।
यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥ ५ ॥

एषः । वाम् । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति ।
यातम् । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या । मदन्ता ॥ ५ ॥

हे अश्विनौ हे मघवाना हविर्लक्षणान्नवन्तौ वां युवाभ्याम् एषः स्तोमः स्तोत्रं सुवृक्ति सुष्ठु पापवर्जनं यथा भवति तथा । यद्वा । सुष्ठु ... अकारि कृतः । कीदृशोऽयम् । मानेभिः मानैः हविष्प्रदानरूपैः सहितः । हे नासत्या असत्यरहितौ युवाम् अगस्त्ये एतन्नाम्नि महर्षौ मयि मदन्ता माद्यन्तौ सन्तौ वर्तिः गृहं यज्ञसंबन्धि यातं प्राप्नुतम् । किमर्थम् । तनयाय पुत्रादिलाभाय त्मने आत्मने च हिताय ॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥६॥

अतारिष्मेति षष्ठी व्याख्याता ॥   ॥ १ ॥

‘ कतरा पूर्वा ’ इत्येकादशर्चं षष्ठं सूक्तमागस्त्यं त्रैष्टुभम् । ‘ कतरैकादश द्यावापृथिवीयम् ’ इत्यनुक्रान्तम् । आभिप्लविके षष्ठेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमिदम् । ‘ तृतीयस्य ’

1. क-ज-झ-ञ-त—माननीयस्य ।

इति खण्डे सूत्रितं–‘ कतरा पूर्वोपासानक्तेति वैश्वदेवम् ’ ( आश्व. श्रौ. ७. ७ ) इति। महाव्रतेऽपि वैश्वदेवशस्त्रे इदमेव द्यावापृथिव्यनिविद्धानम्। ‘ उत्तमादाभिप्लविकात्तृतीयसवनम् ’ ( ऐ. आ. ५. ३. २ ) इत्यतिदेशात् ॥

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ १ ॥

कतरा। पूर्वा। कतरा। अपरा। अयोः। कथा। जाते इति। कवयः। कः। वि। वेद।
विश्वम्। त्मना। बिभृतः। यत्। ह। नाम। वि। वर्तेते इति। अहनी इति। चक्रियाऽइव ॥ १ ॥

ᵛअयोः एनयोर्द्यावापृथिव्योर्मध्ये ᵛकतरा ᵛपूर्वा पूर्वमुत्पन्ना। ᵛकतरा वा ᵛअपरा पश्चाद्भाविनी। एवं पौर्वापर्यप्रश्नः। उभयोः अविनाभावेन सहैव वर्तमानत्वादिति भावः। तथा ᵛकथा केन हेतुना ᵛजाते किमनयोरुत्पादनमित्यर्थः। हे ᵛकवयः क्रान्तदर्शिनोऽतीन्द्रियज्ञाः यूयं वदत ᵛको ᵛवि ᵛवेद पौर्वापर्यं कारणं च विशेषेण विविच्य वा जानाति। न केनापि ज्ञायते इत्यर्थः। अज्ञाने कारणमाह। ᵛयद्ध यस्मात्खलु हेतोः ᵛनाम प्रसिद्धं ᵛविश्वं कृत्स्नमपि जगत् अविशेषेण ᵛत्मना आत्मनैव अन्यनैरपेक्ष्येणैव ᵛबिभृतः धारयतः। यद्वा। यद्ध नाम यत्किंचित् पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः। अनेन यत्कारणं ब्रूमस्तदपि आभ्यामेव क्रियते इति कारणाभावः प्रतिपादितः। उत्तरेण पौर्वापर्याभाव उच्यते। ᵛअहनी एते द्यावापृथिव्यौ ᵛचक्रियेव चक्रयुक्ते इव ᵛवि ᵛवर्तेते। अत्र ‘ कतरा पूर्वा कतरापरैनयोः ’ ( निरु. ३. २२ ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते।
नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ २ ॥

भूरिम्। द्वे इति। अचरन्ती इति। चरन्तम्। पत्ऽवन्तम्। गर्भम्। अपदी इति। दधाते इति।
नित्यम्। न। सूनुम्। पित्रोः। उपऽस्थे। द्यावा। रक्षतम्। पृथिवी इति। नः। अभ्वात् ॥ २ ॥

ᵛअचरन्ती अविचले ᵛद्वे एव एते द्यावापृथिव्यौ ᵛभूरिं बहुतरं ᵛचरन्तं ᵛपद्वन्तं पादयुक्तं ᵛगर्भं गर्भवदाश्रितं कृत्स्नं प्राणिजातम् ᵛअपदी स्वयं पादरहिते ᵛदधाते धारयतः। अनयोर्मध्ये खलु सर्वं जगत् क्षेमेण वर्तते। धारणे दृष्टान्तः। ᵛपित्रोः मातापित्रोः ᵛउपस्थे उत्सङ्गे वर्तमानं ᵛनित्यं ध्रुवमात्मजं ᵛसूनुं ᵛन पुत्रमिव यथा स्नेहेन वर्धयन्तौ धारयन्तौ मातापितरौ तद्वत्। अथ प्रत्यक्षेणाह। हे ᵛद्यावा ᵛपृथिवी द्यावापृथिव्यौ। इतरेतरापेक्षया द्वित्वमुभयोः। ᵛनः अस्मान् ᵛअभ्वात् महतो भयहेतोः पापात् ᵛरक्षतं पालयतम्। यद्वा। अभ्वात् अभ्वं महत्। अत्यर्थमित्यर्थः। अभ्वमिति महन्नाम ॥ द्वन्द्वे कृतद्यावादेशस्य द्यावापृथिवीशब्दस्य मध्ये रक्षतम् इति पदप्रयोगश्छान्दसः। आमन्त्रितस्याविद्यमानत्वेन निघाताभावः ॥

अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।
तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ३ ॥

अनेहः । दात्रम् । अदितेः । अनर्वम् । हुवे । स्वःऽवत् । अवधम् । नमस्वत् ।
तत् । रोदसी इति । जनयतम् । जरित्रे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥३॥

अदितेः । एतदन्तरिक्षस्याप्युपलक्षणम् । अखण्डनीयायाः पृथिव्याः तादृशस्यान्तरिक्षस्य च संबन्धि दात्रं धनं हुवे आह्वयामि स्पृहयामीत्यर्थः । कीदृशं तद्धनम् । अनेहः अपापं दुःखरहितं सुखात्मकम् अनर्वम् अनरणम् अक्षीणमित्यर्थः । स्वर्वत् सर्वतः फलभूतेन स्वर्गेण तद्वत् अवधम् अहिंसितं नमस्वत् अन्नवत् । ईदृशं धनं हुवे । तत् अस्माभिः काङ्क्षितमुक्तलक्षणं धनं हे रोदसी द्यावापृथिव्यौ जरित्रे स्तोत्रे यजमानाय जनयतम् उत्पादयतम् । द्यावेत्यादि व्याख्यातम् ॥

अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे ।
उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ४ ॥

अतप्यमाने इति । अवसा । अवन्ती इति । अनु । स्याम । रोदसी इति । देवपुत्रे इति देवऽपुत्रे ।
उभे इति । देवानाम् । उभयेभिः । अह्नाम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥४॥

अवसा स्वतोऽधिकेन केनचित् कृतेन अवनेन समृद्ध्या अतप्यमाने अनीश्वरे ॥ तपेः ऐश्वर्यकर्मणः इदं रूपम् ॥ अतप्यमाने[1] अन्यैरपीड्यमाने । अवसा अन्नेन अवन्ती तर्पयन्त्यौ देवपुत्रे देवाः व्यवहर्तारो मनुष्याः पुत्रस्थानीयाः ययोस्तादृश्यौ । लोकद्वयस्थाः मनुष्याश्च देवाश्च तदुपजीव्यत्वात् पुत्राः इत्युच्यन्ते । ईदृशौ उभे रोदसी द्यावापृथिव्यौ देवानाम् अह्नाम् । एतद्रात्रेरप्युपलक्षणम् । द्योतमानानाम् अह्नां रात्रीणां च संबन्धिभिः उभयविधैः शीतोष्णादिरूपैः विलक्षणैः धनैः[2] निमित्तभूतैः । तेषां लाभायेत्यर्थः । तदर्थं युवाम् अनु स्याम अनुभवेम । शिष्टो व्याख्यातः ॥

संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे ।
अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ५ ॥

संगच्छमाने इति सम्ऽगच्छमाने । युवती इति । समन्ते इति सम्ऽअन्ते ।
स्वसारा । जामी इति । पित्रोः । उपऽस्थे ॥ अभिजिघ्रन्ती इत्यभिऽजिघ्रन्ती ।
भुवनस्य । नाभिम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ५ ॥

---

१. झ-झ१—यद्वा अतप्यमाने । २. झ१—धर्मैः ।

ᐯसंगच्छमाने परस्परमुपकारित्वेन[1] सह युज्यमाने। वृष्टिहविषोश्च परस्परमुपकार्योपकारकभावः। यद्वा। पूर्वं संसृष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वन्त्यौ पश्चात् मनुष्यैः प्रार्थितैर्देवैः विवाहिते सत्यौ संगते अभूतामित्याहुः। अयमर्थः 'द्यावापृथिवी सहास्ताम्' ( तै. ब्रा. १. १. ३. २ ) इत्यादिब्राह्मणे समाम्नातः। ᐯयुवती नित्यतरुण्यौ मिश्रयन्त्यौ वा सर्वेषु भावेषु ᐯसमन्ते समानान्तिके समानपर्यन्ते वा ᐯस्वसारा परस्परं स्वसृभूते ᐯजामी बन्धुभूते। प्रजापतेः सकाशात् सहोत्पन्नत्वात् परस्परं जामित्वम्। तथा च निगमौ–' दिवं च पृथिवीं चान्तरिक्षमथो स्वः' ( ऋ. सं. १०. १९०. ३ ) 'यतो द्यावापृथिवी निष्टतक्षुः' ( ऋ. सं. १०·३१. ७ ) इति। ᐯपित्रोः सर्वस्य पितृस्थानीययोः पालकयोस्तयोः ᐯउपस्थे उत्सङ्गे स्थितं ᐯभुवनस्य भूतजातस्य ᐯनाभिं बन्धकमुदकम् ᐯअभिजिघ्रन्ती अभिघ्राणं कुर्वन्त्यौ स्पृशन्त्यौ। 'समानमेतदुदकम्' ( ऋ. सं. १. १६४. ५१ ) इत्यादिमन्त्रवर्णात् उभयोरुदकप्रदत्वं प्रसिद्धम्। ईदृश्यौ ᐯनः ᐯरक्षतम्॥ ॥ २ ॥

उ॒र्वी सद्म॑नी बृह॒ती ऋ॒तेन॑ हु॒वे दे॒वाना॒मव॑सा॒ जनि॑त्री।
द॒धा॒ते॒ ये अ॒मृतं॑ सु॒प्रती॑के॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥ ६॥

उ॒र्वी इति॑। सद्म॑नी॒ इति॑। बृ॒ह॒ती इति॑। ऋ॒तेन॑। हु॒वे। दे॒वाना॑म्। अव॑सा। जनि॑त्री॒ इति॑।
द॒धा॒ते॒ इति॑। ये इति॑। अ॒मृत॑म्। सु॒प्रती॑के॒ इति॑ सु॒ऽप्रती॑के।
द्यावा॑। रक्ष॑तम्। पृ॒थि॒वि॒ इति॑। नः॒। अभ्वा॑त्॥ ६॥

ᐯउर्वी विस्तीर्णे ᐯसद्मनी सदनाधारभूते ᐯबृहती महत्यौ महानुभावे ᐯदेवानाम्। उपलक्षणमेतत्। देवमनुष्यादीनाम् ᐯअवसा प्रीत्या निमित्तेन ᐯजनित्री वृष्टिसस्ययोर्जनित्र्यौ। वृष्ट्यादेर्देवानामवसा तर्पणेन निमित्तेन ᐯऋतेन यज्ञेन च निमित्तभूतेन ᐯहुवे आह्वयामि। देवानां हविरर्थम् अस्मद्यज्ञायेत्यर्थः। ᐯये ᐯसुप्रतीके शोभनरूपे ᐯअमृतम् उदकं ᐯदधाते धारयतः ते युवामाह्वयामि। शिष्टं स्पष्टम्॥

उ॒र्वी पृ॒थ्वी ब॑हु॒ले दू॒रेअ॑न्ते॒ उप॑ ब्रुवे॒ नम॑सा य॒ज्ञे अ॒स्मिन्।
द॒धा॒ते॒ ये सु॒भगे॑ सु॒प्रतू॑र्ती॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥ ७॥

उ॒र्वी इति॑। पृ॒थ्वी इति॑। ब॒हु॒ले इति॑। दू॒रेअ॑न्ते॒ इति॑ दू॒रेऽअ॑न्ते। उप॑। ब्रु॒वे॒। नम॑सा। य॒ज्ञे। अ॒स्मिन्।
द॒धा॒ते॒ इति॑। ये इति॑। सु॒भगे॒ इति॑ सु॒ऽभगे॑। सु॒प्रतू॑र्ती॒ इति॑ सु॒ऽप्रतू॑र्ती।
द्यावा॑। रक्ष॑तम्। पृ॒थि॒वि॒ इति॑। नः॒। अभ्वा॑त्॥ ७॥

ᐯउर्वी उर्व्यौ महत्यौ ᐯपृथ्वी पृथिव्यौ ᐯबहुले अनेकप्रकारेण प्रथमाने बह्वाकारे ᐯदूरेअन्ते विप्रकृष्टान्तदेशे अपारे इत्यर्थः। ईदृश्यौ युवाम् ᐯअस्मिन् ᐯयज्ञे ᐯनमसा नमःसाधनेन स्तोत्रेण

१. क-ख१-परस्परमुपकार्योपकारकत्वेन।

उप ब्रुवे उपेत्य ब्रवीमि स्तौमीत्यर्थः । पुनः कीदृश्यौ । ये सुभगे शोभनभाग्ये सुप्रतूर्ती सुप्रतरणे शोभनदाने दधाते विश्वं जगत् ते युवाम् उप ब्रुवे स्तौमि ॥

देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ८ ॥

देवान् । वा । यत् । चकृम । कत् । चित् । आगः । सखायम् । वा । सदम् । इत् । जाःपतिम् । वा ।
इयम् । धीः । भूयाः । अवऽयानम् । एषाम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ८ ॥

हे द्यावापृथिव्यौ वयं देवान् देवान् प्रति यत् कच्चित् आगः अपराधं तत्तद्यागकाले तेषां-तेषाम् अयागलक्षणं सदमित् सर्वदेव चकृम कृतवन्तो वयम् । सखायं वा प्रियं मित्रं वा प्रति यच्चकृम । जास्पतिम् । जाः पुत्र्यः । तासां पतिं जामातरं वा जायापतिं प्रति दोषारोपणकलहोत्पाद-नादिरूपं यत्सर्वदेव चकृम । एषाम् उक्तरूपाणां पापानाम् अपगमं कर्तुम् इयं धीः युष्मत्स्तुति-रूपम् इदं कर्म भूयाः भूयात् भवतु । द्यावेत्यादि गतम् । अत्र सर्वत्र प्रकारान्तरेण मन्त्रमन्तरेण[1] रक्षतं रक्षतमिति प्रार्थनं तयोः अश्विन्यादिवद्बहुमननासंभवात्[2] उचितमेव । तस्मात् स्वस्थाने एवं स्थिते अनुकूले भवतमित्येवं प्रार्थ्यते ॥

उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।
भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥ ९ ॥

उभा । शंसा । नर्या । माम् । अविष्टाम् । उभे इति । माम् । ऊती इति । अवसा । सचेताम् ।
भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदन्तः । इषयेम । देवाः ॥ ९ ॥

उभा शंसा द्यावापृथिव्योरुभयोः विषयौ उभावपि शंसौ नर्या नरेभ्यो हितौ ईदृश्यौ उभयाश्रये स्तुती माम् अविष्टां रक्षताम् । यद्वा । द्यावापृथिव्यभिमानिदेवयोरेव शंसशब्देन अभि-धानात् पुंलिङ्गता । तथा उभे ऊती रक्षिके द्यावापृथिव्यौ माम् अवसा रक्षणेन सचेताम् । यद्वा । प्राणिभ्यो हितकरौ उभौ ऐहिकामुष्मिकविषयौ शंसौ माम् अविष्टां प्राप्नुताम् । तथा उभे अपि ऊती तयोः संबन्धिन्योरभिमानिदेवतयोः अवसा अस्मत्तर्पणेन निमित्तेन सचेताम् । हे देवाः द्यावा-पृथिव्योरन्तर्भूताः सर्वेऽपि देवाः अर्यः स्तोतारो वयं सुदास्तराय अतिशयेन शोभनदातृत्वाय इषा अन्नेन सोमलक्षणेन मदन्तः मादयन्तः सन्तः भूरि चित् । चित् पूजायाम् । अभिपूजितं धनम् इषयेम इच्छेम । यद्वा । अर्यः इति षष्ठ्या रूपम् । ईश्वराद्राजादेरपि सुदास्त-रायेत्यर्थः । शिष्टं समानम् ॥

'ऋतं दिवे' इति द्वे द्यावापृथिवीये पशौ पुरोडाशहविषोः अनुवाक्ये । 'अग्नीषोमौ' इति खण्डे सूत्रितम्—'ऋतं दिवे तदवोचं पृथिव्या इति द्वे' ( आश्व. श्रौ. ३. ८ ) इति ॥

---

१. अ–' मन्त्रमन्तरेण ' नास्ति । २. क१–अश्विन्यादिवद्वेन संभवात् ।

ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्यादुरितादभीके पिता माता च रक्षतामवोभिः ॥ १० ॥
ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै । अभिऽश्रावाय । प्रथमम् । सुऽमेधाः ।
पाताम् । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षताम् । अवःऽभिः ॥१०॥

^v^सुमेधाः शोभनप्रज्ञोऽहं ^v^दिवे द्युदेवतायै ^v^पृथिव्यै पृथिवीदेवतायै ^v^तत् तत्प्रीतिकरम् ^v^ऋतं स्तोत्रं ^v^प्रथमम् । मुख्यनामैतत् । प्रतमं प्रकृष्टतमम् ^v^अवोचं ब्रवीमि । किमर्थम् । ^v^अभिश्रावाय अभितः सर्वतः श्रवणाय । किंच ^v^पिता पालको द्युलोकः ^v^माता सस्यादेर्निर्मात्री पृथिवी ^v^च उभे ^v^अवद्यात् निन्दितात्[1] दुःखप्रापकात् अंहसः सकाशात् ^v^पातां रक्षताम् । तथा ^v^अभीके । अन्तिकनामैतत् । समीपे एव ^v^अवोभिः अभिमततर्पणैः ^v^रक्षतां पालयताम् ॥

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥
इदम् । द्यावापृथिवी इति । सत्यम् । अस्तु । पितरिति । मातः । यत् । इह । उपऽब्रुवे । वाम् ।
भूतम् । देवानाम् । अवमे इति । अवःऽभिः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

हे ^v^द्यावापृथिवी द्यावापृथिव्यौ ^v^इदम् अस्माभिः क्रियमाणं स्तोत्रं ^v^सत्यमस्तु अवितथं भवतु फलवद्भवत्वित्यर्थः । इदमित्युक्तं किं तदित्याह । हे ^v^पितः द्यौः हे ^v^मातः पृथिवि ^v^वां युवां प्रति ^v^इह अस्मिन् यज्ञे ^v^यत् स्तोत्रम् ^v^उपब्रुवे उपेत्य ब्रवीमि तत्सत्यमस्तु । ^v^देवानां स्तोतॄणामस्माकम् ^v^अवमे । अन्तिकनामैतत् । नित्यसंनिहिते युवाम् ^v^अवोभिः तर्पणैर्युक्ते ^v^भूतं भवतम् । अवशिष्टं गतम् ॥ ॥ ३ ॥

' आ न इळाभिः ' इति सप्तमं सूक्तमेकादशर्चमागस्त्यं त्रैष्टुभं वैश्वदेवम् । ' आ नो वैश्वदेवम् ' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु ।
अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ १ ॥
आ । नः । इळाभिः । विदथे । सुऽशस्ति । विश्वानरः । सविता । देवः । एतु ।
अपि । यथा । युवानः । मत्सथ । नः । विश्वम् । जगत् । अभिऽपित्वे । मनीषा ॥ १ ॥

^v^नः ^v^विदथे अस्मदीये यज्ञे ^v^सुशस्ति ॥ सुपां लुक् ॥ सुशस्तिभिः शोभनशंसनैः स्तुतिभिः प्रदेयैः रत्नैः सह । यद्वा । ^v^इळाभिः । तदाश्रितेषु ताच्छब्द्यम् । भूमिस्थानाभिर्देवताभिः सह । ^v^विश्वानरः

1. क1–निन्दिताद्दुरितात् ।

सर्वप्राणिहितकार्यैरग्निः ᵛसविता प्रेरक आदित्यश्च ᵛदेवः ᵛएतु[1] आगच्छतु। हे ᵛयुवानः नित्य-तरुणा यज्ञस्य मिश्रयितारो वा यूयं ᵛनः अस्मान् ᵛअभिपित्वे अभिपतनीयेऽस्मद्यज्ञे ᵛमनीषा मनीषया मनसः ईशितृत्वेन स्वेच्छयेत्यर्थः। अपिः संभावनायाम्। ᵛअपि अस्मान् ᵛमत्सथ मादयथ। ᵛयथा ᵛविश्वं ᵛजगत्। एतत्स्थावरस्याप्युपलक्षणम्। यद्वा कृत्स्नं प्रपञ्चं मत्सथ तथा अस्मानपि। यद्वा। जगच्छब्दो यजमानरूपमनुष्यवाची। सर्वानपि यजमानान् यथा मत्सथ तथेत्यर्थः॥

वैश्वदेवे पशौ 'आ नो विश्वे' इत्येषा हविषः पुरोनुवाक्या। 'आ नो देवानामुपवेतु शंस आ नो विश्व आस्का गमन्तु देवाः' (आश्व. श्रौ. ३. ७) इति॥

आ नो विश्व आस्क्रा गमन्तु देवा मित्रो अर्यमा वरुणः सजोषाः।
भुवन्यथा नो विश्वे वृधासः करन्त्सुषाहा विथुरं न शवः॥ २॥

आ। नः। विश्वे। आस्क्राः। गमन्तु। देवाः। मित्रः। अर्यमा। वरुणः। सऽजोषाः।
भुवन्। यथा। नः। विश्वे। वृधासः। करन्। सुऽसहा। विथुरम्। न। शवः॥ २॥

ᵛनः अस्माकं यज्ञं ᵛविश्वे सर्वे ᵛदेवाः ᵛआस्क्राः शत्रूणामास्कन्दयितारः आक्रमितारो वा ᵛआ ᵛगमन्तु आगच्छन्तु। के ते। ᵛमित्रो ᵛअर्यमा ᵛवरुणः च त्रयोऽपि ᵛसजोषाः समानप्रीतयः सन्तः आगच्छन्तु। किंतु ᵛविश्वे देवाः ᵛनः अस्माकं ᵛवृधासः वर्धयितारः ᵛयथा ᵛभुवन् भवेयुः तथा ᵛसुषाहा सुष्ठु शत्रूणामभिभवेन नोऽस्मदीयं ᵛशवः अन्नं ᵛविथुरं हीनं यथा ᵛन ᵛकरन् न कुर्युः तथा आगच्छन्तु॥

प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः।
असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः॥ ३॥

प्रेष्ठम्। वः। अतिथिम्। गृणीषे। अग्निम्। शस्तिऽभिः। तुर्वणिः। सऽजोषाः।
असत्। यथा। नः। वरुणः। सुऽकीर्तिः। इषः। च। पर्षत्। अरिऽगूर्तः। सूरिः॥३॥

हे देवाः ᵛवः युष्माकं ᵛप्रेष्ठं प्रियतमम्। सर्वेषामाह्वातृत्वाद्धविर्वहनाच्च अग्निः देवानां प्रियतमः। तम् ᵛअतिथिं ᵛगृणीषे गृणे स्तौमि॥ व्यत्ययेन मध्यमः॥ केन साधनेन। ᵛशस्तिभिः शंसनैः स्तुतिभिः। कीदृशोऽहम्। ᵛतुर्वणिः तूर्णवनिः शीघ्रं संभक्ता ᵛसजोषाः युष्माभिः सह प्रीयमाणः। यद्वा। एते अग्निविशेषणे। यः तुर्वणिः शीघ्रं यज्ञस्य संभक्ता सजोषा युष्माभिः सह प्रीयमाणः तम् ᵛअग्निं गृणीषे। ᵛयथा येन प्रकारेण ᵛनः अस्माकं ᵛवरुणः एतन्नामको देवः ᵛसुकीर्तिः शोभनकीर्तिमान् ᵛअसत्। 'सुकीर्तिं भिक्षे वरुणस्य भूरेः' (ऋ.सं. २. २८. १) इत्यादिमन्त्रवर्णेषु वरुणात् सुकीर्तिरेव एषणीया। ᵛअरिगूर्तः अरिषु अदातृषु सदा शब्दितः अरीणां हननाय उद्युक्तो वा ᵛसूरिः प्रेरयिता अयं वरुणः ᵛइषश्च अन्नानि ᵛपर्षत् पूरयेत्। तथा तमपि स्तुम इत्यर्थः॥

---

१. ज–ऐतु।

**उप॑ व॒ एषे॒ नम॑सा जिगी॒षोषा॒सान॒क्ता॑ सु॒दुघे॑व धे॒नुः ।**

**स॒मा॒ने अह॑न्वि॒मिमा॑नो अ॒र्कं विषु॑रूपे॒ पय॑सि॒ सस्मि॒न्नूध॑न् ॥ ४ ॥**

उप॑ । व॒ः । आ । ई॒षे॒ । नम॑सा । जिगी॒षा । उ॒षसा॒नक्ता॑ । सु॒दुघा॑ऽइव । धे॒नुः ।

स॒मा॒ने । अह॑न् । वि॒ऽमिमा॑नः । अ॒र्कम् । विषु॑ऽरूपे । पय॑सि । सस्मि॑न् । ऊध॑न् ॥ ४ ॥

हे देवाः vवः युष्माकं vनमसा हविषा नमस्कारेण वा vउप उपेत्य vजिगीषा पापानां जिगीषया vएषे इच्छामि ॥ ‘ इष गतौ ’ इत्यस्य वा ईषतेर्वा गत्याद्यर्थस्य लिटि उत्तमैकवचने इदं रूपम् ॥ भजामि । कस्मिन् काले । vउषासानक्ता अहनि रात्रौ च । यद्वा । अहोरात्रदेवते अपि अभिगच्छामि । गतौ दृष्टान्तः । vसुदुघा vधेनुः vइव सुदोग्ध्री धेनुः यथा दोहाय दोग्धुः गृहमागच्छति तद्वत् । किं कुर्वन् । vसस्मिन् समाने vऊधन् ऊधस्युत्पन्ने vविषुरूपे नानारूपे vपयसि क्षीरघृतादिके vअर्कम् अर्चनीयमन्नं चरुपुरोडाशादिकं vविमिमानः विविधं मिमानः । कस्मिन् काले । vसमाने vअहन् षष्ठेऽहनि । एकस्मिन्नेवाहनि सर्वदैव वा इत्यर्थः । एकस्मिन्नेवाहनि समाने ऊधस्युत्पन्ने नानारूपे पयसि त्वदर्थं हविर्मिमान उपगच्छामीत्यर्थः । यद्वा । सस्मिन् सर्वस्मिन्नूधसि फलाख्यक्षीरो-त्पादके यज्ञे निमित्तभूते सति विषुरूपे पयसि नानारूपे सोमलक्षणोदके अर्कमन्त्रसाधनं स्तोत्रं विमिमानोऽहं युष्मानभिगच्छामि ॥

**उ॒त नो॒ऽहिर्बु॒ध्न्यो॒३॒॑ मय॑स्कः॒ शिशुं॒ न पि॒प्युषी॑व वेति॒ सिन्धुः॑ ।**

**येन॒ नपा॑तम॒पां जु॒नाम॑ मनो॒जुवो॒ वृष॑णो॒ यं वह॑न्ति ॥ ५ ॥**

उ॒त । न॒ः । अहि॑ः । बु॒ध्न्य॑ः । मय॑ः । क॒रिति॑ कः । शिशु॑म् । न । पि॒प्युषी॑ऽइव । वे॒ति॒ । सिन्धु॑ः ।

येन॑ । नपा॑तम् । अ॒पाम् । जु॒नाम॑ । म॒न॒ःऽजुव॑ः । वृष॑णः । यम् । वह॑न्ति ॥ ५ ॥

vउत अपि च vनः अस्माकम् vअहिः अन्तरिक्षगामी अहन्ता वा अहीनो वा अहन्यमानो वा एतन्नामको देवः स एव vबुध्न्यः । बुध्नं बन्धकमन्तरिक्षम् । तदर्हतीति बुध्न्यः अन्तरिक्षचारी एतन्नामको देवः vमयः सुखं vकः करोतु ॥ करोतेर्लुङि रूपम् ॥ किंच vपिप्युषी । इवशब्दः एवार्थः पूरणो वा । अस्मान् रसेन आप्याययन्ती vसिन्धुः नाम नदी वेतु[1] आगच्छतु । तत्र दृष्टान्तः । vशिशुं vन यथा शिशुं प्याययन्ती गौर्गच्छति तद्वत् । vअपां vनपातम् उदकानामपातयितारं वर्षकमेतन्नामकं यद्वा उद-कानां नप्तारं तृतीयं पुत्रम् । अद्भ्यः ओषधिवनस्पतयः तेभ्योऽग्निरिति नप्तृत्वम् । तादृशमग्निं vजुनाम स्तुतिभिः संगच्छेम ॥ जु इति सौत्रो धातुर्गत्यर्थः ॥ vयं देवं vमनोजुवः मनोवेगाः vवृषणः वर्षका मेघा अश्वाः vवहन्ति स सुखं करोतु ॥ ॥ ४ ॥

---

१. क्ष१–वेति ।

उत न॑ ई॒ं त्वष्टा ग॒न्त्वच्छा॒ स्मत्सू॒रिभि॑रभिपि॒त्वे स॒जोषा॑ः ।
आ वृ॑त्र॒हेन्द्र॑श्चर्षणि॒प्रास्तु॑वि॒ष्टमो॑ न॒रां न॑ इ॒ह ग॑म्याः ॥ ६ ॥

उ॒त । न॒ः । ई॒म् । त्वष्टा॑ । आ । ग॒न्तु॒ । अच्छ॑ । स्मत् । सू॒रिऽभि॑ः । अ॒भि॒ऽपि॒त्वे । स॒ऽजोषा॑ः ।
आ । वृ॒त्र॒ऽहा । इन्द्र॑ः । च॒र्ष॒णि॒ऽप्राः । तु॒वि॒ःऽत॑मः । न॒राम् । न॒ः । इ॒ह । ग॒म्या॒ः ॥ ६ ॥

ᵛत्वष्टा देवोऽपि ᵛनः अस्मान् ᵛअच्छ अभिप्राप्तुम् ᵛईम् इदानीम् इमं यज्ञं वा ᵛआ ᵛगन्तु[1] । आगत्य च । ᵛस्मत् सहार्थे प्राशस्त्ये वा वर्तते । अत्र प्रशंसायाम् । प्रशस्तं यथा तथा ᵛअभिपित्वे अभिगन्तव्ये यज्ञे निमित्तभूते सति ᵛसूरिभिः स्तोतृभिर्ऋत्विग्भिः ᵛसजोषाः समानप्रीतिर्भवत्विति शेषः । तथा ᵛवृत्रहा वृत्रघाती ᵛचर्षणिप्राः । चर्षणयो मनुष्या यजमानाः । कामैः तेषां पूरकः । ᵛतुविष्टमः बहुतमो महत्तमः ᵛइह अस्मिन् कर्मणि ᵛनरां नृणां ᵛनः अस्माकम् उक्तगुणोपेतः सन् ᵛआ ᵛगम्याः आगच्छतु ॥

उ॒त न॑ ईं म॒तयोऽश्व॑योगा॒ः शिशुं॒ न गाव॒स्तरु॑णं रिहन्ति ।
तमीं॒ गिरो॒ जन॑यो॒ न पत्नी॑ः सुर॒भिष्ट॑मं न॒रां न॑सन्त ॥ ७ ॥

उ॒त । न॒ः । ई॒म् । म॒तय॑ः । अश्व॑ऽयोगाः । शिशु॑म् । न । गाव॑ः । तरु॑णम् । रि॒हन्ति॑ ।
तम् । ई॒म् । गिर॑ः । जन॑यः । न । पत्नी॑ः । सु॒र॒भिःऽत॑मम् । न॒राम् । न॒स॒न्त॒ ॥ ७ ॥

ᵛउत अपि च ᵛईम् एनं ᵛतरुणं नित्ययुवानमिन्द्रं ᵛमतयः अस्मद्बुद्धयः ᵛअश्वयोगाः अश्वमानप्रापयः ᵛरिहन्ति आस्वादयन्ति स्तुवन्तीत्यर्थः । तत्र दृष्टान्तः । ᵛगावः दोग्ध्र्यो धेनवः ᵛशिशुं ᵛन शिशुमिव वत्समिव तं यथा लिहन्ति तद्वत् । तदेवाह । ᵛतमीं तमेवैनं ᵛनरां नराणां यजमानानां ᵛसुरभिष्टमम् अतिशयेन सुरभिं ᵛजनयः फलस्योत्पादयित्र्यः ᵛगिरः स्तुतयः ᵛनसन्त व्याप्नुवन्ति । नसतिर्व्याप्तिकर्मा । तत्र दृष्टान्तः । ᵛजनयः ᵛन उत्पादयित्र्यः ᵛपत्नीः पत्न्यः पतिमिव ॥

उ॒त न॑ ईं म॒रुतो॑ वृ॒द्धसे॑नाः॒ स्मद्रोद॑सी॒ सम॑नसः सदन्तु ।
पृष॑दश्वासो॒ऽवन॑यो॒ न रथा॑ रि॒शाद॑सो मित्र॒युजो॒ न दे॒वाः ॥ ८ ॥

उ॒त । न॒ः । ई॒म् । म॒रुत॑ः । वृ॒द्धऽसे॑नाः । स्मत् । रोद॑सी॒ इति॑ । सऽम॑नसः । स॒द॒न्तु॒ ।
पृष॑त्ऽअश्वासः । अ॒वन॑यः । न । रथा॑ः । रि॒शाद॑सः । मि॒त्र॒ऽयुज॑ः । न । दे॒वाः ॥ ८ ॥

ᵛउत अपि च ᵛनः अस्मदीयम् ᵛईम् इदानीम् एनं यागं वा ᵛमरुतः ᵛस्मत् सह अपि ᵛसदन्तु गच्छन्तु । कुतो देशात् । ᵛरोदसी रोदस्योर्द्यावापृथिव्योः सकाशात् । यद्वा । रोदस्यावपि गच्छताम् ।

---

1. क-क्ष-क्ष१—गन्तु आगच्छतु ।

कीदृशास्ते मरुतः । ᵛवृद्धसेनाः प्रवृद्धबलाः ᵛसमनसः समानमनस्काः ᵛपृषदश्वासः पृषद्वर्णाश्वाः । ‘ पृषत्यो मरुताम् ’ ( नि. १. १५. ६ ) इति यास्कः । ᵛअवनयो ᵛन यथैव नमनस्वभावाः ᵛरथाः रंहणस्वभावा रथवन्तो वा ॥ मत्वर्थो लुप्यते ॥ यद्वा । अवनयो रक्षका रथा इव स्थिताः । ᵛरिशादसः । रिशाः शत्रवः । तेषाम् अत्तारः ᵛमित्रयुजः ᵛदेवाः ᵛन मैत्रीयुक्ता व्यवहर्तारः ऋत्विज इव । यद्वा । मैत्रीयुक्ता अन्ये देवा यथा गच्छन्ति तद्वत् ॥

प्र नु यदेषां महिना चिकित्रे प्र युञ्जते प्रयुजस्ते सुवृक्ति ।

अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः ॥ ९ ॥

प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते । प्रऽयुजः । ते । सुऽवृक्ति ।

अध । यत् । एषाम । सुऽदिने । न । शरुः । विश्वम् । आ । इरिणम् । प्रुषायन्त । सेनाः ॥९॥

ᵛएषां मरुतां ᵛमहिना महिमा वृष्टिलक्षणः ᵛयत् यस्मात् ᵛप्र ᵛचिकित्रे प्रज्ञायते । यद्वा । एषां महत्त्वेन युक्ता नराः चिकित्रे जानन्त्यनुष्ठेयम् । ᵛनु इति पूरणः । ततः ᵛते ज्ञातारः ᵛसुवृक्ति ॥ सुपो लुक् ॥ सुष्टुतीनां ᵛप्रयुजः प्रयोगान् ᵛप्र ᵛयुञ्जते । ᵛअध अथ प्रयोगानन्तरं ᵛयत् यस्मात् ᵛएषां ᵛसेनाः वृष्ट्युत्पादकाः ᵛविश्वं सर्वं भुवनम् ᵛइरिणम् ऊपरप्रदेशं यथा तथा सर्वतः ᵛप्रुषायन्त उत्पादयन्ति । तत्र दृष्टान्तः । ᵛसुदिने मेघावरणादिरहिते दिने ᵛशरुः अन्धकारहिंसकः प्रकाश इव । स यथा सर्वमावृणोति तथा मरुत्सेना वृष्ट्या[1] सर्वम् ऊपरं करोति । यद्वा । मरुन्महिमा वृष्टिर्भवति । तदा सस्यादिसमृद्धौ सत्यां प्रयोगं कुर्वन्ति । यदा यजन्ति तदा मरुत्सेनाः सर्वां महीमुन्दन्तीत्येवं महानुभावा मरुत इति तेषां स्तुतिः ॥

प्रो अश्विनावसे कृणुध्वं प्र पूषणं स्वतवसो हि सन्ति ।

अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥ १० ॥

प्रो इति । अश्विनौ । अवसे । कृणुध्वम् । प्र । पूषणम् । स्वऽतवसः । हि । सन्ति ।

अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ । सुम्नाय । ववृतीय । देवान् ॥ १० ॥

हे ऋत्विजः ᵛअश्विनौ एतन्नामकौ देवावुद्दिश्य ᵛअवसे अस्मद्रक्षणाय ᵛप्रो ᵛकृणुध्वं स्तुतिं प्रकर्षेण कुणुध्वम् । ᵛपूषणं पोषकम् एतन्नामकं देवमपि अवसे प्रकर्षेण स्तुतिं कृणुध्वम् । किंच ये ᵛस्वतवसः स्वायत्तबलाः ᵛसन्ति तानपि प्र कृणुध्वम् । के ते । ᵛअद्वेषः द्वेषरहितः ᵛविष्णुः व्यापः एतन्नामको देवः । प्रथममनाहूतोऽपि न कुप्यतीति वक्तुम् अद्वेषः इत्युक्तम् । तथा ᵛवातः सर्वत्र संचारी वायुः ᵛऋभुक्षाः पतिरिन्द्रश्च । एतानपि प्र कृणुध्वम् । अतोऽहं स्वायत्तबलान् सर्वानपि ᵛदेवान् ᵛसुम्नाय सुखाय ᵛअच्छ आभिमुख्येन ᵛववृतीय स्तोत्रैः अभिवर्तयेयम् ॥

---

१. झ-ञ-क्ष१–अवृष्ट्या ।

इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।
नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥

इयम् । सा । वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी । च । सदनी । च । भूयाः ।
नि । या । देवेषु । यतते । वसुऽयुः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

हे यजत्राः यष्टव्या देवाः वः युष्मत्संबन्धिनी सा इयं प्रसिद्धा दीधितिः दीप्तिः अस्मे अस्माकम् अपिप्राणी सर्वदा चेष्टयित्री सदनी च निवासवती च भूयाः भूयात् भवतु । या दीधितिः वसूयुः वसुमती देवेषु नि यतते नियमेन प्रयत्नं करोति । तानपि प्रकाशितुं सैव भूयात् । विद्याम इति गतः ॥ ॥ ५ ॥

' पितुं नु ' इत्येकादशर्चमष्टमं सूक्तमागस्त्यमन्नदेवताकं गायत्रम् । आद्या अनुष्टुब्गर्भोष्णिक् । ' आद्यः पञ्चकत्रयोऽष्टका अनुष्टुब्गर्भा ' ( अनु. ५. ७ ) इत्युक्तत्वात् । तृतीया पञ्चमी षष्ठी सप्तम्येकादशी च इति पञ्चानुष्टुभः । तथा च अनुक्रमणिका--' पितुं न्वन्नस्तुतिर्गायत्रं त्वाद्यानुष्टुब्गर्भा तृतीयान्त्ये पञ्चम्याद्याश्च तिस्रोऽनुष्टुभः ' इति । विनियोगं शौनक आह-' पितुं न्वित्युपतिष्ठेत नित्यमन्नमुपस्थितम् । पूजयेदशनं नित्यं भुञ्जीत[1] ह्यविकुत्सयन्[1] ॥ नास्य स्यादन्नजो व्याधिर्विषमप्यमृतं भवेत् । विषं च पीत्वैतत्सूक्तं जपेद्विषविनाशनम् ॥ नावाग्यतस्तु भुञ्जीत नाशुचिर्न जुगुप्सितम् । दद्याच्च पूजयेच्चैव जुहुयाच्च हविस्तदा । क्षुद्भयं नास्य किंचित्स्यान्नान्नजं व्याधिमाप्नुयात् ' ( ऋग्वि. १. १४८-१५१ ) इति ॥

पितुं नु स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ १ ॥

पितुम् । नु । स्तोषम् । महः । धर्माणम् । तविषीम् ।
यस्य । त्रितः । वि । ओजसा । वृत्रम् । विऽपर्वम् । अर्दयत् ॥ १ ॥

अहमगस्त्यः नु क्षिप्रं पितुं पालकमन्नं स्तोषं स्तौमि । महः महान्तं धर्माणं सर्वस्य धारकं तविषीं बलात्मकम् । यद्वा । महतो लोकस्य धारकम् । यस्य अन्नस्य ओजसा बलेन सामर्थ्येन त्रितः विस्तीर्णतमः प्रख्यातकीर्तिः त्रिषु क्षित्यादिस्थानेषु तायमानोऽपि इन्द्रः वृत्रं विपर्वं विच्छिन्नसंधिकं यथा तथा अर्दयत् हिंसितवान् ॥

स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥ २ ॥

स्वादो इति । पितो इति । मधो इति । पितो इति । वयम् । त्वा । ववृमहे ।
अस्माकम् । अविता । भव ॥ २ ॥

---

१. क्ष-भुञ्जीयादविकुत्सयन् ।

हे ᵛस्वादो आस्वादनीय ᵛपितो पालक ᵛमधो माधुर्योपेत ᵛपितो हे पालनसाधनान्न ᵛवयं ᵛत्वा त्वां ᵛववृमहे सेवामहे ॥ अत्र सर्वत्र अननुदात्तानां पूर्वस्य असामान्यवचनत्वेनाभिघातत्वम् । अनुदात्तानां तु विशेषवचनत्वान्निघातत्वम् ॥ असकृत्पितुशब्दश्रवणं तस्य प्राशस्त्यज्ञापनार्थम् । हे पितो ᵛअस्माकमविता तर्पयिता ᵛभव ॥

उप॑ नः पितवा च॑र शि॒वः शि॒वाभि॑रू॒तिभि॑ः ।
म॒यो॒भुर॑द्विषे॒ण्यः सखा॑ सु॒शेवो॒ अद्व॑याः ॥ ३ ॥

उप॑ । न॒ः । पि॒तो॒ इति॑ । आ । च॒र॒ । शि॒वः । शि॒वाभि॑ः । ऊ॒तिऽभि॑ः ।
म॒यः॒ऽभुः । अ॒द्वि॒षे॒ण्यः । सखा॑ । सु॒ऽशेव॑ः । अद्व॑याः ॥ ३ ॥

हे ᵛपितो यतः त्वं ᵛशिवः मङ्गलः अतः ᵛशिवाभिः मङ्गलयुक्ताभिः ᵛऊतिभिः रक्षणैः ᵛनः अस्मान् ᵛआ ᵛचर आगच्छ । आगत्य च ᵛमयोभुः सुखस्य भावयिता ᵛअद्विषेण्यः अद्वेष्यरसः प्रियरस इत्यर्थः । ᵛसखा सखिवत्प्रियकारी ᵛसुशेवः अत एव सुष्ठु सुखकरः ᵛअद्वयाः द्वयरहितः उक्तगुण एव न तु तद्विपरितो भवेत्यर्थः । अथवा दृष्टान्तवादोऽयम् । सुशेवोऽद्वया मनःकर्मविसंवादरहितः सखा यथा मयोभुः अद्वेष्यश्च भवति तद्वत् त्वमपि भवेत्यर्थः ॥

तव॒ त्ये पि॑तो॒ रसा॒ रजां॒स्यनु॒ विष्ठि॑ताः । दि॒वि वाता॑इव श्रि॒ताः ॥ ४ ॥

तव॑ । त्ये । पि॒तो॒ इति॑ । रसा॑ः । रजां॑सि । अनु॑ । विऽस्थि॑ताः । दि॒वि । वाता॑ःऽइव । श्रि॒ताः ॥४॥

हे ᵛपितो ᵛतव त्वत्संबन्धिनः ᵛत्ये ते स्वाद्वम्लादि षट् ᵛरसाः ᵛरजांसि लोकान् लोकस्थानार्थान्[1] ᵛअनु आनुकूल्येन ᵛविष्ठिताः विविधं स्थिताः । विविधस्थितौ दृष्टान्तः । ᵛदिवि द्युलोकेऽन्तरिक्षे ᵛश्रिताः ᵛवाताः वायवः ते यथा व्याप्तास्तद्वत् ॥

तव॒ त्ये पि॑तो॒ दद॑त॒स्तव॑ स्वादिष्ठ॒ ते पि॑तो ।
प्र स्वा॒द्मानो॒ रसा॑नां तुवि॒ग्रीवा॑इवेरते ॥ ५ ॥

तव॑ । त्ये । पि॒तो॒ इति॑ । दद॑तः । तव॑ । स्वा॒दि॒ष्ठ॒ । ते । पि॒तो॒ इति॑ ।
प्र । स्वा॒द्मान॑ः । रसा॑नाम् । तु॒वि॒ग्रीवा॑ःऽइव । ई॒र॒ते॒ ॥ ५ ॥

हे ᵛपितो पालकान्न ᵛत्ये ते त्वदर्थिनो नराः ᵛतव भोक्तारो भवन्तीति शेषः । के ते नराः । हे ᵛस्वादिष्ठ स्वादुतम ᵛपितो पालक ᵛतव त्वदनुग्रहात् ᵛते त्वां ᵛददतः प्रयच्छन्तो भवन्ति । यद्वा । ते पितो इत्यादरार्थम् । अभ्यासे हि भूयांसमर्थं मन्यन्ते । किंच तव ᵛरसानां स्वाद्वम्लादीनां षण्णां

---

1. ङ—लोकस्थानादर्थान्; ङ १—लोकस्थानदार्थान् ( लोकस्थानपदार्थान् ); ख-फ—लोकस्थानर्थान् ।

स्वाद्मानः स्वादयितारो भक्षयितार एव तुविग्रीवाइव । तुवीति बहुनाम । प्रवृद्धग्रीवा एव प्र ईरते प्रकर्षेण गच्छन्ति संचरन्ति । इवशब्द एवकारार्थः पूरणो वा । लोके अत्तार एव दृढाङ्गा भवन्तीति प्रसिद्धम् । अनशने हि ग्रीवा अश्वो लम्बन्ते । यद्वा । तव रसानामत्तारः असंख्यातग्रीवा इव भवन्ति रसानां बाहुल्यादिति भावः । एवं बहुरसोपेतमन्नमिति तस्य स्तुतिः ॥ ॥ ६ ॥

त्वे पि॑तो म॒हानां॑ दे॒वानां॒ मनो॑ हि॒तम् ।

अका॑रि॒ चारु॑ के॒तुना॒ तवाहि॒मव॒साव॑धीत् ॥ ६ ॥

त्वे इति॑ । पि॒तो॒ इति॑ । म॒हाना॑म् । दे॒वाना॑म् । मनः॑ । हि॒तम् ।

अका॑रि । चारु॑ । के॒तुना॑ । तव॑ । अहि॑म् । अव॑सा । अ॒व॒धी॒त् ॥ ६ ॥

हे पितो महानां पूज्यानां महतां वा देवानाम् इन्द्रादीनां मनः त्वे त्वयि हितं निहितम् अकारि कृतम् । अमृतमपि विहाय त्वय्येव वर्तते । हे पितो तव चारु समीचीनेन केतुना त्वत्कृतेन प्रज्ञानलक्षणेन अवसा रक्षणेन अहिं मेघं वृत्रं वा अवधीत् हतवानिन्द्रः । ' अन्नमयं हि सोम्य मनः ' ( छा. उ. ६. ५. ४ ) इति श्रुतेः । अथवा त्वत्केतुना जगद्रक्षणेन निमित्तेनेति योज्यम् । जगद्रक्षणार्थं हि इन्द्रेणाहिर्भिद्यते ॥

यद॒दो पि॑तो॒ अज॑गन्वि॒वस्व॒ पर्व॑तानाम् ।

अत्रा॑ चिन्नो मधो पितो॒ऽरं॑ भ॒क्षाय॑ गम्याः ॥ ७ ॥

यत् । अ॒दः । पि॒तो इति॑ । अज॑गन् । वि॒वस्व॑ । पर्व॑तानाम् ।

अत्र॑ । चि॒त् । नः॒ । म॒धो॒ इति॑ । पि॒तो॒ इति॑ । अर॑म् । भ॒क्षाय॑ । ग॒म्याः॒ ॥ ७ ॥

हे पितो अन्न रसां यत् यदा विवस्व ॥ सुपो लुक् । अन्त्यलोपश्छान्दसः ॥ विवासनवतां विद्युद्रूपप्रकाशनवताम् । विवो धनमुदकलक्षणम् । धनवतां वा पर्वतानां मेघानां संबन्धि अदः प्रसिद्धं तदुदकम् अजगन् अगमत् गच्छेत् । अत्र चित् अस्मिन्काले नः अस्मान् हे मधो हे पितो माधुर्योपेतान्न त्वं नोऽस्मान् अरम् अलं संपूर्णं भक्षाय भक्षणाय गम्याः गच्छ संनिहितो भव ॥

यद॒पामोष॑धीनां परि॒शमा॑रि॒शाम॑हे । वाता॑पे॒ पीव॒ इद्भ॑व ॥ ८ ॥

यत् । अ॒पाम् । ओष॑धीनाम् । प॒रि॒शम् । आ॒ऽरि॒शाम॑हे । वाता॑पे । पीवः॑ । इत् । भ॒व ॥ ८ ॥

यत् येन अपामोषधीनां संबन्धि परिंशं परिलेशं परितः सुखकरमन्नम् आरिशामहे आस्वादयामः भक्षयामः तेन अन्नोदकसारेण हे वातापे । वातेन प्राणेन आप्नोति स्वनिर्वाहमिति वातेनाप्यायत इति वा वातापि शरीरम् । हे शरीर त्वं पीव इत् आप्यायित एव भव । अन्नोदकाभ्यां शरीरवृद्धिः प्रसिद्धा । यद्वा । यद्यपि अपामोषधीनां परिंशं लेशमास्वादयामः तथापि हे वातापे वातवत्सर्वव्यापक पितो त्वम् अल्पमपि पीवः पीवानेव भव ॥

यत्ते॑ सोम॒ गवा॑शिरो॒ यवा॑शिरो॒ भजा॑महे । वाता॑पे॒ पीव॒ इद्भ॑व ॥ ९ ॥

यत् । ते॒ । सो॒म॒ । गोऽआ॑शिरः । यव॑ऽआशिरः । भजा॑महे । वाता॑पे । पीव॑ः । इत् । भ॒व॒ ॥९॥

पूर्वम् अन्नसामान्येन स्तुत्वा इदानीं सोमलक्षणमन्नं स्तौति । हे ᵛसोम ᵛते तव ᵛयत् यम् अंशं ᵛगवाशिरः गोविकारक्षीराद्याश्रयणद्रव्यं ᵛयवाशिरः यवविकाराश्रयणद्रव्यं ᵛभजामहे[1] सेवामहे तेन हे ᵛवातापे शरीर ᵛपीवः ᵛभव[1] ॥

क॒र॒म्भ ओ॑षधे भव॒ पीवो॑ वृ॒क्क उ॑दार॒थिः । वाता॑पे॒ पीव॒ इद्भ॑व ॥ १० ॥

क॒र॒म्भः । ओ॒ष॒धे॒ । भ॒व॒ । पीव॑ः । वृ॒क्कः । उ॒दा॒र॒थिः । वाता॑पे । पीव॑ः । इत् । भ॒व॒ ॥ १० ॥

ᵛकरम्भः यः करम्भादिरूपः सक्तुपिण्डोऽस्ति तदात्मक हे ᵛओषधे त्वं ᵛपीवः स्थौल्यवान् ᵛवृक्कः व्याधेर्वर्जयिता ᵛभव । ᵛउदारथिः ऊर्ध्वगमः[2] इन्द्रियाणामुद्दीपयिता भव । शिष्टो गतः ॥

तं त्वा॑ व॒यं पि॑तो॒ वचो॑भि॒र्गावो॒ न ह॒व्या सु॑षू॒दिम ।
दे॒वेभ्य॑स्त्वा सध॒माद॑म॒स्मभ्यं॑ त्वा सध॒माद॑म् ॥ ११ ॥

तम् । त्वा॒ । व॒यम् । पि॒तो॒ इति॑ । वचः॑ऽभिः । गाव॑ः । न । ह॒व्या । सु॒सू॒दि॒म ।
दे॒वेभ्य॑ः । त्वा॒ । स॒ध॒ऽमाद॑म् । अ॒स्मभ्य॑म् । त्वा॒ । स॒ध॒ऽमाद॑म् ॥ ११ ॥

हे ᵛपितो अन्न सोमरूप ᵛतं तादृशं स्तुतं ᵛत्वा त्वां महानुभावं ᵛवचोभिः स्तुतिवाग्भिः ᵛवयं ᵛसुषूदिम क्षारयामो रसान् । तत्र दृष्टान्तः । ᵛगावो ᵛन ᵛहव्या गाव इव हवींष्युत्पादयन्ति तथा त्वत्सकाशात् सोमं सुषूदिम । किमर्थं कीदृशं च इति चेत् उच्यते । ᵛदेवेभ्यः इन्द्रादिभ्यः तदर्थं ᵛसधमादं तेषां सह मादयितारम् । न केवलं देवेभ्य एव किंतु ᵛसधमादम् अस्माभिः सह मादयितारं हुतशेषरूपं ᵛत्वा त्वाम् ᵛअस्मभ्यम् अस्मदर्थमपि ॥ ॥ ७ ॥

' समिद्धो अद्य ' इत्येकादशर्चं नवमं सूक्तमागस्त्यं सर्वं[3] गायत्रम् । समिद्धाग्नितनूनपादादयः एकादश प्रत्यृचं देवताः। यास्केन ' किंदेवताः प्रयाजाः' इत्युपक्रम्य 'आग्नेयाः प्रयाजा ऋतुदेवताश्छन्दोदेवताः पशुदेवताः प्राणदेवताः आत्मदेवताः ' इत्यादिना बहून् पक्षानुपन्यस्य ब्राह्मणानि च प्रदर्श्य आग्नेया एव इति सिद्धान्तितम् ( निरु. ८. २२ ) । ' समिद्ध आप्रियः ' इत्यनुक्रान्तम् । पशौ अगस्त्यानामेकादशप्रयाजरूपम् इदमाप्रीसूक्तम् ॥

---

१. झ-झ१-भजामहे वातापे पीवो (झ-पीवो ) यद्वा तेनांशेन वातापे उक्तस्वरूपशरीर पीवो भव । २. क-झ-ऊर्ध्वगमनसाधनः । ३. ख-ज-झ-ञ-त-फ-पूर्वम्; झ१-पूर्वत्र गायत्री त्वित्युक्तत्वात् ।

समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या कविर्वह ॥ १ ॥

सम्ऽइद्धः । अद्य । राजसि । देवः । देवैः । सहस्रऽजित् । दूतः । हव्या । कविः । वह ॥१॥

हे अग्ने देवैः व्यवहर्तृभिर्ऋत्विग्भिः समिद्धः सम्यग्दीपितः देवः अत एव दीप्यमानः समिद्धैः[1] वा देवैः समितः समिद्धः सन् अद्य अस्मिन् यागदिने राजसि दीप्यसे । हे सहस्रजित् सहस्रस्य धनस्य एतत्संख्याकानां शत्रूणां वा जेतः ततः दूतः देवानां दूतः तद्यज्ञादिवार्ताहरः आह्वाता वा । 'अग्निर्देवानां दूत आसीत्' (तै. सं. २. ५. ८. ५) इति श्रुतेः । कविः क्रान्तदर्शी ईदृशस्त्वं हव्या अस्मदीयानि हवींषि वह देवेभ्यः प्रापय ॥

तनूनपादृतं यते मध्वा यज्ञः समज्यते । दधत्सहस्रिणीरिषः ॥ २ ॥

तनूऽनपात् । ऋतम् । यते । मध्वा । यज्ञः । सम् । अज्यते । दधत् । सहस्रिणीः । इषः ॥२॥

तनूनपात् यज्ञशरीरस्य नपातयिता । यद्वा । आपोऽत्र तन्व उच्यन्ते इत्युक्तत्वात् अपां नपातयिता तासां नप्ता वा । अद्भ्य ओषधयः ओषधीभ्योऽग्निरिति नप्तृत्वम् । यज्ञः पूज्यः । यज्ञनिर्वाहकत्वाद्वा यज्ञः । ईदृशोऽग्निः ऋतं यज्ञं यते गच्छते अनुतिष्ठते । यजमानाय तदभिमतार्थम् । मध्वा मधुरेणाज्यसोमादिद्रव्येण समज्यते । किं कुर्वन् अयम् । सहस्रिणीः एतत्संख्याकान् इषः अन्नानि दधत् यजमानेभ्यो धारयन् ॥

आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् ।
अग्ने सहस्रसा असि ॥ ३ ॥

आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् । अग्ने । सहस्रऽसाः । असि ॥३॥

हे अग्ने आजुह्वानः अस्माभिराहूयमानः सन् ईड्यः अस्माभिः स्तुत्यः इध्मनामकः[2] त्वं नः अस्मदर्थं यज्ञियान् यज्ञभाजः देवान् आ वक्षि आवह । हे अग्ने त्वं सहस्रसा असि अपरिमितधनस्य दातासि ॥

प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥ ४ ॥

प्राचीनम् । बर्हिः । ओजसा । सहस्रऽवीरम् । अस्तृणन् । यत्र । आदित्याः । विऽराजथ ॥४॥

प्राचीनं प्रागग्रं सहस्रवीरं सहस्रसंख्याका वीराः शत्रूणां विशेषेण ईरयितारो देवाः यस्य तत्तादृक् । यद्वा । अपरिमितवीराः पुत्रादयो येन तादृक् । बर्हिः ओजसा मन्त्रलक्षणबलेन उपेताः ऋत्विजः अस्तृणन् आच्छादयन् । यत्र यस्मिन् बर्हिषि आदित्याः अदितेः पुत्राः यूयं विराजथ विविधं राजध्वे तद्बर्हिः अस्तृणन् ॥

---

१. ख१–प्रसिद्धः । २. ख-फ–एतन्नामको देवः ।

विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरन् ॥ ५ ॥

विऽराट् । सम्ऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः । च । याः ।

दुरः । घृतानि । अक्षरन् ॥ ५ ॥

विराट् ॥ विशेषेण राजन्त इति व्यत्ययेनैकवचनम् ॥ सम्राट् सम्यगिति पूज्यतरं राजमानाः ॥ अत्रापि व्यत्ययेनैकवचनम् ॥ विभ्वीः विभ्व्यो विविधं भविन्यः प्रभ्वीः प्रभ्व्यः प्रकर्षेण भविन्यः बह्वीः बह्व्यः भूयसीः लोकप्रसिद्धसंख्याभिः च भूयस्यश्च याः दुरः यज्ञगृहद्वारः सन्ति ताः घृतानि उदकानि प्राण्युपकारार्थम् अक्षरन् क्षरन्ति । यद्वा । बह्वीर्भूयसीरित्येते संख्यावचने । शिष्टानि तासां नामधेयानि ॥ ॥ ८ ॥

सुरुक्मे हि सुपेशसाधि श्रिया विराजतः । उषासावेह सीदताम् ॥ ६ ॥

सुरुक्मे इति सुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया । विऽराजतः ।

उषसौ । आ । इह । सीदताम् ॥ ६ ॥

सुरुक्मे शोभनदीप्ताभरणे प्रसिद्धे सुपेशसा शोभनरूपे ईदृश्यौ अहोरात्रदेवते अधि अधिकं श्रिया सौन्दर्येण विराजतः विशेषेण दीप्येते ॥ हियोगादनिघातः ॥ तादृश्यौ उपसौ । एतत् रात्रेरप्युपलक्षणम् । उषःशब्दो दिवसस्योपलक्षकः । रात्रिरुषाश्च उभे इह अस्मिन् दिने आ सीदताम् आगत्य तिष्ठताम् आगच्छतां वा ॥

प्रथमा हि सुवाचसा होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥ ७ ॥

प्रथमा । हि । सुऽवाचसा । होतारा । दैव्या । कवी इति । यज्ञम् । नः । यक्षताम् । इमम् ॥७॥

प्रथमा । मुख्यनामैतत् । प्रतमौ प्रकृष्टतमौ । हिः प्रसिद्धौ । सुवाचसा प्रियवचनौ दैव्या देवार्हौ होतारा देवानामाह्वातारौ होमनिष्पादकौ वा कवी मेधाविनौ एतौ नः अस्मदीयम् इमं यज्ञं यक्षतां यजतां गच्छतां वा ॥

भारतीळे सरस्वति या वः सर्वा उपब्रुवे । ता नश्चोदयत श्रिये ॥ ८ ॥

भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे । ताः । नः । चोदयत । श्रिये ॥८॥

हे भारति । भरतः आदित्यः । तस्य संबन्धिनी भारती । तादृशि द्युलोकदेवते हे इळे भूदेवि हे सरस्वति । सरः[1] वागुदकं[2] वा । तद्वत्यन्तरिक्षदेवते तादृशि देवि । एताः क्षित्यादिदेवताः । एता-

---

१. क्ष१–सरतीति सरः । २. क-ज-क्ष-क्ष१-त–वायुरुदकम् ।

स्तिस्र आदित्यप्रभावविशेषरूपा इत्याहुः । ᵛयाः तिस्रः ᵛसर्वाः ᵛवः युष्मान् ᵛउपब्रुवे उपेत्य स्तौमि ᵛताः यूयं ᵛनः अस्मान् ᵛश्रिये संपदे ᵛचोदयत प्रेरयत ॥

त्वष्टा॑ रू॒पाणि॒ हि प्र॒भुः प॒शून्विश्वा॑न्त्सम॒ानजे । तेषां॑ नः स्फा॒तिमा य॑ज ॥९॥

त्वष्टा॑ । रू॒पाणि॑ । हि । प्र॒ऽभुः । प॒शून् । विश्वा॑न् । स॒म्ऽआ॒न॒जे ।
तेषा॑म् । नः॒ । स्फा॒तिम् । आ । य॒ज ॥ ९ ॥

ᵛत्वष्टा यज्ञसाधनपात्राभिमानी देवः ᵛरूपाणि योनौ सृष्टानि रेतांसि रूपाणि कर्तुं ᵛप्रभुः ᵛहि । हिशब्दः श्रुत्यन्तरप्रसिद्धिद्योतनार्थः । ' यावच्छो वै रेतसः सिक्तस्य ', 'त्वष्टा रूपाणि विकरोति' ( तै. सं. १. ५. ९. १-२ ) इति श्रुतेः । स देवः ᵛविश्वान् सर्वानपि ᵛपशून् अस्मदीयान् गवादिकान् ᵛसमानजे सम्यगनक्ति व्यक्तीकरोति ॥ संपूर्वादनक्तेर्लिटि ' तस्मात् नुट् ' इति नुट् ॥ अथ प्रत्यक्षः । ᵛतेषाम् उक्तानां पशूनां ᵛस्फातिं वृद्धिं ᵛनः अस्मदर्थम् ᵛआ ᵛयज सर्वतः पूजय कुर्वित्यर्थः ॥

उप॒ त्मन्या॑ वनस्पते॒ पाथो॑ दे॒वेभ्यः॑ सृज । अ॒ग्निर्ह॒व्यानि॑ सिष्वदत् ॥ १० ॥

उप॑ । त्मन्या॑ । व॒न॒स्प॒ते॒ । पाथः॑ । दे॒वेभ्यः॑ । सृ॒ज॒ । अ॒ग्निः । ह॒व्यानि॑ । सि॒स्व॒द॒त् ॥१०॥

हे ᵛवनस्पते यूपाभिमानिदेव ᵛत्मन्या आत्मनैव ᵛदेवेभ्यः अग्न्यादिभ्यः ᵛपाथः पशुरूपमन्नम् ᵛउप ᵛसृज उत्पादय । यूपाभावे पशुनियोजनाभावेन हविषोऽभावात् । त्वयि एवं कृतवति सति ᵛअग्निः ᵛहव्यानि हवींषि ᵛसिस्वदत् स्वदयतु स्वादूकरोतु ॥

पु॒रो॒गा अ॒ग्निर्दे॒वानां॑ गाय॒त्रेण॒ सम॑ज्यते । स्वाहा॑कृतीषु रोचते ॥ ११ ॥

पु॒रः॒ऽगाः । अ॒ग्निः । दे॒वाना॑म् । गा॒य॒त्रेण॑ । सम् । अ॒ज्य॒ते॒ । स्वाहा॑ऽकृतीषु । रो॒च॒ते॒ ॥११॥

अयम् ᵛअग्निः ᵛदेवानां ᵛपुरोगाः असुरयुद्धं प्रति पुरोगामी । यद्वा । देवानां मध्ये यज्ञं प्रति अग्निरेव पुरोगामी । अत एव अग्रणीत्वादेव अग्निशब्दो निष्पन्नः । ' अग्निः कस्मादग्रणीर्भवति ' ( निरु. ७. १४ ) इति निरुक्तम् । तादृशोऽयं ᵛगायत्रेण एतदुपलक्षितेन मन्त्रेण ᵛसमज्यते सम्यगलक्ष्यते । ᵛस्वाहाकृतीषु स्वाहाकारेषु सत्सु हविःषु दीयमानेषु ᵛरोचते अत्यर्थं दीप्यते । एताः प्रयाजदेवताः यज्ञावयवाभिमानिन्यः । तद्द्वारा यज्ञ एव स्तूयते इति केषांचित् मतम् । अग्नेरेव नामान्तरमित्यन्ये ॥ ॥ ९ ॥

' अग्ने नय ' इति दशमं सूक्तम् अष्टर्चमागस्त्यं त्रैष्टुभमाग्नेयम् । ' अग्ने नयाष्टावाग्नेयम् ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभच्छन्दसि विनियोगः । ' अथैतस्याः ' इत्यत्र ' अग्ने नयाग्ने त्वमिति द्वयोरुत्तमामुत्तमामेतस्य उद्धरेत् ' ( आश्व. श्रौ. ४. १३ ) इति सूत्रितत्वात् । अत्र शौनकः—' उत्पथप्रतिपन्नो यो भ्रष्टो वापि पथः क्वचित् । पन्थानं प्रतिपद्येत कृत्वा वा कर्म गर्हितम् ॥ अग्ने नयेति सूक्तेन प्रत्यृचं जुहुयाद्घृतम् । जपेद्वा प्रयतो नित्यमुपतिष्ठेत वानलम् ' ( ऋग्वि. १. १५१–१५२) इति ॥ आद्यास्तिस्रः श्रवणाकर्मणि विनियुक्ताः । ' श्रावण्यां पौर्णमास्याम् '

इत्यत्र सूत्रितम्–‘ अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा ’ ( आश्व. गृ. २.१.४ ) इति । आग्नेये पशौ वपापुरोडाशयोराद्ये द्वे अनुवाक्ये । तथा च सूत्रितम्–‘ अग्ने नय सुपथा राये अस्मान् पाहि नो अग्ने पायुभिरजस्रैः ’ ( आश्व. श्रौ. ३. ७ ) इति । आद्या प्रायणीयेष्टौ आग्नेयस्यानुवाक्या । सैव उदयनीये याज्या । ‘ तदहः प्रायणीयेष्टिः ’ इत्यत्र सूत्रितम्–‘ अग्ने नय सुपथा राये अस्माना देवानामपि पन्थामगन्म ’ ( आश्व. श्रौ. ४. ३ ) इति । विपरीताश्च याज्यानुवाक्या इति च ॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥

अग्ने । नय । सुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् ।
युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमःऽउक्तिम् । विधेम ॥ १ ॥

हे अग्ने अङ्गनादिगुणविशिष्ट देव द्योतमान विश्वानि वयुनानि सर्वाणि प्रज्ञानानि । अनेन एतदनुष्ठितमिदं प्रायणीयमिति यदेतज्ज्ञानमस्ति तद्विद्वानित्यर्थः । यतः विद्वान् अतस्त्वम् अस्मान् सुपथा शोभनेन मार्गेण राये गन्तव्याय स्वर्गादिधनाय । द्वितीयार्थे वा चतुर्थी । प्रापणीयं रयिं प्रति नय । तदर्थं जुहुराणं कुटिलकारि एनः पापं फलप्रतिबन्धरूपम् अस्मत् अस्मत्तः युयोधि पृथक्कुरु । ते तव वयं भूयिष्ठाम् अतिप्रवृद्धां नमउक्तिं नमस्कारोक्तिं स्तुतिं विधेम परिचरेम कुर्मः ॥

आयुष्कामेष्ट्याम् ‘अग्ने त्वं पारय ’ इति द्वे स्विष्टकृतो याज्ये ‘ पाहि नः ’ इति चतुर्थ्यनुवाक्या । ‘ पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारया नव्यो अस्मानिति संयाज्ये ’ ( आश्व. श्रौ. २. १० ) इति सूत्रितम् । एते एव स्वस्त्ययन्यामपि संयाज्ये इति सूत्रितत्वात् ॥

अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ २ ॥

अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा ।
पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय । तनयाय । शम् । योः ॥ २ ॥

हे अग्ने त्वं नव्यः नवतरः स्तुत्यो वा त्वम् अस्मान् यागानुष्ठातॄन् अति पारय कर्म समापय्य अतिपारय अतिक्रामय । केन साधनेन । स्वस्तिभिः । अस्तिरभिपूजितः । सुशब्दः शोभनवचनः । अत्यन्तं पूजितैर्यज्ञादिसाधनैः । कानि । दुर्गाणि दुर्गमनानि पापानि । अनतिक्रमणीयानि दुरिताख्यानि अतिपारय । किंच नः अस्माकं पृथ्वी पृथुतरा पूश्च पुरी अपि भवत्विति शेषः । चशब्दो वक्ष्यमाणेन सह समुच्चयार्थः । पूरिति जात्येकवचनम् । पुराण्यपि भवन्त्वित्यर्थः । तथा नः अस्माकम् उर्वी पृथ्वी अपि बहुतरा भवतु । त्वं तु तोकाय अपत्याय तनयाय पुत्राय । तोकशब्दोऽपत्यसामान्य-

वचनः । तनयशब्दः पुत्रवचनः । ᵛशं सुखं ᵛगोः मिश्रयिता ᵛभव । यद्वा । रोगाणां शमनं भयानां यावनं च भव कुर्वित्यर्थः ॥

अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।
पुनरस्मभ्यं सुवितायं देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ ३ ॥

अग्ने । त्वम् । अस्मत् । युयोधि । अमीवाः । अनग्निऽत्राः । अभि । अमन्त । कृष्टीः ।
पुनः । अस्मभ्यम् । सुविताय । देव । क्षाम् । विश्वेभिः । अमृतेभिः । यजत्र ॥ ३ ॥

हे ᵛअग्ने ᵛत्वम् ᵛअमीवाः रोगान् ᵛअस्मत् अस्मत्तः ᵛयुयोधि व्यावर्तय । याः ᵛअनग्नित्राः अग्निना अपालिताः ᵛकृष्टीः प्रजाः ᵛअभ्यमन्त अभिमिमतेऽस्मान् ॥ यच्छब्दाध्याहारादनिघातः ॥ ताः युयोधि । यद्वा । ता अनग्नित्राः पापिन्यः कृष्टयः प्रजा अभ्यमन्त । त्वया अभ्यमितुमभितो रोगैः प्रापयितुमर्हन्ति । वयं तु न तादृशाः । अतोऽस्मत्तो वियोजयेत्यर्थः । न केवलं वियोगमात्रं अपि तु पुनः-पुनरिदं कर्तव्यम् । ᵛअस्मभ्यम् अस्मदर्थं ᵛसुविताय शोभनफलाय हे ᵛयजत्र यष्टव्य ᵛदेव द्योतमानाग्ने ᵛविश्वेभिरमृतेभिः सर्वैरमरणधर्मभिः अन्यैर्यष्टव्यैर्देवैः सह ᵛक्षां पृथिवीं देवयजनलक्षणाम् आगच्छेति शेषः ॥

'पाहि नः' इत्यस्या विनियोगद्वयम् 'अग्ने त्वं पारय' इत्यत्रोक्तम् । तथाग्नेयपशावेषैव हविषोऽनुवाक्या । तथा च सूत्रितं—' पाहि नो अग्ने पायुभिरजस्रैः प्र वः शुक्राय भानवे भरध्वम् ' ( आश्व. श्रौ. ३. ७ ) इति ॥

पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।
मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥ ४ ॥

पाहि । नः । अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने । आ । शुशुक्वान् ।
मा । ते । भयम् । जरितारम् । यविष्ठ । नूनम् । विदत् । मा । अपरम् । सहस्वः ॥ ४ ॥

हे ᵛअग्ने ᵛनः अस्मान् ᵛअजस्रैः अनवरतैरविच्छिन्नैः ᵛपायुभिः पालनप्रकारैः ᵛपाहि पालय । ᵛउत अपि च ᵛप्रिये ᵛसदने तव प्रियभूते यागगृहे ᵛआ सर्वतः ᵛशुशुक्वान् दीप्यमानो भवेति शेषः । किंच हे ᵛयविष्ठ युवतम ᵛते तव ᵛजरितारं गरितारं स्तोतारं मां ᵛनूनम् अद्य ᵛभयं ᵛमा ᵛविदत् मा लभतां मा आप्नोतु । हे ᵛसहस्वः बलवन्नग्ने ᵛअपरम् अपरस्मिन्काले भयं ᵛमा विदत् । अपरं मदन्यं वा मा विदत् ॥

अच्युताय भौमाय एककपालपुरोडाशहोमे ' मा नो अग्ने ' इत्यनया आशयमभिजुहोति । तथा च सूत्रितं—' मा नो अग्नेऽव सृजो अघायेत्येनमाशयेनाभिजुहोति ' ( आश्व. गृ. २. १. ६ ) इति ॥

मा नो॑ अग्ने॒ऽव॑ सृजो अ॒घाया॑वि॒ष्यवे॑ रि॒पवे॑ दु॒च्छुना॑यै ।
मा द॒त्वते॒ दश॑ते॒ माद॒ते नो॒ मा रीष॑ते सहसाव॒न्परा॑ दाः ॥ ५ ॥

मा । नः॒ । अ॒ग्ने॒ । अव॑ । सृ॒जः॒ । अ॒घाय॑ । अ॒वि॒ष्यवे॑ । रि॒पवे॑ । दु॒च्छुना॑यै ।
मा । द॒त्वते॑ । दश॑ते । मा । अ॒दते॑ । नः॒ । मा । रिष॑ते । स॒ह॒सा॒ऽव॒न् । परा॑ । दाः॒ ॥ ५ ॥

हे अग्ने नः अस्मान् अघाय हिंसकाय अविष्यवे । अविष्यतिरत्तिकर्मा । अत्तुमिच्छवे दुच्छुनायै । शुनं सुखम् । दुष्टसुखकारिणे । दुःखकारिणे इत्यर्थः । तस्मै रिपवे मा अव सृजः मा त्यार्क्षीः तदधीनं मा कुर्वित्यर्थः । तथा नः अस्मान् दत्वते दन्तवते दशते खादते सर्पादये मा अव सृजः । तथा नः अस्मान् अदते अदन्तकाय शृङ्गादिभिर्घातिने मा अव सृजः । तथा रिषते हिंसकाय तस्कररराक्षसादये हे सहसावन् सहस्विन् मा परा दाः पराभूतं मा देहि सर्वथा न देहीत्यर्थः ॥ ॥ १० ॥

वि घ॒ त्वावाँ॑ ऋतजात यंसद्गृणा॒नो अ॑ग्ने त॒न्वे॑ वरू॑थम् ।
विश्वा॑द्रिरि॒क्षोरु॒त वा॑ निनि॒त्सोर॑भि॒ह्रुता॒मसि॒ हि दे॑व विष्पट् ॥ ६ ॥

वि । घ॒ । त्वाऽवा॑न् । ऋ॒त॒ऽजा॒त॒ । यंस॑त् । गृ॒णा॒नः । अ॒ग्ने॒ । त॒न्वे॑ । वरू॑थम् ।
विश्वा॑त् । रि॒रि॒क्षोः । उ॒त । वा॒ । नि॒नि॒त्सोः । अ॒भि॒ऽह्रुता॑म् । असि॑ । हि । दे॒व॒ । वि॒ष्प॒ट् ॥ ६ ॥

हे ऋतजात यज्ञार्थमुत्पन्न अग्ने वरूथं वरणीयं त्वां तन्वे शरीरपोषाय गृणानः स्तुवन् त्वावान् त्वया देवतया तद्वान् जनः वि घ यंसत् विमुञ्चति खलु आत्मानम् । कस्मात्सकाशात् । रिरिक्षोः हिंसितुमिच्छोश्चोरादेः सकाशात् । उत वा अथवा निनित्सोः निन्दितुमिच्छतः । हे देव अभिह्रुताम् आभिमुख्येन कुटिलं कुर्वतां द्विषां विष्पट् विशेषेण बाधकः असि हि । अतः त्वदनुग्रहात् अयं जनो वि यंसत् ॥

त्वं ताँ अ॑ग्न उ॒भया॒न्वि वि॒द्वान्वेषि॑ प्रपि॒त्वे मनु॑षो यजत्र ।
अ॒भि॒पि॒त्वे मन॑वे॒ शास्यो॑ भूर्मर्मृ॒जेन्य॑ उ॒शिग्भि॒र्नाक्रः ॥ ७ ॥

त्वम् । तान् । अ॒ग्ने॒ । उ॒भया॑न् । वि । वि॒द्वान् । वेषि॑ । प्र॒ऽपि॒त्वे । मनु॑षः । य॒ज॒त्र॒ ।
अ॒भि॒ऽपि॒त्वे । मन॑वे । शास्यः॑ । भूः॒ । म॒र्मृ॒जेन्यः॑ । उ॒शिक्ऽभिः॑ । न । अ॒क्रः ॥ ७ ॥

हे यजत्र यष्टव्य अग्ने त्वं तान् यष्टृनयष्टृंश्च उभयान् मनुषः मनुष्यान् विविच्य विद्वान् जानन् प्रपित्वे संनिहिते एव काले वेषि कामयसे यष्टृन् । तथा कुर्वन् अक्रः आक्रमिता त्वं मनवे । षष्ठ्यर्थे चतुर्थी । मनुष्यस्य यजमानस्य अभिपित्वे अभिप्राप्तकालेऽभिगमनवति यज्ञे वा शास्यः भूः शिक्षणीयो भव । इदं कुरु इदं कुरु इति विधेयो भव । मर्मृजेन्यः शोधयिता यजमानः उशिग्भिः कामयमानैर्ऋत्विग्भिरिव ॥

**अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।**
**वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥**

अवोचाम । निऽवचनानि । अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ ।
वयम् । सहस्रम् । ऋषिऽभिः । सनेम । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

वयम् अस्मिन् अग्नौ निवचनानि नियमपूर्वकाणि वचांसि स्तोत्ररूपाणि अवोचाम ब्रूमः । अग्निर्विशेष्यते । मानस्य सूनुः । मीयत इति मानो मन्त्रः । तस्य सूनुरग्निः मन्त्रेण उत्पद्यमानत्वात्[1] । सप्तम्यर्थे प्रथमा । मानस्य सूनौ सहसाने शत्रूणामभिभवितरि अग्नौ अवोचाम । वयम् एभिः ऋषिभिः अतीन्द्रियार्थप्रकाशकैर्मन्त्रैः साधनैः सहस्रम् अपरिमितं धनं सनेम संभजेमहि । विद्याम इति गतम् ॥ ॥ ११ ॥

' अनर्वाणम् ' इत्यष्टर्चमेकादशं सूक्तमागस्त्यं बार्हस्पत्यं त्रैष्टुभम् । ' अनर्वाणं बार्हस्पत्यम् ' इत्यनुक्रान्तम् । श्रौतविनियोगो लैङ्गिकः । अत्र शौनकः—' स्नात्वा जपेदनर्वाणं नमस्कृत्य बृहस्पतिम् । वीरान् धनं च प्राप्नोति सोऽश्लोक्यं च नियच्छति ' ( ऋग्वि. १. १५३-१५४ ) इति ॥

**अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।**
**गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ॥ १ ॥**

अनर्वाणम् । वृषभम् । मन्द्रऽजिह्वम् । बृहस्पतिम् । वर्धय । नव्यम् । अर्कैः ।
गाथान्यः । सुऽरुचः । यस्य । देवाः । आऽशृण्वन्ति । नवमानस्य । मर्ताः ॥ १ ॥

हे होतः नव्यं नवतरं स्तुत्यं वा तम् अनर्वाणम् अगन्तारम् । स्तोतुरधीनमित्यर्थः । वृषभम् अपां फलानां वर्षितारं मन्द्रजिह्वं मादकवाचं बृहस्पतिं मन्त्रस्य पालयितारमेतन्नामकं देवम् अर्कैः अर्चनसाधनैर्मन्त्रैः वर्धय प्रवृद्धं कुरु । सुरुचः शोभनदीप्तेः नवमानस्य स्तूयमानस्य ॥ कर्मणि कर्तृप्रत्ययः ॥ यस्य बृहस्पतेः ॥ कर्मणि षष्ठ्यः ॥ रोचमानं स्तूयमानं गाथान्यः । गाथेति वाङ्नाम । स्तुतिवचसो नेतारः देवाः व्यवहर्तारः मर्ताः मनुष्याः होत्रादयः । यद्वा । नवमानस्य स्तुवानस्य यजमानस्य संबन्धिनस्ते । आशृण्वन्ति आश्रावयन्ति पुरा तं बृहस्पतिं वर्धय । अत्र ' अनर्वाणमप्रत्यृतमन्यस्मिन् ' ( निरु. ६. २३ ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

बार्हस्पत्ये पशौ ' तमृत्विया: ' इत्येषा वपायाज्या । सूत्रितं च–' बृहस्पते अति यदर्यो अर्हात्तमृत्विया उप वाचः सचन्ते ' ( आश्व. श्रौ. ३. ७ ) इति ॥

---

[1] क-ख१-फ–उत्पाद्यमानत्वात् ।

तमृत्विया उप वाचः सचन्ते सर्गो न यो देवयतामसर्जि ।
बृहस्पतिः स ह्यञ्जो वरांसि विभ्वाभवत्समृते मातरिश्वा ॥ २ ॥

तम् । ऋत्वियाः । उप । वाचः । सचन्ते । सर्गः । न । यः । देवऽयताम् । असर्जि ।
बृहस्पतिः । सः । हि । अञ्जः । वरांसि । विऽभ्वा । अभवत् । सम् । ऋते । मातरिश्वा ॥२॥

तं बृहस्पतिम् ऋत्विया वर्षर्तुसंबन्धिन्यः वाचः माध्यमिकाः उप सचन्ते समीपे सेवन्ते । यः सर्गो न उदकस्य स्रष्टापि । नशब्दोऽप्यर्थे । देवयतां देवानिच्छतां यजमानानाम् असर्जि फलम् । यद्वा । देवं तमिच्छतां मनुष्याणाम् असर्जि सृष्टवान्वृष्ट्युदकम् । यद्वा । ऋत्वियाः प्राप्तकालीना वाचः होत्रादिप्रेरिता वाचः उप सचन्ते तं यः सर्गो न उदकसृष्टिरिव । सः स एव बृहस्पतिः अञ्जः हि व्यञ्जकः खलु । तस्मिन् वर्षति सर्वे भवन्ति[1] । अत एव विभ्वा विभुर्व्याप्तः मातरिश्वा वृष्टिनिर्मातरि अन्तरिक्षे चेष्टमानो वायुसदृशो वा वरांसि वरणीयानि वृष्ट्यादिफलानि संपादयन् ऋते उदके निमित्तभूते सति सम् अभवत् संभूतः । अथवा । अञ्जो यज्ञियानां व्यञ्जकः[2] मातरिश्वा फलस्य निर्मातरि यज्ञे श्वसिता वर्तमानः स बृहस्पतिर्ऋते यज्ञे निमित्तभूते सति वरांसि वरणीयानि हवींषीच्छन् विभ्वा विभुः समभवत् ॥

उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू ।
अस्य क्रत्वाहन्यो३ यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥ ३ ॥

उपऽस्तुतिम् । नमसः । उत्ऽयतिम् । च । श्लोकम् । यंसत् । सविताऽइव । प्र । बाहू इति ।
अस्य । क्रत्वा । अहन्यः । यः । अस्ति । मृगः । न । भीमः । अरक्षसः । तुविष्मान् ॥३॥

अयं बृहस्पतिः उपस्तुतिं यजमानेनोपेत्य क्रियमाणां स्तुतिं नमसः हविर्लक्षणस्यान्नस्य उद्यतिम् उद्धारं च श्लोकम् अन्यो यो मन्त्रविशेषोऽस्ति तं च प्र यंसत् प्रकर्षेण यतते स्वीकर्तुम् । यजमानो वा तत्सर्वं प्रयच्छत्यस्मै । तत्र दृष्टान्तः । सवितेव सूर्य इव । स यथा स्तोत्रादिकं स्वीकरोति तद्वत् । यजमानप्रदानपक्षे सविता सर्वस्य प्रसविता सूर्य इव । स यथा बाहुभ्यः प्रकाशादि प्रयच्छति तद्वत् बाहू बाहुभ्यां यजमानोऽपीत्यर्थः । तस्य महत्त्वमाह । अरक्षसः स्वविरोधिरक्षोरहितस्य अस्य बृहस्पतेः क्रत्वा कर्मणा सामर्थ्येन अहन्यः अह्नि साधुः यः सूर्यः अस्ति सः भीमः न मृगः इव भयजनकः सिंहादिरिव भीमो भयहेतुः तुविष्मान् बलवान् परिभ्रमतीति शेषः । यस्य माहात्म्येन मन्त्राभिमानिनो बृहस्पतेः सामर्थ्यात् मन्देहाद्यसुराभिरवाप्तितेजस्वी भवति तादृशो महानुभावो यजमानदत्तं हविरादिकं स्वीकरोतीत्यर्थः ॥

---

1. क्ष१–व्यक्ता भवन्ति । 2. क्ष१–पदार्थानां व्यञ्जकः ।

अस्य श्लोको दिवीयते पृथिव्यामत्यो न यंसद्यक्षभृद्विचेताः ।
मृगाणां न हेतयो यन्ति चेमा बृहस्पतेरहिमायाँ अभि द्यून् ॥ ४ ॥

अस्य । श्लोकः । दिवि । ईयते । पृथिव्याम् । अत्यः । न । यंसत् । यक्षऽभृत् । विऽचेताः ।
मृगाणाम् । न । हेतयः । यन्ति । च । इमाः । बृहस्पतेः । अहिऽमायान् । अभि । द्यून् ॥४॥

ᵛअस्य बृहस्पतेः ᵛश्लोकः स्तुत्यात्मिका कीर्तिः गर्जितवाक् वा ᵛदिवि द्योतमाने द्युलोके ᵛपृथिव्यां च ᵛईयते गच्छति व्याप्नोति । यो बृहस्पतिः ᵛअत्यो ᵛन अतनशील आदित्य इव ᵛयक्षभृत् पूजितं हविरादिकं दधानः ᵛविचेताः विविधं चेतयिता प्राणिनां विशिष्टप्रज्ञायुक्तो वा ᵛयंसत् नियच्छति फलम् । किंच ᵛमृगाणां हन्तुमन्विष्यतां ᵛहेतयः ᵛन आयुधानीवास्य ᵛबृहस्पतेः ᵛइमाः हेतयो हिंस्राणि आयुधानि ᵛयन्ति गच्छन्ति ᵛच ॥ ' चवायोगे प्रथमा ' इति न निघातः ॥ ᵛअहिमायान् आगत्य हन्त्योऽन्तरिक्षचारिण्यो वा माया येषां वृत्रादीनां तानसुरान् ᵛद्यून् दिवसान् ॥ ' कालाध्वनोः० ' (पा. सू. २. ३. ५) इति द्वितीया ॥ तान्यायुधानि ᵛअभि लक्षयन्ति च ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः ।
न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत्पियारुम् ॥ ५ ॥

ये । त्वा । देव । उस्रिकम् । मन्यमानाः । पापाः । भद्रम् । उपऽजीवन्ति । पज्राः ।
न । दुःऽध्ये । अनु । ददासि । वामम । बृहस्पते । चयसे । इत् । पियारुम् ॥ ५ ॥

हे ᵛदेव बृहस्पते ᵛये ᵛपापाः पापबुद्धयोऽल्पाः ᵛपज्राः हविर्लक्षणान्नवन्तः पापेन जीर्णा वा नराः ᵛभद्रं कल्याणं ᵛत्वा त्वाम् ᵛउस्रिकम् । उस्रियेति गोनाम । कुत्सितामल्पक्षीरोत्स्राविणीं गां जीर्णमनड्वाहं वा ᵛमन्यमानाः ᵛउपजीवन्ति उपेत्य प्राणन्ति अल्पं याचन्ते इत्यर्थः । ᵛदूढ्ये दुर्धिये ॥ वचनव्यत्ययः ॥ दुर्बुद्धिभ्यस्तेभ्यः ᵛवामं वननीयं धनं ᵛन ᵛअनु ᵛददासि अनुकूलं न वितरसि । हे ᵛबृहस्पते देव ᵛपियारुं सोमपानशीलं सोमेन यष्टारं महाफलरिप्सुं तु ᵛचयसे ᵛइत् गच्छस्येवानुग्रहीतुम् ॥ ' चय गतौ ' इत्यस्यैतद् रूपम् ॥ यद्वा । हे बृहस्पते पियारुं हिंसकम् ॥ पीयतेर्हिंसाकर्मणः इदं रूपम् ॥ तं प्राणिहिंसकं चयसे इत् । हंस्येव । ' बृहस्पते यच्चातयसि देवपीयुम् ( निरु. ४. २५ ) इति निरुक्तम् ॥ ॥ १२ ॥

सुप्रैतुः सूयवसो न पन्था दुर्नियन्तुः परिप्रीतो न मित्रः ।
अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवन्तो अस्थुः ॥ ६ ॥

सुऽप्रैतुः । सुऽयवसः । न । पन्थाः । दुःऽनियन्तुः । परिऽप्रीतः । न । मित्रः ।
अनर्वाणः । अभि । ये । चक्षते । नः । अपिऽवृताः । अपऽऊर्णुवन्तः । अस्थुः ॥ ६ ॥

हे बृहस्पते त्वं सुप्रैतुः सुष्ठु गन्तुर्मनुष्यस्य सुयवसः शोभनान्नस्य पन्थाः न मार्ग इव सुष्ठु यज्ञमार्गगामिनः[1] सुयवसः पन्था इव सुखकारी[1] भवेत्यर्थः । किंच दुर्नियन्तुः दुःखेन नियमितुः राज्ञः परिप्रीतः सर्वप्रकारेण संतुष्टो द्वेषादिरहितः मित्रः न सुहृन्मन्त्रीव । स यथा दुर्नयात् निवर्तयति तद्वत् त्वमपि तथा अस्मभ्यं कुर्वित्यर्थः । सखिवत् अमार्गान्निवर्त्य मार्गे यज्ञादिरूपे योजयित्वा तत्रापि फलप्रदो भवेत्यर्थः । किंच अनर्वाणः अपापाः ये नराः नः अस्मान् अभि आभिमुख्येन चक्षते बोधयन्ति ते अपीवृताः अज्ञानेनावृता अपि अपोर्णुवन्तः अपगतावरणवन्तो ज्ञानवन्तः अस्थुः तिष्ठन्तु । यद्वा । अनर्वाणस्त्वामप्राप्नुवन्तो येऽस्मद्विरोधिनो नोऽस्मानभि चक्षते अभिवदन्ति निन्दन्ति तेऽपीवृता आच्छादिता रक्षिता अपि अपोर्णुवन्तः अपगतरक्षणा भवन्ति ॥

' सं यं स्तुभः ' इत्येषा बार्हस्पत्ये पशौ पुरोडाशस्य याज्या । सूत्रितं च–' सं यं स्तुभोऽवनयो न यन्त्येवा पित्रे ' ( आश्व. श्रौ. ३. ७ ) इति ॥

सं यं स्तुभोऽवनयो न यन्ति समुद्रं न स्रवतो रोधचक्राः ।
स विद्वाँ उभयं चष्टे अन्तर्बृहस्पतिस्तर आपश्च गृध्रः ॥ ७ ॥

सम् । यम् । स्तुभः । अवनयः । न । यन्ति । समुद्रम् । न । स्रवतः । रोधऽचक्राः ।
सः । विद्वान् । उभयम् । चष्टे । अन्तः । बृहस्पतिः । तरः । आपः । च । गृध्रः ॥ ७ ॥

यं बृहस्पतिं स्तुभः स्तोत्राणि अवनयो न सर्वा अवनयो भूमयो मनुष्या यथा स्वामिनं कर्म प्रति वा सं यन्ति संगच्छन्ति तद्वत् तथा समुद्रं रोधचक्राः । नदीनामैतत् । रोधनशीलानि चक्राणि यासु तास्तादृश्यः कूलं क्रममाणाः वा स्रवतः स्रवन्त्यो नद्यो यथा यन्ति तद्वत् सर्वा अपि स्तुतयो यमेव प्राप्नुवन्ति गृध्रः गर्धनशीलो वृष्टिमाकाङ्क्षमाणः सः बृहस्पतिः विद्वान् वक्ष्यमाणाभिज्ञः तरः तरणं जलाभिवृद्धिम् आपः उदकानि च उभयम् अन्तः मध्ये स्थित्वा चष्टे पश्यति करोतीत्यर्थः ॥

एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः ।
स नः स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥

एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः । धायि । देवः ।
सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

महः महान् तुविजातः बह्वर्थमुत्पन्नः तुविष्मान् बलवान् वृषभः अपां वर्षिता देवः बृहस्पतिः एव एवं स्तुतिप्रकारेण धायि धीयते स्तूयते इत्यर्थः । सः स्तुतः देवः नः अस्माकं वीरवत् पुत्राद्युपेतं गोमत् गोभिर्युक्तं फलं धातु करोत्वित्यर्थः । विद्याम इति गतम् ॥ ॥ १३ ॥

---

१. स-स१–मार्गगामिनो मम सूयवसः पन्थाः इव भव । तद्वत् सुखकारी; न–मार्गगामिनो गमने ।

'कङ्कतः' इति षोडशर्चं द्वादशं सूक्तम्। ऋषिरगस्त्यः। अप्तृणसूर्यास्त्रयो देवताः। त्रिष्टुप् छन्दः। 'सूर्ये विषम्' इत्याद्यास्तिस्रो महापङ्क्तयः। 'अष्टकौ सप्तकः षट्को दशको नवकश्च' (अनु. १०. ३) इत्युक्तलक्षणोपेतत्वात्। 'नवानाम्' इत्येषा त्रयोदशी महाबृहती। 'चत्वारोऽष्टका जागतश्च महाबृहती' (अनु. ९. ९) इति ह्युक्तम्। अत्र यद्यपि अक्षराणि न्यूनानि तथापि न्यूहेन पूरणीयानि। अत्रानुक्रमणिका—'कङ्कतः षोळशोपनिषदानुष्टुभमप्तृणसौर्यं विषशङ्कावानगस्त्यः प्राब्रवीद्दशम्याद्याश्च तिस्रो महापङ्क्तयो महाबृहती च' इति। उपनिषदिति रहस्यमित्यर्थः। विषशङ्कायुक्तोऽगस्त्यः तत्परिहाराय इदमुक्तवान्। श्रौतस्य विशेषविनियोगो लैङ्गिकः। अत्र शौनकः—'कङ्कतो नेति सूक्तं तु विषार्तः प्रयतो जपेत्। विषं न क्रमते चास्य सर्पाद्दृष्टिविषादपि॥ यत् कीटलूतासु विषं दंष्ट्रिवृश्चिकतश्च यत्। मूलं च कृत्रिमं चैव जपन्सर्वमपोहति' (ऋग्वि. १. १५४,-१५६) इति॥

कङ्क॑तो॒ न क॑ङ्क॒तोऽथो॑ स॒तीन॑कङ्कतः।
द्वावि॒ति॒ प्लु॒षी इ॒ति॒ न्य१॒॑दृष्टा॑ अलिप्सत॥ १॥

कङ्क॑तः। न। कङ्क॑तः। अथो॒ इति॑। स॒तीन॑ऽकङ्कतः।
द्वौ। इति॑। प्लु॒षी इति॑। इति॑। नि। अ॒दृष्टाः॑। अ॒लि॒प्स॒त॥ १॥

ᵛकङ्कतः अल्पविषः कश्चित् ᵛन ᵛकङ्कतः तद्विपरीतोऽनल्पविषो महोरगादिः॥ तकतेर्गत्यर्थस्य वर्णव्यत्ययेन कङ्कत इति सरन् भवति॥ ᵛअथो अपि च ᵛसतीनकङ्कतः। सतीनमित्युदकनाम 'सतीनं गहनम्' (नि. १. १२. ५९) इति तन्नामसु पाठात्। उदकचारी अल्पविषवान् कश्चिद्दुन्दुभादिः। एवं ᵛद्वाविति अल्पविषमहाविषभेदेन जलस्थलभेदेन वा द्विप्रकाराविति। ᵛप्लुषी ᵛइति प्लोषणाविति। प्रकारद्वैविध्यदाहकत्वयोः प्रतिपादनाय इतिकारद्वयम्। तथा ᵛअदृष्टाः अदृश्यमानरूपा एतत्संज्ञकाश्च केचिद्विषधराः एवमुक्तप्रकारा ये सन्ति ते नूनं मां ᵛनि ᵛअलिप्सत विशेषेण लिम्पन्ति। सर्वाण्यङ्गानि विषमावृणोति। केन एवं कृतमिति न ज्ञायते इति भावः॥

अ॒दृष्टा॒न्हन्त्याय॒त्यथो॑ हन्ति परा॒यती।
अथो॑ अवघ्न॒ती ह॒न्त्यथो॑ पिनष्टि पिंष॒ती॥ २॥

अ॒दृष्टा॑न्। ह॒न्ति॒। आ॒ऽय॒ती। अथो॒ इति॑। ह॒न्ति॒। प॒रा॒ऽय॒ती।
अथो॒ इति॑। अ॒व॒ऽघ्न॒ती। ह॒न्ति॒। अथो॒ इति॑। पि॒न॒ष्टि॒। पिंष॒ती॥ २॥

अनेन विषघ्न्योषधिः स्तूयते। ᵛआयती विषदष्टस्य सकाशमागच्छन्ती विषनिर्हरणसाधनौषधिः ᵛअदृष्टान् अदृश्यमानान्विषधरान् ᵛहन्ति हिनस्ति। ᵛअथो अपि च ᵛपरायती परागच्छन्ती संमार्जनसमये अर्वाक्प्रवृत्ता ᵛहन्ति नाशयति जलचरविषधरान्। ᵛअथो अपि च ᵛअवघ्नती॥ कर्मणि

कर्तृप्रत्ययः ॥ अवहन्यमानौषधिः स्वगन्धेन ᵛहन्ति बहुविषान् । यद्वा । काचिदोषधिर्दंशकान्मारयत्येव । ᵛअथो अपि च ᵛपिंषती पेषणकर्त्री दृषत्पिष्यमाणा वौषधिः ᵛपिनष्टि चूर्णीकरोत्यल्पविषान् । अथवा सर्वेषु वाक्येष्वविशेषेण सर्वविषकारिणां नाश उक्तः ॥

**श॒रास॑ः कुश॑रासो द॒र्भास॑ः सै॒र्या उ॒त ।**

**मौ॒ञ्जा अ॒दृष्टा॑ वैरि॒णाः सर्वे॑ सा॒कं न्य॑लिप्सत ॥ ३ ॥**

श॒रास॑ः । कुश॑रासः । द॒र्भास॑ः । सै॒र्याः॑ । उ॒त ।

मौ॒ञ्जाः । अ॒दृष्टाः॑ । वै॒रि॒णाः । सर्वे॑ । सा॒कम् । नि । अ॒लि॒प्स॒त ॥ ३ ॥

अन्यांश्च विषहेतूनाह । ᵛशरासः शरा वेणुदण्डसदृशा अन्तश्छिद्रास्तृणविशेषाः । ᵛकुशरासः कुत्सितशराः अन्तश्छिद्राः शरसदृशास्तृणविशेषाः । ᵛदर्भासः दर्भाः कुशाः । ᵛसैर्याः तटाकादिप्रान्तोद्भवास्तृणविशेषा अश्ववाला इति प्रसिद्धाः। ᵛमौञ्जाः मुञ्जाः प्रसिद्धाः। ᵛवैरिणाः वीरणप्रकाराः। एतेषु वर्तमानाः ᵛअदृष्टाः उक्तरूपाः ᵛसर्वे विषधराः ᵛसाकं मिलित्वा ᵛन्यलिप्सत निलिम्पन्ति स्म ॥

**नि गावो॑ गो॒ष्ठे अ॑सद॒न्नि मृ॒गासो॑ अविक्षत ।**

**नि के॒तवो॒ जना॑ना॒ं न्य॑१॒॑दृष्टा॑ अलिप्सत ॥ ४ ॥**

नि । गाव॑ः । गो॒ऽस्थे । अ॒स॒द॒न् । नि । मृ॒गास॑ः । अ॒वि॒क्ष॒त ।

नि । के॒तव॑ः । जना॑नाम् । नि । अ॒दृष्टाः॑ । अ॒लि॒प्स॒त ॥ ४ ॥

ᵛगावो ᵛगोष्ठे ᵛनि ᵛअसदन् निषीदन्ति । ᵛमृगासः मृगाः ᵛनि ᵛअविक्षत निविष्टाः । स्वस्वस्थाने उपरताः । ᵛजनानां प्राणिनां ᵛकेतवः प्रज्ञानानि ᵛनि ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ नीचान्यभवन् । एते अस्मिन्समये ᵛअदृष्टाः अदृश्यमानरूपाः सन्तः ᵛनि ᵛअलिप्सत निलिम्पन्ति विशेषेण ॥

**ए॒त उ॒ त्ये प्रत्य॑दृश्रन्प्रदो॒षं तस्क॑राइव ।**

**अदृ॑ष्टा॒ विश्व॑दृष्टाः॒ प्रति॑बुद्धा अभूतन ॥ ५ ॥**

ए॒ते । ऊँ॒ इति॑ । त्ये । प्रति॑ । अ॒दृ॒श्र॒न् । प्र॒ऽदो॒षम् । तस्क॑राःऽइव ।

अदृ॑ष्टाः । विश्व॑ऽदृष्टाः । प्रति॑ऽबुद्धाः । अ॒भू॒त॒न ॥ ५ ॥

ᵛत्ये एते ᵛते सर्पाः ᵛप्रत्यदृश्रन् प्रतिदृश्यन्ते रात्रौ श्वासादिलिङ्गेन । यद्वा । ते रात्रौ हन्तारो दिवा एते प्रतिदृश्यन्ते । तत्र दृष्टान्तः । ᵛप्रदोषम् । रात्रिर्दोषा । रात्रिं प्रति तमसाभिभूतासु रात्रिषु

तस्कराइव हिंसकाश्चौरा दृश्यन्ते यथा तद्वत् । कीदृशास्ते । अदृष्टाः अपरिदृश्यमानाः विश्वदृष्टाः विश्वं दृष्टं यैस्ते तादृशाः प्रतिदृश्यन्ते । अतो हे नराः प्रतिबुद्धा अभूतन भवत ॥ ॥ १४ ॥

द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा ।
अदृष्टा विश्वदृष्टास्तिष्ठतेलयता सु कम् ॥ ६ ॥

द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा ।
अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥ ६ ॥

अतःपरं विषचिकित्सा । तत्र तावत् हे[1] सर्पाः[1] वः युष्माकं द्यौः पिता । पृथिवी माता । सोमो भ्राता । अदितिः देवमाता स्वसा[2] । एवंमहानुभावा महोरगाः अदृष्टाः अन्यैरदृश्यमानरूपाः स्वयं तु विश्वदृष्टाः सर्वस्य द्रष्टारो यूयं तिष्ठत स्वस्वस्थाने । मां प्रति मा गच्छत । सु सुतरं कं सुखं यथा तथा इलयत ईरयत गच्छत। सोमशब्देन सोमाधारो द्युलोक उच्यते । पृथिव्यन्तरिक्षद्युस्थानस्थाः सर्पाः स्वस्वस्थानं प्राप्नुत अस्मद्बाधं[3] मा कुरुतेत्यर्थः ॥

ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः ।
अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥

ये । अंस्याः । ये । अङ्ग्याः । सूचीकाः । ये । प्रऽकङ्कताः ।
अदृष्टाः । किम् । चन । इह । वः । सर्वे । साकम् । नि । जस्यत ॥ ७ ॥

ये अंस्याः अंसार्हाः अंसगाः अंसे भवा अंसाभ्यां खादन्तो वा । तथा ये अङ्ग्याः अङ्गगा अङ्गेन शरीरेण हन्तारो वा लूतिकादयः । सूचीकाः सूचीसदृशपुच्छरोमाणो वृश्चिकाद्याः । ये च प्रकङ्कताः प्रकृष्टविषाः प्रकृष्टगामिनो वा महोरगाः अदृष्टाः अदृश्यमानाः किं चन यत्किंचित्सर्पजातमस्ति । इह अस्मिन् समीपे वः युष्माकं किमस्ति । अतो यूयं सर्वे साकं सह नितरां जस्यत मुञ्चत अस्मान् ॥ 'जसु मोक्षणे' । दैवादिकः ॥

उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥

उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ।
अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

---

१. झ१—महासर्पादीन् अनुनदीयेव अपनयति, हे सर्पाः । २. क-ख-ज-झ-झ१-त-फ— सा स्वसा ।
३. क-ख-झ-झ१-फ—अस्मद्बाधाम् ।

असौ ᵛसूर्यः ᵛपुरस्तात् पूर्वस्यां दिशि ᵛउत् ᵛएति। कीदृशः सः । ᵛविश्वदृष्टः । विश्वे द्रष्टव्या यस्य स तादृशः । ᵛअदृष्टहा । अदृष्टा विषविशेषा विषधरविशेषा वा । तेषां हन्ता । यद्वा । अदृष्टमदर्शनमज्ञानमन्धकारः । तस्य हन्ता । सूर्ये उदिते सति सर्वे विषधरा विषाणि वा पलायन्ते । किं कुर्वन्नुदेति इति चेत् उच्यते । ᵛसर्वान् ᵛअदृष्टान् अद्रष्टव्यान्विषराक्षसादीन् ᵛजम्भयन् हिंसयन् । तथा ᵛसर्वाः ᵛयातुधान्यः । यातवो यातनास्तीव्रवेदनाः । तासां धात्रीरुत्पादयित्रीर्महोरगीः राक्षसीर्वा जम्भयन् पुरस्तादुदेति । अतोऽस्मत्तो नि जस्यत इति संबन्धः ॥

उद॑पप्तद॒सौ सूर्यः॑ पु॒रु विश्वा॑नि॒ जूर्व॑न् ।
आ॒दि॒त्यः पर्व॑तेभ्यो वि॒श्वदृ॑ष्टो अदृष्ट॒हा ॥ ९ ॥
उत् । अ॒प॒प्त॒त् । अ॒सौ । सूर्यः॑ । पु॒रु । विश्वा॑नि । जूर्व॑न् ।
आ॒दि॒त्यः । पर्व॑तेभ्यः । वि॒श्वऽदृ॑ष्टः । अ॒दृ॒ष्ट॒ऽहा ॥ ९ ॥

ᵛअसौ पुरस्तात् दृश्यमानः ᵛसूर्यः सर्वस्य प्रेरकः आदित्यः ᵛउदपप्तत् ऊर्ध्वं गच्छति॥ पततेर्लुङि पुमागमे रूपम् ॥ किं कुर्वन् । ᵛविश्वानि बहूनि विषाणि ᵛपुरु प्रभूतं ᵛजूर्वन् हिंसन् । कीदृशोऽसौ । ᵛपर्वतेभ्यः पर्ववद्भ्यः प्राणिभ्यः तेषामुपकाराय ᵛआदित्यः विषोदकादीनामदनशीलः ᵛविश्वदृष्टः विश्वं दृष्टं येन तादृशः ᵛअदृष्टहा अदृष्टानां विषविशेषाणां हन्ता । एवंमहानुभावः सूर्यः ऊर्ध्वमारोहति । अतो विषशङ्का न कार्या ॥

सूर्ये॑ वि॒षमा स॑जामि॒ दृतिं॒ सुरा॑वतो गृ॒हे ।
सो चि॒न्नु न म॑राति॒ नो व॒यं म॑रामा॒रे
अ॑स्य॒ योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥ १० ॥
सूर्ये॑ । वि॒षम् । आ । स॒जा॒मि॒ । दृति॑म् । सु॒रा॑ऽवतः । गृ॒हे ।
सः । चि॒त् । नु । न । म॒रा॒ति॒ । नो इति॑ । व॒यम् । म॒राम॒ । आ॒रे ।
अ॒स्य॒ । योज॑नम् । ह॒रि॒ऽस्थाः । मधु॑ । त्वा॒ । म॒धु॒ला । च॒का॒र ॥ १० ॥

आदित्यमण्डले चतुर्थेनाङ्गुलिना विषमादाय मधुकृत्य योजयित्वा निर्विषो भवेदिति यदेतद्विषविद्यायामुक्तं तदिदमत्रोच्यते । अहं विषावृतोऽगस्त्यः ᵛसूर्ये सर्वस्य प्रेरयितरि मधुविद्यारूपे सूर्यमण्डले ᵛविषम् आवृत्य वर्तमानं सूर्ये ᵛआ ᵛसजामि आसक्तं करोमि । तत्र दृष्टान्तः । ᵛसुरावतो ᵛगृहे सुरानिर्मातृसदने ᵛदृतिम् इव चर्ममयं सुरापात्रमिव । यथा तत्कर्तुः न दोषाय भवति तद्वद्विषम् आदित्यस्य न बाधकमित्यर्थः । ᵛसो ᵛचित् । चित् पूजायाम् । नुः प्रसिद्धौ । पूज्यः सः

सूर्यः खलु न मराति न म्रियते । नो वयं मराम । तदनुग्रहात्तत्रैव विषस्य योजितत्वात् वयमपि न म्रियामहै । उभयोरमरणे कारणमाह । हरिष्ठाः । हरयोऽश्वाः । तेषु स्थित आदित्यः आरे दूरे अस्य विषस्य योजनं प्रापणं चकार । तदेवोच्यते । हे विष त्वा त्वां मधु अमृतं चकार । विषस्य विषभावं दूरेऽपनोद्य अमृतीचकारेति । एषैव मधुला मधुदात्री निर्विषीकर्त्री मधुविद्या । यदेतदादित्यस्य विषयोजनं तेन च अमृतीकरणं यदस्ति एषा मधुविद्या ॥ ॥ १५ ॥

इयत्तिका शकुन्तिका सका जघास ते विषम् ।
सो चिन्नु न मराति नो वयं मरामारे
अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ ११ ॥

इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् ।
सो इति । चित् । नु । न । मराति । नो इति । वयम् । मराम । आरे ।
अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ ११ ॥

इयत्तिका इयत्तां कुर्वाणा इयत्तावती वा । बालेत्यर्थः । शकुन्तिका । शकुन्तः शकुनः । तस्य स्त्री । तां कपिञ्जलीमाहुः । सका सा ते तव विषं जघास भक्षितवती । सा विषहन्त्रीति प्रसिद्धा । सो चित् ॥ सा उ इति निपातसमुदायः एकं पदम् ॥ सापि शकुन्तिका न म्रियते नित्यप्रतिपक्षत्वाद्विषस्य । शिष्टं व्याख्यातचरम् । अनेन विद्यायां यद्देहावृतं विषं तस्य शकुनेभ्यः आदित्याय च प्रदानमस्तीत्युक्तं भवति ॥

त्रिः सप्त विष्पुलिङ्गका विषस्य पुष्यमक्षन् ।
ताश्चिन्नु न मरन्ति नो वयं मरामारे
अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १२ ॥

त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्य । पुष्यम् । अक्षन् ।
ताः । चित् । नु । न । मरन्ति । नो इति । वयम् । मराम । आरे ।
अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १२ ॥

त्रिः सप्त त्रिगुणिताः सप्तसंख्याकाः विष्पुलिङ्गकाः विविधाः विष्पुलिङ्गकाः । सप्तसु जिह्वासु लोहितशुक्लकृष्णभेदेन एकविंशतिर्यासां ताः । यद्वा । त्रिः सप्त एकविंशतिभेदा विष्पुलिङ्गकाः सूक्ष्मचटकिका विषप्रतिपक्षभूताः । विषस्य अस्मदावरकस्य पुष्यं पोषम् अक्षन् अदन्तु नाशयन्तु । ताः च न मरन्ति न वयम् अपि । शिष्टमविशिष्टम् ॥

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १३ ॥

नवानाम् । नवतीनाम् । विषस्य । रोपुषीणाम् ।
सर्वासाम् । अग्रभम् । नाम । आरे । अस्य ।
योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १३ ॥

नवानां नवतीनां नवाधिकानां नवतिसंख्याकानां नदीनाम् । पुनः कीदृशीनाम् । विषस्य अस्मद्व्यापकस्य सर्वस्य विषस्य रोपुषीणां लोपयित्रीणां छेत्त्रीणाम् । सर्वासाम् उक्तानां गङ्गादिनदीनां नाम अग्रभं गृह्णामि संकीर्तयामि ॥ गृहेश्छान्दसे लुङि छान्दसः च्लेर्लुक् । ' हृग्रहोर्भः० ' ॥ अस्य योजनमित्यादि गतम् ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः ।
तास्ते विषं वि जभ्रिर उदकं कुम्भिनीरिव ॥ १४ ॥

त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥ १४ ॥

त्रिः सप्त एकविंशतिसंख्याकाः मयूर्यः मयूरस्त्रियः । ता विषकारिसर्पद्वेषिण्यः इति प्रसिद्धाः नागद्वेषिगरुडपक्षादुत्पन्नत्वात् । तथा सप्त एतत्संख्याकाः सर्पणस्वभावाः स्वसारः स्वयमेव सरणाः अग्रुवः । नदीनामैतत् । सुरगङ्गाद्याः प्रसिद्धाः सप्त नद्यः सन्ति । तास्ते इह तव विषं वि जभ्रिरे विशेषेण हरन्तु । तत्र दृष्टान्तः । उदकं कुम्भिनीः कुम्भिन्यः कुम्भवत्यः कुम्भेन जलहारिण्यः इव । ता यथा तद्धरन्ति तद्वत् नद्यो मयूर्यश्च अतिप्रभूतं हरन्तु ॥

इयत्तकः कुषुम्भकस्तकं भिनद्म्यश्मना ।
ततो विषं प्र वावृते पराचीरनु संवतः ॥ १५ ॥

इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्मना ।
ततः । विषम् । प्र । ववृते । पराचीः । अनु । सम्ऽवतः ॥ १५ ॥

इयत्तकः कुत्सितेयत्तः अल्पप्रमाण इत्यर्थः । कुषुम्भकः कुं पृथ्वीं सुम्भति विलिखतीति सर्पाणां कुत्सितं सुम्भयिता निग्रहीता[1] कुषुम्भको नकुलः । स ते विषं हरत्विति शेषः । यदि न तथा स करोति तकं कुत्सितं तं नकुलम् अश्मना भिनद्मि विदारयामि । विषनिर्हरणप्रयोगे यावद्विषापगमं तं

१. ष-ष१-निग्रहीता वा ।

पाषाणानुघातमनुतिष्ठन्ति तद्विदः । तदिदमत्रोक्तम् । ᵛततः एवं प्रयोगे सति ᵛविषं ᵛप्र ᵛवावृते विषावृताद्देहात् विषं प्रवर्तते निर्गच्छतु । काः प्रति । उच्यते । ᵛपराचीः परागञ्चनवतीः अतिदूरगाः ᵛसंवतः संविभागवतो दिशः ᵛअनु लक्षीकृत्य दिगन्तं प्रति गच्छतु न मां प्रति गच्छत्वित्यर्थः ॥

अध्यायोपाकरणोत्सर्गयोः 'कुषुम्भकस्तत्' इत्यन्त्या विनियुक्ता। 'दधिसक्तून्जुहोति' इत्युपक्रम्य 'कुषुम्भकस्तदब्रवीत्' ( आश्व. गृ. ३. ५. ७ ) इति सूत्रितत्वात् ॥

कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः ।

वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥ १६ ॥

कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः ।

वृश्चिकस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥ १६ ॥

एवं महानुभावेन अगस्त्यमहर्षिणा उच्यमाने सति ᵛगिरेः सकाशात् ᵛप्रवर्तमानकः प्रवर्तमानः अतिशीघ्रमभिगच्छन् ᵛकुषुम्भकः नकुलः ᵛतदब्रवीत् तद्वाक्यमाचख्यौ। किं तदिति उच्यते । ᵛवृश्चिकस्य एतत् ᵛविषम् ᵛअरसम् असारं बाधकं न भवतीत्यर्थः। तथा लोकेऽपि सर्पदष्टमपि क्रिम्यादिदंशनमेव अतो न बाधः इति हि वदन्ति। एवमभिवचनेन सोऽपि निर्विषोऽभवत्। अथ तं वृश्चिकं प्रति नकुल आह। हे ᵛवृश्चिक ᵛते ᵛविषम् ᵛअरसम्। अतस्तमूर्पि किं करिष्यति । तस्मात् परिहरेति। यदा एवमवादीत् तदाप्रभृति वृश्चिकविषम् असारमभवत्। एषा विषनिर्हरण्युपनिषत् ॥ ॥ १६ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

द्वितीयाष्टके प्रथमे मण्डले

चतुर्विंशोऽनुवाकः

प्रथमं मण्डलं च ॥

# शुद्धिपत्रम्

षोडशपृष्ठपर्यन्तं केषुचित् स्थलेषु शब्द इत्यस्य स्थाने शब्द इति मुद्रणदोषात्संजातं तत् शुद्धीकृत्य वाचनीयम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | २० | इति करणबहुलम् | इतिकरणबहुलम् |
| १८ | ९ | °प्रसिद्धेपूर्वे° | °प्रसिद्धेष्वपूर्वे° |
| २० | ३३ | अबोधकेत्वे° | अबोधकत्वे° |
| २४ | ३२ | °राहित्यान्न | °राहित्यान्नास्य |
| ३३ | ७ | आवहनीय° | आहवनीय° |
| ३४ | ७ | याञ्चा° | याच्ञा° |
| ,, | १८ | °शुमागेन | °नुमागमेन |
| ४० | ३ | °शब्देधाननाभिम° | °शब्देनाभिधानम° |
| ७८ | ७ | घिष्यतोः | धिष्ण्यतोः |
| ७९ | १० | स्यापः | क्यपः |
| ८८ | १६ | °ग्रहादीनाम् | °ग्रहादीनाम्' इति वचनात् |
| ९२ | १९ | अभ्यासत्य | अभ्यासस्य |
| ९७ | ७ | धिष्यतोः | धिष्ण्यतोः |
| १०१ | ७ | °द्युदात्वम् | °द्युदात्तत्वम् |
| १०२ | १० | दुष्परिहमि° | दुष्परिहरमि° |
| १०५ | २४ | सहस्त्रां | सहस्रसां |
| १०७ | ९ | ङित्त्वस्य प्रासस्य | प्रासस्य ङित्त्वस्य |
| ११० | १८ | गिवर्ण° | गिर्वण° |
| १२२ | १० | अस्मिम् | अस्मिन् |
| १४६ | २२ | निघातः | न निघातः |
| १५० | २५ | आर्द्ध्नोति | आर्द्ध्नोति |
| २०८ | १७ | मिथि | मथि |
| २१६ | १४ | घिष्यतोः | धिष्ण्यतोः |
| २४३ | ८ | गोसवीववधौ | गोसववीवधौ। |
| २४५ | २९ | आतो लोपः | अतो लोपः |
| ३३६ | १२ | पासिवांसः | पसिवांसः |
| ३७३ | ५ | °दृश्यन्त्ये | °दशान्त्ये |
| ४२८ | ९ | द्विर्वचने | द्विवचने |
| ४३४ | ३२ | आडागमः | अडागमः |
| ४७३ | २० | उनन्- | उन- |
| ५१९ | २२ | °युक्तस्थाभा° | °युक्तरथाभा° |
| ५८५ | २८ | एकदेश° | क्ष-ट-स—एकदेश° |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१८ | १ | √एत | √एतत् |
| ६६२ | १७ | वीर्योत्पादकन् | वीर्योत्पादकान् |
| ६६२ | २३ | °परिष्ठादि° | °परिष्टादि° |
| ६६९ | १९ | नवींयाम् | नवींयान् |
| ६८६ | १९ | तुर्वितिम् | तुर्वीतिम् |
| ७१९ | १९ | °ढूलोपदीर्घाः | °ढलोपदीर्घाः |
| ७४९ | २० | 'अन्त्यावस्थाच्छन्दसि च' | अन्त्यावस्था । 'छन्दसि च' |
| ७५२ | २५ | मितद्व्रादिभ्य | मितद्र्वादिभ्य |
| ७८५ | २१ | उपमा | उपऽमा |
| ८३४ | ४ | अविना भूतम् | अविनाभूतम् |
| ८७३ | ११ | जपतुंम् | जनुर्षम् |
| ९३६ | ३ | चतुर्भिः | चतुःऽर्भिः |
| ९४० | २३ | वंक्षद्विपदे | वंक्षद्द्विपदे |
| १०६१ | १३ | हर्वि° | हवि° |

ऋग्वेदसंहितायाः प्रथमद्वितीययोर्भागयोः या अक्षराशुद्धयः अनन्तरमुपलक्षितास्ता अत्र संगृह्यन्ते—

# प्रथमभागे

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | १९ | °त्यनूवृत्ते° | °त्यनुवृत्ते° |
| १३५ | २३ | श्रृणिवरे | शृणिवरे |
| १५० | २५ | आर्द्दध्नोति | आर्द्दध्नोति |
| १७० | २२ | धारयन् | धारयन् |
| १७२ | १२ | सोमासः | सोमासु |
| १७३ | ९ | सहस्राक्षा | सहस्राक्षा |
| १८६ | २२ | ऊम् | ॐ |
| १८७ | २७ | व्रतानि | व्रतानि |
| २०० | ३ | होतरस्य | होनरस्य |
| २०० | १५ | देवंदेवं | देवंदेवं |
| २३४ | ११ | अस्मे | अस्मै |
| २४५ | १६ | एकश्चरन्तु° | एकश्चरन्तु° |
| २४६ | २८ | अनवद्यस्य | अनवद्यस्य |
| २५७ | १५ | त्रिरश्विना | त्रिरश्विना |
| २७८ | १३ | रथेऽशुभम् | रथेऽशुभम् |
| ३०३ | १६ | दुःऽशेवं | दुःऽशेवं |
| ३५५ | २४ | मायिनः | मायिनः |
| ३६६ | २ | अनु | अनु |
| ३६६ | ४ | अहुतऽप्सवः | अहुतऽप्सवः |
| ३७० | २४ | परि | पारे |
| ३७५ | २५ | वाजैऽभिः | वाजैभिः |
| ३८१ | १४ | मन्दिना | मन्दिना |
| ३८१ | २८ | रोरुवन् | रोरुवत् |
| ३[illegible] | २४ | स्थविरं | स्थविरं |
| ४४१ | ९ | वदत | वदत |
| ४४४ | २५ | गन्तणां | गन्तॄणां |
| ४५४ | १२ | ईम् | ईम् |
| ४९० | २० | द्यम्नं | द्युम्नं |
| ५५४ | २३ | नः | नः |
| ५७८ | २ | °व्यैश्वत् | °व्यैश्वत् |
| ५७८ | १५ | अव | अव |
| ६१८ | १२ | °ञ्छिम्यूँश्च | °ञ्छिम्यूँश्च |
| ६५६ | २५ | परिषिक्ते° | परिषिक्ते° |
| ६५९ | १४ | °मवयस्यामुत | °मवमस्यामुत |
| ६६९ | १९ | नवीयाम् | नवीयान् |
| ६७२ | १८ | जैत्रीं | जैत्रीं |
| ६८२ | ८ | दुवस्यथः | दुवस्यथः |
| ६८६ | १९ | तुर्वितिम् | तुर्वीतिम् |
| ७०१ | २६ | °द्विपदे | °द्विपदे |
| ७०८ | १२ | अग्नेः | अग्नेः |
| ७१९ | ६ | निधिम्ऽइव | निधिम्ऽइव |
| ७५७ | ७ | नँः | नॄँः |
| ७८५ | २१ | उपमा | उपऽमा |
| ८०८ | ६ | श्रुष्टीऽवानः | श्रुष्टीऽवानः |
| ८१० | १२ | सखिऽयते | सखिऽयते |
| ८२२ | १५ | तरुषसा | तरूषसा |
| ८४३ | १५ | °वृङ्क्तैपार्वपः | °वृङ्क्तैरपार्वपः |
| ८४६ | २२ | ब्रुतव | ब्रुवत |
| ८७१ | २ | त्वा | त्वां |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८७३ | ११ | जषर्नुम् | जनुर्षम् |
| ८९९ | ९ | मायर्योध्वा | मायर्योध्वा |
| ९०० | १ | अभी मृतस्य | अभीमृतस्य |
| ९०६ | १७ | °स्तथावित° | °स्तस्थावित° |
| ९३६ | ३ | चतुर्भिः | चतुःऽभिः |
| ९३९ | ८ | वियार्य | विवार्य |
| ९४० | २३ | वंक्षद्विपदे | वंक्षद्विपदे |
| ९५७ | २ | अब्रवीद्दता | अब्रवीद्दता |
| ९५७ | १८ | मांसमेकः | मांसमेकः |
| १०४१ | २४ | तथा | यथा |
| १०४९ | १४ | सूरींश्चिद्यदि | सूरींश्चिद्यदि |
| १०७२ | १ | स्यन्द्रा | स्पन्द्रा |
| १०७२ | ३ | स्यन्द्रा | स्पन्द्रा |
| १०७४ | २१ | वाजैर्मथ्ना | वाजैर्मथ्रा |
| १०७४ | २३ | मथ्ना | मथ्रा |
| १११० | ५ | वैरिणाः | बैरिणाः |
| १११० | ७ | वैरिणाः | बैरिणाः |
| १११३ | १७ | पुष्यं° | पुष्पं° |
| १११३ | २० | पुष्यंम् | पुष्पंम् |